श्रीमच्छङ्करभगवत्पादाचार्यविरचितम्

# शारीरकमीमांसाभाष्यम्

द्वितीयः खण्डः

*Advaita Grantha Ratna Mañjūṣā : 47-Ratna*

ŚRĪ ŚAṄKARABHAGAVATPĀDA'S

# ŚĀRĪRAKAMĪMĀMSĀ-BHĀṢYAM

## VOLUME - II

(FROM THE SECOND PĀDA OF SECOND ADHYĀYA TO THE END OF THE TEXT)

*With the commentaries*

**PRAKATĀRTHA VIVARAṆAM OF ANUBHŪTISWARŪPĀCĀRYA,**
**BHĀṢYABHĀVAPRAKĀŚIKĀ OF CITSUKHĀCĀRYA,**
**NYĀYANIRṆAYA OF ĀNANDAGIRI**
*and*
**ŚĀRĪRAKA-NYĀYA-SAṄGRAHA**
**OF PRAKĀŚĀTMAN**

*Critically edited with notes etc.,*
*by*
**Mīmāmsā – Vedāntācarya**
**DR. MAṆI DRĀVIḌ**

*Under the direction of*
**ŚRĪ SVĀMĪ MAHEŚĀNANDA GIRI MAHĀRĀJA**
MAHĀMAṆḌALEṢVARA
**ŚRĪ DAKṢIṆĀMŪRTI MAṬHA**

**ŚRĪ DAKṢIṆĀMŪRTI MAṬHA PRAKĀŚANA**
VĀRĀṆASĪ

अद्वैतग्रन्थरत्नमञ्जूषायाः ४७-रत्नम्

श्रीशङ्करभगवत्पादाचार्यविरचितम्

# शारीरकमीमांसाभाष्यम्

## [ खण्डः - २ ]

(द्वितीयाध्यायद्वितीयपादप्रभृति समाप्तिपर्यन्तम्)

**टीकाः**

**श्रीमदनुभूतिस्वरूपाचार्यविरचितं प्रकटार्थविवरणम्, श्रीचित्सुखाचार्यकृता भाष्यभावप्रकाशिका, श्रीमदानन्दगिर्याचार्यकृतो न्यायनिर्णयश्च तथा श्री प्रकाशात्मयतिविरचितः**

**शारीरकन्यायसंग्रहः**

**श्रीदक्षिणामूर्तिपीठाधीश्वरमहामण्डलेश्वर-**
**श्रीमन्महेशानन्दगिरिमहाराजानां**
**निदेशेन**

मीमांसा-वेदान्ताचार्येण
**श्रीमता (डॉ.) मणिद्राविडेन**
संशोध्य पाठभेदटिप्पणादिभिः
सम्पादितम्

**श्रीदक्षिणामूर्तिमठप्रकाशनम्**
**वाराणसी**

*Published By*
**SHRI DAKSHINAMURTI MATHA, PRAKASHANA**
D 49/9, Mishrapokhara
Varanasi-221 010

**भगवत्पादाब्दः : १२१४**
**वैक्रमाब्दः : २०५९**
**ख्रीष्टाब्दः : २००२**



First Edition

**Price : Rs. 430.00**

**Price : Four Hundred Thirty Rupees Only**

Printed By
**MAHIM PATRAN (P) Ltd.**
5/161, Sonth Ki Mandi, Agra

# निदर्शिका


| द्वितीयः खण्डः | | पृ.सं. |
|---|---|---|
| १. | ब्रह्मसूत्रशांकरभाष्यम्—द्वितीयाध्यायद्वितीयपादप्रभृति समाप्तिपर्यन्तम् | ५५७—१२४३ |
| २. | अधिकरणानां वर्णानुक्रमेण सूची | १२४५—१२४७ |
| ३. | ब्रह्मसूत्राणां वर्णानुक्रमेण सूची | १२४८—१२५५ |
| ४. | ब्रह्मसूत्रपदसूची | १२५६—१२७२ |
| ५. | उद्धृतवाक्यसूची | १२७३—१३२३ |
| ६. | ब्रह्मसूत्र उल्लिखितानां महर्षीणां नामानि | १३२४ |
| ७. | शब्दसंक्षेपविवरणम् | १३२५ |

*श्रीदक्षिणामूर्तये नमः*

# ब्रह्मसूत्रशाङ्करभाष्यम्

## अथ द्वितीयाध्याये द्वितीयः पादः।

१।। रचनानुपपत्त्यधिकरणम्।।सू॰ १-१०।।

### *शारीरकन्यायसंग्रहः*

**रचनानुपपत्तेश्च नानुमानम्।।१।। प्रवृत्तेश्च।।२।। पयोऽम्बुवच्चेत्तत्रापि।।३।। व्यतिरेकानवस्थितेश्चानपेक्षत्वात्।।४।। अन्यत्राभावाच्च न तृणादिवत्।।५।। अभ्युपगमेऽप्यर्थाभावात्।।६।। पुरुषाश्मवदिति चेत्तथापि।।७।। अङ्गित्वानुपपत्तेश्च।।८।। अन्यथानुमितौ च ज्ञशक्तिवियोगात्।।९।। विप्रतिषेधादसमञ्जसम्।।१०।।**

पञ्च महाभूतानि, एकादशेन्द्रियाणि, पञ्च तन्मात्राणि, अहङ्कारमहदव्यक्तपुरुषाः साङ्ख्यानां पञ्चविंशतितत्त्वानि; तेषां भूतेन्द्रियाणि प्रसिद्धानि; आत्मा च; महदहङ्कारपञ्चतन्मात्राण्याप्तोपदेशप्रसिद्धान्यलोकवेदसिद्धत्वान्न स्मर्तुं शक्यन्त इत्युक्तम् ''इतरेषां चानुपलब्धेः'' इत्यत्र।।

इदानीं प्रधानानुमानानामसिद्ध्यनैकान्तिकत्वविरुद्धत्वप्रत्यनुमानदुष्टत्वान्युच्यन्ते। सर्वं कार्यं सुखदुःखमोहात्मकवस्तुप्रकृतिकम्, तत्स्वभावेनान्वीयमानत्वात्, ये यत्स्वभावेनान्विताः, ते तत्स्वभाववस्तुप्रकृतिकाः, यथा घटादयः; [१]तथा सर्वं कार्यं सुखदुःखमोहान्वितम्, चित्तानुप्रविष्टत्वे सति तत्र सुखदुःखमोहावभासहेतुत्वात्, यथा दर्पणानुप्रविष्टस्य तत्र मुखावभासहेतोर्मुखस्य स्वयं मुखस्वरूपान्वय इति; तथा सर्वं कार्यमविभक्तैकवस्तुप्रकृतिकम्, परिमितत्वात्; यत्परिमितं तदविभक्तैकवस्तुप्रकृतिकं दृष्टम्, यथा घट इति; तथा जगत्तत्प्रकृती समानस्वभावे भवितुमर्हतः, प्रकृतिविकारभूतत्वात्, मृद्घटवत् इति; तथा सर्वं कार्यमेकवस्तुप्रकृतिकं विचित्रनानारूपत्वात्, एकबीजप्रसूताङ्कुरफलपुष्पपत्रादिवदिति।

एतेषामनुमानानामभिप्रेतधर्मविपरीतसाधनत्वं प्रत्यनुमानं वा प्रदर्श्यते। नेदं जगत् स्वतन्त्राचेतननिर्मितम्, नानारूपविचित्रकार्यात्मकत्वात्, यदेवंभूतकार्यात्मकं, न तत् केवलाचेतननिर्मितम्, यथा विशिष्टशिल्पिनिर्मितः प्रासादः केवलेभ्य इष्टकादार्वादिभ्यो न निर्मितः; तथा परपरिकल्पितं प्रधानं स्वतन्त्रमेव जगन्निर्माणकारणं न भवति केवलाचेतनत्वात्; यत् केवलाचेतनं न तत् स्वतन्त्रमेव विशिष्टकार्यनिर्माणकारणं दृष्टम्, यथा तदेवेष्टकादार्वादि; तथेदं जगद् विशिष्टबुद्धिमत्कर्तृपूर्वकं विशिष्टरचनात्मकत्वात्, प्रासादादिवत्, तथा परपरिकल्पितं प्रधानं विशिष्टचेतनाधिष्ठितमेव स्वकार्यस्य कारणं भवितुमर्हति अचेतनत्वात्, मृदादिवत् इति सूत्रोपात्तान्यनुमानानि।

चशब्देन प्रधानानुमानानामसिद्धत्वाद्युच्यते— सुखदुःखमोहान्वयस्यासिद्धत्वम्, स्वरूपसामान्यादीनां द्रव्येष्वनुगतानामनुपादानकारणत्वादनैकान्तिकत्वम्, चित्तानुप्रविष्टत्वे सति सुखाद्यवभासहेतुत्वात्, मुखवत्, सुखदुःखमोहात्मका विषया इत्यनुमानस्य विषयाणां बाह्यत्वात् सुखादीनामान्तरत्वादिति प्रत्यक्षविरोधो दर्शितः, परिमितत्वादीनां प्रधानपुरुषेश्वरादिष्वनैकान्तिकत्वमिति।।

### *प्रकटार्थविवरणम्*

अतिक्रान्तेन पादेन समन्वये वादिभिरुद्भाविता दोषाः परिहृताः। इदानीं परपक्षाणां भ्रान्तिमूलत्वमुपपादयितुं परः पाद

### *भाष्यभावप्रकाशिका*

**रचनानुपपत्तेश्च नानुमानम्।।१।।** समनन्तरातीतपादेन स्वपक्षे साङ्ख्यादिभिरुद्भाविता दोषा निराकृताः, इह पादे

### *न्यायनिर्णयः*

ब्रह्मणि कारणत्वानुगुणेषु सर्वज्ञत्वादिषूक्तेषु प्रधानेऽपि तदुपपत्तिमाशङ्क्योक्तम्— **रचनानुपपत्तेश्चेति**। पूर्वपादेन समन्वये

१. पूर्वानुमाने स्वरूपासिद्धिनिरासार्थमिदमनुमानम्।

## रचनानुपपत्तेश्च नानुमानम्।।१।।

**यद्यपीदं वेदान्तवाक्यानामैदंपर्यं निरूपयितुं शास्त्रं प्रवृत्तम्, न तर्कशास्त्रवत् केवलाभिर्युक्तिभिः कंचित् सिद्धान्तं साधयितुं दूषयितुं वा प्रवृत्तम्, तथापि वेदान्तवाक्यानि व्याचक्षाणैः सम्यग्दर्शनप्रतिपक्षभूतानि सांख्यादिदर्शनानि निराकरणीयानीति तदर्थः परः पादः प्रवर्तते। वेदान्तार्थनिर्णयस्य च सम्यग्दर्शनार्थत्वात् तन्निर्णयेन स्वपक्षस्थापनं प्रथमं कृतम्, तद्ध्यभ्यर्हितं परपक्षप्रत्याख्यानादिति।**

**ननु मुमुक्षूणां मोक्षसाधनत्वेन सम्यग्दर्शननिरूपणाय स्वपक्षस्थापनमेव केवलं कर्तुं युक्तम्, किं परपक्षनिराकरणेन परद्वेषकरेण[1]? बाढमेवम्, तथापि महाजनपरिगृहीतानि महान्ति सांख्यादितन्त्राणि**

### *प्रकटार्थविवरणम्*

आरभ्यते। ननु ब्रह्मणि वेदान्तानां तात्पर्यमेव निरूपणीयम्; किमिदमकाण्डे पक्षान्तरखण्डनताण्डवमित्याशङ्क्याह— **यद्यपीदमिति**। प्रतिपक्षप्रतिक्षेपमन्तरेण स्वपक्षावधारणानुपपत्तेः, परपक्षखण्डनं मण्डनमेवोद्दण्डपण्डितानामित्यर्थः। तर्हि प्रथमं परपक्षापाकरणमेव किं नाकारीत्याशङ्क्याह— **वेदान्तार्थनिर्णयस्य चेति**। परपक्षापाकरणे तत्र प्रद्वेषस्यावर्जनीयत्वात् न श्रेयोऽर्थिनां विरक्तानां तत्र प्रवृत्तिर्वृत्तेत्याशङ्क्याह— **ननु मुमुक्षूणामिति**। परपक्षापाकरणे विद्वेषः प्राप्नोतीत्येतत् सत्यम्; तथापीदमेव सम्यग्ज्ञानमित्यवधारणाय वीतरागेणापि परपक्षापाकरणं करणीयमेव विद्वेषमनालम्ब्येत्याह— **बाढमेवेति [मेवमिति]**।

### *भाष्यभावप्रकाशिका*

स्वतन्त्राः साङ्ख्यादियुक्तयःस्वतन्त्राभिरेव युक्तिभिर्निराकरिष्यन्ते। ननु अनुमानेन किञ्चित् साधयितुं दूषयितुं वा प्रवृत्तं चेदिदं शास्त्रम्, तदा विपक्षबाधकतर्कोऽप्यनुमानाङ्गम् इति तद्वर्णनं युज्यते, न तु तथा; किन्तु ममुक्षूणां मोक्षसाधनब्रह्मज्ञानादिसिद्धये वेदान्तवाक्यतात्पर्यं निरूपयितुम्। तस्य च साधकन्यायकलापः समन्वयाध्यायेनैव दर्शितः इति विपक्षबाधकतर्कोपन्यासो न कर्तव्य इति, अत आह— **यद्यपीति**। साङ्ख्यादिदर्शनानां प्रधानादिकारणपरत्वात् तदीयानुमानानां च सर्वज्ञप्रणीततया वेदान्तैरप्यबाध्यत्वाद् वस्तुनि च विकल्प-समुच्चयानुपपत्तेः, तदनिराकरणे तेष्वपि सम्यग्ज्ञानसाधनत्वविभ्रमः स्यात्। अतःसम्यग्ज्ञानदार्ढ्याय तन्निराकरणं कर्त्तव्यमित्याह— **तथापीति**। सम्यग्ज्ञानसिद्धये चेत् तदीययुक्तिनिराकरणम्, तदेव प्रथमं किमिति न कृतमिति? अत आह— **वेदान्तार्थेति**। ननु अस्यापि तदर्थत्वात् प्रथमं कर्त्तव्यमिति, अत आह— **तद्धीति**। इतिकर्तव्यतारूपात् करणस्याभ्यर्हितत्वादित्यर्थः।।

ननु वीतरागाणां तत्त्वनिर्णयमात्रमुपयुज्यते, न परपक्षाधिक्षेप इति चोदयति— **नन्विति**। वीतरागस्यापि परपक्षाधिक्षेपं विना तत्त्वनिर्णयासंभवात् तत्करणेऽपि न विरोध इत्याह— **बाढमिति**।

### *न्यायनिर्णयः*

वादिभिरुत्प्रेक्षिता विलक्षणत्वादयो दोषा निरस्ताः। सम्प्रति परपक्षाणां भ्रान्तिमूलत्वं वक्तुं पादान्तरमारभ्यते। ननु तर्कशास्त्रवदस्य शास्त्रस्य तर्कप्रधानत्वाभावाद् वेदान्तवाक्यप्रधानत्वात् तेषां ब्रह्मणि तात्पर्यमेवात्र निरूपणीयम्, तदपेक्षितन्यायजातस्य समन्वयाध्याये सिद्धत्वात्, परपक्षबाधकतर्कोक्तिस्तु नेहोपयुज्यते, तत्किमनेन पादेन, तत्राह— **यद्यपीति**। परपक्षप्रतिक्षेपमन्तरेण स्वपक्षावधारणायोगात् तन्निराकरणमपि प्रकृतोपयोगीति पादारम्भं समर्थयते— **तथापीति**। स्वपक्षं निर्धारयितुं परपक्षो निराचिकीर्षितश्चेत्, तदेव तर्हि प्रथमं किमिति न कृतमित्याशङ्क्याह— **वेदान्तेति**। परपक्षप्रतिषेधस्यापि तदर्थत्वमविशिष्टमित्याशङ्क्य करणस्येतिकर्तव्यतारूपादन्तरङ्गत्वाद् वाक्यनिरूपणस्यैव प्राथम्यमित्याह—**तद्धीति**। सम्यग्धीदार्ढ्याय स्वपक्षस्थापनानन्तरं परपक्षनिरसनमुचितमिति निगमयितुमितिशब्दः।

वीतरागाणां [2]मोक्षमाणानामपेक्षितमोक्षहेतुतया तत्त्वज्ञानमात्रमुपयुक्तं, परपक्षाधिक्षेपस्तु वीतरागताविरोधित्वादयुक्त इति शङ्कते— **नन्विति**। मुमुक्षूणां मोक्षौपयिकत्वेन सम्यग्धीरेवोपयुक्तेत्युक्तमङ्गीकरोति— **बाढमिति**। किमिति तर्हि परपक्षनिराकरणं परविद्वेषकरणमभ्युपगतम्, तत्राह— **तथापीति**। सांख्यादिदर्शनानां महाजनपरिगृहीतत्वात् प्रधानादिकारणपरतया महत्त्वात् तत्त्वज्ञानापदेशेन प्रवृत्तत्वात्

१. 'परविद्वेषकारणेन' इति पाठान्तरम्। २. मोक्षमाणानाम् = मोक्षमिच्छताम्।

**सम्यग्दर्शनापदेशेन प्रवृत्तान्युपलभ्य भवेत् केषांचिन्मन्दमतीनामेतान्यपि सम्यग्दर्शनायोपादेयानीत्यपेक्षा, तथा युक्तिगाढत्वसंभवेन सर्वज्ञभाषितत्वाच्च श्रद्धा च तेषु- इत्यतस्तदसारतोपपादनाय प्रयत्यते।**

**ननु 'ईक्षतेर्नाशब्दम्' (ब्र.सू.१।१।५), 'कामाच्च नानुमानापेक्षा' (ब्र.सू.१।१।१८), 'एतेन सर्वे व्याख्याता व्याख्याताः' (ब्र.सू.१।४।२८) इति च पूर्वत्रापि सांख्यादिपक्षप्रतिक्षेपः कृतः, किं पुनः कृतकरणेनेति। तदुच्यते-सांख्यादयः स्वपक्षस्थापनाय वेदान्तवाक्यान्यप्युदाहृत्य स्वपक्षानुगुण्येनैव योजयन्तो व्याचक्षते, तेषां यद् व्याख्यानं तद् व्याख्यानाभासं न सम्यग्व्याख्यानमित्येतावत् पूर्वं कृतम्। इह तु वाक्यनिरपेक्षः स्वतन्त्रस्तद्युक्तिप्रतिषेधः क्रियत इत्येष विशेषः।**

**तत्र सांख्या मन्यन्ते-यथा घटशरावादयो भेदा मृदात्मनाऽन्वीयमाना मृदात्मकसामान्यपूर्वका लोके दृष्टाः, तथा सर्व एव बाह्याध्यात्मिका भेदाः सुखदुःखमोहात्मतयाऽन्वीयमानाः सुखदुःखमोहात्मकसामान्यपूर्वका**

### *प्रकटार्थविवरणम्*

पौनरुक्त्यमाशङ्क्य समाधत्ते— **नन्वीक्षतेरित्यादिना।**

**रचनानुपपत्तेश्च नानुमानम्।** एवं तावत् पादारम्भमुपपाद्य पूर्वपक्षमाह— **तत्र सांख्या इत्यादिना।** विमता भावाः, सुखदुःखमोहसामान्यप्रकृतिकाः, तदन्वितत्वात्, ये यदन्वितास्ते तत्प्रकृतिकाः, यथा मृदन्विता घटादयो मृत्प्रकृतिका इत्यर्थः।

### *भाष्यभावप्रकाशिका*

पुनरुक्ततां चोदयति— **नन्वीक्षतेरिति।** पूर्वं प्रधानादीनां श्रुतिमत्त्वं नास्तीत्युक्तम्, सम्प्रति युक्तिमत्त्वमपि नास्तीति प्रदर्श्यत इति विशेषकथनेन समाधत्ते— **तदुच्यत इति।**

इदानीं साङ्ख्यानामनुमानं दर्शयितुं व्याप्तिं दर्शयति— **तत्र साङ्ख्या इति।** इदानीं हेतोः पक्षधर्मताकथनपूर्वकमनुमानमाह— **तथा सर्व एवेति।** सर्वं कार्यम्, सुख-दुःख-मोहात्मवस्तुप्रकृतिकम्, तत्स्वभावान्वितत्वात्; ये यत्स्वभावान्विताः, ते तत्स्वभाववस्तुप्रकृतिकाः, यथा पटादयः, आत्मवदिति वा व्यतिरेकि; सर्वं च कार्यम्, सुख-दुःखमोहान्वितम्, स्वाभिव्यञ्जकोपाधौ

### *न्यायनिर्णयः*

तदीयानुमानानां सर्वज्ञप्रणीततया तुल्यबलत्वेन वेदान्तैरबाधाद् वस्तुनि विकल्पानुपपत्तेस्तदनिरासे तेष्वपि सम्यग्धीहेतुत्वभ्रमः स्यात्। अतः सम्यग्धीदार्ढ्याय तन्निराकरणं कर्तव्यमिति तर्कपादारम्भः संभवतीत्यर्थः।

पुनरुक्तिं शङ्कते— **नन्विति।** प्रधानपक्षनिराकरणं सूत्रकारस्य विवक्षितमित्यत्राभ्यासलिङ्गमाह— **कामाच्चेति।** तथापि परमाण्वादिवादव्युदासार्थं पादारम्भो भविष्यतीत्याशङ्क्याह— **एतेनेति।** पूर्वं प्रधानादीनां श्रुतिमत्त्वं निरस्तम्, इदानीं युक्तिमत्त्वं निरस्यते तेषामिति विशेषं वदन्नुत्तरमाह— **तदुच्यत इति।** स्वपक्षे परैरुद्भावितदोषनिरासानन्तरं स्वतन्त्राणां परकीययुक्तीनां स्वतन्त्राभिरेव युक्तिभिः स्वपक्षं स्थापयितुं निरसनं कार्यमिति पादान्तरमर्थवदिति पादसंगतिरुक्ता। सांख्ययुक्तिनिरासस्य समन्वये तद्विरोधनिरसनद्वारा तद्दार्ढ्यार्थत्वादस्याधिकरणस्य पादादिसंगतयः। अत्र पूर्वपक्षे सांख्ययुक्तिविरोधादसिद्धिः समन्वयस्य फलति, सिद्धान्ते तु तदविरोधात् तत्सिद्धिः।

तत्र प्रधानमचेतनं जगदुपादानमिति सांख्यराद्धान्तो विषयः। स किं प्रमाणमूलो भ्रान्तिमूलो वेति विप्रतिपत्तेः संदेहे पूर्वपक्षमाह— **तत्रेति।** सांख्यीयमनुमानं वक्तुं व्याप्तिमाह— **यथेति।** ये यत्स्वभावान्वितास्ते तत्स्वभाववस्तुप्रकृतिकाः, यथा घटादयो मृत्स्वभावान्वितास्तत्प्रकृतिका इत्यर्थः। पक्षधर्मतां हेतोर्दर्शयन्ननुमानमाह— **तथेति।** सर्वं कार्यं सुखदुःखमोहात्मकवस्तुप्रकृतिकं,

**भवितुमर्हन्ति। यत्तत् सुखदुःखमोहात्मकं सामान्यं तत् त्रिगुणं प्रधानं मृद्वदचेतनं चेतनस्य पुरुषस्यार्थं साधयितुं स्वभावेनैव विचित्रेण विकारात्मना विवर्तत इति। तथा परिमाणादिभिरपि लिङ्गैस्तदेव प्रधानमनुमिमते।**

### *प्रकटार्थविवरणम्*

एतावता कथं प्रधानसिद्धिरित्याशङ्क्याह— **यदिति**। सुखसामान्यं सत्त्वम्; दुःखसामान्यं रजः, मोहसामान्यं तम इति सुखदुःखमोहसामान्य-प्रकृतिकत्वे साधिते त्रिगुणं प्रधानं सिध्यतीत्यर्थः। अचेतनं कार्यं दृष्ट्वा कारणमप्यचेतनमनुमीयत इत्याह— **मृद्वदचेतनमिति**। किमर्थं तत् परिणमते, कथं वेत्याशङ्क्याह— **पुरुषस्येति**। अनुमानान्तरमाह— **तथा परिमाणादिभिरपीति**। विमतं कार्यमविभक्तैक-प्रकृतिकम्, परिमितत्वात्, अङ्कुरादिवत्। यदि शब्दादीनां [ आदिशब्दादिदानीं ] कारणशक्तितः कार्यस्य प्रवृत्तेदर्शनान्महदादिकार्य-प्रवृत्तिरपि कारणशक्तितो भवितुमर्हति; तच्च शक्तिमत् प्रधानम्; तथा कार्याद् विभक्तस्येदानीं कारणस्य दर्शनान्महदादिकार्यादपि विभक्तं कारणं वक्तव्यम्, तत् प्रधानम्; तथा नानारूपाणां सृष्टेः प्रागिदानीं क्वचिदविभागदर्शनान्महदादीनामपि क्वचिदविभागो

### *भाष्यभावप्रकाशिका*

तदाकारावभासहेतुत्वात्, सुखाद्याकारावभासहेतुसुखादिवदिति प्रत्येकमनुमातव्यम्। तथापि प्रधानसिद्धिः कथमिति? अत आह— **यत्तदिति**। सुख-दुःखमोहात्मतैव सत्त्वरजस्तमोरूपतेत्यर्थः। प्रधीयते = विधीयते = क्रियते जगदनेनेति प्रधानम्, प्रधीयते = निधीयतेऽस्मिन् प्रलयसमय इति वा। किमर्थं तत् प्रवर्तत इति? अत आह— **अचेतनं चेतनस्येति**। ननु अचेतनस्य प्रयोजनाज्ञानात् कथं प्रवृत्तिरिति? अत आह— **स्वभावेनेति**। **परिमाणादिभि**रित्यादिग्रहणेन "शक्तितः प्रवृत्तेः कारणकार्यविभागादविभागाद् वैश्वरूप्यस्ये" त्यव्यक्तसिद्धिहेतवो गृह्यन्ते। तथा ह्याह— "भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च। कारणकार्यविभागाद-विभागाद्वैश्वरूप्यस्ये" ति। अत्र भिद्यन्त इति भेदा विकाराः, तेषां परिमाणम् = इयत्ता। तत्रायं प्रयोगः— सर्वं कार्यम्, अविभक्तैक-वस्तुप्रकृतिकम्, परिमितत्वात्, यद्यत् परिमितम्, तत्तद् अविभक्तैकवस्तुप्रकृतिकं दृष्टम्, यथा घटादीति। परिणामादिति वा पाठः। तत्पक्षे कार्यत्वादिति हेत्वर्थः। प्रतिज्ञा-दृष्टान्तौ तु पूर्वोक्तौ। **समन्वयादिति**। सुख-दुःखमोहान्वितत्वादित्यर्थः। प्रयोगस्तु दर्शितः। **प्रवृत्तेरिति**। विप्रतिपन्नं जगत्, जडप्रकृतिकम्, सादित्वे सति प्रवृत्तिशक्तिमत्त्वात्, रथादिवत्। **कारण-कार्यविभागादिति**। यत उत्पद्यते तत् कारणम्, यच्चोत्पद्यते तत्कार्यमित्यनयोर्लोकप्रसिद्धो विभागः। स च समानयोरेव दृष्ट इत्यर्थः। तदयं प्रयोगः—

### *न्यायनिर्णयः*

तत्स्वभावान्वितत्वात्, घटादिवदित्यर्थः। ननु सर्वस्य कार्यस्योपादानं सुखदुःखमोहात्मकं किंचिद् भविष्यति, तथापि कथं प्रधानसिद्धिः, तत्राह— **यत्तदिति**। सुखदुःखमोहात्मतैव सत्त्वरजस्तमोरूपतेति मन्वानो विशिनष्टि— **तत्त्रिगुणमिति**। कार्यमचेतनं दृष्ट्वा तत्कारणमपि तादृगेवानुमेयमित्याह— **मृद्वदिति**। किमर्थं तत् परिणमते, तत्राह— **चेतनस्येति**। अर्थशब्दो भोगापवर्गार्थः। अचेतनस्य प्रयोजनपरिज्ञानाभावादप्रवृत्तिः, 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते' इति न्यायादित्याशङ्क्याह— **स्वभावेनेति**। विचित्रो विविधो महदहंकारादिविकारस्तद्रूपेणेति यावत्। 'भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च[१]। कारणकार्यविभागाद-विभागाद्वैश्वरूप्यस्य' इत्यव्यक्तसिद्धिहेतुषु परोक्तेषु समन्वयाख्यं हेतुमुपसंहर्तु**मिति**शब्दः। हेत्वन्तराण्यवतारयति— **तथेति**। भिद्यन्त इति भेदा विकाराः, तेषां परिमाणमियत्ता, ततो लिङ्गात् तदेव प्रधानमनुमिमते। विमतमविभक्तैकवस्तुप्रकृतिकं, परिमितत्वात्, घटादिवत्। प्रवृत्तिशक्तिमत्त्वादपि तदेव प्रधानमनुमिन्वन्ति। विमतं जडप्रकृतिकं सादित्वे सति प्रवृत्तिशक्तिमत्त्वात्, रथादिवत्। सादित्वात् प्रकृतिमात्रसिद्धौ तद्विशेषसिद्ध्यर्थं विशेषणम्। कारणकार्यविभागादपि लिङ्गात् तदेव निश्चिन्वन्ति। यत उत्पद्यते तत्कारणम्, यच्चोत्पद्यते तत्कार्यमित्येतयोर्लोकप्रसिद्धयोर्विभागः। स च समयोरेव दृष्टः। तथाच जगत्प्रकृती तुल्यस्वभावे, प्रकृतिविकारसम्बन्धसम्बन्धित्वात्, मृद्घटवत्। वैश्वरूप्यं विचित्रनानारूपत्वं, तस्याविभागादविभक्तजडवस्तुप्रकृतिगमकत्वादपि तदेवाध्यवस्यन्ति। विमतमेकजडवस्तुप्रकृतिकं, विचित्ररचनात्मकत्वात्, एकबीजप्रसूताङ्कुरपुष्पफलादिवदित्यर्थः।

---

१. कारणात् कार्यस्य विभागः जन्म; विश्वरूपमेव वैश्वरूप्यम्, तस्य कार्यजातस्य अविभागः कारणे लयः; ताभ्यां प्रधानमनुमीयते। यदाविर्भवति तत् सूक्ष्मावस्थापूर्वकं भवति, यत् तिरोभवति तत् सूक्ष्मावस्थान्तं भवति। तथा च सृष्टेः प्राक्, प्रलयात् पश्चाच्च सूक्ष्मावस्थाश्रयतया यत् सिध्यति तदेव प्रधानम्। द्र.ब्र.वि.पृ. ९३.

**तत्र वदामः– यदि दृष्टान्तबलेनैवैतन्निरूप्येत, नाचेतनं लोके चेतनानधिष्ठितं स्वतन्त्रं किंचिद् विशिष्टपुरुषार्थनिर्वर्तनसमर्थान् विकारान् विरचयद् दृष्टम्। गेहप्रासादशयनासनविहारभूम्यादयो हि लोके प्रज्ञावद्भिः शिल्पिभिर्यथाकालं सुखदुःखप्राप्तिपरिहारयोग्या रचिता दृश्यन्ते। तथेदं जगदखिलं पृथिव्यादि नानाकर्मफलोपभोगयोग्यं बाह्यम्, आध्यात्मिकं च शरीरादि नानाजात्यन्वितं प्रतिनियतावयवविन्यासमनेक-कर्मफलानुभवाधिष्ठानं दृश्यमानं प्रज्ञावद्भिः संभाविततमैः शिल्पिभिर्मनसाऽप्यालोचयितुमशक्यं सत् कथमचेतनं**

### *प्रकटार्थविवरणम्*

वक्तव्यः, तत् प्रधानमित्येतत्सर्वं गृह्यते। तदुक्तम्— "भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च। कारणकार्यविभागाद-विभागाद्वैश्वरूप्यस्य।।"[१] इति। तस्मात् प्रधानवादस्य प्रमाणमूलत्वादर्थात् तेन चेतने समन्वयो विरुध्यत इति पूर्वः पक्षः।।

सिद्धान्तमाह— **तत्र वदाम इत्यादिना**। यदि दृष्टान्तबलेन त्वया स्वतन्त्रमचेतनं कारणं निरूप्यते, न तर्हि तन्निरूपयितुं शक्यते। स्वतन्त्रस्याचेतनस्य विचित्रकार्यरचनाया अदृष्टत्वादित्यर्थः। प्रयोगश्च— विमतं न स्वतन्त्राचेतननिर्मितम्, विचित्रकार्यत्वात् प्रासादादिवत्; तथा परपरिकल्पितं प्रधानं न स्वतन्त्रं जगत्कारणम्, केवलाचेतनत्वात्, मृन्मात्रवत्; तथा इदं जगत् विशिष्टबुद्धिमत्कर्तृपूर्वकम्, विशिष्टरचनात्वात्, प्रासादादिवत् इति। किञ्च पराभिमतमपि प्रधानं विशिष्टचेतनाधिष्ठितं स्वकार्यायालम्, अचेतनत्वात्, मृदादिवदित्याह—

### *भाष्यभावप्रकाशिका*

जगत्प्रकृती, समानस्वभावे, प्रकृतिविकारसम्बन्धे सति सम्बन्धित्वाद् मृद्घटवत्— इति। **अविभागाद्वैश्वरूप्यस्येति**। सर्वं कार्यम्, एकजडवस्तुप्रकृतिकम्, विचित्रनानारूपत्वात्, एकबीजप्रसूताङ्कुर-पुष्प-फलादिवदिति।।

तत्राचेतनप्रकृतिकत्वमात्रे साध्ये सिद्धसाधनत्वाद् विवक्षितार्थपरत्वे विरुद्धत्वात् सप्रतिसाधनत्वाद्वाऽप्रामाण्यमनुमानानामित्याह— **तत्र वदाम इत्यादिना**। सम्प्रति विरुद्धतां सप्रतिसाधनतां च दर्शयति— **गेहप्रासादेत्यादिना**। ननु[२] इदं जगत्, स्वतन्त्राचेतनकार्यम्, नानारूपविचित्रकार्यत्वात्; विशिष्टशिल्पिनिर्मितप्रासादादिवत्; जगत् विशिष्टबुद्धिमत्कर्तृकम्, विशिष्टरचनात्मकत्वात्, प्रासादादिवदित्यनुमाने नानारूपविचित्रकार्यात्मकत्वं विशिष्टरचनात्मकत्वं च जगतो दर्शयति— **तथेदं जगदिति**। बाह्यं जगद्विशिनष्टि— **पृथिव्यादीति**। उपभोगाय योग्यं साधनमित्यर्थः। आध्यात्मिकं विशिनष्टि— **शरीरादीति**। प्रतिनियता अवयवविन्यासा यस्मिन् शरीरादौ, तत् तथोक्तम्। **अनेककर्मफलाधिष्ठानमिति**। शरीराश्रयस्यैवात्मनः सुखाद्यनुभवाच्छरीरादेस्तदधिष्ठानत्वमुपचारादुक्तम्। इदानीं विशिष्टरचनात्मतां

### *न्यायनिर्णयः*

समन्वयस्य सांख्ययुक्तिविरोधादसंभवे प्राप्ते सिद्धान्तयति— **तत्रेति**। यत्त्वनुमानैरचेतनप्रकृतिकं जगदिति, तत्राचेतनप्रकृतिकत्वमात्रं जगतः साध्यं, स्वतन्त्राचेतनप्रकृतिकत्वं वा। प्रथमे सिद्धसाधनम्, ईश्वराधिष्ठितत्रिगुणात्मकमायाया जगत्प्रकृतित्वावगमात्। द्वितीये विरुद्धता सत्प्रतिपक्षसाधनता चेति मत्वाऽऽह— **यदीति**। स्वतन्त्रमचेतनं जगदुपादानमेतदित्युक्तम्। दृष्टान्तस्य साध्यविकलतामभिसंधायोक्तम्— **नाचेतनमिति**। स्वातन्त्र्यमेव व्याचष्टे— **चेतनेति**। यादृच्छिकवायुजलादिभूतान्तरसंपर्काधीनतया कार्यमात्रोत्पत्तावपि जलाहरणादि-समर्थघटादिकार्यजनकत्वं चेतनानधिष्ठितस्य मृदादेर्नास्तीति मन्वानो विशिनष्टि— **विशिष्टेति**। अधुना विरुद्धतां सप्रतिसाधनतां च दर्शयन् व्याप्तिमाह— **गेहेति**। यद्धि विचित्रं कार्यम्, तत्र स्वतन्त्राचेतनप्रकृतिकम्, यथा गृहप्रासादादीत्यर्थः। विचित्रकार्यत्वस्य पक्ष-धर्मतामादर्शयति— **तथेति**। जगद् द्विविधं बाह्यमाध्यात्मिकं च। बाह्यं पृथिव्यादि। तद् विशिनष्टि— **नानेति**। नानाविधं कर्म शुभाशुभं व्यामिश्ररूपम्, अस्य फलं सुखं दुःखं च, तदुपभोगयोग्यम्, साधनमित्यर्थः। आध्यात्मिकं देहादिजगद् विशिनष्टि— **नानेत्यादिना**। देवतिर्यङ्मनुष्यत्वाद्या नानाविधा जातयस्ताभिरन्वितम्, तासामधिष्ठानमित्यर्थः। तस्य चेतनकृतत्वसंभावनार्थमाह— **प्रतिनियतेति**। प्रतिनियता अवयवविन्यासा यत्र देहादौ तत्तथोक्तम्। देहाद्याश्रयस्यैवात्मनः सुखाद्यनुभवात् तदधिष्ठानत्वं देहादेरौपचारिकमिति मत्वोक्तम्— **अनेककर्मेति**। विशिष्टरचनात्मकतां जगतो दर्शयति— **प्रज्ञावद्भिरिति**। तेन क्षेत्रज्ञानधिष्ठितप्रधानकार्यत्वं जगतोऽर्थादपास्तम्।

---

१. 'कारणमस्त्यव्यक्तम्' इति शेषः। २. 'ननु' इत्यस्य स्थाने 'न' इति पाठः स्यात्।

**प्रधानं रचयेत्? लोष्टपाषाणादिष्वदृष्टत्वात्। मृदादिष्वपि कुम्भकाराद्यधिष्ठितेषु विशिष्टाकारा रचना दृश्यते, तद्वत् प्रधानस्यापि चेतनान्तराधिष्ठितत्वप्रसङ्गः। न च मृदाद्युपादानस्वरूपव्यपाश्रयेणैव धर्मेण मूलकारणमवधारणीयम्, न बाह्यकुम्भकारादिव्यपाश्रयेणेति किंचिन्नियामकमस्ति। न चैवं सति किंचिद् विरुध्यते, प्रत्युत श्रुतिरनुगृह्यते चेतनकारणसमर्पणात्। अतो रचनानुपपत्तेश्च हेतोर्नाचेतनं जगत्कारणमनुमातव्यं भवति।**

### *प्रकटार्थविवरणम्*

**मृदादिष्विति**। ननु लोके कार्येष्वनुगतस्य मृदादेरुपादानत्वदर्शनात् जगत्यनुगतमचेतनमात्रमुपादानमनुमीयते; ततो धर्मिग्राहकप्रमाणबाध इत्याशङ्क्याह— **न च मृदाद्युपादानेति**। अनुगतत्वेन मृदादेरुपादानत्वं दृष्टम्, तदेव ग्राह्यम्; चेतनाधिष्ठितत्वेन यद् दृष्टं तन्न ग्राह्यम्-इत्यत्र कोशपानमेव शरणम्। अतः स्वतन्त्राचेतनस्योपादानत्वे प्रमाणाभावान्न धर्मिग्राहकप्रमाणबाध इत्यर्थः। ननु दृष्टान्ते यद् दृष्टं तस्य सर्वस्य दार्ष्टान्तिकेऽप्यापादनमुत्कर्षसमा जातिः, यथा कृतकत्वात् घटवदनित्यः शब्द इत्युक्ते घटवत् सावयवोऽपि स्यादिति, तत्राह— **न चैवं सतीति**। प्रमाणान्तरविरोधात् भवेत् तदसदुत्तरम्; नेह क्वचित् बाधकमस्ति, वैपरीत्यं [रीत्येन] च श्रुत्यनुगुणत्वं लभ्यत इत्यर्थः। यस्मात् श्रुत्यनुगृहीतबहुतरानुमानविरोधात् न स्वतन्त्राचेतनस्य कार्यरचनोपपनीपद्यते अत इत्युपसंहारः।

### *भाष्यभावप्रकाशिका*

दर्शयति— **प्रज्ञावद्भिःसंभावितत्मैरिति**। एतेन— क्षेत्रज्ञाधिष्ठितप्रधानकार्यत्वमप्यर्थादशक्यत्वप्रदर्शनेन— निराकृतम्। **लोष्टपाषाणादिष्विति**। परपरिकल्पितं प्रधानम्, निर्माणकारणं न भवति, केवलाचेतनत्वात्; लोष्टादिवदित्यर्थः। परपरिकल्पितं प्रधानम्, विशिष्ट- चेतनाधिष्ठितमेव स्वकार्यकरणं भवितुमर्हति, अचेतनत्वात्; मृदादिवदित्यनुमानमाह— **मृदादिष्वपीति**। यद्युच्येत— दृष्टान्तधर्मिण्यचेतनं तन्त्वाद्युपादानं दृष्टम्, तत्र यद्यपि चेतनप्रयुक्तत्वमपि दृश्यते, तथापि तत्प्रयुक्तत्वं हेतोरप्रयोजकम्; बहिरङ्गत्वात्[१], अन्तरङ्गत्वादचैतन्य-मात्रमुपादानगतं हेतोः प्रयोजकम्। यथाहुः— "व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः" इति; तत्राह— **न च मृदादीति**। स्वभावप्रतिबद्धं हि व्याप्यं व्यापकमवगमयति। स च शङ्कितसमारोपितोपाधिनिरासे सति निश्चीयते। तन्निश्चयश्चान्वय-व्यतिरेकाभ्याम्। तौ च यथोपादानचैतन्ये, तथा चेतनप्रयुक्तत्वे। तदलमन्तरङ्गत्वेनेति भावः। एवमपि चेतनप्रयुक्तत्वं नाभ्युपगन्तव्यं यदि मानान्तरं विरुध्येत, तदपि नास्तीत्याह— **न चैवमिति**। श्रुत्यनुग्रहाच्चेत्थमेवाभ्युपगन्तव्यमित्याह— **प्रत्युत श्रुतिरिति**।

### *न्यायनिर्णयः*

विमतं न स्वतन्त्राचेतनकार्यं, विचित्रकार्यत्वाद्, विशिष्टरचनात्मकत्वाद्वा, विशिष्टशिल्पिनिर्मितप्रासादादिवदित्यनुमानमाह— **कथमिति**। किंच न प्रधानं जगत्कारणं, केवलाचेतनत्वात्, लोष्टवदित्याह— **लोष्टेति**। किंच विमतं विशिष्टचेतनाधिष्ठितमेव स्वकार्यकरं, [अ]चेतनत्वात्, मृदादिवदित्याह— **मृदादिष्वपीति**। ननु दृष्टान्तधर्मिण्यचेतनं तावदुपादानं दृष्टम्, तत्र चेतनप्रयुक्तत्वे दृष्टेऽपि तत्प्रयुक्तत्वं बहिरङ्गत्वादप्रयोजकमचेतनत्व-मात्रमुपादानगतमन्तरङ्गत्वात् प्रयोजकम्। तथाच यथा निषिद्धत्वप्रयुक्ता व्याप्तिरधर्मत्वस्य हिंसात्वेऽध्यस्यते तथा विशिष्टरचनात्मकत्वादावेकत्र साधने प्रकृतिगताचेतनत्वचेतनाधिष्ठितत्वसाध्यद्वयवत्यन्तरङ्गाचेतनत्वप्रयुक्ता हेतुसाध्ययोर्व्याप्तिर्बहिरङ्गचेतनाधिष्ठितत्वेऽध्यस्तेति कुतो जगतश्चेतनाधिष्ठिताचेतनप्रकृतिकत्वमत आह— **न चेति**। नान्तरङ्गबहिरङ्गत्वकृते व्यापकत्वाव्यापकत्वे, किं त्वव्यभिचारव्यभिचारकृते। महानसादिस्वरूपस्यान्तरङ्गस्यापि व्यभिचाराद् धूमवत्त्वं प्रत्यव्यापकत्वात्, बहिरङ्गस्यापि वह्निसंयोगस्याव्यभिचाराद् व्यापकत्वादिति भावः। किंच मृदादिगतचेतनप्रयुक्तत्वस्य जगत्प्रकृतावनुपगमो मानान्तरविरोधाद्वा, तदनुग्रहाभावाद्वेति विकल्प्याद्यं दूषयति— **न चैवमिति**। मृदादिलौकिकप्रकृतिषु दृष्टचेतनप्रयुक्तत्वस्य जगत्प्रकृतावभ्युपगमे सतीति यावत्। द्वितीयं प्रत्याह— **प्रत्युतेति**। सम्प्रति साधनत्वादिफलमुपसंहरति— **अत इति**।

१. दृष्टान्ते दृष्टं चेतनप्रयुक्तत्वं स्वरूपबहिर्भूतचेतनापेक्षत्वाद् बहिरङ्गम्, अचेतनत्वं तु न तथेत्यन्तरङ्गम्।

**अन्वयाद्यनुपपत्तेश्चेति चशब्देन हेतोरसिद्धिं समुच्चिनोति। न हि बाह्याध्यात्मिकानां भेदानां सुखदुःखमोहात्मकतयाऽन्वय उपपद्यते, सुखादीनां चान्तरत्वप्रतीतेः, शब्दादीनां चातद्रूपत्वप्रतीतेः, तन्निमित्तत्वप्रतीतेश्च। शब्दाद्यविशेषेऽपि च भावनाविशेषात् सुखादिविशेषोपलब्धेः। तथा परिमितानां भेदानां मूलाङ्कुरादीनां संसर्गपूर्वकत्वं दृष्ट्वा बाह्याध्यात्मिकानां भेदानां परिमितत्वात् संसर्गपूर्वकत्वमनुमिमानस्य सत्त्वरजस्तमसामपि संसर्गपूर्वकत्वप्रसङ्गः, परिमितत्वाविशेषात्। कार्यकारणभावस्तु प्रेक्षापूर्वकनिर्मितानां शयनासनादीनां दृष्ट**

### *प्रकटार्थविवरणम्*

सौत्रचकारस्यार्थमाह— **अन्वयादि[दी]ति**। सुखादीनामान्तरत्वात् शब्दादीनां च बाह्यत्वप्रतीतेः सुखाद्यन्वयो भावानामसिद्ध इत्यर्थः। किञ्च शब्दादीनां सुखादिनिमित्तत्वप्रतीतेः निमित्तनैमित्तिकयोश्च भेदस्य प्रसिद्धत्वान्न शब्दादीनां सुखाद्यात्मकत्वमित्याह— **तन्निमित्तत्वप्रतीतेश्चेति**। किञ्च शब्दादीनां सुखाद्यात्मकत्वे सर्वेषां साधारणः सुखादिप्रतिभासः स्यात्; न चास्ति; 'पुत्रस्ते जातः' इत्यादिशब्दश्रवणे पितुः सुखदर्शनात्, तच्छत्रोः दुःखदर्शनादित्याह— **शब्दाद्यविशेषेऽपि चेति**। एवमाद्यहेतुं निराकृत्य द्वितीयहेतुं निराकरोति— **तथा परिमितानामिति**। संसर्गशब्देनानुगतं लक्ष्यते। देशेन परिच्छिन्नत्वं हस्तादिपरिमिति [मितत्वं] परिमाणयोग्यत्वं वा यदि परिमितत्वम्, तदा भागासिद्धिः; आकाशादेः तदभावात्; यदि परिगणितत्वं वस्तुतो भिन्नत्वं वा, तदा प्रधानपुरुषेष्वनैकान्तिक

### *भाष्यभावप्रकाशिका*

सूत्रगतचकारस्यार्थं दर्शयति— **अन्वयाद्यनुपपत्तेश्चेति**। ननु अन्वितत्वं साधितमनुमानेनेत्याशङ्क्य, मैवम्; प्रत्यक्षविरुद्धतया कालात्ययापदिष्टत्वादित्याह— **न हि बाह्याध्यात्मिकानामिति**। इदानीं सप्रतिपक्षतामाह— **तन्निमित्तत्वप्रतीतेश्चेति**। शब्दादीनां निमित्तत्वान्नैमित्तिकत्वाच्च सुखादीनाम्। निमित्त-नैमित्तिकयोश्च भिन्नत्वादित्यर्थः। शब्दाद्युपलभमानानां पुंसा प्रत्येकं युगपत् सुख-दुःख-मोहप्रतीत्यभावाद् योग्यानुपलब्धिविरोधमाह— **शब्दाद्यविशेष इति**। भावना = तत्तज्जात्युचिता वासना; तद्विशेषादुष्ट्रादीनां कण्टकादौ सुखादिदर्शनात्। अतो न स्वतस्सुखादिरूपता भावानामित्यर्थः। रूपाणां सामान्यादीनां च द्रव्येष्वनुगतानामनुपादान-कारणत्वादनैकान्तिकश्चान्वयादिति हेतुः। किं वस्तुतः परिमितत्वम्, किं वा कालतः, अथवा देशतः। यदि तृतीयः, तदा भागासिद्धिः, आकाश-महदादिष्व-भावात्। यदि कालतः, तन्न; पञ्चविंशतितत्त्वव्यतिरेकेण कालस्यानभ्युपगमात्। अथ कारणमेव केनचिदुपाधिना कालशब्दवाच्यमित्युच्येत, किमिदं तर्हि परिमितत्वं नाम? तद्व्याप्यत्वं चेत् तर्हि पुरुषेऽनैकान्तिकत्वम्; इतीतरेतरव्यपाश्रयत्वात्। अथ वस्तुतः परिमितत्वम्, तत्राह— **सत्त्वरजस्तमसामपीति। संसर्गपूर्वकत्वप्रसङ्ग इति**। गुणानां संसृष्टानेकवस्तुप्रकृतिकत्वप्रसङ्ग

### *न्यायनिर्णयः*

पादस्याद्ये सूत्रे हेत्वन्तरानुक्तिपरे चशब्दानुपपत्तिरित्याशङ्क्याह— **अन्वयादि[दी]ति**। नाचेतनं जगत्कारणमनुमातव्यमिति पूर्वेण हेत्वन्तरं सम्बध्यते। ननु सर्वस्यापि कार्यस्य यथायथं सुखादिव्यञ्जकत्वेन तदन्वितत्वानुभवात् कथमन्वयानुपपत्तिः, तत्राह— **न हीति**। प्रत्यक्षविरुद्धतया कालात्ययापदिष्टत्वाच्चायुक्तः समन्वयहेतुरित्याह— **सुखादीनामिति**। किंच शब्दादयो न सुखाद्यात्मानः, तन्निमित्तत्वात्, यद् यन्निमित्तं न तत् तदात्मकं, यथा कुलालादि कुम्भादिनिमित्तं न तदात्मकमिति प्रत्यनुमानमाह— **तन्निमित्तत्वेति**। किंच शब्दाद्युपलभमानानां प्रत्येकमपर्यायेण सुखदुःखमोहप्रतीत्यभावाद् योग्यानुपलब्धिविरुद्धमनुमानमित्याह— **शब्दादीति**। भावना तत्तज्जातियोग्या वासना, तद्विशेषादुष्ट्रादीनां कण्टकादौ सुखादिदर्शनात् स्वतः सुखादिरूपताऽभावाद् रूपादीनां सामान्यादीनां च द्रव्येष्वनुगतानामतदुपादानत्वादनैकान्तिकश्च समन्वयः। तस्मादनुपपत्तिः सिद्धेत्यर्थः। आदिशब्दोपात्तां परिमितत्वानुपपत्तिं कथयति— **तथेति**। तस्याः स्फुटीकरणार्थं परोक्तमनुमानमनुवदति— **परिमितानामिति**। अविभक्तमेकमनुगतं वस्तु संसर्गशब्देन लक्ष्यते। देशतो वा कालतो वा वस्तुतो वा परिमितत्वम्। आद्ये भागासिद्धिराकाशादिष्वभावात्। द्वितीये स्वरूपासिद्धिः, पञ्चविंशतितत्त्वातिरिक्तकाला-नभ्युपगमात्। न च कारणमेव केनचिदुपाधिना कालशब्दवाच्यं, तथा सति परिमितत्वस्य तद्व्याप्यत्वस्य पुरुषेष्वनैकान्तिकत्वादित्यभिप्रेत्य तृतीयं प्रत्याह— **सत्त्वेति। संसर्गपूर्वकत्वप्रसङ्ग इति**। गुणानां संसृष्टानेकवस्तुप्रकृतिकत्वप्रसक्तिरित्यर्थः। प्रकृतिविकारतुल्य-

**इति न कार्यकारणभावाद् बाह्याध्यात्मिकानां भेदानामचेतनपूर्वकत्वं शक्यं कल्पयितुम्।।१।।**

**प्रवृत्तेश्च।।२।।**

**आस्तां तावदियं रचना। तत्सिद्ध्यर्था या प्रवृत्तिः– साम्यावस्थानात्प्रच्युतिः, सत्त्वरजस्तमसामङ्गाङ्गिभावरूपापत्तिर्विशिष्टकार्याभिमुखप्रवृत्तिता– साऽपि नाचेतनस्य प्रधानस्य स्वतन्त्रस्योपपद्यते, मृदादिष्वदर्शनाद् रथादिषु च। न हि मृदादयो रथादयो वा स्वयमचेतनाः सन्तश्चेतनैः कुलालादिभिरश्वादिभिर्वाऽनधिष्ठिता विशिष्टकार्याभिमुखप्रवृत्तयो दृश्यन्ते। दृष्टाच्चादृष्टसिद्धिः। अतः प्रवृत्त्यनुपपत्तेरपि हेतोर्नाचेतनं जगत्कारणमनुमातव्यं भवति।**

**ननु चेतनस्यापि प्रवृत्तिः केवलस्य न दृष्टा।**

### *प्रकटार्थविवरणम्*

[कत्वम्] इति भावः। यच्च परिशिष्टं हेत्वन्तरं तेनैकवस्तुप्रकृतिकत्वं चेत् साध्यम्, तदा सिद्धसाधनम्; यद्यचेतनैकपूर्वकत्वं तदा शयनादिष्वनैकान्तिकत्वमित्याह— **कार्यकारणभावस्त्विति**।।१।।

**प्रवृत्तेश्च**।। प्रवृत्तेश्चानुपपत्तेर्नानुमानिकं प्रधानं कारणमिति योजना। ननु मा नाम दृश्यतां चेतनानधिष्ठितस्य प्रवृत्तिः; ततः प्रधाने किमायातमित्याशङ्क्याह— **दृष्टाच्चादृष्टसिद्धिरिति**। दृष्टाददृष्टसिद्धिस्तवानुमानवादिनः, इतरथाऽतिप्रसङ्गादित्यर्थः।

गूढाभिसन्धिः सांख्यः शङ्कते— **ननु चेतनस्यापीति**। चेतनस्याप्यचेतनसंयुक्तस्यैव प्रवृत्तिर्न शुद्धस्य; अतः प्राप्ताप्राप्त-

### *भाष्यभावप्रकाशिका*

इत्यर्थः। प्रकृतिविकारसमानस्वभावानुमानस्य प्रत्यनुमानविरोधमाह— **कार्यकारणभावस्त्वित्यादिना**।।१।।

**प्रवृत्तेश्च**।।२।। शक्तितः प्रवृत्तेश्चेत्ययमपि हेतुर्विरुद्ध इत्याह— **प्रवृत्तेश्चेति**। यद्यप्यत्र कारणस्य प्रवृत्तिः स्वतन्त्रस्य निराक्रियते, तथापि कार्यस्यापि समानन्यायतया सा निराकृतैव भवति[इति] कारणसद्भावहेतोर्विरुद्धतैव प्रदर्श्यते। तामेव दर्शयति— **साम्येति**। ननु एषैव रचनेति, तत्राह— **सत्त्वेति**। किमर्था सेति, अत आह— **विशिष्टकार्येति**। कार्यवैषम्यायेत्यर्थः। भवतु प्रवृत्त्यभावो रथादौ, किमायातं प्रधानस्येति? अत आह— **दृष्टाच्चादृष्टसिद्धिरिति**।

अचेतनस्य प्रवृत्तिर्नास्तीत्युक्ते केवलचेतनस्य प्रवृत्तिर्विवक्षितेति मन्वानश्चोदयति— **ननु चेतनस्यापीति**। एवमपि चेतना-

### *न्यायनिर्णयः*

स्वभावानुमानस्य प्रत्यनुमानविरोधमाह— **कार्येति**। विमतं न केवलाचेतनपूर्वकं, कार्यत्वात्, संप्रतिपन्नवदित्यर्थः।।१।।

यत्तु 'शक्तितः प्रवृत्तेश्च' इति; तत्राह— **प्रवृत्तेश्चेति**। प्रवृत्तेश्चानुपपत्तेर्नानुमानिकं कारणमिति योजना। यद्यपि स्वतन्त्रस्य कारणस्य प्रवृत्तिरत्र निरस्यते तथापि तुल्यन्यायतया कार्यस्यापि सा निरस्तैव भवतीति 'शक्तितः प्रवृत्तेश्च' इत्यस्य हेतोर्विरुद्धतोपदर्शनमिदमित्याशयवानाह— **आस्तामिति**। का सा रचनार्था प्रवृत्तिर्यस्याः सम्प्रत्यनुपपत्तिरुपन्यस्यते, तामाह— **साम्येति**। नन्वेषैव रचना, न पुना रचनार्थेत्याशङ्क्याह— **सत्त्वेति**। तस्या रचनार्थत्वं स्पष्टयति— **विशिष्टेति**। न हि साम्यावस्थायां प्रधानस्य विचित्रविकाररचनाभिमुख्येन प्रवृत्तिरवकल्पते, तथाच गुणवैषम्यापत्तेर्भवति रचनार्थेत्यास्थेयमित्यर्थः। विमतं न प्रवृत्तिशक्तिमत्, केवलाचेतनत्वात्, संमतवदित्याह— **सापीति**। दृष्टान्तस्य साध्यवैकल्यमुद्धरति— **न हीति**। तेषु स्वतन्त्रेषु प्रवृत्त्यभावेऽपि प्रधाने तथाविधे सा स्यादिति व्यवस्थामाशङ्क्याह— **दृष्टाच्चेति**। अचेतनं मृदादि चेतनानधिष्ठितं प्रवृत्तिशक्तिशून्यं दृष्टं, ततश्चादृष्टे प्रधानेऽपि स्वतन्त्रे प्रवृत्तिशक्तिराहित्यमिति कल्पनाया दृष्टानुसारित्वादित्यर्थः। अनुमानफलं निगमयति— **अत इति**। समन्वयाद्यनुपपत्तिं दृष्टान्तयितुमपिशब्दः।

अचेतनस्य प्रवृत्तिं प्रतिषेधता केवलचेतनस्य वा तस्यैवाचेतनसंयुक्तस्य वा प्रवृत्तिर्विवक्षितेति विकल्प्याद्यं दूषयन्नाशङ्कते—

**सत्यमेतत्। तथापि चेतनसंयुक्तस्य रथादेरचेतनस्य प्रवृत्तिर्दृष्टा। न त्वचेतनसंयुक्तस्य चेतनस्य प्रवृत्तिर्दृष्टा।**

**किं पुनरत्र युक्तम्? यस्मिन् प्रवृत्तिर्दृष्टा तस्य सा, उत यत्संप्रयुक्तस्य दृष्टा तस्य सेति। ननु यस्मिन् दृश्यते प्रवृत्तिस्तस्यैव सेति युक्तमुभयोः प्रत्यक्षत्वात्। न तु प्रवृत्त्याश्रयत्वेन केवलश्चेतनो रथादिवत् प्रत्यक्षः। प्रवृत्त्याश्रयदेहादिसंयुक्तस्यैव तु चेतनस्य सद्भावसिद्धिः, केवलाचेतनरथादिवैलक्षण्यं जीवद्देहस्य दृष्टमिति।**

### *प्रकटार्थविवरणम्*

विवेकेनाचेतनमेव प्रवृत्तिहेतुरिति भावः। अर्धाङ्गीकारेण परिहरति— **सत्यमेतदिति**। केवलस्य चेतनस्य प्रवृत्तिर्न दृष्टेत्येतत् सत्यम्; तथाप्यचेतनमेव प्रवृत्तिहेतुरित्येतत् तु नास्ति; यतः पुरुषाधिष्ठितो रथो यातीति प्रसिद्धिः, न तु रथाधिष्ठितः पुरुषो यातीति; ततश्चेतनस्य प्रवृत्तौ प्रयोजकतेति भावः।

विमर्शपूर्वकं गूढाभिसन्धिं विवृणोति सांख्यः— **किं पुनरत्रेति**। यदाश्रया दृश्यते तस्यैव प्रयोजकत्वं युक्तमिति स्वयमेवाह— **यस्मिन्निति**। ननु 'अहमत्र प्रवृत्त' इति चेतनाश्रयाऽपि प्रवृत्तिः प्रत्यक्षसिद्धा; अतस्तस्यापि प्रयोजकत्वं किं न स्यादित्याशङ्क्याह— **न तु प्रवृत्त्याश्रयत्वेनेति**। कार्यकारणसंघातस्यैवाहंप्रत्ययवेद्यत्वादिति भावः। कथं तर्हि व्यतिरिक्तात्मसिद्धिरित्याशङ्क्याह— **प्रवृत्त्याश्रयेति**।

### *भाष्यभावप्रकाशिका*

चेतनसम्बन्धादुत्पद्यमाना प्रवृत्तिः किमित्यचेतनाधीना न स्यादित्यभिप्रेत्य परिहरति— **सत्यमेतदिति**। सांख्य आह— **न त्वचेतनसंयुक्तस्येति**। तुशब्देन वेदान्तिपक्षं व्यावर्तयति। अचेतनाश्रयैव सर्वा प्रवृत्तिर्दृश्यते, न तु चेतनाश्रया काचिदपि। तस्मान्न चेतनस्य जगत्सर्जने प्रवृत्तिरित्यर्थः।

सिद्धान्ती गूढाभिसंधिः प्रश्नपूर्वकं विमृशति— **किं पुनरत्रेति**। अत्र सांख्यो ब्रूते— **ननु यस्मिन्निति**। अथवा यद्यपि केवलचेतनस्य प्रवृत्तिं प्रत्यनाश्रयत्वम्; तथाप्यचेतनाश्रयां प्रवृत्तिं प्रति कारणत्वमधिष्ठातृत्वाव्यभिचारायाभ्युपगन्तव्यमेवेत्याह— **सत्यमेतदिति**। ननु चेतनाचेतनसंनिधावुत्पद्यमानायाः प्रवृत्तेश्चेतनस्यैवाधिष्ठातृतया कारणत्वं कस्मादभ्युपगम्यते? अचेतनस्यैवाधिष्ठातृतया कारणत्वं किं न स्यादित्याशङ्क्याह— **न त्वचेतनसंयुक्तस्येति**। यदि चेतनस्य प्रवृत्त्याश्रयत्वं दृश्येत, तदा तत्राचेतनस्याधिष्ठातृत्वं परिकल्प्येत, न तु दृश्यते। तस्मादचेतनस्य प्रवृत्तिं प्रत्याश्रयत्वमेव, नाधिष्ठातृत्वमित्यर्थः।। अत्र पूर्ववादी विमृशति— **किं पुनरिति**। किमाश्रयस्याचेतनस्य प्रवृत्तिः कार्यम्? उताधिष्ठातुश्चेतनस्यैवेति विमर्शार्थः। स एव पूर्ववाद्याह— **ननु यस्मिन्दृश्यत इति। उभयोः प्रत्यक्षत्वादिति**। प्रवृत्ति-तदाश्रययोरित्यर्थः। ननु आत्मनोऽपि प्रत्यक्षत्वात् प्रवृत्ति-तदाश्रययोः प्रत्यक्षत्वमिति, अत आह— **न त्विति। प्रवृत्त्याश्रयत्वेनेति**। एतदुपलक्षणमात्रम्। प्रवृत्तिं प्रत्यधिष्ठातृत्वेनापि नोपलभ्यत इति द्रष्टव्यम्। तस्मादचेतनस्यैव प्रवृत्तिं प्रति निमित्तत्वम्, आश्रयत्वं चेति भावः। ननु प्रत्यक्षत्वाभावे कथमात्मनस्सिद्धिरित्याशङ्क्यानुमानादित्याह— **प्रवृत्त्याश्रयेति**।

### *न्यायनिर्णयः*

**नन्विति**। केवलस्य चेतनस्य प्रवृत्तिरदृष्टेत्येतदङ्गीकरोति— **सत्यमिति**। केवलस्याचेतनस्यैव प्रवृत्तिः स्यादित्याशङ्क्याह— **तथापीति**। चेतनमात्रस्यादृष्टाऽपि प्रवृत्तिरुभयसम्बन्धादुत्पद्यमाना किमित्यचेतनाधीना, चेतनाधीनैव किं न स्यादित्यर्थः। उभयसम्बन्धात् प्रवृत्त्युत्पत्तावपि चेतनस्य तदाश्रयत्वादर्शनादचेतनस्यैव तद्दर्शनात् तस्यैव प्रवृत्तिरिति मन्वानो द्वितीयं निराकुर्वन्नाशङ्कते— **न त्विति**। तुशब्दश्चेतनस्य जगत्सर्गे प्रवृत्तिरिति मतव्यावृत्त्यर्थः। सर्वा प्रवृत्तिरचेतनाश्रयैव दृष्टा न तु चेतनाश्रया, तत्र सिद्धान्तसिद्धिरित्यर्थः।

तत्र प्रश्नपूर्वकं सिद्धान्ती गूढाभिसंधिर्विमृशति— **किं पुनरिति**। केवलस्य चेतनस्याचेतनस्य वा प्रवृत्त्यदर्शनदशायामिति सप्तम्यर्थः। **यस्मिन्नित्य**चेतनस्य रथादेरुक्तिः। **तस्येति** संयोगिनश्चेतनस्याभिधानम्। तत्र सांख्यो ब्रूते— **नन्विति**। युक्तत्वे हेतुमाह— **उभयोरिति**। प्रवृत्तितदाश्रययोरिति यावत्। आत्मनोऽपि प्रत्यक्षत्वात् प्रवृत्तितदाश्रययोस्तुल्यं प्रत्यक्षत्वं पक्षान्तरेऽपीत्याशङ्क्याह— **न त्विति**। प्रत्यक्षत्वाभावे कथमात्मसिद्धिरित्याशङ्क्यानुमानादित्याह— **प्रवृत्तीति**। अनुमानसिद्धस्य चेतनस्य न प्रवृत्त्याश्रयतेति दर्शयितुमेवकारः। कथमनुमानमित्यपेक्षायां तत्प्रकारं सूचयति— **केवलेति**। वैलक्षण्यं प्राणादिमत्त्वम्। **इतिशब्दो** यस्मादर्थे।

**अत एव च प्रत्यक्षे देहे सति दर्शनादसति चादर्शनाद् देहस्यैव चैतन्यमपीति लौकायतिकाः प्रतिपन्नाः। तस्मादचेतनस्यैव प्रवृत्तिरिति।**

**[१]तदभिधीयते– न ब्रूमो यस्मिन्नचेतने प्रवृत्तिर्दृश्यते न तस्य सेति। भवतु तस्यैव सा। सा तु चेतनाद् भवतीति ब्रूमः; तद्भावे भावात् तदभावे चाभावात्। यथा काष्ठादिव्यपाश्रयाऽपि दाहप्रकाशलक्षणा विक्रियाऽनुपलभ्यमानाऽपि च केवले ज्वलने ज्वलनादेव भवति, तत्संयोगे दर्शनात् तद्वियोगे चादर्शनात्,**

### *प्रकटार्थविवरणम्*

जीवदेहः सात्मकः, प्राणादिमत्त्वात्, न य एवं न स एवम्, यथा रथः इत्यनुमानात् तत्सद्भावमात्रं सिध्यतीत्यर्थः। केवल आत्मा प्रवृत्त्याश्रयतया प्रत्यक्षो न भवतीत्यर्थः। अत्र लिङ्गमाह— **अत एव चेति**। यतः प्रत्यक्षेण केवल आत्मा न सिद्धः, अत एव लोकायतिकानां विवादः, अन्यथा व्यतिरिक्तात्मनि विवादो न स्यादित्यर्थः। यस्मादात्माश्रया प्रवृत्तिः प्रत्यक्षसिद्धा न भवति, तस्मादित्युपसंहारः।

सिद्धान्ती त्वचेतनस्य प्रवृत्तिमभ्युपगम्य चेतनस्य प्रयोजकत्वं निवारयितुं न शक्यत इत्याह— **तत्राभिधीयत इत्यादिना**।

### *भाष्यभावप्रकाशिका*

केन लिङ्गेनेति? अत आह— **केवलेति**। वैलक्षण्यं प्राणादिमत्त्वम्। इति = यस्मादित्यर्थः। एवमनुमानसिद्धस्यापि चेतनस्य न प्रवृत्तिनिमित्तता; अन्वयमात्रेण कारणताऽसिद्धेरित्येवकारेण दर्शयति। लोकायतिकानां देहात्मत्वविभ्रमोऽपि देहव्यतिरिक्तात्मनोऽप्रत्यक्षत्वस्य प्रवृत्तिहेतुताया ज्ञापक इत्याह— **[अत] एवेति**। **दर्शनात्**। प्रवृत्तेरित्यध्याहारः। **चैतन्यस्येति**। प्रत्यक्षश्चेत्, तस्य चैतन्यम्, अन्यस्य वेति। केवलव्यतिरेकाभावाद् देहस्यैवेति विभ्रमासंभव इति भावः। ननु मृते शरीरे प्रवृत्त्यभावाच्चेतनस्यैव सेत्यभ्युपगन्तव्यमित्याशङ्क्य प्राणाद्यभावात् तत्राप्रवृत्तिः, न चैतन्याभावादित्याह— **अचेतनस्यैवेति**।

अन्वय-व्यतिरेकाभ्यां चेतनहेतुकत्वं प्रवृत्तेर्निश्चीयत इति परिहरति सिद्धान्ती— **तदभिधीयत इति**। न च तदभावे चाभावादिति सन्दिग्धो व्यतिरेकः, प्राणाद्यभावादपि तत्र प्रवृत्त्यसंभवादिति-वाच्यम्; प्राणादेरप्यचेतनत्वात्, रथादिवच्चेतनान्तराधीनप्रवृत्तित्वानुमानात्, प्राणादीनां प्राणाद्यन्तराभावेऽपि प्रवृत्तिदर्शनाच्चेति भावः। अन्यगता प्रवृत्तिरन्याधीना क्व दृष्टेति? अत आह— **यथा काष्ठादीति**। लोकायतिकानामपि चेतनाधिष्ठानादचेतनप्रवृत्तिरित्यत्राविवाद इत्याह— **लोकायतिकानामिति**।

### *न्यायनिर्णयः*

जीवदेहः सात्मकः, प्राणादिमत्त्वात्, न यः सात्मको न स प्राणादिमान् यथा रथ इत्यनुमानात् तत्सद्भावमात्रं सिध्यतीत्यर्थः। केवलचेतनो न प्रवृत्त्याश्रयतया प्रत्यक्षो भवतीत्यत्र लिङ्गमाह— **अत एवेति**। केवलश्चेतनो यतो न प्रत्यक्षीभवत्यत एव लोकायतानां विवादः। अन्यथा व्यतिरिक्तात्मनि विवादो न स्यादित्यर्थः। **दर्शनात्** प्रवृत्तेश्चैतन्यस्य चेत्यध्याहारः। चेतनाश्रयप्रवृत्तिरप्रत्यक्षा, प्रत्यक्षा त्वचेतनाश्रयेति स्थिते फलितमाह— **तस्मादिति**।

अचेतनस्य प्रवृत्तिमत्त्वमुपेत्य चेतनस्य तत्र प्रयोजकत्वमेष्टव्यमिति परिहरति— **तदभिधीयत इति**। किमचेतनस्य प्रवृत्त्याश्रयत्वमेव साध्यते किं वा प्रवृत्तेश्चेतनानपेक्षत्वमपीति विकल्प्याद्यमङ्गीकरोति— **नेत्यादिना**। द्वितीयं प्रत्याह— **सा त्विति**। प्रवृत्तेश्चेतनकृतत्वेऽन्वयव्यतिरेकौ प्रमाणयति— **तद्भाव इति**। न च रथादौ प्राणाद्यभावेऽपि प्रवृत्त्यभावासंभवाद् व्यतिरेकासिद्धिः। प्राणादेरपि रथादिवदचेतनत्वाच्चेतनाधीनप्रवृत्तिकत्वानुमानात् प्राणादीनां च प्राणाद्यन्तराभावेऽपि प्रवृत्तिदर्शनादिति भावः। अन्यगताऽपि प्रवृत्तिरन्याधीनेत्यत्र दृष्टान्तमाह— **यथेति**। तत्राप्यन्वयव्यतिरेकौ दर्शयति— **तत्संयोग इति**। तथोक्ताभ्यामन्वयव्यतिरेकाभ्यामचेतने दृष्टाऽपि प्रवृत्तिश्चेतने संभवतीति चेतनकृतैवेत्याह— **तद्वदिति**। लोकायतमते चेतनस्यैवानुपगमात् कथमन्वयादिना तस्य प्रवृत्तौ प्रयोजकत्वमित्याशङ्क्याह—

१. 'तत्राभिधीयते' इति प्रकटार्थधृतः पाठः।

**तद्वत्। लौकायतिकानामपि चेतन एव देहोऽचेतनानां रथादीनां प्रवर्तको दृष्ट इत्यविप्रतिषिद्धं चेतनस्य प्रवर्तकत्वम्।**

**ननु तव देहादिसंयुक्तस्याप्यात्मनो विज्ञानस्वरूपमात्रव्यतिरेकेण प्रवृत्त्यनुपपत्तेरनुपपन्नं प्रवर्तकत्वमिति चेत्? न; अयस्कान्तवद् रूपादिवच्च प्रवृत्तिरहितस्यापि प्रवर्तकत्वोपपत्तेः। यथाऽयस्कान्तो मणिः स्वयं प्रवृत्तिरहितोऽप्ययसः प्रवर्तको भवति, यथा वा रूपादयो विषयाः स्वयं प्रवृत्तिरहिता अपि चक्षुरादीनां प्रवर्तका भवन्ति, एवं प्रवृत्तिरहितोऽपीश्वरः सर्वगतः सर्वात्मा सर्वज्ञः सर्वशक्तिश्च सन् सर्वं प्रवर्तयेदित्युपपन्नम्।**

**एकत्वात् प्रवर्त्याभावे प्रवर्तकत्वानुपपत्तिरिति चेत्? न; अविद्याप्रत्युपस्थापितनामरूपमायावेशवशेनासकृत्प्रत्युक्तत्वात्। तस्मात् संभवति प्रवृत्तिः सर्वज्ञकारणत्वे, न त्वचेतनकारणत्वे।।२।।**

### पयोम्बुवच्चेत् तत्रापि।।३।।

*प्रकटार्थविवरणम्*

ननु लोकायतिकेन चेतन एव नेष्यते; कथमन्वयव्यतिरेकाभ्यां तस्य प्रवृत्तौ प्रयोजकत्वमुच्यत इत्याशङ्क्याह— **लोकायतिकानामपीति**।

इदानीं सिद्धान्त्यभिमतात्मस्वभावपर्यालोचनया प्रवर्तकत्वमाक्षिप्य समाधत्ते— **ननु तवेत्यादि**। उक्तमपि विस्मृत्य शङ्कमानस्य तदेव स्मारयति— **नाविद्येति**। अविद्यया जाड्यरूपेण प्रत्युपस्थापिता शास्त्रेण समर्पिता या नामरूपहेतुर्माया तस्यां प्रतिबिम्बितत्वेनेश्वरादिभाव इति असकृदुक्तमित्यर्थः।।

**पयोम्बुवच्चेत् तत्रापि**। प्रत्यक्षदृष्टबलेन स्वतन्त्रस्यैवाचेतनस्य प्रवृत्तिमाशङ्क्य परिहरति— **पयोम्बुवदिति**। न केवलमनुमाना-

*भाष्यभावप्रकाशिका*

ननु प्रवृत्तिमतामेव प्रवर्तकत्वं राजादीनां दृष्टम्, इह प्रवृत्त्यभावादात्मनो न प्रवर्तकत्वमिति चोदयति— **ननु तवेति**। परिहरति— **न; अयस्कान्तवदिति**। असम्बन्धस्य कथं प्रवर्तकतेति? अत आह— **सर्वगत इति**। अद्वैतवादिनः प्रवृत्त्यभावाद् न प्रवर्तकत्वमात्मन इति शङ्कते— **एकत्वादिति**। कल्पितद्वैतस्य प्रवर्त्यत्वान्मायोपाधिकस्य प्रवर्तकत्वमविरुद्धमित्याह— **न; अविद्येति**। नामरूपे एव माया; मायाकार्यत्वात्। तदावेशवशेन।।२।।

*न्यायनिर्णयः*

**लौकायतिकानामिति**।

अचेतनस्य प्रवृत्तिमत्त्वेऽपि प्रवृत्तेश्चेतनाधीनत्वमावश्यकमिति सिद्धान्तिना स्वाभिसंधिरुक्तः। सम्प्रति प्रवृत्तिमतामेव राजप्रभृतीनां प्रवर्तकत्वोपलम्भादात्मनस्तदभावान्न प्रवर्तकतेति शङ्कते— **नन्विति**। लोकसिद्धेन सांख्यसंमतेन च दृष्टान्तेन निराचष्टे— **नेत्यादिना**। लोकसिद्धदृष्टान्तं विवृणोति— **यथेति**। द्वितीयमुदाहरणं प्रपञ्चयति— **यथा वेति**। दृष्टान्तयोर्दार्ष्टान्तिकमाह— **एवमिति**। तस्य प्रवर्तकत्वार्थं प्रवर्त्यसंबन्धमाह— **सर्वगत इति**। सर्वमूर्तसंयोगं व्यावर्तयति— **सर्वात्मेति**। बुद्धिपूर्वकारिणो हि प्रवर्तकत्वं दृष्टमित्युपेत्यात्रापि तदापादयति— **सर्वज्ञ इति**। ईश्वरस्य सर्वप्रवर्तकत्वे युक्त्यन्तरमाह— **सर्वेति**। सर्वात्मेत्युक्तमद्वितीयत्वं श्रुत्या[१] चोदयति— **एकत्वादिति**। कल्पितस्य द्वैतस्य प्रवर्त्यत्वसंभवान्मायोपाधिकस्येश्वरस्य प्रवर्तकत्वमविरुद्धमिति परिहरति— **न; अविद्येति**। अनादिरनिर्वाच्याविद्या, तया प्रत्युपस्थापिते कल्पिते नामरूपे एव मायाकार्यत्वान्माया, तत्रावेशोऽध्यस्तचिदात्मसम्बन्धस्तद्वशेन तस्येश्वरादिभावस्यासकृदुक्तत्वेनास्य चोद्यस्य प्रत्युक्तत्वान्नैवमित्यर्थः। स्वपक्षे रचनार्थप्रवृत्त्युपपत्तिमुपसंहरति— **तस्मादिति**। परमते तदनुपपत्तिं निगमयति— **न त्विति**।।२।।

केवलाचेतनस्य मृदादेरदृष्टाऽपि प्रवृत्तिस्तथाभूतस्यान्यस्य दृष्टेत्यचेतनकारणत्वपक्षेऽपि प्रवृत्तिः संभवतीति शङ्कित्वा परिहरति—

१. 'श्रुत्वा' इति पाठः स्यात्।

**स्यादेतत्– यथा क्षीरमचेतनं स्वभावेनैव वत्सविवृद्ध्यर्थं प्रवर्तते, यथा च जलमचेतनं स्वभावेनैव लोकोपकाराय स्यन्दत एवं प्रधानमचेतनं स्वभावेनैव पुरुषार्थसिद्धये प्रवर्तिष्यत इति। नैतत् साधूच्यते। यतस्तत्रापि पयोम्बुनोश्चेतनाधिष्ठितयोरेव प्रवृत्तिरित्यनुमिमीमहे। उभयवादिप्रसिद्धे रथादावचेतने केवले प्रवृत्त्यदर्शनात्। शास्त्रं च 'योऽप्सु तिष्ठन्....... योऽपोऽन्तरो यमयति' (बृ.उ. ३।७।४), 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते' (बृ.उ. ३।८।९) इत्येवंजातीयकं समस्तस्य लोकपरिस्पन्दितस्येश्वराधिष्ठिततां श्रावयति। तस्मात् साध्यपक्षनिक्षिप्तत्वात् पयोम्बुवदित्यनुपन्यासः। चेतनायाश्च धेन्वाः स्नेहेच्छया पयसः प्रवर्तकत्वोपपत्तेः। वत्सचोषणेन च पयस आकृष्यमाणत्वात्। न चाम्बुनोऽप्यत्यन्तमनपेक्षा, निम्नभूम्याद्यपेक्षत्वात् स्यन्दनस्य। चेतनापेक्षत्वं तु सर्वत्रोपदर्शितम्। 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (ब्र.सू.२।१।२४) इत्यत्र तु बाह्यनिमित्तनिरपेक्षमपि स्वाश्रयं कार्यं भवतीत्येतल्लोकदृष्ट्या निदर्शितम्। शास्त्रदृष्ट्या तु पुनः सर्वत्रैवेश्वरापेक्षत्वमापद्यमानं न पराणुद्यते।।३।।**

### *प्रकटार्थविवरणम्*

गमाभ्यामस्वतन्त्रम्, प्रत्यक्षतोऽपीत्याह— **चेतनायाश्च धेन्वा इति**। ननु नास्ति चेत् क्वाप्यचेतनस्य स्वातन्त्र्यं, कथं तर्हि "क्षीरवद्धि" इति पूर्वं निदर्शितमित्याशङ्क्याह— **उपसंहारेति**। लोकसिद्धेनैव निदर्शनेन मायावादे व्यवहारो, न स्वरससिद्धेनैवेति भावः।।

**व्यतिरेकानवस्थितेश्चानपेक्षत्वात्**। ननूक्तनीत्या स्वातन्त्र्येणाचेतनप्रवृत्तिर्न घटते चेन्मा घटिष्ट; तर्ह्यस्तु धर्माद्यपेक्षा प्रवृत्तिरित्या-

### *भाष्यभावप्रकाशिका*

**पयोऽम्बुवच्चेत्तत्रापि** ।।३।। केवलाचेतनस्य मृदादेः प्रवृत्तिर्दृश्यत इति शङ्कते— **स्यादेतदिति**। न साध्येन पक्षेणैव साधनस्य व्यभिचारः, पयोऽम्बुनोरपि साध्यतया पक्षान्तर्भावादित्याह— **नैतदिति**। अथवा शास्त्रेण चेतनाधिष्ठितत्वस्य तत्रापि सिद्धेः सपक्षत्वादव्यभिचार इत्याह— **शास्त्रं चेति**। सपक्षनिक्षिप्तत्वादित्यपि द्रष्टव्यम्। लोकप्रसिद्धं चेतनाधिष्ठितत्वमित्याह— **चेतनायाश्चेति**। अम्बुदृष्टान्तेऽपि किं सर्वथाऽनपेक्षा, किं वा चेतनानपेक्षा। आद्ये पक्षे दूषणमाह— **न चाम्बुनोऽपीति**। उत्तरपक्षं दूषयति— **चेतनापेक्षत्वमिति**। सूत्रकारस्य पूर्वापरविरोध इत्याशङ्क्याह— **उपसंहारदर्शनादिति**। स्थूलदर्शिनामभिप्रायेण तदुक्तम्, न तु वस्तुत इत्यर्थः।।३।।

### *न्यायनिर्णयः*

**पयोम्बुवदिति**। सूत्रे शङ्काभागं विभजते— **स्यादेतदिति**। क्षीरस्यापि चेतनाधिष्ठितस्यैव प्रवृत्तिरित्याशङ्क्य विशिनष्टि— **स्वभावेनेति**। तत्प्रवृत्तेरर्थवत्त्वमाह— **वत्सेति**। केवलचेतनस्याप्रवृत्तिरित्यत्र क्षीरे व्यभिचारमुक्त्वा जलेऽपि व्यभिचारमाह— **यथा चेति**। दार्ष्टान्तिकमाह— **एवमिति**। पुरुषार्थो भोगश्चापवर्गश्च। **तत्रापीति** परिहारमवतार्य व्याचष्टे— **नैतदिति**। कथमनुमानमित्युक्ते तत्प्रकारं सूचयति— **उभयवादीति**। विमता प्रवृत्तिश्चेतनाधिष्ठानपूर्विका, अचेतनप्रवृत्तित्वात्, संप्रतिपन्नप्रवृत्तिवदित्यनुमानात् पयोम्बुनोरपि पक्षान्तर्भावान्न व्यभिचाराशङ्केत्यर्थः। किंच शास्त्रेण तत्रापि चेतनाधिष्ठितत्वस्य सिद्धत्वेन सपक्षत्वान्न व्यभिचार इत्याह— **शास्त्रं चेति**। तस्यार्थं संक्षिपति— **समस्तस्येति**। शास्त्रानुमानाभ्यां सिद्धमर्थमुपसंहरति— **तस्मादिति**। **साध्यपक्षनिक्षिप्तत्वं** साध्यवति पक्षे प्रविष्टत्वमेव। तच्च सपक्षनिक्षिप्तत्वस्याप्युपलक्षणम्। **अनुपन्यासो** न व्यभिचारभूमिरित्यर्थः। इतश्च क्षीरदृष्टान्तेऽपि व्यभिचारो नास्तीत्याह— **चेतनायाश्चेति**। केवलाचेतनस्य पयसो न प्रवृत्तिरित्यत्र हेत्वन्तरमाह— **वत्सचोषणेनेति**। अम्बुदृष्टान्तेऽपि सर्वथाऽनपेक्षत्वं चेतनानपेक्षत्वं वा प्रवृत्ताविति विकल्प्याद्यं दूषयति— **न चेति**। द्वितीयं निरस्यति— **चेतनेति**। **उपदर्शितम्।** शास्त्रेणेति शेषः। सूत्रकारस्य पूर्वापरविरोधमाशङ्क्य परिहरति— **उपसंहारेति**। लोकदृष्ट्या शास्त्रदृष्ट्या चेति सूत्रद्वयमविरुद्धमित्यर्थः।।३।।

प्रधानस्य स्वातत्र्येण प्रवृत्त्यसंभवेऽपि धर्माद्यपेक्षया प्रवृत्तिः स्यादित्याशङ्क्याह— **व्यतिरेकेति**। व्यतिरेकानवस्थितिं दर्शयितुं

**व्यतिरेकानवस्थितेश्चानपेक्षत्वात्।।४।।**

**सांख्यानां त्रयो गुणाः साम्येनावतिष्ठमानाः प्रधानम्; न तु तद्व्यतिरेकेण प्रधानस्य प्रवर्तकं निवर्तकं वा किंचिद् बाह्यमपेक्ष्यमवस्थितमस्ति। पुरुषस्तूदासीनो न प्रवर्तको न निवर्तक इत्यतोऽनपेक्षं प्रधानम्। अनपेक्षत्वाच्च कदाचित् प्रधानं महदाद्याकारेण परिणमते कदाचिन्न परिणमत इत्येतदयुक्तम्। ईश्वरस्य तु सर्वज्ञत्वात् सर्वशक्तित्वान्महामायत्वाच्च प्रवृत्त्यप्रवृत्ती न विरुध्येते।।४।।**

**अन्यत्राभावाच्च न तृणादिवत् ।।५।।**

**स्यादेतत्– यथा तृणपल्लवोदकादि निमित्तान्तरनिरपेक्षं स्वभावादेव क्षीराद्याकारेण परिणमत एवं प्रधानमपि महदाद्याकारेण परिणंस्यत इति। कथं च निमित्तान्तरनिरपेक्षं तृणादीति गम्यते? निमित्तान्तरानुपलम्भात्। यदि हि किंचिन्निमित्तान्तरमुपलभेमहि, ततो यथाकामं तेन तृणाद्युपादाय क्षीरं संपादयेमहि, न तु संपादया-**

*प्रकटार्थविवरणम्*

शङ्क्याह— **सांख्यानां त्रयो गुणा इत्यादिना**। धर्मादेरपि प्रधानविकारतया तत्रैवान्तर्भूतस्याचेतनत्वसाम्यात् न स्वातन्त्र्येण प्रधानप्रवर्तकत्वमित्यर्थः। तर्हि पुरुषः प्रवर्तकोऽस्त्वित्याशङ्क्याह— **पुरुषस्तूदासीन इति**। फलितमाह— **इत्यतोऽनपेक्षमिति**। तर्हीश्वरस्यापि व्यतिरिक्तः प्रवर्तको निवर्तको वा नास्तीति सदा प्रवृत्तिर्वा निवृत्तिर्वा समानेत्याशङ्क्याह— **ईश्वरस्य त्विति**। जानात्येवेश्वरः अयं प्राणिनां भोगकालः, अयं च नेति। ततः सृष्टौ संहारे च तस्य प्रवृत्त्यप्रवृत्ती न विरुध्येते इत्यर्थः।

**अन्यत्राभावाच्च न तृणादिवत्**। दृष्टान्तावष्टम्भेन स्वाभाविकं प्रधानस्य परिणाममाशङ्क्य परिहरति— **स्यादेतदित्यादिना**।

*भाष्यभावप्रकाशिका*

**व्यतिरेकानवस्थितेश्चानपेक्षत्वात्** ।।४।। व्यतिरेकानवस्थितिं दर्शयितुं पक्षं दर्शयति— **साङ्ख्यानामिति**। **बाह्यमपेक्ष्यमिति**। धर्माधर्मयोस्सतोरपि प्रतिबन्धकनिवर्तकत्वमेव, न तु निमित्तत्वम्; 'निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवदि' ति सूत्रात्[१]। न च प्रतिबन्धविगमस्य धर्माधर्मापेक्षत्वात् प्रवृत्तेः कादाचित्कत्वम्; तयोरपि सदा भावादिति भावः। स्वपक्षमुपपादयति— **ईश्वरस्येति**।।४।।

**अन्यत्राभावाच्च न तृणादिवत्**।।५।। चेतनमचेतनं वा निमित्तमनपेक्ष्य परिणामो न युक्त इत्युक्तम्, इदानीं तदभावेऽपि प्रवृत्तेर्दृष्टत्वात् कथमसंभव इति शङ्कते— **स्यादेतदिति**। धेन्वाश्चैतन्यस्य क्षीरपरिणामे न कारणता, किन्तु तृणाद्युपयोगेनोपकारितेत्यर्थः।

*न्यायनिर्णयः*

परपक्षमनुवदति— **सांख्यानामिति**। सम्प्रति व्यतिरेकानवस्थितिं दर्शयति— **नेत्यादिना**। धर्मादेः सत्त्वेऽपि प्रतिबन्धनिवृत्तिमात्रोपयोगादकादाचित्कत्वाच्च न कादाचित्कप्रवृत्त्यादिप्रयोजकतेति भावः। किंच प्रधानान्तर्भूतत्वाद् धर्मादेर्न तत्प्रवृत्तिप्रयोजकत्वम्। न हि किंचिदपि प्रधानातिरिक्तं तन्मते संमतमस्ति। न च तदेव तत्प्रवृत्त्यादौ प्रयोजकीभवतीत्यभिप्रेत्याह— **बाह्यमिति**। मा भूद्धर्मादि प्रधानस्य प्रवर्तकं निवर्तकं वा, पुरुषस्तु तथेत्याशङ्क्याह— **पुरुषस्त्विति**। अपेक्षणीयाभावादनपेक्षत्वे प्रधानस्यागन्तुकप्रवृत्तिनिवृत्त्योरनुपपत्तिरिति फलितमाह— **इत्यत इति**। परपक्षेऽनुपपत्तिमुक्त्वा स्वपक्षमुपपादयति— **ईश्वरस्येति**।।४।।

चेतनमचेतनं वा निमित्तमनपेक्ष्य प्रधानस्य परिणामो न युक्त इत्युक्तम्। इदानीं तदभावेऽपि प्रवृत्तेर्दृष्टत्वात् कथमनुपपत्तिरित्याशङ्क्याह— **अन्यत्रेति**। सूत्रव्यावर्त्यामाशङ्कामाह— **स्यादेतदिति**। दृष्टान्ते निरपेक्षत्वनिश्चयहेतुं पृच्छति— **कथमिति**। योग्यानुपलब्धेस्तथेत्याह– **निमित्तान्तरेति**। तदनुपलब्धिमेव व्यतिरेकद्वारा स्फोरयति– **यदि हीति**। योग्यानुपलब्ध्या निमित्तान्तराभावे सिद्धे

---

१. निमित्तं धर्मादि, प्रकृतीनां मूलप्रकृतेर्महदादिप्रकृतिविकृतीनां च अप्रयोजकं स्वकार्ये सर्गे, किन्तु वरणस्य प्रतिबन्धकस्य, भेदः भङ्गः, ततः निमित्ताद् भवति; क्षेत्रिकवत् यथा क्षेत्रिकः केदारादपां पूर्णात् केदारान्तरं समं निम्नं वा पिप्लावयिषुः अपः न पाणिनाऽपकर्षति, किन्तु वरणं तासां भिनत्ति, भिन्ने तस्मिन् स्वयमेवापः केदारान्तरं प्लावयन्ति, तद्वदिति पातञ्जलसूत्रार्थः। तथा च धर्मेणाधर्मकृतः प्रतिबन्धो निरस्यते, अधर्मेण च धर्मकृतः प्रतिबन्ध इति प्रतिबन्धकनिरासे तयोरपेक्षा, न तु साक्षात् कार्ये इति भावः। द्र. भामती.

**महे। तस्मात् स्वाभाविकस्तृणादेः परिणामः। तथा प्रधानस्यापि स्यादिति। अत्रोच्यते–भवेत् तृणादिवत् स्वाभाविकः प्रधानस्यापि परिणामो, यदि तृणादेरपि स्वाभाविकः परिणामोऽभ्युपगम्येत। न त्वभ्युपगम्यते, निमित्तान्तरोपलब्धेः। कथं निमित्तान्तरोपलब्धिः? अन्यत्राभावात्। धेन्वैव ह्युपयुक्तं[१] तृणादि क्षीरीभवति, न प्रहीणमनडुदाद्युपयुक्तं[२] वा। यदि हि निर्निमित्तमेतत् स्याद् धेनुशरीरसंबन्धादन्यत्रापि तृणादि क्षीरीभवेत्। न च यथाकामं मानुषैर्न शक्यं संपादयितुमित्येतावता निर्निमित्तं भवति। भवति हि किंचित् कार्यं मानुषसंपाद्यं, किंचिद् दैवसंपाद्यम्। मनुष्या अपि शक्नुवन्त्येवोचितेनोपायेन तृणाद्युपादाय क्षीरं संपादयितुम्। प्रभूतं हि क्षीरं कामयमानाः प्रभूतं घासं धेनुं चारयन्ति; ततश्च प्रभूतं क्षीरं लभन्ते। तस्मान्न तृणादिवत् स्वाभाविकः प्रधानस्य परिणामः।।५।।**

## अभ्युपगमेऽप्यर्थाभावात्।।६।।

**स्वाभाविकी प्रधानप्रवृत्तिर्न भवतीति स्थापितम्। अथापि नाम भवतः श्रद्धामनुरुध्यमानाः स्वाभाविकीमेव प्रधानस्य प्रवृत्तिमभ्युपगच्छेम, तथापि दोषोऽनुषज्येतैव। कुतः? अर्थाभावात्। यदि तावत् स्वाभाविकी प्रधानस्य प्रवृत्तिर्न किंचिदन्यदिहापेक्षत इत्युच्येत, ततो यथैव सहकारि किंचिन्नापेक्षत एवं प्रयोजनमपि**

### *प्रकटार्थविवरणम्*

यदुक्तं स्वेच्छया संपादयितुमशक्यत्वात् स्वाभाविक इति, तत्राह— **न च यथाकाममिति**।।

**अभ्युपगमेऽप्यर्थाभावात्**। इदानीं स्वाभाविकप्रवृत्तिमभ्युपगम्य दोषमाह— **अभ्युपगमेऽपीति**। **अर्थाभावादिति**। प्रयोजनापेक्षा-

### *भाष्यभावप्रकाशिका*

किं सर्वत्रानपेक्षा, उत चेतने। आद्ये दूषणमाह— **धेन्वैवेति**। एतदेव व्यतिरेकमुखेनाह— **यदीति**। यदुक्तम्— यदि हि किञ्चिन्निमित्तमुपलभेमहीति, तत्राह— **न च यथाकाममिति**। चेतनानपेक्षत्वपक्षे दूषणमाह— **भवति हीति**। इदानीं मनुष्याणामपि नाशक्यमित्याह— **मनुष्या इति**।।५।।

**अभ्युपगमेऽप्यर्थाभावात्**।।६।। **अर्थाभावादिति** पदं प्रसङ्गापादनपरतया व्याचष्टे— **यदि हीति**। इदानीमर्थाभावादिति

### *न्यायनिर्णयः*

फलितं दृष्टान्तमुपसंहृत्य दार्ष्टान्तिकमुपसंहरति— **तस्मादिति**। धेन्वाश्चेतनस्य क्षीरपरिणामे नास्ति कारणता, किंतु तृणाद्युपयोगेनोपकारितेति चोद्यमनूद्य सूत्रमवतारयति— **अत्रेति**। 'न तृणादिवत्' इति भागं विभजते— **भवेदिति**। आकाङ्क्षापूर्वकं सूत्रावयवमादत्ते— **कथमिति**। तृणादेः सर्वत्र वा क्षीरीभावे निरपेक्षत्वं चेतने वेति विकल्प्याद्ये दोषमाह— **धेन्वैवेति**। एवकारव्यावर्त्यं कीर्तयति— **न प्रहीणमिति**। अनडुदाद्युपयुक्तमिति तु भाष्य उपयुक्तत्वं नाशङ्कास्पदम्। एतदेव व्यतिरेकद्वारा विवृणोति— **यदि हीति**। क्षीरीभवनं तृणादेरेतदित्युच्यते। यत्तु निमित्तान्तरोपलम्भे तेनैव निमित्तेन तृणान्युपादाय यथाकामं क्षीरं संपाद्यतामिति, तत्राह— **न चेति**। चेतनानपेक्षत्वपक्षं प्रत्याह— **भवति हीति**। मनुष्याणां तृणादिना क्षीरसंपादनं दुष्करमित्युपेत्योक्तम्। इदानीं तदेव नास्तीत्याह— **मनुष्या इति**। तेषामुचितोपायोपादानेन तृणान्यादाय क्षीरसंपादनसामर्थ्यमेवोदाहरति— **प्रभूतमिति**। तृणादेः स्वाभाविकपरिणामासंभवे स्थिते फलितमाह— **तस्मादिति**।।५।।

प्रधानस्य स्वाभाविकीं प्रवृत्तिमुपेत्यापि दूषयति— **अभ्युपगमेऽपीति**। वृत्तमनूद्याभ्युपगमेऽपीति भागमपेक्षितं पूरयन् व्याकरोति— **स्वाभाविकीति**। प्रश्नपूर्वकं हेतुमादत्ते— **कुत इति**। पराभिप्रायमनूद्य प्रयोजनापेक्षाऽभावप्रसङ्गादित्येवंपरतया हेतुं व्याचष्टे—

१-२. उभयत्रापि 'उपभुक्तम्' इति पाठान्तरम्।

**किंचिन्नापेक्षिष्यते इत्यतः प्रधानं पुरुषस्यार्थं साधयितुं प्रवर्तत इतीयं प्रतिज्ञा हीयेत। स यदि ब्रूयात् सहकार्येव केवलं नापेक्षते, न प्रयोजनमपीति। तथापि प्रधानप्रवृत्तेः प्रयोजनं विवेक्तव्यम्– भोगो वा स्यादपवर्गो वोभयं वेति। भोगश्चेत्, कीदृशोऽनाधेयातिशयस्य पुरुषस्य भोगो भवेत्? अनिर्मोक्षप्रसङ्गश्च। अपवर्गश्चेत्, प्रागपि प्रवृत्तेरपवर्गस्य सिद्धत्वात् प्रवृत्तिरनर्थिका स्यात्। शब्दाद्यनुपलब्धिप्रसङ्गश्च। उभयार्थताभ्युपगमेऽपि भोक्तव्यानां प्रधानमात्राणामानन्त्यादनिर्मोक्षप्रसङ्ग एव। न चौत्सुक्यनिवृत्त्यर्था प्रवृत्तिः। न हि प्रधानस्याचेतनस्यौत्सुक्यं संभवति। न च पुरुषस्य निर्मलस्य निष्कलस्यौत्सुक्यम्। दृक्शक्तिसर्गशक्तिवैयर्थ्यभयाच्चेत्**

### *प्रकटार्थविवरणम्*

ऽभावप्रसङ्गादित्येकोऽर्थो व्याख्यातः। इदानीमर्थान्तरं दर्शयितुं शङ्कामाह— **यदि ब्रूयादित्यादिना**। पुरुषस्याविक्रियोपलब्धिमात्रस्वभावत्वात् सुखदुःखाद्युपलब्धिलक्षणो भोगो न प्रधानव्यवहारसाध्य इत्याह— **कीदृश इति**। किञ्च यदि प्रधानं भोगार्थमेव प्रवर्तते तदा ततो निवृत्त्यसंभवात् कदाचिदपि मोक्षो न स्यादित्याह— **अनिर्मोक्षप्रसङ्गश्चेति**। द्वितीयपक्षे दोषमाह— **अपवर्गश्चेदिति**। यदा प्रधानं पुरुषस्य मोक्षाय प्रवर्तते तदा बन्धाय न प्रवर्तत एवेति प्रधानप्रवृत्तेः प्रागेव बन्धप्रागभावस्य स्वरूपावस्थानस्य मोक्षस्य सिद्धत्वात् प्रधानप्रवृत्तिः व्यर्था स्यादित्यर्थः। मोक्षार्थमेव प्रवृत्तमिति शब्दाद्युपलम्भो न स्यादित्यर्थः। तृतीयं दूषयति— **उभयार्थताभ्युपगमेऽपीति**। न तावद् युगपदुभयं संभवति विरोधात्, क्रमपक्षेऽपि सर्वविकारोपभोगे चेन्मोक्षाय प्रवर्तते, तर्हि अनिर्मोक्ष एव प्रधानविकारा... [काराणामानन्त्यात्] इतरथा सकृच्छब्दाद्युपलम्भे पुनः [न पुनः] प्रवृत्तिः स्यादित्यर्थः। तस्मात् स्वाभाविकप्रवृत्त्यभ्युपगमेऽपि भोगापवर्गलक्षणार्थाभावात् असङ्गतमेतत् सांख्यमतम्। ननु प्रधानं स्वविभूतिख्यापनायोत्सुकम्; पुरुषस्य च नृत्तादिदर्शनेनेवोत्स्येवात्कण्ठा प्रधानविभूतिदर्शने; अतस्तन्निवृत्तिरेव प्रयोजनं प्रधानप्रवृत्तेरित्याशङ्क्याह— **न चेति**। प्रधानस्याचेतनत्वात् पुरुषस्य स्वभावनिर्मलत्वादौत्सुक्यमेव निरूपयितुं न शक्यत इत्यर्थः। ननु पुरुषस्य दृक्च्छक्तिरस्ति; सा दृश्यमन्तरेण चरितार्था न भवति; प्रधानस्य च सर्गशक्तिर्दृष्टिं [सृष्टिं] विना व्यर्था

### *भाष्यभावप्रकाशिका*

व्याचष्टे— **अथापीति**। **अनाधेयातिशयस्येति**। सुखदुःखप्राप्तिपरिहारलक्षणातिशयशून्यस्येत्यर्थः। **शब्दाद्यनुपलब्धीति**। शब्दाद्युपलब्धेर्भोगत्वादित्यर्थः। कस्यचिच्छब्दादिविशेषस्योपलम्भो भोगः, किं वा सर्वविशेषाणाम्, आद्ये पक्षे सर्वेषामेकदैव मुक्तिः स्यात्। अथोत्तरः कल्पः, तत्राह— **भोक्तव्यानामिति**। यावदौत्सुक्यं प्रवृत्तेर्नोक्तदोष इत्याशङ्क्याह— **न चौत्सुक्येति**। औत्सुक्यं किं प्रधानस्य, किं वा जीवस्य। उभयत्र दूषणमाह— **न हीत्यादिना**। शङ्कते— **दृक्शक्तीति**। दृक्शक्तेः स्वात्मनि वृत्त्ययोगात् प्रधानस्य च कार्य-

### *न्यायनिर्णयः*

**यदीति**। प्रसङ्गफलं प्रतिज्ञाहानिं प्रदर्शयति— **इत्यत इति**। हेतोरर्थान्तरं वक्तुं शङ्कते— **स यदीति**। व्यवस्थापकाभावान्नैषा व्यवस्थेत्यभिप्रेत्यार्थासंभवादिति हेत्वर्थं वदन् विकल्पयति— **तथापीति**। आद्यमनूद्याक्षिपति— **भोगश्चेदिति**। **अनाधेयातिशयस्य** सुखदुःखप्राप्तिपरिहाररूपातिशयशून्यस्येत्यर्थः। भोगार्थैव प्रधानप्रवृत्तिरित्यत्र दोषान्तरमाह— **अनिर्मोक्षेति**। न हि निरतिशयस्य पुरुषस्य स्वारसिकौ भोगापवर्गावङ्गीक्रियेते। तेन प्रधानप्रवृत्तेर्भोगैकप्रयोजनत्वे हेत्वभावान्नैव पुंसो मोक्षः सेद्धुमर्हेदित्यर्थः। द्वितीयमनूद्य दूषयति— **अपवर्गश्चेदिति**। स्वरूपावस्थानस्य सदातनत्वादित्यर्थः। ननु बन्धप्रध्वंसरूपापवर्गसिद्ध्यर्थं प्रधानप्रवृत्तिरर्थवतीति चेत्। न। प्रधानाविवेकं विना पुरुषे बन्धासिद्धेः। न च तदविवेकनिवृत्त्यर्था तत्प्रवृत्तिरिति युक्तं, तथा सति हेत्वभावाद्भोगाभावप्रसङ्गादित्याह— **शब्दादीति**। तदुपलब्धेर्भोगत्वादित्यर्थः। तृतीयेऽपि कतिपयशब्दाद्युपलब्धिर्वा समस्ततदुपलब्धिर्वा भोग इति विकल्प्याद्ये सर्वेषामेकदैव मुक्तिः स्यादिति मन्वानो द्वितीयं प्रत्याह— **उभयार्थतेति**। औत्सुक्यनिवृत्त्यर्था प्रधानचेष्टेतीष्टत्वाद् यावदौत्सुक्यं तत्प्रवृत्तेर्नोक्तो दोषोऽस्तीत्याशङ्क्याह— **न चेति**। तद्धि प्रधानस्य वा पुरुषस्य वा। नाद्य इत्याह— **न हीति**। औत्सुक्यापरपर्यायकुतूहलितायाश्चेतनगामित्वावगमादित्यर्थः। न द्वितीय इत्याह— **न चेति**। स्वरसतो हि पुरुषो निर्मलोऽभिलप्यते, न तस्यौत्सुक्यरूपमलसंबन्धः सिध्यति। तेन पुरुषस्यापि न संभवत्यौत्सुक्यमित्यर्थः। अस्ति पुरुषस्य दृक्शक्तिः, न च सा दृश्यमन्तरेणार्थवती, प्रधानस्य च सर्गशक्तिः,

**प्रवृत्तिस्तर्हि दृक्शक्त्यनुच्छेदवत् सर्गशक्त्यनुच्छेदात् संसारानुच्छेदादनिर्मोक्षप्रसङ्ग एव। तस्मात् प्रधानस्य पुरुषार्था प्रवृत्तिरित्येतदयुक्तम्।।६।।**

## पुरुषाश्मवदिति चेत्तथापि ।।७।।

**स्यादेतत्– यथा कश्चित् पुरुषो दृक्शक्तिसंपन्नः प्रवृत्तिशक्तिविहीनः पङ्गुरपरं पुरुषं प्रवृत्तिशक्तिसंपन्नं दृक्शक्तिविहीनमन्धमधिष्ठाय प्रवर्तयति, यथा वाऽयस्कान्तोऽश्मा स्वयमप्रवर्तमानोऽप्ययः प्रवर्तयति, एवं पुरुषः प्रधानं प्रवर्तयिष्यतीति दृष्टान्तप्रत्ययेन पुनः प्रत्यवस्थानम्। अत्रोच्यते– तथापि नैव दोषान्निर्मोक्षोऽस्ति। अभ्युपेतहानं तावद् दोष आपतति। प्रधानस्य स्वतन्त्रस्य प्रवृत्त्यभ्युपगमात्, पुरुषस्य च प्रवर्तकत्वानभ्युपगमात्। कथं चोदासीनः पुरुषः प्रधानं प्रवर्तयेत्? पङ्गुरपि ह्यन्धं वागादिभिः पुरुषं प्रवर्तयति। नैवं पुरुषस्य कश्चिदपि प्रवर्तनव्यापारोऽस्ति, निष्क्रियत्वान्निर्गुणत्वाच्च। नाप्ययस्कान्तवत् संनिधिमात्रेण प्रवर्तयेत्। संनिधि-**

### *प्रकटार्थविवरणम्*

स्यात्; अत उभयशक्तिवैयर्थ्यपरिहारः प्रयोजनमित्याशङ्क्याह— **दृक्शक्तीति**। शक्त्योः नित्ययोः चरितार्थत्वाय सदा प्रधानं प्रवर्तते इत्यनिर्मोक्ष इत्यर्थः। तस्मात् प्रधानप्रवृत्तेः प्रयोजनाभावात् निरपेक्षस्यैव प्रधानस्य प्रवृत्तिरित्येतदयुक्तमेवेति स्थितम्।।

**पुरुषाश्मवदिति चेत्तथापि**।। इदानीं पुरुषस्य प्रवर्तकत्वं निरस्तमपि दृष्टान्तावष्टम्भेन पुनराशङ्क्यापाकरोति— **पुरुषाश्मवदिति**। पुरुषस्य प्रवर्तकत्वमभ्युपगम्य निरीश्वरसांख्यस्यापसिद्धान्तो दर्शितः। इदानीं प्रवर्तकत्वमपि न संभवतीत्याह— **कथं चोदासीन इति**। ननु अयस्कान्तस्य संनिधिमात्रेण प्रवर्तकत्वेऽपि न सदा लोहस्य प्रवृत्तिर्दृश्यते। तथा प्रधानप्रवृत्तिरपि सदा न भविष्यतीत्याशङ्क्याह—

### *भाष्यभावप्रकाशिका*

लिङ्गैकगम्यतया साक्षाद् दृक्छक्तिविषयताऽयोगात् प्रधानगतायाश्च सर्गशक्तेस्सर्जनीयं विनाऽयोगात् प्रधानदृष्टं शब्दादि दृश्यं भवति पुरुषस्येत्यर्थः। निराकरोति— **सर्गशक्तीति**।।६।।

**पुरुषाश्मवदिति चेत्तथाऽपि**।।७।। सम्प्रति केवलं न प्रवर्तते, किन्तु पुरुषाधिष्ठितमिति शङ्कते— **स्यादेतदिति**। ननु तत्र वागादिसंभवात् प्रवर्तकत्वम्, इह तु तदभावादप्रवर्तकत्वमित्यपरितोषाद् दृष्टान्तान्तरमाह— **यथा वेति**। परिस्पन्दप्रयत्नस्याभावमाह— **निष्क्रियत्वान्निर्गुणत्वाच्चेति**। ननु संनिधौ सत्यपि कदाचिदेव प्रवृत्तिः स्यात् अयस्कान्तसंनिधावयस इवेति, तत्राह— **परिमार्जनादीति**।

### *न्यायनिर्णयः*

सा सृष्टिं विनाऽनर्थिका, तत्राचोभयविधशक्तिवैयर्थ्यपरिहारार्थं प्रधानप्रवृत्तिरिति शङ्कते— **दृक्शक्तीति**। तर्हि शक्त्योर्नित्यत्वात् तदर्थवत्त्वाय सदा प्रधानप्रवृत्तेर्मोक्षासिद्धिरिति दूषयति— **सर्गेति**। अर्थासंभवान्निरपेक्षस्यैव प्रधानस्य प्रवृत्तिरित्येतदयुक्तमित्युपसंहरति— **तस्मादिति**।।६।।

पुरुषस्य प्रवर्तकत्वं निरस्तमपि दृष्टान्तेन पुनराशङ्क्य निरस्यति— **पुरुषाश्मवदिति**। चोद्यं विभजते— **स्यादेतदिति**। पङ्गोरपि वागादिद्वारा प्रवर्तकत्वसंभवात् तद्विरहिणि पुरुषे न प्रवर्तकतेत्यपरितुष्यन्तं प्रत्याह— **यथा वेति**। दार्ष्टान्तिकमाह— **एवमिति**। 'पुरुषस्तूदासीनो न प्रवर्तको नापि निवर्तक' इत्यत्रैव तत्प्रवर्तकत्वे प्रत्युक्ते कथं पुनराशङ्कोन्मिषेदित्याशङ्क्याह— **इति दृष्टान्तेति**। पूर्वपक्षमनूद्य सिद्धान्तमवतार्यापेक्षितं पूरयन् व्याकरोति— **अत्रेति**। कथं दोषानिवृत्तिरित्याशङ्क्यापसिद्धान्तापत्तिं तावदाह— **अभ्युपेतेति**। पुरुषस्य प्रधानप्रवर्तकत्वमङ्गीकुर्वतस्तत्प्रवर्तकत्वानभ्युपगमस्यासिद्धिरित्याशङ्क्याह— **कथं चेति**। न हि प्रवर्तकत्वमुदासीनस्य युक्तमुदासीनत्वव्याघातादित्यर्थः। पङ्गुदृष्टान्तं विघटयति— **पङ्गुरपीति**। पुरुषस्य प्रस्पन्दप्रयत्नव्यापारराहित्यं वक्तुं हेतुद्वयम्। अयस्कान्त-दृष्टान्तेन स्वगतव्यापारमन्तरेणापि पुरुषस्य प्रवर्तकत्वमुपदिष्टमित्याशङ्क्याह— **नापीति**। अयस्कान्तसंनिधावयोवत् कदाचिदेव

**नित्यत्वेन प्रवृत्तिनित्यत्वप्रसङ्गात्। अयस्कान्तस्य त्वनित्यसंनिधेरस्ति स्वव्यापारः संनिधिः, परिमार्जनाद्यपेक्षा चास्यास्तीत्यनुपन्यासः पुरुषाश्मवदिति। तथा प्रधानस्याचैतन्यात् पुरुषस्य चौदासीन्यात् तृतीयस्य च तयोः संबन्धयितुरभावात् संबन्धानुपपत्तिः। योग्यतानिमित्ते च संबन्धे [1]योग्यत्वानुच्छेदादनिर्मोक्षप्रसङ्गः। पूर्ववच्चेहाप्यर्थाभावो विकल्पयितव्यः। परमात्मनस्तु स्वरूपव्यपाश्रयमौदासीन्यम्, मायाव्यपाश्रयं च प्रवर्तकत्वमित्यस्त्यतिशयः।।७।।**

## अङ्गित्वानुपपत्तेश्च।।८।।

**इतश्च न प्रधानस्य प्रवृत्तिरवकल्पते। यद्धि सत्त्वरजस्तमसामन्योन्यगुणप्रधानभावमुत्सृज्य साम्येन**

### *प्रकटार्थविवरणम्*

**अयस्कान्तस्य त्विति**। प्रधानपुरुषयोरुभयोरपि नित्यसर्वगतत्वेन सदा सन्निधिरस्ति; मणेस्त्वागन्तुकः सन्निधिरेव व्यापारः, परिमार्जनमृज्ववस्थानं चापेक्षते; अतः सन्निधिमात्रेणाप्रवर्तकत्वाद् विषमो दृष्टान्त इत्यर्थः। तर्हि प्रधानपुरुषयोरपि आगन्तुक एव संबन्धः प्रवृत्तिहेतुरस्त्वित्याशङ्क्याह— **तथा प्रधानस्येति**। ननु प्रधानस्याचेतनत्वाद् दृश्यत्वे योग्यताऽस्ति; पुरुषस्य च चेतनत्वाद् द्रष्टृत्वे योग्यताऽस्तीति योग्यतानिमित्तो द्रष्टृदृश्यभाव एव संबन्ध इत्याशङ्क्याह— **योग्यतेति**। किञ्च यथा स्वाभाविकप्रवृत्तिपक्षे विकल्प्य प्रयोजनाभाव उक्तः, तथा पुरुषसंबन्धात् प्रधानप्रवृत्तिपक्षेऽपि भोग एव प्रयोजनम्, अपवर्गो वा इत्येवं विकल्प्य द्रष्टव्यम्। ननु उक्तनीत्या त्वत्पक्षेऽपि न सिध्यति। त्वयाऽप्ययस्कान्तदृष्टान्तेनाविक्रियः परमात्मा प्रवर्तक इष्यत इत्याशङ्क्याह— **परमात्मनस्त्विति**। बिम्बभूतस्य ब्रह्मणोऽविक्रियत्वं मायाप्रतिबिम्बितस्य त्वस्त्येवानिर्वाच्यो विकार इति ममास्ति विशेष इति भावः।।

**अङ्गित्वानुपपत्तेश्च**।। एवं तावन्न स्वाभाविकी, नापि पुरुषसन्निधिनिबन्धना प्रधानप्रवृत्तिरित्युपपाद्येदानीं कस्यचिद् गुणस्य प्राधान्यम्, कस्यचिदुपसर्जनत्वमित्यपि वैषम्यं स्वतः परतो वा न संभवतीत्याह— **अङ्गित्वानुपपत्तेरिति**।।

### *भाष्यभावप्रकाशिका*

किञ्च प्रवर्त्य-प्रवर्तकभावस्य सम्बन्धपूर्वकत्वात्सम्बन्धः किं प्रधाननिमित्तः, किं वा पुरुषनिमित्तः, व्यतिरिक्तनिमित्तो वेति विकल्प्य, क्रमेण दूषणमाह— **तथा प्रधानस्येत्यादिना**।।७।।

**अङ्गित्वानुपपत्तेश्च**।।८।। साऽवस्था कूटस्था, विकारिणी वेति। आद्ये दूषणमाह— **तस्यामिति**। द्वितीयं दूषयति— **बाह्यस्य चेति**।।८।।

### *न्यायनिर्णयः*

संनिधौ सत्यपि प्रवृत्तिः स्यादित्याशङ्क्याह—**अयस्कान्तस्येति**। परिमार्जनादीत्यादिशब्देन मुखाभिमुख्यसंपादनं संगृहीतम्। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमुक्त्वा फलितमाह— **इत्यनुपन्यास इति**। किंच प्रवर्त्यप्रवर्तकभावस्य संबन्धसापेक्षत्वात् प्रधाननिमित्तो वा पुरुषनिमित्तो वा तदुभयव्यतिरिक्तनिमित्तो वा संबन्धस्तयोरिति विकल्पयति— **तथेति**। सति विकल्पत्रये संबन्धानुपपत्तिरिति संबन्धः। नाद्य इत्याह— **प्रधानस्येति**। न द्वितीय इत्याह— **पुरुषस्येति**। न तृतीय इत्याह— **तृतीयस्येति**। प्रधानस्याचेतनत्वाद् दृश्यत्वे पुरुषस्य चेतनत्वाद् द्रष्टृत्वे योग्यताऽस्तीति तन्निमित्तो द्रष्टृदृश्यभाव एव संबन्धस्तयोरित्याशङ्क्याह— **योग्यतेति**। किंच यथा स्वाभाविकप्रवृत्तिपक्षे विकल्प्यार्थाभावो दर्शितस्तथा पुरुषसंबन्धात्प्रधानप्रवृत्तिपक्षेऽपि भोगो वा फलमपवर्गो वा द्वयं वेत्येवं विकल्प्यार्थाभावो वक्तव्य इत्याह— **पूर्ववच्चेति**। नन्वयस्कान्तदृष्टान्तावष्टम्भेन भवताऽपि परमात्मा कूटस्थनित्य एव प्रवर्तकोऽभ्युपगतस्तथा चोक्तनीत्या त्वत्पक्षोऽपि न सिध्यति, तत्राह— **परमात्मनस्त्विति**। **अतिशयः** सांख्याभिमतात्पुरुषादिति शेषः।।७।।

प्रधानस्य स्वाभाविकी पुरुषसंनिधेर्वा न प्रवृत्तिरित्युक्तम्। इदानीं कस्यचिद् गुणस्य प्राधान्यं कस्यचिदुपसर्जनत्वमित्यपि वैषम्यमभ्युपगतं स्वतः परतो वा न संभवतीत्याह— **अङ्गित्वेति**। चकारसूचितां प्रतिज्ञां प्रकटीकरोति— **इतश्चेति**। पञ्चम्यर्थमेव

---

१. 'योग्यताऽनुच्छेदात्' इति पाठान्तरम्।

**स्वरूपमात्रेणावस्थानं सा प्रधानावस्था। तस्यामवस्थायामनपेक्षस्वरूपाणां स्वरूपप्रणाशभयात् परस्परं प्रत्यङ्गाङ्गिभावानुपपत्तेः। बाह्यस्य च कस्यचित् क्षोभयितुरभावाद् गुणवैषम्यनिमित्तो महदाद्युत्पादो न स्यात्।।८।।**

## **अन्यथानुमितौ च ज्ञशक्तिवियोगात्।।९।।**

**अथापि स्यात्–अन्यथा वयमनुमिमीमहे यथा नायमनन्तरो दोषः प्रसज्येत। न ह्यनपेक्षस्वभावाः कूटस्थाश्चास्माभिर्गुणा अभ्युपगम्यन्ते प्रमाणाभावात्। कार्यवशेन तु गुणानां स्वभावोऽभ्युपगम्यते। यथा यथा कार्योत्पाद उपपद्यते तथा तथैषां स्वभावोऽभ्युपगम्यते। 'चलं गुणवृत्त'मिति[1] चास्त्यभ्युपगमः। तस्मात् साम्यावस्थायामपि वैषम्योपगमयोग्या एव गुणा अवतिष्ठन्त इति। एवमपि प्रधानस्य ज्ञशक्तिवियोगाद् रचनानुपपत्त्यादयः पूर्वोक्ता दोषास्तदवस्था एव। ज्ञशक्तिमपि त्वनुमिमानः प्रतिवादित्वान्निवर्तेत। चेतनमेकमनेकप्रपञ्चस्य जगत उपादानमिति ब्रह्मवादप्रसङ्गात्। वैषम्योपगमयोग्या अपि गुणाः साम्यावस्थायां निमित्ताभावान्नैव वैषम्यं भजेरन्, भजमाना वा निमित्ताभावाविशेषात् सर्वदैव वैषम्यं भजेरन्निति प्रसज्यत**

### *प्रकटार्थविवरणम्*

**अन्यथानुमितौ च ज्ञशक्तिवियोगात्।।** गुणानामनपेक्षस्वभावत्वात् स्वत एव वैषम्यं न संभवतीत्युक्तम्, तदसिद्धमित्याह— **अथापि स्यादित्यादिना।** अनपेक्षस्वभावत्वादन्यथा सापेक्षत्वं तस्य कार्यवशादनुमितावपि प्रधानस्य ज्ञातृत्वशक्तिविहीनत्वाद् रचनानुपपत्त्यादयो दोषा दुर्निवारा एवेत्यर्थः। अथ कार्यदर्शनादेव ज्ञातृत्वमप्यनुमीयते, तत्राह— **ज्ञशक्तिमपीति।** अनन्तरोक्तदोषपरिहारमभ्युपगम्य सूत्रोक्तो दोषः परिहर्तुं न शक्यत इत्याह— **वैषम्योपगमेति।**

### *भाष्यभावप्रकाशिका*

**अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्।।९।।** ननु विपरीतेऽपि प्रमाणाभाव इत्याशङ्क्य कार्यान्यथानुपपत्तिः प्रमाणमित्याह— **कार्यवशेनेति।** अपसिद्धान्तमाशङ्क्याह— **चलं गुणवृत्तमिति।** येन येन विना कार्यं न संभवति, तत्तदनुमीयत इत्याशङ्क्याह— **ज्ञशक्तिमपीति।** अनन्तरोऽपि दोषः स्यादित्याह— **वैषम्येति।।९।।**

### *न्यायनिर्णयः*

दर्शयन् प्रधानावस्थामनुवदति— **यद्धीति।** सा च कूटस्था वा विकारिणी वेति विकल्प्याद्ये दोषमाह— **तस्यामिति।** अनपेक्षस्वरूपाणां परस्परानपेक्षाणां गुणप्रधानत्वहीनानामङ्गाङ्गित्वायोगात् कार्यानुत्पत्तिरित्यर्थः। द्वितीयं दूषयति— **बाह्यस्येति।।८।।**

गुणानामनपेक्षस्वभावत्वात्र स्वतो वैषम्यमित्यत्रासिद्धिमाशङ्क्य परिहरति— **अन्यथेति।** तत्रान्यथानुमितौ चेति भागं पूर्वपक्षत्वेन व्याकरोति— **अथापीति।** निरपेक्षेषु गुणेषु गुणप्रधानभावानुपपत्तावपीति यावत्। गुणानामङ्गाङ्गिभावानुपपत्त्या महदादिकार्यानुत्पत्तिरूपो दोषो यथा न भवति तथा मिथोऽनपेक्षत्वलक्षणस्वभावादन्यथा प्रकारान्तरेण गुणानन्योन्यसापेक्षानेव कल्पयामोऽतो न प्रागुक्तदोषप्रसक्तिरित्युक्तम्। प्रकारान्तरेण कल्पनामेव प्रकटयति— **न हीति।** तेषां मिथः सापेक्षत्वे विकारित्वे च तुल्यं प्रमाणासत्त्वमित्याशङ्क्याह— **कार्येति।** तथापि कथं मिथः सापेक्षत्वं विकारित्वं वा गुणानामिति, तत्राह— **यथा यथेति।** अपसिद्धान्तं शङ्कित्वोक्तम्— **चलमिति।** उक्तोपगमफलमाह— **तस्मादिति।** पूर्वपक्षमनूद्य 'ज्ञशक्तिवियोगात्' इत्यादि व्याकुर्वन् परिहरति— **एवमिति।** येन येन विना कार्यं नोपपद्यते तत्तदपि तद्वशादेवानुमेयमित्याशङ्क्याह— **ज्ञेति।** अनन्तरोक्तदोषनिरासं स्वीकृत्य व्यवहितदोषापत्तिमुक्त्वा सम्प्रत्यङ्गीकारं त्यजति— **वैषम्येति।** विपक्षे दण्डमाह— **भजमाना वेति।** अनन्तरो दोषो महदादिकार्योत्पादायोगः।।९।।

---

१. कदाचित् साम्यावस्था, कदाचिद् वैषम्यावस्थेति चलस्वभावा गुणा इत्यर्थः।

**एवायमनन्तरोऽपि दोषः।।९।।**

## विप्रतिषेधाच्चासमञ्जसम्।।१०।।

**परस्परविरुद्धश्चायं सांख्यानामभ्युपगमः। क्वचित् सप्तेन्द्रियाण्यनुक्रामन्ति, क्वचिदेकादश। तथा क्वचिन्महतस्तन्मात्रसर्गमुपदिशन्ति, क्वचिदहंकारात्। तथा क्वचित् त्रीण्यन्तःकरणानि वर्णयन्ति, क्वचिदेकमिति। प्रसिद्ध एव तु श्रुत्येश्वरकारणवादिन्या विरोधस्तदनुवर्तिन्या च स्मृत्या। तस्मादप्यसमञ्जसं सांख्यानां दर्शनमिति।**

**अत्राह– नन्वौपनिषदानामप्यसमञ्जसमेव दर्शनम्, तप्यतापकयोर्जात्यन्तरभावानभ्युपगमात्[1]। एकं हि ब्रह्म सर्वात्मकं सर्वस्य प्रपञ्चस्य कारणमभ्युपगच्छतामेकस्यैवात्मनो विशेषौ तप्यतापकौ न जात्यन्तरभूतावित्यभ्युपगन्तव्यं स्यात्[2]। यदि चैतौ तप्यतापकावेकस्यात्मनो विशेषौ स्याताम्, स ताभ्यां**

### *प्रकटार्थविवरणम्*

**विप्रतिषेधाच्चासमञ्जसम्**।। इतश्चासङ्गतं सांख्यमतमित्याह— **परस्परविरुद्धश्चेति**। पञ्च कर्मेन्द्रियाणि, त्वगिन्द्रियमेकं रूपादिज्ञानसाधनम्, सप्तमं मन इति सप्तेन्द्रियाणि। पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि, श्रोत्रं त्वक् चक्षुर्जिह्वा घ्राणमिति पञ्च ज्ञानेन्द्रियाणि, एकादशं मन इति। त्रीण्यन्तःकरणानि मनो बुद्धिरहंकार इति; एकमिति बुद्धिः। प्रकारान्तरेण विप्रतिषेधं व्याचष्टे— **प्रसिद्ध एव त्विति**।

प्रतिबन्दीग्रहेण सांख्यः प्रत्यवतिष्ठते— **अत्राहेत्यादिना**। तप्यतापकयोः जीवसंसारयोः वास्तवभेदानभ्युपगमात्, एकस्यैव तप्यतापकत्वं च विप्रतिषिद्धमित्यर्थः। अनिर्मोक्षप्रसङ्गोऽपि समान इत्याह— **यदि चैताविति**। स्वाभाविकस्य उच्छेदासंभवादित्यर्थः।

### *भाष्यभावप्रकाशिका*

**विप्रतिषेधाच्चासमञ्जसम्**।।१०।। **क्वचित्सप्तेन्द्रियाणीति**। त्वङ्मात्रमेव बुद्धीन्द्रियमनेकरूपादिग्रहणसमर्थमेकम्, कर्मेन्द्रियाणि पञ्च सप्तमं मन इति। **क्वचिदेकादशेति**। पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, एकादशं मनः। **क्वचिदेकमिति**। बुद्धिरेव। विप्रतिषेधशब्दस्यार्थान्तरमाह— **प्रसिद्ध एवेति**।

आह साङ्ख्यः— **नन्वौपनिषदानामिति**। परसमवेतक्रियाफलशालित्वात् कर्मणस्तापकात् तप्यस्य भेदेन भाव्यम्, अन्यथा तदनुपपत्तेरित्यर्थः। चेतनाचेतनरूपेण विभागोऽप्युपगम्यत एवेत्याशङ्क्याह— **यदि चैताविति**। ननु कथमानर्थक्यम्? तयोर्धर्मत्वाद्

### *न्यायनिर्णयः*

इतश्चासंगतं सांख्यमतमित्याह— **विप्रतिषेधाच्चेति**। सूत्रं विभजते— **परस्परेति**। विरोधमुदाहरति— **क्वचिदिति**। त्वङ्मात्रमेव धीन्द्रियमनेकरूपादिधीसमर्थं, कर्मेन्द्रियाणि पञ्च मनश्चेति सप्तेन्द्रियाणीत्यर्थः। पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाण्येकादशं मन इत्येकादशेन्द्रियाणीत्याह— **क्वचिदिति**। प्रकारान्तरेण विप्रतिषेधमाह— **तथेति**। तन्मात्रा भूतसूक्ष्माणि। बुद्धिरहंकारो मन इति त्रीणि। एकमिति बुद्धिरेवोच्यते। मिथोविरोधसमाप्तावितिशब्दः। विप्रतिषेधशब्दस्यार्थान्तरमाह— **प्रसिद्ध इति**। सांख्यवादस्योक्तनीत्या भ्रान्तिमूलत्वात् तदीयन्यायविरोधो न समन्वयस्येत्युपसंहरति— **तस्मादिति**।

सांख्यसमन्वयस्यासामञ्जस्यादुपेक्षणीयत्वे प्रतिबन्द्या सांख्यश्चोदयति— **अत्रेति**। चोद्यं विवृणोति— **नन्विति**। सिद्धान्तस्यासामञ्जस्ये हेतुमाह— **तप्येति**। हेतुं साधयति— **एकं हीति**। प्रपञ्चस्य ब्रह्मातिरेकात् कुतस्तदैक्यं, तत्राह— **सर्वेति**। तदपि कथं, तत्राह— **सर्वस्येति**। न च तावेकस्य युक्तौ। परसमवेतक्रियाफलशालि हि कर्म। ततस्तापकात् तप्यस्य भेदः, अन्यथा तद्भावायोगात् तदयोगे च व्यवहारे विरोधादयुक्तं त्वन्मतमित्यर्थः। एकस्यैवात्मनश्चेतनाचेतनात्मत्वात् तप्यतापकव्यवहारसिद्धौ नासामञ्जस्यमित्याशङ्क्याह— **यदीति**। किं तयोरात्मरूपत्वं तद्धर्मत्वं वेति विकल्प्याद्यं प्रत्याह— **स इति**। द्वितीयेऽपि तयोः स्वरूपान्तर्भावो बहिर्भावो वा?

---

१. जात्यन्तरभावो भेदः। २. तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात्।

**तप्यतापकाभ्यां न निर्मुच्यत इति तापोपशान्तये सम्यग्दर्शनमुपदिशच्छास्त्रमनर्थकं स्यात्। न ह्यौष्ण्यप्रकाशधर्मकस्य प्रदीपस्य तदवस्थस्यैव ताभ्यां निर्मोक्ष उपपद्यते। योऽपि जलतरङ्गवीचीफेनाद्युपन्यासः, तत्रापि जलात्मन एकस्य वीच्यादयो विशेषा आविर्भावतिरोभावरूपेण नित्या एवेति समानो जलात्मनो वीच्यादिभिरनिर्मोक्षः। प्रसिद्धश्चायं तप्यतापकयोर्जात्यन्तरभावो लोके। तथाहि— अर्थी चार्थश्चान्योन्यभिन्नौ लक्ष्येते। यद्यर्थिनः स्वतोऽन्योऽर्थो न स्यात्, यस्यार्थिनो यद्विषयमर्थित्वं स तस्यार्थो नित्यसिद्ध एवेति न तस्य तद्विषयमर्थित्वं स्यात्, यथा प्रकाशात्मनः प्रदीपस्य प्रकाशाख्योऽर्थो नित्यसिद्ध एवेति न तस्य तद्विषयमर्थित्वं भवति। अप्राप्ते ह्यर्थेऽर्थिनोऽर्थित्वं स्यादिति। तथाऽर्थस्याप्यर्थत्वं न स्यात्। यदि स्यात् स्वार्थत्वमेव स्यात्। न चैतदस्ति। संबन्धिशब्दौ ह्येतावर्थी चार्थश्चेति। द्वयोश्च संबन्धिनोः संबन्धः स्यान्नैकस्यैव। तस्माद्**

### *प्रकटार्थविवरणम्*

ननु वीच्यादीनां जलात्मकत्वेऽपि कदाचिदुच्छेदो दृश्यते जले स्थित एव; तथा ब्रह्मात्मकस्य समासो [संसारो]च्छेदो भविष्यतीत्याशङ्क्याह— **योऽपि जलवीचीति**। ननु नास्त्येवाद्वैते तप्यतापकभावः, कथमयं प्रसङ्गः इत्याशङ्क्याह— **प्रसिद्धश्चायमिति**। अर्थी स्वर्गादिकामी; काम्यश्च स्वर्गादिरर्थः, तौ परस्परभिन्नौ दृश्येते इत्यर्थः। युक्तितोऽपि तयोर्भेदः सिद्ध इत्याह— **यद्यर्थिन इति**। अर्थिनोऽन्योऽर्थो नास्तीत्यत्र दूषणमुक्त्वाऽर्थादन्योऽर्थी नास्तीत्यत्र दूषणमाह— **तथार्थस्यापीति**। तथैवास्त्विति न वाच्यमित्याह— **न चैतदस्तीति**। एकस्य विषयविषयिभावविरोधादित्यर्थः। किञ्च शब्दसामर्थ्यानुसारेणापि भेदो युक्त इत्याह— **संबन्धिशब्दौ हीति**। अर्थयते कामयत इत्यर्थी; तेनार्थ्यत इत्यर्थः। एवमेतौ परस्परसंबन्धार्थद्वयविषयौ शब्दावित्यर्थः। तथाऽनर्थानर्थिनौ प्रतीतितो

### *भाष्यभावप्रकाशिका*

धर्मिणस्तद्व्यतिरेकेणावस्थानसंभवादित्याशङ्क्याह— **न ह्यौष्ण्येति**। ननु औष्ण्यप्रकाशधर्मयोः स्वरूपान्तःपातित्वात् ताभ्यामनिर्मोक्षः, इह तु फेनतरङ्गादिवत् स्वरूपान्तःपातित्वाभावात् ताभ्यां मोक्षो घटते इति, सत्यम्; तद्वदेवोद्भवाभिभवरूपेण नित्यत्वान्न मोक्षशास्त्रमनर्थकं स्यादित्याह— **योऽपीति**। तप्यस्य तापकाद् भेदोऽनुभवसिद्धत्वादपीत्याह— **प्रसिद्धश्चेति**। अर्थार्थिनोस्तावत् तप्य-तापकभूतयोर्भेदे प्रथमतोऽनुभवमाह— **तथा ह्यर्थी चेति**। युक्तितस्तयोर्भेदमाह— **यद्यर्थिन इति**। कुतस्तर्ह्यस्यार्थित्वमिति? अत आह— **अप्राप्ते हीति**। अर्थस्यार्थिनोऽर्थमात्रत्वमयुक्तमित्याह— **तथाऽर्थस्यापीति**। इदानीमुक्तं न्यायमनर्थानर्थिनोरपि भेदेऽतिदिशति—

### *न्यायनिर्णयः*

प्रथमे प्रागुक्तदोषानुषक्तिं दृष्टान्तेन स्पष्टयति— **न हीति**। औष्ण्यप्रकाशयोः स्वरूपत्वात् ताभ्यां दीपस्यानिर्मोक्षेऽपि तप्यतापकयोर्वीचीतरङ्गादिवद् धर्म्यनन्तर्भावाद् धर्मिणस्ताभ्यां पृथक्त्वात्रानिर्मुक्तिरिति पक्षान्तरमाशङ्क्याह— **योऽपीति**। वीचीतरङ्गादीनां जलधर्मत्वेऽपि तेभ्यो जलं पृथगिष्टं तथा तप्यतापकयोरात्मधर्मत्वेऽपि ताभ्यामात्मा पृथगिति योऽपि मोक्षसंभावनार्थमुपन्यासः, तत्रापि जलात्मनो वीच्यादिभिरनिर्मोक्षस्तेषां तत्संबन्धित्वेनाविर्भावादिना सदा सत्त्वात्, तथाऽऽत्मन्यपि तप्यतापकयोरुद्भवादिना नित्यत्वादात्मनस्ताभ्यामनिर्मोक्षान्मोक्षशास्त्रानर्थक्यमित्यर्थः। कर्मकर्तृत्वात् तप्यतापकयोर्भिन्नत्ववत् प्रसिद्धत्वादपि तयोर्भिन्नत्वमित्याह— **प्रसिद्धश्चेति**। लौकिकीं प्रसिद्धिं प्रकटयति— **तथा हीति**। अर्थी तप्यस्तापकश्चार्थः, तयोर्भेदे तावदनुभवमाह— **अर्थीति**। तत्रैव युक्तिमाह— **यदीति**। तयोर्भेदानुपगमेऽर्थस्यार्थिमात्रत्वमर्थिनो वाऽर्थमात्रत्वम्। नाद्य इत्याह— **यस्येति**। नित्यप्राप्तेऽर्थे नार्थितेत्यत्र दृष्टान्तमाह— **यथेति**। दार्ष्टान्तिकं विवक्षन्नाह— **अप्राप्ते हीति**। स्वरूपत्वेन प्राप्तेऽर्थे नार्थिनोऽर्थित्वमिति शेषः। एवमर्थस्यार्थिमात्रत्वं नेत्युपसंहर्तुमितिशब्दः। अर्थिनोऽर्थमात्रत्वं प्रत्याह— **तथेति**। अर्थिनोऽर्थानतिरेके सतीति यावत्। अर्थिवदिति दृष्टान्तार्थोऽपिशब्दः। इष्टापत्तिमाशङ्क्याह— **न चेति**। अर्थस्य स्वार्थत्वे शेषत्वधीविरोधः स्यादित्यर्थः। इतश्चार्थार्थिनोर्भिन्नतेत्याह— **संबन्धीति**। तथापि कथं भिन्नत्वं, तत्राह— **द्वयोश्चेति**। अर्थार्थिभेदमनुभवयुक्तिसिद्धं निगमयति— **तस्मादिति**। अर्थार्थिनोरुक्तन्यायमनर्थानर्थिनोरपि

**भिन्नावेतावर्थार्थिनौ। तथाऽनर्थानर्थिनावपि। अर्थिनोऽनुकूलोऽर्थः, प्रतिकूलोऽनर्थः, ताभ्यामेकः पर्यायेणोभाभ्यां संबध्यते। तत्रार्थस्याल्पीयस्त्वाद् भूयस्त्वाच्चानर्थस्योभावप्यर्थानर्थावनर्थ एवेति तापकः स उच्यते। तप्यस्तु पुरुषो य एकः पर्यायेणोभाभ्यां संबध्यत इति तयोस्तप्यतापकयोरेकात्मतायां मोक्षानुपपत्तिः। जात्यन्तरभावे तु तत्संयोगहेतुपरिहारात् स्यादपि कदाचिन्मोक्षोपपत्तिरिति।**

**अत्रोच्यते– न; एकत्वादेव तप्यतापकभावानुपपत्तेः। भवेदेष दोषो यद्येकात्मतायां तप्यतापकावन्योन्यस्य विषयविषयिभावं प्रतिपद्येयाताम्; न त्वेतदस्त्येकत्वादेव। न ह्यग्निरेकः सन् स्वमात्मानं दहति प्रकाशयति**

***प्रकटार्थविवरणम्***

युक्तितश्च भिन्नाववेत्यर्थः। अर्थादिशब्दार्थं विविनक्ति— **अर्थिनोऽनुकूल इति**। ननु तप्यतापकौ प्रक्रम्यार्थादिभेदनिरूपणमयुक्तमित्याशङ्क्याह— **तत्रार्थस्येति**। एवमद्वैतवादे विप्रतिषेधं मोक्षानुपपत्तिं चोक्त्वा स्वपक्षे मोक्षं संभावयति— **जात्यन्तरभावे त्विति**। तप्यतापकयोः वास्तवभेदे सति प्रकृतिगत एव बन्धः पुरुषेषु समारोप्यते; तयोरविवेकात्, विवेकाच्च बन्धसंबन्धहेत्वविवेकपरिहारान्मोक्षोपपत्तिरित्यर्थः। उक्तं हि— ''रूपैः सप्तभिरेवं बध्नात्यात्मानमात्मना प्रकृतिः। सैव च पुरुषस्यार्थं विमोचयत्येकरूपेण।।'' इति।

किमयं प्रसङ्गस्तत्त्वाभिप्रायेण, किं वा व्यवहाराभिप्रायेण? आद्यं [१]प्रत्याह— **नैकत्वादेवेत्यादिना**। बिम्बस्थानीयस्य ब्रह्मण

***भाष्यभावप्रकाशिका***

**तथाऽनर्थानर्थिनाविति**। अर्थानर्थयोर्भेदं दर्शयति— **अर्थिनोऽनुकूल इति**। कथं तर्ह्येकस्यैवं विरुद्धधर्मद्वयसम्बन्ध इति? अत्राह— **ताभ्यामति**। अर्थस्य तापकत्वं कथमित्यपेक्षायामाह— **तत्रार्थस्येति**। ननु भिन्नत्वेऽपि फेनतरङ्गादिवत् त्वन्मतेऽपि तप्य-तापकयोरुद्भवाभिभवरूपेण नित्यत्वात् कथं मोक्ष इत्यपेक्षायां सांख्यः स्वमते मोक्षमुपपादयति— **जात्यन्तरभावे त्विति**। ननु विवेकाग्रहणं तप्य-तापकयोः संयोगे हेतुः, तस्य विवेकदर्शनान्निवृत्तिरिति ते मतम्। तत्र किं नित्यसिद्धदर्शनान्निवृत्तिः, उतागन्तुकात्? आद्यपक्षे सदा मोक्ष इति संसाराभावः। उत्तरपक्षे त्वागन्तुकस्य दर्शनस्यानाधेयातिशये पुरुषे कथं संभवः? अथ सत्त्वस्यैव तदिति चेत्, तर्हि यस्य सम्यग्ज्ञानम्, तस्यैव मोक्षः, यस्य मोक्षः, तस्यैव बन्धः, इति न पुरुषस्य संसार-मोक्षावित्याशङ्क्य बुद्धिसत्त्वगतावपि बन्ध-मोक्षौ योधगतजय-पराजयाविव स्वामिनि कथञ्चित् पुरुषेऽपदिश्येते, तस्य बुद्धिसत्त्वाविभागापत्त्या तत्फलभोक्तृत्वादित्याह— **स्यादपि कदाचिदिति**।

तप्य-तापकयोः पारमार्थिकत्वमभ्युपगम्यानिर्मोक्ष उच्यते, किं वा भ्रान्तत्वम्। आद्यपक्षे दूषणमाह— **अत्रोच्यत इति**। तत्

***न्यायनिर्णयः***

संचारयति— **तथेति**। अर्थार्थिवत् तावपि भिन्नाववेति संबन्धः। अर्थानर्थयोर्भेदमुदाहरति— **अर्थिन इति**। तर्हि कथमेकस्यैव विरुद्धधर्मद्वयं, तत्राह— **ताभ्यामिति**। तप्यतापकयोर्भिन्नत्वप्रसिद्धिमुपक्रम्यान्यदेवोक्तम्। न चानर्थानर्थिनोस्तप्यतापकत्वेऽपि तदर्थार्थिनोरस्तीत्याशङ्क्याह— **तत्रेति**। तप्यतापकयोर्भिन्नत्वमुपपाद्य विपक्षे मोक्षासिद्धिं पूर्वोक्तामुपसंहरति— **इति तयोरिति**। त्वन्मतेऽपि भिन्नयोरेव तप्यतापकयोर्वीचीतरङ्गादिवदुद्भवाभिभवाभ्यां नित्यत्वात् कुतो मुक्तिरित्याशङ्क्य पूर्वपक्षी स्वपक्षे मोक्षसिद्धिमाह— **जात्यन्तरेति**। नन्वविवेकस्तप्यतापकयोः संयोगे हेतुस्तस्य विवेकान्निवृत्तिरिति मते नित्यादागन्तुकाद्वा ततस्तन्निवृत्तिः? आद्ये सदामुक्ते संसाराभावः। द्वितीये त्वागन्तुकस्य विवेकस्यानाधेयातिशये पुंस्यसंभवः। न च सत्त्वस्यैवासौ, तस्यैव सम्यग्धिया मोक्षो, बन्धश्च तदभावादिति पुंसो द्वयाभावापातात्। मैवम्। बुद्धिसत्त्वस्थावपि बन्धमोक्षौ योद्धृगताविव जयपराजयौ स्वामिनि पुंस्युपचरितौ। तस्य बुद्धिसत्त्वाविभागापत्त्या तत्फलभोक्तृत्वादिति मत्वाऽऽह— **स्यादपीति**।

अनिर्मोक्षप्रसक्तेरयुक्तमौपनिषदं मतमिति प्राप्तनूद्य समाधिसत्त्वं सूचयति— **अत्रेति**। वस्तुत्वं तप्यतापकयोरुपेत्यानिर्मोक्षो विवक्ष्यते, भ्रान्तित्वं वेति विकल्प्याद्यं निराह— **नेत्यादिना**। तदेव प्रपञ्चयति— **भवेदिति**। **विषयविषयिभावं** तात्त्विकमिति शेषः। ऐक्ये तात्त्विको विषयविषयिभावो नेत्यत्र दृष्टान्तमाह— **न हीति**। कैमुतिकन्यायार्थं सत्यपीत्युक्तम्। किमु कूटस्थे

१. तत्त्वदृष्ट्या तप्यतापकभावानुपपत्त्यापादन इष्टापत्तिरिति भावः।

**वा, सत्यप्यौष्ण्यप्रकाशादिधर्मभेदे परिणामित्वे च। किमु कूटस्थे ब्रह्मण्येकस्मिंस्तप्यतापकभावः संभवेत्। क्व पुनरयं तप्यतापकभावः स्यादिति। उच्यते– किं न पश्यसि कर्मभूतो जीवद्देहस्तप्यस्तापकः सवितेति। ननु तप्तिर्नाम दुःखम्, सा चेतयितुर्नाचेतनस्य देहस्य। यदि हि देहस्यैव तप्तिः स्यात् सा देहनाशे स्वयमेव नश्यतीति तन्नाशाय साधनं नैषितव्यं स्यादिति। उच्यते– देहाभावेऽपि केवलस्य चेतनस्य तप्तिर्न दृष्टा। न च त्वयाऽपि तप्तिर्नाम विक्रिया चेतयितुः केवलस्येष्यते। नापि देहचेतनयोः संहतत्वमशुद्ध्यादिदोषप्रसङ्गात्। न च तप्तेरेव तप्तिमभ्युपगच्छसि। कथं तवापि तप्यतापकभावः? सत्त्वं तप्यं तापकं रज इति चेत्? न। ताभ्यां चेतनस्य संहतत्वानुपपत्तेः। सत्त्वानुरोधित्वाच्चेतनोऽपि तप्यत इवेति चेत्, परमार्थतस्तर्हि नैव तप्यत**

### *प्रकटार्थविवरणम्*

एकरसत्वात् तत्र तप्यतापकभावो नास्ति चेत् तर्हि शब्दद्वयस्य निरालम्बनत्वमापन्नमित्याह— **क्व पुनरयमिति**। नात्राक्षेपावसरः, व्यवहारे प्रसिद्धत्वादित्याह— **किं न पश्यसीति**। जीवद्देहस्तप्य इत्येतदाक्षिपति— **ननु तप्तिर्नामेति**। देहस्य न संभवतीति वदतः कोऽभिप्रायः? किं चेतनस्य केवलस्य किं वा संहतस्य? आद्यं प्रत्याह— **देहाभावेऽपीति**। द्वितीयं दूषयति— **नापीति**। परिशेषात् तप्तेरेव तप्तिरित्यपि न वाच्यमित्याह— **न च तप्तेरेवेति**। अतो व्यवहारं विहाय तत्त्वे तप्यतापकभावः त्वयाऽपि वक्तुं न शक्यत इत्याह— **कथं तवापीति**। सत्त्वकार्यमन्तःकरणं तप्यम्, राजसं दुःखं तापकमिति शङ्कते— **सत्त्वं तप्यमिति**। कथं तर्हि पुरुषस्य बन्धमोक्षौ इत्याह— **न ताभ्यामिति**। स्वाभिप्रायमाह सांख्यः— **सत्त्वानुरोधित्वादिति**। बुद्धौ प्रतिबिम्बितत्वाच्चेतनोऽपि

### *भाष्यभावप्रकाशिका*

प्रपञ्चयति— **भवेदिति**। द्वितीयं पक्षमवलम्बितुं शङ्कामुत्थापयति— **क्व पुनरिति**। अविद्यापरिकल्पितात्मविषयस्तप्यतापकभाव इत्याह— **उच्यते, किं न पश्यसीति**। ननु तप्य-तापकभावस्तु द्विविधः—बाह्यः, आन्तरश्चेति। अयं तु बाह्यः, आन्तरस्त्वात्मसुखादिविषय एवेत्याह— **ननु तप्तिर्नामेति**। ननु आन्तरोऽपि तप्य-तापकभावो लिङ्गशरीरविषयः, नात्मविषयः, इत्याशङ्क्य, लिङ्गशरीरस्यानित्यत्वात् साधनानुष्ठानं व्यर्थं स्यादित्याह— **यदि देहस्यैवेति**। यदि लिङ्गशरीरविषय एव तप्य-तापकभावः, तस्यात्मविषयत्वं प्रतीयमानं कथमुपपद्यते? अग्न्ययःपिण्डवदभेदाध्यासात्। न च लिङ्गशरीरस्य विनाशित्वात् साधनानुष्ठानवैयर्थ्यम्; आ मोक्षाल्लिङ्गशरीरस्य प्रवाहरूपेण विद्यमानत्वादित्यभिप्रेत्याह— **उच्यते देहाभावेऽपीति**। सांख्येनाप्यविद्यामयस्तप्यतापकभावोऽभ्युपगन्तव्य इति पारिशेष्यन्यायेन दर्शयति— **न च त्वयाऽपीति**। तर्हि संहतस्यास्त्विति, अत्राह— **नापीति**। चेतनस्य न संभवति चेत्, अचेतनस्य सुतराम्, ततश्च तप्तेरेव तप्तिरिति, अत आह— **न च तप्तेरेवेति**। सत्त्व-रजसोस्तप्य-तापकभावश्चेत्, तन्निवृत्तये साधनानुष्ठानं पुरुषस्य न स्यात्। अथ तदविवेकानस्यापि [कात्तस्यापि] विद्यत इति, तत्राह— **ताभ्यां चेतनस्येति**। ताप्यभूते सत्त्व आत्मनः प्रति बिम्बितत्वाद् घटत इत्याशङ्कते— **सत्त्वानुरोधित्वादिति**। ननु इवशब्दस्य क्वचित्सादृश्यवशेनापि प्रयोगदर्शनादिहापि तथा

### *न्यायनिर्णयः*

ब्रह्मणीत्यत्राक्षेपार्थे किंशब्दः। द्वितीयमवलम्बयितुं शङ्कयति— **क्वेति**। बाह्यस्यान्तरस्य वाऽऽश्रयस्तप्यतापकत्वस्य पृच्छ्यते। प्रथमं प्रत्याह— **उच्यत इति**। द्वितीयमादाय शङ्कते— **नन्विति**। साऽपि लिङ्गदेहस्यैव स्यादित्याशङ्क्याह— **यदीति**। कल्पितात्मत्व-लिङ्गगामित्वेनान्तरस्य तस्य भ्रान्तिमात्रत्वमभ्युपेतमित्याह— **उच्यत इति**। यत्तु लिङ्गस्य नाशित्वात् तद्गततप्यतापकत्वस्य स्वयमेव नाशाद्धेत्वनुष्ठानानर्थक्यमिति। तत्र। लिङ्गस्य यावदात्मभावित्वेनामुक्तेरवस्थानादित्याशयेनाह— **देहेति**। किंच सांख्यस्यापि तप्यतापकत्वमाविद्यं पारिशेष्यसिद्धम्। तप्तिर्हि तन्मते केवलस्य वा चेतनस्य; संहतस्य वा, तप्तेर्वा, सत्त्वस्य वा। नाद्य इत्याह— **न चेति**। न द्वितीय इत्याह— **नापीति**। न तृतीय इत्याह— **न चेति**। न च केवलस्य देहस्यैव तप्तिः, 'नाचेतनस्य देहस्य' इत्युक्तत्वादित्याक्षिपति— **कथमिति**। चतुर्थं शङ्कते— **सत्त्वमिति**। तयोस्तप्यतापकत्वे तन्निवृत्तये हेत्वनुष्ठानं पुंसो न स्यादित्याह— **नेति**। सत्त्वरजोभ्यामविवेकात् तस्यापि तप्तिः स्यादित्याशङ्क्याह— **ताभ्यामिति**। आत्मनस्तप्ते सत्त्वे प्रतिबिम्बितत्वाद् युक्ता तप्तिरिति शङ्कते— **सत्त्वेति**। किमिवशब्दस्याभासोऽर्थः, सादृश्यं वा? प्रथमं प्रत्याह— **परमार्थत इति**। क्वचिदिवशब्दस्य

**इत्यापतति; इवशब्दप्रयोगात्। न चेत् तप्यते नेवशब्दो दोषाय। न हि डुण्डुभः सर्प इवेत्येतावता सविषो भवति, सर्पो वा डुण्डुभ इवेत्येतावता निर्विषो भवति। अतश्चाविद्याकृतोऽयं तप्यतापकभावो न पारमार्थिक इत्यभ्युपगन्तव्यमिति। नैवं सति ममापि किंचिद् दुष्यति।**

**अथ पारमार्थिकमेव चेतनस्य तप्यत्वमभ्युपगच्छसि, तवैव सुतरामनिर्मोक्षः प्रसज्येत, नित्यत्वाभ्युपगमाच्च तापकस्य। तप्यतापकशक्त्योर्नित्यत्वेऽपि सनिमित्तसंयोगापेक्षत्वात् तप्तेः संयोगनिमित्तादर्शननिवृत्तावात्यन्तिकः संयोगोपरमः, ततश्चात्यन्तिको मोक्ष उपपन्न इति चेत्? न; अदर्शनस्य तमसो नित्यत्वाभ्युपगमात्। गुणानां**

### *प्रकटार्थविवरणम्*

तत्तापे तप्यत इवेत्यर्थः। तर्हि तत्त्वतस्तप्यतापकभावो नास्तीति यन्मयोक्तं तदेवायातमित्याह— **परमार्थतस्तर्हीति**। ननु इवशब्दोऽप्यत्यन्ततापाभावेऽप्यनुपपन्न इत्याशङ्क्याह— **न चेति**। तप्यते, न वेति द्वयी गतिः। तत्र तप्यत इत्ययं पक्षो नाङ्गीक्रियते चेत् तदा किमिवशब्देनापराद्धमित्यर्थः। विपक्षे दोषमाह— **अथ पारमार्थिकमिति**। सत्यस्य ज्ञानान्निवृत्त्यसंभवात्, सद्वादितया तापकस्यापि नित्यत्वाभ्युपगमाच्चेत्यर्थः। पूर्वोक्तं स्मारयति— **तप्यतापकशक्त्योरिति**। तप्यशक्तिस्सत्वम्, रजस्तापकशक्तिः, सहाविवेकन निमित्तेन वर्तत इति सनिमित्तः संयोगस्तदपेक्षत्वात् चेतने तप्तेः। परिहरति— **तन्नादर्शनस्येति**। ननु यद्यपि तमोरूपस्याविवेकस्य नित्यत्वम्, तथापि विवेकाना [केना]भिभवो भविष्यतीत्याशङ्क्याह— **गुणानां चेति**। यस्याभिभवः तस्य सदाऽभिभव एवेति नियमाभावात् बुद्धिसंबन्धनिमित्तस्याविवेकस्य उपरमो नियतो न भवतीति बुद्धिसंयोगाभावस्याप्येकान्ततोऽभावादनिर्मोक्ष इत्यर्थः।

### *भाष्यभावप्रकाशिका*

स्यादित्याशङ्क्याह— **न चेत्तप्यत इति**। परमार्थतस्तप्यत्वे सादृश्यादपि इवशब्दो न प्रयोक्तव्य इत्यर्थः। सादृश्यात्प्रयोगेऽपि न नः काचित् क्षतिरित्याह— **न हि डुण्डुभ इति**। परमार्थतो भ्रान्तित्वेन वा तप्य-तापकभावोऽभ्युपगन्तव्यः। तत्र परमार्थतोऽभावात् काल्पनिकत्वं प्रसज्यत इत्याह— **अतश्चाविद्याकृत इति**। भवतु, भवतः किमायातमिति? अत आह— **नैवं सतीति**।

अनिर्वचनीयतयाऽविद्यात्मकत्वं मया नेष्यत इति सांख्यमतमाशङ्कते— **अथेति**। **तवैव सुतरामिति**। तप्तिक्रियायास्तत्सम्बन्धस्य च परमार्थत्वाद् ज्ञानात् तस्यानिवृत्तेरित्यर्थः। इदानीं तापकस्य प्रधानस्य नित्यत्वादनिर्मोक्ष इत्याह— **नित्यत्वाभ्युपगमादिति**। विशेषं शङ्कते— **तप्य-तापकशक्त्योरिति**। सहादर्शनेन निमित्तेन वर्तत इति सनिमित्तः संयोगः। निराकरोति— **न; अदर्शनस्येति**। तत्त्वान्तरेष्वन्तर्भावासंभवात् तमोगुण एवान्तर्भाव इत्यभिप्रायेण तमस इत्युक्तम्। ननु उद्भूतं तमस्तप्य-तापकयोः सम्बन्धं जनयति, तत्त्वदर्शनेन तु तमसोऽभिभूतत्वात् सम्बन्धाभावान्न संसार इति, अत आह— **गुणानां चेति**।

### *न्यायनिर्णयः*

सादृश्येऽपि प्रयोगादिहापि तथेति द्वितीयं शङ्कित्वाऽऽह— **न चेदिति**। चेतनस्य तप्यत्वं कल्पितमकल्पितं वोपेत्येवशब्दः सादृश्ये प्रयुक्तः। नाद्यः, वस्तुतोऽतप्यत्वे सादृश्यस्याकिंचित्करत्वादित्यर्थः। कथमिवशब्दस्योक्तसादृश्यस्याकिंचित्करत्वं, तप्यमानसादृश्ये तप्यमानत्वयोगात्, तत्राह— **न हीति**। पारिशेष्यं निगमयति— **अतश्चेति**। परमते तप्यतापकत्वस्याविद्यत्वे किं ते जातम्, तदाह— **नैवमिति**।

अनिर्वाच्यत्वेनाविद्यत्वं तप्यत्वस्य मया नेष्टमिति कल्पान्तरमाह— **अथेति**। तप्तिक्रियायास्तत्संबन्धस्य च वस्तुत्वाज्ज्ञानादनिवृत्तेर्न मुक्तिरित्याह— **तवैवेति**। सुतरामित्युक्तमतिशयमाह— **नित्यत्वेति**। प्रधानं तापकम्। सांख्यः स्वपक्षे मोक्षसिद्धिं शङ्कते— **तप्येति**। निमित्तेनादर्शनेन सह वर्तत इति सनिमित्तः प्रकृतिपुरुषयोगस्तदपेक्षत्वादात्मनि तप्तेः, निमित्तनिवृत्त्या नैमित्तिकनिवृत्तौ शक्तिनित्यत्वेऽपि सर्वात्मना तापक्षयलक्षणो मोक्षः सिध्यतीत्यर्थः। अदर्शनस्याभावस्य नित्यत्वादनिवृत्तेस्तत्त्वान्तरेषु चानन्तर्भावात् तमस्यन्तर्भावमभ्युपेत्य प्रत्याह— **नेति**। उद्भूतेन तमसा तप्यतापकयोः संबन्धोपपत्तेस्तत्त्वधिया तमसोऽभिभवे संबन्धाभावाद् बन्धध्वस्तिरित्याशङ्क्याह— **गुणानां चेति**।

**चोद्भवाभिभवयोरनियतत्वादनियतः संयोगनिमित्तोपरम इति वियोगस्याप्यनियतत्वात् सांख्यस्यैवानिर्मोक्षोऽपरिहार्यः स्यात्।**

**औपनिषदस्य त्वात्मैकत्वाभ्युपगमादेकस्य च विषयविषयिभावानुपपत्तेर्विकारभेदस्य च वाचारम्भण-मात्रत्वश्रवणादनिर्मोक्षशङ्का स्वप्नेऽपि नोपजायते। व्यवहारे तु यत्र यथा दृष्टस्तप्यतापकभावस्तत्र तथैव स इति न चोदयितव्यः परिहर्तव्यो वा भवति।।१०।।**

।।इति प्रथमं रचनानुपपत्त्यधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

।।महद्दीर्घाधिकरणम्।।

**[1]महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्।।११।।**

ब्रह्मचैतन्यं जगत्समवायिकारणविशेषगुणो[2] न भवति, जगति स्वसमानजातीयगुणान्तरानारम्भकत्वात्, घटे तन्तुगतशौक्ल्यवत् इत्यनुमानस्य वैशेषिकप्रक्रियायामेव पारिमाण्डल्याणुत्वह्रस्वत्वेष्वनैकान्तिकत्वमागमविरुद्धत्वं चोक्तम्।।

### *प्रकटार्थविवरणम्*

एवं तावत् सांख्यस्य तत्त्वतो बन्धमोक्षानिरूपणमुपपाद्य स्वपक्षमुपसंहरति— **औपनिषदस्य त्विति**। परमार्थतत्त्वे बिम्बभूते ब्रह्मणि संसारस्यैवाभावात् तत्रानिर्मोक्षप्रसङ्गो विप्रतिषेधो वा न शङ्कनीय एवेत्यर्थः। द्वितीयविकल्पं प्रत्याह— **व्यवहारे त्विति**। जीवानां भिन्नानामेव तप्यत्वान्न विप्रतिषेधादिप्रसङ्ग इति भावः। इति प्रथमं रचनानुपपत्त्यधिकरणम्।।

### *भाष्यभावप्रकाशिका*

अस्मत्पक्षे तु न दोष इत्याह— **औपनिषदस्येति**। ननु तप्य-तापकयोः स्वाभाविकत्वेऽपि विकारोपाधिकयोरुद्भवाभिभवाभ्यां नित्यत्वान्मोक्षसाधनविधानं व्यर्थमित्याशङ्क्य, अविद्याकल्पितत्वात् तत्त्वज्ञानेन तयोर्निवृत्तिः संभवतीत्याह— **विकारभेदस्य चेति**। ननु तप्यतापकयोरेकात्मकत्वेऽर्थाभिभवोऽनुपपन्न इत्युक्तमिति, अत आह— **व्यवहारे त्विति**।।१०।। इति प्रथमं रचनानुपपत्त्यधिकरणम्।।

### *न्यायनिर्णयः*

परपक्षे मोक्षासिद्धिं प्रसाध्य स्वपक्षे तदुपपत्तिमाह— **औपनिषदस्येति**। अनिर्मोक्षाशङ्का नेति संबन्धः। सा किं हेत्वभावाद्वा तप्यतापकयोः स्वाभाविकत्वाद्वा? नाद्य इत्याह— **आत्मेति**। न द्वितीय इत्याह— **एकस्येति**। तप्यतापकयोरस्वाभाविकत्वेऽपि विकारोपाधिकयोरुद्भवादिना नित्यत्वादनिर्मोक्षाशङ्केत्याशङ्क्याह— **विकारेति**। आत्मैक्योपगमे कथं दृश्यमानं तप्ततापकत्वं, न खल्वेकस्मिन्नेवार्थार्थित्वादि युक्तमित्याशङ्क्य काल्पनिके व्यावहारिके तस्मिन् नानुपपत्तिरित्याह— **व्यवहारे त्विति**।।१०।।इति प्रथमं रचनानुपपत्त्यधिकरणम्।

---

१. महच्च दीर्घं च महद्दीर्घे, तद्वदिति विग्रहः। महद्दीर्घत्र्यणुकादिव्यक्तिभेदविवक्षया द्वन्द्वोपपत्तिः। द्र. परिमलः।

२. विशेषगुण इति। गुणविशेष इत्यर्थः। न तु तार्किकपरिभाषितविशेषगुण इति, सामान्यगुणेषु पारिमाण्डल्यादिषु व्यभिचारप्रदर्शनायोगात्। ते च— अपाकजा रूपरसगन्धस्पर्शाः, परिमाणैकत्वैकपृथक्त्वगुरुत्वसांसिद्धिकद्रवत्वस्नेहवेगाश्चेत्येते विवक्षिताः।

## २।।महद्दीर्घाधिकरणम्।।सू. ११।।

**प्रधानकारणवादो निराकृतः। परमाणुकारणवाद इदानीं निराकर्तव्यः। तत्रादौ तावद् योऽणुवादिना ब्रह्मवादिनि दोष उत्प्रेक्ष्यते स प्रतिसमाधीयते। तत्रायं वैशेषिकाणामभ्युपगमः– कारणद्रव्यसमवायिनो[1] गुणाः कार्यद्रव्ये समानजातीयं गुणान्तरमारभन्ते, शुक्लेभ्यस्तन्तुभ्यः शुक्लस्य पटस्य प्रसवदर्शनात् तद्विपर्ययादर्शनाच्च। तस्माच्चेतनस्य ब्रह्मणो जगत्कारणत्वेऽभ्युपगम्यमाने कार्येऽपि जगति चैतन्यं समवेयात्। तददर्शनात्तु न**

### *प्रकटार्थविवरणम्*

वृत्तवर्तिष्यमाणयोः संबन्धमाह— **प्रधानेति**। शिष्टपरिगृहीतत्वेन प्रथमं प्रधाननिराकरणम्; तदनु शिष्टापरिगृहीताणुवादापवाद इत्यर्थः। अवान्तरसङ्गतिमाह— **तत्रादाविति**। चेतनाज्जगत्सर्गं ब्रुवन् समन्वयो विषयः। तस्य वैशेषिकगुणारम्भानुमानेन विरोधोऽस्ति, उत नेति संशयः। पूर्वत्र सुखदुःखाद्यन्वयस्य कार्येऽसिद्धत्वात् प्रधानकारणत्वं दूषितम्; तद्वदेव कार्ये चैतन्यान्वयस्यासिद्धत्वात् चेतनं ब्रह्म कारणं न भवतीति पूर्वपक्षमाह— **तत्रायमित्यादिना**। ब्रह्मचैतन्यं ब्रह्मप्रकृतिके कार्ये स्वानुरूपं गुणान्तरमारब्धुमर्हति,

### *भाष्यभावप्रकाशिका*

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्**।।११।। वृत्तसङ्कीर्तनपूर्वकमधिकरणस्य तात्पर्यमाह— **प्रधानकारणवाद इति**। ननु परमाणुकारणवादो निराचिकीर्षितश्चेत्, अस्मिन्निराकरणाभावान्नेदमधिकरणमारब्धव्यमित्याशङ्क्याह— **तत्रादौ तावदिति**। तदीयानुमानं ब्रह्मकारणनिराकरणपरं दर्शयितुं तत्प्रक्रियामनुवदति— **तत्रायं वैशेषिकाणामिति**। **चैतन्यं समवेयादिति**। ननु चैतन्यस्य स्वरूपत्वाद् गुणत्वमसिद्धम् इति, न; अहं ज्ञानमित्यदर्शनाद् ज्ञानीत्येव दर्शनाद् ज्ञानस्य गुणत्वं सिद्धम्। ततश्च ब्रह्मणोऽपि चेतनत्वात् तच्चैतन्यमपि गुण एव, न स्वरूपमित्यर्थः। ननु घटः प्रकाशत इति सामानाधिकरण्यात् तद्गुणत्वं घटादेरुपपन्नमित्याशङ्क्य जनयितृव्यापारविषयतया 'घटो जायत' इतिवत् प्रकाशयितृव्यापारकर्मतयेदं सामानाधिकरण्यम्, न तद्गुणत्वादित्याह— **तददर्शनात्त्विति**। तदयं प्रयोगः— ब्रह्म, तनुभुवनादिजगतो न समवायिकारणम्, जगति स्वविशेषगुणावान्तरजातीयगुणा-रम्भकत्वप्रसङ्गादिति प्रसङ्गरूपः। अथवा ब्रह्मचैतन्यम्, जगतः समवायिकारणविशेषगुणो न भवति; जगति स्वसमानजातीय-

### *न्यायनिर्णयः*

वृत्तं कीर्तयति— **प्रधानेति**। तस्य भ्रान्तिमूलत्वात् तदीययुक्तिविरोधः समन्वयस्य नास्तीत्युक्तमित्यर्थः। वैशेषिकाधिकरणस्य तात्पर्यमाह— **परमाण्विति**। तस्य भ्रान्तिमूलत्वोक्त्या तदीययुक्तिविरोधो निरस्यः समन्वयस्येत्यर्थः। तन्निराकरण-स्यास्मिन्नधिकरणेऽभावात् किमनेनेत्याशङ्क्याह— **तत्रेति**। स्वपक्षदोषनिरासस्य स्मृतिपादसंबन्धेऽपि प्रधानगुणानन्वयान्न चेज्जगत् तत्प्रकृतिकं तर्हि ब्रह्मविशेषगुणानन्वयान्न तत्प्रकृतिकमपि स्यादित्यवान्तरसंगतिलाभादिहेदमधिकरणमिति भावः। स्वपक्षदोषसमाधिद्वारा समन्वयदृढीकरणादध्यायादिसंगतयः। तत्र चेतनाद् ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विषयः। तस्य वैशेषिकगुणारम्भानुमानेन विरोधोऽस्त्युत नेति तदनाभासत्वाभासत्वाभ्यां संदेहे पूर्वपक्षमाह— **तत्रेति**। पूर्वपक्षे वैशेषिकानुमानविरोधाद् ब्रह्मणि समन्वयासिद्धिः, सिद्धान्ते तदविरोधात् तत्सिद्धिरिति फलभेदः। तदीयानुमानं ब्रह्मकारणनिराकरणपरं दर्शयितुं तदभ्युपगममभिनयति— **कारणेति**। समवायिकारणार्थं कारणपदमिति वक्तुं द्रव्यपदम्। गुणशब्दोऽसाधारणगुणार्थः[2], साधारणगुणानामारम्भकत्वेऽपि समवायिकारणस्थत्वानियमात्। कार्यस्य द्रव्यविशेषणं कार्यान्तरे तदनारम्भात्। गुणाश्च गुणान्तरमित्यत्रान्वयव्यतिरेकौ दर्शयति— **शुक्लेभ्य इति**। ब्रह्मचैतन्यं न द्रव्यसमवायिकारणविशेषगुणः, समानजातीयविशेषगुणानारम्भकत्वात्, संयोगवदित्यभिप्रेत्याह— **तस्मादिति**। न च चैतन्यस्य स्वरूपत्वेन गुणत्वासिद्धेः सिद्धसाध्यता, ज्ञानीतिवदहं ज्ञानमित्यदृष्टेस्तद्गुणत्वस्पाष्ट्यादिति भावः। घटः स्फुरतीति सामानाधिकरण्याद् घटादेस्तद्गुणत्व-सिद्धेरसिद्धिरित्याशङ्क्य जनयितृव्यापारविषयतया घटो जायत इतिवत् प्रकाशयितृव्यापारकर्मतया सामानाधिकरण्यं, न तद्गुणत्वादित्यसिद्धिं समुद्धरति— **तदिति**। ब्रह्म न द्रव्योपादानं, तुल्यजातीयारम्भकविशेषगुणानाधारत्वात्, दिगादिवदिति भावः।

---

१. समवायिनः = समवेताः। २. कपालद्वयसंयोगस्य घटसमवायिकारणवृत्तेरपि घटे संयोगान्तरारम्भकत्वादर्शनात् असाधारणेत्युक्तम्। असाधारण्यं च गुणे एकद्रव्यवृत्तित्वमभिप्रेतम्। 'साधारणगुणानां समवायिकारणस्थत्वेऽपि आरम्भकत्वानियमात्' इति पाठः स्यादिति भाति।

**चेतनं ब्रह्म जगत्कारणं भवितुमर्हतीति। इममभ्युपगमं तदीययैव प्रक्रियया व्यभिचारयति—**

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्।।११।।**

**एषा तेषां प्रक्रिया— परमाणवः किल कंचित् कालमनारब्धकार्या यथायोगं रूपादिमन्तः पारिमाण्डल्यपरिमाणाश्च तिष्ठन्ति। ते च पश्चाददृष्टादिपुरःसराः संयोगसचिवाश्च सन्तो द्व्यणुकादिक्रमेण**

***प्रकटार्थविवरणम्***

[1]एकद्रव्यवृत्तित्वे सति समवायिकारणगुणत्वात्, तन्तुगतशौक्ल्यवदित्यर्थः। तत्रानैकान्तिकत्वाभिधानसूत्रमवतारयति— **इममभ्युपगममिति**। महद् दीर्घं च त्र्यणुकं यथा ह्रस्वपरिमण्डलाभ्यां जायते; ह्रस्वेभ्यो द्व्यणुकेभ्यः त्र्यणुकं जायत इत्याधुनिकाभिप्रायः, परिमण्डलेभ्यः परमाणुभ्य इति चिरन्तनाभिप्रायः; वाशब्दश्चार्थे अनुक्तसमुच्चयार्थः। परिमण्डलाच्च परमाणोर्द्व्यणुकं ह्रस्वम्; तथा चेतनाद् ब्रह्मणो जगदचेतनं भविष्यतीति सूत्रयोजना[2]।

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्**।। वैशेषिकाणां प्रक्रियामाह— **एषा तेषामिति**। **यथायोगं रूपादिमन्त इति**। वायवीयाः स्पर्शवन्त एव। तैजसादयस्तु रूपादिमन्त इत्यर्थः। पारिमाण्डल्यं परमाणोरसाधारणं परिमाणम्। परि समन्तादूर्ध्वमधस्तिरश्च

***भाष्यभावप्रकाशिका***

गुणान्तरानारम्भकत्वात्; [घटे]तन्तुगतशौक्ल्यवत्। ननु एतदनुमानं स्मृतिपादे निराकार्षीत्, किमर्थं पुनर्निराकरोति? किञ्चास्य सङ्गतिमपि नोपलभामह इति चेत्, सत्यम्; तत्र तदीयानुमानस्य लौकिकपदार्थेषु व्यभिचारमवोचत्, इदानीं तत्प्रक्रियासिद्धेषु व्यभिचारं पारिमाण्डल्याणुत्वह्रस्वत्वेषु निरूपयति। [3]सङ्गतिरप्यस्यात्र प्रासङ्गिकीत्याह— **तदीययैवेति**।

इदानीं व्यभिचारं दर्शयितुं तत्प्रक्रियां कथयति— **एषा तेषामिति**। तेषामारम्भकमाह— **ते च पश्चादिति**। प्रथमं तावद-दृष्टवत्क्षेत्रज्ञसंयोगात् परमाणौ कर्म, ततः परमाण्वन्तरसंयोगेन द्व्यणुकारम्भः, बहवस्तु परमाणवः संयुक्ताः सहसा कार्यं नारभन्ते, परमाणुत्वे सति बहुत्वात्, [4]घटोपगृहीतपरमाणुवत्। यदि घटोपगृहीताः परमाणवो घटमारभेरन्, घटे प्रविभज्यमाने कपालशकला-दीनामनारब्धत्वात् परमाणूनामतीन्द्रियत्वाच्च न किञ्चिदुपलभ्येत। न च— द्वौ परमाणू कार्यं नारभेते, परमाणुत्वे सति द्वित्वात्, घटोपगृहीतपरमाणुद्वयवदिति— वाच्यम्; साध्यवैकल्यादित्यर्थः। अत्रादृष्टपुरस्सरा इति निमित्तकारणनिर्देशः, संयोगसचिवा इत्यसमवायिकारणनिर्देशः। परमाणवश्च समवायिकारणम्। कारणगताः सर्वे गुणा आरम्भकाः, किं वा कतिपया इति, तत्राह—

***न्यायनिर्णयः***

स्मृतिपादे निरस्तमनुमानं किमिति पुनः शङ्कितमित्याशङ्क्य लौकिकपदार्थेषु तत्रोक्तेऽपि व्यभिचारे परप्रक्रियासिद्धेष्वेव पारिमाण्डल्यादिषु तमिदानीं दर्शयतीति विशेषमाह— **इममिति**। तदर्थं सूत्रमुदाहरति— **महदिति**। यथा महद् दीर्घं च त्र्यणुकं ह्रस्वेभ्योऽणुभ्यश्च द्व्यणुकेभ्यो जायते; वाशब्दश्चार्थः; यथा च परिमण्डलाभ्यां परमाणुभ्यां द्व्यणुकमपरिमण्डलमुत्पद्यते, तथा चेतनाद् ब्रह्मणो जगदचेतनं स्यादिति सूत्रार्थः। इममर्थं स्फुटीकर्तुं परकीयप्रक्रियामनुवदति— **एषेति**। तत्र प्रलयावस्थामुपन्यस्यति— **परमाणव इति**। चतुर्विधेषु तेषु प्रामाणिकसंमतिं सूचयति— **किलेति**। लयहेतुकर्मोद्रेकावस्था कंचित्कालमित्युक्ता। तत्र सर्वकार्यलयेऽपि पाकजपरमाणुगुणानामवस्थानमास्थायोक्तम्— **रूपादिमन्त इति**। पार्थिवपरमाणूनां चतुर्गुणत्वमाप्यपरमाणूनां त्रिगुणत्वं तैजसपरमाणूनां द्विगुणत्वं वायवीयपरमाणूनामेकगुणतेति विभागमाह— **यथेति**। परमाणुमात्रवृत्तिपरिमाणं दर्शयति— **पारिमाण्डल्येति**। तेषामारम्भकक्रममाह— **ते च पश्चादिति**। सर्गहेतुकर्मोद्भवावस्था पश्चादित्युक्ता। समवायिकारणं परमाणूनुक्त्वा निमित्तकारणमाह— **अदृष्टादीति**। आदिशब्देनेश्वरप्रयत्नाद्युच्यते। असमवायिकारणमाह— **संयोगेति**। अदृष्टवत्क्षेत्रज्ञसंयोगात् परमाणौ कर्म, ततोऽण्वन्तरसंयोगाद् द्व्यणुकमारभ्यते। न च परमाणवो बहवः संयुक्ताः सहसा कार्यारम्भकाः, परमाणुत्वे सति बहुत्वाद् घटोपगृहीतपरमाणुवत्। न च तेषामपि घटारम्भकतया साध्यवैकल्यं, घटभङ्गे कपालादीनामनारब्धत्वादणूनां चातीन्द्रियत्वात् सर्वानुपलब्धिप्रसङ्गात्। न च

१. कपालद्वयसंयोगे व्यभिचारवारणाय सत्यन्तम्। २. 'ह्रस्वाद् द्व्यणुकात् साक्षात्, परिमण्डलाच्च परमाणोः द्व्यणुकद्वारा महद्दीर्घत्र्यणुकोत्पत्तिवत्' इति सूत्रयोजना सूत्रमुक्तावलावाश्रिता।
३. प्रासङ्गिकी पादसंगतिः, पूर्वाधिकरणेन तु दृष्टान्तसंगतिः न्यायनिर्णये स्पष्टा। ४. घटोपगृहीतेति। घटस्य मूलावयवभूतेत्यर्थः।

**कृत्स्नं कार्यजातमारभन्ते; कारणगुणाश्च कार्ये गुणान्तरम्। यदा द्वौ परमाणू द्व्यणुकमारभेते तदा परमाणुगता रूपादिगुणविशेषाः शुक्लादयो द्व्यणुके शुक्लादीनपरानारभन्ते। परमाणुगुणविशेषस्तु पारिमाण्डल्यं न द्व्यणुके पारिमाण्डल्यमपरमारभते, द्व्यणुकस्य परिमाणान्तरयोगाभ्युपगमात्। अणुत्वह्रस्वत्वे हि द्व्यणुकवर्तिनी परिमाणे वर्णयन्ति। यदाऽपि द्वे द्व्यणुके चतुरणुकमारभेते तदाऽपि समानं द्व्यणुकसमवायिनां शुक्लादीनामारम्भकत्वम्; अणुत्वह्रस्वत्वे तु द्व्यणुकसमवायिनी अपि नैवारभेते, चतुरणुकस्य महत्त्वदीर्घत्वपरिमाणयोगाभ्युपगमात्। यदाऽपि बहवः परमाणवो, बहूनि वा द्व्यणुकानि, द्व्यणुकसहितो**

### *प्रकटार्थविवरणम्*

वर्तुला एवेत्यर्थः। कारणगुणानामारम्भकत्वं स्पष्टयति— **यदा द्वौ परमाणू इति**। व्यभिचारप्रदर्शनायानारम्भकमुदाहरति— **परमाणुगुणविशेषस्त्विति**। विशेषगुणत्वमेकेन्द्रियग्राह्यत्वं चेत् असिद्धम्; असाधारण्यं चेदनेकान्तः; परिमाणादेरपि तत्तदसाधारण्यात्। व्यभिचारप्रदर्शनायैव **चिरन्तनवैशेषिकाणा**मुदाहरणान्तरमाह— **यदा द्वे इति**। तथा हि **रावणप्रणीते भाष्ये** दृश्यते ''यद् द्वाभ्यां द्व्यणुकाभ्यामारब्धे कार्ये यन्महत्त्वमुत्पद्यते तस्य प्रचयोऽसमवायिकारणम्'' इति। प्रचयो नाम प्रशिथिलावयवसंयोगः स्थूल [तूल]पिण्ड एव [इव]। आधुनिकास्तु वर्णयन्ति— त्रिभिरेव द्व्यणुकैस्त्र्यणुकमारभ्यते इति; तत्र नियमे प्रमाणाभावं मन्वानोऽनियममाह— **यदापि बहव इति**। यच्चोक्तम्, नष्टे घटे अवान्तरकार्यं न दृश्यते[1] परमाणूनामारम्भकत्वपक्ष इति, तत्रोच्यते— विनष्टे घटे त्र्यणुकपर्यन्तं कार्योपलब्धेः तत्क्रमेणैवारम्भोऽस्तु, किं द्व्यणुकैः? त्र्यणुकं च त्रिभिः परमाणुभिरारभ्यताम्। बहवोऽपि परमाणवो

### *भाष्यभावप्रकाशिका*

**यदा द्वौ परमाणू इति**। प्रथमकल्पोऽनुपपन्न इत्याह— **परमाणुगुणविशेष इति**। ननु कारणबहुत्वमहत्त्वप्रचयविशेषेभ्यो महत्त्वस्योत्पत्तिः। न च द्व्यणुकयोर्महत्त्वबहुत्वप्रचयविशेषाःसन्ति; अणुत्वात्, द्वित्वात्, निरवयवारब्धत्वाच्च। तत् कथं द्वे द्व्यणुके चतुरणुकमारभेते इति? नैष दोषः, द्व्यणुक इति सप्तम्यन्तमेतत्। द्व्यणुकाधार इति यावत्। द्वे इति द्वित्वे, द्वित्वद्वयमित्यर्थः। ''द्व्येकयोर्द्विवचनैकवचने'' इत्यादौ द्वित्वैकत्वयोरिति भावेऽपि प्रयोगदर्शनात्, अन्यथा द्व्येकेषामिति स्यात्; संख्येयानां बहुत्वात्। ततश्च संख्येयानां चतुर्णां द्व्यणुकानामारम्भकत्वात् तद्गते द्वित्वे अप्यारम्भके उक्ते। अथवा द्व्यणुकं च द्व्यणुकं च द्व्यणुके। तेन द्वे द्व्यणुके इति द्वित्वद्विवचनाभ्यां द्वौ घटौ द्वावितिवद् द्व्यणुकचतुष्टयं सम्पद्यते। द्वे द्वे द्व्यणुके इति वा पाठः। लेखकप्रमादादेको द्विशब्दः पतित इति द्रष्टव्यम्।

एवं व्यवस्थितायां वैशेषिकप्रक्रियायां व्यभिचारं प्रदर्श्य अव्यवस्थितायामपि व्यवस्थितो व्यभिचार इत्याह— **यदापि बहव**

### *न्यायनिर्णयः*

द्वावपि परमाणू कार्यानारम्भकौ, परमाणुत्वे सति द्वित्वाद् घटोपगृहीतपरमाणुद्वयवदिति युक्तम्, साध्यवैकल्यात्। द्व्यणुकानि च त्रीणि संभूय त्र्यणुकमुत्पादयन्ति, तदनन्तरमारम्भकसंख्यानियमो नेति भावः। 'द्रव्याणि द्रव्यान्तरमारभन्त' इति सूत्रार्थमुक्त्वा 'गुणाश्च गुणान्तर' मिति सूत्रार्थमाह— **कारणेति**। कतिपयकारणगुणानामारम्भकत्वं, सर्वेषां वेति वीक्षायामाद्यं व्युत्पादयति— **यदेति**। कल्पान्तरं दूषयति— **परमाण्विति**। अभ्युपगममेव साधयति— **अणुत्वेति**। इतश्च कतिपयगुणानामेवारम्भकत्वमित्याह— **यदापीति**। द्व्यणुकेऽधिकरणे, द्विशब्दस्य भावप्रधानत्वाद् द्वे द्वित्वे, ते स्वाश्रयाणां चतुर्णां द्व्यणुकानां चतुरणुकारम्भकत्वात् तदारम्भके विवक्ष्येते। न हि द्वित्वद्वयं हित्वा तदाधाराणां द्व्यणुकानामारम्भकत्वम्। अथवाऽणुकमिति द्व्यणुकमुक्तं ते द्वित्वावच्छिन्ने यदा द्वित्वसंख्ययाऽवच्छिद्येते तदा द्वौ घटावितिवद् द्वे द्व्यणुके द्व्यणुकचतुष्टयं संपद्यते। एवं चतुर्णां द्व्यणुकानां चतुरणुकारम्भकत्वे स्थिते तद्गतानां गुणानां तुल्यजातीयारम्भकतेत्यर्थः। सर्वगुणानामनारम्भकत्वे हेत्वन्तरमाह— **अणुत्वेति**। व्यवस्थितां वैशेषिकप्रक्रियां प्रदर्श्याव्यवस्थितां दर्शयति— **यदापीति**। कारणगुणानां केषांचिदारम्भकत्वं न सर्वेषामिति सर्वेषां तुल्यमित्याह— **तदापीति**।

---

१. 'न दृश्येत' इति पाठः स्यात्।

**वा परमाणुः कार्यमारभते तदाऽपि समानैषा योजना। तदेवं यथा परमाणोः परिमण्डलात् सतोऽणु ह्रस्वं च द्व्यणुकं जायते, महद्दीर्घं च त्र्यणुकादि, न परिमण्डलम्, यथा वा द्व्यणुकादणोर्ह्रस्वाच्च सतो महद्दीर्घं च त्र्यणुकं जायते, नाणु नो ह्रस्वम्, एवं चेतनाद् ब्रह्मणोऽचेतनं जगज्जनिष्यत इत्यभ्युपगमे किं तव च्छिन्नम्।**

**अथ मन्यसे– विरोधिना परिमाणान्तरेणाक्रान्तं कार्यद्रव्यं द्व्यणुकादीत्यतो नारम्भकाणि कारणगतानि पारिमाण्डल्यादीनीत्यभ्युपगच्छामि, न तु चेतनाविरोधिना गुणान्तरेण जगत आक्रान्तत्वमस्ति, येन कारणगता चेतना कार्ये चेतनान्तरं नारभेत। न ह्यचेतना नाम चेतनाविरोधी कश्चिद् गुणोऽस्ति, चेतनाप्रतिषेधमात्रत्वात्। तस्मात् पारिमाण्डल्यादिवैषम्यात् प्राप्नोति चेतनाया आरम्भकत्वमिति। मैवं मंस्थाः। यथा कारणे विद्यमानानामपि**

### *प्रकटार्थविवरणम्*

द्रव्यमारभेरन्, [१]अनन्तावयवित्वे सति स्पर्शवत्त्वात्, तन्तुवत्। न च तेषामेवान्त्यकार्यपर्यन्तमारम्भकत्वप्रसङ्गः, द्व्यणुकेष्वपि समानत्वात्; त्र्यणुकं साक्षाद्बहुपरमाण्वारब्धं न भवति, कार्यद्रव्यत्वात्, पटवदित्यस्य विपक्षे बाधकाभावेनाप्रयोजकत्वात्। तस्माद् भाष्यान्तरेण बहूनां परमाणूनामारम्भकत्वप्रदर्शनं न [२]चातुर्यमावहति। **एषा योजनेति**। कारणगतमपि पारिमाण्डल्यादि कार्ये समानजातीयानारम्भकम्। उक्तं संक्षेपतो निगमयति— **तदेवमित्यादिना**।।

दृष्टान्तवैषम्यमाशङ्कते— **अथ मन्यस इति**। विवक्षितेंऽशे दृष्टान्तो घटत इत्याह— **मैवं मंस्था इति**। अथासति विरोधि-संनिपाते कारणगुणः समानजातीयं गुणान्तरमारभते, न सति विरोधिनि; न तु स्वभावादेवानारम्भकत्वं पारिमाण्डल्यादीनामित्याशङ्क्याह—

### *भाष्यभावप्रकाशिका*

**इति**। प्रक्रियामुक्त्वा सूत्रं योजयन् व्यभिचारमाह— **तदेवं यथेति**। अव्यवस्थितप्रक्रियामेवाश्रित्याह— **महद्दीर्घं च त्र्यणुकमिति**। नाणु जायते, नो ह्रस्वं जायत इति योजना। अत्र 'महद्दीर्घवद्वे'ति वाशब्दोऽनुक्ताणुह्रस्वकार्यसमुच्चयार्थ इति द्रष्टव्यम्।

इहापि तत् समानमिति, अत आह— **न तु चेतनाविरोधिनेति**। ननु चेतनाविरोधिन्यचेतनाऽस्ति। अतोऽनारम्भिका सेति, अत आह— **न ह्यचेतना नामेति**। परिहरति— **मैवमिति**। कारणगता गुणा न कार्ये समानजातीयगुणान्तरमारभन्त इत्येतावतैव व्यभिचारसिद्धौ न तद्धेत्वनुसरणेन कृत्यमित्यर्थः। अपि च विद्यमानमेव परिमाणान्तरमाक्रामति, उत्पत्तेश्च प्राक् परिमाणान्तरमसदिति कथमाक्रामेत्? न च तत्कारणमाक्रामति; पारिमाण्डल्यस्यापि समानजातीयकारणस्याक्रमणहेतोर्भावेन समानबलतयोभयकार्यानुत्पाद-

### *न्यायनिर्णयः*

व्यवस्थितामव्यवस्थितां च परप्रक्रियामुक्त्वा सूत्रं व्याकुर्वन् व्यभिचारमाह— **तदेवमिति**। तत् तत्र तस्यां प्रक्रियायाम् एवमुक्तप्रकारेणेति यावत्। अव्यवस्थितप्रक्रियामाश्रित्योक्तम्— **महदित्यादि**। वाशब्दोऽनुक्ताणुह्रस्वकार्यसमुच्चयार्थ इति व्याचष्टे— **यथा वेति**। नाणु जायते, नापि ह्रस्वं जायते त्र्यणुकादिति[३] योजना। पारिमाण्डल्यादीनां तुल्यजातीयानारम्भकत्वे सिद्धे दार्ष्टान्तिकमाह— **एवमिति**।

दृष्टान्तवैषम्यं चोदयति— **अथेति**। जगत्यपि तुल्यं विरोधिगुणाक्रान्तत्वमित्याशङ्क्याह— **न त्विति**। अचेतनायाश्चेतनाविरोधिन्या जगति भावाच्चेतनायाः सजातीयानारम्भकतेत्याशङ्क्याह— **न हीति**। विशेषगुणत्वाच्चेतनायाः साधारण्यात् पारिमाण्डल्यादेर्वैषम्यं मत्वा तत्फलमाह— **तस्मादिति**। ज्ञानवानस्मीति प्रत्ययस्य बुद्धिवृत्त्युपधानाधीनत्वाच्चेतनस्य स्वरूपत्वेन गुणत्वासिद्धौ विशेषगुणत्वस्य दूरापेतत्वं मत्वा विवक्षितांशे दृष्टान्तसिद्धिरित्याह— **मैवमिति**। न स्वभावादेव पारिमाण्डल्यादीनामनारम्भकत्वम्, किंतु

---

१. अन्त्यावयविभिन्नत्वे सतीत्यर्थः। घटादौ व्यभिचारवारणाय विशेषणमिदम्। २. 'अचातुर्यम्' इति पाठः स्यात्।
३. 'त्र्यणुकम्' 'त्र्यणुकादि' इति वा स्यात्।

**पारिमाण्डल्यादीनामनारम्भकत्वमेवं चैतन्यस्यापीत्यस्यांशस्य समानत्वात्। न च परिमाणान्तराक्रान्तत्वं पारिमाण्डल्यादीनामनारम्भकत्वे कारणम्, प्राक्परिमाणान्तरारम्भात् पारिमाण्डल्यादीनामारम्भकत्वोपपत्तेः। आरब्धमपि कार्यद्रव्यं प्राग् गुणारम्भात् क्षणमात्रमगुणं तिष्ठतीत्यभ्युपगमात्। न च परिमाणान्तरारम्भे व्यग्राणि पारिमाण्डल्यादीनीत्यतः स्वसमानजातीयं परिमाणान्तरं नारभन्ते, परिमाणान्तरस्यान्यहेतुत्वाभ्युपगमात्। 'कारणबहुत्वात्कारणमहत्त्वात्प्रचयविशेषाच्च महत्' (वै.सू. ७।१।९) 'तद्विपरीतमणु' (वै.सू. ७।१।१०)**

### *प्रकटार्थविवरणम्*

**न च परिमाणान्तराक्रान्तत्वमिति**। उत्पन्नं हि परिमाणान्तरं विरोधि भवति; तदुत्पत्तेः प्राक् किमिति नारभते पारिमाण्डल्यादि स्वकार्यम्? ततः स्वभावादेवानारम्भकत्वमिति भावः। ननु जायमानं द्रव्यं परिमाणवदेव जायते; अतोऽवसराभावादनारम्भकत्वमित्याशङ्क्याह— **आरब्धमपीति**। परिमाणादिगुणारम्भे कार्यद्रव्यस्य समवायिकारणत्वादवश्यं पूर्वभावित्वं वक्तव्यम्; अतः प्राग्गुणारम्भादस्त्यवसर इत्यर्थः। ननु तथापि न स्वभावेनानारम्भकत्वम्; किन्तु ह्रस्वत्वाद्यारम्भ उपक्षीणत्वादित्याशङ्क्याह— **न च परिमाणान्तरेति**। (न च) परिमाणान्तरस्यान्यहेतुत्वे कणभुजः सूत्राणि पठति— **कारणबहुत्वादिति**। बहुभिः द्व्यणुकैरारब्धे त्र्यणुके कारणबहुत्वान्महत्त्वं भवति; त्र्यणुकारब्धे च कारणमहत्त्वाद् भवति। द्वितूलपिण्डारब्धे[१] च तूलपिण्डे महत्त्वं प्रचयाद् भवति; सति प्रचये कार्ये महत्त्वातिशयदर्शनादित्यर्थः। **तद्विपरीतमिति**। यत्र कारणबहुत्वादि नास्ति तदणु जायते, परमाणुगता द्वित्वसङ्ख्या द्व्यणुकगताणुत्वस्यासमवायिकारणमित्यर्थः। एतेन उक्तन्यायेन द्व्यणुकत्र्यणुकादिगते ह्रस्वत्वदीर्घत्वे व्याख्याते। कारणबहुत्वादिना

### *भाष्यभावप्रकाशिका*

प्रसङ्गादित्यभिप्रेत्याह— **न च परिमाणेति**। ननु प्रागिति विशेषणमयुक्तम्; कार्योत्पत्तिकाल एव गुणस्यारम्भादित्याशङ्क्याह— **आरब्धमपीति**। ननु परिमाणान्तरारम्भे पारिमाण्डल्यादीनां व्यापृतत्वादनारम्भकत्वमिति, अत आह— **न च परिमाणान्तरेति**। तत्र हेतुमाह— **परिमाणान्तरस्यान्यहेतुत्वाभ्युपगमादिति**। कथमन्यहेतुत्वमिति? तत आह— **कारणबहुत्वादिति**। अयमर्थः— बहुभिर्द्व्यणुकैरारब्धे यन्महत्त्वमुत्पद्यते, तस्यासमवायिकारणं बहुत्वसङ्ख्या। कार्यद्रव्यं समवायिकारणम्। तथा च पञ्चाशत्पलेनायःपिण्डेनारब्धं कार्यं पञ्चाशत्पलं भवतीति। तस्य महत्त्वेऽयःपिण्डस्य प्रचयविशेषो निमित्तम्, तथा महद्भिरवयवैरारब्धे पटे यन्महत्त्वम्, तस्य कारणमहत्त्वं निमित्तमिति त्रिभ्यः कारणेभ्यो महत्त्वमुत्पद्यत इति। **तद्विपरीतमणु**। तत्र यत्कारणबहुत्वादिभ्यो

### *न्यायनिर्णयः*

विरोधिगुणसंनिपातात्। चैतन्यस्य तु तदभावादारम्भकतेत्याशङ्क्याह— **न चेति**। उत्पन्नं परिमाणान्तरं विरोधि भवतीति किमिति प्रागेव तदुत्पत्तेः स्वकार्यं पारिमाण्डल्यादि नारभते? ततः स्वभावादेव तस्यानारम्भकतेति भावः। जायमानं द्रव्यं परिमाणवदेव जायते तेनानवकाशादनारम्भकत्वं पारिमाण्डल्यादेरित्याशङ्क्याह— **आरब्धमिति**। परिमाणादिगुणारम्भे कार्यद्रव्यस्य समवायित्वेन पूर्वभावित्वध्रौव्ये प्रागेव तदारम्भात् पारिमाण्डल्यादेरारम्भकत्वावकाशोऽस्तीत्यर्थः। अणुत्वाद्यारम्भे व्यापृतत्वात् पारिमाण्डल्यादेः सजातीयानारम्भकतेत्याशङ्क्याह— **न चेति**। तत्र हेतुः— **परिमाणान्तरस्येति**। कथमन्यहेतुत्वं, तत्राप्तोक्तिमुदाहरति— **कारणेति**। बहुभिर्द्व्यणुकैरारब्धे त्र्यणुकादौ यन्महत्त्वं तस्य द्व्यणुकगतं बहुत्वमसमवायिकारणं, कार्यद्रव्यं समवायिकारणम्। यत्पुनरयःपिण्डेन पञ्चाशत्पलेनारब्धं कार्यं तावत्पलमुपलभ्यते, तन्महत्त्वे पिण्डस्य प्रचयः संयोगविशेषो हेतुः। महद्भिरवयवैरारब्धे पटे यन्महत्त्वं तस्य कारणमहत्त्वं हेतुरिति त्रिभ्यः कारणेभ्यो महत्त्वमित्यर्थः। यत्कारणबहुत्वादिभ्यो महत्त्वं त्र्यणुकादौ जातं ततो विपरीतं द्व्यणुकगतमणुत्वमीश्वरापेक्षाबुद्धिजन्यपरमाणुनिष्ठद्वित्वासमवायिकारणादुत्पद्यते, तदाह— **तदिति**। द्वित्वमहत्त्वबहुत्वप्रचयेभ्यो यथासंभवं

---

१. द्वाभ्यां तूलपिण्डाभ्यामारब्धे तूलपिण्डे यन्महत्त्वं तत्र कारणबहुत्वारब्धम्, कारणे तदभावात्। महत्त्वं तु तत्र सदप्यकारणम्। समानपरिमाणाभ्यां तूलपिण्डाभ्यां निबिडसंयोगेनारब्धकार्यपेक्षया महत्त्वातिशयोपलम्भात्। अतः प्रचय एव तत्र कारणमिति भावः।

**'एतेन दीर्घत्वह्रस्वत्वे व्याख्याते' (वै.सू. ७।१।१७) इति हि काणभुजानि सूत्राणि। न च संनिधानविशेषात् कुतश्चित् कारणबहुत्वादीन्येवारभन्ते, न पारिमाण्डल्यादीनीत्युच्येत; द्रव्यान्तरे गुणान्तरे वाऽऽरभ्यमाणे सर्वेषामेव कारणगुणानां स्वाश्रयसमवायाविशेषात्। तस्मात् स्वभावादेव पारिमाण्डल्यादीनामनारम्भकत्वम्, तथा चेतनाया अपीति द्रष्टव्यम्।**

**संयोगाच्च द्रव्यादीनां विलक्षणानामुत्पत्तिदर्शनात् समानजातीयोत्पत्तिव्यभिचारः। द्रव्ये प्रकृते**

### *प्रकटार्थविवरणम्*

त्र्यणुकादौ दीर्घता; वैपरीत्येन द्व्यणुके ह्रस्वत्वम्, न तु पारिमाण्डल्यादिनेति भावः। ननु पारिमाण्डल्यादीनां द्रव्यमात्रगतत्वेन व्यवहितत्वम्, द्वित्वादीनां कार्यानारम्भात् [कार्यारम्भात्] पूर्वक्षण एव चैकैकगुणालम्बनाया अपेक्षाबुद्धेरैश्वर्य[1]समुत्पन्नानां कार्यसन्निधानमस्तीति तेषामेवारम्भकत्वमित्याशङ्क्याह— **न च सन्निधानविशेषादिति**। अयमाशयः—स्वाश्रयकार्यारम्भकं समवायिकारणम्, कार्यप्रत्यासन्नं [अ]समवायिकारणम्; प्रत्यासत्तिरपि द्विधा— कार्यैकार्थसमवायः, कार्यकारणैकार्थसमवायश्चेति; यथा तन्तुसंयोगः स्वकार्येण पटेन सह तन्तुष्वेव समवेतः, यथा तन्तुगता रूपादयः स्वयमारभ्यमाणरूपान्तरस्य समवायिकारणेन पटेन सह तन्तुष्वेव समवेताः। एवं द्विधा च प्रत्यासत्तिः पारिमाण्डल्यादीनां चाविशिष्टा; कालाल्पत्वबहुत्वे त्वप्रयोजके इति। द्वित्वादिकं च न बुद्धिजम्, संख्यात्वात्, एकत्ववत्; विपक्षे च गौरवम्; न च बाह्यवस्तुनो ज्ञानजत्वे दृष्टान्तः। यस्मादनारम्भकत्वे नान्यत् कारणमस्ति तस्मादित्युपसंहारः।।

उदाहरणान्तरमाह— **संयोगाच्चेति**। उदाहरणं विघटयति— **द्रव्ये प्रकृत इति**। चेतनं ब्रह्म द्रव्यं जगतोऽचेतनस्य

### *भाष्यभावप्रकाशिका*

महत्परिमाणमुत्पद्यते, तद्विपरीतमणुपरिमाणमीश्वरापेक्षाबुद्धिजन्यपरमाणुगतद्वित्वसङ्ख्याऽसमवायिकारणादुत्पद्यत इत्यर्थः। **एतेन दीर्घत्वह्रस्वत्वे व्याख्याते इति**। एतेन समस्तेन प्रकारेण द्वित्व-बहुत्वमहत्त्वप्रचयेभ्यो यथासंभवं ह्रस्वत्व-दीर्घत्वयोरुत्पत्तिरित्यर्थः। अथापि स्यात्— पारिमाण्डल्यादीनि परिमाणानि संयोगादिव्यवहितानि व्यवस्थितपरिमाणकारणद्रव्यम्, अव्यवस्थिताः[2] प्रचयादयः कार्यद्रव्यस्य संनिहिताः, ततस्तेषामेव संनिहितत्वात्, परिमाणान्तरोत्पादकत्वमित्याशङ्क्याह— **न च संनिधानेति**। अयं भावः— गुणो हि गुणिनि समवेतो व्याप्यः, अव्याप्यो वा। सर्वथा कारणसमवेतत्वं नाम गुणानां कार्यारम्भे निमित्तम्। न च निरवयवपरमाणुगुणानां संनिधानमसंनिधानं वाऽऽरम्भोपयोगि संभवति। अतः परिशेषात् पारिमाण्डल्यादयः स्वभावादेवानारम्भका इत्याह— **तस्मात्स्वभावादिति**।

किञ्च कारणगुणाः सजातीयानामेवारम्भका इति नियमः? किं वा विपरीतमपि? आद्ये पक्षे दूषणमाह— **संयोगादिति**। शङ्कते— **द्रव्ये प्रकृत इति**। निराकरोति— **न दृष्टान्तेनेति**। न चास्माकमयमनियमो भवतामपीत्याह—

### *न्यायनिर्णयः*

ह्रस्वत्वदीर्घत्वयोरुत्पत्तिरित्याह— **एतेनेति**। समस्तेन प्रकारेणेति यावत्। ननु पारिमाण्डल्यादीनि संयोगादिभिर्व्यवहितानि कार्यद्रव्ये समानजातीयानारम्भकाणि। प्रचयादयस्तु कारणस्थास्तन्निष्ठकार्यद्रव्यस्य संनिहितत्वात् तत्र महत्त्वाद्यारम्भकाः, ततो न स्वभावादनारम्भकत्वं पारिमाण्डल्यादीनामिति, तत्राह— **न चेति**। गुणो गुणिनि समवेतो व्याप्योऽव्याप्यो वा सर्वथा कारणस्थत्वं गुणानां कार्यारम्भे निमित्तम्। न च निरवयवाणुगुणानां संनिधिरसंनिधिर्वाऽऽरम्भोपयोगी॰ संभवतीति भावः। परिशेषसिद्धमर्थमाह— **तस्मादिति**। दृष्टान्तमुपसंहृत्य दार्ष्टान्तिकमुपसंहरति— **तथेति**।

किंच कारणगुणाः सजातीयानामेवारम्भकाः, किंवा विजातीयानामपीति विकल्प्याद्यं प्रत्याह— **संयोगाच्चेति**। चेतनं ब्रह्म

---

१. 'ऐश्वर्याः' इति अपेक्षाबुद्धेर्विशेषणं स्यादिति भाति। २. 'कारणद्रव्यस्थिताः' इति पाठः स्यादिति न्यायनिर्णयदर्शनेनोह्यते।

**गुणोदाहरणमयुक्तमिति चेत् ? न; दृष्टान्तेन विलक्षणारम्भमात्रस्य विवक्षितत्वात्। न च द्रव्यस्य द्रव्यमेवोदाहर्तव्यं, गुणस्य वा गुण एवेति कश्चिन्नियमे हेतुरस्ति। सूत्रकारोऽपि भवतां द्रव्यस्य गुणमुदाजहार– 'प्रत्यक्षाप्रत्यक्षाणामप्रत्यक्षत्वात्संयोगस्य पञ्चात्मकं न विद्यते' (वै.सू. ४।२।२) इति। यथा प्रत्यक्षाप्रत्यक्षयोर्भूम्याकाशयोः समवयन् संयोगोऽप्रत्यक्ष एवं प्रत्यक्षाप्रत्यक्षेषु पञ्चसु भूतेषु समवयच्छरीरमप्रत्यक्षं स्यात्; प्रत्यक्षं हि शरीरम्; तस्मान्न पाञ्चभौतिकमिति। एतदुक्तं भवति– गुणश्च संयोगो द्रव्यं शरीरम्। 'दृश्यते तु' (ब्र.सू. २।१।६) इति चात्रापि विलक्षणोत्पत्तिः प्रपञ्चिता। नन्वेवं सति तेनैवैतद् गतम्। नेति ब्रूमः। तत् सांख्यं प्रत्युक्तम्, एतत्तु वैशेषिकं प्रति। नन्वतिदेशोऽपि समानन्यायतया कृतः– 'एतेन शिष्टापरिग्रहा अपि व्याख्याताः' (ब्र.सू. २।१।१२) इति। सत्यमेतत्। तस्यैव त्वयं वैशेषिकपरीक्षारम्भे तत्प्रक्रियानुगतेन निदर्शनेन प्रपञ्चः कृतः।।११।।**

**इति द्वितीयं महद्दीर्घाधिकरणम्।।**

### *प्रकटार्थविवरणम्*

समवायिकारणं न भवतीति प्रकृते चेतनमप्यचेतनद्रव्यस्योपादानं दृष्टमित्युदाहरणमुचितम्, संयोगाख्यगुणोदाहरणं त्वयुक्तमित्यर्थः। परिहरति— **न दृष्टान्तेनेति**। अद्रव्यादपि संयोगाद् यथा द्रव्यं जायते, तथा चेतनादप्यचेतनं भविष्यतीत्येतावन्मात्रं विवक्षितमित्यर्थः। सर्वथा साम्ये च न प्रमाणमस्तीत्याह— **न च द्रव्यस्येति**। कणादस्याप्यत्र संमतिरस्तीत्याह— **सूत्रकारोऽपीति**। सूत्रार्थमाह— **यथेति**। किञ्च विलक्षणद्रव्यस्य विलक्षणद्रव्यादुत्पत्तिरित्यपि प्राक् प्रपञ्चितमित्याह— **दृश्यते[त्विति] चेति**। पौनरुक्त्यमाशङ्क्य परिहरति— **नन्वेवमित्यादिना**।।इति द्वितीयं महद्दीर्घाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**सूत्रकारोऽपीति**। सूत्रं व्याचष्टे— **यथा [प्रत्यक्षा]प्रत्यक्षयो[रि]ति**।। अत्र च प्रत्यक्षाप्रत्यक्षपदाभ्यां रूपवदरूपद्रव्ये गृह्येते। अन्यथा द्व्यणुकसहितत्र्यणुकाद्यारब्धानामप्रत्यक्षत्वप्रसङ्गादिति केचित्।

ननु कारणगतविशेषगुणानां कार्ये समानजातीयगुणान्तरारम्भकत्वं ब्रूमः, न गुणमात्रस्येत्याशङ्क्याह— **दृश्यते त्विति**।। अनेन द्वितीयानुमानदूषणमपि कथितमिति द्रष्टव्यम्।।११।। इति द्वितीयं महद्दीर्घाधिकरणम्।।

### *न्यायनिर्णयः*

द्रव्यं जगतोऽचेतनस्य न समवायिकारणमिति प्रकृते चेतनमप्यचेतनोपादानं दृष्टमिति दृष्टान्ते वक्तव्ये संयोगगुणोदाहरणमयुक्तमिति शङ्कते— **द्रव्य इति**। अद्रव्यादपि संयोगाद् यथा द्रव्यं जायते तथा चेतनादचेतनं स्यादित्येतावन्मात्रमिष्टमित्याह— **नेति**। दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साम्ये नास्ति मानमित्याह— **न चेति**। न केवलमयमस्माकमनियमो भवतामपीत्याह— **सूत्रेति**। सूत्रं व्याचष्टे— **यथेति**। कथमिदं सूत्रं नियमभङ्गोपयोगीत्याशङ्क्याह— **एतदिति**। कारणस्थविशेषगुणानां कार्ये तुल्यारम्भकत्वम् न गुणमात्रस्येत्याशङ्क्याह— **दृश्यते त्विति**। तन्तुगतनीलपीतादिरूपाणां विशेषगुणानामपि तत्कार्ये पटे विजातीयचित्ररूपारम्भकत्वाभ्युपगमान्नायमपि नियम इति भावः। तर्हि गतार्थत्वादिदमधिकरणमनारभ्यमिति शङ्कते— **नन्विति**। निराकार्यभेदान्न पौनरुक्त्यमित्याह— **नेतीति**। तथापि शिष्टापरिग्रहाधिकरणेन पुनरुक्तिरिति शङ्कते— **नन्विति**। तत्र कारणं कार्यादूनपरिमाणमिति नियमो निरस्तः, अत्र तु कारणविशेषगुणस्य कार्ये तुल्यारम्भनियमो निरस्यत इति सत्यपि पुनरुक्तिपरिहारे रीतिसाम्यकृतं जामित्वमुपेत्याह— **सत्यमिति**। **तस्यैवेति**। अतिदेशस्येति यावत्। वैशेषिकपरीक्षारम्भस्तदीयराद्धान्तस्य भ्रान्तिमूलत्वसाधनप्रक्रमः। तत्प्रक्रिया वैशेषिकप्रक्रिया पूर्वोक्ता तस्यामनुगतं निदर्शनं परकीयहेतुव्यभिचारोदाहरणं, तेनेत्यर्थः।।११।।इति द्वितीयं महद्दीर्घाधिकरणम्।।

### ३।। परमाणुजगदकारणत्वाधिकरणम्।।सू. १२-१७।।

## उभयथाऽपि न कर्मातस्तदभावः।।१२।।

**इदानीं परमाणुकारणवादं निराकरोति। स च वाद इत्थं समुत्तिष्ठति[१] – पटादीनि हि लोके सावयवानि**

### *शारीरकन्यायसंग्रहः*

**उभयथापि न कर्मातस्तदभावः।।१२।। समवायाभ्युपगमाच्च साम्यादनवस्थितेः।।१३।। नित्यमेव च भावात्।।१४।। रूपादिमत्त्वाच्च विपर्ययो दर्शनात्।।१५।। उभयथा च दोषात् ।।१६।। अपरिग्रहाच्चात्यन्तमनपेक्षा।।१७।।**

द्रव्यगुणकर्मसामान्यविशेषसमवायाः षट् पदार्थाः। तत्र समवायिकारणं द्रव्यम्। यदाश्रितत्वेन कार्यं प्रतीयते तत् समवायिकारणम्। अयोगान्ययोगव्यवच्छेदेनैकानेकद्रव्यवृत्तिः गुणः। एकद्रव्यवर्तित्वे सति संयोगविभागहेतुः कर्म। अनेकत्र कार्त्स्न्येन वर्तमानं सामान्यम्। अवान्तरैकजातीयनित्यद्रव्यभेदका विशेषाः। अयुतसिद्धानामाधाराधेयभूतानामिहप्रत्ययहेतुः समवायः। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणि। नित्यानि पृथिव्यादिषु सावयवांशं वर्जयित्वेति। शब्दस्पर्शरूपरसगन्धद्रवत्वस्नेहाः सप्त महाभूतविशेषगुणाः। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा नवैवात्मविशेषगुणाः। संस्कारश्च भावनावेगस्थितस्थापकलक्षणः स्मृत्यभिघातकटसंवेष्टनादिहेतुस्त्रिविधः। संख्यापरिमाणसंयोगविभागगुरुत्वपरत्वापरत्वपृथक्त्वान्यष्टौ गुणाः साधारणा इति चतुर्विंशतिर्गुणाः। उत्क्षेपणम् अवक्षेपणम् आकुञ्चनं प्रसारणं गमनमिति पञ्चविधं कर्म। सामान्यं द्विविधं परमपरं च; परं सत्ता, अपरं च गोत्वादि। आत्ममनःपार्थिवाप्यतैजसवायवीयाणुषु षट्स्ववान्तरजातिभिन्नेषु प्रत्येकमेकजातीयानामितरेतरस्वान्तर्गतभेदहेतवोऽनन्ता विशेषाः। एक एव सर्वत्र समवायः। आकाशदिक्कालाश्च परोपाधिभेदाद्भिन्ना इव भान्ति। ते च द्रव्यादयोऽत्यन्तभिन्नाः षट् पदार्थाः, गुणादयश्च सर्वे तत्र समवयन्तीति वैशेषिकाणां प्रक्रिया। तत्र परमाणुसमवायव्यतिरिक्ता लोकवेदप्रसिद्धाः।।

इदानीं तदुभयं निराकरोति। तत्र परमाणुसमर्पकमनुमानम्— सर्वं कार्यद्रव्यं स्वपरिमाणादणुतरपरिमाणसंयोगसचिवस्वसमानजातीयानेकद्रव्यारब्धं भवितुमर्हति, सावयवत्वात्; यत् सावयवं तत् स्वपरिमाणादणुतरपरिमाणसंयोगसचिवस्वसमानजातीयानेकद्रव्यारब्धं दृष्टम्, यथा तन्त्वारब्धः पट इति। एवं यत्किञ्चित् सावयवं द्व्यणुकपर्यन्तम्, तत् सर्वमेवंविधद्रव्यारब्धमित्यत्यन्ताणुपरिमाणा निरवयवाः संयोगसचिवाः कार्येण पार्थिवत्वादिना समानजातीया नित्या बहवश्च परमाणवः सावयवद्रव्यारम्भकाः सिद्धाः। तत्र साध्यविशेषणानां सर्वेषां प्रत्यनुमानविरुद्धत्वमनैकान्तिकत्वं च सूत्रैः प्रदर्श्यते। तत्र न संयोगसचिवाः परमाणवः, स्वातन्त्र्येऽसति तद्धेतुकर्मशून्यत्वात्, आत्माकाशवत्; कर्मशून्याः परमाणवः, तद्धेतुप्रयत्नाभिघातादिशून्यत्वात्, आत्माकाशवत्; तथा परमाणवो द्रव्यानारम्भकाः, निरवयवत्वेन संयोगप्रचयहीनत्वात्, आत्माकाशवत्; न परमाणवो नित्याः, रूपादिमत्त्वात्, घटादिवत्; तथा परमाणवो न निरवयवाः, दिग्भेदव्यवस्थापकत्वात्, घटवत्; तथा न परपरिकल्पिताः परमाणवः सर्वे तुल्यपरिमाणाः, रूपादिगुणोपचयापचयवत्त्वात् पृथिव्यादिवत्; अनेकद्रव्यारभ्यत्वं घृतकाठिन्यादिनाऽनैकान्तिकम्; स्वपरिमाणादणुतरपरिमाणारभ्यत्वं च दीर्घविस्तीर्णैर्दुकूलैः क्रियमाणे रज्जुकार्येऽनैकान्तिकमित्यनुमानस्य कालात्ययापदिष्टत्वमनैकान्तिकत्वं च सूत्रैः प्रदर्शितम्। तादात्म्यस्यासंबन्धित्वान्नानवस्था, समवाये त्वनवस्था दर्शितेति।।

### *प्रकटार्थविवरणम्*

**उभयथाऽपि न कर्मातस्तदभावः।।** पूर्वं वैशेषिकाणां गुणारम्भानुमानविरोधं प्रासङ्गिकं परिहृत्येदानीमर्थात् तत्समयविरोधं परिहर्तुमुपक्रमत इत्याह— **इदानीमिति**। सप्रमाणं तत्समयं दर्शयति— **स च वाद इति**। विमतं सावयवसंयोगसहकृतद्रव्या-

### *न्यायनिर्णयः*

वैशेषिकगुणारम्भानुमानेन समन्वयस्य प्रासङ्गिकविरोधं परिहृत्य तन्मतविरोधं परिहर्तुमारभते— **उभयथेति**। नास्य प्रासङ्गिकानन्तराधिकरणेन संगतिरिति मन्वानः प्रधानं चेतनानधिष्ठितं न चेत् कारणम् तर्हि परमाणवस्तदधिष्ठिता भवन्तु तथेति व्यवहितेन संगतिं गृहीत्वा तात्पर्यमाह— **इदानीमिति**। वैशेषिकराद्धान्तस्य भ्रान्तिमूलत्वोक्त्या तदीययुक्तिविरोधं निराकृत्य समन्वयदृढीकरणात् पादादिसंगतिः। पूर्वपक्षे प्रामाणिकपरकीयराद्धान्तविरोधे समन्वयस्यासिद्धिः, सिद्धान्ते तत्प्रामाणिकत्वासिद्ध्या भ्रान्तेन तेन विरोधाभावे तत्सिद्धिरिति फलम्। परमाणुभिर्द्व्यणुकादिक्रमेण चेतनाधिष्ठितैरारब्धं जगदिति वैशेषिकराद्धान्तो मानमूलो

१. 'समुत्तिष्टते' इति पा.।

**द्रव्याणि [1]स्वानुगतैरेव संयोगसचिवैस्तन्त्वादिभिर्द्रव्यैरारभ्यमाणानि दृष्टानि। तत्सामान्येन यावत्किंचित् सावयवम्, तत् सर्वं स्वानुगतैरेव संयोगसचिवैस्तैस्तैर्द्रव्यैरारब्धमिति गम्यते। स चायमवयवावयविविभागो यतो निवर्तते सोऽपकर्षपर्यन्तगतः परमाणुः। सर्वं चेदं जगद् गिरिसमुद्रादिकं सावयवम्, सावयवत्वाच्चाद्यन्तवत्। न चाकारणेन कार्येण भवितव्यमित्यतः परमाणवो जगतः कारणमिति कणभुगभिप्रायः। तानीमानि चत्वारि भूतानि भूम्युदकतेजःपवनाख्यानि सावयवान्युपलभ्य चतुर्विधाः परमाणवः परिकल्प्यन्ते। तेषां चापकर्षपर्यन्तगतत्वेन**

### *प्रकटार्थविवरणम्*

रब्धम्, सावयवत्वात्, पटादिवदित्यर्थः। कथमेतावता निरवयवपरमाणुसिद्धिरित्याशङ्क्याह— **स चायमिति**। यावत्सावयवमनुमानप्रवृत्तेः यो निरवयवः परिशिष्यते सोऽत्यन्ताल्पतामापन्नः परमाणुर्नित्यः, निरवयवद्रव्यत्वात्, आत्मवदित्यर्थः। ननु जगत आद्यन्तशून्यत्वात् कुतः कारणाकाङ्क्षा? कुतस्तरां परमाणवो जगत्कारणम्? इत्याशङ्क्याह— **सर्वं चेदमिति**। विमतमाद्यन्तवत् सावयवत्वात् पटवत्; तथा च कारणपूर्वकं कार्यत्वात् तद्वत्। तच्च कारणं किमित्याकाङ्क्षायां सावयवस्य स्वपरिमाणादल्पपरिमाणारब्धत्व-दर्शन[नात्] परमाणवो मूलकारणमिति कणादोऽभिप्रेतवानित्यर्थः। ते च परमाणवः कतिविधा इत्याकाङ्क्षायामाह— **तानीमानीति**। एवं परमाणुसंभवं प्रसाध्य सर्गप्रलयविभागमाह— **तेषां चेत्यादिना**।। तस्मात् परमाणूनां जगत्कारणत्वस्य प्रामाणिकत्वात्

### *भाष्यभावप्रकाशिका*

**उभयथाऽपि न कर्मातस्तदभावः**।।१२।। इदानीमधिकरणतात्पर्यं दर्शयति— **इदानीमिति**। निराकार्यस्वरूपमुपपत्तिसहितमाह— **स च वाद इति**। सामान्यतोदृष्टानुमानं दर्शयितुं व्याप्तिमाह— **पटादीनीति**। अनुमानं दर्शयति— **तत्सामान्येनेति**। अयं प्रयोगः— सर्वं कार्यद्रव्यम्, स्वपरिमाणादणुतरपरिमाण-संयोगसचिव-स्वसमानजातीयानेकद्रव्यारब्धम्, कार्यद्रव्यत्वात्; यद्यत् कार्यद्रव्यम्, तत्तदेवंविधं दृष्टम्; यथा तन्त्वारब्धः पट इति। **स्वानुगतैरिति**।। स्वसमवायप्रतियोगिभिरित्यर्थः। कथं परमाणुसिद्धिरिति? अत आह— **स चायमिति**। यत्किञ्चत्सावयवं द्व्यणुकपर्यन्तम्, तत्सर्वमेवंविधद्रव्यारब्धमित्यणुपरिमाणा निरवयवाः संयोगसचिवाः कार्येण पार्थिवत्वादिना समानजातीया नित्या बहवश्च परमाणवः सावयवानामारम्भकाः सिद्धा इत्यर्थः। ननु (अ)कार्यत्वम-सिद्धमित्याशङ्क्याह— **सर्वं चेदमिति**। ननु भवतु कार्यत्वम्, तथापि स्वभावादेवोत्पद्यत इति, अत्राह— **न चाकारणेनेति**। ते च कतिविधा इत्यपेक्षायामाह— **तानीमानीति**। चत्वारीति अवयविभूताभिप्रायम्; पञ्चमस्य भूतस्यावयवाभावात्। ननु मूर्तिमत्त्वात् तेऽप्यनित्या एवेत्याशङ्क्याह— **तेषां चेति**। कारणविभागात् कारणविनाशाद्वा सर्वस्य द्रव्यस्य विनाशः, तदुभयाभावान्नित्यत्वमित्यर्थः।

### *न्यायनिर्णयः*

भ्रान्तिमूलो वेति विप्रतिपत्तेः संशये पूर्वपक्षमाह— **स चेति**। सामान्यतो दृष्टं वक्तुं व्याप्तिमाह— **पटादीनीति**। स्वानुगतैः स्वसमवायप्रतियोगिभिरित्यर्थः। मिथोऽसंयुक्ततन्त्वादीनां न पटाद्यारम्भकत्वमसमवाय्यभावादिति वक्तुं संयोगसचिवैरित्युक्तम्। यत् कार्यद्रव्यं तद् विशिष्टद्रव्यारब्धं यथा पटादीति व्याप्तिमुक्त्वाऽनुमानमाह— **तदिति**। तैः पटादिभिः सामान्यं कार्यद्रव्यत्वं तेनेति। यावत् किंचित् सावयवद्रव्यमिति क्षित्यादिचतुष्टयमुक्तम्। स्वानुगतैरित्यादि पूर्ववत्। तैस्तैर्द्रव्यैरिति वस्तुतश्चतुर्विधपरमाणूक्तिः। विमतं स्वपरिमाणादणुतरपरिमाणसंयोगसचिवसमानजातीयानेकद्रव्यारब्धं, कार्यद्रव्यत्वाद्, घटादिवदित्यर्थः। कथमेतावता परमाणुसिद्धिः, तत्राह— **स चेति**। यत्किंचित्सावयवं द्व्यणुकपर्यन्तं तत्सर्वमेवमारब्धमित्यनुमानप्रवृत्तेरणुपरिमाणा निरवयवाः कार्यद्रव्येण पार्थिवत्वादिना तुल्या नित्या बहवश्चाणवः सावयवानामारम्भकाः सिध्यन्तीत्यर्थः। अनाद्यन्तत्वाज्जगतो हेत्वाकाङ्क्षाऽभावान्न परमाणवस्तत्कारणमिति हेत्वसिद्धिमाशङ्क्याह— **सर्वं चेति**। विमतमाद्यन्तवत्, सावयवत्वात्, पटवदित्यर्थः। कार्यत्वेऽपि स्वभावादेवोत्पत्तेर्न कारणाकाङ्क्षेत्याशङ्क्य विमतं सकारणकं, कार्यत्वात्, संमतवदित्याह— **न चेति**। तच्च किमित्याकाङ्क्षायां सावयवस्य [2]स्वतोऽल्पपरिमाणारभ्यत्वदृष्टेरणवो मूलकारणमिति काणादोऽभिप्रेतवानित्याह— **इत्यत इति**। ते कतिविधा इति, तत्राह— **तानीति**। चत्वारीत्यवयविभूताभिप्रायम्, पञ्चमभूतस्यावयवाभावात्। तेऽपि मूर्तत्वादनित्याः पटवदित्याशङ्क्याह— **तेषां चेति**। कारणविभागात् कारणविनाशाद्वा कार्यद्रव्यस्य

१. स्वानुगतैः = स्वसमवायवद्भिः। २. स्वतः = स्वापेक्षया।

**परतो विभागासंभवाद् विनश्यतां पृथिव्यादीनां परमाणुपर्यन्तो विभागो भवति। स प्रलयकालः। ततः सर्गकाले च वायवीयेष्वणुष्वदृष्टापेक्षं कर्मोत्पद्यते। तत् कर्म स्वाश्रयमणुमणवन्तरेण संयुनक्ति। ततो द्व्यणुकादिक्रमेण वायुरुत्पद्यते। एवमग्निः, एवमापः, एवं पृथिवी। एवमेव शरीरं सेन्द्रियमिति। एवं सर्वमिदं जगदणुभ्यः संभवति। अणुगतेभ्यश्च रूपादिभ्यो द्व्यणुकादिगतानि रूपादीनि संभवन्ति तन्तुपटन्यायेनेति काणादा मन्यन्ते।**

**तत्रेदमभिधीयते– विभागावस्थानां तावदणूनां संयोगः कर्मापेक्षोऽभ्युपगन्तव्यः, कर्मवतां तन्त्वादीनां संयोगदर्शनात्। कर्मणश्च कार्यत्वान्निमित्तं किमप्यभ्युपगन्तव्यम्। अनभ्युपगमे निमित्ताभावान्नाणुष्वाद्यं कर्म स्यात्। अभ्युपगमेऽपि यदि प्रयत्नोऽभिघातादिर्वा यथादृष्टं किमपि कर्मणो निमित्तमभ्युपगम्येत,**

### *प्रकटार्थविवरणम्*

अस्त्यर्थात् समन्वयस्य तद्विरोध इति पूर्वः पक्षः।।

सिद्धान्तमुपक्रमते— **तत्रेदमभिधीयत इति**।। यदि परमाणूनां संयोगसचिवानां जगदारम्भकत्वं प्रामाणिकं स्यात्, भवेत् तदा समन्वयस्य अर्थाद्विरोधः, न तु तदस्ति; तदा[था]हि— आदिसर्गे परमाणवो न संयोगसचिवाः, कर्मशून्यत्वाद्, आत्माकाशवत्; कर्मशून्याश्च, तद्धेतुविकलत्वात् तद्वदित्यर्थः। नन्वभ्युपगम्यत एवाद्यकर्महेतुः; ततोऽसिद्धो हेतुरित्याशङ्क्याह— **अभ्युपगमेऽपीति**। परमाणुष्वाद्यकर्मोत्पत्तौ हेत्वभ्युपगमेऽपि यथेदानीं दृष्टम्— देहचेष्टानां प्रयत्नः, तरुचलने वाय्वभिघातः,

### *भाष्यभावप्रकाशिका*

ननु एकद्रव्यावशिष्टत्वे प्रलयो भवति, तदभावे कथं प्रलय इत्याह— **स इति**। इदानीं सर्गमाह— **ततः सर्गकाल इति**।

निमित्तं दृष्टं किमदृष्टं वेति विकल्प्य आद्ये दूषणमाह— **यदि प्रयत्नोऽभिघातादिरिति**। आदिशब्देन नोदन-संस्कार-गुरुत्व-द्रवत्वानि गृह्यन्ते। ननु आत्ममनस्संयोगनिबन्धनत्वात् प्रयत्नस्य तस्य च भावात् कथमभावः प्रयत्नस्येति? अत आह—

### *न्यायनिर्णयः*

नाशः, तदभावादणुनित्यत्वम्, तदभावश्चाणुपरिमाणतारतम्यं क्वचिद् विश्रान्तं, परिमाणतारतम्यत्वात्, महत्परिमाणतारतम्यवदित्यनुमानान्महत्त्वापकर्षविश्रान्तिभूमित्वेनाणूनां परतो विभागायोगादित्यर्थः। एकद्रव्यावशेषे प्रलयः; स कथमनेकद्रव्यशेषे स्यादित्याशङ्क्य कार्यद्रव्यमात्रस्य युगपन्नाशो लय इत्याह— **स इति**। सृष्टिक्रममाचष्टे— **तत इति**। अदृष्टापेक्षमदृष्टवत्क्षेत्रज्ञसंयोगापेक्षमिति यावत्। कर्मासमवायिकारणं कार्यमाह— **तदिति**। संयोगादसमवायिनो द्व्यणुकोत्पत्तौ द्व्यणुकेभ्यस्त्र्यणुकादिजन्मेत्याह— **तत इति**। वायावुक्तं शिष्टे भूतत्रयेऽतिदिशति— **एवमिति**। भूतोत्पत्तिवद् भौतिकोत्पत्तिमाह— **एवमेवेति**। द्रव्योत्पत्तिं निगमयति— **एवमिति**। गुणोत्पत्तिक्रमं सूचयति— **अण्विति**। उक्तसर्गक्रमस्यालौकिकत्वं वारयति— **तन्त्विति**। तन्तुभ्यः संयुक्तेभ्यो महान् पटो जायते, तन्तुगताच्च रूपादेस्तत्र रूपादि दृष्टम्, तेन दृष्टान्तेनोक्तसर्गक्रमधीरित्यर्थः। पूर्वपक्षमुपसंहरति— **इति काणादा इति**।

परमाणुमूलकारणत्वस्य प्रामाणिकत्वादर्थादस्ति विरोधः समन्वयस्येत्येवं प्राप्तमनूद्य सिद्धान्तमाह— **तत्रेति**। यत् तावदणुभ्यः संयुक्तेभ्यो द्व्यणुकादिक्रमेण जगज्जन्मेति, तत्राह— **विभागेति**। अस्तु तर्हि तेषु कर्मकृतः संयोगः, तत्राह— **कर्मणश्चेति**। तच्चाभ्युपगम्यते न वा? द्वितीयं प्रत्याह— **अनभ्युपगम इति**। यद्यणूनां संयुक्तानां जगदारम्भकत्वं प्रामाणिकं तदा समन्वयस्यार्थाद्विरोधः। न तदस्ति। आद्ये सर्गे परमाणवो न संयुक्ताः, कर्मशून्यत्वात्, आत्माकाशवत्। ते च कर्मशून्याः, तद्धेतुहीनत्वात्, तद्वदित्यर्थः। आद्यकर्महेतोरिष्टत्वाद्धेतु[१]त्वसिद्धिरिति कल्पान्तरमाशङ्क्य निमित्तं दृष्टमदृष्टं, वेति विकल्प्याद्यमनुवदति— **अभ्युपगमेऽपीति**। यथेदानीं देहचेष्टायां दृष्टं यत्नाख्यं निमित्तं, तरुचलने पवनाभिघातः, शरादेर्नोदनादि, तथाऽणुष्वाद्यकर्मोत्पत्तौ यदि किंचिद् दृष्टं निमित्तमित्यर्थः। अभिघातादीत्यादिशब्देन नोदनगुरुत्ववेगस्थितिस्थापका गृह्यन्ते। क्रियाविशिष्टद्रव्यस्य द्रव्यान्तरेण संयोगविशेषोऽभिघातः,

---

१. 'हेत्वसिद्धिः' इति पाठः स्यात्।

**तस्यासंभवान्नैवाणुष्वाद्यं कर्म स्यात्। न हि तस्यामवस्थायामात्मगुणः प्रयत्नः संभवति, शरीराभावात्। शरीरप्रतिष्ठे हि मनस्यात्मनः संयोगे सत्यात्मगुणः प्रयत्नो जायते। एतेनाभिघाताद्यपि दृष्टं निमित्तं प्रत्याख्यातव्यम्। सर्गोत्तरकालं हि तत्सर्वं नाद्यस्य कर्मणो निमित्तं संभवति।**

**अथादृष्टमाद्यस्य कर्मणो निमित्तमित्युच्येत। तत्पुनरात्मसमवायि वा स्यादणुसमवायि वा। उभयथाऽपि नादृष्टनिमित्तमणुषु कर्मावकल्पेत, अदृष्टस्याचेतनत्वात्। न ह्यचेतनं चेतनेनानधिष्ठितं स्वतन्त्रं प्रवर्तते प्रवर्तयति वेति सांख्यप्रक्रियायामभिहितम्। आत्मनश्चानुत्पन्नचैतन्यस्य तस्यामवस्थायामचेतनत्वात्। आत्मसमवायित्वाभ्युपगमाच्च नादृष्टमणुषु कर्मणो निमित्तं स्यादसंबन्धात्। अदृष्टवता पुरुषेणास्त्यणूनां संबन्ध इति चेत्? संबन्धसातत्यात् प्रवृत्तिसातत्यप्रसङ्गो नियामकान्तराभावात्। तदेवं नियतस्य कस्यचित्**

### *प्रकटार्थविवरणम्*

[१]इष्टगतौ नोदनादि, तथैव किमास्थीयते, किं वाऽदृष्टम्? इति। नाद्यः, सृष्ट्युत्तरकालीनत्वाद् दृष्टहेतुजातस्येत्यर्थः। द्वितीयं शङ्कते— **अथादृष्टमिति**। विकल्पपुरःसरं दूषयति— **तत्पुनरिति**। ननु चेतनात्मनाऽधिष्ठितं कर्म निमित्तं स्यादित्याशङ्क्याह— **आत्मनश्चेति**। उभयसमवायं प्रौढवादेनाङ्गीकृत्य दूषणमुक्तम्; इदानीं सोऽपि नास्तीत्याह— **आत्मसमवायित्वेति**। अदृष्टस्याणुसंबन्धाभावात्, असम्बद्धस्य हेतुत्वेऽतिप्रसङ्गादित्यर्थः। अदृष्टं स्वाश्रयसंयुक्तेऽतिशयहेतुः, नित्यपरतन्त्रत्वात्, गुरुत्ववदित्याह— **अदृष्टवतेति**।

### *भाष्यभावप्रकाशिका*

**शरीरप्रतिष्ठे हीति**। ननु अभिघातादि निमित्तमस्त्विति, तत्राह— **एतेनेति**। ननु नोदन-संस्कारयोरभिघातेन समानयोगक्षेमत्वेऽपि गुरुत्व-द्रवत्वे परमाणुगते कर्महेतू विद्येते इत्याशङ्क्य, तयोः सदातनत्वेन कर्मसातत्यप्रसङ्गान्न कर्महेतुत्वमित्यभिप्रेत्याह— **सर्गोत्तरकालमिति**।

इदानीमुत्तरकल्पमाशङ्कते— **अथादृष्टमिति**। अणुसमवेतस्यादृष्टस्यात्माधिष्ठिततया कर्मोत्पादकत्वं घटत इत्याशङ्क्याह— **आत्मनश्चेति**। न च ईश्वराधिष्ठितत्वम्; ईश्वरस्य नित्यसंनिहिततया कादाचित्कप्रवृत्तिहेतुत्वासंभवात्, तत्राप्यदृष्टादिनिमित्तान्तर-कल्पनायामनवस्थाप्रसङ्गाच्चेति भावः। **अस्त्यणूनां सम्बन्ध इति**। संयुक्तसमवायः सम्बन्धः, परमाणुसंयुक्तात्मसमवेतत्वाददृष्टस्येत्यर्थः।

### *न्यायनिर्णयः*

यथोद्यमितनिपतितमुसलस्योलूखलेन संयोगः। नोदनं तु संयुक्तस्य यत्नविशेषापेक्षः स एव संयोगः, यथा क्षेपानुकूलयत्नापेक्षः संनद्धकरशरसंयोगः। नोदनेन तुल्ययोगक्षेमः संस्कार इति विवेकः। तत्रास्य सर्वस्य सृष्ट्युत्तरकालत्वान्नाद्यकर्महेतुतेत्याह— **तस्येति**। आदिसर्गे यत्नायोगं साधयति— **न हीति**। आत्ममनःसंयोगस्य तदा भावात् तन्निमित्तप्रयत्नस्य कथमत्रायोगोक्तिः, तत्राह— **शरीरेति**। प्रयत्नोक्तन्यायेनाभिघाताद्यपि निरस्यति— **एतेनेति**। एतच्छब्दोक्तं स्फोरयति— **सर्गेति**।

कल्पान्तरं शङ्कते— **अथेति**। दूषयितुं विकल्पयति— **तत्पुनरिति**। जडस्यात्मनोऽदृष्टाश्रयत्वमिच्छतामणवस्तथा किं न स्युरित्यणुसमवायि वेत्युक्तम्। कल्पद्वयमविशेषेण प्रत्याह— **उभयथेति**। अचेतनत्वेऽपि कुतो न कर्मनिमित्ततेत्याशङ्क्य स्वतन्त्रं चेतनाधिष्ठितं वा तत् तथेति विकल्प्याद्यं निराह— **न हीति**। द्वितीये तज्जीवाधिष्ठितमीश्वराधिष्ठितं वा? नाद्य इत्याह— **आत्मनश्चेति**। नेतरः, तस्य नित्यसंनिहिततया कादाचित्कप्रवृत्तिहेतुत्वायोगात्। तत्रापि निमित्तान्तरकल्पनेऽनवस्थानादिति चकारार्थः। अणुसमवायित्वपक्षं विशेषतो निरस्यति— **आत्मेति**। अदृष्टस्याणुभिरसंबन्धादसंबद्धस्य हेतुत्वेऽतिप्रसङ्गादित्याह— **असंबन्धादिति**। अणुसंयुक्तात्मसमवेतत्वाददृष्टस्याणुभिः संयुक्तसमवायादसंबन्धासिद्धिरिति शङ्कते— **अदृष्टवतेति**। आत्मनस्तर्हि सर्वगतत्वेन सदाऽणु-संबन्धादणुप्रवृत्तेरविच्छित्तिरिति दूषयति— **संबन्धेति**। अण्वात्मनोः संयोगस्याणुकर्मजत्वेऽपि तत्प्रवाहसातत्यात् प्रवृत्तिसातत्यमिति

---

१. 'इषुगतौ' इति पाठः स्यात्।

**कर्मनिमित्तस्याभावान्नाणुष्वाद्यं कर्म स्यात्। कर्माभावात् तन्निबन्धनः संयोगो न स्यात्। संयोगाभावाच्च तन्निबन्धनं द्व्यणुकादि कार्यजातं न स्यात्।**

**संयोगश्चाणोरण्वन्तरेण सर्वात्मना वा स्यादेकदेशेन वा? सर्वात्मना चेदुपचयानुपपत्तेरणुमात्रत्वप्रसङ्गो [१]दृष्टविपर्ययप्रसङ्गश्च। प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगस्य दृष्टत्वात्। एकदेशेन चेत्, सावयवत्वप्रसङ्गः। परमाणूनां कल्पिताः प्रदेशाः स्युरिति चेत्? कल्पितानामवस्तुत्वादवस्त्वेव संयोग इति वस्तुनः कार्यस्यासमवायिकारणं न स्यात्। असति चासमवायिकारणे द्व्यणुकादिकार्यद्रव्यं नोत्पद्येत।**

***प्रकटार्थविवरणम्***

तर्ह्यात्मनां सर्वगतत्वेन सदा परमाणुसंबन्धात् परमाणुप्रवृत्तेरविच्छेदप्रसङ्ग इत्याह— **संबन्धसातत्यादिति**।। अथ ईश्वराधिष्ठितत्वेन प्रवृत्तिनियम इत्याशङ्क्याह— **नियामकान्तराभावादिति**।। ईश्वरेच्छाधिष्ठितत्वमपि नित्यं चेत्, प्रवृत्तिसातत्यप्रसङ्गः, नियामकान्तराभावात्; आगन्तुकं चेत् कारणान्तरं वाच्यम्; न च [२]साक्षात्सम्बन्धः, स्वाश्रयसंयोगात्कारणत्वे गर्दभेच्छाया अपि कारणत्वमित्यर्थः। यतो दृष्टमदृष्टं वा निमित्तं न संभवति अतः सूत्रार्थमुपसंहरति— **तदेवमिति**।।

इतश्च संयोगसचिवाः परमाणवो न मूलकारणमित्याह— **संयोगश्चाणोरिति**।। न केवलं सर्वथा संयोगे परमाणुः परमाण्वन्तरेऽन्तर्भूत एव स्यात्; दृष्टं यदंशवृत्तित्वं संयोगस्य तदपि विरुध्येतेत्याह— **दृष्टविपरीतेति**।। द्वितीयं दूषयति— **एकदेशेन चेदिति**। प्रदेशकल्पनया संयोगसिद्धिमाशङ्क्य दूषयति— **परमाणूनामिति**। स्वरूपेण संयोगे परमाणोरवयविनश्च एकेन

***भाष्यभावप्रकाशिका***

**सम्बन्धसातत्यादिति**। यद्यपि परमाणु-क्षेत्रज्ञयोःसंयोगः परमाणुकर्मजः, तथापि तत्प्रवाहस्य सातत्यमपीति भावः। अथ सम्बन्धः आगन्तुकः, तर्हि तस्यादृष्टं निमित्तम्, किं वाऽन्यत्? संयोगहेतुकर्मनिमित्तादृष्टापेक्षायामितरेतराश्रयत्वम्, अन्यनिमित्तत्वे दूषणमाह— **नियामकान्तरेति**। तदयं प्रयोगः— विवादाध्यासिताः, न संयोगसचिवाः परमाणवः, विशिष्टसंयोगहेतुकर्मशून्यत्वात्; आत्माकाशवत्; विशिष्टकर्मशून्याः परमाणवः, तद्धेतुप्रयत्नाभिघातादिशून्यत्वात्, आत्माकाशवदिति।

पूर्वं कारणाभावात् संयोगोऽनुपपन्न इत्युक्तम्, इदानीं परमाणुषु संयोगस्य स्वरूपमप्यनुपपन्नमित्याह— **संयोगश्चेत्यादिना**। **उपचयानुपपत्तेरिति**। एकदेशेन संयोगे यावेकदेशौ निरन्तरौ, ताभ्यामन्य एकदेशः संयोगेनाव्याप्ता इति प्रथिमा घटते, सर्वात्मना तु नैरन्तर्ये परमाणावेकस्मिन् परमाण्वन्तराण्यपि संमान्ति, इति न प्रथिमा स्यादित्यर्थः। कथं दृष्टविपर्यय इति? अत्राह— **प्रदेशवत इति**। परमाणवः, न द्रव्यारम्भकावयवाः, निरवयवत्वेन संयोगप्रचयहीनत्वाभ्यां च; आत्माकाशवदित्येतदनुमानद्वयमत्र द्रष्टव्यम्। शङ्कते— **परमाणूनामिति**। परिहरति— **कल्पितानामिति**। अवस्तुनोऽर्थक्रियाऽभावादित्यर्थः।

***न्यायनिर्णयः***

भावः। यद्यागन्तुकः संबन्धस्तस्य तर्हि निमित्तमदृष्टमन्यद्वा। तत्र संयोगहेतुकर्मनिमित्तादृष्टापेक्षायामन्योन्याश्रयतेति मत्वा निमित्तान्तरं प्रत्याह— **नियामकान्तरेति**। कर्मनिमित्ताभावं सफलं निगमयति— **तदेवमिति**। कर्मशून्यत्वं सफलमुपसंहरति— **कर्मेति**। संयोगाभावफलमाह— **संयोगेति**।

हेत्वभावादणुषु संयोगानुपपत्तिरुक्ता। सम्प्रति तेषु संयोगस्वरूपमेवायुक्तमित्याह— **संयोगश्चेति**। सर्वात्मना संयोगे परमाणावेकस्मिन्नण्वन्तरान्तर्भावात् तत्संयोगिनस्तदव्याप्तदेशाभावात्, एवमण्वन्तराण्यपि तस्मिन्नेव संमान्तीति कार्ये प्रथिमायोगात्, तस्याणुमात्रतापत्तिरित्याह— **सर्वात्मनेति**। तत्रैव दोषान्तरमाह— **दृष्टेति**। प्रसङ्गमेव प्रकटयति— **प्रदेशेति**। द्वितीयमनुभाष्य दूषयति— **एकेति**। कल्पितदेशोपगमादिष्टापत्तिं शङ्कते— **परमाणूनामिति**। अवयवानां कल्पितत्वे संयोगतत्कार्ययोरपि तथात्वादपसिद्धान्तः स्यादित्याह— **कल्पितानामिति**। मा भूदसमवायिकारणं, कार्यसिद्धिरेवाभीष्टेत्याशङ्क्याह— **असतीति**। भावरूपकार्यं नासमवायिनं

१. 'दृष्टविपरीत' इति प्रकटार्थधृतः पाठः। २. 'ईश्वरेच्छायाः अणुभिः' इति शेषः।

**यथा चादिसर्गे निमित्ताभावात् संयोगोत्पत्त्यर्थं कर्म नाणूनां संभवत्येवं महाप्रलयेऽपि विभागोत्पत्त्यर्थं कर्म नैवाणूनां संभवेत्। न हि तत्रापि किंचिन्नियतं तन्निमित्तं दृष्टमस्ति। अदृष्टमपि भोगप्रसिद्ध्यर्थम्, न प्रलयप्रसिद्ध्यर्थमित्यतो निमित्ताभावान्न स्यादणूनां संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थं वा कर्म। अतश्च संयोगविभागाभावात् तदायत्तयोः सर्गप्रलययोरभावः प्रसज्येत। तस्मादनुपपन्नोऽयं परमाणुकारणवादः।।१२।।**

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः।।१३।।

**समवायाभ्युपगमाच्च तदभाव इति प्रकृतेनाणुवादनिराकरणेन संबध्यते। द्वाभ्यां चाणुभ्यां द्व्यणुक-**

### *प्रकटार्थविवरणम्*

संयोगे तदैव नान्येन संयोगः स्यात्। संयुक्तरूपातिरिक्तरूपान्तराभावात्, दिगन्तविशिष्टरूपान्तरेण संयोगे त्वप्रत्यक्षत्वापातात्; न चांशवृत्तितायां प्रत्यक्षतापातः, प्रत्यक्षबलेनैव अभिधानात्; अतः परमाणुसंयोगानिरूपणात्र संयोगसचिवानामारम्भकत्वमिति स्थितम्।।

एवं काणादानां सर्गप्रकारनिराकरणे सूत्रं योजयित्वा प्रलयनिराकरणेऽपि योजयति— **यथा चादिसर्ग इति**। युगपदेवानन्ताणुषु कर्मनिमित्तमभिघातादि न संभाव्यम्, कतिपयविषयत्वेनैव क्लृप्तत्वात्, अदृष्टमपि प्रलयोद्देशेन किञ्चिद् वेदे न श्रुतमित्यर्थः। मायावादिनां तु निमित्तानिरूपणं मायामयत्वमेव द्रढयति। अतो न साम्यमपि चोदनीयम्।।

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः**।। इदानीं समवायाङ्गीकारद्वारकमप्यचातुर्यं दर्शयति— **समवायाभ्युपगमाच्चेति**।।

### *भाष्यभावप्रकाशिका*

सूत्रव्याख्यानान्तरमाह— **यथा चादिसर्ग इति**। ननु कथमसंभवः? प्रलयात् प्राक् कर्मणो निमित्तं सर्वं तत्र संभवतीत्याशङ्क्य, तर्हि दृष्टम्, किं वा अदृष्टम्। यदि दृष्टम्, तत्राह— **न हि तत्रापीति**। संभवन्त्यभिघातादयः कदाचित् क्वचित्, न तु सर्वस्मिन्नपर्यायेण; नियमहेतोरभावादित्यर्थः। उत्तरपक्षे दूषणमाह— **अदृष्टमपीति**। यद्यपि शरीरादिप्रलयारम्भे दुःखभेदभोगः, तथाप्यसौ पृथिव्यादिप्रलये नास्ति। अतो न तद्विनाशः[शे] कर्म निमित्तं संभवतीत्यर्थः। तदेवं परमाणूनामाद्यस्य कर्मणः कारणाभ्युपगमेऽनभ्युपगमे वा न कर्म, अतस्तदभावः तस्य द्व्यणुकादिक्रमेण सर्गस्याभावः। अथवा परमाणुसमवाय्यदृष्टम्, उतात्मसमवायि, उभयथापि; अथवा संयोगोत्पत्त्यर्थम्, विभागोत्पत्त्यर्थम्, उभयथापि न कर्म, अतस्तयोः सर्गप्रलययोरभाव इति त्रिधा योजना।।१२।।

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः**।।१३।। **नित्यमेव च भावात्**।।१४।। व्याचष्टे— **समवायाभ्युपगमाच्चेत्यादिना**। न तावत् स्वतन्त्रः समवायः समवायिनौ घटयति; अतिप्रसङ्गात्। तथा च समवायस्य सम्बन्धान्तरेण सम्बन्धेऽनवस्थेत्यर्थः। अयुक्तः

### *न्यायनिर्णयः*

विनेति वक्तुं द्रव्यपदम्।

काणादानां सर्गप्रत्युक्तौ सूत्रं योजयित्वा प्रलयप्रकारप्रत्युक्तावपि सूत्रं योजयति— **यथेति**। कथमसंभवः, प्रलयात्प्रागवस्थायां विभागोत्पादककर्मनिमित्तस्य सर्वस्यापि संभवात्। तत् तर्हि दृष्टमदृष्टं वा? नाद्य इत्याह— **न हीति**। तत्रेति प्रलयप्रयोजकविभागहेतुकर्मोक्तिः। अपिः सर्गहेतुसंयोगनिमित्तकर्मदृष्टान्तार्थः। किंचित्प्रलये कदाचिदभिघातादियोगेऽपि नापर्यायेण सर्वलये तदस्ति, नियामकाभावादित्याह— **नियतमिति**। द्वितीयं दूषयति— **अदृष्टमिति**। देहादिलयारम्भे दुःखभेदभोगेऽपि पृथिव्यादिलये तदभावान्न तस्य कर्मनिमित्तत्वमिति भावः। अणूनामाद्यस्यान्त्यस्य च कर्मणो निमित्तमस्ति वा न वा? अस्ति चेद् दृष्टमदृष्टं वा? दृष्टमपि यत्नोऽभिघातादि वा? अदृष्टमपि परमाणुष्वात्मनि वा? सर्वथाऽपि संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थमुभयथाऽपि न कर्म। कर्माभावात्तयोः सर्गप्रलयायोरभावः स्यादिति सूत्रयोजनामुपसंहरति— **अत इति**। परमाणुवादे सर्गाद्ययोगात् तस्य सिद्धा भ्रान्तिमूलतेति निगमयति— **तस्मादिति**।।१२।।

समवायस्वीकारादपि परमाणुवादस्यायुक्तत्वमाह— **समवायेति**। सूत्रं चष्टे— **समवायेति**। तदभावोऽत्र सर्गाभावो लयाभावो वा, नोभयत्रापि समवायाभ्युपगमो हेतुरित्याशङ्क्याह—**अणुवादेति**। तस्य निराकरणमसंभवस्तेन समवायाभ्युपगमस्य संगतिरित्यर्थः।

**मुत्पद्यमानमत्यन्तभिन्नमणुभ्यामणवोः समवैतीत्यभ्युपगम्यते भवता। न चैवमभ्युपगच्छता शक्यतेऽणुकारणता समर्थयितुम्। कुतः? साम्यादनवस्थितेः। यथैव ह्यणुभ्यामत्यन्तभिन्नं सद् द्व्यणुकं समवायलक्षणेन संबन्धेन ताभ्यां संबध्यत एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन् समवायलक्षणेनान्येनैव संबन्धेन समवायिभिः संबध्येतात्यन्तभेदसाम्यात्। ततश्च तस्य तस्यान्योऽन्यः संबन्धः कल्पयितव्य इत्यनवस्थैव प्रसज्येत।**

**नन्विहप्रत्ययग्राह्यः समवायो नित्यसंबद्ध एव समवायिभिर्गृह्यते, नासंबद्धः, संबन्धान्तरापेक्षो वा। ततश्च न तस्यान्यः संबन्धः कल्पयितव्यो येनानवस्था प्रसज्येतेति। नेत्युच्यते। संयोगोऽप्येवं सति संयोगिभिर्नित्यसंबद्ध एवेति समवायवन्नान्यं संबन्धमपेक्षेत। अथार्थान्तरत्वात् संयोगः संबन्धान्तरमपेक्षेत, समवायोऽपि तर्ह्यर्थान्तरत्वात् संबन्धान्तरमपेक्षेत। न च गुणत्वात् संयोगः संबन्धान्तरमपेक्षते, न**

### *प्रकटार्थविवरणम्*

अनवस्थापरिजिहीर्षया शङ्कते— **नन्विहप्रत्ययेति**।। अपसिद्धान्तेन परिहरति— **नेत्युच्यत इति**। सम्बन्धन्त्वे सत्यन्यत्वात् संबन्धापेक्षा चेत् संयोगस्य समवायेऽपि समानमित्याह— **अर्थान्तरत्वादिति**। ननु संयोगस्य गुणत्वात् संयोगिभ्यां सह समवायोऽवश्यं वक्तव्यः; समवायस्य तु स्वतन्त्रत्वान्नास्ति संबन्धापेक्षेत्याशङ्क्याह— **न च गुणत्वादिति**। संबन्धापेक्षाकारणस्य संयोगसमवाययोस्तुल्यत्वात्; गुणत्वं चाकिञ्चित्करम्, क्रियादेरपि संबन्धापेक्षादर्शनादित्यर्थः। न च कार्यत्वात् संयोगस्य समवायापेक्षा, प्रध्वंसे व्यभिचारात्, अनादेरपि सामान्यस्यापेक्षादर्शनाच्च। किञ्च यथा सम्बन्धिभेदे नाशे च समवायो न भिद्यते, न नश्यति

### *भाष्यभावप्रकाशिका*

समवाय इति वदन् समवाये किं प्रमाणं पृच्छसि, किं वाऽनवस्थापरिहारम्। प्रमाणं चेत्, तदाऽऽह— **नन्विहेति**। अथ परिहारम्, तत्राह— **नित्यसम्बद्ध इति**। सम्बन्धिभ्यां सम्बन्धे सम्बन्धान्तरं नापेक्षते समवायः, सम्बन्धिसम्बन्धनपरत्वात्। न ह्यसौ भिन्नोऽपि सम्बन्धिनिरपेक्षो निरूप्यते। न च तस्मिन् सति सम्बन्धिनावसम्बन्धिनौ भवतः। तस्मात् स्वभावादेव समवायः समवायिनोः, न सम्बन्धान्तरेण। अतो नानवस्थेत्यर्थः। परिहरति— **नेत्युच्यत इति**। संयोगोऽपि सम्बन्धिसम्बन्धनपरः संयोगिभ्यां न पृथङ् निरूप्यते। न च तस्मिन् सति संयोगिनावसंयोगिनौ भवत इति तुल्यमित्यर्थः। ननु संयोगो गुणः, तेनास्य समवायं विना न समवेतत्वम्; तस्मात् तस्यैव समवायापेक्षेत्याशङ्क्याह— **न चेति**। कर्मादीनामपि समवायसम्बन्धाभ्युपगमान्न गुणत्वं प्रयोजकमित्यर्थः।

### *न्यायनिर्णयः*

तदभ्युपगमं विभजते— **द्वाभ्यामिति**। हेत्वर्थमुक्त्वा तदभाव इति प्रतिज्ञार्थं स्फुटयति— **न चेति**। यथा पूर्वोक्तन्यायादणुकारणता समर्थयितुं न शक्यते तथा द्व्यणुकस्याण्वोः समवायस्वीकारादित्यत्र प्रश्नपूर्वकं हेतुमाह— **कुत इति**। समवायः स्वतन्त्रोऽस्वतन्त्रो वा। नाद्यः, स्वतन्त्रस्य घटकत्वेऽतिप्रसङ्गात्। द्वितीये समवायस्य संबन्धान्तरेण समवायिसंबन्धेऽनवस्थानान्नाणुकारणतेति हेतुं विभजते— **यथेत्यादिना**।

किमप्रामाणिकत्वेन समवायस्यायुक्तत्वमुतानवस्थयेति विकल्प्याद्यं दूषयन्नाशङ्कते— **नन्विति**। द्वितीयं प्रत्याह— **नित्येति**। एवकारार्थमाह— **नेति**। तथापि संबन्धान्तरापेक्षायामनवस्थेत्याशङ्क्याह— **संबन्धान्तरेति**। वाशब्दो नञनुकर्षणार्थः। अनवस्थाऽभावं स्फोरयति— **नेत्यादिना**। समवायः समवायिभ्यां संबन्धान्तरं नापेक्षते संबन्धिसंबन्धनस्वभावत्वात्। अतः स्वभावादेव समवायितन्त्रः समवायो न संबन्धान्तरेणेति नानवस्थेत्यर्थः। समवायस्य संबन्धिपारतन्त्र्यस्वभावं दूषयति— **नेतीति**। तस्य स्वाभाविके संबन्धिपारतन्त्र्ये संयोगस्यापि स्वतः संयोगितन्त्रत्वयोगात् तस्य संयोगिभ्यां समवायकल्पना न स्यादिति विपक्षे दोषमाह— **संयोगोऽपीति**। किंच संयोगस्य संबन्धान्तरापेक्षायामर्थान्तरत्वं गुणत्वं वा हेतुः, तत्राद्यमाह— **अथेति**। समवायेऽपि तुल्यमेतदित्याह— **समवायोऽपीति**। द्वितीयमाशङ्क्याह— **न चेति**। अपेक्षाकारणस्यात्यन्तभिन्नत्वस्येत्यर्थः। नात्यन्तभिन्नत्वं तथा, किंतु गुणत्वमेव, न च तदस्ति

**समवायोऽगुणत्वादिति युज्यते वक्तुम्। अपेक्षाकारणस्य तुल्यत्वात्। गुणपरिभाषायाश्चातन्त्रत्वात्। तस्मादर्थान्तरं समवायमभ्युपगच्छतः प्रसज्येतैवानवस्था। प्रसज्यमानायां चानवस्थायामेकासिद्धौ सर्वासिद्धेर्द्वाभ्यामणुभ्यां द्व्यणुकं नैवोत्पद्येत। तस्मादप्यनुपपन्नः परमाणुकारणवादः।।१३।।**

## नित्यमेव च भावात्।।१४।।

**अपि चाणवः प्रवृत्तिस्वभावा वा निवृत्तिस्वभावा वोभयस्वभावा वाऽनुभयस्वभावा वाऽभ्युपगम्येरन्[1] गत्यन्तराभावात्। चतुर्धाऽपि नोपपद्यते। प्रवृत्तिस्वभावत्वे नित्यमेव प्रवृत्तेर्भावात् प्रलयाभावप्रसङ्गः। निवृत्तिस्वभावत्वेऽपि नित्यमेव निवृत्तेर्भावात् सर्गाभावप्रसङ्गः। उभयस्वभावत्वं च विरोधादसमञ्जसम्। अनुभयस्वभावत्वे तु निमित्तवशात् प्रवृत्तिनिवृत्त्योरभ्युपगम्यमानयोरदृष्टादेर्निमित्तस्य नित्यसंनिधानान्नित्य-प्रवृत्तिप्रसङ्गः[2]। अतन्त्रत्वेऽप्यदृष्टादेर्नित्याप्रवृत्तिप्रसङ्गः[3]। तस्मादप्यनुपपन्नः परमाणुकारणवादः।।१४।।**

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात्।।१५।।

### *प्रकटार्थविवरणम्*

च, तथा संयोगः किं न स्यात्? यतो नास्ति विशेषहेतुः तस्मादित्युपसंहारः। ननु नानवस्थामात्रं दोषः, उक्तं हि— ''मूलक्षयकरीं प्राहुरनवस्थां हि दूषणम्'' इति, तत्राह— **प्रसज्यमानायां चेति**। समवायस्य सम्बन्धत्वासिद्धौ तत्कृतं द्व्यणुकस्य संबद्धत्वं न सिध्यतीत्यर्थः।।

**नित्यमेव च भावात्**।। इतश्चानुपपन्नः परमाणुकारणवाद इत्याह— **नित्यमेव चेति**। **अतन्त्रत्वेऽपि** परमाणुप्रवृत्ताव-किञ्चित्करत्वेऽप्यदृष्टादेः कदाचिदपि प्रवृत्तिर्न स्यात्, स्वयं तत्स्वभावत्वाभावादित्यर्थः।

**रूपादिमत्त्वाच्च विपर्ययो दर्शनात्**।। एवं तावत् परमाणूनां मूलकारणत्वं निराकृत्य अधुना निरवयवत्वनित्यत्वादिनिराकरणाय

### *भाष्यभावप्रकाशिका*

यद्यसमवाये संयोगस्यागुणत्वम्, तदा न नः काचित् क्षतिरित्याह— **गुणेति**। वस्तुतस्तु द्रव्याश्रितश्च। द्रव्याश्रयत्वं समवायं विनापि स्वतो घटते। न च कार्यत्वात् समवायिकारणापेक्षिततया समवायित्वं संयोगस्य, अजसंयोगस्यासमवायित्वप्रसङ्गात्, समवायस्यापि सम्बन्धिनोरेकतरस्य द्वयोर्वा विनाशित्वे विनाशितया कार्यत्वात् समवायिकारणापेक्षा तुल्या स्यात्। अथ निमित्तमात्रादस्योत्पादः, (अ)संयोगस्यापि तथाऽस्तु; अन्यथोभयोरप्यनवस्थेत्यर्थः।।१३।।१४।।

### *न्यायनिर्णयः*

समवायस्येत्याशङ्क्याह— **गुणेति**। न हि गुणत्वं संबन्धान्तरापेक्षाहेतुः, कर्मादीनामपि तदपेक्षत्वादित्यर्थः। संयोगसमवाययोस्तुल्यत्वे फलितमाह— **तस्मादिति**। अनवस्थायां मूलक्षयकारित्वमाह— **प्रसज्यमानायां चेति**। सूत्रार्थमुपसंहरति— **तस्मादिति**।।१३।।

परमाणुवादायोगे हेत्वन्तरमाह— **नित्यमिति**। इतश्च तद्वादासिद्धिरिति चकारार्थमाह— **अपि चेति**। अनुपपत्तिं दर्शयितुं विकल्पयति— **अणव इति**। न्यूनत्वं वारयति— **गत्यन्तरेति**। विकल्पचतुष्टयस्यापि दुष्टत्वं प्रतिजानीते— **चतुर्धेति**। तत्राद्यस्य दुष्टत्वं स्पष्टयति— **प्रवृत्तीति**। द्वितीयेऽनुपपत्तिं स्फोरयति— **निवृत्तीति**। तृतीयस्य नोत्थानमेवेत्याह— **उभयेति**। चतुर्थं प्रत्याह— **अनुभयेति**। अदृष्टादि संनिहितमपि न प्रवर्तकमित्याशङ्क्याह— **अतन्त्रत्वेऽपीति**। पक्षचतुष्टयनिषेधफलमुपसंहरति— **तस्मादिति**।।१४।।

परमाणूनां परमकारणत्वं निराकृत्य निरवयवत्वादि निराकर्तुमारभते— **रूपादीति**। विपर्ययं दर्शयितुं परमतमनुवदति—

---

१. 'गम्यन्ते' इति पा.। २-३. 'प्रसङ्गात्' इति पा.।

**सावयवानां द्रव्याणामवयवशो विभज्यमानानां यतः परो विभागो न संभवति, ते चतुर्विधा रूपादिमन्तः परमाणवश्चतुर्विधस्य रूपादिमतो भूतभौतिकस्यारम्भका नित्याश्चेति यद् वैशेषिका अभ्युपगच्छन्ति स तेषामभ्युपगमो निरालम्बन एव। यतो रूपादिमत्त्वात् परमाणूनामणुत्वनित्यत्वविपर्ययः प्रसज्येत। परमकारणापेक्षया स्थूलत्वमनित्यत्वं च तेषामभिप्रेतविपरीतमापद्येतेत्यर्थः। कुतः? एवं लोके दृष्टत्वात्। यद्धि लोके रूपादिमद्वस्तु तत् स्वकारणापेक्षया स्थूलमनित्यं च दृष्टम्। तद्यथा पटस्तन्तूनपेक्ष्य स्थूलोऽनित्यश्च भवति, तन्तवश्चांशूनपेक्ष्य स्थूला अनित्याश्च भवन्ति, तथा चामी परमाणवो रूपादिमन्तस्तैरभ्युपगम्यन्ते, तस्मात् तेऽपि कारणवन्तस्तदपेक्षया स्थूला अनित्याश्च प्राप्नुवन्ति।**

**यच्च नित्यत्वे कारणं तैरुक्तम्– 'सदकारणवन्नित्यम्' (वै.सू. ४।१।१) इति; तदप्येवं सत्यणुषु**

### *प्रकटार्थविवरणम्*

प्रयतते— **रूपादिमत्त्वाच्चेति**। रूपादिमत्त्वं विभज्य प्रयोक्तव्यं भागासिद्धिपरिहाराय; तथा हि— पृथिव्यप्तेजःपरमाणवोऽनित्याः, रूपवत्त्वात्, घटवत्; वायुपरमाणवोऽनित्याः, स्पर्शवत्त्वात् पवनवदिति; विपक्षे चात्मवदरूपादिमत्त्वप्रसङ्गः। न च धर्मिग्राहकप्रमाणबाधः, भिन्नविषयत्वात्।।

यच्चानुमानम्— नित्याः परमाणवः, [1]सद्रूपत्वे सति अकारणत्वादिति; तत्र विशेष्यस्यासिद्धिरित्याह— **यच्च नित्यत्व**

### *भाष्यभावप्रकाशिका*

**रूपादिमत्त्वाच्च विपर्ययो दर्शनात्**।।१५।। विपर्ययं दर्शयितुं तन्मतमनुवदति— **सावयवानामिति**। परमाणूनां स्थूलत्वाद्यभिधानं व्याहतमित्याशङ्क्याह— **परमकारणेति**। एवं हेतुदृष्टान्तावभिधायोपनयमाह— **तथा चामी इति**। **अनित्याश्च प्राप्नुवन्तीति**। अत्रायं प्रयोगः— परमाणवः, अनित्याः, स्पर्शवत्त्वात्, घटादिवत्; परमाणवः, सकारणकाः, परिच्छिन्नत्वात्, घटवदिति भावः। पृथिवीत्वम्, अनित्यमात्रवृत्ति, स्पर्शवन्मात्रवृत्तित्वात् घटत्ववदित्याद्यपि द्रष्टव्यम्।

(यानि पुनः) परमाणुनित्यत्वसाधनानि तेषामुपन्यस्य दूषयति— **यच्चेत्यादिना**। नित्याः, परमाणवः, सत्त्वे सत्यकारणवत्त्वात्

### *न्यायनिर्णयः*

**सावयवानामिति**। यतो येभ्योऽवयवेभ्यः सकाशात् परः परस्ताद्भावीति यावत्। **रूपादिमन्तः**। रूपरसगन्धस्पर्शेत्याद्यनुक्रमेण रूपमादौ विद्यते यस्य स्पर्शस्य स स्पर्शो रूपादिस्तदाश्रया इत्यर्थः। तेषां चातुर्विध्ये हेतुः— **चतुर्विधस्येति**। कार्यस्य चातुर्विध्यं कारणेऽपि तत् कल्पयतीत्यर्थः। तेषां स्पर्शवत्त्वे हेतुमाह— **रूपादिमत इति**। कार्ये दृष्टं स्पर्शित्वं कारणेऽपि तत्कल्पकमित्यर्थः। आरम्भकान्तरापेक्षायामनवस्थानान्नारम्भकाः स्युरिति मत्वाऽऽह— **नित्याश्चेति**। परोपगतिमनूद्य प्रत्याह— **स इति**। निरालम्बनत्वे हेतुः— **यत इति**। रूपादिमत्त्वं पक्षव्याप्त्यर्थं पूर्ववद् व्याख्येयम्। विमताः सावयवा नाशिनश्च, स्पर्शित्वात्, पटवदित्यनुमानात् परोपगतेर्निराश्रयतेत्यर्थः। अणूनां सावयवत्वाद्युक्तिर्व्याहतेत्याशङ्क्याह— **परमेति**। कारणवत्त्वस्य नाशित्वहेतुत्वे तस्यैव द्रव्यत्वविशेषितस्य सावयवत्वे हेतुत्वात् कुतोऽनुमेति शङ्कते— **कुत इति**। साधनव्याप्तिं मत्वा सूत्रावयवमवतारयति—**एवमिति**। दर्शनमेव विशदयन् व्याप्तिमाह— **यद्धीति**। स्पर्शवतः सावयवत्वमनित्यत्वं च दृष्टमित्यत्र दृष्टान्तमाह— **तदिति**। दृष्टान्तबाहुल्यं सूचयति— **तन्तवश्चेति**। उपनयद्वारा पक्षधर्मतामाह— **तथा चेति**। अनुमानद्वयं निगमयति— **तस्मादिति**। पूर्वोक्तोपाधेः साधनव्याप्तिमभिप्रेतां प्रकटयितुं विशिनष्टि— **कारणवन्त इति**। पृथिवीत्वमनित्यमात्रवृत्ति, स्पर्शवन्मात्रवृत्तित्वात्, घटत्ववदित्याद्यनुमानं चकारार्थः।

परमाणवो नित्याः, सत्त्वे सत्यकारणवत्त्वात्, आत्मवदिति प्रत्यनुमानमुत्थापयति— **यच्चेति**। विशेष्यासिद्धिमाह—

१. प्रागभावे व्यभिचारवारणाय सत्यन्तम्। भावत्वं तदर्थः।

**न संभवति। उक्तेन प्रकारेणाणूनामपि कारणवत्त्वोपपत्तेः। यदपि नित्यत्वे द्वितीयं कारणमुक्तम्– 'अनित्यमिति च विशेषतः प्रतिषेधाभावः'[१] (वै.सू. ४।१।४) इति; तदपि नावश्यं परमाणूनां नित्यत्वं साधयति। असति हि यस्मिन् कस्मिंश्चिन्नित्ये वस्तुनि नित्यशब्देन नञः समासो नोपपद्यते। न पुनः परमाणुनित्यत्वमेवापेक्ष्यते। तच्चास्त्येव नित्यं परमकारणं ब्रह्म। न च शब्दार्थव्यवहारमात्रेण कस्यचिदर्थस्य प्रसिद्धिर्भवति, प्रमाणान्तरसिद्धयोः शब्दार्थयोर्व्यवहारावतारात्। यदपि नित्यत्वे तृतीयं कारणमुक्तम्– 'अविद्या च' (वै.सू. ४।१।५) इति, तद् यद्येवं विव्रियेत– सतां परिदृश्यमानकार्याणां कारणानां प्रत्यक्षेणाग्रहणमविद्येति, ततो द्व्यणुकनित्यताऽप्यापद्येत। अथाद्रव्यत्वे सतीति विशेष्येत, तथाप्यकारणवत्त्वमेव नित्यतानिमित्तमापद्येत। तस्य च प्रागेवोक्तत्वात् 'अविद्या**

### *प्रकटार्थविवरणम्*

**इति**। 'कार्यमनित्य' मिति विशेषतः कार्ये नित्यत्वप्रतिषेधस्याभावः प्रसज्येत, यदि कारणे नास्ति नित्यत्वम्; अतः कारणानां परमाणूनां नित्यत्वमिति **काणाद**गदितमनूद्य दूषयति— **यदपीत्यादिना**। पूर्वमनित्यमित्ययं कार्ये विशेषेण नित्यत्वप्रतिषेध इत्यङ्गीकृत्य दूषितम्; इदानीं तदपि नास्तीत्याह— **न च शब्दार्थेति**। अनित्यशब्दान्नित्यत्वप्रतिषेधमात्रं गम्यते, न तु कार्ये, येन कार्यप्रतियोगिनि कारणे नित्यत्वं व्यवतिष्ठेत। विशेषस्तु प्रमाणान्तरलभ्य एवेति भावः। अन्यच्चानित्यत्वसाधनं व्याख्याय दूषयति— **यदपीत्यादिना**। नित्याः परमाणवः, परिदृश्यमानकार्यस्य कारणत्वे सति प्रत्यक्षेणागृह्यमाणत्वात्, आकाशादिवदिति। एतद् द्व्यणुकेऽनैकान्तिकमित्यर्थः। यदि द्व्यणुके व्यभिचारपरिहारायाऽऽरम्भकद्रव्यरहितत्वे सतीति विशेषणं प्रयुज्येत, पौनरुक्त्यं

### *भाष्यभावप्रकाशिका*

आत्मवदिति भावः। नित्यत्वप्रतिषेधः, तत्प्रतियोगिवस्तुपूर्वकः, प्रतिषेधत्वात्, घटप्रतिषेधवदित्यनेन परमाणुनित्यत्वसिद्धिरित्याह— **यदपीति**। उभयवादिसंप्रतिपन्नस्यात्मनो नित्यत्वेनैव तदुपपत्तेः, न परमाणुनित्यत्वमित्याह— **तदपि नावश्यमिति**। किञ्च मूलभूतप्रमाणसंभवाद् वस्तुसिद्धिः, न व्यपदेशमात्रात्, अन्यथा वटयक्षप्रसिद्धेरपि प्रामाण्यं स्यादित्याह— **न च शब्दार्थेति**। नित्याः, परमाणवः, अनुपलभ्यमानकारणत्वात्, आत्मवदित्याशङ्क्य, अनुमानेनानुपलभ्यमानकारणत्वम्, किं वा प्रत्यक्षेण। तत्राद्यो न घटते। अनुमानस्य दर्शितत्वात्; अथोत्तरः, तत्राह— **सतामिति**। सतां परमाणूनां परिदृश्यमानस्थूलकार्याणां प्रत्यक्षेण कारणाग्रहणमविद्येति योजना। **अथाद्रव्यत्वे सतीति**। तथा सति न द्व्यणुके व्यभिचारः, तस्यानेकद्रव्यारब्धत्वेनाविद्यमानद्रव्यत्वानुपपत्तेः।

### *न्यायनिर्णयः*

**तदपीति**। **एवं सति**। परमाणूनां कारणवत्त्वे सतीत्यर्थः। तदेव कथं, तत्राह— **उक्तेनेति**। स्पर्शित्वेन परिच्छिन्नत्वेन चेत्यर्थः। नित्यत्वनिषेधस्तत्प्रतियोगिवस्तुपूर्वकः, निषेधत्वात्, घटनिषेधवदित्यनुमानादणुनित्यत्वसिद्धौ तदनित्यत्वानुमानासिद्धिरित्यनुवदति— **यदपीति**। कार्यमनित्यमिति कार्ये विशेषतो नित्यत्वनिषेधो न स्याद् यदि कारणेऽप्यनित्यत्वम्, अतोऽणूनां कारणानां नित्यतेति सूत्रार्थः। उभयसिद्धात्मनित्यत्वेनैव विशेषनिषेधसिद्धेरुक्तानुमानस्य सिद्धसाध्यत्वान्नाणुनित्यतासाधकतेत्याह— **तदपीति**। अनित्यमित्ययं कार्ये विशेषेण नित्यत्वनिषेध इत्यङ्गीकृत्योक्तं, तदपि नास्तीत्याह— **न चेति**। मूलप्रमाणं विना शब्दादेव पौरुषेयाद् योऽर्थे व्यवहारस्तन्मात्रेणेति यावत्। अन्यथा वटे यक्षप्रसिद्धेरपि प्रामाण्यं स्यादिति मत्वा हेतुमाह— **प्रमाणान्तरेति**। अनित्यशब्दान्नित्यत्वनिषेधमात्रं सिद्धम् न कार्ये तन्निषेधो येन कार्यप्रतियोगिनि कारणे नित्यत्वस्थितिः, विशेषस्तु मानान्तरादेव लभ्यते, ततस्तस्मादेवाणुनित्यत्वसिद्धौ व्यर्थं पूर्वानुमानमित्यर्थः। परमाणवो नित्याः, अनुपलभ्यमानकारणत्वात्, आत्मवदित्यनुमानान्तरमनुभाषते— **यदपीति**। प्रत्यक्षेणानुमानेन वा तदनुपलब्धिरिति विकल्प्याद्यमनुवदति— **तदिति**। सतामणूनां दृश्यमानस्थूलकार्याणां प्रत्यक्षेण कारणाग्रहणमविद्येति यदि सूत्रं व्याख्यायेतेति योजना। तर्हि द्व्यणुके व्यभिचारः स्यादित्याह— **तत इति**। आरम्भकद्रव्यशून्यत्वे सति प्रत्यक्षेणानुपलब्धकारणत्वस्य

---

१. 'प्रतिषेधभावः' इति भाष्ये पाठान्तरम्। वैशेषिकसूत्रे चैवमेव दृश्यते। नित्यत्वप्रतिषेधभावः नित्यवस्तुसद्भावं सूचयति। प्रतियोगिनो नित्यत्वस्य क्वचित् प्रसिद्धिं विना निषेधानुपपत्तेरिति भावः। 'प्रतिषेधाभावः' इति पाठोऽपि 'प्रसज्येत' इत्यध्याहारेण व्याख्यातः उक्तार्थतात्पर्यक एव।

**च' इति पुनरुक्तं स्यात्। अथापि कारणविभागात् कारणविनाशाच्चान्यस्य तृतीयस्य विनाशहेतोरसंभवोऽविद्या, सा परमाणूनां नित्यत्वं ख्यापयतीति व्याख्यायेत। नावश्यं विनश्यद्वस्तु द्वाभ्यामेव हेतुभ्यां विनष्टुमर्हतीति नियमोऽस्ति। संयोगसचिवे ह्यनेकस्मिंश्च द्रव्ये द्रव्यान्तरस्यारम्भकेऽभ्युपगम्यमान एतदेवं स्यात्। यदा त्वपास्तविशेषं सामान्यात्मकं कारणं विशेषवदवस्थान्तरमापद्यमानमारम्भकमभ्युपगम्यते तदा घृतकाठिन्य-विलयनवन्मूर्त्यवस्थाविलयनेनापि विनाश उपपद्यते। तस्माद् रूपादिमत्त्वात् स्यादभिप्रेतविपर्ययः परमाणूनाम्। तस्मादप्यनुपपन्नः परमाणुकारणवादः।।१५।।**

## उभयथा च दोषात्।।१६।।

### *प्रकटार्थविवरणम्*

तदा स्यादित्याह— **अथाद्रव्यत्व इत्यादिना**। प्रकारान्तरेण अविद्येति सूत्रं व्याख्याय दूषयति— **अथापीत्यादिना**। तन्तुविभागात् तन्तुदाहाद्वा पटस्य विनाशो दृष्टः; परमाणूनां च निरवयवत्वान्नारम्भकावयवविभागः, नाप्यारम्भकावयवनाशो नाशहेतुः संभवति, अन्यश्च न दृश्यते, अतः परमाणवो नित्याः, उभयविधनाशहेतुशून्यत्वादात्मवदित्यर्थः। ज्ञानसुखादावनैकान्तिक इत्याह— **नावश्यमिति**। द्रव्यत्वे सतीति विशेषणे ऽपि घृतसुवर्णादिकाठिन्येऽनैकान्तिकत्वमित्याह— **संयोगसचिवे हीत्यादिना**। न तावत् काठिन्यं नाम चतुर्विंशतिगुणादतिरिक्तं गुणान्तरमिष्टम्; नाप्यारम्भकावयवसंयोगविशेषः, अन्त्यावयविद्रव्ये प्रतीतेः; तस्माद् 'घृतं कठिनम्' इति व्यपदेशाद् घृतस्वरूपमेव काठिन्यमग्निसंपर्काद् विलीयते द्रवभावापत्त्या। तथा परमाणोरपि परिच्छेदविलयनेन परमकारणभावापत्त्या विनाश इत्यर्थः। यस्मात् परमाणूनामनित्यत्वसाधने नास्ति मानान्तरविरोधः तस्मादित्युपसंहारः।

### *भाष्यभावप्रकाशिका*

तथाप्यकारणत्वमेव नित्यत्वनिमित्तम्, यतोऽद्रव्यत्वमविद्यमानकारणभूतद्रव्यत्वमुच्यत इति भावः। तथा च पुनरुक्तमपीत्याह— **तस्य चेति**। अथ[वा] अविद्यापदेन द्रव्यविनाशकारणद्वयाविद्यमानत्वमुच्यते। अवयवविनाशः, अवयवव्यतिषङ्गविनाशश्च द्रव्यविनाशकारणम्, तदुभयं परमाणोर्नास्तीति शङ्कते— **अथापीति**। आरम्भवाद एव यदि स्थितः, तदा भवेदेवम्, नायमस्तीति निराकरोति— **नावश्यमिति**। परिणामवादे तु विनाशहेत्वन्तरमस्तीत्याह— **यदा त्विति**। **घृतकाठिन्यविलयनवदिति**। न च तत्राप्यवयवविभागादिना काठिन्यविनाश इति शङ्कनीयम्: परमाणुकाठिन्यस्य विनाशकारणद्वयाभावेऽपि विनाशाङ्गीकारात्, कारणगुणविनाशद्वारेण कार्येऽपि गुणविनाश इत्यभ्युपगमात्, कारणगुणद्वारेण कार्ये लौहित्यादिगुणोत्पत्तिवत्। तस्मात् परमाण्ववस्थां विहाय ब्रह्मणः स्वरूपेणैवावस्थानं परमाणुनाश इत्यर्थः।।१५।।

### *न्यायनिर्णयः*

हेतुत्वान्नैवमिति शङ्कते— **अथेति**। अद्रव्यत्वमविद्यमानकारणद्रव्यत्वं, तावतैव नित्यत्वसिद्धौ विशेष्यवैयर्थ्यमित्याह— **तथापीति**। अस्तु तावदेव तर्हि नित्यतानिमित्तं, तत्राह— **तस्येति**। न चानुमानेन कारणानुपलब्धिः, परिच्छिन्नत्वानुमानस्योक्तत्वादिति चकारार्थः। अवयवनाशोऽवयवव्यतिषङ्गनाशश्च द्रव्यनाशकारणं तदुभयासत्त्वमविद्यापदेनोच्यते, तथा च परमाणवो नित्याः, उभयनाशकारणशून्यत्वात्, आत्मवदिति सूत्रार्थ इत्याह— **अथापीति**। हेत्वसिद्धिमाह— **नेति**। आरम्भवादानुपगमं नियमाभावे हेतुमाह— **संयोगेति**। परिणामवादे नाशहेत्वन्तरसंभवादसिद्धिरुद्धृतेत्याह— **यदेति**। न च घृतकाठिन्यनाशेऽपि कारणमव-यवविभागादीति युक्तम्, अणुकाठिन्यस्य नाशकद्वयाभावेऽपि विनाशाङ्गीकारात्। न च तत्काठिन्यं न नश्यति, तत्कार्येऽपि तदनाशापातात्। कारणगुणनाशद्वारा कार्ये तन्नाशाश्रयणात्। तस्मादण्ववस्थां हित्वा ब्रह्मणः स्वरूपेणावस्थानमणुनाश इत्याशयेन-घृतकाठिन्यमुदाहृतम्। प्रत्यनुमानायोगे फलितमाह— **तस्मादिति**। स्पर्शवत्त्वानुमानफलं निगमयति— **तस्मादपीति**।।१५।।

परमाणुवादानुपपत्तौ हेत्वन्तरमाह— **उभयथा चेति**। अणूनामतुल्यगुणत्वे तुल्यगुणत्वे च दोषध्रौव्यात् तद्वादासिद्धिरिति

**गन्धरसरूपस्पर्शगुणा स्थूला पृथिवी, रूपरसस्पर्शगुणाः सूक्ष्मा आपः, रूपस्पर्शगुणं सूक्ष्मतरं तेजः, स्पर्शगुणः सूक्ष्मतमो वायुरित्येवमेतानि चत्वारि भूतान्युपचितापचितगुणानि स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमतारतम्योपेतानि च लोके लक्ष्यन्ते। तद्वत् परमाणवोऽप्युपचितापचितगुणाः कल्प्येरन् न वा? उभयथाऽपि च दोषानुषङ्गोऽपरिहार्य एव स्यात्। कल्प्यमाने तावदुपचितापचितगुणत्व उपचितगुणानां मूर्त्युपचयादपरमाणुत्वप्रसङ्गः। न चान्तरेणापि मूर्त्युपचयं गुणोपचयो भवतीत्युच्यते, कार्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनात्। अकल्प्यमाने तूपचितापचितगुणत्वे परमाणुत्वसाम्यप्रसिद्धये यदि तावत् सर्व एकैकगुणा एव कल्प्येरंस्ततस्तेजसि स्पर्शस्योपलब्धिर्न स्यात्, अप्सु रूपस्पर्शयोः, पृथिव्यां च रसरूपस्पर्शानाम्; कारणगुणपूर्वकत्वात् कार्यगुणानाम्। अथ सर्वे चतुर्गुणा एव कल्प्येरन्, ततोऽप्स्वपि गन्धस्योपलब्धिः स्यात्, तेजसि गन्धरसयोः, वायौ गन्धरूपरसानाम्। न चैवं दृश्यते। तस्मादप्यनुपपन्नः परमाणुकारणवादः।।१६।।**

## अपरिग्रहाच्चात्यन्तमनपेक्षा।।१७।।

### *प्रकटार्थविवरणम्*

**उभयथा च दोषात्**।। इतश्च परमाणुकारणवादोऽनुपपन्न इत्याह— **उभयथा चेति**।[अतुल्यगुणत्वे] तुल्यगुणत्वे चोभयथाऽपि दोषान्निर्मोक्षो नास्तीत्येतद् दर्शयितुं गुणोपचयापचये सति स्थौल्यतारतम्यं दृश्यत इत्याह— **गन्धरसेत्यादिना**। मूर्त्युपचयात् परिमाणोपचयादित्यर्थः। द्रव्यातिरिक्तानामुपचयेऽपि द्रव्यस्य किमिति मूर्त्युपचय इत्याशङ्क्याह— **न चान्तरेणापीति**। गुणानां द्रव्यतादात्म्यात् कार्येषु भूतेषु दृष्ट उपचय इत्यर्थः। द्वितीयपक्षे दोषमाह— **अकल्प्यमाने त्विति**।

**अपरिग्रहाच्चात्यन्तमनपेक्षा**।। शिष्टापरिग्रहाच्चानादरणीयत्वमाह— **अपरिग्रहाच्चेति**।

### *भाष्यभावप्रकाशिका*

**उभयथा च दोषात्**।।१६।। दोषं दर्शयितुं तेषां पक्षमनुवदति— **गन्धरसेति**। आस्तां तावच्छब्दः, वैशेषिकैस्तस्य पृथिव्यादिगुणत्वेनानभ्युपगमादिति चत्वारि भूतानि चतुस्त्रिद्व्येकगुणान्युदाहार्षीत्। अनुभवागमसिद्धमर्थमुक्त्वा विकल्प्य दूषयति— **तद्वदिति**। स्थूलपृथिव्यादिवदित्यर्थः। यस्तु ब्रूते— न गन्धादिसङ्घातः परमाणुः, अपि तु गन्धाद्याश्रयो द्रव्यम्। तथा सति न तदुपचये द्रव्यस्योपचयः; भिन्नत्वात् इति, तं प्रत्याह— **न चान्तरेणेति**। किम्? मूर्तिद्रव्यम्। उपचयः निबध्यता(?)। कुत इति? अनुमानोपपत्तेरित्याह— **कार्येष्विति**। तत्र वक्तव्यम्— सर्वेषामेकैकगुणत्वम्, उत सर्वगुणत्वमिति। आद्यपक्षे दूषणमाह— **यदि तावदिति**। द्वितीयं दूषयति— **अथ सर्व इति**। अस्मिन् कल्पे सर्वेषां स्थौल्यं वायोश्चाक्षुषत्वं च प्रसज्यते इति च द्रष्टव्यम्।।१६।।

### *न्यायनिर्णयः*

वक्तुमनुभवागमसिद्धमर्थमाह— **गन्धेति**। शब्दस्य पृथिव्यादिगुणत्वेन परैरनिष्टत्वाच्चत्वारि भूतानि चतुस्त्रिद्व्येकगुणान्युदाहृत्य विकल्पयति— **तद्वदिति**। स्थूलपृथिव्यादिवदित्यर्थः। पक्षद्वयस्यापि दोषवत्त्वमाह— **उभयथेति**। आद्यमनूद्य दोषानुषक्तिं विशदयति— **कल्प्यमान इति**। मूर्त्युपचयः स्थौल्यम्। द्रव्यातिरिक्तानां गुणानामुपचयेऽपि किमिति द्रव्यस्य स्थौल्यं, तत्राह— **न चेति**। तत्र कार्यलिङ्गमनुमानं हेतुमाह— **कार्येष्विति**। कल्पान्तरमनुवदति— **अकल्प्येति**। सर्वेषामणुत्वाक्रान्तानां साम्यार्थमेकैकगुणत्वं वा चतुर्गुणत्वं वा। तत्राद्यमनूद्य प्रत्याह— **परमाणुत्वेति**। तेषामेकैकगुणत्वेऽपि किमिति कार्येषु नानागुणत्वं न स्यादित्याशङ्क्याह— **कारणेति**। द्वितीयमूनद्य निराह— **अथेत्यादिना**। इष्टापत्तिमाशङ्क्याह— **न चेति**। चतुर्गुणत्वे सर्वेषां स्थौल्याद् वायोश्चाक्षुषत्वं प्रसज्येत, एकैकगुणत्वेऽपि तारतम्यासिद्धिरिति मत्वोपसंहरति— **तस्मादिति**।।१६।।

न केवलमणुवादस्यायुक्तत्वम्, किंतु शिष्टापरिग्रहाद् ग्रन्थतोऽर्थतश्चोपेक्ष्यत्वमित्याह— **अपरिग्रहाच्चेति**। अत्यन्तमिति

**प्रधानकारणवादो वेदविद्भिरपि कैश्चिन्मन्वादिभिः सत्कार्यत्वाद्यंशोपजीवनाभिप्रायेणोपनिबद्धः। अयं तु परमाणुकारणवादो न कैश्चिदपि शिष्टैः केनचिदप्यंशेन परिगृहीत इत्यत्यन्तमेवानादरणीयो वेदवादिभिः।**

**अपि च वैशेषिकास्तन्त्रार्थभूतान् षट् पदार्थान् द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यानत्यन्तभिन्नान् भिन्नलक्षणानभ्युपगच्छन्ति, यथा मनुष्योऽश्वः शश इति। तथात्वं चाभ्युपगम्य तद्विरुद्धं द्रव्याधीनत्वं**

***प्रकटार्थविवरणम्***

सूत्रकृताऽत्यन्तशब्दप्रयोगादसारतां पुनराह— **अपि चेत्यादिना। भिन्नलक्षणानिति।** अयमर्थः— गुणाश्रयो द्रव्यम्। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणि। निर्गुणं सामान्यवत् क्रिया[निर्गुणः सामान्यवदक्रिया]त्मको गुणः। संयोगविभागयोरनपेक्षकारणं कर्म। उत्क्षेपणावक्षेपणगमनाकुञ्चनप्रसारणानि पञ्च कर्माणि। व्यक्तिभेदेऽनुवृत्तप्रत्ययालम्बनं सामान्यम्, परमपरं चेति द्विविधम्। व्यावृत्तिबुद्धिहेतवो विशेषाः। सामान्यविशेषा गोत्वादयः। नित्यद्रव्यवृत्तयः अन्त्यविशेषाः। अयुतसिद्धयोराश्रयाश्रयिभाव इहप्रत्ययहेतुः समवायः। स चैकः सर्वगतो नित्यश्चेति षट् पदार्थान् वर्णयन्ति।

***भाष्यभावप्रकाशिका***

**अपरिग्रहाच्चात्यन्तमनपेक्षा**।।१७।। अत्यन्तमिति विशेषणस्यार्थं दर्शयितुमाह— **प्रधानकारणवाद इति।**

इदानीमुत्सूत्रमेव वैशेषिकं तन्त्रं दूषयति भाष्यकारः— **अपि चेति।** "अपरिग्रहाच्चे" ति चकारसूचितं न्यायशून्यत्वं वा दर्शयति— **अपि चेति।** भिन्नत्वे हेतुः— **भिन्नलक्षणानिति।** तत्र समवायिकारणं द्रव्यम्। सामान्यं वाऽत्र (वत्त्वे) ऽचलनात्मकः[१] समवायिकारणताहीनो गुणः। संयोगविभागयोरसमवायिकारणं कर्म। नित्यमेकमनेकसमवेतं सामान्यम्। एकद्रव्याः स्वभावसन्तो विशेषाः। अयुतसिद्धानामिहप्रत्ययहेतुः समवायः, नित्यः सम्बन्धः समवाय इति वा लक्षणानि। पृथिव्यप्तेजोवाय्वाकाशदिक्कालात्ममनांसि नव द्रव्याणि। शब्द-स्पर्श-रूप-रस-गन्ध-सांसिद्धिकद्रवत्वस्नेहाः सप्त महाभूतविशेषगुणाः। बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माधर्म-संस्कारा नवैवात्मविशेषगुणाः। संस्कारश्च भावना-वेग-स्थितस्थापकलक्षणः स्मृत्यभिघातकटसंवेष्टनादिहेतुस्त्रिविधः। संख्या-परिमाण-संयोग-विभाग-परत्वापरत्व-पृथक्त्व-गुरुत्वाद्य[न्य]ष्टौ गुणाः साधारणाः, इति चतुर्विंशतिर्गुणाः। उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति पञ्चविधं कर्म। सामान्यं द्विविधम्— परं सत्तादि, अपरं च गोत्वादि। आत्म-मनः-पार्थिवाप्य-तैजस-वायवीयपरमाणुष्ववान्तरजातिभिन्नेषु प्रत्येकजातीयानामितरेतरस्वान्तर्गतभेदहेतवोऽनन्ता विशेषा आकाशकालदिक्षु च यथासंभवं भेदहेतवः। एक एव सर्वत्र समवायः। दिक्कालौ च परोपाधिभेदाद् भिन्नाविव। गुणादयश्च द्रव्यादत्यन्तभिन्ना द्रव्ये समवयन्ति

***न्यायनिर्णयः***

विशेषणसूचितमर्थमाह— **प्रधानेति।** सत्कार्यत्वादीत्यादिशब्देनात्मनोऽसङ्गत्वचिद्रूपत्वादि गृह्यते।

चकारसूचितमर्थमाह— **अपि चेति।** परमतस्य न्यायशून्यत्वं वक्तुं तदभ्युपगममाह— **वैशेषिका इति।** तेषां मिथस्तादात्म्यं वारयति— **अत्यन्तेति।** तत्र हेतुः— **भिन्नेति।** तत्र गुणवद् द्रव्यम्। सामान्यवत्त्वे सति प्रत्येकं[२] द्रव्यत्वकर्मत्वयोरनाधारो गुणः। [३]संयोगवियोगयोरसमवायिकारणजातीयं कर्म। नित्यमनेकसमवेतं सामान्यम्। नित्यद्रव्येषु स्वरूपसन्तो विशेषाः। नित्यः संबन्धः समवाय इति भिन्नलक्षणत्वम्। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणि। रूपरसगन्धस्पर्शसंख्यापरिमाण-पृथक्त्वपरत्वापरत्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारगुरुत्वद्रवत्वस्नेहशब्दाश्चतुर्विंशतिर्गुणाः। उत्क्षेपणापक्षेपणा-कुञ्चनप्रसारणगमनानि पञ्चैव कर्माणि। परमपरं च द्विविधं सामान्यम्। अन्त्या विशेषास्त्वनन्ताः। समवायः पुनरेक एवेति मत्वाऽत्यन्तभेदे दृष्टान्तमाह— **यथेति।** अभ्युपगमान्तरमाह— **तथात्वमिति।** अत्यन्तभिन्नत्वमिति यावत्। मनुष्यादत्यन्तभिन्नानामश्वादीनां मनुष्यपारतन्त्र्यविरोधवद् द्रव्यादत्यन्तभिन्नानां गुणादीनामपि द्रव्यपारतन्त्र्यमत्यन्तभिन्नत्वेन विरुद्धमित्याह— **तदिति।** परमाणवः

---

१. 'सामान्यवानचलनात्मकः' इति शोधनीयम्। लक्षणमिदं न्यायलीलावत्यां दृश्यते। द्र. पृ. ७५३।

२. द्रव्यत्वकर्मत्वोभयानाधारत्वं द्रव्यादावप्यस्तीत्यतिव्याप्तिवारणाय प्रत्येकमिति।

३. संयोगविभागोभयासमवायिकारणत्वं विवक्षितम्। तेन संयोगादौ नातिव्याप्तिः। विनश्यदवस्थसमवेतकर्मणि संयोगादिजनकत्वाभावेनाव्याप्तिवारणाय जातिघटितलक्षणानुसरणम्।

**शेषाणामभ्युपगच्छन्ति। तन्नोपपद्यते। कथम्? यथा हि लोके शशकुशपलाशप्रभृतीनामत्यन्तभिन्नानां सतां**

### *प्रकटार्थविवरणम्*

तत्रोच्यते— षट्पदार्था इति समानाभिधाने न संख्या लभ्येत सप्तग्रामा इतिवत्; 'दिक्सङ्ख्ये संज्ञायाम्' इति स्मरणात्। असमानाभिधाने नान्यान्तर्भावः[१]। [२]अवधारणे च नास्ति मानम्, असर्वज्ञस्यायोग्यानुपलब्धेः। सर्वज्ञा[ज्ञवा]दिमतानां च विप्रतिपत्तिः। शक्तिश्चासाधि षट्पदार्थव्यतिरिक्ता। अतो विनावधारणं गां पर्यटति [?][३]।

लक्षणं च न लक्ष्यस्वरूपावगतये, परस्पराश्रयापातात्; लक्ष्यनिष्ठतया दृष्टस्य लक्षणत्वम्, तद्बलाच्च लक्ष्यदृष्टिरिति। नापि द्रव्यलक्षणमद्रव्यव्यावृत्तये; सिद्धे द्रव्यलक्षणे तत्प्रतियोगिकाद्रव्यसिद्धिः, तत्सिद्धौ च तद्व्यावृत्तये द्रव्यलक्षणमिति परस्पराश्रयापातात्। नो खलु त्वत्कुतर्कानुपहतबुद्धिः लौकिको नीलनलिनादिवत् द्रव्यादिस्वरूपं प्रत्येति। अपरथा नीलादिस्वरूप इव द्रव्यादिस्वरूपेऽपि बौद्धादीनां विवादो न स्यात्। क्वचिद् द्रव्यशब्दो यौगिकः। गुणशब्दः शोभनवाची। पुराणादौ तु स्वभाववाची। घटस्य शौक्ल्यमिति तु घटस्य स्वरूपमितिवत्; तस्माल्लोकसिद्धद्रव्यादिस्वरूपमाश्रित्य व्यावृत्त्यवगतये लक्षणाभिधानमित्युक्तम्।

[४]यदप्युदयनादीनां जगल्लक्षणं केवलव्यतिरेकानुमानम्, तथा हि— गुणवद् द्रव्यमिति व्यवहर्तव्यम्, गुणाश्रयत्वात्, न यदेवं न तदेवम्, यथा वस्त्वन्तरमिति, तदपि प्रलापमात्रम्, हेतोरसिद्धत्वात्; सिद्धे द्रव्यगुणविभागे तदाश्रितत्वसिद्धिः, तद्बलाच्च गुणातिरिक्तद्रव्यसिद्धिरिति इतरेतराश्रयता; किञ्च द्रव्याभावप्रमितेः द्रव्यप्रमितिसापेक्षत्वात्, तदसिद्धौ व्यतिरेकानवधारणात् सन्दिग्धानैकान्तिकत्वम्, अप्रसिद्धविशेषणत्वं च सुप्रसिद्धम्। न च केवलव्यतिरेकिणि नाप्रसिद्धविशेषणत्वं दूषणम्, अपरथा केवलव्यतिरेकित्वव्याघातादिति वाच्यम्, अनिष्टापादनस्येष्टापादनत्वात्[५]; अन्यथा घटो नरविषाणविदीर्णः, घटत्वात्, न य एवं न स एवं यथा पट इत्यस्यापि संदनुमानत्वापातात्। तस्मान्न केवलव्यतिरेकिणा द्रव्यादिसिद्धिः।

किञ्च 'पञ्चैते गावः' इत्यादौ संख्यानिवेशो गोत्वादिकमेकं निमित्तमाश्रित्य भवति। द्रव्यादिषु तु नैकं भावत्वं तावन्निमित्तं सामान्यादिषु भावत्वानुगमानङ्गीकारात्; न च प्रामाणिकत्वं पदार्थत्वं वा निमित्तं सप्तपदार्थाभ्युपगमापातात्; अभावस्यापि तथात्वात्; तस्मात् षट्पदार्थकल्पना न प्रामाणिकी। तमसश्च द्रव्यत्वमसाधीति न नवैव द्रव्याणि। काणादादिपरिपठितगुणातिरिक्ताश्च गुणाः क्रौर्यशौर्यादय उपलभ्यन्ते। अन्तर्भावकल्पनायां च सत्येवैकस्मिन् सा लघीयसी। कर्माप्यानमनोन्नमनोर्ध्वज्वलनतिर्यक्पवनादि बहुविधमुपलभ्यते। गमनान्तर्भावाभिधाने तु तदेवैकं स्यात्; उत्क्षेपणादेरपि तदात्मकत्वात्; गमनमपि गच्छतोऽगच्छतो वा दुर्निरूपत्वात् प्रतीतिमात्रगोचरमेव; न च नास्ति, चलतिप्रत्ययस्य प्रत्यक्षत्वात्; [६]न चासौ संयोगविभागावलम्बनः खगगगनसंयोगस्याप्रत्यक्षत्वात्। [७]अत एव न संयोगादिदर्शनानुमेयाः क्रियाः। यतः क्रियोदयः तत एव संयोगाद्युदयादप्रयोजकत्वम्, [८]साध्यातिशये चानैकान्तोऽनवस्था च। [९]सिद्धे व्यक्तिभेदे अणुगत[अनुगति]सिद्धिः, तत्सिद्धौ च तद्व्यञ्जकत्वेन व्यक्तित्वसिद्धिरिति परस्पराश्रयात् न सामान्यसिद्धिः। किं च गुणाश्रयो द्रव्यमित्यूरीकृत्य गुणादीनां सङ्ख्याविनिमयम्[१०], समवायस्य च सर्वगततया महत्परिमाणत्वमुपदिशता द्रव्यैकपदार्थवाद आरभ्यते। न्यूनाधिकसङ्ख्यानिषेधे तु नेयमपीति व्यर्थो विशेषप्रलापः।

इतश्चायुक्त एवायमभ्युपगम इत्याह— **तथात्वमभ्युपगम्येति**। अत्यन्तभिन्नत्वमङ्गीकृत्य तद्विरुद्धं तद्भावाधीनभावत्वं

### *भाष्यभावप्रकाशिका*

समवायवर्जमिति वैशेषिकाणां प्रक्रिया। तत्र परमाणुसमवायव्यतिरिक्ता लोकवेदप्रसिद्धाः। इतरद् द्वयमप्रसिद्धम्।

### *न्यायनिर्णयः*

समवायश्चेत्युभयमत्यन्तमप्रसिद्धमितरत् प्रसिद्धमित्युपेत्यात्यन्तभिन्नत्वं प्रत्याह— **तन्नेति**। पारतन्त्र्यनिर्वाहकमत्यन्तभिन्नत्वं न तद्विरोधीत्याह— **कथमिति**। अत्यन्तभिन्नत्वं नित्यपारतन्त्र्यविरोधि दृष्टमिति व्याप्तिमाह— **यथेति**। विमतं न द्रव्याधीनं, ततोऽत्यन्तभिन्नत्वात्,

---

१. 'षड् गावः' इत्युक्ते न सर्वेषां गवां षट्स्वन्तर्भावः प्रतीयते, तथेति भावः। द्र.वे.तत्त्वा. पृ. २२। २. ननु 'षडेव भावाः' इत्यवधारणात् सर्वभावान्तर्भावप्रतीतिरिति, तत्राह—अवधारण इति। ३. 'अतोऽपि नावधारणं घटां पर्यटति' इति पाठो वेदान्ततत्त्वालोकादवगम्यते। ४. 'यदप्युदयनादिना जगदे—लक्षणं केवलव्यतिरेक्यनुमानम्' इति शुद्धः पाठः वेदान्ततत्त्वालोके दृश्यते। पृ. २२। ५. केवलव्यतिरेकिभङ्गस्येष्टत्वादिति भावः। ६. कर्मणः संयोगादिभिन्नत्वं व्यवस्थापयति—न चेति। 'गगने खगः पतति' इति हि प्रत्यक्षा कर्मप्रतीतिः। सा च तस्य गगनसंयोगरूपत्वे नोपपद्येत। ७. कर्माप्रत्यक्षवादिनं प्राभाकरं निराकरोति—अत एवेति। संयोगविभागौ सातिशयकारणजन्यौ कार्यत्वाद् घटवत् इत्यनुमानम्। द्र. वे. तत्त्वा पृ. २९। अतिशयश्च कर्मरूपः सिध्यति। ८. उक्तानुमानस्य साध्ये कर्मण्येव व्यभिचारमाह—साध्येति। तत्राप्यतिशयान्तराङ्गीकारे त्वाह—अनवस्थेति। ९. सामान्यलक्षणं दूषयति—सिद्ध इति। १०. 'नियमम्' इति पाठो युक्तः। तथा च गुणादीनामपि गुणाश्रयत्वाद् द्रव्यत्वापत्तिरिति भावः।

**नेतरेतराधीनत्वं भवति, एवं द्रव्यादीनामत्यन्तभिन्नत्वान्नैव द्रव्याधीनत्वं गुणादीनां भवितुमर्हति। अथ भवति द्रव्याधीनत्वं गुणादीनाम्, ततो द्रव्यभावे भावाद् द्रव्याभावेऽभावाद् द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग् भवति। यथा देवदत्त एक एव सन्नवस्थान्तरयोगादनेकशब्दप्रत्ययभाग् भवति, तद्वत्। तथा सति सांख्यसिद्धान्तप्रसङ्गः स्वसिद्धान्तविरोधश्चापद्येयाताम्। नन्वग्नेरन्यस्यापि सतो धूमस्याग्न्यधीनत्वं दृश्यते। सत्यं दृश्यते। भेदप्रतीतेस्तु तत्राग्निधूमयोरन्यत्वं निश्चीयते। इह तु 'शुक्लः कम्बलो' 'रोहिणी धेनुः' 'नीलमुत्पल' मिति द्रव्यस्यैव तस्य तस्य तेन तेन विशेषणेन प्रतीयमानत्वान्नैव द्रव्यगुणयोरग्निधूमयोरिव भेदप्रतीतिरस्ति। तस्माद् द्रव्यात्मकता गुणस्य। एतेन कर्मसामान्यविशेषसमवायानां द्रव्यात्मकता व्याख्याता।**

**गुणानां द्रव्याधीनत्वं द्रव्यगुणयोरयुतसिद्धत्वादिति यद्युच्येत, तत्पुनरयुतसिद्धत्वमपृथग्देशत्वं वा**

### *प्रकटार्थविवरणम्*

धर्ममभ्युपगच्छति। तच्चासंभाव्यमानं लोके वैपरीत्यस्यैव दर्शनादित्यर्थः। गुणादयो न द्रव्यादत्यन्तभिन्नाः, न तेन तद्भावाधीनभावाः; यथा शशादय इति प्रयोगः। विपक्षे चैकैकशोऽप्युपलम्भप्रसङ्गः। अनिष्टान्तरमाह— **अथ भवतीत्यादिना**। हेतोरनैकान्तिकत्वं शङ्कते— **नन्वग्नेरिति**। उत्पत्तौ धूमस्याग्न्यधीनत्वेऽपि सत्तायां नास्त्यग्न्यधीनत्वं देशभेदप्रतीतेः, अतो नास्त्यनैकान्तिकत्वमित्याह— **सत्यं दृश्यत इति**।

### *भाष्यभावप्रकाशिका*

तत्र तावत् तेषां भेदो निराक्रियते— **तन्नोपपद्यत इत्यादिना**। व्यतिरेकव्याप्तिमुक्त्वाऽन्वयमाह— **अथेति**। ननु एकस्यानेकावस्थत्वं सांख्यस्य सिद्धान्तः, तव तु परिकल्पिततत्वमेव, अतो न स्वमतसिद्धिरित्याशङ्क्य, तथापि तवापसिद्धान्तः स्यादित्याह— **तथा सतीति**। घटादिद्रव्यकार्यत्वमात्रं गुणानां द्रव्याधीनत्वमिति मन्यमानश्चोदयति— **नन्वग्नेरिति**। न तत्कार्यत्वं तदधीनत्वं ब्रूमः, किन्तु तदाकारताम्। तथा च न व्यभिचार इति परिहरति— **सत्यमेतदिति**। ननु इहापि गुण-द्रव्ययोर्भेदेन निरूपणेत्याशङ्क्याह— **इहेति**। घटरूपम्, घटात् तत्त्वतो न भिद्यते, घटसत्ताप्रतीतिव्यतिरेकेण सत्ताप्रतीतिरहितत्वात्, तत्स्वरूपवदिति एवं गुणान्तरेष्वपि यथासंभवं प्रयोगो द्रष्टव्यः। **एतेनेति**। द्रव्यव्यतिरेकेण पृथगवस्थानाभावाद् द्रव्यस्वरूपवत् ततोऽभिन्नत्वमित्यर्थः।

शङ्कते— **गुणानामिति**। इदानीमेतद् विकल्प्य दूषयति— **तत्पुनरिति**। द्वयोरेकतरस्य वाऽपृथग्देशत्वमिति विकल्प्य नाद्य

### *न्यायनिर्णयः*

यद् यतोऽत्यन्तभिन्नं न तत् तदधीनं, यथा कुशादयः शशादिभ्योऽत्यन्तभिन्नास्तदधीना नेत्यनुमानमाह— **एवमिति**। व्यतिरेकमुक्त्वाऽन्वयमाह— **अथेति**। विमतं द्रव्यादभिन्नं, तद्भावाभावानुविधायिभावाभावत्वात्, तद्वत्। न चाग्निभावाभावानुविधायिभावाभावे धूमे व्यभिचारः, तस्याग्निभानं विनाऽपि भानात्। गुणादेश्च द्रव्यभानं विना भाने तत्पारतन्त्र्यव्याहतिरिति भावः। विमतं द्रव्याद् भिद्यते, भिन्नशब्दप्रत्ययभाक्त्वात्, घटवदित्याशङ्क्य संस्थानादिभेदोपगमेन सिद्धसाध्यत्वमभिप्रेत्याह— **द्रव्यमिति**। आकारविशेषः संस्थानभेदोऽवस्थाभेदस्त्वादिशब्दार्थः। उक्तमर्थं दृष्टान्तेन साधयन् व्यभिचारमाह— **यथेति**। एकस्यानेकावस्थात्वं सांख्यसिद्धान्तः, तव त्वनेकस्य कल्पितत्वमेवातो न स्वमतसिद्धिरित्याशङ्क्य तथापि तवापसिद्धान्तः स्यादित्याह— **तथेति**। निरस्तमेव विधान्तरेणापि निरसितुं शङ्कयति— **नन्विति**। न तदधीनत्वं तदभेदसाधकं, तत्सामानाधिकरण्येन भानं तु तथा, न तद् धूमेऽस्तीति परिहरति— **सत्यमिति**। तत्रेति व्यवहारभूमिरुक्ता। तुल्या गुणादेरपि द्रव्याद्भेदधीरित्याशङ्क्याह— **इह त्विति**। विवादस्थलं सप्तम्यर्थः। विमतं द्रव्यान्न भिद्यते, तत्समानाधिकृतबुद्धिबोध्यत्वात्, संमतवदित्याह— **तस्मादिति**। गुणे दर्शितं न्यायं कर्मादावतिदिशति— **एतेनेति**। विमतं द्रव्याभिन्नं, तत्सत्तास्फूर्तिव्यतिरिक्तसत्तास्फूर्तिशून्यत्वात्, तत्स्वरूपवत्। न च साध्याविशिष्टता, तन्मात्रत्वे साध्ये तन्मात्रसमानाधिकृतधीकृततत्सत्ताव्यतिरिक्तसत्तादिराहित्यस्य हेतुत्वादिति भावः।

गुणादीनां द्रव्यसामानाधिकरण्येन भानं तदभिन्नत्वाभावेऽपि स्यादित्यन्यथासिद्धिं शङ्कते— **गुणानामिति**। उभयत्र गुणग्रहणं

**स्यादपृथक्कालत्वं वाऽपृथक्स्वभावत्वं वा? सर्वथाऽपि नोपपद्यते। अपृथग्देशत्वे तावत् स्वाभ्युपगमो विरुध्येत। कथम्? तन्त्वारब्धो हि पटस्तन्तुदेशोऽभ्युपगम्यते, न पटदेशः। पटस्य तु गुणाः शुक्लत्वादयः पटदेशा अभ्युपगम्यन्ते, न तन्तुदेशाः। तथा चाहुः– 'द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्' (वै.सू. १।१।१०) इति, तन्तवो हि कारणद्रव्याणि कार्यद्रव्यं पटमारभन्ते। तन्तुगताश्च गुणाः शुक्लादयः कार्यद्रव्ये पटे शुक्लादिगुणान्तरमारभन्त इति हिं तेऽभ्युपगच्छन्ति। सोऽभ्युपगमो द्रव्यगुणयोरपृथग्देशत्वेऽभ्युप गम्यमाने बाध्येत। अथापृथक्कालत्वमयुतसिद्धत्वमुच्येत, सव्यदक्षिणयोरपि गोविषाणयोरयुतसिद्धत्वं प्रसज्येत। तथाऽपृथक्स्वभावत्वे त्वयुतसिद्धत्वे न द्रव्यगुणयोरात्मभेदः संभवति, तस्य तादात्म्येनैव प्रतीयमानत्वात्।**

### *प्रकटार्थविवरणम्*

अन्यथासिद्धिमाशङ्क्य परिहरति— **गुणानां द्रव्याधीनत्वमित्यादिना**। प्रथमपक्षे दोषमाह— **अपृथग्देशत्व इति**। गुणानां पटो देशः, पटस्य तन्तवो न पट एवेति भिन्नदेशत्वाभ्युपगमादित्यर्थः। काणादाभ्युपगममुद्भाव्य विवृणोति— **तथा चाहुरित्यादिना**। द्वितीयं दूषयति— **अथापृथक्कालत्वमिति**। तृतीये दोषमाह— **अपृथक्स्वभावत्वे त्विति**। यच्च

### *भाष्यभावप्रकाशिका*

इत्याह— **अपृथग्देशत्व इति**। अभ्युपगमे किं मानमिति? सूत्रमित्याह— **तथा चाहुरिति**। भवदुक्तोऽर्थोऽस्मिन्न प्रतीयत इत्याशङ्क्य सूत्रं व्याचष्टे— **तन्तवो हीति**। न च पृथगाश्रयाश्रयित्वमयुतसिद्धिः; तद्विपरीतमयुत.....द्व्यणुकारम्भकयोः परमाण्वोः सम्बन्धे व्यभिचारात्, परमाणूनां निष्प्रदेशतयाऽनाश्रयत्वात्।

अथ सम्बन्धिनोः कार्ययोः सम्बन्धिभ्यामन्यदेशत्वं युतसिद्धिः, ततोऽन्याऽयुतसिद्धिः, नित्ययोस्तु सम्बन्धिनोर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वं युतसिद्धिः। तथा सत्याकाश-परमाण्वोः, परमाण्वोश्च संयोगे युतसिद्धिः सिद्धा भवति,. गुणगुणिनोश्च शौक्ल्य-पटयोरयुतसिद्धिः सिध्यति। न हि तत्र शौक्ल्य-पटाभ्यां सम्बन्धिभ्यामन्यदेशौ शौक्ल्य-पटौ, सत्यपि पटस्य तदन्यतन्तुदेशत्वे शौक्ल्यस्य सम्बन्धिपटदेशत्वात्, तन्न; आत्माकाशयोरजसंयोगे द्विविधाया अपि युतसिद्धेरसंभवात्। न हि तयोः पृथगाश्रयाश्रयित्वम्; अनाश्रयत्वात्, नापि द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वम्; अमूर्तत्वेनोभयोरपि निष्क्रियत्वात्। अतस्तत्र व्यभिचारः। स एव नास्तीति चेत्, मैवम्; प्रमाणसिद्धत्वात्। आकाश आत्मना संयुज्यते संयोगित्वात् घटवत्। न च मूर्तत्वक्रियावत्त्वादिरुपाधिः; तद्व्यतिरेकेऽसंयोगित्व-स्यैवोपाधित्वात्। न च सम्बन्धिनोरन्यतरस्यापृथग्देशत्वमयुतसिद्धिः, घटाकाशसम्बन्धे व्यभिचारात्। अत सम्बन्धिदेशत्वे सतीति विशिष्यात्, तथापि सामान्य-व्यक्त्योरयुतसिद्धिर्न स्यात्; सामान्यस्यानेकव्यक्तिदेशत्वात्। न तु पृथग्देशत्वं नामान्यतरस्य सम्बन्धिदेशत्वम्; समवायस्य समवायिदेशतया समवायसमवायिनोः कुण्ड-बदरयोरप्ययुतसिद्ध्यापत्त्या समवायान्तरप्रसङ्गाच्चेति भावः। **तस्य तादात्म्येनेति**। सामानाधिकरण्यप्रत्ययस्य न समवायगोचरत्वम्, तथा सति पटे शुक्ल इत्यवभासप्रसङ्गादित्यर्थः।

### *न्यायनिर्णयः*

कर्मादिरुपलक्षणम्। तद् दूषयितुं विकल्पयति— **तदिति**। पक्षत्रये दोषं प्रतिजानीते— **सर्वथेति**। अपृथग्देशत्वं द्वयोरेकतरस्य वा? तत्राद्ये दोषमाह— **अपृथगिति**। कथं स्वाभ्युपगमः, तद्विरोधो वा कथमित्याह— **कथमिति**। प्रथमं स्वाभ्युपगमं दर्शयति— **तन्त्विति**। तत्र काणादं सूत्रं प्रमाणयति— **तथा चेति**। उक्तोऽर्थोऽत्र न भातीत्याशङ्क्य व्याचष्टे— **तन्तवो हीति**। स्वाभ्युपगमं दर्शयित्वा तद्विरोधं दर्शयति— **स इति**। न च संबन्धिनोरन्यतरस्यापृथग्देशत्वमयुतसिद्धत्वं, घटाकाशसंयोगे व्यभिचारात्। नापि पृथगाश्रयानाश्रितत्वं तथा, परमाण्वाकाशसंबन्धे व्यभिचारात्। एतेन संबन्धिनोर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वराहित्यं तथेति व्याख्यातम्। अजसंयोगपक्षे दिक्कालसंयोगे व्यभिचारात्। कालो दिशा संयुज्यते, संयोगित्वात्, घटवदिति तत्सिद्धिः। न च मूर्तत्वादिरुपाधिः, संयोगित्वस्यैव तद्व्यतिरेकप्रयोजकत्वादिति भावः। द्वितीयमुत्थाप्य निरस्यति— **अथेत्यादिना**। तृतीयमनूद्य प्रत्याह— **अपृथगिति**। तयोरात्मभेदायोगे हेतुमाह— **तस्येति**। न हि सामानाधिकरण्यधीः समवायार्था, 'पटे शुक्ल' इति धीप्रसङ्गादित्यर्थः।

**युतसिद्धयोः संबन्धः संयोगोऽयुतसिद्धयोस्तु समवाय इत्ययमभ्युपगमो मृषैव तेषाम्, प्राक् सिद्धस्य कार्यात् कारणस्यायुतसिद्धत्वानुपपत्तेः। अथान्यतरापेक्ष एवायमभ्युपगमः स्यादयुतसिद्धस्य कार्यस्य कारणेन संबन्धः समवाय इति, एवमपि प्रागसिद्धस्यालब्धात्मकस्य कार्यस्य कारणेन संबन्धो नोपपद्यते, द्वयायत्तत्वात् संबन्धस्य। सिद्धं भूत्वा संबध्यत इति चेत्, प्राक्कारणसंबन्धात् कार्यस्य सिद्धावभ्युपगम्यमानायामयुतसिद्ध्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते इतीदं दुरुक्तं स्यात्। यथा चोत्पन्नमात्रस्याक्रियस्य कार्यद्रव्यस्य विभुभिराकाशादिभिर्द्रव्यान्तरैः संबन्धः संयोग एवाभ्युपगम्यते, न समवायः; एवं कारणद्रव्येणापि संबन्धः संयोग एव स्यान्न समवायः।**

**नापि संयोगस्य समवायस्य वा संबन्धस्य संबन्धिव्यतिरेकेणास्तित्वे किंचित् प्रमाणमस्ति।**

### *प्रकटार्थविवरणम्*

द्विवचनप्रयोगादुभयोरयुतसिद्धत्वमुक्तम्, तदप्यसदित्याह— **अयुतसिद्धयोरिति**। कार्यस्य कारणात् पृथक्सिद्धिर्नास्तीति एकस्यैवायुतसिद्धत्वमुभयोरुपचर्यत इति व्याख्याय दूषयति— **अथान्यतरापेक्ष एवायमित्यादिना**। यदि संबन्धनिर्वाहाय कारणसंबन्धात्प्रागेव कार्यसिद्धिरभ्युपगम्यते, तदानीं युतसिद्धयोः संयोग एव स्यादित्याह— **सिद्धं भूत्वेत्यादिना**। ननु कर्मजा प्राप्तिः संयोग उच्यते; कार्यस्य तु न कर्मजा कारणप्राप्तिः, अतो न संयोग इत्याशङ्क्याह— **यथा चेति**। एवं तावत् संबन्धसद्भावमङ्गीकृत्य संयोग एव स्यादित्यापादितम्। इदानीं संबन्धोऽपि निरूपणं न सहत इत्याह— **नापि संयोगस्येति**। स्वातन्त्र्येणानुपलभ्यमानत्वादित्यर्थः।

### *भाष्यभावप्रकाशिका*

अपि च अयुतसिद्धशब्दोऽपृथगुत्पत्तौ मुख्यः। सा च न भवन्मते द्रव्यगुणयोरस्ति; द्रव्यस्य प्राक् सिद्धेः, गुणस्य पश्चादुत्पत्तेरित्याह— **युतसिद्धयोरिति**। कारणस्य युतसिद्धावपि न कार्यस्य साऽस्तीति शङ्कते— **अथान्यतरेति**। तर्ह्यविद्यमानस्य सम्बन्धः, किं वा विद्यमानस्येति। आद्यपक्षे दूषणमाह— **एवमिति**। द्वितीयकल्पमाह— **सिद्धमिति**। **दुरुक्तं स्यादिति**। अप्राप्तयोः प्राप्तिः संयोगः, स नास्तीति पृथग्देशत्वं न शङ्कनीयम्; उत्पन्नमात्रस्य कार्यस्यैकस्मिन् क्षणे कारणाप्राप्तेर्विद्यमानत्वादित्यर्थः। ननु क्रियापूर्वकः सम्बन्धः संयोगः, तद्विपरीतः समवाय इत्यक्रियापूर्वत्वात् कार्य-कारणयोः सम्बन्धः समवाय इति, अत्राह— **यथा चेति**। संयोगजसंयोगस्याप्यभ्युपगमान्न क्रियाजन्य एव संयोग इत्यर्थः।

अपि च सम्बन्धिरूपातिरिक्ते सम्बन्धे सिद्धे संयोगोऽयं समवायोऽयमिति पृथग्लक्षणमुच्येत, स एव तु नास्ति, सम्बन्धस्य सम्बन्धेऽनवस्थाप्रसङ्गात्, असम्बन्धे च नियामकतानुपपत्तेः। तस्मात् कार्यमपि कारणे परिकल्पितमेव, न तु समवेतमित्येतदाह—

### *न्यायनिर्णयः*

गुणादीनां द्रव्यस्य चायुतसिद्धत्वं निरस्याभ्युपगमान्तरं निरस्यति— **युतेति**। अयुतसिद्धतोपगमः संबन्धिद्वयापेक्षोऽन्यतरापेक्षो वा? नाद्य इत्याह— **प्रागिति**। द्वितीयमुत्थापयति— **अथेति**। अयुतसिद्धत्वमुपेत्य समवायं दुदूषयिषुः संबन्धोऽसिद्धस्य सिद्धस्य वेति विकल्प्याद्यं निरस्यति— **एवमिति**। द्वितीयं शङ्कयति— **सिद्धमिति**। तर्हि सतोरप्राप्तयोः प्राप्तिः संयोगः, समवायस्तु नैवमित्युपगमात् कार्यकारणयोरपि संयोगापत्तिरित्याह— **प्रागिति**। क्रियापूर्वकः संबन्धः संयोगः, न च कार्यकारणयोः सोऽस्तीति समवायसिद्धिरित्याशङ्क्याह— **यथेति**।

किंच संबन्ध्यतिरिक्ते संबन्धे सिद्धे 'संयोगः' 'समवाय' इति विवेकः। न संबन्धोऽतिरिक्तोऽस्ति, तस्य संबन्धिसंबन्धेऽनवस्थानात्, असंबन्धे नियामकत्वायोगात्। तथा च कार्यं न कारणे समवेतं किंतु कल्पितमेवेत्याह— **नापीति**। संबन्धः संबन्धिभ्यां वस्त्वन्तरं,

**संबन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययदर्शनात् तयोरस्तित्वमिति चेत्? न; एकत्वेऽपि स्वरूपबाह्यरूपापेक्षयाऽनेकशब्दप्रत्ययदर्शनात्। यथैकोऽपि सन् देवदत्तो लोके स्वरूपं संबन्धिरूपं चापेक्ष्यानेकशब्दप्रत्ययभाग् भवति— मनुष्यो ब्राह्मणः श्रोत्रियो वदान्यो बालो युवा स्थविरः पिता पुत्रः पौत्रो भ्राता जामातेति, यथा चैकाऽपि सती रेखा स्थानान्यत्वेन निविशमानैकदशशतसहस्रादिशब्दप्रत्ययभेदमनुभवति, तथा संबन्धिनोरेव संबन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययार्हत्वम्, न व्यतिरिक्तवस्त्वस्तित्वेन, इत्युपलब्धिलक्षणप्राप्तस्यानुपलब्धेरभावो वस्त्वन्तरस्य। नापि संबन्धिविषयत्वे संबन्धशब्दप्रत्यययोः संततभावप्रसङ्गः। स्वरूपबाह्यरूपापेक्षयेत्युक्तोत्तरत्वात्।**

**तथाऽण्वात्ममनसामप्रदेशत्वान्न संयोगः संभवति, प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगदर्शनात्।**

***प्रकटार्थविवरणम्***

संबन्धः संबन्धिभ्यो वस्त्वन्तरम्, तद्विलक्षणशब्दप्रत्ययगोचरत्वाद् वस्त्वन्तरवदिति मानमाह— **संबन्धिशब्देति**। अनैकान्तिको हेतुरित्याह— **नैकत्वेऽपीति**। ननु संबन्धस्य पृथग्वस्त्वभावे [ग्वस्तुत्वाभावे] संबन्धिनि दृष्टे सदा संबन्धबुद्धिप्रसङ्ग इत्याशङ्क्याह— **नापि संबन्धिविषयत्व इति**। स्वरूपेणाङ्गुल्योरङ्गुलिशब्दप्रत्ययविषयत्वम्; नैरन्तर्यापेक्षया तु तयोः संयोग इति शब्दप्रत्ययविषयत्वमित्यर्थः। इदानीं साङ्गयोः [सांशयोः] व्यावहारिकसंयोगमभ्युपगम्य निरंशयोर्निरस्यति— **तथाऽण्वात्ममनसामिति**। संयोगस्याव्याप्यवृत्तित्वाभ्युपगमात्

***भाष्यभावप्रकाशिका***

**नापीति**। शङ्कते— **सम्बन्धीति**। तत्तदनिर्वचनीयानेकविशेषावस्थाभेदापेक्षया एकस्मिन्नपि नानाशब्दप्रत्ययावुपपन्नाविति परिहरति— **न, एकत्वेऽपीति**। तत्र दृष्टान्तमाह— **यथैक इति**। तत्र स्वगतविशेषापेक्षया मनुष्यो ब्राह्मणः, वदान्यः, स्वगतावस्थापेक्षया बाल इत्यादि, स्वक्रियापेक्षया पितेत्यादि। निदर्शनान्तरमाह— **यथा चेति**। दार्ष्टान्तिके योजयति— **तथा सम्बन्धिनोरिति**। अनिर्वाच्यभेदाभिप्रायेण भेदव्यपदेश इति द्रष्टव्यम्। निगमयति— **उपलब्धिलक्षणेति**। तस्मात् कात्स्न्यैकदेशाभ्यामन्तरालदेशशून्यौ पदार्थौ समवाय-संयोगशब्दप्रत्ययभाजाविति भावः। ननु सम्बन्धिविषयत्वे तस्य सदा भावात् सम्बन्धिशब्दप्रत्ययावपि सदा स्यातामिति, अत आह— **नापीति**।

पूर्वं द्व्यणुकादिकार्यहेतुमेव परमाण्वोः संयोगं निराकार्षीत्, इदानीं ज्ञानोत्पत्तिहेतुभूतमात्ममनस्संयोगमदृष्टवदात्मसंयोगं च परमाणूनां निराकरोति— **तथाऽण्वात्ममनसामिति**। आत्मनोऽप्रदेशत्वादणुमनसोस्तत्संयोगः कृत्स्नात्मवृत्तिरिति तयोरपि परममहत्त्वं

***न्यायनिर्णयः***

तद्विलक्षणशब्दधीगम्यत्वात्, वस्त्वन्तरवदिति शङ्कते— **संबन्धीति**। तत्तदनिर्वाच्यानेकविशेषापेक्षयैकस्मिन्नपि नानाशब्दधियाविति सिद्धसाध्यत्वमाह— **नेति**। सव्यभिचारश्च हेतुरिति मन्वानो दर्शनं विशदयति— **यथेति**। स्वगतविशेषापेक्षया नानाशब्दधी-भाक्त्वमुदाहरति— **मनुष्येति[ष्य इति]**। स्वगतावस्थापेक्षया तद् दर्शयति— **बाल इति**। स्वगतक्रियापेक्षया तदुपन्यस्यति— **पितेति**। व्यभिचारप्राचुर्यार्थमुदाहरणान्तरमाह— **यथा चेति**। दृष्टान्तस्थधर्मं दार्ष्टान्तिके योजयति— **तथेति**। परोक्तानुमाननिरा-सफलमुपसंहरति— **इत्युपलब्धीति**। उपलब्धिरेव गमकतया लक्षणं यस्य तेन योग्यत्वेन प्राप्तस्यानुपलब्धिस्तस्मिन् प्रमाणपञ्चकानुपपत्तिस्ततो वस्त्वन्तरस्य संबन्ध्यतिरिक्तसंबन्धस्याभावो निश्चितः, योग्यानुपलब्धेरभावबोधित्वात्। तस्मात् कात्स्न्यैकदेशाभ्यामन्तरालदेशशून्यावस्थार्थौ समवायसंयोगशब्दधीगम्यावित्यर्थः। संबन्धशब्दधियोः संबन्ध्यर्थत्वे तस्य सदाभावात् ते सदा स्यातामित्याशङ्क्याह— **नापीति**। स्वरूपेणाङ्गुल्यो रूपरूपिणोश्च तत्तच्छब्दधीविषयत्वं, नैरन्तर्यात्तु संबन्धशब्दधीगम्यतेत्ये-**कत्वेऽपी**त्यत्रोक्तत्वान्न यावत्संबन्धिसत्त्वं शब्दधीप्रसक्तिरित्यर्थः।

किंच सांशयोः संयोगेऽपि निरंशयोर्नासावित्याह— **तथेति**। द्व्यणुकादिकार्यहेतुरेव परमाण्वोः संयोगो निरस्तः। सम्प्रति

**कल्पिताः प्रदेशा अण्वात्ममनसां भविष्यन्तीति चेत्? न; अविद्यमानार्थकल्पनायां सर्वार्थसिद्धिप्रसङ्गात्। इयानेवाविद्यमानो विरुद्धोऽविरुद्धो वाऽर्थः कल्पनीयो, नातोऽधिक इति नियमहेत्वभावात्। कल्पनायाश्च स्वायत्तत्त्वात् प्रभूतत्वसंभवाच्च। न च वैशेषिकैः कल्पितेभ्यः षड्भ्यः पदार्थेभ्योऽन्येऽधिकाः शतं सहस्रं वाऽर्था न कल्पयितव्या इति निवारको हेतुरस्ति। तस्माद् यस्मै यस्मै यद्यद् रोचते तत्तत् सिध्येत्। कश्चित् कृपालुः प्राणिनां दुःखबहुलः संसार एव मा भूदिति कल्पयेत्। अन्यो वा व्यसनी मुक्तानामपि पुनरुत्पत्तिं कल्पयेत्। कस्तयोर्निवारकःस्यात्।**

**किंचान्यत्। द्वाभ्यां परमाणुभ्यां निरवयवाभ्यां सावयवस्य द्व्यणुकस्याकाशेनेव संश्लेषानुपपत्तिः। न ह्याकाशस्य पृथिव्यादीनां च जतुकाष्ठवत् संश्लेषोऽस्ति। कार्यकारणद्रव्ययोराश्रिताश्रयभावोऽन्यथा नोपपद्यत इत्यवश्यं कल्प्यः समवाय इति चेत्? न; इतरेतराश्रयत्वात्। कार्यकारणयोर्हि**

### *प्रकटार्थविवरणम्*

एकोपाधावेकस्य भावाभावौ युगपद्विरुद्धौ स्यातामिति भावः। निरस्तमपि कल्पितप्रदेशपक्षं पुनरुद्भावयति दोषान्तराभिधित्सया— **कल्पिता इत्यादिना**। इदानीं विशेषतः समवायं निराकर्तुमुपक्रमते— **किञ्चान्यदिति**। परमाणुद्व्यणुके समवायानर्हे, निरवयवसावयवद्रव्यत्वात्, भूम्याकाशवदित्यर्थः। भूम्याकाशयोरकार्यकारणद्रव्यत्वात् समवायानर्हत्वमित्यप्रयोजको हेतुरित्याह— **कार्यकारणद्रव्ययोरिति**। दूषयति— **नेतरेतराश्रयत्वादिति**।

### *भाष्यभावप्रकाशिका*

स्यादित्यपि द्रष्टव्यम्। कल्पितप्रदेशवत्त्वं परमार्थतः सिध्यति, किं वा न। उत्तरपक्षे निष्प्रयोजनवत्त्वम्, अथ कल्पनया सत्त्वं सिध्यतीति, तत्राह— **न; अविद्यमानेति**। ननु न सर्वार्थसिद्धिः, षण्णामेव पदार्थानां संभवादित्याशङ्क्याह— **न च वैशेषिकैरिति**। कल्पनया तथात्वसिद्धौ संसार-मोक्षयोरनियतत्वं च स्यादित्याशङ्क्याह— **कश्चिदिति**।

कारणात् कार्यस्यात्यन्तभेदे भेदेनैव तयोरुपलब्धिः स्यात्। अथ सम्बन्धविशेषाद् अग्न्ययःपिण्डयोरिवैकत्वेनोपलब्धिः स्यादिति, अत आह— **किं चान्यदिति**। यथा सम्बन्धाभावेऽपि समवायः सम्बन्धः संभवति, आश्रयाश्रयिभावानुपपत्ति-

### *न्यायनिर्णयः*

ज्ञानाद्यसमवायिकारणमात्ममनःसंयोगमदृष्टवदात्मसंयोगं चाणूनां निरस्यति— **अण्वात्मेति**। आत्मनोऽप्रदेशत्वादणुमनसोस्तत्संयोगः सकलात्मवृत्तिरिति तयोरपि परममहत्त्वं स्यादिति भावः। असंभवे हेत्वन्तरमाह— **प्रदेशेति**। निरस्तमपि कल्पितप्रदेशं दोषान्तराभिधित्सयोद्भावयति— **कल्पिता इति**। कल्पनया तद्वत्त्वस्य सत्त्वमसत्त्वं वा? द्वितीये कल्पना वृथेति मत्वाऽऽद्यं प्रत्याह— **नेत्यादिना**। अविद्यमानस्य प्रदेशवत्त्वलक्षणस्यार्थस्य कल्पनया सत्त्वसिद्धाविति यावत्। तत्र हेतुः— **इयानिति**। कल्पकाधीनत्वात् कल्पनाया न तया सर्वार्थसिद्धिरित्याशङ्क्याह— **कल्पनायाश्चेति**। तथापि परिमितत्वात् तस्या न सर्वार्थसाधकत्वं, तत्राह— **प्रभूतत्वेति**। षण्णामेव पदार्थानां संभवान्न सर्वार्थसिद्धिरित्याशङ्क्याह— **न चेति**। निवारकाभावे फलं सर्वार्थसिद्धि-मुपसंहरति— **तस्मादिति**। किंच कल्पनया वस्तुसिद्धौ संसारमोक्षयोरनियतिरिति ब्रुवाणः संसारस्यानियतिमाह— **कश्चिदिति**। मुक्तेरनियतिमाह— **अन्यो वेति**। [१]अवस्थाद्वये हेतुमाह— **कस्तयोरिति**।

कार्यकारणयोरत्यन्तभेदे तथैवोपलब्धिप्राप्तौ समवायादेकत्वसिद्धिरित्याशङ्क्य विशेषतः समवायं दूषयति— **किंचेति**। दृष्टान्तं स्पष्टयति— **न हीति**। कार्यकारणयोरर्थापत्त्या समवायः सिध्यतीति शङ्कते— **कार्येति**। द्व्यणुकपरमाणू न समवायार्हौ, सावयवनिरवयवद्रव्यत्वात्, भूम्याकाशवदित्यत्राकार्यकारणद्रव्यत्वात् तयोः समवायानर्हतेत्यप्रयोजकत्वमाशङ्क्याह— **नेत्यादिना**।

१. 'अव्यवस्था' इति पाठः स्यात्।

**भेदसिद्धावाश्रिताश्रयभावसिद्धिराश्रिताश्रयभावसिद्धौ च तयोर्भेदसिद्धिः कुण्डबदरवदितीतरेतराश्रयता स्यात्। न हि कार्यकारणयोर्भेद आश्रिताश्रयभावो वा वेदान्तवादिभिरभ्युपगम्यते, कारणस्यैव संस्थानमात्रं कार्यमित्यभ्युपगमात्।**

**किंचान्यत्। परमाणूनां परिच्छिन्नत्वाद् यावत्यो दिशः– षडष्टौ दश वा, तावद्भिरवयवैः सावयवास्ते स्युः, सावयवत्वादनित्याश्चेति नित्यत्वनिरवयवत्वाभ्युपगमो बाध्येत। यांस्त्वं दिग्भेदभेदिनोऽवयवान् कल्पयसि, त एव परमाणव इति चेत्? न; स्थूलसूक्ष्मतारतम्यक्रमेणाऽऽपरमकारणाद् विनाशोपपत्तेः। यथा पृथिवी द्व्यणुकाद्यपेक्षया स्थूलतमा वस्तुभूताऽपि विनश्यति, ततः सूक्ष्मं सूक्ष्मतरं च पृथिव्येकजातीयकं विनश्यति, ततो द्व्यणुकम्, तथा परमाणवोऽपि पृथिव्येकजातीयकत्वाद् विनश्येयुः। विनश्यन्तोऽप्यवयवविभागेनैव**

### *प्रकटार्थविवरणम्*

पूर्वं निरवयवत्वमभ्युपगम्य दूषणमभाणि; तदपीदानीं नास्तीत्याह— **किं चान्यदिति**। परमाणवः सावयवाः, दिग्भेदव्यवस्थापकत्वात्, पटवदित्यर्थः। विपक्षे च परमाण्वपेक्षया प्राचीप्रतीच्यादिविभागाभावप्रसङ्गो बाधः। वैशषिकः स्वरहस्यमुद्घाटयति— **यांस्त्वमिति**। ये दिग्भेदव्यवस्थापकाः परमाण्ववयवाः; त्वया स्वीक्रियन्ते, त एव परमाणवः; तेऽपि सावयवाश्चेत् तर्हि तदवयवा एवेति। एवं यतः परं विभागो नास्ति स च परमाणुः निरवयवः, स च नित्यः परिमाणतारतम्यविश्रान्त्यधिकरणत्वात्, आत्मवदिति भावः। परिहरति— **न स्थूलेति**। अयमाशयः— किं सर्वथैव विभागायोग्यं वस्तु परमाणुः, किं वा अस्मदादिभिरविभज्यमानावयवम्? आद्ये परमकारणं सन्मात्रमेव परमाणुरिति तस्य निरवयवत्वसाधने सिद्धसाधनम्; द्वितीये परमकारणात् सन्मात्रादतिरिक्तं किञ्चित् सूक्ष्मं वस्तु परमाणुरस्तु; स च विनष्टुमर्हति पृथिव्यादिजातीयत्वात्, पराभिमतद्व्यणुकवदिति।

### *भाष्यभावप्रकाशिका*

गम्यस्यानिराकार्यत्वादित्याशङ्कते— **कार्यकारणयोरिति**। अन्यतरव्यतिरेकेणान्यतरस्य पृथक् सिद्धत्वाद् नेतरेतराश्रयत्वमित्याशङ्क्याह— **न हि कार्येति**।

**किञ्चान्यदिति**। परमाणवः, सावयवाः, परिच्छिन्नत्वाद्, घटादिवत्। अथवा परिच्छिन्नत्वम्, सावयवमात्रवृत्ति, परिच्छिन्नमात्रवृत्तित्वात्, घटत्ववत्। अपरिच्छिन्नत्वे आकाशवत् परमाणुत्वव्याघात इत्यर्थः। शङ्कते— **यांस्त्वमिति**। किं सूक्ष्मतया न विनश्यन्ति, अथ निरवयवत्वात्। पूर्वस्मिन् कल्प आह— **न; स्थूलेति**। वस्तुभूताऽपीति तन्मताभिप्रायेणोक्तम्। परमाणवः, न नित्याः,

### *न्यायनिर्णयः*

अन्यतरव्यतिरेकेणान्यतरस्य सिद्धिसंभवे कथमेवमित्याशङ्क्याह— **न हीति**। कार्यस्य कारणानाश्रितत्वे स्वातन्त्र्यं स्यादित्याशङ्क्याह— **कारणस्येति**।

परमाणूनां निरवयवत्वमुपेत्योक्तम्। तदेव नास्तीत्याह— **किंचेति**। परमाणवः सावयवाः, परिच्छिन्नत्वात्, घटवत्। परिच्छिन्नत्वं सावयवमात्रवृत्ति, परिच्छिन्नमात्रवृत्तित्वात्, घटत्ववदित्यर्थः। तेषां सावयवत्वे दिग्भेदव्यवस्थापकत्वं हेतुरित्याह— **यावत्य इति**। सावयवत्वफलमाह— **सावयवत्वादिति**। उक्तानुमानफलमाह— **इति नित्यत्वेति**। ये दिग्भेदव्यवस्थापकास्त्वया परमाण्ववयवाः स्वीकृतास्त एव मम परमाणवः, तेऽपि सावयवाश्चेत् तदवयवा एवेत्येवं यतः परं न विभागः स परमाणुर्निरवयवः, स च नित्यः परिमाणतारतम्यविश्रान्त्याधारत्वादात्मवदिति शङ्कते— **यानिति**। किं सर्वथैव विभागायोग्यं वस्तु परमाणुरुतास्मदादिभिरविभज्यमानावयवम्? आद्ये न परमाणोर्दिग्भेदावधित्वं, मूलकारणस्य सन्मात्रस्यैव सर्वथा विभागायोग्यत्वात् तस्य च निरवयवत्वं सिद्धमेव। द्वितीये सन्मात्रान्मूलकारणादतिरिक्तं किंचन सूक्ष्मं वस्तु परमाणुरस्तु, स च विनष्टुमर्हति, पृथिव्यादिजातीयत्वात्, पराभीष्टद्व्यणुकवदित्याह— **नेति**। दृष्टान्तं समर्थयते— **यथेति**। वस्तुभूताऽपीति परमतेनोक्तम्। दार्ष्टान्तिकं निगमयति— **तथेति**।

**विनश्यन्तीति चेत्? नायं दोषः। यतो घृतकाठिन्यविलयनवदपि विनाशोपपत्तिमवोचाम। यथा हि घृतसुवर्णादीनामविभज्यमानावयवानामप्यग्निसंयोगाद् द्रवभावापत्त्या काठिन्यविनाशो भवति, एवं परमाणूनामपि परमकारणभावापत्त्या मूर्त्यादिविनाशो भविष्यति। तथा कार्यारम्भोऽपि नावयवसंयोगेनैव केवलेन भवति, क्षीरजलादीनामन्तरेणाप्यवयवसंयोगान्तरं दधिहिमादिकार्यारम्भदर्शनात्। तदेवमसारतरतर्कसंदृब्धत्वादीश्वर-कारणश्रुतिविरुद्धत्वाच्छ्रुतिप्रवणैश्च शिष्टैर्मन्वादिभिरपरिगृहीतत्वादत्यन्तमेवानपेक्षाऽस्मिन् परमाणुकारणवादे कार्या श्रेयोऽर्थिभिरिति वाक्यशेषः।।१७।।**

इति तृतीयं परमाणुजगदकारणत्वाधिकरणम्।।

### *प्रकटार्थविवरणम्*

नित्याः परमाणवः निरवयवद्रव्यत्वात्, आत्मवदित्याह— **विनश्यन्त इति**। विपक्षबाधकाभावादप्रयोजक इत्याह— **नायं दोष इति**। यच्चानुमानं परमाणुसद्भावे— सावयवं संयोगसचिवानेकद्रव्यारब्धमिति, तद् व्यभिचारयति— **तथा कार्यारम्भोऽपीति**। पूर्वमेव संयुक्तावयवस्य क्षीरादेः कार्यारम्भकाले अवयवविभागानुपलम्भात् नास्ति संयोगसचिवानां बहूनामारम्भकत्वमित्यर्थः।

यच्च कार्यद्रव्यं स्वपरिमाणादणुतरपरिमाणारब्धमित्यनुमानम्, तदप्यनैकान्तिकं दीर्घदुकूलारब्धरज्जुद्रव्यस्य ह्रस्वपरिमाणत्वदर्शनात्। ननु दुकूलस्यान्त्यावयवित्वात् संयोगमात्रम्, न तदारब्धं कार्यमिति। कोऽयमन्त्यावयवी? यः कार्यस्यानारम्भकः स इति चेत्, तर्हि प्राप्तमितरेतराश्रयत्वम्; यत्संयोगे कार्यं नोपलभ्यते स इति चेत्, तर्हि पार्थिवसालिलत्रसरेण्वोरपि प्रसङ्गः। किञ्च द्वितन्तुकरज्जुद्रव्यमपि ते न स्यात्, तत्रापि संयोगमात्रं भातीति वक्तुं शक्यत्वात्। अभूत्वा भावित्वात् कार्यत्वं तु समानम्। ततोऽन्त्यावयवित्वं

### *भाष्यभावप्रकाशिका*

पृथिव्यादिबुद्धिगोचरत्वात्, पृथिव्याद्येकदेशवत्। उत्तरकल्पमाशङ्क्य निराकरोति— **विनश्यन्त इत्यादिना**। यथाऽवयवतत्संयोगविनाशौ विनाऽपि सुवर्णपिण्डो विनश्यति, संयोगान्तरं च विना सुवर्णद्रव्यमुपजायते, यथा वा परमाणुगतं काठिन्यं विभागव्यतिरेकेणापि विनश्यति, तद्गतद्रव्यं[द्रवत्वं] च संयोगं विनैव जायते, एवं विनैवावयवसंयोगविनाशं परमाणवो विनङ्क्ष्यन्ति, अन्ये चोत्पद्यन्त इत्यर्थः। ननु द्रव्यनाशस्यावस्थानाशो नोदाहरणमित्याशङ्क्य अत्रापि परमाण्ववस्थानाश एव; तदवस्थात्वात् सर्वकार्याणामित्याह— **एवमिति**।।१७।। इति तृतीयं परमाणुजगदकारणत्वाधिकरणम्।।

### *न्यायनिर्णयः*

नित्याः परमाणवः, निरवयवद्रव्यत्वात्, आत्मवदिति शङ्कते— **विनश्यन्त इति**। हेत्वसिद्ध्या समाधत्ते— **नायमिति**। उक्तमेव स्फुटयति— **यथेत्यादिना**। अवयवतत्संयोगविनाशौ विनाऽपि सुवर्णपिण्डो नश्यति। विनापि संयोगान्तरं सुवर्णद्रवो जायते। परमाणुकाठिन्यं च विभागं विना विनश्यति। तद्गतद्रवश्च संयोगादृते भवति। न च काठिन्यद्रवौ तावद् द्रव्यातिरिक्तौ शक्यौ वक्तुम्। एवं विनैवावयवविभागविनाशौ परमाणवो विनङ्क्ष्यन्ति, अन्ये चोत्पत्स्यन्त इत्यर्थः। मूर्तिशब्देन काठिन्यम्, आदिशब्देनावस्थाभेदादि गृह्यते। द्रव्यनाशस्यावस्थानाशो नोदाहरणमित्याशङ्क्यात्रापि परमाण्ववस्थानाश एव, सर्वकार्याणां तदवस्थात्वादित्यभिप्रेत्य कार्यद्रव्यत्वहेतुं व्यभिचारयति— **तथेत्यादिना**। कार्यनाशस्यावयवनाशतद्विभागाधीनत्वनियमाभाववदित्यर्थः। तस्य केवलत्वं प्राधान्यम्। सति तस्मिन् कार्योत्पादस्य क्षेपाभावात्। नियमाभावे हेतुमाह— **क्षीरेति**। आदिशब्देन लवणादि गृह्यते। क्षीराद्यनुगुणादवयवसंयोगादतिरिक्तो दध्याद्यनुगुणः संयोगोऽवयवसंयोगान्तरम्। दधिहिमादीत्यादिपदं जलाद्यर्थम्। दध्यादिषु सत्यपि कार्यद्रव्यत्वे विशिष्टानेकद्रव्या-रब्धत्वासिद्धेरनैकान्त्यादित्यर्थः। एतेन कार्यद्रव्यं स्वपरिमाणादणुतरपरिमाणारब्धं, कार्यद्रव्यत्वादित्यपास्तम्। यच्चाणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं, परिमाणतारतम्यत्वादिति, तत्राश्रयासिद्धिरित्यभिप्रेत्याधिकरणार्थमुपसंहरति— **तदेवमिति**। वाक्यशब्देनापरिग्रहसूत्रं गृह्यते।।१७।।इति तृतीयं परमाणुजगदकारणत्वाधिकरणम्।।

## *शारीरकन्यायसंग्रहः*

।।समुदायाधिकरणम्।।

**समुदाय उभयहेतुकेऽपि तदप्राप्तिः।।१८।। इतरेतरप्रत्ययत्वादिति चेत् नोत्पत्तिमात्रनिमित्तत्वात्।।१९।। उत्तरोत्पादे च पूर्वनिरोधात्।।२०।। असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा।।२१।। प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्।।२२।। उभयथा च दोषात्।।२३।। आकाशे चाविशेषात्।।२४।। अनुस्मृतेश्च।।२५।। नासतोऽदृष्टत्वात्।।२६।। उदासीनानामपि चैवं सिद्धिः।।२७।।**

अत्र खरस्नेहोष्णेरणस्वभावाः परमाणवो न द्रव्यस्वभावाः। ते च द्व्यणुकादिमहापृथिव्यादिपर्यन्तं संहन्यन्ते, नावयविनमारभन्ते; बाह्याध्यात्मशरीरेन्द्रियभावेन संहन्यन्ते, स चाध्यात्मसङ्घातः रूपस्कन्धः। अहमित्यनादिप्रवृत्तो विज्ञानसन्तानो विज्ञानस्कन्धः। विज्ञानस्कन्धस्य तु रूपस्कन्धसंसर्गजन्यो विज्ञानविशेषप्रवाहो वेदनास्कन्धः। गौरिति शब्दोल्लिखितविकल्पविज्ञानप्रवाहः संज्ञास्कन्धः। वेदनासंज्ञास्कन्धद्वयनिमित्तो रागद्वेषादिविज्ञानप्रवाहः संस्कारस्कन्धः। क्वचिदाशयस्यापि धर्माधर्मलक्षणस्य संस्कारशब्देनाभिधानमस्ति। तत्र अहमित्यालयविज्ञानमात्रं चित्तमित्युच्यते। वेदनाविज्ञानसंस्कारस्कन्धत्रयं चित्तप्रवाहान्तर्गतमपि चित्तस्य विषयविशेषोपरागे सति

## *प्रकटार्थविवरणम्*

परिभाषामात्रम्; अलं वा विवादेन; तथापि दीर्घपरिमाणैस्तन्तुभिः क्रियमाणे वर्तिद्रव्ये व्यभिचारः। यच्चानुमानान्तरम्— अल्पपरिमाण-तारतम्यं क्वचिद्विश्रान्तम्, परिमाणतारतम्यत्वात्, महत्परिमाणतारतम्यवदिति, तत्राश्रयासिद्धो हेतुः। तथा हि— प्रामाणिक एवाश्रय इति तार्किकाणामाग्रहः; तारतम्यं तु न प्रमाणतो निरूपणं सहते। न तावत् तारतम्यं नाम गुणः; परिमाणस्य गुणान्तराभावात्; न जातिरुत्कर्षादिमत्त्वात्; न च धर्मो नाम कश्चित् षट्पदार्थातिरिक्तोऽस्ति तार्किकाणाम्। धर्मत्वे च तस्य स्वधर्मिणि परिमाणे विश्रान्तत्वात् सिद्धसाधनम्।

यच्च— अयं घटः [1]एतद्व्यतिरिक्तानित्येतरमूर्तान्योन्याभावात् [भाववान्], प्रमेयत्वात्, पटवदिति; [2]तत्राप्रसिद्धविशेषणत्वम्; पटस्य वा स्वतोऽन्योन्याभाववत्त्वप्रसङ्गः, अनुकूलतर्काभावादप्रयोजकत्वं च। यच्च महाविद्यानुमानम्— परमाणुर्नित्यत्वव्यतिरिक्तै-तन्निष्ठधर्मान्यधर्मवान्[3], प्रमेयत्वात्, पटवदिति; तत् प्रकरणसमत्वादुपेक्षणीयम्। शक्यते विपरीतेऽप्यर्थे स एव हेतुः प्रयोक्तुम्— परमाणुरनित्यत्वव्यतिरिक्तैतन्निष्ठधर्मान्यधर्मवानिति। नरविषाणविदीर्णत्वादि[4] वा किं न स्यात्? [5]बाधकाभावाच्चाप्रयोजकः। ननु सर्वमेतद् बाधकत्वातिरिक्तैतन्निष्ठधर्मान्यधर्मवत् प्रमेयत्वात् पटवत्। न; अनुपलब्धिबाधितत्वात्, धर्मान्तरस्यातीन्द्रियस्य सद्भावेऽपि प्रत्यक्षदृष्टप्रबाधकत्वस्यापह्नोतुमशक्यत्वात् न मे किञ्चित्प्रहीयते। ननु यावज्जीवं त्वयोच्यमानं न मदीयानुमानस्य दूषणम्, प्रमेयत्वात् पटवत्; तुल्यं भूषणाभावेऽपि। किमिदं मदीयानुमानस्य दूषणं न वा? आद्ये पक्षे निक्षिप्यताम्; अन्त्ये न क्षतिः; नाश्रयाभावाद् विकल्पानुपपत्तिः। न हि दोषाभावमात्रेण वचनमनुमानम्; किन्त्वङ्ग भूषितं प्रत्यक्षमिति चेत्, दोषेऽपि समान मित्यलम्। **तदेवम्** इत्यादि अधिकरणार्थोपसंहारः। इति तृतीयं परमाणुजगदकारणत्वाधिकरणम्।।

---

१. एतद्घटव्यतिरिक्तानि अनित्यानि पटादीनि। तदितरन्मूर्तम् एतद्घटः। तदन्योन्याभावः पटेऽस्तीति दृष्टान्ते साध्यसत्त्वम्। पक्षे तु एतद्घटभेदस्य बाधितत्वात् एतद्घटव्यतिरिक्तानित्येतरत् नित्यमूर्तम्, तदन्योन्याभावमादाय साध्यपर्यवसानम्। नित्यमूर्तं च परमाणव इति तत्सिद्धिः। मूर्तपदानुपादाने आत्मादीनामपि एतद्घटव्यतिरिक्तानित्येतरत्वेन तद्भेदस्य एतद्घटे सिद्धत्वात् सिद्धसाधनं स्यात्। अतस्तदुपादानम्।

२. 'एतद्घटव्यतिरिक्तं यत् अनित्येतरमूर्तं तदन्योन्याभाववान्' इत्यर्थमभिप्रेत्याप्रसिद्धविशेषणताभिधानमिति भाति। अनित्येतरमूर्तं नित्यमूर्तम्, तदप्रसिद्धमिति तद्घटितसाध्याप्रसिद्धिः। वस्तुतस्तु नायमर्थः अनुमानप्रयोक्तुरिष्ट इत्यतो दूषणान्तरमाह—घटस्येति। 'पटस्य' इत्यस्य स्थाने 'घटस्य' इति भाव्यम्। एतद्घटव्यतिरिक्तानित्येतरमूर्तम् एतद्घटः, तद्भेदस्य दृष्टान्ते पट इव पक्षे एतद्घटेऽपि सिद्ध्यापत्त्याऽर्थान्तरमिति भावः। ननु स्वस्मिन् स्वप्रतियोगिकभेदस्य बाधितत्वात् न तत्सिद्ध्याऽर्थान्तरमित्यतो दूषणान्तरमाह—अनुकूलेति।

३. एतत्पदेन पक्षीभूतः परमाणुर्ग्राह्यः। नित्यत्वातिरिक्तास्तन्निष्ठा धर्माः पृथिवीत्वादयः। तदन्यधर्मश्च पटत्वं दृष्टान्तेऽस्ति। पक्षे तु तादृशधर्मः नित्यत्वमेवैकं भवितुमर्हति। अन्यस्य सर्वस्यापि पक्षनिष्ठस्य नित्यत्वातिरिक्ततन्निष्ठधर्मत्वेन तदन्यत्वाभावात्। तथा चोक्तानुमानेन परमाणौ नित्यत्वसिद्धिरिति भावः।

४. 'परमाणुः नरविषाणविदीर्णत्वातिरिक्तैतन्निष्ठधर्मान्यधर्मवान्, प्रमेयत्वात्, पटवत्' इत्यादिप्रयोगस्यापि दुर्निवारत्वादिति भावः।

५. 'विपक्ष' इति आदिः। विपक्षबाधकमपि महाविद्यानुमानान्तरेण सिध्यतीति शङ्कते—नन्विति।

### ४।।समुदायाधिकरणम्।।सू. १८-२७।।

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः।।१८।।

**वैशेषिकराद्धान्तो दुर्युक्तियोगाद् वेदविरोधाच्छिष्टापरिग्रहाच्च नापेक्षितव्य इत्युक्तम्। सोऽर्धवैनाशिक**

### *शारीरकन्यायसंग्रहः*

भवति, असति नेति कादाचित्कत्वाच्चैत्तमित्युच्यते। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्चैवेन्द्रियाणि गोलकस्थानमात्राण्यप्राप्यकारीणि च; न वैशेषिकाणामिव गोलकाद् व्यतिरिक्तानि द्रव्याणि प्राप्यकारीणि चेति तान्यधिपतिरित्युच्यन्ते। सहकार्यालोकः निमित्तम्। आलम्बनं नीलादि विषयः। मन इति समनन्तरप्रत्ययमात्रमुच्यते। तत्र बाह्याध्यात्मिकसमुदायद्वयाकारेण चतुर्विधाः, परमाणवः, पञ्च स्कन्धाश्च संहन्यन्ते सर्वज्ञवशादाशयवशात् स्वभावसामर्थ्याद्वा कार्यदर्शनोन्नेयात् कुतश्चिन्निमित्तादिति। ते च स्कन्धाः परमाणवश्च क्षणिकाः। प्रत्यक्षेण हि वर्तमानार्थपरिच्छेदिना स्वविषयस्यावर्तमानाद्व्यावृत्तिः क्रियते; यथा नीलपरिच्छेदिना स्वविषयस्यानीलाद्व्यावृत्तिः इति प्रत्यक्षेण क्षणिकत्वं सिद्ध्यति। तथाऽनुमानेनापि— सर्वे भावाः क्षणिकाः, सत्त्वात्, ये क्षणिका न भवन्ति न ते सन्तः, यथा शशविषाणादयः। तथा— सर्वे भावाः क्षणिकाः, अर्थक्रियाकारित्वात्, ये न क्षणिकाः न ते अर्थक्रियाकारिणः; स एव दृष्टान्तः। घटस्यान्त्यक्षणसत्त्वात् पूर्वपूर्वक्षणविशिष्टसत्त्वानि स्वसत्ताक्षणादुत्तरक्षणे विनाशीनि, घटसत्त्वात्, अन्त्यक्षणविशिष्टघटसत्त्ववत् इति। एवं क्षणिकेष्वपि प्रवाहेषु, अविद्यादिनिमित्तो लोकव्यवहारः। अविद्या च क्षणिके स्थायित्वबुद्धिः, कार्ये नित्यत्वबुद्धिः, दुःखेषु सुखबुद्धिः, शून्ये वस्तुबुद्धिरित्यादिरूपा। ततो रागादिदोषः, ततः प्रवृत्तिः, ततो धर्माधर्मसंस्कारः इत्येतत्सर्वं संस्कार इत्युच्यते। संस्कारवशाद् विज्ञानात्मनः गर्भाशयद्रव्ये वृत्तिलाभः विज्ञानमित्युच्यते। विज्ञानसंसर्गात् गर्भद्रव्यस्य कललपेश्याद्याकारेण अभिव्यक्तिः नामरूपमित्युच्यते। तदभिव्यक्तिक्रमेण षडिन्द्रियायतनशरीरोत्पत्तिः षडायतनमित्युच्यते। निर्वृत्तशरीरगतेन्द्रियाणां तद्गतविषयसंसर्गजन्यं विज्ञानं स्पर्श इत्युच्यते। तन्निमित्तसुखदुःखादयः वेदनेत्युच्यन्ते। तन्निमित्ता च विषयोपादानेच्छा तृष्णा। ततश्च विषयोपादानप्रवृत्तिः उपादानम्। प्रवृत्तस्य च गर्भान्निष्क्रमणं भवः। भूतस्य च मनुष्यत्वादि-जात्यभिमानः जातिः। जरामरणादयः सुप्रसिद्धाः इति। एवं घटीयन्त्रवदविद्यादयः संसारहेतवः। तत्र क्षणिकसत्यभावनया दुःखसत्यभावनया स्वलक्षणसत्यभावनया शून्यसत्यभावनया च अविद्यादिषु क्षीयमाणेषु विशुद्धविज्ञानोदयो मोक्षः इति सुगतानां प्रक्रिया।

तत्र परमाणवः, तेषामचेतनानां स्वतःप्रवृत्तिश्च पूर्वमेव निराकृता। इदानीं संघातापत्तिः क्षणिकत्वं च कार्यकारणाभावान्निराक्रियते। तत्राशयस्य वा चेतनस्य जीवस्य वा अनभिज्वलितस्य चित्तस्य वा सर्वज्ञस्य वा क्षणिकस्य स्कन्धपरमाणूनां वाऽचेतनानां स्वाभाविकानां वाऽप्रवृत्तेः, अविद्यादीनां संघातसिद्ध्युत्तरकालभाविनां प्रलयावस्थायामसंहतस्वभावानां संहतिहेतुत्वानुपपत्तेः नास्ति संघात इत्युक्तम्। तथा प्रत्यक्षस्य वर्तमानवस्तुमात्रग्राहिणः अवर्तमानाग्राहिणो वर्तमानग्रहणात् तद्व्यावृत्तिप्रमाकल्पना न युक्ता। क्षणिकत्वानुमानानि च प्रत्यभिज्ञाबाधितानीत्युक्तम्। कार्यकारणभावश्च कारणस्य कार्ये स्वभावानुगतिमन्तरेण पूर्वोत्तरक्षणभावित्वमात्रेण पूर्वक्षणवर्ति सर्वमुत्तरक्षणवर्तिनः कार्यस्य कारणं स्यादित्यव्यवस्थितो भवतीत्यनुगतिसिद्धये कारणस्य स्थायित्वमुक्तम्।।

### *प्रकटार्थविवरणम्*

**समुदाय उभयहेतुकेऽपि तदप्राप्तिः**।। पूर्वोत्तराधिकरणयोः सङ्गतिमाह— **वैशेषिकेति**। शरीरादेर्वैशेषिकेण क्षणिकत्वाङ्गीकारात्

### *भाष्यभावप्रकाशिका*

**समुदाय उभयहेतुकेऽपि तदप्राप्तिः**।।१८।। अवान्तरसङ्गतिमाह— **वैशेषिकेति**। ननु आर्हतादिदर्शनं परिहृत्य बौद्धराद्धान्त

### *न्यायनिर्णयः*

वैशेषिकं निरस्य वैनाशिकं निरस्यति— **समुदाय इति**। आर्हतादिमतं हित्वा किमित्यनन्तरं वैनाशिकमतं निरस्यते, तत्राह— **वैशेषिकेति**। परिमाणभेदेन देहादेराशुतरविनाशित्वाङ्गीकारादर्धवैनाशिकत्वं वैशेषिकस्येति तन्निरासानन्तरं वैनाशिकत्वाविशेषाद्

**इति वैनाशिकत्वसाम्यात् सर्ववैनाशिकराद्धान्तो नतरामपेक्षितव्य इतीदमिदानीमुपपादयामः। स च बहुप्रकारः– प्रतिपत्तिभेदाद् विनेयभेदाद्वा। तत्रैते त्रयो वादिनो भवन्ति– केचित् सर्वास्तित्ववादिनः, केचिद् विज्ञानास्तित्वमात्रवादिनः, अन्ये पुनः सर्वशून्यत्ववादिन इति। तत्र ये सर्वास्तित्ववादिनो बाह्यमान्तरं च वस्त्वभ्युपगच्छन्ति भूतं भौतिकं च चित्तं चैत्तं च, तांस्तावत् प्रतिब्रूमः। तत्र भूतं पृथिवीधात्वादयः, भौतिकं रूपादयश्चक्षुरादयश्च। चतुष्टये च पृथिव्यादिपरमाणवः खरस्नेहोष्णेरणस्वभावाः, ते पृथिव्यादिभावेन संहन्यन्त इति मन्यन्ते। तथा रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्च स्कन्धाः। तेऽप्यध्यात्मं सर्वव्यवहारास्पदभावेन**

### *प्रकटार्थविवरणम्*

तस्यार्धवैनाशिकत्वमिति तन्निराकरणानन्तरं सर्ववैनाशिकपक्षापाकरणमित्यर्थः। निराकार्यपक्षस्यावान्तरविभागं करोति— **स च बहुप्रकार इति**। एकस्यैवाधिकारिणः प्रथममध्यमोत्तमावस्थासु विविधप्रतिपत्तेः, शिष्यभेदाद् वाऽनेकप्रकारो बौद्धपक्ष इत्यर्थः। तानेव प्रकारान् दर्शयति— **तत्रैते त्रय इति**। वैभाषिकसौत्रान्तिकयोः अवान्तरभेदेऽपि बाह्यार्थास्तित्वांशेनैकीकृत्य प्रथमनिराकार्यतामाह— **तत्र ये सर्वास्तित्ववादिन इति**। तत्र भूतादिपदार्थान् कथयति— **तत्र भूतमित्यादिना**। पृथिव्यादयश्च परमाणुपुञ्जा एव, नावयव्यारम्भोऽस्तीत्याह— **चतुष्टये चेति**। चतुर्विधाः। पर इति [खरेति।] कठिनस्वभावाः पृथिवीपरमाणवः; स्नेहस्वभावा आप्यपरमाणवः; उष्णतास्वभावाः तेजःपरमाणवः; ईरणं चलनं तत्स्वभावाः पवनपरमाणवः सर्गकाले सङ्घातमापद्यन्त इत्यर्थः। एवं भूतं भौतिकं च व्याख्याय चित्तचैत्तव्याख्यानायाह— **तथेति**। विषयेन्द्रियलक्षणो रूपस्कन्धः; अहमिति प्रत्ययो विज्ञानस्कन्धः; [सुखादिप्रत्ययो वेदनास्कन्धः;]

### *भाष्यभावप्रकाशिका*

एवैतदनन्तरं किमर्थं दूष्यत इत्याशङ्क्याह— **सोऽर्धवैनाशिक इति**। कार्यद्रव्यस्य पारिणामिकभेदेनाऽऽशुतरविनाशित्वाभ्युपगमाद् बौद्धसाम्याद् वैशेषिकाणामित्यर्थः। **नतरामिति**। [त्रि]क्षणस्थायित्वपक्षोऽपि निरस्तः; अयं तु तदपि नाभ्युपगच्छति, अतोऽनपेक्षितव्योऽतिशयेनेत्यर्थः। ननु सिद्धान्तस्यैकत्वात्, किमधिकरणद्वयेनेति? अत्राह— **स चेति**। स एव न घटते, राद्धान्तस्यैकत्वादित्याशङ्क्याह— **प्रतिपत्तीति**। प्रतिपत्तिभेदो न युक्तः, उपदेष्टुः सर्वज्ञस्यैकत्वादिति, अत्राह— **विनेयभेदादिति**। मन्दमध्यमोत्तमबुद्धीनां शिष्याणां भेदादित्यर्थः। यद्यपि— वैभाषिक-सौत्रान्तिकयोरवान्तरभेदोऽस्ति, तथापि सर्वास्तितायामस्ति संप्रतिपत्तिरित्येकीकृत्योपन्यासः। तथा च त्रित्वमुपपन्नम्। भूत-भौतिकानुक्त्वा चित्त-चैत्तिकानाह— **तथा रूपेति**। रूप्यन्त एभिः,

### *न्यायनिर्णयः*

बुद्धिस्थं सर्ववैनाशिकनिरसनमित्यर्थः। वैशेषिका देहादेस्त्रिक्षणस्थायित्वमास्थिताः, तथापि तन्मते निरस्ते तन्मात्रमपि यैर्नेष्टं तन्मतमतिशयेन नापेक्षितव्यमित्याह— **नतरामिति**। तथाप्येकेनैवाधिकरणेन तन्निराससंभवे किमधिकरणद्वयेनेति, तत्राह— **स चेति**। राद्धान्तस्यैक्याद् बहुप्रकारत्वायोगमाशङ्क्याह— **प्रतिपत्तीति**। उपदेष्टुः सर्वज्ञस्यैक्यात् कथं शिष्याणां तद्भेदः, तत्राह— **विनेयेति**। मन्दमध्यमोत्तमधियां शिष्याणां भेदात् तद्भेदसिद्धिरित्यर्थः। प्रतिपत्तिभेदावधारणार्थो वाशब्दो न विकल्पार्थः। तानेव दर्शयति— **तत्रेति**। सौत्रान्तिकवैभाषिकयोरवान्तरभेदेऽपि सर्वास्तित्वसंप्रतिपत्तेरेकीकृत्य त्रित्वमुपपादयति— **केचिदिति**। इदानीमाद्याधिकरणस्य प्रवृत्तिप्रकारमाह— **तत्रेति**। बाह्यं विशिनष्टि— **भूतमिति**। आभ्यन्तरं कथयति— **चित्तमिति**। बाह्यार्थवादिबौद्धराद्धान्तो विषयः। स किं प्रामाणिको भ्रान्तो वेति विप्रतिपत्तेः संदेहे पूर्वपक्षं विवृणोति— **तत्रेत्यादिना**। तस्य भ्रान्तत्वोपपादनेन समन्वयस्य तद्विरोधनिरासात् पादादिसंगतयः। तस्य प्रामाणिकत्वात् तद्विरोधे समन्वयासिद्धिः, भ्रान्तत्वाद् विरोधस्याभावात् तत्सिद्धिरित्युभयत्र फलसिद्धिः। धातुशब्दः स्वभाववचनः। आदिशब्देनाप्तेजोवाय्वाकाशर्तवो गृह्यते। विषयाणामिन्द्रियाणां च भौतिकशब्दवाच्यत्वमाह— **भौतिकमिति**। पृथिव्यादयश्च परमाणुपुञ्जा एव, नावयव्यारम्भोऽस्तीति वक्तुं परमाणुस्वरूपमाह— **चतुष्टये चेति**। कठिनस्वभावाः पृथिवीपरमाणवः। स्नेहस्वभावा आप्यपरमाणवः। उष्णतास्वभावास्तेजःपरमाणवः। ईरणं चलनं तत्स्वभावा वायुपरमाणवः। तेषां चतुर्विधानां सर्गकाले संयोगापत्तिमाह— **त इति**। भूतभौतिकानुक्त्वा चित्तचैत्तानाह— **तथेति**। कर्मकरणव्युत्पत्तिभ्यां सविषयाणीन्द्रियाणि

**संहन्यन्त इति मन्यन्ते।**

**तत्रेदमभिधीयते—योऽयमुभयहेतुकः उभयप्रकारः समुदायः परेषामभिप्रेतोऽणुहेतुकश्च भूतभौतिकसंहतिरूपः, स्कन्धहेतुकश्च पञ्चस्कन्धीरूपः, तस्मिन्नुभयहेतुकेऽपि समुदायेऽभिप्रेयमाणे तदप्राप्तिः स्यात् समुदायाप्राप्तिः, समुदायभावानुपपत्तिरित्यर्थः। कुतः? समुदायिनामचेतनत्वात्। चित्ताभिज्वलनस्य च समुदायसिद्ध्यधीनत्वात्। अन्यस्य च कस्यचिच्चेतनस्य भोक्तुः प्रशासितुर्वा स्थिरस्य संहन्तुरनभ्युपगमात्। निरपेक्षप्रवृत्त्यभ्युपगमे च**

***प्रकटार्थविवरणम्***

सशब्दसञ्जल्पितः प्रत्ययः 'गौरश्वः' इत्यादिः संज्ञास्कन्धः; संस्कारस्कन्धो नाम रागादिर्धर्माधर्मौ च। तत्र चित्तं विज्ञानस्कन्ध इतरे चैत्ता इत्यर्थः। अस्य बाह्याध्यात्मिकस्य भावजातस्य प्रत्यक्षानुमानाभ्यां क्षणिकत्वावगमात् स्थायिनो ब्रह्मणो जगत्सर्गं वदतः समन्वयस्यार्थात् तद्विरोध इति पूर्वः पक्षः।

सिद्धान्तमाह— **तत्रेदमभिधीयत इति**। यदि क्षणिकवादे सर्गादौ सङ्घातो घटते तदा भवेदर्थात् समन्वयस्य वैनाशिकसमन्वय [समय]विरोधः; स तावत् स्वत एव नोपपद्यते, समुदायिनां परमाण्वादीनामचेतनत्वात् स्वातन्त्र्येण प्रवृत्त्यनुपपत्तेरित्यर्थः। तर्हि चित्ताभिव्यक्तिनिबन्धनः सङ्घातोऽस्त्वित्याशङ्क्याह— **चित्ताभिज्वलनस्य चेति**। सिद्धे सङ्घाते चित्ताभिज्वलनम्; ततश्च सङ्घात इतीतरेतराश्रयमित्यर्थः। इतश्च नान्यहेतुकः सङ्घात इत्याह— **अन्यस्य चेति**। इतश्च स्वातन्त्र्येण प्रवृत्तिपक्षोऽनुपपन्न इत्याह—

***भाष्यभावप्रकाशिका***

रूप्यन्त इति च व्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः। यद्यपि रूप्यमाणाः पृथिव्यादयो बाह्याः, तथापि कायस्थत्वादिन्द्रियसम्बन्धाद्वा भवन्त्याध्यात्मिकाः। अहमित्याकारोऽनादिप्रवृत्तो विज्ञानसन्तानो विज्ञानस्कन्धः, विज्ञानस्कन्धरूपस्कन्धसंसर्गजन्यः सुख-दुःखविज्ञानविशेषप्रवाहो वेदनास्कन्धः। गौरित्यादिशब्दोल्लिखितविकल्पविज्ञानप्रवाहः संज्ञास्कन्धः। वेदनास्कन्धनिमित्तो राग-द्वेषादिविज्ञानप्रवाहः संकारस्कन्धः, धर्माधर्मौ च। तत्राहमित्यालयविज्ञानमात्रं चित्तमुच्यते। वेदना-संज्ञा-संस्कारस्कन्धत्रयं च चैत्तम्; विषयोपरागापेक्षितया कादाचित्कत्वात्। तदेतेषां समाहारः पञ्चस्कन्धी।

**तस्मिन्नुभयहेतुकेऽपीति**। बाह्ये पृथिव्यादिपरमाणुहेतुके भूत-भौतिकसमुदाये रूप-विज्ञानादिहेतुके च समुदाय आध्यात्मिके अभिप्रेते तदप्राप्तिः, तस्य समुदायस्यायुक्तता। ननु चेतनः संहन्ता भवत्वित्याशङ्क्याह— **चित्ताभिज्वलनस्येति**। ननु भवतामिवास्माकमपि संहन्ता भविष्यतीति, अत आह— **अन्यस्येति**। ननु सर्वज्ञः संहन्ताऽस्तीत्याशङ्क्याह— **प्रशासितुर्वा**

***न्यायनिर्णयः***

रूपस्कन्धः। रूप्यमाणपृथिव्यादीनां बाह्यत्वेऽपि देहस्थत्वादिन्द्रियसंबन्धाच्चाध्यात्मिकत्वम्। अहमिति प्रत्ययो विज्ञानस्कन्धः। सुखादिप्रत्ययो वेदनास्कन्धः। गौरश्च इत्यादिशब्दसंजल्पितप्रत्ययः संज्ञास्कन्धः। संस्कारस्कन्धस्तु रागादिर्धर्माधर्मौ च। तत्र विज्ञानस्कन्धश्चित्तम्। इतरे चैत्ताः। उक्तानां स्कन्धानां समाहारं संघातं दर्शयति— **तेऽपीति**।

उक्तस्य बाह्याध्यात्मिकभावजातस्याध्यक्षानुमानाभ्यां क्षणिकत्वे सिद्धे स्थायिनो ब्रह्मणो जगत्सर्गवादिनः समन्वयस्य विरोधोऽस्तीति प्राप्तमनूद्य सिद्धान्तयति— **तत्रेति**। सूत्रं व्याचष्टे— **योऽयमिति**। बाह्यत्वमाध्यात्मिकत्वं चोभयप्रकारत्वमुभयहेतुकमेवाह— **अण्विति**। बाह्ये भूतभौतिकसमुदाये पृथिव्यादिपरमाणुहेतुके, रूपविज्ञानादिहेतुके चाध्यात्मिके समुदायेऽभिप्रेते तस्याप्राप्तिः अयुक्तता स्यादित्याह— **तस्मिन्निति**। संहन्यमानानामव्यवधाने संघातानुपपत्तौ च न हेतुरित्याक्षिपति— **कुत इति**। संघातः स्वतो वा परतो वा? नाद्य इत्याह— **समुदायिनामिति**। अण्वादीनामचैतन्यात् स्वातन्त्र्येण प्रवृत्त्यसिद्धेर्न स्वतः संघातो घटते। तथा च क्षणिकपक्षे सर्गादौ संघातायोगात्र तद्विरोधः समन्वयस्येत्यर्थः। परमपि संघातकारणं चित्ताभिज्वलनमन्यद्वा। तत्राद्यं दूषयति— **चित्तेति**। सिद्धे संघाते चित्ताभिज्वलनं, ततः संघात इत्यन्योन्याश्रयात्र चित्ताभिज्वलनं तद्धेतुरित्यर्थः। अन्योऽपि संहन्ता चेतनोऽचेतनो वा? चेतनोऽपि भोक्ता प्रशासिता वा? द्विधापि स्थिरो वा क्षणिको वा। नाद्यः; अनभ्युपगमात्। न द्वितीयः; क्षणिकस्यान्वयव्यतिरेककालानवस्थानात् भोक्तुश्च कारणविन्यासविशेषज्ञानायोगात्, सर्वज्ञस्य स्वतस्तज्ज्ञानेऽपि क्षणिकत्वात् कर्तृत्वासिद्धेरित्याह— **अन्यस्येति**।

**प्रवृत्त्यनुपरमप्रसङ्गात्। आशयस्याप्यन्यत्वानन्यत्वाभ्यामनिरूप्यत्वात्। क्षणिकत्वाभ्युपगमाच्च निर्व्यापारत्वात् प्रवृत्त्यनुपपत्तेः। तस्मात् समुदायानुपपत्तिः। समुदायानुपपत्तौ च तदाश्रया लोकयात्रा लुप्येत।।१८।।**

**इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्।।१९।।**

**यद्यपि भोक्ता प्रशासिता वा कश्चिच्चेतनः संहन्ता स्थिरो नाभ्युपगम्यते तथाप्यविद्यादीनामितरेतरकारणत्वादुपपद्यते लोकयात्रा। तस्यां चोपपद्यमानायां न किंचिदपरमपेक्षितव्यमस्ति।**

***प्रकटार्थविवरणम्***

**निरपेक्षेति**। तर्ह्यालयविज्ञाननिबन्धनः सङ्घातोऽस्त्वित्याशङ्क्याह— **आशयस्यापीति**। आशेरते कर्मानुभववासना अस्मिन्नित्याशयः। आशयज्ञानमहमित्युल्लिख्यमानम्; तस्यालयविज्ञानेभ्योऽन्यत्वम्, अनन्यत्वं वा? अन्यत्वेऽपि स्थायित्वं क्षणिकत्वं वा? स्थायित्वे सिद्धं नः समीहितम्, नीलादिविज्ञानालयस्य स्थायिनस्त्वयाऽप्यङ्गीकारात्, क्षणिकत्वे न तस्य सङ्घातकर्तृत्वम्; कर्ता हि परिदृष्टसामर्थ्यकारकग्रामप्रयोक्ता; सामर्थ्यावधारणं चान्वयव्यतिरेकाभ्याम्; न च क्षणिकस्यान्वयव्यतिरेकबुद्धिद्वयकालेऽवस्थानं संभाव्यते; अतो न कर्तृत्वम्। अनन्यत्वेऽपि तथेत्यर्थः। इतश्च स्वतः परतो वा सङ्घातसिद्धये परमाण्वादीनां प्रवृत्तिर्न संभाव्यत इत्याह— **क्षणिकत्वाभ्युपगमाच्चेति**। व्यापारवत्त्वे हि कारणतया पूर्वक्षणेऽवस्थानम्; आश्रयतया च व्यापारसमकालमव्य[प्य]वस्थानमिति क्षणिकत्वं न सिद्ध्यतीत्यर्थः। उपसंहरति— **तस्मादिति**।

**इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्**।। पूर्वपक्षभागं व्याचष्टे— **यद्यपीति**। प्रत्ययशब्दः कारणवाची। के ते

***भाष्यभावप्रकाशिका***

**स्थिरस्येति। (भोक्तुः क्षणिकस्येति।)** भोक्तुः क्षणिकस्यान्वय-व्यतिरेककालानवस्थानात् कारणविन्यासविशेषज्ञानासंभवात् सर्वज्ञस्य च स्वतस्तज्ज्ञानसंभवेऽपि क्षणान्तरानवस्थानात् कर्तृत्वमनुपपन्नमित्यर्थः। ननु स्वभावादेव प्रवर्ततामित्याशङ्क्याह— **निरपेक्षेति**। धर्माधर्मौ कारणमित्याशङ्क्याह— **आशयस्येति**। अथवा आलयविज्ञानसन्तानः संहन्तेत्याशङ्क्याह— **आशयस्येति**। आशेरतेऽस्मिन् कर्मानुभववासना इत्याशयः। तर्हि वक्तव्यम्— स सन्तानिभ्यो भिन्नः स्थिरः, किं वा तदव्यतिरिक्त इति। आद्यपक्षेऽस्मदुक्तभोक्तैव नामान्तरेणोक्तः स्यात्। द्वितीयस्तु पक्षो न युक्त इत्याह— **क्षणिकत्वाभ्युपगमादिति**। क्षणिकस्य व्यापारात्पूर्वं व्यापारसमये वाऽभावाद् व्यापारं प्रति कारणत्वाश्रयत्वयोरयोग इत्यर्थः। यथा कथञ्चिल्लोकयात्रा सिध्यति चेत्, किं समुदायेनेति? अत आह— **समुदायानुपपत्ताविति**।।१८।।

**इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्**।।१९।। ननु सङ्घातस्य निमित्तं वाच्यमित्याशङ्क्याह— **न किञ्चिदपरमिति**।

***न्यायनिर्णयः***

अचेतनोऽपि संहन्ता धर्मादिर्वा स्यादालयविज्ञानसंतानो वा? नाद्यः; तस्य पूर्ववच्चेतनाधीनप्रवृत्त्यनुपपत्तेः। स्वतश्चेत् प्रवृत्तिस्तदा धर्मादिप्रवृत्त्यनुपरमान्मोक्षासिद्धिरित्याह— **निरपेक्षेति**। आलयविज्ञानसंतानः संहन्तेति पक्षं प्रत्याह— **आशयस्येति**। आशेरतेऽस्मिन् कर्मानुभववासना इत्याशयः संतानः। तस्यापि संतानिभ्योऽन्यत्वमनन्यत्वं वा? द्विधाऽपि दुर्निरूपत्वान्न तस्य संहन्तृतेत्यर्थः। स खल्वन्यः स्थिरो वा क्षणिको वा? प्रथमेऽस्मदुक्तो भोक्तैव नामान्तरेणोक्तः स्यादिति मत्वा द्वितीये क्षणिकस्य व्यापारात्पूर्वं तत्काले वाऽभावात् कारणत्वाश्रयत्वयोरसिद्धिरित्याह— **क्षणिकत्वेति**। एतेनानन्यत्वमपि प्रत्युक्तम्; संतानिनामपि क्षणिकत्वेनोक्तरीत्या व्यापारकारणत्वाद्ययोगात् तदभिन्नस्य संतानस्यापि तदसिद्धेरित्याह— **निर्व्यापारत्वादिति**। संहन्तुरभावे फलितमाह— **तस्मादिति**। यथाकथंचिल्लोकयात्रा सिध्यति चेत् किं समुदायेनेत्याशङ्क्याह— **समुदायेति**।।१८।।

संघातस्य निमित्तमाशङ्क्य निरस्यति— **इतरेतरेति**। पूर्वपक्षभागं विभजते— **यद्यपीति**। तर्हि संघाताभावात् तदालम्बना लोकयात्रा न निर्वहेत्, तत्राह— **तथापीति**। कार्यं प्रत्ययते जनकत्वेन गच्छतीति प्रत्ययशब्दस्य हेतुवाचित्वमुपेत्येतरेतरकारणत्वादित्युक्तम्। तथापि संघातस्य निमित्तं वाच्यम्, तत्राह— **तस्यां चेति**। अविद्यादीनामेव तन्निमित्तत्वान्नापेक्षणीयान्तरमस्तीत्यर्थः। के पुनरविद्यादयः,

**ते चाविद्यादयः– अविद्या संस्कारो विज्ञानं नामरूपं षडायतनं स्पर्शो वेदना तृष्णा उपादानं भवो जातिर्जरा मरणं शोकः परिदेवना दुःखं दुर्मनस्तेत्येवंजातीयका इतरेतरहेतुकाः सौगते समये क्वचित् संक्षिप्ता निर्दिष्टाः, क्वचित् प्रपञ्चिताः। सर्वेषामप्ययमविद्यादिकलापोऽप्रत्याख्येयः। तदेवमविद्यादिकलापे परस्परनिमित्तनैमित्तिकभावेन घटीयन्त्रवदनिशमावर्तमानेऽर्थाक्षिप्त उपपन्नः संघात इति चेत्? तन्न। कस्मात्? उत्पत्तिमात्रनिमित्तत्वात्।**

### *प्रकटार्थविवरणम्*

अविद्यादय इत्याशङ्क्याह— **ते चाविद्यादय इति**। अविद्या अग्रहणविपरीतग्रहणलक्षणा; ततः संस्कारो रागादिः धर्माधर्मौ च; तन्निमित्तं च विज्ञानं शुक्लशोणितसन्निपाते धर्माधर्मनिमित्तं च जायते; तदनन्तरं नामरूपं तस्य गर्भस्य जायते। तथा हि लौकिकाः 'अस्ति गर्भः' इत्याचक्षते; तदनन्तरं मनःषष्ठानामिन्द्रियाणाम् आयतनं नाम अवस्था गर्भस्य जायते; तदनन्तरं शीतोष्णस्पर्शयोग्यावस्था जायते; तदनन्तरं सुखदुःखवेदना जायते; तदनन्तरं सुखदुःखप्राप्तिपरिहारविषया तृष्णा जायते; तद्धेतुकं च सुखदुःख-प्राप्तिपरिहारसाधनोपादानम्; तदनन्तरं भवो नामोदरात् निर्गमनम्; ततो जात्यभिमानः; ततो जरामरणचिन्ता; ततः शोकः पुत्रादिस्नेहवतोऽन्तर्दाहः; परिदेवना प्रलापः हा पुत्रकलत्रादीति; ततो दुःखं बहिस्सन्तापात्मकम्; ततो दुर्मनस्ता

### *भाष्यभावप्रकाशिका*

अविद्यादीनामेव तन्निमित्तत्वादित्यर्थः। **अविद्येत्यादि**। अविद्या नाम क्षणिककार्यदुःखशून्यस्वभावेषु स्थायित्व-नित्यत्व-सुखवस्तुत्वबुद्धिः। तस्यां सत्यां संस्कार[राः]राग-द्वेष मोहा विषयेषु प्रवर्तन्ते। गर्भस्थस्याऽऽद्या वस्तुविषयविज्ञप्तिर्विज्ञानम्, विज्ञानाच्चत्वारो रूपिण उपादानस्कन्धाः, तन्नाम। तान्युपादाय रूपमभिनिर्वर्तते। तदैकध्यमभिसंक्षिप्य नामरूपमुच्यते शरीरस्यैव कललाद्यवस्था। नामरूपसंमिश्रितानीन्द्रियाणि षडायतनम्। नामरूपेन्द्रियाणां त्रयाणां संनिपातः स्पर्शः। स्पर्शाद्वेदना सुखादिका। वेदनायां सत्यां "कर्तव्यमेतत्सुखं पुनर्मये"त्यध्यवसानं तृष्णा। तत उपादानं वाक्कायचेष्टा। ततो भवः। भवत्यस्माज्जन्मेति भवो धर्माधर्मौ। तद्धेतुकस्कन्धप्रादुर्भावो जातिः। जन्महेतुका उत्तरे जरा-मरणादयः। जातानां स्कन्धानां परिपाको जरा। स्कन्धानां नाशो मरणम्। म्रियमाणस्य साभिषङ्गस्य पुत्र-कलत्रादावन्तर्दाहश्शोकः। तदर्थं प्रलपनं "हा पुत्रके" त्यादि परिदेवना। पञ्चविज्ञानकार्यसंयुक्तमसाध्वनुभवनं दुःखम्। मानसं दुःखं दौर्मनस्यम्। एतज्जातीयका इति उपक्लेशा मद-मानादयो गृह्यन्ते। **इतरेतरहेतुका इति**। जन्मादयो घटीयन्त्रवदावर्तन्त इति भावः। अविद्यादीनां सद्भावे सत्येवं वक्तुं शक्यते, स एव कथमित्याशङ्क्य, तेषां रूपं सर्ववादिसिद्धमित्याह— **सर्वेषामिति**। सङ्घाताभावेऽविद्यासिद्धिरनुपपन्नेति, अत आह— **अर्थाक्षिप्त इति**। इतरेतरहेतुत्वसंभवेऽप्यविद्यादीनां

### *न्यायनिर्णयः*

तत्राह— **ते चेति**। वक्ष्यमाणबुद्धिस्थपरामर्शी तच्छब्दः। क्षणिककार्यदुःखस्वभावेष्वर्थेषु स्थायिनित्यसुखबुद्धिरविद्या। तस्यां सत्यां संस्कारा रागद्वेषमोहा विषयेषु भवन्ति। तेभ्यो गर्भस्थस्याद्यं विज्ञानमुत्पद्यते। तस्माच्चालयविज्ञानात्पृथिव्यादिचतुष्टयमुपादानकारणं नामाश्रयत्वान्नाम निष्पद्यते। तच्च कारणत्वेन स्वीकृत्य सितासितादिरूपवच्छरीरमभिनिर्वर्तते। गर्भीभूतस्य शरीरस्य कललबुद्बुदाद्यवस्था नामरूपशब्दाभ्यामत्राभीष्टा, जातेरुत्तरत्राभिधानात्। नामरूपसंमिश्रितानीन्द्रियाणि षडायतनं, पृथिव्यादिधातवः षडायतनानि यस्य करणजातस्य तत् तथा। नामरूपेन्द्रियाणां मिथः संनिपातः स्पर्शः। ततः सुखादिका वेदना। तस्यां सत्यां कर्तव्यं सुखं मयेत्यध्यवसानं तृष्णा। ततो वाक्कायचेष्टोपादानम्। ततो भवत्यस्माज्जन्मेति भवो धर्मादिः। तद्धेतुका देहादयो जातिः। जातस्य देहस्य परिपाको जरा। देहनाशो मरणम्। म्रियमाणस्य साभिषङ्गस्य पुत्रादावन्तर्दाहः शोकः। तदुत्थं हा पुत्र, इत्यादिप्रलपनं परिदेवना। शब्दादिज्ञानपञ्चकसंयुक्तमसाध्वनुभवनं दुःखम्। दुर्मनस्ता मानसं दुःखम्। इतिशब्दो यथोक्तपरामर्शार्थः। एवंजातीयकशब्दो मदमानाद्युपक्लेशसंग्रहार्थः। अविद्यादिहेतुका जन्मादयस्तद्धेतुकाश्चाविद्यादय इति घटीयन्त्रवदनवरतमावर्तनमेषामिति मत्वा विशिनष्टि— **इतरेति**। अविद्यादीनां सत्त्वमेव कथमित्याशङ्क्य संक्षेपविस्तराभ्यामुक्तत्वात् तद्रूपं सौगतानां प्रसिद्धमित्याह— **सौगत इति**। न केवलं तेषामेव प्रसिद्धं, किंतु सर्ववादिनामपीत्याह— **सर्वेषामिति**। आनुभविकार्थप्रत्याख्याने सर्वव्यवहारासिद्धिरिति भावः। अविद्यादीनां मिथो निमित्तनैमित्तिकत्वेऽपि कुतः संघातसिद्धिरित्याशङ्क्योपसंहरति— **तदेवमिति**। अविद्यादिरेव संघाताभावे न

**भवेदुपपन्नः संघातो यदि संघातस्य किंचिन्निमित्तमवगम्येत। न त्ववगम्यते। यत इतरेतरप्रत्ययत्वेऽप्यविद्यादीनां पूर्वपूर्वमुत्तरोत्तरस्योत्पत्तिमात्रनिमित्तं भवद् भवेत्, न तु संघातोत्पत्तेः किंचिन्निमित्तं संभवति।**

**नन्वविद्यादिभिरर्थादाक्षिप्यते संघात इत्युक्तम्। अत्रोच्यते– यदि तावदयमभिप्रायोऽविद्यादयः संघातमन्तरेणात्मानमलभमाना अपेक्षन्ते संघातमिति, ततस्तस्य संघातस्य निमित्तं वक्तव्यम्। तच्च नित्येष्वप्यणुष्वभ्युपगम्यमानेष्वाश्रयाश्रयिभूतेषु च भोक्तृषु सत्सु न संभवतीत्युक्तं वैशेषिकपरीक्षायाम्। किमङ्ग पुनः क्षणिके[१]ष्वप्यणुषु भोक्तृरहितेष्वाश्रयाश्रयिशून्येषु वाऽभ्युपगम्यमानेषु संभवेत्। अथायमभिप्रायोऽविद्यादय एव संघातस्य निमित्तमिति, कथं तमेवाश्रित्यात्मानं लभमानास्तस्यैव निमित्तं स्युः।**

### *प्रकटार्थविवरणम्*

मनसोऽनवस्थानमविवेकापत्तिरित्येवं हेतुफलभावेनानादिः प्रवाह इत्यर्थः। सिद्धान्तभागमवतारयति— **तन्नेति**। अविद्यादीनामपि क्षणिकत्वात् संघातकारणत्वं न संभाव्यत इत्यर्थः।

उक्तं स्मारयति— **नन्विति**। किमविद्यादयः सङ्घातस्य गमका उत्पादका वेति, आद्यमनूद्य दूषयति— **यदि तावदिति**। गमकत्वपक्षेऽन्यतः स्वरूपसिद्धिः वक्तव्या, तच्च नास्तीत्याह— **तच्च नित्येष्वपीति**। **आशयाश्रयभूतेष्विति**। अदृष्टाश्रयभूतेष्वित्यर्थः। **भोक्तृरहितेष्विति**। अधिष्ठातृरहितेष्वित्यर्थः। **आशयाश्रयशून्येषु वेति**। अदृष्टाश्रयकर्तृरहितेषु क्षणिकेष्वभ्युपगम्यमानेषु किं पुनः भोक्तृ [?]निमित्तसंभवे [ निमित्तं संभवेत् ] न संभवेदित्यर्थः। आश्रयाश्रयिशून्येषु इति केचित् पठन्ति। तदा उपकार्योपकारकभावशून्येष्वित्यर्थः। द्वितीयकल्पमनूद्य दूषयति— **अथायमभिप्राय इत्यादिना**। सिद्धे संघाते अविद्यादयस्तेभ्यश्च सङ्घातसिद्धिरितीतरेतराश्रय इत्यर्थः।

### *भाष्यभावप्रकाशिका*

विन्यासभेदस्तत्प्रयोजनादिविज्ञानवच्चेतनाधिष्ठानमन्तरेण सङ्घातोऽनुपपन्न इति। परिहरति— **भवेदुपपन्न इति**।

अविद्याद्यन्यथानुपपत्त्या सङ्घातः प्रतीयत इत्युच्यते, किं वा जायत इति। प्रथमं पक्षमनुवदति— **यदि तावदिति**। अविद्याद्यन्यथानुपपत्त्या प्रतीतस्यापि सङ्घातस्योत्पादकं वक्तव्यम्। तच्च न संभवतीत्याह— **ततस्तस्येति**। ननु परमाणवः स्कन्धाश्च निमित्तमित्याशङ्क्याह— **तच्च नित्येष्विति**। **न संभवतीत्युक्तमिति**। अधिष्ठातुरनुरूपस्य चेतनस्याभावान्न संभवतीति दर्शितमित्यर्थः। भोक्तुर्भोगेनापि कदाचिदाक्षिप्यते सङ्घातः। स तु भोक्ताऽपि नास्तीत्याह— **भोक्तृरहितेष्विति**। अपि च बहव उपकार्योपकारकभावेन स्थिताः कार्यं जनयन्ति। न च क्षणिकपक्ष उपकार्योपकारकभावोऽस्ति; भावस्योपकारा[ना]स्पदत्वात्, क्षणस्याभेद्यत्वादनुपकृतत्वोपकृतत्वासंभवात्, कालभेदेन वा तदुपपत्तौ क्षणिकत्वव्याघातात्। तदिदमाह— **आश्रयाश्रयिशून्येष्विति**। **आशयाशयिशून्येष्विति**

### *न्यायनिर्णयः*

सिध्यतीत्यनुपपत्त्या तदाक्षेपे तदाश्रयः सर्वव्यवहारो निर्वहतीत्यर्थः। सिद्धान्तभागमवतारयति— **तन्नेति**। तत्र प्रश्नपूर्वकं हेतुमाह— **कस्मादिति**। हेतुं व्याचष्टे— **भवेदिति**। अविद्यादीनां मिथो निमित्तनैमित्तिकभावभाजां संघातनिमित्तत्वमाशङ्क्याह— **यत इति**। उत्तरसूत्रस्थमर्थमभिप्रेत्येहापिशब्दः।

अविद्यादीनां मिथो हेतुहेतुमत्त्वेऽपि चेतनाधिष्ठानादृते संघातासिद्धिरित्युक्ते पूर्ववादी पूर्वोक्तं स्मारयति— **नन्विति**। किमविद्यादयः संघातस्य गमकाः, किं वोत्पादका इति विकल्पयति— **अत्रेति**। तत्राद्यमनूद्य दूषयति— **यदीति**। गमकत्वपक्षे स्वरूपसिद्धिरन्यतो वाच्या; तच्चान्यत्रास्तीत्यर्थः। अणूनां स्कन्धानां चोभयविधसंघातनिमित्तत्वमाशङ्क्याह— **तच्चेति**। आश्रयाश्रयिभूतेष्विति भोक्तृविशेषणम्। अदृष्टाश्रयेष्वित्यर्थः। अणुषु स्थिरेषु भोगहेत्वदृष्टविशिष्टेषु भोक्तृषु चोक्तविशेषणेषु स्वीकृतेषु सत्सु चेतनस्याधिष्ठातुरनुरूपस्याभावान्न संभवति संघातापत्तेर्निमित्तं किंचिदित्युक्तमित्यर्थः। कैमुतिकन्यायमपिना सूचितमाह— **किमिति**। अदृष्टाश्रयकर्तृराहित्यमाह— **आश्रयेति**। आश्रयाश्रयिशून्येष्विति पाठे तूपकार्योपकारकत्ववर्जितेष्वित्यर्थः। विशिष्टेष्वणुषु स्वीक्रियमाणेषु किं पुनः संघातापत्तेर्निमित्तं, न किंचिदित्याक्षेपः। द्वितीयं शङ्कयति— **अथेति**। परस्पराश्रयत्वेन प्रत्याह— **कथमिति**।

---

१. 'अपि' शब्दः क्वचिन्नास्ति।

**अथ मन्यसे संघाता एवानादौ संसारे संतत्यानुवर्तन्ते, तदाश्रयाश्चाविद्यादय इति, तदापि संघातात् संघातान्तरमुत्पद्यमानं नियमेन वा सदृशमेवोत्पद्येत, अनियमेन वा सदृशं विसदृशं वोत्पद्येत। नियमाभ्युपगमे मनुष्यपुद्गलस्य देवतिर्यग्योनिनारकप्राप्त्यभावः प्राप्नुयात्। अनियमाभ्युपगमेऽपि मनुष्यपुद्गलः कदाचित् क्षणेन हस्ती भूत्वा देवो वा पुनर्मनुष्यो वा भवेदिति प्राप्नुयात्। उभयमप्यभ्युपगमविरुद्धम्।**

**अपि च यद्भोगार्थः संघातः स्यात् स नास्ति स्थिरो भोक्तेति तवाभ्युपगमः। ततश्च भोगो भोगार्थ एव, स नान्येन प्रार्थनीयः। तथा मोक्षो मोक्षार्थ एवेति मुमुक्षुणा नान्येन भवितव्यम्। अन्येन चेत् प्रार्थ्येतोभयं भोगमोक्षकालावस्थायिना तेन भवितव्यम्। अवस्थायित्वे क्षणिकत्वाभ्युपगमविरोधः। तस्मादितरेतरोत्पत्तिमात्रनिमित्तत्वमविद्यादीनां यदि भवेद् भवतु नाम, न तु संघातः सिध्येत्, भोक्त्रभावादित्यभिप्रायः।।१९।।**

## उत्तरोत्पादे च पूर्वनिरोधात्।।२०।।

### *प्रकटार्थविवरणम्*

उक्तदोषपरिहाराय शङ्कते— **अथ मन्यस इति**। व्यस्तानां तु संहतिहेतुः मृग्यः; सङ्घात एव प्रवाहरूपेण प्रवर्तते; अनादित्वाच्च नेतरेतराश्रयो दोष इत्यर्थः। विकल्प्य दूषयति— **तदापीति**। पूर्यते गलते चेति पुद्गलं शरीरम्। किं च भोगमोक्षव्यवहारोऽपि क्षणिकवादे न सङ्गच्छत इत्याह— **अपि च यद्भोगार्थ इति**।

**उत्तरोत्पादे च पूर्वनिरोधात्**।। उक्तमनूद्य सूत्रतात्पर्यमाह— **उक्तमेतदिति**। अभावग्रस्तस्य कारणत्वं मा भूत्; भावमात्रेण

### *भाष्यभावप्रकाशिका*

वा पाठः। आशयः कर्म। तद्द्वाराऽप्याक्षेपकतदाश्रयभोक्तृशून्येष्विति यावत्। द्वितीयं कल्पमवलम्बते— **अथायमिति**। **कथं तमेवाश्रित्ये**[ति। इ]तरेतराश्रयत्वमित्यर्थः।

पूर्वपूर्वसङ्घात एवोत्तरोत्तरसङ्घातहेतुरित्याशङ्कते— **अथ मन्यस इति**। तदा संहता एवोदयन्ते, व्ययन्ते च भावाः स्वभावेन, अतो न संहन्तृचेतनापेक्षेति भावः। तदेतद्विकल्प्य दूषयति— **तदाऽपीति**। सङ्घातवर्तिनो दृष्टस्याधिष्ठातृचेतनाभावात् स्वभावादेवोत्पत्तिरास्थेया। तथा चैते दोषाः स्युरिति भावः।

स्थिरस्य भोक्तुरभावाद् भोग-मोक्षप्रथाऽनुपपत्तेः सर्वथाऽनुपपत्तेश्च तयोः सङ्घाताभावः स्यादित्याह— **अपि च यद्भोगार्थ इति**।।१९।।

**उत्तरोत्पादे च पूर्वनिरोधात्**।।२०।। पूर्वसूत्रेण सङ्गतिमाह— **उक्तमिति**। इतरेतरहेतुत्वमङ्गीकृत्याविद्यादीनां सङ्घातानुपपत्तिरुक्ता,

### *न्यायनिर्णयः*

पूर्वपूर्वसंघातानामुत्तरोत्तरसंघातहेतुत्वात् तदाश्रयत्वाच्चाविद्यादीनां नान्योन्याश्रयत्वम्। न च संहन्तृचेतनापेक्षा, स्वभावतो भावानां संहतानामेवोदयव्ययोपगमादित्याह— **अथेति**। तद् दूषयितुं विकल्पयति— **तदापीति**। संघातवर्तिनोऽदृष्टस्याधिष्ठातृचेतनाभावात् तद्वशात् प्रतिनियतकार्योत्पादायोगे स्वभावादेवोत्पत्तिरास्थेया। तथाच पूर्यते गलति चेति पुद्गलं शरीरं, तच्च मनुष्यशब्दितं, तदुपेतः संघातो नियमपक्षे न जात्यन्तरभाग् भवेदित्याह— **नियमेति**। द्वितीयेऽपि व्यवस्थापकाभावेनाव्यवस्थामाह— **अनियमेति**। उभयत्रेष्टापत्तिं शङ्कित्वा निरस्यति— **उभयमिति**।

न केवलं संघातानुपपत्त्या क्षणवादानुपपत्तिः, भोगापवर्गव्यवहारानुपपत्तेश्चेत्याह— **अपि चेति**। क्षणवादेऽपि बुभुक्षुणा भोगो, मुमुक्षुणा मोक्षश्चार्थनीयौ, तत्कुतो भोगापवर्गव्यवहारासिद्धिः, तत्राह— **यदिति**। अभ्युपगमफलमाह— **ततश्चेति**। भोगे दर्शितं न्यायं मोक्षेऽतिदिशति— **तथेति**। विपक्षे दण्डमाह— **अन्येनेति**। बुभुक्षोर्मुमुक्षोर्वा कालद्वयस्थायित्वमाशङ्क्याह— **अवस्थायित्व इति**। परिहारभागतात्पर्यमुपसंहरति— **तस्मादिति**।।१९।।

उपेत्यवादमिदानीं त्यजति— **उत्तरेति**। पूर्वसूत्रोक्तमनूद्यास्य सूत्रस्य तात्पर्यमाह— **उक्तमिति**। अविद्यादीनां मिथो हेतुत्वमुपेत्य

**उक्तमेतदविद्यादीनामुत्पत्तिमात्रनिमित्तत्वान्न संघातसिद्धिरस्तीति। तदपि तूत्पत्तिमात्रनिमित्तत्वं न संभवतीतीदमिदानीमुपपाद्यते। क्षणभङ्गवादिनोऽयमभ्युपगमः– उत्तरस्मिन् क्षण उत्पद्यमाने पूर्वः क्षणो निरुध्यत इति। न चैवमभ्युपगच्छता पूर्वोत्तरयोः क्षणयोर्हेतुफलभावः शक्यते संपादयितुम्। निरुध्यमानस्य निरुद्धस्य वा पूर्वक्षणस्याभावग्रस्तत्वादुत्तरक्षणहेतुत्वानुपपत्तेः। अथ भावभूतः परिनिष्पन्नावस्थः पूर्वक्षण उत्तरक्षणस्य हेतुरित्यभिप्रायः, तथापि नोपपद्यते। भावभूतस्य पुनर्व्यापारकल्पनायां क्षणान्तरसंबन्धप्रसङ्गात्। अथ भाव एवास्य व्यापार इत्यभिप्रायः, तथापि नैवोपपद्यते। हेतुस्वभावानुपरक्तस्य फलस्योत्पत्त्यसंभवात्। स्वभावोपरागाभ्युपगमे च हेतुस्वभावस्य फलकालावस्थायित्वे सति क्षणभङ्गाभ्युपगमत्यागप्रसङ्गः। विनैव वा स्वभावोपरागेण हेतुफलभावमभ्युपगच्छतः सर्वत्र तत्प्राप्तेरतिप्रसङ्गः।**

**अपि चोत्पादनिरोधौ नाम वस्तुनः स्वरूपमेव वा स्यातामवस्थान्तरं वा वस्त्वन्तरमेव वा। सर्वथाऽपि**

### *प्रकटार्थविवरणम्*

कारणत्वं भविष्यतीत्याह— **अथ भावभूत इति**। दूषयति— **तथापीति**। लब्धसत्ताकस्य व्यापारान्तरमङ्गीक्रियते, न वा? उभयथाऽपि न क्षणिकस्य कारणत्वमित्यर्थः। सुवर्णान्वितस्य कुण्डलादेरुत्पत्त्यसंभवात् कारणान्वयोऽपि तर्ह्यस्तु इत्याशङ्क्याह— **स्वभावोपरागेति**। यद्युक्तदोषभयादत्यन्तविलक्षणानामेव क्षणानां कार्यकारणभावोऽभ्युपगम्येत, तदा सिकताभ्योऽपि तैलं स्यादित्याह— **विनैवेति**।

### *भाष्यभावप्रकाशिका*

सम्प्रति तदप्यनुपपन्नमिति प्रदर्श्यत इत्यर्थः। अविद्यादीनामितरेतरोत्पत्तिनिमित्तत्वानुपपत्तिं दर्शयितुं तेषां पक्षमनुवदति— **क्षणभङ्गेति**। कारणस्योत्पादनव्यापारः स्वसत्ताक्षणे, किं वोत्तरक्षण इति। उत्तरपक्षे दूषणमाह— **निरुध्यमानस्येति**। निरुध्यमानस्य कथमभावग्रस्तत्वमिति चेत्, [न तावत्] वैशेषिकवन्निरोधकारणसांनिध्यं निरुध्यमानतेति; वैनाशिकेन निर्हेतुकविनाशमभ्युपगच्छताऽनङ्गीकारात्, अतोऽभावग्रस्तत्वं चिराचिरविनष्टयोर्निरुध्यमान-निरुद्धयोरुक्तमिति द्रष्टव्यम्। प्रथमकल्पमाशङ्कते— **अथ भावभूत इति**। कारणस्य कार्यात्पूर्वकाले सत्ताऽर्थवती, न कार्यकाले, कार्यस्य सिद्धत्वेन तत्सिद्ध्यर्थायाः कारणसत्तायास्तदानुपयोगादित्यर्थः। तत्रापि वक्तव्यम्— उत्पादनं पदार्थस्य धर्मः, किं वा स्वरूपमेवेति? आद्यपक्षे दूषणमाह— **भावभूतस्येति**। स्वरूपत्वेऽपि कार्ये किमन्वेति, किं वा नान्वेतीति। यद्यनन्वयः, तत्राह— **तथापि नेति**। प्रथमपक्षं दूषयति— **स्वभावोपराग इति**। उत्तरपक्षस्य दूषणं प्रपञ्चयति— **विनैवेति**। न च कारणसादृश्यं कार्यस्यैष्टव्यम्, न तु तादात्म्यमिति वाच्यम्, कस्यचिद्रूपस्याननुगमे सादृश्यस्याप्यभावादित्यर्थः।

### *न्यायनिर्णयः*

संघातासिद्धिरुक्ता, सम्प्रत्यन्योन्यहेतुत्वमपि नेति वक्तुमिदं सूत्रमित्यर्थः। अविद्यादीनामन्योन्यनिमित्तत्वायोगं वक्तुं परपक्षमनुवदति— **क्षणेति**। तत्रानुपपत्तिं प्रतिजानीते— **न चेति**। काऽत्रानुपपत्तिरित्याशङ्क्य पूर्वक्षणस्योत्पादनव्यापारः समनन्तरक्षणे वा स्वसत्ताक्षणे वेति विकल्प्याद्यं प्रत्याह— **निरुध्यमानस्येति**। अचिरनिरुद्धत्वं निरुध्यमानत्वम्, निरोधहेतुसांनिध्यानु[प]गमात्, निरुद्धत्वं चिरनिरुद्धत्वम्। कल्पान्तरमुत्थापयति— **अथेति**। स्थायित्वं व्यवच्छिनत्ति— **परिनिष्पन्नेति**। कारणस्य कार्यात्पूर्वकाले सत्ताऽर्थवती, न कार्यकाले। तदा कार्यस्य सिद्धत्वेन तदर्थसत्तानुपयोगत्वादिति भावः। तत्रापि कार्यकारणत्वासिद्धिरित्याह— **तथापीति**। कथम्? कारणस्योत्पादनं धर्मः, स्वरूपं वा? नाद्य इत्याह— **भावेति**। कल्पान्तरमाह— **अथेति**। तत्रापि हेतुफलत्वस्य न संभावनेत्याह— **तथापीति**। कथम्? हेतुस्वरूपं कार्यानन्वयि, तदन्वयि वा? तत्र प्रथमं प्रत्याह— **हेत्विति**। तदनुपरागेऽपि तद्भावे हिमवद्विन्ध्ययोरपि तद्भावः स्यादिति भावः। कल्पान्तरं दूषयति— **स्वभावेति**। प्रथमपक्षोक्तदोषं प्रपञ्चयति— **विनैवेति**। न च कार्यस्य कारणसादृश्यं तन्निवारकं, किंचिद्रूपानुगमाभावे तस्यैवासंभवादिति भावः।

**नोपपद्यते। यदि तावद् वस्तुनः स्वरूपमेवोत्पादनिरोधौ स्याताम्, ततो वस्तुशब्द उत्पादनिरोधशब्दौ च पर्यायाः प्राप्नुयुः। अथास्ति कश्चिद् विशेष इति मन्येतोत्पादनिरोधशब्दाभ्यां मध्यवर्तिनो वस्तुन आद्यन्ताख्ये अवस्थे अभिलप्येते इति, एवमप्याद्यन्तमध्यक्षणत्रयसंबन्धित्वाद् वस्तुनः क्षणिकत्वाभ्युपगमहानिः। अथात्यन्तव्यतिरिक्तावेवोत्पादनिरोधौ वस्तुनः स्यातामश्वमहिषवत्, ततो वस्तु उत्पादनिरोधाभ्यामसंसृष्टमिति वस्तुनः शाश्वतत्वप्रसङ्गः। यदि च दर्शनादर्शने वस्तुन उत्पादनिरोधौ स्याताम्, एवमपि द्रष्टृधर्मौ तौ न वस्तुधर्माविति वस्तुनः शाश्वतत्वप्रसङ्ग एव। तस्मादप्यसङ्गतं सौगतं मतम्।।२०।।**

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा।।२१।।**

**क्षणभङ्गवादे पूर्वक्षणो निरोधग्रस्तत्वान्नोत्तरस्य क्षणस्य हेतुर्भवतीत्युक्तम्। अथासत्येव हेतौ फलोत्पत्तिं ब्रूयात्, ततः प्रतिज्ञोपरोधः स्यात्– चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्ता उत्पद्यन्त इतीयं प्रतिज्ञा हीयेत।**

***प्रकटार्थविवरणम्***

किञ्चोत्पादनिरोधयोः निरूपणासहत्वादपि न क्षणिकं परमार्थ इत्याह— **अपि चेत्यादिना।**

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा।।** वृत्तानुवादपूर्वकं सूत्रं व्याचष्टे— **क्षणभङ्गवाद इत्यादिना।** [१]चक्षुराद्यालोकसमनन्तरं[र] प्रत्ययविषयांश्चतुर्विधान् हेतून् प्रतीत्य प्राप्य चित्तं विज्ञानं चैत्ताः सुखादय उत्पद्यन्त इत्यर्थः। ''यौगपद्यमन्यथा'' इत्येतद्

***भाष्यभावप्रकाशिका***

अपि चोत्पादनिरोधयोर्विकल्पत्रयेऽपि वस्तुनः स्थायित्वं स्यादित्याह— **अपि चेति।** पर्यायत्वापादनेऽपि नित्यत्वोपपादनं मन्तव्यम्। **वस्तूत्पादनिरोधाभ्यामिति।** संसर्गेऽप्यसतः संसर्गाभावाद् वस्तुनः शाश्वतत्वमिति भावः।।२०।।

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा।।२१।।** पूर्वोत्तरक्षणवर्तित्वमेव कार्यकारणभावश्चेत्, सर्वं सर्वस्य कार्यं स्यादित्युक्तमित्याह— **क्षणभङ्गेति।** कारणाभावात्कार्योत्पत्तिः, किं वा कारणाभावे सति कार्योत्पत्तिः। प्रथमपक्षमुपरिष्टाद् दूषयिष्यति। इदानीमुत्तरं दूषयति— **अथासत्येवेति। चतुर्विधानिति।** नीलाभासस्य चित्तस्य नीलादालम्बनप्रत्ययान्नीलाकारता। समनन्तरप्रत्ययात् पूर्वविज्ञानाद् बोधरूपता। चक्षुषोऽधिपतिप्रत्ययात् रूपग्रहणप्रतिनियमः। आलोकाद्धेतोः स्पष्टता। एवं सुखादीनामपि चैत्तानां चित्ताभिन्नहेतुजानां चत्वार्येतान्येव

***न्यायनिर्णयः***

इतश्च क्षणवादासिद्धिरित्याह— **अपि चेति।** तदेव वक्तुमुत्पादनिरोधौ त्रेधा विकल्पयति— **उत्पादेति।** पक्षत्रयेऽपि वस्तुनो नित्यत्वप्रसङ्गान्न क्षणिकतेत्याह— **सर्वथेति।** तत्राद्यमनूद्य वस्तुनो नित्यत्वं प्रसञ्जयन् क्षणिकत्वासिद्धिमाह— **यदीति।** द्वितीयेऽपि क्षणिकत्वासिद्धितादवस्थ्यमाह— **अथेत्यादिना।** तमेव विशेषं दर्शयति— **उत्पादेति।** तृतीयमनूद्य क्षणिकत्वासिद्धिं स्फुटयति— **अथेति।** प्रकारान्तरमाशङ्क्य प्रत्याह— **यदीति।** उत्पादनिरोधयोर्दुर्निरूपत्वे फलमाह— **तस्मादिति।** संघातस्य हेतुफलत्वस्य चासिद्धिरपिशब्दार्थः।।२०।।

किंचासति फलहेतौ फलमुत्पद्यते, सत्येव वेति विकल्प्याद्यं दूषयति— **असतीति।** सूत्रं व्याकर्तुं वृत्तं कीर्तयति— **क्षणेति।** मा तर्हि पूर्वक्षणस्योत्तरक्षणकारणत्वं भूत्; तर्हि पूर्वक्षणाभावाद् वोत्तरक्षणस्योत्पत्तिस्तदभावे सति वा। नाद्यः, 'नासतोऽदृष्टत्वात्' इति वक्ष्यमाणत्वात्। द्वितीयमनुवदति— **अथेति।** निर्हेतुफलोत्पत्तिं प्रत्याह— **तत इति।** प्रतिज्ञोपरोधं स्फोरयति— **चतुर्विधानिति।** आलम्बनप्रत्ययः समनन्तरप्रत्ययोऽधिपतिप्रत्यय आलोकश्चेति चतुर्विधा हेतवः, तान् प्रतीत्य प्राप्य चित्तं चैत्ताश्च तदभिन्नाः सुखादयो जायन्ते। तत्र नीलाभासस्य चित्तस्य नीलादालम्बनप्रत्ययान्नीलाकारता। समनन्तरप्रत्ययात्पूर्वज्ञानाद् बोधरूपता। चक्षुषोऽधिपतिप्रत्ययाद्रूपग्रहणप्रतिनियमः। आलोकाद्धेतोः स्पष्टता। सुखादीनामपि चैत्तानां चित्ताभिन्नानामेतान्येव चत्वारि कारणानि।

१. चक्षुरादिश्च आलोकश्च समनन्तरप्रत्ययश्च विषयश्चेति चतुर्णां द्वन्द्वसमासः।

**निर्हेतुकायां चोत्पत्तावप्रतिबन्धात् सर्वं सर्वत्रोत्पद्येत। अथोत्तरक्षणोत्पत्तिर्यावत्तावदवतिष्ठते पूर्वक्षण इति ब्रूयात्, ततो यौगपद्यं हेतुफलयोः स्यात्, तथापि प्रतिज्ञोपरोध एव स्यात्। क्षणिकाः सर्वे संस्कारा इतीयं प्रतिज्ञोपरुध्येत।।२१।।**

**प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्।।२२।।**

**अपि च वैनाशिकाः कल्पयन्ति– बुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकं चेति। तदपि च त्रयं प्रतिसंख्याऽप्रतिसंख्यानिरोधावाकाशं चेत्याचक्षते। त्रयमपि चैतदवस्तु अभावमात्रं निरुपाख्यमिति मन्यन्ते। बुद्धिपूर्वकः किल विनाशो भावानां प्रतिसंख्यानिरोधो नाम भाष्यते, तद्विपरीतोऽप्रतिसंख्यानिरोधः, आवरणाभावमात्रमाकाशमिति। तेषामाकाशं परस्तात् प्रत्याख्यास्यति। निरोधद्वयमिदानीं प्रत्याचष्टे। प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरप्राप्तिः, असंभव इत्यर्थः। कस्मात्? अविच्छेदात्। एतौ हि**

***प्रकटार्थविवरणम्***

व्याचष्टे— **अथोत्तरक्षणोत्पत्तिनिमित्तमिति** [त्पत्तिर्यावदिति]। संस्क्रियन्ते उत्पाद्यन्ते इति संस्काराः आद्यन्तवन्तो भावा इत्यर्थः।

**प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात्**।। एवं तावत् समुदायासंभवं कार्यकारणभावासंभवं क्षणिकत्वासंभवं चोक्त्वाऽधुनाऽभ्युपगमान्तरं पराकरोति— **अपि च वैनाशिका इति**। संस्कृतमुत्पाद्यं क्षणिकं प्रमेयं च त्रयव्यतिरिक्तम्; किं तत् त्रयमित्यत आह— **तदपि चेति**। एवं तदीयमभ्युपगममुक्त्वा तन्निराकरणाय सूत्रं योजयति— **निरोधद्वयमिदानीमिति**। सन्तानो नाम पूर्वोत्तरक्षणयोः हेतुफलभावः। तत्र चरमक्षणं[णः] क्षणान्तरमारभते न वा? आद्ये न चरमः[१], अन्ते तस्यासत्त्वप्रसङ्गः, सत्त्वस्यार्थक्रियाकारित्वलक्षणत्वाभ्युपगमात्; तस्यासत्त्वे पूर्वेषां सर्वेषामप्यसत्त्वप्रसङ्गः, तस्मात् सन्तानस्योच्छेदो न संभवतीत्याह—

***भाष्यभावप्रकाशिका***

कारणानीति। सेयम् प्रतिज्ञेत्यर्थः। **ततो यौगपद्यमिति**[२]।।२१।।

**प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्**।।२२।। भावप्रतीपा संख्या सन्तमिममसन्तं करोमीति बुद्धिः प्रतिसंख्या। तया निरोधः बुद्धिपूर्वको विनाश इत्यर्थः। **तद्विपरीत इति**। स्तम्भादीनां प्रतिक्षणं स्वारसिको नाश इत्यर्थः। **सन्तानविच्छेदस्येति**।

***न्यायनिर्णयः***

सेयं प्रतिज्ञा निर्हेतुफलोत्पत्तौ बाध्येतेत्यर्थः। तत्रैवातिप्रसङ्गं दोषान्तरमाह— **निर्हेतुकायां चेति**। अन्यथेति सूत्रावयवं शङ्कात्वेन व्याकरोति— **अथेति**। तथा च न प्रतिज्ञोपरोधातिप्रसङ्गाविति शेषः। उत्पत्तेरुत्पद्यमानाभेदमभ्युपयन्तं प्रति सूत्रावयवेनोत्तरमाह— **तत इति**। यौगपद्योपगमे का हानिः, तत्राह— **तथापीति**। पूर्ववदत्र प्रतिज्ञोपरोधो नास्तीत्याशङ्क्याह— **क्षणिका इति**। आद्यन्तवन्तो भावाः संस्काराः, संस्क्रियन्ते समुत्पद्यन्त इति व्युत्पत्तेः।।२१।।

समुदायस्य कार्यकारणभावस्य क्षणिकत्वस्य चासिद्धिरुक्ता। सम्प्रत्यभ्युपगमान्तरं प्रत्याह— **प्रतिसंख्येति**। सौगतमतासांगत्ये सूत्रस्य हेत्वन्तरपरत्वमाह— **अपि चेति**। तदेव वक्तुं तन्मतमनुभाषते— **वैनाशिका इति**। संस्कृतमुत्पाद्यं त्रयादन्यदित्युक्तम्। किं तत् त्रयं, तदाह— **तदपीति**। तस्यापि क्षणिकत्वादुत्पाद्यत्वाच्च नान्यत्वप्रतियोगित्वमित्याशङ्क्याह— **त्रयमपीति**। वस्तुप्रतियोगिकान्यत्वं वस्त्वन्तरस्यापीत्याशङ्क्योक्तम्— **अभावेति**। अभावस्यापि प्रतियोगिद्वारा सोपाख्यत्वमित्याशङ्क्याह— **निरुपाख्यमिति**। प्रतीपा संख्या प्रतिसंख्या सन्तमिममसन्तं करोमीति धीस्तया निरोधस्तथेति व्युत्पादयति— **बुद्धीति**। स्तम्भादीनां प्रतिक्षणं स्वारसिको विनाश इत्यप्रतिसंख्यानिरोधं व्याचष्टे— **तद्विपरीत इति**। आवरणाभावव्यङ्ग्यं शब्दवद्द्रव्यं व्यवच्छेत्तुं मात्रपदम्। पराभ्युपगम-मुक्त्वा सूत्रविषयं परिशिनष्टि— **तेषामिति**। तात्पर्यमुक्त्वा प्रतिज्ञां विभजते— **प्रतिसंख्येति**। तत्र प्रश्नपूर्वकं हेतुमाह—

१. क्षणान्तरारम्भकस्य चरमक्षणत्वं नेत्यर्थः। २. प्रतीकस्य व्याख्यानादर्शनेन ग्रन्थपातः ऊह्यते।

**प्रतिसंख्याऽप्रतिसंख्यानिरोधौ संतानगोचरौ वा स्यातां भावगोचरौ वा? न तावत् संतानगोचरौ संभवतः। सर्वेष्वपि संतानेषु संतानिनामविच्छिन्नेन हेतुफलभावेन संतानविच्छेदस्यासंभवात्। नापि भावगोचरौ संभवतः। न हि भावानां निरन्वयो निरुपाख्यो विनाशः संभवति, सर्वास्वप्यवस्थासु प्रत्यभिज्ञानबलेनान्वय्यविच्छेददर्शनात्। अस्पष्टप्रत्यभिज्ञानास्वप्यवस्थासु क्वचिद् दृष्टेनान्वय्यविच्छेदेनान्यत्रापि तदनुमानात्। तस्मात् परपरिकल्पितस्य निरोधद्वयस्यानुपपत्तिः।।२२।।**

## उभयथा च दोषात्।।२३।।

**योऽयमविद्यादिनिरोधः प्रतिसंख्यानिरोधान्तःपाती परपरिकल्पितः, स सम्यग्ज्ञानाद्वा सपरिकरात् स्यात्**

### *प्रकटार्थविवरणम्*

**न तावदिति**। द्वितीयं प्रत्याह— **नापीति**। घटकपालादिषु सर्वत्रैव सैवेयं मृदिति प्रत्यभिज्ञायमानत्वात् मृदन्वयस्य नात्यन्तिको विनाशः संभवतीत्यर्थः। ननु प्रदीपादिष्वात्यन्तिक एव विनाशो दृष्ट इत्याशङ्क्याह— **अस्पष्टप्रत्यभिज्ञास्वपीति**। घटादिष्वेकस्य रूपस्याविच्छेदः स्पष्ट एवोपलभ्यते; प्रदीपादौ तु सन्देहः— किं सूक्ष्मत्वादवयवानुपलम्भः, किं वाऽभावात्? एवं सति दृष्टबलेनादृष्टं निर्णेतव्यम्। विमतं न निरन्वयविनाशि, विनाशित्वात्, घटवदित्यर्थः।

**उभयथा च दोषात्**।। इतश्चानुपपन्नो वैनाशिकसमय इत्याह— **उभयथा चेति**। **सपरिकरात्** यमनियमादिसहकृतादित्यर्थः। क्षणिकं दुःखं निरात्मकमित्यादिभावनोपदेशो मार्गोपदेशः।

### *भाष्यभावप्रकाशिका*

योऽसावन्त्यः सन्तानी, स किं फलं किञ्चिदारभते, न वा? आरभते चेत्, नान्त्यः, नापि सन्तानोच्छेदः। अनारम्भे त्वर्थक्रिया-शून्यत्वादसत् स्यात्, तदसत्त्वे तज्जनकमप्यसदित्यनेन क्रमेणासन्तः सर्व एव सन्तानिनः स्युः। न च विजातीयक्षणोत्पाद-कत्वेनार्थक्रियाकारित्वात् सजातीयानुत्पादकतया च सन्तानविच्छेद इति शङ्कनीयम्, एकस्मिन् सन्तानेऽनेकसन्तानप्रसङ्गादित्यर्थः। ननु बीजाङ्कुरादीनामुत्तरोत्तरकार्ये प्रत्यभिज्ञानाभावाद् विच्छेद इत्याशङ्क्य, उभयवादिसंप्रतिपन्नेन तत्राप्यविच्छेदेनानुमानान्नेत्याह— **अस्पष्टेति**। न चावस्थानामपि निरन्वयविनाशः, तासामनिर्वचनीयतयाऽन्वयितावन्मात्रत्वात्, तस्य चानाशादित्यभिप्रेत्योपसंहरति— **तस्मादिति**।।२२।।

**उभयथा च दोषात्**।।२३।। यम-नियमादिसामग्री परिकरः। मार्गः क्षणिकत्वादिभावना।।२३।।

### *न्यायनिर्णयः*

**कस्मादिति**। हेतुं व्याख्यातुं विकल्पयति— **एतौ हीति**। भावशब्दः संतानिवाची। तत्राद्यं दूषयति— **न तावदिति**। योऽसावन्त्यः संतानी स किंचिदारभते न वा? नाद्यः, अन्त्यत्वासिद्धेः, संतानानुच्छेदाच्च। द्वितीयेऽर्थक्रियाभावात् तदसत्त्वे तज्जनकमपि सर्वमसदित्यनेन क्रमेणासन्तः सर्वे संतानिनः स्युः। न च विजातीयक्षणोत्पादकत्वेनार्थक्रियाकारित्वं सजातीयानुत्पादकत्वेन च संतानोच्छित्तिः; एकस्मिन्नेव संतानेऽनेकसंतानप्रसङ्गात्। अतः संतानानुच्छेदान्न तद्गोचरौ निरोधावित्यर्थः। न द्वितीय इत्याह— **नापीति**। निरन्वयं व्याचष्टे— **निरुपाख्य इति**। घटकपालादिषु सर्वत्र सैवेयं मृदिति प्रत्यभिज्ञानादन्वयिनो नाशाभावावगतेरिति हेतुमाह— **सर्वास्विति**। बीजाङ्कुरादीनामुत्तरोत्तरकार्ये प्रत्यभिज्ञानाभावादन्वयिविच्छित्तिरित्याशङ्क्याह— **अस्पष्टेति**। तास्वपि नान्वयी विच्छिद्यते, घटकपालादौ दृष्टेनान्वय्यविच्छेदेन विवादस्थलेऽपि तदनुमानात्। विमतं न निरन्वयविनाशि, कार्यत्वात्, घटादिवदित्यर्थः। अन्वय्यविच्छेदेऽपि विच्छेदोऽवस्थानामात्यन्तिकः स्यादित्याशङ्क्य नावस्था निरन्वयनाशिन्यस्तासामनिर्वाच्यतयाऽन्वयिमात्रत्वात् तस्य च सत्त्वेनाधिष्ठानत्वादनाशादित्युपसंहरति— **तस्मादिति**।।२२।।

प्रतिसंख्यानिरोधान्तर्भूतमविद्यादिनिरोधं निरस्यति— **उभयथेति**। सूत्रं व्याकर्तुं विषयमुक्त्वा विकल्पयति— **योऽयमिति**। यमनियमादिसामग्री परिकरः, तत्सहितसम्यग्धीसाध्यश्चेदविद्यादिनिरोधस्तदा स्वमतहतिरित्याह— **पूर्वस्मिन्निति**। स्वयमेव चेदविद्यादिनिरो-धस्तदा सर्वं क्षणिकमित्यादिभावनोपदेशवैयर्थ्यमित्याह— **उत्तरस्मिंस्त्विति**। सूत्रव्याख्यामुपसंहरति— **एवमिति**।।२३।।

**स्वयमेव वा। पूर्वस्मिन् विकल्पे निर्हेतुकविनाशाभ्युपगमहानिप्रसङ्गः। उत्तरस्मिंस्तु मार्गोपदेशानर्थक्यप्रसङ्गः। एवमुभयथाऽपि दोषप्रसङ्गादसमञ्जसमिदं दर्शनम्।।२३।।**

## आकाशे चाविशेषात्।।२४।।

**यच्च तेषामेवाभिप्रेतं निरोधद्वयमाकाशं च निरुपाख्यमिति, तत्र निरोधद्वयस्य निरुपाख्यत्वं पुरस्तान्निराकृतम्। आकाशस्येदानीं निराक्रियते। आकाशे चायुक्तो निरुपाख्यत्वाभ्युपगमः। प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरिव वस्तुत्वप्रतिपत्तेरविशेषात्। आगमप्रामाण्यात् तावत् 'आत्मन आकाशः संभूतः' (तै.उ.२।१) इत्यादिश्रुतिभ्य आकाशस्य च वस्तुत्वप्रसिद्धिः। विप्रतिपन्नान् प्रति तु शब्दगुणानुमेयत्वं वक्तव्यम्, गन्धादीनां गुणानां पृथिव्यादिवस्त्वाश्रयत्वदर्शनात्।**

**अपि चावरणाभावमात्रमाकाशमिच्छतामेकस्मिन् सुपर्णे पततयावरणस्य विद्यमानत्वात् सुपर्णान्तर-**

### *प्रकटार्थविवरणम्*

**आकाशे चाविशेषात्**।। वृत्तसङ्कीर्तनपूर्वकं व्याख्याति— **यच्च तेषामिति**। नन्वागमप्रामाण्ये ये विप्रतिपन्नाः कथं तान् प्रत्यागमेन वस्तुत्वं साध्यत इत्याशङ्क्याह— **विप्रतिपन्नानिति**। शब्दो गुणः, [१]सामान्यवत्त्वात्, स्पर्शवत्त्वेऽसति बाह्यैकेन्द्रियग्राह्यत्वाद्, गन्धवत्; साश्रयश्च, गुणत्वात्, रूपवत्, न भूतचतुष्टयाश्रयः, स्पर्शाद्यसहचारित्वात्, सुखादिवत्; न चात्मनो गुणः, बाह्येन्द्रियग्राह्यत्वात्, रूपवत्; न च दिक्कालमनसां विशेषगुणोऽस्ति; पारिशेष्यात् यस्यायं गुणः स आकाश इति वैशेषिकप्रक्रियानुसारेणोक्तम्। रहस्यं तु साक्षिवेद्यमित्यवोचम्। आवरणाभावपक्षे च बाधकमाह— **अपि चेति**। यथैकघटसद्भावे घटान्तराभावप्रयुक्त्याऽपि निर्घटं भूतलमिति न शक्यते वक्तुम्, तथैकस्मिन्नावरणे सत्यावरणान्तराभावप्रयुक्त्याऽप्यावरणशून्यत्वं वक्तुं न शक्यत इति पक्ष्यन्तरसञ्चारो न

### *भाष्यभावप्रकाशिका*

**आकाशे चाविशेषात्**।।२४।। सूत्रस्य सङ्गतिमाह— **यच्चेति**। वस्तुत्वप्रतीतिः कथमित्याकाङ्क्षायामाह— **आगमेति**। बौद्धानामागमप्रामाण्यमसंप्रतिपन्नमित्याशङ्क्याह— **विप्रतिपन्नानिति**। जातिमतः स्पर्शवत्त्वे सति बाह्यैकेन्द्रियग्राह्यत्वाद्, गन्धादिवद् विशेषगुणत्वम्, पृथिव्यादिगुणसाहचर्यानुपलब्धेः, दिक्कालमनसां च विशेषगुणशून्यत्वात्, बाह्येन्द्रियग्राह्यतया च शब्दस्यानात्मगुणत्वात् [२]परिच्छेदाश्रयतयाऽऽकाशसिद्धिरित्यर्थः।

### *न्यायनिर्णयः*

निरोधद्वयं निरस्याकाशं निरस्यति— **आकाशे चेति**। सूत्रस्य संगतिमाह— **यच्चेति**। वृत्तमनूद्य पूर्वोत्तरसूत्रयोरपुनरुक्तं विषयमुक्त्वा प्रतिज्ञामाकाङ्क्षां पूरयन् व्याकरोति— **आकाशे चेति**। तत्र हेतुः— **प्रतिसंख्येति**। कथमावरणाभावमात्रे तस्मिन् वस्तुत्वधीः, तत्राह— **आगमेति**। तत्प्रामाण्येऽपि कथमाकाशे वस्तुत्वधीरित्याशङ्क्य तदुत्पत्तिवादिनीनां श्रुतीनां भूयस्त्वादित्याह— **आत्मन इति**। न हि निरुपाख्यं नरविषाणवदुत्पत्तुमर्हतीति भावः। आगमप्रामाण्ये बौद्धा विवदन्ते, तत्कथं तान्प्रत्यागमेन नभसो वस्तुत्वमुच्यते, तत्राह— **विप्रतिपन्नानिति**। अनुमानमेव सूचयति— **गन्धादीनामिति**। शब्दो हि क्वचिदाश्रितः, धर्मत्वात्, गन्धवदिति सामान्यतो धर्मिसिद्धिः। शब्दश्च विशेषगुणः, अस्पर्शवत्त्वे सति बाह्यैकेन्द्रियग्राह्यजातिमत्त्वात्, गन्धवत्। स च प्रत्यक्षत्वे सत्ययावद्द्रव्यभावित्वेन स्पर्शवदसंबन्धात्, विशेषगुणतया दिक्कालमनोभिरसंसर्गात्, बाह्येन्द्रियग्राह्यतया चानात्मगुणत्वात्, पारिशेष्यादष्टद्रव्यातिरक्तद्रव्याश्रयः; तच्चाकाशमित्यर्थः।

आगमादनुमानादनुभवाद्वा सोपाख्यमाकाशमित्युक्त्वाऽऽवरणाभावपक्षे दोषमाह— **अपि चेति**। यथैकघटसत्त्वेऽपि घटान्तरासत्त्वप्रयुक्त्या निर्घटं भूतलमित्यशक्यं वक्तुं, तथैकस्मिन्नावरणे सत्यावरणान्तराभावप्रयुक्त्याऽपि न तद्धीनतेति पक्ष्यन्तरसंचारो

---

१. 'सामान्यवत्त्वे सति' इति पाठः स्यात्। गन्धत्वादिवारणायाद्यं दलम्। वायोः स्पार्शनप्रत्यक्षत्वमते तद्वारणाय द्वितीयम्। आत्मादिवारणाय तृतीयम्। कर्मवारणाय एकेति दिक्। २. 'परिशेषादाश्रयतया' इति पाठः स्यात्।

**स्योत्पित्सतोऽनवकाशत्वप्रसङ्गः। यत्रावरणाभावस्तत्र पतिष्यतीति चेत्, येनावरणाभावो विशेष्यते तत् तर्हि वस्तुभूतमेवाकाशं स्यात्, नावरणाभावमात्रम्।**

**अपि चावरणाभावमात्रमाकाशं मन्यमानस्य सौगतस्य स्वाभ्युपगमविरोधः प्रसज्येत। सौगते हि समये 'पृथिवी भगवः किंसंनिश्रया' इत्यस्मिन् प्रश्नप्रतिवचनप्रवाहे पृथिव्यादीनामन्ते 'वायुः किंसंनिश्रयः' इत्यस्य प्रश्नस्य प्रतिवचनं भवति 'वायुराकाशसंनिश्रयः' इति। तदाकाशस्यावस्तुत्वे न समञ्जसं स्यात्। तस्मादप्ययुक्तमाकाशस्यावस्तुत्वम्। अपि च निरोधद्वयमाकाशं च त्रयमप्येतन्निरुपाख्यमवस्तु नित्यं चेति विप्रतिषिद्धम्। न ह्यवस्तुनो नित्यत्वमनित्यत्वं वा संभवति, वस्त्वाश्रयत्वाद् धर्मधर्मिव्यवहारस्य। धर्मधर्मिभावे हि घटादिवद् वस्तुत्वमेव स्यान्न निरुपाख्यत्वम्।।२४।।**

## अनुस्मृतेश्च।।२५।।

**अपि च वैनाशिकः सर्वस्य वस्तुनः क्षणिकतामभ्युपयन्नुपलब्धुरपि क्षणिकतामभ्युपेयात्। न च सा संभवति। अनुस्मृतेः। अनुभवमुपलब्धिमनूत्पद्यमानं स्मरणमेवानुस्मृतिः। सा चोपलब्ध्येककर्तृका सती**

### *प्रकटार्थविवरणम्*

स्यादित्यर्थः। देशावच्छेदेनावरणभावाभावविभागं शङ्कते— **यत्रेति**। तर्हि यो देश आवरणाभावस्यावच्छेदकः स एवाकाशोऽस्माकमित्याह— **येनावरणाभाव इति**। स्वाभ्युपगमविरोधादपि नावस्तुत्वमित्याह— **अपि चेति**। किं सम्यक् निःश्रय आश्रयोऽस्या इति किंसन्निश्रयः। निरोधद्वयस्याकाशस्य चावस्तुत्वे साधारणं दूषणान्तरमाह— **अपि च निरोधद्वयमिति**। विनाशाभावोपलक्षितसत्तायोगित्वं हि नित्यत्वम्; तत् तुच्छस्य न संभवतीत्यर्थः।

**अनुस्मृतेश्च**।। इदानीं विशेषत आत्मनः स्थायित्वं साधयति— **अनुस्मृतेश्चेति**। विमतं स्मरणम्, अन्यानुभूतौ अन्यस्य

### *भाष्यभावप्रकाशिका*

शङ्कते— **यत्रावरणाभाव इति**। स्वव्यतिरिक्तधर्मिप्रतियोग्यपेक्षत्वादभावस्य धर्मिणो वस्तुत्वं स्यादित्यर्थः। वस्तुत्वाभावाद् धर्म-धर्मिव्यवहारविषयत्वमयुक्तमित्युक्तम्, इदानीं तद्विषयत्वे वस्तुत्वं स्यादित्याह— **धर्म-धर्मीति**।।२४।।

**अनुस्मृतेश्च**।।२५।। यद्यप्यनुस्मृतेः इत्यत्रानुशब्दस्य व्यवच्छेद्यं नास्ति; तथाप्युपलब्धि-स्मृत्योरेककर्तृकत्वं साधयितुमन्विति

### *न्यायनिर्णयः*

न स्यादित्यर्थः। देशावच्छेदेनावरणाभावविभागं गृहीत्वा शङ्कते— **यत्रेति**। अभावस्य धर्मिप्रतियोग्यपेक्षत्वाद् धर्मिणो वस्तुत्वं स्यादित्याह— **येनेति**।

इतश्चाकाशस्य वस्तुत्वमित्याह— **अपि चेति**। प्रसङ्गं प्रकटीकर्तुं स्वाभ्युपगममुपन्यस्यति— **सौगते हीति**। किं सम्यङ्निश्रितं श्रेयोऽधिकरणमस्या इति किंसंनिश्रया। कथमाकाशस्य वस्तुत्वाभावे तद्विरोधप्रसङ्गः, तत्राह— **तदिति**। आश्रयत्वं नावस्तुनो दृष्टमित्यर्थः। स्वाभ्युपगमविरोधप्रसङ्गफलमाह— **तस्मादिति**। निरोधद्वयस्याकाशस्य चावस्तुत्वे साधारणं दूषणमाह— **अपि चेति**। विप्रतिषेधं स्फोरयति— **न हीति**। नाशाभावोपलक्षितसत्तायोगित्वं नित्यत्वम्। तद्विपरीतमनित्यत्वम्। तदुभयं न तुच्छस्य युक्तमित्यर्थः। वस्तुत्वाभावे धर्मधर्मिव्यवहाराविषयत्वमित्युक्तम्। इदानीं तद्विषयत्वे वस्तुत्वं स्यादित्याह— **धर्मेति**।।२४।।

सम्प्रत्यात्मनः स्थायित्वं, विशेषतः साधयति— **अनुस्मृतेश्चेति**। सूत्रस्य वैनाशिकदर्शनानुपपत्तौ हेत्वन्तरपरत्वमाह— **अपि चेति**। तदेव वक्तुं परस्यावश्याश्रयणीयमर्थमाह— **वैनाशिक इति**। इष्टापत्तिमाशङ्क्याह— **न चेति**। उपलब्धुर्न क्षणिकता युक्तेत्यत्र हेतुमुक्त्वा व्याकरोति— **अन्विति**। अनुशब्दस्य व्यवच्छेद्याभावेऽपि स्मृत्युपलब्ध्योरेककर्तृकत्वार्थं विशेषणमित्याह— **सा चेति**।

**संभवति। पुरुषान्तरोपलब्धिविषये पुरुषान्तरस्य स्मृत्यदर्शनात्। कथं हि अहमदोऽद्राक्षमिदं पश्यामीति च पूर्वोत्तरदर्शिन्येकस्मिन्नसति प्रत्ययः स्यात्।**

**अपि च दर्शनस्मरणयोः कर्तर्येकस्मिन् प्रत्यक्षः प्रत्यभिज्ञाप्रत्ययः सर्वस्य लोकस्य प्रसिद्धः-अहमदोऽद्राक्षमिदं पश्यामीति। यदि हि तयोर्भिन्नः कर्ता स्यात् ततोऽहं स्मराम्यद्राक्षीदन्य इति प्रतीयात्। न त्वेवं प्रत्येति कश्चित्। यत्रैवं प्रत्ययस्तत्र दर्शनस्मरणयोर्भिन्नमेव कर्तारं सर्वलोकोऽवगच्छति, स्मराम्यहम्, असावदोऽद्राक्षीदिति। इह त्वहमदोऽद्राक्षमिति दर्शनस्मरणयोर्वैनाशिकोऽप्यात्मानमेवैकं कर्तारमवगच्छति। न नाहमित्यात्मनो दर्शनं निर्वृत्तं निह्नुते, यथाऽग्निरनुष्णोऽप्रकाश इति वा। तत्रैवं सत्येकस्य दर्शनस्मरणलक्षणक्षणद्वयसंबन्धे**

### *प्रकटार्थविवरणम्*

न संभवति, स्मरणत्वात्, चैत्रानुभूतमैत्रस्मरणवत् इत्यनुमानमुक्तम्। इदानीं प्रत्यक्षमाह— **अपि च दर्शनस्मरणयोरिति**। क्रमेणैकस्य कालद्वयसंबन्धविषयं प्रत्यक्षज्ञानं प्रत्यभिज्ञा **मीमांसकानाम्**। सज्जनोक्तं हि— "यो नाम प्रथमं दृष्टो न दृष्टः पुनरन्तरा। प्रत्यभिज्ञायते साक्षादविनष्टः स हि ध्रुवम्।।"इति। न चैतादृशज्ञानासंभवः, पूर्वानुभवसंस्कारसहिताक्षसंप्रयोगस्यान्वयव्यतिरेकाभ्यां हेतुत्वावगमात्; रहस्यं तु पूर्वापरवैशिष्ट्यद्वयोपलक्षितस्वरूपैक्याकारं ज्ञानं प्रत्यभिज्ञेति। भेदभ्रमव्यावृत्तिश्च प्रमाणफलमिति। आचार्यस्तु परप्रक्रिययाऽपि नैरात्म्यापाकरणे व्यवजरीहरीतीति न विरुध्यते। ननु पूर्वोत्तरप्रत्ययभेदेऽप्येकसन्ततिपतितत्वेनैवंविधः प्रत्ययो भविष्यतीत्याशङ्क्याह— **यदि हि तयोरिति**। 'अहं स्मरामि' 'अद्राक्षीदन्यः' इति प्रतीयाल्लोक इत्यर्थः। ननु स्थायित्वे सिद्धे तदाधारः संस्कारः सिध्यति; ततः प्रत्यभिज्ञोदयः; ततः स्थायित्वमिति चक्रकापत्तेः न प्रत्यभिज्ञानात् स्थायित्वमित्याशङ्क्याह— **इह त्वहमद इति**। प्रत्यभिज्ञाया वैनाशिकस्यापि अनुभवसिद्धत्वात् स्थायित्वमन्तरेणापि संस्कारोपगमात् तस्य; अतः स्वतः सिद्धप्रमाणभावया प्रत्यभिज्ञया स्थायित्वसाधनं नानुपपन्नमित्यर्थः। किञ्चानुभवविरुद्धाभिधायी बौद्धः कथं सज्जनेषु लक्ष्येतेत्याह—

### *भाष्यभावप्रकाशिका*

विशेषणम्। न केवलमुपलब्धि-स्मृत्योरेवैककर्त्राक्षेपकत्वम्, अपि तूपलब्ध्योरपीत्याह— **कथं ह्यहमिति**। यस्तु सत्यपि भेदे सन्तानैक्यं स्मरणे प्रयोजकमिति मन्यते, तं प्रति सूत्राभिप्रेतं प्रत्यभिज्ञाप्रत्यक्षविरोधमाह— **अपि च दर्शनेति**। **तत इति**। **अद्राक्षीदिति**। अहं स्मराम्यन्यस्त्वद्राक्षीदिति प्रतीयादित्यर्थः। ननु क्वचित् तादृशप्रत्ययोऽपि दृश्यत इत्याशङ्क्याह— **यत्रैवमिति**। ननु दर्शनस्मरणयोः क्वचिद्विभिन्नकर्तृकत्ववदिदम्प्रतीतिबलेन तयोः कर्तृभेद इहाप्यनुमीयत इत्याशङ्क्य, न; अनुभवविरोधादित्याह— **हेति**। प्रत्यक्षविरोधादनुमानानुदये दृष्टान्तमाह— **यथेति**। एतद्घटस्मर्ता, एतद्घटानुभविता, एतद्घटज्ञातृत्वात्, संप्रतिपन्नव्यक्तिवदित्याद्यनुमानमप्यत्र द्रष्टव्यम्। दर्शन-स्मरणक्षणद्वयवर्तित्वमस्माभिरिष्यते, क्षणिकत्वं त्वाशुतरविनाशित्वेनेति मतान्तरमाशङ्क्याह—

### *न्यायनिर्णयः*

न केवलमुपलब्धिस्मृत्योरेवैककर्तृकत्वम्, उपलब्ध्योरपीत्याह— **कथमिति**।

यस्तु सत्यपि भेदे संतानैक्यं स्मृतिप्रयोजकमिच्छति, तं प्रत्याह— **अपि चेति**। पूर्वोत्तरप्रत्ययकर्तृभेदेऽपि संतानैक्यादेवंविधा धीरित्याशङ्क्याह— **यदि हीति**। कर्तृभेदे स्मराम्यहमन्योऽद्राक्षीदिति लोकस्य धीः स्यादित्यर्थः। ईदृश्येव धीरित्याशङ्क्याह— **न त्विति**। क्वचित् तादृश्या धियोऽनुभवसिद्धत्वमाशङ्क्याह— **यत्रेति**। कर्तृभेदावगतिमुदाहरति— **स्मरामीति**। क्वचित् तयोर्विभिन्नकर्तृकत्वे दृष्टिस्मृतित्वाविशेषादहमदोऽद्राक्षमित्यत्रापि तयोर्भिन्नकर्तृकत्वमनुमेयमित्याशङ्क्यानुभवविरोधमाह— **इहेति**। अवगतिमनवगतिव्युदासेन स्फोरयति— **न नेति**। यदात्मनो दर्शनं पूर्वं निर्वृत्तं तदहं नाद्राक्षमिति न निह्नुते, किं त्वनुमन्यते परोऽपीत्यर्थः। प्रत्यक्षविरोधादनुमानानुदये दृष्टान्तमाह— **यथेति**। एतद्घटस्मर्तैतद्घटानुभवितैतद्घटज्ञातृत्वात् संप्रतिपन्नव्यक्तिवदिति मत्वा फलितमाह— **तत्रेति**। दर्शने स्मरणे चोक्तरीत्या कर्त्रैक्ये सतीति यावत्। दृष्टिस्मृतिक्षणद्वयवर्तित्वमेकस्यास्माभिरिष्यते, क्षणिकत्वं त्वाशुतरविनाशित्वादित्याशङ्क्याह—

**क्षणिकत्वाभ्युपगमहानिरपरिहार्या वैनाशिकस्य स्यात्। तथाऽनन्तरामनन्तरामात्मन एव प्रतिपत्तिं प्रत्यभिजानन्नेक-कर्तृकाम् ओत्तमादुच्छ्वासादतीताश्च प्रतिपत्तीरा जन्मन आत्मैककर्तृकाः प्रतिसंदधानः कथं क्षणभङ्गवादी वैनाशिको नापत्रपेत।**

**स यदि ब्रूयात् सादृश्यादेतत् संपत्स्यत इति। तं प्रति ब्रूयात्। तेनेदं सदृशमिति द्वयायत्तत्वात्सादृश्यस्य,**

***प्रकटार्थविवरणम्***

**तथाऽनन्तरामिति।** उत्तमादुच्छ्वासात् मरणादित्यर्थः।

ननु सादृश्यनिबन्धना भ्रान्तिरियं प्रत्यभिज्ञा, ज्वालाप्रत्यभिज्ञावदित्याशङ्क्याह— **स यदि ब्रूयादिति।** सिद्धे भेदे सादृश्यसिद्धिः, सादृश्याच्च प्रत्यभिज्ञाया भ्रान्तत्वम्; ततश्चाभेदे प्रमाणाभावाद् भेदसिद्धिरितीतरेतराश्रयं स्यादित्यर्थः। ज्वालायास्तु ह्रस्वादिभेदस्य प्रत्यक्षत्वादुपपन्नं सादृश्यम्।

ननु 'अहं जानामि' इति वर्तमानावभासं प्रत्यक्षमवर्तमानव्यावृत्तिमपि गमयति, नीलप्रत्यक्षमिव अनीलव्यावृत्तिम्; नीलं यदि वर्तमानताविशिष्टस्य तदैवावर्तमानताव्यावृत्तिं गमयति, गमयतु कामम्; का नो हानिः? नो खलु युगपत्कालयुगलकवलितत्वं कल्पयामः; यदि कालान्तरेऽप्यवर्तमानतां वारयति, तदशक्यं विरोधाभावात्; तस्मान्न प्रत्यक्षं भेदग्राहकम्।

नाप्यनुमानम्— यत् सत् तत् क्षणिकं यथा प्रदीपः, सन्तश्चामी भावा इति। दृष्टान्तस्य साध्यविरुद्धत्वाद् विनाशित्वेऽपि प्रदीपादेः क्षणिकत्वे मानाभावात्। यद् यस्यावश्यंभावि तत्तस्यान्यानपेक्षम्, यथा संविदः स्वप्रकाशत्वमवश्यंभावि, [१]तथाविनाशं चेदमित्यनुमानममानम्, सूर्योदयास्तमययोर्व्यभिचारात्[२]; तदेवं क्षणिकत्वे दृष्टान्ताभावात्, विपक्षे बाधकाभावाच्च नानुमानादपि क्षणिकत्वं सिध्यतीति सूक्तमितरेतराश्रयत्वम्।

सिद्धे सादृश्याभावे प्रत्यभिज्ञायाः प्रामाण्यं सिध्येत्; तत्प्रामाण्ये भेदाभावात् सादृश्याभाव इति; न, प्रत्यभिज्ञायाः स्वतः प्रामाण्यम् [ण्यात्]। तथा हि प्रामाण्यं नाम ज्ञानाश्रया अज्ञातार्थपरिच्छेदशक्तिः; तस्य स्वतस्त्वं नाम ज्ञानकारणमात्रजन्यत्वम्। प्रामाण्यं स्वधर्मिकारणमात्रजन्यं तन्मात्रान्वयव्यतिरेकित्वात् स्वधर्मिवत्; विपक्षे चान्वयव्यतिरेकाभ्यां कार्यकारणभावानवधारणप्रसङ्गः। न च कार्यभेदः सामग्रीभेदव्याप्तः, तार्किकाणामप्येकस्मादेवाग्निसंयोगाद् रूपरसगन्धस्पर्शदाहानामभ्युपगमात्; न च तत्तत्प्रागभावस्यापि कारणत्वात् सामग्रीभेदः, तस्यान्वयव्यतिरेकित्वाभावात्। कः खल्वयं प्रागभावस्याभावः कार्यादन्यः? यस्मिन् सति कार्याभावो ज्ञायेत। पूर्वोत्तरभावनियमोऽपि भावाभावयोः सहस्थितिविरोधादेवान्यथासिद्धः। ततो न कार्यभेदात् सामग्रीभेदानुमानम्; न च दोषाभावः कारणमिति प्रागेवाभाणि; शक्तिश्चासाधि। न चैवमप्रमाऽपि प्रमा स्यादित्यनिष्टप्रसङ्गः, स्वधर्मिकारणमात्रजन्यताप्रतिज्ञानात्। यद्वा शुक्तेः स्वाभाविकशुक्तित्वसद्भावेऽपि दोषोत्थरजतात्मतावभासवत् संप्रयोगप्रसूतपौरस्त्यवस्तुप्रत्ययस्यापि स्वाभाव्ये[३] प्रामाण्येऽपि

***भाष्यभावप्रकाशिका***

**तथाऽनन्तरामिति।** वर्तमानदशामारभ्योत्तमादुच्छ्वासात् आमरणादनन्तरामनन्तरां प्रतिपत्तिमाजन्मनो वर्तमानदशापर्यन्तमतीताश्च प्रतिपत्तीरिति योजना।

न सादृश्यनिबन्धनं प्रत्यभिज्ञानम्; पूर्वापरक्षणदर्शिन एकस्याभावेन सदृशवस्तुग्रहानुपपत्तेरित्याह— **तं प्रति ब्रूयादिति।**

***न्यायनिर्णयः***

**तथेति।** स्वरसभङ्गुरत्ववदाशुतरविनाशित्वमपि भावानां प्रत्यभिज्ञाविरुद्धमित्यर्थः। विरोधमेव स्फोरयति— **अनन्तरामिति।** वर्तमानदशामारभ्योत्तमादुच्छ्वासाद् आमरणादनन्तरां स्वस्यैव प्रतिपत्तिमात्मैककर्तृकां प्रत्यभिजानन् जन्मनश्च वर्तमानदशापर्यन्तमतीताः प्रतीपत्तीः स्वकीयाः स्वमात्रकर्तृकाः प्रतिसंदधानः सन्निति योजना।

आत्मनि प्रत्यभिज्ञानं ज्वालादाविव सादृश्यकृता भ्रान्तिरिति शङ्कते— **स इति।** एकस्य पूर्वोत्तरक्षणद्वयतत्सादृश्यदृशोऽसत्त्वं

१. तथाविनाशम् = अवश्यंभाविविनाशम्। २. सूर्योदये सति सूर्यास्तमयोऽवश्यंभावी। तत्र चान्यानपेक्षत्वं नास्ति। अन्यथा सूर्योदयोत्तरक्षण एव सूर्यास्तमयप्रसङ्गात्। अतस्तत्र व्यभिचारः। ३. 'स्वाभाविके' इति तत्त्वालोके।

**क्षणभङ्गवादिनः सदृशयोर्द्वयोर्वस्तुनोर्ग्रहीतुरेकस्याभावात् सादृश्यनिमित्तं प्रतिसंधानमिति मिथ्याप्रलाप एव स्यात्। स्याच्चेत् पूर्वोत्तरयोः क्षणयोः सादृश्यस्य ग्रहीतैकः, तथा सत्येकस्य क्षणद्वयावस्थानात् क्षणिकत्वप्रतिज्ञा पीड्येत। तेनेदं सदृशमिति प्रत्ययान्तरमेवेदं न पूर्वोत्तरक्षणद्वयग्रहणनिमित्तमिति चेत्? न; तेनेदमिति भिन्नपदार्थोपादानात्। प्रत्ययान्तरमेव चेत् सादृश्यविषयं स्यात् तेनेदं सदृशमिति वाक्यप्रयोगोऽनर्थकः स्यात्। सादृश्यमित्येव प्रयोगः प्राप्नुयात्। यदा हि लोकप्रसिद्धः पदार्थः परीक्षकैर्न परिगृह्यते, तदा**

### *प्रकटार्थविवरणम्*

दोषतोऽन्यथावभासकत्वसंशयात्मकत्वयोः समारोपोपपत्तेः, बाधाच्च तदनुभव इति परतस्त्वमप्रामाण्यस्य गीयते। स्मृतिस्तु पूर्वदृष्टार्थमात्रस्मरणं न प्रमाणम्, नाप्यप्रमाणमिति [1]भट्टपादीया वदन्ति। न तु स्मृतिसंशयविपर्ययादीनामविद्याविवर्तार्थावभासगोचराणामज्ञानवृत्तित्वानभ्युपगमान्नास्ति प्रामाण्यप्रसङ्ग इति मन्यन्ते। ज्ञानत्वारोपाच्च ज्ञानात् प्रवृत्तिरित्यपि न व्यभिचरति। सर्वथाऽपि तावत् स्वतः प्रामाण्यं परतोऽप्रामाण्यं इति वेदविदः प्रतिपेदिरे। ज्ञानसमानज्ञापकत्वं ज्ञप्तौ स्वतस्त्वमिष्टम्; तदप्यविरुद्धम्, शक्तिमत एवानुमानात्, साक्षिवेद्यत्वाद्वा, दोषात् कदाचित्संशयोऽप्यविरुद्धः। प्रयोगश्च— प्रामाण्यं स्वतो ज्ञायते, ज्ञानैकधर्मत्वात्, ज्ञानत्ववदिति।

ये तु **सुगतनैयायिकप्रभृतयो** मेनिरे परतस्त्वम्, तेषामनवस्था सुस्थितैव। यच्चेदमनुमानम्— प्रामाण्यं प्रमाणाप्रमाणसाधारणकारणातिरिक्तजन्यम्, ज्ञानत्वन्यूनवृत्तित्वात्, अप्रामाण्यवदिति; तत्रासिद्धो हेतुः, विपक्षे बाधकाभावश्चेत्यलम्।

इतश्च न सादृश्यनिमित्तं प्रत्यभिज्ञाज्ञानमित्याह-- **क्षणभङ्गवादिन इति**। विपक्षे दोषमाह— **स्याच्चेदिति**। पूर्वोत्तरक्षणद्वयग्रहीतुरेकस्याभावेऽपि वासनानिबन्धनमेवेदं ज्ञानान्तरं भविष्यतीत्याह— **तेनेदं सदृशमिति**। पूर्वोत्तरक्षणग्रहणाभावे विशिष्टप्रत्ययाभावप्रसङ्गात् सादृश्यज्ञानमात्रं न भवतीत्याह— **न; तेनेदमिति**। ननु विशिष्टपदार्थाभावान्न भवत्ययं विशेषणग्रहणपूर्वको

### *भाष्यभावप्रकाशिका*

शङ्कते— **तेनेदं सदृशमिति प्रत्ययान्तरमिति**। अयमर्थः— विकल्पप्रत्ययोऽयम्। स च स्वाकारं बाह्यतयाऽध्यवस्यति, न तत्त्वतः पूर्वापरौ क्षणौ, तयोः सादृश्यं वा गृह्णाति, तत्कथं तद्दर्शिनः स्थायित्वप्रसङ्ग इति। निराकरोति— **न, तेनेदमिति**। नानापदार्थसंभिन्नबाह्यार्थावभासस्तावदयं विकल्पः प्रथते। तत्रैते पदार्था न प्रथन्त इति ब्रुवाणः स्वसंवेदनं बाधेत। न चैकस्य ज्ञानस्य नानाकारत्वम्; एकत्वविरोधात्। न च तावन्त्येव ज्ञानानि; तेषां परस्परवार्ताऽनभिज्ञत्वात्, तदा नानेत्येव न स्यात्। तस्मात् पूर्वापरक्षणतत्सादृश्यगोचरत्वं ज्ञानस्य वक्तव्यम्। तच्च न स्थायिनं ज्ञातारं विनेति क्षणिकत्वं न स्यादित्यर्थः। **सादृश्यमित्येव प्रयोग इति**। प्रत्ययस्यैकाकारत्वादित्यर्थः। सत्यम्, नानापदार्थप्रयोगोऽभ्युपगम्यते, न त्वस्मिन् प्रत्यये ते प्रतीयन्ते, किन्तु विकल्पप्रत्ययप्रभवोऽयमित्याशङ्क्याह— **यदा हीति**। विकल्पानां बाह्यावलम्बनत्वाभावे लोकप्रसिद्धपदार्थास्वीकरणाद् विकल्पप्रतिभासिनां

### *न्यायनिर्णयः*

सत्त्वं वेति विकल्पयति— **तमिति**। असत्त्वं प्रत्याह— **तेनेति**। सत्त्वमनूद्य निराह— **स्याच्चेदिति**। तेनेदं सदृशमित्ययं विकल्पप्रत्ययः, स च स्वाकारं बाह्यतयाऽध्यस्यति, तत्त्वतस्तु पूर्वापरौ क्षणौ तयोः सादृश्यं वा न गृह्णाति, तत्कथमेकस्य द्रष्टुः स्थायितेति शङ्कते— **तेनेति**। वस्तुद्वयप्रत्ययादन्यत्वधिया सादृश्यप्रत्ययस्यान्तरशब्दः। तथापि तत्र वस्तुद्वयप्रत्ययस्य निमित्तत्वादेकेन क्षणत्रयस्थायिना भाव्यमित्याह— **नेति**। तेनेदं सदृशमिति ज्ञाने तत्तेदन्तावच्छिन्नावर्थौ तयोः सादृश्यं च किं न भासते [भासते वा]। भासमाना वा विज्ञानस्याकारास्तस्माज्ज्ञानाद्भिन्ना न वा। ज्ञानाकारत्वे ज्ञानमेकमनेकं वा। तत्राद्ये स्वसंवेदनविरोधः स्यादित्याह— **तेनेति**। भासमानानां त्रयाणां ज्ञानाकारत्वे तस्य चैक्ये व्याघातः, एकस्यानेकाकारत्वायोगात्, आकारभेदे च तद्भेदात्। न च ज्ञानानेकत्वम्, एकज्ञानेन हि नानापदार्थोल्लेखे नानेत्युल्लेखो न ज्ञानभेदः। परिशेषाज्ज्ञानाद्भिन्नोऽर्थः, तस्य च नानाकारस्य तत्तेदन्तास्पदस्य तत्सादृश्यस्य च परामर्शः स्थायिन्यात्मनि सति स्यादिति मत्वोक्तमेव व्यनक्ति— **प्रत्ययान्तरमिति**। ननु नार्थस्य ज्ञाने भानमवजानीमहे, येन प्रतीतिं विरुध्येमहि, किंतु सोऽर्थः प्रतीतावारोपितो न बहिरस्ति। न च प्रतीतितावन्मात्रे, अर्थस्य ज्ञानेऽध्यस्तत्वात्, ततश्च न ज्ञानस्यैकस्य नानार्थाकारत्वकृतो व्याघातः, न च बाह्यार्थावगमः, तत्राह— **यदेति**। कल्पितोऽपि

---

१. "भट्टपादीयाः। वेदान्तिनस्तु स्मृतिसंशयविपर्यासादीनामविद्याविवर्तार्थाभासगोचराणामज्ञानवृत्तित्वाभ्युपगमात् नास्ति प्रामाण्यमिति मन्यन्ते" इति वेदान्ततत्त्वालोके पाठः। द्र. पृ. ८। तदनुसारेणेहापि पाठः शोधनीयः।

**स्वपक्षसिद्धिः परपक्षदोषो वोभयमप्युच्यमानं परीक्षकाणामात्मनश्च यथार्थत्वेन न बुद्धिसंतानमारोहति। एवमेवैषोऽर्थ इति निश्चितं यत् तदेव वक्तव्यम्। ततोऽन्यदुच्यमानं बहुप्रलापित्वमात्मनः केवलं प्रख्यापयेत्। न चायं सादृश्यात् संव्यवहारो युक्तः। तद्भावावगमात् तत्सदृशभावानवगमाच्च। भवेदपि कदाचिद् बाह्यवस्तुनि**

### *प्रकटार्थविवरणम्*

विशिष्टप्रत्यय इत्याशङ्क्याह— **यदा हि लोक इति**। क्षणिकं [१]वस्त्वस्थिरमवस्त्वित्यस्यापि विशिष्टप्रत्ययस्याभावप्रसङ्गान्न स्वपक्षसिद्धिः, परपक्षदोषो वा तव भवेदित्यर्थः। तस्माल्लौकिकपदार्थानङ्गीकारे कथायामनधिकारादज्ञानसंवरणाय यत्किञ्चिन्नाभिधेयमित्याह— **एवमेवैषोऽर्थ इति**। पूर्वं प्रत्यभिज्ञाव्यवहारः सादृश्यात् संभवतीत्यङ्गीकृत्य तव सादृश्यग्रहणमपि न संभवतीत्युक्तम्। इदानीं सोऽपि न संभवतीत्याह— **न चायं सादृश्यादिति**। स एवायमित्येकरूपतावगमात्, विचारेऽपि तत्सदृशभावानवगमाच्चेत्यर्थः। एवं तावत् प्रत्यभिज्ञाया विपर्यासलक्षणमप्रामाण्यं निराकृत्य अधुना संशीतिलक्षणमप्यप्रामाण्यं नास्तीत्याह— **भवेदपीति**।

### *भाष्यभावप्रकाशिका*

नित्यत्वादीनामेकार्थनिष्ठत्वाभावाद् एकाधिकरणविप्रतिषिद्धधर्मद्वयाभ्युपगमरूपाया विप्रतिपत्तेरसंभवाद् न प्रतिपा[वा]दित्वमित्यर्थः।

ननु विकल्पप्रत्ययस्य द्विविधो विषयः— ग्राह्योऽध्यवसेयश्चेति। ग्राह्यस्तु स्वयमेव, अध्यवसेयस्तु बाह्यः। अतो विप्रतिपत्तेरेकविषयत्वमपि युक्तमित्याशङ्क्याह— **एवमेवैष इति**। अयमभिसन्धिः— केयमध्यवसेयता बाह्यस्य? ग्राह्यता चेत्, न द्वैविध्यम्। अथ व्यवहार्यता, मैवम्; अगृहीतस्य व्यवहार्यत्वेऽतिप्रसङ्गात्। नायं दोषः; अध्यवसायविषयत्वादिति चेत्, तर्हि विकल्पाकारस्य कोऽयमर्थाध्यवसायः? किमर्थात्मतायाः करणम्? उत योजनम्? अथवाऽऽरोपः। न तावत्करणम्; स्थितस्य नष्टस्य वाऽन्यात्मताकरणायोगात्। न च योजनम्। अन्तर्बहिर्भावेन योजयितुमशक्यत्वात्; युक्ते इति च प्रत्ययाभावात्। नाप्यारोपः; गृह्यमाणागृह्यमाणयोस्तदयोगात्। तथाहि— बाह्यस्य निर्विकल्पेन चेद् गृह्यमाणत्वम्, तदा विकल्पेनागृहीतत्वान्न तत्र विकल्पः स्वाकारमारोपयितुमर्हति। न च विकल्पोऽभिलापसंसर्गयोग्यगोचरोऽशक्याभिलापसमयं स्वलक्षणं देशकालाननुगतमारोपविषयं गोचरयितुमर्हति, अगृह्यमाणे तु बाह्ये स्वाकार इत्येव स्यात्, न बाह्य इति। किञ्च क्षणिकत्वाद् यदैव स्वाकारमर्थात्मकं गृह्णाति, तदैवार्थं समारोपयेत्। न च तद् युज्यते; स्वसंवेदनतया स्वाकारस्याविस्पष्टत्वात्, विस्पष्टत्वाच्च बाह्यस्य प्रतीतेरिति। अपि च सादृश्ये तेनेदमिति भिन्नाकारा बुद्धिः; न चैतदस्तीत्याह— **न चेति**। ननु ज्वालादिषु तत्सदृशत्वानवगमेऽपि सादृश्यात् प्रत्यभिज्ञा दृश्यत इत्याशङ्क्याह— **भवेदपीति**। तत्रापि हठात् तद्भाव एव प्रतीयते, बाधात्तु सादृश्यमित्यर्थः।।२५।।

### *न्यायनिर्णयः*

विज्ञानेऽर्थाकारस्तस्माद्भिन्नोऽभिन्नो वेति वक्तव्यम्, अनिर्वाच्यत्वानङ्गीकारात्। भिन्नत्वे ज्ञानान्तरवदकल्पिततत्वम्। तथा च तेनेदमिति सदृशमिति च भातानामर्थानामेकज्ञानाभेदोपगमे मिथोऽप्यभेदः स्यात्, ततश्चान्योन्यभेदेन पदार्था लोकसिद्धा निह्नूयेरन्। ज्ञानाच्च ज्ञेयस्य भेदः प्रसिद्धः, सोऽपि निह्नूयेत, तदपह्नवे च स्वपक्षसाधनपरपक्षाक्षेपासिद्धिः। विकल्पप्रतिभासिनां नित्यत्वादीनामेकार्थनिष्ठत्वाभावादेकाधिकरणविप्रतिषिद्धधर्मद्वयोपगमरूपविप्रतिपत्तेरसंभवादिति भावः। तत्तेदन्तादिरर्थो ज्ञानस्यान्तर आकार इति मतं बाह्यार्थवाददूषणमध्येऽपि प्रसङ्गादाशङ्क्य निरस्तम्। इदानीमस्ति बाह्योऽर्थः, स तु क्षणिको निर्विकल्पके चकास्ति। सविकल्पकप्रत्ययास्तु विकल्पास्तद्गतसादृश्याद्याकारेण निर्भासन्ते, तेन विप्रतिपत्त्यादिव्यवहारसिद्धिरिति बाह्यार्थवादमाशङ्क्य निरस्यति— **एवमिति**। न हि बाह्यस्यार्थस्य क्षणिकत्वं, प्रमाणाभावात्। न तावत् प्रत्यक्षं वर्तमानमर्थमवगाहमानं तस्यावर्तमानव्यावृत्तिं गमयति। तद्धि वर्तमानताविशिष्टस्य तदैवान्यव्यावृत्तिं गमयेदन्यदा वा। प्रथमे नास्मत्पक्षक्षतिः, एकस्यापर्यायेणानेककालकलितत्वानभ्युपगमात्। न द्वितीयः, विरोधमन्तरेण कालान्तरीयसत्त्वव्यवच्छेदकत्वानुपपत्तेः। नापि यत् सत् तत् क्षणिकम्, यथा दीपः, सन्तश्च भावा इत्यनुमानं क्षणिकत्वसाधकं, दृष्टान्तस्य साध्यविकलत्वात्। तस्य नाशित्वेऽपि विवक्षितक्षणिकत्वाभावात्। तस्मादनिश्चितार्थवादिनो विप्रलम्भकत्वान्न प्रतिवादितेत्यर्थः। आत्मनि प्रत्यभिज्ञा न सादृश्यादित्यत्र हेत्वन्तरमाह— **न चेति**। प्रत्यभिज्ञाया विपर्यासाख्यमप्रामाण्यं निरस्य संशयाख्यमपि तन्निरस्यति— **भवेदिति**। संशयसामग्रीसत्त्वावस्था कदाचिदित्युक्ता। संभवो नानाकारत्वोपपत्तिः। संदेहोऽपीत्यपिना

---

१. 'क्षणिकं वस्तु, स्थिरमवस्तु' इति पाठः स्यादिति भाति।

**विप्रलम्भसंभवात् तदेवेदं स्यात् तत्सदृशं वेति संदेहः। उपलब्धरि तु संदेहोऽपि न कदाचिद् भवति-स एवाहं स्याम् तत्सदृशो वेति। य एवाहं पूर्वेद्युरद्राक्षं स एवाहमद्य स्मरामीति निश्चिततद्भावोपलम्भात्। तस्मादप्यनुपपन्नो वैनाशिकसमयः।।२५।।**

## नासतोऽदृष्टत्वात्।।२६।।

**इतश्चानुपपन्नो वैनाशिकसमयः, यतः स्थिरमनुयायिकारणमनभ्युपगच्छताम् अभावाद् भावोत्पत्तिरित्येतदापद्यते। दर्शयन्ति चाभावाद् भावोत्पत्तिम्- 'नानुपमृद्य प्रादुर्भावात्' इति। विनष्टाद्धि किल बीजादङ्कुर उत्पद्यते, तथा विनष्टात् क्षीराद् दधि, मृत्पिण्डाच्च घटः। कूटस्थाच्चेत् कारणात् कार्यमुत्पद्येताविशेषात् सर्वं सर्वत उत्पद्येत। तस्मादभावग्रस्तेभ्यो बीजादिभ्योऽङ्कुरादीनामुत्पद्यमानत्वादभावाद् भावोत्पत्तिरिति मन्यन्ते।**

**तत्रेदमुच्यते- 'नासतोऽदृष्टत्वात्' इति। नाभावाद् भाव उत्पद्यते। यद्यभावाद् भाव उत्पद्येताभावत्वाविशेषात्**

***प्रकटार्थविवरणम्***

'सोऽहम्' इति प्रत्यभिज्ञा प्रमाणम्, अबाधितासन्दिग्धापरोक्षप्रत्ययत्वात्, नीलप्रत्ययवदित्यर्थः।

**नासतोऽदृष्टत्वात्**।। इदानीं वैनाशिकसमये दोषान्तरमाह— **इतश्चेत्यादिना**। न केवलं बलादापद्यते; दर्शयन्ति च। पूर्वावस्थामनुपमृद्य न कार्यजन्म, तथैव प्रादुर्भावसंभवादिति योजना। एतदेवोदाहरणेन विवृणोति— **विनष्टाद्धीति**। स्थायिपक्षे चातिप्रसङ्गमाह— **कूटस्थाच्चेदिति**। परिहारत्वेन सूत्रं योजयति— **तत्रेदमुच्यत इत्यादिना**। पूर्वमभावस्य कारणत्वेऽतिप्रसङ्गोऽभिहितः।

***भाष्यभावप्रकाशिका***

**नासतोऽदृष्टत्वात्**।।२६।। अस्थिरात् कारणात् कार्योत्पत्तिमिच्छतामभावाद् भावोत्पत्तिर्बलादापततीत्युक्तम्। न केवलं बलादित्याह— **दर्शयन्ति चेति**। अस्यार्थमाह— **विनष्टादिति**। किलकारोऽनिच्छायाम्। **कूटस्थाच्चेदिति**। कारणं समर्थम्, असमर्थं वा? असामर्थ्ये न कदाचित्कार्यं जनयेत्। समर्थं चेत् समर्थस्य क्षेपायोगाद् युगपदेव सर्वं कुर्यात्। तत उत्तरक्षणे क्रियाऽभावादसत्त्वम्। अथ समर्थोऽपि सहकारिसंनिधानात् कार्यं जनयेत्, तर्हि सहकारिणाऽतिशयः क्रियते, न वा? आद्यपक्षेऽतिशयस्य वस्तुनो भेदेऽभेदे च तस्यैव जनकतया क्षणिकस्य कार्योत्पादकत्वमापतति। उत्तरपक्षे सहकार्यपेक्षैव न स्यादित्यभिप्रायः।

***न्यायनिर्णयः***

विपर्यासो दृष्टान्तितः। तत्र संदेहायोगे हेतुमाह— **य इति**। प्रत्यभिज्ञयाऽऽत्मनः स्थायित्वे फलितमाह— **तस्मादिति**।।२५।।

कारणाभावात् कार्योत्पत्तिरिति पक्षमवशिष्टं निराचष्टे— **नासत इति**। परमतायोगे हेत्वन्तरपरत्वं सूत्रस्य दर्शयति— **इतश्चेति**। तदेव स्फोरयति— **यत इति**। अस्थिरात् कारणात् कार्योत्पत्तिमिच्छतामभावाद्भावोत्पत्तिर्बलादापततीत्येव न; किंतु स्वयमपि वैनाशिकास्तथोपयन्तीत्याह— **दर्शयन्तीति**। तद् व्याचष्टे— **विनष्टादिति**। हिशब्दस्तदिच्छायाम्। स्वानिच्छायां किलकारः। विनष्टाद् बीजादेरङ्कुरादिजन्मेत्यत्र युक्तिमाह— **कूटस्थादिति**। कारणं समर्थमसमर्थं वा? यद्यसमर्थं न कदाचिदपि कार्यं कुर्यात्। आद्ये समर्थस्य क्षेपायोगादपर्यायेणाशेषं कार्यं जनयेत्, ततश्चोत्तरक्षणेऽर्थक्रियाऽभावादसत्त्वम्। न च समर्थमपि सहकारिसंनिधिमपेक्ष्य जनकं, सहकारिणा वस्तुनोऽतिशयजनने तस्य समर्थत्वे सदा तज्जननात्, असमर्थत्वे कदाचिदपि तज्जन्मायोगात्, सहकारिणोऽपि सहकार्यन्तरापेक्षायामनवस्थानात्, वस्तुनश्चातिशयस्य भेदे तस्यैव प्राप्ताप्राप्तविवेकेन जनकतया वस्तुनस्तदसिद्धिः। अभेदे तस्यैव जन्यतया क्षणिकस्य जनकत्वापत्तिः। अतिशयानाधाने सहकार्यपेक्षैव न स्यादित्यर्थः। कूटस्थस्य कारणत्वदौस्थ्ये फलितमाह— **तस्मादिति**।

परमतनिरासित्वेन सूत्रमवतार्य व्याचष्टे— **तत्रेति**। तदेव व्यतिरेकद्वारा साधयति— **यदीति**। बीजाद्यभावेभ्योऽङ्कुराद्युत्पत्ते-

**कारणविशेषाभ्युपगमोऽनर्थकः स्यात्। न हि बीजादीनामुपमृदितानां योऽभावस्तस्यांभावस्य शशविषाणादीनां च निःस्वभावत्वाविशेषादभावत्वे कश्चिद् विशेषोऽस्ति, येन बीजादेवाङ्कुरो जायते, क्षीरादेव दधीत्येवंजातीयकः कारणविशेषाभ्युपगमोऽर्थवान् स्यात्। निर्विशेषस्य त्वभावस्य कारणत्वाभ्युपगमे शशविषाणादिभ्योऽप्यङ्कुरादयो जायेरन्। न चैवं दृश्यते। यदि पुनरभावस्यापि विशेषोऽभ्युपगम्येतोत्पलादीनामिव नीलत्वादिस्ततो विशेषवत्त्वादेवाभावस्य भावत्वमुत्पलादिवत् प्रसज्येत। नाप्यभावः कस्यचिदुत्पत्तिहेतुः स्यात्, अभावत्वादेव, शशविषाणादिवत्। अभावाच्च भावोत्पत्तावभावान्वितमेव सर्वं कार्यं स्यात्। न चैवं दृश्यते। सर्वस्य च वस्तुनः स्वेन स्वेन रूपेण भावात्मनैवोपलभ्यमानत्वात्। न च मृदन्विताः शरावादयो भावास्तन्त्वादिविकाराः केनचिदभ्युपगम्यन्ते। मृद्विकारानेव तु मृदन्वितान् भावान् लोकः प्रत्येति।**

**यत्तूक्तं स्वरूपोपमर्दमन्तरेण कस्यचित् कूटस्थस्य वस्तुनः कारणत्वानुपपत्तेरभावाद् भावोत्पत्तिर्भवितुमर्हतीति।**

### *प्रकटार्थविवरणम्*

इदानीं कारणत्वमेव न संभवतीत्याह— **नाप्यभावः कस्यचिदिति**। 'अदृष्टत्वात्' इति सूत्रभागार्थमाह— **अभावाच्च भावोत्पत्ताविति**। अभावान्वयाभावेऽपि किमिति नाभावप्रकृतिकत्वमित्याशङ्क्याह— **न च मृदन्विता इति**।

उक्तमनूद्य दूषयति— **यत्तूक्तमित्यादिना**। स्थिरस्वभावानामेव सहकारिसन्निधानापेक्षया क्रमेण कार्यकरत्वस्य प्रत्यक्षत्वात्

### *भाष्यभावप्रकाशिका*

ननु बीजाद्यभावेभ्योऽङ्कुरादीनामुत्पत्तिरिति कारणविशेषोपादानं तदभावसिद्धये युक्तमित्याशङ्क्याह— **न हि बीजादीनामिति**। अभावस्य कारणत्वे कारणविशेषोपादानमयुक्तमित्युक्तम्, इदानीमभावस्य हेतुत्वमयुक्तमित्याह— **नाप्यभाव इति**। अपि च यद् येनानन्वितम्, न तत्तस्य विकारः, यथा हेम्नाऽनन्वितो घटो न हेम्नो विकारः। अनन्विताश्चैते भावा अभावेन। तस्मान्नाभावविकाराः, विकारास्तु भावस्य; तेनान्वितत्वादिति कार्यस्वभावालोचनायामपि नाभावस्य कारणत्वमित्याह— **अभावाच्च भावोत्पत्ताविति**। अन्वय्येव कारणमित्यनभ्युपगमाद् अभावोऽपि कारणं स्यादित्याशङ्क्याह— **न च मृदन्विता इति**।

अभावकारणवादिनोक्तमनूद्य दूषयति— **यत्तूक्तमिति**। किं स्थिरस्य कारणत्वं न दृश्यत इति कथ्यते, न युज्यत इति वा? न तावदाद्यः, अनुभवविरोधात्। नापि द्वितीयः, स्थिरस्यापि क्रमवत्सहकारिसमवधानात् क्रमकारित्वोपपत्तेः। न च सहकारिजन्यातिशयस्यैव कारणत्वान्न स्थायिनः कारणतेति शङ्कनीयम्; भेदाभेदादिभिरविचारितरमणीयातिशययोगिनो लोकसिद्धकारणभावस्याप्रत्याख्येयत्वात्। न च समर्थत्वाविशेषात् युगपत्सर्वजनकत्वप्रसङ्गः; तत्तत्कालीनकार्यजननसामर्थ्यवत् तद्व्यतिक्रमणासामर्थ्यात्। न च सामर्थ्यासामर्थ्यभेदाद् भावभेदः; तत्कालीनविभिन्नदेशकार्य-

### *न्यायनिर्णयः*

स्तदभावसिद्धये कारणविशेषोपादानमित्याशङ्क्याह— **न हीति**। किंचाभावकारणवादिना तस्य निर्विशेषत्वं सविशेषत्वं वेष्टम्? आद्यं दूषयति— **निर्विशेषस्येति**। एतेन 'नासतोऽदृष्टत्वात्' इति व्याख्यातम्। द्वितीयमनूद्य निरस्यति— **यदीति**। अभावस्य कारणत्वमुपेत्योक्तं, तदेवायुक्तमित्याह— **नापीति**। कार्यस्वभावालोचनयाऽपि नाभावस्य कारणतेत्याह— **अभावादिति**। यद्येनानन्वितं न तत् तस्य कार्यम्, यथा हेम्नाऽनन्वितो घटो न हेम्नो विकारः। अनन्विताश्चाभावेन भावाः, तस्मान्नाभावविकारा इत्यर्थः। किंच यद्येनान्वितं तत् तस्य कार्यं, यथा हेम्नाऽन्वितं रुचकादि तत्कार्यम्। अन्विताश्च भावेन भावाः, तस्मात् तद्विकारा इत्याह— **सर्वस्येति**। भावान्वितत्वेऽपि कारणमन्वय्येवेत्यनियमादभावोऽपि कारणं किं न स्यादित्याशङ्क्याह— **न चेति**। आद्येऽनुमाने व्याप्तिमुक्त्वा द्वितीयेऽपि तामाह— **मृदिति**।

अभावकारणवादिनोक्तमनुभाषते— **यत्त्विति**। स्थिरस्य कारणत्वं न दृश्यते, न युज्यते वा? नाद्यः, अनुभवविरोधात्।

**तद् दुरुक्तम्। स्थिरस्वभावानामेव सुवर्णादीनां प्रत्यभिज्ञायमानानां [1]रुचकादिकारणभावदर्शनात्। येष्वपि बीजादिषु स्वरूपोपमर्दो लक्ष्यते, तेष्वपि नाऽसावुपमृद्यमाना पूर्वावस्थोत्तरावस्थायाः कारणमभ्युपगम्यते, अनुपमृद्यमानानामेवानुयायिनां बीजाद्यवयवानामङ्कुरादिकारणभावाभ्युपगमात्। तस्मादसद्भ्यः शशविषाणादिभ्यः सदुत्पत्त्यदर्शनात्, सद्भ्यश्च सुवर्णादिभ्यः सदुत्पत्तिदर्शनादनुपपन्नोऽयमभावाद् भावोत्पत्त्यभ्युपगमः। अपि च चतुर्भिश्चितचैत्ता उत्पद्यन्ते, परमाणुभ्यश्च भूतभौतिकलक्षणः समुदाय उत्पद्यत इत्यभ्युपगम्य पुनरभावाद् भावोत्पत्तिं कल्पयद्भिरभ्युपगतम[2]पह्नुवानैर्वैनाशिकैः सर्वो लोक आकुलीक्रियते।।२६।।**

## उदासीनानामपि चैवं सिद्धिः।।२७।।

**यदि चाभावाद् भावोत्पत्तिरभ्युपगम्येत, एवं सत्युदासीनानामनीहमानानामपि[3] जनानामभिमतसिद्धिः स्यात्। अभावस्य सुलभत्वात्। कृषीवलस्य क्षेत्रकर्मण्यप्रयतमानस्यापि सस्यनिष्पत्तिः स्यात्। कुलालस्य च मृत्संस्क्रियायामप्रयतमानस्याप्यमत्रोत्पत्तिः। तन्तुवायस्यापि तन्तूनतन्वानस्यापि तन्वानस्येव वस्त्रलाभः।**

### *प्रकटार्थविवरणम्*

प्रत्यक्षविरुद्धं त्वदीयं भाषणमित्यर्थः। न च समर्थस्य किं सहकारिणेति वाच्यम्; सामर्थ्यस्य कार्यगम्यत्वात्, कार्यस्य च सहकारिसंनिधान एव दर्शनात्; एतादृशमेव तत्सामर्थ्यं यदुत सहकारिसन्निधावेव कार्यविशेषव्यवस्थापकमिति। यच्चोक्तं बीजाद्युपमर्देनैवाङ्कुरादि जायत इति; तत्राह— **येष्वपीति**। स्वाभ्युपगमविरोधमाह— **अपि चेति**।

**उदासीनानामपि चैवं सिद्धिः**।। इतश्चाभावाद् भावोत्पत्त्यभ्युपगमोऽनुपपन्न इत्याह— **उदासीनानामपीति**। **अमत्रोत्पत्तिः** पात्रोत्पत्तिरित्यर्थः।। इति चतुर्थं समुदायाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

भेदप्रतियोगिकसामर्थ्यासामर्थ्ययुक्तक्षणिकभावस्येवाभेदोपपत्तेरिति भावः। यदुक्तं विनष्टाद्धीति, तत्राह— **येष्वपीति**। अत्र यद्यपि पार्थिवस्वभावानामेव कारणत्वम्; तथापि बीजाद्यवयवानामिति परमताङ्गीकरणेनोक्तं मन्तव्यम्। उक्तार्थे सूत्रं योजयन्नुपसंहरति— **तस्मादिति**।।२६।।

**उदासीनानामपि चैवं सिद्धिः**।।२७।। पूर्वमभावस्य कारणत्वे कारणविशेषोपादानप्रवृत्तिर्न स्यादित्युक्तम्, इदानीं प्रवृत्तिमात्रमपि न स्यादित्याह— **उदासीनानामिति**। अभाववादिनः पारलौकिकोऽपि व्यवहारो न स्यादित्याह— **स्वर्गापवर्गयोरिति**।।२७।। इति चतुर्थं समुदायाधिकरणम्।।

### *न्यायनिर्णयः*

न द्वितीयः, स्थिरस्यापि क्रमवत्सहकारिवशात् क्रमकारित्वाविरोधात्। न च सहकारिजन्यातिशयस्यैव कारणत्वं, न स्थायिनस्तथात्वम्; भेदाभेदादिभिरनिर्वचनीयातिशयवतो वस्तुनो लोकसिद्धकारणत्वानिराकरणात्। न च समर्थत्वादपर्यायमशेषजनकत्वं, तत्तत्कालीनकार्यजन्मसामर्थ्योपगमात्। न च सामर्थ्यासामर्थ्याभ्यां (भावा)भावभेदः, कार्यभेदप्रतियोगिकशक्त्यशक्तियुक्तक्षणिकभावस्येवाभेदसिद्धेरिति मत्वाऽऽह— **तदिति**। यत्तु विनष्टाद्धीति, तत्राह— **येष्विति**। अङ्कुरादिषु पार्थिवादिस्वभावानामेव कारणत्वेऽपि बीजाद्यवयवानामिति परमतेनोक्तम्। उक्तेऽर्थे सूत्रं योजयन्नुपसंहरति— **तस्मादिति**। स्वाभ्युपगमविरोधादपि नाभावाद् भावोत्पत्तिरित्याह— **अपि चेति**।।२६।।

अभावकारणत्वे कारणविशेषोपादाने प्रवृत्तिरयुक्तेत्युक्तम्। इदानीं प्रवृत्तिमात्रमपि न युक्तमित्याह— **उदासीनानामिति**। सूत्रं विभजते— **यदीति**। अभाववादे सर्वलौकिकव्यवहारासिद्धिमुदाहरणैर्दर्शयति— **कृषीति**। पारलौकिकव्यवहारोऽपि परमते न

१. 'रुचकादिकार्यकारण' इति पा.। २. 'अभ्युपगमम्' इति पा.। ३. अनीहमानानां = प्रयत्नरहितानाम्।

**स्वर्गापवर्गयोश्च न कश्चित् कथंचित् समीहेत। न चैतद् युज्यतेऽभ्युपगम्यते वा केनचित्। तस्मादप्यनुपपन्नोऽयमभावाद् भावोत्पत्त्यभ्युपगमः।।२७।।**

**।।इति चतुर्थं समुदायाधिकरणम्।।**

**५।।नाभावाधिकरणम्।।सू. २८-३२।।**

## नाभाव उपलब्धेः।।२८।।

***शारीरकन्यायसंग्रहः***

**नाभाव उपलब्धेः।।२८।। वैधर्म्याच्च न स्वप्नादिवत्।।२९।। न भावोऽनुपलब्धेः।।३०।। क्षणिकत्वाच्च।।३१।। सर्वथाऽनुपपत्तेश्च।।३२।।** आरम्भणाधिकरणे अद्वितीयविज्ञानव्यतिरिक्तस्य विज्ञेयप्रपञ्चस्य यत् स्वोपाधावस्तीति प्रतिपन्नस्य केनापि प्रमाणेन नास्तीति प्रमित्यविषयत्वलक्षणं परमार्थसत्यत्वम्, तन्नास्ति, स्वोपाधौ बाधात्, किं त्वर्थक्रियासामर्थ्यं सत्यत्वमित्युक्तम्। अत्र विज्ञेयस्यार्थक्रियासामर्थ्यरूपमपि सत्यत्वं नेच्छन्ति सुगताः। तान्प्रति विज्ञानस्येव विज्ञेयस्यापि तदभिप्रेतमर्थक्रियासमर्थ[सामर्थ्य]रूपं सत्यत्वं पृथगेवास्तीत्युच्यते वेदान्तानां ब्रह्मप्रमितिलक्षणार्थक्रियासामर्थ्यसिद्धये।

तत्र न विज्ञानाद् विज्ञेयं पृथगेवार्थक्रियासमर्थं सत्, विज्ञानव्यतिरेकेण परमाणुतत्संघातादिरूपेण अनिरूपणात्, यद्विज्ञानव्यतिरेकेणानिरूपितं न तत् पृथगर्थक्रियासमर्थम्, यथा शशविषाणम्; तथा नीलमिति प्रतिभासो वस्तुद्वयशून्यः आकारद्वयशून्यत्वात्, यदेवं तत्तथा, यथा परपरिकल्पितं नीलमात्रमिति; तथा न विज्ञानादन्यद् विज्ञेयमस्ति, सहोपलम्भनियतत्वात्, यत्रान्यत्वं न तत्र सहोपलम्भनियमः, यथा विज्ञानयोरिति; तथा स्वव्यतिरिक्तविज्ञेयशून्यानि विज्ञानानि, विज्ञानत्वात्, स्वाप्नविज्ञानवत् इत्येवमादिना विज्ञानव्यतिरेकेण विज्ञेयस्याभावं परिकल्प्य, अर्थाकारावभासो विज्ञानानां नार्थसंस्पर्शजन्यः, किं त्वहमिति विज्ञानसंततौ पूर्वपूर्वनीलाद्याकारप्रत्ययलक्षणसंस्कारजन्यः स चास्यां संततौ पूर्वोत्पन्नश्चिरविनष्टश्च नीलज्ञानस्वलक्षणसंस्कारः अनेकज्ञानव्यवधानेऽपि उत्तरनीलज्ञानहेतुर्भवति शालिबीजस्येवाङ्कुराद्यनेककार्यव्यवधानेन पुनः शालिबीजहेतुत्वमिति। अथवा पूर्वनीलज्ञानजन्यो विज्ञानसंतान एवोत्तरनीलज्ञानं प्रति संस्कार इत्युच्यते। तस्माद् वासनानिमित्तं ज्ञानवैचित्र्यमिति वदन्तीति प्रक्रिया।।

तत्र प्रत्यक्षेण विज्ञेयस्य विज्ञानाद्भेदेन सत्त्वं व्यवस्थापयता विसंवादकेनानुमानानां बाधो दर्शितः। तथा अर्थविज्ञानयोः ऐक्यं नास्ति, व्यावृत्तानुवृत्तरूपत्वात्, जातिव्यक्तिवत् इति प्रत्यनुमानमुक्तम्। तथा विज्ञानव्यतिरेकेणानिरूपणात् आकारद्वयानुपलम्भादिति हेत्वोरसिद्धिरुक्ता। सहोपलम्भनियमस्योपायोपेयभावेनान्यथासिद्धिरुक्ता। स्वप्नप्रत्ययसाम्यानुमानस्य विशेषानुमानमुक्तम्— नार्थो विज्ञानात् भेदेन मिथ्या, तद्रूपेणाबाध्यमानत्वात्, विज्ञानवत् इति। एवं प्रत्यक्षानुमानविरुद्धत्वासिद्धत्वान्यथासिद्धत्वविशेषानुमानविरुद्धत्वैरनुमानानां बाधितत्वात्, विज्ञानव्यतिरेकेण विज्ञेयमर्थक्रियासमर्थं निरूपितम्।।

तथैकस्मिन्नेव विषये चिरकालं समवहितस्य वासनानिमित्ते विज्ञानवैचित्र्ये अर्थसंस्पर्शापेक्षाऽभावे च युगपत् नानाविधाकाराणि विज्ञानान्युत्पद्येरन्, पूर्वेषां वासनानामेकत्रावहितस्यापि विद्यमानत्वात्; अतः क्रमेणार्थसंनिधाने सत्येव विज्ञानवैचित्र्यादर्थनिमित्तमेव तदिति सिद्धम्।।

***न्यायनिर्णयः***

स्यादित्याह— **स्वर्गेति**। उभयविधव्यवहारासत्त्वप्रसङ्गस्येष्टत्वं प्रत्याचष्टे— **न चेति**। सूत्रद्वयार्थमुपसंहरति— **तस्मादिति**।।२७।।इति चतुर्थं समुदायाधिकरणम्।

विज्ञानस्य क्षणिकेनार्थेन सालम्बनत्वं निराकृत्य निरालम्बनत्वं निराकर्तुमारभते— **नाभाव इति**। रूपादिहीनं ब्रह्म जगदुपादानमिति वदतः समन्वयस्य क्षणिकं ज्ञानं नीलाद्याकारमिति योगाचारमतविरोधोऽस्ति न वेति तत्प्रामाणिकत्वभ्रान्तत्वाभ्यां

**एवं बाह्यार्थवादमाश्रित्य समुदायाप्राप्त्यादिषु दूषणेषूद्भावितेषु विज्ञानवादी बौद्ध इदानीं प्रत्यवतिष्ठते। केषांचित् किल विनेयानां बाह्ये वस्तुन्यभिनिवेशमालक्ष्य तदनुरोधेन बाह्यार्थवादप्रक्रियेयं विरचिता। नासौ सुगताभिप्रायः। तस्य तु विज्ञानैकस्कन्धवाद एवाभिप्रेतः। तस्मिंश्च विज्ञानवादे बुद्ध्यारूढेन रूपेणान्तःस्थ एव प्रमाणप्रमेयफलव्यवहारः सर्व उपपद्यते। सत्यपि बाह्येऽर्थे बुद्ध्यारोहमन्तरेण प्रमाणादिव्यवहारानवतारात्।**

**कथं पुनरवगम्यतेऽन्तःस्थ एवायं सर्वव्यवहारो न विज्ञानव्यतिरिक्तो बाह्योऽर्थोऽस्तीति? तदसंभवादित्याह। स हि बाह्योऽर्थोऽभ्युपगम्यमानः परमाणवो वा स्युः, तत्समूहा वा स्तम्भादयः स्युः। तत्र न तावत्**

***प्रकटार्थविवरणम्***

**नाभाव उपलब्धेः**।। सङ्गतिं कथयति— **एवमिति**। कथं तर्हि विज्ञानमात्रवस्तुवादे प्रमाणप्रमेयव्यवहार इत्याशङ्क्याह— **तस्मिंश्चेति**। विज्ञानमेव नः सदात्मना प्रमेयं, भासकशक्त्या प्रमाणं, प्रकाशात्मना फलमिति बुद्धिसमारोपितेन रूपेण सर्वो व्यवहार उपपद्यत इत्यर्थः। उक्तमेव प्रश्नपूर्वकं विवृणोति— **कथं पुनरित्यादिना**। विज्ञेयं न विज्ञेया[विज्ञाना]तिरिक्तम्, तद्व्यतिरेकेण अनिरूप्यत्वात्, नरविषाणवदित्यर्थः। असिद्धिमाशङ्क्याह— **स हीति**। तर्हि जातिव्यक्त्यादिरूपो बाह्योऽर्थो

***भाष्यभावप्रकाशिका***

**नाभाव उपलब्धेः**।।२८।। पूर्वाधिकरणसङ्गतिमाह— **एवमिति**। बाह्यार्थवादिभ्यो विज्ञानमात्रवादिनः सुगताभिप्रेततया विशेषमाह— **केषाञ्चित्किलेति**। ननु प्रमातृ-प्रमाणादिविभागोऽङ्गीक्रियते, नो वा। आद्ये कथं विज्ञानमात्रवादः? अनङ्गीकारे वा कथं स्वपक्षसिद्धिरित्याशङ्क्य, कल्पिताकारविशिष्टतया तस्यैव प्रमेयत्वम्, अवभासात्मना फलत्वम्, तच्छक्त्यात्मना प्रमाणत्वम्, तदाश्रयतया प्रमातृत्वमिति सर्वमुपपद्यत इत्याह— **तस्मिंश्चेति**। ननु प्रमाणादिविभाग औपाधिकः किमर्थं कल्प्यते? परमार्थ एव किं न स्यादिति? अत आह— **सत्यपीति**। अथवा सौत्रान्तिक-वैभाषिकियोर्बाह्यार्थमिच्छतोरपि प्रमाणफलविभागः काल्पनिक एव; क्षणिकस्यात्मनः प्रमाणफलधर्मद्वयकालावस्थानाभावादित्याह— **सत्यपि बाह्य इति**। अर्थसारूप्यात्मना प्रमाणम्, अवभासात्मना फलमिति **सौत्रान्तिकाः**। अनवभासव्यावृत्तिरूपेण फलम्, तच्छक्तिरूपेण प्रमाणमिति **वैभाषिकाः**।

प्रश्नपूर्वकं बाह्यार्थाभाव उपपत्तीराह— **कथं पुनरिति**। **तत्र न तावदिति**। एकस्थूलनीलाभासस्य विज्ञानस्य तद्विपरीतपरमाणु-विषयताऽयोगात्र परमाणवस्तावत् तदालम्बनम्। न च प्रतिभासधर्मः स्थौल्यम्; विकल्पासहत्वात्। किमयं प्रतिभासस्य ज्ञानस्य धर्मः, किं वा प्रतिभासनकालेऽर्थस्य। यद्याद्यः, तदा न बाह्यार्थसिद्धिः। अथार्थस्य, तथाहि— रूपपरमाणव एव निरन्तरोत्पन्ना

***न्यायनिर्णयः***

संदेहे संगतिगर्भं पूर्वपक्षमवतारयति— **एवमिति**। विज्ञानवादस्य भ्रान्तिमूलतया समन्वयस्य तदविरोधोक्तेः संगतयः। पूर्वपक्षे विज्ञानवादस्य प्रामाणिकत्वात् तद्विरोधे समन्वयासिद्धिः, सिद्धान्तेऽस्य भ्रान्तत्वात् तद्विरोधस्याभासत्वात् तत्सिद्धिरिति फलभेदः। बाह्यार्थवादिषु प्रत्युक्तेषु समानन्यायतया विज्ञानवादिनोऽपि प्रत्युक्तिसंभवात् कथं पृथगुत्थानमित्याशङ्क्य तेभ्यो विज्ञानमात्रवादिनः सुगताभिप्रायज्ञत्वेन विशेषमाह— **केषांचिदिति**। हीनधियामिति यावत्। बाह्येऽर्थे सुगतस्यानिच्छायां किलकारः। 'देशना लोकनाथानां सत्त्वाशयवशानुगाः' इति न्यायेनाह— **तदिति**। कस्तर्हि तस्याभिप्रायः, तत्राह— **तस्येति**। ननु मानमेयादिभेदोपगमे कथं विज्ञानमात्रवादोऽन्यथा कथं व्यवहारसिद्धिः, तत्राह— **तस्मिन्निति**। ज्ञानमेव कल्पितनीलाद्याकारतया मेयम्, अवभासात्मतया फलम्, तच्छक्त्यात्मना मानम्, तदाश्रयतया मातेति विज्ञानवादेऽपि कल्पितमानादिभेदमुपेत्य सर्वव्यवहारसिद्धिरित्यर्थः। किंचार्थसारूप्यात्मना मानम्, अवभासात्मना फलमिति **सौत्रान्तिकाः**। अनवभासव्यावृत्त्या फलम्, तच्छक्त्या मानमिति **वैभाषिकाः**। तेन तयोर्बाह्यमर्थमिच्छतोरपि कल्पितो भेदः, क्षणिकस्यात्मनो द्वयकालानवस्थानात्। तद् युक्तं विज्ञानवादे कल्पितभेदेनैव सर्वव्यवहारसाधनमित्याह— **सतीति**।

उक्तमर्थं युक्त्या द्रढयितुं पृच्छति— **कथमिति**। विमतं न ज्ञानातिरिक्तं, तदतिरेकेणानिरूप्यत्वात्, नरविषाणवदित्याह— **तदिति**। तत्रासिद्धिमुद्धर्तुं विकल्पयति— **स हीति**। एकस्थूलनीलाभासज्ञानस्य तद्विपरीतपरमाणुगोचरताऽयोगात्र परमाणवस्तावत्

**परमाणवः स्तम्भादिप्रत्ययपरिच्छेद्या भवितुमर्हन्ति, परमाण्वाभासज्ञानानुपपत्तेः। नापि तत्समूहाः स्तम्भादयः, तेषां परमाणुभ्योऽन्यत्वानन्यत्वाभ्यां निरूपयितुमशक्यत्वात्। एवं जात्यादीनपि प्रत्याचक्षीत।**

**अपि चानुभवमात्रेण साधारणात्मनो ज्ञानस्य जायमानस्य योऽयं प्रतिविषयं पक्षपातः स्तम्भज्ञानं कुड्यज्ञानं घटज्ञानं पटज्ञानमिति, नासौ ज्ञानगतविशेषमन्तरेणोपपद्यत इत्यवश्यं विषयसारूप्यं ज्ञानस्याङ्गीकर्तव्यम्। अङ्गीकृते च तस्मिन् विषयाकारस्य ज्ञानेनैवावरुद्धत्वादपार्थिका बाह्यार्थसद्भावकल्पना। अपि च सहोपलम्भनियमादभेदो विषयविज्ञानयोरापतति। न ह्यनयोरेकस्यानुपलम्भेऽन्यस्योपलम्भोऽस्ति।**

*प्रकटार्थविवरणम्*

भविष्यतीत्याशङ्क्याह— **एवं जात्यादीन्यपीति**। जातिव्यक्त्योरत्यन्तमेवान्यत्वं चेत्, स्वातन्त्र्येणाप्युपलम्भः स्यात्; अत्यन्तानन्यत्वे च जातिरेव न स्यात्, व्यक्तिरेव वा; न जातिव्यक्तिभावः; अन्यानन्यत्वं च विरोधादेवानुपपन्नमित्येवं निराकुर्यादित्यर्थः।

इतश्च न बाह्योऽर्थः कल्पनीय इत्याह— **अपि चेति**। ज्ञानगतविशेषावभासानुपपत्त्या नीलाद्याकारता ज्ञानस्यावश्यमङ्गीकर्तव्या। तथा च ज्ञानाकारस्यैव विषयत्वाद् व्यर्था बाह्यार्थकल्पना; गौरवं च स्यादित्यर्थः। किं च यद्येन नियतसहोपलम्भं तत्तेनाभिन्नम्, यथा शिंशपात्वं वृक्षत्वेन, नियतसहोपलम्भं च ज्ञेयं ज्ञानेनेत्याह— **अपि चेति**। ननु स्वभावभेदेऽपि ग्राह्यग्राहक(भावा)भावनिबन्धनं

*भाष्यभावप्रकाशिका*

एकविज्ञानोपारोहिणः स्थौल्यम्। न चात्र कस्यचित् भ्रान्तता, रूपपरमाणूनां तन्नैरन्तर्योत्पादस्य तदेकबुद्ध्युपारोहस्य वाऽभ्रान्तत्वात्। तेन नीलादिवत् प्रत्येकधर्मताऽभावेऽपि बहुत्वादिवत् स्थौल्यस्य प्रतिभासदशायां परमाणुधर्मतेति चेत्; मैवम्; गन्ध-रस-स्पर्श-परमाण्वन्तरिततया रूपपरमाणूनां नैरन्तर्यायोगात्। तस्मात् सान्तरालेषु तरुषु घनवनप्रत्ययवद् भ्रान्त एवायं प्रतिभास इति भावः। **नापि तत्समूहा इति**। स्तम्भाद्यवयवानां परमाणूभ्यो भेदे गवाश्ववदत्यन्तवैलक्षण्यम्, अभेदे परमाणुतावन्मात्रतया स्थूलनीलाद्यात्मनाऽवभासानुपपत्तिः; परमाणूनामनेवंविधत्वादित्यर्थः। एवं भेदाभेदविकल्पेन जाति-गुण-कर्मादयोऽपि प्रत्याख्येया इत्याह— **एवं जात्यादीनिति**। तस्माद् यत् प्रतिभासते, तस्य सर्वस्य विचारासहत्वात्, [अ]प्रतीयमानसद्भावे च प्रमाणाभावान्न बाह्यालम्बनाः प्रत्यया इति भावः।

इन्द्रियवद् विज्ञानस्याप्रकाशमानस्य विज्ञानान्तरजनकत्वेन प्रकाशत्वेऽनवस्थानाद् जगदान्ध्यापातः, प्राकट्यस्य च ज्ञानजन्यस्यातीतानागतार्थेष्वभावाद् न तज्जननेनापि ज्ञानस्य प्रकाशकत्वम्। अतो ज्ञानप्रकाशमानतैवार्थप्रकाशमानताऽभ्युपेया। न च अनाकारस्य ज्ञानस्य स्वतो भेदाभावादर्थभेदव्यवस्थापकतेत्यर्थभेदव्यवस्थापनायाकारभेदो ज्ञानस्यैवैष्टव्यः। एकश्चायमाकारोऽनुभूयते; तस्य च ज्ञानधर्मत्वाद् न पृथगर्थसद्भावे किञ्चित् प्रमाणमित्याह— **अपि चानुभवेति**। भेदव्यापकसहोपलम्भानियमविरुद्धसहोपलम्भनियमो दृश्यमानः तदनियमं व्यावर्तयंस्तद्व्याप्यं भेदं निवर्तयतीति व्यापकविरुद्धोपलब्ध्या ज्ञानज्ञेययोरेकस्माच्चन्द्रमसो द्वितीयचन्द्रस्येवाभेद

*न्यायनिर्णयः*

तदालम्बनमित्याह— **तत्रेति**। द्वितीयं प्रत्याह— **नापीति**। स्तम्भाद्यवयविनां परमाणुभ्यो भेदे गवाश्ववदत्यन्तवैलक्षण्यम्, अभेदे परमाणुमात्रतया स्थूलरूपेणावभासासिद्धिः, परमाणूनामतथात्वादित्याह— **तेषामिति**। अवयवावयविरूपो बाह्यार्थो नास्ति चेन्मा भूत्, जातिव्यक्त्यादिरूपस्तु स्यादित्याशङ्क्याह— **एवमिति**। जात्यादीनां व्यक्त्यादीनां चात्यन्तभिन्नत्वे स्वातन्त्र्यप्रसङ्गादत्यन्ताभिन्नत्वे तद्वदेवातद्भावाद् भिन्नाभिन्नत्वस्य विरुद्धत्वादवयवावयविभेदवज्जातिव्यक्त्यादिभेदोऽपि नास्तीत्यर्थः।

दृष्टस्य सर्वस्य विचारासहत्वाददृष्टसत्त्वे मानाभावान्न बाह्यालम्बनाः प्रत्यया इत्युक्तम्। सम्प्रति तेषां बाह्यानालम्बनत्वे हेत्वन्तरमाह— **अपि चेति**। ज्ञानगतविशेषदृष्ट्यनुपपत्त्या नीलाद्याकारता तस्य सिद्धा, तथा च ज्ञानाकारस्यैव विषयत्वाद् व्यर्था बाह्यार्थकल्पना, गौरवादित्यर्थः। इतश्च ज्ञेयं ज्ञानान्नान्यदित्याह— **अपि चेति**। यद् येन नियतसहोपलम्भनं तत् तेनाभिन्नं, यथैकेन चन्द्रमसा द्वितीयश्चन्द्रमाः, नियतसहोपलम्भनं च ज्ञेयं ज्ञानेनेत्यर्थः। सहोपलम्भनियममेव स्फोरयति— **न हीति**। ज्ञानज्ञेययोः

**न चैतत् स्वभावविवेके युक्तं, प्रतिबन्धकारणाभावात्। तस्मादप्यर्थाभावः।**

**स्वप्नादिवच्चेदं द्रष्टव्यम्। यथा हि स्वप्नमायामरीच्युदकगन्धर्वनगरादिप्रत्यया विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारा भवन्ति, एवं जागरितगोचरा अपि स्तम्भादिप्रत्यया भवितुमर्हन्तीत्यवगम्यते, प्रत्ययत्वाविशेषात्। कथं पुनरसति बाह्यार्थे प्रत्ययवैचित्र्यमुपपद्यते? वासनावैचित्र्यादित्याह। अनादौ हि संसारे बीजाङ्कुरवद् विज्ञानानां वासनानां चान्योन्यनिमित्तनैमित्तिकभावेन वैचित्र्यं न विप्रतिषिध्यते। अपि चान्वयव्यतिरेकाभ्यां**

***प्रकटार्थविवरणम्***

सहोपलम्भनं भविष्यतीत्याशङ्क्याह— **न चैतदिति**। क्षणिकस्य ज्ञानस्य विषयसंबन्धे कारणाभावाद् भेदे ग्राह्यग्राहकभावेन सहोपलम्भो न सिध्यतीत्यर्थः।

विमताः प्रत्ययाः निरालम्बनाः, प्रत्ययत्वात्, स्वप्नादिप्रत्ययवदित्याह— **स्वप्नादिवच्चेति**। प्रत्ययवैचित्र्यान्यथानुपपत्त्यर्थापत्तिबाधितं निरालम्बनत्वानुमानमित्याह— **कथं पुनरिति**। [१]अन्यथानुपपत्तिमाह— **वासनेति**। अनादिसन्ततिपतितमसंविदितरूपं ज्ञानमेव वासना, तद्वशादनेकव्यवधानेनापि नीलादिवासितमेव ज्ञानमुत्पद्यते, [२]कार्पासलतावदित्यर्थः। उभयसंप्रतिपन्नत्वादपि वासनानिमित्तमेव वैचित्र्यं युक्तमित्याह— **अपि चेति**। तस्मात् क्षणिकविज्ञानमात्रवस्तुवादस्य प्रामाणिकत्वादर्थान्नित्यविज्ञानब्रह्मणो जगत्सर्गं वदतः

***भाष्यभावप्रकाशिका***

इति दर्शयति— **न हीति**। स्वभावविवेके भेद इत्यर्थः। प्रतिबन्धकारणम् नियमकारणम्। न च उपायोपेयभावः कारणम्; तस्य धूमाग्न्योर्व्यभिचारात्।

यो यः प्रत्ययः स सर्वो बाह्यानालम्बनः, यथा स्वप्नादिप्रत्ययः, तथा चैष विवादाध्यासितः प्रत्यय इति अभावे हेतुमाह— **स्वप्नादिवदिति। सौत्रान्तिकश्चोदयति— कथं पुनरिति**। सत्यप्यालयविज्ञानसन्ताने नीलपीतादिप्रत्ययानां कदाचिदेव जायमानत्वात् तदतिरिक्तहेतुसापेक्षत्वं वक्तव्यम्। न च वासनापरिपाकप्रत्ययकादाचित्कत्वात् कदाचिदुत्पाद इति शङ्कनीयम्; तस्यापि सन्तानातिरिक्त-हेत्वन्तरासंभवात् कादाचित्कत्वानुपपत्तेः। अतो नीलादिप्रत्ययहेतुभूतानुमेयनीलाद्यर्थसिद्धिरिति भावः। परिहरति— **वासनावैचित्र्यादिति**। आलयविज्ञानपतितं तत्तन्नीलाद्याकारविज्ञानजननसमर्थं ज्ञानं वासना, तद्वैचित्र्यान्नीलपीतादिज्ञानवैचित्र्यम्। न च आलयविज्ञान-सन्तानपतितताऽविशेषात् सामर्थ्यमसामर्थ्यं वा सर्वेषां तुल्यमेव स्यादिति न नीलादिप्रत्ययकादाचित्कत्वसंभव इति शङ्कनीयम्; तन्मते बाह्यस्य नीलपीतादेः संनिधानाविशेषेऽपि हेतुभेदात् सामर्थ्यभेदात् प्रतिनियतनीलपीतादिप्रत्ययजनकत्ववत् केषांचिदेव क्षणानां स्वकारणसाधितस्वभावभेदानां नीलादिप्रत्ययवैचित्र्यहेतुत्वोपपत्तेः। अतो न विज्ञानातिरिक्तार्थसद्भावसिद्धिरित्यर्थः। ननु वासनावैचित्र्याद् ज्ञानवैचित्र्यम्, तद्वैचित्र्याच्च वासनावैचित्र्यमित्यन्योन्याश्रयत्वमित्याशङ्क्य परिहरति— **अनादौ हीति**। अन्वय-व्यतिरेकाभ्यामपि वासनावैचित्र्यमेव ज्ञानवैचित्र्यहेतुः, नार्थवैचित्र्यमित्याह— **अपि चेति**। ननु पूर्वानुभववासनाऽभावेऽप्यपूर्वार्थसंनिधाने

***न्यायनिर्णयः***

स्वभावभेदेऽपि ग्राह्यग्राहकत्वान्नियमः स्यादित्याशङ्क्याह— **न चेति**। क्षणिकस्य ज्ञानस्य ज्ञेयसंबन्धे हेत्वभावाद् ग्राह्यग्राहकत्वेनोक्तनियमा-सिद्धिरित्यर्थः। 'सहोपलम्भनियमादभेदो नीलतद्धियोः। भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये' इत्युक्तमुपसंहरति— **तस्मादिति**।

यो यः प्रत्ययः स सर्वो बाह्यानालम्बनः, यथा स्वप्नादिप्रत्ययः, तथा चैष विमतः प्रत्यय इत्याह— **स्वप्नेति**। दृष्टान्तस्य साध्यवैकल्यं परिहरति— **यथेति**। निर्दोषमनुमानं निगमयति— **एवमिति**। प्रत्ययवैचित्र्यानुपपत्तिरूपार्थापत्तिबाधितमनुमानमिति शङ्कते— **कथमिति**। अनादिसंततिपतितमसंविदितरूपं ज्ञानमेव वासना। तद्वशादनेकव्यवधानेनापि नीलादिवासितमेव ज्ञानमुत्पद्यते कार्पासरक्ततावदित्यन्यथोपपत्तिमाह— **वासनेति**। वासनावैचित्र्याज्ज्ञानवैचित्र्यम् ततश्च तद्वैचित्र्यमित्यन्योन्याश्रयत्वमाशङ्क्याह— **अनादौ हीति**। अन्वयव्यतिरेकाभ्यामपि वासनावैचित्र्यमेव ज्ञानवैचित्र्यहेतुर्नार्थवैचित्र्यमित्याह— **अपि चेति**। पूर्वानुभव-

---

१. 'अन्यथोपपत्ति' इति पाठः स्यात्। २. 'कार्पासरक्ततावत्' इति पाठः न्यायनिर्णयादूह्यते।

**वासनानिमित्तमेव ज्ञानवैचित्र्यमित्यवगम्यते। स्वप्नादिष्वन्तरेणाप्यर्थं वासनानिमित्तस्य ज्ञानवैचित्र्यस्यो-भाभ्यामप्यावाभ्यामभ्युपगम्यमानत्वात्। अन्तरेण तु वासनामर्थनिमित्तस्य ज्ञानवैचित्र्यस्य मयाऽनभ्युपगम्यमानत्वात्। तस्मादप्यभावो बाह्यार्थस्येति।**

**एवं प्राप्ते ब्रूमः– 'नाभाव उपलब्धेः' इति। न खल्वभावो बाह्यस्यार्थस्याध्यवसातुं शक्यते। कस्मात्? उपलब्धेः। उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः– स्तम्भः कुड्यं घटः पट इति। न चोपलभ्यमानस्यैवाभावो भवितुमर्हति। यथा हि कश्चिद् भुञ्जानो भुजिसाध्यायां तृप्तौ स्वयमनुभूयमानायामेवं ब्रूयान्नाहं भुञ्जे, न वा तृप्यामीति, तद्वदिन्द्रियसंनिकर्षेण स्वयमुपलभमान एव बाह्यमर्थं नाहमुपलभे, न च सोऽस्तीति ब्रुवन् कथमुपादेयवचनः स्यात्। ननु नाहमेवं ब्रवीमि न कंचिदर्थमुपलभ इति, किं तूपलब्धिव्यतिरिक्तं नोपलभ इति ब्रवीमि। बाढमेवं ब्रवीषि, निरङ्कुशत्वात् ते तुण्डस्य। न तु युक्त्युपेतं ब्रवीषि। यत उपलब्धिव्यतिरेकोऽपि बलादर्थस्याभ्युपगन्तव्य उपलब्धेरेव। न हि कश्चिदुपलब्धिमेव स्तम्भः कुड्यं चेत्युपलभते।**

### *प्रकटार्थविवरणम्*

समन्वयस्य विरोधोऽस्तीति पूर्वः पक्षः।

सिद्धान्तस्य सूत्रमवतारयति— **एवं प्राप्ते ब्रूम इति**। किमनुपलम्भादेव ज्ञेयाभावाध्यवसायः, किं वा भेदेनानुपलम्भात्, किं [वा] भेदोपलम्भेऽपि बाधकसद्भावादिति? न तावत् आद्य इत्याह— **उपलब्धेरिति**। द्वितीयकल्पं शङ्कते— **ननु नाहमिति**। दूषयति— **बाढमेवमिति**। प्रकाश्यप्रकाशयोः द्रवकठिनवद् विरुद्धरूपयोर्भेदस्य प्रत्यक्षत्वात् प्रत्यक्षबाधितमभेदसाधनमित्यर्थः।

### *भाष्यभावप्रकाशिका*

ज्ञानवैचित्र्यं लोके दृश्यत इत्याशङ्क्याह— **स्वप्नादिष्विति**। वासना नामाहमिति विज्ञानसन्ततौ पूर्वपूर्वनीलाद्याकारप्रत्ययलक्षणा। सा चास्यां सन्ततौ पूर्वोत्पन्ना चिरविनष्टाऽप्यनेकज्ञानव्यवधानेऽप्युत्तरनीलादिज्ञानहेतुर्भवति, शालिबीजमिवानेकाङ्कुरादिव्यवधाने पुनश्शालिबीजस्य। अथवा पूर्वनीलादिज्ञानजन्यो विज्ञानसन्तान एवोत्तरनीलादिज्ञानं प्रति वासना, ततो ज्ञानवैचित्र्यमित्यर्थः।

ननु उपलभ्यमानमपि शुक्तिरजतवन्मिथ्येति (आशङ्क्य) न; बाधाभावादित्याह— **न चोपलभ्यमानस्येति**। उपलब्धिरसिद्धेति चेत्, तर्हि किं सर्वात्मनाऽनुपलब्धिः, किं वा ज्ञानव्यतिरिक्तत्वेनेति। आद्यपक्षे दूषणमाह— **यथा हि कश्चिदिति**। द्वितीयं पक्षमाह— **ननु नाहमिति। निरङ्कुशत्वादिति**। नियामकप्रमाणरहितत्वादित्यर्थः। तदेव साधयति— **यत उपलब्धीति**। उपलब्धिग्राहिणा साक्षिणा गृह्यमाणोपलब्धिर्बाह्यविषयत्वेनैव गृह्यते, नोपलब्धिमात्रत्वेनेत्यर्थः। भवद्वचनादपि बाह्यार्थः[र्थं] लौकिका भेदेन प्रतीयत[प्रतियन्ति]

### *न्यायनिर्णयः*

वासनाऽभावेऽप्यपूर्वार्थसंनिधाने ज्ञानवैचित्र्यदर्शनादन्वयव्यतिरेकासिद्धिरित्याशङ्क्याह— **स्वप्नेति**। अन्वयमुक्त्वा व्यतिरेकमाह— **अन्तरेणेति**। ज्ञानातिरिक्तज्ञेयस्योक्तरीत्या विचारासहत्वात् क्षणिकज्ञानमात्रवादस्य प्रामाणिकत्वादर्थान्नित्यज्ञानाद् ब्रह्मणो जगत्सर्गवादिनः समन्वयस्य विरोधोऽस्तीत्युपसंहरति— **तस्मादिति**।

पूर्वपक्षमनूद्य सिद्धान्तयति— **एवमिति**। सूत्राक्षराणि व्याचष्टे— **नेति**। उपलभ्यमानमपि शुक्तिरजतादिवन्मिथ्येत्याशङ्क्या-बाधान्नैवमित्याह— **न चेति**। उपलब्धिरेवासिद्धेत्याशङ्क्य सर्वथाऽनुपलब्धिर्वा ज्ञानातिरिक्तत्वेन वेति विकल्प्याद्ये दोषमाह— **यथेति**। द्वितीयमवलम्बते— **नन्विति**। प्रकाश्यप्रकाशकयोर्द्रवकठिनवद् विरुद्धयोर्भेदस्याध्यक्षत्वात् तद्बाधितमभेदवचनमित्याह— **बाढमिति**। निरङ्कुशत्वं नियामकराहित्यम्। परोक्तेरयुक्तत्वमेव साधयति— **यत इति**। किं तद् बलम्, व्यतिरिक्तोपलब्धिरित्याह— **उपलब्धेरिति**। हेतुमेव स्फुटयति— **न हीति**। उपलब्धिर्हि साक्षिणा बाह्यविषयत्वेनैव गृह्यते, नोपलब्धिमात्रत्वेनेत्यर्थः। भवद्वचनादपि

**उपलब्धिविषयत्वेनैव तु स्तम्भकुड्यादीन् सर्वे लौकिका उपलभन्ते। अतश्चैवमेव सर्वे लौकिका उपलभन्ते, यत् प्रत्याचक्षाणा अपि बाह्यार्थमेवमाचक्षते– 'यदन्तर्ज्ञेयरूपं तद् बहिर्वदवभासत' इति। तेऽपि सर्वलोकप्रसिद्धां बहिरवभासमानां संविदं प्रतिलभमानाः प्रत्याख्यातुकामाश्च बाह्यमर्थं बहिर्वदिति वत्कारं कुर्वन्ति। इतरथा हि कस्माद् बहिर्वदिति ब्रूयुः। न हि विष्णुमित्रो वन्ध्यापुत्रवदवभासत इति कश्चिदाचक्षीत। तस्माद् यथानुभवं तत्त्वमभ्युपगच्छद्भिर्बहिरेवावभासत इति युक्तमभ्युपगन्तुम्, न तु बहिर्वदवभासत इति।**

**ननु बाह्यस्यार्थस्यासंभवाद् बहिर्वदवभासत इत्यध्यवसितम्। नायं साधुरध्यवसायो यतः प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ संभवासंभवाववधार्येते, न पुनः संभवासंभवपूर्विके प्रमाणप्रवृत्त्यप्रवृत्ती। यद्धि प्रत्यक्षादीनामन्यतमेनापि प्रमाणेनोपलभ्यते तत् संभवति; यत्तु न केनचिदपि प्रमाणेनोपलभ्यते तन्न संभवति। इह तु यथास्वं सर्वैरेव प्रमाणैर्बाह्योऽर्थ उपलभ्यमानः कथं व्यतिरेकाव्यतिरेकादिविकल्पैर्न संभवतीत्युच्येत**

### *प्रकटार्थविवरणम्*

**अतश्चेति**। वक्ष्यमाणादपि कारणादित्यर्थः। तृतीयविकल्पं शङ्कते— **ननु बाह्यस्येति**। प्रमाणेनैव स्वविषयस्य संभावितत्वान्न तत्र युक्तिमात्राद् बाधसंभावना, प्रमाणाद् युक्तेः दुर्बलत्वादित्याह— **नायं साधुरिति**। प्रमाणयोरेव विरोधे युक्त्युपबृंहितेनेतरद् बाध्यमिति स्थितिः। यच्चोक्तम्— ज्ञानस्य चैतद्विषयाकारत्वमिष्टम्, तर्हि ज्ञानाकार एव वेद्य इति; तत्राह— **न च ज्ञानस्येति**।

### *भाष्यभावप्रकाशिका*

इति ज्ञायत इत्याह— **इतश्चैवमिति**। बाधाभावाद् बहिर्वदिति वत्करणमनुपपन्नमित्याह— **न बहिर्वदिति**।

ननु अनुमानतो बाधाद् वत्करणं युक्तमिति शङ्कते— **नन्विति**। अनुमानस्याबाधितविषयत्वात्, सप्रतिपक्षद्वयेऽपि कारणसामग्र्यन्तर्भावात् प्रत्यक्षविरोधे कारणाभावादनुपपन्नं बाधकत्वमस्येति परिहरति— **नायं साधुरिति**। इतरथेतरेतराश्रयत्वमित्याह— **न पुनरिति**। केनचिदपि प्रमाणेनानुपलभ्यमानत्वं न बाह्यार्थस्य; यावन्ति प्रमाणानि तत्र संभवन्ति, तावद्भिरुपलभ्यमानत्वादित्याह— **इह त्विति**। अयमभिप्रायः— घटपटादीनां स्थूलतया भानात् सूक्ष्मतया चाभानात्, तद्देशत्वातद्देशत्व-कम्पाकम्पत्व-रक्तारक्तत्वलक्षणविरुद्धर्मसंसर्गितया नानात्वादेकज्ञानाकारत्वायोगात्, ज्ञाने स्थौल्यासंभवात्, एकस्य च ज्ञानस्यानेकपरमाण्वात्मकतायोगात्, आकाराणां च ज्ञानतादात्म्यादेकत्वप्रसङ्गात्, प्रत्याकारभेदं ज्ञानानां भेदाद् मिथो वार्तानभिज्ञतया स्थूलानुभवायोगात्, सङ्कलनात्मकस्यापि साकारतया स्थौल्यायोगाद् इदंतास्पदं ज्ञानाद्भिन्नं बाह्यं वस्त्वपह्नोतुमशक्यमिति। ज्ञानस्य प्रत्यर्थव्यवस्थायै विषयसारूप्याङ्गीकारेऽपि

### *न्यायनिर्णयः*

बाह्यमर्थं लौकिका भेदेनैव प्रतियन्तीत्याह— **अतश्चेति**। कथं यथोक्तं वाक्यं व्यतिरेकोपलब्धिसाधकमित्याशङ्क्याह— **तेऽपीति**। सर्वलोकप्रसिद्धबाह्यार्थधीप्रतिलम्भे हेतुमाह— **इतरथेति**। अत्यन्तासतोऽपि बाह्यार्थस्य दृष्टान्तत्वमाशङ्क्याह— **न हीति**। अबाधितव्यतिरेकोपलब्धौ वत्करणमयुक्तमिति फलितमाह— **तस्मादिति**।

अनुमानतो बाधाद् युक्तं वत्करणमिति शङ्कते— **नन्विति**। अनुमानस्याबाधितविषयताऽपि हेतुः, प्रत्यक्षविरोधे तदभावान्न तस्य बाधकतेत्याह— **नायमिति**। प्रमाणपूर्वकः संभवोऽर्थज्ञाने तदभावपूर्वकश्चासंभवो नरविषाणे निश्चितः। बाह्यार्थे च प्रत्यक्षादिसंभवाद-संभवाधीनस्तदसत्त्वाध्यवसायो न युक्त इत्यर्थः। संभवपूर्विका प्रमाणप्रवृत्तिरसंभवपूर्विका तदप्रवृत्तिरिति वैपरीत्यमाशङ्क्यान्यो-न्याश्रयत्वान्नैवमित्याह— **नेति**। 'संभाविते प्रमाण'मित्युपगमस्तर्हि कथमित्याशङ्क्यात्र संभवासंभवयोर्निश्चयतदभावत्वादन्यत्र संभावनायाः संदेहत्वात्रानुपपत्तिरित्याह— **यद्धीति**। बाह्यार्थस्याध्यक्षादिसिद्धत्वेऽपि तस्यावयवादिभ्यो व्यतिरेकादिविकल्पासहत्वान्न संभावनेत्याशङ्क्याह— **इहेति**। बाह्यार्थस्यायुक्तत्वमदृष्टत्वं वा? नाद्योऽङ्गीकारात्। नेतरो दृष्टिविरोधात्। तस्मादिदन्तास्पदं ज्ञानाद्भिन्नं बाह्यं वस्तु सिद्धमित्यर्थः।

**उपलब्धेरेव। न च ज्ञानस्य विषयसारूप्याद्विषयनाशो भवति, असति विषये विषयसारूप्यानुपपत्तेः, बहिरुपलब्धेश्च विषयस्य। अत एव सहोपलम्भनियमोऽपि प्रत्ययविषययोरुपायोपेयभावहेतुको नाभेदहेतुक इत्यभ्युपगन्तव्यम्। अपि च घटज्ञानं पटज्ञानमिति विशेषणयोरेव घटपटयोर्भेदो, न विशेष्यस्य ज्ञानस्य। यथा शुक्लो गौः कृष्णो गौरिति शौक्ल्यकार्ष्ण्ययोरेव भेदो न गोत्वस्य। द्वाभ्यां च भेद एकस्य सिद्धो भवत्येकस्माच्च द्वयोः। तस्मादर्थज्ञानयोर्भेदः। तथा घटदर्शनं घटस्मरणमित्यत्रापि प्रतिपत्तव्यम्। अत्रापि हि विशेष्ययोरेव**

### *प्रकटार्थविवरणम्*

न च कल्पनागौरवमित्याह— **बहिरुपलब्धेरिति**। यच्च सहोपलम्भनं लिङ्गमुक्तम्, तत्राह— **अत एवेति**। यतो भेदः प्रत्यक्षसिद्धः, अत एवालोकरूपवतोरिव विषयविषयिभावादेव सहोपलम्भोऽन्यथासिद्धः। प्रतिज्ञाविरोधश्चाभेदसाधने स्यादिति भावः। किं च विमतं ज्ञानं नानेकनीलाद्यात्मकम्, एकत्वात्, यदेकं तन्नानेकाभिन्नम्, यथैकं पीतज्ञानम्, एकत्वं चैकरूपावभासनादित्याह— **अपि च घटज्ञानमिति**। किं च ज्ञानज्ञेये नाभिन्ने, अनुवृत्तव्यावृत्तरूपत्वात्, आकाशघटादिवदित्याह— **तथा घटदर्शनमिति**। किंच

### *भाष्यभावप्रकाशिका*

न विषयापह्नवसंभवः; असत्येवार्थे तत्सारूप्यस्य तद्व्यवस्थायाश्चायोगादित्याह— **न च ज्ञानस्येति**। आकारद्वयशून्यत्वादिति वस्तुद्वयशून्यत्वं ब्रूषे, किं वा नीलपीताद्याकारद्वयराहित्यमिति। यद्याद्यम्, तदाऽसिद्धम्; वस्तुद्वयप्रतिभानात्। अथ नीलाद्याकारद्वयशून्यत्वम्, तथाप्यन्यतरस्यैव ज्ञानस्यैवाकारभावादनुपलब्धिर्युक्ता। ननु तस्यापि स्वाभाविकाकारोऽस्तीति चेत्, न; चरमक्षणे व्यभिचारादित्यर्थः। सहोपलम्भनियमोऽपि साहित्येनोपलम्भः; किं वैकोपलम्भ इति। आद्यपक्षे भेदसिद्धिः; साहित्यस्य भेदव्याप्तत्वात्। एकोपलम्भ इत्यत्राप्येकत्वेनोपलम्भः, किं वैक एवोपलम्भ इति? आद्येऽसिद्धिरित्याह— **बहिरुपलब्धेश्चेति**। उत्तरपक्षेऽपि साक्षिचैतन्यवेद्यत्वाद् घटाद्युपलब्धेरसिद्धं साधनम्, अन्यथासिद्धं चैतदित्याह— **अत एव सहोपलम्भनियम इति**। रूपालोकयोरिवेत्यर्थः।

इदानीं पूर्वोक्तानुमानानां प्रत्यनुमानमाह— **अपि च घटज्ञानमिति**। ननु ज्ञानस्यापि भिन्नत्वात् सामान्यविषया प्रत्यभिज्ञेति, अत आह— **न विशेष्यस्येति**। सामान्यव्यक्त्योः कल्पनायां गौरवादित्यर्थः। न च क्षणिकत्वानुमानाद् भेदसिद्धौ सादृश्य-निबन्धनमेकत्वज्ञानमिति शङ्कनीयम्; क्षणिकत्वपक्षे सादृश्यस्याप्ययोगादिति भावः। एवमर्थभेदेऽपि विज्ञानाभेदात् ज्ञानज्ञेययोर्भेद-मुक्त्वाऽर्थाभेदेऽपि विज्ञानभेददर्शनान्न विज्ञानात्मकत्वमर्थस्येत्याह— **तथा घटदर्शनमिति**। ननु पूर्वं ज्ञानस्याभेदं वदता नित्यत्वमुक्तम्,

### *न्यायनिर्णयः*

यत्तु प्रत्यर्थं ज्ञानस्य व्यवस्थायै विषयसारूप्ये तेनैव विषयाकारस्यावरुद्धत्वान्न पृथगर्थकल्पनेति, तत्राह— **न चेति**। यत्तु कल्पनागौरवमिति, तत्राह— **बहिरिति**। प्रामाणिकी कल्पना न दुष्यतीत्यर्थः। यत्तु 'सहोपलम्भनियमादभेदो नीलतद्धियोः' इति, तत्र सहोपलम्भः साहित्येनोपलम्भो वा स्यादेकोपलम्भो वा? प्रथमे साध्यसाधनयोर्व्याघातः, साहित्यस्य भेदव्याप्तत्वात्; द्वितीये त्वेकत्वेनोपलब्धिर्वा स्यादेकैवोपलब्धिर्वा? नाद्यः, असिद्धेः। न हि बहिरुपलभ्यमानस्यार्थस्योपलब्ध्या सहैकत्वेनोपलब्धिः। न द्वितीयः, साक्षिवेद्यत्वाद् घटाद्युपलब्धेर्घटादेश्च तद्विषयत्वादसिद्धितादवस्थ्यादित्याशयेनान्यथासिद्धिमाह— **अत इति**। भेदस्य प्रत्यक्षत्वादिति यावत्। परकीयानुमानानां प्रत्यनुमानविरोधमाह— **अपि चेति**। **न विशेष्यस्येति**। प्रत्यभिज्ञानादैक्यसिद्धेरित्यर्थः। विशेषणभेदेऽपि विशेष्यभेदो नेत्यत्र दृष्टान्तमाह— **यथेति**। तथापि कथं ज्ञानार्थभेदः, तत्राह— **द्वाभ्यामिति**। विमतमनेकस्माद् भिन्नम्, एकत्वात्, गोत्ववदित्यर्थः। विमतमेकस्मादन्यत्, अनेकत्वात्, संमतवदित्याह— **एकस्माच्चेति**। अनुमानद्वयफलं परानुमाने साध्यासिद्धिमाह— **तस्मादिति**। अर्थभेदेऽपि ज्ञानाभेदात् तयोर्भेदमुक्त्वा ज्ञेयाभेदेऽपि विज्ञानभेददृष्टेश्च तयोर्भिन्नतेत्याह— **तथेति**। यथा घटज्ञानं पटज्ञानमित्यत्र ज्ञेयभेदेऽपि ज्ञानाभेदात् तयोर्भिन्नत्वं तथाऽत्रापि ज्ञानभेदे ज्ञेयैक्यदृष्ट्या तद्भिन्नत्वधीरित्यर्थः। तदेव प्रकटयति— **अत्रापीति**। अनुमानद्वयं पूर्ववत्। स्वरूपापेक्षया ज्ञानस्याभेदेन नित्यत्वं वृत्त्युपधानापेक्षया चानित्यत्वमित्यविरोधः।

**दर्शनस्मरणयोर्भेदो, न विशेषणस्य घटस्य। यथा क्षीरगन्धः क्षीररस इति विशेष्ययोरेव गन्धरसयोर्भेदो न विशेषणस्य क्षीरस्य, तद्वत्।**

**अपि च द्वयोर्विज्ञानयोः पूर्वोत्तरकालयोः स्वसंवेदनेनैवोपक्षीणयोरितरेतरग्राह्यग्राहकत्वानुपपत्तिः। ततश्च विज्ञानभेदप्रतिज्ञा क्षणिकत्वादिधर्मप्रतिज्ञा स्वलक्षणसामान्यलक्षणवास्यवासकत्वाविद्योपप्लवसदसद्धर्म-बन्धमोक्षादिप्रतिज्ञाश्च स्वशास्त्रगतास्ता हीयेरन्।**

### *प्रकटार्थविवरणम्*

स्वाभ्युपगतसकलव्यवहारनिर्वाहार्थमपि विज्ञानांश एव वेद्यो नाभ्युपगन्तव्य इत्याह— **अपि च द्वयोरिति**। इदमस्माद्भिन्नमिति धर्मिप्रतियोग्यवच्छिन्नो हि भेदो भाति। ज्ञानस्य स्वांश एव चेद्वेद्यस्तदा धर्मिप्रतियोगिज्ञानयोरग्रहणात् भेदप्रतिज्ञा हीयेतेत्यर्थः। क्षणिकत्वादिधर्मोऽपि धर्मिग्रहणमन्तरेण ग्रहीतुं न शक्यते। अतिरिक्तवेद्याभावे च ज्ञानस्य साऽपि प्रतिज्ञा न सिध्यतीत्यर्थः। स्वमसाधारणं सर्वतो व्यावृत्तं लक्षणं स्वलक्षणम्; तदपि येभ्यो व्यावृत्तं यद्व्यावृत्तं तदनेकग्रहणसापेक्षमेव। सामान्यलक्षणमपोहरूपम्;

### *भाष्यभावप्रकाशिका*

इदानीं दर्शनस्पर्शनरूपेणानित्यत्वमुच्यत इति पूर्वापरविरोध इति चेत्, तन्न; आत्मस्वरूपापेक्षया नित्यत्वम्, वृत्त्युपहितरूपेणा-नित्यत्वमित्यविरोधात्।

किञ्च ज्ञानस्य स्वसंवेद्यत्वे भिन्नत्व-क्षणिकत्वादिप्रतिज्ञानुपपत्तिरित्याह— **अपि च द्वयोरिति**। अयं भावः— स्वरूपमात्रपर्यवसितं ज्ञानं ज्ञानान्तरवार्त्तानभिज्ञत्वात् ततो भेदं न गृह्णीयात्। एवं क्षणिकशून्यानात्मत्वादयोऽप्यनेकप्रतिज्ञाहेतुदृष्टान्तज्ञानभेदसाध्याः, तथा स्वयमसाधारणमन्यतो व्यावृत्तं लक्षणं यस्य तदपि यद् व्यावर्तते, यतश्च तदनेकज्ञानसाध्यं, सामान्यलक्षणमपि विधिरूपमन्यापोहरूपं वाऽनेकज्ञानगम्यम्, एवं वास्यवासकभावोऽनेकज्ञानसाध्यः। एवमविद्योपप्लववशेन यत्सदसद्धर्मवत्त्वम्— नीलमिति सद्धर्मः, नर-विषाणमीश्वर इत्यसद्धर्मः, अमूर्तमिति सदसद्धर्मः; उभयोरप्यमूर्तत्वप्रतीतेः, तथा मोक्षप्रतिज्ञा च यो मुच्यते, यतश्च मुच्यते, तदनेकज्ञानसाध्यम्। एवं प्रतिपादयितुं प्रतिज्ञा प्रतिपादयितृ-प्रतिपाद्यप्रतिपादनाद्यनेकज्ञानसाध्या, इत्येकस्मिन्नसत्यनेकज्ञानप्रतिसन्धातरि न घटते विज्ञानानां स्वांशावलम्बनत्वे— इति।

### *न्यायनिर्णयः*

इतश्च ज्ञानातिरिक्तोऽर्थोऽस्तीत्याह— **अपि चेति**। हेत्वन्तरमेव वक्तुं स्वरूपमात्रनिष्ठं ज्ञानं त्वन्मते ज्ञानान्तरवार्तानभिज्ञमित्याह— **द्वयोरिति**। ज्ञानयोरन्योन्यग्राह्यग्राहकत्वाभावेऽपि कथमतिरिक्तार्थधीरित्याशङ्क्याह— **ततश्चेति**। इदमस्माद्भिन्नमिति धर्मिप्रतियोग्यवच्छिन्नो भेदो भाति, ज्ञानस्यैव धर्मित्वे प्रतियोगित्वे च तेन द्वयोरग्रहाद् भेदप्रतिज्ञा ते न युक्ता। तेन तदुपपत्तये ज्ञानार्थयोर्भिन्नतेत्यर्थः। किंच क्षणिकत्वं शून्यत्वमनात्मत्वमित्यादिधर्मप्रतिज्ञाऽपि ते हीयेत, अनेकप्रतिज्ञाहेतुदृष्टान्तज्ञानभेदसाध्यत्वात्, तस्य च मिथोवार्तानभिज्ञत्वात् ततो भिन्नं ज्ञेयमित्याह— **क्षणिकत्वादीति**। स्वमसाधारणं सर्वतो व्यावृत्तं लक्षणं स्वलक्षणम्, तदपि येभ्यो व्यावृत्तं यच्च व्यावृत्तं तदनेकज्ञानापेक्षं, ज्ञानं च ज्ञानान्तरवार्तानभिज्ञमुक्तम्। अतः स्वलक्षणप्रतिज्ञार्थमपि ज्ञानाद्भिन्नं ज्ञेयमित्याह— **स्वलक्षणेति**। सामान्यलक्षणमपि विधिरूपमन्यापोहरूपं वा भवत्यनेकधीसाध्यम्, न हि गोत्वं धर्मिणीनां प्रतियोगिनीनां वा व्यक्तीनामग्रहे गृह्यते, तेन तत्प्रतिज्ञार्थमपि ज्ञानज्ञेययोरन्यत्वमित्याह— **सामान्येति**। पूर्वज्ञानमुत्तरज्ञानस्य नीलाद्याकारेण वासकम्, तच्च वास्यवासकत्वं त्वन्मतेऽनेकधीसाध्यम्, अतस्तत्प्रतिज्ञार्थमपि ज्ञानज्ञेययोरन्यत्वमित्याह— **वास्येति**। अविद्योपप्लवोऽविद्यासंसर्गः, तेन नीलमिति सद्धर्मो नरविषाणमित्यसद्धर्मोऽमूर्तमित्युभयधर्मः, तत्प्रतिज्ञाऽपि बहुज्ञानसाध्यत्वादुक्तभेदावेदिकेत्याह— **अविद्येति**। बन्धप्रतिज्ञा च यो बध्यते यतश्च बध्यते, तदनेकधीसाध्यत्वादुक्तभेदहेतुरित्याह— **बन्धेति**। मोक्षप्रतिज्ञा च यो मुच्यते यतश्च मुच्यते तदनेकज्ञानसाध्यत्वाद् भेदसाधनमित्याह— **मोक्षेति**। यच्च किंचित् प्रतिपादयितुं प्रत्याख्यातुं वा प्रतिज्ञायते, तत्प्रतिज्ञाऽपि प्रतिपादयितृप्रतिपाद्याद्यनेकधीसाध्य-त्वादिष्टभेदहेतुरित्यादिपदम्। एता हि प्रतिज्ञाः सौगतमते दृष्टा ज्ञानज्ञेयभेदानुपगमे विहताः स्युः, तस्मात् तदर्थं ज्ञानज्ञेयान्य-त्वमावश्यकमित्याह— **प्रतिज्ञाश्चेति**।

**किंचान्यत्। विज्ञानं विज्ञानमित्यभ्युपगच्छता बाह्योऽर्थः स्तम्भः कुड्यमित्येवंजातीयकः कस्मान्नाभ्युपगम्यत इति वक्तव्यम्। विज्ञानमनुभूयत इति चेत्। बाह्योऽप्यर्थोऽनुभूयत एवेति युक्तमभ्युपगन्तुम्। अथ विज्ञानं प्रकाशात्मकत्वात् प्रदीपवत् स्वयमेवानुभूयते, न तथा बाह्योऽप्यर्थ इति चेत्। अत्यन्तविरुद्धां स्वात्मनि क्रियामभ्युपगच्छसि, अग्निरात्मानं दहतीतिवत्, अविरुद्धं तु लोकप्रसिद्धं स्वात्मव्यतिरिक्तेन विज्ञानेन बाह्योऽर्थोऽनुभूयत इति नेच्छस्यहो पाण्डित्यं महद् दर्शितम्। [१]न चार्थव्यतिरिक्तमपि विज्ञानं स्वयमेवानुभूयते, स्वात्मनि क्रियाविरोधादेव।**

**ननु विज्ञानस्य स्वरूपव्यतिरिक्तग्राह्यत्वे तदप्यन्येन ग्राह्यं तदप्यन्येनेत्यनवस्था प्राप्नोति। अपि च**

### *प्रकटार्थविवरणम्*

तदप्यनेकग्रहणसापेक्षम्; गोत्वं ह्यगोव्यावृत्तिरूपं कथमनेकाग्रहणे गृह्यत इत्यर्थः। पूर्वविज्ञानमुत्तरस्य नीलाद्याकारेण वासकम्; तच्च वास्यम्। संसारिविज्ञानानां चाविद्यासंसर्गो न सर्वज्ञज्ञानानाम्। नीलमित्यादिरसधर्म [ दि: सद्धर्मः, नरविषाणमित्यादिरसद्धर्मः, अमूर्तमिति सदसद्धर्मः ] [२]इत्यपि न सिध्यति, ज्ञानाभिन्नत्वेन तस्यापि सत्यत्वापातात्; [३]नित्यध्वंसाभिन्नत्वेन ज्ञानस्य चानित्यतापातादित्यर्थः।

किं च प्रकाशमानोऽपि बाह्योऽर्थः तथा न संभवतीति वदतो ज्ञानमपि तत्त्वं न सिध्यति, तत्राप्यनाश्वासप्रसङ्गादित्याह— **किंचान्यदिति**। व्यवहारेऽबाधितासन्दिग्धप्रतिभासत्वाच्चेत् ज्ञाने विश्वासः, तथा अर्थेऽपि कर्तुं युक्त इत्याह— **विज्ञानमित्यादिना**। स्वसंवेद्यत्वात् तत्राश्वास इत्याह— **अथ विज्ञानमिति**। अविरुद्धं हित्वा विरुद्धमङ्गीकुर्वता मौर्ख्यमेव स्वस्य दर्शितमित्याह— **अत्यन्तविरुद्धामिति**। विज्ञानं स्ववेद्यम्, अर्थस्तु परवेद्य इति विभागमङ्गीकृत्योक्तम्; इदानीं स्ववेद्यत्वमसंभाव्यमित्याह— **न चार्थव्यतिरिक्तमपीति**। अनवस्थापरिहाराय स्ववेद्यत्वं सर्वैरेवाङ्गीकर्तव्यमित्याशङ्कते— **ननु विज्ञानस्येति**। किं च ज्ञानं न

### *भाष्यभावप्रकाशिका*

विज्ञानस्य यथा भेदकं प्रमाणमस्ति, तथा बाह्यस्याप्यस्तीति नापलपनीयो बाह्यार्थ इत्याह— **किञ्चान्यदिति**। ननु द्वयोरभ्युपगमे गौरवादेकमेवाभ्युपगन्तव्यम्; बाह्यपदार्थस्याभ्युपगमे च जडत्वेनानवभासनाद् व्यवहारासिद्धेर्विज्ञानमेवाभ्युपगन्तव्यमित्याशङ्क्याह— **न चार्थेति**। कल्पनापक्षेऽपि गौरवं दूषणम्, न चात्र कल्पना; प्रमाणसिद्धत्वादित्यर्थः।

ननु त्वन्मते कथं विज्ञानस्य सिद्धिः? किं कर्मत्वव्यतिरेकेण, किं वा कर्मतया, आद्यः पक्षोऽनुपपन्नः, धीकर्मतया सिद्धस्यैव सिद्धशब्दवाच्यत्वात्। उत्तरपक्षे विज्ञानान्तरकर्मतया सिद्धावनवस्था। अतः स्वकर्मतयैव सिद्धिरेष्टव्येति चोदयति बौद्धः— **ननु विज्ञानस्येति**। प्रदीपस्येव प्रदीपान्तरविषयत्वं ज्ञानस्य ज्ञानान्तरविषयत्वमनुपपन्नं चेत्याह— **अपि च प्रदीपवदिति**।

### *न्यायनिर्णयः*

ज्ञानातिरिक्तं ज्ञेयमावश्यकमित्यत्रान्यच्च कारणमस्तीत्याह— **किंचेति**। तदेव वदन् विज्ञानेन तुल्यत्वं विज्ञेयस्य कथयति— **विज्ञानमिति**। व्यवहारदशायामबाधितासंदिग्धभानत्वाज्ज्ञानं शक्यमुपगन्तुमिति शङ्कते— **विज्ञानमिति**। तथा भानस्यार्थेऽपि तुल्यत्वात् तदुपगमो बलादापततीत्याह— **बाह्योऽपीति**। स्वसंवेद्यत्वाद् विज्ञानमिष्यते, बाह्यार्थस्तु नैवमित्याह— **अथेति**। अविरुद्धं लोकसिद्धं च हित्वा विरुद्धमलौकिकं चाभ्युपयता मौढ्यमेवात्मनो दर्शितं स्यादित्याह— **अत्यन्तेति**। ज्ञानं स्वसंवेद्यमर्थो नैवमिति भेदमुपेत्योक्तम्। इदानीं ज्ञानस्य न स्वसंवेद्यतेत्याह— **न चेति**। स्वात्मनि कर्तरि कर्मत्वं गृहीत्वा क्रियास्वीकारे कर्तृत्वेन गुणत्वं कर्मत्वेन प्राधान्यमित्यपर्यायमेकस्यां क्रियायामेकस्यैव गुणत्वं प्राधान्यं चेति विरुद्धमापद्येत। तन्नार्थवज्ज्ञानमपि स्वसंवेद्यमित्यर्थः।

कथं ते ज्ञानसिद्धिः, कर्मत्वातिरेकेण कर्मतया वा? नाद्यः, धीकर्मतया सिद्धस्यैव सिद्धत्वाभिधानात्। न द्वितीयः, ज्ञानान्तरकर्मत्वेऽनस्थानात् तत्परिहारार्थं स्वकर्मतयैव तत्सिद्धिध्रौव्यादिति शङ्कते— **नन्विति**। इतश्च ज्ञानस्य न ज्ञानान्तरकर्मत्वमित्याह—

१. 'अर्थाव्यतिरिक्त' इति पा.। २. अत्र कश्चिद् ग्रन्थभागस्त्रुटित इति भाति। ३. 'अनित्य' इति पाठः स्यात्।

**प्रदीपवदवभासात्मकत्वाज्ज्ञानस्य ज्ञानान्तरं कल्पयतः समत्वादवभास्यावभासकभावानुपपत्तेः कल्पनानर्थक्यमिति। तदुभयमप्यसत्। विज्ञानग्रहणमात्र एव विज्ञानसाक्षिणो ग्रहणाकाङ्क्षानुत्पादादनवस्थाशङ्कानुपपत्तेः। साक्षिप्रत्यययोश्च स्वभाववैषम्यादुपलब्ध्रुपलभ्यभावोपपत्तेः। स्वयंसिद्धस्य च साक्षिणोऽप्रत्याख्येयत्वात्।**

**किंचान्यत्। प्रदीपवद् विज्ञानमवभासकान्तरनिरपेक्षं स्वयमेव प्रथत इति ब्रुवताऽप्रमाणगम्यं विज्ञानमनवगन्तृकमित्युक्तं स्यात्। शिलाघनमध्यस्थप्रदीपसहस्रप्रथनवत्। बाढमेवम्, अनुभवरूपत्वात्तु विज्ञानस्येष्टो नः पक्षस्त्वयाऽनुज्ञायत इति चेत्? न; अन्यस्यावगन्तुश्चक्षुःसाधनस्य प्रदीपादिप्रथनदर्शनात्। अतो**

### *प्रकटार्थविवरणम्*

स्वावान्तरजातीय[ प्रकाश्यम् ] प्रकाशकत्वात् प्रदीपवदित्याह— **अपि चेति**। सिद्धान्ती दूषयति— **तदुभयमिति**। यदि विज्ञानग्रहणकाल एव विज्ञानसाक्षिणो ग्रहणाकाङ्क्षा स्यात्, तदा भवेदनवस्था, न तु साऽस्ति, साक्षिणः स्वयंसिद्धत्वादित्यर्थः। यच्चानुमानम्, तदपि सिद्धसाधनमित्याह— **साक्षिप्रत्यययोश्चेति**। ननु तथाविधः साक्ष्येव नास्तीत्याशङ्क्याह— **स्वयंसिद्धस्य चेति**। विज्ञानोत्पादविनाशसिद्ध्यन्यथानुपपत्त्या वेनाशिकैरप्यवश्यमङ्गीकरणीयः साक्षी। स च निराकर्तुमपि न शक्यः, निराकरण-प्रत्ययस्याप्यविषयत्वादित्यर्थः। इतश्च साक्षी स्वीकर्तव्य इत्याह— **किंचान्यदिति**। 'न प्रमाणगम्यम्, नापि साक्षिवेद्यं विज्ञानमित्युक्तं स्यात्' इति। उत्पन्नमप्यनुत्पन्नसममेव स्यात्; साक्ष्यभावे 'अहं जाने' इति व्यवहारो न स्यादित्यर्थः। बौद्ध आह— **बाढमेवमिति**। सत्यमेवमप्रमातृकं विज्ञानमितीष्टो नः पक्षस्त्वयाऽप्यनुज्ञायते अनिष्टं प्रसञ्जयता; तथापि व्यवहारलोपो नास्ति; ज्ञानस्य स्वयमनुभवरूपत्वात्

### *भाष्यभावप्रकाशिका*

अनवस्थां प्रथमं परिहरति— **विज्ञानग्रहणमात्र इति**। विज्ञानशब्देनान्तःकरणपरिणाम उच्यते। प्रदीपवत् समत्वात् विषयत्वमयुक्तमिति यदुक्तम्, तत् परिहरति— **साक्षि-प्रत्यययोरिति**। यत् प्रकाशते, तदन्येन (न) प्रकाश्यते, यथा ज्ञानार्थौ, तथा च साक्षी इति नास्ति प्रत्ययसाक्षिणोर्वैषम्यमित्यत आह— **स्वयंसिद्धस्येति**। साक्षिणः सदाऽसंदिग्धाविपर्यस्तस्य नित्यसाक्षात्कारताऽनागन्तुकप्रकाशत्व एव घटत इत्यर्थः।

इदानीं स्वसंवेद्यत्वपक्षे कर्मकर्तृभावविरोधादन्यावेद्यत्वाच्चाप्रकाश एव विज्ञानस्य स्यादित्याह— **किञ्चान्यदिति**। विज्ञानमेवावगन्त्रिति मन्वानः शङ्कते— **बाढमिति**। विज्ञानस्य फलस्य कर्तृत्वं कर्मत्वं वा नास्तीति प्रदीपवत्परप्रकाश्यत्वेऽपि वेद्यत्वात् कर्त्रन्तरमेष्टव्यम्। तथा च न सिद्धसाधनमिति परिहरति— **नान्यस्येति**। ननु साक्षिस्थानेऽस्मदभिमतविज्ञानमेवास्तु, तथा च नाम्नि विप्रतिपत्तिरिति

### *न्यायनिर्णयः*

**अपि चेति**। विमतं न स्वावान्तरजातीयप्रकाश्यं, प्रकाशत्वात्, दीपवदित्याह— **प्रदीपवदिति**। ज्ञानान्तरं कल्पयतः कल्पनानर्थक्यमिति संबन्धः। तत्र हेतुः— **समत्वादिति**। अनवस्थाप्रसक्तिरनुमानं चेत्युभयमपि न साधकमिति दूषयति— **तदिति**। तत्रानवस्थाप्रसक्तेरसत्त्वं साधयति— **विज्ञानेति**। यदि बुद्धिवृत्तिग्रहावस्थायामेव तत्साक्षिणो ग्रहाकाङ्क्षा तदाऽनवस्था, न तु साऽस्ति, साक्षिणः स्वयंसिद्धत्वादित्यर्थः। अनुमानं सिद्धसाध्यत्वेन निरस्यति— **साक्षीति**। यत् प्रकाशते तदन्येन प्रकाशते, यथा ज्ञानार्थौ, प्रकाशते च साक्षीति न धीसाक्षिणोर्वैलक्षण्यमित्याशङ्क्याह— **स्वयमिति**। सदैवासंदिग्धाविपर्यस्तस्य साक्षिणो नित्यसाक्षात्कारत्वमनागन्तुकप्रकाशत्वे सिध्यति, तेन तत्प्रत्याख्यानायोगादनुमानस्य सिद्धा सिद्धसाध्यतेत्यर्थः।

इतश्च साक्षिणो न प्रत्याख्यानमित्याह— **किंचेति**। यथा दीपो दीपान्तरं नापेक्षते तथा ज्ञानमपि ज्ञानान्तरानपेक्षमिति वदता मानागम्यं तदुक्तं स्यात्, स्वसंवेद्यत्वे कर्मकर्तृत्वविरोधादन्यवेद्यत्वस्यानिष्टत्वात्। स्वयमेव प्रथते तदिति ब्रुवता निःसाक्षिकं तदुक्तं स्यात्। तथा चोत्पन्नस्यापि तस्यानुत्पन्नसमत्वात् तत्प्रकाशकसाक्षी न शक्योऽपह्नोतुमित्याह— **प्रदीपवदिति**। प्रकाशमानस्या-प्रामाणिकत्वमनवगन्तृकत्वं वा दूषणमित्याशङ्क्य दृष्टान्तमाह— **शिलेति**। ज्ञानस्यैवावगन्तृत्वान्नान्यापेक्षेति शङ्कते— **बाढमिति**। ज्ञानं स्वातिरिक्तवेद्यं वेद्यत्वात्, दीपवदित्यनुमानान्न तस्य प्रमातृतेत्याह— **नेति**। दर्शनादित्यन्तं व्याप्तिवचनम्। अतो

**विज्ञानस्याप्यवभास्यत्वाविशेषात् सत्येवान्यस्मिन्नवगन्तरि प्रथनं प्रदीपवदित्यवगम्यते। साक्षिणोऽवगन्तुः स्वयंसिद्धतामुपक्षिपता स्वयं प्रथते विज्ञानमित्येष एव मम पक्षस्त्वया वाचोयुक्त्यन्तरेणाश्रित इति चेत्? न; विज्ञानस्योत्पत्तिप्रध्वंसानेकत्वादिविशेषवत्त्वाभ्युपगमात्। अतः प्रदीपवद् विज्ञानस्यापि व्यतिरिक्तावगम्यत्वमस्माभिः प्रसाधितम्।।२८।।**

## वैधर्म्याच्च न स्वप्नादिवत्।।२९।।

**यदुक्तं बाह्यार्थापलापिना स्वप्नादिप्रत्ययवज्जागरितगोचरा अपि स्तम्भादिप्रत्यया विनैव बाह्येनार्थेन भवेयुः प्रत्ययत्वाविशेषादिति। तत् प्रतिवक्तव्यम्। अत्रोच्यते–न स्वप्नादिप्रत्ययवज्जाग्रत्प्रत्यया भवितुमर्हन्ति। कस्मात्? वैधर्म्यात्। वैधर्म्यं हि भवति स्वप्नजागरितयोः? किं पुनर्वैधर्म्यम्। बाधाबाधाविति ब्रूमः। बाध्यते**

### *प्रकटार्थविवरणम्*

प्रमातृत्वादित्यर्थः। विज्ञानं स्वातिरिक्तवेद्यम्, वेद्यत्वात्, प्रदीपवत्, अतो न स्वप्रमातृकत्वं युज्यत इत्याह— **नान्यस्येति**। विज्ञानसाधकस्य साक्षिणोऽन्यवेद्यत्वेनावा[त्वे]ऽनव[स्]थापरिहाराय स्ववेद्यत्वं प्रतिजानता बौद्धपक्ष एव नामान्तरेणाङ्गीकृत इत्याह— **साक्षिणोऽवगन्तुरिति**। विज्ञानानि जन्माद्यनेकविशेषवन्ति; साक्षी तु निर्विशेषः स्वपरासंवेद्य इति महद्वैलक्षण्यमस्तीत्याह— **न विज्ञानस्येति**। यतः साक्षिणोऽतिरिक्तानि विशिष्टज्ञानानि, अत एवास्माभिः वेद्यत्वं साधितम्; स्वरूपस्य त्ववेद्यतैवेति भावः। तस्माद्विज्ञेयवद् विज्ञानस्याप्यन्यवेद्यत्वाद् विज्ञानसत्ता चेदस्ति विज्ञेयसत्ताऽपि एष्टव्यैवेति स्थितम्।

**वैधर्म्याच्च न स्वप्नादिवत्**।। इदानीं निरालम्बनानुमानमनूद्य दूषयति— **यदुक्तमित्यादिना**। निरालम्बनत्वं नाम यदि सर्वथैवावलम्बनशून्यत्वम्, तदा साध्यविकलो दृष्टान्तः; परमार्थसदालम्बनविधुरत्वं चेत्, सिद्धसाधनं तदा; अर्थक्रियाक्षमालम्बनविधुरत्वं चेत्, तर्हि तत्र बाध्यत्वमेव प्रयोजकमित्याह— **बाध्यते हीत्यादिना**। पराभिप्रायेण स्वप्नस्य स्मृतित्वमभ्युपगम्य वैलक्षण्यमाह—

### *भाष्यभावप्रकाशिका*

शङ्कते— **साक्षिण इति**। निराकरोति— **न; विज्ञानस्येति**। उत्पत्त्यादिविशेषवत्त्वाद् विज्ञानस्य स्वोत्पत्तिविनाशद्रष्टा केनचिद् भवितव्यम्। यथा च छिदिक्रियायाश्छेत्त्राश्रयता, एवं विज्ञानस्यापि भावार्थत्वाङ्गीकारे च कर्त्राश्रयत्वेन भवितव्यमित्यर्थः।।२८।।

**वैधर्म्याच्च न स्वप्नादिवत्**।।२९।। ''वैधर्म्यादि''त्यनेन सूत्रेण प्रत्ययानां निरालम्बनतानुमानस्याप्रयोजकत्वं विपरीतानुमानं वोच्यते। जाग्रत्प्रत्ययस्यापि बाध्यत्वे बाध्यस्य बाधका[कत्वा]नुपपत्तेः स्वप्नप्रत्ययस्याबाधाद् न स्वप्नप्रत्ययो मिथ्येति साध्यविकलो दृष्टान्तः स्वप्नवदिति भवेदित्याह— **बाध्यते हीति**। **निद्राग्लानमिति** करणदोषाभिधानं मिथ्यात्वाय। बाध्यत्वाभावेऽपि मायादेर्मिथ्यात्व-

### *न्यायनिर्णयः*

विज्ञानस्येत्याद्यनुमानोक्तिरिति भेदः। साक्षिस्थाने मदिष्टं ज्ञानमेवास्तु ततो नास्ति विमतिरिति शङ्कते— **साक्षिण इति**। ज्ञानस्योत्पत्त्यादिमत्त्वात् तत्साधकेन भाव्यम्, क्रियात्वाच्च छिदिवत् कर्त्राश्रयत्वमित्यतिरिक्तज्ञातृत्वसिद्धिरित्याह— **नेति**। साक्षिज्ञानयोर्वैलक्षण्ये फलितमाह— **अत इति**।।२८।।

ज्ञानस्यापि ज्ञेयवदन्यवेद्यत्वाज्ज्ञानसत्ता चेज्ज्ञेयसत्ताऽपि दुर्वारित्युक्तम्। इदानीं निरालम्बनत्वानुमानं प्रत्याह— **वैधर्म्याच्चेति**। तद् व्याख्यातुं व्यावर्त्यमनुवदति— **यदिति**। तस्य निरासयोग्यत्वमाह— **तदिति**। कथं तर्हि तन्निराकरणम्, तत्र सूत्रमादाय व्याकरोति— **अत्रेति**। मिथ्यात्वाविशेषादसिद्धं वैधर्म्यमित्याह— **किमिति**। तत्र साध्यं निरालम्बनत्वं सर्वथैवालम्बनशून्यत्वं वा वास्तवसदालम्बनवैधुर्यं वा व्यावहारिकसदालम्बनहीनत्वं वा। आद्ये दृष्टान्तस्य साध्यविकलता, तत्रापि काल्पनिकालम्बनवत्त्वोपगमात्। द्वितीये सिद्धसाध्यता। तृतीये बाध्यत्वस्य प्रयोजकत्वात् प्रत्ययत्वमप्रयोजकमित्याह— **बाधेति**। स्वप्नादिधियां व्यावहारिकसदालम्बनहीनत्वे बाध्यत्वं प्रयोजकमित्युक्तं प्रकटयति— **बाध्यते हीति**। बाधमेवाभिनयति— **मिथ्येति**। तस्य मिथ्यात्वे कथं प्रथेत्याशङ्क्याह—

**हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य– मिथ्या मयोपलब्धो महाजनसमागम इति, न ह्यस्ति मम महाजनसमागमो निद्राग्लानं तु मे मनो बभूव, तेनैषा भ्रान्तिरुद्बभूवेति। एवं मायादिष्वपि भवति यथायथं बाधः। नैवं जागरितोपलब्धं वस्तु स्तम्भादिकं कस्यांचिदप्यवस्थायां बाध्यते।**

**अपि च स्मृतिरेषा यत् स्वप्नदर्शनम्। उपलब्धिस्तु जागरितदर्शनम्। स्मृत्युपलब्ध्योश्च प्रत्यक्षमन्तरं स्वयमनुभूयतेऽर्थविप्रयोगसंप्रयोगात्मकम्–इष्टं पुत्रं स्मरामि, नोपलभ उपलब्धुमिच्छामीति। तत्रैवं सति न शक्यते वक्तुं– मिथ्या जागरितोपलब्धिरुपलब्धित्वात् स्वप्नोपलब्धिवदित्युभयोरन्तरं स्वयमनुभवता। न च स्वानुभवापलापः प्राज्ञमानिभिर्युक्तः कर्तुम्। अपि चानुभवविरोधप्रसङ्गाज्जागरितप्रत्ययानां स्वतो निरालम्बनतां वक्तुमशक्नुवता स्वप्नप्रत्ययसाधर्म्याद् वक्तुमिष्यते। न च यो यस्य स्वतो धर्मो न संभवति सोऽन्यस्य साधर्म्यात् तस्य संभविष्यति। न ह्यग्निरुष्णोऽनुभूयमान उदकसाधर्म्याच्छीतो भविष्यति। दर्शितं तु वैधर्म्यं स्वप्नजागरितयोः।।२९।।**

### *प्रकटार्थविवरणम्*

**अपि चानुभवविरोधेति** [**अपि च स्मृतिरेषेति**। सूत्रस्थचकारस्यार्थमाह— **अपि चानुभवविरोधेति**]।

### *भाष्यभावप्रकाशिका*

दृष्टेरप्रयोजकत्वं बाध्यत्वस्येत्याशङ्क्याह— **एवं मायादिष्विति**।

सूत्रस्य योजनान्तरमाह— **अपि च स्मृतिरेषेति**। स्मृतेरर्थविप्रयोगमाह— **इष्टमिति**। तदेवं प्रत्ययत्वादिति हेतोः [अ]प्रमाकरणजन्यत्वोपाधिसंभवान्न निरालम्बनत्वसिद्धिरित्याह— **तत्रैवमिति**। ननु उभयोरन्तरमसिद्धम् इति, न; अनुभवविरोधादित्याह— **न चेति**। त्वया जागरितप्रत्ययानां मिथ्यात्व उच्यमानेऽनुभवविरोधः स्यादिति तत्परिहारार्थं हेतुः प्रयुज्यते। तत्र प्रयुक्तेऽपि हेतावनुभवविरोधस्तदवस्थ इति कालात्ययापदिष्टत्वं हेतोरित्याह— **अपि चानुभवेति**। **न च यो यस्येति**। अनुभवविरोधेऽन्यसाधर्म्यादपि धर्मान्तरप्रतीतिरनुपपन्नेत्यर्थः। ननु पूर्वं वैधर्म्यमुक्तम्, इदानीं तु साधर्म्यमुच्यते, तेन पूर्वापरविरोध इति, अत आह— **दर्शितं त्विति**।।२९।।

### *न्यायनिर्णयः*

**न हीति**। निद्राग्लानमिति करणदोषोक्तिः। मायादिषु बाध्यत्वाभावेऽपि व्यावहारिकसदालम्बनशून्यत्वादुपाधेः साध्याव्याप्तिरित्याशङ्क्याह— **एवमिति**। साधनव्याप्तिं निराह— **नैवमिति**।

परमतेन स्वप्नस्य स्मृतित्वमुपेत्य सूत्रं विधान्तरेण योजयति— **अपि चेति**। तथापि कथं वैधर्म्यं, तदाह— **स्मृतीति**। किं तद्वैलक्षण्यं, तदाह— **अर्थेति**। स्मृतेरर्थविप्रयोगमुदाहरति— **इष्टमिति**। स्वप्नजागरयोरेवं वैधर्म्येऽपि किमनुमानस्येत्याशङ्क्याह— **तत्रेति**। उक्तनीत्या तस्मिन् वैधर्म्ये स्थिते सतीति यावत्। [१]अप्रमाकरणजत्वोपाधेर्न निरालम्बनत्वानुमानमित्यर्थः। उभयोरन्तरमसिद्धमित्याशङ्क्यानुभवविरोधान्नैवमित्याह— **न चेति**। इतश्च न निरालम्बनत्वानुमानमित्याह— **अपि चेति**। स्वतो जागरितधियां निरालम्बनत्वोक्तौ दृष्टिविरोधे तन्निरासार्थमनुमानमुच्यते, तस्मिन्नुक्तेऽपि तद्विरोधतादवस्थ्यमिति कालात्ययापदिष्टत्वमाह— **अनुभवेति**। तद्विरोधेन स्वतो निरालम्बनत्वाभावेऽपि स्वप्नसाधर्म्यात् तद् भविष्यतीत्याशङ्क्याह— **न चेति**। स्वतोऽसतो धर्मस्यान्यसाधर्म्यादपि सत्त्वाभावे दृष्टान्तमाह— **न हीति**। वैधर्म्यमुक्त्वा साधर्म्यं वदतो विरोधमाशङ्क्याह— **दर्शितं त्विति**।।२९।।

---

१. प्रमाकरणभिन्नजन्यत्वमुपाधिरित्यर्थः।

## न भावोऽनुपलब्धेः ।।३०।।

**यदप्युक्तं– विनाऽप्यर्थेन ज्ञानवैचित्र्यं वासनावैचित्र्यादेवावकल्पत इति। तत् प्रतिवक्तव्यम्। अत्रोच्यते– न भावो वासनानामुपपद्यते त्वत्पक्षेऽनुपलब्धेर्बाह्यानामर्थानाम्। अर्थोपलब्धिनिमित्ता हि प्रत्यर्थं नानारूपा वासना भवन्ति। अनुपलभ्यमानेषु त्वर्थेषु किंनिमित्ता विचित्रा वासना भवेयुः? अनादित्वेऽप्यन्धपरंपरान्यायेनाप्रतिष्ठैवानवस्था व्यवहारलोपिनी स्यान्नाभिप्रायसिद्धिः। यावप्यन्वयव्यतिरेकावर्थापलापिनोपन्यस्तौ वासनानिमित्तमेवेदं ज्ञानजातं नार्थनिमित्तमिति, तावप्येवं सति प्रत्युक्तौ द्रष्टव्यौ। विनाऽर्थोपलब्ध्या वासनानुपपत्तेः। अपि च विनाऽपि वासनाभिरर्थोपलब्ध्युपगमाद् विना त्वर्थोपलब्ध्या वासनोत्पत्त्यनभ्युपगमादर्थसद्भावमेवान्वयव्यतिरेकावपि प्रतिष्ठापयतः। अपि च वासना नाम संस्कारविशेषाः। संस्काराश्च**

### *प्रकटार्थविवरणम्*

**न भावोऽनुपलब्धेः**।। पुनः परोक्तमनूद्य दूषयति— **यदप्युक्तमित्यादिना**। ननु बाह्यार्थानुपलम्भे [ऽपि] पूर्वपूर्ववासनावशादुत्तरोत्तरप्रत्ययोत्पत्तिरित्यनादित्वाद् व्यवहारोपपत्तिर्बीजाङ्कुरवदित्याशङ्क्याह— **अनादित्वेऽपीति**। बीजादिदानीमुत्पद्यमानोऽङ्कुरो दृष्ट इत्यदृष्टेऽपि तयोरेव कार्यकारणभाव इत्युपपद्यते। प्रकृते पुनरर्थोपलब्धिनिरपेक्षवासनोत्पत्तेः प्रथमत एव कल्प्यमानत्वात् न क्वाप्यवस्थानं लभ्यत इति नाभिप्रेतप्रत्ययवैचित्र्यसिद्धिरित्यर्थः। वासनास्वरूपसिद्ध्यभावेऽन्वयव्यतिरेकावगमकावित्याह— **यावपीति**। इदानीमन्वयव्यतिरेकौ मत्पक्षस्यैव साधकावित्याह— **अपि च विनापीति**। किं च वासना न निराश्रयाः संभवन्ति, संस्कारत्वात्, इष्वादिसंस्कारवदित्याह— **अपि च वासना इति**।

### *भाष्यभावप्रकाशिका*

**न भावोऽनुपलब्धेः**।।३०।। ननु पूर्वपूर्वविज्ञानं तत्सन्तानो वा वासना, अतोऽनादित्वान्न निमित्तापेक्षेति, अत आह— **अनादित्वेऽपीति**। ननु स्वप्नादावर्थोपलब्धिं विनाऽपि वासनानिबन्धनं ज्ञानवैचित्र्यं दृश्यत इत्युक्तमिति; न; तत्रापि बाह्यार्थोपलब्धिनिमित्तत्वमस्तीत्याह— **यावपीति**। अपूर्वार्थोपलब्धावन्तरेणापि वासनां प्रत्ययवैचित्र्यदर्शनात् क्वापि वासनावैचित्र्यनिमित्तं प्रत्ययवैचित्र्यं न संमतमित्याह— **अपि च विनेति**। अपि चाश्रयाभावादपि न वासना स्यादित्याह— **अपि च वासना नामेति**।

### *न्यायनिर्णयः*

चोद्यान्तरं निरसितुं सूत्रम्— **न भाव इति**। तद् व्याकर्तुं चोद्यमनूद्य तस्य निरासयोग्यत्वमाह— **यदपीति**। तन्निरासमेव सूत्रमवतार्य तदक्षरयोजनया दर्शयति— **अत्रेति**। तेषामनुपलब्धावपि वासनानां भावे काऽनुपपत्तिः, तत्राह— **अर्थेति**। निमित्तान्तरादपि तासां योगादलमर्थोपलब्ध्येत्याशङ्क्याह— **अनुपलभ्येति**। पूर्वपूर्वज्ञानं तत्संतानो वा वासना, तेनानादित्वान्न निमित्तापेक्षेत्याशङ्क्याह— **अनादित्वेऽपीति**। पूर्वस्माद् बीजादिदानीमुत्पद्यमानमङ्कुरं दृष्टमित्यदृष्टेऽपि तज्जातीययोरेव कार्यकारणत्वं युक्तम्, प्रकृते त्वर्थोपलब्धिनिरपेक्षवासनोदयादृष्टेरादावेव तस्य कल्प्यत्वादनवस्थानान्नाभीष्टधीवैचित्र्यधीरित्यर्थः। स्वप्नादावर्थधियं विनाऽपि वासनाकृतं धीवैचित्र्यं दृष्टमित्युक्तमाशङ्क्यानुवदति— **याविति**। तत्रापि बाह्यार्थधीनिमित्तत्वमस्ति वासनानामित्युक्तन्यायेन स्थिते नान्वयादिसिद्धिरित्याह— **ताविति**। प्रत्युक्तिप्रकारं सूचयति— **विनेति**। इतश्चान्वयाद्यसिद्धिरित्याह— **अपि चेति**। अपूर्वार्थदृष्टावृतेऽपि वासनां धीवैचित्र्यदृष्टेर्न क्वापि वासनावैचित्र्यकृतं धीवैचित्र्यम्, अतोऽन्वयव्यतिरेकावस्मदनुगुणावित्याह— **विनापीति**। वासनासत्त्वमुपेत्य तद्वैचित्र्यात्र धीवैचित्र्यमित्युक्तम्। इदानीं त्वन्मते न तत्सत्त्वमेवेत्याह— **अपि चेति**। तदेव दर्शयितुं वासनास्वरूपमाह— **वासनेति**। उक्तलक्षणानामपि वासनानामस्मत्पक्षे काऽनुपपत्तिः, तत्राह— **संस्काराश्चेति**। तेषां कश्चिदाश्रयोऽपि स्यादित्याशङ्क्य विधान्तरेण

**नाश्रयमन्तरेणावकल्पन्ते। एवं लोके दृष्टत्वात्। न च तव वासनाश्रयः कश्चिदस्ति प्रमाणतोऽनुपलब्धेः।।३०।।**

**क्षणिकत्वाच्च।।३१।।**

**यदप्यालयविज्ञानं नाम वासनाश्रयत्वेन परिकल्पितं तदपि क्षणिकत्वाभ्युपगमादनवस्थितस्वरूपं सत् प्रवृत्तिविज्ञानवन्न वासनानामधिकरणं भवितुमर्हति। न हि कालत्रयसंबन्धिन्येकस्मिन्नन्वयिन्यसति कूटस्थे वा सर्वार्थदर्शिनि देशकालनिमित्तापेक्षवासनाधानस्मृतिप्रतिसंधानादिव्यवहारः संभवति। स्थिरस्वरूपत्वे त्वालय-विज्ञानस्य सिद्धान्तहानिः। अपि च विज्ञानवादेऽपि क्षणिकत्वाभ्युपगमस्य समानत्वाद् यानि बाह्यार्थवादे क्षणिकत्वनिबन्धनानि दूषणान्युद्भावितानि 'उत्तरोत्पादे च पूर्वनिरोधात्' (ब्र.सू. २।२।२०) इत्येवमादीनि, तानीहाप्यनुसंधातव्यानि। एवमेतौ द्वावपि वैनाशिकपक्षौ निराकृतौ बाह्यार्थवादिपक्षो विज्ञानवादिपक्षश्च।**

*प्रकटार्थविवरणम्*

**क्षणिकत्वाच्च**।। नन्वालयविज्ञानं वासनाधिकरणं भविष्यतीत्याशङ्क्याह— **क्षणिकत्वाच्चेति**। आलयविज्ञानं न वासनाधिकरणम्, क्षणिकत्वात्, घटादिज्ञानवदित्यर्थः। स्वयं क्षणिकत्वेऽपि सन्तत्या वर्तमानालयविज्ञानं सकलव्यवहारास्पदं भविष्यतीत्याशङ्क्याह— **न हि कालत्रयेति**। देशकालनिमित्तापेक्षया वासनाधानं संस्कारनिक्षेपः, स्मृत्यनुसन्धानादिव्यवहारश्च न हि संभवत्येकस्मिन्नसतीत्यर्थः। यदि व्यवहारनिर्वाहाय स्थायित्वमास्थीयते, तत्राह— **स्थित[स्थिर]स्वरूपत्वे त्विति**। बाह्यार्थवाददूषणमतिदिशति— **अपि चेति**। वादद्वयं दूषितमनूद्य सूत्रैरेव माध्यमिकमतानिराकरणे कारणमाह— **एवमेतावित्यादिना**। प्रत्यक्षादिप्रमाणैः सदन्वयस्यैवावगम्यमानत्वात् न शून्यतासंभावना; कल्पनायां च सकलप्रमाणविरोधः। प्रयोगोऽपि— विमता भावाः सति कल्पिताः, प्रत्येकं तदनुविद्धत्वात्, जलतरङ्गचन्द्रभेदवदिति। किं च शून्यं स्वप्रकाशम्, अस्वप्रकाशं वा? आद्ये नाम्नि विवादः; द्वितीये तत्र प्रमाणं वाच्यम्; तदभावे

*भाष्यभावप्रकाशिका*

**क्षणिकत्वाच्च**।।३१।। **प्रवृत्तिविज्ञानवदिति**। रूपादिविज्ञानवदित्यर्थः। यद्यपि क्षणिकत्वात्पूर्वविज्ञानं न वासनाऽऽश्रयः, तथाप्यालयविज्ञानस्य कस्यचित्समकालत्वसंभवादाश्रयत्वं युक्तमिति चेत्, न; सव्येतरगोविषाणयोरेककालोत्पन्नयोराश्रया-श्रयित्वादर्शनादित्याह— **न हि कालत्रयेति**। सूत्रस्य व्याख्यानान्तरमाह— **अपि च विज्ञानवाद इति**।

बाह्यार्थपक्षो विज्ञानपक्षश्चेति द्वयं निराकृतं चेत्, अर्थ-ज्ञानयोः सत्त्वेन तर्ह्यनिरूपणाद् भासमानस्यासत्त्वायोगात् सदसतो-र्विरोधादेकत्वानुपपत्तेः, अनिर्वचनीयत्वस्य चैकनिषेधस्येतरविधिनान्तरीयकतयाऽयोगाद्विचारासहत्वमेव तत्त्वमस्तु वस्तूनामित्याशङ्क्याह—

*न्यायनिर्णयः*

सूत्रं योजयति— **न चेति**।।३०।।

आलयज्ञानं वासनाधारः स्यादित्याशङ्क्याह— **क्षणिकत्वाच्चेति**। सूत्रं व्याचष्टे— **यदपीति**। विमतं न वासनाधारत्वयोग्यं, क्षणिकत्वात्, रूपादिधीवदित्यर्थः। क्षणिकत्वेऽपि संतत्या स्थिरमालयज्ञानं सर्वव्यवहारास्पदं स्यादित्याशङ्क्याह— **न हीति**। यद्येकः स्थायी कूटस्थो वा सर्वार्थदर्शी नेष्यते, तदा देशाद्यपेक्षया वासनाधानं तदधीने स्मृतिप्रत्यभिज्ञे प्रत्यक्षादिव्यवहारश्च न संभवति, संतानस्यावस्तुनो वासनाद्याश्रयत्वायोगादित्यर्थः। व्यवहारनिर्वाहार्थमालयज्ञानस्य स्थायित्वं चेत्, तत्राह— **स्थिरेति**। क्षणिकत्वसूत्रस्य व्याख्यानान्तरमाह— **अपि चेति**। मतद्वयनिरासमुपसंहरति— **एवमिति**।

ज्ञानज्ञेययोः सत्त्वेनानिरूपणात् प्रतीतस्यासत्त्वायोगाद् विरोधादेव सदसत्त्वयोरेकत्रासिद्धेरनिर्वाच्यत्वस्य चैकनिषेधेऽन्यतर-विधिध्रौव्यादसंभवाद् विचारासहत्वमेवास्तु वस्तूनां तत्त्वमित्याशङ्क्याह— **शून्येति**। **नादरः क्रियते** सूत्रान्तराणि न रच्यन्ते।

**शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते। न ह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारोऽन्यत् तत्त्वमनधिगम्य शक्यतेऽपह्नोतुमपवादाभाव उत्सर्गप्रसिद्धेः।।३१।।**

## सर्वथाऽनुपपत्तेश्च।।३२।।

**किं बहुना? सर्वप्रकारेण यथा यथाऽयं वैनाशिकसमय उपपत्तिमत्त्वाय परीक्ष्यते तथा तथा सिकताकूपवद् विदीर्यत एव। न कांचिदप्यत्रोपपत्तिं पश्यामः। अतश्चानुपपन्नो वैनाशिकतन्त्रव्यवहारः। अपि च बाह्यार्थ-विज्ञानशून्यवादत्रयमितरेतरविरुद्धमुपदिशता सुगतेन स्पष्टीकृतमात्मनोऽसंबद्धप्रलापित्वम्, प्रद्वेषो वा प्रजासु विरुद्धार्थप्रतिपत्त्या विमुह्येयुरिमाः प्रजा इति। सर्वथाऽप्यनादरणीयोऽयं सुगतसमयः श्रेयस्कामै-रित्यभिप्रायः।।३२।।**

।।इति पञ्चमं नाभावाधिकरणम्।।

### *प्रकटार्थविवरणम्*

किमालम्ब्य सर्वापह्नवः क्रियत इत्याह— **न ह्ययमिति**।

**सर्वथाऽनुपपत्तेश्च**। वैनाशिकमतदूषणमुपसंहरति— **किं बहुनेति**। इति पञ्चमं नाभावाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**शून्यवादिपक्ष इति**। ननु यथा त्वन्मते सर्वप्रमाणविरोधेऽपि प्रपञ्चस्य मिथ्यात्वं, वस्तुनि परिकल्पिततया सद्व्यवहारे हेतुत्वं च, एवमस्मत्पक्षेऽपि सर्वमुपपन्नमित्याशङ्क्याह— **न ह्ययमिति**। वस्तुविषयप्रमाणविरोधात् प्रत्यक्षादीनां व्यावहारिकत्वमस्मन्मते, भवतस्तु शून्यस्य प्रमाणगोचरत्वे निरुपाख्यत्वानुपपत्तेः प्रत्यक्षादेर्न तत्त्वावेदकप्रमाणविरोधो युक्त इत्यर्थः।।३१।।

**सर्वथाऽनुपपत्तेश्च**।।३२।। **यथा यथेति**। ग्रन्थतोऽर्थतश्चेत्यर्थः। ग्रन्थतस्तावत्— पश्यना तिष्ठनेत्याद्यसाधुपदप्रयोगात्, अर्थतश्च नैरात्म्यमभ्युपेत्यालयविज्ञानं समस्तवासनाधार इत्यभ्युपगमात्, एवं क्षणिकत्वमभ्युपेत्योत्पादात् तथागतानामनुत्पादाद्वा स्थितैवेयं धर्माणां धर्मता धमस्थितितेति धर्माणामुत्पत्तिमत्त्वे धर्माधर्मा एवेति नित्यताभ्युपगमादित्याह— **न काञ्चिदप्यत्रेति**। **बाह्यार्थविज्ञानशून्यवादत्रयमिति**। वस्तुनि विकल्पानुपपत्तेर्न समुच्चय इत्यर्थः। ननु सर्वज्ञस्य वासुदेवस्य बुद्धत्वादसम्बन्धप्रलापित्वम-युक्तमित्याशङ्क्य तर्ह्यसुरविमोहनायोक्तमित्याह— **प्रद्वेषो वेति**।।३२।। इति पञ्चममभावाधिकरणम्।

### *न्यायनिर्णयः*

एतान्येवावृत्त्या योज्यन्ते तन्निरासायेति यावत्। तत्र ज्ञानार्थयोरभावः शून्यत्वं न युक्तं, प्रमाणैस्तयोरुपलब्धेरित्याद्यसूत्रार्थ उक्तः। इदानीमतात्त्विकत्वं द्वैतस्य स्थापयितुमधिष्ठाने वस्तुनि वाच्ये तस्य त्वन्मते न भावो मानतोऽनुपलब्धेः, तत्र शून्यतेति च वदन् 'न भावोऽनुपलब्धेः' इति सूत्रं योजयति— **न हीति**। न च स्वप्नादाविव जागरेऽपि ज्ञानार्थयोरसत्त्वम्, वस्तुतस्तदसत्त्वेऽपि व्यवहारतस्तदयोगाद् बाधाबाधाभ्यां वैधर्म्यात् प्रतीतितस्तदसत्त्वस्य दृष्टान्तेऽप्यसंमतेरिति वैधर्म्यसूत्रं नेयम्। 'क्षणिकत्वाच्च' इति सूत्रम् 'उपदेशाच्च' इत्युपस्कृत्य क्षणिकत्वशून्यत्वोपदेशाद् व्याहतव्यवहारता सुगतस्येति योज्यम्।।३१।।

वर्णकद्वयार्थमुपसंहरति— **सर्वथेति**। उपसंहारसूत्रं विभजते— **किमिति**। **यथायथेति**। ग्रन्थतोऽर्थतश्चेत्यर्थः। दर्शनमिति वा स्थानमिति वा वाच्ये पश्यनातिष्ठनेत्यलक्षणपदप्रयोगाद् ग्रन्थतस्तावन्नोपपत्तिः। अर्थतश्च नैरात्म्यमुपेत्यालयज्ञानं सर्वव्यवहारास्पदमित्युपगमात् प्रसिद्धैवानुपपत्तिरित्युपेत्य फलितमाह— **अतश्चेति**। सौगतमतस्यानुपपन्नत्वे हेत्वन्तरं चकारसूचितमाह— **अपि चेति**। वस्तुनि विकल्पानुपपत्तेर्विरोधाच्च समुच्चयासिद्धिरिति वक्तुमितरेतरविरुद्धमित्युक्तम्। सर्वज्ञस्य भगवतो वासुदेवस्येतिहासपुराणयोर्बुद्धत्वप्रसिद्धेस्तस्यासंबद्धप्रलापित्वमयुक्तमित्याशङ्क्याह— **प्रद्वेषो वेति**। वैदिकपथविरुद्धजन्तूपलक्षणार्थं प्रजाग्रहणम्। चतुर्धाऽपि सुगतमतस्य वैदिकैरनादरणीयत्वान्न तद्विरोधो नित्यसच्चिदात्मनो ब्रह्मणो जगत्सर्गवादिनः समन्वयस्येति निगमयति— **सर्वथाऽपीति**।।३२।।इति पञ्चमं नाभावाधिकरणम्।।

## ६।।एकस्मिन्नसंभवाधिकरणम्।।सू.३३-३६।।

# नैकस्मिन्नसंभवात्।।३३।।

**निरस्तः सुगतसमयः। विवसनसमय इदानीं निरस्यते। सप्त चैषां पदार्थाः संमता जीवाजीवास्त्रव-**

### *शारीरकन्यायसंग्रहः*

**नैकस्मिन्नसंभवात् ।।३३।। एवं चात्माकार्त्स्न्यम् ।।३४।। न च पर्यायादप्यविरोधो विकारादिभ्यः ।।३५।। अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ।।३६।।** अत्रापि परमाणव एव अवयव्यारम्भक्रमेण वैशेषिकादिवज्जगदारभन्ते। तत्र जीवो नाम देहमात्रपरिमाणः चैतन्यमात्रस्वरूपः ऊर्ध्वगमनस्वभावः ज्ञानेन्द्रियकर्मेन्द्रियप्राणमहाभूतान्तःकरणाविद्याकामकर्मलक्षणेन पुर्यष्टकेन कर्मप्रधानतया च कर्माष्टकशब्दितेन बन्धाद्(?) बद्धः वशीकृतकार्यकारणसंघातः सिद्धः, तस्माच्च मुक्तोऽमुक्त इति त्रिविधः। अजीव इत्यचेतनमात्रं सामान्येनोच्यते। आस्त्रवत्येभिः द्वारैः जीवस्य प्रज्ञा इत्यास्त्रवाणीन्द्रियाणि। संवृणोत्यात्मनि ज्ञानेन्द्रियार्थानिति समाधिः संवरः। उपात्तं कर्म निर्जरयतीति निर्जरं तप्तशिलाद्यारोहणम्। दर्शनावरणीयमार्हतमोक्षशास्त्रापरिज्ञानम्, ज्ञानावरणीयमतिरिक्तशास्त्रप्रामाण्यज्ञानम्, मोहनीयमार्हतशास्त्रप्रामाण्यानिश्चयः, आन्तरायिकमुभयप्रामाण्यनिश्चयः, ममावगन्तव्यमस्तीत्यभिमानो वेदनीयम्, एतन्नामास्मीत्यभिमानो नामिकम्, अस्य शिष्यवंशपतितोऽस्मीत्यभिमानो गोत्रिकम्, शरीरयात्रानिमित्तं कर्मायुष्कम्, इत्यष्टविधो बन्धः। आर्हतमुनिप्राप्तिः सततोर्ध्वगमनं वा मोक्षः। पुद्गलाः परमाणवः। सप्तभङ्गीनयेनानैकान्तिकत्वप्रदर्शनं सर्वस्य। कथमनैकान्तिकत्वमिति; उच्यते— घटोऽस्ति, घटो नास्ति, सन् घटः, असन् घटः, इत्येकस्यैव सदसत्त्वभेदाभेदयोः प्रत्यक्षसिद्धत्वात्, कालभेदोपाधिकल्पनायां कालस्याप्यस्तिनास्तिप्रत्ययात्, तत्राप्युपाधिकल्पनायामनवस्थानात् प्रत्यक्षमेवानैकान्तिकत्वम् इति।।

तत्र परमाण्वारम्भस्य निरस्तत्वाज्जीवादीनां प्रसिद्धत्वाच्चानैकान्तिकत्वमात्मपरिमाणं चोभयं निरस्यते। तत्र यद्यपि कालोपाधिसत्त्वासत्त्वप्रतीतावपि उपाध्यन्तरकल्पनेऽनवस्थानात् नोपाधितो व्यवस्थापयितुं शक्यते, तथापि सत्त्वासत्त्वभेदाभेदादीनां घटकपालादिषु सामान्यविशेषादिषु च व्यवस्थयैवान्योन्यासांकर्येणैव प्रत्ययव्यवहारयोः प्रत्यक्षसिद्धत्वात्र व्यावहारिकमेकान्तत्वमपह्नोतुं शक्यते। निरूपणायां तात्त्विकत्वानुपपत्तिः अस्माभिरप्युक्तेति दर्शितम्।।

### *प्रकटार्थविवरणम्*

**नैकस्मिन्नसंभवात्।।** अधिकरणसङ्गतिमाह— **निरस्त इति**। विज्ञानाद् विज्ञेयभेदस्य प्रत्यक्षत्वात् सुगतसिद्धान्तो निरस्तः। तर्हि घटोऽस्ति, घटो नास्तीति प्रत्ययबलादेव सत्त्वाद्यनैकान्तमिति दिगम्बरसिद्धान्तः; तेनार्थादेकरूपाद् ब्रह्मणो जगत्सर्गं वदतः समन्वयस्य विरोधशङ्कायां तन्निरासाय प्रयत्यत इत्यर्थः। संक्षेपविस्तराभ्यां निरस्यस्वरूपमाह— **सप्त चैषामिति**। जीवाजीवौ

### *भाष्यभावप्रकाशिका*

**नैकस्मिन्नसंभवात्।।३३।।** विमुक्तकच्छमतनिराकरणानन्तरं दिगम्बरस्य बुद्धिस्थत्वात् तदनन्तरं तन्मतनिराकरणमित्याह— **विवसनेति**। निरस्यपक्षं दर्शयति— **सप्त चेति**। ननु पदार्थपञ्चकं जीवाजीवपदार्थान्तर्भूतम्, अतः सप्तेति कथम्? अथ

### *न्यायनिर्णयः*

एवं मुक्तकच्छमते निरस्ते मुक्ताम्बराणां बुद्धिस्थत्वात् तन्मतं निरस्यति— **नैकस्मिन्निति**। एकरूपाद् ब्रह्मणो जगत्सर्गं वदन् समन्वयो विषयः। स किं सर्वमनैकान्तिकमिति मतेन विरुध्यते न वेति तत्प्रामाणिकत्वभ्रान्तत्वाभ्यां संदेहे संगतिमाह— **निरस्त इति**। समयमात्रसिद्धपञ्चस्कन्धादिपदार्थाश्रितन्यायाभासे निरस्ते पञ्चास्तिकायादिसामयिकपदार्थाश्रितन्यायाभाससंदृब्धे मते बुद्धिस्थे तन्निरसनं युक्तमित्यर्थः। एकरूपब्रह्मसमन्वयविरोध्यनैकान्तवादभङ्गेन समन्वयदृढीकरणात् पादादिसंगतिः। पूर्वपक्षे तन्मतप्रामाण्यात् तद्विरोधे समन्वयासिद्धिः, सिद्धान्ते तदप्रामाण्याद् भ्रान्तेन तेन विरोधस्याभासतया तत्सिद्धिरित्यभिसंधाय पूर्वपक्षयति— **सप्त चेति**। जीवाजीवौ भोक्तृभोग्यौ, मिथ्याप्रवृत्तिरास्त्रवः, संवरनिर्जरौ सम्यक्प्रवृत्ती, बन्धस्तद्धेतुत्वात् कर्म, मोक्षस्तदुच्छित्तिरिति पदार्थाः

**संवरनिर्जरबन्धमोक्षा नाम। संक्षेपतस्तु द्वावेव पदार्थौ जीवाजीवाख्यौ; यथायोगं तयोरेवेतरान्तर्भावादिति मन्यन्ते। तयोरिममपरं प्रपञ्चमाचक्षते पञ्चास्तिकाया नाम– जीवास्तिकायः पुद्गलास्तिकायो धर्मास्तिकायोऽधर्मास्तिकाय आकाशास्तिकायश्चेति। सर्वेषामप्येषामवान्तरप्रभेदान् बहुविधान् स्वसमयपरिकल्पितान्**

### *प्रकटार्थविवरणम्*

भोक्तृभोग्यौ; (स) आस्रवति ज्ञानं येभ्यस्ता:[स्तानि] मनःषष्ठेन्द्रियाणि केषांचिदार्हतानामास्रवशब्दवाच्यानि; केषांचित् कर्म आस्रवशब्दाभिधेयं पुरुषान् स्रवत्यनुगच्छतीति; संवरः समाधिः संव्रियन्तेऽत्रेन्द्रियाणीति, निर्जरः तपः स्नानवीरासनतप्तशिलारोहणादिः, तेन हि कल्मषं निर्जरयन्ति, बन्धोऽष्टविधः—चत्वारि घातिकर्माणि, ज्ञानावरणीयमोहनियमान्तरायमिति[1], श्रेयोहन्तृत्वात्; चत्वार्यघातिकर्माणि वेदनीयं नामिकं गोत्रिकमायुष्कं चेति, शुक्लपुद्गलाश्रयत्वेन श्रेयोहन्तृत्वाभावात्। सन्ततमूर्ध्वगमनादिलक्षणो मोक्ष इत्यर्थः। अस्तिकायशब्दः पारिभाषिकः पदार्थवाची। **अवान्तरभेदानिति**। अयमर्थः—जीवास्तिकायस्त्रिविधः—नित्यसिद्धः, बद्धः, मुक्तश्चेति; पुद्गलास्तिकायः षोढा—चत्वारि भूतानि स्थावरं जङ्गमं चेति; धर्मास्तिकायः प्रवृत्त्यनुमेयः; स्थितानामपि [स्थित्यनुमेयः] अधर्मास्तिकायः;

### *भाष्यभावप्रकाशिका*

लक्षणभेदेन भेदः, तर्हि तत्रापि लक्षणभेदादवान्तरभेदः संपादयितुं शक्यः, अतः सप्तेत्यनुपपन्नमित्याशङ्क्याह— **संक्षेपत इति**। **सर्वेषामप्येषामिति**। जीवास्तिकायस्त्रेधा— बद्धो मुक्तो नित्यसिद्धश्चेति। पुद्गलास्तिकायः षोढा— पृथिव्यादीनि चत्वारि भूतानि, स्थावरं जङ्गमं चेति। धर्मास्तिकायः प्रवृत्त्यनुमेयः। अधर्मास्तिकायः स्थित्यनुमेयः। आकाशास्तिकायो द्वेधा— लोकाकाशः, अलोकाकाशश्च। लोकानामन्तर्वर्ती लोकाकाशः, तदुपरि मोक्षस्थानमलोकाकाशः। तदेवं जीवाजीवौ पञ्चधा प्रपञ्चितौ। आस्रव-संवर-निर्जरास्त्रयः प्रवृत्तिलक्षणाः प्रपञ्च्यन्ते। द्वेधा प्रवृत्तिः सम्यक्, मिथ्या च। मिथ्याप्रवृत्तिरास्रवः, आस्रावयति पुरुषं ज्ञानजननेन विषयेष्विवतीन्द्रियप्रवृत्तिरास्रवः। केचित्तु कर्माण्यास्रवमाहुः— कर्तारमभिव्याप्नुवन्ति अनुगच्छन्तीति। संवर-निर्जरौ सम्यक्प्रवृत्ती। तत्र शम-दमादिरूपा प्रवृत्तिः संवरः आस्रवस्रोतसो द्वारं संवृणोतीति। निर्जरस्तु तप्तशिलारोहणादिः— निःशेषं पुण्यापुण्यं सुखदुःखोपभोगेन जरयतीति। बन्धोऽष्टविधं कर्म। तत्र घातिकर्म चतुर्विधम्— ज्ञानावरणीयम्, दर्शनावरणीयम्, मोहनीयम्, आन्तरायमिति। चत्वार्यघातिकर्माणि—वेदनीयम्, नामिकम्, गोत्रिकम्, आयुष्कं चेति। तत्र सम्यग्ज्ञानं न मोक्षसाधनमिति विपर्ययो ज्ञानावरणीयम्। आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानं दर्शनावरणीयम्। बहुषु तीर्थकरैः प्रदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयम्।

### *न्यायनिर्णयः*

सप्तेत्यर्थः। ननु भोक्तृभोग्ययोरितरेषामन्तर्भावात् कथं सप्तेत्युक्तम्; लक्षणभेदादवान्तरलक्ष्यभेदे सप्तेति न व्यवस्था, तत्राह— **संक्षेपतस्त्विति**। नियमहेतुमाह— **यथेति**। आस्रवादीनामजीवे, मोक्षस्य पक्षभेदादुभयत्रान्तर्भाव इति विभागः। संक्षेपविस्ताराभ्यामुक्तपदार्थेषु विस्तरान्तरमाह— **तयोरिति**। अस्तीति कायते शब्द्यत इत्यस्तिकायशब्दः पारिभाषिकः पदार्थवाची। जीवश्चासावस्तिकायश्चेति कर्मधारयः। पूर्यन्ते गलन्तीति पुद्गलाः परमाणवस्तत्समूहोऽत्र पृथिव्यादिरुक्तः। कर्मधारयः सर्वत्र। धर्मास्तिकायः सम्यक्प्रवृत्त्यनुमेयः। शास्त्रीयबाह्यप्रवृत्त्याऽऽन्तरोऽपूर्वाख्यो धर्मोऽनुमीयते। अधर्मास्तिकायः स्थित्यनुमेयः। ऊर्ध्वगमनशीलो जीवस्तस्य देहेऽवस्थानेनाधर्मोऽनुमीयते। आकाशास्तिकायस्त्वावरणाभावः। उक्तपदार्थानामवान्तरभेदमाह— **सर्वेषामिति**। तेषां मानयुक्तिहीनत्वं सूचयति— **स्वसमयेति**। जीवास्तिकायस्त्रेधा— बद्धो मुक्तो नित्यसिद्धश्च। तत्रार्हन् मुनिर्नित्यसिद्धः। इतरे केचित् साधनैर्मुक्ताः। अन्ये बद्धा इति भेदः। पुद्गलास्तिकायः षोढा— पृथिव्यादिचत्वारि भूतानि स्थावरं जङ्गमं चेति। प्रवृत्तिस्थितिभ्यामनुमेयौ धर्माधर्मास्तिकायावुक्तौ। आकाशास्तिकायो द्वेधा— लौकिकाकाशोऽलौकिकाकाशश्च। लोकानामन्तर्वर्ती लोकाकाशः। तदुपरि मोक्षस्थानमलोकाकाशः। आस्रवो मिथ्याप्रवृत्तिरुक्ता। आस्रावयति पुरुषं ज्ञानजननेन विषयेष्विति नानाविधेन्द्रियप्रवृत्तिरास्रव इत्येके। अपरे तु कर्तारमभिव्याप्य स्रवन्त्यागच्छन्तीति कर्माण्यास्रवमाचक्षते। सम्यक्प्रवृत्ती संवरनिर्जरौ। तत्रास्रवस्रोतोद्वारं संवृणोतीति संवरः शमादिप्रवृत्तिः। निःशेषं पुण्यापुण्यं सुखदुःखोपभोगेन जरयतीति निर्जरस्तप्तशिलारोहणावरोहणादिः। बन्धो बध्नातीति कर्म। तच्चाष्टविधम्। तत्र घातिकर्म चतुर्विधम्— ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमन्तरायमिति। सम्यग्ज्ञानं न मोक्षहेतुरिति ज्ञानं विज्ञानावरणीयम्। आर्हतमताभ्यासान्न

---

१. न्यायनिर्णयानुसारेणात्र पाठशुद्धिर्ज्ञेया।

**वर्णयन्ति। सर्वत्र चेमं सप्तभङ्गीनयं नाम न्यायमवतारयन्ति– स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेति। एवमेवैकत्वनित्यत्वादिष्वपीमं सप्तभङ्गीनयं योजयन्ति।**

### *प्रकटार्थविवरणम्*

आकाशश्च द्विविधः— लोकान्तर्वर्ती लोकाकाशः; यत्र तु लोकव्यवहारो नास्ति सोऽलोकाकाश इति। अन्यदपि समयान्तरमाह— **सर्वत्र चेममिति**। सप्तानामेकान्तभङ्गानां समाहारः सप्तभङ्गी, तस्या नयः, तम्। स्याच्छब्दो निपातोऽनेकत्व[कान्तत्व]द्योतकः। स्यादस्तीत्येकान्ततः सत्त्वमेवेति न, सत्त्वं घटादेरनैकान्तिकमित्यर्थः। स्यान्नास्तीति नास्तित्वमपि अनेकान्तमित्यर्थः। सर्वत्र समाना योजना।

### *भाष्यभावप्रकाशिका*

सन्मोक्षमार्गप्रवृत्तानां विघ्नकरं विज्ञानमान्तरायम्। एतानि श्रेयोहन्तृत्वाद् घातिकर्माणि। वेदनीयं ममावगन्तव्यमस्तीत्यभिमानः। एतन्नामास्मीत्यभिमानो नामिकम्। अस्य शिष्यवंशपतितोऽस्मीत्यभिमानो गोत्रिकम्। शरीरयात्रानिमित्तं कर्मायुष्कम्। अथवा वेदनीयं कर्म शुक्लपुद्गलविपाकहेतुः। तद्धि बन्धोऽपि न निःश्रेयसपरिपन्थि, तत्त्वज्ञानाविघातकत्वात्। शुक्लपुद्गलारम्भकवेदनीयकर्मानुगुणं नामिकम्। तद्धि शुक्लपुद्गलाद्यवस्थां कलल-बुद्बुदादिमारभते। गोत्रिकं चाव्याकृतं ततोऽप्याद्यं शक्तिरूपेणावस्थितम्। आयुष्कमायुः कायति कथयति उत्पादनद्वारेणेत्यायुष्कम्। तान्येतानि शुक्लपुद्गलाश्रयत्वादघातीनि कर्माणि। तदेतत् कर्माष्टकं बध्नातीति बन्धः। आर्हतमुनिप्राप्तिः सततोर्ध्वगमनं वा मोक्षः। पूर्यन्ते गलन्तीति पुद्गलाः परमाणवः। अस्तिकायशब्दः पारिभाषिकः। अस्तीति कायते शब्द्यत इति वा। **सप्तभङ्गीनयं नामेति**। सन् घटोऽसन् घट इत्येकस्यैव सदसत्त्वभेदाभेदयोः प्रत्यक्षत्वात्, कालभेदोपाधिकल्पनायां कालस्याप्यस्ति नास्तीति प्रत्ययात्, तत्राप्युपाधिकल्पनायामनवस्थानात्प्रत्यक्षमेवानैकान्तिकत्वं वस्तूनामिति मन्यन्त इत्यर्थः। स्याच्छब्दो

### *न्यायनिर्णयः*

मुक्तिरिति ज्ञानं दर्शनावरणीयम्। बहुषु तीर्थकरदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयम्। सन्मोक्षमार्गप्रवृत्तानां तत्प्रत्यूहकरं ज्ञानमन्तरायम्। तान्येतानि श्रेयोहन्तृत्वाद् घातिकर्माणि। वेदनीयं नामिकं गोत्रिकमायुष्कमित्यघातिकर्मापि चतुर्विधम्। ममेदं ज्ञातव्यमस्तीत्यभिमानो वेदनीयम्। एतन्नामास्मीत्यभिमानो नामिकम्। अस्य शिष्यवंशे पतितोऽस्मीत्यभिमानो गोत्रिकम्। शरीरयात्रानिमित्तं कर्मायुष्कम्। अथवा सक्रियस्य बीजस्य पावकपवनवशादीषद्घनीभावः शरीराकारपरिणाहेतुर्वेदनीयम्। तच्छक्तिमति तस्मिन् बीजे कललाख्यद्रवावस्थायां बुद्बुदावस्थायां चारम्भकक्रियाविशेषो नामिकम्। बीजस्य शरीराकारपरिणामशक्तिर्गोत्रिकम्। शुक्रशोणितव्यतिकरे जाते मिलितं तदुभयरूपमायुष्कम्। तान्येतानि शुक्लपुद्गलाश्रयत्वादघातीनि कर्माणि। तदेतत् कर्माष्टकं बध्नातीति बन्धः। यद्यपि पूर्वोक्तास्रवोऽपि बन्धस्तथापि बन्धहेतुत्वादयमपि बन्ध इति द्रष्टव्यम्। आर्हतमुनिप्राप्तिः संततोर्ध्वगतिर्वा मुक्तिरित्यर्थः। तथापि कथं वस्तु समस्तमनेकान्तमित्याशङ्क्याह— **सर्वत्रेति**। अस्तित्वनास्तित्वादाविति यावत्। सप्तानामेकान्तभङ्गानां समाहारः सप्तभङ्गी, तस्या नयः। घटः सन् घटोऽसन्नित्येकस्यैव सदसत्त्वयोरध्यक्षत्वात् कालभेदोपाधिकल्पनायां कालस्यापि सन्नसन्निति प्रत्ययात् तत्रापि तत्कल्पनायामनवस्थानात् प्रत्यक्षमेव वस्तूनामनैकान्त्यमिति भावः। वस्तूनामेकान्तत्वभङ्गाः सप्त कथं कदा च प्रसरन्तीत्यपेक्षायामाह— **स्यादिति**। स्याच्छब्दस्तिङन्तप्रतिरूपको निपातोऽनेकान्तद्योती। तेन स्यादस्ति कथंचिदस्तीत्यर्थः। तथोत्तरत्रापि योजना। उक्तं हि— 'तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत्। स्यान्नास्तीति प्रयोगः स्यात् तन्निषेधे विवक्षिते। क्रमेणोभयवीक्षायां प्रयोगः समुदायवान्। युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः। आद्याऽवाच्यविवक्षायां पञ्चमो भङ्ग इष्यते। अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः। समुच्चयेन युक्तस्य सप्तमो भङ्ग इष्यते।' इति। सत्त्वादावुक्तमनैकान्तिकमेकत्वादावतिदिशति— **एवमेवेति**। यदि वस्तु सत्त्वादीनामेकतमेन व्यवस्थितं तदा तस्य सर्वथा सर्वदा सर्वत्र सर्वात्मना नियमे तदीप्साजिहासाभ्यां प्रवृत्तिनिवृत्त्ययोगादप्रवृत्तिनिवृत्ति विश्वं स्यात्। अनैकान्तिकत्वे तु कस्यचित्कथंचित्केनचिदवस्थाने हानोपादाने प्रेक्षावतां प्रकल्प्येते, तस्मादनैकान्तिकं सर्वमिति मतविरोधिसमन्वयो नेति भावः।

**अत्राचक्ष्महे– नायमभ्युपगमो युक्त इति। कुतः? एकस्मिन्नसंभवात्। न ह्येकस्मिन् धर्मिणि युगपत् सदसत्त्वादिविरुद्धधर्मसमावेशः संभवति, शीतोष्णवत्। य एते सप्त पदार्था निर्धारिता एतावन्त एवंरूपाश्चेति, ते तथैव वा स्युर्नैव वा तथा स्युः। इतरथा हि तथा वा स्युरतथा वेत्यनिर्धारितरूपं ज्ञानं संशयज्ञानवदप्रमाणमेव स्यात्।**

**नन्वनेकात्मकं वस्त्विति निर्धारितरूपमेव ज्ञानमुत्पद्यमानं संशयज्ञानवन्नाप्रमाणं भवितुमर्हति। नेति ब्रूमः। निरङ्कुशं ह्यनेकान्तत्वं सर्ववस्तुषु प्रतिजानानस्य निर्धारणस्यापि वस्तुत्वाविशेषात् स्यादस्ति**

***प्रकटार्थविवरणम्***

सिद्धान्तसूत्रं योजयति— **नायमभ्युपगम इति**। अयमाशयः— स्याद्वादी प्रष्टव्यः— किं निरूप्यमाणे घटादीनां सदसत्त्वाद्येकान्ततो निरूपयितुं न शक्यत इत्यनेकान्तवादः, किं वा व्यवहारत एवानैकान्तं वस्तु? इति। यद्याद्यः, तदा न विवादः; द्वितीये तु प्रमाणं ब्रूहि। न तावत् प्रत्यक्षं युगपदेकोपाधावेव घटोऽस्ति घटो नास्तीति सत्त्वासत्त्वे परिच्छिनत्ति। नाप्यनुमानम्— विमतमनेकान्तम्, वस्तुत्वात्, नरसिंहवदिति; प्रत्यक्षविरोधादेव, दृष्टान्तासिद्धेश्च। न तावद् ये नरावयवास्त एव सिंहावयवाः; नाप्यवयवी तेऽस्ति यो नानारूपः स्यात्। येषामप्यस्ति तेषामप्येकरूपस्यैव नरावयवैः सिंहावयवैश्चारब्धत्वात् नरसिंहादिशब्दाभिधेयत्वम्, न तु नरत्वसिंहत्वधर्मवत्तया, विरुद्धधर्मसमावेशस्यैकोपाधावसंभवात्। अनैकान्तिकश्च हेतुरित्याह— **य एते सप्त पदार्था इति**। अप्रामाण्यप्रसङ्गं परिहरति— **नन्वनेकात्मकमिति**। न त्वया निर्धारितरूपं किंचित् ज्ञानमभ्युपगन्तुं शक्यम्, तत्रैवानैकान्ति-

***भाष्यभावप्रकाशिका***

निपातस्तिङन्तप्रतिरूपकोऽनैकान्तिकत्वद्योती, तेन स्यादस्ति कथञ्चिदस्तीत्यर्थः। तथाहि— यदि वस्तु अस्त्येव एकान्ततः— सर्वथा सर्वदा सर्वत्र सर्वात्मना अस्त्येवेति, तदेप्साजिहासाभ्यां न क्वचित् कदाचित् कुतश्चित् प्रवर्तेत, निवर्तेत वा। अनेकान्तपक्षे कथञ्चित् कस्यचित् केनचित् सत्त्वे हानोपादाने प्रेक्षावतां कल्पेते इत्यभिप्रायः।

पदार्थानां सत्त्वादिव्यवस्था पारमार्थिकी न संभवतीति ब्रूषे, किं[वा] व्यावहारिकीति। आद्यपक्षोऽङ्गीक्रियते, उत्तरपक्षे तु व्यवहारविरोधान्निराकरणमयुक्तम्। अनैकान्तिकत्वं च न व्यावहारिकम्, नापि पारमार्थिकमित्यभिप्रेत्याह— **अत्राचक्ष्मह इति**। सूत्रं व्याचष्टे— **न ह्येकस्मिन्निति**। तदेव प्रपञ्चयति— **य एत इति**। अयमर्थः— यद्यपि कालोपाधौ सत्त्वासत्त्वप्रतीतावप्युपाध्यन्तरकल्पनेऽनवस्थानादुपाधितो न व्यवस्था; तथापि सत्त्वासत्त्व-भेदाभेदादीनां घट-कालादिषु सामान्य-विशेषादिषु व्यवस्थैव; अन्योन्यासाङ्कर्येणैव प्रत्ययव्यवहारयोः प्रत्यक्षसिद्धत्वान्न व्यावहारिकमैकान्तिकत्व[1]मशक्यम पह्नोतुम्; तात्त्विकता तु नास्माभिरप्युपेयते।

***न्यायनिर्णयः***

पदार्थानां सत्त्वादिव्यवस्था वास्तवी व्यावहारिकी वा न संभवतीति विकल्प्याद्यमङ्गीकृत्य द्वितीये व्यवहारविरोधमभिप्रेत्य सिद्धान्तयति— **अत्रेति**। व्यवहारतो वस्तुतो वा नानैकान्तिकत्वमुपगन्तुं शक्यमिति प्रतिज्ञापरत्वेन नञ्पदं व्याचष्टे— **नायमिति**। तत्र प्रश्नपूर्वकं हेतुमाह— **कुत इति**। हेतुं विभजते— **न हीति**। एकत्र विरुद्धधर्मसमावेशासंभवादनैकान्तिकत्वस्य द्विधाऽप्ययोगादैकान्तिकत्वस्य च घटादिषु तत्त्वतोऽयोगेऽपि व्यवस्थयैव दृष्टव्यवहारदृष्टेर्व्यावहारिकत्वसिद्धेरयुक्तत्वाद् दिगम्बरराद्धान्तस्य[2] न तेन विरोधः समन्वयस्येत्यर्थः। विमतमनैकान्तिकं, वस्तुत्वात्, नरसिंहादिवदित्याशङ्क्य हेतोरनैकान्तिकत्वमाह— **य इति**। संक्षेपविस्तराभ्यामुक्तसंख्यावत्त्वमेतावत्त्वम्। एवंरूपत्वमुक्तावान्तरभेदभाक्त्वम्। ननूक्तं पदार्थेषु वस्तुत्वे सत्यपि तथैवान्यथैव वेति नियमाभावात् तेष्वपि तथैवान्यथा वेत्यनिर्धारितज्ञानोपगमेनानैकान्तिकत्वाविशेषात् कुतो वस्तुत्वमनैकान्तिकं, तत्राह— **इतरथेति**।

स्थाणुर्वा पुरुषो वेति ज्ञानवत् पदार्थेषु सप्तत्वादिज्ञानस्याप्रामाण्यप्रसङ्गादसाधकत्वमुक्तं परिहरन्नाशङ्कते— **नन्विति**। अनेकात्मकं वस्त्विति ज्ञानस्य निर्धारितत्वे तत्रैव वस्तुत्वस्यानैकान्त्यान्नैवमिति दूषयति— **नेतीति**। निर्धारणे दर्शितन्यायं निर्धारयि-

१. 'नञ्' अधिकः। द्र. शारीरकन्यायसंग्रहः। २. दिगम्बरराद्धान्तस्यायुक्तत्वादित्यन्वयः।

**स्यान्नास्तीत्यादिविकल्पोपनिपातादनिर्धारणात्मकतैव स्यात्। एवं निर्धारयितुर्निर्धारणफलस्य च स्यात् पक्षेऽस्तिता, स्याच्च पक्षे नास्तितेति। एवं सति कथं प्रमाणभूतः संस्तीर्थकरः प्रमाणप्रमेयप्रमातृप्रमितिष्वनिर्धारितासूपदेष्टुं शक्नुयात्? कथं वा तदभिप्रायानुसारिणस्तदुपदिष्टेऽर्थेऽनिर्धारितरूपे प्रवर्तेरन्? ऐकान्तिकफलत्वनिर्धारणे हि सति तत्साधनानुष्ठानाय सर्वो लोकोऽनाकुलः प्रवर्तते, नान्यथा। अतश्चानिर्धारितार्थं शास्त्रं प्रणयन् मत्तोन्मत्तवदनुपादेयवचनः स्यात्। तथा पञ्चानामस्तिकायानां पञ्चत्वसंख्याऽस्ति वा नास्ति वेति विकल्प्यमाना, स्यात् तावदेकस्मिन् पक्षे, पक्षान्तरे तु न स्यादित्यतो न्यूनसंख्यात्वमधिकसंख्यात्वं वा प्राप्नुयात्। न चैषां पदार्थानामवक्तव्यत्वं संभवति। अवक्तव्याश्चेन्नोच्येरन्। उच्यन्ते चावक्तव्याश्चेति विप्रतिषिद्धम्। उच्यमानाश्च तथैवावधार्यन्ते नावधार्यन्त इति च। तथा तदवधारणफलं सम्यग्दर्शनमस्ति वा नास्ति वा, एवं तद्विपरीतमसम्यग्दर्शनमप्यस्ति वा नास्ति वेति प्रलपन् मत्तोन्मत्तपक्षस्यैव स्यान्न प्रत्ययितव्यपक्षस्य। स्वर्गापवर्गयोश्च**

### *प्रकटार्थविवरणम्*

कत्वप्रसङ्गादित्याह— **नेति ब्रूम इति**। इतश्चासङ्गतमिदं मतमित्याह— **एवं निर्धारयितुमि[तुरि]त्यादिना**। इदानीं पञ्चास्तिकायनियमोऽपि न सिध्यतीत्याह— **तथा पञ्चानामिति**। एकान्तत एव वक्तव्यत्वनियमाभावात् पक्षे प्राप्तमवक्तव्यत्वं पराकरोति— **न चैषां पदार्थानामिति**। विप्रतिषेधान्तराण्याह— **उच्यमानाश्चेत्यादिना**। **प्रत्ययितव्यपक्षस्येति**। नाप्तकोटिनिविष्टः स्यादित्यर्थः। इतश्चासङ्गतमिदं

### *भाष्यभावप्रकाशिका*

अपि च सदसत्त्वयोः परस्परविरुद्धत्वात्समुच्चयायोगाद् वस्तुनि विकल्पानुपपत्तौ स्थाणुर्वा पुरुषो वेति ज्ञानवत् सप्तत्व-पञ्चत्वनिर्धारणस्य तन्निर्धारयितुस्तत्कारणस्य तत्प्रमेयस्य च सप्तत्वस्य पञ्चत्वस्य वा सदसत्त्वसंशयः स्यात्। एकान्तत्वनिर्धारणे तु सर्वत्र नानैकान्तिकवाद इति। ननु एवं सति को दोष इति? अत आह— **एवं सति कथमिति**। तथा मुमुक्षूणां प्रवृत्तिरपि न स्यादित्याह— **कथं वेति**।

ननु अनिश्चयेऽपि कृष्यादाविव प्रवृत्तिः स्यादिति, सत्यम्; आमुष्मिके तथा न संभवतीत्याह— **ऐकान्तिकफलत्व इति**। ननु सर्वज्ञवचनसामर्थ्यात् प्रवर्तन्ते इति, तन्न; एवम्भूतस्य सर्वज्ञत्वानुपपत्तेरित्याह— **अतश्चानिर्धारितार्थमिति**। सर्वशब्दैः किमवक्तव्यम्, किं वा केनचिदिति। आद्यः पक्षः स्वीक्रियते; घटादेस्तत्तच्छब्दवाच्यत्वेऽपि स्तम्भादिशब्दावाच्यत्वात्। अथोत्तरः पक्षः; तत्राह— **न चैषामिति**। अथ सत्त्वादिरूपेण निर्धारणाभावादवक्तव्यत्वम् इति, न; उक्तेर्निर्धारणपूर्वकत्वात्। तथापि

### *न्यायनिर्णयः*

तृतत्करणतत्प्रमेयेष्वतिदिशति— **एवमिति**। निर्धारणं फलं यस्य मानादेस्तत् तथा, तस्येति यावत्। चकारेण तन्मेयं सप्तत्वादि गृहीतम्। इतिशब्दोऽनिर्धारणात्मकतैव स्यादित्यनेन संबध्यते। अस्मदीये सिद्धान्ते परैरप्यापाद्यमाने का तस्य हानिरित्याशङ्क्याह— **एवमिति**। उपदेशानुपपत्तिमुक्त्वा प्रवृत्तिरिपि मुमुक्षूणामयुक्तेत्याह— **कथं वेति**। अनिश्चयेऽपि कृष्यादाविव प्रवृत्तिमाशङ्क्यामुष्मिकहेतौ निश्चयादृते न प्रवृत्तिरित्याह— **ऐकान्तिकेति**। निश्चयं विनाऽपि सर्वज्ञोक्त्या प्रवृत्तिः स्यादित्याशङ्क्यानिर्धारितार्थशास्त्रकर्तुः सर्वज्ञत्वासंमतेर्मैवमित्याह— **अतश्चेति**। सप्तपदार्थनियमवत् पञ्चास्तिकायनियमोऽपि नास्तीत्याह— **तथेति**। पञ्चत्वसंख्यानियमाभावे फलितमाह— **इत्यत इति**। किंच संक्षिप्तानां प्रपञ्चितानां च पदार्थानां सर्वैर्वा शब्दैरवाच्यत्वं केनचिद्वेति विकल्प्य घटादेस्तच्छब्दवाच्यत्वेऽपि स्तम्भादिशब्दावाच्यत्वादाद्यमुपेत्य द्वितीयं प्रत्याह— **न चेति**। काऽत्रानुपपत्तिः, तत्राह— **उच्यन्ते चेति**। ननु सत्त्वादिरूपेण निर्धारणाभावादुच्यमानानामपि स्यादवक्तव्यतेति न व्याहतिः, उक्तेर्निर्धारणपूर्वकत्वेऽपि तथैवेत्यनिर्धारणादवक्तव्यत्वसिद्धिः, तत्राह— **उच्यमानाश्चेति**। चकारो विप्रतिषिद्धमित्येतदनुकर्षणार्थः। सत्त्वाद्यनैकान्तिकत्वावधारणं निराकृत्य तत्फलं सम्यग्दर्शनं तद्विपरीतमसम्यग्दर्शनं चास्ति नास्ति वेति विकल्प्यमाने स्यादस्ति स्यान्नास्तीति प्रलपन्नाप्तो न स्यादित्याह— **तथेति**। इतश्चासंगतमार्हतं मतमित्याह—

**पक्षे भावः पक्षे चाभावस्तथा पक्षे नित्यता पक्षे चानित्यतेत्यनवधारणायां प्रवृत्त्यनुपपत्तिः। अनादिसिद्धजीवप्रभृतीनां च स्वशास्त्रावधृतस्वभावानामयथावधृतस्वभावत्वप्रसङ्गः। एवं जीवादिषु पदार्थेष्वेकस्मिन् धर्मिणि सत्त्वासत्त्वयोर्विरुद्धयोर्धर्मयोरसंभवात् सत्त्वे चैकस्मिन् धर्मेऽसत्त्वस्य धर्मान्तरस्यासंभवादसत्त्वे चैवं सत्त्वस्यासंभवादसंगतमिदमार्हतं मतम्। एतेनैकानेकनित्यानित्यव्यतिरिक्ताव्यतिरिक्ताद्यनेकान्ताभ्युपगमा निराकृता मन्तव्याः। यत्तु पुद्गलसंज्ञकेभ्योऽणुभ्यः संघाताः संभवन्तीति कल्पयन्ति, तत् पूर्वेणैवाणुवादनिराकरणेन निराकृतं भवतीत्यतो न पृथक् तन्निराकरणाय प्रयत्यते।।३३।।**

## एवं चात्माकार्त्स्न्यम्।।३४।।

**यथैकस्मिन् धर्मिणि विरुद्धधर्मासंभवो दोषः स्याद्वादे प्रसक्तः एवमात्मनोऽपि जीवस्याकार्त्स्न्यमपरो दोषः प्रसज्येत। कथम्? शरीरपरिमाणो हि जीव इत्यार्हता मन्यन्ते। शरीरपरिमाणतायां च सत्यामकृत्स्नोऽसर्वगतः परिच्छिन्न आत्मेत्यतो घटादिवदनित्यत्वमात्मनः प्रसज्येत। शरीराणां चानवस्थितपरिमाणत्वान्मनुष्यजीवो मनुष्यशरीरपरिमाणो भूत्वा पुनः केनचित् कर्मविपाकेन हस्तिजन्म प्राप्नुवन्न कृत्स्नं हस्तिशरीरं व्याप्नुयात्।**

### *प्रकटार्थविवरणम्*

मतमित्याह— **स्वर्गापवर्गयोश्चेति**। उक्तं निगमयति— **एवं जीवादिष्विति**। दिगम्बरस्यापि सङ्घातवादित्वात् पूर्वोक्तं सङ्घातदूषणमतिदिशति— **यत्तु पुद्गलसंज्ञकेभ्य इति**।

**एवं चात्माकार्त्स्न्यम्**।। देहपरिमाणतां चात्मनो निराकरोति— **यथैकस्मिन्निति**। विमता जीवा अनित्याः, मध्यमपरिमाणत्वात्, घटादिवदित्यर्थः। दूषणान्तरमाह— **शरीराणां चेति**। हस्तिशरीरैकदेशो जीवशून्यः स्यादित्यर्थः। पुत्तिकाशरीरो [रीरे] न संमितोऽनुभूतो भवेदिति शरीराद् बहिरपि जीवाभ्युपगमः प्रसज्येतेत्यर्थः। किं च कौमारे अल्पपरिमाणो जीवः तारुण्ये स्थाविरे

### *भाष्यभावप्रकाशिका*

तथैवेत्यनिर्धारणादवक्तव्यत्वमित्याशङ्क्याह— **उच्यमानाश्चेति**। **अनादिसिद्धप्रभृतीनामिति**। ऋषभमुनिप्रमुखानामित्यर्थः। ननु परमाणुभ्यः स्थावर-जङ्गमाद्युत्पत्तिं वर्णयन्ति, तत् कुतो न निराक्रियत इति? तत्राह— **यत्तु पुद्गलेति**।।३३।।

**एवं चाऽऽत्माकार्त्स्न्यम्**।।३.४।। दोषप्रसङ्गं दर्शयितुं तत्पक्षं दर्शयति— **शरीरपरिमाणो हीति**। **घटादिवदनित्यत्वमिति**। मध्यमपरिमाणत्वादित्यर्थः। इदं चापरमकृत्स्नत्वेन सूचितमित्याह— **शरीराणां चेति**। यथा प्रदीपो घट-मठोदरवर्ती सङ्कोचविकासवान्,

### *न्यायनिर्णयः*

**स्वर्गेति**। किंचार्हन्नित्युक्तो नित्यमुक्तोऽनादिसिद्धो जीवः कश्चिद्वेत्वनुष्ठानान्मुच्यतेऽन्यस्तदभावाद् बध्यते; एवमार्हते मते निश्चितस्वभावानामेषां तथात्वमस्ति न वेति विकल्प्यमाने स्यादस्ति स्यान्नास्तीत्यव्यवस्थायां शास्त्रावधृतस्वभावत्वासंभवात् तदप्रामाण्यप्रसिक्तिरित्याह— **अनादीति**। सत्त्वासत्त्वयोरनैकान्तिकत्वायोगं सोपस्करमुपसंहरति— **एवमिति**। एवमेवैकत्वनित्यत्वादिष्वप्युक्तं प्रत्याह— **एतेनेति**। सत्त्वासत्त्वयोरनैकान्तोपगतिनिरासेनेति यावत्। परमाणुभ्यः स्थावरजङ्गमात्मानः संघाता भवन्तीति दिगम्बरास्तत्किमिति न निरस्यते, तत्राह— **यत्त्विति**।।३३।।

पूर्वोक्तदृष्टान्तेन स्याद्वादे दोषान्तरं समुच्चिनोति— **एवं चेति**। सूत्राक्षराणि व्याचष्टे— **यथेति**। परमतवदस्मन्मतेऽपि न दोषप्रसक्तिरित्याह— **कथमिति**। तत्प्रसङ्गार्थं परपक्षमाह— **शरीरेति**। तत्र दोषं प्रसञ्जयति— **शरीरेति**। आत्मत्वमनित्यवृत्ति, परिच्छिन्नवृत्तित्वात्, घटवदिति प्रसङ्गार्थः। अकृत्स्नत्वेन सूचितं दोषान्तरमाह— **शरीराणां चेति**। कर्मणो विपाकः स्वफलं जनयितुमङ्कुरीभावः। **कृत्स्नं हस्तिशरीरं न व्याप्नुयात्**। तदेकदेशो जीवशून्यः स्यादित्यर्थः। **पुत्तिकाशरीरे कृत्स्नो न संमीयेत**।

**पुत्तिकाजन्म च प्राप्नुवन्न कृत्स्नः पुत्तिकाशरीरे संमीयेत। समान एष एकस्मिन्नपि जन्मनि कौमारयौवनस्थाविरेषु दोषः।**

**स्यादेतत्– अनन्तावयवो जीवः, तस्य त एवावयवा अल्पे शरीरे संकुचेयुर्महति च विकसेयुरिति। तेषां पुनरनन्तानां जीवावयवानां समानदेशत्वं प्रतिहन्यते वा न वेति वक्तव्यम्। प्रतिघाते तावन्नानन्तावयवाः परिच्छिन्ने देशे संमीयेरन्। अप्रतिघातेऽप्येकावयवदेशत्वोपपत्तेः सर्वेषामवयवानां प्रथिमानुपपत्तेर्जीवस्याणुमात्रत्वप्रसङ्गः स्यात्। अपि च शरीरमात्रपरिच्छिन्नानां जीवावयवानामानन्त्यं नोत्प्रेक्षितुमपि शक्यम्।।३४।।**

**अथ पर्यायेण बृहच्छरीरप्रतिपत्तौ केचिज्जीवावयवा उपगच्छन्ति, तनुशरीरप्रतिपत्तौ च केचिदपगच्छन्तीत्युच्येत; तत्राप्युच्यते–**

**न च पर्यायादप्यविरोधो विकारादिभ्यः।।३५।।**

*प्रकटार्थविवरणम्*

च न कृत्स्नशरीरं व्याप्नुयादित्याह— **समान एष इति**। अवयवोपचयापचयकृतमल्पत्वं बहुत्वं चेत्यविरोधं शङ्कते— **स्यादेतदिति**। विकल्प्य दूषणमाह— **तेषां पुनरिति**। यथा प्रदीपावयवानां तमोवयवानां च प्रतिघातधर्माणां नैकस्मिन्नपवरकदेशे अवस्थानं तथा नैकस्मिन् देहे जीवावयवानामवस्थानं स्यात्; अवयव्यभावेन च विभिन्नानामवयवानां चेतनत्वे विरुद्धदिक्क्रियं शरीरमुन्मथ्येतेत्यर्थः। द्वितीयं दूषयति— **अप्रतिघातेऽपीति**। एकावयवस्य यावद्देशः, तावन्मात्रे सर्वेषां संभवादुपचयो न स्यादित्यर्थः। आनन्त्यमङ्गीकृत्य पूर्वमुक्तम्; इदानीं तदपि नास्तीत्याह— **अपि चेति**।

शङ्कापूर्वमुत्तरसूत्रमवतारयति— **अथ पर्यायेणेत्यादिना। न च पर्यायादप्यविरोधो विकारादिभ्यः**। विकारादिभ्य इत्यादिशब्दाद्

*भाष्यभावप्रकाशिका*

एवं जीवोऽपि पुत्तिकाहस्तिदेहयोरिति चोदयति— **स्यादेतदिति**। तदेतद्विकल्प्य दूषयति— **तेषां पुनरिति**। अयमर्थः— विशरारवो हि प्रदीपावयवाः। प्रदीपश्च प्रतिक्षणमुत्पत्तिनिरोधवान्। तस्मादनित्यत्वात् तस्य न नित्यात्मनिदर्शनता। तथा च (ननु) विकल्पद्वयदूषणं स्यादिति। ननु कथमणुमात्रत्वप्रसङ्गः? एकावयवदेशत्वोपपत्तावपि तथैषामनवस्थानादिति, सत्यम्, तथाप्यनियमः स्यादिति भावः। यच्च जीवावयवानामानन्त्यमुक्तम्, तदप्ययुक्ततरमित्याह— **अपि चेति। नोत्प्रेक्षितुमपीति**। परिमितत्वादित्यर्थः।।३४।।

शङ्कापूर्वकं सूत्रान्तरमवतारयति— **अथेति। न च पर्यायादप्यविरोधो विकारादिभ्यः**।।३५।। बन्धमोक्षाभ्युपगमं

*न्यायनिर्णयः*

तस्मिन्ननन्तर्भूतस्ततो बहिरपि जीवः स्यादित्यर्थः। किंच कौमारे स्वल्पपरिमाणो जीवस्तारुण्ये स्थाविरे च न कृत्स्नं शरीरं व्याप्नुयादित्याह— **समान इति**।

यथा प्रदीपो घटप्रासादोदरे वर्तमानः संकोचविकासवानेवं जीवोऽपि पुत्तिकाहस्तिदेहयोरित्याह— **स्यादिति**। दीपावयवानां विशरणशीलत्वात्, अवयविनश्च दीपस्य प्रतिक्षणमुत्पत्तिनिरोधवतोऽनित्यत्वात्, नित्यात्मदृष्टान्तत्वासिद्धिरिति मत्वा विकल्पयति— **तेषामिति**। आद्ये देहाद् बहिरपि जीवोपगतिरित्याह— **प्रतिघात इति**। एकावयवदेशत्वेऽपि तथैवावयवानामवस्थाननियमाभावे परिमाणनियमो नात्मनि स्यादिति द्वितीयं प्रत्याह— **अप्रतिघातेऽपीति**। जीवावयवानामानन्त्यमङ्गीकृत्योक्त्वा तदपि नास्तीत्याह— **अपि चेति**। परिमितत्वादित्यर्थः।।३४।।

बृहत्तनुदेहाप्तावयवोपगमापगमाभ्यां जीवस्य देहपरिमाणताऽविरुद्धेत्याह— **अथेति**। चोद्योत्तरत्वेन सूत्रमादत्ते— **तत्रापीति**।

**न च पर्यायेणाप्यवयवोपगमापगमाभ्यामेतद् देहपरिमाणत्वं जीवस्याविरोधेनोपपादयितुं शक्यते। कुतः? विकारादिदोषप्रसङ्गात्। अवयवोपगमापगमाभ्यां ह्यनिशमापूर्यमाणस्यापक्षीयमाणस्य च जीवस्य विक्रियावत्त्वं तावदपरिहार्यम्। विक्रियावत्त्वे च चर्मादिवदनित्यत्वं प्रसज्येत। ततश्च बन्धमोक्षाभ्युपगमो बाध्येत- कर्माष्टकपरिवेष्टितस्य जीवस्यालाबुवत् संसारसागरे निमग्नस्य बन्धनोच्छेदादूर्ध्वगामित्वं भवतीति।**

**किंचान्यत्। आगच्छतामपगच्छतां चावयवानामागमापायधर्मवत्त्वादेवानात्मत्वं शरीरादिवत्। ततश्चावस्थितः कश्चिदवयव आत्मेति स्यात्। न च स निरूपयितुं शक्यतेऽयमसाविति। किंचान्यत्। आगच्छन्तश्चैते जीवावयवाः कुतः प्रादुर्भवन्ति, अपगच्छन्तश्च क्व वा लीयन्त इति वक्तव्यम्। न हि भूतेभ्यः प्रादुर्भवेयुर्भूतेषु च निलीयेरन्, अभौतिकत्वाज्जीवस्य। नापि कश्चिदन्यः साधारणोऽसाधारणो वा जीवानामवयवाधारो निरूप्यते, प्रमाणाभावात्। किंचान्यत्। अनवधृतस्वरूपश्चैवं सत्यात्मा स्यात्। आगच्छतामपगच्छतां चावयवानामनियतपरिमाणत्वात्। अत एवमादिदोषप्रसङ्गान्न पर्यायेणाप्यवयवोपगमापगमावात्मन आश्रयितुं शक्येते।**

### *प्रकटार्थविवरणम्*

दूषणान्तरमाह— **किंचान्यदित्यादिना**। लवणाकरवत् कश्चिज्जीवाकरोऽस्तीत्यपि न वाच्यमित्याह— **नापि कश्चिदन्य इति**।

### *भाष्यभावप्रकाशिका*

दर्शयति— **कर्माष्टकेति**। **न चेति**। अनिरूपणे चात्मज्ञानाभावान्नापवर्ग इत्यर्थः। **एवमादिदोषप्रसङ्गादिति**। किञ्च ते जीवावयवाः प्रत्येकं चेतयितारः, किं वा समुच्चित्य? प्रत्येकपक्ष एकाभिप्रायत्वनियमाभावाद् विरुद्धाभिप्रायतया विरुद्धदिक्क्रियत्वेन शरीरमुन्मथ्येत। समूहचैतन्ये तु हस्तिशरीरस्थस्य पुनः पुत्तिकादेहवत्त्वे द्वित्र्यवयवशेषो जीवो न चेतयेत्; विगलितबहुसमूहितया पुत्तिकाशरीरे समूहस्याभावादित्यर्थः।

### *न्यायनिर्णयः*

प्रतिज्ञां विभजते— **न चेति**। प्रश्नपूर्वकं हेतुमाह— **कुत इति**। विकारप्रसङ्गं प्रकटयति— **अवयवेति**। आत्मनः समुद्रादिवद् विक्रियावत्त्वमिष्टमित्याशङ्क्याह— **विक्रियेति**। अनित्यत्वप्रसङ्गस्येष्टत्वं निराह— **ततश्चेति**। तदर्थं तदभ्युपगमं दर्शयति— **कर्मेति**। न चात्मनोऽनित्यत्वे युक्तोऽयमुपगमो बन्धमोक्षान्वयिनोऽभावात्। न हि तौ स्वतन्त्रौ तद्भावे बन्धस्यानादित्वान्मुक्तस्य चानाशित्वान्नानित्यतेत्यर्थः।

आदिशब्दसूचितमर्थमाह— **किंचेति**। यस्यात्मा सावयवस्तस्यावयवानामात्मत्वम् अवयविनो वा? आद्येऽपि किमागमापायिनां तेषामात्मत्वं तद्धीनस्य वा कस्यचिदवयवस्येति विकल्प्याद्यं प्रत्याह— **आगच्छतामिति**। कल्पान्तरं परिशिष्टमादत्ते— **ततश्चेति**। तस्य विशेषतोऽपरिज्ञानादात्मज्ञानाभावादपवर्गासिद्धिरित्याह— **न चेति**। आद्ये कल्पे दोषान्तरमाह— **किंचेति**। अवयवप्रादुर्भावापादानत्वं तद्विलयाधारत्वं च महाभूतानां वा व्यतिरिक्तस्य वा कस्यचिदिति विमृश्याद्यं प्रत्याह— **न हीति**। द्वितीयेऽपि प्रतिजीवमसाधारणः सर्वसाधारणो वेति विकल्प्य दूषयति— **नापीति**। तथा चात्मज्ञानाभावादमुक्तिरेवेत्यर्थः। अवयवानां नात्मत्वमवयविनस्तु तथात्वमिति मतं प्रत्याह— **किंचेति**। **एवं सति** आत्मनोऽवयवित्वे सतीति यावत्। तत्र हेतुमाह— **आगच्छतामिति**। किंच प्रत्येकमवयवा न चेतयेरन्नेकाभिप्रायत्वानियमात्। विरुद्धाभिप्रायतया विरुद्धक्रियत्वेन शरीरोन्मथनप्रसङ्गः। न चावयवसमूहस्य चैतन्यं, तस्य भेदाभेदाभ्यां दुर्भणत्वादिति मत्वाऽऽह— **अत इति**। प्रकारप्रकारिणौ पञ्चमीभ्यामुक्तौ।

**अथवा पूर्वेण सूत्रेण शरीरपरिमाणस्यात्मन उपचितापचितशरीरान्तरप्रतिपत्तावकात्स्न्र्यप्रसञ्जनद्वारेणानित्यतायां चोदितायां पुनः पर्यायेण परिमाणानवस्थानेऽपि स्रोतःसंताननित्यतान्यायेनात्मनो नित्यता स्यात्; यथा रक्तपटानां विज्ञानानवस्थाने तत्संताननित्यता, तद्वद् विसिचामपीत्याशङ्क्यानेन सूत्रेणोत्तरमुच्यते– संतानस्य तावदवस्तुत्वे नैरात्म्यवादप्रसङ्गः। वस्तुत्वेऽप्यात्मनो विकारादिदोषप्रसङ्गादस्य पक्षस्यानुपपत्तिरिति।।३५।।**

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः।।३६।।**

**अपि चान्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैः। तद्वत् पूर्वयोरप्याद्यमध्यमयोर्जीव-परिमाणयोर्नित्यत्वप्रसङ्गादविशेषप्रसङ्गः स्यात्, एकशरीरपरिमाणतैव स्यान्नोपचितापचितशरीरान्तरप्राप्तिः। अथवाऽन्त्यस्य जीवपरिमाणस्यावस्थितत्वात् पूर्वयोरप्यवस्थयोरवस्थितपरिमाण एव जीवः स्यात्, ततश्चाविशेषेण**

***प्रकटार्थविवरणम्***

प्रकारान्तरेण सूत्रमवतारयति— **अथ वेति**। "एवञ्चात्माकात्स्न्र्यम्' इत्यत्रैवानित्यत्वमुक्तम्, प्रवाहरूपेण पुनर्नित्यत्वमाशङ्क्य परिह्रियत इत्यर्थः। विसिचां विवसनानाम्।

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः**।। इतोऽपि न जीवस्य क्रमेणोपचितपरिमाणत्वमित्याह— **अन्त्यावस्थितेश्चेति**।

***भाष्यभावप्रकाशिका***

**अथवेति**। पूर्वसूत्रप्रसञ्जितां जीवानित्यतां सन्ताननित्यतया बौद्धवत् परिहर्तव्यामाशङ्क्येदं सूत्रमित्यर्थः। विसिचः विवसनाः।।३५।।

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः**।।३६।। **एकपरिमाणशरीरतेति**[1]। अयमर्थः— अभूत्वा भावित्वे घटादि-वदनित्यत्वप्रसङ्गाद् मोक्षपरिमाणस्य प्रागपि सत्त्वम्। ततः परिमाणान्तराविरोधेन परिमाणान्तरं भवितुमर्हति। तस्मादन्त्यमेव परिमाणं पूर्वमप्यासीदिति एकपरिमाणशरीरतैव, नोपचितापचितशरीरप्राप्तिः, शरीरपरिमाणत्वाभ्युपगमव्याघातादिति। प्रकारान्तरेण

***न्यायनिर्णयः***

प्रकारान्तरेण सूत्रमवतारयति— **अथवेति**। तदेव दर्शयति— **पूर्वेणेति**। आत्माकात्स्न्र्यसूत्रेण प्रसञ्जितां तदनित्यतां संताननित्यतया सुगतवत्परिहर्तव्यामाशङ्क्येदं सूत्रमित्यर्थः। पर्यायेण शरीरव्यक्तिभेदेन परिमाणस्यात्मनिष्ठस्यैकरूपस्यानवस्थानादनव-स्थितपरिमाणस्यात्मनोऽनित्यत्वे शङ्कितेऽपि स्रोतोरूपेण तत्परिमाणस्य च यः संतानस्तस्य नित्यतैव न्यायस्तेनेति यावत्। व्यक्तीनामनित्यत्वेऽपि संताननित्यत्वे दृष्टान्तः— **यथेति**। सिग् वस्त्रं विगतं येभ्यस्ते विसिचो विवसनास्तेषामपि पुत्तिकादेहहस्तिदेहादावात्म-परिमाणस्यानवस्थितत्वेऽपि तत्संताननित्यत्वेनात्मनित्यत्वमाशङ्क्य सूत्रमित्याह— **तद्वदिति**। तदेव विवृणोति— **संतानस्येति**। पर्यायशब्देन क्रमभाविपरिमाणगतः संतानो गृह्यते, तन्नित्यत्वादपि नात्मनित्यत्वम्। तस्य हि वस्तुत्वमवस्तुत्वं वा? द्वितीये राद्धान्तविरोधमुक्त्वा प्रथमं प्रत्याह— **वस्तुत्वेऽपीति**। स हि संतानिभ्योऽभिन्नो भिन्नो वा? अभेदे प्रतिदेहं परिमाणभेदानां संतानिनामन्यथात्वात् कार्यत्वेनानित्यत्वात् तदभिन्नसंतानस्यापि तथात्वम्। भेदे तत्संतानत्वायोगाद्भिन्नत्वेन घटादिवद् विकारादिप्रसङ्गादात्मनित्यत्वं संताननित्यतया यदुच्यते तस्यानुपपत्तिरित्यर्थः। इतिशब्दः सूत्रव्याख्यासमाप्त्यर्थः।।३५।।

इतोऽपि न जीवस्य क्रमेणोपचितापचितपरिमाणत्वमित्याह— **अन्त्येति**। सूत्रं व्याकरोति— **अपि चेति**। यज्जीवपरिमाणं तन्नित्यमिति व्याप्तिभूमिमाह— **अन्त्यस्येति**। सफलमनुमानमाह— **तद्वदिति**। विमतं नित्यं, जीवपरिमाणत्वात्, संमतवदित्यनु-मानादविशेषप्रसङ्गः सदा जीवस्येत्युक्तं प्रकटयति— **एकेति**। उपचयापचययोरनेकरूपताव्याप्तेरुक्तानुमानविरोधादित्यर्थः। पूर्वमवस्थितशब्दो नित्यपरत्वेनोक्तः, अविशेषश्चैकशरीरपरिमाणता, उभयोः परिमाणयोर्नित्यत्वप्रसङ्गादिति च हेतुः। इदानीं शरीरमन्तरेणैव मोक्षकालीनस्य परिमाणस्यावस्थितत्वादुभयोरपि पूर्वयोरवस्थयोर्देहापेक्षां विना जीवस्यावस्थितपरिमाणत्वसंभवान्न शरीरपरिमाणत्वम्, किं त्वविशेषेण

---

१. एतच्च भाष्ये पाठान्तरमिति भाति।

**सर्वदैवाणुर्महान् वा जीवोऽभ्युपगन्तव्यो न शरीरपरिमाणः। अतश्च सौगतवदार्हतमपि मतमसंगतमित्युपेक्षितव्यम्।।३६।।**

।।इति षष्ठमेकस्मिन्नसंभवाधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

**पत्युरसामञ्जस्यात् ।।३७।। संबन्धानुपपत्तेश्च ।।३८।। अधिष्ठानानुपपत्तेश्च ।।३९।। करणवच्चेन्न भोगादिभ्यः ।।४०।। अन्तवत्त्वमसर्वज्ञता वा ।।४१।।** विवादगोचरापन्नं जगत् स्वरूपप्रयोजनसंप्रदानोपादानादिविषयविज्ञानवत्कर्तृकं भवितुमर्हति, विविधावयवविन्यासात्मकवि-चित्रकार्यत्वात्, यदेवंभूतं कार्यं तत्तथाविधकर्तृकं दृष्टं यथा घटादि इति वैशेषिकानुमानम्। नैयायिकाः क्षपणकाश्च अनुमिमते— कृत्स्नं शुभाशुभलक्षणं कर्म तत्फलसंप्रदानादिविषयविज्ञानवत्प्रदातृकं भवितुमर्हति, कर्मफलत्वात् सेवादिकर्मफलवदिति। सांख्ययोगास्तु— विज्ञानशक्त्यैश्वर्याणि तरतमभावेनोत्कृष्यमाणानि क्वचित् सर्ववस्तुकार्येशितव्यव्यापि-विज्ञानशक्त्यैश्वर्यवत्पदार्थाविनाभूतानि तरतमभावेनोत्कृष्यमाणविषयव्यापिधर्मित्वात्, तरतमभावेनोत्कृष्यमाणविषयव्यापिपरिमाण-धर्मवदित्यनुमिमते। एतेनैवानुमानेन सर्वज्ञमात्रमनुमिमते सुगताः। माहेश्वरादयस्तु आप्तागमप्रामाण्येन केवलं निमित्तकारणमीश्वरं कल्पयन्ति। कार्यकारणे प्रसिद्धे। योगः समाधिः। विधिर्धर्मानुष्ठानम्। दुःखान्तो मोक्ष इति। अयं चेश्वरः पूर्वपूर्वकल्पानुष्ठित-धर्माधर्माद्यपेक्ष्योत्तरोत्तरकल्पादौ प्रधानपरमाणुपुरुषानधिष्ठाय प्रवर्तयतीति।।

तत्र वैशेषिकनैयायिकानुमाने दृष्टान्तगतकर्तृत्वप्रदातृत्वपुरुषबहुत्वशरीरेन्द्रियादिमत्त्वाद्यभिप्रेत(धर्मा)धर्मविपरीतं धर्मजातं दार्ष्टान्तिकेऽपि साधयत इति धर्मविशेषविपरीतसाधने। सांख्यानुमानेऽपि यदि ज्ञानादीनां निरतिशयत्वमात्रं साध्यते, तर्हि लक्षणपदार्थव्यापित्वेन निरतिशयत्वं भविष्यति, कुतः सर्वज्ञत्वादिसिद्धिः ? अथ सर्वव्यापित्वं ज्ञानादीनां साध्यते, तर्हि अज्ञानमिथ्याज्ञानरागद्वेषादिदुःख-गुरुत्वादिषु तरतमभूतेष्वनैकान्तिकत्वम् इति। आप्तागमस्यापि मूलप्रमाणाभावात् वेदविरोधाच्चाप्रामाण्यं धर्माधर्मसद्भावे कल्पान्तरसद्भावे ईश्वरस्य कर्मसापेक्षत्वे च प्रत्यक्षानुमानाभावात्, अत एवाप्तागमप्रामाण्याभावात्, वेदप्रामाण्याङ्गीकरणे च वेदसिद्धेश्वरप्रसङ्गात्, प्रधानपरमाणुपुरुषैः निरवयवैः निरवयवस्येश्वरस्य संयोगादिसंबन्धासंभवात् असंबद्धस्याधिष्ठातृत्वानुपपत्तेश्च ईश्वरसद्भावकल्पान्तर-कर्मतदपेक्षत्वसद्भावप्रधानादिसंयोगादिपुरस्सराधिष्ठातृत्वसद्भावेषु प्रमाणाभावादसङ्गतैषा कल्पनेति।।

### *प्रकटार्थविवरणम्*

विमतं जीवपरिमाणं नित्यम्, जीवपरिमाणत्वात्, मोक्षकालीनपरिमाणवदित्यर्थः। प्रकारान्तरेण व्याचष्टे— **अथ वेति**। पूर्वमवस्थितिशब्दो नित्यत्वपरतया व्याख्यातः। इदानीं शरीरमन्तरेणैव मोक्षे परिमाणस्यावस्थितत्वात् न शरीरपरिणामत्वं नियम [ परिमाणत्वनियमः ] इत्यर्थः। उपसंहरति— **अतश्चेति**।।इत्यष्टममेकस्मिन्नसंभवाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

सूत्रं योजयति— **अथवाऽन्त्यस्येति**। पूर्वत्रोभयोः परिमाणयोर्नित्यत्वादिति योजना। एकपरिमाणशरीरता चाविशेषः। द्वितीये तु व्याख्यान उभयोरवस्थयोः परिमाणस्य नित्यत्वादिति योजना। एकपरिमाणशरीरता चाविशेषो न भवति, किन्त्वणुर्महान् वेत्येकपरिमाणमात्रम्।।३६।। इति षष्ठमेकस्मिन्नसम्भवाधिकरणम्।

### *न्यायनिर्णयः*

तस्याप्यणुत्वं महत्त्वं वा स्यादिति व्याख्यान्तरमाह— **अथवेति**। विमतो न देहपरिमाणः, आत्मत्वात्, मुक्तवदित्यर्थः। आत्मनो देहपरिमाणत्वायोगे फलितमाह— **अतश्चेति**।।३६।। इति षष्ठमेकस्मिन्नसंभवाधिकरणम्।।

## ७।।पत्यधिकरणम्।।सू. ३७-४१।।

## पत्युरसामञ्जस्यात्।।३७।।

**इदानीं केवलाधिष्ठात्रीश्वरकारणवादः प्रतिषिध्यते। तत् कथमवगम्यते? 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' 'अभिध्योपदेशाच्च' (ब्र.सू. १।४।२३,२४) इत्यत्र प्रकृतिभावेनाधिष्ठातृभावेन चोभयस्वभावस्येश्वरस्य स्वयमेवाचार्येण प्रतिष्ठापितत्वात्। यदि पुनरविशेषेणेश्वरकारणवादमात्रमिह प्रतिषिध्येत पूर्वोत्तरविरोधाद् व्याहताभिव्याहारः सूत्रकार इत्येतदापद्येत। तस्मादप्रकृतिरधिष्ठाता केवलं निमित्तकारणमीश्वर इत्येष पक्षो वेदान्तविहितब्रह्मैकत्वप्रतिपक्षत्वाद् यत्नेनात्र प्रतिषिध्यते।**

**सा चेयं वेदबाह्येश्वरकल्पनाऽनेकप्रकारा। केचित् तावत् सांख्ययोगव्यपाश्रयाः कल्पयन्ति-**

*प्रकटार्थविवरणम्*

**पत्युरसामञ्जस्यात्**।। संक्षेपतोऽधिकरणतात्पर्यमाह— **इदानीमिति**। ईश्वरसद्भाव एव न निषिध्यते, किं तु केवलमधिष्ठाता निमित्तमात्रमीश्वर इत्येष पक्षो निराक्रियत इति। प्रश्नपूर्वकं विवृणोति— **तत्कथमित्यादिना**। व्याहतमभिव्याहरणं वाक्यं यस्य स तथोक्तः। इदानीं निराकार्यमतस्यावान्तरभेदमाह— **सा चेयमिति**। पूर्वत्र प्रत्यक्षेण सत्त्वादीनां व्यवस्थिततादर्शनादनेकान्तवादो निरस्तः; तथेहापि चेतनस्य निमित्तमात्रत्वदर्शनादीश्वरोऽपि निमित्तमात्रमिति **पातञ्जलसिद्धान्तेन** निमित्तोपादानरूपादद्वितीयात् जगत्सर्गं

*भाष्यभावप्रकाशिका*

**पत्युरसामञ्जस्यात्**।।३९।। अविशेषेणेश्वरकारणवादो निषिध्यत इति भ्रमनिवृत्त्यर्थमाह— **इदानीं केवलेति**। ननु ईश्वरकारणत्वमेवात्र निषिध्यते, न निमित्तत्वमात्रम्; पत्युरसामञ्जस्यादित्यविशेषेणोक्तत्वादिति चोदयति— **तत्कथमवगम्यत इति**। नैवम्, स्वोक्तविरोधप्रसङ्गादित्याह— **प्रकृतिश्चेति**। चशब्देन निमित्तकारणत्वस्यापि कथितत्वात्। अथापि कथञ्चिच्चशब्दस्यान्यार्थतां ब्रूषे, तथाप्युत्तरसूत्र उभयकारणत्वं प्रतिपादितमेत्याह— **अभिध्योपदेशादिति**। तन्निराकरणं किमर्थमिति? अत आह— **वेदान्तविहितेति**।

तेषां पक्षं दर्शयति— **सा चेयमिति**। ननु प्रधीयत इति व्युत्पत्त्याऽविद्यायाः प्रधानत्वसंभवात् प्रधानपुरुषाधिष्ठातेश्वर इत्यस्माकमप्येतत् समानमित्याशङ्क्याह— **इतरेतरविलक्षणा इति**। अनुमानमप्येवं प्रयुञ्जते— विज्ञानशक्त्यैश्वर्याणामुत्कर्षतारतम्यम्, क्वचिद्विश्रान्तम्, तरतमभावत्वात्, परिणामतारतम्यवदिति। माहेश्वराश्चत्वारः— शैवाः, पाशुपताः, कालसिद्धान्तिनः, कापालिकाश्चेति

*न्यायनिर्णयः*

लुञ्चितकेशमतं निराकृत्य जटाधारिमाहेश्वरमतं निराचष्टे— **पत्युरिति**। सत्त्वासत्त्वयोरेकत्रायोगवदधिष्ठातृत्वोपादानत्वयोरपि नैकत्र योगोऽस्तीत्याशङ्क्य तात्पर्यमाह— **इदानीमिति**। अविशेषेणेश्वरकारणवादिनिषेधभ्रमनिवृत्त्यर्थमाह— **केवलेति**। अविशेषोक्तेरीश्वर-कारणत्वमेवात्र निषिध्यते, न तस्य निमित्तत्वमात्रमिति शङ्कते— **तदिति**। स्वोक्तिविरोधान्मैवमित्याह— **प्रकृतिश्चेति**। न केवलमीश्वरस्य कारणत्वमात्रनिषेधे प्रकृतिसूत्रं विरुध्यते, किं त्वभिध्यासूत्रमपीति मत्वाऽऽह— **अभिध्येति**। **प्रतिष्ठापितत्वात्** उक्ततात्पर्यधीरिति शेषः। उक्तमर्थं व्यतिरेकद्वारा स्फोरयति— **यदीति**। सूत्रकृतो विरुद्धार्थवादित्वं परिहर्तुं फलितमाह— **तस्मादिति**। तन्निराकरणं किमर्थमित्याशङ्क्य ब्रह्मात्मैकत्वं दृढीकर्तुमित्याह— **वेदान्तेति**। एतेनाधिकरणस्य फलमुक्तम्।

अद्वितीयाद् ब्रह्मणो जगत्सर्गं ब्रुवतः समन्वयस्य केवलमधिष्ठातेश्वरो जगतो नोपादानमिति माहेश्वरराद्धान्तेन विरोधोऽस्ति न वेति तत्प्रामाणिकत्वभ्रान्तत्वाभ्यां संदेहे पूर्वपक्षयति— **सा चेति**। माहेश्वरमतनिराकरणेन समन्वयविषयब्रह्मात्मैक्यस्यात्र दृढीकरणात् पादादिसंगतयः। पूर्वपक्षे तन्मतस्य प्रामाणिकत्वात् तद्विरोधे समन्वयासिद्धेर्ब्रह्मात्मैक्यासिद्धिः। सिद्धान्ते तस्य भ्रान्तत्वात् तद्विरोधस्याभासत्वे समन्वयसिद्धेरैक्यसिद्धिः। ईश्वरकल्पनाया बहुप्रकारत्वे हेतुं सूचयति— **वेदेति**। ज्ञानशक्त्यैश्वर्योत्कर्षतारतम्यं कचिद्विश्रान्तं, तरतमभावत्वात्, [१]परिणामतारतम्यवदित्याह— **केचिदिति**। प्रधीयत इति प्रधानस्याविद्यात्वात् प्रधानपुरुषाधिष्ठाते-

१. 'परिमाण' इति पाठः स्यात्। एवं भाष्यभावप्रकाशिकायामपि।

**प्रधानपुरुषयोरधिष्ठाता केवलं निमित्तकारणमीश्वरः, इतरेतरविलक्षणाः प्रधानपुरुषेश्वरा इति। माहेश्वरास्तु मन्यन्ते–कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षणायोपदिष्टाः; पशुपतिरीश्वरो निमित्तकारणमिति। तथा वैशेषिकादयोऽपि केचित् कथंचित् स्वप्रक्रियानुसारेण निमित्तकारणमीश्वर इति वर्णयन्ति।**

**अत उत्तरमुच्यते–'पत्युरसामञ्जस्यात्' इति। पत्युरीश्वरस्य प्रधानपुरुषयोरधिष्ठातृत्वेन जगत्कारणत्वं नोपपद्यते। कस्मात्? असामञ्जस्यात्। किं पुनरसामञ्जस्यम्? हीनमध्यमोत्तमभावेन हि प्राणिभेदान् विदधत**

***प्रकटार्थविवरणम्***

वदतः समन्वयस्यार्थाद् विरोधोऽस्तीति भावः। **महेश्वरोपदिष्टागमानुसारिणस्त्वागमबलेनैव** निमित्तत्वं मन्यन्त इत्याह— **माहेश्वरास्त्विति**। कार्यं प्राधानिकं महदादि; कारणं महेश्वरः; योगः प्रणवोपासनाध्यानादिः, विधिस्त्रिषवणस्नानादिः; दुःखान्तो मोक्षः। पशवो जीवाः; तेषां पाशः कर्माविद्यानिबन्धः तद्विमोक्षायेत्यर्थः। मतान्तरमाह— **तथा वैशेषिकादयोऽपीति**। विमतं सकर्तृकम्, कार्यत्वात्, संप्रतिपन्नवत् इति **वैशेषिकाः**, कर्मफलं तत्स्वरूपाद्यभिज्ञेन दीयमानम्, फलत्वात्, सेवाफलवदिति **नैयादिकादयो** वर्णयन्तीत्यर्थः।

नकाराध्याहारेण सूत्रं योजयति— **पत्युरीश्वरस्येत्यादिना**। लोके चेतनस्य निमित्तत्वं दृष्टमिति तद्बलेन त्वया निमित्तमात्रमीश्वर इत्यनुमीयते चेत् तर्हि वैषम्यं कुर्वतो रागादिमत्त्वं दृष्टमिति तदप्यनुमातव्यमित्यनीश्वरत्वप्रसङ्ग इत्यर्थः। न स्वेच्छया कस्यचित्

***भाष्यभावप्रकाशिका***

महेश्वरप्रणीतसिद्धान्तानुगामितया केवलं निमित्तकारणमीश्वरं तदागमप्रामाण्यात् कल्पयन्ति। तत्र कार्यं प्राधानिकं महदादि। कारणमीश्वरः। योगः समाधिः। विधिस्त्रिषवणस्नानादिर्गूढचर्यावसानः। दुःखान्तो मोक्षः। पशव आत्मानः। तेषां पाशो बन्धनम्। तद्विमोक्षो दुःखान्तः।. चेतनस्य खल्वधिष्ठातुः कुम्भकारादेः कुम्भादिकार्यनिमित्तकारणत्वमात्रं दृष्टम्; न तूपादानत्वम्। तस्मादीश्वरोऽपि कारणाधिष्ठाता निमित्तमेव, न तूपादानम्; एकस्याधिष्ठेयाधिष्ठातृत्वविरोधादिति भावः। **तथा वैशेषिकादय इति**। विवादगोचरापन्नं जगत् स्वरूपप्रयोजनसंप्रदानोपादानादिविषयविज्ञानवत्कर्तृकम् कार्यत्वात्, यथा घटादीति वैशेषिकानुमानम्। नैयायिकाः क्षपणकाश्चानुमिमते— कर्मफलं कृत्स्नम्, संप्रदानादिविषयविज्ञानवत्प्रदातृकम्, कर्मफलत्वात्, सेवादिकर्मफलवदिति। सौगताःपुनः सांख्यानुमानेन सर्वज्ञमात्रमनुमिमते।

सूत्रं व्याचष्टे— **पत्युरीश्वरस्येति**। ईश्वरस्य निमित्तकारणत्वमात्रमागमाद् बुध्यते, किं वा तन्निरपेक्षप्रमाणान्तरात्? न

***न्यायनिर्णयः***

श्वरोऽस्माभिरपि गृह्यते, तत्राह— **इतरेति**। चत्वारो माहेश्वराः— शैवाः पाशुपताः कारुणिकसिद्धान्तिनः कापालिकाश्च। ते सर्वे महेश्वरप्रणीतागमप्रामाण्यात् केवलं निमित्तमीश्वरमिच्छन्तीत्याह— **माहेश्वरास्त्विति**। कार्यं प्राधानिकं महदादि, कारणं महेश्वरः, योगः समाधिः, विधिस्त्रिषवणस्नानादिः, दुःखान्तो मोक्ष इति पञ्च पदार्थाः। ते किमर्थमीश्वरेणोक्ताः, तत्राह— **पश्विति**। पशवो जीवास्तेषां पाशो बन्धनं तद्विमोक्षो दुःखान्तस्तदर्थमिति यावत्। कुम्भकारादेरधिष्ठातुश्चेतनस्य कुम्भादिकार्ये निमित्तत्वमात्रदृष्टेरीश्वरोऽपि जगदधिष्ठाता निमित्तमेव नोपादानमेकस्योभयविरोधादिति मत्वाऽऽह— **पशुपतिरिति**। वैशेषिकनैयायिकविवसनसुगतमतानि सूचयति— **तथेति**। विमतमुपादानाद्यपरोक्षज्ञानवज्जन्यं, कार्यत्वात्, घटवदिति वैशेषिकाः। कर्मफलं संप्रदानाद्यभिज्ञप्रदातृकं, कर्मफलत्वात्, सेवाफलवदिति नैयायिकदिगम्बरौ। सौगतास्तु सांख्यानुमानेनैव तटस्थमीश्वरमास्थिताः।

एवं माहेश्वरमतस्य प्रामाणिकत्वात् तद्विरोधः समन्वयस्येति प्राप्ते सिद्धान्तमाह— **अत इति**। पूर्वाधिकरणान्नञ्पदमध्याहृत्य सांख्ययोगाश्रयेश्वरकल्पनादूषणत्वेन सूत्रं योजयति— **पत्युरिति**। ईश्वरस्य निमित्तत्वमात्रे मानसिद्धे हेत्वसिद्धिरित्याह— **किमिति**। तस्य तन्मात्रत्वमागमान्मानान्तराद्वा? नाद्यः, तस्योभयकारणत्ववादिताया दर्शितत्वात्। मानान्तरमप्यनुमानमर्थापत्तिर्वा? आद्ये चेतनस्य द्रव्यं प्रति निमित्तत्वमात्रं लोके दृष्टमिति तद्बलात् तन्मात्रमीश्वरं वदतो वैषम्यकारिणो रागादिमत्त्वदृष्टेस्तदपि तस्मिन् कल्प्यमित्यसामञ्जस्यं स्यादित्याह— **हीनेति**। आगमादीश्वरसिद्धौ न दृष्टमनुसर्तव्यं, तस्य दृष्टसाधर्म्यादप्रवृत्तेः। अनुमानं तु दृष्टसाधर्म्येण प्रवर्तमानं

**ईश्वरस्य रागद्वेषादिदोषप्रसक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत। प्राणिकर्मापेक्षित्वाददोष इति चेत्? न; कर्मेश्वरयोः प्रवर्त्यप्रवर्तयितृत्वे इतरेतराश्रयदोषप्रसङ्गात्। न, अनादित्वादिति चेत्? न; वर्तमानकालवदतीतेष्वपि कालेष्वितरेतराश्रयदोषाविशेषादन्धपरम्परान्यायापत्तेः। अपि च 'प्रवर्तनालक्षणा दोषाः' (न्या.सू. १।१।१८) इति न्यायवित्समयः। न हि कश्चिददोषप्रयुक्तः स्वार्थे परार्थे वा प्रवर्तमानो दृश्यते। स्वार्थप्रयुक्त एव च**

***प्रकटार्थविवरणम्***

सुखं विदधाति, कस्यचिद् दुःखम्; किं तु तत्तत्कर्मापेक्षया, अतो न तस्य रागादिमत्त्वप्रसङ्ग इत्याह— **प्राणिकर्मेति**। परिहरति— **नेति**। कर्मापेक्षया फलदातृत्वेऽपि शुभस्यैव फलं ददाति, नाशुभस्येति किं न स्यादित्यर्थः। अथ येन येनेश्वरः प्रेर्यते तस्य तस्य फलं ददाति, तर्हीश्वरः कर्मणा प्रवर्त्यते, कर्म चेश्वरेणेति परस्पराश्रयमित्याह— **कर्मेश्वरयोरिति**। नास्तीतरेतराश्रयत्वम्, अतीतेन कर्मणा प्रवर्तितो वर्तमानफलदानाय प्रवर्तत इत्यन्योन्यानादित्वात् कर्मेश्वरयोः [इत्यनादित्वात् कर्मेश्वरयोः अन्योन्य]प्रवर्त्यप्रवर्तकभावस्येत्याह— **नानादित्वादिति**। भवेदयं परिहारो यद्यतीतस्य कर्मणः स्वातन्त्र्येणेश्वरप्रवर्तकत्वं स्यात्; तत्तु नास्त्यचेतनत्वात्; अतः तदपीश्वरेण प्रेरितमेवेश्वरस्य प्रवर्तकत्वमिति [कमिति] स्यादेवेतरेतराश्रयत्वमित्याह— **न, वर्तमानेति**। तस्मात् कर्मापेक्षया वैषम्यहेतुत्वस्य अनिर्वाच्यत्वाल्लोकदृष्ट्यनुसारेण भवत्येव रागादिमत्त्वम्। किं च परमतानुसारेणापि रागादिमत्त्वं प्राप्नोतीत्याह— **अपि चेति**। प्रवर्तकत्वलिङ्गका रागादिदोषा इति **न्यायविदां** स्थितिः। ततः प्रवर्तकत्वादेव दोषवत्त्वमित्यर्थः। "क्लेशकर्मविपाकाशयैरपरामृष्टः

***भाष्यभावप्रकाशिका***

तावदागमात्; तस्योभयकारणत्वप्रतिपादनपरत्वात्। अथ प्रमाणान्तरात्, तदप्यनुमानम्, अर्थापत्तिर्वा? न तावदनुमानं संभवति; तस्य दृष्टानुसारेण प्रवृत्तेः। तथा च सत्यसामञ्जस्यम्। आगमादीश्वरावगतौ तु न दृष्टमनुसर्तव्यम्। न ह्यागमो दृष्टसाधर्म्यात् प्रवर्तते। यस्तु तत्र दृष्टानुसारः क्रियते, स सुहृद्भावमात्रेण। अनुमानं तु दृष्टसाधर्म्यात् प्रवर्तते, न तु दृष्टविपर्ययेण; तथा सति रागादिमत्त्वमित्यर्थः।

**इतरेतराश्रयदोषप्रसङ्गादिति**। अयमर्थः— न तावदीश्वरः करुणया प्रवर्तत इति युक्तम्; दुरितकारयितृत्व-तत्फलदातृत्वयोः तथा सत्ययोगात्। तस्मात् स्वतन्त्रोऽपीश्वरः कर्मवश इति दृष्टविपरीतं कल्पनीयम्। कल्पनेऽपि कर्मणेश्वरः प्रवर्तनीयः, ईश्वरेण च कर्मेति परस्पराश्रयतेति शङ्कते— **न; अनादित्वादिति**। निराकरोति— **न, वर्तमानकालवदिति**। पूर्वकर्म कथमीश्वराप्रवर्तितमीश्वरप्रवर्तनलक्षणं कार्यं करोति? अथ तत्रापि प्रवर्तितमीश्वरेण पूर्वतरकर्मप्रवर्तितेनेत्युच्येत, तर्हि तत्रापि पूर्वोक्तं समानमित्यन्धपरम्परादोषः। अपि च नैयायिकानामीश्वरस्य निर्दोषत्वं स्वसमयविरुद्धमित्याह— **अपि चेति**। अस्माकं तु नायं समय इति भावः। ननु कारुण्यादपि प्रवृत्तिरुपपद्यते, न च कारुण्यं दोष इत्याशङ्क्याह— **स्वार्थप्रयुक्त एवेति**। अयमर्थः—

***न्यायनिर्णयः***

दृष्टविपर्यये तुषादपि बिभेतीति भावः। ईश्वरो हि न स्वेच्छया विषमान् प्राणिनो विदधाति, किंतु तत्कर्मापेक्षया, तेन न तस्य रागादिमत्त्वमिति शङ्कते— **प्राणीति**। कर्मापेक्षया फलदातृत्वेऽपि कारुणिकत्वादीश्वरः शुभस्यैव फलं ददाति नाशुभस्येति किं न स्यादित्याह— **नेति**। येन येनेश्वरः शुभेनाशुभेन वा प्रेर्यते तस्य फलं ददातीत्याशङ्क्य कर्मणा स प्रवर्त्यते, तेन च कर्मेत्यन्योन्याश्रयान्नैवमित्याह— **कर्मेति**। अतीतेन कर्मणा प्रवर्तितस्येश्वरस्य वर्तमाने कर्मणि फलदानाय प्रवृत्तिरित्यनादित्वात्प्रवर्त्यप्रवर्तकत्वस्य कर्मेश्वरयोर्नान्योन्याश्रयतेत्याह— **नानादित्वादिति**। स्यादेष परिहारो यद्यतीतं कर्म स्वातन्त्र्येणेश्वरं प्रवर्तयेत्, तत्तु नास्त्यचेतनत्वात्, अतस्तदपि पूर्वकर्मप्रवर्तितेश्वरप्रेरितमेव वर्तमाने कर्मणि तत्प्रेरकमिति कर्मेश्वरयोर्मिथोऽपेक्षायाः सार्वत्रिकत्वादनादित्वस्याप्रामाणिकत्वान्नैवमित्याह— **नेति**। कर्मापेक्षया वैषम्यहेतुत्वस्य निर्वक्तुमशक्यत्वाल्लोकदृष्ट्या स्यादेव रागादिमत्त्वमीश्वरस्येत्युक्तम्। इदानीं परमतेनापि तस्य रागादिमत्त्वं स्यादित्याह— **अपि चेति**। प्रवर्तकत्वलिङ्गका रागादिदोषा इति नैयायिकसमयः। ततश्च प्रवर्तकत्वादेवेश्वरस्य तद्वत्त्वमित्यर्थः। प्रवर्तकत्वदोषवत्त्वयोर्व्याप्तिं व्यनक्ति— **न हीति**। कारुण्यादपि प्रवृत्तेर्नैवं व्याप्तिरित्याशङ्क्याह— **स्वार्थेति**। कारुण्ये सति स्वस्य दुःखं भवति, तेन कारुणिकोऽपि स्वदुःखनिवृत्तये परार्थेऽपि

**सर्वो जनः परार्थेऽपि प्रवर्तत इत्येवमप्यसामञ्जस्यं, स्वार्थवत्त्वादीश्वरस्यानीश्वरत्वप्रसङ्गात्। पुरुषविशेषत्वाभ्युपगमाच्चेश्वरस्य पुरुषस्य चौदासीन्याभ्युपगमादसामञ्जस्यम्।।३७।।**

**संबन्धानुपपत्तेश्च।।३८।।**

**पुनरप्यसामञ्जस्यमेव। न हि प्रधानपुरुषव्यतिरिक्त ईश्वरोऽन्तरेण संबन्धं प्रधानपुरुषयोरीशिता। न तावत् संयोगलक्षणः संबन्धः संभवति, प्रधानपुरुषेश्वराणां सर्वगतत्वान्निरवयवत्वाच्च। नापि समवायलक्षणः संबन्धः, आश्रयाश्रयिभावानिरूपणात्। नाप्यन्यः कश्चित् कार्यगम्यः संबन्धः शक्यते कल्पयितुम्, कार्यकारणभावस्यैवाद्याप्यसिद्धत्वात्।**

**ब्रह्मवादिनः कथमिति चेत्? न; तस्य तादात्म्यलक्षणसंबन्धोपपत्तेः। अपि चागमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयतीति नावश्यं तस्य यथादृष्टमेव सर्वमभ्युपगन्तव्यमिति नियमोऽस्ति। परस्य तु**

***प्रकटार्थविवरणम्***

पुरुषविशेष ईश्वरः'' इति पातञ्जलवचनात् पुरुष ईश्वरः; तस्यौदासीन्यात् कथं प्रवर्तकत्वमित्याह— **पुरुषविशेषत्वेति**।

**संबन्धानुपपत्तेश्च**।। इतश्च निमित्तकारणमीश्वरः इत्यसमञ्जसमित्याह— **सम्बन्धेति**। योग्यताख्यः सम्बन्धोऽस्त्वित्याशङ्क्याह— **नाप्यन्य इति**। ईश्वराधिष्ठितस्य प्रधानस्य परमाणूनां च जगत् कार्यमिति सिद्धे सति कार्यवशाद् योग्यताख्यः संबन्धः कल्प्येत। न तदद्यापि सिद्धमित्यर्थः। प्रतिबन्दिन्यायेनाह— **ब्रह्मवादिन इति**। मायाब्रह्मणोः सर्वगतयोः संयोगादिसम्बन्धासंभवान्न कार्यसिद्धिः स्यादित्यर्थः। अनिर्वाच्यतादात्म्यलक्षणसंबन्धसंभवान्न ब्रह्मवादिनः समानो दोष इत्याह— **न तस्येति**। इतोऽपि नावयोः साम्यमित्याह—

***भाष्यभावप्रकाशिका***

कारुण्ये सतीश्वरस्य दुःखं भवति, तेन कारुणिकोऽपि सुख[स्व]दुःखनिवृत्तये प्रवर्तत इति। ननु भवतु, को दोष इति? अत आह— **स्वार्थवत्त्वादिति**। अर्थित्वादित्यर्थः।।३७।।

**सम्बन्धानुपपत्तेश्च**।।३८।। दूषणान्तरमाह— **न हि प्रधानेत्यादिना**। अप्राप्तप्राप्तेरव्याप्तवृत्तितायाश्च सर्वगतत्वात् निरवयवत्वाच्चासंभव इत्यर्थः। नापि योग्यतालक्षणः कार्यगम्यः सम्बन्ध इत्याह— **नाप्यन्य इति**। प्रधानकार्यत्वस्य प्रधानेश्वरयोः

***न्यायनिर्णयः***

प्रवर्तत इत्यर्थः। तथापि किं जातमीश्वरस्येत्याशङ्क्याह— **इत्येवमिति**। न केवलं दृष्टानुसारादसामञ्जस्यम्, किं तूक्तेन प्रकारेणोपगमादपीत्यर्थः। स्वीकारमात्रस्यादोषत्वात् तस्य दोषपर्यवसायित्वमाह— **स्वार्थेति**। अर्थित्वादित्यर्थः। ईश्वरस्य प्रवर्तकत्वमुपेत्योक्तम्। तदपि पातञ्जलमते नास्तीत्याह— **पुरुषेति**।।३७।।

प्रधानवादे दोषान्तरमाह— **संबन्धेति**। प्रकृतासामञ्जस्ये हेत्वन्तरपरं सूत्रमिति सूचयति— **पुनरिति**। कथम्? ईश्वरस्य प्रधानपुरुषाभ्यां संबन्धोऽस्त्युत न? नास्ति चेदधिष्ठात्रधिष्ठेयताऽसिद्धिरित्याह— **न हीति**। अस्ति चेत् तर्हि स संयोगो वा समवायो वा योग्यता वेति विकल्प्याद्यं दूषयति— **न तावदिति**। अप्राप्तप्राप्तिरव्याप्यवृत्तिश्च संयोगस्य स्वरूपम्। तत्र प्रधानादिष्वप्राप्तप्राप्तेरभावे हेतुमाह— **प्रधानेति**। अव्याप्यवृत्तित्वाभावेऽपि हेतुमाह— **निरवयवत्वादिति**। द्वितीयं निरस्यति— **नापीति**। तृतीयं प्रत्याह— **नाप्यन्य इति**। प्रधानकार्यत्वस्य जगतोऽसिद्धत्वात् प्रधानेश्वरयोः संबन्धस्य कार्यकल्प्यस्यायोगादित्यर्थः।

तवापि मायाब्रह्मणोर्विभुत्वान्निरवयवत्वाच्च संयोगासिद्धिः; समवायस्यानिष्टत्वात्, कार्यकारणत्वस्य चासिद्धत्वात् कार्यगम्ययोग्यतासंबन्धायोगान्नाधिष्ठात्रधिष्ठेयतेति शङ्कते— **ब्रह्मेति**। मायाब्रह्मणोरनिर्वाच्यतादात्म्यसंबन्धान्न साम्यमित्याह— **नेति**। इतोऽपि ब्रह्मवादिनो न दोषसाम्यमित्याह— **अपि चेति**। तथापि दृष्टमनुसर्तव्यम्, नेत्याह— **नावश्यमिति**। दृष्टविरुद्धेऽत्यन्तादृष्टे

**दृष्टान्तबलेन कारणादिस्वरूपं निरूपयतो यथादृष्टमेव सर्वमभ्युपगन्तव्यमित्ययमस्त्यतिशयः। परस्यापि सर्वज्ञप्रणीतागमसद्भावात् समानमागमबलमिति चेत्? न; इतरेतराश्रयत्वप्रसङ्गादागमप्रत्ययात् सर्वज्ञत्वसिद्धिः सर्वज्ञप्रत्ययाच्चागमसिद्धिरिति। तस्मादनुपपन्ना सांख्ययोगवादिनामीश्वरकल्पना। एवमन्यास्वपि वेदबाह्यास्वीश्वर-कल्पनासु यथासंभवमसामञ्जस्यं योजयितव्यम्।।३८।।**

## अधिष्ठानानुपपत्तेश्च।।३९।।

**इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य। स हि परिकल्प्यमानः कुम्भकार इव मृदादीनि प्रधानादीन्यधिष्ठाय प्रवर्तयेत्। न चैवमुपपद्यते। न ह्यप्रत्यक्षं रूपादिहीनं च प्रधानमीश्वरस्याधिष्ठेयं संभवति मृदादिवैलक्षण्यात्।।३९।।**

### *प्रकटार्थविवरणम्*

**अपि चेति**। पुनः साम्यमाह— **परस्यापीति**। भवेदेवं यद्यागमस्य सर्वज्ञप्रणीतत्वं सिद्धं स्यात्, तदेव त्वसिद्धमित्याह— **नेतरेतराश्रयत्वेति**। सर्वज्ञप्रणीतत्वेनागमस्य प्रामाण्ये सिद्धे तस्मादेवागमात् सर्वज्ञप्रणीतत्वं ज्ञायते; सर्वज्ञप्रणीतत्वाच्च तस्य प्रामाण्यमिति नैकमपि सिध्यति; अस्माकं त्वनादिसिद्धाद् वेदात् दृष्टान्तानपेक्षादलौकिकमपि यूपाहवनीयादिवत् सिध्यतीत्यर्थः। यस्माल्लोकदृष्टमात्रबलेनेश्वरं साधयतः स्वाभ्युपगतवैपरीत्यप्रसङ्गो दुर्निवारः तस्मादित्युपसंहारः। माहेश्वराद्यागमस्यापि सर्वज्ञप्रणीतत्वासिद्धेः लोकदृष्ट्यवष्टम्भेनैवेश्वरकल्पनायां वैपरीत्यस्यापि कल्पयितुं शक्यत्वादसामञ्जस्यं द्रष्टव्यमित्याह— **एवमन्यास्वपीति**।

**अधिष्ठानानुपपत्तेश्च**।। प्रधानादि न चेतनाधिष्ठेयम्, अप्रत्यक्षत्वात्, यदधिष्ठेयं तत्प्रत्यक्षं यथा मृदादि इत्याह— **अधिष्ठानानुपपत्तेश्चेति**।

### *भाष्यभावप्रकाशिका*

सम्बन्धकल्पनायोगादित्यर्थः। **तादात्म्यलक्षण इति**। अनिवर्चनीयरूप इत्यर्थः। **नावश्यमिति**। दृष्टिविरुद्धेऽत्यन्तादृष्टे चागमस्य प्रवृत्तेरित्यर्थः। **इतरेतराश्रयत्वप्रसङ्गादिति**। अस्माकं त्वीश्वराप्रणीततयाऽऽगमस्यानादित्वान्नेतरेतराश्रयतेति भावः।।३८।।

**अधिष्ठानानुपपत्तेश्च**।।३९।। अर्थापत्तिरपि नेश्वरे प्रमाणमित्याह— **अधिष्ठानानुपपत्तेरिति**। **रूपादिहीनमिति**। अनुद्भूतरूपादीत्यर्थः।।३९।।

कल्पान्तरमाह— **अन्यथा वेति**। [पृ. ६६०] पूर्वमधिष्ठितिरधिष्ठानम्, इदानीं तु अधिष्ठानं शरीरमुक्तम्। तथा भोगादिप्रसङ्गेनानीश्वरत्वं पूर्वमापादितम्, संप्रति तु शरीरित्वेन भोगादिप्रसङ्गादनीश्वरत्वमुक्तमिति विशेषः। स्वीक्रियत एव लीलामयं शरीरमिति, तत्राह— **न चेति**।।३९।।

### *न्यायनिर्णयः*

चागमस्य प्रवृत्तेरित्यर्थः। अनुमानवादिनि विशेषमाह— **परस्येति**। ईश्वरवादिनोऽपि तुल्यत्वादागमबलस्यानुमानबलमधिकमिति शङ्कते— **परस्यापीति**। किमीश्वरस्य सर्वज्ञत्वं तत्कृतागमाद् गम्यते, किंवाऽनुमानादिति विकल्प्याद्ये दोषमाह— **नेत्यादिना**। सर्वज्ञकृतत्वेनागमप्रामाण्ये ततः सर्वज्ञकृतत्वं ज्ञेयं, ततश्च तस्य प्रामाण्यमिति नैकमपि सिध्यति। अस्माकं त्वनादिसिद्धाद् वेदादनपेक्षादलौकिकमपि यूपादिवद् दृष्टं स्यादिति भावः। न चानुमानादीश्वरः सर्वज्ञो ज्ञायते, दृष्टबलप्रवृत्तेरनुमानादीश्वरं साधयतः स्वाभ्युपगमवैपरीत्यध्रौव्यस्योक्तत्वादित्युपसंहरति— **तस्मादिति**। सांख्ययोगोक्तन्यायं चतुर्विधमाहेश्वरेषु वैशेषिकादिषु चातिदिशति— **एवमिति**।।३८।।

द्विविधादागमादनुमानाच्च तटस्थेश्वरसिद्धिर्निरस्ता। सम्प्रत्युद्भूतरूपादिहीनप्रधानादेरस्मदादिभिरधिष्ठेयत्वानुपपत्तिरर्थापत्तिरीश्वरे मानमित्याशङ्क्यास्मदादिवदीश्वरेणापि प्रधानादेरधिष्ठेयत्वानुपपत्तेर्मैवमित्याह— **अधिष्ठानेति**। सूत्रं व्याकरोति— **इतश्चेति**। अनुपपत्तिं वक्तुं परस्येश्वरकल्पनामनुवदति— **स हीति**। अस्मदादिवदीश्वरेणापि प्रधानादीनामधिष्ठेयत्वं न युक्तम्, तेनार्थापत्तेरनुत्थानादित्याह— **न चेति**। विमतं न चेतनाधिष्ठेयम्, अप्रत्यक्षत्वात्, मृदादिवदिति व्यतिरेकिणाऽनुपपत्तिमेव स्फुटयति— **न हीति**। अप्रत्यक्षत्व-मुद्भूतरूपादिराहित्येन स्फोरयति— **रूपादीति**।।३९।।

## करणवच्चेन्न भोगादिभ्यः।।४०।।

**स्यादेतत्– यथा करणग्रामं चक्षुरादिकमप्रत्यक्षं रूपादिहीनं च पुरुषोऽधितिष्ठत्येवं प्रधानमपीश्वरोऽधिष्ठास्यतीति। तथापि नोपपद्यते। भोगादिदर्शनाद्धि करणग्रामस्याधिष्ठितत्वं गम्यते। न चात्र भोगादयो दृश्यन्ते। करणग्रामसाम्ये चाभ्युपगम्यमाने संसारिणामिवेश्वरस्यापि भोगादयः प्रसज्येरन्।**

**अन्यथा वा सूत्रद्वयं व्याख्यायते–'अधिष्ठानानुपपत्तेश्च'। इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य। साधिष्ठानो हि लोके सशरीरो राजा राष्ट्रस्येश्वरो दृश्यते, न निरधिष्ठानः। अतश्च तद्दृष्टान्तवशेनादृष्टमीश्वरं कल्पयितुमिच्छत ईश्वरस्यापि किंचिच्छरीरं करणायतनं वर्णयितव्यं स्यात्। न च तद् वर्णयितुं शक्यते। सृष्ट्युत्तरकालभावित्वाच्छरीरस्य प्राक्सृष्टेस्तदनुपपत्तेः। निरधिष्ठानत्वे चेश्वरस्य प्रवर्तकत्वानुपपत्तिः। एवं लोके दृष्टत्वात्। 'करणवच्चेन्न भोगादिभ्यः'। अथ लोकदर्शनानुसारेणेश्वरस्यापि किंचित् करणानामायतनं शरीरं कामेन कल्प्येत। एवमपि नोपपद्यते। सशरीरत्वे हि सति संसारिवद् भोगादिप्रसङ्गादीश्वरस्याप्यनीश्वरत्वं प्रसज्येत।।४०।।**

### *प्रकटार्थविवरणम्*

**करणवच्चेन्न भोगादिभ्यः।** चक्षुरादावनैकान्तिकत्वमाशङ्क्याह— **करणवच्चेन्न भोगादिभ्य इति।** स्वानुभवप्रत्यक्षमेव चक्षुरादि लोकेऽधिष्ठात्राऽधिष्ठीयते; परेण तु भोगादिप्रवृत्त्याऽधिष्ठितत्वमनुमीयते; अतोऽनेकान्त [अतो नानेकान्तः] इत्यर्थः। प्रधानकृताश्च भोगादयो न परमेश्वरस्य केनापि प्रमाणेन दृश्यन्ते, येन अधिष्ठेयत्वमनुमीयेतेत्याह— **न चात्र भोगादय इति।** इतश्च न करणग्रामवत् प्रधानादेरधिष्ठेयत्वमित्याह— **करणग्रामसाम्ये चेति।** प्रधानादयोऽधिष्ठातुः भोगादिसंपादकाः, अधिष्ठेयत्वात्, करणग्रामवदित्यर्थः।

सूत्रद्वयस्य योजनान्तरमुपक्रमते— **अन्यथा वेति।** विमतं शरीरिपूर्वकम्, कार्यत्वात्, पटादिवदिति स्वाभिप्रेतविपरीतसाधनत्वाद् विरुद्धभेद एवायमित्यर्थः। ननु केचिदीश्वरं नित्यशरीरं वर्णयन्ति; ततो न तेषामयं दोष इत्याशङ्क्याह— **न च तद्वर्णयितुमिति।** यच्छरीरं तद्भौतिकमिति व्याप्तेः न नित्यं शरीरमित्यर्थः। तर्हि कार्यं च भवत्यशरीरपूर्वकं च भविष्यति, किं बाधकमित्याशङ्क्याह— **निरधिष्ठानत्वे चेति।** अनीश्वरस्यैव भौतिकं शरीरम्; ईश्वरस्य त्विच्छावशान्निर्मितमेव शरीरं भविष्यतीत्याशङ्क्याह— **अथ लोकेति।** न तावदत्र प्रमाणम्; भवतु वा; तथापि सौभरिप्रभृतीनामिव भोगोऽपि स्यादित्याह— **एवमपि नोपपद्यत इति।**

### *न्यायनिर्णयः*

चक्षुरादावनैकान्त्यमाशङ्क्य परिहरति— **करणवदिति।** शङ्कां विभजते— **स्यादेतदिति।** अनैकान्तिके शङ्कितेऽपि नार्थापत्तेरुत्थानमित्युत्तरं व्याचष्टे— **तथापीति।** अस्मत्पक्षे चक्षुरादि स्वानुभवसिद्धमेवाधिष्ठीयते; अतो न व्यभिचारशङ्केत्यर्थः। किंच करणग्रामवच्चेतनाधिष्ठितत्वं प्रधानादेरशक्यं वक्तुं वैषम्यादित्याह— **भोगादीति।** आदिशब्दात् तत्कारणरूपदर्शनादि गृहीतम्। करणग्रामप्रयुक्तं हि रूपदर्शनादि, तत्फलं च भोगश्चेतने दृश्यते, तेन तस्य तेनाधिष्ठितत्वम्, प्रधानादिकृताश्च भोगादयो नेश्वरस्य केनापीष्यन्ते। तथा च करणग्रामवैलक्षण्यात् प्रधानादेर्न चेतनाधिष्ठितत्वमित्यनुत्थानमर्थापत्तेरित्यर्थः। विपक्षे दोषमाह— **करणेति।** यदि प्रधानादेरिष्टं करणग्रामसाम्यम्, तर्हि संसारिणां तत्कृतभोगादिवदीशस्यापि प्रधानादिकृता भोगादयः स्युः, ततश्चानीश्वरत्वापत्तेर्नार्थापत्त्या तद्धीरित्यर्थः।

सूत्रद्वयस्य व्याख्यान्तरमाह— **अन्यथा वेति।** ईश्वरस्याधिष्ठानं शरीरं, तदयोगात् प्रवर्तकत्वासिद्धेर्न कार्यानुपपत्त्या तद्धीरित्याह— **अधिष्ठानेति।** तद् व्याकरोति— **इतश्चेति।** चेतनस्य प्रवर्तकत्वं सशरीरत्वव्याप्तमन्वयव्यतिरेकाभ्यां वदन्नितःशब्दार्थं स्फुटयति— **साधिष्ठानो हीति।** विमतं शरीरादिमत्पूर्वकं, कार्यत्वात्, घटवदिति व्याप्तिफलमाह— **अतश्चेति।** लीलामयं शरीरमीश्वरस्यापि सिद्धमिति सिद्धसाध्यतेत्याशङ्क्याह— **न चेति।** तर्हि कार्यमपि शरीरादिमत्पूर्वकं मा भूदित्याशङ्क्याह— **निरधिष्ठानत्वे चेति।** अनीश्वरस्यैव सृष्ट्युत्तरभावि शरीरमीश्वरस्य प्रागपीच्छानिर्मितं भविष्यतीत्याशङ्क्याह— **करणवदिति।** चोद्यं व्याकरोति— **अथेति।** न तावदीश्वरस्येच्छानिर्मिते प्राचीने देहे किंचिन्मानं, तथापि तदङ्गीकारे देहित्वादीश्वरत्वासिद्धिरित्युत्तरमाह—

## अन्तवत्त्वमसर्वज्ञता वा।।४१।।

**इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य। स हि सर्वज्ञस्तैरभ्युपगम्यतेऽनन्तश्च। अनन्तं च प्रधानमनन्ताश्च पुरुषा मिथो भिन्ना अभ्युपगम्यन्ते। तत्र सर्वज्ञेनेश्वरेण प्रधानस्य पुरुषाणामात्मनश्चेयत्ता परिच्छिद्येत वा, न वा परिच्छिद्येत? उभयथाऽपि दोषोऽनुषक्त एव। कथम्? पूर्वस्मिंस्तावद् विकल्प इयत्तापरिच्छिन्नत्वात् प्रधानपुरुषेश्वराणामन्तवत्त्वमवश्यंभावि, एवं लोके दृष्टत्वात्। यद्धि लोक इयत्तापरिच्छिन्नं वस्तु पटादि तदन्तवद् दृष्टम्, तथा प्रधानपुरुषेश्वरत्रयमपीयत्तापरिच्छिन्नत्वादन्तवत् स्यात्। संख्यापरिमाणं तावत् प्रधानपुरुषेश्वरत्रयरूपेण परिच्छिन्नम्। स्वरूपपरिमाणमपि तद्गतमीश्वरेण परिच्छिद्येत, पुरुषगता च महासंख्या।**

### *प्रकटार्थविवरणम्*

**अन्तवत्त्वमसर्वज्ञता वा।।** एवं तावदनुमानमात्रबलेनाशरीरस्येश्वरस्य जगन्निमित्तत्वं निश्चेतुं न शक्यमित्युपपाद्य इदानीमनन्तत्वाभ्युपगमापाकरणायाह— **इतश्चानुपपत्तिरित्यादिना**। न तावत् सर्वज्ञत्वं संभवति, नित्ये ज्ञाने स्वातन्त्र्यायोगात्, साक्षाज्ज्ञानस्य विषयसंबन्धायोगाच्च। आश्रययोगात् संबन्धे परज्ञानस्यापि सर्वविषयत्वापातः। विषयविषयिभावस्यानुभवाश्रयत्वादितरेतराश्रयत्वाच्च। तथाप्यभ्युपगम्य विकल्प इत्यर्थः। नन्वियत्तापरिच्छिन्नत्वादित्यसिद्धो हेतुः, अपरिमितत्वात्; उक्तं हि— "अन्तर्न्यूनातिरिक्तत्वैः युज्यते परिमाणवत्। वस्तुन्यपरिमेये तु नूनं तेषामसंभवः।।" इति। तत्राह— **सङ्ख्यापरिमाणं तावदिति**। किं तावत् संख्यातोऽपरिमितत्वम्, किं वा अस्यैतावत् स्वरूपं नातोऽधिकमिति स्वरूपपरिमाणरहितत्वम्? नाद्यः, प्रधानपुरुषेश्वरास्त्रयः पदार्था इति संख्यापरिमितेः। न द्वितीयः, प्रधानादयः स्वरूपपरिमिताः, वस्तुतः परिच्छिन्नत्वात्, पटादिवदित्यनुमानात् सिद्धं स्वरूपपरिमाणम्; तच्चेश्वरेण गृह्यत इत्यर्थः। ननु यद्यपि त्रित्वं ज्ञायते, तथापि जीवानामनन्तत्वात् न तद्गतसंख्यावगम इत्याशङ्क्याह— **पुरुषगता चेति**। पुरुषैस्तावत्प्रत्येकं स्वस्यैकत्वं संख्या गृह्यत एव, या परस्परापेक्षया बहुत्वसंख्या साऽपीश्वरेण

### *भाष्यभावप्रकाशिका*

**करणवच्चेन्न भोगादिभ्यः।।४०।। अन्तवत्त्वमसर्वज्ञता वा।।४१।।** अनुपपत्तिं दर्शयितुं तन्मतमाह— **स हीति**। अनुमानैकशरणस्य प्रधानादीनामपि संख्याभेदवत्त्वं संख्यान्यत्वे प्रमेयत्वात् द्रव्यत्वाद्वाऽनुमीयेत। ततोऽन्तवत्त्वमसर्वज्ञता वेति विकल्पपूर्वमाह— **तत्र सर्वज्ञेनेति**। परिगणितक्षणदेशव्यापित्वमियत्ता, सङ्ख्यावत्त्वं वेयत्ता। परिच्छेदवत्त्वमेव दर्शयति— **संख्यापरिमाणमिति। स्वरूपपरिमाणमपीति**। यस्य यादृशं परिमाणम्, महत्त्वम् परममहद् दीर्घं ह्रस्वं चेत्यर्थः।

### *न्यायनिर्णयः*

**एवमपीति**। देहित्वेऽपि किमित्यनीश्वरत्वं, तत्राह— **सशरीरत्वे हीति**।।४०।।

श्रुत्यनुमानार्थापत्तिभिरीश्वरो न परेष्टः सिध्यतीत्युक्तम्। इदानीं तस्यानन्तत्वाद्युपगमोऽपि न संभवतीत्याह— **अन्तवत्त्वमिति**। सूत्रं व्याकरोति— **इतश्चेति**। तदेव वक्तुं परमतमनुवदति— **स हीति**। न तावदीश्वरस्य सर्वज्ञत्वं, नित्ये ज्ञाने स्वातन्त्र्यायोगात्। ज्ञानस्य साक्षाद् विषयसंबन्धासिद्धेश्च। तथाप्युपेत्य विकल्प्य दोषप्रसक्तिं प्रतिजानीते— **तत्रेति**। कल्पद्वयेऽपि दोषानुषक्तिं प्रकटयितुं पृच्छति— **कथमिति**। विमतमन्तवत्, इयत्तापरिच्छिन्नत्वात्, घटवदित्याह— **पूर्वस्मिन्निति**। लौकिकीं दृष्टिमेव स्पष्टयति— **यद्धीति**। व्याप्तिफलमनुमानं निगमयति— **तथेति**। हेतोरसिद्धिमाशङ्क्य संख्यातः स्वरूपतो वा परिमितिराहित्यमिति विकल्प्याद्यं प्रत्याह— **संख्येति**। न द्वितीयः, प्रधानादयः स्वरूपपरिमिताः, वस्तुतः परिच्छिन्नत्वात्, घटवदित्याह— **स्वरूपेति**। यस्य यादृशं परिमाणमणु महद् दीर्घं ह्रस्वं वा तदीश्वरेण सर्वज्ञत्वात् परिच्छिद्येत, तथा च ज्ञातपरिमाणत्वात्प्रधानाद्यन्तवदित्यर्थः। प्रधानपुरुषेश्वरस्वरूपेण त्रित्वे ज्ञातेऽपि जीवानामानन्त्यात् तद्गतसंख्याज्ञानाभावात् तेषु संख्यापरिमितिरसिद्धेत्याशङ्क्याह— **पुरुषेति**। पुरुषैस्तावत् प्रत्येकमेकत्वसंख्या ज्ञाता। या च तेषामन्योन्यापेक्षया बहुत्वसंख्या साऽपीश्वरेण ज्ञायते। न च सहस्रं लक्षं वेति विशेषाज्ञानादानन्त्यं, माषराशौ व्यभिचारात्। अस्मदादिभिः संख्यातुमशक्यस्यापि गणितज्ञेन संख्यातत्वदर्शनात् संदिग्धं विशेषाज्ञानं,

**ततश्चेयत्तापरिच्छिन्नानां मध्ये ये संसारिणः संसारान्मुच्यन्ते तेषां संसारोऽन्तवान्, संसारित्वं च तेषामन्तवत्। एवमितरेष्वपि क्रमेण मुच्यमानेषु संसारस्य संसारिणां चान्तवत्त्वं स्यात्। प्रधानं च सविकारं पुरुषार्थमीश्वरस्याधिष्ठेयं संसारित्वेनाभिमतम्, तच्छून्यतायामीश्वरः किमधितिष्ठेत्? किंविषये वा सर्वज्ञतेश्वरते स्याताम्? प्रधानपुरुषेश्वराणां चैवमन्तवत्त्वे सत्यादिमत्त्वप्रसङ्गः। आद्यन्तवत्त्वे च शून्यवादप्रसङ्गः।**

**अथ मा भूदेष दोष इत्युत्तरो विकल्पोऽभ्युपगम्येत– न प्रधानस्य पुरुषाणामात्मनश्चेयत्तेश्वरेण परिच्छिद्यत इति, तत ईश्वरस्य सर्वज्ञत्वाभ्युपगमहानिरपरो दोषः प्रसज्येत। तस्मादप्यसंगतस्तार्किकपरिगृहीत ईश्वरकारणवादः।।४१।।**

।।इति सप्तमं पत्यधिकरणम्।।

***प्रकटार्थविवरणम्***

ज्ञायते। न च सहस्रं लक्षं वेति विशेषानवगमादनन्तत्वम्, माषादिराशौ व्यभिचारात्; सन्दिग्धं च विशेषापरिज्ञानम्, अस्मदादिभिः संख्यातुमशक्यस्यापि गणितज्ञेन संख्यातत्वदर्शनात्, सकलपुरुषपरिचयमन्तरेण तदपरिज्ञाननिश्चयस्याशक्यत्वाच्च। तस्मान्न जीवास्त[त्त्व]तोऽनन्ताः, वस्तुतः परिच्छिन्नत्वात्, एकदेशनिहितमाषवदिति। भवत्वेवम्, ततः किमित्यत आह— **ततश्चेति**। यथा बहुत्वावगतानामपि माषाणामेकैकापचये निखिलमाषराश्यपचयः, तथा क्रमेण सर्वमुक्तेरिदानीं शून्यताप्रसङ्ग इत्यर्थः। किं च ईश्वरस्य सदा सर्वज्ञत्वं सदेशितृत्वं च न सिध्यतीत्याह— **प्रधानं च सविकारमिति**। दोषान्तरमाह— **प्रधानपुरुषेश्वराणां चेति**।

द्वितीयविकल्पमनूद्य दूषयति— **अथ मा भूदित्यादिना**। स्वपक्षे च यत्परमार्थतत्त्वं तत्र नैकत्वमपि; व्यवहारो मायाभूमौ यथादृष्टमेवेष्यत इति परमार्थतोऽनन्तत्वाद्यसंभवो भूषणमेव। न च जीवानन्त्यप्रदर्शनायास्मद्दर्शनं प्रवृत्तम्; किं तु प्रसिद्धं भेदमवलम्ब्य जीवस्य ब्रह्मत्वप्रतिपादनाय; न च कदाचित्सर्वशून्यता भविष्यतीति प्रसिद्धिरस्ति; "न हि कदाचिदनीदृशं जगत्"

***भाष्यभावप्रकाशिका***

भवतु संसारस्यान्तवत्त्वमित्याशङ्क्याह— **प्रधानं चेति**।

विद्यमानेयत्ताया अग्रहणेऽसर्वज्ञत्वम्, न त्वविद्यमानाया इति शङ्कते— **अथेति**। परिहरति— **तत इति**। आगमनिरपेक्षस्यानुमानाधिगतमन्तवत्त्वं निराकार्यम्; अस्माकं त्वागमबाधिततयाऽनुमानं न प्रभवतीति भावः। **तस्मादप्यसङ्गत इति**। एतदुक्तं भवति— वैशेषिक-नैयायिकानुमाने दृष्टान्तगतकर्तृप्रदातृपुरुषवत् बहुत्वशरीरेन्द्रियादिमत्त्वाद्यभिप्रेतधर्मविपरीतधर्मजातं दार्ष्टान्तिकेऽपि साधनीयमिति धर्मविशेषविपरीतसाधने। सांख्यानुमानेऽपि निरतिशयत्वमात्रं ज्ञानादीनां साध्यं चेत्, लक्षणपदार्थविषयतयाऽपि तत्त्वसिद्धेर्न सर्वज्ञत्वादिसिद्धिः। सर्वविषयव्यापित्वसाधने तु रागद्वेषादावनैकान्तिकता। आगमस्यापि शैवादेर्मूलप्रमाणाभावाद् वेदविरोधाच्चाप्रामाण्यम्, वेदप्रामाण्याङ्गीकारे च तस्येश्वरस्य यथावेदोदितस्याङ्गीकरणीयत्वमिति।।४१।। इति सप्तमं पत्यधिकरणम्।।

***न्यायनिर्णयः***

सर्वपुरुषपरिचयादृते तदज्ञाननिश्चयस्याशक्यत्वात्। तस्मान्न जीवास्तत्त्वतोऽनन्ताः, वस्तुतः परिच्छिन्नत्वादेकदेशस्थमाषादिवदिति। हेत्वसिद्धिमुद्धृत्य फलितमाह— **ततश्चेति**। कतिपयसंसारिषूक्तन्यायमवशिष्टेष्वतिदिशति— **एवमिति**। यथा बहूनामपि माषाणामेकैकापचये निखिलापचयो दृश्यते तथा क्रमेण सर्वमुक्तेरिदानीं सर्वसंसारशून्यं जगद् भवेदित्यर्थः। किंचेश्वरस्यास्मिन् पक्षे सर्वदा सर्वज्ञत्वं सर्वेश्वरत्वं च न सिध्यतीत्याह— **प्रधानं चेति**। दोषान्तरमाह— **प्रधानेति**। सिद्धे सर्वेषामाद्यन्तवत्त्वे फलितमाह— **आद्यन्तेति**।

कल्पान्तरमनुवदति— **अथेति**। वाशब्दसूचितं विकल्पद्वयमुक्त्वाऽऽद्येऽन्तवत्त्वं प्रतिपाद्य द्वितीयमवलम्ब्यासर्वज्ञतेति दूषयति— **तत इति**। आगमानपेक्षस्यानुमानसिद्धमन्तवत्त्वं दुर्वारम्। अस्माकं त्वागमगम्यत्वादानन्त्यस्य नान्तवत्त्वानुमानम्। एतेन पूर्वपक्षानुमानान्यपि प्रत्युक्तानीति मत्वोपसंहरति— **तस्मादिति**। शरीरादिराहित्यानुपपत्तिवदानन्त्याद्यभ्युपगमायोगादपीत्यपेरर्थः। अपौरुषेयश्रुतिसिद्धेश्वरस्य न निरासोऽस्तीति तार्किकविशेषणम्।।४१।। इति सप्तमं पत्यधिकरणम्।।

### *प्रकटार्थविवरणम्*

इति वृद्धा बभाषिरे; तस्माद् यथेदानीं केचिदज्ञाः केचिद् ज्ञां इति तर्कागोचर एवायं प्रपञ्चनिचयश्चकास्ति, तथाऽतीतानागतयोरपि ब्रह्मतत्त्वमद्वितीयं वेदैकवेद्यमित्यनवद्यम्।

यदपि **नैयायिकम्मन्यो**ऽभिमेने प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छल-जातिनिग्रहस्थानाख्यषोडशपदार्थकल्पनम्, तदपि दुर्निरूपम्। तथाहि— तत्र यत् तावदिदं प्रमाणलक्षणं [१]कश्चिदचीक्लृपत् ''सम्यगनुभवसाधनं प्रमाणम्'' इति; तत्र सम्यगनुभवशब्देन किं सत्यार्थप्रतिभासो विवक्षितः, उताज्ञातार्थप्रतिभासः, किं वा प्रमाभासातिरिक्तं ज्ञानम्? प्रथमे स्मृतावतिव्याप्तिः। [२]स्मृतिः संस्कारमात्रजन्या, तदतिरिक्तकारणजन्योऽनुभव इत्यप्यसाधु, स्मृतावपि मनःसंयोगादेः कारणत्वाभ्युपगमात्। स्मृत्यतिरिक्तज्ञानमनुभव इत्यपि प्रमाणेन व्यवस्थाप्यते, अथवा अप्रमाणेन? आद्ये परस्पराश्रयम्; सिद्धे प्रमाणलक्षणे तद्विशेषात् स्मृत्यतिरिक्तानुभवव्यवस्था, ततश्च प्रमाणलक्षणसिद्धिरिति। द्वितीये व्यर्थं प्रमाणनिरूपणम्, अप्रमाणादपि वस्तुव्यवस्थासिद्धेरिष्टत्वात्। किं च सत्यार्थत्वमपि प्रमाणात्, उताप्रमाणात्? आद्ये परस्पराश्रयः, द्वितीये प्रमाणबलेनैव वस्तुसिद्धिरिति नियमहानिः, तस्माल्लोकसिद्धसत्यार्थव्यपाश्रयेण लक्षणाभिधाने भवत्येव स्मृतावतिव्याप्तिः। किं च अद्वैतागमस्यैवं सति प्रामाण्यमापद्येत, द्वैतस्य सर्वस्यैवानृतत्वात्।

[३]द्वितीये धारावाहिकविज्ञाने स्यादव्याप्तिः। तत्राप्युत्तरकालावच्छिन्नमज्ञातमेव वेद्यमिति चेत्, न; कालस्य तवाप्रत्यक्षत्वात्। किं च न तावत् ज्ञाते घटे तस्याज्ञातत्वं ज्ञातुं शक्यम्; ज्ञानविरोधात्। नाप्यज्ञाते तस्मिंस्तदवच्छिन्नाज्ञातत्वावगमः स्यात्। तर्हि ज्ञाते घटे तस्य पूर्वमज्ञातत्वमवगम्यताम्। न तावत् ज्ञातत्वमात्रात् पूर्वाज्ञातत्वसिद्धिः, स्मृत्यवगतेऽदर्शनात्; नापि प्रामाणिकज्ञातत्वेन, इतरेतराश्रयात्। सिद्धेऽज्ञातत्वे प्रमाणज्ञातत्वसिद्धिः, तद्बलाच्च पूर्वाज्ञातत्वसिद्धिरिति। प्रमाणज्ञाप्यत्वे वाऽज्ञातत्वस्य प्रमाणाहेयत्वापातसंभवात्। तस्मादज्ञातत्वानिरूपणात् नाज्ञातार्थप्रतिभासः सम्यगनुभवः।

तृतीये[४] तु स्फुटं परस्पराश्रयत्वम्— सिद्धे प्रमाणशब्दाभिधेये सम्यगनुभवे तदाभाससिद्धिः; तत्सिद्धौ च तद्व्यावृत्तं ज्ञानं सम्यगनुभवः सिध्यतीति। किंच सम्यगनुभवस्य साधनं करणं विवक्षितम्, उत कारणमात्रम्? प्रथमे स्यादव्याप्तिरीश्वरज्ञाने; द्वितीये कालादावतिव्याप्तिः। किंच प्रमाणसामान्यस्येदं लक्षणम्। तत्राव्याप्तिः स्फुटैव। न हि सामान्यं साधनम्, व्यतिरेकाभावात्। अथ प्रमाणव्यक्तीनां साधारणत्वात् सामान्यलक्षणमुच्यते, तर्हीतरेतराश्रयम्। एतल्लक्षणलक्षितत्वेन व्यक्तीनां प्रमाणत्वम्। प्रमाणव्यक्तिषु च सिद्धासु तासां साधारणमिदं लक्षणं सिध्यतीति।

यच्च लक्षणान्तरम् ''यथार्थज्ञानं प्रमाणम्'' इति, तत्र यथार्थत्वमर्थमनतिक्रम्य वर्तमानत्वम्, सालम्बनत्वनियमो वा? आद्ये अव्याप्तिः। अर्थमतिक्रम्य प्रमातर्येव ज्ञानस्य वर्तमानत्वात्; अन्त्ये भ्रमादावतिव्याप्तिः। ज्ञायतेऽर्थोऽनेनेति ज्ञानम्। तत्कथमालम्बनाभावे स्यात्? अन्यथाऽतिप्रसङ्गोऽपि। तदुक्तम्— ''अन्यथेयमनालम्बा लभमानोदयं क्वचित्। हन्यादेकप्रहारेण बाह्यार्थपरिकल्पनम्।।'' इति।

यदपि ''अनुभूतिः प्रमाणम्'' इति लक्षणान्तरं तदप्यनुभूतिपदस्य सम्यक्पदस्येवार्थं विकल्प्य पराकरणीयम्; तस्माद् दुर्निरूपं साधारणप्रमाणलक्षणम्। तस्मिंश्च दुर्निरूपे तद्भेदस्य प्रत्यक्षादेः सिद्धं दुर्निरूपत्वम्। तथापि किञ्चिदुच्यते।

तत्र यदवादि— सम्यगपरोक्षानुभवसाधनं प्रत्यक्षम्। तद् द्विविधम्— प्रकाशाद्यनुग्रहादिन्द्रियार्थसंबन्धेन स्थूलार्थग्राहकमयोगिप्रत्यक्षम्। संबन्धश्च षोढा— संयोग[गात्] द्रव्यग्रहणम्, संयुक्तसमवायाद् गुणादिग्रहणम्, तद्गतसामान्यज्ञानं त्वाश्रयग्राहकैरिन्द्रियैः संयुक्त-समवेतसमवायात्; श्रोत्रसमवायात् शब्दग्रहणम्; समवेतसमवायाच्छब्दत्वज्ञानम्; विशेषणविशेष्यभावेनाभावसमवाययोर्ग्रहणम्। योगिप्रत्यक्षं त्वतीन्द्रियार्थग्राहकमिति; तदपि प्रक्रियामात्रम्, प्रमाणाभावात्, षोढा संबन्धेन प्रमितिकार्यस्य योग्यत्वाख्यसंबन्धेनाप्युपपद्यमानस्य न षोढा संबन्धबोधकता। द्रव्यादेश्च पूर्वं दुर्निरूपतोपपादनाच्चक्षुःस्पर्शनयोः द्रव्ययोः घटादिद्रव्येण सम्बन्धः संयोग एवेत्ययं मन्त्रपाठ एव। किंचासौ संयोगः स्वविशिष्टे बोधहेतुः, किं वा स्वोपलक्षिते? प्रथमे प्रत्यक्षाप्रत्यक्षयोः संयोगस्याप्रत्यक्षत्वाद्

---

१. कश्चित् = न्यायसारे भासर्वज्ञः। अग्रेऽपि न्यायसारखण्डनं द्रष्टव्यम्। २. अनुभवपदेनातिव्याप्तिवारणशङ्कामनुभवानिरुक्त्या निराचष्टे—स्मृतिरिति। ३. अज्ञातार्थप्रतिभास इति कल्पे। ४. प्रमाभासातिरिक्तं ज्ञानमिति कल्पे।

### प्रकटार्थविवरणम्

घटोऽक्षसंयुक्तोऽप्रत्यक्षः स्यात्। द्वितीये सकृत् जातः संयोगः सदोर्ध्वं बोधमादध्यात्। किं च संयुक्तसमवायमात्राद् रूपस्य चाक्षुषत्वे रसादेरपि चाक्षुषत्वप्रसङ्गः। न च तव वस्तुस्वभावातिरेकिणी योग्यताऽतीन्द्रियाऽस्ति। तस्मादविचारितसंसिद्धार्थेन्द्रियसंयोगादेरेवायोगिप्रत्यक्षं व्यवहाराङ्गमिति रमणीयम्।

योगिप्रत्यक्षं यद्यपि धर्मोत्कर्षवशाद् देशादिविप्रकृष्टमपि गोचरयति, तथापि [१]स्वार्थमेव। मार्जारादिदृष्टीनामतिशयवत्त्वेऽपि स्वार्थ एव तद्दर्शनात्; न त्वयोग्यमदृष्टादि, मानाभावात्। "प्रादात् तेषां स भगवान् दिव्यं चक्षुर्जनार्दनः" इत्यादिपुराणवचनमपि योग्यविश्वरूपादिदर्शन एवातिशयं दर्शयति। यच्चेदमनुमानम्— अदृष्टादि कस्यचित् प्रत्यक्षम्, प्रमेयत्वात्, [२]मीमांसकानामप्रत्यक्षत्वाद्वा, अस्मत्सुखादिवदिति, तदप्यमानम्, सन्दिग्धाश्रयासिद्धत्वाद्धेतोः। [३]नो खल्वदृष्टादिव्यक्तीनामनन्तानामतीन्द्रियाणामेकेन प्रमाणेन धर्मित्वेन निश्चयः शक्यः कर्तुम्। न च बहूनां प्रमाणानां संभूय धर्मिनिश्चायकत्वं संबोभाव्यते, स्वगोचरशूरत्वात् सर्वेषाम्। न चैकस्यैव धर्मित्वमिति वाच्यम्, अन्येषामपि प्रत्यक्षत्वे विशेषणवैयर्थ्यात्, अप्रत्यक्षत्वे तत्रैव व्यभिचारात्। किं च कस्यचिच्छब्दस्यानिर्धारितार्थत्वात् तद्विशेषितं प्रत्यक्षत्वमप्यप्रमितमित्यप्रसिद्धविशेषणत्वं पक्षस्य, विपक्षबाधकाभावाच्च अप्रयोजको हेतुरित्यलम्।

यच्चापरं प्रत्यक्षस्य द्वैविध्यं निरधारि— संज्ञासंज्ञिसंबन्धोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पकम्, वस्तुमात्रावभासकं निर्विकल्पकमिति; तत्र सविकल्पके तावत् संज्ञासंज्ञिसंबन्धः किं ज्ञानविषयतयोपयुज्यते, किं वा निमित्ततया? आद्ये सविकल्पकज्ञानं न प्रत्यक्षम्, [४]तस्य अचाक्षुषत्वात्, द्वितीये संज्ञासंज्ञिसम्बन्धस्यान्यत्र ज्ञातस्यैव निमित्तत्वदर्शनादिहापि तज्ज्ञानं वाच्यम्; न केवलेन मनसा संज्ञासंज्ञिसंबन्धबोधः, स्मरणमपि संस्कारोद्बोधस्यानियतत्वात् अनियतमिति। स्फीतालोकमध्यमध्यासीनस्य समनस्केन्द्रियसन्निकर्षेऽपि कदाचित् सविकल्पकोपलम्भो न संबोभूयात्, (संज्ञायां) संज्ञाया अचाक्षुषत्वात् संज्ञिदर्शनायोगात् न तद्दर्शनात् संस्कारोद्बोध इति। [निर्विकल्पक]भिन्नं ज्ञानं सविकल्पकमित्यप्यलीकम्, भेदसिद्धेः प्रतियोग्यपेक्षत्वात्, सिद्धभेदस्यैव च प्रतियोगित्वात् परस्पराश्रयापातात्; तस्माज्जलतरङ्गचन्द्रभेदावभासवत् सविकल्पं प्रत्यक्षमलीकनिर्भासम्। एवं निर्विकल्पेऽपि वस्तुमात्रावभासशब्देन वस्तुत्वसामान्यग्रहो बिवक्षितः, किं वाऽनवच्छिन्नग्रहः? नाद्योऽनवद्यः, सामान्यस्यानुगतप्रत्ययावलम्बनत्वात्, अनुगमस्य च भेदसिद्ध्यपेक्षस्य प्रथमाक्षिसन्निपातादसिद्धेः; द्वितीयोऽपि सावद्य एव, अनवच्छेदस्य सप्रतियोगिकत्वेन प्रतियोगिग्रहं विना ग्रहायोगात्। किं च निरुपचरितेऽनवच्छेदेऽप्यक्षसंयोगोऽप्यभागी, व्यावृत्त एव संयोगदर्शनात्; अव्यावृत्ते तु किं केन संयुज्यते?

एवं प्रमाणयाथात्म्यनिर्णये दुर्निरूपता। प्रत्यक्षेऽज्ञायि विस्पष्टाऽनुमाने ज्ञीप्स्यतेऽधुना।

सम्यगविनाभावेनानुभवसाधनमनुमानम्; यथा— पर्वतोऽग्निमान्, धूमवत्त्वात्, महानसवदिति। तत्र किमग्निमत्त्वमात्रानुभवसाधनमनुमानम्, किं वा पर्वतावच्छिन्नाग्निमत्त्वानुभवसाधनम्? आद्येऽग्निमत्त्वमात्रस्य प्रत्यक्षेण सिद्धत्वात्, अनुमानस्य तत्स्मारकत्वादनुमानमनुभवसाधनं न भवतीत्यव्याप्तिः। द्वितीयेऽप्यव्याप्तिरेव, पर्वतावच्छिन्नाग्निमत्त्वे धूमवत्त्वस्याविनाभावाग्रहणात् नाविनाभावेन तदनुभवसाधनम्।

एतेनेदमपास्तम्— **यदुदयनादिना** जगल्भे— द्वयमनुमानस्य स्वरूपम्, व्याप्तिः पक्षधर्मता च; तत्र व्याप्तिबलात् सामान्यसिद्धिः, पक्षधर्मताबलाच्च विशेषसिद्धिः— इति। लक्षणस्यैकैकस्मिन्नंशेऽव्यापकत्वात्, एकं द्विरूपमिति च विप्रतिषेधात्। अग्निं विना धूमस्याभवनं व्याप्तिपदार्थः, तस्याभावस्य प्रमाणस्वरूपत्वायोगात्, धर्मद्वयस्यापि भेदादिविकल्पासहत्वात्। ननु संस्काराक्षसंप्रयोगयोः प्रत्यभिज्ञासाधनत्ववत् व्याप्तिपक्षधर्मत्वयोः समुदितयोरनुमाने साधनत्वम्, तर्हि गतं लक्षणम्, सुस्थितत्वादव्याप्तेः, साधनत्वमपि न समुदितयोः तत्त्वतः समुदायस्य वस्त्वतिरिक्तस्य तवाभावात्, व्याप्तिस्मरणस्य पक्षधर्मताग्रहणस्य च क्रमभावित्वात्; संस्कारस्य चाप्रत्यक्षत्वादविनाभावसंस्कारसहितं पक्षधर्मताज्ञानमप्रत्यक्षमिति साधनादनुमानप्रसिद्धिर्बाध्येत। व्याप्तिपक्षधर्मताविशिष्टं लिङ्गमनुमानमित्यपीतरेतराश्रयग्रस्तम्।

अविनाभावोऽपि न निरूपणं सहते। तथा हि अविनाभावं व्याचचक्षे— स्वभावतः साध्येन साधनस्य व्याप्तिरविनाभावः: स द्विविधः अन्वयव्यतिरेकभेदात्; साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वयः; साधनसामान्याभावेन साध्यसामान्याभावस्य

---

१. स्वं = चक्षुरादि; अर्थः = विषयः। स्वस्य चक्षुरादेर्योग्यं विषयमेव गोचरयतीत्यर्थः। २. अदृष्टादि कस्यचित् प्रत्यक्षम्, अप्रत्यक्षत्वादित्युक्ते दृष्टान्तासिद्धिः। तद्वारणाय मीमांसकानामिति विशेषितम्। साधनवैकल्यवारणार्थं दृष्टान्ते अस्मदिति विशेषणम्। ३. उक्तानुमाने 'अदृष्टादि' इति मिलितं पक्षः, प्रत्येकं वा? आद्ये धर्मिनिश्चयः किमेकेन प्रमाणेन, उत बहुभिरिति विकल्प्य क्रमेण दूषयति— नो खल्विति। ४. तस्य = संज्ञासंज्ञिसम्बन्धस्य।

## प्रकटार्थविवरणम्

व्याप्तिः व्यतिरेक इति; तत्र स्वभावत इत्यनौपाधिकत्वं विवक्षितम्। उपाधिश्च साधनाव्यापकत्वे सति साध्यसमव्याप्तिः। तत्र व्याप्तिसिद्धावुपाधिसिद्धिः, तत्सिद्धौ च तदभावविशिष्टव्याप्तिसिद्धिरिति परस्पराश्रयसागरं कथंकारं तार्किकवराको निस्तरिष्यति?

अथोपाधिलक्षणे सहभावमात्रं व्याप्तिपदार्थः, तर्हि स एव सर्वत्रास्तु, अर्धजरतीनयस्यान्याय्यत्वात्। मैत्रतनयत्वादेरप्य-[प्या]बाधं प्रामाण्यमस्तु; दृश्यते हि पुरुषधौरेयपरिगृहीतप्रामाण्यमप्यनुमानं बाधेन जेघ्नीयमानप्रामाण्यम्, ततो नातिप्रसङ्गोऽपि उपाध्यभावेऽन्यथा तवेश्वरानुमानस्यापि भङ्गप्रसङ्गः, शरीरजन्यत्वोपाधिहततत्वात्। अतिव्यापकत्वं चात्र प्रसरीसर्ति सर्वानुमानेषु [१]तत्तत्सपक्षस्योपाधितापातात्। ननु सकर्तृकत्वशरीरजन्यत्वयोर्नास्ति व्याप्तिः; विपक्षबाधकतर्काभावात्। अथ बाधकः कथं व्याप्तावुपयुज्यते— किं व्यभिचाराशङ्कानिराकरणेन, किं वोपाधिशङ्कानिरासेन? यद्याद्यः, तर्हि उपाधिलक्षणपरीक्षणे न मनः खेदनीयम्, व्यभिचारादर्शनमात्रेण व्याप्तिग्रहणसंभवात्, बाधकाच्च शङ्कानिराससिद्धेः। यदि द्वितीयः तदा चक्रकापत्तिः— उपाधिलक्षणे सिद्धे तन्निराकरणेन बाधकस्य व्याप्त्युपयोगित्वम्, सति च तस्मिन्निह तदभावाद् व्याप्तिः; ततश्चोपाधिलक्षणसिद्धिरिति। तस्माद् यथाप्रसिद्धं साध्यसाधनसंबन्धमविनाभावं विहाय दुर्निरूपोऽविनाभाव इति।

यच्च व्याचचक्षे— साधनं लिङ्गम्; तद् द्विविधम्— दृष्टम्, सामान्यतोदृष्टं च; तत्र प्रत्यक्षयोग्यार्थानुमापकं दृष्टम्, धूमवत्, स्वभावविप्रकृष्टार्थानुमापकं सामान्यतोदृष्टम्, यथा रूपादिज्ञानं चक्षुरादेरिति— तदसाधु; अतीन्द्रियार्थेन व्याप्तिग्रहणासंभवात्, अव्याप्तस्य च गमकत्वेऽतिप्रसङ्गात्। पक्षधर्मताऽपि व्याप्तस्य स्वव्यापकस्य तत्संबन्धमात्रं गमयति, नाणुमात्रमप्यधिकम्, नो खलु शीतलाग्निसम्बन्धं पक्षधर्मताबलादपि धूमो बोधयति हिमालयस्य। तस्मात् क्रिया करणपूर्विकेति सहभावदर्शनाद् रूपादिज्ञानक्रियायाः करणमात्रं सिध्यति; चक्षुष्ट्वादिविशेषस्तु मानान्तरलब्ध एवेति न लिङ्गद्वैविध्यम्।

यदप्यनुमानद्वैविध्यं व्याख्यायि— परोपदेशानपेक्षं स्वार्थम्, परोपदेशापेक्षं परार्थम्, परोपदेशस्तु पञ्चावयवं वाक्यम्; प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः इति; तदप्यचारु; निरवयवस्य वाक्यस्य पञ्चावयवत्वानुपपत्तेः; अर्थविभागोपाधिकं सावयवत्वमिति चेत्, तर्हि नगरादिपदानामनन्तावयवत्वप्रसङ्गः; तस्मात् कल्पितमेव पञ्चावयवत्वं ते व्यवहाराङ्गम्। किं कल्पितमेव व्यवहाराङ्गं ब्रुवाणमद्वैतवादिनं विद्वेष्टि भवान्। किञ्च साध्यनिर्देशरूपप्रतिज्ञासिद्धौ साध्याधीननिरूपणसाधननिर्देशो हेतुः सिध्यति; तत्सिद्धौ च हेतोः साध्येन व्याप्तिग्रहणस्थानमुदाहरणं सिध्यति, तत्सिद्धौ च तत्र गृहीताविनाभावस्य हेतोः पक्षधर्मताख्यापकं वचनमुपनयः सिध्यति; तद्बलाच्च पक्षधर्मताविशिष्टाद्धेतोः साध्यावधारणं नाम निगमनं प्रतिपक्षप्रमाणाभावसूचकं सिध्यति, सिद्धे च निगमनबलात् प्रतिपक्षप्रमाणाभावे प्रतिज्ञासिद्धिः; सति हि प्रतिपक्षप्रमाणे तद्विरोधात्र प्रतिज्ञाऽङ्गं दरीधर्ति। तस्मात् पञ्चानामप्यवयवानां परस्परायत्तसिद्धिकत्वेन कल्पनामात्रत्वादवयव्यनुमानमपि ते कल्पितमेव व्यवहाराङ्गम्।

यच्च हेतोस्त्रैविध्यं व्यधायि— पक्षव्यापकः सपक्षवृत्तिरविद्यमानविपक्षः केवलान्वयी, पक्षव्यापकोऽविद्यमानसपक्षः विपक्षाद् व्यावृत्तः केवलव्यतिरेकी; पञ्चरूपोऽन्वयव्यतिरेकी; रूपाणि तु पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षाद् व्यावृत्तिः, अबाधितविषयत्वं असत्प्रतिपक्षत्वं, चेति, तदपि चक्रकक्रकचचूर्णीकृतं न प्रमाणं चरीकर्ति। सिद्धे पक्षे तद्व्यापकत्वं हेतुरूपं सिध्यति। तथा-भूतरूपविशिष्टाच्च हेतोः साध्यसिद्धिः। तत्सिद्धौ च साध्यधर्मविशिष्टो धर्मी पक्षः सिध्यति, सिद्धे च सपक्षे तत्र सत्त्वं हेतुरूपं सिध्यति, तथाभूताच्च हेतोः साध्यसिद्धिः, तत्सिद्धौ च साध्यसमानधर्मा धर्मी सपक्षः सिध्यति। एवं सर्वत्र योज्यम्।

यदपि हेतुलक्षणं परीक्ष्य हेत्वाभासपरीक्षणम्— हेतुलक्षणरहिता हेतुवदवभासमाना हेत्वाभासाः असिद्धविरुद्धानैकान्तिक-कानध्यवसितकालात्ययापदिष्टप्रकरणसमाः। तत्र अनिश्चितपक्षवृत्तिरसिद्धः। पक्षविपक्षयोरेव वर्तमानो विरुद्धः। पक्षत्रयवृत्तिरनैकान्तिकः। साध्यासाधकः पक्ष एव वर्तमानोऽनध्यवसितः। प्रमाणबाधिते प्रतिज्ञातार्थे वर्तमानो हेतुः कालात्ययापदिष्टः। स्वपरपक्षसिद्धौ त्रिरूपो हेतुः प्रकरणसमः— इति, तदपि परस्पराश्रयपराहतम्। सिद्धे हेतुलक्षणे तदाभाससिद्धिः, तत्सिद्धौ च तदाभासव्यावर्तनेन हेतुलक्षणसिद्धिरिति। तथा सिद्धे पक्षे तत्रानिश्चितवृत्तिरसिद्धः सिध्यति, तद्वृत्तौ [तत्सिद्धौ] च तद्व्यावृत्तहेतुबलात् पक्षसिद्धिरित्यूह्यं सर्वत्र। कालात्ययापदिष्टे च किं प्रतिज्ञातार्थ एव बाधकस्य विषयः, किं वा तद्विरुद्धः? प्रथमे न बाधः, रूपज्ञानयोरिव; द्वितीयेऽपि

१. 'तत्तत्सपक्षत्वस्य' इति वेदान्ततत्त्वालोके पाठः।

## प्रकटार्थविवरणम्

तथा; न ह्येकत्रैव गगने विहगतदभावज्ञानयोः विरुद्धार्थयोरपि स्वगोचरशूरयोः बाध्यबाधकभावो दृष्टः। तस्मान्न ज्ञानगोचरस्य ज्ञानान्तरेणापहारो निरूपणं सहते। बहु चात्र वक्तव्यमस्ति, किं तु ग्रन्थगौरवभयादुपरम्यते। तदेवं प्रत्यक्षानुमानयोर्दुर्निरूपत्वे मानान्तरस्यापि दुर्निरूपत्वं सिद्धमेव, तस्य तन्मूलत्वात्।

ननु त्वयाऽपि प्रमाणेनैव व्यवह्रियते, किं वा न? अहो मोहमहिमा! यदद्वैतवादिनं प्रमाणाप्रमाणविभागं निराकुर्वाणं परस्परायत्तसिद्धिकं तमेवोरीकृत्य पृच्छति। किमत्र प्रमाणमिति च प्रश्नानुपपत्तिः, बोधकत्वसिद्ध्यसिद्ध्योरन्यथा न प्रमाणदृष्टं[1] स्यात्। तात्त्विकं[कत्वं] तु लोकसिद्धैः वादिसिद्धैश्च न्यायैः पराक्रियते। नो खल्वालोकः स्वयं साध्यतया च [सत्यतया] च परिगृहीत एवान्धकारध्वंसं प्रयोजयति।

नन्वनुमानं ते बोधकं नो वा? बोधकं चेत्, तत्त्वावेदकमेवाद्वैतागमवत्, न चेत्, न तेन व्यवहारोऽपि। तत्किमिदानीं प्रतिवादिवाक्यमपि ते तत्त्वावेदकम्? न चेत् ततो बोधस्ते न व्यवहारः स्यात्। अद्वैतागमस्य तु स्वरूपसत्यतारहितस्यापि तत्त्वावेदकत्वं तदर्थस्य बाधाविषयत्वेन व्यवह्रियते। तस्मादद्वैतवादिभिः द्वैतिनां [2]तुल्यगतित्वं हंसेनेव टिट्टिभस्य। तदेवं प्रमाणपदार्थस्य दुर्निरूपत्वात्, अनवस्थाभिया च प्रमाणं विनैव तत्सिद्धेरेवेष्टत्वात् वस्तुसिद्धिः प्रमाणाधीनैवेति नैयायिकम्मन्यस्य कुलधर्म एवेति स्थितम्।

प्राक् प्रमेयस्य दुर्निरूपता प्रादर्शि। यच्च प्रमाविषयः प्रमेयमिति लक्षणम्; तद् दुर्निरूपम्, परस्पराधीननिरूपणत्वात्। सिद्धे प्रमेये यथार्थज्ञानं प्रमासिद्धिरिति [प्रमा सिद्ध्यति], तत्सिद्धौ च तद्व्यावृत्तप्रमेयसिद्धिः इति। प्रमाणप्रमेययोः दुर्निरूपत्वे सत्युत्तरेऽपि चतुर्दशपदार्थास्तदन्तर्भूता दुर्निरूपा एव भवन्ति; तथाप्यधिकं किंचिदुच्यते— यत्तावत् "अनवधारणं ज्ञानं संशयः" इति लक्षणम्, तत्पराहतम्, ज्ञानं ह्यवधारणमेव। यद्येवकारानुच्चारणमनवधारणं तदा घटोऽयमित्यादिज्ञानेऽतिव्याप्तिः। व्याप्त्य[व्याप्या]ङ्गीकारेण व्यापकभावप्रसञ्जन[नेन] व्याघातोद्भावनं तर्कः। स चानुमानाङ्गभूत इत्यपि परस्पराश्रयग्रस्तम्। सिद्धे तर्कस्याङ्गत्वेऽनुमानसिद्धिः। तत्सिद्धौ च तस्य तर्कोऽङ्गं सिध्यतीति। बाधकाभावादप्रयोजकशब्दाभिधेयशङ्कोदये सिद्धे तन्निरासेन बाधकस्योपयोगः, सति च तस्मिन् तदभावात् शङ्कोदय इति च। व्याप्यारोपाद् व्यापकारोपस्तर्क इत्यपि साङ्ग[प्रसङ्ग]नुमानेऽतिव्यापकम्; व्याप्यव्यापकयोश्च परस्पराश्रयत्वदोषदुष्टत्वेन न क्वापि प्रमितिरिति सर्वानुमानानां तर्कत्वप्रसङ्गः; कल्पितादपि वस्तुसिद्धिरिति मायामतापातोऽपि। प्रशिथिलमूलत्वमनिष्टापादनस्येष्टापादनरूपत्वं विपर्यय[या]पर्यवसायित्वमाश्रयहीनत्वं च तर्कदूषणमितीतरेतराश्रयदोषग्रस्तम्। एतद्दोषरहित[हितत्वे] तर्कान्तरस्य गमकत्वसिद्धिः, तद्बलाच्चैतद्दोषतद्भाव[3][षाभाव]सिद्धिरिति।

गुरुशिष्यभावेन पक्षप्रतिपक्षपरिग्रहेण वा प्रमाणतर्काभ्यां यत्र साधनोपालम्भौ क्रियेते स तत्त्वनिर्णयावसानो वादो वीतरागकथा कथ्यते। यत्र विजिगीषुः विजिगीषुणा सह लाभपूजाख्यातिकामो जयपराजयार्थं प्रवर्तते, वीतरागो वा तत्त्वज्ञानसंवरणार्थम्, स वादिप्रतिवादिसभापतिप्राश्निकाङ्गः छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। परस्खलितमात्रपर्यन्तः स एव प्रतिपक्षस्थापनाहीनो वितण्डेति। तदेतत् कथात्रयं तार्किकस्य दुर्निरूपम्, वादिप्रतिवादिविभागस्य दुर्निरूपत्वात्, निष्प्रयोजनं च, कथाङ्गीकारमन्तरेण कथायां विप्रतिपन्नस्य प्रतिबोधनवत् सद्युक्तिभिरेव विप्रतिपन्नस्य प्रतिबोधसंभवात्, लौकिकविवादेषु कथाङ्गीकारमात्रे[कारमन्तरे]णैव जयफलदर्शनाच्च।

वक्तुरभिप्रायादर्थान्तरपरिग्रहेण प्रतिषेधश्छलम्, यथा 'नवकम्बलोऽयं माणवक' इत्युक्ते 'कुतोऽस्य नव कम्बला' इति। तच्च न सदुत्तरमभिप्रायापरिज्ञानादित्यवादि। तत्रोच्यते— भवेदिदमसदुत्तरम्, यदि वक्त्रभिप्रायः शब्दार्थः स्यात्, न तु भवति, बालेन स्वव्यवहारेऽनाकलितत्वात्, वक्त्रभिप्रायस्याप्रवर्तकतया स्वोपमानेन श्रोतुरपि तमनुमाय तत्र सङ्गतिग्रहणायोगात्, अपरथा मेरुं विवक्षन् सागरं ब्रूयात्, प्रतिपत्तिरपि ततो भवेत्, अनवच्छिन्नस्यातिप्रसङ्गित्वात् तदवच्छिन्नत्वे स एवास्तु, अपदार्थत्वाच्च। मानान्तरानुसारेण[सरणे] च तत एव सिद्धेः। एतेन लिङ्गत्वमुक्तम्[4]। अतः शाब्दे व्यवहारे यथाशब्दं परिस्फूर्तिकेऽर्थे युक्त एवाक्षेपः। न तु वक्तुरभिप्रायानुसारेण दूषणभूषणे; अपरथा यो गिरेरग्निमत्तां साधयति, तस्य तद्गतेनैव अग्निनाऽग्निमत्त्वमभिप्रेतमिति

---

१. 'न प्रमाणं पृष्टं स्यात्' इति वेदान्ततत्त्वालोके दृश्यते। २. 'न तुल्यगतित्वम्' इति वेदान्ततत्त्वालोके पाठः।
३. 'सद्भावसिद्धिः' इति पाठः वे.त.। ४. शब्दस्य लिङ्गत्वं प्रत्युक्तमित्यर्थः।

**प्रकटार्थविवरणम्**

साध्यवैकल्यं प्रसज्येत। अतोऽभिप्रायापरिज्ञानान्न च्छलोक्तिरसदुत्तरम्। यदि मानान्तरविरुद्धाभिधानत्वेन छलत्वं, तदाऽतिव्याप्तिः 'वह्निरनुष्ण' इत्यादावित्यलं विलोकनेन।।

यच्च जातिलक्षणम्— प्रयुक्ते हेतौ समीकरणाभिप्रायेण प्रसङ्गो जातिरिति; तदतिव्याप्तिग्रस्तम्, पर्वतो वह्निमान्, धूमवत्त्वात् इत्यत्र 'धूमवत्त्वं भवतु, वह्निमत्त्वं च न भविष्यति, किं बाधकम्?' इत्युक्ते वह्निमत्त्वाभावेऽधूमवत्त्वप्रसङ्गो गङ्गातरङ्गदेशवत् इत्ययं बाधकस्तर्कः प्रतिदृष्टान्तसमीकरणाभिप्रायेण प्रसङ्गो भवतीत्यतिव्याप्तिः। गवादिजातौ च न वर्तत इत्यव्याप्तिः। अथालौकिकी जातिः अत्र लक्ष्या, परस्पराश्रयम्; न चेत्, प्रमाणं वाच्यम्। संप्रतिपन्नेन हि प्रमाणेन विप्रतिपन्नो बोधनीयः। केवलव्यतिरेकी चाप्रसिद्धविशेषणत्वादिदोषदुष्ट इत्यगादि। ये च साधर्म्यसमादयो जातिभेदा असदुत्तरत्वेनोदाहृताः— शब्दोऽनित्यः, कृतकत्वात्, घटवदित्युक्ते यद्यनित्यघटसाधर्म्यात् कृतकत्वादनित्य इष्यते, तर्हि नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यः किं नेष्यते, अविशेषादिति साधर्म्यसमस्योदाहरणम्; यदि नित्याकाशवैधर्म्यात् कृतकत्वादनित्य इष्यते शब्दः, तर्ह्यनित्यघटवैधर्म्यात् अमूर्तत्वान्नित्यः किं नेष्यते वैधर्म्यसाम्यादिति वैधर्म्यसमस्योदाहरणम्। तत्र किं साधर्म्यसाम्यादिमात्रेणासदुत्तरत्वम्, किं वा व्यभिचारदर्शनमानान्तरविरोधादिलक्षणकारणान्तरवशेन? नाद्यः, बाधकादर्शनात्, द्वितीये तदेवाभिधीयताम्, किमनेनाकिञ्चित्करेण साधर्म्यसमादिपरिभाषाकरणेन? नो खलु जल्पे विमलकलेवराणां वाङ्मात्रेण व्यामोहः संभवतीति। यच्चावोचत्— स्वपक्षव्याघातकरमुत्तरं जातिः, येन हि प्रकारेण परपक्षः प्रतिषिध्यते, प्रतिषेधोऽपि तेनैव प्रकारेण न सिध्यतीति। तत्र किं तत्त्वतः प्रतिषेधो न सेधिष्यते, किं वा व्यवहारतोऽपि? प्रथमे नाद्वैतवादिनः किमपि जात्युत्तरं तावत् प्रसरीसर्ति; तस्य हि नाद्वैतातिरिक्तं तत्त्वमिति मतम्। ततः प्रतिषेधस्यापि दुर्निरूपत्वं न स्वपक्षव्याघातकरम्। व्यवहारस्तु स्वप्नवद् भविष्यति। स्वप्नवदेव च प्रतिषेधस्यातात्त्विके[कत्वे]ऽपि न प्रतिषेध्यस्य सत्यत्वापातः। पूर्ववदेव चात्रापि प्रमाणाभावो वेदितव्यः। किं च अनुकूलतर्काभावादप्रयोजकत्वशङ्कोत्तरेऽतिव्याप्तिः। शक्यते हि वक्तुम्—बाधकस्तर्को मा भूत्, अप्रयोजकत्वं च न भविष्यति, किं बाधकमिति; निर्बीजशङ्कावज्रस्य सर्वत्र पातसंभवादिति।

यच्च पराजयनिमित्तं निग्रहस्थानमप्रतिपत्तिविप्रतिपत्त्योः विकल्पानन्त्येनानेकप्रकारम्। स्वप्रतिज्ञातविपरीतानुज्ञा प्रतिज्ञाहानिः। अविशेषेण प्रतिज्ञातस्य परेण प्रतिषेधे तत्रैव विशेषणकरणं प्रतिज्ञान्तरं हेत्वन्तरवत्। प्रतिज्ञाहेत्वोः विरोधः [प्रतिज्ञाविरोधः]। पक्षप्रतिषेधे प्रतिज्ञातार्थापलापः प्रतिज्ञासंन्यासः। प्रतिज्ञानुपयोग्यभिधानमर्थान्तरम्। वर्णक्रमनिर्देशवत् निरर्थकम्। त्रिरभिहितमपि परिषत्प्रतिवादिभ्यामविज्ञातमविज्ञातार्थम्। शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रापि अनुवादात्, अर्थादापन्नस्य स्वशब्देन पुनरभिधानं च। विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणं नाम प्रतिवादिनो निग्रहस्थानम्। [१]कथमप्यभ्युपगम्य तूष्णींभावोऽप्रतिभा वादिप्रतिवादिनोर्निग्रहस्थानम्। कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः। स्वपक्षे दोषमभ्युपगम्य परपक्षे दोषप्रसञ्जनं मतानुज्ञा। अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः। सिद्धान्तमभ्युपगम्यानियमेन कथाप्रसङ्गोऽपसिद्धान्तः। हेत्वाभासाश्च यथोक्ताः। साधनानुपयोगित्वेन दुर्वचनकपोलवादनादिकं च। नियमकथायां त्वपशब्दादिकमपीति।

तत्रोच्यते—क्वेदं मोहकास्त्रं भवताऽभ्यासि? न तावल्लोके, बन्धनागारादावेव तत्र निग्रहस्थानशब्दप्रयोगात्, तस्य च प्रतिज्ञाहान्यादौ योग्यानुपलब्धेरेवासंभवः। न च मानान्तरं किमप्यत्र पश्यामः। पराजयस्य पापफलत्वाच्च तत्रातिव्याप्तिः स्फुटैव। प्रतिज्ञाहान्यादिना सिद्धे पराजये तन्निमित्तत्वात् तन्निग्रहस्थानं सिध्यति, तस्य च निग्रहस्थानत्वात् पराजयसिद्धिरिति परस्पराश्रयः।

निग्रहस्थानवैतथ्यान्न ममास्ति पराजयः। निरूपणासमर्थत्वात् सिद्धोऽन्यस्य पराजयः।।

यच्च कथाऽशक्तिसूचकं निग्रहस्थानमिति लक्षणान्तरम्, तदपि दुःस्वप्नादावतिव्याप्तिपराहतम्। तदेवं नैयायकपरिकल्पितपदार्थस्यापि दुर्निरूपत्वात् निर्विघ्नोऽद्वैतवादः।।इति सप्तमं पत्यधिकरणम्।।

१. 'कथामभ्युपगम्य' इति पाठः वे.त.।

## ८।।उत्पत्त्यसंभवाधिकरणम्।।सू. ४२-४५।।

## उत्पत्त्यसंभवात्।।४२।।

**येषामप्रकृतिरधिष्ठाता केवलनिमित्तकारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यातः। येषां पुनः प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यायते। ननु श्रुतिसमाश्रयणेनाप्येवंरूप एवेश्वरः प्राङ्निर्धारितः–प्रकृतिश्चाधिष्ठाता चेति। श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः। तत् कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति। उच्यते– यद्यप्येवंजातीयकोंऽशः समानत्वान्न विसंवादगोचरो भवति, अस्ति त्वंशान्तरं विसंवादस्थानमित्यतस्तत्प्रत्याख्यानायारम्भः।**

**तत्र भागवता मन्यन्ते– भगवानेवैको वासुदेवो निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वम्, स चतुर्धाऽऽत्मानं**

### *शारीरकन्यायसंग्रहः*

**उत्पत्त्यसंभवात् ।।४२।। न च कर्तुः करणम् ।।४३।। विज्ञानादिभावे वा तदप्रतिषेधः ।।४४।। विप्रतिषेधाच्च ।।४५।।** वासुदेवस्यैकस्यैव ज्ञानैश्वर्यबलवीर्यशक्तितेजोभिः संपन्नस्य जगन्निमित्तोपादानकारणतया सर्वात्मभावेनावस्थानाङ्गीकरणात्, वैदिककर्मानुष्ठानपूर्वमेव तान्त्रिककर्मानुष्ठानाङ्गीकारात् "तं यथा यथोपासते" इति श्रुतिमूलनानाविधवासुदेवादिमूर्त्यर्चनादिनिमित्ताभ्युदयनिः-श्रेयसाङ्गीकरणाच्च प्रतिपाद्यैकदेशवाक्यप्रामाण्ये सत्यपि जीवोत्पत्त्यादिवाक्यस्याप्रामाण्यं युक्तम्, प्रमितावन्तरवाक्ययोरितरेतरानपेक्षत्वात्, इदंरजतज्ञानांशद्वयवत् इति योगस्मृत्यधिकरणन्यायेन गतमेतत्। अत्रायं विशेषः। योगस्मृत्येकदेशस्य कर्तुरिव जीवोत्पत्त्यादिपञ्चरात्रैकदेशकर्तुः वासुदेवस्य जगत्प्रकृतेः श्रुत्यैव निरवद्यसर्वज्ञत्वेनाभिमतस्य विप्रलम्भभ्रान्तिकल्पनायोगात्, पाञ्चरात्रं प्रति कर्तृत्वप्रसिद्ध्यपलापे सर्वप्रसिद्ध्यपलापप्रसङ्गात्, इतिहासपुराणप्रसिद्धजगत्स्थितिप्रयोजनस्य बौद्धाद्यागमप्रणयनस्य विप्रलम्भकत्ववद् विप्रलम्भकत्वकल्पनायां प्रमाणाभावाच्च जीवोत्पत्त्यादिवाक्यानां प्रामाण्ये प्राप्ते—

सर्वज्ञतया भ्रान्त्यभावेऽपि वेदविरुद्धजीवोत्पत्त्यादिप्रणयनान्यथानुपपत्त्यैव प्राणिनां विरुद्धप्रतिपत्तिद्वारेण दुष्कृतफलप्रदानाय विप्रलम्भकत्वं कल्प्यते। अथवा जीवोत्पत्तिश्रुतीनामिव तदुत्पत्तिस्मृतीनामप्यन्यपरत्वं नीयते, अनुत्पत्तिश्रुतिविरोधात् इति।।

**इति भगवत्प्रकाशात्मविरचिते शारीरकन्यायसंग्रहे द्वितीयाध्यायस्य द्वितीयः पादः**

### *प्रकटार्थविवरणम्*

**उत्पत्त्यसंभवात्।।** अधिकरणसङ्गतिमाह— **येषामिति**। अधिकरणान्तरमाक्षिप्य समाधत्ते— **नन्वित्यादिना**।

वेदविरुद्धांशापाकरणायाधिकरणारम्भमुक्त्वाऽधुना पञ्चरात्रसिद्धान्तिनां मतमाह— **तत्र भागवता इत्यादिना**। व्यूहोऽवस्था;

### *भाष्यभावप्रकाशिका*

**उत्पत्त्यसंभवात्।।४२।।** वृत्तं कीर्तयति— **येषामप्रकृतिरिति**। अधिकरणतात्पर्यं दशयति— **येषां पुनरिति**। विसंवादांशं

### *न्यायनिर्णयः*

माहेश्वरमतनिरासानन्तरं वैष्णवमतं निरस्यति— **उत्पत्तीति**। यद्वा पञ्चपदार्थवादिनि निरस्ते चतुर्व्यूहवादिनं निरस्यति— **उत्पत्तीति**। वृत्तमनूद्याधिकरणतात्पर्यमाह— **येषामिति**। अधिकरणारम्भमाक्षिपति— **नन्विति**। तथापि भागवती स्मृतिरप्रमाणत्वादनादर्तव्येति वक्तुमधिकरणमित्याशङ्क्याह— **श्रुतीति**। तत्प्रामाण्ये फलितमाह— **तदिति**। वेदाविरुद्धांशमुपेत्य विरुद्धांशनिरासायाधिकरणमित्याह— **उच्यत इति**। समानत्वादित्यत्र श्रुतिस्मृत्योरिति शेषः।

जीवाभिन्नाद् ब्रह्मणो जगत्सर्गवादी समन्वयो जीवोत्पत्त्यादिविषयपञ्चरात्रराद्धान्तेन विरुध्यते न वेति तत्प्रामाण्याप्रामाण्याभ्यां संदेहे पूर्वपक्षमाह— **तत्रेति**। भागवतमतनिरासद्वारा समन्वयदृढीकरणात् पादादिसंगतयः। पूर्वपक्षे भागवतमतस्य मानत्वात्

**प्रविभज्य प्रतिष्ठितो वासुदेवव्यूहरूपेण संकर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेणानिरुद्धव्यूहरूपेण च। वासुदेवो नाम परमात्मोच्यते। संकर्षणो नाम जीवः। प्रद्युम्नो नाम मनः। अनिरुद्धो नामाहंकारः। तेषां वासुदेवः परा प्रकृतिः, इतरे संकर्षणादयः कार्यम्। तमित्थंभूतं परमेश्वरं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत इति।**

**तत्र यत्तावदुच्यते योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्धः परमात्मा सर्वात्मा स आत्मनाऽऽत्मानमनेकधा व्यूह्यावस्थित इति, तन्न निराक्रियते, 'स एकधा भवति त्रिधा भवति' (छा. ७।२६।२) इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधाभावस्याधिगतत्वात्। यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्यचित्ततयाऽभिप्रेयते, तदपि न प्रतिषिध्यते। श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात्। यत्पुनरिदमुच्यते वासुदेवात् संकर्षण उत्पद्यते, संकर्षणाच्च प्रद्युम्नः, प्रद्युम्नाच्चानिरुद्ध इति। अत्र ब्रूमः– न वासुदेवसंज्ञकात् परमात्मनः संकर्षणसंज्ञकस्य जीवस्योत्पत्तिः संभवति, अनित्यत्वादिदोषप्रसङ्गात्। उत्पत्तिमत्त्वे हि जीवस्यानित्यत्वादयो दोषाः प्रसज्येरन्। ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात्। कारणप्राप्तौ कार्यस्य प्रविलयप्रसङ्गात्। प्रतिषेधिष्यति चाचार्यो जीवस्योत्पत्तिम्– 'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः' (ब्र. सू. २।३।१७) इति।**

### *प्रकटार्थविवरणम्*

अभिगमनं भगवतो नारायणस्याराधनाकाङ्क्षया पञ्चरात्रतन्त्रविदामाचार्यं प्रति; उपसन्नानां तदनन्तरं तदुपदिष्टदीक्षोपादानं; तदनन्तरमिज्या पूजा; स्वाध्यायोऽष्टाक्षरादिजपः; योगो ध्यानम्; तैर्भगवन्तं यावज्जीवमाराध्य ध्वस्ताविद्यादिदोषो नारायणमेव प्राप्नोतीति मन्यन्त इत्यर्थः। तत्राविरुद्धमंशमाह— **तत्र यत्तावदिति**। विरुद्धमंशमुद्भाव्य तन्निराकरणे सूत्रं योजयति— **यत्पुनरित्यादिना**। न्यायोपबृंहिताजत्वश्रुतिविरोधात् जीवोत्पत्तिस्मृतिरप्रमाणम्; अतो जीवाभिन्नाद् ब्रह्मणो जगत्सर्गं वदतः समन्वयस्य नार्थात् पञ्चरात्रसिद्धान्तेन विरोधोऽस्तीति सिद्धान्तः।

### *भाष्यभावप्रकाशिका*

दर्शयितुं तत्पक्षमनुवदति— **तत्र भागवता इति**। अभिगमनम् प्रयतस्य देवगृहगमनम्। उपादानम् पूजाद्रव्याणामार्जनम्। इज्या पूजा। स्वाध्यायः जपः। योगः ध्यानम्। अनिरस्यमंशमाह— **तत्र यत्तावदिति**। विमतमंशमाह— **यत्पुनरिति**। **अनित्यत्वादीति**। जीवस्य कारणवत्त्वेनानित्यत्वेऽकृताभ्यागमादिप्रसक्तेः स्वर्ग-नरकापवर्गाभावान्नास्तिक्यमित्यर्थः। अयुक्तियुक्ता च जीवोत्पत्तिरित्याह— **प्रतिषेधिष्यति चेति**।

### *न्यायनिर्णयः*

तद्विरोधे समन्वयासिद्धेरभेदवादासिद्धिः। सिद्धान्ते तस्य भ्रमत्वात् तद्विरोधस्याभासतया समन्वयसिद्ध्या तत्सिद्धिः। तत्र मूर्त्यन्तरं निराकर्तुं वासुदेव इत्युक्तम्। तस्य सावयवत्वं निरस्यति— **निरञ्जनेति**। कथं तर्हि शास्त्रे मूर्तिभेदः, तत्राह—**स इति**। व्यूहेषु भगवतोऽवस्थाविशेषेष्ववान्तरभेदमाह— **वासुदेव इति**। तेष्वेव प्रकृतिविकृतित्वमाह— **तेषामिति**। सविशेषं शास्त्रार्थमुक्त्वा सहेतुं पुरुषार्थमाह— **तमिति**। यथोक्तव्यूहवन्तं सर्वप्रकृतिभूतं निरञ्जनज्ञानरूपं परमात्मानमिति यावत्। वाक्कायचेतसामवधानपूर्वकं देवतागृहगमनमभिगमनम्। पूजाद्रव्याणामर्जनमुपादानम्। इज्या पूजा। स्वाध्यायो जपः। योगो ध्यानम्।

परपक्षमनुभाष्य तस्मिन्नविरुद्धमंशमाह— **तत्रेति**। तदनिरासे हेतुमाह— **स इति**। अविरुद्धमंशान्तरमाह— **यदपीति**। तदनिषेधे हेतुमाह— **श्रुतीति**। 'समाहितः श्रद्धावित्तो भूत्वा' इत्याद्या श्रुतिः 'मत्कर्मकृन्मत्परमो मद्भक्तः' इत्याद्या स्मृतिः। निरस्यांशमाह— **यदिति**। तत्र सूत्रमवतार्य व्याकरोति— **अत्रेति**। हेतुं विवृणोति— **उत्पत्तीति**। आदिशब्देनाकृताभ्यागमकृतप्रणाशस्वर्गनरकापवर्गाभावा गृह्यन्ते। जीवस्योत्पत्तिमत्त्वे दोषान्तरमाह— **ततश्चेति**। कार्यस्यापि जीवस्य कारणभगवदाप्तिमोक्षे काऽनुपपत्तिः, तत्राह—**कारणेति**। इतश्च न जीवोत्पत्तिरित्याह— **प्रतिषेधिष्यतीति**। जीवोत्पत्त्ययोगे तदर्थपञ्चरात्रराद्धान्तस्य

**तस्मादसंगतैषा कल्पना।।४२।।**

## न च कर्तुः करणम्।।४३।।

**इतश्चासंगतैषा कल्पना। यस्मान्न हि लोके कर्तुर्देवदत्तादेः करणं परश्वाद्युत्पद्यमानं दृश्यते। वर्णयन्ति च भागवताः कर्तुर्जीवात् संकर्षणसंज्ञकात् करणं मनः प्रद्युम्नसंज्ञकमुत्पद्यते; कर्तृजाच्च तस्मादनिरुद्धसंज्ञकोऽहंकार उत्पद्यत इति। न चैतद् दृष्टान्तमन्तरेणाध्यवसातुं शक्नुमः। न चैवंभूतां श्रुतिमुपलभामहे।।४३।।**

## विज्ञानादिभावे वा तदप्रतिषेधः।।४४।।

**अथापि स्यात्– न चैते संकर्षणादयो जीवादिभावेनाभिप्रेयन्ते। किं तर्हि? ईश्वरा एवैते सर्वे ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिरैश्वर्यैर्धर्मैरन्विता अभ्युपगम्यन्ते– 'वासुदेवा एवैते सर्वे निर्दोषा निरधिष्ठाना निरवद्याश्चे'ति।**

### *प्रकटार्थविवरणम्*

**न च कर्तुः करणम्**।। एवं जीवोत्पत्तिं निराकृत्य यज्जीवान्मनस उत्पत्तिं वर्णयन्ति, तन्निराकरोति— **न च कर्तुः करणमिति**। सिद्धकरणप्रयोक्ता हि कर्ता प्रसिद्ध इत्यर्थः। मनोव्यतिरेकेण मनउत्पादनादिज्ञानसंभवे हि व्यर्थं तदुत्पादनम्।

**विज्ञानादिभावे वा तदप्रतिषेधः**।। यदुक्तं संकर्षणादीनामुत्पत्तिर्न संभवतीति, नासौ दोषः, किं तु गुण एवेत्याह— **अथापि स्यादित्यादिना**। ज्ञानैश्वर्ययोः शक्तिरन्तःसामर्थ्यम्; बलं शरीरसामर्थ्यम्; वीर्यं शौर्यम्; तेजः प्रागल्भ्यम्। तेषामत्र

### *भाष्यभावप्रकाशिका*

**न च कर्तुः करणम्**।।४३।। **न चैतद् दृष्टान्तमन्तरेणेति**। यद्यपि शिल्पवित् परशुं कृत्वा पलाशं छिनत्ति; तथापि न तस्यासावुपादानम्। एवं सङ्कर्षणस्य मनोलक्षणकरणद्रव्योपादानत्वं न स्यात्। किञ्च सङ्कर्षणोऽकरणः प्रद्युम्नाख्यं मनः करणं कथं कुर्यात्? अकरणस्य वा करणसामर्थ्येऽकरण एव सकलं कुर्यात्, तत्र किं करणेनेति भावः। अनुमानवत् श्रुतिरपि नास्तीत्याह— **न चैवमिति**।

**विज्ञानादिभावे वा तदप्रतिषेधः**।।४४।। **वासुदेवा एवेति**। निर्दोषाः=अविद्यादिरहिताः। निरधिष्ठानाः=निरुपादानाः, अत

### *न्यायनिर्णयः*

भ्रान्तत्वान्न तद्विरोधः समन्वयस्येत्युपसंहरति— **तस्मादिति**।।४२।।

जीवजन्म निरस्य मनसस्ततो जन्म निरस्यति— **न चेति**। चकारार्थमाह— **इतश्चेति**। संकर्षणाज्जीवान्मनसो जन्मकल्पना नेत्यत्रेतःशब्दगृहीतं हेतुं स्फुटयति— **यस्मादिति**। सिद्धकरणप्रयोक्ता कर्तेति प्रसिद्धिद्योतको हिशब्दः। करणस्य कर्तुरुत्पत्त्यभावेऽपि भागवतकल्पना कथमसंगतेति तद् वक्तुं तत्कल्पनामनुवदति— **वर्णयन्तीति**। लोके करणस्य कर्तुरुत्पत्त्यभावेऽपि कथं परेषां कल्पना न कल्पते स्मृतिमूलत्वादित्याशङ्क्य तन्मूलं प्रत्यक्षमनुमानं श्रुतिर्वेति विकल्प्याद्यौ प्रत्याह— **न चेति**। न तावदस्याः स्मृतेरध्यक्षं मूलं, जीवान्मनोजनौ परस्येन्द्रियसंनिकर्षे नियामकाभावात्। न द्वितीयः। दृष्टान्तं विनाऽनुमानायोगात्। यद्यपि बहुविधविद्यापर्यवदातोऽपि विधाय करे कठोरधारं कुठारं तेन निष्ठुरमपि काष्ठं छिनत्ति तथापि न तस्यासावुपादानम्। तथा संकर्षणोऽपि प्रद्युम्नस्य नोपादानं स्यात्। न च संकर्षणस्याकरणस्य प्रद्युम्ननिर्माणम्। इतरथा करणमन्तरेणैव सर्वनिर्माणात् तत्कल्पनावैयर्थ्यादिति भावः। तृतीयं दूषयति— **न चेति**।।४३।।

वासुदेवान्न संकर्षणस्य जन्म, नापि संकर्षणात् प्रद्युम्नस्येत्यत्रेष्टापत्तिमाशङ्क्याह— **विज्ञानादीति**। सूत्रव्यावर्त्यमुत्थापयति— **अथापीति**। जीवादित्वेनेष्टानां संकर्षणादीनां पूर्वस्मात्पूर्वस्माज्जन्माभावेऽपीति यावत्। तदेव दर्शयति— **न चेति**। तर्हि केन प्रकारेणाभिप्रेयमाणत्वं, तदाह— **किमिति**। सर्वेषामीश्वरत्वे हेतुमाह— **ज्ञानेति**। ज्ञानं चैश्वर्यं च तयोः शक्तिरान्तरं सामर्थ्यम्। बलं शारीरं सामर्थ्यम्। वीर्यं शौर्यम्। तेजः प्रागल्भ्यम्। ते खल्वैश्वरा धर्माः; तैरन्विता यतः संकर्षणादयस्तस्माद् युक्तं तेषां सर्वेषामीश्वरत्वमित्यर्थः। तत्र भागवतोक्तिमाह— **वासुदेवा इति**। निर्दोषत्वमविद्यादिराहित्यम्। निरधिष्ठानत्वं निरुपादानत्वम्।

**तस्मान्नायं यथावर्णित उत्पत्त्यसंभवो दोषः प्राप्नोतीति।**

**अत्रोच्यते–एवमपि तदप्रतिषेध उत्पत्त्यसंभवस्याप्रतिषेधः। प्राप्नोत्येवायमुत्पत्त्यसंभवो दोषः प्रकारान्तरेणेत्यभिप्रायः। कथम्? यदि तावदयमभिप्रायः–परस्परभिन्ना एवैते वासुदेवादयश्चत्वार ईश्वरास्तुल्यधर्माणो नैषामेकात्मकत्वमस्तीति, ततोऽनेकेश्वरकल्पनानर्थक्यमेकेनैवेश्वरेणेश्वरकार्यसिद्धेः। सिद्धान्तहानिश्च; भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात्। अथायमभिप्रायः—एकस्यैव भगवत एते चत्वारो व्यूहास्तुल्यधर्माण इति, तथापि तदवस्थ एवोत्पत्त्यसंभवः। न हि वासुदेवात् संकर्षणस्योत्पत्तिः संभवति, संकर्षणाच्च प्रद्युम्नस्य, प्रद्युम्नाच्चानिरुद्धस्य, अतिशयाभावात्। भवितव्यं हि कार्यकारणयोरतिशयेन, यथा मृद्घटयोः। न ह्यसत्यतिशये कार्यं कारणमित्यवकल्पते। न च पञ्चरात्रसिद्धान्तिभिर्वासुदेवादिष्वेकस्मिन् सर्वेषु वा ज्ञानैश्वर्यादितारतम्यकृतः कश्चिद् भेदोऽभ्युपगम्यते। वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते। न चैते भगवद्व्यूहाश्चतुःसंख्यायामेवावतिष्ठेरन्, ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वावगमात्।।४४।।**

### *प्रकटार्थविवरणम्*

वाक्यमुदाहरति— **वासुदेवा एवैत इति**। एते सर्वे संकर्षणादयः आगन्तुकाविद्यादिदोषरहिता निरधिष्ठानाः स्वतन्त्रा निरवद्याः स्वभावनिर्मला इत्यर्थः। सिद्धान्तत्वेन सूत्रं योजयति— **एवमपीति**। वाशब्दः अप्यर्थे। विज्ञानाद्यैश्वर्यधर्माभावे यद्यपि त्वयोत्पत्त्यसंभवो दोषः परिहृतः, तथापि प्रकारान्तरेण भवत्येवासौ दोष इत्यर्थः। प्रश्नपूर्वकं प्रकारान्तरमाह— **कथमित्यादिना**। सङ्ख्याकरणमप्यसङ्गतमित्याह— **न चैते भगवद्व्यूहा इति**।

### *भाष्यभावप्रकाशिका*

एव निरवद्याः=अनित्यत्वादिदोषरहिताः। तस्मादुत्पत्त्यसंभवो गुणत्वान्न दोष इत्यर्थः। मा भूदभ्युपगमेन दोषः, प्रकारान्तरेण त्वयमेव दोष इत्याह— **एवमपीति**। प्रश्नपूर्वकं प्रकारान्तरमाह— **कथं, यदि तावदिति**। तेषां व्याहतकामत्वे कार्यानुत्पादात्, अव्याहतकामत्वे वा एकेनैवेशनायाः कृतत्वादानर्थक्यमितरेषाम्। सम्भूयकारित्वे तु परिषद्वन्न कश्चिदीश्वरः स्यादित्यर्थः। तस्मात् कल्पान्तरमास्थेयम्। तत्र चोत्पत्त्यसंभवो दोष इत्याशयेनाह— **अथायमिति**। अन्वयमुक्त्वा व्यतिरेकं दर्शयति— **न ह्यसतीति**। भवत्वतिशय इति, तत्राह— **न चेति**। कथमभ्युपगम इति, तदाह— **वासुदेवा इति**। व्यूहसंख्यां दूषयति— **न चैत इति**।।४४।।

### *न्यायनिर्णयः*

निरवद्यत्वमनित्यत्वादिदोषशून्यत्वम्। सर्वेषामीश्वरत्वे तदुत्पत्त्ययोगे गुणत्वाद्दोषो नेति फलितमाह— **तस्मादिति**।

सिद्धान्तत्वेन सूत्रमवतारयति— **अत्रेति**। तद् व्याकरोति— **एवमिति**। विज्ञानैश्वर्यशक्त्यादीनां सर्वत्र तुल्यत्वेऽपीत्यर्थः। जीवादिभावोपगमकृता पूर्वत्रोत्पत्त्यनुपपत्तिरुक्ता, सा कथं सर्वेषामीश्वरत्वे न स्यादित्याशङ्क्याह— **प्राप्नोतीति**। प्रकारान्तरं बुभुत्सते— **कथमिति**। वासुदेवादयस्तुल्यधर्माण ईश्वराः किं मिथो भिन्ना एव, न त्वैक्यमेषामस्ति, किं वैकस्यैव भगवतोऽवस्थाभेदा एत इति विकल्प्याद्यमनुवदति— **यदीति**। ते व्याहतकामाः स्युर्न वा? आद्ये कार्यासिद्धिः। चरमे त्वेकेनैवेशनायाः कृतत्वादितरानर्थक्यम्। संभूयकारित्वे परिषद्वन्न कश्चिदीश्वरः स्यादित्याह— **तत इति**। अनेकेश्वरपक्षे दोषान्तरमाह— **सिद्धान्तेति**। कल्पान्तरमुत्थापयति— **अथेति**। तुल्यधर्माणो वासुदेवादयश्चत्वारोऽपीश्वरा भगवतो व्यूहाः स्वीकृताः। तथा चैकात्मान इति नोक्तदोष इत्यर्थः। वासुदेवादीनामेकव्यूहत्वेनैक्यमुपेत्य प्रागुक्तं प्रसञ्जयति— **तथापीति**। उत्पत्त्यसंभवतादवस्थ्यं समर्थयते— **न हीति**। अतिशयमृतेऽपि कार्यकारणता स्यादित्याशङ्क्य दृष्टवैषम्यान्नैवमित्याह— **भवितव्यं हीति**। अन्वयमुक्त्वा व्यतिरेकमाह— **न हीति**। ननु ज्ञानादीनामुत्कर्षो यत्र पर्यवस्यति तस्य कारणत्वम्, सातिशयज्ञानादिमतां कार्यतेत्यतिशयोऽस्ति; नेत्याह— **न चेति**। कथं तर्हि पञ्चरात्रिणामुपगमः, तत्राह— **वासुदेवा इति**। व्यूहादीनां चतुष्टयमङ्गीकृत्योक्त्वा तन्नियमं निराचष्टे— **न चेति**।।४४।।

**विप्रतिषेधाच्च।।४५।।**

**विप्रतिषेधश्चास्मिञ्छास्त्रे बहुविध उपलभ्यते गुणगुणित्वकल्पनादिलक्षणः। ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणाः, 'आत्मान एवैते भगवन्तो वासुदेवा' इत्यादिदर्शनात्। वेदविप्रतिषेधश्च भवति। चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवानित्यादिवेदनिन्दादर्शनात्। तस्मादसंगतैषा कल्पनेति सिद्धम्।।४५।।**

**।।इत्यष्टममुत्पत्त्यसंभवाधिकरणम्।।**

**इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः।।२।।**

***प्रकटार्थविवरणम्***

**विप्रतिषेधाच्च**।। इतश्चानादरणीयोऽयं पक्ष इत्याह— **विप्रतिषेधाच्चेति**। एकस्यैव गुणत्वं गुणित्वं प्रकृतित्वं विकारत्वमित्येवंरूपो विरोध इत्यर्थः। ज्ञानादीन् गुणान् प्रथममुक्त्वाऽनन्तरम् 'आत्मान एते' इति तेषामेव गुणित्वमुपदिशति। प्रकारान्तरेण सूत्रं व्याचष्टे— **वेदविप्रतिषेधश्चेति**।

**।।इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे द्वितीयस्याध्यायस्य द्वितीयः पादः।।**

***भाष्यभावप्रकाशिका***

**विप्रतिषेधाच्च**।।४५।। **गुणगुणित्वकल्पनादिलक्षण इति**। गुणिभ्यः खल्वात्मभ्यो ज्ञानादीन् गुणान् भेदेनोक्त्वा पुनरभेदं ब्रुवते— आत्मान एवैत इति। ततो विप्रतिषेध इत्यर्थः। आदिग्रहणेन प्रद्युम्नानिरुद्धयोर्मनोऽहङ्कारलक्षणतयाऽऽत्मनो भेदमभिधायात्मान एवैत इति तद्विरुद्धाभेदाभिधानं सङ्गृहीतम्। विप्रतिषेधान्तरमाह— **वेदेति**। **तस्मादसङ्गतेति**। प्रणेतुः सर्वज्ञतया भ्रान्त्यभावेऽपि वेदाविरुद्धतान्त्रिकानुष्ठान-वासुदेवार्चनाद्येकदेशवाक्यप्रामाण्ये च सत्यपि जीवोत्पत्त्यादिवाक्यस्य प्रणयनान्यथानुपपत्त्यैव प्राणिनां विरुद्धप्रतिपत्तिद्वारेण दुष्कृतफलदानाय व्यामोहकत्वम्, जीवोत्पत्तिश्रुतीनामिव तदुत्पत्तिस्मृतीनामप्यन्यपरत्वं वा कल्प्यम्; अनुत्पत्तिश्रुतिविरोधादिति भावः। इत्यष्टममुत्पत्त्यधिकरणम्।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुखमुनिविरचितायां भाष्यभावप्रकाशिकायां द्वितीयस्याध्यायस्य द्वितीयः पादः समाप्तः**

***न्यायनिर्णयः***

इतश्चानादरणीयमिदं मतमित्याह— **विप्रतिषेधाच्चेति**। सूत्रं व्याचष्टे— **विप्रतिषेधश्चेति**। विरोधमेव स्फुटयति— **गुणेति**। आदिग्रहणात् प्रद्युम्नानिरुद्धयोर्मनोऽहंकारयोरात्मनो भेदमुक्त्वाऽऽत्मान एवैत इति तद्विरुद्धोक्तिर्गृहीता। गुणगुणित्वकल्पनारूपं विप्रतिषेधमाह— **ज्ञानेति**। आत्मभ्यो गुणिभ्यो ज्ञानादीन् गुणान् भेदेनोक्त्वा पुनरात्मान एवैत इत्यब्रुवंस्ततो विप्रतिषेधः। अत्रादिशब्देन संकर्षणो नाम जीवः, प्रद्युम्नो मनोऽनिरुद्धोऽहंकार इति भेदमुक्त्वा पुनरात्मान एवेत्यभेदवादाद् विप्रतिषेधो गृह्यते। प्रकारान्तरेण सूत्रं व्याचष्टे— **वेदेति**। अत्रादिशब्देन भागवते शास्त्रे पादमात्राध्ययनादशेषवेदाध्ययनफलं सिध्यति। स्वाध्यायमात्राध्येतुर्विशिष्यते भागवतशास्त्राक्षरमात्राध्येतेत्यादिनिन्दा गृहीता। भागवतशास्त्रप्रणेतुः सर्वज्ञतया भ्रान्त्यभावेऽपि वेदाविरुद्धतान्त्रिकानुष्ठान-वासुदेवार्चनाद्येकदेशप्रामाण्येऽपि जीवजन्मादिवाक्यप्रणयनान्यथानुपपत्त्यैव प्राणिनां विरुद्धधीद्वारा दुरितफलदानाय व्यामोहकत्वम्। जीवजन्मश्रुतीनामिव तज्जन्मस्मृतीनामपि चान्यपरत्वमनुत्पत्तिश्रुतिविरोधादित्यधिकरणार्थमुपसंहरति— **तस्मादिति**। तदेवं परपक्षाणां भ्रान्तिमूलत्वान्न तैर्विरोधः समन्वयस्येति पादार्थं निगमयति— **सिद्धमिति**।।४५।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचिते श्रीमच्छारीरकभाष्यन्यायनिर्णये द्वितीयाध्यायस्य द्वितीयः पादः।।२।।**

**।।इति द्वितीयाध्यायस्य सांख्यादिमतानां दुष्टत्वप्रदर्शनं नाम द्वितीयः पादः।।**

# द्वितीयाध्याये तृतीयः पादः

## १।। वियदधिकरणम् ।। सू. १-७ ।।

## न वियदश्रुतेः ।।१।।

**वेदान्तेषु तत्र तत्र भिन्नप्रस्थाना उत्पत्तिश्रुतय उपलभ्यन्ते। केचिदाकाशस्योत्पत्तिमामनन्ति, केचिन्न। तथा केचिद् वायोरुत्पत्तिमामनन्ति, केचिन्न। एवं जीवस्य प्राणानां च। एवमेव क्रमादिद्वारकोऽपि विप्रतिषेधः श्रुत्यन्तरेषूपलक्ष्यते। विप्रतिषेधाच्च परपक्षाणामनपेक्षितत्वं स्थापितम्, तद्वत् स्वपक्षस्यापि विप्रतिषेधा-**

*शारीरकन्यायसंग्रहः*

**न वियदश्रुतेः ।।१।। अस्ति तु ।।२।। गौण्यसंभवात् ।।३।। शब्दाच्च ।।४।। स्याच्चैकस्य ब्रह्मशब्दवत् ।।५।। प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ।।६।। यावद्विकारं तु विभागो लोकवत् ।।७।।**

क्वचित् तेजःसृष्टेः प्राथम्यमवगतम्; क्वचिदाकाशसृष्टेः; तत्रावश्यं क्रमेणैव सृष्टौ विवक्षितायां द्वयोः प्राथम्यानुपपत्तेः कस्यानुरोधेन किं नेतव्यमिति विशये— तेजःप्राथम्योपादाने सति आकाशसृष्टिः तत्प्राथम्यं चोभयं बाध्यं स्यात्; आकाशप्राथम्योपादाने तु तेजःप्राथम्यमेव बाध्यते, ननु [ न तु ] तत्सृष्टिः, तस्याः ''वायोरग्निः'' इति स्थानान्तरत्वाभावात् [ त्वलाभात् ]। तत्र धर्मिबाधकल्पनादुभय-बाधप्रसङ्गकाद् धर्मबाधकल्पनमेव लघीय इति न्यायेन तेजःसृष्टेः प्राथम्यं बाधित्वा आकाशसृष्टिः तत्प्राथम्यं चोपादीयत इत्युक्तम्।।

*प्रकटार्थविवरणम्*

पूर्वस्मिन् पादे मतान्तराणामप्रामाणिकत्ववर्णनेनाविरोधं विधाय अधुना अविरोधसिद्ध्यर्थमेव श्रुतिविप्रतिषेधविध्वस्तये यत्नो विधातव्य इत्याह— **वेदान्तेष्विति**।

*भाष्यभावप्रकाशिका*

**न वियदश्रुतेः**। पूर्वत्र परपक्षाणां भ्रान्तिमूलत्वकथनेन श्रुतीनां प्रमाणान्तराविगानमुक्तम्। इदानीं सृष्टिश्रुतीनां परस्पराविगानं वक्तुं विगानं तावदाह— **वेदान्तेष्विति**। सृष्टिश्रुतीनां स्वार्थपरताऽभावात् तासां परस्परविरोधेऽपि न तात्पर्यवद्वाक्यप्रामाण्यविरोध इत्याशङ्क्याह— **विप्रतिषेधाच्चेति**। निर्मलत्वमर्थाभासनिवृत्त्या सम्यगर्थप्रतिपत्तिः। नन्वेतन्निर्मलत्वेन मुमुक्षोः किं प्रयोजनम्?

*न्यायनिर्णयः*

अतिक्रान्ते पादे समन्वयस्थापनाय परपक्षाणां भ्रान्तिमूलत्वमुक्तम्। इदानीमपि समन्वयस्थित्यै भूतभोक्तृविषयसृष्ट्यादिश्रुतिविगानं निराक्रियते। [१]तत्रानुत्पत्तिप्रसङ्गेन वियतोऽपि तदसंभवमाशङ्क्य परिहरन्नादावेकदेशिमतमाह— **न वियदिति**। आकाशोत्पत्त्यनुत्पत्तिश्रुत्योर्मिथो विरोधादप्रामाण्ये शङ्किते तन्निरासेन समन्वयदृढीकरणादस्य पादादिसंगतिरित्यभिप्रेत्य पूर्वोत्तरपादसंगतिं व्यक्तीकुर्वन्नापाततः सृष्टिश्रुतिविमतिं दर्शयति—**वेदान्तेष्वति**। तत्र तत्रेति सृष्टिप्रकरणोक्तिः। तासां भिन्नप्रस्थानत्वमेव प्रकटयन् प्रथममाकाशोत्पत्त्यनुत्पत्तिभ्यां तैत्तिरीयच्छान्दोग्यश्रुत्योर्विमतिमाह— **केचिदिति**। नभोवद् वायोरप्युत्पत्त्यनुत्पत्तिभ्यामपि तयोरेवास्ति विमतिरित्याह— **तथेति**। न केवलं भूतविषयसृष्टिश्रुतिविमतिः, अपि तु भोक्तृभोगोपकरणविषयाऽपि [२]साऽस्तीत्याह— **एवमिति**। यथा नभसो वायोश्चोत्पत्तिमधीयते तैत्तिरीयाः, तथा जीवस्य 'सर्व एत आत्मानो व्युच्चरन्ति' इति जन्माऽऽमनन्ति माध्यंदिनाः, नैवमितरे। तथा प्राणानाम् 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इत्युत्पत्तिं पठन्त्याथर्वणाः, नैवमन्ये। अतोऽस्ति धर्मिणि विमतिरित्यर्थः। धर्मद्वाराऽपि विगानमाह— **एवमेवेति**। क्रमादीत्यादिशब्देनाक्रमसंख्ये गृह्येते। **श्रुत्यन्तरेषु** श्रुतिविशेषेष्विति यावत्। सृष्टिश्रुतीनामस्वार्थपरत्वान्मिथो विरोधेऽपि तात्पर्यवद्वाक्यप्रामाण्यादस्मत्पक्षसिद्धिरित्याशङ्क्याह— **विप्रतिषेधाच्चेति**। सर्वत्र परपक्षेषु

---

१. जीवस्येत्यादिः। २. सा = विमतिः।

**देवानपेक्षितत्वमाशङ्क्येतेत्यतः सर्ववेदान्तगतसृष्टिश्रुत्यर्थनिर्मलत्वाय परः प्रपञ्च आरभ्यते। तदर्थनिर्मलत्वे च फलं यथोक्ताशङ्कानिवृत्तिरेव।**

**तत्र प्रथमं तावदाकाशमाश्रित्य चिन्त्यते— किमस्याकाशस्योत्पत्तिरस्त्युत नास्तीति। तत्र तावत् प्रतिपद्यते— 'न वियदश्रुतेः' इति। न खल्वाकाशमुत्पद्यते। कस्मात्? अश्रुतेः। न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति। छान्दोग्ये हि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा.उ. ६।२।१) इति सच्छब्दवाच्यं ब्रह्म प्रकृत्य 'तदैक्षत', 'तत्तेजोऽसृजत' (छा.उ. ६।२।३) इति च पञ्चानां महाभूतानां मध्यमं तेज आदिं कृत्वा त्रयाणां तेजोबन्नानामुत्पत्तिः श्राव्यते। श्रुतिश्च नः प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ। न चात्र श्रुतिरस्त्या- काशस्योत्पत्तिप्रतिपादिनी। तस्मान्नास्त्याकाशस्योत्पत्तिरिति।।१।।**

### *प्रकटार्थविवरणम्*

पादद्वयसङ्गतिमभिधाय प्रथमाधिकरणविचारमाह— **तत्र प्रथममिति। न वियदश्रुतेः**।। सूत्रद्वयेन मतद्वयमुपन्यस्य विप्रतिषेधमाह— **तत्र तावदित्यादिना।**

### *भाष्यभावप्रकाशिका*

पूर्वोक्तसमन्वयादेव तत्त्वज्ञानसिद्धेरित्याशङ्क्याह— **तदर्थनिर्मलत्वे चेति**। एकदेशस्य विरोधादप्रामाण्ये तदेकदेशान्तरस्यापि तद्वच्छङ्किताप्रामाण्यतया तत्समन्वयात् तत्त्वज्ञानासिद्धेर्ब्रह्मकारणपक्षस्यानपेक्षत्व(त्)शङ्कानिवृत्तये(च) तत्कर्तव्यत्वमित्यर्थः। अथवा प्राणाद्युपासनानां द्वैतैकत्वादिविषयस्यैकरूपत्वदर्शनार्थमिति(?)।

आद्याधिकरणस्य तात्पर्यमाह— **तत्र प्रथममिति**। गौणवाद्यभिप्रायेण संशयमाह— **किमस्योत्पत्तिरिति**। इह पूर्वपक्षे श्रुतीनां मिथो विरोधः प्रतिपाद्यते, सिद्धान्ते त्वविरोधः। तत्र सिद्धान्तैकदेश्याह— **न वियदश्रुतेरिति**। अयमभिसन्धिः— यद्यपि तैत्तिरीयके वियदुत्पत्तिश्रुतिरस्ति। तथापि सा मानान्तरविरोधात् गौणी नेन [तेन] तेजःप्रमुखैव सृष्टिस्तथा सति श्रुतीनां न विरोध इति। मा भूदुत्पत्तिश्रवणमाकाशस्य। तथापि मानान्तरादुत्पत्तिसिद्धिरित्याशङ्क्याह— **श्रुतिश्चेति**। तर्हि श्रुतिरेवास्तीत्याशङ्क्य सा गौणीत्याह— **न चात्रेति।**

### *न्यायनिर्णयः*

स्वोक्तिविरोधाभावादत्र श्रुतिविरोधो विवक्षितः। स्वपक्षो ब्रह्मकारणवादः। विप्रतिषेध[:] श्रुतीनामेवान्योन्यमिति द्रष्टव्यम्। सृष्टिश्रुतिष्वापातिकविरोधोक्त्या तत्फलमुक्त्वाऽनन्तरपादाववतारयति— **इत्यत इति**। तदर्थनिर्मलत्वमर्थाभासनिवृत्त्या सम्यगर्थधीः। प्रपञ्चोऽनन्तरपादद्वयम्। ननु मुमुक्षूणामुक्तसमन्वयादेव तत्त्वधीलाभात् कृतमेतन्निर्मलत्वेनेति, तत्राह— **तदर्थेति**। वेदैकदेशस्य विरोधादप्रामाण्ये तदेकदेशान्तरस्यापि तथैवाप्रामाण्यशङ्कया तत्समन्वयात् तत्त्वज्ञानासिद्धेर्ब्रह्मकारणपक्षस्यानपेक्षणीयत्वशङ्का- निवृत्तिस्तदर्थनिर्मलत्वे फलतीत्यर्थः।

इत्थं पादद्वयसंबन्धे स्थिते भूतभोक्तृसृष्ट्यादिश्रुतिविवादापवादार्थे च तृतीये पादे सत्याद्याधिकरणतात्पर्यमाह— **तत्रेति**। आकाशोत्पत्त्यनुत्पत्तिवादिवाक्ययोरनेकवाक्यत्वैकवाक्यत्वाभ्यां मिथो विरोधसंदेहे विरोधनिरासेनाविरोधं संसाध्य समन्वयदार्ढ्यमत्र विवक्षितम्। सर्वेषु चाधिकरणेषु पादद्वयगतेषु पूर्वपक्षेषु श्रुतीनां विरोधादप्रामाण्यं, सिद्धान्ते तासामविरोधात् प्रामाण्यं फलम्। अत्र चाद्येऽधिकरणे श्रुत्योर्मिथोविरोधादप्रामाण्ये वियदादिकारणे ब्रह्मणि समन्वयासिद्धिरेकत्र, अन्यत्र तयोरेकवाक्यतया विरोधा- भावात्प्रामाण्यसिद्धेस्तत्सिद्धिरिति भावः। पादद्वये पूर्वपक्षे श्रुतीनां मिथो विरोधः, सिद्धान्ते त्वविरोधः साध्यते। तेन विरोधाविरोधाभ्यां संदेहे वाच्ये गौणवाद्यभिप्रायेणाह— **किमस्येति**। तैत्तिरीयच्छान्दोग्यश्रुतिभ्यां संदिह्य गौणवाद्यभिप्रायं प्रकटयितुं सूत्रमादत्ते— **तत्रेति**। तदक्षराणि व्याचष्टे— **न खल्विति**। तैत्तिरीये वियदुत्पत्तिश्रुतेरन्यत्र तदश्रुतेर्मिथो विरोधे पर्यवसानमाशङ्क्य वक्ष्यमाण- प्रमाणविरोधाज्जन्मश्रुतेर्गौणत्वात् तेजोमुखैव सृष्टिरिति कुतो विरोधाशङ्केत्याशयेनाह— **छान्दोग्ये हीति**। आकाशस्य जन्माश्रवणेऽपि कथमनुमानसिद्धा तदुत्पत्तिरपह्नूयेतेत्याशङ्क्याह— **श्रुतिश्चेति**। तर्हि श्रुतिरेवास्तीत्याशङ्क्य सा गौणीति सूचितमित्याह— **न चेति**। तैत्तिरीयश्रुतेर्गौणत्वादन्यस्यामुख्यत्वान्न मिथो विरोधोऽस्तीत्युपसंहरति— **तस्मादिति**।।१।।

## अस्ति तु।।२।।

**तुशब्दः पक्षान्तरपरिग्रहे। मा नामाकाशस्य छान्दोग्ये भूदुत्पत्तिः, श्रुत्यन्तरे त्वस्ति। तैत्तिरीयका हि समामनन्ति– 'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रकृत्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै.उ. २।१) इति। ततश्च श्रुत्योर्विप्रतिषेधः– क्वचित् तेजःप्रमुखा सृष्टिः, क्वचिदाकाशप्रमुखेति। नन्वेकवाक्यताऽनयोः श्रुत्योर्युक्ता। सत्यम्, सा युक्ता, न तु साऽवगन्तुं शक्यते। कुतः? 'तत्तेजोऽसृजत' (छा.उ. ६।२।३) इति सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन संबन्धानुपपत्तेः– 'तत्तेजोऽसृजत', 'तदाकाशमसृजत' इति। ननु सकृच्छ्रुतस्यापि कर्तुः कर्तव्यद्वयेन संबन्धो दृश्यते– यथा सूपं पक्त्वौदनं पचतीति, एवं तदाकाशं सृष्ट्वा तत्तेजोऽसृजतेति योजयिष्यामि। नैवं युज्यते। प्रथमजत्वं हि छान्दोग्ये तेजसोऽवगम्यते, तैत्तिरीयके चाकाशस्य। न चोभयोः प्रथमजत्वं संभवति। एतेनेतरश्रुत्यक्षरविरोधोऽपि व्याख्यातः। 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै.उ. २।१) इत्यत्रापि तस्मादाकाशः संभूतस्तस्मात् तेजः संभूतमिति सकृच्छ्रुतस्यापादानस्य**

### *प्रकटार्थविवरणम्*

**अस्ति तु**।। श्रुत्योर्विप्रतिषेधे नोभयोरप्यप्रामाण्यं निर्दिष्टत्वात् [निर्दुष्टत्वात्]; अत एकवाक्यता वक्तव्येत्याह— **नन्वेकवाक्यतेति**। एकवाक्यताया असंभवे युक्तमप्रमाणत्वमित्याह— **न तु साऽवगन्तुमिति**। एकस्य युगपद् व्यापारद्वयस्यासंभवेऽपि क्रमेण भविष्यतीत्याह— **ननु सकृच्छ्रुतस्यापीति**। विप्रतिषेधवादी दूषयति— **नैवं युज्यत इति**। क्रमो न युज्यते, द्वयोः प्रथमजत्वासंभवप्रसङ्गात्; अतो यौगपद्यं वक्तव्यम्; तदाऽपि विरोधस्तदवस्थ एवेत्यर्थः। एवं छन्दोगश्रुतेर्विरुद्धार्थत्वमुक्त्वा तैत्तिरीयकश्रुतेः विरुद्धार्थत्वं कथयति— **एतेनेति**।

### *भाष्यभावप्रकाशिका*

पूर्वपक्षसूत्रमस्त्विवति **[अस्ति त्विति।]** ननु [वि]प्रतिषेधादप्रामाण्यमयुक्तम्, प्रामाण्यस्यौत्सर्गिकत्वात्। अथ [अतः] कथंचित् प्रामाण्यमेकवाक्यत्वेनान्ये[न्वे]ष्टव्यमिति चोदयति— **नन्वेकवाक्यतेति**। आकाशं सृष्ट्वा तेजोऽसृजतेत्येकवाक्यत्वं युक्तमिति चोदयति—**कुत इति**। प्रथमं छादोग्यानुसारेण स्रष्टुः स्रष्टव्यद्वयसंबन्धाभावं दर्शयति— **तत्तेज इति**। ननु यथैकस्मात् बीजाद् युगपन्मूलाङ्कुरयोरुत्पत्तिस्तथा वियत्तेजसोर्युगपदुत्पत्तिरित्याशङ्क्याह— **न चोभयोः प्रथमजत्वमिति**। क्रमसृष्टेर्विवक्षितत्वादित्यर्थः। तैत्तिरीयश्रुत्यनुसारेण स्रष्टुः स्रष्टव्यद्वयसंबन्धाभावमाह— **एतेनेति**। आकाशतेजसोरसहायताधिगमात् प्रथमजत्वेन ससहायकत्वकल्पना-ऽयुक्ता प्रथमजत्वेनासहायत्वावगमे[गम]विरोधात्। न च विकल्पो; वस्तुनि तदनुपपत्तेः। न च सर्गभेदेन व्यवस्था युक्ता।

### *न्यायनिर्णयः*

[१]पूर्वपक्षयति— **अस्ति त्विति**। सूत्रं व्याकुर्वन् पूर्वपक्षं विवृणोति— **तुशब्द इति**। श्रुत्यन्तरे त्वाकाशस्योत्पत्ति-रस्तीत्युक्तम्, तदेव व्यनक्ति— **तैत्तिरीयका हीति**। सर्वनामार्थज्ञापनार्थं पूर्ववाक्यानुक्रमणम्। श्रुत्योराकाशोत्पत्त्यनुत्पत्तिवादित्वे फलितमाह— **ततश्चेति**। प्रामाण्यस्यौत्सर्गिकत्वाद् विरोधेनाप्रामाण्यायोगादेकवाक्यतया कथंचित्प्रामाण्यमेष्टव्यमिति शङ्कते— **नन्विति**। संभवत्येकवाक्यत्वे तद्भेदो नेष्यते, मिथो विरुद्धयोः श्रुत्योर्नैकवाक्यतेति परिहरति— **सत्यमिति**। 'तदाकाशं सृष्ट्वा तेजोऽसृजते'त्येकवाक्यत्वं ज्ञातुं शक्यमिति शङ्कते— **कुत इति**। छान्दोग्यानुसारेणैकवाक्यत्वायोगं दर्शयति— **तत्तेज इति**। एकवाक्यतावादी दृष्टान्तेन शङ्कते— **नन्विति**। विप्रतिषेधवादी दूषयति— **नैवमिति**। किमिह व्यापारः सूपादिपाकवत्[२], किं वा युगपदेकस्माद् बीजान्मूलाङ्कुरोत्पत्तिवत् तदक्रमः? नाद्यः, द्वयोः प्रथमजत्वश्रुतिविरोधादित्याह— **प्रथमेति**। न द्वितीयः, पाठक्रमात् क्रमसृष्टेरिष्टत्वादित्याह— **न चेति**। छान्दोग्यानुसारेणैकवाक्यताऽयोगमुक्त्वा तैत्तिरीया-नुसारेणापि तदयोगमाह— **एतेनेति**। एतच्छब्दार्थमेव स्फुटयति— **तस्मादित्यादिना**। इतश्च नैकवाक्यतेत्याह— **वायोरिति**।

१. निगूढाभिसंधेः सिद्धान्तिन एवेदं सूत्रमभिप्रायानभिव्यक्तिमपेक्ष्य पूर्वपक्षसूत्रत्वेनोपचरितमिति कल्पतरुः। २. 'क्रमवान्' इति शेषः।

**संभवनस्य च वियत्तेजोभ्यां युगपत्संबन्धानुपपत्तेः। 'वायोरग्निः' (तै.उ. २।१) इति च पृथगाम्नानात्।।२।।**

**अस्मिन् विप्रतिषेधे कश्चिदाह–**

**गौण्यसंभवात्।।३।।**

**नास्ति वियत उत्पत्तिरश्रुतेरेव। या त्वितरा वियदुत्पत्तिवादिनी श्रुतिरुदाहृता, सा गौणी भवितुमर्हति। कस्मात्? असंभवात्। न ह्याकाशस्योत्पत्तिः संभावयितुं शक्या श्रीमत्कणभुगभिप्रायानुसारिषु जीवत्सु। ते हि कारणसामग्र्यसंभवादाकाशस्योत्पत्तिं वारयन्ति। समवाय्यसमवायिनिमित्तकारणेभ्यो हि किल सर्वमुत्पद्यमानं समुत्पद्यते। द्रव्यस्य चैकजातीयकमनेकं च द्रव्यं समवायिकारणं भवति। न चाकाशस्यैकजातीयकमनेकं**

***प्रकटार्थविवरणम्***

तस्मादेकवाक्यत्वायोगात् विप्रतिषेधः स्थित एवेति केनचिदापादिते परिहारं वक्तुं मतान्तरं तावदाह— **अस्मिन्विप्रतिषेध इति।**

**गौण्यसंभवात्।।** विप्रतिषेधे सति कस्यानुरोधेन किं नेतव्यमिति विशये तर्कानुगृहीतच्छन्दोगश्रुत्यनुरोधेनासंभाव्यमानार्था तैत्तिरीयकश्रुतिर्गौणी व्याख्यातव्येत्यर्थः। आकाशो न जायते, सामग्रीशून्यत्वात्, आत्मवदित्याह— **ते हीति**। का सामग्रीत्याशङ्क्याह— **समवायीति**। समग्राणि कारणान्येव सामग्रीत्यर्थः। तर्हि ईश्वरो मायावी समवायिकारणम्, [तत्संबन्धोऽसमवायिकारणम्,] अदृष्टं निमित्तकारणमिति सामग्रीशून्यत्वमसिद्धमित्याशङ्क्याह— **द्रव्यस्येति**। मायेश्वरयोर्विजातीयत्वात् तन्तुसुवर्णयोरिव नैकं वा [नैकम्,

***भाष्यभावप्रकाशिका***

इदानीन्तनसर्गवद्भूतपूर्वस्यापि तथात्वानुमानादित्यर्थः। तस्मात् सर्गश्रुतयः परस्परविरोधान्न सर्गे प्रमाणमिति पूर्वः पक्षः।

सिद्धान्तैकदेशी सूत्रेण स्वाभिप्रायमाविष्करोति— **गौण्यसंभवादिति**। गौणवाद्येव पूर्वत्रापि वियदनुत्पत्तिवादीति प्रत्यभिज्ञापयन् व्याचष्टे— **नास्ति वियत इति**। तेजःप्राथम्यानुरोधेनाकाशस्योत्पत्तिः प्राथम्यं च बाध्यत इत्ययुक्तमिति चोदयति— **कस्मादिति**। तेजश्श्रुत्यनुसारेण न बाध्यते, किन्तु मानान्तरविरोधादित्याह— **असंभवादिति**। तमाह— **न हीति**। ननूभयथाऽपि न कर्मेत्यत्र निराकृतत्वात् तन्मतस्य तदवष्टम्भेनासंभवः कथमिति, तत्राह— **जीवत्स्विति**। तदभिप्रायं दर्शयति— **एतत्तर्हीति**।**[ते हीति]**। आकाशं नोत्पद्यते, कारणशून्यत्वादात्मवदिति भावः। अपि च ये उत्पद्यन्ते तेषामनुभवार्थक्रिये प्रागुत्पत्तेर्नोपलभ्येते। यथा

***न्यायनिर्णयः***

छान्दोग्ये हि सदुपादानं तेजसो निर्दिश्यते। तैत्तिरीये त्वात्मनः सच्छब्दवाच्यादन्यो वायुस्तदुपादानमाम्नायते, तन्नैकवाक्यतेत्यर्थः।।२।।

प्रथमजत्वेनाकाशतेजसोरसहायत्वे सिद्धे तद्विरोधेन ससहायत्वकल्पनायोगाद् वस्तुनि विकल्पानुपपत्तेरिदानीन्तनसर्गवद् भूतसर्गस्यापि तथात्वानुमाने सर्गभेदेनापि व्यवस्थाऽसिद्धेर्मिथो विरुद्धतया प्रकृतश्रुत्यप्रामाण्यान्न ब्रह्म कारणमिति पूर्वपक्षमनुभाष्य गौणवादिनोऽभिप्रायमाविष्कर्तुं सूत्रान्तरमवतारयति— **अस्मिन्निति**। ये त्वतिक्रान्तसूत्रद्वयं मतद्वयमुपन्यस्य विप्रतिषेधमभिदधत् पूर्वपक्षसंगतमिति व्याचक्षते तान् व्यावर्त्य गौणवाद्येव पूर्वत्रापि वियदनुत्पत्तिवादीति प्रत्यभिज्ञापयन् व्याचष्टे— **नास्तीति**। तदुत्पत्तिश्रुतेरपि दर्शितत्वाद् विप्रतिषेधे कः समाधिरित्याशङ्क्याह— **या त्विति**। तेजःप्राथम्यानुरोधेनाकाशस्योत्पत्तिः प्राथम्यं चेतिं द्वयबाधनमयुक्तम्; आकाशप्राथम्यानुरोधेन तेजसि प्राथम्यस्यैव बाधनमिति मन्वानश्चोदयति— **कस्मादिति**। न वयं तेजःप्राथम्यमनुरुन्धाना द्वयबाधं शिष्मः, किंतु मानान्तरविरोधादित्याह— **असंभवादिति**। वैशेषिकाधिकरणेन तन्मतस्य निरस्तत्वात् तदवष्टम्भेन कथमसंभवकथेत्याशङ्क्याह— **न हीति**। कणभुगभिप्रायमेव प्रकटयति— **ते हीति**। आकाशं नोत्पद्यते, कारणत्रयशून्यत्वात्, आत्मवदित्यर्थः। हेतुसमर्थनार्थं सामान्यन्यायमाह— **समवायीति**। परप्रसिद्धिद्योतनार्थो हिशब्दः। तत्र स्वानभ्युपगमं दर्शयितुं **किलेति**। आकाशस्यापि तर्हि त्रीणि कारणानि भविष्यन्तीत्याशङ्क्य समवायिकारणविशेषस्वरूपमाह—

**च द्रव्यमारम्भकमस्ति, यस्मिन् समवायिकारणे सत्यसमवायिकारणे च तत्संयोग आकाश उत्पद्येत। तदभावात्तु तदनुग्रहप्रवृत्तं निमित्तकारणं दूरापेतमेवाकाशस्य भवति। उत्पत्तिमतां च तेजःप्रभृतीनां पूर्वोत्तरकालयोर्विशेषः संभाव्यते- प्रागुत्पत्तेः प्रकाशादिकार्यं न बभूव, पश्चाच्च भवतीति। आकाशस्य पुनर्न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यते। किं हि प्रागुत्पत्तेरनवकाशमसुषिरमच्छिद्रं बभूवेति शक्यतेऽध्यवसातुम्? पृथिव्यादिवैधर्म्याच्च विभुत्वादिलक्षणादाकाशस्याजत्वसिद्धिः। तस्माद् यथा लोके- आकाशं कुरु, आकाशो जात इत्येवंजातीयको गौणः प्रयोगो भवति, यथा च घटाकाशः करकाकाशो गृहाकाश इत्येकस्याप्याकाशस्यैवंजातीयको भेदव्यपदेशो गौणो भवति, वेदेऽपि 'आरण्यानाकाशेष्वालभेरन्' (शत. १३।१।५।१५) इति, एवमुत्पत्तिश्रुतिरपि गौणी द्रष्टव्या।।३।।**

## शब्दाच्च।।४।।

**शब्दः खल्वाकाशस्याजत्वं ख्यापयति। यत आह- 'वायुश्चान्तरिक्षं चैतदमृतम्' (बृ.उ. २।३।३)**

### *प्रकटार्थविवरणम्*

उभयं वा] कार्यं प्रति समवायिकारणम्[१], तत्संबन्धोऽसमवायिकारणम्; अदृष्टं निमित्तकारणं तु दूरनिरस्तमित्यर्थः। किं चाभूत्वाभावित्वं कार्यलक्षणम्; तदपि नास्ति, प्रलयेऽपि परमाणूनामवकाशस्यापेक्षितत्वादित्याह— **उत्पत्तिमतां चेति**। किं च आकाशो न जायते, विभुत्वात्, निरवयवद्रव्यत्वात्, अस्पर्शद्रव्यत्वात्, आत्मवदित्याह— **पृथिव्यादीति**। सदृष्टान्तं गौणत्वमुपसंहरति— **तस्मादिति**।

**शब्दाच्च**।। न केवलमनुमानादाकाशस्याजत्वम्, श्रुतितोऽपीत्याह— **शब्दाच्चेति**। ननु ''आकाशशरीरम्'' इत्येतत्

### *भाष्यभावप्रकाशिका*

तेजःप्रभृतीनाम्। न चाकाशस्य तादृशो विशेषोऽस्ति। तस्मान्नोत्पत्तिरित्याह— **उत्पत्तिमताञ्चेति**। प्रकाशनं प्रकाशः घटादिगोचरः। पृथिव्यादिवैधर्म्याद् विभुत्वादि[लक्षणादि]त्यत्रादिग्रहणेन द्रव्यत्वे सत्यस्पर्शवत्त्वादात्मवन्नित्यमाकाशमिति संगृहीतम्। आकाशस्योत्पत्तिश्रुतिमुपसंहरति— **तस्माद्यथेति**। यद्यपि लोक औपचारिकत्वं तथापि वेदे न तदभ्युपगन्तुं शक्यमित्याशङ्क्याह— **वेदेऽपीति**।

### *न्यायनिर्णयः*

**द्रव्यस्येति**। तदभावमाकाशे दर्शयति— **न चेति**। समवायिकारणे निरस्ते सत्यसमवायिकारणमपि निरस्तमेवेत्याह— **यस्मिन्निति**। कारणद्वयनिरासेन निमित्तकारणनिरसनं सुकरमित्याह— **तदभावात्त्विति**। कारणशून्यत्वादाकाशस्यानुत्पत्तिमनुमाय तत्रैवानुमानान्तरमाह— **उत्पत्तिमतां चेति**। ये जायन्ते तेषामनुभवार्थक्रिये प्रागुत्पत्तेर्नोपलभ्येते यथा तेजःप्रभृतीनाम्। न चाकाशस्य तादृशो विशेषोऽस्ति। तस्मात् तन्नोत्पद्यते कार्यलक्षणविकलत्वादात्मवदित्यर्थः। प्रकाशनं प्रकाशोऽनुभवः। आदिशब्देनार्थक्रिया गृह्यते। अभूत्वा भावित्वं हि कार्यलक्षणं, तदाकाशस्यापि संभवतीति कथं हेतुसिद्धिरित्याशङ्क्याह— **आकाशस्येति**। तदेव स्फुटयते— **किं हीति**। महाद्रव्याश्रयत्वयोग्यो देशोऽवकाशः। तद्विरुद्धद्रव्याश्रयत्वयोग्यं सुषिरम्। अणुद्वयतत्संयोगाश्रयत्वयोग्यं छिद्रम्। एतत्त्रयरहितं न किंचित् प्रागासीदिति विशेषणानामर्थः। किंचाकाशो न जायते, विभुत्वात्, निरवयवद्रव्यत्वादस्पर्शद्रव्यत्वाच्च, आत्मवदित्यनुमानत्रयमाह— **पृथिव्यादीति**। उक्तानुमानानामुत्पत्तिश्रुतिविरोधमाशङ्क्य तस्या गौणत्वं सदृष्टान्तमुपसंहरति— **तस्मादिति**। आलोकादिवदाकाशस्य प्रदेशभेदवत्त्वान्मुख्यं जन्मेत्याशङ्क्य जन्मप्रयोजकप्रदेशभेदस्यापि गौणत्वमेवेत्याह— **यथा चेति**। लौकिकव्यपदेशस्य गौणत्वेऽपि वैदिकव्यपदेशस्य मुख्यत्वमेवेत्याशङ्क्याह— **वेदेऽपीति**। इतिशब्दादुपरिष्टाद् गौणो भेदव्यपदेशो भवतीति संबन्धः।।३।।

न केवलमनुमानादाकाशस्याजत्वम्, किंतु श्रुतितोऽपीत्याह— **शब्दाच्चेति**। तद् व्याचष्टे— **शब्दः खल्विति**। अमृतत्वमेवात्र

---

१. 'तन्तुसुवर्णयोरिव नैकं कार्यं प्रति समवायिकारणत्वम्, न वा' इति पाठः स्यात्।

**इति। न ह्यमृतस्योत्पत्तिरुपपद्यते। 'आकाशवत्सर्वगतश्च नित्यः' इति चाकाशेन ब्रह्म सर्वगतत्वनित्यत्वाभ्यां धर्माभ्यामुपमिमान आकाशस्यापि तौ धर्मौ सूचयति। न च तादृशस्योत्पत्तिरुपपद्यते। 'स यथाऽनन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः' इति चोदाहरणम्। 'आकाशशरीरं ब्रह्म' (तै.उ. १।६।२), 'आकाश आत्मा' (तै.उ. १।७।१) इति च। न ह्याकाशस्योत्पत्तिमत्त्वे ब्रह्मणस्तेन विशेषणं संभवति, नीलेनेवोत्पलस्य। तस्मान्नित्यमेवाकाशेन साधारणं ब्रह्मेति गम्यते।।४।।**

## स्याच्चैकस्य ब्रह्मशब्दवत्।।५।।

**इदं पदोत्तरं सूत्रम्। स्यादेतत्– कथं पुनरेकस्य संभूतशब्दस्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै.उ. २।१) इत्यस्मिन्नधिकारे परेषु तेजःप्रभृतिष्वनुवर्तमानस्य मुख्यत्वं संभवत्याकाशे च गौणत्वमिति। अत उत्तरमुच्यते– स्याच्चैकस्यापि संभूतशब्दस्य विषयविशेषवशाद् गौणो मुख्यश्च प्रयोगो ब्रह्मशब्दवत्। यथैकस्यापि ब्रह्मशब्दस्य 'तपसा ब्रह्म विजिज्ञासस्व, तपो ब्रह्म' (तै.उ. ३।२) इत्यस्मिन्नधिकारेऽन्नादिषु गौणः प्रयोगः, आनन्दे च मुख्यः। यथा च तपसि ब्रह्मविज्ञानसाधने ब्रह्मशब्दो**

### *प्रकटार्थविवरणम्*

कथमुत्पत्तिमत्त्वं वारयतीत्याशङ्क्याह— **न ह्याकाशस्येति**। आकाशः शरीरमस्येत्याकाशेन ब्रह्मणो विशेषितत्वान्न स्यादुत्पत्तिमत्त्वम्; अतोऽर्थादजत्वसिद्धिरित्यर्थः।

**स्याच्चैकस्य ब्रह्मशब्दवत्**।। केषांचिदाशङ्कापदानामुत्तरम्। तान्येव शङ्कापदान्याह— **स्यादेतदिति**। उत्तरत्वेन सूत्रं योजयति— **स्याच्चैकस्यापीति**। अधिकारे प्रकरणे। "अन्नं ब्रह्मेति व्यजानात्" इत्यादिषु गौणः; "आनन्दो ब्रह्मेति व्यजानात्" इत्यत्र मुख्यार्थ इत्यर्थः। प्रकारान्तरमाह— **यथा चेति**। **भक्त्या** उपचारेण। **अञ्जसा** मुख्यवृत्त्या।

### *भाष्यभावप्रकाशिका*

नन्वत्रानुत्पत्तिर्न श्रूयत इति, तत्राह— **न ह्यमृतस्येति**।

सूत्रतात्पर्यमाह— **इदं पदोत्तरमिति**। पदविषयाशङ्काया उत्तरमित्यर्थः। तामाशङ्कां दर्शयति— **स्यादेतदिति**। ननु दृष्टान्तदार्ष्टान्तिकयोर्न तुल्यत्वमेकस्यानुवर्तमानस्य शब्द[स्य] गौणमुख्यत्वभाव उच्यते दार्ष्टान्तिके, (नु) दृष्टान्ते तु शब्दभेदोऽस्तीति चेन्न; एकस्मिन् प्रकरण एकरूपप्रवृत्तेरौत्सर्गिकत्वेऽपि तथाऽसंभवेन गौणत्वमुख्यत्वे यथा तत्रैवमत्राप्युपपद्यत इत्याह— **यथा च तपसि ब्रह्मविज्ञानसाधन**

### *न्यायनिर्णयः*

श्रूयते, न त्वनुत्पत्तिरित्याशङ्क्याह— **न हीति**। श्रुतार्थापत्त्यन्तरमाह— **आकाशवदिति**। तथापि कथमनुत्पत्तिः, तत्राह— **न चेति**। तदनुत्पत्तौ वाक्यमपि मानमित्याह— **स यथेति**। आदिमध्यावसानवैधुर्यमानन्त्यं, तदाकाशस्यादिमत्त्वे नोपपद्येत, आत्मनोऽपि तत्प्रसङ्गादित्यर्थः। किंच नीलमुत्पलमितिवदाकाशेन ब्रह्मणो विशेषणं दृष्टं, तदाकाशस्यानुत्पत्तिमत्त्वं साधयतीत्याह— **आकाशेति**। चकारादुदाहरणमित्यनुकृष्यते। आकाशस्योत्पत्तिमत्त्वेऽपि तेन ब्रह्मणो विशेषणत्वं[षणं] किं न स्यादित्याशङ्क्य बहुव्रीहिणा तादात्म्यावगमान्नैवमित्याह— **न हीति**। शब्दसामर्थ्यसिद्धमुपसंहरति— **तस्मादिति**।।४।।

संभूतशब्दमधिकृत्य संभाविताशङ्कामुच्छिनत्ति— **स्याच्चेति**। पदविषयचोद्योत्तरमिदं सूत्रमिति तात्पर्यमाह— **इदमिति**। तदेव चोद्यं दर्शयति— **स्यादेतदिति**। एकवाक्यस्थस्यैकस्य पदस्यैकस्मिन्नेव प्रकरणे यत्रानुवृत्तिस्तत्र मुख्यत्वं, यत्र प्रयोगस्तत्र गौणतेत्ययुक्तमित्यर्थः। चोद्योत्तरत्वेन सूत्रमवतार्य व्याकरोति— **अत इति**। दृष्टान्तं व्याचष्टे— **यथेति**। दार्ष्टान्तिके संभूतशब्दस्यैकस्यैव मुख्यत्वगौणत्वे, दृष्टान्ते तु शब्दभेदोऽस्तीति वैषम्यमित्याशङ्क्य प्रकरणाभेदे शब्दप्रवृत्तेरेकरूपत्वस्यौत्सर्गिकत्वेऽपि तदसंभवेन गौणत्वमुख्यत्वे दृष्टान्तदृष्टे; तथाऽत्रापीत्येतावन्मात्रस्य विवक्षितत्वान्नैवमित्याह— **यथा चेति**।

भक्त्या प्रयुज्यतेऽञ्जसा तु विज्ञेये ब्रह्मणि, तद्वत्।

कथं पुनरनुत्पत्तौ नभसः 'एकमेवाद्वितीयम्' (छा.उ. ६।२।१) इतीयं प्रतिज्ञा समर्थ्यते? ननु नभसा द्वितीयेन सद्वितीयं ब्रह्म प्राप्नोति; कथं च ब्रह्मणि विदिते सर्वं विदितं स्यादिति। तदुच्यते- एकमेवेति तावत् स्वकार्यापेक्षयोपपद्यते। यथा लोके कश्चित् कुम्भकारकुले पूर्वेद्युर्मृद्दण्डचक्रादीनि चोपलभ्यापरेद्युश्च नानाविधान्यमत्राणि प्रसारितान्युपलभ्य ब्रूयात्- मृदेवैकाकिनी पूर्वेद्युरासीदिति, स च तयाऽवधारणया मृत्कार्यजातमेव पूर्वेद्युर्नासीदित्यभिप्रेयान्न दण्डचक्रादि, तद्वत्। अद्वितीयश्रुतिरधिष्ठात्रन्तरं वारयति- यथा मृदोऽमत्रप्रकृतेः कुम्भकारोऽधिष्ठाता दृश्यते, नैवं ब्रह्मणो जगत्प्रकृतेरन्योऽधिष्ठाताऽस्तीति। न च नभसाऽपि द्वितीयेन सद्वितीयं ब्रह्म प्रसज्यते। लक्षणान्यत्वनिमित्तं हि नानात्वम्। न च प्रागुत्पत्तेर्ब्रह्मनभसोर्लक्षणान्यत्वमस्ति, क्षीरोदकयोरिव संसृष्टयोः, व्यापित्वामूर्तत्वादिधर्मसामान्यात्। सर्गकाले तु ब्रह्म जगदुत्पादयितुं यतते, स्तिमितमितरत् तिष्ठति। तेनान्यत्वमवसीयते। [१]तथा 'आकाशशरीरं ब्रह्म' (तै.उ. १।६।२) इत्यादिश्रुतिभ्योऽपि

### *प्रकटार्थविवरणम्*

सिद्धान्तिन आक्षेपमाह— **कथं पुनरिति**। का पुनरिहानुपपत्तिरित्याशङ्क्याह— **ननु नभसेति**। ब्रह्मणः कार्यं किंचित् प्रलये न बभूवेति घटते सत्यपि नभसीत्याह— **तदुच्यत इति**। कुले गृहे। अमत्राणि पात्राणि। अद्वितीयविशेषणस्य व्यावर्त्यं कथयति— **अद्वितीयश्रुतिरिति**। पूर्वं नभसा सद्वितीयत्वमङ्गीकृत्य अद्वितीयश्रुतिस्तत्र वारयतीत्युक्तम्। इदानीं तदपि नास्तीत्याह— **न चेति**। ननु यदि प्रलयकाले [कालेऽनन्यत्वम्, अन्यत्वं] तर्हि कथमध्यवसीयत इत्याशङ्क्याह— **सर्गकाले त्विति**। इतश्च प्रलयकाले ब्रह्माकाशयोरन्योन्यसंश्लेषात् स्वरूपभेदो न व्यज्यत इत्यवगन्तव्यमित्याह— **तथाऽऽकाशेति**। यदुक्तं प्रतिज्ञा न

### *भाष्यभावप्रकाशिका*

इति। पदस्यानुषङ्गो न पदार्थस्य। तच्च क्वचिन्मुख्यं क्वचिदौपचारिकं संभवासंभवाभ्यामित्यविरोध इत्यर्थः।

चोद्यद्वयं करोति— **कथं पुनरिति**। काऽनुपपत्तिरित्याशङ्क्य स एवाह— **ननु नभसेति**। अथवा[अव]धारणं तावदापेक्षिकं संभवतीति प्रथमं चोद्यं परिहरति— **एकमिति**। कुलं गृहम्। अमत्राणि पात्राणि घटशरावादीनि। प्राप्त्यभावे किमर्थं निवारणमित्याह— **यथेति**। उपपत्त्यन्तरमाह— **न च नभसाऽपीति**। अवधारणं यदि सर्वापेक्षं तदाऽप्यदोष इत्यर्थः। लक्षणभेदाभावे पृथक्त्वमाकाशस्य न सिध्येदित्याशङ्क्याह— **सर्गकाले त्विति**। इदानीं श्रुत्यैवाभेदोपचारादद्वितीयमित्याह— **तथाऽऽकाशशरीरमिति**। द्वितीयं

### *न्यायनिर्णयः*

अद्वितीयश्रुतिविरोधादवधारणश्रुतिविरोधाच्चाकाशानुत्पत्तिरयुक्तेति शङ्कते— **कथमिति**। का पुनः श्रुत्योरनुपपत्तिरित्याशङ्क्याक्षेप्तैव ब्रूते— **नन्विति**। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधाच्चाकाशानुत्पत्तिरयुक्तेत्याह— **कथं चेति**। चोद्यद्वयं परिहरति— **तदुच्यत इति**। तत्रावधारणश्रुतेरुपपत्तिमाकाशानुत्पत्तिपक्षेऽपि दर्शयति— **एकमिति**। आपेक्षिकमवधारणमित्यत्र दृष्टान्तमाह— **यथेति**। कुलं गृहम्। अमत्राणि घटशरावादीनि पात्राणि। तत्रापि कथमवधारणेत्याशङ्क्याह— **स चेति**। अन्यथा मृदादिप्रत्यक्ष-विरोधः स्यादिति भावः। प्रकृतेऽपि स्वकार्यापेक्षमवधारणमविरुद्धम्। तदकार्यं तु तदतिरिक्तमपि प्रागवस्थायामस्तु, का हानिरित्याह— **तद्वदिति**। अवधारणश्रुतिवदद्वितीयश्रुतेरविरोधमाह— **अद्वितीयेति**। प्राप्त्यभावे किमर्थं तन्निवारणमित्याशङ्क्य प्राप्तिदर्शनपूर्वकं तन्निवारणमेव विवृणोति— **यथेति**। यदुक्तं नभसा द्वितीयेन सद्वितीयं ब्रह्म स्यादिति, तत्राह— **न चेति**। नभश्चेद् द्वितीयं कथं तेन ब्रह्म सद्वितीयं नेत्याशङ्क्याह— **लक्षणेति**। शब्दवदाकाशम्, अशब्दादिमद् ब्रह्मेत्यस्ति प्रस्तुतेऽपि लक्षणान्यत्वमित्याशङ्क्याह— **न चेति**। निरवयवत्वारूपत्वादिसंग्रहार्थमादिपदम्। लक्षणभेदाभावे कथं पृथक्त्वमनयोरित्याशङ्क्याह— **सर्गेति**। लक्षणानन्यत्वनिमित्ताभेदोपचारादद्वितीयत्वमित्युक्तेऽर्थे श्रुतिमनुग्राहिकामाह— **तथेति**। 'आकाश आत्मा', 'खं ब्रह्म' इत्याद्या

---

१. 'तथा च' इति पा.।

**ब्रह्माकाशयोरभेदोपचारसिद्धिः। अत एव च ब्रह्मविज्ञानेन सर्वविज्ञानसिद्धिः। अपि च सर्वं कार्यमुत्पद्यमानमाकाशेनाव्यतिरिक्तदेशकालमेवोत्पद्यते, ब्रह्मणा चाव्यतिरिक्तदेशकालमेवाकाशं भवति, इत्यतो ब्रह्मणा तत्कार्येण च विज्ञातेन सह विज्ञातमेवाकाशं भवति। यथा क्षीरपूर्णे घटे कतिचिदब्बिन्दवः प्रक्षिप्ताः सन्तः क्षीरग्रहणेनैव गृहीता भवन्ति, न हि क्षीरग्रहणादब्बिन्दुग्रहणं परिशिष्यते, एवं ब्रह्मणा तत्कार्यैश्चाव्यतिरिक्तदेशकालत्वाद् गृहीतमेव ब्रह्मग्रहणेन नभो भवति। तस्माद् भाक्तं नभसः संभवश्रवणमिति।।५।।**

**एवं प्राप्त इदमाह–**

**प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः।।६।।**

**'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छा.उ. ६।१।३) इति, 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्' (बृ.उ. ४।५।६) इति, 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु.उ. १।१।३) इति, 'न काचन मद् बहिर्धा विद्याऽस्ति' इति चैवंरूपा प्रतिवेदान्तं प्रतिज्ञा विज्ञायते। तस्याः प्रतिज्ञाया एवमहानिरनुपरोधः स्यात्, यद्यव्यतिरेकः कृत्स्नस्य वस्तुजातस्य विज्ञेयाद् ब्रह्मणः स्यात्। व्यतिरेके हि सत्येकविज्ञानेन सर्वं विज्ञायत इतीयं प्रतिज्ञा हीयेत। स चाव्यतिरेक एवमुपपद्यते, यदि कृत्स्नं**

***प्रकटार्थविवरणम्***

सिध्यतीति, तत्राह— **अत एवेति**। प्रलये ब्रह्माकाशयोः स्वरूपभेदानवभासादेवेत्यर्थः। किं च स्थितिकालेऽप्यविरोध इत्याह— **अपि चेति**। यस्मादाकाशोत्पत्तेर्गौणत्वे न कोऽप्यवकरः तस्मादित्युपसंहारः।

**प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः**।। सिद्धान्ती नभसो जन्मश्रुतेः मुख्यार्थत्वप्रतिपादनपूर्वकं विप्रतिषेधं प्रतिषेद्धुमुपक्रमते— **येनाश्रुतमित्यादिना**।

***भाष्यभावप्रकाशिका***

चोद्यमपाकरोति— **अत एव चेति**। लक्षणान्यत्वाभावेनाकाशस्य ब्रह्मानन्यत्वादित्यर्थः। अन्यस्य ग्रहणादन्यस्य ग्रहणं कथमित्यत आह— **न हीति**।

एवं सिद्धान्तैकदेशिमते प्राप्त इदमाह सिद्धान्ती— **प्रतिज्ञाऽहानिरिति**। ननु पूर्वोक्तन्यायेन व्यतिरेकेऽपि प्रतिज्ञा सिध्यति चेत् किमव्यतिरेकेणेत्यत आह— **व्यतिरेके हीति**। तदुत्पत्तिस्थितिलयत्वेन तदभेदादेकविज्ञानेन सर्वविज्ञानं वक्तव्यमित्यर्थः। ननु

***न्यायनिर्णयः***

श्रुतिरादिशब्दार्थः। लक्षणान्यत्वाभावेनाकाशस्य ब्रह्मानन्यत्वं हेतूकृत्य चोद्यान्तरमपाकरोति— **अत एवेति**। इतश्च ब्रह्मविज्ञानेन सर्वविज्ञानमविरुद्धमित्याह— **अपि चेति**। ब्रह्मणि तत्कार्ये च ज्ञाते तदेकदेशकालमाकाशमपि सहज्ञातमित्यत्र दृष्टान्तमाह— **यथेति**। दृष्टान्तेऽपि कथमन्यस्य ग्रहादन्यस्य ग्रहणमित्याशङ्क्याह— **न हीति**। दृष्टान्ते निविष्टमर्थं दार्ष्टान्तिके योजयति— **एवमिति**। गौणवादी स्वमतमुपसंहरति— **तस्मादिति**।।५।।

वियदुत्पत्तिश्रुतेर्गौणत्वात् तदनुत्पत्तिश्रुत्या विरोधाभावान्नाप्रामाण्यमिति गौणवादिमतमनूद्य सिद्धान्तयति— **एवमिति**। सूत्रं व्याकुर्वन् प्रतिज्ञास्वरूपमाह— **येनेति**। प्रतिवाक्यमितिशब्दोपादानं शाखाभेदख्यापनार्थम्। [1]तस्या विवक्षितत्वसिद्ध्यर्थं विशिनष्टि— **प्रतिवेदान्तमिति**। सर्वस्य ब्रह्ममात्रत्वप्रयुक्त्या प्रतिज्ञानुपरोधं साधयति— **तस्या इति**। 'अत एव ब्रह्मविज्ञानेने'त्यादिना पूर्वोक्तन्यायेन व्यतिरेकेऽपि प्रतिज्ञा सिध्यति चेत् किमव्यतिरेकेणेत्याशङ्क्याह— **व्यतिरेके हीति**। तदुत्पत्तिस्थितिलयत्वेन तदभेदादेकविज्ञानेन

१. तस्याः = प्रतिज्ञायाः।

**वस्तुजातमेकस्माद् ब्रह्मण उत्पद्येत।**

**शब्देभ्यश्च प्रकृतिविकाराव्यतिरेकन्यायेनैव प्रतिज्ञासिद्धिरवगम्यते। तथाहि-'येनाश्रुतं श्रुतं भवति' इति प्रतिज्ञाय मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते। तत्साधनायैव चोत्तरे शब्दाः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा.उ. ६।२।१), 'तदैक्षत', 'तत्तेजोऽसृजत' (छा.उ. ६।२।३) इत्येवं कार्यजातं ब्रह्मणः प्रदर्श्याव्यतिरेकं प्रदर्शयन्ति- 'ऐतदात्म्यमिदं सर्वम्' (छा.उ. ६।८।७) इत्यारभ्याऽऽप्रपाठकपरिसमाप्तेः। तद् यद्याकाशं न ब्रह्मकार्यं स्यान्न ब्रह्मणि विज्ञात आकाशं विज्ञायेत, ततश्च प्रतिज्ञाहानिः स्यात्। न च प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं कर्तुम्। [१]तथाहि-प्रतिवेदान्तं ते ते शब्दास्तेन तेन दृष्टान्तेन तामेव प्रतिज्ञां ज्ञापयन्ति- 'इदं सर्वं यदयमात्मा' (बृ.उ. २।४।६),'ब्रह्मैवेदममृतं पुरस्तात्' (मु.उ. २।२।११) इत्येवमादयः। तस्माज्ज्वलनादिवदेव गगनमप्युत्पद्यते।**

**यदुक्तमश्रुतेर्न वियदुत्पद्यत इति, तदयुक्तम्, वियदुत्पत्तिविषयश्रुत्यन्तरस्य दर्शितत्वात्- 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै.उ. २।१) इति। सत्यं दर्शितम्; विरुद्धं तु 'तत्तेजोऽसृजत' इत्यनेन श्रुत्यन्तरेण। न;**

### *भाष्यभावप्रकाशिका*

प्रतिज्ञा तत्र परिकल्पितत्वेनोपपद्यते, न तदुत्पत्त्यादीन्यपेक्षते। अविद्यायाः परिकल्पितत्वेनैव तदभेददर्शनादिति चेत्? न; अविद्यातत्संबन्धव्यतिरिक्तत्वे सति तदुत्पत्त्यादिव्यतिरेकेण तत्र परिकल्पितत्वासिद्धेरित्याह— **स चाव्यतिरेक इति**। भवतु प्रतिज्ञाहानिरित्यत आह— **न च प्रतिज्ञाहान्येति**। एका चेदियं प्रतिज्ञा तदा कथञ्चिदविवक्षितत्वमपि शङ्क्येत, भवतु, बह्व्यः प्रतिज्ञा उपपत्तिसहिता अवगम्यन्त इत्याह— **तथा च प्रतिवेदान्तमिति**।

स्वपक्षस्थापकं प्रमाणमुक्त्वा परोक्तं दूषणं परिहरति— **यदुक्तमिति**। तदेवं सिद्धान्तैकदेशिनि दूषिते पूर्वपक्षी स्वपक्षं श्रुतीनां परस्परविरोधमाह— **सत्यं दर्शितमिति**। विरुद्धत्वेनाप्रामाण्यस्वीकरणादेकवाक्यतया प्रामाण्यमेव स्वीकर्तुं युक्तमित्याह— **नैकवाक्यत्वादिति**। सकृच्छ्रुतस्य कर्तुः कर्तव्यद्वयसंबन्धवदुपपद्यत इति चेन्न; तत्र क्रमेण संबन्धः, स सूपं पक्त्वौदनं पचतीति।

### *न्यायनिर्णयः*

सर्वविज्ञानं वक्तव्यं, नान्यथा तन्मुख्यत्वम्। संभवति मुख्यत्वे कुतस्तदौपचारिकतेत्यर्थः। ननु प्रतिज्ञा सर्वस्य ब्रह्मणि कल्पितत्वेनोपपद्यते, न तदुत्पत्त्याद्यपेक्षते, तत्र कल्पितत्वमन्तरेणाविद्यातत्कार्ययोस्तदुत्पत्त्याद्यभावादित्याशङ्क्याविद्यातत्संबन्धातिरिक्तत्वे सति तदुत्पत्त्याद्यतिरेकेण तत्र कल्पितत्वासिद्धेर्मैवमित्याह— **स चेति**। अवशिष्टं सूत्रावयवं व्याचष्टे— **शब्देभ्यश्चेति**। प्रकृतेर्विकाराणामव्यतिरेक एव न्यायस्तेनैवेति यावत्। शब्दानेवोदाहरति— **तथा हीति**। 'सदेवे'त्यादिशब्दानां प्रतिज्ञाविषयत्वाभावान्न सा तत्र विवक्षितेत्याशङ्क्याह— **तत्साधनायेति**। शब्दानां प्रतिज्ञापरत्वेऽपि कथमाकाशस्य ब्रह्मकार्यतेत्याशङ्क्याह— **तद्यदीति**। प्रतिज्ञाहानिमनुमोदमानं प्रत्याह— **न चेति**। किंच प्रतिज्ञा चेदियमेका स्यात् तदा कथंचिदविवक्षिता शङ्क्येत, तास्तु भूयस्यो युक्तिसहिताश्च गम्यन्ते, तत्राविवक्षितत्वशङ्केत्याह— **तथा हीति**। **तेन तेन दृष्टान्तेन**। दुन्दुभिशङ्खवीणामृदादिनेति यावत्। 'ते ते शब्दा' इत्युक्तं व्यनक्ति— **इदमिति**। श्रौतप्रतिज्ञासामर्थ्यसिद्धमुपसंहरति— **तस्मादिति**।

स्वपक्षसाधकं प्रमाणमुक्त्वा छान्दोग्यानुसारेण परोक्तमनुवदति— **यदुक्तमिति**। तैत्तिरीयकश्रुत्यनुरोधेन परिहरति— **तदयुक्तमिति**। एकदेशिनि दूषिते पूर्वपक्षी स्वपक्षे श्रुतीनां मिथो विरोधमुक्तं स्मारयति— **सत्यमिति**। विरुद्धत्वेनाप्रामाण्याङ्गीकारादेकवाक्यतया प्रामाण्यमेवाङ्गीकर्तुं युक्तमित्याह— **नेत्यादिना**। श्रुतीनामेकवाक्यत्वस्याविरोधापेक्षत्वात् प्रकृते च श्रुतिद्वयविरोधस्योक्तत्वान्नैकवाक्यतेति

१. 'तथा च' इति पा.।

**एकवाक्यत्वात् सर्वश्रुतीनाम्। भवत्वेकवाक्यत्वमविरुद्धानाम्; इह तु विरोध उक्तः, सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धासंभवाद्, द्वयोश्च प्रथमजत्वासंभवाद्, विकल्पासंभवाच्चेति। नैष दोषः। तेजःसर्गस्य तैत्तिरीयके तृतीयत्वश्रवणात्– 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः' (तै.उ. २।१) इति। अशक्या हीयं श्रुतिरन्यथा परिणेतुम्। शक्या तु परिणेतुं छान्दोग्यश्रुतिः– तदाकाशं वायुं च सृष्ट्वा 'तत्तेजोऽसृजत' इति। न हीयं श्रुतिस्तेजोजनिप्रधाना सती श्रुत्यन्तरप्रसिद्धामाकाशस्योत्पत्तिं वारयितुं शक्नोति। एकस्य वाक्यस्य व्यापारद्वयासंभवात्। स्रष्टा त्वेकोऽपि क्रमेणानेकं स्रष्टव्यं सृजेत्– इत्येकवाक्यत्वकल्पनायां**

### *प्रकटार्थविवरणम्*

विरोधादेकवाक्यता न संभवतीत्युक्तं दूषयति— **नैष दोष इति**। तेजःसर्गस्य तैत्तिरीयके तृतीयत्वस्य श्रवणान्निरवकाशा तैत्तिरीयश्रुतिः। अतो विरोधेऽपि तदेकवाक्यतया सावकाशा छन्दोगश्रुतिः व्याख्यातव्येत्यर्थः। किं च विरोधोऽपि तदा स्यात्, यदि छन्दोगश्रुतिराकाशस्योत्पत्तिं वारयेत्; न तु वारयतीत्याह— **न हीयं श्रुतिरिति**। यच्चोक्तं स्रष्टुः स्रष्टव्यद्वयसम्बन्धो विरुद्ध

### *भाष्यभावप्रकाशिका*

हेतु[इह तु] द्वयोः प्राथम्यावगमाद् युगपच्चानुत्पत्तेः क्रमसृष्टेर्विवक्षितत्वाद् विरोध इत्याह— **द्वयोश्चेति**। सिद्धान्तसारमाह— **तेजस्सर्गस्येति**। अयं भावः— तेजःप्राथम्योपादाने सत्याकाशसृष्टिस्तत्प्राथम्यञ्चोभयं बाध्यं स्यादाकाशप्राथम्योपादाने तु तेजःप्राथम्यमेव बाध्यते, न तेजःसृष्टिर्वायोरग्निरिति तस्याः स्थानान्तरलाभात्। तत्र श्रुतधर्मिबाधकल्पनादुभयबाधप्रसङ्गकाद् धर्मबाधकल्पनमेव लघीयः(श्रुति) इति। श्रुत्योरन्यथोपपद्यमानानुपपद्यमानयोरन्यथानुपपद्यमाना बलीयसी। अतस्तैत्तिरीयकश्रुत्यनुसारेण सृष्टिरभ्युपगन्तव्येत्याह— **अशक्या हीति**। अन्यास्या[अन्यस्याः] अन्यथोपपत्तिमाह— **शक्या परिणेतुमिति**। किं च तेजश्श्रुतिः साक्षाद्बाधते किं वाऽर्थादिति। न तावत् साक्षादित्याह— **न हीयं श्रुतिरिति**। अथार्थात्, तदपि न, आर्थिकस्य श्रुत्यपेक्षया दुर्बलत्वादित्याह— **श्रुत्यन्तरप्रसिद्धामिति**। साक्षाद्बाधने दोषान्तरमाह— **एकस्येति**। नन्वेकस्य व्यापारद्वयं दृश्यत इत्याशङ्क्याह— **स्रष्टा त्विति**। वृद्धप्रयोगाधीनं शब्द-सामर्थ्यावधारणम्। न चानावृत्तस्य शब्दस्य क्रमाक्रमाभ्यामनेकत्रार्थे व्यापारो दृष्टः। दृष्टं तु क्रमाक्रमाभ्यामेकस्यापि कर्तुरनेकव्यापारत्व-मित्यर्थः। उपसंहरति— **इत्येकवाक्येति**। नन्वनावृत्तस्य शब्दस्यानेकव्यापारो न संभवति चेत् 'तत्तेजोऽसृजते'त्यत्राकाशोत्पत्तिः

### *न्यायनिर्णयः*

शङ्कते— **भवत्विति**। उक्तं विरोधमेव स्फोरयति— **सकृदिति**। 'तत्तेजोऽसृजत' इति स्रष्टा तच्छब्दार्थः सकृदेव श्रुतः, तस्य स्रष्टव्यद्वयेनाकाशेन तेजसा च संबन्धः 'तदाकाशमसृजत', 'तत्तेजोऽसृजत' इति नोपपद्यते, तत् कथमेकवाक्यतेत्यर्थः। स सूपं पक्त्वौदनं पचतीतिवदेकस्यापि स्रष्टुः स्रष्टव्यद्वयसंबन्धसिद्धिरित्याशङ्क्य दृष्टान्ते क्रमसंबन्धेऽपि दार्ष्टान्तिके प्राथम्यदृष्टेरुभयोः सृष्टि-क्रमस्य चेष्टत्वाद् युगपदनुत्पत्तेर्न विरोधसमाधिरित्याह— **द्वयोश्चेति**। शाखाभेदेन प्रथमजत्वं विकल्प्यतामित्याशङ्क्य वस्तुनि तदयोगान्नैवमित्याह— **विकल्पेति**। तेजःसृष्टिप्राथम्ये वियत्सृष्टिस्तत्प्राथम्यं चेत्युभयं बाध्यम्, आकाशसृष्टिप्राथम्ये तु प्राथम्यमेव तेजःसृष्टेर्बाध्यं, न तत्सृष्टिर्वायोरग्निरिति तस्याः स्थानान्तरप्रतिलम्भात्, तत्र श्रुतधर्मिबाधकल्पनादुभयबाधप्रसङ्गकाद्धर्मबाधकल्पनमेव युक्तमित्याह— **नैष इति**। किंच श्रुत्योरन्यथोपपद्यमानानुपपद्यमानयोरन्यथानुपपद्यमाना श्रुतिर्बलीयसीति तैत्तिरीयश्रुतिरेवानुसर्तव्येत्याह— **अशक्येति**। छान्दोग्यश्रुतेरन्यथोपपद्यमानत्वेन दुर्बलत्वमाह— **शक्येति**। अन्यथा परिणयनमेवाभिनयति— **तदाकाशमिति**। किंच 'तत्तेजोऽसृजत' इति श्रुतिः साक्षादेवाकाशस्योत्पत्तिं वारयेदर्थाद्वेति विकल्प्याद्यं दूषयति— **न हीति**। न द्वितीयः, आर्थिकस्य श्रुतेर्दुर्बलत्वादित्याह— **श्रुत्यन्तरेति**। तेजःश्रुतिस्तेजोजन्म वियदनुत्पत्तिश्चेत्युभयं साक्षादेव बोधयति चेत् का हानिरित्याशङ्क्याह— **एकस्येति**। एकस्य स्रष्टुरनेकव्यापारवदेकस्यापि वाक्यस्य किं न स्यादित्याशङ्क्याह— **स्रष्टा त्विति**। वृद्धप्रयोगाधीनं शब्दसामर्थ्यावधारणम्। न चावृत्तिरहितस्य शब्दस्यानेकत्रार्थे व्यापारो दृष्टः। दृष्टं तु क्रमाक्रमाभ्यामेकस्यापि कर्तुरनेकव्यापारवत्त्वमित्यर्थः। उक्तन्यायेन श्रुत्योरेकवाक्यत्वेनाविरुद्धार्थतया प्रामाण्यं युक्तमित्युपसंहरति— **इत्येकेति**। एकं वाक्यमावृत्तिरहितमनेकव्यापारवत्र

**संभवन्त्यां न विरुद्धार्थत्वेन श्रुतिर्हातव्या। न चास्माभिः सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धोऽभिप्रेयते, श्रुत्यन्तरवशेन स्रष्टव्यान्तरोपसंग्रहात्। यथा च 'सर्वं खल्विदं ब्रह्म तज्जलान्' (छा.उ. ३।१४।१) इत्यत्र साक्षादेव सर्वस्य वस्तुजातस्य ब्रह्मजत्वं श्रूयमाणं न प्रदेशान्तरविहितं तेजःप्रमुखमुत्पत्तिक्रमं वारयति, एवं तेजसोऽपि ब्रह्मजत्वं श्रूयमाणं न श्रुत्यन्तरविहितं नभःप्रमुखमुत्पत्तिक्रमं वारयितुमर्हति।**

**ननु शमविधानार्थमेतद्वाक्यम् 'तज्जलानिति शान्त उपासीत' (छा.उ. ३।१४।१) इति श्रुतेः, नैतत् सृष्टिवाक्यम्। तस्मादेतन्न प्रदेशान्तरप्रसिद्धं क्रममुपरोद्धुमर्हतीति। 'तत्तेजोऽसृजत' इत्येतत् सृष्टिवाक्यम्। तस्मादत्र यथाश्रुति क्रमो ग्रहीतव्य इति। नेत्युच्यते। न हि तेजःप्राथम्यानुरोधेन श्रुत्यन्तरप्रसिद्धो वियत्पदार्थः परित्यक्तव्यो भवति, पदार्थधर्मत्वात् क्रमस्य।**

**अपि च 'तत्तेजोऽसृजत' इति नात्र क्रमस्य वाचकः कश्चिच्छब्दोऽस्ति। अर्थात्तु क्रमोऽवगम्यते। स**

### *प्रकटार्थविवरणम्*

इति, तत्राह— **स्रष्टा त्वेकोऽपीति**। सकृच्छ्रुतत्वमप्यसिद्धमित्याह— **न चास्माभिरिति**। ननु "तत् तेजोऽसृजत" इति साक्षात् तेजसो ब्रह्मजत्वश्रवणान्यथानुपपत्त्याऽऽकाशादिक्रमो बाध्यत एव; न तूपसंह्रियत इत्याशङ्क्याह— **यथा च सर्वमिति**। दृष्टान्तवैषम्यं शङ्कते— **नन्विति**। यद्यपि तत्परत्वातत्परत्ववैषम्यमस्ति, तथापि "तत्तेजोऽसृजत" इत्यस्य बाधकत्वं न संभवतीत्याह— **नेत्युच्यत इति**। वियत्पदार्थसृष्टेः प्रतिषेधे सति पदार्थधर्मत्वात् क्रमस्य प्राथम्यस्यापि बाधो वक्तव्य इत्युभयबाधकल्पनाद् वरं तेजसः प्राथम्यमात्रबाधकल्पनमिति भावः। अङ्गीकृत्य तेजसः प्राथम्यश्रवणं (बाधकमिति) दूषणमुक्तम्; तदपि नास्तीत्याह— **अपि**

### *भाष्यभावप्रकाशिका*

कथमुपसंहर्तव्येत्याशङ्क्य नास्मिन्नर्थ एकस्य व्यापारः, अपि तु भिन्नानां वाक्यानामित्याह— **न चास्माभिरिति**। श्रुत्यन्तरावगतोऽपि क्रमः श्रुत्यन्तर उपसंहर्तव्य इत्येतदुदाहरणेन दर्शयति— **यथेति**। शङ्कते— **ननु शमविधानार्थमिति**। यत्परः शब्दः स शब्दार्थः। अयं तु न दृष्टि[सृष्टि]परः, अपि तु शमपरः। अतो न प्रसिद्धक्रमं बाधत इत्यर्थः। गुणत्वात् क्रमस्य प्रधानपदार्थविरोधात्यायेगान[धात् त्यागो न] युक्त इति परिहरति— **न हि तेज इति**।

अपि च छान्दोग्ये तेजःप्राथम्यं शब्दादवगम्यते, किं वाऽर्थात्? न तावदाद्य इत्याह— **अपि च तत्तेज इति**। अर्थावगतक्रमस्य बाधकत्वं न युक्तम्, श्रौतक्रमविरोधादित्याह— **अर्थात् त्विति**।

### *न्यायनिर्णयः*

चेत् कथं तर्हि 'तत्तेजोऽसृजत' इत्यत्राकाशस्योत्पत्तिरुपसंहर्तव्येत्याशङ्क्य नास्मिन्नर्थे वाक्यस्यैकस्य व्यापारः, अपि तु भिन्नानां वाक्यानामित्याह— **न चेति**। श्रुत्यन्तरसिद्धोऽपि क्रमः श्रुत्यन्तरे संग्राह्यो भवतीत्येतद् दृष्टान्तेन स्पष्टयति— **यथा चेति**। दृष्टान्तवैषम्यं शङ्कते— **नन्विति**। तत्र विशेषणश्रुतिं प्रमाणयति— **तज्जलानितीति**। व्यावर्त्यं कीर्तयति— **नैतदिति**। यत्परः शब्दः स शब्दार्थः। न चायं शब्दः सृष्टिपरः, अतो न प्रसिद्धं क्रमं बाधितुमलमिति फलितमाह— **तस्मादिति**। दार्ष्टान्तिके विशेषमाह— **तत्तेज इति**। तस्य सृष्टिपरत्वेऽपि श्रुत्यन्तरप्रसिद्धक्रमानुरोधित्वमाशङ्क्याह— **तस्मादिति**। तत्परत्वातत्परत्ववैषम्येऽपि 'तत्तेजोऽसृजत' इत्यस्य न श्रुत्यन्तरसिद्धक्रमनिवारकतेत्याह— **नेत्युच्यत इति**। किंच गुणभूतक्रमविरोधान्न प्रधानभूतपदार्थत्यागो युक्तः, गुणप्रधानविरोधे प्रधानानुरोधस्यैव युक्तत्वादित्याह— **न हीति**।

इतोऽपि तेजःप्राथम्यानुरोधेन वियत्पदार्थत्यागानुपपत्तिरित्याह— **अपि चेति**। छान्दोग्ये तत्प्राथम्यं शाब्दमार्थं वा? नाद्य इत्याह— **तत्तेज इति**। न द्वितीयः, अर्थसिद्धक्रमस्य श्रौतक्रमविरोधे बाधकत्वायोगादित्याह— **अर्थात्त्विति**। वियत्पवनयोः श्रुतिं विना प्रथमतस्तेजःश्रुतिवशात् तस्य सृष्टौ प्राथम्यं भाति, तच्च श्रुत्यन्तरे तृतीयत्वश्रुत्या व्याहतमित्यर्थः। शाखाभेदेन

**च 'वायोरग्निः' इत्यनेन श्रुत्यन्तरप्रसिद्धेन क्रमेण निवार्यते। विकल्पसमुच्चयौ तु वियत्तेजसोः प्रथमजत्वविषयाव-संभवानभ्युपगमाभ्यां निवारितौ। तस्मान्नास्ति श्रुत्योर्विप्रतिषेधः।**

**अपि च छान्दोग्ये 'येनाश्रुतं श्रुतं भवति' इत्येतां प्रतिज्ञां वाक्योपक्रमे श्रुतां समर्थयितुमसमाम्नातमपि वियदुत्पत्तावुपसंख्यातव्यम्, किमङ्ग पुनस्तैत्तिरीयके समाम्नातं नभो न संगृह्यते।**

**यच्चोक्तमाकाशस्य सर्वेणानन्यदेशकालत्वाद् ब्रह्मणा तत्कार्यैश्च सह विदितमेव तद् भवति, अतो न प्रतिज्ञा हीयते, न च 'एकमेवाद्वितीयम्' इति श्रुतिकोपो भवति, क्षीरोदकवद् ब्रह्मनभसोरव्यतिरेकोपपत्तेरिति। अत्रोच्यते। न क्षीरोदकन्यायेनेदमेकविज्ञानेन सर्वविज्ञानं नेतव्यम्। मृदादिदृष्टान्तप्रणयनाद्धि प्रकृतिविकारन्यायेनैवेदं सर्वविज्ञानं नेतव्यमिति गम्यते। क्षीरोदकन्यायेन च सर्वविज्ञानं कल्प्यमानं न सम्यग्विज्ञानं स्यात्। न हि क्षीरज्ञानगृहीतस्योदकस्य सम्यग्विज्ञानगृहीतत्वमस्ति। न च वेदस्य पुरुषाणामिव मायाऽलीकवञ्चनादि-**

### *प्रकटार्थविवरणम्*

**च तत्तेज इति**। ननु शाखाभेदेन विकल्पो भवतु, उभयं वोभयत्रेत्याशङ्क्याह— **विकल्पसमुच्चयौ त्विति**। सिद्धवस्तुत्वेन विकल्पो न संभवति; उभयोरपि तूभयत्र प्रथमजत्वं नाभ्युपगम्यते "वायोरग्निः" इति श्रुतिविरोधादेवेत्यर्थः। इतोऽपि न शाखाभेदेन विकल्पः संभवतीत्याह— **अपि च छान्दोग्य इति**।

उक्तानुवादेन दूषणमाह— **यच्चोक्तमित्यादिना**। मा भूत् सम्यग्ज्ञानमिति न वाच्यमित्याह— **न च वेदस्येति**। इतश्च

### *भाष्यभावप्रकाशिका*

न केवलं विरोधाभावोऽपि त्वनुकूलैव तैत्तिरीयकश्रुतिरित्याह— **अपि च छान्दोग्य इति**।

यत्पुनरन्यथा प्रतिज्ञोपपादनं तद् दूषयति— **यच्चोक्तमिति**। दृष्टान्तानुरोधित्वाद् दार्ष्टान्तिकस्य तस्य च प्रकृतिविकाररूपत्वाद् दार्ष्टान्तिकेऽपि तथा भाव्यमितीति भावः। किं भ्रान्तिमूलमेव तद्वचनमेकमेवाद्वितीयमिति तोये क्षीरमितिवत्; अथवा औपचारिकं सिंहो माणवक इतिवत्; तत्र न तावद् भ्रान्तिमूलमित्याह— **क्षीरोदकन्यायेनेति**।

ननु तादृशमेव ज्ञानमत्रापि किं न स्यादित्यत आह— **न च वेदस्येति**। भ्रान्तिविप्रलम्भादेः पुरुषधर्मत्वादपौरुषेये

### *न्यायनिर्णयः*

विकल्पो वा स्यादुभयप्राथम्यस्योभयत्रोपसंहृतेः समुच्चयो वेत्याशङ्क्याह— **विकल्पेति**। प्रथमजत्वे सिद्धवस्तुत्वाद् [१]विकल्पासंभवान्निरस्तः। 'वायोरग्निः' इति श्रुतिविरोधान्नोभयोरुभयत्र प्रथमजत्वम्। न च क्रमसृष्टाविष्टायामुभयोरुभयत्र प्राथम्यमुपसंहर्तुं शक्यं, तेन द्वाभ्यां द्वावपि निरस्तावित्यर्थः। तैत्तिरीयश्रुत्यनुरोधेन छान्दोग्यश्रुतिनयनान्न तयोर्विरोधोऽस्तीत्युपसंहरति— **तस्मादिति**। न केवलमविरोधोऽपि तु छन्दोगश्रुतेरनुकूलैव तैत्तिरीयश्रुतिरित्याह— **अपि चेति**। उत्पत्तौ वियदुपसंहारं विनाऽपि प्रतिपादितत्वात्प्रतिज्ञाया न छान्दोग्यश्रुत्यनुकूला तैत्तिरीयश्रुतिरित्याशङ्क्य पूर्वोक्तमनुवदति— **यच्चेति**। 'अतो न प्रतिज्ञे'त्यत्राकाशस्योत्पत्त्यभावेऽपि इति शेषः। 'एकमेवाद्वितीय'मिति श्रुतिसमाधानमनुद्रवति— **न चेति**। अन्यथा प्रतिज्ञोपपादनं तावद् दूषयति— **अत्रेति**। क्षीरपूर्णघटे प्रक्षिप्ता नीरबिन्दवस्तद्ग्रहणेनैव गृह्यन्ते, न पृथक्पाथोबिन्दूनां ग्रहणमवशिष्यते। तथा ब्रह्मणि सकार्ये ज्ञाते तदभिन्नदेशकालं नभो विज्ञातमेव, तदनेन दृष्टान्तेन नेदं प्रतिज्ञानं नेतुं युक्तं, दृष्टान्तानुरोधित्वाद् दार्ष्टान्तिकस्य, दृष्टान्तस्य च प्रकृतिविकाररूपत्वाद् दार्ष्टान्तिकेऽपि तथात्वस्य युक्तत्वात्। तस्मादाकाशादेर्ब्रह्मविकारत्वे तत्प्रकृतिभूतब्रह्मणोऽनन्यत्वमित्यनेनैव न्यायेनेदं नेयमित्यर्थः। इतश्च न क्षीरोदकदृष्टान्तेनैतन्नेतव्यमित्याह— **(न)क्षीरेति**। तत्र हेतुमाह— **न हीति**। मा भूदेकविज्ञानेन सर्वविज्ञानं सम्यग्ज्ञानम्, तत्राह— **न चेति**। मायया भ्रान्तिरूपया यदलीकं मिथ्याभाषणं तेन वञ्चनमन्यथाबोधनं तेन वा विप्रलिप्सादिभिर्वा नार्थावधारणमपौरुषेयस्य वेदस्योपपद्यते। तेषां पुरुषधर्मत्वाद् वेदेऽसंभवादित्यर्थः। यत्तु क्षीरनीरवद् ब्रह्मनभसोरव्यतिरेकादद्वितीयश्रुतिरिति,

१. 'विकल्पोऽसंभवात्' इति पाठः स्यात्।

**भिरर्थावधारणमुपपद्यते। सावधारणा चेयम् 'एकमेवाद्वितीयम्' इति श्रुतिः क्षीरोदकन्यायेन नीयमाना पीड्येत। न च स्वकार्यपेक्षयेदं वस्त्वेकदेशविषयं सर्वविज्ञानमेकमेवाद्वितीयतावधारणं[1] चेति न्याय्यम्, मृदादिष्वपि हि तत्संभवात् न तदपूर्ववदुपन्यसितव्यं भवति- 'श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति' (छा.उ. ६।१।२,३) इत्यादिना। तस्मादशेषवस्तुविषयमेवेदं सर्वविज्ञानं सर्वस्य ब्रह्मकार्यतापेक्षयोपन्यस्यत इति द्रष्टव्यम्।।६।।**

**यत्पुनरेतदुक्तमसंभवाद् गौणी गगनस्योत्पत्तिश्रुतिरिति। अत्र ब्रूमः-**

**यावद्विकारं तु विभागो लोकवत्।।७।।**

**तुशब्दोऽसंभवाशङ्काव्यावृत्त्यर्थः। न खल्वाकाशोत्पत्तावसंभवाशङ्का कर्तव्या। यतो यावत्किंचिद् विकारजातं दृश्यते- घटघटिकोदञ्चनादि वा, कटककेयूरकुण्डलादि वा, सूचीनाराचनिस्त्रिंशादि वा, तावानेव विभागो लोके लक्ष्यते। न त्वविकृतं किंचित् कुतश्चिद् विभक्तमुपलभ्यते। विभागश्चाकाशस्य पृथिव्यादिभ्योऽवगम्यते।**

***प्रकटार्थविवरणम्***

नोपचार इत्याह— **सावधारणा चेयमिति**। यच्चोक्तं स्वकार्यपेक्षयेति, तत्राह—**न चेति**।

**यावद्विकारं तु विभागो लोकवत्**।। उक्ततर्कापाकरणाय सूत्रमवतारयति— **यत्पुनरेतदुक्तमिति**। विमतं कार्यम्, विभक्तत्वात्, घटादिवदिति प्रयोगः। विभक्तत्वं च स्वातन्त्र्येण सन्मात्रव्यावृत्तबुद्धिविषयत्वम्; ततो नात्माविद्यातत्संबन्धभेदेषु व्यभिचारः। ननु

***भाष्यभावप्रकाशिका***

चैतदसंभव इत्यर्थः। नाप्यौपचारिकमित्याह— **सावधारणा चेयमिति**। अवधारणाद्वितीयपदे उपचारे नोपपद्येते। माणवके सिंहत्वोपचारे 'न सिंहादन्योऽस्ति माणवक' इति प्रयोगाभावादित्यर्थः। सर्वशब्दस्य निश्शेषवचनस्य श्रुत्यन्तरविरोधाभाव एकदेशविषयत्वमयुक्तमित्याह— **न चेति**। स्वकार्यपेक्षयैकत्वावधारणस्य लोकप्रसिद्धत्वात्र शास्त्रप्रतिपाद्यतेत्याह— **मृदादिष्वपीति**। अपूर्ववदुपन्यासः कथमिति तं दर्शयति— **श्वेतकेतो इति**।

आकाशस्योत्पत्तौ प्रमाणान्तरविरोधमुक्तमनूद्य तस्यैव मानान्तरविरोधेना(माना)मानत्वान्न गौणत्वापादनसामर्थ्यमित्याह— **यावद्विकारमिति**। अन्वयमुक्त्वा व्यतिरेकमाह— **न त्विति**। हेतोः पक्षधर्मतामाह— **विभागश्चाकाशस्येति**। कालादिषु कार्यत्वाभावेऽपि

***न्यायनिर्णयः***

तत्राह— **सावधारणेति**। यद्यद्वितीयपदमौपचारिकं तर्हि कथमवधारणम्? न हि माणवके सिंहत्वोपचारेण 'सिंहादन्यो माणवको ने'ति प्रयोगोऽस्तीत्यर्थः। यत्तु स्वकार्यपेक्षया सर्वमिदमुपपन्नमिति, तत्राह— **न चेति**। तत्संभवाद् [2]ब्रह्मणि विशेषणवैयर्थ्यमिति पूरयितुं हिशब्दः। मृदादिष्वपि स्वकार्यपेक्षया वस्त्वेकदेशविषयं सर्वविज्ञानमिच्छन्तं प्रति दोषान्तरमाह— **न तदिति**। कथमपूर्ववदुपन्यासः, तत्राह— **श्वेतकेतो इति**। त्वत्पक्षे वा कथमिदं प्रतिज्ञानम्, तत्राह— **तस्मादिति**। स्वकार्यपेक्षया वस्त्वेकदेशविषयत्वासंभवादिति यावत्।।६।।

सावधारणाद्वितीयश्रुतेरेकविज्ञानेन सर्वविज्ञानप्रतिपादनाच्च नभसोऽपि ब्रह्मकार्यत्वं पृथिव्यादिवदित्युक्तम्। इदानीमनुमान-विरोधादाकाशोत्पत्तेरसंभवात् तदुत्पत्तिश्रवणं गौणमित्युक्तमनुवदति— **यत्पुनरिति**। अनुमानस्य मानान्तरविरोधेनामानत्वान्नाकाशोत्पत्ति-श्रुतेर्गौणत्वापादनसामर्थ्यमिति सूत्रमवतारयति— **अत्रेति**। अक्षरोक्तमर्थं कथयति— **तुशब्द इति**। व्यावृत्तिप्रकारमभिनयति— **न खल्विति**। तत्र विभक्तत्वहेतुकमनुमानं हेतुं कुर्वन् व्याप्तिमाह— **यत इति**। यद्विभक्तं तत्कार्यं यथा च घटादीत्यन्वयमुक्त्वा व्यतिरेकमाह— **न त्विति**। यन्न कार्यं तन्न विभक्तं, यथाऽऽत्मेत्यर्थः। व्याप्तस्य हेतोः पक्षधर्मतामाह— **विभागश्चेति**। विमतं

---

१. 'एकाद्वितीयतावधारणम्' इति पाठः। २. 'ब्रह्मविशेषण' इति पा.।

**तस्मात् सोऽपि विकारो भवितुमर्हति। एतेन दिक्कालमनःपरमाण्वादीनां कार्यत्वं व्याख्यातम्।**

### *प्रकटार्थविवरणम्*

तर्हि दिगादिषु व्यभिचार इत्याशङ्क्याह— **एतेनेति**। विमतपदेन संगृहीतत्वादित्यर्थः।

का दिक्, को वा काल इति? आदित्योदयाद्युपलक्षित आकाशप्रदेशो दिक्; आदित्योदयादिक्रियाधर्मः कालः; तदुभयं प्रत्यक्षम्, उदयकालोऽयम्, एककालीनमिदं, प्राचीयम्, प्रतीचीयमिति मानान्तरानभिज्ञानामपि प्रत्ययदर्शनात्; अत एवाकाशात् [काशवत्] [१]तदुत्पत्तिं [२]मन्वानः सूत्रयामास। ये तु **वैशेषिकाः** एकं कालमचीक्लृपन् न तेषां यौग[अयौग]पद्यादिप्रत्ययभेदोऽवकल्पेत, कालैक्ये सर्वस्य [३]युगपत्कृतत्वप्रसङ्गात्। अथ क्रियाभेदोपाधिककालभेदादयुगपत्प्रत्ययः, तर्ह्येककालकृतानेककर्मसु युगपत्प्रत्ययः न स्यात्[४]। [५]अथ क्रमभाविक्रियाभेदोपाधिकः कालभेदः, प्राप्तः तर्हि इतरेतराश्रयासिद्धे [श्रयः । सिद्धे] [६]कालभेदे क्रियायाः क्रमभावित्वम्; सिद्धे च तस्मिन् कालभेद इति। [७]किंच कालाल्पत्वबहुत्वज्ञानपूर्वकक्षिरादिप्रत्ययः; तद्बलाच्च कालसिद्धिरिति परस्पराश्रयम्। यच्चानुमानम्— [८]महत्त्वजातिः दिगतिरिक्तशश्वद्विशेषगुणशून्याधिकरणवृत्तिः, परिमाणतरतमभावविश्रमास्पदजातित्वात्, अणुत्ववदिति कालसाधनम्; दिक्साधने तु कालातिरिक्तेत्यादि वचनीयम्— तदसत्; [९]सिद्धसाधनत्वात् महत्परिमाणगुणे; द्रव्यविशेषणे चाप्रसिद्धविशेषणता; [१०]परिमाणतारतम्यस्य चानिर्वचनीयत्वेनाप्रामाणिकत्वात् तार्किकाणामसिद्धो हेतुः; दृष्टान्तश्चास्माकं साध्यविकलः। यच्चानुमानान्तरं दिक्सिद्धौ— विवादाध्यासितानि कार्याणि कालाकाशात्मातिरिक्तैकद्रव्यजन्यानि, कार्यत्वात्, [११]एकतन्तुहेतुककार्यवत्; कालपदस्थाने दिक्पदन्यासेन दिक्[काल]सिद्धिरपि द्रष्टव्येति— तत्रापि मायाऽभ्युपगमेन सिद्धसाधनम्, विशिष्टप्रतिज्ञासिद्धेरप्रसिद्धविशेषणत्वं च; साध्यविकलश्च दृष्टान्तः, सिद्धसाधनं वा; महाभूतैकदेशेऽपीति पक्ष[भूते पक्षैकदेशे विपक्ष]बाधकभावात् सन्दिग्धश्च[१२]— इत्यलम्।

### *भाष्यभावप्रकाशिका*

विभक्तत्वमुपलभ्यत इत्याशङ्क्याह— **एतेनेति**।

अयं प्रयोगः— आकाशं कार्यं भवितुमर्हति। अविद्याप्रागभावव्यतिरिक्तत्वे सति विभक्तत्वात् घटादिवत्; सामान्यवत्त्वात्

### *न्यायनिर्णयः*

कार्यम्, अविद्याव्यतिरिक्तत्वे सति विभक्तत्वात्, सामान्यवत्त्वाद्, गुणित्वाच्च घटवदित्यभिप्रेत्याह— **तस्मादिति**। दिगादिषु व्यभिचारमाशङ्क्य पक्षतुल्यत्वान्मैवमित्याह— **एतेनेति**। आत्मा गगनादिभ्यो विभक्तो न वा? आद्ये विभक्तोऽपि विकारो नेति

---

१. तदुत्पत्तिं = दिक्कालयोरुत्पत्तिम्। २. 'मत्वा न सूत्रयामास' इति पाठः स्यात्। ३. एककालकृतमनेकं युगपत्कृतमुच्यते; कालैक्ये च सर्वं युगपत्कृतमेवेति नायुगपत्प्रत्ययः स्यादिति भावः। ४. कर्मणां कालभेदोपाधित्वात् कर्मानेकत्वे तदुपाधिककालभेदावश्यम्भावात् एककालकृतत्वासिद्धेरिति भावः। ५. युगपत्कृतानेककर्मसु क्रमाभावात् तादृशकर्मभेदेन कालभेदो नेति एककालकृतत्वसिद्धिरिति शङ्कितुराशयः। ६. क्रमो नाम पूर्वोत्तरभावः। स च एकक्रियाधिकरणक्षणपूर्वोत्तरक्षणवृत्तित्वरूपः कालभेदसिद्ध्यधीनः। ७. चिरक्षिप्रादिप्रत्ययबलात् कालानुमानमाशङ्क्य निराचष्टे— **किंचेति**।

८. महत्त्वत्वं जातिः पक्षः। दिगतिरिक्तं शश्वद्विशेषगुणशून्यमधिकरणं यस्य तत् तथा; तद्वृत्तित्वं साध्यम्। परिमाणतरतमभावविश्रान्तिः परममहत्परिमाणे परमाणुपरिमाणे च; तद्वृत्तित्वे सति जातित्वं हेतुः। अणुत्ववदित्यत्र भावप्रधानो निर्देशः। अणुत्वत्वं दृष्टान्तः। तस्य च परमाणुपरिमाणवृत्तित्वात् तत्र हेतुसत्त्वम्। दिगतिरिक्तं शश्वद्विशेषगुणशून्यं मनः, तदधिकरणकं मनोवृत्तिपरिमाणम्, तद्वृत्तित्वं साध्यमपि तत्रास्ति। पक्षे च दिगतिरिक्तं शश्वद्विशेषगुणशून्यं कालः, तदधिकरणकं कालपरिमाणम्, तद्वृत्तित्वमादाय साध्यपर्यवसानमित्युक्तानुमानेन कालसिद्धिः। दिक्परिमाणवृत्तित्वेन सिद्धसाधनवारणाय दिगतिरिक्तेति। घटादिपरिमाणवृत्तित्वेन तद्वारणाय विशेषगुणशून्यमिति। घटादेरपि आद्यक्षणे विशेषगुणशून्यत्वसद्भावात् शश्वदिति। सदाविशेषगुणशून्यमित्यर्थः। दिक्परिमाणत्वादौ व्यभिचारवारणाय हेतौ विशेष्यम्। घटत्वादौ तद्वारणाय विशेषणदलम्। ज्ञानत्वादौ व्यभिचारवारणाय परिमाणेत्यादि। जन्यपरिमाणमात्रवृत्तिजातौ तद्वारणाय तरतमेत्यादि।

९. अत्रायमाशयो भाति—'यथाशब्दं ह्यनुमाने साधनदूषणे' इति प्रकटार्थकृतैव पूर्वमुक्तत्वात् उक्तसाध्यनिर्देशे दिगतिरिक्तशश्वद्विशेषगुणशून्यं यद् अधिकरणमिति कर्मधारयमाश्रित्य दूषयति—**सिद्धेति**। महत्त्वपरिमाणं हि दिगतिरिक्तं, विशेषगुणशून्यं च गुणत्वात्। तद्वृत्तित्वं च महत्त्वत्वरूपपक्षे सिद्धमिति सिद्धसाधनम्। ननु उक्तरूपद्रव्यवृत्तित्वं साध्यम्; तच्च पक्षे न सिद्धमित्यत आह— **द्रव्येति**। विशेषगुणशून्यद्रव्यस्याप्रसिद्धेरिति भावः। न च मनस्तादृशं प्रसिद्धमिति वाच्यम्। वेदान्तिनां मनसो विशेषगुणशून्यत्वासिद्धेः।

१०. उक्तरीत्या बहुव्रीहिसमासाश्रयणेऽपि दोषमाह— **परिमाणेति**। तदनिर्वचनप्रकारश्च प्रकटार्थकृता पूर्वमेव प्रदर्शितः। (द्र.पृ. ६०९)।

११. तन्तुगतरूपादिकं दृष्टान्तः। १२. अत्र पाठाशुद्धिर्भाति।

**नन्वात्माऽप्याकाशादिभ्यो विभक्त इति तस्यापि कार्यत्वं घटादिवत् प्राप्नोति। न; 'आत्मन आकाशः संभूतः' (तै.उ. २।१) इति श्रुतेः। यदि ह्यात्माऽपि विकारः स्यात्, तस्मात् परमन्यन्न श्रुतमित्याकाशादि सर्वं कार्यं निरात्मकमात्मनः कार्यत्वे स्यात्। तथा च शून्यवादः प्रसज्येत। आत्मत्वाच्चात्मनो निराकरणशङ्कानुपपत्तिः। न ह्यात्माऽऽगन्तुकः कस्यचित्, स्वयंसिद्धत्वात्। न ह्यात्माऽऽत्मनः प्रमाणमपेक्ष्य सिध्यति। तस्य हि प्रत्यक्षादीनि प्रमाणान्यप्रसिद्धप्रमेयसिद्धय उपादीयन्ते। न ह्याकाशादयः पदार्थाः प्रमाणनिरपेक्षाः स्वयंसिद्धाः**

### *प्रकटार्थविवरणम्*

इदानीं विभक्तत्वस्य लक्षणमगृहीतत्वे[१] च यथाश्रुतमेव हेत्वर्थं गृहीत्वाऽनिष्टमापादयति— **नन्वात्माऽपीति**। मूलकारणत्वे-नानादित्वग्राहकागमविरोधात् नायं प्रसङ्ग इत्याह— **नात्मन आकाश इति**। विपक्षे च सर्वं कार्यं निरधिष्ठानं स्यादित्याह— **यदि हीति**। अस्तु तर्हि शून्यवाद एवेत्याशङ्क्याह— **आत्मत्वाच्चेति**। निराकर्तुरपि स्वरूपत्वेन सिद्धत्वादित्यर्थः। वस्तुसंग्रहवाक्यं विवृणोति— **न ह्यात्माऽऽगन्तुक इत्यादिना। स्वयंसिद्धत्वादिति**। सत्ताप्रतीत्योः अन्यनिरपेक्षतया सिद्धत्वादित्यर्थः। तत्र प्रतीतौ तावन्नैरपेक्ष्यं साधयति— **न ह्यात्माऽऽत्मन इति**। यथा छिदिः छेद्यद्वैधीभावायोपादीयते, न छेत्तारं व्याप्नोति, तथा प्रमाणानि प्रमेयसिद्धये न प्रमातृसिद्धये भवन्तीत्यर्थः। ननु आकाशादीनामात्मनश्च वस्तुत्वाविशेषात् स्वतस्सिद्धिरसिद्धिर्वा समानैव न्याय्येत्याशङ्क्याह— **न ह्याकाशादय इति**। प्रमाणप्रवृत्त्यन्वयव्यतिरेकवत्त्वादाकाशादिसिद्धेर्न स्वतस्त्वम्, प्रमाणवृत्तेः प्रागेव सुषुप्तेऽप्यात्मसिद्धेः, अन्यथा

### *भाष्यभावप्रकाशिका*

गुणित्वाच्चेत्यनुमातव्यं कार्यत्वं घटादिवत्। व्यभिचारं शङ्कते— **नन्विति**। तर्हि वक्तव्यम्— विभक्तत्वेनात्मनः कार्यत्वं साध्यते, किं वा विभक्तत्वेऽप्यात्मवदकार्यत्वमाकाशस्येति। उभयमप्यनुपपन्नम्। आत्मनः कारणत्वात् कार्यकारणयोश्चाभिन्नत्वादित्याह— **नात्मन इति**। वस्तुत्वादात्माऽपि कार्यमिति चेन्नार्थापत्तिविरोधादित्याह— **यदि ह्यात्माऽपीति। निरात्मकमिति**। निरुपादानमित्यर्थः। ननु प्रमाणवत्त्वेन शून्यवादः प्रसज्यते चेत् प्रसज्यतां दोष इत्यत्राह— **आत्मत्वाच्चेति**। निराकर्ता अस्त्युत नास्ति? आद्ये निराकर्तैवात्मेत्यात्मनो नित्यसद्भावः। द्वितीये तु निराकर्तुरभावे निराकरणस्यैवाभावान्नित्यत्वमित्यर्थः। उत्तरग्रन्थ[न्थो]स्यैव प्रपञ्चः, अथवा वस्तुत्वादात्माऽपि कार्यम्। न च कार्यत्वे कारणान्तराभावान्निरात्मकत्वापत्तिः, कारणान्तरस्य कल्प्यमानत्वादित्याह— **न ह्यात्मेति**। नन्वात्मनः स्वयंप्रकाशत्वमयुक्तमित्याह— **न ह्यात्मात्मन इति**। प्रमाणस्यापि स्वयमेवावभासकत्वादित्यर्थः। प्रत्यक्षादि-व्यतिरेकेण सिद्धत्वे तेषां वैयर्थ्यं स्यादित्याशङ्क्याह— **तस्य हीति**। आकाशादयोऽपि स्वयंप्रकाशत्वात् प्रमाणानपेक्षा इत्या-शङ्क्याह— **न ह्याकाशादय इति**। नन्वात्मनोऽपि स्वयंप्रकाशत्वं न वादिनोऽभ्युपगच्छन्तीति। सत्यमस्माभिः साध्यत इत्याह—

### *न्यायनिर्णयः*

व्यभिचारः। द्वितीये तदभिन्नत्वात् तद्वदेव तस्यापि कार्यतेति मत्वा चोदयति— **नन्विति**। न तावदात्मनि व्यभिचारः, सति मातरि बाधविधुरे[२] विभागाभावात्। न च तस्य प्रातीतिकविभागेन कार्यत्वं, सर्वकारणत्वश्रुतिविरोधात्। न च तद्वदेवाकाशस्यापि न कार्यता, तत्कार्यतायाः श्रुतत्वादित्यभिप्रेत्याह— **न, आत्मन इति**। आत्मनोऽपि वस्तुत्वाद् घटवत् कार्यत्वानुमानान्न सर्वकारणतेत्याशङ्क्यार्थापत्तिविरोधान्नैवमित्याह— **यदि हीति**। निरात्मकत्वं निरुपादानत्वम्। तत्प्राप्तिफलमाह— **तथा चेति**। इष्टापत्तिं निराचष्टे— **आत्मत्वाच्चेति**। निराकर्ताऽस्ति न वा? आद्ये निराकर्तैवात्मेत्यात्मनो नित्यसत्त्वम्। द्वितीये तदभावे निराकरणासिद्धेर्नित्यत्वमित्यर्थः। आत्मकारणस्यैवाकाशादिकारणत्वान्न सर्वस्य निरात्मकत्वमित्याशङ्क्याह— **न हीति**। सत्तास्फूर्त्योरन्यानपेक्षत्वादात्मनोऽनागन्तुकत्वम्, तत्कथं तत्कारणमाकाशादिकारणमित्यर्थः। प्रमाणापेक्षया सिध्यन्नात्मा कथं निरपेक्षस्फूर्तिरित्याशङ्क्याह— **न हीति**। तस्यापि स्वयमेव साधकत्वादित्यर्थः। प्रत्यक्षादिव्यतिरेकेणात्मनः सिद्धत्वे तेषामानर्थक्यमित्याशङ्क्याह— **तस्य हीति**। आत्मनः स्वयंसिद्धत्वे वस्तुत्वाविशेषादाकाशादीनामपि तथा संभवात् प्रमाणवैयर्थ्यतादवस्थ्यमित्याशङ्क्याह— **न हीति**। जडत्वादनभ्युपगमाच्च न स्वतःसिद्धता तेषामित्यर्थः। आत्मनोऽपि स्वप्रकाशत्वं

१. पूर्वोक्तं विभक्तत्वस्य परिष्कृतस्वरूपमगृहीत्वेत्यर्थः। 'अगृहीत्वा' इति पाठः स्यात्। २. 'बाधविधुरविभाग' इति पाठः स्यात्।

**केनचिदभ्युपगम्यन्ते। आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात् प्रागेव प्रमाणादिव्यवहारात् सिध्यति। न चेदृशस्य निराकरणं संभवति। आगन्तुकं हि वस्तु निराक्रियते, न स्वरूपम्। य एव हि निराकर्ता तदेव तस्य स्वरूपम्। न ह्यग्नेरौष्ण्यमग्निना निराक्रियते। तथा– 'अहमेवेदानीं जानामि वर्तमानं वस्तु, अहमेवातीतमतीततरं चाज्ञासिषम्, अहमेवानागतमनागततरं च ज्ञास्यामी'त्यतीतानागतवर्तमानभावेनाऽन्यथाभवत्यपि ज्ञातव्ये न ज्ञातुरन्यथाभावोऽस्ति, सर्वदा वर्तमानस्वभावत्वात्। तथा भस्मीभवत्यपि देहे नात्मन उच्छेदः; वर्तमानस्वभावादन्यथास्वभावत्वं वा न संभावयितुं शक्यम्। एवमप्रत्याख्येयस्वभावत्वादेवाकार्यत्वमात्मनः; कार्यत्वं चाकाशस्य।**

### *प्रकटार्थविवरणम्*

परामर्शायोगादात्मनः सिद्धिः स्वत एवेत्यभिप्रायः। ततः किमित्यत आह— **न चेदृशस्येति**। इदानीं सत्तायामपि नैरपेक्ष्यं साधयति— **तथाऽहमेवेदानीमिति**। सदाऽहमित्यापरोक्ष्यैकरूपावभासनात् नास्ति सत्ताव्यभिचारो येन अन्यतः सत्ता काङ्क्ष्येतेत्यर्थः। ननु तर्हि देहस्योच्छेदो[१] भविष्यतीत्याशङ्क्याह— **तथा भस्मीभवतीति**। निरवयवस्य नभोवद् दाहाद्युपरागाभावादित्यर्थः। प्रासङ्गिकमनिष्टप्रसङ्गपरिहारमुपसंहरति— **इत्येवमिति**।

### *भाष्यभावप्रकाशिका*

**आत्मा त्विति**। प्रमाणादीनामपि साक्षित्वादित्यर्थः। ननु वस्तुत्वादात्मनोऽपि ज्ञानकर्मतया सिद्धिरित्यत्राह— **न चेदृशस्येति**। प्रमाणादिसाक्षिणस्तत्कर्मत्वेन स्वतस्सिद्धत्वनिराकरणं [न] युक्तमित्यर्थः। यदा तु शून्यवादनिराकरणस्यायं प्रपञ्चस्तदा निराकरणमपि तदधीनात्मलाभं तद्विरुद्धं नोदेतुमर्हतीत्यर्थः। ननु तत्त्वज्ञानान्नाहमभोक्ते[नाहं भोक्ते]त्यात्मनोऽपि निराकरणमस्तीति, तत्राह— **आगन्तुकं हीति**। नन्वा[नन्वना]गन्तुकमपि जीवत्वं निराक्रियत इति, तत्राह— **न स्वरूपमिति**। किं तर्हि स्वरूपमिति, तदाह— **य एवेति**। तदपि निराकार्यमस्त्वित्यत्राह— **न हीति**। शरीरोत्पत्तिविनाशपर्यन्तमात्मनः प्रत्यभिज्ञायमानत्वात्तदुत्तरकालमप्यभावे प्रमाणाभावान्नित्यत्वमित्याह— **तथाऽहमेवेति**। अथवा प्रमेयादिष्वन्यथा भवत्स्वपि प्रमातुः सदा वर्तमानत्वेनानुभवात् त्रैकाल्यानवच्छिन्नत्वम्। तदवच्छेदेन चान्यथाभावत्वं व्याप्यम्। तच्च सदा वर्तमानात् प्रमातुर्व्यावर्तमानमन्यथाभाववत्त्वं स्वव्याप्यमादाय निवर्तत इत्याह— **अन्यथाभवत्यपि ज्ञातव्य इति**। प्रकृतिप्रत्ययाभ्यां ज्ञानज्ञेययोरन्यथाभावो दर्शितः। ननु जीवतः प्रमातुरन्यथाभावाभावेऽपि मृतस्यान्यथाभावः स्यादित्याशङ्क्याह— **तथा भस्मीभवत्यपीति**। यत्स्वभाव(मृ)त्वमनुभवसिद्धम्, तस्यान्यथात्वं बाधकादवसातव्यम्, बाधकं च घटादीनां स्वभावाद्विचलनं प्रमाणोपनीतं, यस्य तु न तदस्ति तस्यात्मनोऽनुभवसिद्धसत्स्वभावस्यान्यथात्वं [न] युक्तमिति भावः।

### *न्यायनिर्णयः*

वादिनो नोपगच्छन्तीत्याशङ्क्याह— **आत्मा त्विति**। प्रमाणादिसाक्षित्वान्न तदधीनाऽऽत्मसिद्धिरित्यर्थः। आत्मनः स्वप्रकाशत्वेऽपि कथमनिराकरणमित्याशङ्क्याह— **न चेति**। निराकरणमपि तदधीनात्मलाभं तद्विरुद्धं नोदेतीत्यर्थः। 'अहमस्मि ब्रह्मे'ति तत्त्वज्ञानान्नाहं कर्ता भोक्ता चेत्यात्मनोऽपि निराकरणं दृष्टमित्याशङ्क्याह— **आगन्तुकं हीति**। जीवत्वमनागन्तुकमपि निराक्रियमाणमिष्टमित्याशङ्क्याह— **नेति**। किं तर्हि स्वरूपम्? तदाह— **य एवेति**। तदपि निराक्रियतामित्याशङ्क्य निराकर्त्रन्तराभावान्नैवमित्याह— **न हीति**। आत्मनः सत्तास्फूर्त्योरन्यानपेक्षत्वमनागन्तुकत्वे कारणमुक्त्वा स्फूर्तावन्यानपेक्षत्वमुपपाद्य सत्तायामपि तदुपपादयति— **तथेति**। सदाऽहमित्यपरोक्षैकरूपानुभवान्नात्मनः सत्ताव्यभिचारः, येनान्यतः सत्तामाकाङ्क्षेदित्यर्थः। जीवतो मातुरन्यथाभावाभावेऽपि मृतस्य स्यादित्याशङ्क्याह— **तथेत्यादिना**। यत्स्वभावत्वमनुभवसिद्धं तस्यान्यथात्वं बाधकादवसातव्यं, बाधकं च घटादीनां स्वभावाद्विचलनं मानोपनीतं, यस्य तु न तदस्ति तस्यात्मनोऽनुभवसिद्धस्य नान्यथात्वमिति भावः। आत्मनः स्वतःसिद्धत्वेनानागन्तुकत्वे फलितमाह— **एवमिति**। विभक्तत्वहेतोरव्यभिचारेऽपि बाधकतर्काभावादप्रयोजकतेत्याशङ्क्याह— **कार्यत्वं चेति**। अकार्यस्यात्मनः स्वरूपोपाधावबाधित-

१. 'देहस्योच्छेद आत्मन उच्छेदः' इति पाठः संभाव्यते।

**यत्तूक्तं समानजातीयमनेकं कारणद्रव्यं व्योम्नो नास्तीति, तत् प्रत्युच्यते– न तावत् समानजातीयमेवारभते न भिन्नजातीयमिति नियमोऽस्ति। न हि तन्तूनां तत्संयोगानां च समानजातीयत्वमस्ति, द्रव्यगुणत्वाभ्युपगमात्। न च निमित्तकारणानामपि तुरीवेमादीनां समानजातीयत्वनियमोऽस्ति।**

**स्यादेतत्– समवायिकारणविषय एव समानजातीयत्वाभ्युपगमो, न कारणान्तरविषय इति। तदप्यनैकान्तिकम्। सूत्रगोवालैर्ह्यनेकजातीयैरेका रज्जुः सृज्यमाना दृश्यते। तथा सूत्रैरूर्णादिभिश्च विचित्रान् कम्बलान् वितन्वते। सत्त्वद्रव्यत्वाद्यपेक्षया वा समानजातीयत्वे कल्प्यमाने नियमानर्थक्यम्, सर्वस्य सर्वेण समानजातीयकत्वात्। नाप्यनेकमेवारभते नैकमिति नियमोऽस्ति। अणुमनसोराद्यकर्मारम्भाभ्युपगमात्। एकैको हि परमाणुर्मनश्चाद्यं कर्मारभते, न द्रव्यान्तरैः संहत्येत्यभ्युपगम्यते। द्रव्यारम्भ एवानेकारम्भकत्वनियम इति चेत्? न; परिणामाभ्युपगमात्। भवेदेष नियमो यदि संयोगसचिवं द्रव्यं द्रव्यान्तरस्यारम्भकमभ्युपगम्येत।**

### *प्रकटार्थविवरणम्*

उक्तमनूद्य व्यभिचारमाह— **यत्तूक्तमित्यादिना।**

### *भाष्यभावप्रकाशिका*

ननु विभक्तत्वेऽप्यात्मवदकार्यमाकाशमपि स्यादिति; तत्राह— **कार्यत्वञ्चेति।** उक्तयुक्तिबलादाकाशादिवत्स्वोपाधबाध्य[धावबाध्य]-भेदशून्यत्वाच्चात्मनो न मुख्यं विभक्तत्वम्; आकाशस्य तु मुख्यविभागवत्त्वात् कार्यत्वमभ्युपगन्तव्यमित्यर्थः।

पूर्वोक्तानुमानानां प्रत्यनुमानविरोधमभिधायेदानीं प्रत्येकं दूषयितुमनुवदति— **यत्तूक्तमिति।** तत्र समानजातीयानां कारणत्वं निराकरोति— **न तावदिति। तदपीति।** न च रज्ज्वादीनां सूत्रवालादिसमुदायमात्रत्वं, पटादेरपि तथा(प)त्वापत्तावयवव्यभावप्रसङ्गादित्यर्थः। द्रव्यत्वाद्यपेक्षया समानजातीयत्वे विशेषणवैयर्थ्यमद्रव्यस्यासतश्चानारम्भकत्वेन सर्वस्यापि समानजातीयत्वसंभवादित्याह— **सत्त्वेति।** अनेकेषामारम्भकत्वमप्यनियतमित्याह— **नापीति।** ययोः संयोगस्तौ संहत्य कर्मारभेते इत्यत आह— **एकैको हीति।** सति कर्मणि संयोगः सति च तस्मिन् कर्मेति परस्पराश्रयत्वादित्यर्थः। साक्षात्तत्पक्षमाह— **द्रव्यारम्भ एवेति।** दूषयति— **न परिणामेति।** तदेव प्रपञ्चयति— **भवेदेष इति।** यत्र क्षीरं दधिभावेन परिणमते तत्र नावयवानामनेकेषामुपादानत्वम्, किन्तूपात्तमेवाविभक्तावयवं क्षीरमेकं दधिभावेन परिणमते यथा परमाणुवादिनां क्षीरद्व्यणुकमन्तयाणुकं[त्र्यणुकं] वा दधिभावेनेति

### *न्यायनिर्णयः*

भेदशून्यत्वात्र मुख्यं विभक्तत्वम्। आकाशस्य तथाविधभेदवत्त्वान्मुख्यविभागित्वेन कार्यत्वमन्यथा मुख्यविभागानुपपत्तिरिति कुतोऽप्रयोजकतेत्यर्थः।

आकाशानुत्पत्त्यनुमानानां प्रत्यनुमानविरोधमुक्त्वा समवायिकारणशून्यत्वं विशेषतो दूषयितुमनुभाषते— **यत्त्विति।** तत्र समानजातीयस्यारम्भकत्वमयोगव्यवच्छेदेनान्ययोगव्यवच्छेदेन वेति विकल्पाद्यमङ्गीकृत्य द्वितीयं दूषयति— **तत्प्रतीति।** नियमो हि कारणमात्रनिष्ठो वा निमित्तकारणनिष्ठो वा समवायिकारणनिष्ठो वेति विकल्प्याद्यं प्रत्याह— **न हीति।** न द्वितीय इत्याह— **न चेति।** तृतीयमादत्ते— **स्यादेतदिति।** समवायिकारणस्यापरजात्या वा परजात्या वा समानजातीयत्वमिति विकल्प्याद्यं निरस्यति— **तदपीति।** अनैकान्तिकान्तरमाह— **तथेति।** न च रज्ज्वादेः सूत्रवालादिसमुदायमात्रत्वम्, पटादेरपि तथात्वापत्तावयविसमुदायमात्रापाकरणप्रसङ्गादिति भावः। द्वितीये समानजातीयविशेषणवैयर्थ्यम्, अद्रव्यस्यासतश्चानारम्भकत्वेन सर्वस्यापि समानजातीयत्वसंभवादित्याह— **सत्त्वेति।** समानजातीयमेवारम्भकमिति नियमं निराकृत्यानेकेषामारम्भकत्वनियमं निराकरोति— **नापीति।** तन्नियमो हि कार्यमात्रारम्भे वा द्रव्यारम्भे वा? नाद्य इत्याह— **अणुमनसोरिति।** ययोः संयोगस्तौ संहत्य कर्मारभेते चेत्, तस्योभयसमवेतत्वादेकद्रव्यत्वव्याहतिरित्याशङ्क्य सति कर्मणि संयोगः, सति च तस्मिन् कर्मेति परस्पराश्रयत्वान्नैवमित्याह— **एकैको हीति।** द्व्यणुकारम्भकसंयोगासमवायिकारणमात्ममनःसंयोगजनकं च कर्माद्यं कर्म। द्वितीयमवलम्बते— **द्रव्येति।** आरम्भवादानभ्युपगमेन दूषयति— **न; परिणामेति।** तदेव प्रपञ्चयति— **भवेदिति।** न त्वेवमभ्युपगम्यते; तस्मान्नैष नियम इति

**तदेव तु द्रव्यं विशेषवदवस्थान्तरमापद्यमानं कार्यं नामाभ्युपगम्यते। तच्च क्वचिदनेकं परिणमते मृद्बीजाद्यङ्कुरादिभावेन, क्वचिदेकं परिणमते क्षीरादि दध्यादिभावेन। नेश्वरशासनमस्त्यनेकमेव कारणं कार्यं जनयतीति। अतः [1]श्रुतिप्रामाण्यादेकस्माद् ब्रह्मण आकाशादिमहाभूतोत्पत्तिक्रमेण जगज्जातमिति निश्चीयते। तथा चोक्तम्– 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (ब्र.सू. २।१।२४) इति।**

**यच्चोक्तमाकाशस्योत्पत्तौ न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यत इति। तदयुक्तम्। येनैव हि विशेषेण पृथिव्यादिभ्यो व्यतिरिच्यमानं नभः स्वरूपवदिदानीमध्यवसीयते, स एव विशेषः प्रागुत्पत्तेर्नासीदिति गम्यते। यथा च ब्रह्म न स्थूलादिभिः पृथिव्यादिस्वभावैः स्वभाववत्, 'अस्थूलमनणु' (बृ.उ. ३।८।८) इत्यादिश्रुतिभ्यः, एवमाकाशस्वभावेनापि न स्वभाववत् 'अनाकाश'मिति श्रुतेरवगम्यते। तस्मात् प्रागुत्पत्तेरना-काशमिति स्थितम्।**

**यदप्युक्तं पृथिव्यादिवैधर्म्यादाकाशस्याजत्वमिति। तदप्यसत्। श्रुतिविरोधे सत्युत्पत्त्यसंभवानुमानस्या-**

### *प्रकटार्थविवरणम्*

ननु "आकाशशरीरं ब्रह्म" इति श्रुतिरस्ति; कथमवकाशाभावे ब्रह्मणोऽवस्थानमित्याशङ्क्याह— **यथा च न ब्रह्मणः [न ब्रह्म] स्थूलादिभिरिति**। आकाशवच्छरीरमस्येति आकाशशरीरम्। अवकाशान्तरमन्तरेण आकाशस्थितिवद् ब्रह्मणोऽप्यवस्थानं न विस्मयकरमित्यर्थः। उक्तमनूद्य कालात्ययापदिष्टत्वमाह— **यदप्युक्तमित्यादिना**। ननु श्रुतिः [2]न्यायहीनानामनुमानं बाधत इत्याशङ्क्याह—

### *भाष्यभावप्रकाशिका*

भावः। ननु क्वचिदेकस्मात् कार्यमुत्पद्यते, क्वचिदनेकस्मात् तत्र कथं निर्णय इत्यत आह— **अतश्शास्त्रेति**। (अ)नन्वेकमपि परिणममानं किंचिदपेक्ष्यैव परिणमानं दृष्टम्, तथा सति ब्रह्मव्यतिरिक्तस्याभावादपेक्षानुपपत्तिरित्यत आह— **तथा चोक्तमिति**। मूर्तद्रव्याभावमाकाशं न स्वीकुर्मः, नापि च्छायातपवन्मूर्तद्रव्यविरोधि, अत आकाशाभावेऽपि न काठिन्यप्रसङ्ग इत्याह— **येनैव हीति**। अनवकाशत्वमचित्रमिति(?) सुषुप्त्यवस्थावदिति भावः।

### *न्यायनिर्णयः*

शेषः। तदनभ्युपगमे कथं कार्योत्पत्तिरित्याशङ्क्याह— **तदेवेति**। परिणामपक्षेऽपि तुल्यमनेकेषां कारणत्वमित्याशङ्क्याह— **तच्चेति**। यत्र क्षीरं दधिभावेन परिणमते तंत्र नावयवानामनेकेषामुपादानत्वम्, अविभक्तस्यैव क्षीरस्य दध्यात्मना परिणामोपलम्भात्, यथा परमाणुवादिनां क्षीरद्व्यणुकं त्र्यणुकं वा द्रव्यान्तरासंयोगेऽपि दधि जनयति तथा परिणामपक्षेऽपीति विवक्षन्नाह— **क्वचिदिति**। पक्षद्वयेऽपि कारणत्वमनेकेषामित्यस्मिन्नियमे न कारणमस्तीत्याह— **नेश्वरेति**। एकस्मादनेकस्माच्च कार्योत्पत्तिदर्शनान्निर्णया-सिद्धिरित्याशङ्क्याह— **अत इति**। एकस्यापि परिणामिनः सहकार्यपेक्षादर्शनात् तद्विरहिणो ब्रह्मणो जगत्कारणत्वमयुक्तमित्या-शङ्क्याह— **तथा चेति**। कारणशून्यत्वादाकाशमात्मवदनुत्पत्तिमदित्येतन्निरस्तम्।

इदानीमभूत्वाभावित्वाभावात्र तदुत्पत्तिमदित्युक्तमनुवदति— **यच्चोक्तमिति**। हेत्वसिद्ध्या परिहरति— **तदयुक्तमिति**। शब्दाधारत्वं विशेषः। आकाशस्य मूर्तत्वाभावान्मूर्तविरोधिनश्चार्थान्तरत्वात् तदभावेऽपि न प्रागवस्थायां काठिन्यप्रसक्तिरिति भावः। 'आकाशशरीरं ब्रह्म' इति श्रुतेराकाशाभावे कथं ब्रह्मणोऽवस्थानमित्याशङ्क्याकाशवच्छरीरमस्येति व्युत्पत्त्या श्रुत्युपपत्तिं मत्वाऽऽह— **यथा चेति**। अवकाशान्तरमन्तरेणाकाशस्थितिवद् ब्रह्मणोऽपि तत्कारणस्य तदतिरेकेण सुषुप्त्यवस्थायामिवावस्थितिरविरुद्धेति। हेत्वसिद्धिमुपसंहरति— **तस्मादिति**।

उक्तानुमानान्तराण्यनूद्य कालात्ययापदिष्टतामाह— **यदपीति**। न्यायशून्या श्रुतिरनुमानमपबाधितुमसमर्थेत्याशङ्क्याह— **उत्पत्तीति**। इतश्चाकाशस्य न नित्यत्वमित्याह— **अनित्यमिति**। [3]वस्तुतस्तु गुणाश्रयत्वमेव हेतुः। आकाशो जायते, महाभूतत्वात्, अस्मदादि-

---

१. 'शास्त्रप्रमाणात्' इति पा.। २. 'न्यायहीना नानुमानम्' इति पाठः स्यात्। ३. धर्मिविकाराभावे गुणनाशो न स्यादिति तर्कार्थमनित्यपदम्।

**भासत्वोपपत्तेः, उत्पत्त्यनुमानस्य च दर्शितत्वात्। अनित्यमाकाशमनित्यगुणाश्रयत्वाद् घटादिवदित्यादिप्रयोग-संभवाच्च। [१]आत्मन्यनैकान्तिकमिति चेत्? न; तस्यौपनिषदं प्रत्यनित्यगुणाश्रयत्वासिद्धेः। विभुत्वादीनां चाकाशस्योत्पत्तिवादिनं प्रत्यसिद्धत्वात्।**

**[२]यच्चोक्तमेतत्– शब्दाच्चेति, तत्रामृतत्वश्रुतिस्तावद् वियति 'अमृता दिवौकस' इतिवद् द्रष्टव्या। उत्पत्तिप्रलययोरुपपादितत्वात्। 'आकाशवत्सर्वगतश्च नित्यः' इत्यपि प्रसिद्धमहत्त्वेनाकाशेनोपमानं क्रियते निरतिशयमहत्त्वाय, नाकाशसमत्वाय। यथा– इषुरिव सविता धावतीति क्षिप्रगतित्वायोच्यते, नेषुतुल्यगतित्वाय, तद्वत्। एतेनानन्तत्वोपमानश्रुतिर्व्याख्याता। 'ज्यायानाकाशात्' इत्यादिश्रुतिभ्यश्च ब्रह्मण आकाशस्योन-परिमाणत्वसिद्धिः। 'न तस्यं प्रतिमाऽस्ति' (श्वे.उ. ४।१९) इति च ब्रह्मणोऽनुपमानत्वं दर्शयति। 'अतोऽन्यदार्तम्' (बृ.उ. ३।४।२) इति च ब्रह्मणोऽन्येषामाकाशादीनामार्तत्वं दर्शयति। तपसि ब्रह्मशब्दवदाकाशस्य**

### *प्रकटार्थविवरणम्*

**उत्पत्त्यनुमानस्य चेति**। अनुमानान्तरं चास्तीत्याह— **अनित्यमिति**। नित्यसत्त्वादिगुणाश्रयमायायां व्यभिचारपरिहारायाह— **अनित्येति**। आकाशो जायते, महाभूतत्वात्, अस्मदादिबाह्येन्द्रियग्राह्यगुणाधारत्वाद्वा, पृथिव्यादिवदित्यादिशब्दात् गृह्यते। सर्वत्रैव विपक्षे तत्परप्रतिज्ञाहानिर्बाध इति द्रष्टव्यम्। आद्यहेतोरनैकान्तिकत्वमाशङ्क्य परिहरति— **आत्मनेति**। किं च त्वदुक्ता हेतवः ममासंप्रतिपन्नाः, मदुक्तास्तु तवापि संप्रतिपन्ना इति शक्नुवन्ति त्वदुक्तहेतूनाभासीकर्तुमित्याह— **विभुत्वादीनां चेति**। एवं तावन्नानुमानं नित्यत्वे ऽस्तीत्युपपाद्येदानीं यच्चैतदुक्तं शब्दान्नित्यत्वमिति तद् दूषयति— **यथै[च्चै]तदित्यादिना**। तपसि ब्रह्मशब्दस्य गौणत्वं युक्तम्, ब्रह्मज्ञानसाधनत्वात्; बलवद्बाधकाभावात्तु न संभूतशब्दस्य गौणत्वमित्याह— **तपसीति**। इति प्रथमं वियदधिकरणम्।

### *भाष्यभावप्रकाशिका*

**विभुत्वादीनामिति**। [अयं] भावः— द्रव्यत्वे सत्यस्पर्शवत्त्वादिति यदुक्तम्, तत्र किमिदं द्रव्यत्वम्? वस्तुत्वं समवायिकारणत्वं वा? आद्ये गुणादौ व्यभिचारः, समवायिकारणत्वं त्वसिद्धमस्माकं समवायस्यैवाभावात्। अथोपादानकारणत्वम्, तदपि परिणामित्वं किं वा विभ्रमाधिष्ठानत्वम्? आद्यपक्षस्तवासिद्धः। उत्तरत्र क्रियादौ व्यभिचारः, क्रियाप्रत्यक्षाप्रत्यक्षत्वाभ्युपगमयोरन्यतरपक्षस्य भ्रान्ततया तदधिष्ठानत्वात् क्रियाया इत्यर्थः।

असमत्वेऽप्युपमानं क्व दृष्टमित्यत आह— **यथेति**। **एतेनेति**। उत्पत्तिविनाशयोरुपपादनेन न्यूनेनोपमानयोगाच्चेत्यर्थः। इतोऽप्यनन्तत्वासिद्धिरित्याह— **ज्यायानाकाशादिति**। इति प्रथमं वियदधिकरणम्।।

### *न्यायनिर्णयः*

बाह्येन्द्रियग्राह्यगुणाधारत्वाद्वा, पृथिव्यादिवदित्यनुमानमादिशब्दार्थः। आद्यस्य हेतोरन्यतरानैकान्तिकत्वं चोदयति— **आत्मनीति**। निर्गुणत्वश्रुतिमाश्रित्य परिहरति— **न तस्येति**। न चाकाशमनित्यविशेषगुणाधिकरणविभुभिन्नं, मेयत्वादिति तत्सिद्धिः[३]। आकाशं श्रोत्रग्राह्यविशेषगुणाधिकरणविभ्वन्यत्, मेयत्वादित्यपि प्रसङ्गात्, आत्मनि सर्वविशेषनिराकरणविविधश्रुतिविरोधाच्चेति भावः। इतश्च त्वदुक्ता हेतवः साधका न भवन्तीत्याह— **विभुत्वादीनां चेति**। आकाशस्य नित्यत्वे नानुमानमस्तीत्युपपाद्य यच्चैतदुक्तं शब्दान्नि-त्यत्वमिति तदनूद्य दूषयति— **यच्चैतदिति**। किमित्यमृतत्वश्रुतिरापेक्षिकी व्याख्यायते? मुख्यार्थैव किं न स्यादित्याशङ्क्याह— **उत्पत्तीति**। आकाशस्यानित्यत्वं चेदात्मनि तत्तुल्यत्वश्रुतिर्व्याहन्येतेत्याशङ्क्याह— **आकाशवदिति**। समत्वाभावे न क्वचिदुपमानत्व-मुपलब्धमित्याशङ्क्याह— **यथेति**। 'स यथाऽनन्तोऽयमाकाश एवमनन्त आत्मा' इति श्रुतिस्तर्हि कथमित्याशङ्क्याह— **एतेनेति**। उत्पत्तिविनाशयोरुपपादितत्वेन न्यूनेनोपमानायोगाच्चेत्यर्थः। कथमाकाशस्य ब्रह्मणः सकाशान्न्यूनपरिमाणत्वमित्याशङ्क्य पूर्वोक्तयुक्त्या श्रुतिं समुच्चिनोति— **ज्यायानिति**। इतश्च ब्रह्मणि नोपमानोपपत्तिरित्याह— **न तस्येति**। इतोऽपि नित्यत्वमाकाशस्य नाशङ्कितव्य-मित्याह— **अतोऽन्यदिति**। यदुक्तं स्याच्चैकस्य ब्रह्मशब्दवदिति, तद् दूषयति— **तपसीति**। युक्तं तपसि ब्रह्मशब्दस्य गौणत्वं,

---

१. 'आत्मना' इति पा.। २. 'यच्चैतदुक्तम्' इति पा.। ३. तादृशात्मभिन्नत्वमादाय साध्यपर्यवसानादिति भावः।

**जन्मश्रुतेगौंणत्वमित्येतदाकाशसंभवश्रुत्यनुमानाभ्यां परिहृतम्। तस्माद् ब्रह्मकार्यं वियदिति सिद्धम्।।७।।**

।।इति प्रथमं वियदधिकरणम्।।

२।।मातरिश्वाधिकरणम्।।सू. ८।।

## एतेन मातरिश्वा व्याख्यातः।।८।।

**अतिदेशोऽयम्। एतेन वियद्व्याख्यानेन मातरिश्वाऽपि वियदाश्रयो वायुर्व्याख्यातः। तत्राप्येते यथायोगं पक्षा रचयितव्याः। न वायुरुत्पद्यते, छन्दोगानामुत्पत्तिप्रकरणेऽनाम्नानादित्येकः पक्षः। अस्ति तु तैत्तिरीयाणामुत्पत्तिप्रकरण आम्नानम् 'आकाशाद्वायुः' (तै.उ. २।१) इति पक्षान्तरम्। ततश्च श्रुत्योर्विप्रतिषेधे सति गौणी वायोरुत्पत्तिश्रुतिरसंभवादित्यपरोऽभिप्रायः। [1]असंभवश्च 'सैषाऽनस्तमिता देवता यद्वायुः' (बृ.उ.**

### *शारीरकन्यायसंग्रहः*

**एतेन मातरिश्वा व्याख्यातः।।८।।** अस्तमयप्रतिषेधामृतत्वलिङ्गाभ्यासापेक्षया प्रतिपिपादयिषितैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाश्रुतिः बलीयसीति न्यायेन आपेक्षिकामृतत्वपरतया अमृतश्रुतिं बाधित्वा वायोरुत्पत्तिर्निर्णीता।

### *प्रकटार्थविवरणम्*

**एतेन मातरिश्वा व्याख्यातः।।** पूर्वत्र ब्रह्मण आकाशस्त्रष्टृत्वप्रतिपादकसमन्वयस्यानुत्पत्तिश्रुतिविरोधो नास्तीत्युक्तम् उत्पत्तिश्रुतेः मुख्यार्थत्वव्याख्यानेन। इदानीं ब्रह्मणो वायुस्त्रष्टृत्वप्रतिपादकसमन्वयस्य नित्यत्वश्रुतिविरोधो नास्तीत्यतिदिश्यत इत्याह— **अतिदेशोऽयमिति।**

### *भाष्यभावप्रकाशिका*

**एतेन मातिरश्वा व्याख्यातः।** नन्वाकाशवद् वायोरकारणकत्वाभावात् कथं पूर्वपक्ष इत्याशङ्क्य श्रुत्या नित्यत्वावगमादित्याह— **असंभवश्चेति।**

### *न्यायनिर्णयः*

तस्य ब्रह्मज्ञानसाधनत्वात्, आकाशे तु संभूतशब्दस्य ज्वलनादिवद् बाधकाभावादनुग्राहकसद्भावाच्च मुख्यत्वमेवेत्यर्थः। श्रुतियुक्ति-सिद्धमुपसंहरति— **तस्मादिति।** आकाशसृष्टिश्रुत्यनुसारेण तेजःसृष्टिश्रुतिनयनात् तयोरेकवाक्यतया प्रामाण्योपपत्तेराकाशकारणे ब्रह्मणि समन्वयः सिध्यतीत्यधिकरणार्थं निगमयति— **इति सिद्धमिति।**।७।। इति प्रथमं वियदधिकरणम्।।

वियदुत्पत्तिमुक्त्वा पवनोत्पत्तिमतिदेशेन साधयति— **एतेनेति।** अत्र पूर्ववत् पादादिसंगतयो न पृथग्वक्तव्या भवन्तीत्यभिप्रेत्य तात्पर्यमाह— **अतिदेशोऽयमिति।** फलभेदमपि पूर्ववदुपेत्य सूत्राक्षरार्थं कथयति— **एतेनेति।** वियदुत्पत्तिकथनानन्तरं तेजआद्यतिक्रम्य वायोरुत्पत्तिमत्त्वेन व्याख्याने कारणमाह— **वियदाश्रय इति।** 'तत्तेजोऽसृजत' इति श्रुतिः 'आकाशाद्वायुः' इति श्रुत्या विरुध्यते न वेत्येकवाक्यत्वासंभवसंभवाभ्यां संशये सत्यतिदेशं विशदीकर्तुं तुल्यन्यायत्वमाह— **तत्रापीति।** [2]बहूक्त्या वियदधिकरणेऽपि पक्षत्रयमस्तीति सूचितम्। तदेव पक्षत्रयं संक्षिपन् प्रथमं गौणवादिपक्षमाह— **न वायुरिति।** पूर्वपक्षं संक्षिपति— **अस्ति त्विति।** छान्दोग्ये तेजसः 'तत्तेजोऽसृजत' इति प्रथमजत्वश्रवणात्, तैत्तिरीयके च 'आकाशाद्वायुः' इति वायोस्तेजःसकाशात् पूर्वजत्वश्रुतेरुभयोस्तदनुपपत्त्या मिथो विरोधे श्रुत्योरप्रामाण्यादाकाशद्वारा वायुकारणे ब्रह्मणि समन्वयासिद्धिरित्यर्थः। गौणवादिनोऽभिप्रायं संगृह्णाति— **ततश्चेति।** आकाशवद् वायोरकारणत्वाभावात् कथमसंभवाशङ्केत्याशङ्क्याह— **असंभवश्चेति।** दर्शितश्रुत्या

---

१. 'असंभवश्च दर्शितः' इति पा.। २. 'पक्षाः' इति बहुवचनप्रयोगेणेत्यर्थः।

**१।५।२२) इत्यस्तमयप्रतिषेधात्, अमृतत्वादिश्रवणाच्च। प्रतिज्ञानुपरोधाद् यावद्विकारं च विभागाभ्युपगमादुत्पद्यते वायुरिति सिद्धान्तः। अस्तमयप्रतिषेधोऽपरविद्याविषय आपेक्षिकः, अग्न्यादीनामिव वायोरस्तमयाभावात्। कृतप्रतिविधानं चामृतत्वादिश्रवणम्।**

**ननु वायोराकाशस्य च तुल्ययोरुत्पत्तिप्रकरणे श्रवणाश्रवणयोरेकमेवाधिकरणमुभयविषयमस्तु; किमतिदेशेनासति विशेष इति। उच्यते– सत्यमेवमेतत्। तथापि मन्दधियां शब्दमात्रकृताशङ्कानिवृत्त्यर्थोऽयमतिदेशः क्रियते। संवर्गविद्यादिषु ह्युपास्यतया वायोर्महाभागत्वश्रवणात्, अस्तमयप्रतषेधादिभ्यश्च भवति नित्यत्वाशङ्का कस्यचिदिति।।८।।**

।।इति द्वितीयं मातरिश्वाधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

।।असंभवाधिकरणम्।।

**असंभवस्तु सतोऽनुपपत्तेः।।९।।**

ब्रह्म कस्यचित्कार्यं भवितुमर्हति, कारणत्वात्; यत् कारणं तत् कस्यचित्कार्यं दृष्टम्, यथा आकाशः इत्यनुमानस्य ब्रह्म कार्यं न भवति, सदसदनिर्वचनीयादिकारणशून्यत्वात्; यत्कारणशून्यं न तत्कार्यम्, यथा शशविषाणमिति प्रत्यनुमानविरोधः, ''न चास्य कश्चिज्जनिता'' इत्यागमविरोधः, हेतोरनवस्थापादनद्वारेण साध्यविपरीतसाधकत्वं च दर्शितम्।

### *प्रकटार्थविवरणम्*

अतिदेशमाक्षिप्य समाधत्ते— **ननु वायोरित्यादिना**। इति द्वितीयं मातरिश्वाधिकरणम्।

### *भाष्यभावप्रकाशिका*

**अमृतत्वादिश्रवणाच्चेति**। 'वायुश्चान्तरिक्षञ्चैतदमृत'मिति श्रवणादित्यर्थः। आदिशब्देन 'वायुरेव व्यष्टिः वायुःसमष्टि'रित्याद्यभ्यासो गृह्यते। अभ्यासे हि भूयस्त्वमर्थस्य भवति, नाल्पत्वम्; दूरत एवोपचरितत्वम्। तस्मादभ्यासान्नापेक्षितं[कं] वायोरमृतत्वमपि (विद्या)त्वात्यन्तिकमिति भावः। प्रतिज्ञानुपरोधादिति सिद्धान्तमाह। प्रतिज्ञावाक्यार्थप्राधान्यात् तदुपपादकमारुतोत्पत्तिप्रतिपादकानां वाक्यानां बहुलत्वाच्च मुख्यभूयस्त्वाभ्यां बलीयस्त्वादमृतत्वास्तमयप्रतिषेधावापेक्षिकत्वेन नेनव्यापीति [नेतव्याविति] भावः। आक्षेपपूर्वकमतिदेशाधिकरणस्याप्यधिकाशङ्कां दर्शयति— **ननु वायोरित्यादिना**। इति द्वितीयं मातरिश्वाधिकरणम्।।

### *न्यायनिर्णयः*

वायुनित्यत्वमापेक्षिकमित्याशङ्क्याभ्यस्यमानत्वान्नैवमित्याह— **अमृतत्वादीति**। 'वायुश्चान्तरिक्षं चैतदमृतम्' इति श्रूयते। आदिशब्देन 'वायुरेव व्यष्टिर्वायुः समष्टिः' इत्यभ्यासो गृह्यते। प्रतिज्ञाश्रुतेरनुमानाच्च पवनोत्पत्तेरावश्यकत्वे श्रुत्योरेकवाक्यतया विरोधाभावादाकाशद्वारा वायुकारणे ब्रह्मणि 'समन्वयः सिध्यतीति सिद्धान्तमाह— **प्रतिज्ञेति**। यत्तु वायोरस्तमयप्रतिषेधादुत्पत्तेरसंभव इति, तत्राह— **अस्तमयेति**। अमृतत्वादिश्रवणं तर्हि कथं, तत्राह— **कृतेति**। प्रतिज्ञावाक्यार्थप्राधान्यात् तदुपपादकवायूत्पत्तिप्रतिपादकवाक्यानां च बहुत्वान्मुख्यभूयस्त्वाभ्यां बलीयस्त्वादमृतत्वास्तमयनिषेधावापेक्षिकत्वेन नेयौ। अभ्यासस्तूपास्यादरार्थत्वान्न वायोरमृतत्वमात्यन्तिकं गमयति। 'अप पुनर्मृत्युं जयति' इत्यपमृत्युजयस्यैव वाक्यशेषे श्रवणादिति भावः। अधिकाशङ्काभावेनातिदेशमाक्षिपति— **नन्विति**। अधिकां शङ्कां दर्शयन्नुत्तरमाह— **उच्यत इति**। यदुक्तमसति विशेषे नातिदेशोऽर्थवानिति, तदङ्गीकरोति— **सत्यमिति**। तर्हि पूर्वेणैवाधिकरणेन गतत्वादिदमधिकरणमनारभ्यमिति, तत्राह— **तथापीति**। शब्दानुरोधिन्यपि शङ्का न वस्त्वनुरोधिनीति मात्रशब्दार्थः। शब्दमात्रकृतामाशङ्कामेव दर्शयति— **संवर्गेति**। 'स यो वायुं दिशां वत्सं वेद' इत्यादिविद्यासंग्रहार्थमादिपदम्। द्वितीयमादिपदममृतत्वश्रवणमभ्यासं च संगृह्णाति। अमृतत्वादिश्रवणस्य कृतप्रतिविधित्वात् कथं तद्वशादाशङ्केति, तत्राह— **कस्यचिदिति**। प्रतिज्ञानुपरोधादिना वायोर्नित्यत्वानुपपत्तेरुक्तत्वात् तत्कारणे ब्रह्मणि समन्वयः सिध्यतीत्युपसंहर्तुमितिशब्दः।।८।। इति द्वितीयं मातरिश्वाधिकरणम्।।

३।।असंभवाधिकरणम्।।सू. ९।।

## असंभवस्तु सतोऽनुपपत्तेः।।९।।

**वियत्पवनयोरसंभाव्यमानजन्मनोरप्युत्पत्तिमुपश्रुत्य ब्रह्मणोऽपि भवेत् कुतश्चिदुत्पत्तिरिति स्यात् कस्यचिन्मतिः; तथा विकारेभ्य एवाकाशादिभ्य उत्तरेषां विकाराणामुत्पत्तिमुपश्रुत्याकाशस्यापि विकारादेव ब्रह्मण उत्पत्तिरिति कश्चिन्मन्येत। तामाशङ्कामपनेतुमिदं सूत्रम्– 'असंभवस्तु' इति। न खलु ब्रह्मणः सदात्मकस्य कुतश्चिदन्यतः संभव उत्पत्तिराशङ्कितव्या। कस्मात्? अनुपपत्तेः। सन्मात्रं हि ब्रह्म। न तस्य सन्मात्रादेवोत्पत्तिः संभवति, असत्यतिशये प्रकृतिविकारभावानुपपत्तेः। नापि सद्विशेषाद्, दृष्टविपर्ययात्। सामान्याद्धि विशेषा उत्पद्यमाना दृश्यन्ते मृदादेर्घटादयो, न तु विशेषेभ्यः सामान्यम्। नाप्यसतो, निरात्मकत्वात्। 'कथमसतः सज्जायेत'**

### *प्रकटार्थविवरणम्*

**असंभवस्तु सतोऽनुपपत्तेः**।। ब्रह्मणोऽजत्वं प्रतिपादयतः समन्वयस्य किम् "त्वं जातो भवसि विश्वतोमुखः" इत्यादिश्रुतिविरोधोऽस्ति उत नास्तीति सन्देहे पूर्ववाद्याह— **वियत्पवनयोरिति**। ब्रह्म जायते कारणत्वात्, आकाशवत्; आकाशो विकाराज्जायते कार्यत्वात्, वायुवत् इत्यनुमानानुगृहीतजन्मश्रुतेः प्रामाण्यादस्ति विरोध इति बौद्धगन्धिनः पूर्वः पक्षः। ब्रह्माजम्, सदादिकारणशून्यत्वात्, नरविषाणवदित्यनुमानविरोधादतत्परश्रुतेः अनुमानस्य वा विपक्षबाधकशून्यस्याप्रामाण्यान्नास्ति विरोध इति सिद्धान्तमाह— **न खलु ब्रह्मण इत्यादिना**। इतश्च "त्वं जातो भवसि" इति श्वेताश्वतराणां श्रुतिः सर्वात्मभावप्रतिपादनपरा,

### *भाष्यभावप्रकाशिका*

**असंभवस्तु सतोऽनुपपत्तेः**।। ननु संशयो नोपपद्यते। सन्मात्रस्य सद्विशेषस्य चासतश्च ब्रह्म प्रति कारणत्वानुपपत्तेः। 'न चास्य कश्चिज्जनिते'त्यकारणत्वश्रुतेश्च शङ्कानुपपत्तेर्वचनादर्शनस्य चाधीतवेदस्यैव ब्रह्मजिज्ञासायामधिकारादनुपपत्तेरित्यत आह— **वियत्पवनयोरिति**। ननु न संभावनामात्रादर्थसिद्धिरपि तु प्रमाणादित्याशङ्क्याह— **तथा विकारेभ्य इति**। अयं प्रयोगः— ब्रह्म कस्यचित् कार्यं कारणत्वात्; यत्कारणं तत्कस्यचित् कार्यं दृष्टम्; यथाऽऽकाश इति। ननु श्रुतिविरोधात् कालात्ययापदिष्टमिति; नैवम्; 'त्वं जातो भवसि' 'बहुधा विजायत' इत्यादिश्रुतेः। नन्वेवं श्रुत्योर्विरोधे किमनुसारेण किन्नेतव्यमिति चेदनुमानानुगृहीतजन्मश्रुतेर्बलीयस्त्वात्तदनुरोधेन नेतव्यम्। नाप्यनवस्था कार्यकारणपरंपराया अनादित्वादिति भावः। **नाप्यसत इति**। ब्रह्म कार्यं

### *न्यायनिर्णयः*

ब्रह्मणो वियत्पवनकारणत्वं पूर्वाधिकरणयोरुक्तम्। इदानीमग्निरेव विस्फुलिङ्गोऽग्नेर्यथोत्पद्यते तथा ब्रह्मान्तराद् ब्रह्मोत्पद्यतामित्याशङ्क्याह— **असंभवस्त्विति**। 'न चास्य कश्चिज्जनिता' इत्यादेर्ब्रह्मणोऽजत्वं प्रतिपादयतः समन्वयस्य 'त्वं जातो भवसि' इत्यादिश्रुत्या विरोधोऽस्त्युत नेत्येकवाक्यत्वासंभवसंभवाभ्यां संदेहे पूर्वपक्षमाह— **वियदिति**। दर्शितश्रुतिविरोधपरिहारद्वारा समन्वयदृढीकरणात् पादादिसंगतयः। पूर्वपक्षे विरोधादप्रामाण्ये नित्यसिद्धे ब्रह्मणि समन्वयासिद्धिः। सिद्धान्ते वाक्यैक्यादविरोधात् प्रामाण्ये तत्र तत्सिद्धिः। संभावनामात्रादर्थसिद्धावतिप्रसङ्गात् प्रमाणमेव साधकं वक्तव्यमित्याशङ्क्याह— **तथेति**। ब्रह्म कस्यचित् कार्यम्, कारणत्वात्, आकाशवत्। न चाजत्वश्रुतिविरोधः, अनुमानानुगृहीतजन्मश्रुत्या तस्या विरोधात्। न चानवस्थानुगृहीताजत्वश्रुतिर्बलवती, कार्यकारणपरंपराया बीजादिवदनादित्वादन्धपरंपरया तदनुगृहीतत्वेऽपि तत्रानुमानानुगृहीतत्वेनाविशेषादस्ति विरोधः श्रुत्योरिति भावः। ब्रह्म न कार्यं, कारणशून्यत्वात्, नरविषाणवदित्यनुमानानुगृहीताजत्वश्रुत्या ब्रह्मणो नित्यत्वाज्जन्मश्रुतेरौपाधिकजन्मविषयत्वेनाविरोधान्नित्यसिद्धे ब्रह्मणि समन्वयसिद्धिरिति सिद्धान्तमाह— **तामिति**। तत्र प्रतिज्ञाभागं विभजते— **न खल्विति**। कारणशून्यत्वं विशदीकुर्वन् प्रश्नपूर्वकं सौत्रं हेतुमादत्ते— **कस्मादिति**। ब्रह्मणो हि कार्यत्वं ब्रुवता सन्मात्रं वा सद्विशेषो वा तस्यासद्वा कारणमिति वक्तव्यम्। नाद्य इत्याह— **सन्मात्रं हीति**। न द्वितीय इत्याह— **नापीति**। दृष्टविपर्ययमेव साधयति— **सामान्यादिति**। न तृतीय इत्याह— **नापीति**। श्रुतिविरोधाच्चायं पक्षो न संभवतीत्याह— **कथमिति**। युक्त्या

**(छा.उ. ६।२।२) इति चाक्षेपश्रवणात्। 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' (श्वे.उ. ६।९) इति च ब्रह्मणो जनयितारं वारयति। वियत्पवनयोः पुनरुत्पत्तिः[१] प्रदर्शिता, न तु ब्रह्मणः साऽस्तीति वैषम्यम्। न च विकारेभ्यो विकारान्तरोत्पत्तिदर्शनाद् ब्रह्मणोऽपि विकारत्वं भवितुमर्हति, मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गात्। या मूलप्रकृतिरभ्युपगम्यते, तदेव च नो ब्रह्मेत्यविरोधः।।९।।**

।।इति तृतीयमसंभवाधिकरणम्।।

४।।तेजोऽधिकरणम्।।सू. १०।।

## तेजोऽतस्तथा ह्याह।।१०।।

### *शारीरकन्यायसंग्रहः*

**तेजोऽतस्तथा ह्याह।।१०।।** अत्र तेजसः ब्रह्मयोनित्ववायुयोनित्वयोः परस्परविरोधे प्राप्ते ''तत्तेजोऽसृजत'' इति श्रुतेः निमित्तोपादानकारणत्वयोरविशेषात् ''बहु स्याम्'' इति बहुभवनाशासनमात्मविषयं पुरस्कृत्य सृष्ट्युपदेशः स्रष्टुरुपादानकारणत्वे लिङ्गमिति लिङ्गसिद्धं ब्रह्मयोनित्वं तेजसः, वायुयोनित्वं तु पञ्चमीश्रुत्यैव सिद्धम्। तत्र श्रुत्या लिङ्गं बाधित्वा वायुयोनित्वमेव मुख्यमुपादाय लिङ्गं परम्परया ब्रह्मयोनित्वविषयम्, वक्ष्यमाणन्यायेन ब्रह्मवायुसमुच्चयविषयं वेति दर्शितम्।।

### *प्रकटार्थविवरणम्*

न जन्मपरा, तत्रैवाजत्वश्रवणादित्याह— **स कारणमिति**। यच्चोक्तं वियत्पवनयोरसंभाव्यमानजन्मत्वमिति, तत्राह— **वियत्पवनयोरिति**। न केवलं विपक्षबाधकानुकूलतर्काभावस्त्वदीयानुमानस्य, प्रतिकूलतर्कसद्भावश्चेत्याह— **न च विकारेभ्य इति**। अनवस्थितकारणाभ्युपगमे क्वचिदपि निराकाङ्क्षकार्यप्रत्ययो न स्यादिति मूलक्षतिः। इति तृतीयमसंभवाधिकरणम्।

### *भाष्यभावप्रकाशिका*

न भवति सदसदनिर्वचनीयादिकारणशून्यत्वाद् यदेवं तदेवं यथा शशविषाणमिति प्रत्यनुमानविरोधः। 'न चास्य कश्चिज्जनिते'त्यागमविरोधश्च हेतोः 'बहुधा विजायत' इत्यादिश्रुतिस्त्वौपाधिकविषयेति भावः। ननु वियत्पवनयोरमृतत्वादिश्रवणेऽपि यथोत्पत्तिस्तथाऽत्रापि स्यादित्याशङ्क्याह— **वियत्पवनयोरिति**। अनवस्थाप्रसङ्गाच्च हेतोर्विपरीतसाधकमित्याह— **न चेति**। न चानादित्वादनवस्था न दोषाय, ब्रह्मणो विकार्यत्वे तदुपादानपरंपरायौगपद्ये सति प्रलयाभावप्रसङ्गादिति भावः। इति तृतीयमसंभवाधिकरणम्।।

### *न्यायनिर्णयः*

हेतुमुपपाद्य श्रुत्योपपादयति— **स कारणमिति**। यदुक्तं वियत्पवनयोरसंभाव्यमानजन्मनोरपीत्यादि, तत्राह— **वियदिति**। विभक्तत्वमुत्पत्तावुपपत्तिः। ब्रह्मण्यपि तुल्यं विभक्तत्वमित्याशङ्क्य ब्रह्मत्वविरोधान्नैवमित्याह— **न त्विति**। यत्तु 'तथे'त्यादावनुमानमुक्तं तद् दूषयति— **न चेति**। तस्य कार्यत्वं वदता मूलप्रकृतिरुपगम्यते, न वेति विकल्प्य द्वितीयं प्रत्याह— **मूलेति**। न चानादित्वान्नानवस्था, ब्रह्मणोऽपि कार्यत्वे तत्तदुपादानपरंपरायौगपद्ये प्रलयाभावप्रसङ्गादिति भावः। प्रथमे तुल्यबाधापत्तिरित्याशयेनाह— **या मूलेति**। एवं कार्यत्वानुमानस्याभासत्वाज्जन्मश्रुतेश्चौपाधिकविषयत्वादकार्यत्वानुमानानुगृहीताजत्वश्रुतेर्बलीयस्त्वादितरस्यास्तदनुरोधित्वादितरेतराविरोधान्नित्याद् ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयः संभवतीत्युपसंहरति— **इत्यविरोध इति**।।९।। इति तृतीयमसंभवाधिकरणम्।।

अध्यस्तस्याधिष्ठानत्वायोगात्र कुतश्चिदपि ब्रह्मणो जन्मेत्युक्तम्। इदानीं वायोरपि तर्हि कार्यत्वेनाध्यस्तत्वात् तेजसस्ततो जन्मानुपपत्तेर्ब्रह्मण एव तज्जन्मेति प्रत्यवस्थाने प्रत्याह— **तेजोऽत इति**। तैत्तिरीये छान्दोग्ये च जायमानत्वेन श्रुतं तेजो विषयः।

---

१. 'उत्पत्तावुपपत्तिः' इति पाठो न्यायनिर्णयधृतः इति भाति।

**छान्दोग्ये सन्मूलत्वं तेजसः श्रावितम्, तैत्तिरीयके तु वायुमूलत्वम्, तत्र तेजोयोनिं प्रति श्रुतिविप्रतिपत्तौ सत्यां प्राप्तं तावद् ब्रह्मयोनिकं तेज इति। कुतः? 'सदेव' इत्युपक्रम्य 'तत्तेजोऽसृजत' इत्युपदेशात्; सर्वविज्ञानप्रतिज्ञायाश्च ब्रह्मप्रभवत्वे सर्वस्य संभवात्; 'तज्जलान्' (छा.उ. ३।१४।१) इति चाविशेषश्रुतेः; 'एतस्माज्जायते प्राणः' (मु.उ. २।१।३) इति चोपक्रम्य श्रुत्यन्तरे सर्वस्याविशेषेण ब्रह्मजत्वोपदेशात्; तैत्तिरीयके च– 'स तपस्तप्त्वा। इदं सर्वमसृजत। यदिदं किंच' (तै.उ. २।६।१) इत्यविशेषश्रवणात्। तस्मात् 'वायोरग्निः' इति क्रमोपदेशो द्रष्टव्यः– वायोरनन्तरमग्निः संभूत इति।**

**एवं प्राप्त उच्यते– तेजोऽतो मातरिश्वनो जायत इति। कस्मात्? तथा ह्याह– 'वायोरग्निः' इति। अव्यवहिते हि तेजसो ब्रह्मजत्वे सत्यसति वायुजत्वे 'वायोरग्नि'रितीयं श्रुतिः कदर्थिता स्यात्। ननु**

### *प्रकटार्थविवरणम्*

**तेजोऽतस्तथा ह्याह**।। तेजो विषयः। तत् किं ब्रह्मकार्यं वायुकार्यं वेति सन्देहस्य बीजमुक्त्वा पूर्वपक्षमाह— **छान्दोग्य इति**। आकाशाधिकरणे सर्वविज्ञानप्रतिज्ञानुगृहीतोत्पत्तिश्रुतेः ब्रह्मजत्वं वर्णितम्। तेनैव न्यायेन तेजसोऽपि ब्रह्मजत्वमेवेत्यर्थः। का तर्हि ''वायोरग्निः'' इति श्रुतेर्गतिरित्याशङ्क्याह— **तस्माद्वायोरिति**।

ब्रह्मणो मूलकारणत्वेऽपि वायुजत्वमपि तेजसः श्रुतिबलादभ्युपगन्तव्यमित्याह— **तथा ह्याहेति**। **कदर्थिता** पीडिता।

### *भाष्यभावप्रकाशिका*

**तेजोऽतस्तथाह्याह**।। **श्रुतिविप्रतिपत्ताविति**। 'तत्तेजोऽसृजते'ति निमित्तविषयम्, 'वायोरग्नि'रिति वाक्यं तूपादानविषयमतो न विरोध इति चेन्न; बहु स्यामिति बहुभवनाशंसनलिङ्गेनोपादानत्वावगमान्न निमित्तत्वमतोऽस्ति विप्रतिपत्तिरिति भावः। नन्वासां श्रुतीनां परंपरया ब्रह्मजत्वेऽपि जगतो न विरोधो, ब्रह्मणो मूलकारणत्वात्, यथा द्व्यणुकादिक्रमेण कार्योत्पत्तावपि परमाणूनां कारणत्वम्, तद्वत्,ततश्च 'वायोरग्नि'रिति श्रुतेर्न बाध्यो[धो]त्यन्तं युक्त इति चेन्नैवं क्रमार्थतयाद्या[श्रु]तेःसंभवादित्याह— **तस्माद्वायोरिति**। यद्यपि वायोरग्निरित्यपादानपञ्चमी कारकविभक्तिर्वायोरनन्तरमित्युपपदविभक्तेर्बलीयसी। तथापि बहुश्रुतिविरोधाद्दुर्बलाऽप्युपपदविभक्ति-रेवात्रोचितेति भावः।

**श्रुतिःकदर्थिता स्यादिति**। तेजसो वायुयोनित्वं पञ्चमीश्रुत्यैव सिद्धम् ब्रह्मयोनित्वं तु तेजसो बहुभवनाशंसनलिङ्गसिद्धम्।

### *न्यायनिर्णयः*

तत्किं ब्रह्मकार्यं किं वा वायुकार्यमिति संशयस्य बीजं दर्शयन् पूर्वपक्षमाह— **छान्दोग्य इति**। तत्रेति शाखाद्वयोक्तिः। न च 'तत्तेजोऽसृजत' इति श्रुतेर्निमित्तविषयत्वात् 'वायोरग्निः' इति श्रुतेरुपादानविषयत्वादविप्रतिपत्तिः। 'बहु स्याम्' इति बहुभवनाशंसनलिङ्गेनोपादानत्वावगमादिति भावः। अत्रापि श्रुत्योर्विरोधनिराकरणद्वारा वायुभावमापन्ने ब्रह्मणि तेजोयोनौ समन्वयदृढीकरणात् पादादिसंगतयः। पूर्वपक्षे श्रुत्योरनेकवाक्यत्वेन विरोधादप्रामाण्ये तेजोहेतौ ब्रह्मणि समन्वयासिद्धिः। सिद्धान्ते तदेकवाक्यत्वेनाविरोधात् प्रामाण्ये तत्र तत्सिद्धिः। सत्यां विप्रतिपत्तौ विशेषकारणमन्तरेणान्यतरनिश्चयासिद्धिरिति शङ्कते— **कुत इति**। उपक्रान्तस्य सन्मात्रस्यैकमेवाद्वितीयमित्यवधारिताद्वितीयत्वनिर्धारणाय 'तत्तेजोऽसृजत' इति वचनादुपादानादेवोपादेयस्याव्यतिरेकादुपादानत्वमेव तेजः प्रति ब्रह्मणो विवक्षितमित्याह— **सदेवेति**। किंचाद्येऽधिकरणे सर्वविज्ञानप्रतिज्ञानुगृहीतोत्पत्तिश्रुतेर्ब्रह्मजत्वं वियतो वर्णितम्, तेनैव न्यायेन तेजसोऽपि ब्रह्मजत्वमेष्टव्यमित्याह— **सर्वविज्ञानेति**। इतश्च ब्रह्मजत्वं तेजसो युक्तमित्याह— **तज्जलानिति चेति**। अथर्वणश्रुत्या च तेजसो ब्रह्मजत्वसिद्धिरित्याह— **एतस्मादिति**। तथापि तैत्तिरीयश्रुत्यालोचनायां न ब्रह्मजत्वं तेजसः स्यादित्याह— **तैत्तिरीयके चेति**। ननु 'वायोरग्निः' इति श्रुतेर्वायुद्वारा तेजसो ब्रह्मजत्वेऽपि दर्शितश्रुतयो न विरुध्यन्तेऽन्यथा 'वायोरग्नि'रिति श्रुतिर्बाध्येत, तत्राह— **तस्मादिति**। यद्यपि वायोरग्निरित्यपादानपञ्चमी कारकविभक्तिर्वायोरनन्तरमित्युपपदविभक्तेर्बलीयसी, तथापि बहुश्रुतिविरोधाद् दुर्बलाऽपि सैवोचितेति मत्वा क्रमोपदेशमेव विशदयति— **वायोरिति**।

यदि पुनरित्यमस्याः श्रुतेरर्थो नाश्रीयते तर्हि विरुद्धार्थैव श्रुतिरियं पूर्वोक्तश्रुतिभिरिति पूर्वपक्षमनुभाष्य सिद्धान्तमाह— **एवं प्राप्त इति**। तत्र प्रश्नपूर्वकं हेतुमाह— **कस्मादिति**। हेतुमेव व्यतिरेकद्वारा विवृणोति— **अव्यवहिते हीति**। कदर्थिता पीडिता

**क्रमार्थैषा भविष्यतीत्युक्तम्। नेति ब्रूमः– 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै.उ. २।१।१) इति पुरस्तात् संभवत्यपादानस्यात्मनः पञ्चमीनिर्देशात्, तस्यैव च संभवतेरिहाधिकारात्, परस्तादपि च तदधिकारे 'पृथिव्या ओषधयः' (तै.उ. २।१।१) इत्यपादानपञ्चमीदर्शनाद् वायोरग्निरित्यपादानपञ्चम्येवैषेति गम्यते। अपि च वायोरूर्ध्वमग्निः संभूत इति कल्प्य उपपदार्थयोगः, क्लृप्तस्तु कारकार्थयोगो वायोरग्निः संभूत इति। तस्मादेषा श्रुतिर्वायुयोनित्वं तेजसोऽवगमयति। नन्वितराऽपि श्रुतिर्ब्रह्मयोनित्वं तेजसोऽवगमयति 'तत्तेजोऽसृजत' इति। न; तस्याः पारम्पर्यजत्वेऽप्यविरोधात्। यदाऽपि ह्याकाशं वायुं च सृष्ट्वा वायुभावापन्नं ब्रह्म तेजोऽसृजतेति कल्प्यते, तदाऽपि ब्रह्मजत्वं तेजसो न विरुध्यते। यथा– 'तस्याः शृतं तस्या दधि तस्या आमिक्षे'त्यादि। दर्शयति च ब्रह्मणो विकारात्मनाऽवस्थानं 'तदात्मानं स्वयमकुरुत' (तै.उ. २।७।१) इति। तथा चेश्वरस्मरणं भवति– 'बुद्धिर्ज्ञानमसंमोहः' (भ.गी. १०।४) इत्याद्यनुक्रम्य 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' (भ.गी. १०।५) इति। यद्यपि बुद्ध्यादयः स्वकारणेभ्यः प्रत्यक्षं भवन्तो दृश्यन्ते,**

### *प्रकटार्थविवरणम्*

पूर्वपक्षिणोक्तमर्थान्तरमनूद्य वैरूप्यप्रसङ्गेन परिहरति— **ननु क्रमार्थेत्यादिना**। किं च प्रकरणादुपादानाख्यापादानकारकाभिधायित्वं पञ्चम्याः सिद्धं परित्यज्यासिद्धः पदान्तरार्थयोगः कल्पयितुं न शक्यत इत्याह— **अपि चेति**। श्रुतिबलात् वायुजत्वं चेत्, तर्हि ब्रह्मजत्वमपि श्रुतिबलादेव। अतः श्रुत्योरेव परस्परविप्रतिषेध इत्याह— **नन्वितराऽपीति**। साक्षात्पारम्पर्यविषयत्वेन विरोधं परिहरति— **न तस्या इति**। साक्षात्पारम्पर्याभ्यां कारणत्वे दृष्टान्तमाह— **यथेति**। तस्या धेनोः शीतं[शृतं] क्षीरम्। तप्तं पयो दधिसंसृष्टमामिक्षा। तत्र क्षीरस्य दधिसाक्षात्कारणत्वेऽपि यथा गव्यं दधि इति प्रतियोगः[प्रयोगः] तथाऽत्रापि भविष्यतीत्यर्थः। तर्हि ब्रह्मणो वायुभावापत्तौ किं प्रमाणमित्याशङ्क्याह— **दर्शयति चेति**। परम्परयाऽपीश्वरस्य कारणत्वे स्मृतिं प्रमाणयति— **तथा चेति**। **प्रणाड्या** परम्परया।

### *भाष्यभावप्रकाशिका*

अतः श्रुत्या लिङ्गं बाधित्वा वायुयोनित्वं मुख्यमुपादाय लिङ्गं परंपरया ब्रह्मयोनित्वविषयं वक्ष्यमाणन्यायेन ब्रह्मवायु-समुच्चयमेवाभ्युपगन्तव्यमिति[१] भावः। ब्रह्मणः कथं वायुभावापत्तिरित्यत आह— **दर्शयति चेति**। पारंपर्यजस्यापि तज्जत्वव्यपदेशयोग्यत्वे प्रमाणमाह— **तथा चेति**। उक्तार्थे कथमिदं मानमिति तत्राह— **यद्यपीति**।

### *न्यायनिर्णयः*

बाधितेति यावत्। तेजसो वायुयोनित्वं पञ्चमीश्रुत्या निर्धारितम्, ब्रह्मयोनित्वं तु तस्य बहुभवनाशंसनलिङ्गादवगतम्, अतः श्रुत्या लिङ्गं बाधित्वा वायुयोनित्वं मुख्यमादाय लिङ्गं परंपरया ब्रह्मयोनित्वविषयं विवक्षमाणेन[२] न्यायेन ब्रह्मवायुसमुच्चयमेवाभ्युपगमयतीति भावः। पञ्चमीश्रुतेरुक्तां गतिं पूर्ववादी स्मारयति— **नन्विति**। न क्रमार्थत्वं पञ्चम्या युक्तम्, पूर्वोत्तरवाक्योपादानेनापादानार्थत्वप्रतीतेरिति परिहरति— **नेतीति**। उत्तरवाक्यमिहेत्युच्यते। इतश्चापादानार्थत्वमेव पञ्चम्या न क्रमार्थत्वमित्याह— **अपि चेति**। प्रकरणादुपादानाख्यापादानकारकाभिधायित्वं पञ्चम्याः सिद्धं परित्यज्य पदार्थान्तरयोगोऽसिद्धो न कल्पयितुं शक्यते। क्लृप्तकल्प्ययोर्मध्ये क्लृप्तस्यैव बलीयस्त्वादित्यर्थः। पञ्चमीश्रुतेरक्रमार्थत्वे फलितमाह— **तस्मादिति**। श्रुतिबलात् तेजसो वायुजत्वे तद्बलादेव ब्रह्मजत्वमपि तस्यास्थेयमतः श्रुत्योर्मिथो विरोधः स्यादिति शङ्कते— **नन्विति**। 'वायोरग्निः' इति साक्षात् तेजसो वायुजत्वमुच्यते, 'तत्तेजोऽसृजत' इति त्वाकाशवायुद्वारा तस्य ब्रह्मजत्वमिति विरोधसमाधिरिति समाधत्ते— **न, तस्या इति**। अविरोधमेव साधयति— **यदापीति**। साक्षात्पारम्पर्याभ्यां कारणत्वे दृष्टान्तमाह— **यथेति**। तस्या धेनोः शृतं तप्तं क्षीरं विवक्षितम्। तदेव दधिसंसृष्टमामिक्षेति भेदः। तत्र क्षीरस्य दध्नि साक्षात्कारणत्वेऽपि गव्यं दधीति प्रयोगो दृष्टस्तथाऽत्रापीत्यर्थः। तर्हि ब्रह्मणो वायुभावापत्तौ किं प्रमाणमित्याशङ्क्याह— **दर्शयति चेति**। पारम्पर्यजस्यापि तज्जत्वव्यपदेशयोग्यत्वे प्रमाणमाह— **तथा चेति**। अन्तःकरणादिभ्यः स्वकारणेभ्यो बुद्ध्यादीनामयशोन्तानामुत्पत्तिदर्शनान्मत्त एवेत्यवधारणमयुक्तमित्याशङ्क्याह— **यद्यपीति**। प्रणाड्या

१. न्यायनिर्णयानुसारेण शोध्यम्। २. 'वक्ष्यमाणेन' इति भाव्यम्।

**तथापि सर्वस्य भावजातस्य साक्षात् प्रणाड्या वेश्वरवंश्यत्वात्। एतेनाक्रमवत्सृष्टिवादिन्यः श्रुतयो व्याख्याताः। तासां सर्वथोपपत्तेः, क्रमवत्सृष्टिवादिनीनां त्वन्यथाऽनुपपत्तेः। प्रतिज्ञाऽपि सद्वंश्यत्वमात्रमपेक्षते, नाव्यवहित-जन्यत्वमित्यविरोधः।।१०।।**

।।इति चतुर्थं तेजोऽधिकरणम्।।

५।।अबधिकरणम्।।सू. ११।।

## आपः ।।११।।

**'अतस्तथा ह्याह' इत्यनुवर्तते। आपोऽतस्तेजसो जायन्ते। कस्मात्? तथा ह्याह– 'तदपोऽसृजत'**

### *शारीरकन्यायसंग्रहः*

**आपः।।११।।** शब्दस्य प्रत्यक्षविरुद्धार्थतयाऽवभासमानस्याविरुद्धार्थेऽपि प्रमाण्यसंभवे विरोधात् परित्यागो न युक्तः, प्रमित्यर्थत्वात् प्रयोगस्य— इति न्यायेन त्रिवृत्कृतविषययोरप्तेजसोर्दाह्यदाहकभावेन प्रत्यक्षविरुद्धेऽपि प्रकृतिविकारभावेन[भावे] प्रत्यक्षागोचरयोरत्रि-वृत्कृतयोरप्तेजसोः श्रुत्या प्रकृतिविकारभावो दर्शितः, अप्तेजस्त्वाविशेषेण तत्रापि विरोधानुमानं बाधित्वा इति।

### *प्रकटार्थविवरणम्*

ईश्वरवंशोद्भवत्वादिदं स्मरणमित्यभिप्रायकथनम्। ''इदं सर्वमसृजत'' इत्यादिश्रुतेरपि पारंपर्यार्थत्वमेवेत्याह— **एतेनेति**। यच्च सर्वविज्ञानप्रतिज्ञालिङ्गं तदप्यन्यथासिद्धमित्याह— **प्रतिज्ञाऽपीति**। इति चतुर्थं तेजोऽधिकरणम्।।

**आपः।।** पूर्वसूत्रात्पदान्तरमनुकृष्य व्याचष्टे— **अतस्तथा हीति**। ननु यद्यपि श्रुतं तेजसोऽप्कारणत्वम्, तथापि प्रत्यक्षेण

### *भाष्यभावप्रकाशिका*

ईश्वरवंश्यत्वात् स्मरणं भवतीत्यन्वयः। अव्यवधानेन ब्रह्मजत्वाभावे कथं प्रतिज्ञेत्यत आह— **प्रतिज्ञाऽपीति**। इति चतुर्थं तेजोधिकरणम्।।

**आपः**। ननु वाक्यं सूत्रं भवति, न पदमात्रम्। अतो नास्य सूत्रतेत्याशङ्क्य सूत्रं पूरयति— **अतस्तथाद्यापति[ह्याहेति]**।

### *न्यायनिर्णयः*

परम्परयेति यावत्। ईश्वरवंश्यत्वात् तद्वंशोद्भवत्वादिदमवधारणस्मरणमिति शेषः। सर्वस्येत्यस्मादर्वाक्[१] तथापीति वक्तव्यम्। पारम्पर्यविषयत्वं 'तत्तेजोऽसृजत' इति श्रुतेरुक्तम्। इदानीम् 'इदं सर्वमसृजत' इत्यादिश्रुतेरपि पारम्पर्यविषयत्वमेषितव्यमित्याह— **एतेनेति**। सर्वस्य साक्षाद् ब्रह्मजत्वाभावे कथं तासामुपपत्तिः, तत्राह— **तासामिति**। सर्वथा साक्षात्परम्परया वा। सर्वस्य ब्रह्मजत्वमात्रेणाक्रमवादिनीनां श्रुतीनामुपपत्तेरितरश्रुतिवशात् पारंपर्यमेवाश्रयणीयमित्यर्थः। क्रमश्रुतीनामेवाक्रमश्रुतिवशान्नयनं किं न स्यादित्याशङ्क्याह— **क्रमवदिति**। अन्यथा पारम्पर्यमन्तरेणेति यावत्। न साक्षात्कारणविषयत्वमिति शेषः। अव्यवधानेन ब्रह्मजत्वाभावे कथं प्रतिज्ञेत्याशङ्क्याह— **प्रतिज्ञाऽपीति**। अक्रमश्रुतीनां क्रमश्रुत्यनुसारित्वेन मिथो विरोधाभावात् तेजसो वियत्पवनद्वारा कारणे ब्रह्मणि समन्वयः सिध्यतीत्युपसंहरति— **इत्यविरोध इति**।।१०।। इति चतुर्थं तेजोधिकरणम्।।

तेजसो वायुकार्यत्वमुक्त्वाऽनन्तरनिर्दिष्टानामपां तेजसो जन्मातिदेशेन निरूपयति— **आप इति**। वाक्यं हि सूत्रं न पदमात्रम्; तत् कुतोऽस्य सूत्रतेत्याशङ्क्य सूत्रं पूरयति— **अत इति**। 'एतस्माज्जायते' इत्युपक्रम्य 'खं वायुर्ज्योतिरापः' इति, 'अग्नेरापः' इति 'तदपोऽसृजत' इति च श्रूयते। तत्र किमापः सतो जायन्ते किंवा तेजस इति श्रुतिविप्रतिपत्तेः संदेहे सत्यपामग्निदाह्यत्वादग्नेरुत्पत्त्ययोगात् 'अग्नेरापः' 'तदपोऽसृजत' इति च श्रुती गौण्यावन्यथाऽऽथर्वणश्रुतिविरोधात्र ब्रह्मणि

१. अनेन भाष्ये 'तथापि' इति पदं विना पाठो न्यायनिर्णयानुसारीति ज्ञायते।

**(छा.उ. ६।२।३) इति 'अग्नेरापः' (तै.उ. २।१) इति च। सति वचने नास्ति संशयः। तेजसस्तु सृष्टिं व्याख्याय पृथिव्या व्याख्यास्यन् [1]नापोऽन्तरियामिति 'आपः' इति सूत्रयांबभूव।।११।।**

।।इति पञ्चममबधिकरणम्।।

६।।पृथिव्यधिकरणम्।।सू. ११।।

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः।।१२।।

### *शारीरकन्यायसंग्रहः*

**पृथिव्यधिकाररूपशब्दान्तरेभ्यः।।१२।।** यद्यपि रूपाधिकारशब्दान्तरलक्षणेभ्यः लिङ्गप्रकरणस्थानेभ्यः अन्नशब्दश्रुतिः वर्षणात् तद्भूयिष्ठलिङ्गं चान्नमात्रविषयमुभयं बलवत्, तथापि लिङ्गादिभिः पृथिवीपरिग्रहे श्रुतिलिङ्गयोः नात्यन्तबाधः, स्वार्थात्रापरित्यागेन तदाकारपरिणतायां पृथिव्यां वृत्त्युपपत्तेः; श्रुतिलिङ्गाभ्यामन्नमात्रपरिग्रहे लिङ्गप्रकरणस्थानानाम् अत्यन्तबाधः स्यात्, पृथिव्या अनुपादानात्।

अत्रायं न्यायः— द्वयोः प्रमाणयोरितरेतरविरोधेऽन्यतरस्यात्यन्तबाधनेनान्यतरोपादानाद् वरम् अन्यतरस्याल्पबाधयाऽन्यतरोपादानमिति श्रुतिलिङ्गयोरन्नमात्रनिष्ठत्वं बाधित्वा लिङ्गप्रकरणस्थानैः अन्नाकारेण परिणममाना पृथिव्येवोपादीयत इत्युक्तम्।

### *प्रकटार्थविवरणम्*

विरोधोपलम्भात् सन्दिग्धं तदिति संशयं प्रदर्श्य सूत्रं व्याख्येयमित्याशङ्क्याह— **सति वचन इति**। यद्यपि स्थूलयोरप्तेजसोर्विरोधो दृश्यते, तथापि अपञ्चीकृतयोरतीन्द्रियत्वात् सति वचने नास्ति तत्र संशय इत्यर्थः। तर्हि संशयाभावे किमर्थं सूत्रप्रणयनमित्याशङ्क्याह— **[तेजसस्त्विति]**। महाभूतसर्गस्यापि[स्यावि]प्रतिषेधव्याख्याने प्रक्रान्ते क्रमप्राप्ता अपोऽनन्तरीयम्[नान्तरियाम्] अपामतिक्रमणं मा भूदित्यभिप्रेत्य प्रत्यक्षविरोधात् "अग्नेरापः" इति श्रुतेः गौणार्थत्वमिति मन्दाशङ्कापाकरणाय सूत्रितवानित्यर्थः। इति पञ्चममबधिकरणम्।

### *भाष्यभावप्रकाशिका*

नापोऽन्तरियामिति। 'अग्नेराप' इति आगमस्य प्रत्यक्षविरुद्धार्थतयाऽवभासमानस्याविरुद्धार्थे प्रामाण्यसंभवान्न परित्यागो युक्तः प्रमित्यर्थत्वात् प्रयोगस्येति न्यायेन त्रिवृत्कृतयोरप्तेजसोर्दाह्यदाहकभावेन प्रत्यक्षविरुद्धेऽपि प्रकृतिविकारभावे, अप्रत्यक्षयोरत्रिवृत्कृतयोरप्तेजसोः श्रौतप्रकृतिविकारभावो न प्रत्यक्षादिविरुद्ध इति भावः। इति पञ्चममबधिकरणम्।।

### *न्यायनिर्णयः*

समन्वयसिद्धिरिति पूर्वपक्षे सिद्धान्तमाह— **आपोऽत इति**। अपां कारणत्वे तेजसः श्रुतेऽपि प्रत्यक्षविरोधान्निश्चयासिद्धिरित्याशङ्क्याह— **सतीति**। त्रिवृत्कृतयोरप्तेजसोर्विरोधेऽपि तयोरत्रिवृतयोरतीन्द्रियत्वाद्विरोधाप्रतीतेर्वचने सति निश्चयोपपत्तिरित्यर्थः। संदेहाभावे विचारस्य निरवकाशत्वात्कथमिदं सूत्रमित्याशङ्क्याह— **तेजसस्त्विति**। महाभूतसर्गव्याख्याने प्रक्रान्ते क्रमप्राप्तानामपामतिक्रमणं मा भूदित्यभिप्रेत्य प्रत्यक्षविरोधात्, 'आप एवाग्र आसुः' इति च पूर्वसद्भावश्रवणादाथर्वणश्रुतेश्च 'अग्नेरापः' इत्याद्या श्रुतिर्गौणीति मन्दाशङ्कां निरसितुमिदं सूत्रम्। पूर्ववत् क्रमश्रुत्यनुरोधेनाक्रमश्रुतेर्नेतव्यत्वात् पूर्वसद्भावश्रुतेश्च भूतसूक्ष्ममात्रविषयत्वेनाविरोधात् तेजोभावमापन्ने ब्रह्मण्यपां कारणे 'तदपोऽसृजत' इत्यादिश्रुतेः समन्वयसिद्धौ न गौणार्थतेति भावः। तत्र च तैत्तिरीयादिश्रुतेराथर्वणादिश्रुतेश्च मिथोविरोधनिराकरणद्वारा ब्रह्मण्येवाबादिकारणे समन्वयप्रतिपादनात् पादादिसंगतिस्तथैव फलभेदश्चेति द्रष्टव्यम्।।११।।

तेजःकार्यत्वेनोक्तानामपां कार्यत्वेन 'ता अन्नमसृजन्त' इति श्रुतस्यान्नस्य पृथिवीत्वं साधयति— **पृथिवीति**। अधिकरणस्य

---
१. 'अपो नान्तरियाम्' इति 'अपो नान्तरयामि' इति च पा.।

**'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त' (छा.उ. ६।२।४) इति श्रूयते। तत्र संशयः- किमनेनान्नशब्देन व्रीहियवाद्यभ्यवहार्यं वौदनाद्युच्यते, किं वा पृथिवीति। तत्र प्राप्तं तावद् व्रीहियवाद्योदनादि वा परिग्रहीतव्यमिति। तत्र ह्यन्नशब्दः प्रसिद्धो लोके वाक्यशेषोऽप्येतमर्थमुपोद्बलयति- 'तस्माद् यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति' (छा.उ. ६।२।४) इति। व्रीहियवाद्येव हि सति वर्षणे बहु भवति, न पृथिवीति।**

**एवं प्राप्ते ब्रूमः- पृथिव्येवेयमन्नशब्देनाद्भ्यो जायमाना विवक्ष्यत इति। कस्मात्? अधिकाराद् रूपाच्छब्दान्तराच्च। अधिकारस्तावत् 'तत्तेजोऽसृजत', 'तदपोऽसृजत' इति महाभूतविषयो वर्तते। तत्र क्रमप्राप्तां पृथिवीं महाभूतं विलङ्घ्य नाकस्माद् व्रीह्यादिपरिग्रहो न्याय्यः। तथा रूपमपि वाक्यशेषे पृथिव्यनुगुणं दृश्यते- 'यत् कृष्णं तदन्नस्य' (छा.उ. ६।४।१) इति। न ह्योदनादेरभ्यवहार्यस्य कृष्णत्व-नियमोऽस्ति। नापि व्रीह्यादीनाम्। ननु पृथिव्या अपि नैव कृष्णत्वनियमोऽस्ति, पयःपाण्डुरस्याङ्गाररोहितस्य**

### *प्रकटार्थविवरणम्*

**पृथिव्यधिकाररूपशब्दान्तरेभ्यः**।। श्रुतिवाक्यं पठित्वाऽन्नशब्दान्महाभूतप्रकरणाच्च संशयमाह— **ता आप इत्यादिना**। **अभ्यवहार्यं** भक्षणयोग्यम्। पूर्वत्र बलवच्छ्रुत्यवष्टम्भेन विरोधः परिहृतः। इहापि बलवदन्नश्रुतिबलेन व्रीह्यादिकं ग्राह्यमित्याह— **तत्र प्राप्तमित्यादिना**। व्रीह्यादिपरिग्रहे लिङ्गमप्यस्तीत्याह— **वाक्यशेषोऽपीति**।

सिद्धान्ते सूत्रमवतारयति— **एवं प्राप्ते ब्रूम इति**।

### *भाष्यभावप्रकाशिका*

**पृथिव्यधिकाररूपशब्दान्तरेभ्यः**। लिङ्गप्रकरणस्थानेभ्यः पृथिव्यवगम्यते; तत्र कथमन्नशब्देन व्रीह्यादि परिगृह्यत इत्याशङ्क्य तेभ्यः श्रुतेः प्राबल्यादित्याह— **तत्र हीति**। पूर्वपक्षेऽपि लिङ्गं दर्शयति— **तस्माद्यत्रेति**। तस्मात् श्रुत्यन्तरेण 'अद्भ्यः पृथिवी पृथिव्या ओषधय' इत्यादिना विरोध इति भावः।

अधिकारः प्रकरणम्। लिङ्गं दर्शयति— **तथा रूपमपीति**। स्थानं दर्शयति— **श्रुत्यन्तरमिति**। श्रुत्यन्तरे तेज आरभ्य

### *न्यायनिर्णयः*

विषयमाह— **ता इति**। अन्नशब्दान्महाभूतप्रकरणाच्च दर्शितश्रुतिं विषयीकृत्य विचारप्रयोजकं संदेहमाह— **तत्रेति**। **अभ्यवहार्यम्** भक्षणयोग्यमिति यावत्। अप्कार्यविगानद्वारा कारणसमन्वये विगानं दर्शयन् पूर्वपक्षयति— **तत्र प्राप्तमिति**। 'ता अन्नमसृजन्त' इति श्रुतेः 'अद्भ्यः पृथिवी' इति श्रुतेश्च विरोधनिराकरणद्वारेण परम्परया पृथिवीकारणे ब्रह्मणि समन्वयप्रतिपादनादत्र पादादिसंगतिसौलभ्यमिति मन्तव्यम्। उक्तश्रुत्योरनेकवाक्यतया विरोधादप्रामाण्ये पूर्वपक्षे समन्वयासिद्धिः, सिद्धान्ते त्वेकवाक्यत्वेनाविरोधात् प्रामाण्ये तत्सिद्धिः। प्रकरणादिना पृथिवीप्रतीतौ कथमन्नशब्देन व्रीह्यादि ग्राह्यमित्याशङ्क्य श्रुतेस्ततो बलीयस्त्वादित्याह— **तत्र हीति**। अन्नशब्देन व्रीह्यादि ग्राह्यमित्यत्र लिङ्गमपि दर्शयति— **वाक्यशेषोऽपीति**। **तस्मादिति**। अद्भ्योऽन्नस्य सृष्टत्वादिति यावत्। **तदेव** तत्रैवेत्यर्थः। वर्षणे सत्यन्नस्य बहुभवनं श्रुतमित्येतावता कथमन्नशब्दस्य पृथिवीव्यावृत्तिरित्याशङ्क्याह— **व्रीहीति**। श्रुतिलिङ्गाभ्यामन्नशब्दस्य प्रसिद्धार्थत्वे सिद्धे 'ता अन्नमसृजन्त' इत्यादिश्रुतेः श्रुत्यन्तरेण 'अद्भ्यः पृथिवी' इत्यादिना विरोध इति पूर्वपक्षोपसंहार इतिशब्दार्थः।

पूर्वपक्षमनूद्य सिद्धान्तसूत्रमवतार्य प्रतिज्ञाभागं व्याचष्टे— **एवं प्राप्त इति**। श्रुतिलिङ्गाभ्यामन्नशब्दस्य व्रीह्यादिविषयत्वे दर्शिते पृथिवीविषयत्वं हेत्वभावादयुक्तमिति शङ्कते— **कस्मादिति**। अन्नशब्दस्य पृथिवीविषयत्वे सूत्रोक्तं हेतुत्रयं विभज्यावतारयति— **अधिकारादिति**। अधिकारशब्दितं प्रकरणमादौ विवृणोति— **अधिकार इति**। प्रकरणस्य महाभूतविषयत्वेऽपि परम्परया व्रीह्यादिविषयत्वमन्नशब्दस्य किं न स्यादित्याशङ्क्य प्रबलप्रमाणं विना परम्पराकल्पनमनुचितमित्याह— **तत्रेति**। प्रकरणवल्लिङ्गमपि सिद्धान्ते साधकमस्तीत्याह— **तथेति**। लिङ्गस्यान्यथासिद्धिं शङ्कित्वा दूषयति— **न हीति**। कृष्णत्वनियमराहित्यं पृथिव्यामपि

**च क्षेत्रस्य दर्शनात्। नायं दोषः। बाहुल्यापेक्षत्वात्। भूयिष्ठं हि पृथिव्याः कृष्णं रूपम्। न तथा श्वेतरोहिते। पौराणिका अपि पृथिवीच्छायां शर्वरीमुपदिशन्ति। सा च कृष्णाभासेत्यतः कृष्णं रूपं पृथिव्या इति श्लिष्यते। श्रुत्यन्तरमपि समानाधिकारम् 'अद्भ्यः पृथिवी' (तै.उ. २।१) इति भवति, 'तद् यदपां शर आसीत् तत् समहन्यत सा पृथिव्यभवत्' (बृ.उ. १।२।२) इति च। पृथिव्यास्तु व्रीह्यादेरुत्पत्तिं दर्शयति- 'पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्' (तै.उ. २।१) इति च। एवमधिकारादिषु पृथिव्याः प्रतिपादकेषु सत्सु कुतो व्रीह्यादिप्रतिपत्तिः? प्रसिद्धिरप्यधिकारादिभिरेव बाध्यते। वाक्यशेषोऽपि पार्थिवत्वादन्नाद्यस्य तद्द्वारेण पृथिव्या एवाद्भ्यः प्रभवत्वं सूचयतीति द्रष्टव्यम्। तस्मात् पृथिवीयमन्नशब्देति।।१२।।**

।।इति षष्ठं पृथिव्यधिकरणम्।।

### *प्रकटार्थविवरणम्*

अधिकारं रूपं च व्याख्याय शब्दान्तरं व्याचष्टे— **श्रुत्यन्तरमपीति**। **समहन्यत** संहतं परिणतमभवत्। **सेति**। सोऽपां कठिनाकारपरिणामः पृथिव्यभवदिति समानप्रकरणं श्रुत्यन्तरमप्कार्यस्यान्नस्य पृथिवीत्वं गमयतीत्यर्थः। इतोऽप्यप्कार्यमन्नं व्रीह्यादि न भवतीत्याह— **पृथिव्यास्त्विति**। यद्यपि प्रकरणादीनाम् एकैकस्य श्रुतेर्दुर्बलत्वम्; तथापि बहुभिः प्रकरणादिभिरेकस्यान्नशब्दस्य व्रीहियवाद्याकारपरिणतायां पृथिव्यां वृत्तिः युक्तेत्याह— **प्रसिद्धिरपीति**। इति षष्ठं पृथिव्यधिकरणम्।।

### *भाष्यभावप्रकाशिका*

चतुर्थपर्यायपठितस्यैव व्रीह्यादिरूपत्वान्नात्र तृतीयपर्यायपठितस्य व्रीह्यादिरूपतेत्याह— **पृथिव्या इति**। लिङ्गादिभिः पृथिवीपरिग्रहे श्रुतिलिङ्गयोर्नात्यन्तबाधः स्वार्थापरित्यागेन तदाकारपरिणतायां पृथिव्यां प्रवृत्त्युपपत्तेः। श्रुतिलिङ्गाभ्यामन्नमात्रपरिग्रहे लिङ्गादीनामत्यन्तबाधः पृथिव्या अनुपादानात्। तत्रैवं सति द्वयोः प्रमाणसमुदाययोरितरेतरविरोधेऽन्यतरस्यात्यन्तबाधेनान्यतरोपादनाद्वरमन्यतरस्याल्प-बाधयाऽन्यतरोपादानमिति न्यायेन श्रुतिलिङ्गयोरन्नमात्रनिष्ठत्वं बाधित्वा लिङ्गप्रकरणस्थानैरन्नाकारेण परिणममाना पृथिव्येवापायेत्याह-[वोपादेयेत्याह]— **एवमधिकारादिष्विति**। पूर्ववादिनोक्तं लिङ्गं सिद्धान्तस्यैवानुकूलमिति दर्शयति— **वाक्येति**। इति षष्ठं पृथिव्यधिकरणम्।।

### *न्यायनिर्णयः*

तुल्यमित्यसिद्धिं लिङ्गस्य चोदयति— **नन्विति**। पृथिवीप्रदेशानामकृष्णानामपि प्रथनात् तत्र कृष्णत्वनियमाभावादसंभवि लिङ्गमिति। तन्निराकरोति— **नायमिति**। बाहुल्यमेव प्रकटयति— **भूयिष्ठं हीति**। वाक्यशेषे यदन्नस्य कृष्णत्वं श्रुतं तत् तस्य पृथिवीत्वं गमयतीत्यत्र पौराणिकसंमतिमाह— **पौराणिका अपीति**। प्रकरणलिङ्गे दर्शयित्वा स्थानमपि सिद्धान्ते दर्शयति— **श्रुत्यन्तरमपीति**। **समानाधिकारम्** महाभूतसृष्टिविषयत्वेन समानप्रकरणमिति यावत्। तत्रैव बृहदारण्यकश्रुतिमुदाहरति— **तद्यदिति**। तत् तत्र सृष्टिकाले यदपां यस्तासां शरो मण्डो घनीभावोऽभूदिति[१] प्रकृतः शरो निरुच्यते। स हि समहन्यत संघातात्मना परिणतः। सोऽपां कठिनाकारपरिणामः पृथिव्यभवत्। विशेष्यपृथिव्यपेक्षया सेत्युक्तम्। चकारस्तु श्रुत्यन्तरमितिपदानुकर्षणार्थः। तैत्तिरीयके तेज आरभ्य चतुर्थपर्यायपठितस्यैव व्रीह्यादिरूपत्वात् तृतीयपर्यायस्य पृथिवीविषयत्वाच्छान्दोग्येऽपि तस्य तद्विषयत्वं युक्तमिति स्थानमेव प्रकटयति— **पृथिव्यास्त्विति**। प्रमाणत्रयफलं निगमयति— **एवमिति**। अन्नशब्दश्रुत्या व्रीह्यादिप्रतिपत्तिरुक्तेत्याशङ्क्याह— **प्रसिद्धिरपीति**। लिङ्गानुगृहीता श्रुतिर्बलवती कुतो बाध्यत इत्याशङ्क्य त्वदुक्तं लिङ्गं सिद्धान्तानुकूलमित्याह— **वाक्यशेषोऽपीति**। प्रकरणादिभिर्यदा पृथिवी परिगृह्यते तदा श्रुतिलिङ्गयोर्नात्यन्तबाधः, स्वार्थापरित्यागेन तदाकारपरिणतायां पृथिव्यां प्रवृत्त्युपपत्तेः। श्रुतिलिङ्गाभ्यामन्नमात्रपरिग्रहे [२]हेतुलिङ्गप्रकरणादीनामत्यन्तबाधः स्यात्। तेषां पृथिवीविषयत्वात् तदनुपादाने निरवकाशत्वात्। तत्र प्रमाणसमुदाययोरितरेतर-विरोधेऽन्यतरस्यात्यन्तबाधेनान्यतरोपादानाद् वरमन्यतरस्याल्पबाधेनान्यतरोपादानमिति श्रुतिलिङ्गयोरन्नमात्रनिष्ठत्वं बाधित्वा प्रकरणादिभि-रन्नाकारपरिणता पृथिव्येव ग्रहीतव्येति मन्वानः सिद्धान्तमुपसंहरति— **तस्मादिति**। तैत्तरीयश्रुत्यनुसारेण छन्दोगश्रुतिनयनात् तयोरविरोधादन्नभावमापन्ने पृथिवीकारणे ब्रह्मणि समन्वयोपपत्तिरिति निगमयितुमितीत्युक्तम्।।१२।। इति षष्ठं पृथिव्यधिकरणम्।।

१. 'अभूत्, तदिति प्रकृतः' इति पाठः स्यात्। २. 'परिग्रहे तु लिङ्ग' इति पाठः स्यात्।

७।।तदभिध्यानाधिकरणम्।।सू. १३।।

## तदभिध्यानादेव तु तल्लिङ्गात् सः।।१३।।

**किमिमानि वियदादीनि भूतानि स्वयमेव स्वविकारान् सृजन्त्याहोस्वित् परमेश्वर एव तेन तेनात्मनाऽवतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति संदेहे सति, प्राप्तं तावत् स्वयमेव सृजन्तीति। कुतः? 'आकाशाद्वायुर्वायोरग्निः' इत्यादिस्वातन्त्र्यश्रवणात्। नन्वचेतनानां स्वतन्त्राणां प्रवृत्तिः प्रतिषिद्धा। नैष दोषः। 'तत्तेज ऐक्षत, ता आप ऐक्षन्त' (छा.उ. ६।२।३,४) इति च भूतानामपि चेतनत्वश्रवणादिति।**

### *शारीरकन्यायसंग्रहः*

**तदभिध्यानादेव तु तल्लिङ्गात्सः।।१३।।** आकाशादीनामुत्तरोत्तरभूतोपादानत्वमन्यानपेक्षमवगतं पञ्चमीश्रुत्या, तथा ब्रह्मणोऽप्यन्यानपेक्षं सर्वभूतोपादानत्वमवगतम्, "आकाशादेव समुत्पद्यन्ते" इति। तत्रान्यतरोपादाने अन्यतरपदार्थबाधप्रसङ्गात् श्रुतपदार्थबाधकल्पनाद् वरम् अर्थसिद्धनैरपेक्ष्यधर्मबाधकल्पनमिति वियदधिकरणन्यायेन नैरपेक्ष्यधर्मं बाधित्वा समुच्चयोपादानेन पूर्वपूर्वभूताकारपरिणतं ब्रह्म उत्तरोत्तरोपादानमिति दर्शितम्।

### *प्रकटार्थविवरणम्*

**तदभिध्यानादेव तु तल्लिङ्गात् सः।।** एवं तावन्महाभूतानां पूर्वस्मात्पूर्वस्मात् उत्तरोत्तरस्य सृष्टिं व्याख्याय तत्र स्वातन्त्र्यपारतन्त्र्यविचारमारभते— **किमिदानीमिति**। पूर्वपक्षमाक्षिपति— **नन्वचेतनानामिति**। भवेदयमाक्षेपो यद्यचेतनत्वं स्यात्, न तु तदस्तीत्याह— **नैष दोष इति**।

### *भाष्यभावप्रकाशिका*

**तदभिध्यानादेव तु तल्लिङ्गात्सः। स्वातन्त्र्यश्रवणादिति**। ननु ब्रह्मणोऽपि स्वातन्त्र्यश्रवणमस्ति, आकाशादेव समुत्पद्यन्त इत्येवकारश्रुतेरिति चेत्? सत्यं मूलकारणत्वापेक्षं तद् यथा परमाणूनां घटादिकारणत्वम् तद्वदित्यर्थः। तत्तज्जीवाधिष्ठानात् प्रवृत्तिरुपपन्नेति परिहरति— **तत्तेज इति**।

### *न्यायनिर्णयः*

पूर्वेष्वधिकरणेषु महाभूतानां पूर्वस्मात्पूर्वस्मादुत्तरस्योत्तरस्य सृष्टिरुपदिष्टा। सम्प्रति भूतानां स्वकार्ये स्वातन्त्र्याद् ब्रह्मणः सर्वकारणत्वश्रुतिविरोधः स्यादित्याशङ्क्याह— **तदभिध्यानादिति**। विषयप्रदर्शनपूर्वकमाकाशादिशब्दानां चेतनाचेतनविषयत्वाभ्यां संदेहमुक्त्वा पूर्वपक्षं गृह्णाति— **किमिमानीति**। अत्र च [१]भूतसृष्टत्वश्रुतेर्ब्रह्मस्रष्टृत्वश्रुतेश्च विरोधनिराकरणद्वारेण सर्वस्रष्टरि ब्रह्मणि समन्वयदृढीकरणात् पादादिसंगतयः। पूर्वपक्षे श्रुत्योर्विरोधादनेकवाक्यत्वान्न तत्र ब्रह्मणि समन्वयः। सिद्धान्ते तु तयोरेकवाक्यतयाऽविरोधात् प्रामाण्यात्तत्सिद्धिः। 'आकाशादेव समुत्पद्यन्ते' इत्येवकारश्रुत्या ब्रह्मणः स्वातन्त्र्ये समधिगते भूतस्वातन्त्र्यमयुक्तमिति शङ्कते— **कुत इति**। मूलकारणत्वापेक्षया ब्रह्मणः स्वातन्त्र्यश्रवणमित्याशयवानाह— **आकाशादिति**। पूर्वपक्षमाक्षिपति— **नन्विति**। आकाशादिशब्दैराकाशाद्यभिमानिनीनां देवतानां मनुष्यादिशब्दैरिव तदभिमानिनां जीवानां विवक्षितत्वात्, पञ्चमीनां च निमित्तार्थत्वात्, आकाशाद्यात्मनेश्वरस्य वाय्वाद्युपादानत्ववत् तदभिमानिदेवतात्मनाऽधिष्ठातृत्वं चाविरुद्धमिति परिहरति— **नैष दोष इति**। भूतानामपीति भूताभिमानिदेवताभिप्रायम्। 'सोऽकामयत' इति परमेश्वरं प्रस्तुत्य 'तदात्मानं स्वयमकुरुत' इति कर्तृत्वं श्रुतम्, 'यः पृथिव्यां तिष्ठन्' इत्यादिना चेश्वरस्य नियन्तृत्वमुक्तं, तत्कुतो देवतानां स्वातन्त्र्येण कार्ये नियन्तृत्वमित्याशङ्क्य प्रस्तावलिङ्गाभ्यामवद्योतितं ब्रह्मणः सर्वनियन्तृत्वमभिमानिदेवताद्वारा पारम्पर्येणापि सिध्यति, अन्यथा ब्रह्मकारणत्वश्रुतेर्भूतकारणत्वश्रुतेश्च मिथो विरोधः स्यादित्युपसंहर्तुमितिशब्दः।

---

१. 'भूतस्रष्टृत्व' इति पाठः स्यात्।

**एवं प्राप्तेऽभिधीयते– स एव परमेश्वरस्तेन तेनात्मनाऽवतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति। कुतः? तल्लिङ्गात्। तथा हि शास्त्रम्– 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति' (बृ.उ. ३।७।३) इत्येवंजातीयकं साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति। तथा 'सोऽकामयत। बहु स्यां प्रजायेय' इति प्रस्तुत्य 'सच्च त्यच्चाभवत्' (तै.उ. २।६।१) 'तदात्मानं स्वयमकुरुत' (तै.उ. २।७।१) इति च तस्यैव सर्वात्मभावं दर्शयति। यत्त्वीक्षणश्रवणमप्तेजसोस्तत् परमेश्वरावेशवशादेव द्रष्टव्यम्– 'नान्योऽतोऽस्ति द्रष्टा' (बृ.उ. ३।७।२३) इतीक्षित्रन्तरप्रतिषेधात्, प्रकृतत्वाच्च सत ईक्षितुः 'तदैक्षत बहु स्यां प्रजायेय' (छा.उ. ६।२।३) इत्यत्र।।१३।।**

।।इति सप्तमं तदभिध्यानाधिकरणम्।।

***शारीरकन्यायसंग्रहः***

८।।विपर्ययाधिकरणम्।।सू. १४।।

**विपर्ययेण तु क्रमोऽत उपपद्यते च ।।१४।।**

महाभूतप्रलयोऽपि क्रमसापेक्षः, महाभूतोत्पत्तिप्रलययोः अन्यतरत्वात्, उत्पत्तिवत्— इत्यनुमानेनावश्यवक्तव्ये प्रलयक्रमे यद्यपि भूतसमवायी सृष्टिक्रमः आकाङ्क्षासन्निधिभ्यामुपादेयः प्राप्तः, यद्यपि च सति कारणे कार्यं लीयत इति लौकिको वा, "जगत्प्रतिष्ठा देवर्षे" इति स्मार्तो वा विपर्ययक्रमः विप्रकृष्टः; तथाप्ययोग्यविषयाभ्याम् आकाङ्क्षासन्निधिभ्यां विप्रकृष्टविषये अप्याकाङ्क्षायोग्यत्वे बलवत्तरे योग्यतानिमित्तत्वात् संबन्धस्य इति न्यायेन प्रलयस्यापि विपरीतक्रमो दर्शितः।

***प्रकटार्थविवरणम्***

"सः" इत्यन्तं सूत्रपदं व्याचष्टे— **स एवेति**। तदभिध्यानादेवेति सूत्रभागं पूर्वपक्षबीजापाकरणे योजयति— **यत्त्वीक्षण-श्रवणमिति**। परमेश्वरस्य भूतेषु प्रवेशात् तदीयमेवाभिध्यानमप्तेजसोरुपचर्यत इत्यर्थः। इति सप्तमं तदभिध्यानाधिकरणम्।।

***भाष्यभावप्रकाशिका***

**तस्यैव सर्वात्मभावं दर्शयतीति**। अत्रायं न्यायः— एकतरोपादानेऽन्यतरपदार्थबाधप्रसङ्गात् पञ्चमीश्रुत्यैवकारश्रुत्या चाधिगत-स्वातन्त्र्ययोर्वियद्ब्रह्मणोरेकतरस्याप्यबाधेन नैरपक्ष्यधर्ममात्रबाधकल्पनं वियदधिकरणन्यायेन युक्तमिति समुच्चयोपादानेन नैरपेक्ष्यं बाधित्वा पूर्वपूर्वभूताकारपरिणतमुत्तरोत्तरभूतोपादानं ब्रह्मेत्यभ्युपेयमिति। अचेतनानामपि तत्तज्जीवाधिष्ठानात् प्रवृत्तिरित्युक्तमनुवदति— **यत्त्वीक्षणेति**। ननु जीवनिबन्धनं स्यादित्यत आह— **नान्योऽतोऽस्तीति**। भवतु वा जीवानां भिन्नत्वम्, तथापि किं कारणमिति विशये परमेश्वरस्य कारणतया क्लृप्तत्वात् स एव कारणमित्याह— **प्रकृतत्वाच्चेति**। इति सप्तमं तदभिध्यानाधिकरणम्।।

***न्यायनिर्णयः***

आकाशादिशब्दैर्न देवतालक्षणा, मुख्यार्थबाधाभावात्, पञ्चम्यश्चापादानार्थास्तत्र रूढतरत्वादिति सिद्धान्तयति— **एवं प्राप्त इति**। भूतानां स्वातन्त्र्यश्रवणान्नास्ति स्वविकारसृष्टावीश्वरापेक्षेत्युक्तत्वादुक्तप्रतिज्ञानुपपत्तिरिति शङ्कते— **कुत इति**। सौत्रं हेतुमादाय विभजते— **तल्लिङ्गादिति**। इतश्च भूतानामयुक्ता स्वातन्त्र्येण प्रवृत्तिरित्याह— **तथेति**। ब्रह्माकाशयोरन्यरपदार्थोपादानेऽन्यतर-पदार्थबाधप्रसङ्गात् पञ्चम्येवकारश्रुतिभ्यामवगतस्वातन्त्र्ययोस्तयोरेकतरस्याप्यबाधेन समुच्चयोपादानेन नैरपेक्ष्यमात्रं बाधित्वा पूर्वपूर्वभूताकारपरिणतं ब्रह्मोत्तरोत्तरभूतोपादानमुपेयमिति भावः। पूर्वपक्षबीजमनूद्य तदभिध्यानादेवेति सूत्रावयवयोजनया निराकरोति— **यत्त्विति**। परमेश्वरस्य भूतेषु प्रवेशात् तदीयमेवाभिध्यानमप्तेजसोरुपचर्यते, तत्र भूतानां चेतनत्वाशङ्केत्यर्थः। भूतानां तदभिमानिचेतनदेवताद्वारेणेक्षणसिद्धौ किमीश्वरेणेत्याशङ्क्याह— **नान्य इति**। भवतु वा चेतनानां देवतात्मनां भिन्नत्वं, तथापि किं कारणमिति विशये परमेश्वरस्य कारणत्वेन क्लृप्तत्वात् स एव द्विधा कारणमित्याह— **प्रकृतत्वादिति**। ब्रह्मणः स्वरूपेण पररूपेण सर्वकारणत्वे सर्वस्त्रष्टृब्रह्मसमन्वयस्य भूतस्वातन्त्र्यस्त्रष्टृत्वश्रुतिविरोधो नेति सिद्धमिति भावः।।१३।। इति सप्तमं तदभिध्यानाधिकरणम्।

८।।विपर्ययाधिकरणम्।।सू. १४।।

## विपर्ययेण तु क्रमोऽत उपपद्यते च।।१४।।

**भूतानामुत्पत्तिक्रमश्चिन्तितः; अथेदानीमप्ययक्रमश्चिन्त्यते। किमनियतेन क्रमेणाप्यय उतोत्पत्तिक्रमेण, अथवा तद्विपरीतेनेति। त्रयोऽपि चोत्पत्तिस्थितिप्रलया भूतानां ब्रह्मायत्ताः श्रूयन्ते– 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति' (तै.उ. ३।१।१) इति। तत्रानियमोऽविशेषादिति प्राप्तम्। अथवोत्पत्तेः क्रमस्य श्रुतत्वात् प्रलयस्यापि क्रमाकाङ्क्षिणः स एव क्रमः स्यादित्येवं प्राप्तम्।**

**ततो ब्रूमः– विपर्ययेण तु प्रलयक्रमोऽत उत्पत्तिक्रमाद् भवितुमर्हति। तथा हि लोके दृश्यते– येन क्रमेण सोपानमारूढस्ततो विपरीतेन क्रमेणावरोहतीति। अपि च दृश्यते मृदो जातं घटशरावाद्यप्ययकाले मृद्भावमप्येति, अद्भ्यश्च जातं हिमकरकाद्यब्भावमप्येतीति। अतश्चोपपद्यत एतत्– यत् पृथिव्यद्भ्यो जाता**

### *प्रकटार्थविवरणम्*

**विपर्ययेण तु क्रमोऽत उपपद्यते च**।। सङ्गतिमाह— **भूतानामिति**। ननु महाभूतानां प्रलय एव नास्ति, कुतः क्रमचिन्तेति विस्मरणशीलस्य शङ्कामपाकरोति— **त्रयोऽपि चेति**। पूर्वपक्षमाह— **तत्रेति**। अविशेषादिति हेत्वसिद्ध्या परिहरति— **विपर्ययेण त्विति**। लोके प्रवृत्तिक्रमान्निवृत्तिक्रमस्य वैपरीत्यदर्शनात्, कार्यनिवृत्तिरपि विपरीतक्रमेणोपपद्यते, निवृत्तित्वात्, संप्रतिपन्ननिवृत्तिवदित्यर्थः। किञ्च विमतं कार्यं स्वोपादाने प्रलीयते, कार्यत्वात् घटवदित्याह— **अपि चेति**। नन्वन्ततो गत्वा

### *भाष्यभावप्रकाशिका*

**विपर्ययेण तु क्रमोऽत उपपद्यते च**। ननु सति प्रलये तत्क्रमश्चिन्तनीयः। स एवासिद्ध इत्यत आह— **त्रयोऽपीति**। ननु महाभूतप्रलयोऽपि क्रमसापेक्ष उत्पत्तिक्रमेणैव वा क्रमवान् तदुत्पत्तिप्रलययोरन्यतरत्वात् तदुत्पत्तिवदित्यनुमानेनावश्यके क्रमे कथमनियम इत्याशङ्क्य पक्षान्तरमाह— **अथवेति**। उपपद्यत इत्यस्य व्याख्यान्तरमाह— **अपि चेति**।

### *न्यायनिर्णयः*

सृष्टिक्रममभिधाय लयक्रममभिधत्ते— **विपर्ययेणेति**। यद्यप्यत्र श्रुतिविप्रतिषेधो न साक्षात् परिह्रियते, तथाप्युत्पत्तिक्रमे निरूपिते लयक्रमो बुद्धिस्थत्वाद् विचार्यत इति प्रासङ्गिकी संगतिरित्यभिप्रेत्याह— **भूतानामिति**। वस्तुतस्तु सर्वप्रलयाधारब्रह्मसमन्वयस्य कारणनाशात् कार्यनाश इति न्यायानुगृहीतसृष्टिक्रमश्रुतिविरोधो निरस्यत इति संगतयः। पूर्वपक्षे भूतलयस्य श्रौतसंनिहित-क्रमलाभादशेषलयाधारब्रह्मसमन्वयस्य न्यायोपेतसृष्टिक्रमविरोधादसिद्धिः। सिद्धान्ते लोकानुरोधिन्याः श्रुतेः श्रुतिसंनिहितादपि लौकिकक्रमस्य संनिहिततरत्वात् तेन तद्बाधकतेत्युक्ते ब्रह्मणि तत्सिद्धिः। 'अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छ' इत्यादौ कार्यलिङ्गकानुमानप्रदर्शनात्, 'यत्प्रयन्ति' इत्यादौ च लयमात्रश्रवणेऽपि क्रमस्याश्रुतत्वात्, आकाङ्क्षायाश्च द्विधाऽपि शान्तेश्चिन्ताप्रकारमेवाभिनयति— **किमनियतेनेति**। सति प्रलये क्रमश्चिन्तनीयः, स एव नास्तीति केचित्, तान् प्रत्याह— **त्रयोऽपीति**। उपक्रममात्रेण पूर्वपक्षमाह— **तत्रेति**। श्रुतोत्पत्तिक्रमादेव नियमे सत्यनियमो न युक्तिमानित्याशङ्क्य पक्षान्तरमाह— **अथवेति**। महाभूतप्रलयोऽपि क्रममपेक्षते, तदुत्पत्तिप्रलययोरन्यतरत्वात्, तदुत्पत्तिवदित्यभिप्रेत्याह— **क्रमाकाङ्क्षिण इति**। तथा चासौ श्रौतसंनिहितक्रमवान् न स्मार्तं व्यवहितं क्रममवलम्बते, तस्य बहिरङ्गत्वादिति भावः। महाभूतानामुत्पत्तिक्रमेण प्रलये क्रमवति सति सर्वप्रलयाधारे ब्रह्मणि समन्वयो न्यायानुगृहीतसृष्टिक्रमश्रुतिविरुद्धो न सिध्यतीत्युपसंहरति— **एवमिति**।

सिद्धान्तसूत्रमवतार्य व्याकरोति— **तत इति**। लोकदृष्टपदार्थबोधाधीना हि श्रुतिः। अतः श्रुतिसंनिहितादपि लौकिकक्रमस्य संनिहिततरत्वात् तेन तद्बाधनं युक्तमिति 'उपपद्यत' इति सूत्रावयवं व्याचष्टे— **तथा हीति**। चकारसूचितमुपपत्त्यन्तरमाह— **अपि चेति**। सत्यपीत्थं लौकिके दर्शने प्रकृते किमायातमित्याशङ्क्य फलपरत्वेनापि सूत्रावयवं योजयति— **अतश्चेति**। पृथिव्यादीनामबादौ

**सती स्थितिकालव्यतिक्रान्तावपोऽपीयात्, आपश्च तेजसो जाताः सत्यस्तेजोऽपीयुः। एवं क्रमेण सूक्ष्मं सूक्ष्मतरं चानन्तरमनन्तरं कारणमपीत्य सर्वं कार्यजातं परमकारणं परमसूक्ष्मं च ब्रह्माप्येतीति वेदितव्यम्। न हि स्वकारणव्यतिक्रमेण कारणकारणे कार्याप्ययो न्याय्यः। स्मृतावप्युत्पत्तिक्रमविपर्ययेणैवाप्ययक्रमस्तत्र तत्र दर्शितः– 'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते। ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते' (म.भा.शा. ३३९-२९) इत्येवमादौ। उत्पत्तिक्रमस्तूत्पत्तावेव श्रुतत्वान्नाप्यये भवितुमर्हति। न चासावयोग्यत्वादप्ययेनाकाङ्क्ष्यते। न हि कार्ये ध्रियमाणे कारणस्याप्ययो युक्तः, कारणाप्यये कार्यस्यावस्थानानुपपत्तेः। कार्याप्यये तु कारणस्यावस्थानं युक्तम्, मृदादिष्वेवं दृष्टत्वात्।।१४।।**

।।इत्यष्टमं विपर्ययाधिकरणम्।।

### *प्रकटार्थविवरणम्*

ब्रह्मण्येव चेत् प्रलयः, तर्हि किं क्रमेणेत्याशङ्क्याह— **न हि स्वकारणेति**। चशब्दात् स्मृतिक्रममाह— **स्मृतावपीति**। ननूत्पत्तौ तावत् श्रौतः[श्रुतः]क्रमः; तं श्रौतं क्रमं सन्निहितं परित्यज्य किमिति व्यवहितः स्मार्तः क्रमोऽङ्गीक्रियत इत्याशङ्क्याह— **उत्पत्तिक्रमस्त्विति**। यच्चोक्तं प्रलयस्य क्रमाकाङ्क्षायां स एव संबध्यत इति, तत्राह— **न चासाविति**। ननु कार्यकारणयोः परस्परप्रतियोगित्वात् कार्याभावे कारणं वा कथं तिष्ठतीत्याशङ्क्याह— **कार्याप्यये त्विति**। इत्यष्टमं विपर्ययाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

नन्वेकावशेषताभावे कथं प्रलय इत्यत आह— **एवं क्रमेणेति**। ननु परंपरया[१]दभ्युपगमादेकत्र प्रलयाभ्युपगमो लघीयानित्यत आह— **न हीति**। लौकिकन्यायात् स्मार्त्तक्रमाच्च श्रौतस्य क्रमस्य सन्निकृष्टत्वादाकाङ्क्षासन्निधिभ्यां स एवोपादेय इत्याशङ्क्य तस्य योग्यताऽभावादनुपादेयत्वमाह— **उत्पत्तिक्रमस्त्विति**। एतेन योग्यत्वोपाधिनोत्पत्तिक्रमेण क्रमवत्त्वानुमानमपि दूषितं द्रष्टव्यम्। आकाङ्क्षाऽपि तत्र नास्तीत्याह— **न चासाविति**। अयं भावः— अयोग्यविषयाभ्यामाकाङ्क्षासन्निधिभ्यां विप्रकृष्टविषये अप्याकाङ्क्षायोग्यत्वे बलवत्तरे योग्यतानिमित्तत्वात् संबन्धस्येति। अयोग्यत्वं दर्शयति— **न हीति**। ननु कार्यकारणयोरभेदे कार्याभावेऽपि कारणवत् कारणाभावेऽपि कार्यं तिष्ठेदित्यत आह— **कार्याप्यय इति**। इत्यष्टमं विपर्ययाधिकरणम्।।

### *न्यायनिर्णयः*

लयश्चेद् ब्रह्मणः सर्वकार्यलयाधारत्वं कथमित्याशङ्क्य तत्तत्कारणात्मके ब्रह्मणि तत्तत्कार्यलयाभ्युपगमात् तत्रैव पर्यवसानमिति मत्वाऽऽह— **एवं क्रमेणेति**। पारम्पर्यं परित्यज्य साक्षाद् ब्रह्मणि सर्वकार्यलयाभ्युपगमो बलीयानित्याशङ्क्याह— **न हीति**। घटादेर्मृत्कार्यस्य परमाणुषु लयानभ्युपगमात्। अन्यथा घटादिनाशे परमाणूनामतीन्द्रियत्वान्न किंचिदुपलभ्येतेति भावः। लौकिकन्यायवशादुत्पत्तिक्रमविपरीतं प्रलयक्रमं प्रदर्श्य तत्रैव स्मृतिं संवादयति— **स्मृतावपीति**। 'वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते। अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयते' इति वाक्यमादिशब्दार्थः। स्मार्तक्रमाल्लौकिकन्यायाच्च श्रौतक्रमस्य संनिकृष्टत्वादाकाङ्क्षासंनिधिभ्यां तस्यैवोपादेयत्वमित्याशङ्क्य योग्यत्वाभावान्नैवमित्याह— **उत्पत्तीति**। आकाङ्क्षाऽपि तत्र नास्तीत्याह— **न चेति**। अयोग्यविषयाभ्यामाकाङ्क्षासंनिधिभ्यां विप्रकृष्टविषये अप्याकाङ्क्षायोग्यत्वे बलवत्तरे संबन्धस्य योग्यतानिमित्तत्वादिति भावः। अयोग्यत्वादित्युक्तं साधयति— **न हीति**। कार्यकारणयोरभेदे कार्याभावे कारणवत्तदभावेऽपि कार्यं स्यादित्याशङ्क्याह— **कार्येति**। तदेवं ब्रह्मणः सर्वप्रलयाधारत्वात् तत्र समन्वयस्य 'कारणनाशात् कार्यनाश' इति न्यायानुगृहीतसृष्टिक्रमश्रुत्या न विरोधोऽस्तीति सिद्धमिति भावः।।१४।। इत्यष्टमं विपर्ययाधिकरणम्।।

---

१. 'तदभ्युपगमात्' इति पाठः स्यात्।

९।।अन्तराविज्ञानाधिकरणम्।।सू. १५।।

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्।।१५।।

**भूतानामुत्पत्तिप्रलयावनुलोमप्रतिलोमक्रमाभ्यां भवत इत्युक्तम्। आत्मादिरुत्पत्तिः, प्रलयश्चात्मान्त इत्यप्युक्तम्। सेन्द्रियस्य तु मनसो बुद्धेश्च सद्भावः प्रसिद्धः श्रुतिस्मृत्योः– 'बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुः' (क.उ. ३।३) इत्यादिलिङ्गेभ्यः। तयोरपि कस्मिंश्चिदन्तराले क्रमेणोत्पत्तिप्रलयावुपसंग्राह्यौ, सर्वस्य वस्तुजातस्य ब्रह्मजत्वाभ्युपगमात्। अपि चाथर्वण उत्पत्तिप्रकरणे भूतानामात्मनश्चान्तराले करणान्यनुक्रम्यन्ते–**

### *शारीरकन्यायसंग्रहः*

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्।।१५।।**

"एतस्माज्जायते प्राणः" इत्यादिपाठक्रमात् "आत्मन आकाशः संभूतः" इत्याद्यर्थक्रमो बलवान्, पाठक्रमस्याप्यर्थक्रमप्रतिपत्त्यर्थत्वात् इति न्यायेन इन्द्रियाद्युत्पत्त्या भूतोत्पत्तिप्रलयक्रमस्याभङ्गो दर्शितः।।

### *प्रकटार्थविवरणम्*

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्**।। वृत्तानुवादं करोति— **भूतानामिति**। किमसौ भूतोत्पत्तिक्रमलयः [लयक्रमः]इन्द्रियोत्पत्तिक्रमेण विरुध्यते, न वा इतीदानीं सन्दिह्यत इत्यध्याहारः। ननु देहप्रदेशातिरिक्तेन्द्रियाभावान्नायं सन्देह इत्याशङ्क्याह— **सेन्द्रियस्य त्विति**। यद्यप्यागमार्थप्रतिपत्तेः प्राक् देहप्रदेशेष्वेवेन्द्रियव्यवहारः, तथाप्यागमप्रामाण्यादतिरिक्तेन्द्रियसद्भावोऽध्यवसेय इत्यर्थः। ननु तथापीन्द्रियाणामाहङ्कारिकत्वान्नास्ति ब्रह्मकार्यभूतोत्पत्तिक्रमस्येन्द्रियोत्पत्तिक्रमविरोधाशङ्केत्यत आह— **तयोरपीति**। इन्द्रियाणामाहङ्कारिकत्वे प्रमाणाभावाद् ब्रह्मजत्वमवश्यं वाच्यम्। तदा च ब्रह्मकार्येष्वेव कस्मिंश्चिदन्तराले तयोर्बुद्धिसेन्द्रियमनसोरुत्पत्तिप्रलयौ स्वीकरणीयौ; ततोऽस्त्येव सन्देह इत्यर्थः। तर्हि कस्मिन्नन्तराले बुद्धिसेन्द्रियमनसोरुत्पत्तिरित्याकाङ्क्षायां

### *भाष्यभावप्रकाशिका*

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्**। पूर्वोदितोत्पत्तिक्रमविरोधद्योतनायोक्तमर्थान्तरमाह— **आत्मादिरिति**। सूत्रे (विज्ञय)विज्ञायते अनेनेति व्युत्पत्त्या करणलयो विज्ञानशब्दो[१] नोच्यते। नन्विन्द्रियसद्भावे तदुत्पत्तिप्रलयक्रमचिन्ता भवति, स एवासिद्ध इत्यत आह— **सेन्द्रियस्येति**। श्रुतिस्मृत्योः प्रसिद्धिरुक्ता। तत्र श्रुतिं दर्शयति— **बुद्धिन्त्विति**। ननु तथापि तदुत्पत्तिप्रलयाभावात् तत्र क्रमचिन्ताऽनुपपन्नेत्यत आह— **सर्वस्य वस्तुजातस्येति**। ननु भूतोत्पत्त्यनन्तरं तदुत्पत्त्यङ्गीकारात्तदुत्पत्तिप्रलयक्रमेण भूतानामुत्पत्त्यादिक्रमदूषणं क्रममिति[२] चेत्? मैवं क्रमाकाङ्क्षायां श्रुत्यन्तरप्रसिद्धक्रमस्योपादानादित्याह— **अपि चाथर्वण इति**।

### *न्यायनिर्णयः*

पूर्वोक्तभूतोत्पत्तिप्रलयक्रमस्य करणसृष्ट्या बाधमाशङ्क्य परिहरति— **अन्तरेति**। भूतोत्पत्तिप्रलयक्रमो विषयः। स किं करणसृष्टिक्रमेण बाध्यते न वेति करणानां भौतिकत्वाभौतिकत्वाभ्यां संदेहे पूर्वपक्षयितुं वृत्तं कीर्तयति— **भूतानामिति**। उक्तोत्पत्तिप्रलयक्रमस्य विरोधद्योतनार्थमुक्तमर्थान्तरमनुद्रवति— **आत्मादिरिति**। अत्र च क्रमवद्भूतोत्पत्तिप्रलयाधारे ब्रह्मणि समन्वयस्य करणसृष्टिश्रुत्या विरोधपरिहारद्वारा दृढीकरणात् पादादिसंगतयः। पूर्वपक्षे करणसर्गश्रुतिविरोधादुक्तसमन्वयासिद्धिः। सिद्धान्ते तदविरोधात् तत्सिद्धिः। देहप्रदेशातिरिक्तेन्द्रियाभावात् कथं यथोक्तः संदेहः स्यादित्याशङ्क्याह— **सेन्द्रियस्येति**। श्रुतिस्मृत्योरुक्ता प्रसिद्धिः। तत्र श्रुतिमुदाहरति— **बुद्धिं त्विति**। 'इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः। मनसस्तु परा बुद्धिः' इत्याद्या स्मृतिरुदाहर्तव्या। करणानां सत्त्वेऽपि तेषामाहंकारिकत्वात् तदुत्पत्तिक्रमेण कुतो भूतोत्पत्त्यादिक्रमस्य विरोधाशङ्केत्याशङ्क्याह— **तयोरिति**। तेषामाहंकारिकत्वे मानाभावाद् ब्रह्मजत्वस्यावश्यकत्वे तत्कार्येष्वेव कस्मिंश्चिदन्तराले बुद्धिसेन्द्रियमनसोरुत्पत्तिलयौ ग्राह्यावित्यर्थः। तथापि भूतोत्पत्त्यनन्तरं तदुत्पत्त्यङ्गीकारतया[३]

---

१-२. अत्र पाठाशुद्धिः। ३. 'तदुत्पत्त्यङ्गीकारात्' इति पाठः स्यात्।

**'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' (मु.उ. २।१।३) इति। तस्मात् पूर्वोक्तोत्पत्तिप्रलयक्रमभङ्गप्रसङ्गो भूतानामिति चेत्? न; अविशेषात्। यदि तावद्भौतिकानि करणानि, ततो भूतोत्पत्तिप्रलयाभ्यामेवैषामुत्पत्तिप्रलयौ भवत इति नैतयोः क्रमान्तरं मृग्यम्। भवति च भौतिकत्वे लिङ्गं करणानाम्– 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' (छा.उ. ६।५।४) इत्येवंजातीयकम्। व्यपदेशोऽपि क्वचिद् भूतानां करणानां च ब्राह्मणपरिव्राजकन्यायेन नेतव्यः। अथ त्वभौतिकानि करणानि, तथापि भूतोत्पत्तिक्रमो न करणैर्विशेष्यते[१], प्रथमं करणान्युत्पद्यन्ते चरमं भूतानि, प्रथमं वा भूतान्युत्पद्यन्ते चरमं करणानीति। आथर्वणे तु समाम्नायक्रममात्रं करणानां भूतानां च।**

### *प्रकटार्थविवरणम्*

पूर्ववाद्याह— **अपि चाथर्वण इति**। सिद्धान्ते सूत्रभागमवतारयति— **नाविशेषादिति**। इन्द्रियाणामुत्पत्तिक्रमस्य भूतोत्पत्तिक्रम-विरुद्धविशेषानवगमान्नास्ति विरोधः। कथम्? तत्रैतद्वाच्यम्— किं भौतिकत्वमङ्गीकृत्य विरुद्धक्रमोऽभिधीयते, किं वा अभौतिकत्वम्? प्रथमे न विरोध इत्याह— **यदि तावदिति**। द्वितीयं दूषयति— **भवति चेति**। अन्नादिभावाभावाभ्यामुपचितत्वापचितत्वे भौतिकत्वे लिङ्गमित्यर्थः। कथं तर्हि पृथगुपदेश इति; अवान्तरभेदापेक्षयेत्याह— **व्यपदेशोऽपीति**। इदानीं प्रौढवादेनाभौतिकत्वमङ्गीकृत्याह— **अथाभौतिकानीति**। तथापि पूर्वोत्तरभावेन विशेषणविशेष्यभावे प्रमाणाभावान्न भूतोत्पत्तिक्रमः करणक्रमेण बाध्यत इत्यर्थः। ननु यथा प्रयाजेषु पाठक्रम एवानुष्ठानक्रमे प्रमाणं तथा ''एतस्माज्जायते प्राणः'' इत्यादिपाठक्रम एव प्रथमं करणान्युपप[न्युत्प]द्यन्त इत्यत्र प्रमाणमित्याशङ्क्याह— **आथर्वणे त्विति**। श्रुत्यर्थाविरुद्धो हि पाठक्रमः क्रमे प्रमाणम्; इह तु विद्यत एवार्थविरोधः,

### *भाष्यभावप्रकाशिका*

नन्वन्नमयश्रुतेर्भौतिकत्वमवगम्यते? नैवम्, 'आपोमयः प्राण' इत्यत्र तद्विकारत्वाभावात् तस्मादद्यः(?) क्रमो वर्णनीय इत्याह— **तस्मात्पूर्वोक्तेति**। किं भौतिकत्वमभ्युपगम्य ब्रूषे, उताभौतिकत्वमिति। आद्ये परिहारमाह— **यदि तावदिति**। अथोत्तरस्तत्राह— **भवति चेति**। ननु भूतविकारार्थत्वं मयटोऽनुपपन्नमापोमयः प्राण इतिवदिति चेत्, न; विभक्ततया कार्यत्वेन कारणापेक्षायामन्नमयं मन इत्यादिश्रवणादपेक्षितकारणत्वकथनाय विकारार्थत्वमेवासति बाधके मयटो युक्तमन्यथाऽनपेक्षितमुक्तं स्यादित्यर्थः। ननु भौतिकत्वे भूतोत्पत्त्यनन्तरं तदुत्पत्तिसिद्धेः किं पृथक् तद्व्यपदेशेनेत्यत आह— **व्यपदेशोऽपीति**। प्रौढवादेनाह— **अथ त्विति**। करणानां भूतानां च संशयः पृथक्पृथगात्मन एवोत्पत्तेरुक्तक्रमो न विशिष्यते न भिद्यत इत्यर्थः। नन्वेषामुत्पत्तौ क्रमाकाङ्क्षायां श्रुत्यन्तर-सिद्धक्रमोऽङ्गीकरणीय इत्यत आह— **आथर्वणे त्विति**।

### *न्यायनिर्णयः*

भूतोत्पत्त्यादिक्रमस्याविरुद्धतेत्याशङ्क्य क्रमाकाङ्क्षायां करणोत्पत्तेः श्रुत्यन्तरसिद्धक्रमसिद्धेर्विरोधोऽस्तीत्याह— **अपि चेति**। अन्नमयश्रुतौ करणानां भौतिकत्वे सिद्धे भूतानन्तर्यं तेषामित्याशङ्क्य 'आपोमयः प्राणः' इत्यत्र तद्विकारत्वाभाववदिहापि तद्विकारत्वाभावात् करणोत्पत्तिश्रुत्या क्रमवद्भूतोत्पत्त्यादिश्रुतेर्विरोधोऽस्तीत्युपसंहरति— **तस्मादिति**। सिद्धान्तमादत्ते— **नेति**। इन्द्रियाणामुत्पत्तिक्रमस्य भूतोत्पत्त्यादिक्रमविरुद्धविशेषासिद्धेर्न विरोधोऽस्तीत्यर्थः। किं भौतिकत्वं करणानामुताभौतिकत्वम्? आद्यं प्रत्याह— **यदीति**। द्वितीयं दूषयति— **भवतीति**। न चापोमय इतिवन्मयटो न विकारार्थता, करणानां विभक्तत्वात् कार्यत्वे कारणापेक्षायामन्नमय-मित्यादिश्रुतेरपेक्षितोक्त्यर्थमसति बाधके मयटो विकारार्थताया युक्तत्वादिति भावः। भौतिकत्वे करणानां भूतानन्तरं तदुत्पत्तेर्न पृथक् तद्व्यपदेशः स्यादित्याशङ्क्याह— **व्यपदेशोऽपीति**। क्वचिदित्याथर्वणं वाक्यमुक्तम्। प्रौढवादेन तेषामभौतिकत्वमुपेत्यापि ब्रवीति— **अथ त्विति**। अभौतिकत्वेऽपि पूर्वोत्तरत्वेन विशेषणविशेष्यत्वे मानाभावाद् भूतोत्पत्तिक्रमो न करणक्रमेण विरुध्यत इत्यर्थः। ननु यथा 'समिधो यजति' इत्यादौ पाठक्रम एवानुष्ठानक्रमे मानं तथैतस्मादित्यादिपाठक्रम एवादौ करणान्युत्पद्यन्ते पश्चाद्भूतानीत्यत्र मानम्, नेत्याह— **आथर्वणे[त्वि]ति**। तत्र तेषां [२]क्रममात्रमाम्नायोत्पत्तिरुक्तेति योजना। श्रुत्यर्थाविरुद्धो हि

---

१. 'विशिष्यते' इति पा.। २. भाष्ये 'समाम्नाय' इति ल्यबन्तं पदमभिप्रेत्यैवं योजनोक्तेति भाति।

**न तत्रोत्पत्तिक्रम उच्यते। तथाऽन्यत्रापि पृथगेव भूतक्रमात् करणक्रम आम्नायते– 'प्रजापतिर्वा इदमग्र आसीत् स आत्मानमैक्षत स मनोऽसृजत तन्मन एवासीत् तदात्मानमैक्षत तद्वाचमसृजत' इत्यादिना। तस्मान्नास्ति भूतोत्पत्तिक्रमस्य भङ्गः।।१५।।**

।।इति नवममन्तराविज्ञानाधिकरणम्।।

१०।।चराचरव्यपाश्रयाधिकरणम्।।सू. १६।।

## चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्।।१६।।

### *शारीरकन्यायसंग्रहः*

।।चराचरव्यपाश्रयाधिकरणम्।।

**चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तः तद्भावभावित्वात्।।१६।।**

जातकर्ममरणेष्टी चेतनसंस्कारकर्मणी, पुरुषसंस्कारेषु पाठात् इति चेतनजन्ममरणोद्देशेन संस्कारकर्मविधानान्यथानुपपत्त्या चेतनजन्ममरणे प्राप्ते तत्संस्कारकर्मविधेश्च जन्मान्तरीयफलसाधनकर्मविषयतया उद्देश्योपादेययोः परस्परविरोधे प्राप्ते अङ्गुष्ठाधिकरणन्यायेन उपादेयजन्मान्तरीयफलसाधनविधिविरोधिनोः उद्देश्यचेतनजन्ममरणयोः देहोपाधित्वेनोपचरितत्वमुपादायोपादेयजन्मान्तरीयफलसाधनकर्मसंबन्ध-योग्यो जन्ममरणादिशून्य आत्मा दर्शितः।।

### *प्रकटार्थविवरणम्*

करणानां भौतिकत्वेन भूतोत्पत्तिं विनोत्पत्त्यसंभवात्; अतो यथा ''अग्निहोत्रं जुहोति'' ''यवागूं पचति'' इत्यर्थात् पूर्वं पाकः, पश्चाद्धोमः, तथाऽत्रापीत्यर्थः। इतश्च न भूतोत्पत्तिक्रमस्य भङ्ग इत्याह— **तथाऽन्यत्रापीति**। इति नवममन्तराविज्ञानाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

आद्यायः 'एतस्माज्जायत' इत्यादि पाठक्रमात् 'आत्मन आकाशस्संभूत' इत्याद्यर्थक्रमो बलवान् पाठक्रमस्याप्यर्थक्रम-प्रतिपत्त्यर्थत्वादिति। ननु करणानां भूतानाञ्चैककार्यत्वे क्रमाकाङ्क्षायां पूर्वकार्यविशिष्टस्यैवोत्तरकार्यजनकत्वात् करणानां प्रथमोत्पत्तिपक्षे भूतक्रमविशेषकत्वं युज्यत इति; नैवं भिन्नकारणत्वादित्याह— **तथाऽन्यत्रापीति**। प्रजापतिः सूत्रात्मा। अथवा प्रजापतिरीश्वरः। अस्मिन् पक्षे पूर्वोक्तपृथक्समयोत्पत्तौ प्रमाणं दर्शितमिति द्रष्टव्यम्। इति नवममन्तराविज्ञानाधिकरणम्।।

### *न्यायनिर्णयः*

पाठोऽनुष्ठाने मानम्, इह तु 'आत्मन आकाशः' इत्यादिश्रुत्यर्थविरोधादग्निहोत्रहोमयवागूपाकवत्पाठक्रमभङ्गेन भूतानन्तरं करणोत्पत्तिरित्यर्थः। करणानां भूतानां चैककार्यत्वे क्रमाकाङ्क्षायां पूर्वविशिष्टस्यैवोत्तरजनकत्वात् करणप्राथम्यमित्याशङ्क्य भिन्नपरिकरत्वान्मैवमित्याह— **तथेति**। प्रजापतिः सर्वभूतसूक्ष्मात्मकः सूत्रात्मा। स्थूलं कार्यमिदमुच्यते। तदुत्पत्तिप्राक्कालोऽग्रशब्दार्थः। अत्र प्रजापतिसृष्टिवचनाद् भूतसृष्टिप्राथम्यं, ततश्च मनआदिसृष्टिरुक्तेति करणसर्गस्य पाश्चात्त्यमिति विवेकः। भूतकरणोत्पत्त्योरेवं सिद्धे क्रमे क्रमवद्भूतोत्पत्तिलयाधारे ब्रह्मणि समन्वयस्य करणोत्पत्तिश्रुत्या विरोधो नेत्युपसंहरति— **तस्मादिति**।।१५।। इति नवममन्तराविज्ञानाधिकरणम्।।

पूर्वाधिकरणेषु तत्पदार्थकारणत्वसिद्ध्यै भूतोत्पत्तिश्रुतिविरोधो निरस्तः। सम्प्रत्या पादसमाप्तेस्त्वंपदार्थशुद्ध्यै जीवविषयश्रुतिविरोधो निरस्यते। तत्र करणोत्पत्तिश्चेन्न भूतोत्पत्तिक्रममन्यथयति, तर्हि जीवोत्पत्तिस्तदन्यथयेदित्याशङ्क्य सैव नास्तीत्याह— **चराचरेति**। इह जीवजनिमृतिनिमित्तवैश्वानरीयेष्ट्यादिशास्त्राणां तन्नित्यत्वशास्त्राणां चाविरोधद्वारा नित्यसिद्धप्रत्यग्ब्रह्मणि समन्वयदृढीकरणात् पादादिसंगतयः। पूर्वपक्षे शास्त्रद्वयविरोधात् तादृग्ब्रह्मसमन्वयासिद्धिः। सिद्धान्ते तदविरोधात् तत्सिद्धिः। जीवो विषयः, तस्य किं

**स्तो जीवस्याप्युत्पत्तिप्रलयौ, 'जातो देवदत्तो, मृतो देवदत्त' इत्येवंजातीयकाल्लौकिकव्यपदेशात्, जातकर्मादिसंस्कारविधानाच्चेति स्यात् कस्यचिद् भ्रान्तिः, तामपनुदामः। न जीवस्योत्पत्तिप्रलयौ स्तः, शास्त्रफलसंबन्धोपपत्तेः। शरीरानुविनाशिनि हि जीवे शरीरान्तरगतेष्टानिष्टप्राप्तिपरिहारार्थौ विधिप्रतिषेधावनर्थकौ स्याताम्। श्रूयते च– 'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' (छा.उ. ६।११।३) इति। ननु लौकिको जन्ममरणव्यपदेशो जीवस्य दर्शितः। सत्यं दर्शितः। भाक्तस्त्वेष जीवस्य जन्ममरणव्यपदेशः। किमाश्रयः पुनरयं मुख्यो यदपेक्षया भाक्त इति? उच्यते– चराचरव्यपाश्रयः। स्थावरजङ्गमशरीरविषयौ जन्ममरणशब्दौ। स्थावरजङ्गमानि हि भूतानि जायन्ते च म्रियन्ते च। अतस्तद्विषयौ जन्ममरणशब्दौ मुख्यौ तत्स्थे जीवात्मन्युपचर्येते, तद्भावभावित्वात्। शरीरप्रादुर्भावतिरोभावयोर्हि सतोर्जन्ममरणशब्दौ भवतो, नासतोः।**

### *प्रकटार्थविवरणम्*

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्**।। एवं तावद् भूतोत्पत्तिक्रमस्याविप्रतिषेधोपपादनेन जगज्जन्मादिकारणतत्पदार्थसमर्पकसमन्वयस्य विरोधं परिहृत्येदानीं वाक्यार्थान्वयित्वंपदार्थसमर्पकस्याविरोधं दर्शयितुमुपक्रमते। तत्रापि प्रथममज्ञामृतजीवसमर्पकस्य लौकिकजन्ममरणप्रत्ययविरोधो नास्तीति दर्शयितुं पूर्वपक्षमाह— **स्तो जीवस्यापीति**। जीवजन्मनिमित्तं हि जातकर्मादिसंस्कारविधानम्; तदभावे निमित्ताभावात् तदपि न स्यात्, अस्ति च, इत्याह— **जातकर्मादीति**। उत्सूत्रमेव तावत् सिद्धान्तमाह— **न जीवस्येति**। जीवस्य जन्ममरणाभाव एव शास्त्रीयस्वर्गादिफलसंबन्धोपपत्तिः, तदन्यथानुपपत्त्या न जीवस्य जन्ममरणे स्त इत्यर्थः। न केवलमनुपपत्तिलभ्यमेवामरणं किन्तु श्रुतिसिद्धमपीत्याह— **श्रूयते चेति**। जीवेनापेतं परित्यक्तम्; वाव किल इत्यवधारणार्थौ निपातौ; जीवो न म्रियत एवेत्यर्थः। पूर्वपक्षबीजमुद्भाव्य तन्निराकरणे सूत्रं योजयति— **ननु लौकिक**

### *भाष्यभावप्रकाशिका*

**चराचरव्यपाश्रयस्तु स्यादित्यादि**। न च शरीरविषयोऽयं व्यपदेशश्चेतनोद्देशेन जातकर्मादिसंस्कारविधानादित्याह— **जातकर्मेति**। न चौपाधिकीयमुत्पत्तिरुपाधिपरामर्शाभावात्, जातकर्ममरणेष्टी शरीरसंस्कार इति चेन्नैवं पुरुषसंस्कारेषु पाठात्। अतो जीवजन्ममरणोद्देशेन संस्कारकर्मविधानात् तस्योत्पत्तिसिद्धिः। ननु स्वर्गमोक्षशास्त्रयोरनुपपत्त्या जीवस्य नित्यत्वमिति चेन्न; जात इत्यादिव्यपदेशविरोधादौपचारिकं तदित्यर्थः। **अनर्थकौ स्यातामिति**। उद्देश्योपादेययोः परस्परविरोधे सत्युपादेयजन्मान्तरफलसाधनविधिविरोधिनोरुद्देश्यचेतनजन्ममरणयोर्देहोपाधित्वेनौपचारिकत्वं युक्तमिति जन्मान्तरफलसाधनकर्मसंबन्धयोग्यो जन्ममरणादिशून्य आत्मा सिद्ध इत्यर्थः। श्रुत्यर्थापत्या जीवस्य नित्यत्वमुक्तम्, इदानीं साक्षाच्छ्रुतिमेव दर्शयति— **श्रूयते चेति**। कुत्र तर्हि मुख्य इति चोदयति— **किमाश्रय इति**।

### *न्यायनिर्णयः*

देहोत्पादनाशयोरनौपाधिकमुत्पत्त्यादि न वेति श्रुतिविप्रतिपत्तेः संदेहे पूर्वपक्षमाह— **स्त इति**। देहगामित्वादयं व्यपदेशो न जीवजन्मादि साधयेदित्याशङ्क्य चेतनोद्देशेन जातकर्मादिविधानादयमपि व्यपदेशो न देहमात्रगामीत्याह— **जातेति**। न चोपाध्यपरामर्शादौपाधिकौ तस्य जन्मनाशौ, नापि देहस्य संस्कारविधिः, पुरुषविषयत्वेन प्रसिद्धत्वात्, अतो जीवस्यानौपाधिकोत्पत्तिनाशसिद्धेरजामृतप्रत्यग्ब्रह्मसमन्वयासिद्धिरित्याह— **इति स्यादिति**। उत्सूत्रं सिद्धान्तमाह— **तामिति**। उपपत्तिमेव दर्शयति— **शरीरेति**। उद्देश्योपादेययोर्मिथो विरोधे सत्युपादेयजन्मान्तरफलसाधनविधिविरोधिनोरुद्देश्यचेतनजन्ममरणयोर्देहोपाधित्वेनोपचरितत्वाज्जन्मान्तरसाधनकर्मसंबन्धयोग्यो जन्ममृतिरहितः सन्नात्मा सिध्यतीत्यर्थः। आत्मनो जन्माद्यभाव एव शास्त्रीयस्वर्गादिसंबन्धसिद्धिस्तदन्यथानुपपत्त्या नित्यत्वं तस्येत्युक्तम्। इदानीं श्रुतिसिद्धं चैतदित्याह— **श्रूयते चेति**। जीवेनापेतं त्यक्तम्। वाव किलेत्यवधारणार्थौ निपातौ। जीवो न म्रियत एवेत्यर्थः। पूर्वपक्षबीजमनुभाषते— **नन्विति**। तदुत्तरत्वेन सूत्रं पातयितुं योजनिकामाह— **सत्यमिति**। भाक्तो व्यपदेशो मुख्यापेक्षीति मत्वा पृच्छति— **किमिति**। तत्र सूत्रमवतार्य व्याकरोति— **उच्यत इति**। तयोस्तद्विषयत्वेन मुख्यत्वे हेतुमाह— **स्थावरेति**। उपचारे कारणमाह— **तदिति**। देहगामित्वेन जन्मादिशब्दस्य मुख्यत्वे सौत्रं हेतुमादाय व्याचष्टे— **तदिति**। देहयोगमनपेक्ष्य साक्षादेव जीवगतौ जन्मनाशशब्दौ किं न स्याताम्, तत्राह— **न हीति**। न केवलमन्वयव्यति-

**न हि शरीरसंबन्धादन्यत्र जीवो जातो मृतो वा केनचिल्लक्ष्यते। 'स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः स उत्क्रामन् म्रियमाणः' (बृ.उ. ४।३।८) इति च शरीरसंयोगवियोगनिमित्तावेव जन्ममरणशब्दौ दर्शयति। जातकर्मादिविधानमपि देहप्रादुर्भावापेक्षमेव द्रष्टव्यम्। अभावाज्जीवप्रादुर्भावस्य। जीवस्य परस्मादात्मन उत्पत्तिर्वियदादीनामिवास्ति, नास्ति वेत्येतदुत्तरेण सूत्रेण वक्ष्यति। देहाश्रयौ तावज्जीवस्य स्थूलावुत्पत्तिप्रलयौ न स्त इत्येतदनेन सूत्रेणावोचत्।।१६।।**

।।इति दशमं चराचरव्यपाश्रयाधिकरणम्।।

*शारीरकन्यायसंग्रहः*

।।आत्माधिकरणम्।।

**नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः।।१७।।**

"सर्व एत आत्मानो व्युच्चरन्ति" इति श्रुतिः, "सहस्रशः प्रभवन्ते सरूपाः" इत्यादिसमानरूपसृष्टिदृष्टान्तः, सर्वविज्ञानप्रतिज्ञा, ब्रह्मविरुद्धस्वलक्षणत्वादीनि जीवकार्यत्वे लिङ्गानीति श्रुतिलिङ्गैः जीवस्य कार्यत्वमवगतम्। "न जायते म्रियते वा" "तत् सृष्ट्वा। तदेवानु प्राविशत्" इत्यादिश्रुतिलिङ्गैश्चाकार्यत्वमवगतम्। एवं विप्रतिपत्तौ, यद्यपि तत्त्वमस्यादिप्रधानवाक्यं खण्डो गौरित्यादिवाक्यवत् नित्यानित्ययोः तादात्म्ये न विरुध्यते, तथापि जीवस्य ब्रह्मात्मभावं प्रतिपाद्य फलावस्थायामपि 'ब्रह्म वेद ब्रह्मैव भवति' इति ब्रह्मात्मना नित्यवदवस्थानं प्रतिपादयता प्रधानवाक्येन फलपर्यन्तेनाक्षिप्तं जीवस्य नित्यत्वमिति प्रधानवाक्याक्षिप्तनित्यत्व-प्रतिपादकावान्तरवाक्यानुरोधेन प्रधानवाक्यविरुद्धकार्यत्वप्रतिपादकावान्तरवाक्यानामुपचरितार्थत्वं युक्तम्, दौर्बल्यात् इति न्यायेन उत्पत्तिवाक्यानामौपाधिकोत्पत्तिविषयत्वमुपादाय जीवस्य नित्यत्वमेव दर्शितम्।

*प्रकटार्थविवरणम्*

**इत्यादिना**। न केवलमन्वयव्यतिरेकसिद्ध एवायमर्थः, किन्तु श्रुतिसिद्धोऽपीत्याह— **स वा अयं पुरुष इति**। शरीरं स्वकर्मोपार्जितं भोगायतनमभिसंपद्यमानो जायमान उच्यते। भोगारम्भकादृष्टक्षये चोत्क्रामन् म्रियमाण उच्यते, न तु जन्मविनाशाभिप्रायेणेत्यर्थः। यच्चोक्तं जातकर्मादिविधानं तदपि न जीवजन्मापेक्षम्, किन्तु देहजन्मापेक्षमेवेत्याह— **जातकर्मादीति**। पूर्वोत्तराधिकरणयोः अर्थविशेषाभिधानेन पौनरुक्त्यं परिहरति— **जीवस्य परस्मादिति**। इति दशमं चराचरव्यपाश्रयाधिकरणम्।।

*भाष्यभावप्रकाशिका*

उपचारे कारणमाह— **तत्स्थ इति**। मुख्यं किं न स्यादित्यत आह— **न हि शरीरेति**। श्रुतिरेतत् साक्षाद् दर्शयतीत्याह— **स वा अयमिति**। पूर्वोत्तराधिकरणयोः पौनरुक्त्यमाशङ्क्य परिहरति— **जीवस्येति**। अथवा शरीरोत्पाद उत्पत्त्यभावमात्रकथने नालं विभक्ततयाऽऽकाशवदुत्पत्तिमत्त्वाशङ्कापरिहारोऽपि वक्तव्य इत्यत आह— **जीवस्येति**। इति दशमं चराचरव्यपाश्रयाधिकरणम्।।

*न्यायनिर्णयः*

रेकाभ्यामयमर्थोऽवगम्यते किंतु श्रुत्याऽपीत्याह— **स वा इति**। कथं नित्यस्य जायमानत्वं, तत्राह— **शरीरमिति**। कथं म्रियमाणत्वम्, तत्राह— **उत्क्रामन्निति**। श्रुतेस्तात्पर्यमाह— **शरीरेति**। यत्तु जातकर्मादिविधानाज्जीवस्यानौपाधिकौ जन्मनाशाविति, तत्राह— **जातेति**। पूर्वोत्तराधिकरणयोरेकार्थतया पौनरुक्त्यमाशङ्क्यार्थभेदमाह— **जीवस्येति**। तदेवमात्मनो देहोत्पत्त्यादावनौपाधि-कोत्पत्त्याद्यभावाज्जातेष्ट्यादिशास्त्राणामौपाधिकतद्विषयत्वादात्मनित्यत्वशास्त्राणां मुख्यार्थत्वादनाद्यनन्तप्रत्यग्ब्रह्मसमन्वयसिद्धिरिति भावः।।१६।। इति दशमं चराचरव्यपाश्रयाधिकरणम्।।

११।।आत्माधिकरणम्।।सू. १७।।

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः।।१७।।

**अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसंबन्धी। स किं व्योमादिवदुत्पद्यते ब्रह्मणः, आहोस्विद् ब्रह्मवदेव नोत्पद्यत इति श्रुतिविप्रतिपत्तेर्विशयः। कासुचिच्छ्रुतिष्वग्निविस्फुलिङ्गादिनिदर्शनैर्जीवात्मनः परस्माद् ब्रह्मण उत्पत्तिराम्नायते, कासुचित्त्वविकृतस्यैव परस्य ब्रह्मणः कार्यप्रवेशेन जीवभावो विज्ञायते, न चोत्पत्तिराम्नायत इति। तत्र प्राप्तं तावदुत्पद्यते जीव इति। कुतः? प्रतिज्ञानुपरोधादेव। 'एकस्मिन् विदिते सर्वमिदं विदितम्' इतीयं प्रतिज्ञा सर्वस्य वस्तुजातस्य ब्रह्मप्रभवत्वे सति नोपरुध्येत। तत्त्वान्तरत्वे तु जीवस्य प्रतिज्ञेयमुपरुध्येत। न चाविकृतः परमात्मैव जीव इति शक्यते विज्ञातुम्, लक्षणभेदात्। अपहतपाप्मत्वादिधर्मको**

### *प्रकटार्थविवरणम्*

**नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः**।। विषयं प्रदर्श्य सबीजं संशयमाह— **अस्त्यात्मेत्यादिना**।। पूर्वपक्षमाह— **तत्र प्राप्तं तावदिति**। वियदादीनां हि ब्रह्मप्रभवत्वं प्रतिज्ञानुपरोधात् साधितम्; तेनैव न्यायेन जीवस्यापि ब्रह्मप्रभवत्वमित्यर्थः। ननु प्रतिज्ञानुपरोधो जीवस्य ब्रह्मत्वेऽपि घटत एवेत्याशङ्क्याह— **न चाविकृत इति**। इतश्च न जीवो ब्रह्म, किन्तु विकार इत्याह— **विभागाच्चास्येति**।

### *भाष्यभावप्रकाशिका*

**नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः**। 'असंभवस्तु सत' इति परमात्मनः उत्पत्त्यभावस्य दर्शितत्वात् तद्व्यतिरिक्तस्य चात्मनोऽभावात् पुनः किमधिकरणेनेत्यत आह— **जीवाख्य इति**। ननु तयोरेकत्वान्नारब्धव्यमित्यत आह— **शरीरेति**। शरीराद्युपलक्षितसाक्षिविषयमित्यर्थः। मा भूतां मुख्यौ शरीरोदयनाशाभ्यामुत्पत्तिविनाशौ, तथाप्याकाशादिवन्महासर्गप्रलययोस्तौ स्यातामिति संशयः स्यादित्याह— **स किमिति**। ननु पूर्वाधिकरणे स्वर्गबन्धमोक्षसंबन्धशास्त्रान्यथानुपपत्त्या नित्यत्वे सिद्धे कथमाशङ्कते[के]त्यत आह— **श्रुतिविप्रतिपत्तेरिति**। विप्रतिपत्तिमाह— **कासुचिदिति**। नन्वस्मिन्नपि वाक्ये जन्मावगम्यत इत्यत्राह— **न चोत्पत्तिरिति**।

पूर्वपक्षयति— **तत्रेति**। नन्वकार्यत्वेऽपि प्रतिज्ञा नोपरुध्यन्ततश्चेत् [ ध्यते चेत् ] किं कार्यत्वेनेति चेत् तर्हि तत्वान्तरत्वमभ्युपगच्छसि किं वा तयोरेकत्वम्? तत्राद्यो न युक्त इत्याह— **तत्त्वान्तरत्वे इति**। उत्तरपक्षं दूषयति— **न चेति**। लक्षणभेदमुपपादयति— **अपहतपाप्मत्वादीति**। ननु नित्यत्वश्रुतिविरोधादनित्यत्वमयुक्तमिति चेन्नानित्यत्वश्रुतिविरोधान्नित्यश्रुतीनामुपरिचरितार्थतोपपत्तेः। ननु तत्त्वमस्यादिप्रधानवाक्यापेक्षितार्थप्रतिपादकत्वान्नित्यत्वश्रुतीनामितरश्रुतिविरोधान्नोपचरितार्थत्वमिति चेन्न। नित्यानित्ययोरपि कार्यकारण-

### *न्यायनिर्णयः*

देहोत्पत्तिनाशयोरात्मोत्पत्तिनाशौ निरस्य कल्पाद्यन्तयोर्जन्मनाशौ तस्य निरस्यति— **नात्मेति**। अधिकरणविषयमाह— **अस्तीति**। 'असंभवस्तु' इत्यत्र ब्रह्मजन्मनिषेधात् तदभिन्नजीवजन्माशङ्का निरवकाशेत्याशङ्क्याह— **जीवेति**। शरीरादेरेव सप्राणस्य जीवत्वमिति प्राकृताः, तान् प्रत्याह— **शरीरेति**। 'कर्माध्यक्षः' 'साक्षी' इत्यादिश्रुतेरीश्वरत्वादस्य कुतो जीवत्वम्, तत्रोक्तम्— **कर्मेति**। विषयं विविच्य सहेतुं संशयमाह— **स इति**। श्रुतिविप्रतिपत्तिं विशदयति— **कासुचिदिति**। 'यथा सुदीप्तात्पावकात्' इत्याद्या जीवोत्पत्तिवादिन्यः श्रुतयः। **कासुचिदिति**। 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्याद्यास्वित्यर्थः। प्रवेशवाक्येऽपि जन्मधीरस्तीत्याशङ्क्याह— **न चेति**। श्रुतिविप्रतिपत्त्या संशयमुक्त्वा पूर्वपक्षयति— **तत्रेति**। अत्र चोक्तश्रुतिविप्रतिपत्तिनिरासेन समन्वयदृढीकरणात् पादादिसंगतयः। पूर्वपक्षे श्रुतीनां विप्रतिपत्तेरनेकवाक्यत्वेन विरोधादप्रामाण्ये समन्वयासिद्धिः। सिद्धान्ते श्रुतीनामविप्रतिपत्तेरेकवाक्यत्वादविरोधे नित्ये प्रत्यग्ब्रह्मणि समन्वयसिद्धिः। जन्मप्रयोजकजाड्यविशेषत्वविरहान्नोत्पत्तिरित्याह— **कुत इति**। आत्मनस्तद्विरहे विवदमानो वियदुत्पत्तिन्यायेन प्रत्याह— **प्रतिज्ञेति**। तदनुपरोधं साधयति— **एकस्मिन्निति**। अकार्यत्वेऽपि प्रतिज्ञासिद्धिश्चेत्किं तत्कार्यत्वेनेत्याशङ्क्य तस्य परस्माद्भिन्नत्वमभिन्नत्वं वेति विकल्प्याद्यं दूषयति— **तत्त्वान्तरत्वे त्विति**। द्वितीयं निरस्यति— **न चेति**। लक्षणभेदं साधयति— **अपहतेति**। नित्यत्वश्रुतिविरोधमाशङ्क्यानुमानानुगृहीतानित्यत्वश्रुतिविरोधात्

**हि परमात्मा, तद्विपरीतो हि जीवः। विभागाच्चास्य विकारत्वसिद्धिः। यावान् ह्याकाशादिः प्रविभक्तः स सर्वो विकारः, तस्य चाकाशादेरुत्पत्तिः समधिगता। जीवात्माऽपि पुण्यापुण्यकर्मा सुखदुःखयुक् प्रतिशरीरं प्रविभक्त इति तस्यापि प्रपञ्चोत्पत्त्यवसर उत्पत्तिर्भवितुमर्हति। अपि च 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः' इति प्राणादेर्भोग्यजातस्य सृष्टिं शिष्ट्वा 'सर्व एत आत्मानो व्युच्चरन्ति' (बृ.उ.मा. २।१।२३) इति भोक्तृणामात्मनां पृथक्सृष्टिं शास्ति। 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' (मु.उ. २।१।१) इति च जीवात्मनामुत्पत्तिप्रलयावुच्येते, सरूपवचनात्; जीवात्मानो हि परमात्मना सरूपा भवन्ति, चैतन्ययोगात्। न च क्वचिदश्रवणमन्यत्र श्रुतं वारयितुमर्हति। श्रुत्यन्तरगतस्याप्यविरुद्धस्याधिकस्यार्थस्य सर्वत्रोपसंहर्तव्यत्वात्। प्रवेशश्रुतिरप्येवं सति विकारभावापत्त्यैव व्याख्यातव्या, 'तदात्मानं स्वयमकुरुत' इत्यादिवत्। तस्मादुत्पद्यते जीव इति।**

### *प्रकटार्थविवरणम्*

न केवलं युक्तितो जीवस्य विकारित्वम्, श्रुतितोऽपीत्याह— **अपि च यथाऽग्नेरिति**। नन्वक्षराद् ब्रह्मणो भावाः पदार्थाः जायन्त इत्येतावच्छ्रूयते, न जीवानामुत्पत्तिप्रलयावित्याशङ्क्याह— **सरूपवचनादिति**। सरूपाः सदृशाः जायन्त इति वचनात् चेतनत्वेन च जीवानां ब्रह्मणा सारूप्यात् जीवानामेव तत्रोत्पत्तिप्रलयावुक्तावित्यर्थः। ननु सर्वत्र सृष्टिप्रकरणे जीवानामुत्पत्त्यश्रवणात् नास्त्युत्पत्तिरित्याशङ्क्याह— **न च क्वचिदिति**। कथं तर्हि ब्रह्मण एव प्रवेशश्रवणमवकल्पत इत्याशङ्क्याह— **प्रवेशश्रुतिरपीति**।

### *भाष्यभावप्रकाशिका*

योर्मृद्घट इतिवत् तादात्म्यनिर्देशसंभवान्महावाक्याविरोधात्। ननु तथापि कथं निर्णय इति चेदनुमाद्यनुगृहीतानित्यत्वश्रुतिविरोधान्नित्यत्वश्रुतीनामौपचारिकत्वमाह— **विभागाच्चास्येति** विभक्तत्वमसिद्धमित्याशङ्क्याह— **जीवात्माऽपीति**। श्रुतिमाह— **अपि चेति**। ननु जीवस्य मुख्योत्पत्तिर्न विवक्ष्यते इति, नैवं, प्राणादीनां मुख्योत्पत्त्यवगमात् तस्याप्युत्पत्तिरवगम्यत इत्याह— **सृष्टिं शिष्ट्वेति**। किं चौपाधिकं जन्म चेदुपाधेरेव जन्म वक्तव्यम् नोभयोरित्याह— **पृथक् सृष्टिमिति**। नन्वत्र भावानामेवोत्पत्तिरुक्ता न जीवानामिति। अत्राह— **सरूपेति**। नन्वितरत्रापि सत्त्वेन सारूप्यमस्त्येवेत्यत्राह— **जीवात्मान इति**। ननु भूतोत्पत्तिप्रकरणे जीवस्योत्पत्त्य-श्रवणादयुक्तमेतदित्यत आह— **न चेति**।

### *न्यायनिर्णयः*

तासामुपचरितार्थतेति मत्वाऽऽह— **विभागाच्चेति**। तत्त्वमस्यादिवाक्यापेक्षितार्थवेदकत्वान्नित्यत्वश्रुतीनां नोपचरितार्थतेत्याशङ्क्य नित्यानित्ययोरपि कार्यकारणयोर्मृद्घटवत्तादात्म्यसंभवादविरुद्धं महावाक्यमित्यभिप्रेत्यानित्यत्वश्रुत्यनुग्राहकानुमानाङ्गव्याप्तिमाह— **यावानिति**। आकाशादेर्विभक्तत्वेऽपि विकारत्वासिद्धेरसिद्धा व्याप्तिरित्याशङ्क्याह— **तस्येति**। व्याप्तस्य हेतोः पक्षधर्मतामाह— **जीवेति**। प्रतिदेहमात्मविभागे कर्मतत्फलव्यवस्थानुपपत्तिं प्रमाणयितुं विशेषेण व्याप्तिं पक्षधर्मतां चोक्त्वाऽनुमानमाह— **तस्येति**। यदनुग्राहकमनुमानमुक्तं तां श्रुतिमाह— **अपि चेति**। जीवस्य मुख्योत्पत्तिरत्र नेष्टेत्याशङ्क्य प्राणादीनां तथोत्पत्तिदृष्टेः समभिव्याहाराज्जीवस्यापि तादृश्येव सेति मत्वाऽऽह— **प्राणादेरिति**। किंचौपाधिकं जन्म चेदुपाधेरेव तद्वाच्यं नोभयोरित्याशयेनाह— **सर्व एत इति**। जन्ममात्रार्थां श्रुतिमुक्त्वा जन्मनाशार्थं श्रुत्यन्तरमाह— **यथेति**। भावानामेवोत्पत्तिलयावत्रोक्तौ न जीवानामित्याशङ्क्याह— **सरूपेति**। भावशब्दो जीववाचीति शेषः। अन्यत्रापि सत्त्वेन सारूप्यमाशङ्क्याह— **जीवेति**। भूतोत्पत्त्यधिकारे जीवोत्पत्तेरश्रवणान्न तदुत्पत्तिरित्याशङ्क्याह— **न चेति**। तत्र तार्तीयन्यायेन हेतुमाह— **श्रुत्यन्तरेति**। जीवोत्पत्तौ परस्यैव कथं प्रवेशश्रवणमित्याशङ्क्याह— **प्रवेशेति**। यथा मृदादि स्वविकारे घटादौ चूर्णादिविकारान्तरेण प्रविशति तथा ब्रह्म शरीरं सृष्ट्वा जीवाख्यविकारेण प्रविष्टमित्यर्थः। ब्रह्मणो विकारोत्पत्तौ दृष्टान्तमाह— **तदिति**। अनुमानानुगृहीतश्रुतिफलमाह— **तस्मादिति**।

**एवं प्राप्ते ब्रूमः– नात्मा जीव उत्पद्यत इति। कस्मात्? अश्रुतेः। न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति भूयःसु प्रदेशेषु। ननु क्वचिदश्रवणमन्यत्र श्रुतं न वारयतीत्युक्तम्। सत्यमुक्तम्। उत्पत्तिरेव त्वस्य न संभवतीति वदामः। कस्मात्? नित्यत्वाच्च ताभ्यः। चशब्दादजत्वादिभ्यश्च। नित्यत्वं ह्यस्य श्रुतिभ्योऽवगम्यते; तथाऽजत्वमविकारित्वमविकृतस्यैव ब्रह्मणो जीवात्मनाऽवस्थानं ब्रह्मात्मना चेति। न चैवंरूपस्योत्पत्तिरुपपद्यते। ताः काः श्रुतयः? 'न जीवो म्रियते' (छा.उ. ६।११।३), 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ.उ. ४।४।२५), 'न जायते म्रियते वा विपश्चित्' (क.उ. २।१८), 'अजो नित्यः शाश्वतोऽयं पुराणः' (क.उ. २।१८), 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै.उ. २।६।१), 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा.उ. ६।३।२), 'स एष इह प्रविष्ट आ नखाग्रेभ्यः' (बृ.उ. १।४।७), 'तत्त्वमसि' (छा.उ. ६।८।७), 'अहं ब्रह्मास्मि' (बृ.उ. १।४।१०), 'अयमात्मा ब्रह्म सर्वानुभूः' (बृ.उ. २५।१९) इत्येवमाद्या नित्यत्ववादिन्यः सत्यो जीवस्योत्पत्तिं प्रतिबध्नन्ति। ननु प्रविभक्तत्वाद्विकारो विकारत्वाच्चोत्पद्यत इत्युक्तम्। अत्रोच्यते– नास्य प्रविभागः स्वतोऽस्ति, 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' (श्वे.उ. ६।११) इति श्रुतेः। बुद्ध्याद्युपाधिनिमित्तं त्वस्य प्रविभागप्रतिभानमाकाशस्येव घटादिसंबन्धनिमित्तम्। तथा च शास्त्रम्– 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' (बृ.उ. ४।४।५) इत्येवमादि ब्रह्मण एवाविकृतस्य सतोऽस्यैकस्यानेकबुद्ध्यादिमयत्वं दर्शयति।**

### *प्रकटार्थविवरणम्*

यथा मृत् स्वविकारे घटे चूर्णादिविकारान्तररूपेण प्रविशति, तथा ब्रह्म शरीरं सृष्ट्वा जीवाख्यविकारेण प्रविष्टमित्यर्थः।

सिद्धान्ते सूत्रं योजयति— **नात्मा जीव इत्यादिना**। ताः श्रुतय उदाह्रियन्त इति शेषः। महावाक्यशेषभूतनित्यत्वाजत्वादिबहुश्रुत्यवष्टम्भेन जीवस्य अनुत्पत्तिं प्रसाध्य पूर्ववाद्युक्तमनूद्य दूषयति— **ननु प्रविभक्तत्वादित्यादिना**। स्वातन्त्र्येण सद्व्यावृत्तबुद्धिविषयत्वं हि कार्यत्वसाधकमुक्तम्; न तदस्ति जीवस्येत्यर्थः। ननु यथा मृन्मयो घटो मृद्विकारः, तथा विज्ञानविकारत्वमेव

### *भाष्यभावप्रकाशिका*

ननूत्पत्त्यभावोऽत्र नावगम्यत इत्यत आह— **न चैवंरूपस्येति**। स्वतः किं वा परत इति विकल्प्याद्यपक्षे दूषणमाह— **नास्येति**। औपाधिकं प्रविभागप्रतिभानमित्यत्र प्रमाणमाह— **तथा च शास्त्रमिति**। ननु ब्रह्मविकारत्वं निराकुर्वता बुद्धिविकारत्वं

### *न्यायनिर्णयः*

जीवनित्यत्वानित्यत्वश्रुतीनां मुख्यत्वे मिथो विरोधादसिद्धिः समन्वयस्येति पूर्वपक्षमनूद्य सिद्धान्तसूत्रमवतार्य प्रतिज्ञां योजयति— **एवमिति**। अनुमानोपेतश्रुत्या जीवोत्पत्तेरुक्तेरयुक्ता प्रतिज्ञेत्याह— **कस्मादिति**। सौत्रं हेतुमुक्त्वा व्याकरोति— **अश्रुतेरिति**। गुणोपसंहारन्यायेनोक्तं स्मारयति— **नन्विति**। न्यायाधीनामुक्तिमङ्गीकृत्य जीवोत्पत्तिश्रुतेस्तदनुत्पत्तिश्रुत्या वारणान्नात्र न्यायोऽस्तीत्याह— **सत्यमिति**। जीवजन्मायोगे प्रश्नपूर्वकं सौत्रं हेतुमाह— **कस्मादिति**। हेतुद्वयं विवृणोति— **नित्यत्वं हीति**। नित्यत्वाजत्वादिभानेऽपि जन्माभावो न भातीत्याशङ्क्याह— **न चेति**। या नित्यत्वादिवादिन्यो जीवोत्पत्तिं न मृष्यन्ति ताः श्रुतीराकाङ्क्षाद्वारोदाहरति— **ताः का इति**। उत्पत्तिश्रुतेरनुमानानुग्रहादनुत्पत्तिश्रुत्यपेक्षया प्राबल्यमुक्तं स्मारयति— **नन्विति**। स्वाभाविकं वा विभक्तत्वमौपाधिकं वेति विकल्पयति— **अत्रेति**। नाद्योऽसिद्धेरित्याह— **नेति**। औपाधिकं विभक्तत्वमौपाधिकं स्वाभाविकं वा विकारमात्मनो गमयेत्। आद्ये सिद्धसाधनत्वं मत्वोक्तम्— **बुद्ध्यादीति**। द्वितीये कालातीतत्वं विवक्षन्नौपाधिकं विभागभानमित्यत्र मानमाह— **तथा चेति**। ब्रह्मविकारत्वं जीवस्य निरस्यता बुद्धिविकारत्वं तन्मयत्वोक्त्या स्वीकृतमित्याशङ्क्याह—

**तन्मयत्वं चास्य विविक्तस्वरूपानभिव्यक्त्या तदुपरक्तस्वरूपत्वं 'स्त्रीमयो जाल्म' इत्यादिवद् द्रष्टव्यम्। यदपि क्वचिदस्योत्पत्तिप्रलयश्रवणं तदप्यत एवोपाधिसंबन्धान्नेतव्यम्– उपाध्युत्पत्त्याऽस्योत्पत्तिस्तत्प्रलयेन च प्रलय इति। तथा च दर्शयति– 'प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्ति' (बृ.उ. ४।५।१३) इति। तथोपाधिप्रलय एवायं नात्मविलय इत्येतदपि 'अत्रैव मा भगवान्मोहान्तमापीपदन्न वा अहमिमं विजानामि न प्रेत्य संज्ञाऽस्ति' इति प्रश्नपूर्वकं प्रतिपादयति– 'न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवति' (बृ.उ.मा. ४।३।१५) इति। प्रतिज्ञानुपरोधोऽप्यविकृतस्यैव ब्रह्मणो जीवभावाभ्युपगमात्। लक्षणभेदोऽप्यनयोरुपाधिनिमित्त एव। 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' (बृ.उ. ४।३।१५) इति च प्रकृतस्यैव विज्ञानमयस्यात्मनः सर्वसंसारधर्मप्रत्याख्यानेन परमात्मभावप्रतिपादनात्। तस्मान्नैवात्मोत्पद्यते प्रविलीयत चेति।।१७।।**

।।इत्येकादशमात्माधिकरणम्।।

### *प्रकटार्थविवरणम्*

श्रुतिः प्रतिपादयतीत्याशङ्क्याह— **तन्मयत्वं चास्येति**। **जाल्मः** प्राकृतः पुरुषः। यथा स्त्रीपरतन्त्रः स्त्रीमय उच्यते तथा जीवस्य शुद्धस्वभावाप्रतिपत्त्या बुद्ध्याद्युपरक्तं जीवरूपत्वं बुद्ध्यधीनमिति तन्मयतोच्यत इत्यर्थः। यस्मान्निरूप्यमाणे न जीवस्य निरुपाधिकौ जन्मप्रलयौ स्तः, तस्मादुच्चरति[१]श्रुतिर्न मुख्यार्थेत्याह— **यदपि क्वचिदिति**। उक्तेऽर्थे संवादकं श्रुत्यन्तरमाह— **तथा चेति**। तच्चै[तथै]तदपि प्रश्नपूर्वकं प्रतिपादयति याज्ञवल्क्य इत्यन्वयः। मोहान्तं मोहं मां प्रति भगवानापादितवानस्मिन्नवसरे; अहं तु न जानामीत्यर्थः। **अनुच्छित्तिधर्मेति**। अपरिणामीत्यर्थः। यच्चोक्तम् ''प्रतिज्ञानुपरोधात्'' इत्यादि, तद् दूषयति— **प्रतिज्ञेत्यादिना**। बिम्बप्रतिबिम्बवदुपाधिकृत एवायं भेदः, न स्वरूपभेदकृत इत्येतत् कस्मादित्याशङ्क्याह— **अत ऊर्ध्वमिति**। इत्येकादशमात्माधिकरणम्।।

### *भाष्यभावप्रकाशिका*

जीवस्य त्वया विधीयत इत्यत आह— **तन्मयत्वञ्चेति**। ननु ज्ञानस्यात्मस्वरूपत्वमुक्तं पुरस्तात्, इदानीम् 'न प्रेत्य संज्ञे'त्यादिना ज्ञानाभाव उच्यते; अतः पूर्वापरविरोध इत्यत आह— **तथोपाधीति**। **उपाधिनिमित्त इति**। [बिम्ब]प्रतिबिम्बयोर्दर्शनादित्यर्थः।

### *न्यायनिर्णयः*

**तन्मयत्वमिति**। जाल्मो जडात्मा प्राकृतः पुरुषः। स यथा स्त्रीपरतन्त्रः स्त्रीमयो व्यपदिश्यते तथा जीवस्याप्रपञ्चपूर्णत्वाप्रतिपत्त्या बुद्ध्याद्युपरक्तपरिच्छिन्नरूपत्वं बुद्ध्याद्यधीनमिति तन्मयत्वोक्तिरित्यर्थः। अनुग्राहकमनुमानमपोद्यानुग्राह्यश्रुतेर्गतिमाह— **यदपीति**। अत एवेत्यस्य व्याख्यानम्— **उपाधीति**। नयनमभिनयति— **उपाधीति**। तत्र मैत्रेयीब्राह्मणं संवादयति— **तथा चेति**। 'प्रज्ञानघन एव' इत्युक्त्वा 'न प्रेत्य संज्ञाऽस्ति' इति वदतो विरोधः स्यादित्याशङ्क्याह— **तथेति**। पूर्वापरविरोधसमाधिद्वारेति यावत्। 'न प्रेत्ये'त्युक्तस्यायमिति परामर्शः। एतदपि प्रश्नपूर्वकं प्रतिपादयतीति संबन्धः। प्रश्नमनुक्रामति— **अत्रेति**। मोहान्तं मोहमध्यमापीपददापादितवान् इममित्यर्थनिर्देशः। प्रतिपादनप्रकारं प्रकटयति— **न वेति**। मोहं मोहकरं वाक्यम्। अविनाशित्वे परिणामित्वाभावं हेतुमाह— **अनुच्छित्तीति**। कथं तर्हि न प्रेत्येत्यादि, तत्राह— **मात्रेति**। यत्तु प्रतिज्ञया ब्रह्मकार्यता जीवस्येति, तत्राह— **प्रतिज्ञेति**। यत्तु लक्षणभेदान्नैक्यमिति, तत्राह— **लक्षणेति**। बिम्बप्रतिबिम्बादिवदौपाधिको भेदो न स्वाभाविक इत्यत्र हेतुमाह— **अत इति**। प्रधानवाक्येन फलवताऽऽक्षिप्तनित्यत्वबोधकावान्तरवाक्यानुरोधेन प्रधानवाक्यविरुद्धकार्यत्ववादिवाक्यानां दुर्बलत्वेनोपचरितार्थत्वान्मिथो विरोधाभावान्नित्यप्रत्यग्ब्रह्मसमन्वयसिद्धिरित्युपसंहरति— **तस्मादिति**।।१७।। इत्येकादशमात्माधिकरणम्।।

---

१. 'उच्चरन्तिश्रुतिः' इति पा.।

१२।।ज्ञाधिकरणम्।।सू. १८।।

## ज्ञोऽत एव।।१८।।

**स किं काणभुजानामिवागन्तुकचैतन्यः स्वतोऽचेतन आहोस्वित् सांख्यानामिव नित्यचैतन्यस्वरूप एवेति वादिविप्रतिपत्तेः संशयः। किं तावत् प्राप्तम्? आगन्तुकमात्मनश्चैतन्यमात्ममनःसंयोगजमग्निघट-**

### *शारीरकन्यायसंग्रहः*

**ज्ञोऽत एव।।१८।।** आत्मा कादाचित्कज्ञानकार्यवान्, तदर्थमुपादीयमानशरीरेन्द्रियसाधनत्वात्, भेदनार्थमुपादीयमानकुठारादि-साधनपुरुषवत्; तथा आत्मा ज्ञानान्तरप्रकाश्यः, वस्तुत्वात्, घटवत्; तथा सर्वगतोऽयमात्मा न ज्ञानस्वभावः, स्वसंसर्ग्य-शेषवस्त्वनवभासकत्वात्; यः प्रकाशस्वभावः स स्वसंसर्ग्यशेषवस्त्ववभासको दृष्टः, यथा सविता इति। अत्र प्रकृतिविकारभावाभावे द्रव्यवाचिपदयोः सामानाधिकरण्यमेकद्रव्यपर्यवसायि, सोऽयं देवदत्त इत्यादौ तथा दर्शनात् इति चित्स्वभावब्रह्मैक्यधर्मित्वं जीवस्य प्रतिपादयता प्रधानवाक्येनाक्षिप्तजीवचित्स्वभावस्य प्रतिपादकैः "आत्मैवास्य ज्योतिर्भवति" इत्यादिवाक्यैः तात्पर्यवद्भिः अनुमानानां बाधो दर्शितः।

अथवा आत्मा प्रकाशस्वभावः, स्वसत्तायां प्रकाशव्यतिरेकशून्यत्वात्, प्रदीपसंवेदनादिवत् इत्यनुमानसिद्धचित्स्वभावस्याप्यात्मनः व्यापारवद्द्रव्यैराकाशस्यासंसर्गितेव[र्गितयेव] प्रकाश्यद्रव्यैः स्वभावतोऽसंसर्गितया प्रकाशकार्यमकुर्वाणस्यापि विषयसम्बन्धः अन्तःकरणोपरागनिमित्तः सम्भवति, स्वभावतोऽसंसर्गिणोरपि मुखरक्तिमगुणयोः एकस्फटिकोपरागनिमित्तसम्बन्धवत् इत्येवं संभाव्यमाने स्वभावचैतन्यस्यापि विषयसम्बन्धे किमिन्द्रियाद्युपादानस्य विषयोपरक्तज्ञानोत्पत्तिः फलम्, किं वा सिद्धस्यैव ज्ञानस्य विषयोपरागः फलमिति विशये साध्यविवृद्ध्युपादानात् साध्यलेशोपादानमेव लघीय इति न्यायेन सिद्धस्यैव ज्ञानस्य विषयोपरागनिमित्तमिन्द्रियादिकं दर्शितम्।

### *प्रकटार्थविवरणम्*

**ज्ञोऽत एव।।** एवं तावन्महावाक्यार्थान्वयित्वंपदार्थसमर्पकावान्तरसमन्वयस्योत्पत्त्यादिश्रुतिविरोधो नास्तीत्युपपाद्य इदानीं जडत्वग्राहकप्रमाणविरोधोऽपि नास्तीत्युपपादयितुं विचारमारभते— **स किं काणभुजानामिवेति**। पूर्वपक्षमाह— **किं तावदिति**।

### *भाष्यभावप्रकाशिका*

इदमुक्तं भवति— प्रधानवाक्येन फलपर्यन्तेनाक्षिप्तनित्यत्वपरावान्तरवाक्यानुरोधेन प्रधानवाक्यविरुद्धकार्यत्वप्रतिपादकावान्तरवाक्यानामुप-चरितार्थत्वमुक्तं दौर्बल्यादिति। इत्येकादशमात्माधिकरणम्।।

**ज्ञोऽत एव**। ननु चिद्रूपपरमात्मैकत्वाभ्युपगमाज्जीवस्य तस्यापि चिद्रूपत्वात् कथं संशय इत्याशङ्क्य निरस्यपक्षसंभवा-दित्याह— **वादिविप्रतिपत्तेरिति**। किं तर्हि तत्कारणमित्यत आह— **आत्ममन इति**। आत्मा कादाचित्कज्ञानवान् तदर्थमुपादीय-मानशरीरेन्द्रियादिसाधनत्वादीश्वरवदिति व्यतिरेकी। तथाऽऽत्मा ज्ञानान्तरप्रकाश्यः वस्तुत्वात् घटवत्। तथा सर्वगतोऽयमात्मा न

### *न्यायनिर्णयः*

आत्मनो नित्यत्वमुक्त्वा तदनुत्पत्तिहेतोः स्वप्रकाशत्वमाह— **ज्ञ इति**। अनुत्पत्तौ हि स्वप्रकाशं ब्रह्मैवोपहितं जीव इति तत्स्वप्रकाशता। न चैवं गतार्थत्वम् अनुत्पन्नस्यापि जीवस्यानित्यज्ञानत्वश्रुत्या ब्रह्मान्यत्वशङ्कायां ब्रह्मैक्ययोग्यत्वायात्र जीवस्य स्वप्रकाशतोक्तेरिति भावः। विषयसंशयतत्कारणानि दर्शयति— **स इति**। विमृश्य पूर्वपक्षं गृह्णाति— **किमिति**। अत्र च 'आत्मैवास्य ज्योतिः' इत्यादिश्रुतीनां 'पश्यंश्चक्षुः' इत्यादिश्रुतिभिर्जीवानित्यधीत्ववादिनीभिर्विरोधसमाधानद्वारा चिद्रूपप्रत्यग्ब्रह्मणि समन्वयसाधनात् पादादिसंगतयः। पूर्वपक्षे यथोक्तश्रुतीनां मिथो विरोधादनैकमत्यादप्रामाण्यादुक्ते ब्रह्मणि समन्वयासिद्धिः। सिद्धान्ते तासामविरोधादेकवाक्यतया प्रामाण्यात् तत्र तत्सिद्धिः। आत्मनश्चेत् चैतन्यमागन्तुकं किं तर्हि तस्य कारणमागन्तुकस्य तदपेक्षत्वात्, तत्राह— **आत्मेति**। आत्मा कादाचित्कज्ञानः, तदर्थमादीयमानसाधनत्वात्, ईश्वरवदिति व्यतिरेकीत्यर्थः। समवाय्यसमवायिविषयं विशेषणं, निमित्तं त्वदृष्टादि। आत्ममनःसंयोगादसमवायिनश्चैतन्यमात्मगुणो भवतीत्यत्र पिठरपाकप्रक्रियया दृष्टान्तमाह— **अग्नीति**।

**संयोगजरोहितादिगुणवदिति प्राप्तम्। नित्यचैतन्यत्वे हि सुप्तमूर्च्छितग्रहाविष्टानामपि चैतन्यं स्यात्। ते पृष्टाः सन्तो न किंचिद् वयमचेतयामहीति जल्पन्ति; स्वस्थाश्च चेतयमाना दृश्यन्ते। अतः कादाचित्कचैतन्यत्वादागन्तुकचैतन्य आत्मेति।**

**एवं प्राप्तेऽभिधीयते– ज्ञो नित्यचैतन्योऽयमात्माऽत एव, यस्मादेव नोत्पद्यते, परमेव ब्रह्माविकृतमुपाधिसंपर्काज्जीवभावेनावतिष्ठते। परस्य हि ब्रह्मणश्चैतन्यस्वरूपत्वमाम्नातम्– 'विज्ञानमानन्दं ब्रह्म' (बृ.उ. ३।९।२८), 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ. २।१।१), 'अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ.उ. ४।५।१३), इत्यादिषु श्रुतिषु। तदेव चेत् परं ब्रह्म जीवस्तस्माज्जीवस्यापि नित्यचैतन्यस्वरूपत्वमग्न्यौष्ण्यप्रकाशवदिति गम्यते। विज्ञानमयप्रक्रियायां च श्रुतयो भवन्ति– 'असुप्तः सुप्तानभिचाकशीति' (बृ.उ. ४।३।११)**

### *प्रकटार्थविवरणम्*

आत्मा न प्रकाशस्वभावः, तदर्थमुपादीयमानसाधनत्वात्, यो यदर्थमुपादीयमानसाधनः, नासौ तत्स्वभावः; यथा छेदार्थमुपादीयमानसाधनो न छिदिस्वभाव इति प्रयोगः। विपक्षे बाधकमाह— **नित्यचैतन्यत्वे हीति**।

सिद्धान्तसूत्रं योजयति— **ज्ञो नित्यचैतन्य इत्यादिना**। न केवलं नित्यचैतन्यब्रह्मस्वभावत्वात् जीवस्य नित्यचैतन्यत्वम्, स्वप्रकाश[त्व]श्रवणादपीत्याह— **विज्ञानमयप्रक्रियायां चेति**। स्वयमसुप्तः प्रकाशमान एव सुप्तान् करणादीन् अभिपश्यतीत्यर्थः।

### *भाष्यभावप्रकाशिका*

ज्ञानप्रकाशस्वभावः संसर्ग्यशेषवस्त्वनवभासकत्वात् यः प्रकाशस्व[भाव]स्स संसर्ग्यशेषस्त्ववभासको दृष्टः यथा सवितेति भावः। व्यभिचरितत्वाच्च स्वरूपत्वमयुक्तमित्याह— **नित्यचैतन्यत्वे हीति**। ननु तत्रापि चैतन्याभावः कथं ज्ञायत इत्यत्राह— **ते पृष्टा इति**। ननु तदा ते न सन्तीत्यत आह— **स्वस्थाश्चेति**। अथवा कथं तथाप्यागन्तुकचैतन्यतेत्यत्राह— **स्वस्था इति**। विवादास्पद आत्मा चैतन्यस्वभावो न भवति तद्व्यभिचारित्वात् घटवत्।

**यस्मादेवेति**। येन ब्रह्माभिन्नत्वहेतुना उत्पत्तिर्निराकृता तेनैव हेतुना नित्यचैतन्यरूपतेत्यर्थः। परस्यापि नित्यचैतन्यत्वमसिद्धमित्यत आह— **परस्येति**। तत्त्वमस्यादिवाक्यप्रामाण्यानुपपत्त्या नित्यचैतन्यत्वमुच्यत इत्याह— **विज्ञानमयेति**। प्रकृतिविकृतित्वरहित-

### *न्यायनिर्णयः*

किं चात्मा ज्ञानान्तरप्रकाश्यः, वस्तुत्वात्, घटवदिति मत्वाऽऽह— **इति प्राप्तमिति**। आत्मा न नित्यचैतन्यः, तद्व्यभिचारित्वात्, घटवदित्याह— **नित्येति**। इष्टापत्तिं निराचष्टे— **ते पृष्टा इति**। तदा तेषामसत्त्वादेव चैतन्यव्यभिचारित्वमित्याशङ्क्याह— **स्वस्थाश्चेति**। तथापि कथं चैतन्यस्यागन्तुकत्वम्, तत्राह— **चेतयमाना इति**। आत्मा न ज्ञानस्वभावः, स्वसंसर्गिसर्वानवभासकत्वात्, आदित्यवदिति व्यतिरेकेणोपसंहरति— **अत इति**। भाष्ये हेतुसाध्यनिरुक्त्या[१] साध्याविशिष्टत्वं निरसनीयम्।

आत्मनः स्वप्रकाशत्वश्रुतीनामनित्यधीत्वश्रुतीनां च विरोधे समन्वयासिद्धिरिति पक्षमनूद्य सिद्धान्तयति— **एवमिति**। सूत्रं योजयति— **ज्ञ इति**। अत एवेत्युक्तं व्यनक्ति— **यस्मादिति**। उत्पत्त्यभावे हेतुमाह— **परमिति**। तस्य कुतो जीवत्वम्, तत्राह— **उपाधीति**। येन ब्रह्माभिन्नत्वेनोत्पत्तिरात्मनो निरस्ता, तेनैव तस्य नित्यचैतन्यताऽपि सुप्रतिपदा। विमतं चैतन्यस्वभावं, ब्रह्माभिन्नत्वात्, तद्वदित्यर्थः। दृष्टान्तस्य साध्यवैकल्यमुद्धरति— **परस्येति**। हेत्वसिद्धिं प्रत्याह— **तदेवेति**। चेच्छब्दो निश्चयार्थः। प्रकृतिविकारत्वहीनद्रव्यार्थपदसामानाधिकरण्यम्, एकद्रव्यनिष्ठम्, उक्तसामानाधिकरण्यत्वात्, सोऽयमितिवदित्यनुमानात्प्रवेशश्रुतेश्च ब्रह्मैव जीवो निश्चित इति हेतुसिद्धिरित्यर्थः। ब्रह्माभिन्नत्वफलं निगमयति— **तस्मादिति**। न केवलं नित्यचैतन्यब्रह्मत्वाज्जीवस्य नित्यचैतन्यत्वं, किंतु स्वप्रकाशत्वश्रवणादपीत्याह— **विज्ञानेति**। 'योऽयं विज्ञानमयः प्राणेषु' इत्यारभ्य तत्प्रकरणस्थाः श्रुतीरात्मस्वप्रकाशत्वसाधनायोपन्यस्यन्नुक्तानुमानानां कालात्ययापदिष्टत्वमाह— **असुप्त इति**।

---

१. कादाचित्कचैतन्यत्वम् = साधनाधीनज्ञानवत्त्वम्, आगन्तुकचैतन्यत्वम् = अस्वप्रकाशत्वम्। द्र. रत्न.।

**'अत्रायं पुरुषः स्वयंज्योतिर्भवति' (बृ.उ. ४।३।९) इति, 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' (बृ.उ. ४।३।३०) इत्येवंरूपाः। 'अथ यो वेदेदं जिघ्राणीति स आत्मा' (छा.उ. ८।१२।४) इति च सर्वैः करणद्वारैरिदं वेदेदं वेदेति विज्ञानेनानुसंधानात् तद्रूपत्वसिद्धिः। [1]'नित्यस्वरूपचैतन्यत्वे घ्राणाद्यानर्थक्यमिति चेत्? न। गन्धादिविषयविशेषपरिच्छेदार्थत्वात्। तथा हि दर्शयति– 'गन्धाय घ्राणम्' इत्यादि। यत्तु सुप्तादयो न चेतयन्त इति, तस्य श्रुत्यैव परिहारोऽभिहितः। सुषुप्तं प्रकृत्य 'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' (बृ.उ. ४।३।२३) इत्यादिना। एतदुक्तं भवति– विषयाभावादियमचेतयमानता, न चैतन्याभावादिति। यथा**

### *प्रकटार्थविवरणम्*

किञ्च विज्ञानेन लक्ष्यमाणत्वादपि (न केवलं) नित्यचैतन्य आत्मेत्याह— **अथ यो वेदेदमिति**। अत्र प्रयोगः— आत्मा स्वप्रकाशः, स्वसत्तायां प्रकाशव्यतिरेकशून्यत्वात्, सवितृवदिति। प्रतिकूलतर्कं शङ्कते— **नित्यचैतन्यस्वरूपत्व इति**। गन्धादिविषयस्य परिच्छेदो नाम गन्धादिविषयावच्छिन्नश्रितप्रकाशः तद्व्यञ्जकजडप्रकाशान्तःकरणपरिणामोदयार्थत्वात् घ्राणादीनां नानर्थक्यमित्यर्थः। अत एव पूर्ववादिनो हेतुरसिद्धः। यच्च तेन बाधकमुक्तं तद् दूषयति— **यत्त्वित्यादिना**। अन्तःकरणवृत्तियुक्ता रूपादयः चैतन्यस्य

### *भाष्यभावप्रकाशिका*

द्रव्यवाचिपदयोःसामानाधिकरण्यमेकद्रव्यनिष्ठं सोऽयं देवदत्त इतिवदिति। ब्रह्मैकत्वं जीवस्य प्रतिपादयता प्रधानवाक्येनाक्षिप्तं स्वयंज्योतिष्ट्वं प्रतिपादयद् वाक्यं पूर्ववाद्युक्तानुमानानां बाधकमिति भावः। व्यभिचारिकरणजबुद्धीनामव्यभिचारिचैतन्यमन्तरेण नियमेनानुसन्धानासंभवाच्च नित्यचैतन्यत्वमात्मन इत्याह— **अथ यो वेदेदमिति**। आत्मा प्रकाशस्वभावः प्रकाशव्यतिरेक-शून्यत्वादीश्वरसंवेदनवदित्यर्थः। आत्मनो नित्यचैतन्यत्वेऽप्यसङ्गतया विषयविशेषसंसर्गान्ति[र्थ]मन्तःकरणाद्यपेक्षेत्याह— **न गन्धादीति**। न चासंसर्गित्वादेव विषयविशेषसंसर्गाभावे कथं विषयप्रतिभानमिति शङ्कनीयम्। परस्परसम्बन्धाभावेऽपि द्वयोरेकान्तःकरणसंसर्गात् संबन्धित्वेन प्रतिभानोपपत्तेर्मुखरक्तिमगुणयोः परस्परसंबन्धाभावेऽपि स्फटिकोपरागनिमित्तसंबन्धवत्। ततश्चाद्यो हेतुरन्यथासिद्धः, तृतीयस्त्वसिद्धः। किंच सिद्धस्यैव ज्ञानस्येन्द्रियाद्युपादानं विषयोपरागायेति कल्पना लघीयसी, तदुत्पत्तय इत्यङ्गीकारात्। तथा सति [2]साध्यविवृद्ध्युपादानप्रसङ्गादिति भावः। सिद्धस्यैव विषयोपराग इत्यत्र श्रौतं लिङ्गमाह— **तथाहि दर्शयति— गन्धायेति**। सिद्धान्ती स्वकीयहेतोरसिद्धत्वमाशङ्क्य परिहरति— **यत्त्विति**। अथवा पूर्वपक्षान्ते कथितानुमान-स्यागमविरोधमाह— **यत्तु सुप्तादय इति**। पश्यन्तीत्येतदुपपादयति— **न हि द्रष्टुरिति**। न पश्यतीत्येतद् दर्शयति— **न तु तद् द्वितीयमिति**। ननु

### *न्यायनिर्णयः*

स्वयमसुप्तो भासमान एवात्मा सुप्तान् वागादीनुपरतव्यापारानभिपश्यतीति यावत्। **अत्रेति** स्वप्नोक्तिः। न च तत्र मनसो भावात् तन्निमित्तमात्मनो ज्योतिष्ट्वम्, तदा तस्य कर्मत्वादकरणत्वादिति भावः। व्यभिचारिकरणजन्यबुद्धीनामव्यभिचारिचैतन्यं विना नियतानुसंधानासिद्धेरात्मनो नित्यचैतन्यत्वमित्याह— **अथेति**। आत्मा नित्यचैतन्यस्वभावः, स्वसत्तायां तद्व्यतिरेकशून्यत्वात्, ईश्वरसंवेदनवदिति भावः। प्रतिकूलतर्कपराहतिं शङ्कते— **नित्येति**। आत्मनो नित्यचैतन्यत्वेऽपि स्वतोऽसङ्गतया विषयासंसर्गात् तद्विशेषयोगद्वारा तत्परिच्छेदार्थमन्तःकरणाद्यपेक्षणान्न तद्वैयर्थ्यमित्याह— **नेति**। न चासंसर्गित्वादेव विषयविशेषासंसर्गे कुतस्तद्भानम्; मिथोऽयोगेऽपि द्वयोरेकान्तःकरणसंसर्गाद् युक्तत्वेन भानसंभवात् मुखरक्तिमगुणयोर्मिथोऽयोगेऽपि स्फटिकोपरागाधीनसंबन्धवदिति भावः। गन्धादिविषयविशेषस्य परिच्छेदस्तदवच्छिन्नश्रितप्रकाशस्तद्व्यञ्जकजडप्रकाशान्तःकरणपरिणामोदयार्थत्वाद् घ्राणादीनां नानर्थक्यमित्यत्र श्रौतं लिङ्गमाह— **तथा हीति**। स्वसत्तायां तदव्यभिचारित्वादिति हेतोरसिद्धिं परिहर्तुं परोक्तं तद्व्यभिचारित्वहेतुमनुवदति— **यत्त्विति**। स्वकीयहेतोरसिद्धिमुद्धरन् परकीयहेतोरागमविरोधमाह— **तस्येति**। पश्यन्नित्येतदुपपादयति— **न हीति**। न पश्यतीत्युक्तं व्यनक्ति— **न त्विति**। पश्यन्न पश्यतीति विरोधमाशङ्क्याह— **एतदिति**। विषयाभावादचेतयमानत्वं दृष्टान्तेन स्पष्टयति— **यथेति**।

१. 'नित्यचैतन्यस्वरूपत्वे' इति पा.। २. इन्द्रियोपादानेन ज्ञानं, तस्य च विषयोपरागः इति द्वयं साध्यं प्रसज्येतेति भावः।

**वियदाश्रयस्य प्रकाशस्य प्रकाश्याभावादनभिव्यक्तिर्न स्वरूपाभावात्, तद्वत्। वैशेषिकादितर्कश्च श्रुतिविरोध आभासीभवति। तस्मान्नित्यचैतन्यस्वरूप एवात्मेति निश्चिनुमः।।१८।।**

।।इति द्वादशं ज्ञाधिकरणम्।।

**१३।।उत्क्रान्तिगत्यधिकरणम्।।सू. १९-३२।।**

**उत्क्रान्तिगत्यागतीनाम्।।१९।।**

**इदानीं तु किंपरिमाणो जीव इति चिन्त्यते। किमणुपरिमाण उत मध्यमपरिमाण आहोस्विन्महापरिमाण**

***शारीरकन्यायसंग्रहः***

**उत्क्रान्तिगत्यागतीनाम्।।१९।। स्वात्मना चोत्तरयोः।।२०।। नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्।।२१।। स्वशब्दोन्मानाभ्यां च।।२२।। अविरोधश्चन्दनवत्।।२३।। अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद् हृदि हि।।२४।। गुणाद्वा लोकवत्।।२५।। व्यतिरेको गन्धवत्।।२६।। तथा च दर्शयति।।२७।। पृथगुपदेशात्।।२८।। तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्।।२९।। यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्।।३०।। पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्।।३१।। नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा।।३२।।**

यद्यप्यणुमहतोः तत्त्वमस्यादौ खण्डो गौरितिवत् तादात्म्यव्यपदेशः संभवति, तथाप्यकार्यकारणद्रव्योपादानेन सामानाधिकरण्यमेकद्रव्यपर्यवसायि सोऽयमित्यादिवद्[वदित्ये]कस्य द्रव्यस्यैकस्मिन् परिमाणे, शास्त्रीयत्वात् महत्त्वे च ग्रहीतव्ये तत्त्वमस्यादिमहावाक्येन जीवस्य महत्त्वं प्रतिपादयता जीवाणुत्वविषयगुणभूतवाक्यानां विरोधे सति ''गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः'' इति न्यायेनाणुत्वश्रुतिलिङ्गानाम् औपाधिकोपचरितविषयत्वमुक्तम्।

अथवा अर्थवादवाक्यानां लोकव्यवहारविरोधिनां लौकिकादपि न्यायात् दौर्बल्यमिति न्यायेन सकलशरीरव्यापिशैत्याद्युपलब्ध्यन्यथानुपपत्तिनिमित्तेन महत्त्वेनाणुत्वश्रुतीनां बाधो दर्शितः।

***प्रकटार्थविवरणम्***

विषया भवन्ति। तदभावादचेतयमानं [मानता न] तु चैतन्याभावात्, अन्यथा परामर्शायोगात्। एतेन विषयविधुरं ज्ञानं नास्तीति प्रत्युक्तम्। नन्वात्मा न स्वप्रकाशः, वस्तुत्वात्, घटवदिति वैशेषिकादितर्कोऽस्तीत्याशङ्क्याह— **वैशेषिकादितर्कश्चेति**। सुषुप्तबुद्ध्यनुपपत्तिलाघवतर्कानुगृहीतस्वयंविशेषणविशिष्टज्योतिष्ट्वश्रुतिविरोधेऽनुमानमाभासीभवतीत्यर्थः। इति द्वादशं ज्ञाधिकरणम्।।

**उत्क्रान्तिगत्यागतीनाम्**।। पुनर्जीवस्य परिच्छेदकविरोधापाकरणाय विचारमारभते— **इदानीं त्विति**। विचारारम्भमाक्षिपति—

***भाष्यभावप्रकाशिका***

वैशेषिकानुमानेन चैतन्यस्यानित्यत्वमवगम्यत इत्यत आह— **वैशेषिकादीति**। इति द्वादशं ज्ञाधिकरणम्।।

***न्यायनिर्णयः***

वस्तुत्वादिहेतोरनित्यचैतन्यत्वसिद्धावात्मनश्चिद्रूपता कुतः स्यादित्याशङ्क्याह— **वैशेषिकादीति**। आत्मचैतन्यस्यागन्तुकत्वे मानाभावात् तस्य नित्यचैतन्यत्वे 'पश्यन्नि'त्यादिश्रुतीनां स्वप्रकाशत्वश्रुत्यनुसारेण नयनादन्योन्यमविरोधान्नित्यचैतन्ये प्रत्यग्ब्रह्मणि समन्वयसिद्धिरित्युपसंहरति— **तस्मादिति**।।१८।। इति द्वादशं ज्ञाधिकरणम्।।

ब्रह्मैक्ययोग्यत्वायात्मनः स्वप्रकाशत्वमुक्तम्। इदानीं तस्य स्वाभाविकाणुत्वनिरासेन वस्तुतो महत्त्वं चैतन्यादीषद्बहिष्ठं साधयति— **उत्क्रान्तीति**। अधिकरणस्य विषयसंशयौ दर्शयति— **इदानीमिति**। किमणुपरिमाणो जीव आहो महापरिमाण इत्येवं

**इति। ननु च नात्मोत्पद्यते, नित्यचैतन्यश्चायमित्युक्तम्। अतश्च पर एवात्मा जीव इत्यापतति। परस्य चात्मनोऽनन्तत्वमाम्नातम्, तत्र कुतो जीवस्य परिमाणचिन्तावतार इति। उच्यते– सत्यमेतत्। उत्क्रान्ति-गत्यागतिश्रवणानि तु जीवस्य परिच्छेदं प्रापयन्ति। स्वशब्देन चास्य क्वचिदणुपरिमाणत्वमाम्नायते। तस्य सर्वस्यानाकुलत्वोपपादनायायमारम्भः।**

**तत्र प्राप्तं तावदुत्क्रान्तिगत्यागतीनां श्रवणात् परिच्छिन्नोऽणुपरिमाणो जीव इति। उत्क्रान्तिस्तावत्– 'स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति' (कौ.उ. ३।३) इति। गतिरपि– 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौ.उ. १।२) इति। आगतिरपि 'तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे' (बृ.उ. ४।४।६) इति। आसामुत्क्रान्तिगत्यागतीनां श्रवणात् परिच्छिन्नस्तावज्जीव इति प्राप्नोति। न हि विभोश्चलनमवकल्पत इति। सति च परिच्छेदे शरीरपरिमाणत्वस्यार्हतपरीक्षायां**

***प्रकटार्थविवरणम्***

**ननु नात्मोत्पद्यत इति**। अर्धाङ्गीकारेण समाधत्ते— **[1]सत्यमेवमिति**। "श्रवणात्" इति पदमध्याहृत्य पूर्वपक्षसूत्रं योजयति— **तत्र प्राप्तं तावदित्यादिना**। एतैः सर्वैः प्राणैः। तस्माच्चन्द्रलोकात्पुनरागच्छतीमं लोकं प्रति कर्मकरणायेत्यर्थः। सर्वगतस्य स्वाश्रय-संयोगविभागहेतुभूतं चलनं नभोवन्न घटते चेन्मा घटिष्ट; तथापि कुतोऽणुत्वमित्याशङ्क्य परिशेषादित्याह— **सति परिच्छेद इति**।

***भाष्यभावप्रकाशिका***

**उत्क्रान्तिगत्यागतीनाम्**। नन्वार्हतपरीक्षायां मध्यमपरिमाणत्वं निराकृतम्, कथं पुनस्तत्र संशय इति चेत्? सत्यमणुपरिमाणत्वमत्र पूर्वपक्षः, इतरोपादानं त्वस्यापि तद्वन्निराकृतप्रायत्वप्रतिपादनार्थमिति द्रष्टव्यम्। संशयाक्षेपपूर्वकमणुपरिमाणतायास्तुच्छतामाह— **ननु च नात्मेति**। सत्यम्; अणुपरिमाणत्वश्रुतीनां गतिप्रदर्शनार्थोऽयं पूर्वपक्षोपक्रम इत्याह— **उच्यत इति**। भवतूत्क्रान्त्यादिश्रवणम्, तथाप्यणुत्वं कथमित्याशङ्क्य परिच्छिन्नत्वावगमादित्याह— **आसामिति**। कथं परिच्छिन्नत्वमित्यत आह— **न हि विभोरिति**।

***न्यायनिर्णयः***

विप्रतिपत्तेः संदिह्यते। मध्यमपरिमाणत्वं निरस्तमेवात्र तथाऽणुत्वं निरस्तप्रायमिति वक्तुमानीताधिकरणारम्भमाक्षिपति— **ननु चेति**। तथापि जीवस्यानन्त्यनिरूपणार्थमधिकरणमित्याशङ्क्याह— **अतश्चेति**। तुल्यलक्षणत्वादित्यर्थः। तथापि विचारारम्भस्य किं जातम्, तदाह— **परस्येति**। तथापि जीवस्य तन्नोक्तं, तत्राह— **तत्रेति**। पराभिन्नतया तद्वदानन्त्ये सतीति यावत्। आरम्भं समाधत्ते— **उच्यत इति**। यदुक्तं जीवस्य नित्यत्वादि, तदङ्गीकरोति— **सत्यमिति**। तर्हि परममहत्त्वमपि तस्य सिद्धमेव, किमनया चिन्तयेत्याशङ्क्याह— **उत्क्रान्तीति**। न केवलं श्रुतार्थापत्तिसिद्धमात्मनोऽणुत्वम्, किंतु श्रौतमपीत्याह— **स्वशब्देनेति**। आत्माणुत्वश्रुतिकलापस्य तदानन्त्यश्रुतिजातस्य वा[चा]नाकुलत्वमन्योन्यमविरुद्धत्वम्, तत्प्रतिपादनेनापरिच्छिन्ने ब्रह्मणि समन्वयसाधकमधिकरणमर्थवदित्युपसंहरति— **तस्येति**। एतेन पादादिसंगतिरुक्ता। पूर्वपक्षे चात्माणुत्वमहत्त्वश्रुत्योर्विरुद्धत्वेनाप्रामाण्यादुक्ते ब्रह्मणि समन्वयासिद्धिः। सिद्धान्ते तयोरविरुद्धत्वात् प्रामाण्यात् तत्सिद्धिः।

अधिकरणारम्भमेवमुक्त्वा सूत्रं व्याकुर्वन् पूर्वपक्षयति—**तत्रेति**। उक्तं हेतुं विवृणोति—**उत्क्रान्तीति**। स पुरुषो मुमूर्षुरारब्धकर्मावसाने यदाऽस्मादभिमानतो गृहीतादिति यावत् 'सहैवे'त्यत्र तदेति वक्तव्यम्। एतच्छब्दो वागादिविषयः। 'तस्माल्लोकादि'त्यागमनापादानत्वेन चन्द्रलोको गृह्यते। तत्र भोक्तव्यकर्मक्षयानन्तर्यं पुनरित्युच्यते। अस्मै लोकायेति। एतं लोकं प्रतीत्यर्थः। कर्मशब्देन तदनुष्ठानं लक्ष्यते। हेतुमनूद्य तत्फलमाह—**आसामिति**। ननु जीवस्योत्क्रान्तिगत्यागतिभिश्चलनमेव गम्यते, न परिच्छेदः, तत्राह—**न हीति**। सर्वगतस्य[2]

---

१. भाष्ये पाठान्तरमिदम्। २. 'विभोः' इति भाष्यपदस्य विवरणमिदम्।

**निरस्तत्वादणुरात्मेति गम्यते।।१९।।**

**स्वात्मना चोत्तरयोः।।२०।।**

**उत्क्रान्तिः कदाचिदचलतोऽपि ग्रामस्वाम्यनिवृत्तिवद् देहस्वाम्यनिवृत्त्या कर्मक्षयेणावकल्पेत। उत्तरे तु गत्यागती नाचलतः संभवतः। स्वात्मना हि तयोः संबन्धो भवति, गमेः कर्तृस्थक्रियात्वात्। अमध्यमपरिमाणस्य च गत्यागती अणुत्व एव संभवतः। सत्योश्च गत्यागत्योरुत्क्रान्तिरप्यपसृप्तिरेव देहादिति प्रतीयते। न ह्यनपसृप्तस्य देहाद् गत्यागती स्याताम्। देहप्रदेशानां चोत्क्रान्तावपादानत्ववचनात्– 'चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः' (बृ.उ. ४।४।२) इति। 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति'**

***प्रकटार्थविवरणम्***

**स्वात्मना चोत्तरयोः।। वैशेषिका** मन्यन्ते— नात्मनो देहादपसर्पणमुत्क्रमणम्; किं तु स्वाम्यनिवृत्तिमात्रम्; मन एव तूत्क्रम्य भोगदेशं गच्छतीति; तदपाकरोति— **उत्क्रान्तिरिति**। [श्रुति]प्रामाण्याद् गत्यागत्योः जीवेनैव संबन्धो वक्तव्यः, तदा च जीवोऽणुः, अमध्यमपरिमाणत्वे सति गत्यागतिमत्त्वात्, परमाणुवदित्याह— **अमध्यमपरिमाणस्य चेति**। पूर्वं स्वाम्यनिवृत्तिमात्रमुत्क्रमणमित्यभ्युपगम्य दूषणमभाणि; तदपीदानीं नास्तीत्याह— **सत्योश्चेति**। इतश्च देहादपसर्पणमेवोत्क्रमणमित्याह— **देहप्रदेशानां चेति**। अपादानत्वं विश्लेषावधित्वम्। अन्येभ्यो वा मुखादिभ्यः तं जीवमुत्क्रामन्तं प्राणोऽनूत्क्रामतीत्यर्थः। किञ्च शरीरमध्येऽपि गत्यागतिभावाज्जीवः परिच्छिन्न इत्याह— **स एता इति**। तेजोमात्राः चक्षुरादीन्द्रियाणि गृहीत्वा हृदयं प्रविशति। शुक्रं

***भाष्यभावप्रकाशिका***

आशङ्क्यो[को]त्तरत्वात् सूत्रस्य तदाशङ्कामाह— **उत्क्रान्तिः कदाचिदिति**। उत्क्रान्तिशब्दो मरणेऽतिनिरूढः, तच्च देहस्वाम्यनिवृत्तिरेवेति शङ्कार्थः। गत्यागतित्वर[गती त्व]परिच्छिन्नस्य न संभवत इत्याह— **उत्तरे तु गत्यागती इति**। ननु घटगमनागमनाभ्यामाकाशस्य गमनागमनविभ्रमवज्जीवस्याप्युपाधिगमनाद्विभ्रमो भविष्यतीत्याशङ्क्य (तत्र दृष्टस्याप्युपाधिगमनाद्विभ्रमोग भविष्यतीत्याशंक्य) तत्र दृष्टत्वादुपचारो भवतीह तु नागमस्यौपचारिकत्वं युक्तमित्याह— **स्वात्मना हीति**। ननु पचति भिनत्तीत्यादौ पाकाद्यनाश्रयस्यापि कर्तृत्वव्यपदेशवदिहापि स्यादित्यत आह— **गमेः कर्तृस्थक्रियात्वादिति**। 'कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया। मासासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिये'ति व्याकरणे प्रसिद्धत्वादित्यर्थः। गत्यागतिभ्यां च प्रादेशिकत्वसिद्धौ मरणमपि देहादपसर्पणम्। न तु स्वाम्यनिवृत्तिरित्याह— **सत्योश्चेति**। अथवा सूत्रोपन्यस्तोत्क्रान्तेस्तर्हि न पूर्वपक्षसिद्धान्तयोरुपयोग इत्यत्राह— **सत्योश्चेति**।

***न्यायनिर्णयः***

स्वाश्रयसंयोगविभागहेतुश्चलनम्। नभोवच्चलनं न चेत्तथापि कुतोऽणुत्वम्, परिशेषादित्याह— **सतीति**।।१९।।

नात्मनो देहादपसर्पणमुत्क्रमणम्, किंतु स्वाम्यनिवृत्तिमात्रम्। मन एव तूत्क्रम्य भोगदेशं गच्छतीत्येके। तत्राह— **स्वात्मनेति**। सूत्रं व्याचिख्यासुः स्वाम्यनिवृत्तिमात्रमुत्क्रमणमित्यङ्गीकरोति— **उत्क्रान्तिरिति**। देहे स्वाम्यनिवृत्तौ हेतुमाह— **कर्मेति**। तथापि गत्यागतिभ्यामणुत्वमात्मनः स्यादपरिच्छिन्नस्य सतस्तदयोगादित्याह— **उत्तरे त्विति**। घटगमनागमनाभ्यां नभसस्तद्भ्रान्तिवदुपाधेरात्मनोऽपि गत्यागतिभ्रान्तिः स्यादित्याशङ्क्य दृष्टान्ते दृष्टत्वात् तथात्वेऽपि कथमागमिकस्य तथात्वमित्याह— **स्वात्मनेति**। पचतीत्यादौ पाकाद्यनाश्रयस्यापि कर्तृत्वोक्तिवदात्मनो गत्याद्यनाश्रयस्यापि तत्कर्तृत्वमुच्यतामित्याशङ्क्याह— **गमेरिति**। श्रुतिप्रामाण्याद् गत्यागत्योर्जीवेनैव संबन्धे फलितमाह— **अमध्यमेति**। जीवोऽणुः, अमध्यमपरिमाणत्वे सति गत्यागतिमत्त्वात्, परमाणुवदित्यर्थः। स्वाम्यनिवृत्तिमात्रमुत्क्रान्तिरित्युपेत्योक्तम्। सम्प्रति सूत्रोक्तोत्क्रान्तेस्तर्हि पूर्वोत्तरपक्षानुपयोगितेत्याशङ्क्याह— **सत्योश्चेति**। तत्र हेतुः— **न हीति**। इतश्च देहादपसर्पणमेवोत्क्रान्तिरित्याह— **देहेति**। अपादानत्वं विश्लेषावधित्वम्। अन्येभ्यो वा मुखादिभ्यः तं जीवमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति शेषः। किंच स्वदेहमध्येऽपि गत्यागतिभावात् परिच्छिन्नो जीव इत्याह— **स इति**। जीवश्चक्षुरादीन्द्रियाणि गृहीत्वा स्वापादौ हृदयं प्रविशति। शुक्रं ज्योतिष्मत्करणजातमादाय पुनर्जागरितमागच्छतीत्यर्थः।

**(बृ.उ. ४।४।१), 'शुक्रमादाय पुनरैति स्थानम्' (बृ.उ. ४।३।११) इति [1]चान्तरेऽपि शरीरे शारीरस्य गत्यागती भवतः। तस्मादप्यस्याणुत्वसिद्धिः।।२०।।**

**नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्।।२१।।**

**अथापि स्यात्– नाणुरयमात्मा। कस्मात्? अतच्छ्रुतेः। अणुत्वविपरीतपरिमाणश्रवणादित्यर्थः। 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' (बृ.उ. ४।४।२२), 'आकाशवत्सर्वगतश्च नित्यः', 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ. २।१।१) इत्येवंजातीयका हि श्रुतिरात्मनोऽणुत्वे विप्रतिषिध्येतेति चेत्? नैष दोषः। कस्मात्? इतराधिकारात्। परस्य ह्यात्मनः प्रक्रियायामेषा परिमाणान्तरश्रुतिः। परस्यैवात्मनः प्राधान्येन वेदान्तेषु वेदितव्यत्वेन प्रकृतत्वात्। 'विरजः पर आकाशात्' (बृ.उ. ४।४।२०) इत्येवंविधाच्च परस्यैवात्मनस्तत्र तत्र विशेषाधिकारात्। ननु 'योऽयं विज्ञानमयः प्राणेषु' (बृ.उ. ४।४।२२) इति शारीर एव महत्त्वसंबन्धित्वेन प्रतिनिर्दिश्यते। शास्त्रदृष्ट्या त्वेष निर्देशो वामदेववद् द्रष्टव्यः। तस्मात् प्राज्ञविषयत्वात् परिमाणान्तरश्रवणस्य न जीवस्याणुत्वं विरुध्यते।।२१।।**

***प्रकटार्थविवरणम्***

शोचिष्मत्करणजातमादाय पुनरागच्छति जागरितस्थानमित्यर्थः।

**नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्।।** सर्वगतत्वश्रुतिविरोधमाशङ्क्याणुवादी परमात्मविषयत्वाभिधानेन परिहरति— **नाणुरिति**। परमात्मविषयत्वं महत्त्वश्रुतेराक्षिपति— **ननु योऽयमिति**। परिहरत्यणुवादी— शास्त्रदृष्ट्या परमार्थभेददृष्ट्या जीवस्यैष महत्त्वनिर्देशो

***भाष्यभावप्रकाशिका***

इतश्च देहादपसर्पणमेव मरणमित्याह— **देहप्रदेशानामिति**। न केवलमुपादानश्रुतेस्तच्छरीरप्रदेशानां तेन गन्तव्यत्वश्रुतेरप्येवमेवेत्याह— **स एता इति**। अथवा सूत्रस्यार्थान्तरमाह— **स एता इति**।

पूर्वोक्तहेतुभिर्जीवस्याणुत्वसिद्धेर्महापरिमाणश्रवणं परमात्मविषयमित्याह— **नैष दोष इति**। ननु तत्प्रकरणत्वमसिद्धमित्याशङ्क्य तस्य प्राधान्येन प्रतिपाद्यत्वादुत्सर्गतस्तद्विषयत्वमित्याह— **परस्यैवात्मन इति**। न केवलमुत्सर्गतः परमात्मप्रकरणत्वमारभ्याध्ययन-मप्यस्तीत्याह— **विरजः पर इत्यादि**। श्रुत्या जीवविषयत्वेऽवगते प्रकरणस्य दुर्बलत्वान्न परमात्मविषयत्वमिति चोदयति— **ननु योऽयमिति**। परिहरति— **शास्त्रदृष्ट्येति**। अणुपरिमाणस्य जीवस्य ब्रह्मणो भिन्नाभिन्नतयाऽत्यन्तभेदाभावात्तयोश्च भेदस्य प्रत्यक्षसिद्धत्वादभेद

***न्यायनिर्णयः***

बाह्यादिवान्तरादपि गत्यादेरात्मनोऽणुत्वमित्याह— **तस्मादिति**।।।२०।।

सर्वगतत्वश्रुतिविरोधमाशङ्क्य विषयान्तरोक्त्या प्रत्याह— **नाणुरिति**। चोद्यं विवृणोति— **अथापीति**। उक्तहेतुभिरात्मनोऽणुत्वे दृष्टेऽपीति यावत्। अणुत्वश्रुतेरुक्तत्वादसिद्धो हेतुरित्याशङ्क्याह— **अणुत्वेति**। परिमाणान्तरश्रवणं विवृणोति— **स वा इति**। परिहारमवतार्य व्याचष्टे— **नेति**। महापरिमाणश्रवणं परमात्मविषयं तत्प्रकरणस्थत्वादित्युक्तं साधयति— **परस्येति**। कथमस्य परविषयतेत्याशङ्क्य प्राधान्येन तस्य प्रतिपाद्यत्वादुत्सर्गतस्तथेत्याह— **परस्यैवेति**। न केवलमौत्सर्गिकं परप्रकरणत्वम्, आरभ्याधीतिबलादपि तद्धीरित्याह— **विरज इति**। परिमाणान्तरश्रुतेः श्रुत्या जीवगामित्वे सिद्धे प्रकरणस्य दौर्बल्यान्न परविषयतेति शङ्कते— **नन्विति**। यथा वामदेवस्य गर्भस्थस्यैव 'अहं मनुरभवं सूर्यश्च' इति शास्त्रदृष्ट्या व्यपदेशो दृष्टस्तथा जीवस्य परमार्थभेददृष्ट्या महत्त्वनिर्देशः, तथा च स्वतोऽणुत्वमविरुद्धमित्याह— **शास्त्रेति**। अणोर्जीवस्य ब्रह्मणो भिन्नाभिन्नत्वेनात्यन्तभेदाभावात् तद्भेदस्य चाध्यक्षत्वादभेद

---

१. 'अन्तरपि' इति पा.।

## स्वशब्दोन्मानाभ्यां च।।२२।।

**इतश्चाणुरात्मा यतः साक्षादेवास्याणुत्ववाची शब्दः श्रूयते– 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश' (मु.उ. ३।१।९) इति। प्राणसंबन्धाच्च जीव एवायमणुरभिहित इति गम्यते। तथोन्मानमपि जीवस्याणिमानं गमयति– 'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः' (श्वे.उ. ५।९) इति। 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वे.उ. ५।८) इति चोन्मानान्तरम्।।२२।।**

**नन्वणुत्वे सत्येकदेशस्थस्य सकलदेहगतोपलब्धिर्विरुध्यते। दृश्यते च जाह्नवीह्रदनिमग्नानां सर्वाङ्गशैत्योपलब्धिर्निदाघसमये च सकलशरीरपरितापोपलब्धिरिति। अत उत्तरं पठति–**

## अविरोधश्चन्दनवत्।।२३।।

**यथा हि हरिचन्दनबिन्दुः शरीरैकदेशसंबद्धोऽपि सन् सकलदेहव्यापिनमाह्लादं करोत्येवमात्माऽपि**

***प्रकटार्थविवरणम्***

यथा वामदेवस्य गर्भस्थस्यैव ''अहं मनुरभवं सूर्यश्च'' इति।

**स्वशब्दोन्मानाभ्यां च**।। पूर्वं गत्यादिश्रुत्यनुपपत्त्या अनुमानेन चाणुत्वं प्रसाध्य इदानीं श्रुतिरेवास्तीत्याह— **स्वशब्देति**। ननु दुर्ज्ञानत्वाभिप्रायेण परमात्मैवाणुरिवाणुरुक्त इत्याशङ्क्याह— **प्राणसंबन्धाच्चेति**। वृत्तिभेदेन पञ्चधा प्राणो यस्मिन् सन्निविष्टः स प्राणाधारो जीव एवोक्त इत्यर्थः। उद्धृतं मानमुन्मानम्, अत्यन्तापकृष्टपरिमाणमित्यर्थः।

उत्तरसूत्रनिरस्याशङ्कामाह— **नन्वणुत्वे सतीति**। सकलदेहव्यापिकार्यान्यथानुपपत्त्या नाणुपरिमाणो जीव इत्यर्थः।

**अविरोधश्चन्दनवत्**।। परिच्छिन्नस्यापि स्वभाववशात् व्यापि कार्यं संभवतीति अन्यथाप्युपपत्तिं दृष्टान्तेनाह— **यथा**

***भाष्यभावप्रकाशिका***

एव शास्त्रैकगम्यः। अथवा शास्त्रजन्यापरोक्षज्ञानफलभूतस्याभेदस्योपदेश इति भावः।

स्वशब्दं विभजते— **साक्षादेवेति**। उन्मानं विभजते— **तथोन्मानमपीति**। उद्धृत्य मानमुन्मानं वालाग्रादुद्धृतो यश्शततमो भागस्तस्मादपि शततमादुद्धृतश्शततमो भाग इति तदिदमुन्मानम्। अराग्रादुद्धृतं मानमाराग्रमिति।

सूत्रान्तरमवतारयितुञ्चोदयति—**नन्वणुत्व इति**। ननूपलब्धिरपि न सर्वदेहगता किन्तु प्रदेशगतैवेत्याशङ्क्याह—**दृश्यत इति**।

***न्यायनिर्णयः***

एव शास्त्रीयस्तदपेक्षया च जीवमहत्त्वोक्तिरिति भावः। परिमाणान्तरश्रुतेरन्यविषयत्वाज्जीवस्याणुत्वं युक्तमित्युपसंहरति— **तस्मादिति**।।२१।।

गत्यादिश्रुत्यनुपपत्तेरनुमानस्य च श्रुत्यन्तरविरोधनिरासेनाणुत्वसाधकत्वमुक्तम्। इदानीं तत्रैव श्रुतिमाह— **स्वशब्देति**। चशब्दं योजयति— **इतश्चेति**। स्वशब्दं व्याकुर्वन्नितःशब्दार्थं स्फुटयति— **यत इति**। दुर्ज्ञातत्वधिया परमात्मैवाणुरिवाणुरुक्त इत्याशङ्क्याह— **प्राणेति**। वृत्तिभेदेन पञ्चधा प्राणो यस्मिन् संनिविष्टः स प्राणाधारो जीव एवाणुर्वेदितव्य उच्यते। परस्याप्राणसंबन्धादित्यर्थः। उन्मानं विभजते— **तथेति**। स्वशब्दवदित्यर्थः। उद्धृतं मानमुन्मानम्, अत्यन्तापकृष्टपरिमाणमित्यर्थः। तदुदाहरति— **वालेति**। आराग्रादुद्धृतं मानं मात्रा यस्य स जीवस्तथा।।२२।।

सूत्रान्तरार्थं शङ्कते— **नन्विति**। उपलब्धिरपि न सर्वदेहगता, किंतु प्रदेशगतेत्याशङ्क्याह— **दृश्यते चेति**। देहव्यापिकार्यान्यथानुपपत्त्या जीवो नाणुरिति चोद्यं सूत्रेण प्रत्याह— **अत इति**। परिच्छिन्नस्यापि स्वभाववशाद् व्यापि कार्यं स्यादित्यन्यथोपपत्तिं दर्शयन् दृष्टान्तं व्याचष्टे— **यथेति**। दार्ष्टान्तिकमाह— **एवमिति**। देहव्यापकत्वमात्मसंबन्धस्य[१] सर्वाङ्गीणशैत्यज्ञाने

१. 'देहव्यापकत्वगात्मसम्बन्धस्य' इति पाठः स्यात्।

**देहैकदेशस्थः सकलदेहव्यापिनीमुपलब्धिं करिष्यति। त्वक्संबन्धाच्चास्य सकलशरीरगता वेदना न विरुध्यते। त्वगात्मनोर्हि संबन्धः कृत्स्नायां त्वचि वर्तते, त्वक्च कृत्स्नशरीरव्यापिनीति।।२३।।**

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि।।२४।।

**अत्राह– यदुक्तमविरोधश्चन्दनवदिति, तदयुक्तम्, दृष्टान्तदार्ष्टान्तिकयोरतुल्यत्वात्। सिद्धे ह्यात्मनो देहैकदेशस्थत्वे चन्दनदृष्टान्तो भवति। प्रत्यक्षं तु चन्दनस्यावस्थितिवैशेष्यमेकदेशस्थत्वं सकलदेहाह्लादनं च। आत्मनः पुनः सकलदेहोपलब्धिमात्रं प्रत्यक्षं, नैकदेशवर्तित्वम्। अनुमेयं तु तदिति यदप्युच्येत। न चात्रानुमानं संभवति। किमात्मनः सकलशरीरगता वेदना त्वगिन्द्रियस्येव सकलदेहव्यापिनः सतः, किंवा विभोर्नभस इवाहोस्विच्चन्दनबिन्दोरिवाणोरेकदेशस्थस्येति संशयानतिवृत्तेरिति। अत्रोच्यते– नायं दोषः। कस्मात्? अभ्युपगमात्। अभ्युपगम्यते ह्यात्मनोऽपि चन्दनस्येव देहैकदेशवृत्तित्वमवस्थितिवैशेष्यम्। कथमित्युच्यते। हृदि ह्येष**

### *प्रकटार्थविवरणम्*

**हरिचन्दनेति**। इतश्चाणोरपि व्यापि कार्यं संभवतीत्याह— **त्वक्संबन्धाच्चेति**। त्वचः स्वरूपेणात्मसंबन्धो न प्रदेशेनेत्यभिप्रायः।

**अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि**।। दृष्टान्तदार्ष्टान्तिकयोः वैषम्यं शङ्कते— **अत्राहेत्यादिना**। अणुपरिमाणत्वादेवैकदेशवर्तित्वमनुमेयमिति न शक्यं वक्तुम्, अणुपरिमाणत्वस्य सन्दिग्धत्वादित्याह— **अनुमेयं तदित्यादिना**। अणुवादी वैषम्यं परिहरति— **अत्रोच्यत इत्यादिना**। यथा प्रत्यक्षेण चन्दनबिन्दोरेकदेशावस्थानं सिद्धम्, तथाऽऽगमादात्मनोऽप्येकदेशावस्थानं सिद्धमित्यर्थः।

### *भाष्यभावप्रकाशिका*

**त्वक्संबन्धादिति**। अयमर्थः— त्वगव्याप्यात्मसंबन्धस्सर्वाङ्गशैत्योपलब्धौ समर्थ इति। प्रादेशिकात्मसंबन्धः कथं कृत्स्नां त्वचं प्रा[व्या]प्नुयादित्यत आह— **त्वगात्मनोरिति**। त्वगवयविनिष्ठत्वात् संबन्धस्यावयविनश्चैकत्वादित्यर्थः। तथापि सर्वाङ्गगतशैत्येन त्वचः कथं संबन्ध इति तत्राह— **त्वक्चेति**।

चन्दनबिन्दोः प्रत्यक्षतो ऽल्पीयसस्त्वग्व्याप्त्या तथा कल्पना भवति। यस्य तु सन्दिग्धमणुत्वम्, सर्वाङ्गीणं च कार्यमुपलभ्यते, तस्य व्यापित्वमौत्सर्गिकमपहाय नेयं कल्पना संभवतीत्याह— **सिद्धे हीत्यादिना**। न च चन्दनबिन्दुदृष्टान्तेनाणुत्वानुमानम् प्रतिदृष्टान्तसंभवेनैकान्तिकत्वादित्याह— **न चात्रानुमानमिति**। यद्यप्यनुमानेन नावगम्यते तथाप्यागमादवगम्यत इत्याह— **अभ्युपगमादिति**।

### *न्यायनिर्णयः*

शक्तत्वाद् युक्तं प्रादेशिकस्यात्मनो व्यापि कार्यमित्युक्तेऽर्थे युक्तिं ब्रुवन्नवशिष्टं सूत्रभागं व्याचष्टे— **त्वगिति**। प्रादेशिकस्यात्मनः संबन्धः समस्तां त्वचं कथं व्याप्नुयात्, तत्राह— **त्वगात्मनोरिति**। संबन्धस्य त्वगवयविनिष्ठत्वादवयविनश्चैकत्वात् तद्व्याप्तिरित्यर्थः। तथापि कथं त्वचः सर्वाङ्गीणशैत्यसंगतिः, तत्राह— **त्वक्चेति**। अर्थापत्तेरन्यथाऽप्युपपत्तिं दृष्टान्तेनोक्तामुपसंहर्तुमितिशब्दः।।२३।।

वैषम्यं शङ्कित्वा प्रत्याह— **अवस्थितीति**। तत्र शङ्कां विवृणोति— **अत्रेति**। जीवस्याणोरपि देहव्यापिकार्यं स्यादिति दृष्टान्तेनोक्ते सतीति यावत्। अतुल्यत्वमेव व्यतिरेकेण साधयति— **सिद्धे हीति**। न चात्मनो देहैकदेशस्थत्वं प्रत्यक्षमित्युक्तदृष्टान्तासिद्धिरिति शेषः। दृष्टान्ते विशेषं दर्शयति— **प्रत्यक्षं त्विति**। अवस्थितिविशेषमेव विशदयति— **एकेति**। कार्यमपि तर्हि तथैव स्यादित्याशङ्क्योक्तम्— **सकलेति**। आत्मन्यपि तुल्यमेतदित्याशङ्क्याह— **आत्मन इति**। प्रत्यक्षतोऽल्पीयसश्चन्दनबिन्दोस्त्वग्व्याप्त्या व्यापि कार्यं युक्तम्। यस्य तु संदिग्धमणुत्वं सर्वाङ्गीणं च कार्यं तस्य व्यापित्वमौत्सर्गिकं तु हित्वा नेयं कल्पना युक्तेत्यर्थः। आत्मनो देहैकदेशस्थत्वमप्रत्यक्षमपि चन्दनबिन्दुदृष्टान्तेनाणुत्वहेतुनाऽनुमेयमिति शङ्कते— **अनुमेयमिति**। [1]संदिग्धासंदिग्धत्वेन संदिग्धं दूषयति— **नेत्यादिना**। परिहारमवतार्य व्याकरोति— **अत्रेति**। प्रत्यक्षानुमानयोरभावादात्मनो देहैकदेशस्थत्वं निरस्तमिति शङ्कते— **कथमिति**। श्रुतिमाश्रित्य सूत्रावयवेन

१. 'संदिग्धासिद्धत्वेन दूषयति' इति पाठः स्यात्।

**आत्मा पठ्यते वेदान्तेषु 'हृदि ह्येष आत्मा' (प्र.उ. ३।६), 'स वा एष आत्मा हृदि' (छा.उ. ८।३।३), 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ.उ. ४।३।७) इत्याद्युपदेशेभ्यः। तस्माद् दृष्टान्तदार्ष्टान्तिकयोरवैषम्याद् युक्तमेवैतदविरोधश्चन्दनवदिति।।२४।।**

## गुणाद्वा लोकवत्।।२५।।

**चैतन्यगुणव्याप्तेर्वाऽणोरपि सतो जीवस्य सकलदेहव्यापि कार्यं न विरुध्यते। यथा लोके मणि-प्रदीपप्रभृतीनामपवरकैकदेशवर्तिनामपि प्रभाऽपवरकव्यापिनी सती कृत्स्नेऽपवरके कार्यं करोति, तद्वत्। स्यात् कदाचिच्चन्दनस्य सावयवत्वात् सूक्ष्मावयवविसर्पणेनापि सकलदेह आह्लादयितृत्वम्, न त्वणोर्जीवस्यावयवाः सन्ति, यैरयं सकलदेहं विप्रसर्पेदित्याशङ्क्य गुणाद्वा लोकवदित्युक्तम्।।२५।।**

**कथं पुनर्गुणो गुणिव्यतिरेकेणान्यत्र वर्तेत? न हि पटस्य शुक्लो गुणः पटव्यतिरेणान्यत्र वर्तमानो दृश्यते। प्रदीपप्रभावद् भवेदिति चेत्, न; तस्या अपि द्रव्यत्वाभ्युपगमात्। निबिडावयवं हि तेजोद्रव्यं प्रदीपः। प्रविरलावयवं तु तेजोद्रव्यमेव प्रभेति। अत उत्तरं पठति–**

## व्यतिरेको गन्धवत्।।२६।।

**यथा गुणस्यापि सतो गन्धस्य गन्धवद्द्रव्यव्यतिरेकेण वृत्तिर्भवति, अप्राप्तेष्वपि कुसुमादिषु गन्धवत्सु**

### *प्रकटार्थविवरणम्*

**गुणाद्वा लोकवत्।।** सकलदेहव्यापि कार्यं मतान्तरेणाह— **गुणाद्वेति**। मतान्तरपरिग्रहे पूर्वत्रापरितोषमाह— **स्यात्कदाचिदित्यादिना**।

सूत्रान्तरमवतारयितुमुक्तमाक्षिपति— **कथं पुनरिति**। चैतन्यं न गुणिनोऽन्यत्र वर्तते, गुणत्वात्, शौक्ल्यवदित्यर्थः।

### *भाष्यभावप्रकाशिका*

अपरितोषेण पक्षान्तरप्रदर्शनार्थत्वात् सूत्रस्यापरितोषकारणमाह— **स्यात्कदाचिदिति**।

ननूभयोरपीति तेजोद्रव्यत्वे को भेद इत्यत आह— **निबिडावयवं हीति**। गन्धस्याश्रयेण सह गमनं किं प्रत्यक्षमुतानुमेयम्,

### *न्यायनिर्णयः*

समाधत्ते— **हृदीति**। 'यो वेद निहितं गुहायाम्' इत्याद्युपदेशसंग्रहार्थमादिपदम्। सिद्धे तुल्यत्वे फलितमाह— **तस्मादिति**।।२४।।

अणोरात्मनश्चैतन्यं स्वभावतोऽणुपरिमाणं देहतुल्योपलब्ध्याकारपरिणतमित्युक्त्वा पक्षान्तरमाह— **गुणाद्वेति**। प्रतिज्ञां व्याचष्टे— **चैतन्येति**। जीवस्याणुत्वे तद्गुणस्य चैतन्यस्य कुतो देहव्याप्तिः, तत्राह— **यथेति**। सूत्रस्यापरितुष्ट्या पक्षान्तरार्थत्वादपरितुष्टिहेतुमाह— **स्यादिति**। जीवस्यापि स्वावयवद्वारा सर्वदेहविप्रसर्पणमाशङ्क्य तदवयवानामचेतनत्वे तदयोगाच्चैतन्येऽपि प्रत्येकं चैतन्ये युगपदेकस्यानेकभोक्त्रधिष्ठितस्य देहस्याव्यवस्थापातात् मिलितचैतन्ये मेलनस्यावयवानतिरेकात् तेषां वा [चा]चैतन्यान्न जीवस्य स्वावयवैर्देहे विप्रसर्पणमिति मत्वाऽऽह— **न त्विति**।।२५।।

सूत्रान्तरमवतारयितुमाक्षिपति— **कथमिति**। चैतन्यं गुणत्वान्न गुणिनोऽन्यत्रेत्यत्र दृष्टान्तमाह— **न हीति**। यथा दीपस्य गुणोऽपि प्रभा तदतिरेकेणाशेषमपवरकोदरं व्याप्नोति तथा चैतन्यमात्मनो गुणोऽपि तमतिक्रम्य सर्वं देहं व्याप्नुयादतो व्यभिचारान्नानुमेति शङ्कते— **प्रदीपेति**। प्रभाया गुणत्वाभावान्नैवमित्याह— **नेति**। द्वयोरपि तेजोद्रव्यत्वे कथमवान्तरभेदः, तत्राह— **निबिडेति**। गुणत्वस्य गन्धे व्यभिचारमाह— **अत इति**। दृष्टान्तं व्याचष्टे— **यथेति**। तत्र हेतुमाह— **अप्राप्तेष्विति**। सूत्रावयवं व्याकुर्वन्

**कुसुमगन्धोपलब्धेः। एवमणोरपि सतो जीवस्य चैतन्यगुणव्यतिरेको भविष्यति। अतश्चानैकान्तिकमेतद् गुणत्वाद् रूपादिवदाश्रयविश्लेषानुपपत्तिरिति। गुणस्यैव सतो गन्धस्याश्रयविश्लेषदर्शनात्। गन्धस्यापि सहैवाश्रयेण विश्लेष इति चेत्? [1]न; यस्मान्मूलद्रव्याद् विश्लेषस्तस्य क्षयप्रसङ्गात्। अक्षीयमाणमपि तत् पूर्वावस्थातो गम्यते। अन्यथा तत् पूर्वावस्थैर्गुरुत्वादिभिर्हीयेत।**

**स्यादेतत्– गन्धाश्रयाणां विश्लिष्टानामवयवानामल्पत्वात् सन्नपि विशेषो नोपलक्ष्यते। सूक्ष्मा हि [2]गन्धपरमाणवः सर्वतो विप्रसृप्ता गन्धबुद्धिमुत्पादयन्ति नासिकापुटमनुप्रविशन्त इति चेत्? न; अतीन्द्रियत्वात् परमाणूनाम्, स्फुटगन्धोपलब्धेश्च नागकेसरादिषु। न च लोके प्रतीतिर्गन्धवद्द्रव्यमाघ्रातमिति; गन्ध एवाघ्रात**

### *प्रकटार्थविवरणम्*

**व्यतिरेको गन्धवत्॥** अनैकान्तिकत्वाभिधानेन परिहरति— **व्यतिरेको गन्धवदिति**। गन्धस्यापि पक्ष[सपक्ष]त्वान्नानैकान्तिकत्वमित्याह— **गन्धस्यापि सहैवेति**। अणुवादी परिहरति— **तन्न, यस्मादिति**। यथैकत्वं चा[यथैकतन्त्व]पचये पटस्यापक्षय:[पचय:] पूर्वपरिमाणादिहानिर्वा भवति तथा स्यादित्यर्थः। पूर्वपरिमाणादिहानिः भवत्येव, किं त्वल्पत्वान्नोपलभ्यत इत्याह— **स्यादेतदिति**। तर्हि परमाणुरूपाप्रत्यक्षत्ववत् गन्धोऽपि प्रत्यक्षो न स्यादित्याह— **नातीन्द्रियत्वादिति**। किं च भवन्नपि गन्धोपलम्भः स्फुटो न स्यात्; भवति च नागकेसरादिषु पुष्पविशेषेषु; ततो न गन्धवन्तः परमाणवः समायान्ति वाताहता इत्यर्थः। किं च द्रव्यगमनकल्पनं नानुभवारूढमपीत्याह— **न च लोक इति**। यद्यनुभवाभावेऽप्यनुमीयते, तदाऽनुभवबाध एव भवतीत्याह—

### *भाष्यभावप्रकाशिका*

न तावदनुमानाप्रवृत्तेरित्याह— **यस्मान्मूलद्रव्यादिति**। ननु विप्रसृतानामवयवानामल्पत्वात् क्षयो नानुभूयत इत्याशङ्क्य तर्ह्यनुमानविरोध इत्याह— **अक्षीयमाणमपीति**। विवादपदमवियुक्तावयवं पूर्वावस्थातो गुरुत्वाद्यपचयरहितत्वात् संप्रतिपन्नवदिति। अक्षीयमाणत्वेनानुभूयमानमपीत्यर्थः।

शङ्कते— **स्यादेतदिति**। विश्लिष्टानामल्पत्वादित्युपलक्षणम्। द्रव्यान्तरपरमाणूनामनुप्रवेशादित्यपि द्रष्टव्यम्। विश्लेषानुप्रवेशाभ्यां च सन्नपि विशेषो गुरुत्वाद्यपचयलक्षणस्सूक्ष्मत्वान्नोपलभ्यत इति भावः। ननु (नासापुटं प्रतिगता) नासापुटं प्रतिगतानां प्रत्यक्षेणागृह्यमाणत्वात्तेषामागमनमनुपपन्नमित्याशङ्क्यायोग्यत्वादग्रहणमित्याह— **सूक्ष्मा हीति**। परमाणूनां परसूक्ष्मत्वात्तद्गतरूपादिवत् गन्धस्याप्यनुपलब्धिः स्यादिति परिहरति— **नातीन्द्रियत्वादिति**। ननु परमाणुशब्देन (न) त्रसरेणुरुच्यते न परपरिकल्पित इत्याशङ्क्य

### *न्यायनिर्णयः*

दार्ष्टान्तिकमाह— **एवमिति**। परानुमाने फलितं दोषमाह— **अतश्चेति**। अतःशब्दोक्तं हेतुं स्पष्टयति— **गुणस्येति**। उक्तहेत्वसिद्धिं ब्रुवन् व्यभिचारं वारयति— **गन्धस्येति**। किमिदमनुमेयं किं वाऽध्यक्षमिति विकल्प्याद्यं प्रत्याह— **नेति**। विश्लिष्टावयवानामल्पत्वादपक्षयो न भातीत्याशङ्क्याह— **अक्षीयमाणमिति**। तथात्वेनानुभूयमानमिति यावत्। विमतमवियुक्तावयवं, पूर्वावस्थातो गुरुत्वाद्यपचयहीनत्वात्, संमतवदित्यर्थः।

हेतोरन्यथासिद्धिरिति शङ्कते— **स्यादिति**। विश्लिष्टानामल्पत्वादित्युपलक्षणम्। द्रव्यान्तराणूनामनुप्रविष्टत्वादित्यपि द्रष्टव्यम्। विश्लेषानुप्रवेशाभ्यां सन्नपि विशेषो गुरुत्वाद्यपचयरूपः सौक्ष्म्यान्नोपलक्ष्यत इत्यर्थः। नासिकापुटं प्रति गतानां गन्धवदवयवानामध्यक्षेणाग्रहादागतिरयुक्तेत्याशङ्क्यायोग्यत्वादग्रहणमित्याह— **सूक्ष्मा हीति**। परमाणुशब्देन परकीया वा परमाणवस्त्रसरेणवो वा गृह्येरन्? आद्ये तद्गतरूपादिवद् गन्धस्यापि नोपलब्धिः स्यादित्याह— **नेति**। द्वितीयं प्रत्याह— **स्फुटेति**। त्रसरेणुग्रहेऽपि नागकेसरादिष्वपि दूरेषु स्फुटगन्धधीर्भवति, न भवेन्नासिकापुटं प्रविष्टानां गन्धवतां त्रसरेणुमात्रत्वादित्यर्थः। गन्धस्याश्रयेण सह गतिरनुमेयेति प्रतिक्षिप्य प्रत्यक्षपक्षं प्रत्याह— **न चेति**। कथं तर्हि लौकिकी धीः, तत्राह— **गन्ध इति**। गन्धो नाश्रयादन्यत्र वर्तते, गुणत्वात्,

---

१. 'तन्न' इति पा.। २. गन्धवन्तः परमाणव इत्यर्थः।

**इति तु लौकिकाः प्रतियन्ति। रूपादिष्वाश्रयव्यतिरेकानुपलब्धेर्गन्धस्याप्ययुक्त आश्रयव्यतिरेक इति चेत्? न; प्रत्यक्षत्वादनुमानाप्रवृत्तेः। तस्माद् यद्यथा लोके दृष्टं तत्तथैवानुमन्तव्यं निरूपकैर्नान्यथा। न हि रसो गुणो जिह्वयोपलभ्यत इत्यतो रूपादयोऽपि गुणा जिह्वयैवोपलभ्येरन्निति नियन्तुं शक्यते।।२६।।**

## तथा च दर्शयति।।२७।।

**हृदयायतनत्वमणुपरिमाणत्वं चात्मनोऽभिधाय तस्यैव 'आ लोमभ्य आ नखाग्रेभ्यः' (छा.उ. ८।८।१, कौ.उ. ४।१९?) इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति।।२७।।**

## पृथगुपदेशात्।।२८।।

**'प्रज्ञया शरीरं समारुह्य' (कौ.उ. ३।६) इति चात्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशाच्चैतन्यगुणेनैवास्य शरीरव्यापिता गम्यते। 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' (बृ.उ. २।१।१७) इति च कर्तुः शारीरात् पृथग् विज्ञानस्योपदेश एतमेवाभिप्रायमुपोद्बलयति। तस्मादणुरात्मेति।।२८।।**

**एवं प्राप्ते ब्रूमः—**

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्।।२९।।

### *प्रकटार्थविवरणम्*

**रूपादिष्वित्यादिना**। अन्यथाऽतिप्रसङ्गोऽपि भवतीत्याह— **न हि रस इति**। तस्मादनुभवानुसारेण गन्धस्य गुणिनं विनाऽपि वृत्तेश्चैतन्यस्यापि वृत्तिसंभवादणुपरिमाणत्वेऽपि सकलशरीरवेदनानुसन्धानं न विरुध्यत इति स्थितम्।

**तथा च दर्शयति**।। **पृथगुपदेशात्**।। पुनश्चैतन्येनैव [१]सकलकलेबराकल्पनं कल्पयति सूत्राभ्याम्— **तथा चेत्यादिना**। प्राणानां चक्षुरादीनाम्; विज्ञानं ग्राहकशक्तिम्, विज्ञानेनादायेत्यपि चैतन्येनैवानुसन्धानं द्रढयतीत्यर्थः।

### *भाष्यभावप्रकाशिका*

स्फुटगन्धोपलब्धिस्तथापि न युक्तेत्याह— **स्फुटगन्ध इति**। गन्धस्याश्रयेण सहागमनं न प्रत्यक्षमित्याह— **न च लोक इति**। किं गन्धस्याश्रयेण सहागमनमुच्यते, किं वा गन्धस्याप्यागमनाभावः? प्रथमपक्षे पूर्वोक्तं दूषणमथोत्तरः कल्पः तदा प्रत्यक्षविरुद्ध इत्याह— **न, प्रत्यक्षत्वादिति**।

### *न्यायनिर्णयः*

रूपादिवदित्यनुमानान्नेदं व्यभिचारस्थलमिति शङ्कते— **रूपेति**। आश्रयेण सहैव गतिर्वा तद्गत्यभावे गन्धस्यापि तद्राहित्यं वा साध्यम्। आद्ये पूर्वोक्तदोषं मत्वा द्वितीयं प्रत्याह— **नेति**। प्रत्यक्षविरोधादनुमानानुत्थाने फलितमाह— **तस्मादिति**। तद्विरोधेऽपि तदुत्थितावतिप्रसक्तिं वक्ति— **न हीति**।।२६।।

गन्धस्य गुणिनं विनाऽपि वृत्तेश्चैतन्यस्यापि तद्योगादणुत्वेऽपि देहव्यापिकार्यसिद्धिरित्युक्तम्। इदानीं चैतन्येनैवात्मनो देहव्याप्तिरित्यत्र श्रुतिमाह— **तथा चेति**। सूत्रं व्याचष्टे— **हृदयेति**।।२७।।

चैतन्यगुणेनात्मनो देहव्याप्तौ हेत्वन्तरमाह— **पृथगिति**। सूत्रं व्याचष्टे— **प्रज्ञयेति**। विधान्तरेण सूत्रार्थमाह— **तदिति**। **एतमेवाभिप्रायं** चैतन्येनात्मनो देहव्यापित्वविषयम्; बाधकाभावं साधकभावं च परामृश्य पूर्वपक्षमुपसंहरति— **तस्मादिति**।।२८।।

१. आकल्पनं = भूषणम्। सर्वशरीरव्यापनमित्यर्थः विवक्षितः।

**तुशब्दः पक्षं व्यावर्तयति। नैतदस्त्यणुरात्मेति। उत्पत्त्यश्रवणाद्धि परस्यैव तु ब्रह्मणः प्रवेशश्रवणात् तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इत्युक्तम्। परमेव चेद् ब्रह्म जीवस्तस्माद् यावत् परं ब्रह्म तावानेव जीवो भवितुमर्हति। परस्य च ब्रह्मणो विभुत्वमाम्नातम्। तस्माद् विभुर्जीवः। तथा च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' (बृ.उ. ४।४।२२) इत्येवंजातीयका जीवविषया विभुत्ववादाः श्रौताः स्मार्ताश्च समर्थिता भवन्ति। न चाणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते। त्वक्संबन्धात् स्यादिति चेत्? न; कण्टकतोदनेऽपि सकलशरीरगतैव वेदना प्रसज्येत। त्वक्कण्टकयोर्हि संयोगः कृत्स्नायां त्वचि वर्तते, त्वक्च कृत्स्नशरीरव्यापिनीति। पादतल एव तु कण्टकनुन्नो वेदनां प्रतिलभते। न चाणोर्गुणव्याप्तिरुपपद्यते, गुणस्य गुणिदेशत्वात्। गुणत्वमेव हि गुणिनमनाश्रित्य गुणस्य हीयेत। प्रदीपप्रभायाश्च द्रव्यान्तरत्वं व्याख्यातम्।**

### *प्रकटार्थविवरणम्*

**तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्।।** सिद्धान्तसूत्रगतं तुशब्दं व्याचष्टे— **तुशब्द इत्यादिना**। न केवलं सर्वगतब्रह्माभेदात् जीवस्य स्वाभाविकं सर्वगतत्वम्, श्रुतिस्मृतिप्रामाण्यादपीत्याह— **तथा च स वा इति**। उक्तं च दोषं स्मारयति— **न चाणोरित्यादिना**। यथा पादतले कण्टकसंबन्धाद्वेदनोपलम्भः, तथा सकलशरीरे [१]तव कण्टकसंबन्धाद्वेदनोपलम्भः प्रसज्येतेत्युक्तम्। सोऽपि भवत्वित्याशङ्क्याह— **पादतल एव त्विति**। कण्टकनुन्नां[न्नाः] कण्टकतोदनिमित्तां वेदनां पादतल एव प्रतिजानन्ति। ततः प्रदेशवृत्तिरेव संयोग इति भावः। यच्चोक्तं गुणद्वारेणाणोरप्यनुसन्धानमिति तद् दूषयति— **न चाणोरिति**। यच्चोक्तं गन्धोऽपि

### *भाष्यभावप्रकाशिका*

कार्यकारणभावानुपपत्तौ सत्यां तत्सामानाधिकरण्यश्रवणाच्च परमात्मत्वमित्याह— **तादात्म्योपदेशादिति**। एवं सति महत्त्वप्रतिपादकवाक्यान्यप्युपपद्यन्त इत्याह— **तथा चेति**। तत्त्वमस्यादिप्रधानवाक्यसामर्थ्याज्जीवस्य महत्वं युक्तम् प्रतिपत्तुमणुत्व-विषयगुणभूतवाक्यानां श्रुतिलिङ्गानां च तद्विरोधे सति 'गुणमुख्यव्यतिक्रमे मुख्येन वेदसंयोग' इति न्यायेनौपाधिकविषयतोपपत्तिरिति भावः। अर्थवादवाक्यानां लौकिकादपि न्यायाद् दौर्बल्यमिति न्यायेन सकलशरीरव्यापिशैत्यानुपलब्ध्यन्यथानुपपत्तिनिमित्तमहत्त्वेनाणुत्वश्रुतीनां बाध इत्याह— **न चाणोरिति**। तथैवोपलभ्यत इति, नेत्याह— **पादतल इति**।

नन्वौष्ण्यप्रकाशयोर्गुणत्वात् दृष्टान्तबलेन चैतन्यस्य गुणत्वं स्यादित्याशङ्क्य रूपादिवद्गुणिविभागाभावान्नेदमुदाहरणमित्याह—

### *न्यायनिर्णयः*

तदनुवादेन सिद्धान्तं सूत्रयति— **एवमिति**। तदक्षरार्थमाह— **तुशब्द इति**। पक्षमनुभाष्य तद्व्यावर्तनं प्रतिजानीते— **नैतदिति**। तत्र हेत्वर्थमुक्तं स्मारयति— **उत्पत्तीति**। कार्यकारणत्वानुपपत्तौ सत्यां सामानाधिकरण्यश्रुतेश्चेति तृतीयहेत्वर्थः। जीवब्रह्मणोरभेदेऽपि प्रकृते किं जातमित्याशङ्क्य जीवो महान् ब्रह्माभिन्नत्वात् तद्वदित्याह— **परमिति**। दृष्टान्तस्य साध्यवैकल्यं 'सत्यं ज्ञान'मित्यादिश्रुत्या निराचष्टे— **परस्येति**। अनुमानफलमाह— **तस्मादिति**। जीवस्य विभुत्वे तन्महत्त्ववादिश्रुतिस्मृतिवाक्यान्यपि मुख्यार्थानि भवन्तीत्यनुमानानुग्राह्यमागममाह— **तथा चेति**। 'नित्यः सर्वगतः स्थाणु'रित्यादयः स्मार्तवादाः। तत्त्वमस्यादिप्रधानवाक्याज्जीवस्य महत्त्वम्, तदणुत्वार्थगुणभूतवाक्यानां श्रुतिलिङ्गानां च तद्विरोधादौपाधिकार्थत्वसिद्धेरिति भावः। किंच 'अर्थवादवाक्यानां लौकिकादपि न्यायाद्दौर्बल्यम्' इति न्यायेन सर्वदेहव्यापिशैत्योपलम्भान्यथानुपपत्तिनिमित्तमहत्त्वेनाणुत्वश्रुतीनां बाधः स्यादित्याह— **न चेति**। त्वगात्मसंबन्धस्य त्वग्व्यापित्वात्त्वचश्च सर्वदेहव्याप्तेस्तद्द्वारा जीवस्याणोरपि व्यापिकार्यमित्युक्तं शङ्कते— **त्वगिति**। अतिप्रसक्त्या प्रत्याह— **नेति**। पादतलमात्रे कण्टकस्य संयुक्तत्वात् कुतोऽन्यत्र वेदनेत्याशङ्क्याह— **त्वगिति**। तथापि कथं देहमात्रे वेदनाधीः, तत्राह— **त्वक्चेति**। अतिप्रसङ्गमुपसंहर्तुमितिशब्दः। अस्तु देहमात्रे वेदनाधीरित्यति-प्रसङ्गस्येष्टत्वमाशङ्क्याह— **पादेति**। यदुक्तं गुणाद्वेति, तत्राह— **न चेति**। हेतुं व्यतिरेकेण स्फोरयति— **गुणत्वमिति**। लोकवदित्युक्तं प्रत्याह— **प्रदीपेति**।

१. 'त्वक्कण्टक' इति पाठः स्यात्।

**गन्धोऽपि गुणत्वाभ्युपगमात् साश्रय एव संचरितुमर्हति। अन्यथा गुणत्वहानिप्रसङ्गात्। तथा चोक्तं द्वैपायनेन– 'उपलभ्याप्सु चेद् गन्धं केचिद् ब्रूयुरनैपुणाः। पृथिव्यामेव तं विद्यादपो वायुं च संश्रितम्' (म.भा.शा. २३२-९) इति। यदि च चैतन्यं जीवस्य समस्तं शरीरं व्याप्नुयान्नाणुर्जीवः स्यात्। चैतन्यमेव ह्यस्य स्वरूपमग्नेरिवौष्ण्यप्रकाशौ। नात्र गुणगुणिविभागो विद्यत इति। शरीरपरिमाणत्वं च प्रत्याख्यातम्। परिशेषाद् विभुर्जीवः।**

**कथं तर्ह्यणुत्वादिव्यपदेश इत्यत आह– 'तद्गुणसारत्वात्तु तद्व्यपदेशः' इति। तस्या बुद्धेर्गुणास्तद्गुणा इच्छा द्वेषः सुखं दुःखमित्येवमादयः, तद्गुणाः सारः प्रधानं यस्यात्मनः संसारित्वे संभवति, स तद्गुणसारस्तस्य भावस्तद्गुणसारत्वम्। न हि बुद्धेर्गुणैर्विना केवलस्यात्मनः संसारित्वमस्ति। बुद्ध्युपाधिधर्माध्यासनिमित्तं हि कर्तृत्वभोक्तृत्वादिलक्षणं संसारित्वमकर्तुरभोक्तुश्चासंसारिणो नित्यमुक्तस्य सत आत्मनः। तस्मात् तद्गुणसारत्वाद् बुद्धिपरिमाणेनास्य परिमाणव्यपदेशः, तदुत्क्रान्त्यादिभिश्चास्योत्क्रान्त्यादिव्यपदेशो, न स्वतः। तथा च–**

### *प्रकटार्थविवरणम्*

सपक्ष एवेति तदपि न सुस्थमित्याह— **गन्धोऽपीति**। न च प्रत्यक्षविरोधः, प्रत्यक्षेणाश्रयशून्यताया अग्रहणात्, महतां च त्रसरेणूनामनुद्भूतरूपस्पर्शानामागमनमिति स्फुटोपलम्भसंभवः। तस्माद् गन्धवन्तः पार्थिवावयवा एवागच्छन्तीति न व्यभिचारः। पार्थिवावयवगमने संवादमाह— **तथा चोक्तमिति**। पूर्वं चैतन्यस्य गुणत्वमभ्युपगम्य गुणस्य गुणिनं विहायान्यत्र गमनानुपपत्तेः सकलशरीरवेदनानुसन्धानानुपपत्तेः नाणुर्जीव इत्युक्तम्; इदानीं गुणत्वमपि नास्तीत्याह— **यदि च चैतन्यमिति**। उक्तरीत्याऽणुपरिमाणत्वं न घटते चेत् तर्हि मध्यमपरिमाणत्वं भवत्वित्यपि नाशङ्कनीयमित्याह— **शरीरपरिमाणत्वं चेति**।

परिशिष्टचोद्यांशापाकरणाय सूत्रभागमवतार्य व्याचष्टे— **कथं तर्हीत्यादिना**। "अन्तरा विज्ञानमनसी" इत्यत्रोक्तां बुद्धि

### *भाष्यभावप्रकाशिका*

**नात्रेति**। हृदयस्य भा[ह]दि हीति प्रकृतत्वात् तत्स्था बुद्धिरेव तच्छब्देनोच्यत इत्याह— **तस्या बुद्धेरिति**। ननु पारमार्थिकमेव भविष्यतीत्यत आह— **न हि बुद्धेरिति**। जीवस्याणुत्वप्रतिपादकान्यपि वाक्यानि पूर्वापरपर्यालोचनायां महत्त्वमेव गमयन्तीत्याह— **तथा च वालाग्रेति**।

### *न्यायनिर्णयः*

यत्तु व्यतिरेको गन्धवदिति, तत्राह— **गन्धोऽपीति**। निराश्रयस्यैव संचरणं तस्योक्तमित्याशङ्क्याह— **अन्यथेति**। गन्धस्याश्रयनियमे युक्तिमुक्त्वा वृद्धसंमतिमाह— **तथा चेति**। न चाध्यक्षविरुद्धौ युक्त्यागमौ, तेनाश्रयशून्यत्वाग्रहात्, महतां च त्रसरेणूनामनुद्भूतरूपस्पर्शानामागतिरिति स्फुटोपलम्भसंभवान्मूलद्रव्ये चाविशेषोऽवयवान्तरयोगादिति भावः। चैतन्यस्य गुणत्वमुपेत्य गुणस्य गुणिनं विनाऽन्यत्रागतेः सर्वदेहव्यापिकार्यायोगान्नाणुर्जीव इत्युक्तम्। इदानीं न गुणत्वमपि तस्येत्याह— **यदीति**। चैतन्यव्याप्तौ जीवाणुत्वासिद्धिं ब्रुवतो वैयधिकरण्यमित्याह— **चैतन्यमिति**। औष्ण्यप्रकाशयोर्गुणत्वाच्चैतन्यस्य स्वरूपत्वे नोदाहरणतेत्याशङ्क्य रूपादिवद् गुणगुणित्वाभावान्नैवमित्याह— **नात्रेति**। औष्ण्यप्रकाशावग्निश्च सप्तम्यर्थः। औष्ण्याद्यतिरिक्ताग्निस्वरूपाभावं हेतुं कर्तुमितिशब्दः। जीवस्याणुत्वं न चेदस्तु मध्यमपरिमाणत्वं, नेत्याह— **शरीरेति**। परिमाणद्वयायोगे परिशिष्टमाह— **परिशेषादिति**।

विभुत्वे जीवस्याणुत्वादिव्यपदेशासिद्धिरित्युक्तमनुस्मारयति— **कथमिति**। तदुत्तरत्वेन सूत्रावयवं पातयति— **अत इति**। 'अभ्युपगमाद्धृदि हि' इति हृदयस्य प्रकृतत्वात् तन्निष्ठा बुद्धिरेवात्र तच्छब्देत्यक्षरार्थमाह— **तस्या इति**। पदार्थमुक्त्वा समासमाह— **तद्गुणा इति**। पारमार्थिकमात्मनः संसारित्वं किं बुद्धिगुणैरित्याशङ्क्याह— **न हीति**। असङ्गत्वेनापरिणामित्वं सूचयति— **केवलस्येति**। बुद्धिधर्माणामात्मगतत्वासिद्धेः सांख्यवदात्मनः संसारित्वायोगमाशङ्क्याह— **बुद्धीति**। आत्मनो बुद्धितद्धर्माध्यासद्वारा संसारित्वेऽपि प्रकृतेऽणुत्वादिवादे किं जातमित्याशङ्क्याह— **तस्मादिति**। किंच जीवस्याणुत्ववादीनि यानि वाक्यान्युक्तानि तान्यपि

**'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' (श्वे.उ. ५।९) इत्यणुत्वं जीवस्योक्त्वा तस्यैव पुनरानन्त्यमाह। तच्चैवमेव समञ्जसं स्याद् यद्यौपचारिकमणुत्वं जीवस्य भवेत्, पारमार्थिकं चानन्त्यम्। न ह्युभयं मुख्यमवकल्पेत। न चानन्त्यमौपचारिकमिति शक्यं विज्ञातुम्, सर्वोपनिषत्सु ब्रह्मात्मभावस्य प्रतिपिपादयिषितत्वात्। तथेतरस्मिन्नप्युन्माने 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वे.उ. ५।८) इति च बुद्धिगुणसंबन्धेनैवाराग्रमात्रतां शास्ति, न स्वेनैवात्मना। 'एषोऽणुरात्मा चेतसा वेदितव्यः (मु.उ. ३।१।९) इत्यत्रापि न जीवस्याणुपरिमाणत्वं शिष्यते, परस्यैवात्मनश्चक्षुराद्यनवगाह्यत्वेन ज्ञानप्रसादगम्यत्वेन च प्रकृतत्वात्। जीवस्यापि च मुख्याणुपरिमाणत्वानुपपत्तेः। तस्माद् दुर्ज्ञानत्वाभिप्रायमिदमणुत्ववचनमुपाध्यभिप्रायं वा द्रष्टव्यम्। तथा 'प्रज्ञया शरीरं समारुह्य' (कौ.उ. ३।६) इत्येवंजातीयकेष्वपि भेदोपदेशेषु बुद्ध्यैवोपाधिभूतया जीवः शरीरं समारुह्येत्येवं योजयितव्यम्। व्यपदेशमात्रं वा, शिलापुत्रकस्य**

### *प्रकटार्थविवरणम्*

तच्छब्देन परामृशति। परोपाधिकमणुत्वम्, स्वतस्त्वानन्त्यमित्यत्र श्रुतिसंमतिमाह— **तथा चेति**। नन्वणुत्वानन्त्यश्रुत्योर्विरोधे किमित्यानन्त्यमेवामुख्यं न भवतीत्याशङ्क्याह— **न चानन्त्यमिति**। 'सोऽयं देवदत्तः' इतिवत् ''तत्त्वमसि'' इति त्वमर्थोद्देशेनानन्तब्रह्मभावस्य विधित्सितत्वात् विधित्सितानन्त्यविरोधात् उद्देश्यगतमेवाणुत्वमविवक्षितमिति भावः। द्वितीयमुन्मानं दूषयति— **तथेतरस्मिन्नपीति**। **बुद्धेर्गुणेनेति**। बुद्धिगुणसन्निधानेनात्मनि मिथ्यागुणान्तरमुत्पद्यते। तेनात्मगुणेन चोभयोः तादात्म्येनाराग्रपरिमाणोऽपकृष्टश्च दृष्ट इत्यर्थः। आराग्रपरिमाणत्वं चाल्पत्वाभिप्रायम्, न तु परमाणुसमानपरिमाणार्थम्; यतः बुद्धेरपि भौतिकत्वे मध्यमपरिमाणत्वमेवाभ्युपगम्यते। यच्चोक्तम्— स्वशब्दात् इति, तद् दूषयति— **एषोऽणुरात्मेति**। यच्च सूत्रद्वयेनाणोरेव चैतन्यगुणेन शरीरव्यापकत्वमित्युक्तं तद् दूषयति— **तथा प्रज्ञयेति**। प्रज्ञाशब्देन चैतन्यपरिग्रहेऽपि व्यपदेशमात्रमुपचारमात्रं वा द्रष्टव्यमित्यर्थः। ननु गुणगुणिभावेन

### *भाष्यभावप्रकाशिका*

ननु दुर्ज्ञानत्वज्ञापकात् प्रकरणाच्छ्रुतेः प्राबल्यादणुत्वमङ्गीकरणीयमिति चेत्, तर्हि मुख्यमणुत्वं किं वौपचारिकमिति। आद्यपक्षोऽनुपपन्न इत्याह— **जीवस्यापीति**। कथन्तर्ह्यणुत्वश्रुतिरित्यत आह— **तस्मादिति**। नन्वेच्छे(?) अतिसूक्ष्मे वाऽणुशब्दः प्रवर्तत इत्यत आह— **उपाध्यभिप्रायं वेति**। ननु प्रज्ञाशब्दश्चैतन्ये प्रसिद्ध इत्यत आह— **व्यपदेशमात्रं वेति**। ननु मुख्यं कस्मान्न भवेदित्यत

### *न्यायनिर्णयः*

पौर्वापर्यपर्यालोचनायां महत्त्वमेव तस्य गमयन्तीति मत्वोन्मानश्रुतिं प्रत्याह— **तथा चेति**। अणुत्वे च महत्त्वे च श्रुते किमित्युभयं नेष्टमित्याशङ्क्यान्यतरद्वा द्वयमपि वा तत्त्वम्? आद्येऽपि महत्त्वस्याणुत्वस्य वा वस्तुतेति विकल्प्य प्रथममङ्गीकुर्वन्नाह— **तच्चेति**। द्वयमपि तत्त्वमपि पक्षं विरोधेन प्रत्याह— **न हीति**। कल्पान्तरं निराह— **न चेति**। तत्त्वमसीत्यत्र त्वमर्थोद्देशेनानन्तब्रह्मभावस्य विधित्सितत्वाद् विधित्सितानन्त्यविरोधादुद्देश्यस्थमणुत्वमविवक्षितमिति भावः। उन्मानान्तरं प्रत्याह— **तथेति**। बुद्ध्यध्यासेन तद्गुणेनात्मन्यध्यस्तेन तस्मिन्मिथ्यागुणान्तरमुत्पद्यते, तेनात्मगुणेनाराग्रपरिमाणोऽपकृष्टश्च जीवो दृष्टः; वस्तुतस्तु नायं गुणाधारो न चापकर्षवानित्यर्थः। श्रुतेस्तात्पर्यमाह— **बुद्धीति**। यत्तु स्वशब्दादणुत्वं, तद् दूषयति— **एष इति**। दुर्ज्ञानत्वज्ञापकप्रकरणापेक्षया श्रुतेरेव प्राबल्यादणुत्वमित्याशङ्क्य काल्पनिकं तदिष्टं, वास्तवमयुक्तमित्याह— **जीवस्येति**। परमात्मदृष्टान्तार्थोऽपिशब्दः। तदभिन्नत्वादित्युक्तो हेतुः। परस्य प्रकरणिनो विभुत्वात् तदभिन्नत्वाच्च जीवस्य न चेदणुत्वं तर्हि कथमणुत्वश्रुतिः, तत्राह— **तस्मादिति**। अणुशब्दस्यात्यन्तसूक्ष्मे प्रयोगात् कथमुक्तार्थतेत्याशङ्क्याह— **उपाधीति**। यत्तु 'पृथगुपदेशा'दिति, तत्राह— **तथेति**। यथा स्वशब्दोन्माने जीवस्य नाणुत्वमावेदयतस्तथा पृथगुपदेशोऽपि [न] तस्याणोरेव चैतन्यस्य देहव्याप्तिमाहेत्यर्थः। समारुह्य वागादिना नामाद्याप्नोतीति शेषः। प्रज्ञाशब्दस्य चैतन्यार्थत्वात् कुतो बुद्धिविषयतेत्याशङ्क्याह— **व्यपदेशेति**। गुणगुणित्वेन तस्य मुख्यत्वे किमित्यौपचारिकत्वं,

**शरीरमित्यादिवत्। न ह्यत्र गुणगुणिविभागोऽपि विद्यत इत्युक्तम्। हृदयायतनत्ववचनमपि बुद्धेरेव तदायतनत्वात्। तथोत्क्रान्त्यादीनामप्युपाध्यायत्ततां दर्शयति– 'कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति, स प्राणमसृजत' (प्र.उ. ६।३,४) इति। उत्क्रान्त्यभावे हि गत्यागत्योरप्यभावो विज्ञायते। न ह्यनपसृप्तस्य देहाद् गत्यागती स्याताम्। एवमुपाधिगुणसारत्वाज्जीवस्याणुत्वादिव्यपदेशः, प्राज्ञवत्। यथा प्राज्ञस्य परमात्मनः सगुणेषूपासनेषूपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशः– 'अणीयान्व्रीहेर्वा यवाद्वा' (छा.उ. ३।१४।३) 'मनोमयः प्राणशरीरः..... सर्वगन्धः सर्वरसः' (छा.उ. ३।१४।२) 'सत्यकामः सत्यसंकल्पः' (छा.उ. ८।१।५) इत्येवंप्रकारस्तद्वत्।।२९।।**

**स्यादेतत्– यदि बुद्धिगुणसारत्वादात्मनः संसारित्वं कल्प्येत, ततो बुद्ध्यात्मनोर्भिन्नयोः संयोगावसानमवश्यंभावीत्यतो बुद्धिवियोगे सत्यात्मनो विभक्तस्यानालक्ष्यत्वादसत्त्वमसंसारित्वं वा प्रसज्येतेति। अत उत्तरं पठति–**

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्।।३०।।

**नेयमनन्तरनिर्दिष्टदोषप्राप्तिराशङ्कनीया। कस्मात्? यावदात्मभावित्वाद् बुद्धिसंयोगस्य। यावदयमात्मा संसारी भवति, यावदस्य सम्यग्दर्शनेन संसारित्वं न निवर्तते, तावदस्य बुद्ध्या संयोगो न शाम्यति। यावदेव**

### *प्रकटार्थविवरणम्*

मुख्यार्थत्वे संभवति किमित्युपचार इत्याशङ्क्याह— **न ह्यत्रेति**। 'विज्ञानघन एवे'त्यवधारणादित्यर्थः। अन्यदपि पूर्वोक्तं दूषयति— **हृदयायतनत्वेत्यादिना**। "प्राज्ञवत्" इति सौत्रदृष्टान्तं विवृणोति— **यथेति**।

उत्तरसूत्र[निरस्या]शङ्कामाह— **स्यादेतदिति। यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्**।। सूत्रं योजयति— **नेयमित्यादिना**।

### *भाष्यभावप्रकाशिका*

आह— **न ह्यत्रेति**। मा भूदुत्क्रान्तिस्तथापि गत्यागती कस्मान्न भवेतामित्यत आह— **उत्क्रान्त्यभावे हीति**।

कथमसत्त्वं स्वरूपेण विद्यमानत्वादित्यत आह— **असंसारित्वं वेति**। अत्र बुद्धिसंयोगस्य विनाशित्वे तत्त्वज्ञानस्य वैयर्थ्यं किं वातपतस्तस्याहन्तुकतया[वाऽन्तवतस्तस्यागन्तुकतया] संसारस्यादिमत्त्वादकृताभ्यागमादिदोषप्रसङ्ग इति। तदुभयमपि नास्तीत्याह— **यावदयमात्मेत्यादिना**। ननु संसारनिवृत्युत्तरकालमपि जीवसु निवार्हकभवा[1] बुद्धिसंयोगोऽभ्युपगन्तव्य इत्यत्राह—

### *न्यायनिर्णयः*

तत्राह— **न हीति**। अत्रेति चैतन्यात्मनोरुक्तिः। उक्तं 'यदि तु चैतन्यं जीवस्येत्यादौ' इति शेषः। यत्तु 'तथा च दर्शयती'ति, तत्राह— **हृदयेति**। यच्चोत्क्रान्त्यादिश्रुतेर्जीवोऽणुरिति, तत्राह— **तथेति**। इतीक्षित्वेति शेषः। यत्तु स्वात्मना चोत्तरयोरिति, तत्राह— **उत्क्रान्तीति**। तत्र हेतुमाह— **न हीति**। दार्ष्टान्तिकमुपसंहरति— **एवमिति**। दृष्टान्तमादाय व्याचष्टे— **प्राज्ञवदिति**। उक्तदृष्टान्तानुसारेण जीवस्यापि बुद्धिगुणसारत्वादणुत्वादिव्यपदेश इत्याह— **तद्वदिति**।।२९।।

सूत्रान्तरनिरस्यां शङ्कामाह—**स्यादेतदिति**। कथमसत्त्वं स्वरूपेण सत्त्वादित्याशङ्क्याह—**असंसारित्वं वेति**। सूत्रमवतारयति— **अत इति**। न दोष इति प्रतिज्ञात्वेन योजयति—**नेयमिति**। प्रश्नपूर्वकं हेतुमाह—**कस्मादिति**। बुद्धियोगस्यानाशित्वे तत्त्वधीवैयर्थ्यं वा तस्यान्तवत्त्वेनागन्तुकतया संसारस्यादिमत्त्वादकृतागमादिप्रसङ्गो वा? तदुभयमपि नास्तीति हेतुं विवृणोति—**यावदिति**। तदेव स्पष्टयति— **यावदस्येति**। संसारनिवृत्त्युत्तरकालमपि जीवस्वरूपनिर्वाहकत्वेन बुद्धियोगोऽभ्युपगन्तव्य इत्याशङ्क्याह—

१. न्यायनिर्णयानुसारेणात्र पाठशुद्धिर्ज्ञेया।

**चायं बुद्ध्युपाधिसंबन्धस्तावज्जीवस्य जीवत्वं संसारित्वं च। परमार्थतस्तु न जीवो नाम बुद्ध्युपाधिसंबन्ध-परिकल्पितस्वरूपव्यतिरेकेणास्ति। न हि नित्यमुक्तस्वरूपात् सर्वज्ञादीश्वरादन्यश्चेतनो धातुर्द्वितीयो वेदान्तार्थ-निरूपणायामुपलभ्यते। 'नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता' (बृ.उ. ३।७।२३), 'नान्यदतोऽस्ति द्रष्टृ श्रोतृ मन्तृ विज्ञातृ' (बृ.उ. ३।८।११), 'तत्त्वमसि' (छा.उ. ६।८।७), 'अहं ब्रह्मास्मि' (बृ.उ. १।४।१०) इत्यादिश्रुतिशतेभ्यः। कथं पुनरवगम्यते यावदात्मभावी बुद्धिसंयोग इति? तद्दर्शनादित्याह। तथा हि शास्त्रं दर्शयति– 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव' (बृ.उ. ४।३।७) इत्यादि। तत्र विज्ञानमय इति बुद्धिमय इत्येतदुक्तं भवति। प्रदेशान्तरे 'विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' (बृ.उ. ४।४।५) इति विज्ञानमयस्य मनआदिभिः सह पाठात्। बुद्धिमयत्वं च तद्गुणसारत्वमेवाभिप्रेयते। यथा लोके 'स्त्रीमयो देवदत्त' इति स्त्रीरागादिप्रधानोऽभिधीयते, तद्वत्। 'स समानः सन्नुभौ लोकावनुसंचरति' इति च लोकान्तरगमनेऽप्यवियोगं बुद्ध्या दर्शयति। केन समानः? तयैव बुद्ध्येति गम्यते, संनिधानात्। तच्च दर्शयति–'ध्यायतीव लेलायतीव' (बृ.उ. ४।३।७) इति। एतदुक्तं भवति–नायं स्वतो ध्यायति, नापि चलति, ध्यायन्त्यां बुद्धौ ध्यायतीव, चलन्त्यां बुद्धौ चलतीवेति। अपि च मिथ्याज्ञानपुरःसरोऽयमात्मनो बुद्ध्युपाधिसंबन्धः। न च मिथ्याज्ञानस्य**

### *प्रकटार्थविवरणम्*

एवं तावत् श्रुत्यवष्टम्भेन बुद्ध्यवियोगमुक्त्वा, अधुना बुद्धिसंबन्धे कारणस्वभावपर्यालोचनयाऽपि न प्राक् सम्यग्ज्ञानाद् बुद्धि-वियोग इत्याह— **अपि च मिथ्याज्ञानपुरःसर इति**। ज्ञानादेवानाद्यनिर्वाच्यजीवोपाध्यज्ञाननिवृत्तौ बुद्धिवियोग इत्यत्र श्रुतिं प्रमाणयति—

### *भाष्यभावप्रकाशिका*

**यावदेव चेति**। ननु परमार्थत एव व्यतिरिक्तः किन्न स्यादिति तत्राह— **न हि नित्येति**।

यावदात्मभावित्वमत्र कथमवगम्यत इत्याकाङ्क्षायां तद् दर्शयितुं वाक्यस्यार्थं दर्शयति— **तत्र विज्ञानमय इति**। ननु परिच्छिन्नस्यैव गमनं दृष्टमात्मनस्तदभावात् कथं गमनमित्यत आह— **तच्च दर्शयतीति**। न केवलं यावत्संसार्यात्मभावित्वमागमत एव, किन्तूपपत्तितोऽपीत्याह— **अपि चेति**।

### *न्यायनिर्णयः*

**यावदेव चेति**। जीवस्य वस्तुत्वान्नोपाधियोगापेक्षेत्याशङ्क्य वाच्यस्य लक्ष्यस्य वा वस्तुत्वमिति विकल्प्याद्यं दूषयति— **परमार्थेति**। द्वितीयं निराह— **न हीति**। लक्ष्यस्य ब्रह्माव्यतिरेके वेदान्तार्थनिरूपणायामित्यत्र सूचितं हेतुमाह— **नेत्यादिना**। सूत्रावयवमाकाङ्क्षाद्वारा निक्षिपति— **कथमिति**। तस्यार्थमाह— **तथा हीति**। 'बुद्धिं तु सारथिं विद्धी'त्यादि ग्रहीतुमादिपदम्। कथमत्र यावदात्मभावित्वधीरित्याशङ्क्य तदर्थं विज्ञानमयपदार्थमाह— **तत्रेति**। विज्ञानस्य ब्रह्मत्वात् तन्मयत्वं तत्कार्यत्वं तदात्मत्वं वेत्याशङ्क्याह— **प्रदेशान्तर इति**। विज्ञानं बुद्धिरस्तु, तथापि कथमात्मनस्तद्विकारत्वं मयटो विकारार्थत्वात्, तत्राह— **बुद्धीति**। कथं विकारार्थस्य मयटोऽर्थान्तरं शङ्क्यते, तत्राह— **यथेति**। इह लोके बुद्ध्यवियोगेऽप्यात्मनो लोकान्तरसंचारे तद्वियोगः स्यादित्याशङ्क्याह— **स समान इति**। नात्र बुद्ध्या सहावियोगो भातीत्याशङ्क्याकाङ्क्षाद्वारा समानपदं पूरयति— **केनेति**। येन केनापि समानत्वे कुतो विशेषोक्तिः, तत्राह— **संनिधानादिति**। 'योऽयं विज्ञानमयः प्राणेषु' इत्यत्रेति शेषः। परिच्छिन्नस्यैव गतेरात्मनस्तदभावात् कथमुभयलोकसंचारित्वं, तत्राह— **तच्चेति**। बुद्धिवदात्मनो ध्यानादियोगित्वमत्र भातीवशब्दस्योपमार्थत्वादित्याशङ्क्याह— **एतदिति**। इवशब्दस्याभासार्थ-त्वान्नोपमार्थतेति भावः। न केवलमागमाद् बुद्धिसंबन्धस्य यावत्संसार्यात्मभावित्वं किंतु युक्तेरपीत्याह— **अपि चेति**। मिथ्याज्ञानस्य सत्येव संसारिणि कर्मणा निवृत्तेस्तन्निमित्तबुद्धिसंबन्धस्यापि तत्सिद्धेर्न यावदात्मभावितेत्याशङ्क्याह— **न चेति**। सम्यग्ज्ञानादेव

**सम्यग्ज्ञानादन्यत्र निवृत्तिरस्तीत्यतो यावद् ब्रह्मात्मतानवबोधस्तावदयं बुद्ध्युपाधिसंबन्धो न शाम्यति। दर्शयति च– 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वाऽतिमृत्यमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे.उ. ३।८) इति।।३०।।**

**ननु सुषुप्तप्रलययोर्न शक्यते बुद्धिसंबन्ध आत्मनोऽभ्युपगन्तुम्। 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' (छा.उ. ६।८।१) इति वचनात्। कृत्स्नविकारप्रलयाभ्युपगमाच्च। तत् कथं यावदात्मभावित्वं बुद्धिसंबन्धस्येति। अत्रोच्यते–**

**[१]पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्।।३१।।**

**यथा लोके पुंस्त्वादीनि बीजात्मना विद्यमानान्येव बाल्यादिष्वनुपलभ्यमानान्यविद्यमानवदभिप्रेयमाणानि यौवनादिष्वाविर्भवन्ति, नाविद्यमानान्युत्पद्यन्ते, षण्ढादीनामपि तदुत्पत्तिप्रसङ्गात्, एवमयमपि बुद्धिसंबन्धः शक्त्यात्मना विद्यमान एव सुषुप्तप्रलययोः पुनः प्रबोधप्रसवयोराविर्भवति। एवं ह्येतद् युज्यते। न ह्याकस्मिकी कस्यचिदुत्पत्तिः संभवति, अतिप्रसङ्गात्। दर्शयति च सुषुप्तादुत्थानमविद्यात्मकबीजसद्भावकारितम्– 'सति संपद्य न विदुः सति संपद्यामह इति, त इह व्याघ्रो वा सिंहो वा' (छा.उ. ६।९।२,३) इत्यादिना।**

***प्रकटार्थविवरणम्***

**दर्शयति चेति।** आदित्यवर्णमिति ज्योतीरूपम्; तमसः अज्ञानात् परस्तादिति अज्ञानासंस्पृष्टमित्यर्थः।

यावदात्मभावित्वादित्यस्यासिद्धिं शङ्कते— **ननु सुषुप्तेति।**

**पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्।।** अनभिव्यक्तरूपेण सुषुप्तादावप्यस्ति बुद्धिसंबन्धः, ततो नासिद्धो हेतुरित्याह— **पुंस्त्वादिवत्त्विति।**

***भाष्यभावप्रकाशिका***

**आदित्यवर्णमिति** प्रकाशरूपमित्यर्थः। **तमस** इत्यविद्याया इत्यर्थः।

अनुशयबीजं पूर्वपक्षी प्रकटयति— **ननु सुषुप्तेति।**

न विदुरित्यविद्यात्मकबीजसद्भावो दर्शितः।

***न्यायनिर्णयः***

मिथ्याज्ञाननिवृत्तिरित्यत्र मानमाह— **दर्शयतीति।** आदित्यवर्णं प्रकाशरूपं तमसः परस्तादविद्यासंस्पर्शशून्यमित्यर्थः।।३०।।

यावदात्मभावित्वहेतोरसिद्धिं शङ्कते— **नन्विति।** तत्र बुद्धिसंबन्धासंभवे हेतुमाह— **सतेति।** किंच कार्यत्वाद् बुद्धेरात्मनस्तद्योगस्य च तथात्वात्, तत्र नाशध्रौव्यादसिद्धिर्ध्रुवेत्याह— **कृत्स्नेति।** परिहारत्वेन सूत्रमवतारयति— **अत्रेति।** तत्र दृष्टान्तं व्याचष्टे— **यथेति।** पुंस्त्वं पुरुषस्य प्रजोत्पादनसामर्थ्यम्। आदिशब्देन स्त्रियाः स्त्रीत्वम्, बीजस्याङ्कुरजनकत्वमित्यादि गृहीतम्। बाल्यादिष्वित्यादिपदेनावस्थाविशेषा गृह्यन्ते। यौवनादिष्वित्यत्रापि, स एवादिशब्दार्थः। कस्मादविद्यमानवदिष्टानामाविर्भावः, अविद्यमानानामेव पुनरुत्पत्तिः किं न स्यात्? तत्राह— **नेति।** तैलकलुषितबीजादिग्रहार्थमादिपदम्। एतेन तुशब्दो व्याख्यातः। 'अस्य सत' इति दार्ष्टान्तिकं व्याचष्टे— **एवमिति।** अभिव्यक्तियोगादिति व्याकरोति— **एवं हीति।** तदेव व्यतिरेकतः स्फोरयति— **न हीति।** कारणं विनाऽपि कार्यं स्यादित्यतिप्रसङ्गः। स्वापे बीजात्मना सतो बुद्धियोगस्य प्रबोधे व्यक्तिरित्यत्र मानमाह— **दर्शयतीति।** न विदुरित्यविद्यात्मकबीजसत्त्वोक्तिः। तत्कृतत्वं स्वापादुत्थानस्य कथयति— **त इति।** पूर्वबोधः सप्तम्यर्थः। स्वापे लये च बुद्धियोगस्य बीजात्मनाऽवस्थाने फलितमाह— **तस्मादिति।।**३१।।

---

१. 'पुंस्त्वादिवत् तु अस्य' इति च्छेदः।

**तस्मात् सिद्धमेतद् यावदात्मभावी बुद्ध्याद्युपाधिसंबन्ध इति।।३१।।**

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा।।३२।।**

**तच्चात्मन उपाधिभूतमन्तःकरणं मनो बुद्धिर्विज्ञानं चित्तमिति चानेकधा तत्र तत्राभिलप्यते। क्वचिच्च वृत्तिविभागेन संशयादिवृत्तिकं मन इत्युच्यते, निश्चयादिवृत्तिकं बुद्धिरिति। तच्चैवंभूतमन्तःकरणमवश्यमस्तीत्यभ्युपगन्तव्यम्। अन्यथा ह्यनभ्युपगम्यमाने तस्मिन् नित्योपलब्ध्यनुपलब्धिप्रसङ्गः स्यात्। आत्मेन्द्रियविषयाणामुपलब्धिसाधनानां संनिधाने सति नित्यमेवोपलब्धिः प्रसज्येत। अथ सत्यपि हेतुसमवधाने फलाभावस्ततो नित्यमेवानुपलब्धिः प्रसज्येत। न चैवं दृश्यते। अथवाऽन्यतरस्यात्मन इन्द्रियस्य वा शक्तिप्रतिबन्धोऽभ्युपगन्तव्यः। न चात्मनः शक्तिप्रतिबन्धः संभवति, अविक्रियत्वात्। नापीन्द्रियस्य। न हि तस्य पूर्वोत्तरयोः क्षणयोरप्रतिबद्ध-**

### *प्रकटार्थविवरणम्*

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा**।। ननु मनो नाम द्रव्यं नास्तीति **बौद्धाः**। बुद्धिश्च द्रव्यं न भवतीति **वैशेषिकाः** प्रतिपेदिरे, ''बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्'' इति सूत्रात्। अतः कथं मनआद्यवियोगः साध्यत इत्याशङ्क्याह— **तच्चात्मन इति**। ''बुद्धेर्गुणेन'' ''बुद्धिश्च नेङ्गते तत्र'' ''विज्ञानेन विज्ञानमादाय'' ''मनसा ह्येव पश्यति'' ''चेतसा वेदितव्यः'' इत्यादिप्रदेशेषु गुणवत्त्वक्रियावत्त्वादिद्रव्यलिङ्गवत्तया मनोबुद्ध्यादिशब्दवाच्यमन्तःकरणं सिद्धम्। अतः कथं बुद्धिर्द्रव्यं न भवति, मनो वा नास्तीति शक्यं वदितुमित्यर्थः। अन्तःकरणस्यैवावान्तरविभागमाह— **क्वचिच्चेति**। यद्यपि नित्यानुभवगम्यं मन इति स्वरहस्यम्, तथापि तदपलापिनं प्रति युगपत् ज्ञानानुत्पत्त्यन्यथानुपपत्तिगम्यमिति सूत्रार्थमाह— **तच्चैवंभूतमिति**। **नित्यमेवोपलब्धिरिति**। कदलीफलादौ हस्तगृहीते युगपद्रूपगन्धस्पर्शाद्युपलब्धिः प्रसज्येतेत्यर्थः। नित्यानुपलब्धिप्रसङ्गं विवृणोति— **अथ सत्यपीति**। ननु करतलानलसंयोगे कदाचित् स्फोटो न जायत इत्येतावता सदैव न भविष्यतीति किं नियन्तुं पार्यत इत्याशङ्क्य तद्वदेव दोषप्रतिबन्धो वक्तव्य इत्याह— **अथ वेति**। अस्तु तर्हि प्रतिबन्धकल्पनमित्याशङ्क्याह— **न चात्मन इति**। अविक्रियत्वादात्मनः शक्तिरेव नास्ति, कुतस्तरां प्रतिबन्धवार्तावतार इति भावः। तर्हीन्द्रियस्य शक्तिमत्त्वादस्तु प्रतिबन्ध इत्याशङ्क्याह— **नापीति**। न

### *भाष्यभावप्रकाशिका*

इदानीं बुद्धिसद्भावे प्रमाणं वक्तुं तद्भेदानाह— **तच्चेति**। ननु कारणे सति कार्यं जायत एवेति नियमाभावादविरुद्धमित्याशङ्क्याह— **अथ सत्यपीति**। अस्यैव पुष्कलकारणत्वादित्यर्थः। नन्वन्तःकरणस्याभ्युपगमेऽपि समानोऽयं प्रसङ्गः। अथादृष्टविपाकस्य कादाचित्कत्वात् सामर्थ्यप्रतिबन्धाप्रतिबन्धाभ्यामन्तःकरणस्य नायं प्रसङ्गः, तर्ह्यसत्येवान्तःकरण आत्मनो वेन्द्रियाणां च[वा] तौ स्याताम्। किमन्तर्गडुनाऽन्तःकरणेनेति चोदयति— **अथवेति**। वाशब्देन सिद्धान्तन्निवर्तयति। इदानीं सिद्धान्त्याह— **न**

### *न्यायनिर्णयः*

बुद्धिसद्भावे मानमाह— **नित्येति**। तद् व्याख्यातुमन्तःकरणगतानवान्तरभेदानाह— **तच्चेति**। **तत्र तत्र** 'मनसा ह्येव पश्यति मनसा शृणोति', 'बुद्धेर्गुणेनात्मगुणेन चैव', 'बुद्धिश्च न विचेष्टते', 'विज्ञानेन विज्ञानमादाय', 'विज्ञानं यज्ञं तनुते', 'चेतसा वेदितव्यः' इत्यादिप्रदेशेष्वित्यर्थः। एकमेवान्तःकरणं कथमनेकधोच्यते, तत्राह— **क्वचिच्चेति**। अभिमानप्रधानोऽहंकारो विज्ञानम्। चिदाकारप्रधानं चित्तम्। अथ यथोक्तमन्तःकरणमेव नास्ति; न च श्रुत्या तदस्तित्वं, तत्प्रामाण्येऽपि केषांचिद्विसंवादात्, तत्राह— **तच्चेति**। तत्र हेतुत्वेन सूत्रावयवं व्याकरोति— **अन्यथेति**। नित्योपलब्धिप्रसङ्गं प्रकटयति— **आत्मेति**। कारणे सति कार्यं भवत्येवेत्यनियमात्र नित्योपलब्धिप्रसक्तिरिति शङ्कते— **अथेति**। तर्हि नित्यमेवानुपलब्धिः स्यादपेक्षणीयान्तराभावादित्याह— **तत इति**। प्रसङ्गस्येष्टत्वमाशङ्क्याह— **न चेति**। आत्मेन्द्रियार्थसांनिध्येऽपि कदाचिदेव ज्ञानोदयादन्तःकरणमस्तीत्युक्तम्। इदानीं तदनुपगमे दोषान्तरापत्तेरपि तदस्तीति ब्रुवन्नन्यतरनियमो वेत्येतद् योजयति— **अथवेति**। अन्यतरस्य शक्तिप्रतिबन्धे का हानिः;

**शक्तिकस्य सतोऽकस्माच्छक्तिः प्रतिबध्येत। तस्माद् यस्यावधानानवधानाभ्यामुपलब्ध्यनुपलब्धी भवतस्तन्मनः। तथा च श्रुतिः– 'अन्यत्रमना[१] अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति, मनसा ह्येव पश्यति मनसा शृणोति' (बृ.उ. १।५।३) 'इति। कामादयश्चास्य वृत्तय इति दर्शयति– 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव' (बृ.उ. १।५।३) इति। तस्माद् युक्तमेतत् 'तद्गुणसारत्वात् तद्व्यपदेशः' इति।।३२।।**

।।इति त्रयोदशमुत्क्रान्त्यधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

।।कर्त्रधिकरणम्।।

**कर्ता शास्त्रार्थवत्त्वात्।।३३।। विहारोपदेशात्।।३४।। उपादानात्।।३५।। व्यपदेशाच्च क्रियायां न चेन्निर्देश-विपर्ययः।।३६।। उपलब्धिवदनियमः।।३७।। शक्तिविपर्ययात्।।३८।। समाध्यभावाच्च।।३९।।**

अत्र यद्यपि चक्षुराद्यगोचरत्वात्, मनसः चक्षुरादिनिरपेक्षस्य प्रत्यक्षसाधनत्वाभावात्, सत्येव मनसि आत्मनि कर्तृत्वोपलब्धेः असति च सुषुप्ते मनसि कर्तृत्वाद्यनुपलब्धेः इत्यन्वयव्यतिरेकयोः मनसः कर्तृत्वादिसत्ताकारणतया अन्यथासिद्धेः कर्तृत्वविशिष्टात्म-प्रतिपत्तिहेतुत्वकल्पनायोगात्, अहं कर्तेति च प्रतिभासस्य आत्मान्तःकरणयोः साधारणत्वात् न प्रत्यक्षगम्यमात्मनि कर्तृत्वम्; तथापि ममेदं कर्तव्यमिति प्रतिपत्तिसमर्थस्य चेतनस्य विधिसंबन्धं प्रतिपादयता शास्त्रेण तस्य चेतनस्य विधिविषयकर्तृत्वमन्तरेण अनुपपद्यमानेन चेतनस्य कर्तृत्वं श्रुतार्थापत्त्या प्रतिपादितम्। तथा अकर्तृब्रह्मात्मनोः[त्मना] मोक्षेऽवस्थानं प्रतिपादयता तत्त्वमस्यादिप्रधानवाक्येन जीवस्याकर्तृत्वं प्रतिपादितम्। द्वयोश्च प्रमाणयोः विरोधे सति कालभेदेनापि व्यवस्था न्याय्येति मोक्षावस्थायामकर्तृत्वम्, प्राक् तु कर्तृत्वम्— इति दर्शितम्।

### *प्रकटार्थविवरणम्*

तावन्मण्यादिवद् दृष्टं प्रतिबन्धकं दृश्यते। अदृष्टं तु पूर्वक्षणेऽप्यासीदिति नाकस्मात् तस्य प्रतिबन्धकत्वसंभव इत्यर्थः। यस्मात् युगपद्ज्ञानानुत्पत्तेः नान्या गतिरस्ति तस्मादित्युपसंहारः। अवधानं तत्परता; अनवधानं व्यग्रता। उक्तेऽर्थे श्रुतिसंवादमाह— **तथा चेति**। इति त्रयोदशमुत्क्रान्तिगत्यधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**चात्मन इति**। यद्वाऽन्तःकरणानभ्युपगमे दोषान्तरप्रसङ्गादपि तदभ्युपगन्तव्यमिति सूत्रावयवं योजयन्नाह— **अथवेति**। अस्तु को दोष इत्यत्राह— **न चेति**। अवधानं नामानुभवितुं स्मर्तुं वा वाञ्छा। न चेयमात्मनो धर्मः तस्याविक्रियत्वात्। न चेन्द्रियाणामेकेन्द्रियव्यतिरेकेऽप्यन्धादीनान्तद्दर्शनत्वादान्तरत्वेनानुभूयमानायाश्च बाह्येन्द्रियधर्मताऽयोगात्, अतः परिशेषाद् यस्यैते अवधानानवधाने तदन्तःकरणमभ्युपेयमित्याह— **कामादय इति**। मनः स्वग्राह्यजातिमद्विशेषगुणाधारः प्रत्यक्षज्ञानकारणत्वाच्छ्रोत्र-वदित्यनुमानमत्र द्रष्टव्यम्। इति त्रयोदशमुत्क्रान्त्यधिकरणम्।।

### *न्यायनिर्णयः*

तत्राह— **न चेति**। अवधानमनुभवितुं स्मर्तुं वा वाञ्छा। न च साऽऽत्मनो धर्मः, तस्याविक्रियत्वात्। नापीन्द्रियाणामन्धादीनामेकैकेन्द्रियाभावेऽपि तद्दर्शनादान्तरत्वाच्च बाह्येन्द्रियधर्मत्वायोगात् तेन परिशेषाद् यस्यावधानानवधाने तदन्तःकरणमस्तीत्याह— **तस्मादिति**। अनुबुभूषा साश्रया, गुणत्वात्, रूपवदित्यनुमानात्तदधिकरणमन्तःकरणं परिशेषतो लब्धमिति भावः। न केवलमन्तःकरणमौपपत्तिकम्, श्रौतमपीत्याह— **तथा चेति**। मनः स्वग्राह्यजातिमद्विशेषगुणाधिकरणं, प्रत्यक्षज्ञानकरणत्वात्, चक्षुर्वदित्यभिप्रेत्याह— **कामादयश्चेति**। बुद्धिसद्भावस्य मानयुक्तिसिद्धत्वे फलितमाह— **तस्मादिति**।।३२।। इति त्रयोदशमुत्क्रान्त्यधिकरणम्।।

---

१. 'इति च' इति पा.।

## १४।।कर्त्रधिकरणम्।।३३-३९।।

## कर्ता शास्त्रार्थवत्त्वात्।।३३।।

**तद्गुणसारत्वाधिकारेणैवापरोऽपि जीवधर्मः प्रपञ्च्यते। कर्ता चायं जीवः स्यात्। कस्मात्? शास्त्रार्थवत्त्वात्। एवं च 'यजेत' 'जुहुयात्' 'दद्यात्' इत्येवंविधं विधिशास्त्रमर्थवद् भवति। अन्यथा तदनर्थकं स्यात्। तद्धि**

### *प्रकटार्थविवरणम्*

**कर्ता शास्त्रार्थवत्त्वात्**।। जीवस्य ब्रह्मैक्यवादिना तावत् अकर्तृत्वमभ्युपगन्तव्यम्; तदा च कर्तृत्वश्रुतिविरोधः, साधनानुष्ठानाभावान्मोक्षाय शास्त्रारम्भविरोधश्चेत्यस्य दोषस्य परिहाराय कर्तृत्वमस्मिन्नधिकरणे प्रतिपाद्यते। ननु जीवस्य पारमार्थिकं रूपं ब्रह्म; कर्तृता त्वौपाधिकीति प्रागेव सिद्धम्; अतोऽनेनाधिकरणेन कर्तृत्वं प्रसाध्योत्तरेण तस्यौपाधिकत्वसाधनं पुनरुक्तमित्याशङ्क्याह— **तद्गुणसारत्वेति**। **अधिकारेण** प्रसङ्गेन। अधिकरणद्वयस्य पूर्वाधिकरणप्रपञ्चरूपत्वान्न पौनरुक्त्यं शङ्कनीयम्। किञ्च नेयं जयपराजयप्रयोजनार्था, किं तु तत्त्वज्ञानार्था; तत्त्वं च परमगम्भीरम्; ततोऽशेषसंशयशान्तयेऽसकृदुपदिशन्ति शिष्यहितैषिणः सर्वज्ञा इति सन्तोष्टव्यम्। जीवो विषयः; स किं कर्ता न वेति श्रुतिविप्रतिपत्तेः संशये **साङ्ख्या** मन्यन्ते— बुद्धिः कर्त्री, जीवस्तु भोक्तैवेति; तदपाकरणाय सूत्रं योजयति— **कर्ता चायमिति**। कर्तुरभिप्रेतसिद्धये हि शास्त्रं साधनमुपदिशति। तत् कर्तृभोक्त्रोर्भेदे न समञ्जसं

### *भाष्यभावप्रकाशिका*

**कर्ता शास्त्रार्थवत्त्वात्**। ननु तद्गुणसारत्वादित्यनेनैव जीवस्य कर्तृत्वभोक्तृत्वे लब्धे; तत्किं पुनः कथनेनेत्यत आह— **तद्गुणसारत्वेति**। अयं भावः— यद्यपि कर्तृत्वं स्वयन्न पुरुषार्थम्, नापि प्रतिपिपादयिषितवाक्यार्थोपयोगी; यद्यपि चौपाधिकं कर्तृत्वं (व्याप्ति)पूर्वाधिकरणसिद्धम्, तथापि निरस्यपक्षसंभवात्तन्निराकरणाय जीवधर्मः पुनरुच्यत इति। ननु सत्येव मनसि कर्तृत्वोपलब्धेरसति च सुषुप्ते अनुपलम्भादन्वयव्यतिरेक.....कर्तृत्वादिसत्ताकारणत्वप्रतिपादकत्वात् कर्तृत्वविशिष्टात्मप्रतिपत्तिमात्रहेतुत्वकल्पनाया बहिरङ्गत्वादहं कर्तेति च प्रतिभानस्यात्मान्तःकरणयोः साधारणत्वान्नात्मनः कर्तृत्वमिति चोदयति— **कस्मादिति**। न च स्वर्गाद्यर्थिनो

### *न्यायनिर्णयः*

स्वाभाविकमणुत्वं पराणुद्य वस्तुतो महत्त्वं चैतन्यादीषद् बहिष्ठं प्रतिष्ठापितम्। इदानीं ततोऽपि बहिष्ठं कर्तृत्वं बुद्धिकर्तृत्वव्यावर्तनेनात्मनि साधयति— **कर्तेति**। आत्मा किमकर्ता कर्ता वेति विप्रतिपत्तेः संदेहे 'तद्गुणसारत्वात्' इत्येनेनैव तत्कर्तृत्वादिसिद्धेर्न संशीतिरित्याशङ्क्याह— **तद्गुणेति**। अधिकारः प्रसङ्गः। यद्यपि कर्तृत्वस्य न स्वयं पुमर्थता, नापि प्रतिपाद्यवाक्यार्थोपयोगिता, यद्यपि चौपाधिकं कर्तृत्वमात्मनि प्रागेव सिद्धं, तथापि निरस्यपक्षसंभवात् तन्निरासायारम्भः संभवतीति भावः। अत्र च विध्यादिश्रुतीनामसङ्गतादिश्रुतीनां चात्मकर्तृत्वाकर्तृत्वार्थानां बन्धमोक्षविषयत्वेन मिथो विरोधं विधूय नित्यमुक्ते ब्रह्मणि समन्वयाधानात् पादादिसंगतयः। पूर्वपक्षे श्रुतीनाममूषां विरुद्धत्वेनाप्रामाण्यात्तत्र समन्वयासिद्धिः। सिद्धान्ते तासामविरोधेन व्यवस्थया प्रामाण्यात् तत्सिद्धिरिति मन्वानः सिद्धान्तं प्रतिजानीते— **कर्ता चेति**। सत्येव मनसि जागरादौ कर्तृत्वोपलम्भादसति स्वापे तदभावादन्वयव्यतिरेकाभ्यां कर्तृत्वस्य मनोनिष्ठत्वदृष्टेः, [१]तत्सत्ताहेतुविषयत्वसंभवे च तयोस्तद्विशिष्टार्थधीमात्रहेतुत्वकल्पनाया बहिरङ्गत्वात्, अहं कर्तेति धियश्चात्मनः [२]साधारण्यान्न कर्तृत्वमात्मनोऽस्तीत्याह— **कस्मादिति**। स्वर्गाद्यर्थिनो यागादिविध्यन्यथानुपपत्त्या कर्तृत्वमात्मनो दुर्वारमित्याह— **शास्त्रेति**। तदेव व्याकरोति— **एवमिति**। ऐक्यश्रुतिविरोधे विधिशास्त्रमन्यपरतया दुर्बलमित्याशङ्क्य संपत्परत्वेन तस्याः सावकाशत्वाद्विधिश्रुतेश्च निरवकाशत्वान्मैवमित्याह— **अन्यथेति**। कर्त्री बुद्धिरित्युपगमात् तद्विषयत्वेन विधिशास्त्रं सावकाशमित्याशङ्क्य विधेः प्रतिपत्तुरेव कर्तृतेत्याह— **तद्धीति**। ममेदं कर्तव्यमिति धीसमर्थस्य चेतनस्य विधिसंबन्धमाह

---

१. ननूक्तान्वयव्यतिरेकाभ्यां मनसः कर्तृत्वाद्युपलम्भहेतुत्वमेव सिध्यतु, न कर्तृत्वादेर्मनोनिष्ठत्वमित्याशङ्कायामाह—**तत्सत्तेति**। मनोऽन्वयव्यतिरेकयोः मनोनिष्ठकर्तृत्वसाधकत्वमन्तरङ्गम्। आत्मनिष्ठोपलम्भहेतुत्वसाधकत्वं बहिरङ्गमिति भावः। २. 'आत्ममनःसाधारण्यात्' इति पाठः स्यात्।

**कर्तुः सतः कर्तव्यविशेषमुपदिशति। न चासति कर्तृत्वे तदुपपद्येत। तथेदमपि शास्त्रमर्थवद् भवति– 'एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' (प्र.उ. ४।९) इति।।३३।।**

## विहारोपदेशात्।।३४।।

**इतश्च जीवस्य कर्तृत्वम्, यज्जीवप्रक्रियायां संध्ये स्थाने विहारमुपदिशति– 'स ईयतेऽमृतो यत्र कामम्' (बृ.उ. ४।३।१२) इति, 'स्वे शरीरे यथाकामं परिवर्तते' (बृ.उ. २।१।१८) इति च।।३४।।**

## उपादानात्।।३५।।

**इतश्चास्य कर्तृत्वम्, यज्जीवप्रक्रियायामेव करणानामुपादानं संकीर्तयति–'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' (बृ.उ. २।१।१७) इति, 'प्राणान् गृहीत्वा' (बृ.उ. २।१।१८) इति च।।३५।।**

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः।।३६।।

### *प्रकटार्थविवरणम्*

स्यादित्यर्थः। न केवलमनुपपत्तिलभ्यमेव कर्तृत्वम्, किं तु श्रौतमपीत्याह— **तथेदमपीति**।

**विहारोपदेशात्**।। किञ्च विहरणोपदेशान्यथानुपपत्त्याऽपि कर्तृत्वमित्याह— **विहारोपदेशादिति**। **यदिति** यस्मात्; जीवप्रकरणे स्वप्नस्थान इत्यर्थः।

**उपादानात्**।। अकर्तुरुपादानानुपपत्त्याऽपि कर्तृत्वमित्याह— **उपादानादिति**।

**व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः**।। कर्त्रभिधाय्याख्यातश्रुतिबलादपि कर्तृत्वमित्याह— **व्यपदेशाच्चेति**। ''न

### *भाष्यभावप्रकाशिका*

यागादिविध्यन्यथानुपपत्त्या जीवस्य कर्तृत्वमेकत्वप्रतिपादकश्रुतिविरोधे तस्यैवान्यपरतया दौर्बल्यादिति भावः। ननु बुद्धिः कर्त्री विद्यत इति, नैवं, विधिविषयप्रतिपत्तुरात्मन एव कर्तृत्वं वक्तव्यमित्याह— **तद्धीति**। अयमिह न्यायः— ममेदं कर्तव्यमिति प्रतिपत्तिसमर्थस्य चेतनस्य विधिसम्बन्धं प्रतिपादयता विधिशास्त्रेण तस्य विधिविषयकर्तृतामन्तरेणानुपपद्यमानेन कर्तृत्वमर्थापत्त्या प्रदर्श्यते। बुद्धेरेव कर्तृत्वे यस्य भोक्तुरपेक्षितोपायो विधिर्न तस्य कर्तृत्वं यस्य च कर्तृत्वन्न तस्यापेक्षितो[पाय] (बाध) इत्यसंगतत्वप्रसङ्गादिति। 'अनश्नन्नन्य' इत्यादिश्रुतिविरोधे श्रुत्यर्थापत्तिर्दुर्बलेत्याशङ्क्य **साक्षाच्छ्रुतिमाह— तथेदमिति**।

**सन्ध्ये** स्वप्ने। **विहारः**सञ्चरणम्। **ईयते** गच्छति।

प्राणानामिन्द्रियाणां विज्ञानेन बुद्ध्या, विज्ञानं ग्रहणशक्तिम्।

### *न्यायनिर्णयः*

विधिशास्त्रमित्यर्थः। तथापि कथं तस्य कर्तृत्वधीरित्याशङ्क्याह— **न चेति**। तस्य विधेयार्थकर्तृतां विनाऽनुपपन्नं विधिशास्त्रं चेतनस्य तदर्थानुपपत्त्या[1] गमयति। बुद्धेरेव कर्तृत्वे यस्य भोक्तुरपेक्षितोपायो विधिर्न तस्य कर्तृत्वं यस्य कर्तृत्वं, न तस्यापेक्षितोपाय इत्यसंगतिरिति भावः। 'अनश्नन्' इत्यादिश्रुतिविरोधे श्रुतार्थापत्तिर्दुर्बलेत्याशङ्क्य श्रुतिमाह— **तथेति**।।३३।।

विहारो विहरणं संचारस्तदुपदेशानुपपत्त्याऽपि जीवस्य कर्तृतेत्याह— **विहारेति**। सूत्रस्य हेत्वन्तरपरत्वमाह— **इतश्चेति**। **जीवप्रक्रियायामिति** बुद्धिप्रस्तावव्यासेधार्थमुक्तम्। **संध्ये स्थाने** स्वप्नावस्थायामिति यावत्। **ईयते** गच्छति।।३४।।

अकर्तुरुपादानानुपपत्त्याऽपि कर्तृत्वमित्याह— **उपादानादिति**। तद् व्याकरोति— **इतश्चेति**। प्राणानामिन्द्रियाणां विज्ञानेन बुद्ध्या विज्ञानं ग्रहणशक्तिमादाय स्वापे जीवो हृदयमेतीति योजना। उपादानान्तरमाह— **प्राणानिति**। योजना पूर्ववत्।।३५।।

कर्तृवाचकाख्यातश्रुत्याऽपि जीवस्य कर्तृत्वमित्याह— **व्यपदेशाच्चेति**। विज्ञानशब्दस्य जीवार्थत्वं गृहीत्वा सूत्रावयवं

---

१. 'तदर्थापत्त्या' इति पाठः भाष्यभावप्रकाशिकात ऊह्यते। तत् = कर्तृत्वम्।

**इतश्च जीवस्य कर्तृत्वम्, यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिशति शास्त्रम्– 'विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपि च' (तै.उ. २।५।१) इति। ननु विज्ञानशब्दो बुद्धौ समधिगतः। कथमनेन जीवस्य कर्तृत्वं सूच्यत इति। नेत्युच्यते। जीवस्यैवैष निर्देशो, न बुद्धेः। न चेज्जीवस्य स्यान्निर्देशविपर्ययः स्यात्। विज्ञानेनेत्येवं निरदेक्ष्यत्। तथा ह्यन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' (बृ.उ. २।१।१७) इति। इह तु 'विज्ञानं यज्ञं तनुते' (तै.उ. २।५।१) इति कर्तृसामानाधिकरण्यनिर्देशाद् बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यत इत्यदोषः।।३६।।**

**अत्राह– यदि बुद्धिव्यतिरिक्तो जीवः कर्ता स्यात्, स स्वतन्त्रः सन् प्रियं हितं चैवात्मनो नियमेन संपादयेन्न विपरीतम्। विपरीतमपि तु संपादयन्नुपलभ्यते। न च स्वतन्त्रस्यात्मन ईदृशी प्रवृत्तिरनियमेनोपपद्यत इति। अत उत्तरं पठति–**

**उपलब्धिवदनियमः।।३७।।**

**यथाऽयमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनिष्टं चोपलभत एवमनियमेनैवेष्टमनिष्टं च संपादयिष्यति।**

### *प्रकटार्थविवरणम्*

चेन्निर्देशविपर्ययः'' इति सूत्रभागं शङ्कापूर्वकमवतारयति— **ननु विज्ञानशब्द इति**। विज्ञानशब्देन जीवो नोच्यते चेत् तदा प्रथमान्तनिर्देशस्य विपरीतः तृतीयान्तनिर्देशः स्यादित्युक्तम्; तदेव श्रुत्यन्तरेण द्रढयति— **तथा ह्यन्यत्रेति**।

उत्तरसूत्र[निरस्या]शङ्कामाह— **अत्राहेति**। अव्यवधानेन सुखकरं प्रियम्। व्यवधानेन हितम्।

**उपलब्धिवदनियमः**।। प्रतिबन्दिग्रहेण सांख्यं दूषयति— **यथाऽयमात्मेति**। साङ्ख्येन हि व्यवहारेऽपि कर्तृत्वं नेष्टम्।

### *भाष्यभावप्रकाशिका*

ननु बुद्धेरस्मन्मते कर्तृत्वात्कर्तृत्वे व्यपदेशोऽपि घटत इति। न; यत्र केवलाया बुद्धेर्व्यपदेशस्तत्र करणत्वेनैव तद्व्यपदेशदर्शनात् कर्त्रीत्वव्यपदेशो न युक्त इत्याह— **तथा ह्यन्यत्रेति**।

सूत्रान्तरमवतारयितुञ्चोदयति— **अत्राहेति**। अस्वातन्त्र्ये च न कर्ता तल्लक्षणत्वात् तस्येत्यर्थः। परिहरति— **यथाऽयमिति**।

### *न्यायनिर्णयः*

योजयति— **इतश्चेति**। न चेदित्यादेर्व्यावर्त्यां शङ्कामाह— **नन्विति**। नात्र बुद्धिर्विज्ञानमिति सूत्रभागेनाह— **नेतीति**। तदेव स्फुटयितुं प्रतिजानीते— **जीवस्येति**। प्रतिज्ञार्थं सूत्रावयवं व्याकुर्वन् व्यतिरेकेण स्फोरयति— **नेति**। विपर्ययमभिनयति— **विज्ञानेनेति**। अस्मन्मते बुद्धेरेव कर्तृत्वात् तत्र तद्व्यपदेशसिद्धिरित्याशङ्क्य केवलाया बुद्धेः करणत्वेनैव व्यपदेशदर्शनान्मैवमित्याह— **तथेति**। तैत्तिरीयश्रुतौ विशेषमाह— **इहेति**। कर्तृसामानाधिकरण्यमाख्यातेन कर्तृवाचिना विज्ञानपदस्याभिव्याहारः। प्रकृते वाक्ये विज्ञानस्य कर्तृत्वमन्यत्र करणत्वेऽपीति निगमयति— **इत्यदोष इति**।।३६।।

सूत्रान्तरव्यावर्त्यमाह—**अत्रेति**। तथैव संपादयति, नेत्याह—**विपरीतमिति**। सहकारिवशादिष्टानिष्टोपादानेषु पुरुषप्रवृत्तिरित्याशङ्क्याह—**न चेति**। तस्यास्वातन्त्र्ये लक्षणाभावादकर्तृत्वं[१], स्वातन्त्र्ये बुद्धिपूर्वकारिणो नानियता प्रवृत्तिरित्यर्थः। सूत्रमवतारयति— **अत इति**। सत्यपि स्वातन्त्र्ये स्यादनियता प्रवृत्तिरिति सूत्रं व्याकुर्वन् परिहरति— **यथेति**। दृष्टान्ते विवदमानः सन्नाह— **उपलब्धाविति**।

---

१. 'स्वतन्त्रः कर्ता' (पा.सू. १।४।५४) इति सूत्रादिति भावः।

**उपलब्धावप्यस्वातन्त्र्यमुपलब्धिहेतूपादानोपलम्भादिति चेत्? न; विषयप्रकल्पनामात्रप्रयोजनत्वादुपलब्धिहेतूनाम्। उपलब्धौ त्वनन्यापेक्षत्वमात्मनश्चैतन्ययोगात्। अपि चार्थक्रियायामपि नात्यन्तमात्मनः स्वातन्त्र्यमस्ति, देशकालनिमित्तविशेषापेक्षत्वात्। न च सहायापेक्षस्य कर्तुः कर्तृत्वं निवर्तते। भवति ह्येधोदकाद्यपेक्षस्यापि पक्तुः पक्तृत्वम्। सहकारिवैचित्र्याच्चेष्टानिष्टार्थक्रियायामनियमेन प्रवृत्तिरात्मनो न विरुध्यते।।३७।।**

## शक्तिविपर्ययात्।।३८।।

**इतश्च विज्ञानव्यतिरिक्तो जीवः कर्ता भवितुमर्हति। यदि पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात्, ततः शक्तिविपर्ययः स्यात्। करणशक्तिर्बुद्धेर्हीयेत, कर्तृशक्तिश्चापद्येत। सत्यां च बुद्धेः कर्तृशक्तौ तस्या**

### *प्रकटार्थविवरणम्*

सुखाद्युपलब्धृत्वं तु भोक्तृत्वमिष्टम्; तत्रापि स्वस्येष्टमेव कस्मान्नोपलभ्यत इति चोद्यं समानमित्यर्थः। साङ्ख्यस्य परिहारमुद्भावयति— **उपलब्धावपीति**। चक्षुरादीनां विषयोपस्थापकत्वमेव; उपस्थितविषयोपलम्भे तु स्वातन्त्र्यमात्मनोऽस्त्येव; अतो नायं परिहार इत्याह— **न विषयेति**। किञ्च यदि तवास्वातन्त्र्यमेव परिहारः, सोऽस्माकमपि तुल्य इत्याह— **अपि चेति**। ननु "स्वतन्त्रः कर्ता" इति लक्षणं **पाणिनिः** निनाय[प्रणिनाय]। अतोऽस्वातन्त्र्ये कर्तृत्वमेव हीयेतेत्याशङ्क्याह— **न च सहायेति**। एधांसि काष्ठानि। कर्ता कारकान्तराणि प्रेरयति, न तु कारकान्तरैः स प्रेर्यत इत्येतावदेव स्वातन्त्र्येण[तन्त्र्यम्, न] त्वत्यन्तानपेक्षत्वमिति भावः। पूर्वं प्रतिबन्दिग्रहेण परिहारमुक्त्वा इदानीं स्वपक्षे परिहारमाह— **सहकारिवैचित्र्याच्चेति**।

**शक्तिविपर्ययात्**।। कर्तृत्वसाधकं हेत्वन्तरमाह— **शक्तीति**। अस्तु शक्तिवैपरीत्यम्, ततः किमित्यत आह— **सत्यां च**

### *भाष्यभावप्रकाशिका*

शङ्कते— **उपलब्धावपीति**। परिहरति— **न विषयेति**। विषयाणां प्रकल्पनमुपनयनम्। नित्यचैतन्यस्येन्द्रियाणि विषयमुपनयन्ति। तदवच्छिन्नश्चैतन्यम् विषयज्ञानमित्याख्यायते। तेन चैतन्ये स्वातन्त्र्यमस्यास्तीत्यर्थः। तथापि विषयविज्ञाने करणपारतन्त्र्यमस्तीत्याशङ्क्य साक्षात्परिहारमाह— **अपि चार्थक्रियायामिति**। अयमर्थः— करणादीनि कारकान्तराणि कर्ता प्रयुङ्क्ते....त्ययन्तेः प्रयुज्यत इत्येतावता स्वातन्त्र्यं, न तु कारणान्तरानपेक्षत्वात् तथाविधस्वातन्त्र्यस्येश्वरेऽप्यभावात्। तथा चायमदृष्टपरिपाकवशादिष्टमपि प्रेप्सुस्तत्सा[साधन]....विभ्रमेणानिष्टोपायं कुर्वन्ननिष्टं प्राप्नुयादिति। कर्तृत्वनियमश्चेत्यविरोध इति।

पूर्वं कारकविभक्तिविपर्यय उक्तः, संप्रति तु तच्छक्तिविपर्ययमाह— **शक्तिविपर्ययादिति**। **करणशक्तिर्बुद्धेर्हीयेतेति**। तद्व्यतिरिक्तकर्त्रभावादिति भावः। भवतु को दोष इति, मैवं, तस्या एवाहंप्रत्ययविषयतया आत्मत्वप्रसङ्गादित्याह— **सत्याञ्चेति**।

### *न्यायनिर्णयः*

चक्षुरादीनां विषयोपनायकत्वात्तदुपलब्धौ चात्मनश्चेतनत्वेन स्वातन्त्र्यादुदाहरणसिद्धिरित्याह— **नेत्यादिना**। विषयोपनयनद्वारा तज्ज्ञाने करणापेक्षाध्रौव्यान्नात्मनः स्वातन्त्र्यमित्याशङ्क्याह— **अपि चेति**। इतश्च दृष्टान्तदार्ष्टान्तिकयोर्न वैषम्यमिति यावत्। उपलब्धाविवेत्यपेरर्थः। देशाद्यपेक्षायां लक्षणाभावादकर्तृत्वं स्यादित्याशङ्क्याह— **न चेति**। तत्र हेतुमाह— **भवतीति**। यदुक्तं धीपूर्वकारिणो नानियता प्रवृत्तिरिति, तत्राह— **सहकारीति**। कर्ता हि करणादीनि कारकान्तराणि प्रयुङ्क्ते, न तैरयं प्रयुज्यते, तेन तस्य स्वातन्त्र्यं, न कारकान्तरानपेक्षत्वात्, क्वापि तथा स्वातन्त्र्यायोगात्। तथा चायमदृष्टवशादिष्टमेव प्रेप्सुस्तदुपायभ्रमादनिष्टहेतुमनुतिष्ठन्ननिष्टमाप्नुयादित्यनियता प्रवृत्तिः, कर्तृत्वनियमश्चेत्यर्थः।।३७।।

बुद्धेरेव कर्तृत्वे कारकविभक्तिविपर्ययो 'न चेत्' इत्यत्रोक्तः। सम्प्रति तच्छक्तिविपर्ययमाह— **शक्तीति**। सूत्रं व्याख्यातुं प्रतिज्ञां व्याकरोति— **इतश्चेति**। हेतुमेव व्यतिरेकद्वारा विवृणोति— **यदीति**। शक्तिविपर्ययमुदाहरति— **करणेति**। बुद्ध्यतिरिक्तकर्त्रभावादित्यर्थः। बुद्धेरस्तु कर्तृशक्तिः, तत्राह— **सत्यां चेति**। कर्तृत्वे बुद्धेरहंधीविषयत्वेनात्मत्वं किमित्युपेयं, तत्राह— **अहंकारेति**।

**एवाहंप्रत्ययविषयत्वमभ्युपगन्तव्यम्। अहंकारपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनात्– अहं गच्छाम्यहमागच्छाम्यहं भुञ्जेऽहं पिबामीति च। तस्याश्च कर्तृशक्तियुक्तायाः सर्वार्थकारि करणमन्यत् कल्पयितव्यम्। शक्तोऽपि हि सन् कर्ता करणमुपादाय क्रियासु प्रवर्तमानो दृश्यत इति। ततश्च संज्ञामात्रे विवादः स्यान्न वस्तुभेदः कश्चित्। करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात्।।३८।।**

**समाध्यभावाच्च।।३९।।**

**योऽप्ययमौपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टो वेदान्तेषु– 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.उ. २।४।५) 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छा.उ. ८।७।१), 'ओमित्येवं ध्यायथ आत्मानम्' (मु.उ. २।२।६) इत्येवंलक्षणः, सोऽप्यसत्यात्मनः कर्तृत्वे नोपपद्येत। तस्मादप्यस्य कर्तृत्वसिद्धिः।।३९।।**

।।इति चतुर्दशं कर्त्रधिकरणम्।।

*शारीरकन्यायसंग्रहः*

।।तक्षाधिकरणम्।।

**यथा च तक्षोभयथा।।४०।।**

अत्र केवलस्यात्मनः क्रियासमवायः किं वाऽध्यासपरिनिष्पन्नाहङ्कारसंपिण्डितैकत्वापन्नात्मविशिष्टद्रव्यस्येति विशये, सत्येव संपिण्डितैकद्रव्ये क्रियासमवायदर्शनात् असति च तस्मिन् सुषुप्ते केवलात्मनि क्रियाऽदर्शनात् विशिष्टद्रव्यस्य कारणत्वं तावदवगतम्। तत्र कार्यं प्रत्यन्वयव्यतिरेकवतो द्रव्यस्योपादानकारणस्थानगतस्यान्वयिकारणत्वमेव प्रतिपत्तुं युक्तम्, न निमित्तकारणत्वम् अभ्यर्हितत्वादुपादानकारणस्येति न्यायानुगृहीतेन अन्वयव्यतिरेकप्रमाणेन अध्यासविशिष्टमात्मद्रव्यमुपादानकारणस्थानगतं क्रियान्वयिकारणत्वेन कल्प्यते ब्रह्मात्मप्रतिपादकशास्त्रोपबृंहितत्वादध्यासस्य उपादानकारणत्वकल्पनायाः इत्युक्तम्।

*प्रकटार्थविवरणम्*

**बुद्धेरिति**। योऽहंप्रत्ययालम्बनश्चेतनः स एवात्मा; यत्तस्य चेतनायामसाधारणं करणं तन्मन इति मतान्तरप्रवेशः सांख्यस्येति भावः।

**समाध्यभावाच्च**।। किञ्च समाधेश्चित्तसंयमनस्य विधानानुपपत्त्याऽपि कर्तृत्वं वक्तव्यमित्याह— **समाध्यभावाच्चेति**। इति चतुर्दशं कर्त्रधिकरणम्।।

*भाष्यभावप्रकाशिका*

कथमात्मत्वमन्तःकरणाधिष्ठातुरेवात्मत्वादित्यत्र आह— **तस्याश्चेति**। करणशक्तेरविपर्ययार्थन्तु कारणान्तरकल्पनायां विसंवाद इत्याह— **ततश्चेति**।

ज्ञानसाधनविध्यन्यथानुपपत्त्याऽपि कर्तृत्वमित्याह— **समाध्यभावादिति**। इति चतुर्दशं कर्त्रधिकरणम्।।

*न्यायनिर्णयः*

अन्तःकरणाधिष्ठातुरेवात्मत्वात् कुतो बुद्धेरेवात्मत्वम्, तत्राह— **तस्याश्चेति**। कर्तुः स्वयमेव शक्तेर्न करणापेक्षेत्याशङ्क्याह— **शक्तोऽपि हीति**। लोकवदिहापि कर्तुरपेक्षितमेव करणमिति वक्तुमितिशब्दः। अस्तु तर्हि कर्त्र्या बुद्धेरन्यदेव करणम्, तत्राह— **ततश्चेति**।।३८।।

ज्ञानसाधनविध्यन्यथानुपपत्त्याऽपि कर्तृत्वमात्मनः स्वीकार्यमित्याह— **समाधीति**। सूत्रं विवृणोति— **योऽपीति**। ज्ञानोपायं समाधिमनुतिष्ठन्नकर्ताऽऽत्मेति दुर्वचनमित्यर्थः। शास्त्रार्थवत्त्वादिहेतूनां फलमुपसंहरति— **तस्मादिति**। उक्तहेतुषु प्रत्येकं साधकत्वं संभावयितुमपिशब्दः।।३९।। इति चतुर्दशं कर्त्रधिकरणम्।।

१५।।तक्षाधिकरणम्।।सू. ४०।।

## यथा च तक्षोभयथा।।४०।।

**एवं तावच्छास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्वं शारीरस्य प्रदर्शितम्, तत्पुनः स्वाभाविकं वा स्यादुपाधिनिमित्तं वेति चिन्त्यते। तत्रैतैरेव शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं कर्तृत्वमपवादहेत्वभावादित्येवं प्राप्ते ब्रूमः- न स्वाभाविकं कर्तृत्वमात्मनः संभवति, अनिर्मोक्षप्रसङ्गात्। कर्तृत्वस्वभावत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः संभवति, अग्नेरिवौष्ण्यात्। न च कर्तृत्वादनिर्मुक्तस्यास्ति पुरुषार्थसिद्धिः, कर्तृत्वस्य दुःखरूपत्वात्।**

**ननु स्थितायामपि कर्तृत्वशक्तौ कर्तृत्वकार्यपरिहारात् पुरुषार्थः सेत्स्यति। तत्परिहारश्च निमित्तपरिहारात्। यथाऽग्नेर्दहनशक्तियुक्तस्यापि काष्ठवियोगाद् दहनकार्याभावस्तद्वत्। न; निमित्तानामपि शक्तिलक्षणेन संबन्धेन**

### *प्रकटार्थविवरणम्*

**यथा च तक्षोभयथा**।। वृत्तं सङ्कीर्त्य संशयमाह— **एवं तावदिति**। **कर्ममीमांसकानां** पूर्वपक्षमाह— **तत्रैतैरेवेति**।

उत्सूत्रमेव पूर्वपक्षं दूषयति— **न स्वाभाविकमिति**। कर्तृत्वशक्तिरेव स्वाभाविकी; तस्य यद्युच्छेदो नास्ति, तथापि कर्तृत्वलक्षणं यदायासरूपं कार्यं तत्परिहारान्मोक्षो भविष्यतीत्याह— **ननु स्थितायामपीति**। ननु सत्यां शक्तौ कार्यपरिहारो वा कथमात्यन्तिक इत्याशङ्क्याह— **तत्परिहारश्चेति**। परिहरति— **न निमित्तानामिति**। देशकालादृष्टादीनां निमित्तानां निमित्तत्वशक्तेः स्वाभाविक्या उच्छेदानुपपत्तेर्निमित्ताभावात् कार्यानुदय इति न शक्यते वक्तुमित्यर्थः। मोक्षसाधनेन नित्यानुष्ठानेन स्वाभाविकीमपि

### *भाष्यभावप्रकाशिका*

**यथा च तक्षोभयथा**। अवान्तरसंगतिमाह— **एवं तावदिति**। विमृशति— **ततः[ त् ]पुनरिति**। पूर्वपक्षं गृह्णाति— **तत्रेति**। ननु कर्तृत्वमनौपाधिकमिति नोक्तम्, तत्कथं वास्तवमिति, अत आह— **अपवादहेत्वभावादिति**। अन्वयव्यतिरेकाभ्यां विशिष्टस्य कर्तृत्वमवगम्यत इति नाशङ्कनीयम्। कर्तृत्वोत्पत्तौ मनसो निमित्तकारणत्वादपि तदुपपत्तेः। न च मुक्त्यनुपपत्तिरपवादिका; कर्तृस्वभावस्यापि क्रियावेशाभावेन तदुपपत्तेरित्यर्थः। भोगस्याप्यदृष्टान्तरजनकतया लक्षण शक्त्याक्षेपकत्वादनिर्मोकप्रसङ्गादित्यभिप्रेत्याह— **न निमित्तानामपीति**।

### *न्यायनिर्णयः*

सांख्यमतनिरासेनोक्तात्मकर्तृत्वस्य स्वाभाविकत्वं निरस्यति— **यथा चेति**। संगतिं दर्शयन् वृत्तं कीर्तयति— **एवमिति**। उक्ते कर्तृत्वे विप्रतिपत्त्या संशयमाह— **तदिति**। संगतिफले पूर्ववत्। अत्रापि समाप्तौ सर्वं व्यक्तीभविष्यतीति मत्वा पूर्वपक्षयति— **तत्रेति**। न च तर्हि पूर्वाधिकरणमनर्थकम्, आरोप्यप्रापकत्वात्। न च स्वातन्त्र्येण संबन्धाद्यभावे तस्यैतदवान्तरसूत्रत्वं, तत्रापि कर्तृत्वे समर्थिते सत्यसङ्गागमस्य स्तुत्याऽपि नेतुं शक्यत्वे विरोधपरिहारेण समन्वयदार्ढ्यसिद्धौ साक्षादपि संगत्यादेः सुवचत्वात्। ननु कर्तृत्वसत्त्वमात्रमुक्ता हेतवः साधयन्ति, न तस्य स्वाभाविकत्वं, न हि तस्योपाध्यनपेक्षत्वमुक्तम्, तत्राह— **अपवादेति**। न चान्वयव्यतिरेकाभ्यां विशिष्टस्य कर्तृत्वं शङ्कनीयम्, तदुत्पत्तौ मनसो निमित्तत्वादपि तदुपपत्तेरिति मत्वा पूर्वपक्षमुपसंहर्तु**मिति**शब्दः। पूर्वपक्षमनूद्य सूत्राद् बहिरेव सिद्धान्तयति— **एवमिति**। स्वाभाविकं कर्तृत्वमपवादकाभावादित्ययुक्तं मुक्त्यनुपपत्तेरपवादकत्वादित्याह— **नेति**। उक्तं विवृण्वन् कर्तृत्वमात्मनः स्वभावो धर्मो वेति विकल्प्याद्यं प्रत्याह— **कर्तृत्वेति**। कर्तृत्वे सत्येव पुरुषार्थसंभवात्किं तन्निवृत्त्येत्याशङ्क्याह— **न चेति**। द्वितीयमाश्रित्य शङ्कते— **नन्विति**। सत्यां शक्तौ कार्यपरिहारोऽपि कथं, तत्राह— **तदिति**। शक्तस्यैव निमित्तपरिहारात्कार्यपरिहारं दृष्टान्तेन दर्शयति— **यथेति**। कर्तृत्वस्य धर्मादीनि निमित्तानि। तेषां ज्ञानानिवर्त्यत्वे मुक्तावपि संभवात् कर्तृत्वं स्यात्। ज्ञानेन तन्निवृत्तौ तेषामज्ञानकार्यत्वात् तत्कृतं कर्तृत्वमपि तथा स्यात्। शक्तेश्च शक्तशक्यसापेक्षतया सनिमित्तक्रियालक्षणशक्याक्षेपकत्वादनिर्मोक्षः। तस्मान्निमित्तपरिहारस्य दुरनुष्ठानत्वान्न शक्तिवादे मुक्तिरित्याह— **नेत्यादिना**। शक्तिलक्षणेन शक्त्याक्षिप्तेन शक्येन सह यः संबन्धस्तेनेति व्यधिकरणे तृतीये। मनुष्यदेहस्य शास्त्रसामर्थ्याद्देवत्वाप्तिवत्कर्तृभूतस्याकर्तृरूपमोक्षाप्तिः

**संबद्धानामत्यन्तपरिहारासंभवात्। ननु मोक्षसाधनविधानान्मोक्षः सेत्स्यति? न; साधनायत्तस्यानित्यत्वात्।**

**अपि च नित्यशुद्धबुद्धमुक्तात्मप्रतिपादनान्मोक्षसिद्धिरभिमता; तादृगात्मप्रतिपादनं च न स्वाभाविके कर्तृत्वेऽवकल्पेत। तस्मादुपाधिधर्माध्यासेनैवात्मनः कर्तृत्वं न स्वाभाविकम्। तथा च श्रुतिः– 'ध्यायतीव लेलायतीव' (बृ.उ. ४।३।७) इति, 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (क.उ. ३।४) इति चोपाधिसंपृक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयति। न हि विवेकिनां परस्मादन्यो जीवो नाम कर्ता भोक्ता वा विद्यते, 'नान्योऽतोऽस्ति द्रष्टा' (बृ.उ. ३।७।२३) इत्यादिश्रवणात्। पर एव तर्हि संसारी कर्ता भोक्ता च प्रसज्येत। परस्मादन्यश्चेच्चितिमाञ्जीवः कर्ता, बुद्ध्यादिसंघातव्यतिरिक्तो न स्यात्। न; अविद्याप्रत्युपस्थापितत्वात् कर्तृत्वभोक्तृत्वयोः। तथा च शास्त्रम्– 'यत्र हि द्वैतमिव भवति तदितर इतरं**

### *प्रकटार्थविवरणम्*

शक्तिं प्रतिबध्य मोक्षः साध्यतामित्याह— **ननु मोक्षेति**। कर्मसाध्यस्य शक्तिप्रतिबन्धस्यानित्यत्वं[त्यत्वात्] न मोक्षसाधनम[नत्वम्। अ]भ्युपगम्य दूषणमुक्तम्; इदानीं तदपि नास्तीत्याह— **अपि चेति**। उपसंहृतेऽर्थे श्रुतिमाह— **तथा चेति**। ननु उपाधिसंयुक्तस्यात्मनो भोक्तृत्वं श्रुतिराह, तच्च परेषामपीष्टम्; न हि देहादिसंबन्धं विना भोक्तृत्वादि परैरपीष्यत इत्याशङ्क्य विशेषमाह— **न हि विवेकिनामिति**। अगृहीताभिप्रायश्चोदयति— **पर एव तर्हीति**। निरुपाधिकं हि चैतन्यं परं ब्रह्म; न तस्य कर्तृत्वादिप्रसङ्गोऽस्ति। किन्त्वविद्याप्रतिबिम्बितस्यैव चिद्धातोस्तदुत्थकर्तृत्वादिसम्बन्धः। स्वरूपभेदाभावाभिप्रायेण चान्यो भोक्ता नास्तीत्युक्तमित्याह— **नाविद्येति**।

### *भाष्यभावप्रकाशिका*

मनुष्यशरीरस्य शास्त्रसामर्थ्याद् देवत्वप्राप्तिवत्कर्तृभूतस्याकर्तृरूपमोक्षप्राप्तिः शास्त्रसामर्थ्यादेव स्यादिति चोदयति— **ननु मोक्ष इति**। तत्र विद्यमान एवाज्ञाननिवृत्त्या प्राप्यत इत्युच्यते, किं वाऽविद्यमानः? आद्ये कर्तृत्वस्य भ्रान्तित्वं सिद्धम्। उत्तरपक्षे दूषणमाह— **न साधनायत्तस्येति**। विद्वदनुभवविरुद्धश्चात्मनः कर्तृत्वमित्याह— **न हि विवेकिनामिति**। शङ्कते— **पर एव तर्हीति**। अयं भावः— परस्य संसारित्वेन मुक्तौ सर्वे मुच्येरन्नविशेषात्; ततश्च सर्वसंसारोच्छेदः; परस्मादन्यश्चेत् स बुद्ध्यादिसंघात एवेति तस्यैव तर्हि मुक्तिसंसारौ नात्मन इति। अत्र परस्मादन्यश्च चितिमांस्तर्हि स बुद्ध्यादिसंघातव्यतिरिक्तो न स्यादपि तु बुद्ध्यादिसंघात एव स्यादिति योजना, बुद्ध्यादिसंघातव्यतिरिक्तः परस्मादन्यश्चितिमात्र स्याच्चेत्तर्हि पर एव संसारीति योजना। परिहरति— **नाविद्येति**। न केवलस्य परस्य मुक्तिसंसारौ, तस्य नित्यमुक्तत्वात्; नापि बुद्ध्यादिसंघातस्य केवलस्य, जडत्वात्,

### *न्यायनिर्णयः*

शास्त्रवशादेवेति शङ्कते— **नन्विति**। किं सन्नेव मोक्षोऽज्ञानावृतो ज्ञानात्तन्निवृत्त्याऽऽप्यत उतासन्नपूर्वो हेतुशक्त्या लभ्यते? आद्ये कर्तृत्वस्य भ्रान्तित्वम्। द्वितीयं दूषयति— **नेति**। मुक्तेः [1]साधनाय तत्त्वमुपेत्योक्तम्, तदेव नेत्याह— **अपि चेति**। तथापि कथं स्वाभाविकं कर्तृत्वमपह्नूयते, तत्राह— **तादृगिति**। का तर्हि कर्तृत्वदृष्टेरात्मनि गतिः, तत्राह— **तस्मादिति**। आत्मन्यौपाधिकमारोपितं कर्तृत्वमित्यत्र मानमाह— **तथा चेति**। उक्तश्रुत्योस्तात्पर्यमाह— **उपाधीति**। विद्वदनुभवविरुद्धा च स्वाभाविकी कर्तृतेत्याह— **न हीति**। विवेकिनामित्युक्तेरवस्थाभेदापेक्षमैक्यमित्याशङ्क्याह— **नान्य इति**। बुद्ध्यादिसंघातादतिरिक्तो यदि परस्मादन्यश्चेतनो न स्यात् तदा पर एव संसारी कर्ता च प्रसज्येत। न च तद् युक्तं, नित्यशुद्धत्वादिविरोधात्। यदि परस्मादन्यश्चेतनस्तर्हि नासौ बुद्ध्यादिव्यतिरिक्तः स्यादिति शङ्कते— **पर एवेति**। न तावत् केवलस्य चेतनस्य मुक्तिबन्धौ, तस्य नित्यमुक्तत्वात्। नापि केवलस्य बुद्ध्यादेस्तौ, तस्य जडत्वात्। किं त्वनाद्यनिर्वाच्याविद्योत्थबुद्ध्याद्युपाधिद्वारा चेतनस्यैव तौ कल्प्येते। न च व्यवस्थानुपपत्तिः, एकस्मिन्नपि चिद्धातौ काल्पनिकभेदाधीनव्यवस्थास्थापनात्, वस्तुतस्तदभावस्येष्टत्वात्। तस्मात् परस्मादन्यस्य चितिमतोऽभावेऽपि वस्तुतः संसारित्वस्य तस्मिन्नप्रसङ्गात् कल्पनया चोपगमान्नैवमित्याह— **न; अविद्येति**। उक्तेऽर्थे श्रौतावन्वयव्यतिरेकौ दर्शयति—

---

१. 'साधनायत्तत्वम्' इति पाठः स्यात्।

**पश्यति' (बृ.उ. २।४।१४) इत्यविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति– 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ.उ. ४।५।१५) इति। तथा स्वप्नजागरितयोरात्मन उपाधिसंपर्ककृतं श्रमं श्येनस्येवाकाशे विपरिपततः श्रावयित्वा तदभावं सुषुप्तौ प्राज्ञेनात्मना संपरिष्वक्तस्य श्रावयति– 'तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्' (बृ.उ. ४।३।२१) इत्यारभ्य 'एषाऽस्य परमा गतिरेषाऽस्य परमा संपदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः (बृ.उ. ४।३।३२) इत्युपसंहारात्।**

**तदेतदाहाचार्यः– 'यथा च तक्षोभयथा' इति। त्वर्थे चायं चः पठितः। नैवं मन्तव्यं स्वाभाविकमेवात्मनः कर्तृत्वमग्नेरिवौष्ण्यमिति। यथा तु तक्षा लोके वास्यादिकरणहस्तः कर्ता दुःखी भवति, स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरंणः स्वस्थो निर्वृतो निर्व्यापारः सुखी भवत्येवमविद्याप्रत्युपस्थापितद्वैतसंपृक्त आत्मा स्वप्नजागरितावस्थयोः कर्ता दुःखी भवति, स तच्छ्रमापनुत्तये स्वमात्मानं परं ब्रह्म प्रविश्य विमुक्तकार्यकरण-संघातोऽकर्ता सुखी भवति संप्रसादावस्थायाम्। तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूयात्मैव**

### *प्रकटार्थविवरणम्*

किञ्चोपाध्युद्भवाभिभवयोः दुःखोद्भवाभिभवाभिधानादप्यौपाधिकमेव कर्तृत्वादीत्याह— **तथा स्वप्नजागरितयोरिति**। उक्तेऽर्थे सूत्रमवतार्य योजयति— **तदेतदाहेत्यादिना**। ननु तक्ष्णो हस्तादिना वास्याद्युपादानं त्यागो वा घटते, न तथा चैतन्यस्य निरवयवस्येति नायं

### *भाष्यभावप्रकाशिका*

किन्तु बुद्ध्याद्युपहितस्यात्मनो जीवभावमापन्नस्य। ततश्चाविद्योपस्थापितबुद्ध्यादिसंघातभेदोपधान आत्मैकोऽपि बद्ध इव भिन्न इव च तत्र यत्रोपातिरेकेण(?) श्रुतिभिरादर्शयति— **तस्य[तथा] चेति**। उपाध्यभिभवोद्भवाभ्यामस्य कर्तृत्वस्याभिभवोद्भव-श्रवणादप्यौपाधिकं तदित्याह—**[तथा स्वप्नजागरित]योरिति**। अत्रैवार्थे सूत्रमवतार्य व्याचष्टे— **तदेतदाहेति**। बुद्ध्यादिसंपिण्डितैकद्रव्ये सत्येव क्रियासमवायदर्शनादसति च तस्मिन् सुषुप्ते केवलात्म[नि]क्रियाद्यदर्शनाद्विशिष्टद्रव्यस्य कारणत्वं तावदवगतम्; तत्रापि निमित्तकारणादुपादानकारणस्य कार्यान्वयितया अन्तरङ्गत्वादुपादानकारणत्वमन्वयव्यतिरेकाभ्यामुक्तन्यायसहिताभ्यां ब्रह्मात्मत्वशास्त्रोपबृंहिताभ्यां कल्पनीयमिति भावः। ननु पूर्वं संप्रसादे कर्तृ[त्व]रहितस्यापि चेत् पश्चात् कर्तृत्वं स्यान्मुक्तावपि तथैव प्रसज्यत इत्यत आह— **तथा मुक्त्यवस्थायामिति**। तत्र कारणसद्भावाद्युक्तमिह तु तदभावान्न भवतीति भावः। यथा कर्तृत्वादिशक्तियुक्तस्य तक्ष्णो

### *न्यायनिर्णयः*

**तथा चेति**। उपाध्युद्भवाभिभवाभ्यां कर्तृत्वस्योद्भवाभिभवश्रवणादपि तदौपाधिकमित्याह— **तथेति**। परमानन्दत्वेनाप्तकामत्वं साधयति— **आत्मेति**। कामयितव्याभावादपि तथेत्याह— **अकाममिति**। अशेषशोकसंस्पर्शशून्यत्वादपि तथेत्याह— **शोकान्तरमिति**। उक्तस्य सौषुप्तात्मरूपस्य परमपुरुषार्थतामाह— **एषेति**। प्रेप्सितमैश्वर्यमतिरिक्तमस्तीत्याशङ्क्याह— **एषाऽस्येति**। लोकविशेषस्या-पेक्षणीयत्वमाशङ्क्योक्तम्— **एष इति**। परमानन्दस्यातिरिक्तस्यापेक्षकत्वमाशङ्क्याह— **एषोऽस्येति**। उक्तेऽर्थे सूत्रमवतारयति— **तदेतदिति**। तदक्षराणि व्याकरोति— **त्वर्थे चेति**। चकारोऽवधारणे। तुशब्दार्थमेव स्फोरयति— **नैवमिति**। तत्र दृष्टान्तं व्याचक्षाणो हेतुमाह— **यथेति**। अन्यैरप्रेर्यत्वं स्वस्थत्वम्। मानसप्रयत्नराहित्यं निर्वृतत्वम्। कायचेष्टाशून्यत्वं निर्व्यापारत्वम्। बुद्ध्यादिसंपिण्डितैकद्रव्ये सत्येव जागरादौ क्रियादर्शनादसति तस्मिन् केवलात्मनि स्वापादौ तददर्शनाद्विशिष्टस्य क्रियाकारणत्वम्। तत्रापि निमित्तादुपादानस्य कार्यान्वयित्वेनान्तरङ्गत्वादुपादानत्वमन्वयव्यतिरेकाभ्यामुक्तन्यायवद्भ्यां ब्रह्मात्मत्वशास्त्रोपबृंहिताभ्यां लभ्यमिति भावः। संप्रसादे कर्तृत्वरहितस्यापि जागरादौ कर्तृत्वं चेन्मुक्तावपि तथैव स्यादित्याशङ्क्याह— **तथेति**। तत्र कारणसद्भावाद् युक्तं

**केवलो निर्वृतः सुखी भवति। तक्षदृष्टान्तश्चैतावतांऽशेन द्रष्टव्यः– तक्षा हि विशिष्टेषु तक्षणादिव्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्ता भवति, स्वशरीरेण त्वकर्तैव। एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्ता भवति, स्वात्मना त्वकर्तैवेति। न त्वात्मनस्तक्ष्ण इवावयवाः सन्ति यैर्हस्तादिभिरिव वास्यादीनि तक्षा, मनआदीनि करणान्यात्मोपाददीत, न्यस्येद्वा।**

**यत्तूक्तं शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृत्वमिति; तन्न[1]; विधिशास्त्रं तावद् यथाप्राप्तं कर्तृत्वमुपादाय कर्तव्यविशेषमुपदिशति, न कर्तृत्वमात्मनः प्रतिपादयति। न च स्वाभाविकमस्य कर्तृत्वमस्ति ब्रह्मात्मत्वोपदेशादित्यवोचाम। तस्मादविद्याकृतं कर्तृत्वमुपादाय विधिशास्त्रं प्रवर्तिष्यते। 'कर्ता विज्ञानात्मा पुरुष' (प्र.उ. ४।९) इत्येवंजातीयकमपि शास्त्रमनुवादरूपत्वाद् यथाप्राप्तमेवाविद्याकृतं कर्तृत्वमनुवदिष्यति। एतेन विहारोपादाने परिहृते। तयोरप्यनुवादरूपत्वात्।**

**ननु संध्ये स्थाने प्रसुप्तेषु करणेषु 'स्वे शरीरे यथाकामं परिवर्तत' इति विहार उपदिश्यमानः**

### *प्रकटार्थविवरणम्*

दृष्टान्त इत्याशङ्क्याह— **तक्षदृष्टान्तश्चेति**।

पूर्वपक्षहेतूननूद्य दूषयति— **यत्तूक्तमित्यादिना**। कर्तृत्वमात्रं विध्यादिनाऽपेक्ष्यते, न तु पारमार्थिकत्वमपि; तत्रापि तात्पर्ये वाक्यभेदप्रसङ्ग इति भावः। करणाभावे यत्कर्तृत्वं तत् स्वाभाविकमेवेत्याह— **ननु सन्ध्ये स्थान इति**। किंच यदि करणविशिष्टस्यात्मनः कर्तृत्वं स्यात्, तदा करणानामपि कर्त्रन्तर्भूतत्वात् करणेषु कर्तृविभक्तिरपि स्यात्; न त्वस्तीत्युपपत्त्यन्तरमाह—

### *भाष्यभावप्रकाशिका*

वास्यादिप्रेरकत्वेन कर्तृत्वमेवमिहापि स्यात्, दृष्टान्तदार्ष्टान्तिकयोः साम्यादित्यत आह— **तक्षदृष्टान्तश्चेति**। इतोऽपि विवक्षितांशे साम्यम्, नात्यन्तमित्याह— **न त्वात्मन इति**।

पूर्वपक्षे हेतूननूद्य दूषयति— **यत्तूक्तमिति**। यत्परं शास्त्रं स एव शास्त्रार्थः। कर्त्रपेक्षितोपायभावनापरं च तत्, न कर्तृस्वरूपपरम्, तेन लोकसिद्धः कर्ता न शास्त्रसिद्ध इत्यर्थः। प्रसिद्धस्योद्देशनसंभवात् प्रसिद्धेश्च प्रमाणव्यतिरेकेणासम्भवात् प्रामाणिकं कर्तृत्वमित्याशङ्क्याह— **न च स्वाभाविकमिति**।

### *न्यायनिर्णयः*

कर्तृत्वम्, इह तदभावान्नेति भावः। यथा कर्तृत्वादिशक्तियुक्तस्य तक्ष्णो वास्यादिप्रेरकत्वेन कर्तृत्वमेवमिहापि स्याद् दृष्टान्तदार्ष्टान्तिकयोस्तुल्यत्वादित्याशङ्क्याह— **तक्षेति**। इतोऽपि विवक्षितांशेन साम्यं, न त्वत्यन्तमित्याह— **न त्विति**।

एवं सिद्धान्तमुपपाद्य पूर्वपक्षबीजमनुभाषते— **यत्त्विति**। शास्त्रार्थवत्त्वमादौ दूषयति— **तत्रेति**। 'यत्परं शास्त्रं स एव तदर्थः' इत्युपगमात्, तस्य च कर्त्रपेक्षितोपायतापरत्वात्, कर्तुः स्वरूपपरत्वाभावात् कर्ता लोकसिद्धो न शास्त्रसिद्ध इत्यर्थः। प्रसिद्धस्योद्देश्यत्वात् प्रसिद्धेश्च मानत्वात् प्रामाणिकं कर्तृत्वमित्याशङ्क्याह— **न चेति**। विधिशास्त्रस्य स्वाभाविककर्तृत्वे तात्पर्याभावे फलितमाह— **तस्मादिति**। श्रुतार्थापत्तिं निरस्यति— **कर्तेति**। तदुभयनिरासन्यायेन लिङ्गद्वयमपि निरस्तमित्याह— **एतेनेति**। अनुवादरूपत्वात् पारमार्थिककर्तृत्वासाधकत्वादिति शेषः।

विहारोपदेशः स्वाभाविकमेव कर्तृत्वं साधयति, करणविरहे श्रुतकर्तृत्वस्य स्वाभाविकत्वध्रौव्यादित्याह— **नन्विति**। उपादानमपि स्वाभाविकं कर्तृत्वं गमयतीत्याह— **तथेति**। विशिष्टस्य कर्तृत्वे करणानामपि कर्त्रन्तर्भावात्तेष्वपि कर्तृविभक्तिः स्यात्। न

---

१. 'तत्र' इति पा.

**केवलस्यात्मनः कर्तृत्वमावहति। तथोपादानेऽपि 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति करणेषु कर्मकरणविभक्ती श्रूयमाणे केवलस्यात्मनः कर्तृत्वं गमयत इति। अत्रोच्यते– न तावत् संध्ये स्थानेऽत्यन्तमात्मनः करणविरमणमस्ति। 'सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति' (बृ.उ.मा. ४।३।७) इति तत्रापि धीसंबन्धश्रवणात्। तथा च स्मरन्ति– 'इन्द्रियाणामुपरमे मनोऽनुपरतं यदि। सेवते विषयानेव तद्विद्यात् स्वप्नदर्शनम्' (म.भा.शा. २७५-२४) इति। 'कामादयश्च मनसो वृत्तयः' इति श्रुतिः। ताश्च स्वप्ने दृश्यन्ते। तस्मात् समना एव स्वप्ने विहरति। विहारोऽपि च तत्रत्यो वासनामय एव, न तु पारमार्थिकोऽस्ति। तथा च श्रुतिरिवकारानुबद्धमेव स्वप्नव्यापारं वर्णयति– 'उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्' (बृ.उ. ४।३।१३) इति। लौकिका अपि तथैव स्वप्नं कथयन्ति– 'आरुक्षमिव गिरिशृङ्गमद्राक्षमिव वनराजि'मिति। तथोपादानेऽपि यद्यपि करणेषु कर्मकरणविभक्तिनिर्देशस्तथापि तत्संपृक्तस्यैवात्मनः कर्तृत्वं द्रष्टव्यम्। केवले कर्तृत्वासंभवस्य दर्शितत्वात्। भवति च लोकेऽनेकप्रकारा विवक्षा– योधा युध्यन्ते, योधै राजा युध्यत इति। अपि चास्मिन्नुपादाने करणव्यापारोपरममात्रं विवक्ष्यते, न स्वातन्त्र्यं कस्यचित्, अबुद्धिपूर्वकस्यापि स्वापे करणव्यापारोपरमस्य दृष्टत्वात्। यस्त्वयं व्यपदेशो दर्शितः 'विज्ञानं यज्ञं तनुते' इति, स बुद्धेरेव कर्तृत्वं**

### *प्रकटार्थविवरणम्*

**तथोपादानेऽपीति**। प्रथमानुपपत्तिं परिहरति— **न तावत्सन्ध्य इति**। द्वितीयानुपपत्तिं प्रत्याह— **तथोपादाने यद्यपीति**। यच्चोक्तं करणेष्वपि कर्तृविभक्त्या भवितव्यमिति, तत्रास्त्येव लोके विवक्षावशात् प्रयोग इत्याह— **भवति च लोक इति**। पूर्वं करणविशिष्टस्य उपादानकर्तृत्वमभ्युपगम्योक्तम्; इदानीं तदपि नास्तीत्याह— **अपि चास्मिन्निति**। अविचारितसंसिद्धं कर्तृत्वमापाततः श्रुतिदर्शनेन पूर्वमुक्तम्। इदानीं विचार्यमाणे पुनर्बुद्धिगतमेव कर्तृत्वमात्मन्यध्यारोपितमिति श्रुत्यर्थमाह— **यस्त्वयं व्यपदेश इति**। विज्ञानमयं व्याख्यायोक्तार्थेऽवतारितोऽयं मन्त्रः "विज्ञानं यज्ञं तनुते" इति। तस्य शेषे-ज्येष्ठं विज्ञानं हिरण्यगर्भाभेदेन ब्रह्म देवाः

### *भाष्यभावप्रकाशिका*

कामादीनामन्तःकरणवृत्तित्वात् तेषां च स्वप्ने भावात्तद्धर्मिसिद्धिरित्याह— **कामादयश्चेति**। विहारस्य पारमार्थिकत्वमभ्युपगम्योक्तम्, इदानीं तस्यापि भ्रान्तिताामाह— **विहारोऽपि चेति**। करणसहितस्य कथं कर्तृत्वं, करणेऽपि कर्तृविभक्तिप्रसङ्गादित्यत आह— **भवति चेति**।

अपि चेयमुपादानश्रुतिः करणव्यापारोपरममात्रपरा, न त्वा(परा)त्मनः स्वातन्त्र्यपरेत्याह— **अपि चेति**। अस्मिन् वाक्ये

### *न्यायनिर्णयः*

चैवमस्ति, तेषु कर्मकरणविभक्त्योरेव श्रवणात्। तस्मात्केवलस्यैवात्मनः कर्तृतेत्यर्थः। परिहरति— **अत्रेति**। तत्रादौ विहारोपदेशस्य स्वाभाविककर्तृत्वसाधकत्वं प्रत्याह— **न तावदिति**। तत्रेति स्वप्नोक्तिः। जाग्रदवस्थायामिवेत्यपेरर्थः। स्वप्नावस्थायामात्मनो मनसः संबन्धे स्मृतिमाह— **तथा चेति**। सेवते तेनैव मनसा वासनामयान्विषयान् यदीति योजना। स्वप्ने मनःसत्त्वे युक्तिमाह— **कामादयश्चेति**। तथा च धर्मित्वेन मनोऽपि तत्रास्तीति शेषः। श्रुतिस्मृतियुक्तिसिद्धं निगमयति— **तस्मादिति**। विहारस्य वास्तवत्वमुपेत्योक्तम्। इदानीं तदपि नास्ति कुतस्तद्वशादात्मनो वास्तवकर्तृतेत्याह— **विहारोऽपीति**। यत्तूपादानादात्मनो वास्तवकर्तृत्वमिति, तत्राह— **तथेति**। करणसहितस्य कर्तृत्वे करणेऽपि कर्तृविभक्तिः स्यादित्युक्तं प्रत्याह— **भवतीति**। करणविशिष्टस्योपादानकर्तृत्वमुपेत्योक्तम्, तदपि नास्तीत्याह— **अपि चेति**। करणव्यापारोपरमस्य बुद्धिपूर्वकत्वात्तस्मिन्निष्टे तत्रात्मनः स्वातन्त्र्यमपीष्टमेवेत्याशङ्क्याह— **अबुद्धीति**। व्यपदेशाच्च क्रियायामित्युक्तमनूद्य प्रत्याह— **यस्त्विति**। बुद्धौ विज्ञानशब्दस्य प्रसिद्धत्वं 'विज्ञानेन विज्ञानमादाय'

**प्रापयति। विज्ञानशब्दस्य तत्र प्रसिद्धत्वात्। मनोऽनन्तरं[१] पाठाच्च। 'तस्य श्रद्धैव शिरः' (तै.उ. २।४) इति च विज्ञानमयस्यात्मनः श्रद्धाद्यवयवत्वसंकीर्तनात्। श्रद्धादीनां च बुद्धिधर्मत्वप्रसिद्धेः। 'विज्ञानं देवाः सर्वे। ब्रह्म ज्येष्ठमुपासते' (तै.उ. २।५।१) इति च वाक्यशेषात्। ज्येष्ठत्वस्य च प्रथमजत्वस्य बुद्धौ प्रसिद्धत्वात्। 'स एष वाचश्चित्तस्योत्तरोत्तर[२]क्रमो यद्यज्ञः' (ऐ.आ. २।३।३) इति च श्रुत्यन्तरे यज्ञस्य वाग्बुद्धिसाध्यत्वावधारणात्। न च बुद्धेः शक्तिविपर्ययः करणानां कर्तृत्वाभ्युपगमे भवति, सर्वकारकाणामेव स्वस्वव्यापारेषु कर्तृत्वस्यावश्यंभावित्वात्। उपलब्ध्यपेक्षं त्वेषां करणानां करणत्वम्, सा चात्मनः। न च तस्यामप्यस्य कर्तृत्वमस्ति, नित्योपलब्धिस्वरूपत्वात्।**

### *प्रकटार्थविवरणम्*

इन्द्रियाण्युपासत इति ज्येष्ठत्वं विशेषेण श्रुतम्। तच्चाग्रजहिरण्यगर्भाभेदेन बुद्धौ प्रसिद्धम्; ततो बुद्धिरेव विज्ञानशब्देनोच्यत इत्याह— **विज्ञानं देवा इति**। किं च श्रुत्यन्तरे यज्ञस्य बुद्धिसाध्यत्वावगमादपि यज्ञकर्तृ विज्ञानं बुद्धिरेवेत्याह— **स एष इति**। चित्तेनाभिध्याय मन्त्रप्रयोगाद्धि यज्ञो निष्पद्यते; अत उक्तम्— यो यज्ञः स एष वाचश्चित्तस्य च [संततः] पूर्वोत्तरभाव इति। यच्चोक्तं बुद्धेः कर्तृत्वे शक्तिवैपरीत्यप्रसङ्ग इति, तत्राह— **न च [बुद्धेः] शक्तीति**। ज्वलन्ति काष्ठानि, स्थाली बिभर्ति, चक्षुर्गृह्णाति रूपम् इत्याद्यनुभवादस्त्येव करणानामपि कर्तृत्वमित्यर्थः। कथं तर्हि व्यापारकर्तृत्वाविशेषे करणत्वमित्याशङ्क्याह— **उपलब्ध्यपेक्षमिति**। यथा काष्ठानां पाकापेक्षयैव करणत्वम्, तथा चक्षुरादीनामप्युपलब्ध्यपेक्षया करणत्वं स्वव्यापारकर्तृत्वेऽपीत्यर्थः। किमाश्रया तर्हि सोपलब्धिरित्याशङ्क्याह— **सा चात्मन इति**। सिद्धं तर्ह्यात्मनः कर्तृत्वमित्याशङ्क्याह— **न च तस्यामपीति**। वृत्तिर्व्याप्तो

### *भाष्यभावप्रकाशिका*

कथं बुध्वगम्य[बुद्धिर्गम्यते] इत्यत आह— **ज्येष्ठत्वस्येति**। 'महद्यक्षं प्रथमजं वेद' 'यो ह वै ज्येष्ठं च श्रेष्ठं वेदे'ति बुद्धेरेव ज्येष्ठत्वावगमादित्यर्थः। यज्ञकर्तुरन्यत्र बुद्धित्वावगमात् तत्साम्यादत्रापि बुद्धिरेव विज्ञानमित्याह— **स एष इति**। विक्लिद्यन्ति तण्डुलाः, ज्वलन्ति काष्ठानि, बिभर्ति स्थालीति स्वव्यापारे कर्तृत्वं कारकाणामस्तीत्याह— **सर्वकारकाणामिति**। तर्हि किं बुद्ध्यादीनां कर्तृत्वमेव, न करणत्वमित्यत आह— **उपलब्ध्यपेक्षमिति**। अथवा काष्ठादीनां स्वव्यापारं प्रति कर्तृत्वेऽपि प्रधानकार्यं प्रति घटते करणभावः, इह तु बुद्धेः करणत्वप्रापकं प्रधानकार्यन्नास्तीत्यत्राह— **उपलब्ध्यपेक्षन्त्विति**। तत्रापि बुद्धेरेव कर्तृत्वमित्यत आह— **सा चेति**। ननूपलब्धिं प्रति केवलस्यात्मनः कर्तृत्वं प्रसज्यत इत्यत आह— **न च तस्यामपीति**। नित्या चेदुपलब्धिः तर्हि कुत्र बुद्धेः करणत्वमिति न वाच्यम्। विषयोपरक्ताकारेण जन्यत्वात्तत्र करणत्वोपपत्तेरिति भावः।

### *न्यायनिर्णयः*

इत्यादौ द्रष्टव्यम्। मनोमयानन्तरं विज्ञानमयोक्तेश्च विज्ञानशब्दस्य बुद्ध्यर्थत्वं संनिधेरित्याह— **मनोनन्तरेति**। तस्य तदर्थत्वे हेत्वन्तरमाह— **तस्येति**। श्रद्धावयवत्वेऽपि कुतो विज्ञानमयस्य बुद्ध्यव्यतिरेकस्तत्राह— **श्रद्धादीनां चेति**। मन्त्रशेषालोचनायामपि विज्ञानशब्दस्य बुद्ध्यर्थतेत्याह— **विज्ञानमिति**। इन्द्रियाणि देवाः। तथापि कथं बुद्धिसिद्धिः, तत्राह— **ज्येष्ठत्वस्येति**। 'महद्यक्षं प्रथमजं वेद' 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' इति बुद्धेरेव हिरण्यगर्भाभेदेन ज्येष्ठत्वोक्तेर्वाक्यशेषे बुद्धिसिद्धिरित्यर्थः। किंच श्रुत्यन्तरे यज्ञस्य बुद्धिसाध्यत्वसिद्धेर्यज्ञकर्तृ विज्ञानं बुद्धिरेवेत्याह— **स एष इति**। चित्तेन ध्यात्वा वाचा मन्त्रोक्त्या यज्ञो जायते; तेन चित्तस्य पूर्वोत्तरभावो यज्ञ इति यज्ञकर्तुर्बुद्धित्वसिद्धेस्तत्सामान्यादत्रापि बुद्धिरेव विज्ञानमित्यर्थः। 'न चेन्निर्देशविपर्ययः' इत्युक्तं 'शक्तिविपर्ययात्' इत्युक्तेन सह दूषयति— **न चेति**। विक्लिद्यन्ति तण्डुलाः, ज्वलन्ति काष्ठानि, बिभर्ति स्थालीति कारकान्तराणामपि स्वव्यापारेषु कर्तृत्वस्वीकारादित्याह— **सर्वेति**। तर्हि बुद्ध्यादीनां कर्तृत्वमेव न करणत्वं, नेत्याह— **उपलब्धीति**। तत्रापि बुद्धेरेव कर्तृत्वमित्याशङ्क्योक्तम्— **सा चेति**। तर्हि केवलस्यात्मनस्तां प्रति कर्तृत्वं, नेत्याह— **न चेति**। न चोपलब्धेर्नित्यत्वे कुतो

१. 'अनन्तरपाठाच्च' इति पा.। २. 'तरोत्तरि' इति पा.।

**अहंकारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भवितुमर्हति। अहंकारस्याप्युपलभ्यमानत्वात्। न चैवं सति करणान्तरकल्पनाप्रसङ्गः। बुद्धेः करणत्वाभ्युपगमात्। समाध्यभावस्तु शास्त्रार्थवत्त्वेनैव परिहृतः। यथाप्राप्तमेव कर्तृत्वमुपादाय समाधिविधानात्। तस्मात् कर्तृत्वमप्यात्मन उपाधिनिमित्तमेवेति स्थितम्।।४०।।**

।।इति पञ्चदशं तक्षाधिकरणम्।।

### *प्रकटार्थविवरणम्*

[वृत्तिव्याप्ते] हि विषये प्रतिबिम्बितमात्मचैतन्यं विषयोपलब्धिः; तत्र यद्यपि प्रतिबिम्बमेवानिरूप्यमाणेऽपि तथापि बिम्बाधीनं प्रतिबिम्बमित्यस्ति लोकानुभवः, तद्वदात्मनोऽपि चित्प्रतिबिम्बनिमित्तत्वेन व्यावहारिकमुपलब्धृत्वं न तूपलब्धिक्रियाश्रयत्वेनेति भावः। ननु 'अहं करोमि' इति प्रत्यक्षमात्मनः कर्तृत्वमनुभूयते। तद् बुद्धेरापद्यत इत्यनिष्टमुक्तमित्याशङ्क्याह— **अहङ्कारपूर्वकमपीति**। 'अहं करोमि' इति अहङ्कारसामानाधिकरण्येन कर्तृत्वमनुभूयते। न चानुभूयमानगतो धर्मोऽनुभवितुरारोपमन्तरेण भवितुमर्हतीति भावः। यच्चोक्तं बुद्धेः कर्तृत्वे करणान्तरं वाच्यम्, तदा नाममात्रे विवाद इति, तत्राह— **न चैवं सतीति**। न तावद् बुद्धेः स्वव्यापारे करणान्तरं मृग्यम्, कारकान्तरव्यापारे व्यभिचारात्, नाप्युपलब्धिसिद्धये, बुद्धेरेव तत्र कारणत्वादिति भावः। यच्चोक्तम् आत्मनोऽकर्तृत्वे समाध्यभावः स्यादिति, तत्राह— **समाध्यभावस्त्विति**। यस्मात् तात्त्विककर्तृत्वे न प्रमाणमस्ति, तस्मात् प्रतीयमानं मिथ्येत्युपसंहरति— **तस्मादिति**।

अत्र किञ्चिदुवाच **भास्करः**— "न चौपाधिकं कर्तृत्वमपारमार्थिकम्, यथाऽग्निगतेनौष्ण्यगुणेन दाहोऽनुभूयते। न चासावपारमार्थिको

### *भाष्यभावप्रकाशिका*

यदुक्तं बुद्धेः कर्तृत्वे कर्तुरहमित्युपलभ्य प्रवृत्तिदर्शनादुपलब्धौ करणान्तरस्यान्वेषणीयत्वाच्च केवलात्मन एव कर्तृत्वमापततीति, तत्राह— **अहंकारपूर्वकमिति**। विशिष्टस्याहंकारस्य विषयत्वादित्यर्थः। विशिष्टस्य च कर्तृत्वे ज्ञातुरेव कर्तृत्वं, कर्तुरेव च भोक्तृत्वमित्येतदुपपद्यत इति भावः। अथवा पूर्वं तस्योपलब्धौ स्वाभाविकं कर्तृत्वमस्तीत्युक्तम्, इदानीं बुद्ध्यादेरुपलब्धिकर्तृत्वमपि नात्मन्यध्यस्तं यथा तद्गतमध्यवसायादिकर्तृत्वमित्याह— **अहंकारपूर्वकमिति**। एतदुक्तं भवति— यदि बुद्धिरुपलब्ध्री भवेत्ततस्तदुपलब्धृत्वमात्मन्यध्यवस्येत। तदेव नास्ति, तस्या जडत्वेनोपलभ्यमानतया तदयोगादिति। यदा चोपलब्धौ बुद्धेरकर्तृत्वं तदा यदुक्तं बुद्धेरुपलब्धात्वे[ब्धृत्वे] कारणान्तरं कल्पनीयमिति। तदपि न संभवतीत्याह— **न चैवं सतीति**। बुद्धेरुपलब्धृत्वाभावादित्यर्थः। तत्किं बुद्धेः करणत्वमुपलब्धावात्मनो वा कर्तृत्वन्नास्त्येवेत्यत आह— **बुद्धेः करणत्वाभ्युपगमादिति**। अयमभिसन्धिः— आत्मस्वरूपभूतायामुपलब्धौ नित्यत्वात् कर्तृत्वाद्यभावेऽपि तस्या विषयावच्छेदे बुद्ध्यादीनां केवलानां करणत्वमात्मनश्च तदुपधानेनाहंकारपूर्वकं कर्तृत्वं संभवतीति। इति पञ्चदशं तक्षाधिकरणम्।।

### *न्यायनिर्णयः*

बुद्धेस्तत्र करणतेति वाच्यम्, विषयोपरक्ततया तस्या जन्यत्वात् तत्र करणत्वसिद्धिरिति भावः। यत्तु बुद्धेः कर्तृत्वे कर्तुरहमित्युपलभ्य प्रवृत्तिदृष्टेरुपलब्धौ करणान्तरस्यान्वेष्यत्वाच्च केवलस्यैवात्मनः कर्तृत्वमिति, तत्राह— **अहंकारेति**। सत्यमहंकारपूर्वकं कर्तृत्वं तथापि न तदुपलब्धुः साक्षिणोऽस्तीत्यत्र हेतुमाह— **अहंकारस्येति**। अहंकारवत्तद्विशिष्टस्यैव चेतनस्य कर्तृत्वं साक्षिणोपलभ्यते। तस्मान्न केवलस्यात्मनः कर्तृत्वम्। विशिष्टस्य च कर्तृत्वे ज्ञातुरेव कर्तृत्वं कर्तुरेव भोक्तृत्वमित्येतदपि सिध्यतीत्यर्थः। उपलब्धौ बुद्धेरकर्तृत्वे बुद्धेरुपलब्धृत्वे करणान्तरं कल्प्यमित्यपि प्रत्युक्तमित्याह— **न चेति**। बुद्धेरुपलब्धृत्वाभावे सतीति यावत्। किंच बुद्धेरुपलब्धौ करणत्वमात्मनश्च कर्तृत्वं नेष्टं तदात्मा बुद्ध्या जानातीत्ययुक्तं, नेत्याह— **बुद्धेरिति**। आत्मस्वरूपोपलब्धौ नित्यत्वात् कर्त्राद्यभावेऽपि तस्यास्तत्तदर्थावच्छेदे बुद्ध्यादीनां करणत्वादात्मनश्च तदुपाधिनाऽहंकारपूर्वकं कर्तृत्वादविरुद्धा प्रसिद्धिरित्यर्थः। यत्तु समाध्यभावाच्चेति, तत्राह— **समाधीति**। उक्तहेतूनामात्मनि स्वाभाविककर्तृत्वासाधकत्वे सिद्धे विध्यादिश्रुतीनां कल्पितकर्तृत्वोपजीवित्वात्, असङ्गश्रुतीनां च वास्तवासङ्गत्ववादित्वान्मिथोविरोधाभावान्नित्यशुद्धे ब्रह्मणि समन्वयसिद्धिरित्युपसंहरति— **तस्मादिति**।।४०।। इति पञ्चदशं तक्षाधिकरणम्।।

## १६।।परायत्ताधिकरणम्।।सू. ४१-४२।।

## परात्तु तच्छ्रुतेः।।४१।।

**यदिदमविद्यावस्थायामुपाधिनिबन्धनं कर्तृत्वं जीवस्याभिहितम्, तत् किमनपेक्ष्येश्वरं भवत्याहोस्विदीश्वरापेक्षमिति भवति विचारणा। तत्र प्राप्तं तावन्नेश्वरमपेक्षते जीवः कर्तृत्व इति। कस्मात्? अपेक्षाप्रयोजनाभावात्। अयं हि जीवः स्वयमेव रागद्वेषादिदोषप्रयुक्तः कारकान्तरसामग्रीसंपन्नः कर्तृत्वमनुभवितुं शक्नोति। तस्य किमीश्वरः**

### *शारीरकन्यायसंग्रहः*

**परात्तु तच्छ्रुतेः।।४१।। कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः।।४२।।**

अत्र कर्त्रात्मन क्रियानिष्पत्तौ अन्वयव्यतिरेकवत्करणादिकारककलापेऽवस्थिते सति पुनः कारणान्तरोपादानं केवलव्यतिरेकापेक्षम्। अतस्तदभावात् नेश्वरः कर्तृत्वं प्रति कारणमिति स्थितम्। श्रुतिश्चेश्वरस्य कारणत्वं ब्रवीति। तत्र द्वयोः प्रमाणयोः विरोधे सति सुखाद्युत्पत्तौ दृष्टकारणसंपत्तावपि केवलव्यतिरेकशून्यस्यापि धर्मादेरागमात् सुखादिहेतुत्वप्रतिपत्तिवत् केवलव्यतिरेकस्य दृष्टकारणक्लृप्तिविषयतया आगमस्य चादृष्टकारणक्लृप्तिविषयतया व्यवस्थोपपत्तेः ईश्वरसापेक्षं कर्तृत्वमिति दर्शितम्।

### *प्रकटार्थविवरणम्*

भवति। यद्यपि स्वात्मन्यौष्ण्यं स्वतो नास्ति, तथोपाधिवशात् कर्तृत्वमुपजायते'' इति, तदसत्। यद्युपाधिसंयोगादात्मनि परमार्थतः कर्तृत्वमुत्पद्यते अग्निसंयोगादिव घटे लौहित्यम्, तदोपाधिविगमेऽप्यात्मनः कर्तृत्वमापद्येतेत्यनिर्मोक्षप्रसङ्गः। न चाग्नेरौष्ण्यं दाह्ये तत्त्वतो भवति, परधर्मस्य परत्र गमनानुपपत्तेः। न चौष्ण्यान्तरं तत्रोत्पन्नम्, निमित्ताभावेऽपि नैमित्तिकसद्भावोपलम्भात्। तवापि तत्रौष्ण्यप्रत्ययोऽन्यथाख्यातिरेव; तच्च सामानाधिकरण्यमस्माकं दृष्टान्तो भविष्यति। विमतं मिथ्या, औपाधिकत्वात्, संप्रतिपन्नवत्। किंच तवापि कर्तृत्वादेः सत्यत्वं नाम यावदुपाधि सद्भावः, तदिष्टमेवास्माकम्। परमार्थतोऽतथाभूतस्वदेशकालार्थक्रियाप्रसञ्जक उपाधिरिति लक्षणाभ्युपगमात्; अत्यन्ताबाध्यत्वं च प्रत्युक्तम्। किं चोपाधिसंयोगोऽपि निरवयवस्य निरूपणं न सहते। तस्मात् कर्त्रन्तःकरणप्रतिबिम्बिततया मिथ्यैवात्मनः कर्तृत्वम्; तयोश्च तादात्म्यात् तदैकरूप्यावभास इति स्थितम्। इति पञ्चदशं तक्षाधिकरणम्।।

**परात्तु तच्छ्रुतेः**।। उक्तमनूद्य संशयमाह— **यदिदमिति**। जीवस्य करणादिपौष्कल्यादीश्वरस्य कारयितृत्वश्रवणाच्च संशयो द्रष्टव्यः। कर्ममीमांसकानां पूर्वपक्षमाह— **तत्र प्राप्तमिति**। पूर्वत्रोपाध्यन्वयव्यतिरेकाभ्यामौपाधिकं कर्तृत्वं जीवस्येत्युक्तम्; तथाऽत्रापि कारकान्तरसहकृतस्यैवान्वयव्यतिरेकाभ्यां कर्तृत्वमित्यर्थः। किं च यदि कारकान्तरसमवधानेऽपि ईश्वराभावापराधेन अकर्तृत्वं दृष्टं

### *भाष्यभावप्रकाशिका*

**परात्तु तच्छ्रुतेः**। ईश्वरः कर्तृत्वसामग्र्यामन्तर्भवतीति उभयमप्यनुपपन्नमित्याह— **अयं हि जीव इति**। यद्यपि रागादि दृष्टं कारणम् तथापि शास्त्रसामर्थ्यादीश्वरस्य कारणत्वं भविष्यतीति चेन्मैवं केवलव्यतिरेकाभावादित्याह— **तस्येति**। प्रमाणान्तरमपि

### *न्यायनिर्णयः*

औपाधिकमपि पूर्वोक्तं कर्तृत्वमीश्वरायत्तमित्याह— **परात्त्विति**। विषयमनूद्य जीवस्य करणादिपौष्कल्यादीश्वरस्य कारयितृत्वश्रुतेश्च संशयमाह— **यदिति**। कर्ममीमांसकपक्षं गृह्णाति— **तत्रेति**। अत्र च 'एष ह्येव' इत्यादिश्रुतीनां विधिश्रुत्यादिभिर्विरोधसमाधानेन सर्वनियामके ब्रह्मणि समन्वयसमाधानात् पादादिसंगतयः। पूर्वपक्षे दर्शितश्रुतीनां मिथोविरोधादप्रामाण्यादुक्ते ब्रह्मणि समन्वयासिद्धिः। सिद्धान्ते तासामविरोधेन प्रामाण्यात्तत्र तत्सिद्धिः। शास्त्रादीश्वरस्यापेक्षणीयतेति शङ्कते— **कस्मादिति**। कर्तृत्वसामग्र्यामीश्वरोऽन्तर्भूतो न वेति विकल्प्य द्वितीयं निरस्यति— **अपेक्षेति**। आद्यं प्रत्याह— **अयं हीति**। कारकान्तराणि तत्तत्कार्यनिर्माणकारणानि करणादीनि तेषां सामग्री संपूर्णता तया संपन्नः सहितः सन्निति यावत्। एवं कर्तृत्वे संभवति नेश्वरापेक्षा केवलव्यतिरेकाभावादित्याह— **तस्येति**।

**करिष्यति? न च लोके प्रसिद्धिरस्ति कृष्यादिकासु क्रियास्वनडुदादिवदीश्वरोऽपरोऽपेक्षितव्य इति। क्लेशात्मकेन च कर्तृत्वेन जन्तून् संसृजत ईश्वरस्य नैर्घृण्यं प्रसज्येत, विषमफलं चैषां कर्तृत्वं विदधतो वैषम्यम्। ननु 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' (ब्र.सू. २।१।३४) इत्युक्तम्। सत्यमुक्तम्, सति त्वीश्वरस्य सापेक्षत्वसंभवे; सापेक्षत्वं चेश्वरस्य संभवति सतोर्जन्तूनां धर्माधर्मयोः; तयोश्च सद्भावः सति जीवस्य कर्तृत्वे। तदेव चेत् कर्तृत्वमीश्वरापेक्षं स्यात् किंविषयमीश्वरस्य सापेक्षत्वमुच्येत। अकृताभ्यागमश्चैवं जीवस्य प्रसज्येत। तस्मात् स्वत एवास्य कर्तृत्वमिति।**

**एतां प्राप्तिं तुशब्देन व्यावर्त्य प्रतिजानीते– 'परात्' इति। अविद्यावस्थायां कार्यकरणसंघाताविवेकदर्शिनो जीवस्याविद्यातिमिरान्धस्य सतः, परस्मादात्मनः कर्माध्यक्षात् सर्वभूताधिवासात् साक्षिणश्चेतयितुरीश्वरात्**

### *प्रकटार्थविवरणम्*

स्यात्, तदेश्वरस्यापि निमित्तत्वं केवलव्यतिरेकाभावात् कल्प्येत, न तु तदस्तीत्याह— **न च लोक इति**। इतश्च नेश्वरस्य निमित्तत्वमित्याह— **क्लेशात्मकेन चेति**। पूर्वं परिहृतमिदं चोद्यमित्याह— **नन्विति**। जीवस्य धर्माधर्मत्वं[१] तत्सापेक्षत्वं चेश्वरस्य सिद्धवत्कृत्य जगत्सर्गे वैषम्यनैर्घृण्ये न स्त इति पूर्वमुक्तम्; इह तु तदेवासिद्धमित्युच्यते, परस्पराश्रयप्रसङ्गादित्याह— **सत्यमुक्तमिति**। किंचेश्वरश्चेद् बलात् प्रवर्तयति, तदा साधुकारिणोऽप्यसाधुप्राप्तिः कदाचित् स्यादित्याह— **अकृताभ्यागमश्चेति**।

पूर्वपक्षमुपसंहृत्य सिद्धान्तमवतारयति— **तस्मादित्यादिना**। यथा केवलव्यतिरेकाभावेऽपि सुखस्य धर्मकार्यत्वं शास्त्रप्रामाण्यादेव तथेश्वरस्यापि निमित्तत्वम्, दृष्टकारणक्लृप्तावेव केवलव्यतिरेकस्य प्रामाण्यादिति सिद्धान्त्याशयः।

### *भाष्यभावप्रकाशिका*

नास्तीत्याह— **न च लोक इति**। न चेश्वरो द्वेषपक्षपातरहितो जीवान् साध्वसाधुनोः कर्मणोः प्रवर्त्तयेत्, तस्य स्वतन्त्रस्य परमकारुणिकत्वाद्धर्म एव प्रवर्तकतोपपत्तेरित्याह— **क्लेशात्मकेनेति**। तत्रेश्वरस्य जगत्कारणत्वप्रयुक्तदोषाभावं सापेक्षत्वाक्षेपपूर्वकश्चिन्तयति। अतो न पौनरुक्त्यमित्याह— **सत्यमिति**। ईश्वरकारयितृत्वसापेक्षजीवकर्तृत्वाधीनकर्मापेक्षमीश्वरकारयितृत्ववत्व[तृत्वं चे]च्चक्रकादि-दोषप्रसंगादित्यर्थः। 'निजं मम यदभ्यस्त'मिति न्यायेन पूर्वपूर्वकर्मवासनासापेक्षमुत्तरोत्तरकर्तृत्वमित्येतदपि न सिध्येदित्याह— **अकृतेति**।

नियन्तृनियन्तव्यभावस्य भेदविषयत्वात् प्रथमं दर्शयति— **अविद्यावस्थायामिति**। सन्निध्यभावे कथं कारयितृत्वमित्यत आह— **कर्माध्यक्षादिति**। पूर्वत्र सन्निध्यभावे कथं कारयितृत्वमित्यत आह— **सर्वभूताधिवासादिति**। तथापि तद्विषयज्ञानाभावे

### *न्यायनिर्णयः*

मा भूदीश्वरस्य शास्त्रवशादपेक्ष्यत्वं, मानान्तरात्तु भविष्यति, तत्राह— **न चेति**। किंचेश्वरो द्वेषपक्षपातरहितः साध्वसाधुनोर्न कर्मणोर्जीवान् प्रवर्तयेत्, तस्य स्वतन्त्रस्य कारुणिकत्वात् कर्मणि साधुन्येव प्रवर्तकत्वात्। अतो विचित्रसर्गासिद्धिरित्याह— **क्लेशेति**। उक्तोत्तरत्वादनवकाशं चोद्यमिति शङ्कते— **नन्विति**। तत्रेश्वरस्य जगत्कारणत्वकृतदोषाभावश्चिन्तितः। अत्र तु जीवस्य कर्तृत्वेऽपीश्वरस्य प्रयोजकत्वकृतदोषाभावं सापेक्षत्वमाक्षिप्य चिन्तयतीत्यर्थः। भेदमुपेत्याह— **सत्यमिति**। ईश्वरस्य कारयितृत्वे जीवस्य कर्तृत्वम्, ततस्तदधीनकर्मापेक्षमीश्वरस्य कारयितृत्वमिति चक्रकादिदोषप्रसङ्गान्नेश्वरस्य [२]सापेक्षत्वादित्यर्थः। ईश्वरायत्ते जीवस्य कर्तृत्वे पूर्वपूर्वकर्मवासनासापेक्षमुत्तरोत्तरकर्तृत्वमित्यपि न सिध्यतीत्याह— **अकृतेति**। जीवस्येश्वरापेक्षाभावे फलितमाह— **तस्मादिति**। स्वतश्चेदस्य कर्तृत्वं विध्यादिश्रुतिसिद्धं तदा 'एष ह्येव' इत्यादिश्रुतिविरोधे समन्वयासिद्धिरित्युपसंहर्तु**मिति**शब्दः।

सिद्धान्तयति— **एतामिति**। प्रतिज्ञां विवृणोति— **अविद्येति**। जीवस्येश्वरादेव संसारस्य मोक्षस्य च सिद्धिर्भवितुमर्हतीति संबन्धः। तस्य परस्मादत्यन्तान्यत्वं निरस्यति— **अविद्येति**। सैव तिमिरं विद्याप्रकाशमन्तरेणानिराकरणात् तेनान्धः स्वरूपज्ञानहीनश्चिदात्मा

१. 'धर्माधर्मवत्त्वम्' इति पाठः स्यात्। २. 'सापेक्षत्वम्' इति पाठः स्यात्।

**तदनुज्ञया कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिः, तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिर्भवितुमर्हति। कुतः? तच्छ्रुतेः। यद्यपि दोषप्रयुक्तः सामग्रीसंपन्नश्च जीवः, यद्यपि च लोके कृष्यादिषु कर्मसु नेश्वरकारणत्वं प्रसिद्धम्, तथापि सर्वास्वेव प्रवृत्तिष्वीश्वरो हेतुकर्तेति श्रुतेरवसीयते। तथा हि श्रुतिर्भवति– 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' (कौ.उ. ३।८) इति। 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' (बृ.उ.मा. ३।७।३०) इति चैवंजातीयका।।४१।।**

**नन्वेवमीश्वरस्य कारयितृत्वे सति वैषम्यनैर्घृण्ये स्यातामकृताभ्यागमश्च जीवस्येति; नेत्युच्यते–**

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः।।४२।।**

**तुशब्दश्चोदितदोषव्यावर्तनार्थः। कृतो यः प्रयत्नो जीवस्य धर्माधर्मलक्षणस्तदपेक्ष एवैनमीश्वरः कारयति। ततश्चैते चोदिता दोषा न प्रसज्यन्ते। जीवकृतधर्माधर्मवैषम्यापेक्ष एव तत्तत्फलानि विषमं विभजेत् पर्जन्यवदीश्वरो निमित्तत्वमात्रेण। यथा लोके नानाविधानां गुच्छगुल्मादीनां व्रीहियवादीनां चासाधारणेभ्यः स्वस्वबीजेभ्यो जायमानानां साधारणं निमित्तं भवति पर्जन्यः। न ह्यसति पर्जन्ये रसपुष्पफलपलाशादिवैषम्यं तेषां जायते,**

***प्रकटार्थविवरणम्***

उक्तचोद्यनिरासाय सूत्रान्तरमवतारयति— **नन्वेवमिति**।

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः**।। गुच्छगुल्मादीनां स्तबकग्रन्थ्यादीनाम्। गुच्छा ह्रस्ववल्लीरूपाः; गुल्मा अपि दीर्घवल्लयः। पलाशादि पत्रादि। स्वेच्छया यदि जीवेन कृतः कश्चित् प्रयत्नः स्यात् तदा तदपेक्ष ईश्वरो विषमं कर्तृत्वं

***भाष्यभावप्रकाशिका***

तदनुपपन्नमित्यत आह— **साक्षिण इति**। सक्षित्वमुपपादयति— **चेतयितुरिति**। केवलव्यतिरेकाभावेऽपि श्रुतिवशादीश्वरस्य कारणत्वं सुखाद्युत्पत्तौ धर्मादेरिव न विरुध्यते। केवलव्यतिरेकस्य दृष्टकारणकनुर....[क्लृ]प्तिविषयत्वादागमस्यापि चादृष्टकारणक्लृप्ति-विषयताया व्यवस्थोपपत्तेरित्येतदाह— **तथापि सर्वास्विति**। काऽत्र श्रुतिरिति, तामाह— **तथाहि श्रुतिरिति**।

दृष्टान्तं प्रपञ्चयति— **यथेति**।

***न्यायनिर्णयः***

तस्यावच्छिन्नस्वभावस्य देहादिसमुदायविषयाविवेकदर्शनं विभ्रमस्तच्छीलस्य विक्षिप्तस्य जीवस्य सतोऽविद्यादशायां संसारस्य पृथक्त्वेन कल्पितादीश्वरात्सिद्धिरिति यावत्। तस्य वास्तवपररूपमाह— **परस्मादिति**। सर्वविषयज्ञानाभावे कथं कारयितृत्वम्, तत्राह— **कर्मेति**। तथापि सर्वत्र संनिध्यभावे कारयितृत्वासिद्धिः, तत्राह— **सर्वेति**। तथापि तज्ज्ञानाभावे तदसिद्धिः, तत्राह— **साक्षिण इति**। तदुपपादयति— **चेतयितुरिति**। ईश्वरस्य कारयितृत्वे स्वगतव्यापारवत्त्वमाशङ्क्योक्तम्— **तदिति**। संसारस्यानर्थत्वेन हेयत्वार्थं विशिनष्टि— **कर्तृत्वेति**। कथं बन्धहेतुरीश्वरस्तद्विरुद्धमोक्षहेतुः स्यात्, तत्राह— **तदनुग्रहेति**। जीवस्य दोषप्रयुक्तत्वात् कारकान्तरसामग्रीमत्त्वादीश्वरस्य कृष्यादिषु कारणत्वाप्रसिद्धेश्च न तदपेक्षं कर्तृत्वमित्याह— **कुत इति**। सौत्रं हेतुमवतार्य व्याचष्टे— **तदिति**। केवलव्यतिरेकाभावेऽपि श्रुतेरीश्वरस्य सुखादौ धर्मादेरिव कारणत्वम्, केवलव्यतिरेकस्य दृष्टकारणक्लृप्ति-विषयत्वादागमस्यादृष्टकारणकल्पकत्वेन व्यवस्थानादिति भावः। तामेव श्रुतिमाह— **तथा हीति**।।४१।।

चोद्यान्तरमनुद्रवति— **नन्विति**। उत्तरत्वेन सूत्रमवतारयति— **नेतीति**। तदक्षराणि व्याकरोति— **तुशब्द इति**। ईश्वरस्य प्रवर्त्यादृष्टापेक्षया प्रवर्तकत्वे फलितमाह— **ततश्चेति**। दोषाणामप्रसङ्गमेव प्रकटयति— **जीवेति**। धर्माधर्माभ्यामेव फलवैषम्यसिद्धेरलमीश्वरेणेत्याशङ्क्य पर्जन्यवदित्युक्तम्। तद्विवृणोति— **यथेति**। अतिदीर्घा वल्ल्यो गुच्छाः, ह्रस्वा गुल्मा इति

**नाप्यसत्सु स्वस्वबीजेषु, एवं जीवकृतप्रयत्नापेक्ष ईश्वरस्तेषां शुभाशुभं विदध्यादिति श्लिष्यते।**

**ननु कृतप्रयत्नापेक्षत्वमेव जीवस्य परायत्ते कर्तृत्वे नोपपद्यते। नैष दोषः। परायत्तेऽपि हि कर्तृत्वे करोत्येव जीवः। कुर्वन्तं हि तमीश्वरः कारयति। अपि च पूर्वप्रयत्नमपेक्ष्येदानीं कारयति, पूर्वतरं च प्रयत्नमपेक्ष्य पूर्वमकारयदित्यनादित्वात् संसारस्येत्यनवद्यम्। कथं पुनरवगम्यते कृतप्रयत्नापेक्ष ईश्वर इति? विहितप्रतिषिद्धावैयर्थ्यादिभ्य इत्याह। एवं हि 'स्वर्गकामो यजेत' 'ब्राह्मणो न हन्तव्यः' इत्येवंजातीयकस्य विहितस्य प्रतिषिद्धस्य चावैयर्थ्यं भवति। अन्यथा तदनर्थकं स्यात्। ईश्वर एव विधिप्रतिषेधयोर्नियुज्येत। अत्यन्तपरतन्त्रत्वाज्जीवस्य। तथा विहितकारिणमप्यनर्थेन संसृजेत्, प्रतिषिद्धकारिणमप्यर्थेन। ततश्च प्रामाण्यं वेदस्यास्तमियात्। ईश्वरस्य चात्यन्तानपेक्षत्वे लौकिकस्यापि पुरुषकारस्य वैयर्थ्यम्, तथा देशकालनिमित्तानाम्,**

### *प्रकटार्थविवरणम्*

प्रयच्छतीति वक्तुं शक्येत; तदेव नास्तीत्याह— **ननु कृतप्रयत्नत्वमेवेति**। जीवेन कृतः प्रयत्न एव नास्तीति न शक्यते वक्तुम्, तस्यैव प्रधानकर्तृत्वात्; न ह्याचार्याधीनो माणवक इत्येतावता नाध्ययनस्य कर्तेत्याह— **नैष दोष इति**। यच्चोक्तमितरेतराश्रयत्वं तदपि नास्तीत्याह— **अपि च पूर्वमिति**। उत्तरं सूत्रभागमवतारयति— **कथं पुनरित्यादिना**। **अन्यथेति**। ईश्वरस्य अनपेक्षत्वे सति तद् विध्यादिकमनर्थं स्यात्। न हि बलवदनिलसलिलौघनुद्यमान इव पुरुषे बलादीश्वरेण प्रवर्त्यमाने विध्यादेरर्थवत्त्वसंभावनेति भावः। आनर्थक्यमेव स्फुटयति— **ईश्वर एव विधिप्रतिषेधयोः** स्थाने **नियुज्येत**; यद्विधिप्रतिषेधाभ्यां कर्तव्यं तदीश्वर एव कुर्यादित्यर्थः। आदिशब्दाद् दोषान्तरमाह— **तथा विहितकारिणमित्यादिना। पूर्वोक्तदोषप्रसङ्गश्चेति**। वैषम्यनैर्घृण्यादिप्रसङ्गश्चेत्यर्थः।

### *भाष्यभावप्रकाशिका*

कर्तृत्वशक्तिशून्यमेवेश्वरो बलात्कारयतीति न ब्रूम इत्याह— **परायत्तेति**। कथं तर्हि कारयितृत्वमिति विधिनिषेधयोरानर्थक्यं स्यादित्याह— **ईश्वर एव**। विधिप्रतिषेधयोः स्थाने ईश्वर एव नियुज्येतेति योजना, स एव विधिनिषेधयोरधिक्रियेतेति वा। आदिशब्दगृहीतमर्थमाह— **तथा विहितकारिणमिति**। पूर्वोक्तदोषोऽकृताभ्यागमः।

### *न्यायनिर्णयः*

भेदः। बीजेभ्यो जायमानव्रीह्यादीनां कृतं पर्जन्येनेत्याशङ्क्याह— **न हीति**। कृतं तर्हि बीजैरित्याशङ्क्याह— **नापीति**। दार्ष्टान्तिकं विवृणोति— **एवमिति**।

यदि जीवेन कृतः स्वेच्छया कश्चित्प्रयत्नस्तदा तदपेक्षः सन्नीश्वरो विषमं कर्तृत्वं कुर्यात्। न तु तदस्ति, चक्रकापत्तेरिति शङ्कते— **नन्विति**। किमीश्वरस्य कारयितृत्वे जीवस्य कर्तृत्वमेव नेत्यापाद्यते किंवा तस्य कर्तृत्वे कारयितृत्वमीश्वरस्य नेति, तत्राद्यं प्रत्याह— **नेति**। न हि गुर्वधीनो माणवको नाध्ययनस्य कर्तेति भावः। द्वितीयं दूषयति— **कुर्वन्तं हीति**। अध्ययनशक्तं प्रत्येवाध्यापकत्वोपलम्भात् क्रियाशक्तिमन्तं जीवं प्रत्यपि कारयितृत्वमीश्वरस्य युक्तमिति भावः। चक्रकापत्तिं निरस्यति— **अपि चेति। अनवद्यम्** जीवस्य कर्तृत्वं तत्कृतधर्माधर्मापेक्षया च कारयितृत्वमीश्वरस्येति शेषः। तस्य सापेक्षत्वे मानं पृच्छति— **कथमिति**। तत्र मानोक्तिपरं सूत्रावयवमादत्ते— **विहितेति**। ईश्वरस्य सापेक्षत्वे विहितस्य निषिद्धस्य चावैयर्थ्यम्, तस्य चेन्नैरपेक्ष्यं तदा तयोरानर्थक्यम्। अतस्तयोरर्थवत्त्वानुपपत्तिरीश्वरस्य सापेक्षत्वसाधिकेत्याह— **एवमिति**। किमितीश्वरस्य नैरपेक्ष्ये विहितादिवैयर्थ्यम्, तत्राह— **ईश्वर इति**। तयोः स्थाने स एव नियुज्येत, यत्ताभ्यां कार्यं तदसावेव कुर्यादिति तयोरानर्थक्यमित्यर्थः। जीवं प्रति प्रवर्तकत्वेन निवर्तकत्वेन च तदर्थवत्त्वमाशङ्क्याह— **अत्यन्तेति**। सर्वात्मना जीवस्येश्वराधीनत्वात् तत्प्रेरितस्य प्रवृत्तिनिवृत्तिभाक्त्वात् कृतं विधिनिषेधाभ्यामित्यर्थः। आदिशब्दार्थमाह— **तथेति**। अत्यन्तं स्वातन्त्र्यादेवं कुर्वन्नपीश्वरो न पर्यनुयोगमर्हतीत्याशङ्क्याह— **ततश्चेति**। ईश्वरस्य स्वातन्त्र्येण फलहेतुत्वे समीहितासमीहितहेतुभेदविधायि शास्त्रममानं स्यादित्यर्थः। आदिशब्दगृहीतं दोषान्तरमाह— **ईश्वरस्येति। पुरुषकारस्य** इष्टानिष्टाप्तिहानानुकूलस्य यत्नस्येति यावत्। पुरुषकारवैयर्थ्यं दृष्टान्तयितुं तथेत्युक्तम्। तेषां वैयर्थ्यमिति

**पूर्वोक्तदोषप्रसङ्गश्चेत्येवंजातीयकं दोषजातमादिग्रहणेन दर्शयति।।४२।।**

।।इति षोडशं परायत्ताधिकरणम्।।

**१७।।अंशाधिकरणम्।।सू. ४३-५३।।**

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके।।४३।।

**जीवेश्वरयोरुपकार्योपकारकभाव उक्तः। स च संबद्धयोरेव लोके दृष्टो यथा स्वामिभृत्ययोर्यथा वाऽग्निविस्फुलिङ्गयोः। ततश्च जीवेश्वरयोरप्युपकार्योपकारकभावाभ्युपगमात् किं स्वामिभृत्यवत् संबन्ध**

***शारीरकन्यायसंग्रहः***

**अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके।।४३।। मन्त्रवर्णाच्च।।४४।। अपि च स्मर्यते।।४५।। प्रकाशादिवन्नैवं परः।।४६।। स्मरन्ति च।।४७।। अनुज्ञापरिहारौ देहसंबन्धात् ज्योतिरादिवत्।।४८।। असन्ततेश्चाव्यतिकरः।।४९।। आभास एव च।।५०।। अदृष्टानियमात्।।५१।। अभिसन्ध्यादिष्वपि चैवम्।।५२।। प्रदेशादिति चेन्नान्तर्भावात्।।५३।।** अत्यन्तभिन्नयोः जीवब्रह्मणोः निरवयवयोः संयोगाभावात्, भृत्यस्वामिसंबन्धस्य च सङ्कल्पक्रियादिसापेक्षस्य सर्वजीवविषयस्याभावात्, विशिष्टस्वरूपसंबन्धे विशेषणापाये विशिष्टापायात्, भेदाभेदसंबन्धस्य कार्यकारणगुणगुणिजातिव्यक्ति[केवलविशिष्ट]स्वरूपांशांशिभावविषयस्य ब्रह्मजीवयोः तेषामभावेऽभावात्, निरंशत्वादंशांशिभावसंबन्धायोगात्, ब्रह्मस्वरूपमात्रत्वे काल्पनिकौपाधिकभेदत्वे च जीवस्य नित्यन्तृनियम्यत्वायोगात् यद्यपि सर्वसंबन्धा न संभवन्ति, तथाप्यैकात्म्यनियन्तृनियम्यत्वप्रमाणयोरितरेतरविरोधे सति प्रधानवाक्यानुगुण्येन घटाकाशमहाकाशवत् महति ब्रह्मद्रव्येऽल्पोपाधिपरिच्छिन्नतया भागबुद्धिगोचरस्य जीवस्य ब्रह्मणा अंशांशिसंबन्धमुपचरितं परिकल्प्य नियन्तृनियम्यभावापेक्षामूलः संबन्धो दर्शितः।

।।इति भगवत्प्रकाशात्मविरचिते शारीरकन्यायसंग्रहे द्वितीयाध्यायस्य तृतीयः पादः।।

***प्रकटार्थविवरणम्***

इदमधिकरणं **वाचस्पतेर्दुर्योजम्**, यतः—

प्रेरकत्वे परेशस्य जीवस्य भ्रान्तिकर्तृता। जीवभ्रान्त्या परेशस्य प्रेरकत्वं सुदुर्घटम्।। इति षोडशं परायत्ताधिकरणम्।।

**अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके।।** वृत्तं सङ्कीर्त्य संशयपूर्वपक्षौ दर्शयति— **जीवेश्वरयो-**

***भाष्यभावप्रकाशिका***

**अंशो नानाव्यपदेशादित्यादि।** अवान्तरसङ्गतिमाह— **जीवेश्वरयोरिति।** संयोगसमवाययोरसंभवात् तादात्म्यस्य कार्यकारणाद्यभावादनुपपत्तेः 'पादोऽस्य विश्वा भूतानी'त्यादिश्रुतेश्च निरवयवेंऽशासंभवादुपचरितत्वात् भृत्यस्वामिसंबन्धस्य संबन्धक्रियादिसापेक्षत्वेऽपि

***न्यायनिर्णयः***

**संबन्धः।** पूर्वोक्तदोषोऽकृताभ्यागमादिः। तदेवम् 'एष हि' इत्यादिश्रुतीनां विध्यादिश्रुतिभिरविरोधात् परस्मिन्नशेषनियन्तरि समन्वयसिद्धिरिति।।४२।। इति षोडशं परायत्ताधिकरणम्।।

जीवात्मन्यारोपितं कर्तृत्वमीश्वरायत्तमित्युक्तम्। इदानीं निर्धारितयोग्यत्वस्य तस्य ब्रह्मैक्यं साधयति— **अंश इति।** विषयं वक्तुं वृत्तं कीर्तयति— **जीवेति।** तस्य [1]संबन्धापेक्षकत्वमाह— **स चेति।** सिद्धान्तानुसारिणमपि दृष्टान्तमाह— **यथा वेति।** उपकार्योपकारकत्वाक्षिप्तं जीवेश्वरसंबन्धं विषयीकृत्योभयथा दृष्टिं हेतुं कृत्वा विचारप्रयोजकं संदेहमाह— **ततश्चेति।** नियामकाभावेन

१. 'सबन्धाक्षेपकत्वम्' इति पाठः स्यात्।

आहोस्विदग्निविस्फुलिङ्गवदित्यस्यां विचिकित्सायामनियमो वा प्राप्नोति, अथवा स्वामिभृत्यप्रकारेष्वेवेशित्रीशितव्यभावस्य प्रसिद्धत्वात् तद्विध एव संबन्ध इति प्राप्नोति। अतो ब्रवीति– अंश इति। जीव ईश्वरस्यांशो भवितुमर्हति, यथाऽग्नेर्विस्फुलिङ्गः। अंश इवांशः। न हि निरवयवस्य मुख्योंऽशः संभवति। कस्मात् पुनर्निरवयवत्वात् स एव न भवति? नानाव्यपदेशात्। 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छा.उ. ८।७।१) 'एतमेव विदित्वा मुनिर्भवति' 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति चैवंजातीयको भेदनिर्देशो नासति भेदे युज्यते। ननु चायं नानाव्यपदेशः सुतरां स्वामिभृत्यसारूप्ये युज्यत इत्यत आह– अन्यथा चापीति। न च नानाव्यपदेशादेव केवलादंशत्वप्रतिपत्तिः। किं तर्हि? अन्यथा चापि व्यपदेशो भवत्यनानात्वस्य प्रतिपादकः। तथा हि एके शाखिनो दाशकितवादिभावं ब्रह्मण आमनन्त्याथर्वणिका ब्रह्मसूक्ते– 'ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः'[1] इत्यादिना। दाशा य एते कैवर्ताः प्रसिद्धाः, ये चामी दासाः स्वामिष्वात्मानमुपक्षपयन्ति[2], ये चान्ये कितवा द्यूतकृतस्ते सर्वे ब्रह्मैवेति हीनजन्तूदाहरणेन सर्वेषामेव नामरूपकृतकार्यकरणसंघातप्रविष्टानां जीवानां ब्रह्मत्वमाह। तथाऽन्यत्रापि ब्रह्मप्रक्रियायामेवायमर्थः प्रपञ्च्यते– 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी। त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः' (श्वे.उ. ४।३) इति। 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते'

### प्रकटार्थविवरणम्

रित्यादिना। सूत्रं योजयति— जीव ईश्वरस्येति। न केवलं श्रुतिभ्य एवाभेदावगमः; किं तु तर्कतोऽपि इत्याह— चैतन्यं

### भाष्यभावप्रकाशिका

प्रसिद्धत्वात् स एवाभ्युपगन्तव्य इत्याह— अथ स्वामिभृत्येति। तत्राग्नेः सांशत्वादंशांशिभाव उपपद्यत इह तु तन्नास्तीत्यत आह— अंश इवाश इति। सूत्रसामर्थ्यान्मुख्यमेवांशत्वं स्यादित्यत आह— तर्हि निरवयवस्येति। निरवयवत्वे तर्हि एकत्वमेव कस्मान्न भवेदिति चोदयति— कस्मात्पुनरिति। वञ्चसि गच्छसि। न केवलं श्रुतितः, न्यायतश्चाभेदः संभवतीत्याह— चैतन्यञ्चाविशिष्टमिति।

### न्यायनिर्णयः

पूर्वपक्षाभासं संगृह्णाति— अनियम इति। जीवेश्वरयोरनंशत्वेन[3] प्रदेशवृत्तेः संयोगस्यानुपपत्तेः, समवायस्य च निरस्तत्वात्, कार्यकारणत्वादिहीनतया तादात्म्यस्यापि दुःसंपादत्वात्, निरंशे चांशासंभवात् 'पादोऽस्य' इत्यादिश्रुतेरौपचारिकत्वात्, भृत्यस्वामिसंबन्धस्य च प्रसिद्धत्वात्, अनियमस्य च जघन्यत्वान्नियमेन भृत्यस्वामिलक्षणः संबन्धस्तयोरित्याह— अथवेति। अत्र च जीवब्रह्मभेदाभेदश्रुतिविरोधनिरासेनैकरसे ब्रह्मणि समन्वयसाधनात्पादादिसंगतयः। पूर्वपक्षे भेदाभेदश्रुतीनां विरोधादप्रामाण्यादुक्तसमन्वयासिद्धिः। सिद्धान्ते तासामविरोधात्प्रामाण्यात् तत्सिद्धिः। पूर्वपक्षमनूद्य प्रतिज्ञामवतार्य व्याकरोति— अत इति। अग्नेः सांशत्वादंशांशित्वेऽपि प्रकृते न सांशतेति प्रतिज्ञासिद्धिमाशङ्क्याह— अंश इति। सूत्रसामर्थ्यान्मुख्यमेवांशत्वं जीवस्य किं न स्यात्, तत्राह— न हीति। चोद्यद्वारा सूत्रावयवमादत्ते— कस्मादिति। व्यतिरेकेण व्याकरोति— स इति। आत्यन्तिकाभेदे भेदोक्त्यसिद्धिश्चेत्तदर्थमात्यन्तिको भेदः स्यादिति शङ्कते— ननु चेति। कथंचिद्भेदेऽपि यस्य सिद्धिस्तस्यातिशयेन सिद्धिरात्यन्तिके भेदे स्यादित्युक्तम्— सुतरामिति। सूत्रावयवेनोत्तरमाह— अत इति। तस्यार्थमाह— न चेति। अभेदव्यपदेशं विशदयन् दाशकितवादित्वमित्यादि व्याचष्टे— तथा हीति। दाशादिपदार्थोक्तिपूर्वकमुद्देश्यविधेयत्वं प्रकटयन् हीनजन्तूदाहरणतात्पर्यमाह— दाशा इति। उक्तार्थस्फुटीकरणार्थमुदाहरणान्तरमाह—तथेति। वञ्चसि गच्छसि। सूत्रात्मैवात्र सर्वात्मत्वेन स्तूयते, न परमात्मेत्याशङ्क्य श्रुत्यन्तरमाह— सर्वाणीति।

१. 'ब्रह्मेमे कितवा उत' इति पा.। पैप्पलादसंहितायां ब्रह्मसूक्तेऽप्येवं दृश्यते। २. 'उपक्षिपन्ति' इति पा.। ३. निरवयवत्वेनेत्यर्थः।

**(तै.आ. ३।१२।७) इति च। 'नान्योऽतोऽस्ति द्रष्टा' (बृ.उ. ३।७।२३) इत्यादिश्रुतिभ्यश्चास्यार्थस्य सिद्धिः। चैतन्यं चाविशिष्टं जीवेश्वरयोर्यथाऽग्निविस्फुलिङ्गयोरौष्ण्यम्। अतो भेदाभेदावगमाभ्यामंशत्वावगमः।।४३।।**

**कुतश्चांशत्वावगमः-**

## मन्त्रवर्णाच्च।।४४।।

**मन्त्रवर्णश्चैतमर्थमवगमयति- 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' (छा.उ. ३।१२।६) इति। अत्र भूतशब्देन जीवप्रधानानि स्थावरजङ्गमानि निर्दिशति। 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः' (छा.उ. ८।१५।१) इति प्रयोगात्। अंशः पादो भाग इत्यनर्थान्तरम्। तस्मादप्यंशत्वावगमः।।४४।।**

**कुतश्चांशत्वावगमः?**

## अपि च स्मर्यते।।४५।।

### *प्रकटार्थविवरणम्*

**चाविशिष्टमिति**। जीवो नात्यन्तं ब्रह्मणो भिद्यते, चिद्रूपत्वात्, ब्रह्मवदेवेत्यर्थः। फलितमाह— **अतो भेदाभेदावगमाभ्यामिति**।

अंशत्वमेव सूत्रद्वयेनाह— **कुतश्चेत्यादिना**।

**मन्त्रवर्णाच्च**।। ननु भूतशब्दस्य महाभूतेषु रूढत्वात् नात्र जीवानामंशत्वमुच्यत इत्याशङ्क्याह— **अत्र भूतशब्देनेति**। **तीर्थेभ्यः** शास्त्रविहितेभ्यः अन्यत्र सर्वभूतान्यहिंसन् इति प्रयोगान्महाभूतेषु रूढत्वं नास्तीत्यर्थः। तथापि भूतानां पादत्वमेवात्रोच्यते, न त्वंशत्वमित्याशङ्क्याह— **अंशः पाद इति**। **अनर्थान्तरम्** एतेषां अर्थान्तरं नास्ति, एते पर्याया इत्यर्थः।

### *भाष्यभावप्रकाशिका*

भूतशब्देन योगवृत्त्या भवन्तीति भूतानीति जनिमन्मात्रं प्रतीयते; प्रसिद्धपरिग्रहे महाभूतानि; तत्र कथं जीवपरिग्रह **इति** अत आह— **अत्र भूतशब्देनेति**। ननु वृद्धव्यवहाराभावे कथं तदिति चेत्, सत्यं वैदिकव्यवहारोऽस्तीत्याह— **अहिंसन्निति**। नन्वत्रांशत्वं [न] प्रतीयत इति अत आह— **अंशः पाद इति**।

### *न्यायनिर्णयः*

**यदास्ते** यो नामरूपे निर्मायाभिवदनादि कुर्वन् वर्तते तं विद्वानिहैवामृतो भवतीति संबन्धः। न केवलं विधिद्वारैवाभेदो बोध्यते, किंतु निषेधद्वाराऽपीत्याह— **नेति**। न केवलं श्रुतितोऽभेदो न्यायतश्चेत्याह— **चैतन्यं चेति**। जीवो **नात्यन्तं ब्रह्मणो** भिद्यते, चिद्रूपत्वात्, ब्रह्मवदेवेत्यर्थः। व्यपदेशाभ्यामुपपत्तेश्च फलितमाह— **अत इति**।।४३।।

अंशत्वसिद्धौ हेत्वन्तरत्वेनानन्तरसूत्रमवतारयति— **कुतश्चेति**। तद् व्याचष्टे— **मन्त्रेति**। **अस्य** सहस्रशीर्ष्णः पुरुषस्य तावान् महिमा विभूतिर्न स्वरूपम्, यावानेष प्रपञ्चः, ततस्तस्मात्प्रपञ्चाज्ज्यायान्महत्तर एवायं **प्रकृतः** पुरुषः। आद्यपादार्थं विवृणोति— **पादोऽस्येति**। द्वितीयपादार्थं प्रपञ्चयति— **त्रिपादिति**। भूतशब्देन रूढियोगाभ्यां **महाभूतानां** जनिमन्मात्रस्य ज्ञाने कुतो जीवोक्तिरित्याशङ्क्याह— **अत्रेति**। वृद्धव्यवहाराभावे कथं भूतशब्दस्योक्तार्थतेत्याशङ्क्य वैदिकव्यवहारं दर्शयति— **अहिंसन्निति**। तीर्थानि शास्त्रोक्तानि कर्माणि, तेभ्योऽन्यत्र सर्वाणि भूतान्यहिंसन् वर्ततेत्यत्र भूतशब्दो जीवप्रधानेषु स्थावरजङ्गमेषु प्रयुज्यते। तत्र प्राप्तहिंसानिषेधस्य फलवत्त्वात्। अतो युक्तं प्रकृतेऽपि भूतशब्दस्य जीवविषयत्वमित्यर्थः। तथापि भूतानां पादत्वमेवोच्यते न त्वंशत्वमित्याशङ्क्याह— **अंश इति**। मान्त्रवर्णिकमर्थमुपसंहरति— **तस्मादिति**।।४४।।

न केवलं श्रुतेरेव जीवस्येश्वरांशत्वम्, किंतु स्मृतेरपीति सूत्रान्तरमुत्थापयति— **कुतश्चेति**। तद् व्याकरोति— **ईश्वरेति**।

**ईश्वरगीतास्वपि चेश्वरांशत्वं जीवस्य स्मर्यते– 'ममैवांशो जीवलोके जीवभूतः सनातनः' (भ.गी. १५।७) इति। तस्मादप्यंशत्वावगमः। यत्तूक्तं स्वामिभृत्यादिष्वेवेशित्रीशितव्यभावो लोके प्रसिद्ध इति। यद्यप्येषा लोके प्रसिद्धिस्तथापि शास्त्रात्त्वत्रांशांशित्वमीशित्रीशितव्यभावश्च निश्चीयते। निरतिशयोपाधिसंपन्नश्चेश्वरो निहीनोपाधिसंपन्नाञ्जीवान् प्रशास्तीति न किंचिद् विप्रतिषिध्यते।।४५।।**

**अत्राह– ननु जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखोपभोगेनांशिन ईश्वरस्यापि दुःखित्वं स्यात्। यथा लोके हस्तापादाद्यन्यतमाङ्गगतेन दुःखेनाङ्गिनो देवदत्तस्य दुःखित्वम्, तद्वत्। ततश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयात्। अतो वरं पूर्वावस्थः संसार एवास्त्विति सम्यग्दर्शनानर्थक्यप्रसङ्गः स्यादिति। अत्रोच्यते–**

**प्रकाशादिवन्नैवं परः।।४६।।**

**यथा जीवः संसारदुःखमनुभवति नैवं पर ईश्वरोऽनुभवतीति प्रतिजानीमहे। जीवो ह्यविद्यावेशवशाद्**

***प्रकटार्थविवरणम्***

**अपि च स्मर्यते**।। सम्प्रति परोक्तमनूद्य दूषयति— **यत्तूक्तमित्यादिना**। ननु द्वयोरपि चिन्मात्रत्वाविशेषे केन विशेषेणैको नियम्यः, अपरो नियामक इति, तत्राह— **निरतिशयेति**।

उत्तरसूत्रनिरस्याशङ्कामाह— **अत्राहेत्यादिना**। ईश्वरः स्वांशगतैः दुःखैः दुःखी स्यात्, अंशित्वात्, देवदत्तवदित्यर्थः। ततः किं भवतीत्याशङ्क्याह— **ततश्चेति**। पूर्वं स्वशरीरमात्रगतमेव दुःखमासीत्। सम्यग्ज्ञानात्तु सकलसंसारदुःखानुषङ्गो भवतीति व्यर्थमेव तत् स्यादित्यर्थः।

**प्रकाशादिवन्नैवं परः**।। "नैवं परः" इति सूत्रभागं व्याचष्टे— **यथा जीव इति**। देवदत्तस्य नांशित्वाद् दुःखित्वम्;

***भाष्यभावप्रकाशिका***

ईशित्रीशितव्यभावस्य शास्त्रार्थत्वात्तस्मिन् शास्त्रीय एव संबन्धो वक्तव्य इत्यत आह— **शास्त्रात्त्विति**। उभयोरप्यौपाधिकत्वाविशेषे विपरीत एवेशित्रीशितव्यभावः कस्मान्न भवेदित्यत आह— **निरतिशयेति**।

**ईश्वरस्यापि दुःखित्वं स्यादिति**। ईश्वरस्याप्यनीश्वरत्वमस्मदादिवत् स्यादित्यर्थः। नव[ तत् ]प्राप्तानां महत्तरदुःखमिति। मोक्षस्यापुरुषार्थत्वमित्यर्थः। सम्यग्दर्शनसाधनविधायि शास्त्रवैयर्थ्यं च स्यादित्याह— **सम्यग्दर्शनानर्थक्यप्रसङ्ग इति**। कुत

***न्यायनिर्णयः***

स्मृतिसिद्धमर्थं निगमयति— **तस्मादिति**। जीवेश्वरयोरीशित्रीशितव्यभावात् तस्य स्वामिभृत्यादिष्वेव प्रसिद्धत्वात् तयोः स्वामिभृत्यभावः संबन्धो नांशाशित्वं लोकप्रसिद्धिविरोधादित्याशङ्क्योक्तमनुवदति— **यत्त्विति**। यववराहाधिकरणन्यायेन लोकप्रसिद्धिः शास्त्रीयप्रसिद्ध्या बाध्येत्याह— **यद्यपीति**। जीवेश्वरयोरौपाधिकत्वाविशेषे कस्मादीशित्रीशितव्यभावो विपरीतो न स्यादित्याशङ्क्याह— **निरतिशयेति**। एकस्मिन्नेव पूर्णे चिदात्मन्यनाद्यनिर्वाच्याविद्याकल्पितो जीवेश्वरजगद्भेदः। तत्र कल्पितोपाध्युत्कर्षनिकर्षवशादीशित्रीशितव्यव्यवस्था। वस्तुतस्तु सर्वकल्पनातीतं चिदेकतानमद्वितीयं तत्त्वमिति भावः।।४५।।

उत्तरसूत्रव्यावर्त्यां शङ्कामाह— **अत्रेति**। जीवेश्वरयोरंशांशित्वं सप्तम्यर्थः। दुःखित्वं स्यात्। ततश्चानीश्वरत्वमिति शेषः। अंशगतेन दुःखेनांशिनो दुःखित्वं दृष्टान्तेन स्पष्टयति— **यथेति**। ईश्वरस्य दुःखित्वे दोषान्तरमाह— **ततश्चेति**। ब्रह्मप्राप्तानां महत्तरे दुःखे प्राप्ते मोक्षस्यापुरुषार्थतेत्याह— **अत इति**। तस्यापुमर्थत्वे सम्यग्धीसाधनविधायिशास्त्रवैयर्थ्यमित्याह— **इति सम्यगिति**। सूत्रमवतारयति— **अत्रेति**। 'नैवं पर' इति भागं विभजते— **यथेति**। प्रतिज्ञाते विभागे हेतुमाह— **जीवो हीति**। जीवस्य

**देहाद्यात्मभावमिव गत्वा तत्कृतेन दुःखेन दुःख्यहमित्यविद्यया कृतं दुःखोपभोगमभिमंन्यते। नैवं परमेश्वरस्य देहाद्यात्मभावो दुःखाभिमानो वाऽस्ति। जीवस्याप्यविद्याकृतनामरूपनिर्वृत्तदेहेन्द्रियाद्युपाध्यविवेकभ्रमनिमित्त एव दुःखाभिमानो, न तु पारमार्थिकोऽस्ति। यथा च स्वदेहगतदाहच्छेदादिनिमित्तं दुःखं तदभिमानभ्रान्त्याऽनुभवति, तथा पुत्रमित्रादिगोचरमपि दुःखं तदभिमानभ्रान्त्यैवानुभवत्यहमेव पुत्रोऽहमेव मित्रमित्येवं स्नेहवशेन पुत्रमित्रादिष्वभिनिविशमानः। ततश्च निश्चितमेतदवगम्यते– मिथ्याभिमानभ्रमनिमित्त एव दुःखानुभव इति। व्यतिरेकदर्शनाच्चैवमवगम्यते। तथाहि– पुत्रमित्रादिमत्सु बहुषूपविष्टेषु तत्संबन्धाभिमानिष्वितरेषु च पुत्रो मृतो मित्रं मृतमित्येवमाद्युद्घोषिते येषामेव पुत्रमित्रादिमत्त्वाभिमानस्तेषामेव तन्निमित्तं दुःखमुत्पद्यते, नाभिमानहीनानां परिव्राजकादीनाम्। अतश्च लौकिकस्यापि पुंसः सम्यग्दर्शनार्थवत्त्वं दृष्टं, किमुत विषयशून्यादात्मनोऽन्यद् वस्त्वन्तरमपश्यतो नित्यचैतन्यमात्रस्वरूपस्येति। तस्मान्नास्ति सम्यग्दर्शनानर्थक्यप्रसङ्गः। प्रकाशादिवदिति**

### *प्रकटार्थविवरणम्*

किन्तु अविद्याकामकर्माख्यदुःखसाधनत्वात्; अतोऽप्रयोजको हेतुरित्यर्थः। ननु जीवस्य स्वाभाविकमेव दुःखित्वम्, नाविद्यादिकृतमित्याशङ्क्याह— **जीवस्यापीति**। [1]सोपाध्यविद्यया कृतो यो नामरूपाभ्यां निर्वृत्तेन देहेन्द्रियाद्युपाधिना सहाविवेकभ्रमः तादात्म्यभ्रमः तन्निबन्धन एवायं दुःखानुभवो न पारमार्थिकः, अनिर्मोक्षप्रसङ्गादित्यर्थः। उक्तमेवान्वयमुखेनोदाहरणतः स्पष्टयति— **यथा चेत्यादिना**। सति मिथ्याभिमाने दुःखम्— इत्यन्वयो दर्शितः। इदानीं मिथ्याभिमानाभावे दुःखमपि नास्तीति व्यतिरेकादपि मिथ्याभिमानकार्यत्वमवगम्यत इत्याह— **व्यतिरेकेति**। **इतरेषु चेति**। अभिमानहीनेषु परिव्राजकादिष्वित्यर्थः। **विषयशून्यादिति**। अविषयादित्यर्थः। **नित्यचैतन्येति**। बिम्बभूतब्रह्मरूपेण व्यवस्थितस्येत्यर्थः। पूर्वं हेतोरप्रयोजकत्वमुक्तम्। इदानीमनैकान्तिकत्वमाह— **प्रकाशादिवदिति**। अङ्गुल्यादिसंपृक्तः प्रकाशांशो यद्यपि ऋजुवक्रादिभावं मिथ्यैवापद्यते, तथाप्युपाध्यसंपृक्तस्वरूपो वक्रादिभावं

### *भाष्यभावप्रकाशिका*

एतदित्यपेक्षायां देहाद्यभिमानादभिमानवत्त्वेनेतीत्याह— **जीवो हीति**। ननु जीवस्य दुःखित्वादीश्वरस्यापि तदंशितया(न्व) दुःखेन भाव्यमिति; सत्यम्, दुःखस्य पारमार्थिकत्वेन तदेव तु नेत्याह— **जीवस्यापीति**। नन्वनिर्वचनीयदुःखस्य विद्यमानत्वात्तादृशमेव दुःखं ब्रह्मणो भवेदिति चेन्नैवम्; तन्निमित्तभ्रमाभावात्। भ्रमोऽपि भवेदिति चेन्नैवम्; तन्निमित्तामानाभावात् तदभावश्च प्रकाशादिवदिति दृष्टान्तव्याख्यानेन वक्ष्यत इति भावः। ननु विवेकदर्शनादात्माभिमानाभावेऽपि पुत्रादौ दुःखमात्मनि, नेत्याह— **तथा चेति**।

### *न्यायनिर्णयः*

दुःखित्वे तदंशित्वादीश्वरस्यापि दुःखित्वमित्याशङ्क्य तस्यापि वस्तुतोऽदुःखित्वान्नैवमित्याह— **जीवस्येति**। न चानिर्वाच्यमेव दुःखं ब्रह्मण्यपीति वाच्यम्, तदुपनायकदृष्ट्यभावात्, कल्पितस्य च दृष्टिमात्रदेहत्वात्, जीवद्वारा च ब्रह्मणि तदुपगमात्। न चैवं ब्रह्मप्राप्तानां महत्तरदुःखप्राप्तिरज्ञानतज्जध्वस्तेरेव तत्प्राप्तित्वादिति भावः। मिथ्याभिमानकृतं दुःखमित्ययुक्तं, पुत्रादौ विवेकबुद्ध्याऽऽत्माभिमानाभावेऽपि तद्गतदुःखस्यात्मन्यारोपादित्याशङ्क्याह— **यथा चेति**। अनुभवितारं विशिंषन् भ्रान्तिमभिनयति— **अहमिति**। अन्वयेनोक्तं निगमयति— **ततश्चेति**। तमेवार्थं व्यतिरेकेण स्फोरयति— **व्यतिरेकेति**। तदेव विवृणोति— **तथाहीति**। उक्तं व्यतिरेकमुपजीव्य सम्यग्दर्शनानर्थक्यप्रसङ्गं प्रत्यादिशति— **अतश्चेति**। **लौकिकस्य** शास्त्रोत्थतत्त्वधीशून्यस्येत्यर्थः। सम्यग्दर्शनं विवेकज्ञानमात्रम्। **विषयशून्यात्** अविषयादिति यावत्। तस्य सम्यग्दर्शनं शास्त्रीयं तत्त्वसाक्षात्करणं तस्यार्थवत्त्वमिति किमु वक्तव्यमिति योजना। कैमुतिकन्यायफलमाह— **तस्मादिति**। ईश्वरः स्वांशगतैर्दुःखैर्दुःखी स्यात्, अंशित्वात् देवदत्तवदित्यत्र तन्निमित्तभ्रमवत्त्वोपाधेरप्रयोजको हेतुरित्युक्तम्। इदानीं तात्त्विकं प्रातीतिकं वा दुःखित्वमीश्वरे साध्यमिति विकल्प्याद्ये यदंशाश्रितं

१. 'स्वोपाधि' इति पाठः स्यात्।

निदर्शनोपन्यासः। यथा प्रकाशः सौरश्चान्द्रमसो वा वियद् व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसंबन्धात् तेष्वृजुवक्रादिभावं प्रतिपद्यमानेषु तत्तद्भावमिव प्रतिद्यमानोऽपि न परमार्थतस्तद्भावं प्रतिपद्यते, यथा चाकाशो घटादिषु गच्छत्सु गच्छन्निव विभाव्यमानोऽपि न परमार्थतो गच्छति, यथा चोदशरावादिकम्पनात् तद्गते सूर्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान् सूर्यः कम्पते, एवमविद्याप्रत्युपस्थापिते बुद्ध्याद्युपहिते जीवाख्येंऽशे दुःखायमानेऽपि न तद्वानीश्वरो दुःखायते। जीवस्यापि तु दुःखप्राप्तिरविद्यानिमित्तैवेत्युक्तम्। तथा चाविद्यानिमित्तजीवभावव्युदासेन ब्रह्मभावमेव जीवस्य प्रतिपादयन्ति वेदान्ताः 'तत्त्वमसि' इत्येवमादयः। तस्मान्नास्ति जैवेन दुःखेन परमात्मनो दुःखित्वप्रसङ्गः।।४६।।

**स्मरन्ति च।।४७।।**

स्मरन्ति च व्यासादयो यथा जैवेन दुःखेन न परमात्मा दुःखायत इति। 'तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः। न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा। कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते। स सप्तदशकेनापि राशिना युज्यते पुनः' (म.भा.शा. ३५१।१४-१६) इति। चशब्दात् समामनन्ति चेति वाक्यशेषः। 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (श्वे.उ. ४।६) इति, 'एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' (क.उ. ५।११) इति च।।४७।।

अत्राह– यदि तर्ह्येक एव सर्वेषां भूतानामन्तरात्मा स्यात्, कथमनुज्ञापरिहारौ स्यातां लौकिकौ वैदिकौ

***प्रकटार्थविवरणम्***

नापद्यते, औपाधिकांशरूपेण निरुपाधिकस्यांशिकल्पस्य दुष्टत्वादर्शनादनैकान्तिकत्वमिति भावः। यदुक्तं जीवस्यापि पारमार्थिकं दुःखित्वं नास्तीति; तदनूद्य लिङ्गान्तरमाह— **जीवस्यापीत्यादिना**। पारमार्थिके दुःखित्वे सति जीवत्वापोहेन ब्रह्मभावोऽपि नोपदिश्येतेत्यर्थः।

**स्मरन्ति च**।। इदानीं स्मृतिविरोधात् वेदविरोधाच्च कालात्ययापदिष्टत्वमाह— **स्मरन्ति चेति**। **कर्मात्मा** कर्माश्रयः; पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च वायवो मनो बुद्धिश्चेति सप्तदशसंख्यावच्छिन्नेन समूहेन संबध्यत इत्यर्थः।

एवं तावदंशांशिभावमभ्युपगम्य अंशित्वात् इत्यस्य हेतोः अप्रयोजकत्वादि दूषणमुक्तम्। इदानीं यदुक्तमंश इवांश इति तदाक्षेपसमाधानपूर्वकं स्पष्टीकर्तुं स्वरूपैक्यमुपादायाक्षिपति— **अत्राह यदि तर्हीत्यादिना**। अनुज्ञापरिहारव्यवस्थान्यथानुपपत्त्या

***न्यायनिर्णयः***

तदंशिनि वस्तुतः स्यादित्यत्र व्यभिचारमाह— **प्रकाशेति**। प्रकाशदृष्टान्तं व्याचष्टे— **यथेति**। आत्मन्युपाधितो दुःखादिप्रतीतिरेव, वस्तुतस्तु न प्राप्तिरित्यत्र दृष्टान्तमुक्त्वा लोकद्वयसंसारस्यापि तस्मिन् प्रतीतिमात्रं, न वस्तुतेत्यत्र दृष्टान्तमाह— **यथा चेति**। क्रियामात्रस्यात्मनि वस्तुतो नास्ति प्राप्तिरित्यत्रोदाहरणम्— **यथा चेति**। दृष्टान्तत्रयगतमर्थं दार्ष्टान्तिके योजयति— **एवमिति**। वास्तवे दुःखित्वे साध्ये व्यभिचारमुक्त्वा साध्यवैकल्यमाह— **जीवस्येति**। प्रातीतिके दुःखित्वे साध्ये जीवद्वारा परस्मिन्नपि तत्प्रतीतेरिष्टत्वेन सिद्धसाध्यतां मत्वोभयत्रापि नास्ति वस्तुतो दुःखित्वमागमविरोधादित्याह— **तथा चेति**। परकीयानुमाननिरास-फलमुपसंहरति— **तस्मादिति**।।४६।।

परानुमाने श्रुतिस्मृतिविरुद्धतया कालात्ययापदेशं दर्शयति— **स्मरन्तीति**। तत्र स्मृतिविरोधं विभजते— **स्मरन्ति चेत्यादिना**। काऽसौ स्मृतिस्तामाह— **तत्रेति**। निर्धारणार्था सप्तमी। **फलैश्चापीति** चकारात् कर्मभिरपीत्यर्थः। **कर्मात्मा** कर्माश्रयो जीवः। पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च वायवो मनो बुद्धिश्चेति सप्तदशसंख्यावच्छिन्नः समूहः सप्तदशको राशिस्तेनेति यावत्। सूत्रे स्मृतिविरोध उद्भाव्यते, श्रुतिविरोधस्तु न भातीत्याशङ्क्याह— **चशब्दादिति**। यथाऽऽदित्यः सर्वप्रकाशको न प्रकाश्यदोषैः स्पृश्यते तथेति यावत्।।४७।।

अंशांशित्वमुपेत्यांशित्वहेतोरप्रयोजकत्वाद्युक्तम्। इदानीमंश इत्युक्तमाक्षिप्य समाधातुं स्वरूपैक्यमादायाक्षिपति— **अत्रेति**।

**चेति। ननु चांशो जीव ईश्वरस्येत्युक्तम्; तद्भेदाच्चानुज्ञापरिहारौ तदाश्रयावव्यतिकीर्णावुपपद्येते; किमत्र चोद्यत इति। उच्यते– नैतदेवम्। अनंशत्वमपि हि जीवस्याभेदवादिन्यः श्रुतयः प्रतिपादयन्ति– 'तत्सृष्ट्वा। तदेवानुप्राविशत्' (तै.उ. २।६।१), 'नान्योऽतोऽस्ति द्रष्टा' (बृ.उ. ३।७।२३), 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ.उ. ४।४।१९), 'तत्त्वमसि' (छा.उ. ६।८।७), 'अहं ब्रह्मास्मि' (बृ.उ. १।४।१०) इत्येवंजातीयकाः। ननु भेदाभेदावगमाभ्यामंशत्वं सिध्यतीत्युक्तम्। स्यादेतदेवं यद्युभावपि भेदाभेदौ प्रतिपिपादयिषितौ स्याताम्, अभेद एव त्वत्र प्रतिपिपादयिषितो ब्रह्मात्मत्वप्रतिपत्तौ पुरुषार्थसिद्धेः। स्वभावप्राप्तस्तु भेदोऽनूद्यते। न च निरवयवस्य ब्रह्मणो मुख्योंऽशो जीवः संभवतीत्युक्तम्। तस्मात् पर एवैकः सर्वेषां भूतानामन्तरात्मा जीवभावेनावस्थित इत्यतो वक्तव्याऽनुज्ञापरिहारोपपत्तिः। तां ब्रूमः–**

### अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत्।।४८।।

**'ऋतौ भार्यामुपेयात्' इत्यनुज्ञा। 'गुर्वङ्गनां नोपगच्छेत्' इति परिहारः। तथा 'अग्नीषोमीयं पशुं संज्ञपयेत्' इत्यनुज्ञा। 'न हिंस्यात्सर्वा भूतानि' इति परिहारः। एवं लोकेऽपि 'मित्रमुपसेवितव्य'मित्यनुज्ञा। 'शत्रुः परिहर्तव्य' इति परिहारः। एवंप्रकारावनुज्ञापरिहारावेकत्वेऽप्यात्मनो देहसंबन्धात् स्याताम्। देहैः संबन्धो देहसंबन्धः। कः पुनर्देहसंबन्धः? देहादिरयं संघातोऽहमेवेत्यात्मनि विपरीतप्रत्ययोत्पत्तिः। दृष्टा च**

#### *प्रकटार्थविवरणम्*

स्वरूपभेदो वक्तव्य इत्यर्थः। अन्यथाप्युपपत्तिमाह— **तां ब्रूम इति।**

**अनुज्ञापरिहारौ देहसंबन्धात् ज्योतिरादिवत्।।** यदि स्वरूपैक्येऽपि अविद्यासिद्धदेहसंबन्धाविच्छेदात् क्वचिदनुज्ञा क्वचित्

#### *भाष्यभावप्रकाशिका*

अभेदसंबन्धितया पुमर्थस्य दृष्टत्वात् स एव प्रतिपाद्य इत्याह— **अभेद एव त्विति।** प्रसिद्धस्यानुवाद्यत्वात् प्रसिद्धेश्च प्रमाणव्यतिरेकेणासिद्धेः प्रमाणसिद्धो भेदः। ततश्च भिन्नाभिन्नतयांऽशत्वमित्यत आह— **न च निरवयवस्येति।**

#### *न्यायनिर्णयः*

कथमित्यस्मादुपरिष्टात् तर्हीति संबध्यते। अनुज्ञादिव्यवस्थानुपपत्त्या स्वरूपभेदः स्यादित्यर्थः। आक्षेप्तुर्विवक्षितमज्ञात्वा शङ्कते— **नन्विति।** अंशांशित्वे फलितमाह— **तदिति।** तेषामंशानां जीवानामंशिनः परस्मान्मिथश्च भेदादिति यावत्। अनुज्ञादेरेवं सिद्धौ चोद्यासिद्धिरनुज्ञादिविषये फलतीत्याह— **किमिति।** आक्षेप्ता प्रत्याह— **उच्यत इति।** जीवस्येश्वरांशत्वमाश्रित्यानुज्ञादेः सिद्धिरुक्ता, तां निरस्यति— **नैतदिति।** अभेदवादिनीः श्रुतीरनुक्रामति— **तदित्यादिना।** व्यपदेशद्वयमादायोक्तं सिद्धान्ती स्मारयति— **नन्विति।** उभयदृष्ट्यांऽशत्वमुभयोः प्रतिपाद्यत्वे स्यात्। न च तदस्तीत्याह— **स्यादिति।** भेदाभेदयोरभेदं निर्धारयितुमत्रेत्युक्तम्। तस्यैव प्रतिपाद्यत्वे हेतुमाह— **ब्रह्मेति।** भेदोऽपि प्रतिपाद्यतामभेदवदित्याशङ्क्याह— **स्वभावेति।** अविद्या स्वभावः। इतश्चाभेदस्यैव प्रतिपाद्यतेत्याह— **न चेति।** तस्यैव प्रतिपाद्यत्वे फलितमाह— **तस्मादिति।** स्वरूपैक्ये स्थिते पूर्वोक्तानुपपत्तितादवस्थ्यमित्याह— **इत्यत इति।** अनुज्ञासिद्धये स्वरूपभेदे वाच्ये सिद्धान्ती सूत्रेणोत्तरमाह— **तामिति।**

वैदिकानुज्ञापरिहारौ ज्ञानसौकर्यार्थमुदाहरति— **ऋताविति।** लौकिकावपि तौ दर्शयति— **एवमिति।** लौकिकवैदिकानुज्ञादे- रुक्तरूपत्वेऽपि कथमैकात्म्ये तयोः सिद्धिरित्याशङ्क्याह— **एवमिति।** आत्मनो देहेन संबन्धेऽपि कथमुभयोः सिद्धिः, तत्राह—

**सा सर्वप्राणिनाम् अहं गच्छाम्यहमागच्छाम्यहमन्धोऽहमनन्धोऽहं मूढोऽहममूढ इत्येवमात्मिका। न ह्यस्याः सम्यग्दर्शनादन्यन्निवारकमस्ति। प्राक् तु सम्यग्दर्शनात् प्रततैषा भ्रान्तिः सर्वजन्तुषु। तदेवमविद्यानिमित्त-देहाद्युपाधिसंबन्धकृताद् विशेषादैकात्म्याभ्युपगमेऽप्यनुज्ञापरिहारावभवकल्पेते। सम्यग्दर्शिनस्तर्ह्यनुज्ञापरिहारानर्थक्यं प्राप्तम्। न; तस्य कृतार्थत्वान्नियोज्यत्वानुपपत्तेः। हेयोपादेययोर्हि नियोज्यो नियोक्तव्यः स्यात्। आत्मनस्त्वतिरिक्तं हेयमुपादेयं वा वस्त्वपश्यन् कथं नियुज्येत? न चात्माऽऽत्मन्येव नियोज्यः स्यात्। शरीरव्यतिरेकदर्शिन एव नियोज्यत्वमिति चेत्। न; तत्संहतत्वाभिमानात्। सत्यं व्यतिरेकदर्शिनो नियोज्यत्वं तथापि व्योमादिवद् देहाद्यसंहतत्वमपश्यत एवात्मनो नियोज्यत्वाभिमानः। न हि देहाद्यसंहतत्वदर्शिनः कस्यचिदपि नियोगो**

### *प्रकटार्थविवरणम्*

परिहार इति व्यवस्था कल्प्यते, तदा सम्यग्दर्शिनोऽविद्याऽभावात् अनुज्ञादिशास्त्रानर्थक्यं प्राप्तमित्याह— **सम्यग्दर्शिनस्तर्हीति**। यथा बृहस्पतिसवशास्त्रानर्थक्यं क्षत्रियं प्रति न दूषणम्, तत्र तस्यानियोज्यत्वात्, तथा सम्यग्दर्शिनं प्रत्यनुज्ञादिशास्त्रानर्थक्यमप्य-दूषणमित्याह— **न तस्येति**। सम्यग्ज्ञान्यपि नियोज्यः, विवेकित्वात्, देहव्यतिरिक्तात्मदर्शिवदित्याह— **शरीरव्यतिरेकेति**। 'नैतत्संहतत्वाभिमाना'दिति परिहारं विवृणोति— **सत्यमित्यादिना**। **असंहतत्वदर्शिन इति**। संहतत्वादर्शिनः सुषुप्तस्येत्यर्थः। तर्हि

### *भाष्यभावप्रकाशिका*

तस्य सम्यग्दर्शनात् प्रागेव देहसंबन्धस्य निवृत्तत्वादनुज्ञापरिहारयोरनर्थकता उत या सम्यग्दर्शनानन्तरमिति। तत्राद्यो न युक्त इत्याह— **न हीति**। द्वितीयं कल्पमवलम्बते— **सम्यग्दर्शिनस्तर्हीति**। तत्राप्यात्मैकत्वज्ञानोत्तरकालं देहसंबन्ध-निवृत्तेरनुज्ञापरिहारावनर्थकौ, किंवा देहव्यतिरिक्तज्ञानोत्तरकालमिति। आद्ये परिहारमाह— **न तस्येति**। देहव्यति-रिक्तात्मज्ञानाभावे अनियोज्यत्वात्सति ज्ञाने देहसंबन्धस्य निवृत्तेर्नियोगानर्थक्यमिति चोदयति— **शरीरव्यतिरेकेति**। परिहरति— **न तत्संहतत्वेति**। तद्विभजते— **सत्यमिति**। योग्यात्मनः[१] षाट्कौशिकाद्[२] देहाद्व्यतिरेकं वेद, न तु समस्तबुद्ध्यादिभ्यो व्यतिरेकम्, तस्यामुष्मिकफलेषु कर्मसु नियोज्यत्वमितरस्य तु नाधिकारः कर्मणि सर्वाभिमानशून्यत्वात्। अतो न यथेष्टचेष्टाया अपि प्रसङ्ग इत्यर्थः।

### *न्यायनिर्णयः*

**देहैरिति**। आत्मनोऽसङ्गस्य न तैः संगतिरित्याह— **क इति**। असङ्गत्वेऽपि तस्य देहादिसंबन्धं दर्शयति— **देहादिरिति**। उक्ते संबन्धे मानमाह— **दृष्टा चेति**। तस्या अविद्यात्मकत्वेन निवृत्तत्वान्नानुज्ञादिप्रयोजकतेत्याशङ्क्य सम्यग्ज्ञानात् प्रागूर्ध्वं वा तस्या निवृत्तिरिति विकल्प्याद्यं दूषयति— **न हीति**। अविद्यात्मकत्वात् तस्याः सम्यग्ज्ञानातिरिक्तविरोध्यभावादित्यर्थः। निवारकान्तराभावं तुशब्देन परामृश्य सर्वत्रासंकुचद्वृत्तित्वमुक्तसंबन्धस्याह— **प्राक्त्विति**। अज्ञानावस्थायां देहादियोगस्यानिवृत्तत्वे फलितमाह— **तदेवमिति**। विशेषो भेदः। द्वितीयमालम्बते— **सम्यगिति**। सम्यग्दर्शनं किमात्मैक्यधीः किं वा देहातिरिक्तधीः? नाद्यः, तद्वतो देहादिसंबन्धनिवृत्तेरनुज्ञाद्यानर्थक्यस्येष्टत्वादित्याह— **नेति**। अनुपपत्तिमेव वक्तुं सामान्यन्यायमाह— **हेयेति**। तथापि कथमात्मैक्य-दर्शिनो नियोज्यत्वासिद्धिः, तत्राह— **आत्मनस्त्विति**। आत्मानतिरिक्ते विषये नियोज्यत्वमाशङ्क्याहेयोपादेयत्वादात्मनो नैवमित्याह— **न चेति**। द्वितीयं शङ्कते— **शरीरेति**। व्यतिरेकादर्शने नियोज्यत्वासिद्धेः सति तस्मिन् देहासंबन्धान्नियोगा-योगादनुज्ञाद्यानर्थक्यमित्यर्थः। देहाद्यतिरेकदर्शिनोऽपि तत्संहतत्वाभिमानिनो नियोज्यत्वयोगादनुज्ञादेरर्थवत्तेत्याह— **नेत्यादिना**। तदेव विभजते— **सत्यमिति**। अङ्गीकृतं भागं दर्शयति— **व्यतिरेकेति**। तर्हि देहादियोगस्य निवृत्तेरनुज्ञाद्यसिद्धिः, तत्राह— **तथापीति**। असंहतत्वेऽपि तद्दर्शनाभावे दृष्टान्तमाह— **व्योमादिवदिति**। व्यतिरेकदर्शिनो नियोज्यत्वं चेदविशेषादैक्यदर्शिनोऽपि स्यादित्याशङ्क्याह— **न हीति**। देहादिष्वसंहतत्वदर्शिनः संहतत्वधीशून्यस्य सुषुप्तस्येति यावत्। तर्हि सम्यग्दर्शिनो विधिनिषेधा-

---

१. 'यो ह्यात्मनः' इति भामत्यां पाठो दृश्यते।

२. अस्थिस्नायुमज्जात्वङ्मांसशोणितानि षट् कोशाः, तत्कृतं षाट्कौशिकं स्थूलशरीरमिति कल्पतरुः।

**दृष्टः; किमुतैकात्म्यदर्शिनः। न च नियोगाभावात् सम्यग्दर्शिनो यथेष्टचेष्टाप्रसङ्गः। सर्वत्राभिमानस्यैव प्रवर्तकत्वादभिमानाभावाच्च सम्यग्दर्शिनः। तस्माद् देहसंबन्धादेवानुज्ञापरिहारौ। ज्योतिरादिवत्। यथा ज्योतिष एकत्वेऽप्यग्निः क्रव्यात् परिह्रियते, नेतरः। यथा च प्रकाश एकस्यापि सवितुरमेध्यदेशसंबद्धः परिह्रियते, नेतरः शुचिभूमिष्ठः। यथा भौमाः प्रदेशा वज्रवैडूर्यादय उपादीयन्ते, भौमा अपि सन्तो नरकलेवरादयः परिह्रियन्ते। यथा मूत्रपुरीषं गवां पवित्रतया परिगृह्यते, तदेव जात्यन्तरे परिवर्ज्यते, तद्वत्।।४८।।**

## असंततेश्चाव्यतिकरः।।४९।।

**स्यातां नामानुज्ञापरिहारावेकस्याप्यात्मनो देहविशेषयोगात्। यस्त्वयं कर्मफलसंबन्धः, स चैकात्म्याभ्युपगमे व्यतिकीर्येत, स्वाम्येकत्वादिति चेत्। नैतदेवम्। असंततेः। न हि कर्तुर्भोक्तुश्चात्मनः संततः सर्वैः शरीरैः संबन्धोऽस्ति। उपाधितन्त्रो हि जीव इत्युक्तम्। उपाध्यसंतानाच्च नास्ति जीवसंतानः। ततश्च कर्मव्यतिकरः फलव्यतिकरो वा न भविष्यति।।४९।।**

### *प्रकटार्थविवरणम्*

सम्यग्दर्शिनो विधिप्रतिषेधाभावे यथेष्टाचरणप्रसङ्ग इत्याशङ्क्याह— **न च नियोगाभावादिति**। विषयाभिनिविष्टचेतसो ज्ञानोदयासंभवादवश्यं तावत् साधकावस्थायां विषयाभिनिवेशवर्जनेन भाव्यम्, तस्य सम्यग्ज्ञानोदयेऽपि पूर्ववासनावशात् विषयाभिनिवेशाभावान्नियत एवार्थे प्रवृत्तिः संभवतीत्यर्थः। एवं प्रासङ्गिकं परिहृत्य प्रकृतमुपसंहरति— **तस्मादिति**। उपाधिविशेषवशादनुज्ञापरिहारयोः दृष्टान्तमाह— **ज्योतिरादिवदिति**। क्रव्यं मांसम् अत्तीति क्रव्यात्, श्मशानादिसम्बन्धीत्यर्थः।

**असंततेश्चाव्यतिकरः।।** शङ्कापूर्वकं सूत्रं व्याचष्टे— **स्यातां तावदित्यादिना**। स्थूलदेहावच्छेदाद् यद्यप्यनुज्ञापरिहारौ संभवतः, तथापि कर्मफलसंबन्धसाङ्कर्यं स्यादेव; एतद्देहविशिष्टस्य स्वर्गभोगायोगात् स्वरूपस्यैव तत्संबन्धो वक्तव्यः, तस्मात् स्वर्गीतरादिव्यवस्थानुपपत्त्या स्वरूपभेदो वक्तव्य इति शङ्काशयः। भवेदेवं स्वर्ग्यादिसाङ्कर्यम्, यद्यनवच्छिन्नस्य फलसंबन्धो भवेत्; न त्वस्ति; स्थूलदेहसंबन्धव्यभिचारेऽप्यविद्यातज्जान्तःकरणसम्बन्धस्याऽऽसंसारविमोक्षात् व्यभिचाराभावात् तदवच्छिन्नस्यैव स्वर्गादिभोगोपपत्तेः

### *भाष्यभावप्रकाशिका*

किमेकत्वं परमात्मापेक्षया ब्रूषे किं वा जीवापेक्षया? तत्राद्योऽङ्गीक्रियते। अभोक्तुरपि सर्वाश्रयत्वात्। उत्तरपक्षस्तु न युक्त इत्याह— **न हि कर्तुरिति**।

### *न्यायनिर्णयः*

भावाद् यथेष्टचेष्टापत्तिः, नेत्याह— **न चेति**। विषयाभिनिविष्टचेतसो ज्ञानानुदयादवश्यं साधकावस्थायामेवाभिनिवेशत्यागेन भवितव्यम्। तस्य पुनः सम्यग्ज्ञानोदयेऽपि पूर्ववासनातो विषयाभिनिवेशाभावान्नियतप्रवृत्तेर्न यथेष्टचेष्टेत्यर्थः। प्रसङ्गागतं त्यक्त्वा प्रकृतमुपसंहरति— **तस्मादिति**। उपाधिवशादनुज्ञापरिहारावित्यत्र दृष्टान्तमाह— **ज्योतिरिति**। क्रव्यं मांसमत्तीति श्मशानादिसंबन्धी वह्निरत्र क्रव्यादित्युच्यते।।४८।।

अनुज्ञादेरुक्तरीत्या सिद्धिमुपेत्य कर्मफलसंबन्धव्यतिकरमाशङ्क्य परिहरति— **असंततेश्चेति**। सूत्रव्यावर्त्यां शङ्कामाह— **स्यातामिति**। यद्यपि स्थूलदेहावच्छेदादनुज्ञापरिहारौ युज्येते तथापि कर्मफलसंकरो दुर्वारः, एतद्देहविशिष्टस्य स्वर्गादिभोगायोगे स्वरूपस्यैव तद्योगध्रौव्यात्। अतः स्वर्गीतरादिव्यवस्थानुपपत्त्या स्वरूपभेद इत्यर्थः। किं परमात्मापेक्षयैकत्वं किं वा जीवापेक्षया? आद्ये परस्याभोक्तुरपि सर्वाश्रयत्वान्न व्यतिकराशङ्केत्याह— **नैतदिति**। द्वितीयं सूत्रावयवेन निरस्यति— **असंततेरिति**। तदेव विवृणोति— **न हीति**। स्थूलदेहयोगव्यभिचारेऽप्यविद्यातदुत्थान्तःकरणयोगस्याऽऽसंसारमोक्षादव्यभिचारात् तदवच्छिन्नस्यैव स्वर्गादिभोगित्वान्न व्यवस्थायाः स्वरूपभेदधीरित्यर्थः। औपाधिकभेदेन व्यवस्थोपपत्तिं सूत्रावयवार्थं **दर्शयति— ततश्चेति**।।४९।।

## आभास एव च।।५०।।

**आभास एव चैष जीवः परस्यात्मनो जलसूर्यकादिवत् प्रतिपत्तव्यः; न स एव साक्षात्, नापि वस्त्वन्तरम्। अतश्च यथा नैकस्मिञ्जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते, एवं नैकस्मिञ्जीवे कर्मफलसंबन्धिनि जीवान्तरस्य तत्संबन्धः। एवमप्यव्यतिकर एव कर्मफलयोः। आभासस्य चाविद्याकृतत्वात् तदाश्रयस्य संसारस्याविद्याकृतत्वोपपत्तिरिति। तद्व्युदासेन च पारमार्थिकस्य ब्रह्मात्मभावस्योपदेशोपपत्तिः।**

### *प्रकटार्थविवरणम्*

न स्वरूपभेदाक्षेपकत्वमिति सिद्धान्ताशयः।

**आभास एव च**। यदाद्ये सूत्रे जीवस्यांशत्वात् सूत्रितं[त्वमासूत्रितं] तदवच्छेदाभिप्रायेणेत्युक्त्वाऽधुना ''आभास एव च'' इत्येवकारं प्रयुञ्जानः ''रूपं रूपं प्रतिरूपो बभूव'' इत्यादिश्रुतिसिद्धं प्रतिबिम्बपक्षं स्वरहस्यं सूत्रयामास भगवान् सूत्रकारः। तद् व्याख्याति— **आभास एवेत्यादिना**। **स एव** अनौपाधिकः; **साक्षात्** अव्यवधानेन; जीव उपाधिव्यवधानस्यानुभवात्; नापि तद् वस्त्वन्तरम् ''तत्सृष्ट्वा। तदेवानुप्राविशत्'' इत्यादिश्रुतिस्मृतिशतेभ्य इत्यर्थः। स्वर्गीतरादिव्यवस्था अस्मिन्पक्षे सुतरां घटत इत्याह— **अतश्च यथेति**। अज्ञानाद् बन्धे ज्ञानान्मोक्षो भवतीत्येतदपि घटत इत्याह— **आभासस्य चेति**। यथा दर्पणे मुखप्रतिबिम्बं दर्पणाधीनत्वात् प्रतिबिम्बभावः स्वोप[भावस्योप]चारतो दर्पणकृतमुच्यते, तत्र यथा दर्पणकृतमेवाल्पत्वमलीमसत्वादि भाति, तथा चित्प्रतिबिम्बे जीवेऽपि यत्किञ्चिदब्रह्मस्वरूपं भाति, तत्सर्वमविद्याकृतमेवेति बन्धसिद्धिः। यथा च प्रतिबिम्बं बिम्बमेवेति वाक्येनोपाधितत्स्थताव्यावर्तनेन मुखस्वरूपैक्यमेव लक्ष्यते, तथा ''तत्त्वमसि'' इत्यप्यविद्यातत्स्थत्वव्यपोहेन सबाह्याभ्यन्तरदिग्देशकाला[न]वच्छिन्नचैतन्यं ज्योतिस्स्वरूपैक्यमेव लक्षयति इति न कोऽप्यत्रावकरः।

अत्र **भास्करः** ''आभासा एव च'' इति सूत्रं पठित्वा अद्वैतवादा आभासा एव चेति व्याख्याय प्रतिबिम्बपक्षं दूषयांबभूव ''प्रतिबिम्बस्यावस्तुत्वाभ्युपगमात्'' इति। तत्रासौ स्वपररहस्यानभिज्ञ इति शोच्य एव। तथा हि— स्वपक्षे तावत् तस्यान्यथाख्यातिवादित्वाद् देशान्तरे सदेव मुखं दर्पणसंसृष्टं भाति। तत्र संसर्गाभासो विभ्रमः, मुखावभासस्तु अविभ्रम एव, अस्माकमपि नेदं मुखमिति स्वरूपबाधाभावात्, नात्र मुखं किन्तु मदीयमेवेति देशसंसर्गमात्रबाधया स्वरूपैक्यप्रत्यभिज्ञानात् एकस्मिन्नेकदेशस्थे च मुखे भेदो भिन्नदेशस्थता चानिर्वाच्या भातीति कुतः प्रतिबिम्बस्योपाधिस्थतया भासमानस्वरूपस्यावस्तुत्वम्? पराचक्रमिरे चात्राचार्याः [१]दर्पणटीकायामित्युपरम्यते।

एवं तावत् स्वरूपैक्ये नास्ति दुःखादिसङ्कर इत्युपपाद्य, परेषामेव सङ्करो दुर्वारः, अतः तत्स्वरूपभेदकल्पना निष्प्रमाणिका

### *भाष्यभावप्रकाशिका*

पूर्वमवच्छेदपक्षस्वीकारेण परिहारमभिधायेदानीं प्रतिबिम्बपक्षावलम्बनेन परिहारमाह— **आभास इति**। अस्मिन् पक्षे संसारस्य काल्पनिकत्वादेकत्वमपि पारमार्थिकं स्यादित्याह— **आभासस्येति**।

### *न्यायनिर्णयः*

आद्ये सूत्रे जीवस्यांशत्वमवच्छेदबुद्ध्योक्तम्, अधुना 'रूपं रूपम्' इत्यादिश्रुतिसिद्धं प्रतिबिम्बपक्षमुपन्यस्यति— **आभास इति**। तद् व्याख्याति— **आभास एवेति**। एवकारार्थमाह— **नेत्यादिना**। न हि जीवः साक्षात्परमात्मैव, उपाधिव्यवधानात्। नापि वस्त्वन्तरं, 'तत्सृष्ट्वा' इत्यादिश्रुतिस्मृतिविरोधादित्यर्थः। आभासपक्षे स्वर्गीतरादिव्यवस्थाऽपि सुस्थेत्याह— **अतश्चेति**। अस्मिन् पक्षे बन्धोऽज्ञानाज्ज्ञानान्मुक्तिरित्येतदपि सिध्यतीत्याह— **आभासस्येति**।

---

१. बिम्बप्रतिबिम्बन्यायेन जीवब्रह्मणोरभेदं तयोर्भेदस्यौपाधिकत्वं च संभावयितुमुपन्यस्तस्य दर्पणादौ मुखादिप्रतिबिम्बदृष्टान्तस्य निरूपणपरः पञ्चपादिकाग्रन्थो दर्पणटीका; तद्व्याख्याने विवरणाचार्याः उक्तमर्थं निरूपितवन्तः। द्र.पृ. १८२-१९३।

**येषां तु बहव आत्मानस्ते च सर्वे सर्वगतास्तेषामेवैष व्यतिकरः प्राप्नोति। कथम्? बहवो विभवश्चात्मानश्चैतन्यमात्रस्वरूपा निर्गुणा निरतिशयाश्च; तदर्थं साधारणं प्रधानम्, तन्निमित्तैषां भोगापवर्गसिद्धिरिति सांख्याः। सति बहुत्वे विभुत्वे च घटकुड्यादिसमाना द्रव्यमात्रस्वरूपाः स्वतोऽचेतना आत्मानः; तदुपकरणानि चाणूनि मनांस्यचेतनानि; तत्रात्मद्रव्याणां मनोद्रव्याणां च संयोगान्नवेच्छादयो वैशेषिका आत्मगुणा उत्पद्यन्ते; ते चाव्यतिकरेण प्रत्येकमात्मसु समवयन्ति, स संसारः; तेषां नवानामात्मगुणानामत्यन्तानुत्पादो मोक्ष इति काणादाः। तत्र सांख्यानां तावच्चैतन्यस्वरूपत्वात् सर्वात्मनां संनिधानाद्यविशेषाच्चैकस्य सुखदुःखसंबन्धे सर्वेषां सुखदुःखसंबन्धः प्राप्नोति। स्यादेतत्– प्रधानप्रवृत्तेः पुरुषकैवल्यार्थत्वाद् व्यवस्था भविष्यति। अन्यथा हि स्वविभूतिख्यापनार्था प्रधानप्रवृत्तिः स्यात्। तथा चानिर्मोक्षः प्रसज्येतेति। नैतत् सारम्। न ह्यभिलषितसिद्धिनिबन्धना व्यवस्था शक्या विज्ञातुम्। उपपत्त्या तु कयाचिद् व्यवस्थोच्येत। असत्यां**

### *प्रकटार्थविवरणम्*

निष्प्रयोजनेति[ना चेति] चकारसूचितमुपपादयितुमुपक्रमते— **येषां बहव इत्यादिना।** **सांख्यस्याभिप्रायमाशङ्कते— स्यादेतदिति।** यद्यपि पुंसां सर्वेषां सांनिधानं निर्विशेषत्वं चाविशिष्टम्, तथापि प्रधानमेव तेषां मोक्षार्थत्वेन प्रवर्तते; अतः कश्चित्कालं नर्तकीव स्वात्मानं प्रदर्श्य स्वयमेवोपरमति। तत्र सविकारप्रधानदर्शनमेव पुंसां बन्धः, तदुपरमे च मोक्ष उपचर्यते; अतो व्यवस्थोपपत्तिः। **अन्यथेति।** यदि प्रतिनियता प्रधानप्रवृत्तिर्नाङ्गीक्रियते तदा प्रधानं स्वस्य विभूतिख्यापनाय प्रवर्तत इति पुंसां मोक्षो न स्यादित्यर्थः। प्रधानप्रवृत्तेः मोक्षार्थत्वेऽपि युगपत् सर्वेषां मोक्षः कस्मान्न भवेत्? कस्यचिन्मोक्षः कस्यचिद् बन्धः इति व्यवस्थायां त्वया प्रमाणं वाच्यम्; तच्च नास्तीत्याह— **नैतत्सारमिति।** यदुक्तं प्रधानस्य स्वविभूतिख्यापनपरिहाराय नियता प्रवृत्तिरिति, तत्राह— **न हीति।** ननु नास्त्यत्रोपपत्तिः, किन्त्वनादिरेवायं प्रतिनियम इत्याशङ्क्याह— **असत्यां पुनरिति।** अनियम एवानादिः कस्मान्न भवतीति

### *भाष्यभावप्रकाशिका*

नानात्वात् कथं तत्र व्यतिकर इति चोदयति— **कथमिति।** यस्य कैवल्यमस्ति तं प्रति न प्रवर्तते, यस्य च नास्ति तं प्रति प्रवर्तत इति, सुखदुःखादि[1]व्यवस्थापितवत्स्यादित्याह— **प्रधानप्रवृत्तेरिति।** निराकरोति— **न ह्यभिलषितेति।** सर्वेषां

### *न्यायनिर्णयः*

स्वरूपैक्येऽपि नास्ति दुःखादिसंकर इत्युक्त्वा चकारसूचितं वक्तुमुपक्रमते— **येषां त्विति।** आत्मभेदात् परमते व्यतिकरो नेति शङ्कते— **कथमिति।** परपक्षे व्यतिकरं प्रसञ्जयितुं सांख्याभिप्रायं तावदाह— **बहव इति।** कथं तर्हि तेषां भोगापवर्गौ, तत्राह— **तदर्थमिति।** वैशेषिकप्रक्रियामाह— **सतीति।** घटादिसाम्यमेव स्फोरयति— **द्रव्येति।** मात्रचो विवक्षितं दर्शयति— **स्वत इति।** कथं तर्हि तेषु भोगापवर्गौ, तत्राह— **तदिति।** तथापि कथं बन्धमोक्षावित्याशङ्क्य बन्धस्वरूपमाह— **तत्रेति।** मुक्तिस्वरूपमाह— **तेषामिति।** स्वापादिव्यावृत्त्यर्थमत्यन्तपदम्। पक्षद्वयमनूद्य सांख्यपक्षे व्यवस्थानुपपत्तिमाह— **तत्रेति।** संनिधानाद्यविशेषादित्यादिशब्दादौदासीन्यमुक्तम्। सांख्याभिप्रायमाशङ्कते— **स्यादिति।** सर्वेषां पुंसां संनिधिनिर्विशेषत्वयोरविशेषेऽपि प्रधानमेव तेषां मोक्षार्थं प्रवर्तते। तथा च कंचित्कालं नर्तकीवत् स्वात्मानं दर्शयित्वा स्वयमेवोपरमते। सविकारप्रधानदर्शनमेव पुंसां बन्धः, तदुपरमे तद्दृष्ट्यभावान्मुक्तिरुपचर्यते। अतो नियतप्रधानप्रवृत्त्या व्यवस्थासिद्धिरित्यर्थः। प्रतिनियतप्रधानप्रवृत्त्यनङ्गीकारे स्वविभूतिख्यापनाय तत्प्रवृत्तिरिति पुंसां मोक्षो न स्यादित्याह— **अन्यथेति।** प्रधानप्रवृत्तेर्मोक्षार्थत्वेऽपि सर्वेषामपर्यायमेव कस्मान्मोक्षो न भवेत्, कस्यचिन्मोक्षो बन्धश्च कस्यचिदिति व्यवस्थायां मानाभावादित्याह— **नैतदिति।** प्रधानस्य स्वविभूतिख्यापनपरिहाराय प्रतिनियतप्रवृत्तिरित्युक्तं, तत्राह— **न हीति।** नियमस्यानादित्वान्नात्र युक्तिरन्वेष्येत्याशङ्क्यानियमस्यैवानादित्वान्नैवमित्याह— **असत्यामिति।**

---

१. अत्र 'व्यवस्थाऽपि स्यात्' इति पाठः संभाव्यते।

**पुनरुपपत्तौ कामं मा भूदभिलषितं पुरुषकैवल्यं, प्राप्नोति तु व्यवस्थाहेत्वभावाद् व्यतिकरः। काणादानामपि यदैकेनात्मना मनः संयुज्यते तदाऽऽत्मान्तरैरपि नान्तरीयकः संयोगः स्यात्, संनिधानाद्यविशेषात्। ततश्च हेत्वविशेषात् फलाविशेष इत्येकस्यात्मनः सुखदुःखयोगे सर्वात्मनामपि समानं सुखदुःखित्वं प्रसज्येत।।५०।।**

**स्यादेतत्– अदृष्टनिमित्तो नियमो भविष्यतीति। नेत्याह–**

## अदृष्टानियमात्।।५१।।

**बहुष्वात्मस्वाकाशवत्सर्वगतेषु प्रतिशरीरं बाह्याभ्यन्तराविशेषेण संनिहितेषु मनोवाक्कायैर्धर्माधर्मलक्षणमदृष्टमुपार्ज्यते। सांख्यानां तावत् तदनात्मसमवायि प्रधानवर्ति प्रधानसाधारण्यान्न प्रत्यात्मं सुखदुःखोपभोगस्य नियामकमुपपद्यते। काणादानामपि पूर्ववत् साधारणेनात्ममनःसंयोगेन निर्वर्तितस्यादृष्टस्याप्यस्यैवात्मन इदमदृष्टमिति नियमे हेत्वभावादेष एव दोषः।।५१।।**

**स्यादेतत्– अहमिदं फलं प्राप्नवानीदं परिहराणीत्थं प्रयता इत्थं करवाणीत्येवंविधा अभिसंध्यादयः प्रत्यात्मं प्रवर्तमाना अदृष्टस्यात्मनां च स्वस्वामिभावं नियंस्यन्तीति। नेत्याह–**

## अभिसंध्यादिष्वपि चैवम्।।५२।।

**अभिसंध्यादीनामपि साधारणेनैवात्ममनःसंयोगेन सर्वात्मसंनिधौ क्रियमाणानां नियमहेतुत्वानुपपत्तेरुक्तदोषानुषङ्ग एव।।५२।।**

## प्रदेशादिति चेन्नान्तर्भावात्।।५३।।

### *प्रकटार्थविवरणम्*

भावः। इदानीं **कणादसमये** अव्यवस्थामाह— **काणादानामपीति**।

यददृष्टनिबन्धनमनःकर्मजः संयोगः, तस्यैव तन्निमित्तं सुखं दुःखं वा भवति। नान्यस्य संनिधाने सत्यपीति शङ्कते— **स्यादेतदिति**।

**अदृष्टानियमात्**।। भवेदेवं यद्यदृष्टमसाधारणं स्यात्, न तु तदस्तीत्याह— **अदृष्टानियमादिति**।

**अभिसन्ध्यादिष्वपिं चैवम्**।। अदृष्टहेत्वसाधारण्येनादृष्टस्य साधारण्यमाशङ्क्य दूषयति— **स्यादेतदहमित्यादिना**।

### *न्यायनिर्णयः*

वैशेषिकसमयेऽपि व्यवस्थाऽसिद्धिमाह— **काणादानामिति**। संनिधानादीत्यादिशब्देन द्रव्यत्वादि गृहीतम्। हेतुर्मनःसंयोगः। फलं सुखादि।।५०।।

यददृष्टकृतो मनःसंयोगस्तस्यैव तत्कृतं सुखादीति व्यवस्थां शङ्कते— **स्यादेतदिति**। सूत्रेणोत्तरमाह— **नेत्याहेति**। अनियमं व्याख्यातुं पक्षद्वयसाधारणं तज्जन्मप्रकारमाह— **बहुष्विति**। एवमदृष्टोत्पत्तावपि तन्निमित्ता व्यवस्था किं न स्यादित्याशङ्क्य सांख्यान् प्रत्याह— **सांख्यानामिति**। पक्षान्तरेऽप्यदृष्टानियमं व्याचष्टे— **काणादानामिति**। **पूर्ववदिति**। सुखाद्युत्पादकमनःसंयोगवदित्यर्थः। यद्वा नियम्यत्वेन प्रकृतसुखादिवदित्यर्थः। एष एव दोष इत्यदृष्टस्य नियामकत्वायोगो गृह्यते।।५१।।

अदृष्टहेत्वसाधारण्येन तस्यापि तथात्वं शङ्कते— **स्यादेतदिति**। सूत्रेण परिहरति— **नेत्याहेति**। तद् विभजते— **अभिसंधीति**। अदृष्टं दृष्टान्तयितुमपिशब्दः। उक्तो दोषोऽदृष्टस्य सुखादेश्चानियमः।।५२।।

**अथोच्येत– विभुत्वेऽप्यात्मनः शरीरप्रतिष्ठेन मनसा संयोगः शरीरावच्छिन्न एवात्मप्रदेशे भविष्यति। अतः प्रदेशकृता व्यवस्थाऽभिसंध्यादीनामदृष्टस्य सुखदुःखयोश्च भविष्यतीति। तदपि नोपपद्यते। कस्मात्? अन्तर्भावात्। विभुत्वाविशेषाद्धि सर्व एवात्मानः सर्वशरीरेष्वन्तर्भवन्ति। तत्र न वैशेषिकैः शरीरावच्छिन्नोऽप्यात्मनः प्रदेशः कल्पयितुं शक्यः। कल्प्यमानोऽप्ययं निष्प्रदेशस्यात्मनः प्रदेशः काल्पनिकत्वादेव न पारमार्थिकं कार्यं नियन्तुं शक्नोति। शरीरमपि सर्वात्मसंनिधावुत्पद्यमानमस्यैवात्मनो नेतरेषामिति न नियन्तुं शक्यम्। प्रदेशविशेषाभ्युपगमेऽपि च द्वयोरात्मनोः समानसुखदुःखभाजोः कदाचिदेकेनैव तावच्छरीरेणोपभोगसिद्धिः स्यात्। समानप्रदेशस्यापि द्वयोरात्मनोरदृष्टस्य संभवात्। तथाहि– देवदत्तो यस्मिन् प्रदेशे सुखदुःखमन्वभूत् तस्मात् प्रदेशादपक्रान्ते तच्छरीरे यज्ञदत्तशरीरे च तं प्रदेशमनुप्राप्ते तस्यापीतरेण समानः सुखदुःखानुभवो दृश्यते; स न स्याद् यदि देवदत्तयज्ञदत्तयोः समानप्रदेशमदृष्टं न स्यात्। स्वर्गाद्यनुपभोगप्रसङ्गश्च प्रदेशवादिनः स्यात्। ब्राह्मणादिशरीरप्रदेशेष्वदृष्टनिष्पत्तेः, प्रदेशान्तरवर्तित्वाच्च स्वर्गाद्युपभोगस्य। सर्वगतत्वानुपपत्तिश्च बहूनामात्मनाम्, दृष्टान्ताभावात्। वद तावत् त्वम् के बहवः समानप्रदेशाश्चेति। रूपादय इति चेत्। न;**

### *प्रकटार्थविवरणम्*

**प्रदेशादिति चेन्नान्तर्भावात्।।** प्रकारान्तरेणासाधारण्यमाशङ्क्य दूषयति— **अथोच्येत विभुत्वेऽपीत्यादिना।** ननु यस्यात्मनः शरीरं तस्यैव तत्र वृत्तिलाभः, नान्येषामित्याशङ्क्याह— **शरीरमपीति।** प्रदेशपक्षे दोषान्तरमाह— **प्रदेशविशेषाभ्युपगमे चेति।** पूर्वं बहूनां सर्वगतत्वमभ्युपगम्य व्यवस्थोक्ता; अधुना साऽपि नास्तीत्याह— **सर्वगतत्वानुपपत्तिश्चेति।** रूपरसादीनां बहूनामेक एव घटो देशो दृष्टः, परस्परपराहतिश्च नास्ति, निरवयवत्वादित्याह— **रूपादय इति।** नायमपि दृष्टान्तोऽस्माकं संमतः,

### *भाष्यभावप्रकाशिका*

पुरुषाणां विभुत्वात् प्रधानस्य च साधारण्यादमुमेव पुरुषं प्रत्यनेनार्थः साधित इत्येतदेव न सिध्यति। तस्माद्विना हेतुं प्रयोजनवशादेव व्यवस्थाप्यते। सा चायुक्ता हेत्वभावादित्यर्थः।

अभिसन्ध्यादीनां स्वशरीरसंबन्धो नियामक इति चोदयति— **अथोच्येतेति।** परिहरति— **तदपीत्यादिना।** पूर्वादृष्टवशाच्छरीर-नियमस्तस्यापि स्वशरीरसंबन्धान्नियम इत्यादि....दित्वेऽन्धपरंपरा, नन्वागमसिद्धत्वान्नान्धपरंपरेति चेत्तर्हि यद्यथा सिद्धमागमात् तथाऽभ्युपगन्तव्यमित्यात्मैकत्वसिद्धिरिति भावः। प्रदेशभेदं विनापि सुखादिव्यवस्थाया दृष्टत्वान्न तस्य व्यवस्थापकत्वमित्याह— **प्रदेशविशेषेति।** प्रदेशभेदेऽपि कर्तृत्वभोक्तृत्वयोरेकाधिकरणत्वदर्शनादपि न तस्य प्रयोजकत्वमित्याह— **स्वर्गादीति।** अन्यूनानतिरिक्तदेशानां स्वासन्त्ये सति बहुत्वशिवमपि(?) न वास्तवं स्यादित्याह— **सर्वेति।** न तत्र स्वातन्त्र्यमस्तीत्याह— **नेति।** बहुत्वमपि तर्हि

### *न्यायनिर्णयः*

प्रकारान्तरेणासाधारण्यमाशङ्क्य दूषयति— **प्रदेशादिति चेदिति।** चोद्यं विवृणोति— **अथेति।** परिहारं विभजते— **तदपीत्यादिना।** सर्वेषामात्मनां सर्वदेहेष्वन्तर्भावे फलितमाह— **तत्रेति।** प्रदेशकल्पनामुपेत्यापि दूषयति— **कल्प्येति।** कार्यमभिसंध्यादि। यस्यात्मनः शरीरं तस्यैव तत्र वृत्तिलाभो नान्येषामित्याशङ्क्याह— **शरीरमिति।** न च पूर्वादृष्टवशाद् देहनियमस्तस्यापि नियमश्च देहसंबन्धादित्यनादित्वाददोषः, अन्धपरंपरापातात्, आगमानुरोधे चात्मैक्यप्रसङ्गादिति भावः। किंच प्रदेशभेदं विनाऽपि सुखादिव्यवस्थाया दृष्टत्वात् न तस्य व्यवस्थापकतेत्याह— **प्रदेशेति।** द्वयोरात्मनोस्तुल्यदेशमदृष्टं कथमित्याशङ्क्याह— **तथा हीति।** किंच प्रदेशभेदेऽपि कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यान्न तस्य व्यवस्थापकतेत्याह— **स्वर्गादीति।** बहूनां सर्वगतत्वमुपेत्याव्यवस्थोक्ता। सम्प्रति तदपि नास्तीत्याह— **सर्वेति।** बहूनां विभुत्वे दृष्टान्ताभावेऽपि तुल्यदेशत्वे तद्भावादात्मनां पारिशेष्याद् विभुत्वमित्याशङ्क्याह— **वदेति।** रूपादीनां बहूनामेक एव घटो देशो दृष्टः, न च मिथोविरोधो निरवयवत्वात्, तथाऽऽत्मनामपि निरवयवानामेकदेशतेति शङ्कते— **रूपेति।** तेषामपि तेजोजलादिभिः स्वधर्मिभिरभेदात्तदतिरिक्तघटाभावात्

**तेषामपि धर्म्यंशेनाभेदाल्लक्षणभेदाच्च। न तु बहूनामात्मनां लक्षणभेदोऽस्ति। अन्त्यविशेषवशाद्भेदोपपत्तिरिति चेत्। न। भेदकल्पनाया अन्त्यविशेषकल्पनायाश्चेतरेतराश्रयत्वात्। आकाशादीनामपि विभुत्वं ब्रह्मवादिनोऽसिद्धं कार्यत्वाभ्युपगमात्। तस्मादात्मैकत्वपक्ष एव सर्वदोषाभाव इति सिद्धम्।।५३।।**

**इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ श्रीशारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य तृतीयः पादः समाप्तः।।३।।**

### *प्रकटार्थविवरणम्*

तैजसांशस्य रूपवत्त्वात्; आप्यांशस्य रसवत्त्वात्; पार्थिवांशस्य गन्धवत्त्वात्; इत्येवं तत्तद्गुणस्य स्वस्य धर्म्यंशेन तादात्म्यात्तद्व्यतिरिक्तस्य घटस्याभावादिति भावः। किं च बहुत्ववादिना लक्षणभेदात् बहुत्वं वाच्यम्, तदपि नास्तीत्यर्थः। **काणादसमयं** शङ्कते— **अन्त्यविशेषादिति**। नित्येष्वेव द्रव्यष्वेव वर्तन्त एव ये विशेषाः तेऽन्त्या विशेषाः नित्यानुमेयाः, तद्वशाद् व्यावृत्तिसिद्धिरित्यर्थः। अन्त्यविशेषाणां व्यावृत्तिबुद्धिहेतुत्वं निर्भिन्ने चेत् तदा स्वरूपादपि व्यावृत्तिबुद्धिप्रसङ्गान्नैकं किंचित् स्यात्; अतो भेदे सिद्धेऽन्त्यविशेषसिद्धिः, तत्सिद्धौ च भेदसिद्धिरितीतरेतराश्रयान्नैकमपि सिध्यतीत्याह— **न, भेदकल्पनाया इति**। यच्च बहूनां विभूनामेकदेशत्वं दृष्टमाकाशादीनामिति वदन्ति, तदप्यस्माकमसिद्धमित्याह— **आकाशादीनामपीति**। एवं परपक्षं निराकृत्य स्वपक्षमुपसंहरति— **तस्मादिति**। यो हि बहून् कल्पयति कल्पयत्यसावेकमिति न्यायादेकस्तावदात्मा सर्वसंमतः, तस्मिंश्चाकाशकल्पे परोपाधिकसकलव्यवहारसिद्धौ न तात्त्विकभेदकल्पनायां किञ्चित्प्रमाणं प्रयोजकं चास्तीति भावः। आत्मा द्रव्यत्वव्यतिरिक्तापरजात्याधारः, अश्रावणविशेषगुणाधिकरणत्वात्, घटवदित्यत्र[अत्र जातिः पक्षः, व्यक्तिर्वा?] जातेः पक्षीकरणेऽपसिद्धान्तः; द्वितीये सन्दिग्धविशेष्यः पक्षाभासः, जात्याधारत्वे सन्दिग्धे व्यक्तित्वसन्देहात्; लोकसिद्धस्य पक्षीकरणे देहादेरेवात्मत्वप्रसिद्धेः सिद्धसाधनम्; ईश्वरस्याप्यपरजात्याधारत्वसाधनेन प्रतिकूलतर्कपराहतत्वादनुकूलतर्कविरहाच्चाप्रयोजकताऽन्यतरासिद्धिश्च। जीवः शरीरत्वात् [जीवशरीरस्य] स्वसंख्यासङ्ख्येयात्मत्वसाधने सिद्धसाधनम्; एकत्वस्यापि स्वकीयत्वात्। सकलविशेषणे साध्यवैकल्यम्। अपरोक्षज्ञानं वर्तमानपरोक्षज्ञानाश्रयाद्भिन्नाश्रयम्, परतन्त्रत्वे सत्यपरोक्षत्वात्, रूपवत् इत्यपि सिद्धसाधनम्, औपाधिका[कभेदा]ङ्गीकारादिति। इति सप्तदशमंशाधिकरणम्।।

**।।इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे द्वितीयस्याध्यायस्य तृतीयः पादः।।**

### *भाष्यभावप्रकाशिका*

कथमित्याह— **लक्षणेति**। ननु तर्हि लक्षणभेदादात्मनामपि बहुत्वं स्यादित्यत आह— **नन्विति**। आकाशकालादिषु व्यभिचारमाशङ्क्याह— **आकाशादीनामिति**।

**।।इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुखमुनिविरचितायां भाष्यभावप्रकाशिकायां द्वितीयाध्यायस्य तृतीयः पादः समाप्तः।।**

### *न्यायनिर्णयः*

कुतो दृष्टान्ततेत्याह— **नेति**। किंचात्मनां बहुत्वमपि लक्षणभेदादन्त्यविशेषवशाद्वा। नाद्यः, अन्यत्र लक्षणभेदात् भेदेऽपि प्रकृते तदभावादित्याह— **लक्षणेति**। नात्मनां तद्भेदोऽस्ति, तेषां भिन्नलक्षणानुपलम्भात्। ततश्चायुक्तं बहुत्वमित्यर्थः। द्वितीयं शङ्कित्वा दूषयति— **अन्त्येत्यादिना**। नित्यद्रव्याः स्वरूपसन्तो विशेषास्तद्वशादात्मसु व्यावृत्तिरित्युक्तं, न हि तेषां निर्भिन्ने व्यावृत्तिर्धीहेतुत्वं स्वरूपादपि तत्प्रसक्तावेकाभावप्रसङ्गात्। अतो भेदे सिद्धेऽन्त्यविशेषसिद्धिस्तत्सिद्धौ च भेदसिद्धिरित्यन्योन्याश्रयान्नैकस्यापि सिद्धिरित्यर्थः। यत्तु बहूनामात्मनां विभुत्वासिद्धिर्दृष्टान्ताभावादिति। तन्न। आकाशादीनामेव तथात्वादित्याशङ्क्याह— **आकाशादीनामिति**। परपक्षं निराकृत्य स्वपक्षमुपसंहरति— **तस्मादिति**। 'यो बहून् कल्पयति कल्पयत्यसावेकम्' इति न्यायादेकस्तावदात्मा सर्वसंमतः, तस्मिंश्चाकाशकल्पे परोपाधिना व्यवहारसिद्धौ न तात्त्विकभेदकल्पनायां किंचिन्मानं फलं वाऽस्तीति भावः। तदेवं भूतभोक्तृविषयश्रुतिविरोधव्यासेधेन समन्वयः सिद्धो ब्रह्मणीति पादार्थमुपसंहरति— **इति सिद्धमिति**।।५३।।

**।।इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितायां शारीरकव्याख्यायां न्यायनिर्णये द्वितीयाध्यायस्य तृतीयः पादः समाप्तः।।३।।**

**।।इति द्वितीयाध्यायस्य पञ्चमहाभूत-जीवश्रुतीनां विरोधपरिहाराख्यस्तृतीयः पादः।।**

## द्वितीयाध्याये चतुर्थः पादः।

१।।प्राणोत्पत्त्यधिकरणम्।।सू. १-४।।

### तथा प्राणाः।।१।।

**वियदादिविषयः श्रुतिविप्रतिषेधस्तृतीयेन पादेन परिहृतः; चतुर्थेनेदानीं प्राणविषयः परिह्रियते। तत्र तावत् 'तत्तेजोऽसृजत' (छा.उ. ६।२।३) इति, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै.उ. २।१।१) इति चैवमादिषूत्पत्तिप्रकरणेषु प्राणानामुत्पत्तिर्नाम्नायते। क्वचिच्चानुत्पत्तिरेवैषामाम्नायते- 'असद्वा इदमग्र आसीत्। तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रेऽसदासीत्। तदाहुः के ते ऋषय इति। प्राणा वाव ऋषयः' (शत. ६।१।१।१) इत्यत्र प्रागुत्पत्तेः प्राणानां सद्भावश्रवणात्। अन्यत्र तु प्राणानामप्युत्पत्तिः पठ्यते- 'यथाऽग्नेर्ज्वलतः[1] क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः (बृ.उ. २।१।२०)**

*शारीरकन्यायसंग्रहः*

**तथा प्राणाः।।१।। गौण्यसंभवात्।।२।। तत्प्राक्श्रुतेश्च।।३।। तत्पूर्वकत्वाद्वाचः।।४।।** ''एतस्माज्जायते प्राणः'' इत्यादाविन्द्रियाणां जन्म श्रुत्यैव निर्दिष्टम्। ''ऋषयो वाव तेऽग्र आसन्। तदाहुः के त ऋषयः इति। प्राणा वा ऋषयः'' इत्युत्पत्तेः प्राक् प्राणानामवस्थानं तेषां जन्माभावे लिङ्गम्। तत्र लिङ्गस्य श्रुत्या बाधायां प्राप्तायाम् अन्यतरस्यात्यन्तबाधकल्पनाद् वरं प्रबलाविरोधेन दुर्बलस्य विषयव्यवस्थाकल्पनम् इति न्यायेन वियदादिभिः सहेन्द्रियाणामुत्पत्त्याम्नानलिङ्गात् महाप्रलयविषयोत्पत्तिः, अवान्तरप्रलयविषयाऽनुत्पत्तिरिति व्यवस्थोपपादनेन प्राणानामुत्पत्तिः साधिता।

*प्रकटार्थविवरणम्*

**तथा प्राणाः।** पूर्वोत्तरपादयोः सङ्गतिमाह— **वियदादिविषय इति।** तमेव विप्रतिषेधमाह— **तत्र तावदित्यादिना।** ननु क्वचिदुत्पत्तिर्नाम्नायते, क्वचिदाम्नायते इत्येवंरूपो विप्रतिषेधो वियदधिकरणन्यायेनैव निरस्त इत्याशङ्क्य ततो विशेषमाह—

*भाष्यभावप्रकाशिका*

**तथा प्राणाः। प्राणविषय इति।** प्राणोत्पत्तिसंख्यातत्त्वादिविषय इत्यर्थः। यद्यपि ब्रह्मवेदने सर्ववेदनप्रतिज्ञातदुपपादनश्रुतिविरोधात् बहुधाऽद्वैतश्रुतिविरोधाच्च प्राणानां प्रलये सद्भावश्रुतिर्वियदमृतत्वादिश्रुतिवदन्यथा नेया, तथाप्यन्यथानयनप्रकारमविद्वानन्यथाऽनुपपद्यमानैकाऽपि श्रुतिर्बह्वीरन्यथा नयेदिति मन्वानः पूर्वपक्षं दर्शयन्नभ्युच्चयतया वियदधिकरणपूर्वपक्षहेतून् स्मारयति— **तत्र तावदित्यादिना।** ननु क्वचिदुत्पत्त्यश्रवणमुत्पत्त्यभावं दर्शयितुं नालम्, अतः किमर्थं तदुपन्यस्यत इत्याशङ्क्यानुत्पत्तिवाक्यप्राबल्ये हेतुत्वायेत्यभिप्रेत्य तद्वाक्यमाह— **क्वचिच्चेति।** विप्रतिपत्त्यर्थमुत्पत्तिवाक्यं दर्शयति— **अन्यत्र त्विति।** आदितः श्रुतिविप्रति-

*न्यायनिर्णयः*

भूतभोक्तृविषयश्रुतिविरोधं पूर्वपादे परिहृत्य भौतिकेन्द्रियादिश्रुतिविरोधं परिहर्तुं पादान्तरमवतारयन् पूर्वाधिकरणे कर्तृस्वरूपं विचार्य तदुपकरणानामिन्द्रियाणामुत्पत्तिं साधयति— **तथेति।** पूर्वोत्तरपादसंगतिमाह— **वियदादीति। प्राणविषयः** प्राणोत्पत्तिसंख्यातत्त्वादिविषय इत्यर्थः। सति विरोधे तत्परिहाराय प्रयतितव्यमिति मत्वा प्रथमं प्राणोत्पत्तिविषयं विरोधमुदाहरति— **तत्रेति।** क्वचिदुत्पत्त्यश्रवणमाकाशस्येवोत्पत्त्यभावासाधकत्वात् किमित्युद्भावितमित्याशङ्क्यानुत्पत्तिवाक्यसहायत्वेनेत्याह— **क्वचिच्चेति।** शून्यवादमाशङ्क्याह— **तदिति।** प्रसिद्धानामृषीणां प्रसङ्गं प्रत्याह— **तदित्यादिना।** कथमत्र प्राणानामनुत्पत्त्याम्नानम्, तद्वाचकपदाभावात्, तत्राह— **प्रागिति।** विप्रतिपत्त्यर्थमुत्पत्तिवाक्यं दर्शयति— **अन्यत्रेति।** विप्रतिपत्तेरेकादशेन्द्रियाणामुत्पत्तिरस्ति न वेति संशीतावनध्यवसायेन

---

१. पाठान्तरे 'ज्वलतः' इति नास्ति, 'अस्मात्' इति चाग्रे पाठः। युक्तं चैतत्। तथैव श्रुतिपाठोपलम्भात्।

**इति, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मु.उ. २।१।३) इति, 'सप्त प्राणाः प्रभवन्ति तस्मात्' (मु.उ. २।१।८) इति, 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नम्' (प्र.उ. ६।४) इति चैवमादिप्रदेशेषु। तत्र श्रुतिविप्रतिषेधादन्यतरनिर्धारणकारणानिरूपणाच्चाप्रतिपत्तिः प्राप्नोति। अथवा प्रागुत्पत्तेः सद्भावश्रवणाद् गौणी प्राणानामुत्पत्तिश्रुतिरिति प्राप्नोति। अत उत्तरमिदं पठति– 'तथा प्राणा' इति।**

**कथं पुनरत्र तथेत्यक्षरानुलोम्यम्, प्रकृतोपमानाभावात्। सर्वगतात्मबहुत्ववादिदूषणमतीतानन्तरपादान्ते प्रकृतम्। तत्तावन्नोपमानं संभवति, सादृश्याभावात्। सादृश्ये हि सत्युपमानं स्यात्– यथा सिंहस्तथा बलवर्मेति। अदृष्टसाम्यप्रतिपादनार्थमिति यद्युच्येत, यथाऽदृष्टस्य सर्वात्मसंनिधावुत्पद्यमानस्यानियतत्वमेवं प्राणानामपि सर्वात्मनः प्रत्यनियतत्वमिति। तदपि देहानियमेनैवोक्तत्वात् पुनरुक्तं भवेत्। न च जीवेन प्राणा उपमीयेरन् सिद्धान्तविरोधात्। जीवस्य ह्यनुत्पत्तिराख्याता। प्राणानां तूत्पत्तिर्व्याचिख्यासिता। तस्मात् तथेत्यसंबद्धमिव प्रतिभाति। न; उदाहरणोपात्तेनाप्युपमानेन संबन्धोपपत्तेः। अत्र प्राणोत्पत्तिवादिवाक्यजातमुदाहरणम्–**

***प्रकटार्थविवरणम्***

**क्वचिच्चानुत्पत्तिरेवेति**। आपाततः पूर्वपक्षमाह— **तत्र श्रुतेर्विप्रतिषेधादित्यादिना**। साक्षात्पूर्वपक्षमाह— **अथ वेति**। यथा पूर्वस्मिन् पादे जीवानां क्वचिदुत्पत्तिश्रवणेऽप्यजत्वश्रुतिविरोधाद् गौणी जन्मश्रुतिर्व्याख्याता, तथाऽत्रापि मुख्यप्राणातिरिक्तानां प्राणानां सृष्टेः प्राक् सद्भावश्रवणाद् देहोत्पत्त्या जन्मश्रुतिर्गौणीति भावः।

सूत्रमवतार्य रचनामाक्षिपति— **कथं पुनरत्रेति**। आनुलोम्यमाञ्जस्यमित्यर्थः। समाधत्ते— **नोदाहरणोपात्तेनापीति**। सन्निहितमेवोपमानमित्यङ्गीकृत्यैकवाक्योपात्तत्वेन सान्निध्यमुक्तम्। इदानीं नायं नियमः, **जैमिनिना** व्यवहितस्याप्युपमानस्याश्रितत्वादित्याह—

***भाष्यभावप्रकाशिका***

पत्त्याऽनध्यवसायेन पूर्वपक्षयित्वा पूर्वपक्षान्तरमवतारयति— **अथवेति**। अयं भावः— प्रलये प्राणविषयव्यवहाराभावात् सर्गकाल एव तद्विषय(स्य)व्यवहारभावात् तद्विषयतया जन्मश्रुतिरन्यथा सिद्धा; उत्पत्तेः[ प्राक् ] प्राणानामवस्थानश्रवणं तेषां जन्माभावे लिङ्गमनन्यथासिद्धतया बलवदिति।

सूत्रगतं तथाशब्दमाक्षिपति— **कथं पुनरिति**। किं तदुदाहरणं, कथं वा तदुपात्तेनोपमेत्येतद् दर्शयति— **अत्र प्राणोत्पत्तीति**।

***न्यायनिर्णयः***

पूर्वपक्षयति— **तत्रेति**। न च वियदधिकरणन्यायेन निर्णयः, प्राणानां प्रलये सत्त्वश्रुतेर्वियदमृतत्वादिश्रुतिवदवान्तरप्रलयाभिप्रायेण नयनप्रकाराज्ञानादिति भावः। श्रुतीनाममानत्वे शङ्किते गौणवाद्याह— **अथवेति**। प्रलये प्राणव्यवहाराभावादुत्पत्तिकाले तद्भावात् तद्विषयतया जन्मश्रुतिरन्यथासिद्धा। प्राणानां प्रागवस्थानश्रवणं तु तेषां जन्माभावे लिङ्गम्, अनन्यथासिद्धतया बलीयस्त्वात् तज्जन्माभावसाधकमिति भावः। अत्र च प्राणोत्पत्त्यनुत्पत्तिश्रुतीनां मिथोविरोधनिषेधेन मूलकारणे ब्रह्मणि समन्वयसाधनात् पादादिसंगतयः। पूर्वपक्षे तासां विरोधादप्रामाण्यात् तत्र समन्वयासिद्धिः। सिद्धान्ते त्वविरोधेन तत्सिद्धिः। पूर्वपक्षमनुभाष्य सिद्धान्तयति— **अत इति**।

सौत्रं तथाशब्दमाक्षिपति— **कथमिति**। आनुलोम्यमाञ्जस्यम्। कथं प्रकृतोपमानाभावः? तत्र किं परदूषणं प्राणानामुपमानमाहोस्विद-दृष्टमथवा जीवः? नाद्य इत्याह— **सर्वेति**। परपक्षदूषणस्य प्राणानां च सादृश्याभावेऽपि किमित्युपमानोपमेयभावो न स्यात्, तत्राह— **सादृश्ये हीति**। कल्पान्तरमाह— **अदृष्टेति**। तेन साम्यप्रतिपादनमेव प्रकटयति— **यथेति**। पुनरुक्त्या दूषयति— **तदपीति**। तृतीयं प्रत्याह— **न चेति**। सिद्धान्तविरोधं स्फोरयति— **जीवस्येति**। आक्षेपमुपसंहरति— **तस्मादिति**। सूत्राक्षराक्षेपं परिहरति— **नेति**। किं तदुदाहरणम्, तदाह— **अत्रेति**। कथं तदुपात्तेनोपमानम्, तदाह— **तत्रेति**। उक्तन्यायमाथर्वणादिवाक्येष्वपि

**[1]'एतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' (बृ.उ. २।१।२०) इत्येवंजातीयकम्। तत्र यथा लोकादयः परस्माद् ब्रह्मण उत्पद्यन्ते तथा प्राणा अपीत्यर्थः। तथा– 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' (मु.उ. २।१।३) इत्येवमादिष्वपि खादिवत् प्राणानामुत्पत्तिरिति द्रष्टव्यम्। अथवा 'पानव्यापच्च तद्वत्' (जै.सू.**

### *प्रकटार्थविवरणम्*

**अथ वेति**। सोमपाने क्रियमाणे यदा व्यापद् वमनं भवति, तदा ''सोमेन्द्रं चरुं निर्वपेत्'' इति श्रुतम्। तत् किं लौकिके वैदिके वेति संशये अधिकरणद्वयव्यवहितमश्वप्रतिग्रहेष्ट्यधिकरणन्यायं पूर्ववादी तद्वदित्यतिदिशति। तत्र हि ''वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात् तावतश्चतुष्कपालान् वारुणान्निर्वपेत्'' इतीयमिष्टिर्लौकिकाश्वप्रतिग्रहे[1], न वैदिक इति स्थापितम्, तद्वदित्यर्थः।

### *भाष्यभावप्रकाशिका*

अथवाऽतीतानन्तरपादेऽपि याव[ विय ]दादीनामुत्पत्त्यवगमात् तेनोपमानम्। न च व्यवहितत्वात् तेनोपमानं न संभवति। अन्यत्रापि दृष्टत्वादित्याह—**अथवा पानव्यापच्च तद्वदिति**। अत्राश्वप्रतिग्रहेष्ट्याद्यपूर्वपक्षसूत्रार्थसादृश्यं तद्वदिति तदा परामृष्टम्। तथा हि— तास्तीयमप्य[तार्तीयं व्य]वहितविषयातिदेशोदाहरणम् दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्वैदिके न दोषः स्यादिति। अस्त्यश्वप्रतिग्रहेष्टिः— 'वरुणो वा एनं गृह्णाति योऽश्वं प्रतिगृह्णाति। यावतोऽश्वान्प्रतिगृह्णीयात् तावतो वारुणाश्चतुष्कपालान्निर्वपेत्' इति। तत्र सन्देहः— किम् लौकिकाश्वप्रतिग्रह[2] इष्टिरथ वैदिक इति। अथ पौण्डरीकेऽश्वसहस्रं दक्षिणा ज्योतिष्टोमे गौश्चाश्वश्चेति सह भावात्तत्रैव दोष इत्याशङ्क्याह—**दोषात्त्विष्टिरिति**। शूद्रादन्यस्माद्वा पापकर्मणोऽश्वप्रतिग्रहेष्ट्यधिकरणात्[3] पूर्वपक्षवादी सिद्धान्तस्तु दोषात्त्विष्टिर्वैदिकी स्यादर्थार्था[ द्धि ] लौकिके न दोषः स्यादिति। वैदिकस्य दोषसंबन्धः श्रूयते— इन्द्रियेण वा एष वीर्येण च्यवते

### *न्यायनिर्णयः*

योजयति— **तथेति**। संनिहितमेवोपमानमित्यङ्गीकृत्यैकवाक्योपात्तत्वेन सांनिध्यमुक्तम्। इदानीं नायं नियमः, व्यवहितोपमानस्यापि मीमांसकैरिष्टत्वादित्याह— **अथवेति**। अस्ति तावदश्वदाननिमित्तेष्टिः 'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इत्याम्नाता। सा किं लौकिकेऽश्वदाने वैदिकेऽश्वदाने वेति संदेहे 'दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात्' इति पूर्वपक्षसूत्रम्। अस्यार्थः— अश्वदाने लौकिके दोषनिर्घातार्था प्रकृतेष्टिरेष्टव्या, तत्रैव 'न केसरिणो ददाति' इति निषेधातिक्रमकृतस्य दोषस्य संभवात्। वैदिकेऽश्वदाने सामान्यनिषेधानवकाशात्र तत्कृतो दोषः स्यात्। 'पौण्डरीकेऽश्वसहस्रं दक्षिणे'त्यादिविशेषशास्त्राद्वैदिकाश्वदानस्य निर्दोषत्वसिद्धेरिति। राद्धान्तसूत्रम्— 'अर्थवादोऽनुपपातात्तस्माद्यज्ञे प्रतीयते' इति। तस्यार्थः— लौकिकेऽश्वदाने सति जलोदररूपवरुणग्रहदोषो नोपपतति मानाभावात्। न चेदमेव वाक्यमत्र मानम्, अश्वदाने जलोदराख्यो दोषस्तन्निर्घातार्था चेष्टिरित्यर्थभेदे वाक्यभेदात्। न च वरुणशब्दो वृणोतीति[4] निषेधातिक्रमकृतदोषानुवादीति कुतो वाक्यभेदः, तथा सति प्रसिद्धित्यागप्रसङ्गात्। तत्त्यागे च वैदिकेऽपि दाने तुरगत्यागजं क्लेशमात्रमुक्तव्युत्पत्त्या वरुणशब्दवाच्यं स्यात्। तस्माद् यावद्वरुणगृहीतस्य वरुणोन्मोचने श्रेयस्तावदस्यामिष्टावित्यर्थवादोऽयम्। तथा च यज्ञसंबन्धिन्यश्वदाने प्रतीयते वारुणीष्टिरिति। स्थिते चैवं प्रतिग्रहीतुर्दातुर्वा सेष्टिरिति संदेहे पूर्वपक्षितम्— 'अचोदितं च कर्म भेदात्' इति। तस्यार्थः— दातुरचोदितमिष्टिकर्म, यः प्रतिगृह्णाति स निर्वपेदिति प्रतिग्रहीत्रा तस्य भेदाद्विशेषणादिति। 'सा लिङ्गादार्त्विजे स्यात्' इति सिद्धान्तसूत्रम्। ऋत्विजामयमित्यार्त्विजो यजमानस्तस्मिन् कर्तरि सा वारुणीष्टिः स्यात्, 'प्रजापतिर्वरुणायाश्वमनयत्' इत्युपक्रमे दातुः संकीर्तनाल्लिङ्गात्। न च दातरि प्रतिगृह्णातीति विरुद्धं, संप्रदानप्रेरणादिना तस्यापि प्रतिग्रहकर्तृत्वादित्यर्थः। एवं दातुरिष्टिरिति व्यवस्थाप्योक्तम्— 'पानव्यापच्च तद्वत्' इति। 'सौमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामी' इत्यत्र लौकिकसोमपानवमने

---

१. 'अस्मादात्मनः' इति पा.। २. इदं चोत्तराधिकरणसिद्धान्तमनपेक्ष्य श्रौत'प्रतिगृह्णाति'पदस्य यथाश्रुतार्थपरिग्रहेण। वस्तुतस्तु लौकिकेऽश्वदाने वैदिके वेत्येव संशयः प्रदर्शनीयः। रागप्राप्तस्याश्वप्रतिग्रहस्य वेदविहितत्वरूपवैदिकत्वाभावात्। अत एव चेदं खण्डितं कल्पतरौ। द्र.पृ. ६३०।

३. अत्र ग्रन्थत्रुटिरनुमीयते। ४. 'व्युत्पत्त्या' इति शेषः।

**३।४।१५) इत्येवमादिषु व्यवहितोपमानसंबन्धस्याप्याश्रितत्वात् यथाऽतीतानन्तरपादादावुक्ता वियदादयः परस्य ब्रह्मणो विकाराः समधिगतास्तथा प्राणा अपि परस्य ब्रह्मणो विकारा इति योजयितव्यम्।**

**कः पुनः प्राणानां विकारत्वे हेतुः? श्रुतत्वमेव। ननु केषुचित् प्रदेशेषु न प्राणानामुत्पत्तिः श्रूयत इत्युक्तम्; तदयुक्तम्। प्रदेशान्तरेषु श्रवणात्। न हि क्वचिदश्रवणमन्यत्र श्रुतं निवारयितुमुत्सहते। तस्माच्छ्रुतत्वाविशेषादाकाशादिवत् प्राणा अप्युत्पद्यन्त इति सूक्तम्।।१।।**

## गौण्यसंभवात्।।२।।

**यत्पुनरुक्तम्- प्रागुत्पत्तेः सद्भावश्रवणाद् गौणी प्राणानामुत्पत्तिश्रुतिरिति; तत् प्रत्याह- 'गौण्यसंभवात्' इति। गौण्या असंभवो गौण्यसंभवः। न हि प्राणानामुत्पत्तिश्रुतिर्गौणी संभवति, प्रतिज्ञाहानिप्रसङ्गात्। 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु.उ. १।१।३) इति ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तत्साधनायेदमाम्नायते- 'एतस्माज्जायते प्राणः' (मु.उ. २।१।३) इत्यादि। सा च प्रतिज्ञा प्राणादेः समस्तस्य जगतो ब्रह्मविकारत्वे सति प्रकृतिव्यतिरेकेण विकाराभावात् सिध्यति। गौण्यां तु प्राणानामुत्पत्तिश्रुतौ**

### *प्रकटार्थविवरणम्*

प्रतिज्ञामात्रं सूत्रेऽस्ति। हेतुं प्रश्नपूर्वकमाह— **कः पुनरिति**। उक्तमनूद्य दूषयति— **ननु केषुचिदित्यादिना**।

### *भाष्यभावप्रकाशिका*

यः सोमं वमितीति। लौकिके पुनर्धातुसाम्यनिमित्ते वमने न किंच दुष्यति। वमनायैव हि तत्पिबन्ति लोके। अथाप्ययमर्थवादस्तथापि चरोः फलकल्पनापरिहाराय वैदिक एवेति कल्पना न्याय्येति। उपमानप्रकारमाह— **यथेति**।

### *न्यायनिर्णयः*

वा वैदिकसोमपानवमने वा सौमेन्द्रश्चरुरिति संदेहे सति प्रतिग्रहेष्ट्याद्यधिकरणपूर्वपक्षवल्लौकिके धातुसाम्यार्थं सोमस्य पाने यदि व्यापद् वमनं भवति तदा तस्मिँल्लौकिके वमने यागो विधीयते। 'इन्द्रियेण वीर्येण व्यृध्यते यः सोमं वमति' इति दोषाद् वमननिमित्तेन्द्रियशोषस्य च दर्शनान्न वरुणग्रहणवदप्राप्तिः। वैदिके तु सोमपाने शेषप्रतिपत्तेर्जातत्वाद् वमनेऽपि न दोष इति पूर्वपक्षयित्वा राद्धान्तितम्— 'दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषः स्यात्' इति। वैदिके हि सोमपानवमने सौमेन्द्रश्चरुः स्यात्। 'मा मेऽवाङ्नाभिमतिगाः' इति मन्त्रलिङ्गाद् वमने कर्मवैगुण्याद् दोषावगमात्। लौकिके तु सोमपानवमने न कश्चिद् दोषः स्यात्, तस्य धातुसाम्यार्थत्वात् तज्जन्येन्द्रियशोषस्य धातुसाम्यकरत्वेन गुणत्वात्। श्रूयते च—'इन्द्रियेण' इत्यादिना वैदिकस्य पानस्य व्यापदि दोषः, स च वमनेन सोमसंस्कारे विनष्टे सत्युपपद्यते, तस्माद् वैदिके वमने याग इत्यर्थः। 'तत्सर्वत्राविशेषात्' 'स्वामिनो वा तदर्थत्वात्' इत्येवंविधानि पूर्वोत्तरपक्षसूत्राण्यादिशब्देन गृह्यन्ते। तेषु व्यवहितोपमानसंबन्धस्याभि-युक्तैरिष्टत्वादत्रापि व्यवहितोपमानसंबन्धः संभवतीति भाष्यार्थः। व्यवहितोपमानसंबन्धितया तथाशब्दार्थमुक्त्वा सूत्रं योजयति— **यथेति**। प्रतिज्ञामात्रस्य सूत्रे दृष्टेरिष्टं हेतुं प्रश्नपूर्वकमाह— **कः पुनरिति**। पूर्ववादी पूर्वोक्तं स्मारयति— **नन्विति**। 'अश्रवणं श्रवणानुसारेण नेयम्' इति गुणोपसंहारन्यायेन दूषयति— **तदिति**। कुतस्तेनैव न्यायेन श्रवणमश्रवणानुरोधेन न नीयते, वियदधिकरणविरोधादित्याह— **न हीति**। श्रुत्यनुरोधेनाश्रुतेर्नेतव्यत्वे फलितमाह— **तस्मादिति**।।१।।

विरोधवादिनं प्रतिबोध्य गौणवादिनं प्रत्याह— **गौणीति**। सूत्रव्यावर्त्यमनूद्य तदुत्तरत्वेनावतार्य विभजते— **यदित्यादिना**। काऽसौ प्रतिज्ञा, कथं वा प्राणानामुत्पत्तेर्गौणत्वे तद्धानिः, तत्राह— **कस्मिन्निति**। कथम् 'एतस्मादि'त्यादिना प्रतिज्ञा समर्थ्यते, तत्राह— **सा चेति**। विपक्षे दोषमाह— **गौण्यां त्विति**। प्रतिज्ञाऽपि गौणीति न तदर्थं प्राणोत्पत्तिर्मुख्या वाच्येत्याशङ्क्योपक्रमोपसंहारालोचनया

**प्रतिज्ञेयं हीयेत। तथा च प्रतिज्ञातार्थमुपसंहरति— 'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्' (मु.उ. २।१।१०) इति, 'ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' (मु.उ. २।२।११) इति च। तथा 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' (बृ.उ. २।४।५) इत्येवंजातीयकासु श्रुतिष्वेवैव प्रतिज्ञा योजयितव्या।**

**कथं पुनः प्रागुत्पत्तेः प्राणानां सद्भावश्रवणम्? नैतन्मूलप्रकृतिविषयम्। 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' (मु.उ. २।१।२) इति मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वावधारणात्। अवान्तर-प्रकृतिविषयं त्वेतत् स्वविकारापेक्षं प्रागुत्पत्तेः प्राणानां सद्भावावधारणमिति द्रष्टव्यम्। व्याकृतविषयाणामपि**

***प्रकटार्थविवरणम्***

**गौण्यसंभवात्**। ननु सा प्रतिज्ञाऽपि गौणी, न तत्सिद्ध्यर्थं प्राणानामुत्पत्तिः मुख्या वक्तव्येत्याशङ्क्याह— **तथा च प्रतिज्ञातार्थमिति**। उपक्रमोपसंहारपर्यालोचनया प्रतिपिपादयिषिताद्वितीयत्वप्रतिज्ञानुरोधेन प्राणानामुत्पत्तिर्मुख्यैव [ वेत्युक्त्वा ] इदानीं सद्भावश्रवणस्य गतिं प्रश्नपूर्वकमाह— **कथं पुनरित्यादिना**। एतद्वचनं मूलप्रकृतेः ब्रह्मणः प्राणसद्भावविषयं न भवति; किंविषयं तर्हीत्यत आह— अवान्तरप्रकृतिः हिरण्यगर्भः, तत्प्राणास्तित्वविषयं तद्वाक्यमित्यर्थः। ननु हिरण्यगर्भस्यापि विकारान्तःपातित्वात् कथं विकारासत्त्वाभिधानपूर्वकं प्राणसद्भावावधारणं घटत इत्याशङ्क्याह— **स्वविकारापेक्षमिति**। अवान्तरप्रलये हिरण्यगर्भ-विकारजातासत्त्वापेक्षया तदीयप्राणसद्भावावधारणं द्रष्टव्यमित्यर्थः। ननु ब्रह्मण एव सकलजगत्प्रकृतित्वात् नास्त्यवान्तरप्रकृतौ मानमित्याशङ्क्याह— **व्याकृतविषयाणामपीति**। ''हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्'', ''आदिकर्ता स भूतानाम्'' इत्यादिश्रुतिस्मृत्योः कार्यावच्छिन्नानामपि मूलकारणस्यैवावस्थाविशेषाणां प्रकृतिविकारभावेन प्रसिद्धेरवान्तरप्रकृतिरेव

***भाष्यभावप्रकाशिका***

एकविज्ञानेन सर्वविज्ञानं कथमत्र विधित्सितं गम्यत इत्याशङ्क्योपक्रमोपसंहारयोरैकरूप्यावगमादित्याह— **तथा च प्रतिज्ञातार्थमिति**। प्रतिज्ञाऽपि गौणी भविष्यतीत्याशङ्क्य तां निवर्तयितुं तात्पर्यवत्त्वद्योतनाय प्राणोत्पत्तिवादिवाजसनेयवाक्यस्य च मुख्यार्थत्वं दर्शयितुं तत्रत्यं प्रतिज्ञान्तरमाह— **तथाऽऽत्मनो वेति**। **नैतन्मूलप्रकृतीति**। अयं भावः— 'एतस्माज्जायते प्राण' इत्यादावपीन्द्रियाणां जन्म श्रुत्यैवनिर्दिष्टम्, 'तदाहुः के त ऋषय इति प्राणा वा ऋषय' इत्युत्पत्तेः[प्राक्] प्राणानामवस्थानं तेषां जन्माभावे लिङ्गम्। तत्र लिङ्गस्य श्रुत्या बाधायामन्यतरस्यात्यन्तबाधकल्पनाद्वरं प्रबलविरोधेन दुर्बलस्य विषयस्य व्यवस्थाकल्पनमिति न्यायेन वियदादिभिः सहेन्द्रियाणामुत्पद्य-मानत्वाम्नानात् लिङ्गान्महाप्रलयविषयोत्पत्तिरवान्तरप्रलयविषया त्वनुत्पत्तिरिति व्यवस्थोपादानं युक्तमिति। ननु ब्रह्मण एवैकस्य प्रकृतित्वात् कथं प्रकृत्यन्तरसंभव इत्यत आह— **व्याकृतविषयाणामिति**। अथवाऽवान्तरप्रकृतेरपि लीनत्वात्

***न्यायनिर्णयः***

विवक्षिताद्वितीयत्वानुरोधेन प्रतिज्ञाया गौणत्वायोगान्मुख्यैव प्राणोत्पत्तिरित्याह— **तथा चेति**। प्रतिज्ञाया मुख्यत्वसिद्धये भूयःसु प्रदेशेषु दृष्टत्वं हेत्वन्तरमाह— **तथेति**।

प्राणानामुत्पत्तिश्चेत् प्रागवस्थायां सत्त्वश्रुतिर्विरुध्येतेति शङ्कते— **कथमिति**। नैतद्वाक्यं ब्रह्मणो मूलकारणस्य प्राणसद्भावार्थम्, तस्य श्रुत्या सर्वविशेषराहित्यसिद्धेरित्याह— **नैतदिति**। किंविषयं तर्हि वाक्यम्, तत्राह— **अवान्तरेति**। हिरण्यगर्भोऽवान्तर-प्रकृतिस्तत्प्राणास्तित्वविषयमेतद्वाक्यमिति योजना। हिरण्यगर्भस्यापि विकारत्वात् कथं विकारासत्त्वोक्तिपूर्वकं प्राणसत्त्वावधारणम्, तत्राह— **स्वविकारेति**। अवान्तरलये हिरण्यगर्भकार्यसमुदायासत्त्वापेक्षया तदीयप्राणसत्त्वावधारणमित्यर्थः। 'एतस्माज्जायते प्राणः' इत्यादाविन्द्रियाणां श्रुत्यैव जन्मोक्तम्। 'तदाहुः' इत्यादौ तु प्रागुत्पत्तेस्तेषामवस्थानं जन्माभावे लिङ्गम्, तत्र लिङ्गस्य श्रुत्या बाधायामन्यतरस्यात्यन्तबाधकल्पनाद् वरं प्रबलानुरोधेन दुर्बलस्य विषयव्यवस्थाकल्पनम् इति न्यायेन वियदादिभिः सहेन्द्रियाणा-मुत्पत्त्याम्नानान्महाप्रलये तदुत्पत्तिरवान्तरप्रलये त्वनुत्पत्तिरिति श्रुतिलिङ्गयोर्विषयव्यवस्थेति भावः। ब्रह्मण एव सर्वप्रकृतित्वान्नावान्तरप्रकृतौ मानमित्याशङ्क्याह— **व्याकृतेति**। 'हिरण्यगर्भः समवर्तताग्रे', 'आदिकर्ता स भूतानाम्' इत्यादिश्रुतिस्मृत्योः कार्यावच्छिन्नानामपि

**भूयसीनामवस्थानां श्रुतिस्मृत्योः प्रकृतिविकारभावप्रसिद्धेः। वियदधिकरणे हि 'गौण्यसंभवात्' इति पूर्वपक्षसूत्रत्वाद् गौणी जन्मश्रुतिरसंभवादिति व्याख्यातम्। प्रतिज्ञाहान्या च तत्र सिद्धान्तोऽभिहितः। इह तु सिद्धान्तसूत्रत्वाद् गौण्या जन्मश्रुतेरसंभवादिति व्याख्यातम्। तदनुरोधेन त्विहापि गौणी जन्मश्रुतिरसंभवादिति व्याचक्षाणैः प्रतिज्ञाहानिरुपेक्षिता स्यात्।।२।।**

## तत्प्राक्श्रुतेश्च।।३।।

**इतश्चाकाशादीनामिव प्राणानामपि मुख्यैव जन्मश्रुतिः, [१]यत् 'जायत' इत्येकं जन्मवाचिपदं प्राणेषु प्राक्श्रुतं सदुत्तरेष्वप्याकाशादिष्वनुवर्तते 'एतस्माज्जायते प्राणः' (मु.उ. २।१।३) इत्यत्र। आकाशादिषु मुख्यं जन्मेति प्रतिष्ठापितम्। तत्सामान्यात् प्राणेष्वपि मुख्यमेव जन्म भवितुमर्हति। न ह्येकस्मिन् प्रकरण एकस्मिंश्च वाक्य एकः शब्दः सकृदुच्चरितो बहुभिः संबध्यमानः क्वचिन्मुख्यः क्वचिद् गौण इत्यध्यवसातुं**

### *प्रकटार्थविवरणम्*

नास्तीति न शक्यते वक्तुमित्यर्थः। तस्मात् प्राणानां सद्भावश्रुतेः महाप्रलयविषयत्वाभावात् महाप्रलयानन्तरमुत्पत्तिश्रुतेर्न गौणत्वमिति स्थितम्। एवं तावत् स्वाभिप्रायेण सूत्रं व्याख्याय, यत् कैश्चिद् वियदधिकरणानुसारेणेहापि व्याख्यातम्, [तद्]दूषयितुं विशेषमाह— **वियदधिकरणे हीत्यादिना।**

**तत्प्राक्श्रुतेश्च।** आकाशादिषु मुख्यजन्मवाचकस्य 'जायत' इति पदस्य तदितरेषु पूर्वं श्रुतत्वाच्च प्राणानां मुख्यजन्मेति योजना। एकस्मिन् वाक्ये प्रयुक्तस्यैकस्य शब्दस्य क्वचिन्मुख्यत्वं क्वचिद् गौणत्वमित्येवं वैरूप्यं युक्तरूपं न भवतीत्येष

### *भाष्यभावप्रकाशिका*

कथं प्राणसंभवावधारणमित्याशङ्क्य श्रुतिस्मृत्योस्तस्या हिरण्यगर्भादिरूपायाः अवान्तरप्रलयेष्ववस्थानस्य सिद्धत्वादित्याह— **व्याकृतेति।** ननु वियदधिकरण इव किमर्थमिदं सूत्रं न व्याख्यायत इति, तत्राह— **वियदधिकरण इति।**

एकस्मिन्नपि प्रकरणे 'अन्नं ब्रह्म' 'आनन्दो ब्रह्मे'त्यादौ ब्रह्मशब्दस्येवानेकार्थत्वं स्यादित्यत्राह— **एकस्मिन् वाक्य इति।** तथापि 'तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मे'तिवत् स्यादित्यत्राह— **एकशब्द इति।** ननु ब्रह्मशब्दोऽप्येक एवेत्यत्राह— **सकृदिति।** तस्य जन्मवादिनश्शब्दस्य प्राक् श्रवणात् तस्य चेतरेषु मुख्यार्थत्वात् तत्सामान्यात् प्राणेष्वपि मुख्यार्थत्वमिति सूत्रं व्याख्यातम्। इदानीं मुख्यजन्मवाचिनश्शब्दात् प्राक्श्रुतानान्तत्संबन्धिनामितरेषामिव[२].....

### *न्यायनिर्णयः*

मूलकारणावस्थाविशेषाणां हिरण्यगर्भादीनां प्रकृतिविकारभावेन प्रसिद्धेरवान्तरप्रकृतिरस्तीत्यर्थः। तदेवं प्राणसत्त्वश्रुतेरवान्तर-प्रलयविषयत्वान्महाप्रलयानन्तरं प्राणोत्पत्तिश्रुतेर्न गौणतेति स्वाभिप्रायेण सूत्रं व्याख्याय वियदधिकरणवदिहापि किं न व्याख्यातमित्याशङ्क्य विशेषमाह— **वियदिति।** एकस्य सूत्रस्यैकार्थत्वयोगे किमर्थद्वयोक्त्येत्याशङ्क्याह— **तदिति।।२।।**

प्राणानां मुख्यं जन्मेत्यत्र हेत्वन्तरमाह— **तत्प्रागिति।** तस्य 'जायत' इति जन्मवाचिपदस्याकाशादिषु मुख्यस्य पाठापेक्षया प्राचीनेषु प्राणेषु श्रुतत्वाच्च प्राणानां मुख्यं जन्मेति योजना। चकारार्थमाह— **इतश्चेति।** तदेव स्पष्टयन्नवशिष्टं व्याचष्टे— **यदिति।** तथापि कथं प्राणेषु मुख्या जन्मश्रुतिः, तत्राह— **आकाशादिष्विति। तत्सामान्यात्** तैराकाशादिभिः सह जायमानत्वेन तुल्यत्वादित्यर्थः। एकस्यापि शब्दस्य विषयभेदादग्न्यादिशब्दवद् गौणत्वमुख्यत्वे स्यातामित्याशङ्क्याह— **न हीति।** एकस्मिन्नपि प्रकरणे 'अन्नं ब्रह्म', 'आनन्दो ब्रह्म' इत्यादौ ब्रह्मशब्दस्यानेकार्थत्ववदिहापि स्यादित्याशङ्क्याह— **एकस्मिन्निति।** तथापि 'तपसा ब्रह्मे' त्यादिवदनेकार्थत्वमाशङ्क्योक्तम्— **एक इति।** ब्रह्मशब्दस्यापि तुल्यमेकत्वमित्याशङ्क्याह— **सकृदिति।** 'एतस्मादि'त्यादावुक्तन्यायं

---

१. यत् = यस्मात्। २. अत्र ग्रन्थपातः।

**शक्यम्। वैरूप्यप्रसङ्गात्। तथा 'स प्राणमसृजत प्राणाच्छ्रद्धाम्' (प्र.उ. ६।४) इत्यत्रापि प्राणेषु श्रुतः सृजतिः परेष्वप्युत्पत्तिमत्सु श्रद्धादिष्वनुषज्यते। यत्रापि पश्चाच्छ्रुत उत्पत्तिवचनः शब्दः पूर्वैः संबध्यते, तत्राप्येष एव न्यायः। यथा 'सर्वाणि भूतानि व्युच्चरन्ति' (बृ.उ. २।१।२०) इत्ययमन्ते पठितो व्युच्चरन्तिशब्दः पूर्वैरपि प्राणादिभिः संबध्यते।।३।।**

**तत्पूर्वकत्वाद्वाचः।।४।।**

**यद्यपि 'तत्तेजोऽसृजत' (छा.उ. ६।२।३) इत्येतस्मिन् प्रकरणे प्राणानामुत्पत्तिर्न पठ्यते, तेजोऽबन्नानामेव त्रयाणां भूतानामुत्पत्तिश्रवणात्; तथापि ब्रह्मप्रकृतिकतेजोऽबन्नपूर्वकत्वाभिधानाद् वाक्प्राणमनसां तत्सामान्याच्च सर्वेषामेव प्राणानां ब्रह्मप्रभवत्वं सिद्धं भवति। तथाहि- अस्मिन्नेव प्रकरणे तेजोबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायते- 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' (छा.उ. ६।५।४) इति। तत्र यदि तावन्मुख्यमेवैषामन्नादिमयत्वम्, ततो वर्तत एव ब्रह्मप्रभवत्वम्। अथ भाक्तम्, तथापि ब्रह्मकर्तृकायां नामरूपव्याक्रियायां श्रवणात्, 'येनाश्रुतं श्रुतं भवति' (छा.उ. ६।१।३) इति चोपक्रमात्, 'ऐतदात्म्यमिदं सर्वम्' (छा.उ. ६।८।७) इति चोपसंहाराच्छ्रुत्यन्तरप्रसिद्धेश्च ब्रह्मकार्यत्वप्रपञ्चनार्थमेव**

***प्रकटार्थविवरणम्***

न्यायोऽन्यत्रापि द्रष्टव्य इत्याह— **यत्रापि पश्चाच्छ्रुत इति।**

**तत्पूर्वकत्वाद्वाचः।** यच्चोक्तं छान्दोग्ये प्राणानामुत्पत्तिर्नाम्नायत इति; तत्राह— **तत्पूर्वकत्वाद्वाच इति।** वाग्ग्रहणमुपलक्षणार्थम्। वाक्प्राणमनसामपि छान्दोग्ये सृष्टिप्रकरणे तावत् तेजोबन्नपूर्वकत्वमाम्नायते। तत् किं मुख्यं गौणं वेति निरूपणीयम्। प्रथमं प्रत्याह— **तत्र यदि तावदिति। ततो वर्तत एवेति।** विद्यत एव छान्दोग्येऽपि प्राणानामुत्पत्तिरिति शेषः। भाक्तं गौणं प्राणानामन्नादिमयत्वम्, अन्नाद्युपयोगात्प्रागपि सिद्धत्वादित्यर्थः। यद्यपीदानीमुपयुज्यमानान्नादिमयत्वं नास्ति, तथापि भौतिकानामेव परंपरया ब्रह्मकार्यत्वं न विरुध्यत इत्याह— **तथापीति।** इति प्रथमं प्राणोत्पत्त्यधिकरणम्।

***भाष्यभावप्रकाशिका***

प्राणानामुत्पत्त्यश्रवणमभ्युपगम्यान्यत्रोत्पत्तिश्रवणादुत्पत्तिःसाधिता। इदानीं प्रकरणान्तरे तत्राप्युत्पत्ति[1] प्राणमनसां तेजोबन्नपूर्वमुत्पत्तिः कथमित्यत आह— **तत्सामान्यादिति।** तच्छ्रुत इत्याह— **यद्यपीति।** सूत्रे वाग्ग्रहणमुपलक्षणं वा प्रपञ्चयति— **तथा हीति।**

***न्यायनिर्णयः***

वाक्यान्तरेऽप्यतिदिशति— **तथेति।** तस्य जन्मवाचिनः शब्दस्य पूर्वश्रवणात् तस्य चोत्तरेषु मुख्यत्वात् तत्सामान्यात् प्राणेष्वपि मुख्यतेत्युक्तम्। इदानीं मुख्यजन्मवाचिनः शब्दात् प्राक् प्राणादीनां श्रुतेस्तद्योगिनामितरेषामिव तेषामपि तत्साहचर्यान्मुख्यं जन्मेति व्याख्यान्तरमाह— **यत्रेति।** न्यायः सह पठितेषु जन्मनो मुख्यत्वाविशेषः। तत्रोदाहरणं— **यथेति।।३।।**

छान्दोग्ये प्राणानामुत्पत्त्यश्रवणमङ्गीकृत्यान्यत्रोपत्तिश्रवणादुत्पत्तिः साधिता। सम्प्रति तत्रापि तदुत्पत्त्यश्रवणमसिद्धमित्याह— **तत्पूर्वकत्वादिति।** तच्छब्देन तेजोबन्नान्युच्यन्ते। प्राणेन मनसा च सहिताया वाचस्तेजोबन्नकार्यत्वादस्ति तदुत्पत्तिश्रुतिरित्यर्थः। तेजःप्रभृतीनां सृष्टिप्रकरणे प्राणानामुत्पत्तिर्न श्रुता तेषामेव सृष्टेः शिष्टत्वादित्याशङ्कामनुवदति— **यद्यपीति।** सूत्रव्याख्यानेनोत्तरमाह— **तथापीति।** वागादीनां त्रयाणां प्रणाड्या ब्रह्मजन्मत्वेऽपि कुतो हस्तादीनां तथेत्याशङ्क्याह— **तदिति।** तैर्वागादिभिः सामान्यं हस्तादीनां प्राणत्वम्। उक्तमेव प्रपञ्चयति— **तथाहीति।** तथापि कथमेषां ब्रह्मजत्वं, किमेषामन्नादिमयत्वं मुख्यं गौणं वा? प्रथमं प्रत्याह— **तत्रेति।** तेजआदीनां तज्जत्वादिति शेषः। द्वितीयमनूद्य तत्रापि ब्रह्मजत्वमत्याज्यमित्याह— **अथेत्यादिना।** 'स

---

१. अत्र ग्रन्थत्रुटिर्भाति। अग्रेऽप्यशुद्धिरस्ति।

**मनआदीनामन्नादिमयत्ववचनमिति गम्यते। तस्मादपि प्राणानां ब्रह्मविकारत्वसिद्धिः।।४।।**

।।इति प्रथमं प्राणोत्पत्त्यधिकरणम्।।

**२।। सप्तगत्यधिकरणम्।।सू. ५-६।।**

## सप्त गतेर्विशेषितत्वाच्च।।५।।

**उत्पत्तिविषयः श्रुतिविप्रतिषेधः प्राणानां परिहृतः; संख्याविषय इदानीं परिह्रियते। तत्र मुख्यं प्राणमुपरिष्टाद् वक्ष्यति। सम्प्रति तु कतीतरे प्राणा इति संप्रधारयति। श्रुतिविप्रतिपत्तेश्चात्र विशयः। क्वचित् सप्त प्राणाः संकीर्त्यन्ते- 'सप्त प्राणाः प्रभवन्ति तस्मात्' (मु.उ. २।१।८) इति। क्वचिच्चाष्टौ प्राणा ग्रहत्वेन गुणेन संकीर्त्यन्ते- 'अष्टौ ग्रहा अष्टावतिग्रहाः' (बृ.उ. ३।२।१) इति। कचिन्नव- 'सप्त वै शीर्षण्याः प्राणा**

### *शारीरकन्यायसंग्रहः*

**सप्त गतेर्विशेषितत्वाच्च।।५।। हस्तादयस्तु स्थितेऽतो नैवम्।।६।।** न्यूनाधिकसंख्याविरोधे बुद्धिलाघवात् न्यूनसंख्योपादानं युक्तमिति सप्तप्राणोपादाने प्राप्ते अधिकसंख्योपादाने न्यूनसंख्यायास्तत्रान्तर्भावात् श्रुतस्य अबाधसिद्धये अधिकसंख्योपादानमेव युक्तमिति न्यायेन एकादश प्राणाः कार्यनियमान्निरूपिताः।

इयमपरा सूत्रद्वययोजना। अनेकशरीरानुयायिनो जीवस्याव्यभिचारितया अनुयायिनामनर्थहेतूनामेवेन्द्रियत्वेन करणत्वे वक्तव्ये "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति सर्वशब्दस्यानुयायिप्राणवाचिनः प्रकरणात् सप्तप्राणपरामर्शकत्वं प्राप्तम्। "दशेमे पुरुषे प्राणा आत्मैकादशः, ते यदाऽस्मान्मर्त्याच्छरीरादुत्क्रामन्ति" इत्यनुयायिनामेवैकादशानां प्राणानाम् "सर्वे प्राणाः" इत्यत्र सर्वशब्दः परामर्शकः प्राप्तः। तत्र प्रकरणोपस्थापितानुयायिसप्तप्राणपरिग्रहात् वरं श्रुत्युपस्थापितानुयाय्येकादशप्राणपरिग्रह इति न्यायेनैकादशप्राणपरिग्रहः कृतः।।

### *प्रकटार्थविवरणम्*

**सप्त गतेर्विशेषितत्वाच्च।** अवान्तरसङ्गतिमाह— **उत्पत्तिविषय इति**। सबीजं संशयमाह— **श्रुतिविप्रतिपत्तेश्चात्र विशयः** संशयः। सप्त प्राणाः चक्षुर्घ्राणरसनवाक्श्रोत्रमनस्त्वगिति। एवं हस्ताधिका अष्टौ ग्रहाः प्राणाः ग्रहत्वेन बन्धनेन गुणेन विशिष्टा निर्दिश्यन्त इत्यर्थः। शीर्ष्णि भवाः शीर्षण्याः। द्वाववाञ्चौ पायूपस्थौ। पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि इति दशेमे पुरुषाश्रयाः

### *भाष्यभावप्रकाशिका*

**सप्त गतेर्विशेषितत्वाच्च**।। अवान्तरसंगतिमाह— **उत्पत्तीति**। अशेषेण सर्वप्राणसंख्याविषयतां व्यावर्त्येन्द्रियसंख्याविषयताम-स्याधिकरणस्य दर्शयति— **तत्र मुख्यमिति**। संशयकारणमाह— **श्रुतिविप्रतिपत्तेरिति**। विशयः संशयः। **क्वचित्सप्तेति**। चक्षु-र्घ्राणरसनवाक्श्रोत्रमनस्त्वगिति। क्वचिदष्टौ प्राणा ग्रहत्वेन बन्धनेन गुणेन कीर्त्यन्ते। यथा प्राणरसनवाक्चक्षुःश्रोत्रमनोहस्तत्वगिति।

### *न्यायनिर्णयः*

प्राणमसृजत' इत्यादि श्रुत्यन्तरम्। प्राणोत्पत्तिश्रुतेर्मुख्यार्थत्वेऽपि विरोधाभावादश्रुतेश्चासिद्धत्वान्मूलकारणे ब्रह्मणि समन्वयसिद्धिरित्युपसंहरति— **तस्मादिति**।।४।। इति प्रथमं प्राणोत्पत्त्यधिकरणम्।।

करणानामुत्पत्तिनिरूपणेन तद्विलक्षणं त्वंपदार्थं निरूप्य तेषामेव संख्यां निर्णेतुं पूर्वपक्षयति— **सप्तेति**। पूर्वोत्तरसंगतिमाह— **उत्पत्तीति**। सर्वप्राणसंख्याविषयत्वं व्यावर्त्य वागादिसंख्याविषयत्वमस्याधिकरणस्य दर्शयति— **तत्रेति**। मुख्यादितरान् प्राणान् विषयत्वेनोक्त्वा सहेतुं संशयमाह— **श्रुतीति**। श्रुतिविप्रतिपत्तिमेवोपन्यस्यति— **क्वचिदित्यादिना**। चक्षुर्घ्राणं रसनं श्रोत्रं वाङ्मनस्त्वगिति सप्त प्राणाः। **ग्रहत्वेन** बन्धत्वेनेति यावत्। त एव सहस्ताधिकाः सन्तोऽष्टौ। तेषां च ग्रहत्वं बन्धनहेतुत्वात्। एतेषां विषया रूपादयोऽतिग्रहाः। ते हि रागमुत्पाद्येन्द्रियाकर्षकत्वाद् ग्रहानतिशेरते। द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे वागिति सप्त शीर्ष्णि भवाः

**द्वाववाञ्चौ' (तै.सं. ५।३।२।५) इति। क्वचिद् दश– 'नव वै पुरुषे प्राणा नाभिर्दशमी' (तै.सं. ५।३।२।३) इति। क्वचिदेकादश– 'दशेमे पुरुषे प्राणा आत्मैकादशः (बृ.उ. ३।९।४) इति। क्वचिद् द्वादश– 'सर्वेषां स्पर्शानां त्वगेकायनम्' (बृ.उ. २।४।११) इत्यत्र। क्वचित् त्रयोदश– 'चक्षुश्च द्रष्टव्यं च' (प्र.उ. ४।८) इत्यत्र। एवं हि विप्रतिपन्नाः प्राणेयत्तां प्रति श्रुतयः। किं तावत् प्राप्तम्? सप्तैव प्राणा इति। कुतः? गतेः। यतस्तावन्तोऽवगम्यन्ते– 'सप्त प्राणाः प्रभवन्ति तस्मात्' (मु.उ. २।१।८) इत्येवंविधासु श्रुतिषु। विशेषिताश्चैते 'सप्त वै शीर्षण्याः प्राणाः' इत्यत्र। ननु 'प्राणा गुहाशया निहिताः सप्त सप्त' (मु.उ. २।१।८) इति वीप्सा श्रूयते, सा सप्तभ्योऽतिरिक्तान् प्राणान् गमयतीति। नैष दोषः। पुरुषभेदाभिप्रायेयं वीप्सा– प्रतिपुरुषं सप्त सप्त प्राणा इति, न तत्त्वभेदाभिप्राया– सप्त सप्तान्येऽन्ये प्राणा इति। नन्वष्टत्वादिकाऽपि संख्या प्राणेषूदाहृता; कथं सप्तैव स्युः? सत्यमुदाहृता। विरोधात्त्वन्यतमा संख्याऽध्यवसातव्या। तत्र**

### *प्रकटार्थविवरणम्*

प्राणाः। [ आत्मा ] आप्नोत्यधितिष्ठति इतरकरणग्राममिति, अन्तःकरणमित्यर्थः। द्वादशेति हृदयमधिकम्। त्रयोदशेत्यहङ्कारोऽधिकः। प्राणानामियत्ताम् संख्यापरिमितिं प्रति। प्रश्नपूर्वकं सूत्रं योजयति— **किं तावदित्यादिना**। गतेरिति सप्तानामवगमादित्युक्तम्; तदाक्षिपति— **ननु प्राणा गुहाशया इति**। गुहायां हृदये शेरत इति गुहाशयाः स्वस्थाः [ स्वस्थानेषु ] निहिताः निक्षिप्ता इत्यर्थः। वीप्सा पुनर्वचनम् अन्यथाऽपि संभवतीत्याह पूर्ववादी— **नैष दोष इति**। पुनः सप्तत्वमाक्षिपति— **नन्वष्टत्वादिकाऽपीति**। अष्टत्वादिसंख्योदाहृतेत्येतत् सत्यम्; किं तु सप्तत्वावच्छिन्नानामेवाष्टत्वादिसंख्यान्तरावच्छेदविरोधादवश्यमन्यतमा त्याज्या, अन्यतमा च ग्राह्या। तत्र कतमोपादानं भवत्विति वीक्षायां लाघवसाहाय्यात् सप्तत्वनिश्चयं मन्यते पूर्ववादीत्याह— **सत्यमित्यादिना**।

### *भाष्यभावप्रकाशिका*

एषां तु विषया अतिग्रहाः। क्वचिन्नव सप्त वै शीर्षण्याः प्राणाः द्वाववाञ्चाविति। द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे वागिति सप्त, अवाञ्चौ पायूपस्थौ बुद्धिमनसी वा। **क्वचिदेकादशेति**। बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्चाप्नोतीत्यात्म[ त्यात्मा मनः ] एकादश। क्वचिद् द्वादशेति। त्वङ्नासिकारसनचक्षुःश्रोत्रमनोहृदयहस्तपादोपस्थपायुवागिति। एत एवाहंकाराधिकास्त्रयोदश। प्रश्नपूर्वकं पूर्वपक्षं गृह्णाति— **किन्तावत्प्राप्तम्? सप्तैवेति**। न केवलं श्रुतितोऽधिगतेर्विशेषणादपीत्याह— **विशेषिताश्चेति**। यथा दक्षिणेनाक्ष्णा पश्यतीत्युक्ते वामेन न पश्यतीति गम्यत एवं सप्त शीर्षण्याः प्राणा इत्युक्ते हस्तादीनामप्राणत्वं गम्यत इत्यर्थः।

### *न्यायनिर्णयः*

शीर्षण्याः प्राणाः। द्वाववाञ्चौ पायूपस्थौ, बुद्धिमनसी चेति[१] नव। पुरुषे तदाकारे देहे शिरःपाण्यादिमत्युक्ता नव प्राणा नाभिश्च दशमी दशानां पूरणीति श्रुत्यर्थः। पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चाप्नोतीत्यात्मेत्येकादश प्राणाः। त एव सहृदया द्वादश। त एव साहंकारास्त्रयोदश। श्रुतिविप्रतिपत्तिमुपसंहरति— **एवमिति**। प्रश्नपूर्वकं पूर्वपक्षसूत्रं योजयति— **किमिति**। अत्र च प्राणसंख्याश्रुतिविवादव्युदासेन तत्कारणे ब्रह्मणि समन्वयव्यवस्थापनात् पादादिसंगतयः। पूर्वपक्षे सप्तप्राणकारणे ब्रह्मणि समन्वयेऽप्येका-दशप्राणकारणे तत्र तदसिद्धिः। सिद्धान्ते तदनुसारित्वादितरश्रुतीनामेकादशप्राणकारणे ब्रह्मणि तत्सिद्धिः। गतेरिति हेतुं प्रश्नद्वारा व्याचष्टे— **कुत इति**। न केवलं श्रुतितोऽधिगतेः सप्तैव प्राणाः, किंतु विशेषणादपीत्यवशिष्टं व्याचष्टे— **विशेषिताश्चेति**। दक्षिणेनाक्ष्णा पश्यतीत्युक्ते वामेन न पश्यतीतिवत् प्राणाः शीर्षण्याः सप्तेत्युक्ते हस्तादीनामशीर्षण्यानामप्राणत्वं भातीत्यर्थः। प्राणानां सप्तत्वं वीप्साविरुद्धमिति शङ्कते— **नन्विति**। गुहायां हृदये शेरत इति गुहाशयाः स्वस्थानेषु निहिताः निक्षिप्ता इति यावत्। वीप्सा पुनर्वचनमन्यथापि स्यादिति पूर्ववाद्याह— **नेति**। पुरुषभेदकृतवीप्साप्रवृत्तिं प्रकटयति— **प्रतीति**। व्यावर्त्यमंशमाह— **नेत्यादिना**। संख्यान्तरश्रुतिविरोधं शङ्कते— **नन्विति**। संख्यान्तरश्रुतिमङ्गीकरोति— **सत्यमिति**। तर्हि संख्यान्तरमपि ग्राह्यं, नेत्याह— **विरोधात्त्विति**। सप्तत्वावच्छिन्नानामेवाष्टत्वाद्यवच्छेदायोगादन्यतमत्यागावश्यंभावे कतमा संख्याऽऽदेयेति विवक्षायां

---

१. 'वेति' इति पाठः भाष्यभावप्रकाशिकातोऽवगम्यते।

**स्तोककल्पनानुरोधात् सप्तसंख्याध्यवसानम्। वृत्तिभेदापेक्षं च संख्यान्तरश्रवणमिति मन्यते।।५।।**

**अत्रोच्यते-**

**हस्तादयस्तु स्थितेऽतो नैवम्।।६।।**

**हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः श्रूयन्ते- 'हस्तौ वै ग्रहः स कर्मणाऽतिग्राहेण गृहीतो हस्ताभ्यां हि कर्म करोति' (बृ.उ. ३।२।८) इत्येवमाद्यासु श्रुतिषु। स्थिते च सप्तत्वातिरेके सप्तत्वमन्तर्भावाच्छक्यते संभावयितुम्। हीनाधिकसंख्याविप्रतिपत्तौ ह्यधिका संख्या संग्राह्या भवति। तस्यां हीनाऽन्तर्भवति, न तु हीनायामधिका। अतश्च नैवं मन्तव्यं स्तोककल्पनानुरोधात् सप्तैव प्राणाः स्युरिति। उत्तरसंख्यानुरोधात्त्वेकादशैव ते प्राणाः स्युः। तथा चोदाहृता श्रुतिः- 'दशेमे पुरुषे प्राणा आत्मैकादशः' (बृ.उ. ३।९।४) इति। आत्मशब्देन चात्रान्तःकरणं परिगृह्यते, करणाधिकारात्।**

**नन्वेकादशत्वादप्यधिके द्वादशत्रयोदशत्वे उदाहृते। सत्यमुदाहृते। न त्वेकादशभ्यः कार्यजातेभ्योऽधिकं**

***प्रकटार्थविवरणम्***

**हस्तादयस्तु स्थितोऽतो नैवम्।** सिद्धान्तसूत्रं योजयति— **हस्तादयस्त्वित्यादिना।** गृहणाति पुरुषं बध्नातीति ग्रहः; तत्रेन्द्रियाणां विषयसमर्पणेनैव पुरुषबन्धहेतुत्वादतिग्रहत्वं विषयाणाम्; ततोऽतिग्रहेण कर्मणा हस्तनिर्वर्त्येन [ आ ]दानेन हस्तो गृहीतः सम्बद्धः; तदेवाह— **हस्ताभ्यां हीति।** सप्तत्वातिरेकस्य श्रुतत्वात् सप्तैवेति न शक्यते वक्तुमित्यर्थः। ननु सप्तत्वमपि श्रुतमेवेत्याशङ्क्याह— **स्थिते चेति।** किं च कल्पनायां लाघवमन्वेषणीयम्; नैकादशत्वं कल्पनामात्रमित्याह— **तथा चोदाहृतेति।** नन्वात्मशब्दः प्रत्यगात्मनि रूढ इत्याशङ्क्याह— **आत्मशब्देन चेति।** एकादशत्वस्य श्रुतत्वाच्चेद् ग्रहणं तर्हि द्वादशत्वत्रयोदशत्वे श्रुतिः [ श्रुते ] किं न गृह्यते [ गृह्येते ] इत्याह— **नन्वेकादशत्वादपीति।** न श्रुतत्वमात्रेणैकादशत्वाङ्गीकारः, किं तु

***भाष्यभावप्रकाशिका***

न्यूनाधिकसंख्ययोरधिकसंख्या संग्राह्या तस्यां न्यूनसंख्याया अन्तर्भावादित्याशङ्क्यैकादशसंख्यां परिगृह्य वृत्तिभेदेन यथा द्वादशत्रयोदशसंख्या सिद्धान्तिना निर्वाह्यत एवमिहापि प्राथम्याल्लाघवाच्च सप्तसंख्याया एव युक्तत्वाद् वृत्त्यपेक्षया संख्यान्तरं भविष्यतीत्याह— **वृत्तिभेदापेक्षमिति।**

श्रुतीनां परस्परविरोधादर्थतत्त्वव्यवस्थानुपपत्तौ प्रमाणान्तरोपनीतार्थवशेन व्यवस्था स्वीकार्या; तेन कार्यलिङ्गकानुमानानुगृहीतैकादशप्राणविषया श्रुतिरेवादरणीयेत्याह— **सत्यमुदाहृते इति।** इन्द्रियाणां वर्तमानतत्तदेकार्थनियतत्वादतीतादिसर्वार्थज्ञानदर्शनाच्च

***न्यायनिर्णयः***

[ वीक्षायां ] लाघवान्निश्चितं सप्तत्वमित्यर्थः। न्यूनाधिकसंख्ययोरधिका ग्राह्या तस्यां न्यूनान्तर्भावादित्याशङ्क्यैकादशसंख्यां गृहीत्वा वृत्तिभेदेन नवद्वादशत्रयोदशसंख्यावदिहापि प्राथम्याल्लाघवाच्च सप्तत्वस्यैव युक्तत्वाद् वृत्त्यपेक्षया संख्यान्तरमित्याह— **वृत्तीति।** वक्ष्यमाणयुक्त्या मन्यतेरुक्तिः।।५।।

सिद्धान्तयति— **अत्रेति।** तत्प्रतिज्ञां विभजते— **हस्तादयस्त्विति।** गृहणाति पुरुषं बध्नातीति ग्रहः, तत्रेन्द्रियाणामर्थद्वारा पुरुषबन्धने हेतुत्वमित्यतिग्रहत्वमर्थानाम्। ततोऽतिग्रहेण कर्मणा हस्तनिर्वर्त्यादानेन हस्तो गृहीतः संबद्धः। तदेव स्पष्टयति— **हस्ताभ्यामिति।** सप्तत्वादतिरेकश्रुतेर्न सप्तत्वनियतिरित्यर्थः। सप्तत्वमपि श्रुतमेवेत्याशङ्क्य सूत्रावयवं व्याचष्टे— **स्थिते चेति।** अन्तर्भावेन सप्तत्वं साधयति— **हीनेति।** अतो नेत्यादि योजयति— **अतश्चेति।** प्राणास्तर्हि कतीत्यपेक्षायामाह— **उत्तरेति।** तर्हि गौरवमित्याशङ्क्य प्राणानामेकादशत्वं न कल्प्यते येन लाघवमन्वेष्यमित्याह— **तथेति।** आत्मशब्दस्य प्रतीचि रूढेर्न प्राणभेदविषयतेत्याशङ्क्याह— **आत्मेति।** एकादशत्वस्य श्रुतत्वाद् ग्रहणे द्वादशत्वत्रयोदशत्वयोरपि तथा ग्रहः स्यादिति शङ्कते— **नन्विति।** श्रुतीनां मिथोविरोधादर्थव्यवस्थाऽसिद्धौ मानान्तरवशेन व्यवस्था वाच्या। तथा च कार्यलिङ्गकानुमानानुगृहीतैकादशप्राण-

**कार्यजातमस्ति, यदर्थमधिकं करणं कल्प्येत। शब्दस्पर्शरूपरसगन्धविषयाः पञ्च बुद्धिभेदास्तदर्थानि पञ्च बुद्धीन्द्रियाणि। वचनादानविहरणोत्सर्गानन्दाः पञ्च कर्मभेदास्तदर्थानि च पञ्च कर्मेन्द्रियाणि। सर्वार्थविषयं त्रैकाल्यवृत्ति मनस्त्वेकमनेकवृत्तिकम्। तदेव वृत्तिभेदात् क्वचिद् भिन्नवद् व्यपदिश्यते– 'मनो बुद्धिरहंकारश्चित्तं च' इति। तथा च श्रुतिः कामाद्या नानाविधा वृत्तीरनुक्रम्याह– 'एतत्सर्वं मन एव' (बृ.उ. १।५।३) इति। अपि च सप्तैव शीर्षण्यान् प्राणानभिमन्यमानस्य चत्वार एव प्राणा अभिमताः स्युः। स्थानभेदाद्ध्येते चत्वारः सन्तः सप्त गण्यन्ते 'द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके एका वाक्' इति। न च तावतामेव वृत्तिभेदा इतरे प्राणा इति शक्यते वक्तुम्, हस्तादिवृत्तीनामत्यन्तविजातीयत्वात्। तथा 'नव वै पुरुषे प्राणा नाभिर्दशमी' (तै.सं. ५।३।२।३) इत्यत्रापि देहच्छिद्रभेदाभिप्रायेणैव दश प्राणा उच्यन्ते, न प्राणतत्त्वभेदाभिप्रायेण। नाभिर्दशमीति वचनात्। न हि नाभिर्नाम कश्चित् प्राणः प्रसिद्धोऽस्ति। मुख्यस्य तु प्राणस्य भवति नाभिरप्येकं विशेषायतनमित्यतो नाभिर्दशमीत्युच्यते। क्वचिदुपासनार्थं कतिचित् प्राणा गण्यन्ते, क्वचित्**

### *प्रकटार्थविवरणम्*

कार्यदर्शनबलेनापीत्याह— **सत्यमुदाहृते इत्यादिना**। यच्चोक्तं विशेषितत्वादिति, तद् दूषयति— **अपि च सप्तैवेति**। यच्चोक्तं वृत्तिभेदापेक्षं संख्यान्तरश्रवणमिति तत्राह— **न च तावतामिति**। अन्धबधिरादेरपि हस्तादिदर्शनादिति भावः। पूर्वोदाहृतवचनान्तरस्य गतिमाह— **तथा नवेति**। किंनिमित्तस्तर्हि तत्र प्राणशब्दप्रयोग इत्याशङ्क्याह— **मुख्यस्य त्विति**। वाक्यान्तराणामपि गत्यन्तरमुक्त्वा सिद्धान्तमुपसंहरति— **क्वचिदुपासनार्थमित्यादिना**।

### *भाष्यभावप्रकाशिका*

तदर्थमिन्द्रियान्तरमपि कल्पनीयमित्याह— **सर्वार्थविषयमिति**। संकल्पादिवृत्तिदर्शनात् तदर्थमन्यत्कल्पा[ ल्प्य ]मित्यत आह— **अनेकवृत्तिकमिति**। एकस्य वृत्तिभेदा इति कस्मादभ्युपगम्यते धर्मिभेद एव कुतो न भवेदित्याशङ्क्य धर्मै[र्म्यै]क्याव-गमादित्याह— **तथा च श्रुतिरिति**। कथं तर्हि सप्तत्वमित्यत आह— **स्थानभेदादिति**। कृपा[ रूपा ]द्युपलब्धिलक्षण-कार्यस्याभेदादेकमेवेन्द्रियं स्थानभेदात् भिन्नमिवोपचर्यत इत्यर्थः। प्राणानान्नाभिर्दशमीत्युक्तध्या [त्युक्त्या तस्या] अपि प्राणत्व-मित्यत आह— **न हि नाभिर्नमिति**। कथन्तर्हि प्राणशब्द इति, लक्षणयेत्याह— **मुख्यस्य त्विति**। सप्त प्राणा इत्यादि वाक्यमुपासना(र्थाद्व्य)र्थत्वादन्यपरमित्याह— **क्वचिदिति**। किन्तर्ह्युपासनादिविषयं, किं वा तत्त्वविषयमित्यत एवाविचारणेत्याह—

### *न्यायनिर्णयः*

श्रुतिरेवादरणीयेत्याह— **सत्यमिति**। कार्यलिङ्गकमनुमानं विशदयति— **शब्देति**। बाह्येन्द्रियाणामित्थमनुमानेऽपि कथं मनसोऽनुमानम्, तत्राह— **सर्वेति**। इन्द्रियाणां वर्तमानतत्तदेकार्थनियतत्वादतीतादिसर्वार्थज्ञानाच्च तदर्थमिन्द्रियान्तरं कल्प्यमित्यर्थः। संकल्पादिदृष्टेस्तदर्थं करणान्तरमपि कल्प्यमित्याशङ्क्याह— **अनेकेति**। मनसश्चेदेकत्वं तर्हि कथं भेदोक्तिः, तत्राह— **तदेवेति**। एकस्यैव वृत्तिभेदात् किमित्यनेकधात्वं, धर्मिभेद एव कुतो न स्यादित्याशङ्क्य धर्म्यभेदश्रुतिविरोधादित्याह— **तथा चेति**। विशेषितत्वादित्युक्तं प्रत्याह— **अपि चेति**। कथं तर्हि सप्तत्वम्, तत्राह— **स्थानेति**। रूपादिधीरूपकार्याभेदादेकमेवेन्द्रियं स्थानभेदाद्भिन्नमिवोपचरितमित्यर्थः। यत्तु वृत्तिभेदापेक्षं संख्यान्तरश्रवणं, तत्राह— **न चेति**। अन्धादेरप्यादानादिकार्यदर्शनादितरेषां चक्षुरादिवृत्तित्वे तदसंभवादिति भावः। तथापि श्रुत्यन्तरेषु सत्सु कथमेकादशत्वम्? तत्र दशत्वश्रुतेर्गतिमाह— **तथेति**। स्थानभेदात् 'सप्त वै शीर्षण्या' इति सप्तत्वोक्तिवदिति यावत्। 'नाभिर्दशमी'त्युक्तत्वात् प्राणत्वं तस्या अपीत्याशङ्क्याह— **न हीति**। कथं तर्हि तत्र प्राणशब्द इत्याशङ्क्य लक्षणयेत्याह— **मुख्यस्येति**। 'सप्त प्राणाः प्रभवन्ती'त्यादेर्गतिमाह— **क्वचिदिति**। 'अष्टौ ग्रहा' इत्यादेर्गतिं सूचयति— **क्वचिदिति**। किं तर्हि वाक्यमुपासनादिविषयं किं वा तत्त्वविषयमित्युक्ते विचारस्य सावकाशत्वमाह— **तदेवमिति**।

**प्रदर्शनार्थम्। तदेवं विचित्रे प्राणेयत्ताम्नाने सति क्व किंपरमाम्नानमिति विवेक्तव्यम्। कार्यजातवशात्त्वेकादशत्वाम्नानं प्राणविषयं प्रमाणमिति स्थितम्।**

**इयमपरा सूत्रद्वययोजना। सप्तैव प्राणाः स्युर्यतः सप्तानामेव गतिः श्रूयते– 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ.उ. ४।४।२) इत्यत्र। ननु सर्वशब्दोऽप्यत्र पठ्यते, तत्कथं सप्तानामेव गतिः प्रतिज्ञायत इति? विशेषितत्वादित्याह। सप्तैव हि प्राणाश्चक्षुरादयस्त्वक्पर्यन्ता विशेषिता इह प्रकृताः 'स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवति' (बृ.उ. ४।४।१) 'एकीभवति न पश्यतीत्याहुः' (बृ.उ. ४।४।२) इत्येवमादिनाऽनुक्रमणेन। प्रकृतगामी च सर्वशब्दो भवति; यथा 'सर्वे ब्राह्मणा भोजयितव्या' इति ये निमन्त्रिताः प्रकृता ब्राह्मणास्त एव सर्वशब्देनोच्यन्ते, नान्ये। एवमिहापि ये प्रकृताः सप्त प्राणास्त एव सर्वशब्देनोच्यन्ते, नान्य इति। नन्वत्र विज्ञानमष्टममनुक्रान्तं, कथं सप्तानामेवानुक्रमणम्; नैष दोषः। मनोविज्ञानयोस्तत्त्वाभेदाद् वृत्तिभेदेऽपि सप्तत्वोपपत्तेः। तस्मात् सप्तैव प्राणा इति।**

### *प्रकटार्थविवरणम्*

वर्णकान्तरमाह— **इयमपरेत्यादि**। सप्तानामेव गमनश्रवणादित्यस्यासिद्धिमाशङ्क्य पदान्तरमवतारयति— **ननु सर्वशब्द इति**। यत्र यस्मिन् मरणकाले स एष चक्षुरनुग्राहकः सूर्यपुरुषः पराङ् पर्यावर्तते बहिः स्वस्थानं प्रति व्यावर्तते, तदानीम् अरूपज्ञो जीवो भवति, एकीभवति हृदये चक्षुः; न पश्यतीत्याहुः पार्श्वस्थाः; न जिघ्रति न रसयतीत्यादिना पठनेन सप्तैव विशेषिता इत्यर्थः। ननु तथापि सर्वशब्दः सर्वान् परामृशतीत्याशङ्क्याह— **प्रकृतगामी चेति**। 'एकीभवति न विजानाती'त्यनेन बुद्धिरपि पठिताऽस्तीत्याह— **नन्वत्रेति**। सप्तत्वविघातकारणं न भवतीत्याह— **नैष दोष इति**।

### *भाष्यभावप्रकाशिका*

**तदेवं विचित्र इति**। निर्णयस्तर्हि कथमित्यत आह— **कार्यजातवशादिति**।

**इयमपरा सूत्रद्वययोजनेति**। येषां सह गमनं तेषामेव जन्मान्तरीयभोगं प्रति साधनत्वावगमादिन्द्रियत्वं वक्तव्यमिह तु सप्तानामेव गतिः श्रूयत इत्यर्थः। **स यत्रेति**। यस्यामवस्थायां चक्षुरधिष्ठातृदेवतांशःस्वांशिनाऽऽदित्येनेतोऽपसृप्यैकीभवति तदा जीवो न पश्यतीत्यर्थः। सर्वशब्दश्रुत्या सर्वप्राणगमनमवगम्यत इत्याशङ्क्य तस्याः प्रकरणवशात् संकोच इत्याह— **प्रकृतगामी चेति**। 'एकीभवति न विजानाती'त्याहुरित्यन्यदप्यनुक्रान्तमिति शङ्कते— **नन्विति**।

### *न्यायनिर्णयः*

कथं तर्हि निर्णयः, तत्राह— **कार्येति**। एवं प्राणसंख्याविषयश्रुतिविवादाभावादेकादशप्राणकारणे ब्रह्मणि समन्वयसिद्धिरित्युपसंहरति— **इति स्थितमिति**।

वर्णकान्तरमाह— **इयमिति**। इन्द्रियाण्येव विषयः। तानि किं सप्त, किं वैकादशेति श्रुतिविमत्या संदेहे पूर्वपक्षमाह— **सप्तेति**। येषां सह गमनं तेषामेव जन्मान्तरीयभोगोपायत्वादिन्द्रियत्वम्, इह तु सप्तानामेव गतिः श्रूयते; तस्मात् तेषामेवेन्द्रियत्वमित्यर्थः। सप्त गतेरिति व्याख्याय शङ्कोत्तरत्वेन पदान्तरमादत्ते— **नन्वित्यादिना**। तद् व्याकरोति— **सप्तैवेति**। 'चक्षुरादय' इत्यादिशब्देन प्राणरसनावाक्श्रोत्रत्वङ्मनांसि गृह्यन्ते। इहेत्युत्क्रान्तिप्रकरणोक्तिः। यत्र यस्यामवस्थायां चक्षुरधिष्ठातृदेवतांशः स एष पुरुषशब्दितः पराङ् पर्यावर्तते बहिर्देशात् स्वस्थानं प्रति व्यावर्तते तदानीमरूपज्ञो जीवो भवति, हृदये चक्षुरेकीभवति, पार्श्वस्थाश्च नायं पश्यतीत्याहुः। न जिघ्रति न रसयते न वदति न शृणोति न मनुते न स्पृशतीत्येवं सप्तैव विशेषिता इत्यर्थः। तथापि सर्वश्रुत्या सर्वप्राणगमनमाशङ्क्य प्रकरणात् तस्याः संकोचमाह— **प्रकृतेति**। प्रकरणेन श्रुतिसंकोचं दृष्टान्तेन स्पष्टयति— **यथेत्यादिना**। 'एकीभवति न विजानातीत्याहुः' इति बुद्धेरपि पाठादसिद्धं सप्तानामेवानुक्रमणमित्याह— **नन्विति**। बुद्धेरनुक्रमणं न सप्तत्वविघातक-मित्याह— **नेति**। पूर्वपक्षमुपसंहरति— **तस्मादिति**।

**एवं प्राप्ते ब्रूमः– हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः प्रतीयन्ते– 'हस्तौ वै ग्रहः' (बृ.उ. ३।२।८) इत्यादिश्रुतिषु। ग्रहत्वं च बन्धनभावो गृह्यते। बध्यते क्षेत्रज्ञोऽनेन ग्रहसंज्ञकेन बन्धनेनेति। स च क्षेत्रज्ञो नैकस्मिन्नेव शरीरे बध्यते, शरीरान्तरेष्वपि तुल्यत्वाद् बन्धनस्य। तस्माच्छरीरान्तरसंचारीदं ग्रहसंज्ञकं बन्धनमित्यर्थादुक्तं भवति। तथा च स्मृतिः– 'पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते। तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च।' इति प्राङ्मोक्षाद् ग्रहसंज्ञकेनानेन बन्धनेनावियोगं दर्शयति। आथर्वणे च विषयेन्द्रियानुक्रमणे 'चक्षुश्च द्रष्टव्यं च' इत्यत्र तुल्यवद्धस्तादीनीन्द्रियाणि सविषयाण्यनुक्रामति– 'हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च' (प्र.उ. ४।८) इति। तथा 'दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति' (बृ.उ. ३।९।४) इत्येकादशानां प्राणानामुत्क्रान्तिं दर्शयति। सर्वशब्दोऽपि च प्राणशब्देन संबध्यमानोऽशेषान् प्राणानभिदधानो**

### *प्रकटार्थविवरणम्*

सप्तानां गमनादिति हेत्वसिद्ध्या परिहरति— **हस्तादयस्त्वित्यादिना**। नन्वत्र हस्तादीनां ग्रहत्वमात्रं प्रतीयते, न तु जीवेन सह उत्क्रमणमित्याशङ्क्य शरीरान्तरसञ्चारित्वमापादयति— **ग्रहत्वं चेत्यादिना**। प्राणादि(भूत)पञ्चकं भूतसूक्ष्मपञ्चकं कर्मेन्द्रियपञ्चकं ज्ञानेन्द्रियपञ्चकं मनआदिशब्दवाच्यमन्तःकरणम् अविद्या कामः कर्म चेति पुर्यष्टकम्। लिङ्ग्यतेऽनुमीयत इति लिङ्गम्। वाक्यान्तरबलादपि हस्तादीनामिन्द्रियत्वं देहान्तरसञ्चारित्वं चाह— **आथर्वणे चेत्यादिना**। यच्चोक्तं प्रकृतगामी सर्वशब्द इति, तद् दूषयति— **सर्वशब्दोऽपि चेति**। इति द्वितीयं सप्तगत्यधिकरणम्।

### *भाष्यभावप्रकाशिका*

यदुक्तमनुयायिनामेवेन्द्रियत्वमिति; सत्यम्; तदेकादशानामस्तीत्याह— **ग्रहत्वं चेति**। एतावता कथं सर्वशरीरानुयायित्वं गम्यत इत्याशङ्क्य बद्धत्वादवगम्यत इत्याह— **स च क्षेत्रज्ञ इति**। विषयेन्द्रियानुक्रमणे हस्तादीनामिन्द्रियत्वेन संकीर्तनादपि सप्तभ्योऽतिरिक्ताद्येवेत्याह— **आथर्वणे चेति**। श्रुत्यन्तर एकादशानु....न्ति दर्शनात् सहगामितयेन्द्रियत्वमवगम्यत इत्याह— **तथा दशेम इति**। इह विसर्गशब्दश्रुत्या सर्वगमनमवगम्यत इत्याह— **सर्वशब्दोऽपीति**। अनुयायिनामेवेन्द्रियत्वे वक्तव्ये 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'ति प्रकरणात् सर्वशब्दस्य सप्तप्राणपरामर्शकत्वं प्राप्तम्; 'दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदाऽस्मान्मर्त्याच्छरीरादुत्क्रामन्ती'त्यनुयायिनामेवैकादशानां प्राणानां सर्वे प्राणा इत्यत्र प्राणशब्दश्रुतिः परामर्शिका प्राप्ता। तत्र सर्वशब्देन प्रकरणोपस्थापित-सप्तप्राणपरिग्रहाद् वरं प्राणशब्दश्रुत्युपस्थापितैकादशप्राणपरिग्रह इति भावः। दृष्टान्तेऽनुपपत्त्या संकोचे प्राप्ते प्रकरणात् संख्यानियमो

### *न्यायनिर्णयः*

तदनुवादेन सिद्धान्तयति— **एवमिति**। अक्षरार्थाविशेषेऽपि तात्पर्यार्थे विशेषं दर्शयितुमक्षरार्थं संक्षिपति— **हस्तादयस्त्विति**। यदुक्तमनुयायिनामेवेन्द्रियत्वं तदङ्गीकृत्यानुयायित्वमेकादशानामस्तीत्याह— **ग्रहत्वं चेति**। कथमेतावता सर्वदेहानुयायित्वमित्याशङ्क्य जीवस्य सर्वदेहेषु बद्धत्वसिद्धेस्तद्धीरित्याह— **स चेति**। सर्वेषु देहेषु जीवस्य बद्धत्वेऽपि कुतो ग्रहसंज्ञकस्य हस्तादेरनुयायित्वम्, तत्राह— **तस्मादिति**। हृदयग्रहसंज्ञकहस्तादिबन्धस्याऽऽमोक्षादात्मानुयायित्वे स्मृतिमाह— **तथा चेति**। पुर्यष्टकं विशिनष्टि— **प्राणाद्येनेति**। प्राणादिपञ्चकं भूतसूक्ष्मपञ्चकं कर्मेन्द्रियपञ्चकं ज्ञानेन्द्रियपञ्चकं मनआद्यन्तःकरणचतुष्कमविद्या कामः कर्म चेति पुर्यष्टकम्। तच्चानेनात्मा लिङ्ग्यते ज्ञायत इति लिङ्गम्। प्रकृतोपयोगितात्पर्यं स्मृतेर्दर्शयति— **प्रागिति**। सार्थेन्द्रियप्रस्तावे हस्तादीनां सार्थानामुक्तेरपि तेषामिन्द्रियत्वं देहान्तरसंचारित्वं च प्रसिद्धमित्याह— **आथर्वणे चेति**। इतश्च हस्तादीनामस्तीन्द्रियत्वं देहान्तरसंचारित्वं चेत्याह— **तथेति**। यत्तु सर्वशब्दः प्रकृतगामीति, तत्राह— **सर्वेति**। अनुयायिनामेवेन्द्रियत्वे वाच्ये 'प्राणमनूत्क्रामन्त'मित्यत्र सर्वशब्देन प्राकरणिकसप्तप्राणोक्तिर्वा 'दशेमे पुरुषे प्राणा आत्मैकादश' इति श्रुत्यन्तरसिद्धैकादशप्राणानां 'सर्वे प्राणा' इति प्राणश्रुत्युक्तानामुक्तिर्वेति विमर्शे प्राकरणिकसप्तग्रहाद् वरं श्रौतैकादशग्रहः संनिकर्षादिति भावः। परोक्तं दृष्टान्तं

**न प्रकरणवशेन सप्तस्वेवावस्थापयितुं शक्यते, प्रकरणाच्छब्दस्य बलीयस्त्वात्। 'सर्वे ब्राह्मणा भोजयितव्या इत्यत्रापि सर्वेषामेवावनिवर्तिनां ब्राह्मणानां ग्रहणं न्याय्यम्, सर्वशब्दसामर्थ्यात्। सर्वभोजनासंभवात्तु तत्र निमन्त्रितमात्रविषया सर्वशब्दस्य वृत्तिराश्रिता। इह तु न किंचित् सर्वशब्दार्थसंकोचने कारणमस्ति। तस्मात् सर्वशब्देनात्राशेषाणां प्राणानां परिग्रहः। प्रदर्शनार्थं च सप्तानामनुक्रमणमित्यनवद्यम्। तस्मादेकादशैव प्राणाः शब्दतः कार्यतश्चेति सिद्धम्।।६।।**

।।इति द्वितीयं सप्तगत्यधिकरणम्।।

।३।।प्राणाणुत्वाधिकरणम्।।सू. ७।।

## अणवश्च।।७।।

**अधुना प्राणानामेव स्वभावान्तरमभ्युच्चिनोति। अणवश्चैते प्रकृताः प्राणाः प्रतिपत्तव्याः। अणुत्वं चैषां**

### *शारीरकन्यायसंग्रहः*

**अणवश्च।।७।।** इन्द्रियाणि सर्वगतानि, सर्वत्र दृष्टकार्यत्वात्, आत्मवत् इत्यनुमानम्। तथा "त एते सर्व एव समाः सर्वेऽनन्ताः" इति श्रुतिः। तत्र श्रुत्यनुमानाभ्यामानन्त्यं प्राणानां प्राप्तम्। "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्याद्युत्क्रान्तिश्रुतार्थापत्त्या प्राणानां परिच्छिन्नत्वमपि प्राप्तम्। तत्र श्रुतार्थापत्तिविरोधे सति "स यो हैताननन्तानुपास्ते" इत्याद्युपासनापरमानन्त्याभिधानमन्यपरत्वात्, अनुमानं च दुर्बलमिति परिच्छिन्नाः प्राणाः साधिताः।।

### *प्रकटार्थविवरणम्*

**अणवश्च।** संक्षेपतस्तात्पर्यमाह— **अधुनेति।** उत्पत्तिसङ्ख्याविषयश्रुतिविप्रतिषेधः परिहृतः; इदानीं परिमाणविषयश्रुतिविप्रतिषेधः[१] परिह्रियत इत्यर्थः। उत्क्रान्त्यानन्त्यश्रुतिभ्यां परिच्छेदसर्वगतत्वसन्देहे सिद्धान्तमेव तावदुपक्रमते— **अणवश्चैत इति।** अणुशब्दप्रयोगात् परमाणुपरिमाणत्वाशङ्कां प्राप्तां पराकरोति— **अणुत्वं चैषामिति।** सूक्ष्मत्वं नामानुद्भूतरूपस्पर्शत्वम्; परिच्छेदो मध्यमपरिमाणत्वम्;

### *भाष्यभावप्रकाशिका*

भवतीह तु नानुपपत्तिरस्तीत्याह— **सर्वे ब्राह्मणा इति।**।इति द्वितीयं सप्तगत्यधिकरणम्।।

**अणवश्च।** सौक्ष्म्यं नाम द्रव्याणामुद्भूतरूपस्पर्शानधिकरणत्वम्। सौक्ष्म्यं प्रथमं प्रपञ्चयति— **सूक्ष्मा इति।** परिच्छेदमुपपादयति—

### *न्यायनिर्णयः*

विघटयति— **सर्व इति।** कथं तर्हि संकोचः, तत्राह— **सर्वेति।** उत्क्रान्तिवाक्येऽपि तथा संकोचः स्यात्, नेत्याह— **इह त्विति।** अनुपपत्तिके संकोचे प्राकरणिकः संख्यानियमो युक्तः। दार्ष्टान्तिके तु नानुपपत्तिरिति कुतः संकोच इत्यर्थः। संकोचाभावे फलितमाह— **तस्मादिति।** एकादशानां ग्रहे कुतः सप्तानामनुक्रमणं, तत्राह— **प्रदर्शनार्थं चेति।** संख्यायां न्यूनाधिकत्वायोगमुपपाद्य प्रकृतमुपसंहरति— **तस्मादिति।**।६।। इति द्वितीयं सप्तगत्यधिकरणम्।।

एकादशप्राणानामुत्क्रान्तिरुक्ता; सा न मुख्या, तेषां व्यापित्वादित्याशङ्क्याह— **अणवश्चेति।** संक्षेपतोऽधिकरणतात्पर्यमाह— **अधुनेति।** उत्पत्तिसंख्याश्रुत्यविरोधोक्त्यनन्तरं परिमाणश्रुतिविरोधो निरस्यत इत्यर्थः। उक्तप्राणानामुत्क्रान्त्यानन्त्यश्रुतिभ्यां परिच्छिन्नत्वविभुत्वसंदेहे सिद्धान्तं तावदाह— **अणवश्चैत इति।** अत्रोत्क्रान्त्यानन्त्यश्रुत्योरविरोधेन परिच्छिन्नप्राणकारणे ब्रह्मणि समन्वयस्थापनात् पादादिसंगतिः। पूर्वपक्षे दर्शितश्रुत्योर्मिथोविरोधादुक्ते ब्रह्मणि समन्वयासिद्धिः। सिद्धान्ते तदविरोधात् तत्सिद्धिः। अणुशब्दात् परमाणुपरिमाणत्वं प्राप्तं प्रत्याह— **अणुत्वं चेति।** सौक्ष्म्यं द्रव्याणामुद्भूतरूपस्पर्शानाधारत्वम्। परिच्छेदो मध्यमपरिमाणत्वम्।

---

१. अत्र प्रसङ्गात् सांख्यविप्रतिपत्तिनिरासः क्रियते। श्रुतिविप्रतिपत्तिनिरासस्तु 'अणुश्च' इत्यस्मिन्नधिकरणे करिष्यते। अतोऽनयोरधिकरणयोर्न्यायभेदसिद्धिरिति कल्पतरुः। द्र. ६४३।

**सौक्ष्म्यपरिच्छेदौ, न परमाणुतुल्यत्वम्, कृत्स्नदेहव्यापिकार्यानुपपत्तिप्रसङ्गात्। सूक्ष्मा एते प्राणाः, स्थूलाश्चेत् स्युर्मरणकाले शरीरान्निर्गच्छन्तो बिलादहिरिवोपलभ्येरन् म्रियमाणस्य पार्श्वस्थैः। परिच्छिन्नाश्चैते प्राणाः, सर्वगताश्चेत् स्युरुत्क्रान्तिगत्यागतिश्रुतिव्याकोपः स्यात्। तद्गुणसारत्वं च जीवस्य न सिध्येत्। सर्वगतानामपि वृत्तिलाभः शरीरदेशे स्यादिति चेत्? न; वृत्तिमात्रस्य करणत्वोपपत्तेः। यदेव ह्युपलब्धिसाधनं वृत्तिरन्यद्वा तस्यैव नः करणत्वम्, संज्ञामात्रे विवाद इति करणानां व्यापित्वकल्पना निरर्थिका। तस्मात् सूक्ष्माः परिच्छिन्नाश्च प्राणा इत्यध्यवस्यामः।।७।।**

।।इति तृतीयं प्राणाणुत्वाधिकरणम्।।

***शारीरकन्यायसंग्रहः***

।।श्रेष्ठाधिकरणम्।।

**श्रेष्ठश्च।।८।।** ''एतस्माज्जायते प्राणः'' इति प्राणजन्मनि श्रुतिः, ''आनीदवातम्'' इत्यननं प्राणव्यापारः प्रलयावस्थायां प्राणसद्भावे लिङ्गम्। तत्र द्वयोर्महाप्रलयविषयतयाऽवान्तरप्रलयभेदेन व्यवस्थानुपपत्तौ द्वयोरन्यतरस्य गौणत्वे वक्तव्ये श्रुतिविरोधाल्लिङ्गस्यैव गौणत्वं युक्तमिति न्यायेन आनीच्छब्दस्य मूलकारणविद्यमानताभिधायित्वकल्पनया प्राणस्य ब्रह्मणो जन्म दर्शितम्।

***प्रकटार्थविवरणम्***

तदुभयं विवृणोति— **सूक्ष्मा एत इत्यादिना**। पूर्वपक्षमाह— **सर्वगतानामपीति**। प्राणाः सर्वगताः, सर्वत्रदृष्टकार्यत्वात्, आकाशवत्; ''सर्वेऽनन्ताः'' इत्यादिश्रुत्यनुमानाभ्यां सर्वगतत्वं **सांख्याः** प्रतिजानते च [ ते; न च ] सर्वगतत्वे सर्वत्र तेषामुपलम्भप्रसङ्गः, शरीरदेश एव [१]व्यक्तिलाभादित्यर्थः। दूषयति— **नेति**। हेतोरसिद्धत्वात् श्रुतेश्चोपासनपरत्वान्नास्ति सर्वगतत्वे तावन्मानम्; रूपादिदर्शनसाधनस्य चास्माकं करणत्वाभ्युपगमात्र संज्ञामात्रे विवादः कर्तव्य इत्यर्थः। इति तृतीयं प्राणाणुत्वाधिकरणम्।

***भाष्यभावप्रकाशिका***

**परिच्छिन्नाश्चेति**। सर्वगतत्वे चेन्द्रियाणामन्तःकरणावच्छेदादणुत्वमात्मनो यदुक्तम् तदपि न सिध्येदित्याह— **तद्गुणसारत्वमिति**।

उभयमन्यथाप्यव[प्युप]पद्यत इति सांख्यश्चोदयति— **सर्वगतानामिति**। यद्वृत्तित्वेनाभिमतं तदेव नः साधकतमत्वात् करणमित्याह— **न वृत्तिमात्रस्येति**। अयमिह न्यायः— इन्द्रियाणि सर्वगतानि सर्वत्र दृष्टकार्यत्वादात्मवदित्यनुमानात्, 'सर्वेऽनन्ता' इति श्रुतेश्च प्राणानामानन्त्यं प्राप्तम्; 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'ति श्रुतार्थापत्त्या तेषां परिच्छिन्नत्वमपि प्राप्तम्; तत्र श्रुतार्थापत्ति विरोधे सति 'अथ यो हैतानन्तानुपास्त' इत्युपासनापरमानन्त्याभिधानमन्यपरत्वात् दुर्बलम् अनुमानञ्च सर्वत्र दृष्टकार्यत्वहेतोरसिद्धत्वाद् यत्र शरीरन्तत्र सर्वत्र दृष्टकार्यत्वादित्यस्यापि हेतोश्शरीरेणानैकान्तिकत्वात् न प्रभवति। अतः परिच्छिन्नाः प्राणा इति।।

***न्यायनिर्णयः***

परमाणुतुल्यत्वमेवाणुत्वं किं न स्यात्, तत्राह— **कृत्स्नेति**। सौक्ष्म्यं प्रपञ्चयति— **सूक्ष्मा इति**। परिच्छेदं साधयति— **परिच्छिन्नाश्चेति**। विभुत्वे चेन्द्रियाणामन्तःकरणावच्छेदादणुत्वमात्मनो यदुत्क्रान्त्यधिकरणे सिद्धं तदपि न सिध्येदित्याह— **तद्गुणेति**। प्राणाः सर्वगताः, सर्वत्र दृष्टकार्यत्वात्, आकाशवदित्यनुमानात् 'सर्वेऽनन्ता' इत्यादिश्रुतेश्च तेषां विभुत्वाद् देह एवाभिव्यक्तेश्च सर्वत्र दृष्ट्यप्रसङ्गात् कुतोऽणुत्वमिति पूर्वपक्षमाह— **सर्वगतानामिति**। हेतोरसिद्धेरुपासनापरत्वाच्च श्रुतेरिन्द्रियाणां विभुत्वे मानाभावाद् यद्वृत्तित्वेनेष्टं तदेवास्माकं साधकतमत्वात् करणमित्याह— **नेत्यादिना**। तदेव स्पष्टयति— **यदेवेति**। वृत्तिमदेव करणं, न वृत्तिमात्रमित्याशङ्क्याह— **अन्यद्वेति**। वृत्तेर्वा वृत्तिमतो वा देहावच्छिन्नस्यैव वृत्तिसाधनस्य करणत्वे फलितमाह— **इतीति**। अनर्थिकेत्युपलक्षणम्, अप्रामाणिकी चेति वाच्यम्। सांख्यपक्षायोगे फलितमाह— **तस्मादिति**।।७।। इति तृतीयं प्राणाणुत्वाधिकरणम्।।

---

१. अभिव्यक्तीत्यर्थः।

४।।प्राणश्रैष्ठ्याधिकरणम्।।सू. ८।।

## श्रेष्ठश्च।।८।।

**मुख्यश्च प्राण इतरप्राणवद् ब्रह्मविकार इत्यतिदिशति। तच्चाविशेषेणैव सर्वप्राणानां ब्रह्मविकारत्वमाख्यातम्, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मु.उ. २।१।३) इति सेन्द्रियमनोव्यतिरेकेण प्राणस्योत्पत्तिश्रवणात्, 'स प्राणमसृजत' (प्र.उ. ६।४) इत्यादिश्रवणेभ्यश्च। किमर्थः पुनरतिदेशः? अधिकाशङ्कापाकरणार्थः। नासदासीये हि ब्रह्मप्रधाने सूक्ते मन्त्रवर्णो भवति– 'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः। आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास' (ऋ.सं. १०।१२९।२) इति। आनीदिति प्राणकर्मोपादानात् प्रागुत्पत्तेः सन्तमिव प्राणं सूचयति। तस्मादजः प्राण इति जायते कस्यचिन्मतिः।**

### *प्रकटार्थविवरणम्*

**श्रेष्ठश्च**। एवं तावन्मुख्यप्राणातिरिक्तानां प्राणानां सृष्ट्यादिकमुपपाद्य इदानीं मुख्येऽप्यतिदिशति— **मुख्यश्चेति**। कुतस्तर्हि ब्रह्मविकारत्वमित्याशङ्क्याह— **तच्चेति**। पूर्वोक्तन्यायेनैव सिद्धं चेत् किं तर्ह्यतिदेशेनेत्याह— **किमर्थ इति**। अतिदेशप्रयोजनमाह— **आशङ्कापाकरणार्थ इति**। आशङ्कास्वरूपं तावदाह— **नासदासीये हीति**। ''नासदासीत्'' इत्यारभ्य प्रवृत्तं सूक्तं नासदासीयम्; तस्मिन् ब्रह्मपरे सूक्ते। मन्त्र एव वर्णयतीति मन्त्रवर्णः। भवति दृश्यत इत्यर्थः। तर्हि तस्मिन् महाप्रलयकाले न मृत्युर्मारक आसीत्; अमृतमपि देवानामुपभोग्यं नासीत्; तथा रात्रेर्दिवसस्य चोदयास्तमयाभ्यां प्रकेतश्चिह्नभूतः सविताऽपि नासीत्; स्वधया सह इति सम्बन्धः, स्वधेति पितृभ्यो दीयमानमन्नम्; पित्राद्यर्चनमपि नासीदित्यर्थः। किन्त्ववातमविक्रियं तदेकमानीत्; तस्माद्ध किलान्यत् किंचन परं प्रकृष्टं नास न बभूवेत्यर्थः। अत्र मन्त्रे विवक्षितांशमाह— **आनीदितीति**। स मन्त्रः सन्तमेव प्राणं सूचयति; कुतः? आनीदचलत् इति प्राणव्यापारोपादानादित्यर्थः। प्राणव्यापारोपादानं लिङ्गम् ''स प्राणमसृजत'' इत्यादिबहुश्रुतिविरोधे

### *भाष्यभावप्रकाशिका*

**श्रेष्ठश्च**। अभ्यधिकाशङ्कां दर्शयति— **नासदासीये हीति**। मृत्युर्मृत्युमत् अमृतममृतत्ववत् रात्र्या अह्नश्च प्रकेतश्चिह्नं सूर्याचन्द्र(मसोस्स्वधया)[मसौ] स्वधया स्वया धारणया स्वरूपस्थित्या प्राणसद्भावावगमः कथमित्यत आह— **आनीदिति**। नन्विहापि प्राणोत्पत्त्यधिकरणन्यायेनैव मुख्यप्राणस्यापि जन्म सिध्य[ ति; अ ]तः पुनः किमर्थमिति इत्याशङ्क्य तत्रावान्तरप्रकृतिविषयत्वेन व्यवस्थोक्ता। इह तु महाप्रलयविषयत्वान्न तेन सिध्यतीत्याह— **तस्मादज इति**। तत्रायं न्यायः— 'एतस्माज्जायते प्राण' इति

### *न्यायनिर्णयः*

मुख्यप्राणातिरिक्तप्राणानां सृष्ट्यादि शिष्ट्वा मुख्येऽपि प्राणे प्रथमाधिकरणन्याय इत्यतिदिशति— **श्रेष्ठश्चेति**। ज्ञाते चक्षुरादौ तद्व्यापारात् प्राणस्य भेदचिन्ता सुकरेति चक्षुरादिनिरूपणानन्तरमतिदेशो न विरुध्यते। मुख्यप्राणो विषयः, तस्य किं जन्म नास्ति किं वाऽस्तीति श्रुतिविप्रतिपत्त्या संशयेऽतिदेशं विशदयति— **मुख्यश्चेति**। अत्र चाद्याधिकरणवत् पादादिसंगतिफलभेदौ। कुतस्तर्हि ब्रह्मविकारत्वं, तत्राह— **तच्चेति**। पूर्वोक्तन्यायेनैव ब्रह्मविकारत्वसिद्धौ किमतिदेशेनेत्याह— **किमर्थ इति**। अतिदेशफलमाह— **अधिकाशङ्केति**। तामेवाधिकां शङ्कां दर्शयति— **नासदासीये हीति**। 'नासदासीदि'त्यारभ्य प्रवृत्ते सूक्ते ब्रह्मपरे मन्त्र एव वर्णयतीति वर्णो दृष्टोऽस्तीति यावत्। तर्हि तस्मिन् महाप्रलये मृत्युर्मारको मृत्युमद्वा कार्यं नासीत्, अमृतमपि देवोपभोगयोग्यममृतत्वाधिकरणं वा नासीत्, तथा रात्र्या रात्रेरह्नो दिवसस्य च प्रकेतश्चिह्नभूतश्चन्द्रः सविता च नाऽऽस्तां, स्वधया सहेति संबन्धः। स्वधेति पितृभ्यो दीयमानमन्नम्। पित्राद्यर्चनमपि नासीदित्यर्थः। यद्वा स्वधया स्वया धारणया स्वकीयस्थित्या तदेकमवातं वातवर्जितमानीच्चेष्टां कृतवदिति यावत्। तस्माच्चेष्टावतः सकाशाद्ध किलान्यत्किंचन किंचिदपि परः परं प्रकृष्टं नाऽऽस न बभूवेत्यर्थः। अस्मिन् मन्त्रे विवक्षितमंशमाह— **प्रागिति**। अत्र प्राणवाचकाभावात् कथं तदस्तित्वधीरित्याशङ्क्याह— **आनीदिति**। प्राणोत्पत्तिन्यायेनैव मुख्यस्यापि जन्मसिद्धौ किं पुनरुक्त्येत्याशङ्क्यावान्तरप्रकृतिविषयत्वेन व्यवस्था तत्रोक्ता; प्रकृते महाप्रलयविषयत्वान्न पूर्वन्यायसिद्धिरिति

**तामतिदेशेनापनुदति। आनीच्छब्दोऽपि न प्रागुत्पत्तेः प्राणसद्भावं सूचयति, अवातमिति विशेषणात्। 'अप्राणो ह्यमनाः शुभ्रः' (मु.उ. २।१।२) इति च मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वस्य दर्शितत्वात्। तस्मात् कारणसद्भावप्रदर्शनार्थ एवायमानीच्छब्द इति। श्रेष्ठ इति च मुख्यं प्राणमभिदधाति, 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' (छा.उ. ५।१।१) इति श्रुतिनिर्देशात्। ज्येष्ठश्च प्राणः, शुक्रनिषेककालादारभ्य तस्य वृत्तिलाभात्। न चेत् तस्य तदानीं वृत्तिलाभः स्याद् योनौ निषिक्तं शुक्रं पूयेत, न संभवेद्वा। श्रोत्रादीनां तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभान्न ज्येष्ठत्वम्। श्रेष्ठश्च प्राणो गुणाधिक्यात्, 'न वै शक्ष्यामस्त्वदृते जीवितुम्' (बृ.उ. ६।१।१३) इति श्रुतेः।।८।।**

**।।इति चतुर्थं प्राणश्रैष्ठ्याधिकरणम्।।**

### *शारीरकन्यायसंग्रहः*

५।।वायुक्रियाधिकरणम्।।सू. ९-१२।।

**न वायुक्रिये पृथगुपदेशात्।।९।। चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः।।१०।। अकरणत्वाच्च न दोषस्तथा हि दर्शयति।।११।। पञ्चवृत्तिर्मनोवद्व्यपदिश्यते।।१२।।** "यः प्राणः स वायुः" इति समानाधिकरणवाक्येन प्राणस्य वायुत्वमवगतम्। "एतस्माज्जायते प्राणः" "खं वायुर्ज्योतिः" इत्युत्पत्तिभेदलिङ्गात् स्वरूपभेदोऽवगतः। द्वयोश्च वाक्यलिङ्गयोर्विरोधे समीरणस्वभावैकत्वविषयं

### *प्रकटार्थविवरणम्*

बाध्यत इति सिद्धान्ताशयः। किंच धातूनां नानार्थत्वात् आनीच्छब्दोऽप्यासीच्छब्दार्थे व्याख्येय इत्याह— **आनीच्छब्दोऽपीति**। अस्त्वेवं निराकरणप्रकारः; तथापि श्रेष्ठशब्दस्य प्राणे प्रसिद्ध्यभावात् कथं सूत्रकारः "श्रेष्ठश्च" इति सूत्रयामासेत्याशङ्क्याह— **श्रेष्ठ इति चेति**। श्रुतिं योजयति— **श्रेष्ठश्च[ज्येष्ठश्च] प्राण इत्यादिना**। इति चतुर्थं प्राणश्रैष्ठ्याधिकरणम्।

### *भाष्यभावप्रकाशिका*

प्राणजन्म श्रुतम्, प्राणव्यापारः प्रलयावस्थायां प्राणसद्भावे लिङ्गम्। तत्र द्वयोर्महाप्रलयावान्तरप्रलयभेदेन व्यवस्थानुपपत्तौ द्वयोरन्यतरस्य गौणत्वे वक्तव्ये श्रुतिविरोधाल्लिङ्गस्यैव गौणत्वं युक्तमिति न्यायेनानीच्छब्दस्य मूलकारणविद्यमानताभिधायित्वकल्पनया प्राणस्य जन्माभ्युगन्तव्यमिति। अवातमिति युक्त्यन्तरं आनीच्छब्दः कथमित्युपचारादित्याह— **तस्मात्कारणेति**। [ ननु ]अन्वर्थतः प्रसिद्ध्या च श्रेष्ठत्वमात्मनो न प्राणस्येत्यत आह— **श्रेष्ठ इति**। ज्येष्ठत्वमुपपादयति— **ज्येष्ठ इत्यादिना। न संभवेदिति**। श्रुतेरेवानुकरणम्। इन्द्रियाणामपीदृशं ज्येष्ठत्वमस्तीत्यत आह— **श्रोत्रादीनां त्विति**। इदानीं श्रेष्ठत्वमाह— **श्रेष्ठश्चेति**। तदेव कथमित्यत आह— **न वै शक्ष्याम इति**।।इति चतुर्थं प्राणश्रैष्ठ्याधिकरणम्।।

### *न्यायनिर्णयः*

मत्वाऽऽह— **तस्मादिति**। अधिकां शङ्कामुक्त्वा सिद्धान्तयति— **तामिति**। 'एतस्माज्जायते प्राणः' इति प्राणजन्म श्रुतम्; 'आनीत्' इत्यननं प्राणव्यापारः प्रागवस्थायां प्राणसत्त्वे लिङ्गम्; तत्र द्वयोर्महाप्रलयावान्तरप्रलयभेदेन व्यवस्थानुपपत्तावन्यतरस्य गौणत्वे श्रुतिविरोधे लिङ्गस्यैव गौणत्वादानीच्छब्दस्य मूलकारणसत्तावाचित्वकल्पनया प्राणस्य जन्मोपेयमिति। शङ्कानिरासमेव सूचयति— **आनीदिति**। प्रमाणान्तरवदित्यपेरर्थः। इतश्च प्रागवस्थायां न प्राणस्य सत्त्वमित्याह— **अवातमिति**। इतोऽपि महाप्रलये प्राणसत्ता नास्तीत्याह— **अप्राणो हीति**। आनीच्छब्दस्तर्हि कथमित्याशङ्क्य धातूनामनेकार्थत्वमाश्रित्याह— **तस्मादिति**। एवं शङ्कानिरासेऽपि प्राणे श्रेष्ठशब्दाप्रसिद्धौ कथं सूत्रमित्याशङ्क्याह— **श्रेष्ठ इति**। श्रौतं ज्येष्ठत्वं साधयति— **ज्येष्ठश्चेति**। तदेव व्यतिरेकद्वारा स्फोरयति— **न चेदिति**। न संभवेदिति श्रुतेरेवानुकरणम्। इन्द्रियाणामपि तुल्यं ज्यैष्ठ्यं, तत्राह— **श्रोत्रादीनां त्विति**। श्रेष्ठत्वं साधयति— **श्रेष्ठश्चेति**। कथं गुणाधिक्यम्, तत्रोक्तम्— **न वा इति**। तदेवं मुख्यप्राणोत्पत्तिश्रुतीनामन्योन्यम-विरोधान्मुख्यप्राणकारणे ब्रह्मणि समन्वय इति।।८।। इति चतुर्थं प्राणश्रैष्ठ्याधिकरणम्।।

### ५।।वायुक्रियाधिकरणम्।।सू. ९-१२।।

## न वायुक्रिये पृथगुपदेशात्।।९।।

**स पुनर्मुख्यः प्राणः किंस्वरूप इतीदानीं जिज्ञास्यते। तत्र प्राप्तं तावत् श्रुतेर्वायुः प्राण इति। एवं हि श्रूयते– 'यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः' (ऐ.आ. २।३।३) इति। अथवा तन्त्रान्तरीयाभिप्रायात् समस्तकरणवृत्तिः प्राण इति प्राप्तम्। एवं हि तन्त्रान्तरीया आचक्षते– 'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च' (सां.का. २९) इति। अत्रोच्यते– न वायुः प्राणो, नापि करणव्यापारः। कुतः? पृथगुपदेशात्। वायोस्तावत् प्राणस्य पृथगुपदेशो भवति– 'प्राण एव**

### *शारीरकन्यायसंग्रहः*

वाक्यं व्यक्तिभेदविषयं लिङ्गमिति विषयभेदेन अविरोधकल्पनया वायोः प्राणस्य च व्यक्तिभेदो दर्शितः।

तथा वागादिप्राणानां सम्भूय शरीरचलनादिहेतुभूतसामान्यव्यापारसम्भवे न प्राणपदार्थान्तरं कल्पनीयम्, कल्पनागौरवात् इति न्यायमात्रस्य प्राणसंवादादौ प्राणस्य वागादीनां च इतरेतरसंवादलिङ्गेन उत्पत्तिभेदलिङ्गेन च प्राणस्येन्द्रियव्यापारेभ्यः भिन्नपदार्थत्वप्रतिपादकेन प्रमाणभूतेन बाधात् करणव्यापारेभ्यो भिन्नः प्राणो दर्शितः।

### *प्रकटार्थविवरणम्*

**न वायुक्रिये पृथगुपदेशात्**। एवं प्राणस्योत्पत्तिं निरूप्य स्वभावविशेषं निरूपयितुमुपक्रमत इत्याह— **स पुनरिति**। पूर्वपक्षमाह— **तत्र प्राप्तमिति**। सांख्याभिप्रायेण [ वा ] पूर्वपक्ष इत्याह— **अथ वेति**। सिद्धान्तसूत्रमवतारयति— **अत्रोच्यत**

### *भाष्यभावप्रकाशिका*

**न वायुक्रिये पृथगुपदेशात्**।। सम्प्रति मुख्यप्राणस्वरूपं निरूपयते— **स पुनरिति। एवं हीति**। ननु 'स वायुने'त्यादि भेदव्यपदेशोऽपि दृश्यते। सत्यमुभयोर्मुख्यत्वायोगात् स्तोककल्पनानुरोधात् गौणो भेदव्यपदेश इत्यर्थः। भेदश्रुत्यवष्टम्भेऽपि धर्मिभेदकल्पनाद्धर्मभेदकल्पना लघीयसीति न्यायेन वागादिप्राणानां संभूय शरीरचालनादिहेतुभूतसामान्यव्यापारसंभवान्न प्राणपदार्थान्तरं कल्पनीयम्, गौरवाद् इन्द्रियवृत्तितयेन्द्रियेभ्यो भेदव्यपदेशस्यापि योगादित्याह— **अथवेति**। नन्वंशांशिभावेन भेद इति; नैवम्,

### *न्यायनिर्णयः*

मुख्यप्राणोत्पत्तिचिन्तानन्तरं तत्स्वरूपं चिन्तयति— **नेत्यादिना**। अधिकरणतात्पर्यमाह— **स इति**। मुख्यप्राणो वायुमात्रं वा करणवृत्तिर्वा तत्त्वान्तरं वेति विप्रतिपत्त्या संदिह्य तत्त्वान्तरत्वं निर्धार्यत इत्यर्थः। अत्र च भेदाभेदश्रुतिविरोधनिषेधेन वाय्वाद्यतिरिक्तप्राणकारणे ब्रह्मणि समन्वयसाधनात् पादादिसंगतिः। पूर्वपक्षे भेदाभेदश्रुत्योर्मिथोविरोधादुक्तसमन्वयासिद्धिः। सिद्धान्ते तदविरोधात् तत्सिद्धिः। यद्वा पूर्वपक्षे वायुमात्रादिन्द्रियमात्राद्वा त्वमर्थस्य विवेकः। सिद्धान्ते तत्त्वान्तरात् प्राणात् तद्विवेक इत्यङ्गीकृत्य पूर्वपक्षमाह— **तत्रेति**। अभेदश्रुतिरिव भेदश्रुतिरपि 'स वायुने'त्याद्या प्राणस्य वायोरस्तीत्याशङ्क्योभयोर्मुख्यत्वासिद्धेः स्तोककल्पनानुरोधाद् गौणी भेदश्रुतिरिति मत्वाऽऽह— **एवं हीति**। भेदश्रुत्यवष्टम्भेऽपि 'धर्मिभेदाद् धर्मभेदो लघीयान्' इति न्यायेन वागादीनां संभूय देहचालनादिहेतुसामान्यव्यापारसंभवान्न प्राणाख्यं पदार्थान्तरं कल्प्यं, गौरवादिन्द्रियवृत्तितया तद्भेदस्यापि वक्तुं शक्यत्वादिति पक्षान्तरमाह— **अथवेति**। तन्त्रान्तरीयाभिप्रायं विवृणोति— **एवं हीति**। वायुमात्रादिन्द्रियमात्राद्वा त्वमर्थस्य विवेक इति प्राप्तमनूद्य सिद्धान्तयति— **अत्रेति**। न वायुः प्राण इत्यत्र पृथगुपदेशहेतुं विशदयति— **वायोरिति**। 'मनो ब्रह्मेत्युपासीत' इत्युपक्रम्य मनोब्रह्मणो वाक्प्राणचक्षुःश्रोत्रैः पादैश्चतुष्पात्त्वमुक्तम्। मनो हि वागादिभिः स्वविषयेषु गौरिव पादैः प्रवर्तते। तत्र प्राण एव मनोब्रह्मणो वागाद्यपेक्षया चतुर्थःपादः। स च वायुनाऽऽधिदैविकेन भात्यभिव्यज्यते स्वव्यापारे च तपत्युद्गच्छतीत्यर्थः। यद्यपि

**ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च' (छा.उ. ३।१८।४) इति। न हि वायुरेव सन् वायोः पृथगुपदिश्येत। तथा करणवृत्तेरपि पृथगुपदेशो भवति, वागादीनि करणान्यनुक्रम्य तत्र तत्र पृथक् प्राणस्यानुक्रमणात्। वृत्तिवृत्तिमतोश्चाभेदात्। न हि करणव्यापार एव सन् करणेभ्यः पृथगुपदिश्येत। तथा 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुः' (मु.उ. २।१।३) इत्येवमादयोऽपि वायोः करणेभ्यश्च प्राणस्य पृथगुपदेशा अनुसर्तव्याः। न च समस्तानां करणानामेका वृत्तिः संभवति, प्रत्येकमेकैकवृत्तित्वात् समुदायस्य चाकारकत्वात्। ननु पञ्जरचालनन्यायेनैतद्भविष्यति। यथैकपञ्जरवर्तिन एकादश पक्षिणः प्रत्येकं प्रतिनियतव्यापाराः सन्तः संभूयैकं पञ्जरं चालयन्ति, एवमेकशरीरवर्तिन एकादश प्राणाः प्रत्येकं प्रतिनियतवृत्तयः सन्तः संभूयैकां प्राणाख्यां वृत्तिं प्रतिलप्स्यन्त इति। नेत्युच्यते। युक्तं तत्र प्रत्येकवृत्तिभिरवान्तरव्यापारैः पञ्जरचालनानुरूपैरेवोपेताः पक्षिणः संभूयैकं पञ्जरं चालयेयुरिति; तथा दृष्टत्वात्। इह तु श्रवणाद्यवान्तरव्यापारोपेताः प्राणा न संभूय प्राण्युरिति युक्तम्, प्रमाणाभावात्।**

### *प्रकटार्थविवरणम्*

**इति**। भाति प्रकाशते; तपति व्यवहारक्षमो भवति; वाय्वधिष्ठितत्वेन वायोर्ज्योतिष्ट्वमौपचारिकम्। ननु करणेभ्य एव प्राणस्य पृथगुपदेशः, न वृत्तेरित्याशङ्क्याह— **वृत्तिवृत्तिमतोश्चेति**। एवं श्रुत्यवष्टम्भेन पक्षद्वयं निराकृत्य करणवृत्तित्वे दूषणान्तरमाह— **न च समस्तानामिति**। या चक्षुःसाध्या वृत्तिः सैव श्रोत्रसाध्या न भवति। चक्षुरादीनां प्रत्येकमेकैकरूपग्रहणादिवृत्तौ स्वातन्त्र्यात्, समुदायस्य च तवावस्तुत्वेनाकरण[ नाकारक ]त्वादित्यर्थः। दृष्टान्तावष्टम्भेन समुदितानां कारकत्वं शङ्कते— **ननु पञ्जरेत्यादिना**। वैलक्षण्याभिधानेन परिहरति— **नेत्युच्यत इत्यादिना। प्रमाणाभावादिति**। अन्धबधिरादीनां प्राणाभावप्रसङ्गादिति भावः। किंच

### *भाष्यभावप्रकाशिका*

उपचारप्रसङ्गादित्याह— **न हि वायुरिति**। प्राणस्य वागादीनाञ्चेतरेतरसंवादलिङ्गेनोत्पत्तिभेदलिङ्गेन चेन्द्रियतद्व्यापारेभ्यो भिन्नत्व-प्रतिपादनात् कल्पनालाघवन्यायेन तद्वृत्तित्वं न कल्पनीयमित्याह— **तथा करणवृत्तेरिति**। पृथगनुक्रमणं वृत्तिवृत्तिमतोर्भेदादित्याशङ्क्याह— **वृत्तिवृत्तिमतोरिति**। तादात्म्याद्भेदोऽस्तीति चेन्न; भेदव्यपदेशस्य निष्प्रयोजनत्वादित्याह— **न हि करणव्यापार इति**। युक्तितोऽपीन्द्रियवृत्तित्वं प्राणस्यायुक्तमित्याह— **न च समस्तानामिति। समुदायस्येति**। तस्यावस्तुत्वादेकद्वित्रिकरणविकलानां च प्राणानामभावप्रसङ्गाच्च[न] तद्वृत्तिः प्राण इत्यर्थः। व्यभिचारं शङ्कते— **नन्विति**। वैषम्यमाह—**युक्तमिति**। इन्द्रियाणामवान्तरव्यापारः किं वृत्यन्तरमाहोस्वित् श्रवणादयः। न तावदाद्यस्तत्र प्रमाणाभावात्, अथ श्रवणादयस्तत्राह— **इह तु श्रवणादीति**। श्रोत्रादीनां श्रवणादिव्यापारयौगपद्ये

### *न्यायनिर्णयः*

छान्दोग्यभाष्ये घ्राणेन्द्रियमिन्द्रियप्रकरणात् प्राण इत्युक्तम्, तथापि प्राणश्रुतिवशादत्र मुख्यप्राणो गृह्यते। अंशांशित्वेन भेदश्रुतिरित्याशङ्क्योपचारप्रसङ्गान्नैवमित्याह— **न हीति**। नापि करणव्यापार इत्यत्र पृथगुपदेशं हेतुं विभज्य व्याचष्टे— **तथेति**। प्राणस्य वागादीनां च मिथः संवादलिङ्गेनोत्पत्तिभेदलिङ्गेन चेन्द्रियतद्व्यापारेभ्यो भिन्नत्वसिद्धेर्न लाघवात् तद्वृत्तित्वमित्यर्थः। पृथगनुक्रमणं वृत्तिवृत्तिमतोर्भेदादित्याशङ्क्याह— **वृत्तीति**। तादात्म्याद्भेदोऽप्यस्तीत्याशङ्क्य भेदवादस्याफलत्वान्नैवमित्याह— **न हीति**। प्रतिज्ञाद्वयेऽपि हेतुं विभज्य व्याख्यायाविभागेनापि व्याख्याति— **तथेति**। श्रुत्यवष्टम्भेन पक्षद्वयं निराकृत्य करणवृत्तित्वे दोषान्तरमाह— **न चेति**। या चक्षुःसाध्या वृत्तिः सैव न श्रोत्रसाध्या, चक्षुरादीनां प्रत्येकमेवै[कै]करूपग्रहणादिवृत्तौ स्वातन्त्र्यात्। अतो न प्राणः सामान्यकरणवृत्तिरित्यर्थः। समुदायस्य करणत्वमुपेत्योक्तम् तदेव नास्त्यवस्तुत्वात्। द्वित्रिकरणविकलानां च प्राणनाभावप्रसङ्गात्। अतोऽपि न करणवृत्तिः प्राण इत्याह— **समुदायस्येति**। दृष्टान्तेन समुदितानां करणानां करणत्वं शङ्कते— **नन्विति**। एकादशत्वं पक्षिषु दार्ष्टान्तिकानुरोधादुक्तम्। वैषम्यं दर्शयन् परिहरति— **इति नेति**। तत्रेति दृष्टान्तोक्तिः। दार्ष्टान्तिकेऽपि किमित्यवान्तरव्यापारवतां प्राणानां प्राणाख्यसामान्यवृत्तिर्न स्यादित्याशङ्क्यावान्तरव्यापारस्तेषां श्रवणादिर्वा वृत्यन्तरं वेति विकल्प्याऽऽद्ये

**अत्यन्तविजातीयत्वाच्च श्रवणादिभ्यः प्राणनस्य। तथा प्राणस्य श्रेष्ठत्वाद्युद्घोषणम् गुणभावोपगमश्च तं प्रति वागादीनाम्, न करणवृत्तिमात्रे प्राणेऽवकल्पते। तस्मादन्यो वायुक्रियाभ्यां प्राणः। कथं तर्हीयं श्रुतिः- 'यः प्राणः स वायुः' इति? उच्यते- वायुरेवायमध्यात्ममापन्नः[1] पञ्चव्यूहो विशेषात्मनाऽवतिष्ठमानः प्राणो नाम भण्यते, न तत्त्वान्तरम्, नापि वायुमात्रम्। अतश्चोभे अपि भेदाभेदश्रुती न विरुध्येते।।९।।**

**स्यादेतत्- प्राणोऽपि तर्हि जीववदस्मिञ्शरीरे स्वातन्त्र्यं प्राप्नोति श्रेष्ठत्वात्, गुणभावोपगमाच्च तं प्रति वागादीनामिन्द्रियाणाम्। तथा ह्यनेकविधा विभूतिः प्राणस्य श्राव्यते- 'सुप्तेषु वागादिषु प्राण एको[2] हि जागर्ति, प्राण एको[2] मृत्युनाऽनाप्तः, प्राणः संवर्गो वागादीन् संवृङ्क्ते, प्राण इतरान् प्राणान् रक्षति मातेव पुत्रान्' इति। तस्मात् प्राणस्यापि जीववत् स्वातन्त्र्यप्रसङ्गः। तं परिहरति-**

### *प्रकटार्थविवरणम्*

वागादिवृत्तित्वे प्राणस्य वागादिपारतन्त्र्यं वक्तव्यम्। तद्वैपरीत्यं च प्रतीयत इत्याह— **तथा प्राणस्येति**। श्रुतेर्गतिं पृच्छति— **कथं तर्हीति**। यथा मृदोऽवस्थाविशेषो घटो मृदात्मा, तथा वायोरवस्थाविशेषः प्राणो वाय्वात्मेति गतिमाह— **उच्यत इति**। अध्यात्मं देहे प्राप्तपञ्चरूपो व्यावृत्तरूपेणावतिष्ठमानो वायुरेव प्राणो भण्यत इत्यर्थः।

यद्युक्तनीत्या वागादिवृत्तिः प्राणो न भवति, तर्हि तस्य भोक्तृत्वं प्रसज्येत; अतोऽनिष्टपरिहाराय बलात् करणवृत्तित्वमभ्युपगन्तव्यमित्याह— **स्यादेतदिति**।

### *भाष्यभावप्रकाशिका*

प्रमाणासंभवादित्यर्थः। अपरिस्पन्दत्वात् प्रधानव्यापाराननुरूपत्वं च श्रवणादीनामित्याह— **अत्यन्तेति**। **अतश्चोभे अपीति**। 'यः प्राणस्स वायु'रिति सामानाधिकरण्यवाक्येन प्राणस्य वायुत्वमवगतम्, 'एतस्माज्जायते प्राणः.... खं वायु'रित्युत्पत्तिभेदलिङ्गात् स्वरूपभेदो भाति, उभयोश्च वाक्यलिङ्गयोर्विरोधे समीरणस्वभावताविषयं वाक्यम्, व्यक्तिभेदविषयं लिङ्गमिति विषयभेदेनाविरोधकल्पनया वायोः प्राणस्य च व्यक्तिभेदो युक्त इत्यर्थः।

इन्द्रियवत्प्राणस्य करणत्वाभावात् जीववदेव मुख्यत्वमिति चोदयति— **स्यादेतदित्यादिना**। **स्वातन्त्र्यप्रसङ्ग इति**।

### *न्यायनिर्णयः*

श्रोत्रादीनां श्रवणादिव्यापारयौगपद्ये मानायोगान्नैवमित्याह— **इह त्विति**। कल्पान्तरं प्रत्याह— **प्रमाणेति**। किंच श्रवणादीनामपरिस्पन्दत्वात् तत्प्रधानव्यापाराननुरूपत्वात्र तदवान्तरव्यापारतेत्याह— **अत्यन्तेति**। किंच वागादिवृत्तित्वे प्राणस्य वागादिपारतन्त्र्यं वाच्यं, तद्वैपरीत्यं चात्र दृष्टम्, तन्न प्राणस्य वागादिवृत्तितेत्याह— **तथेति**। पृथगुपदेशयुक्तिफलमुपसंहरति— **तस्मादिति**। अपृथगुपदेशस्य गतिं पृच्छति— **कथमिति**। यथा मृदोऽवस्थाविशेषो घटो मृदात्मा तथा वायोरवस्थाविशेषः प्राणो वाय्वात्मेत्याह— **उच्यत इति**। अध्यात्मापन्नः शरीरे प्रतिष्ठितः पञ्चव्यूहः प्राणापानव्यानोदानसमानाख्यावस्थाविशेषवान् विशेषात्मना व्यावृत्तरूपेणेति यावत्। कथं तर्हि पृथगुपदेशः, तत्राह— **नापीति**। तत्त्वान्तरत्वस्य तन्मात्रत्वस्य चास्वीकारे फलितमाह— **अतश्चेति**। 'यः प्राणः स वायुः' इति सामानाधिकरण्यवाक्येन प्राणस्य वायुत्वं सिद्धम्, 'एतस्माज्जायते प्राणः' इत्युत्पत्तिभेदलिङ्गेन स्वरूपभेदो दृष्टः। द्वयोश्च वाक्यलिङ्गयोर्विरोधे वाक्यं समीरणस्वभावताविषयम्, लिङ्गं व्यक्तिभेदविषयमिति व्यवस्थाया वायोः प्राणस्य च विषयभेदो युक्तः, लिङ्गस्य च बलीयस्त्वादिति भावः।।९।।

प्राणो वागादिवृत्तिर्न चेत् तर्हि तस्येन्द्रियवत् करणत्वानङ्गीकाराज्जीववद् भोक्तृतेति शङ्कते— **स्यादिति**। प्राणस्य श्रेष्ठत्वमितरेषां तं प्रति गुणत्वं च साधयति— **तथा हीति**। श्रेष्ठत्वफलमाह— **तस्मादिति**। प्राणस्यापि जीववदत्र भोक्तृत्वे विरुद्धाभिप्रायानेकभोक्त्रधिष्ठिततया देहस्य गमनादि न भवेदिति भावः। प्राणस्य चक्षुरादिवदत्यन्तोपसर्जनत्वाभावेऽपि परिचारकवतः

१. 'आपन्नपञ्चव्यूहः' इति प्रकटार्थानुसृतं पाठान्तरम्। २. 'एवैको' इति पा.।

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः।।१०।।

**तुशब्दः प्राणस्य जीववत् स्वातन्त्र्यं व्यावर्तयति। यथा चक्षुरादीनि राजप्रकृतिवज्जीवस्य कर्तृत्वं भोक्तृत्वं च प्रत्युपकरणानि, न स्वतन्त्राणि; तथा मुख्योऽपि प्राणो राजमन्त्रिवज्जीवस्य सर्वार्थकरत्वेनोपकरणभूतो न स्वतन्त्रः। कुतः? तत्सहशिष्ट्यादिभ्यः। तैश्चक्षुरादिभिः सहैव प्राणः शिष्यते प्राणसंवादादिषु। समानधर्मणां[1] च सह शासनं युक्तं बृहद्रथन्तरादिवत्। आदिशब्देन संहतत्वाचेतनत्वादीन् प्राणस्य स्वातन्त्र्यनिराकरणहेतून् दर्शयति।।१०।।**

**स्यादेतत्— यदि चक्षुरादिवत् प्राणस्य जीवं प्रति करणभावोऽभ्युपगम्येत, विषयान्तरं रूपादिवत् प्रसज्येत। रूपाद्यालोचनादिभिर्वृत्तिभिर्यथास्वं चक्षुरादीनां जीवं प्रति करणभावो भवति। अपि चैकादशैव कार्यजातानि रूपालोचनादीनि परिगणितानि यदर्थमेकादश प्राणाः संगृहीताः, न तु द्वादशमपरं कार्यजातमधिगम्यते**

### *प्रकटार्थविवरणम्*

**चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः**। प्राणो न स्वतन्त्रः जीवस्य भोगसाधनत्वात्, चक्षुरादिवदित्याह— **तुशब्द इत्यादिना**। ननु सहपाठमात्रेण कथं चक्षुरादिसाम्यमित्याशङ्क्याह— **समानधर्माणां चेति**। यथा बृहद्रथन्तरे समानीया[2] इत्यादौ बृहद्रथन्तरयोः सह पाठः कर्मणि सह प्रयोगसाम्येन, तद्वदित्यर्थः। इतश्च प्राणो न स्वतन्त्रः, सावयवत्वात्, अचेतनत्वात्, परिच्छिन्नत्वात्, शरीरवदित्याह— **आदिशब्देनेति**।

यज्जीवस्य भोगकरणं तत् सविषयं दृष्टम्, यथा चक्षुरादि; तथा प्राणस्यापि विषयो वक्तव्यः, तदभावात् स्वतन्त्रः प्राण इत्याह— **स्यादेतदिति**। किं च प्राणसाध्यप्रयोजनाभावादपि न प्राणाख्यं तत्त्वमभ्युपगन्तव्यम्, द्वादशेन्द्रियवदित्याह— **अपि चेति**।

### *भाष्यभावप्रकाशिका*

विरुद्धाभिप्रायानेकाधिष्ठिततया शरीरस्य गमनादि न संभवेदित्यर्थः। प्राणस्य चक्षुरादिवदत्यन्तोपसर्जनत्वाभावेऽपि यथा परिचारकवतो मन्त्यादेरात्मानं[ मन्त्र्यादे राजानं] प्रति गुणभावः एवमुपपद्यत इत्याह— **यथा चक्षुरादीनीति**। बृहद्रथन्तरयोः पृष्ठं समानधर्मत्वं।

भवतु कारणत्वं सविषयत्वप्रसङ्गः कुत इत्याशङ्क्य चक्षुरादिषु तथा दृष्टत्वादित्याह— **रूपालोचनेति**। इहापि विषयो भविष्यतीत्यत आह[3]—

### *न्यायनिर्णयः*

सामन्तादे राजानं प्रति गुणत्ववद् गुणत्वं जीवं प्रति स्यादित्याह— **तमिति**।

सूत्राक्षराणि व्याचष्टे— **तुशब्द इत्यादिना**। प्राणो न स्वतन्त्रः, भोगसाधनत्वात्, चक्षुरादिवदित्यर्थः। प्राणसंवादादिष्वित्यादिशब्देनान्येऽपि ज्ञानध्यानप्रदेशा गृह्यन्ते। सहशासनेऽपि कथं प्राणस्य चक्षुरादिसाम्यम्, तत्राह— **समानेति**। तत्र दृष्टान्तमाह— **बृहदिति**। ते हि सामनी सहैव सर्वत्र पठ्येते, तयोश्च कर्मणि सहैव प्रयुज्यमानत्वं दृष्टम्; सामत्वं वा साम्यम्। तथा प्राणस्यापि चक्षुरादिभिः सह पठितस्य जीवोपकरणता तुल्येत्यर्थः। संहतत्वाचेतनत्वादीत्यादिशब्देन परिच्छिन्नत्वाद्यन्तवत्त्वादिग्रहणम्।।१०।।

सूत्रान्तरव्यावर्त्यमाह— **स्यादिति**। प्राणस्य करणत्वेऽपि कुतः सविषयत्वप्रसक्तिरित्याशङ्क्य चक्षुरादिषु तथा दृष्टत्वादित्याह— **रूपेति**। यज्जीवस्य भोगकरणं तत् सविषयं दृष्टं, यथा चक्षुरादि; तथा प्राणस्यापि विषयो वाच्यः; तदभावात् तस्य स्वतन्त्रतेत्यर्थः। तर्हि प्राणेऽपि कश्चिद्विषयोऽस्तु, तत्राह— **अपि चेति**। प्राणसाध्यफलाभावादपि चक्षुरादिवत् प्राणाख्यं तत्त्वं

---

१. 'धर्माणाम्' इति पा.। २. 'सामनी' इति स्यात्। ३. अत्र ग्रन्थपातः।

**यदर्थमयं द्वादशः प्राणः प्रतिज्ञायेतेति। अत उत्तरं पठति–**

## अकरणत्वाच्च न दोषस्तथाहि दर्शयति।।११।।

**न तावद् विषयान्तरप्रसङ्गो दोषः, अकरणत्वात् प्राणस्य। न हि चक्षुरादिवत् प्राणस्य विषयपरिच्छेदेन करणत्वमभ्युपगम्यते। न चास्यैतावता कार्याभाव एव। कस्मात्? तथा हि श्रुतिः प्राणान्तरेष्वसंभाव्यमानं मुख्यप्राणस्य वैशेषिकं कार्यं दर्शयति प्राणसंवादादिषु। 'अथ ह प्राणा अहंश्रेयसि व्यूदिरे' इत्युपक्रम्य 'यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः' (छा.उ. ५।१।६,७) इति चोपन्यस्य प्रत्येकं वागाद्युत्क्रमणेन तद्वृत्तिमात्रहीनं यथापूर्वं जीवनं दर्शयित्वा प्राणोच्चिक्रमिषायां वागादिशैथिल्यापत्तिं शरीरपातप्रसङ्गं च दर्शयन्ती श्रुतिः प्राणनिमित्तां शरीरेन्द्रियस्थितिं दर्शयति। 'तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत् पञ्चधाऽऽत्मानं प्रविभज्यैतद् बाणमवष्टभ्य विधारयामि' (प्र.उ. २।३) इति चैतमेवार्थं श्रुतिराह। 'प्राणेन रक्षन्नवरं कुलायम्' (बृ.उ. ४।३।१२) इति च सुप्तेषु चक्षुरादिषु प्राणनिमित्तां शरीररक्षां दर्शयति। 'यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव[1] तच्छुष्यति' (बृ.उ. १।३।१९) 'तेन यदश्नाति यत्पिबति तेनेतरान् प्राणानवति' (छा.उ. १।२।९) इति च प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति। 'कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति, स प्राणमसृजत' (प्र.उ. ६।३,४) इति च प्राणनिमित्ते जीवस्योत्क्रान्तिप्रतिष्ठे दर्शयति।।११।।**

### *प्रकटार्थविवरणम्*

**अकरणत्वाच्च न दोषस्तथा हि दर्शयति।** आद्यदोषं परिहरति— **न तावदिति।** शरीरवद् विषयाभावेऽपि जीवभोगसाधनत्वं प्राणस्य भविष्यतीत्यर्थः। द्वितीयदोषं परिहरति— **न चास्यैतावतेति। अहंश्रेयसीति** स्वस्य स्वस्य श्रेष्ठतानिमित्तम्; व्यूदिरे विवादं चक्रिरे। **तद्व्यक्ति[ तद्वृत्ति ]मात्रहीनमिति।** मूकादिभावेन। न केवलं प्राणस्योत्क्रमणेच्छायां वागादिशैथिल्यापत्तिलिङ्गेन प्राणनिबन्धना शरीरादिस्थितिः, किं त्विममर्थं स्वयं निर्वक्तीत्याह— **तान्वरिष्ठ इति।** श्रुत्यन्तरमाह— **प्राणेन रक्षन्निति।** अवरं निकृष्टम्; कुलायं गृहं शरीराख्यम्; प्राणानुपसंहारेण रक्षन् जीवः सुषुप्तिं याति। प्राणस्याप्युपसंहारे मृतभ्रान्तिरेव भवेदित्यर्थः। प्राणस्य कार्यान्तरं श्रुत्यन्तरेणाह— **यस्मात्कस्माच्चेत्यादिना।**

### *न्यायनिर्णयः*

जीवभोगोपकरणं द्वादशेन्द्रियवन्नोपेयमित्यर्थः। चोद्योत्तरं सूत्रं पातयति— **अत इति।** प्राणस्य जीवभोगोपकरणत्वे सविषयत्वप्रसक्तिमुक्तां प्रत्याह— **न तावदिति।** प्राणस्याकरणत्वे कथं जीवस्य सर्वार्थत्वेनोपकरणभूतोऽसावित्युक्तमाशङ्क्याह— **न हीति।** विषयपरिच्छेदाभावे प्राणस्याप्रमाणत्वान्न सत्त्वधीरित्याशङ्क्याह— **न चेति।** कार्यलिङ्गकमनुमानं प्राणे संभवतीत्युक्तं प्रश्नपूर्वकं सूत्रावयवेन स्फुटयति— **कस्मादिति।** अन्वयव्यतिरेकसिद्धं प्राणानामसंभाव्यं कार्यं मुख्यप्राणस्य दर्शयति— **प्राणान्तरेष्विति।** प्राणोपास्तिप्रक्रमार्थोऽथशब्दः। **अहंश्रेयसीति** स्वस्य श्रेष्ठतानिमित्तं व्यूदिरे विवादं चक्रिरे। तद्वृत्तिमात्रहीनं मूकादित्वेन स्थितमिति यावत्। न केवलं प्राणस्योत्क्रमणेच्छायां वागादिशैथिल्यापत्तिलिङ्गेन प्राणनिमित्ता देहस्थितिः, किंतु यथोक्तमर्थं श्रुतिः स्वयमेव निर्वक्तीत्याह— **तानिति।** तत्रैव श्रुत्यन्तरमाह— **प्राणेनेति।** अवरं निकृष्टमनेकाशुचिनीडं कुलायं देहाख्यं गृहं प्राणानुसंहारेण रक्षन् जीवः सुप्तिं याति। प्राणस्याप्युपसंहारे मृतभ्रान्तिः स्यादित्यर्थः। प्राणस्य कार्यान्तरं श्रुत्यन्तरेण दर्शयति— **यस्मादिति।** तेन प्राणेन यदश्नाति जीवः; तेनाशनादिनेति यावत्। प्राणस्य कार्यान्तरं वाक्यान्तरेणोपन्यस्यति— **कस्मिन्निति।।११।।**

---

१. तदेव = तदानीमेव।

## पञ्चवृत्तिर्मनोवद् व्यपदिश्यते।।१२।।

**इतश्चास्ति मुख्यस्य प्राणस्य वैशेषिकं कार्यम्, यत्कारणं पञ्चवृत्तिरयं व्यपदिश्यते श्रुतिषु– 'प्राणोऽपानो व्यान उदानः समानः' (बृ.उ. १।५।३) इति। वृत्तिभेदश्चायं कार्यभेदापेक्षः। प्राणः प्राग्वृत्तिरुच्छ्वासादिकर्मा। अपानोऽर्वाग्वृत्तिर्निश्वासादिकर्मा। व्यानस्तयोः संधौ वर्तमानो वीर्यवत्कर्महेतुः। उदान ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः। समानः समं सर्वेष्वङ्गेषु योऽन्नरसान्नयतीति। एवं पञ्चवृत्तिः प्राणो मनोवत्। यथा मनसः पञ्च वृत्तयः, एवं प्राणस्यापीत्यर्थः। श्रोत्रादिनिमित्ताः शब्दादिविषया मनसः पञ्च वृत्तयः प्रसिद्धाः। न तु 'कामः संकल्प' इत्याद्याः परिपठिताः परिगृह्येरन्, पञ्चसंख्याऽतिरेकात्। नन्वत्रापि श्रोत्रादिनिरपेक्षा भूतभविष्यदादिविषयाऽपरा मनसो वृत्तिरस्तीति समानः पञ्चसंख्याऽतिरेकः। एवं तर्हि 'परमतमप्रतिषिद्धमनुमतं भवति' इति न्यायादिहापि योगशास्त्रप्रसिद्धा मनसः पञ्च वृत्तयः परिगृह्यन्ते– 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' (पा.यो.सू. १।६) नाम। बहुवृत्तित्वमात्रेण वा मनः प्राणस्य निदर्शनमिति द्रष्टव्यम्। जीवोपकरणत्वमपि प्राणस्य पञ्चवृत्तित्वान्मनोवदिति योजयितव्यम्।।१२।।**

।।इति पञ्चमं वायुक्रियाधिकरणम्।।

### *प्रकटार्थविवरणम्*

**पञ्चवृत्तिर्मनोवद् व्यपदिश्यते**। पञ्चसंख्याधिक्याच्चेत् कामाद्या वृत्तयो न परिगृह्यन्ते, तर्हि ज्ञानेऽपि पञ्चत्वनियमो नास्तीत्याह— **नन्वत्रापीति**। अरुचिं प्रदर्श्य प्रकारान्तरेणाह— **एवं तर्हीति**। प्रमासाधनं प्रमाणमिति; [१]अध्यवसायो विपर्ययः, ''शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः'', अग्रहणं निद्रा; अनुभूतमात्रज्ञानं स्मृतिः। परसिद्धोदाहरणेन परः प्रतिबोधनीय इत्यस्मिन्नंशे विरोधाभावाभिप्रायेणाप्रतिषिद्धत्वमुक्तम्, न तु रहस्याभिप्रायेण, विपर्ययादीनामविद्यावृत्तित्वाभ्युपगमात्। अत एव **पतञ्जलि**परिगणिता वृत्तीर्हित्वा स्वाभिप्रायेण व्याचष्टे— **बहुवृत्तित्वमात्रेण वेति**। एवं प्राणस्य कार्यसद्भावे सूत्रं व्याख्यायेदानीं जीवोपकरणत्वेऽपि

### *भाष्यभावप्रकाशिका*

**वृत्तिभेदश्चेति**। निद्राया इन्द्रियाणां व्यापारोपरममात्रत्वात् कथं तस्या वृत्तित्वसिद्धिरित्यपरितोषात् पक्षान्तरमाह—**बहुवृत्तित्वेति**।

मनोवत्पञ्चवृत्तित्वादुपकरणत्वमित्येतदपि सूत्रार्थत्वेन द्रष्टव्यमित्याह— **जीवोपकरणत्वमपीति**। इति पञ्चमं वायुक्रियाधिकरणम्।

### *न्यायनिर्णयः*

प्राणस्य प्राणान्तरेष्वसंभाव्यमानकार्यसत्त्वे हेत्वन्तरमाह— **पञ्चेति**। सूत्रं व्याकरोति— **इतश्चेति**। कथमेतावताऽन्यत्रा-संभविकार्यविशेषसिद्धिः, तत्राह— **वृत्तीति**। तदेव विवृणोति— **प्राण इति**। उच्छ्वासादीत्यादिशब्देन देहधारणादि गृह्यते। एतेन निश्वासादीत्यादिशब्दो व्याख्यातः। उत्क्रान्त्यादीत्यादिपदेन गत्यागती गृह्येते। प्राणस्य पञ्चवृत्तित्वमुपसंहरति— **एवमिति**। दृष्टान्तं व्याचष्टे— **यथेति**। कास्ता मनसः पञ्च वृत्तयः, तत्राह— **श्रोत्रादीति**। लोकप्रसिद्ध्यपेक्षया श्रुतिप्रसिद्धेर्बलवत्त्वात् कामाद्या मनोवृत्तयः स्युरित्याशङ्क्याह— **न त्विति**। पञ्चसंख्याधिक्याच्चेत् कामाद्या वृत्तयो नेष्यन्ते, तर्हि ज्ञानेऽपि पञ्चत्वनियमासिद्धेः 'श्रोत्रादिनिमित्ता' इत्याद्ययुक्तमिति शङ्कते— **नन्विति**। उक्ते पञ्चवृत्तित्वे मनसोऽरुचिकारणमुक्त्वा प्रकारान्तरेण तस्य पञ्चवृत्तित्वमाह— **एवमिति**। इहेति प्रकृतसूत्रोक्तिः। योगशास्त्रप्रसिद्धा मनोवृत्तीरेवानुक्रामति— **प्रमाणेति**। प्रमासाधनं प्रमाणम्। मिथ्याऽध्यवसायो विपर्ययः। 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः'। अग्रहणं निद्रा। अनुभूतमात्रज्ञानं स्मृतिः। परसिद्धेन परो बोधनीय इत्यस्मिन्नंशे विरोधाभावादप्रतिषिद्धत्वमुक्तम्, न त्विदमेवाभिप्रेतम्। विपर्ययादीनामविद्यावृत्तित्वोपगमाद् इन्द्रियव्यापारोपरममात्रत्वान्निद्राया मनोवृत्तित्वा-सिद्धिरित्यपरितोषात् पक्षान्तरमाह— **बह्विति**। मनोवत् पञ्चवृत्तित्वादुपकरणत्वं प्राणस्येत्येतदपि सूत्रार्थत्वेन द्रष्टव्यमित्याह— **जीवेति**।

---

१. 'प्रमाणम्, मिथ्याऽध्यवसायो' इति पाठः स्यात्।

## ६।।श्रेष्ठाणुत्वाधिकरणम्।।सू. १३।।

## अणुश्च।।१३।।

**अणुश्चायं मुख्यः प्राणः प्रत्येतव्यः, इतरप्राणवत्। अणुत्वं चेहापि सौक्ष्म्यपरिच्छेदौ, न परमाणुतुल्यत्वम्। पञ्चभिर्वृत्तिभिः कृत्स्नशरीरव्यापित्वात्। सूक्ष्मः प्राणः, उत्क्रान्तौ पार्श्वस्थेनानुपलभ्यमानत्वात्। परिच्छिन्नश्चोत्क्रान्तिगत्यागतिश्रुतिभ्यः। ननु विभुत्वमपि प्राणस्य समाम्नायते— 'समः प्लुषिणा समो मशकेन**

### *शारीरकन्यायसंग्रहः*

**अणुश्च**।।१३।। यद्यपि महान् प्राणः, सर्वत्र दृष्टकार्यत्वात्, आकाशवत् इत्यनुमानस्य हेतोरसिद्धत्वात्, यत्र शरीरं तत्र सर्वत्र दृष्टकार्यत्वादिति विशेषणे शरीरतद्रूपादिषु अनैकान्तिकत्वात् न प्राणमहत्त्वस्य प्रतिपादकत्वमस्ति, तथापि "सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण" इति श्रौतेन लिङ्गेन प्राणस्य सर्वगतत्वम्। "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इति परिच्छेदलिङ्गम्। तत्र द्वयोर्लिङ्गयोः विरोधे प्राणस्य स्वरूपाधिदैविकरूपाभ्यां व्यवस्थाप्रदर्शनेन परिच्छिन्नत्वमुक्तम्।।

### *प्रकटार्थविवरणम्*

योजयितव्यमित्याह— **जीवोपकरणत्वमपीति**। इति पञ्चमं वायुक्रियाधिकरणम्।

**अणुश्च**। एवं तावन्मुख्यस्य प्राणस्य सृष्टिं स्वभावविशेषं [च] निरूप्येदानीं परिमाणमतिदिशति— **अणुश्चायमिति**। अभ्यधिकाशङ्कां दर्शयति— **ननु विभुत्वमपीति**। प्लुषिः मशकादपि सूक्ष्मो जन्तुः, नागः हस्ती; प्राणस्य सर्वात्मत्वप्रतिपादनाद् विभुत्वमवगम्यते; अतस्तद्विरुद्धं परिच्छेदाङ्गीकरणमिति भावः। आधिदैविकस्य विभुत्वम्, आध्यात्मिकस्य चोत्क्रमणादिश्रवणेन

### *भाष्यभावप्रकाशिका*

**अणुश्च**। यद्यपि महान् प्राणः सर्वत्र दृष्टकार्यत्वादाकाशवदित्यनुमानस्य हेतोरसिद्धत्वाद्यत्र शरीरं तत्र सर्वत्र दृष्टकार्यत्वादिति च विशेषणे शरीरतद्रूपादिष्वनैकान्तिकत्वा‌द्नुमानेन प्राणस्य महत्त्वं न सिध्यति तथापि समो.....[ऽनेन]सर्वेणेति श्रौतेन लिङ्गेन प्राणस्य महत्त्वं सिध्यतीति शङ्कते— **ननु विभुत्वमिति**। उत्क्रान्त्यादिभिः परिच्छिन्नत्वं भाति, समोऽनेनेत्यादिना च विभुत्वम्, ततश्च परिच्छिन्नत्वस्य मुख्यत्व इतरस्यात्यन्तबाधः स्यादपरिच्छिन्नत्वस्य मुख्यत्वे परिच्छिन्नत्वमुपाधिवशादुपपद्यत इत्यर्थः।

### *न्यायनिर्णयः*

तदेवं वायोरिन्द्रियवृत्तेश्च प्राणस्य भेदाभेदश्रुत्योरविरोधाद् यथोक्तप्राणकारणे ब्रह्मणि समन्वयः सिध्यतीति सिद्धम्।।१२।। इति पञ्चमं वायुक्रियाधिकरणम्।।

मुख्यस्य प्राणस्य सृष्टिं स्वभावविशेषं च निरूप्य परिमाणमतिदेशेन निरूपयति— **अणुश्चेति**। मुख्यप्राणो महान् परिच्छिन्नो वेति श्रुतिविप्रतिपत्तेः संशये सिद्धान्तमाह— **अणुरिति**। इहापीति सूत्रस्य मुख्यस्य प्राणस्य चोक्तिः। परमाणुतुल्यत्वमणुत्वं नेत्यत्र हेतुमाह— **पञ्चेति**। सौक्ष्म्यपरिच्छेदौ क्रमेण साधयति— **सूक्ष्म इत्यादिना**। अत्रापि व्यापित्वपरिच्छिन्नत्वश्रुत्योर्विरोधनिरासेन परिच्छिन्नप्राणकारणे ब्रह्मणि समन्वयसाधनात् पादादिसंगतिः। पूर्वपक्षे श्रुत्योर्विरोधादुक्तसमन्वयासिद्धिः। सिद्धान्ते तदविरोधात् तत्सिद्धिः। सर्वत्र दृष्टकार्यत्वादाकाशवत् प्राणो महानित्यत्र हेत्वसिद्धेर्यत्र शरीरं तत्रेति विशेषणे शरीरतद्रूपादिष्वनैकान्त्यादनुमानेन प्राणस्य महत्त्वासिद्धावपि 'समोऽनेन सर्वेणे'ति श्रौतलिङ्गेन तत्सिद्धिरित्यधिकाशङ्कां दर्शयन् पूर्वपक्षमाह— **नन्विति**। प्लुषिर्मशकादपि सूक्ष्मो जन्तुः पुत्तिकेत्युच्यते। नागो हस्ती। परिच्छिन्नत्वमुत्क्रान्त्यादिभिर्भाति, 'समोऽनेने'त्यादिना विभुत्वम्, ततश्च परिच्छिन्नत्वस्य मुख्यत्वे विभुत्वस्यात्यन्तबाधः स्यादपरिच्छिन्नत्वस्य मुख्यत्वे परिच्छिन्नत्वमौपाधिकं युक्तम्। यद्यपि 'सर्वेऽनन्ता' इतिवत् प्राणानन्त्यश्रुतिरपि नेतुमुचिता तथापि विधान्तरेण[1] तन्नयनार्थमाशङ्केत्यर्थः। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'ति परिच्छेदेऽपि प्राणस्य लिङ्गदर्शनाद्

---

१. 'अणवश्च' (ब्र.सू. २।४।७) इत्यत्रानन्त्यश्रवणमुपासनापरतया नीतम्। इह तु आधिदैविकरूपेणेति विधान्तरम्।

**समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण' (बृ.उ. १।३।२२) इत्येवमादिप्रदेशेषु। तदुच्यते–आधिदैविकेन समष्टिव्यष्टिरूपेण हैरण्यगर्भेण प्राणात्मनैवैतद् विभुत्वमाम्नायते, नाध्यात्मिकेन। अपि च 'समः प्लुषिणे' त्यादिना साम्यवचनेन प्रतिप्राणिवर्तिनः प्राणस्य परिच्छेद एव प्रदर्श्यते; तस्माददोषः।।१३।।**

।।इति षष्ठं श्रेष्ठाणुत्वाधिकरणम्।।

**७।।ज्योतिराद्यधिकरणम्।।सू. १४-१६।।**

## ज्योतिराद्यधिष्ठानं तु तदामननात्।।१४।।

**ते पुनः प्रकृताः प्राणाः किं स्वमहिम्नैव स्वस्मै स्वस्मै कार्याय प्रभवन्त्याहोस्विद् देवताधिष्ठिताः**

### *शारीरकन्यायसंग्रहः*

**ज्योतिराद्यधिष्ठानं तु तदामननात्।।१४।। प्राणवता शब्दात्।।१५।। तस्य च नित्यत्वात्।।१६।।** करणानां स्वप्रवृत्तौ नैरपेक्ष्यमन्वयव्यतिरेकसिद्धम्। "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इत्यादि[ इत्यादिना ] अग्न्यादीनां चेतनानां वागाद्यचेतनभावानुपपत्तेः वागादिकरणेषु अग्न्यादीनामैक्याभिमानमात्रावगमात्, चेतनस्य च वागाद्यभिमानः प्रवर्तकतयेति जीवे दृष्टत्वात्, अग्न्यादीनां वागाद्यैक्याभिमानसंबन्धप्रतिपादकशास्त्रान्यथानुपपत्त्या अग्न्याद्यधीना करणप्रवृत्तिरित्यवगतम्। तत्र "परात्तु तच्छ्रुतेः" इत्यधिकरणन्यायेन केवलव्यतिरेकानपेक्षागमबलेन देवतानुगृहीतानां करणानां प्रवृत्तौ सिद्धायां देवता अपि चक्षुरादिजनितकर्मतत्फलसंबन्धिन्यः करणाभिमानेन प्रवर्तकत्वात्, जीववत् इत्यनुमानस्य न देवताः चक्षुरादिजनित......... [ कर्मफल ]संबन्धिन्यः, चक्षुरादिसाधनजन्यरूपाद्युपलब्ध्याश्रयत्वाभावात्, उदासीनपुरुषान्तरवत् इत्यनुमानेन "न ह वै देवान् पापं गच्छति" इति श्रुत्यनुगृहीतेन बाधो दर्शितः। देवतानां च प्रदीपवत् करणानुग्राहकत्वम्, न स्वयं करणतया पृथक्करणवत्त्वात् इत्युक्तम्।

### *प्रकटार्थविवरणम्*

परिच्छिन्नत्वमिति विषयभेदान्न विरोध इत्याह— **आधिदैविकेनेति**। समष्टिव्यष्टिरूपेण अनुगतव्यावृत्तरूपेणेत्यर्थः। विभुत्वप्रतिपादनमङ्गीकृत्योक्तम्; इदानीं तदेव नास्तीत्याह— **अपि चेति**। इति षष्ठं श्रेष्ठाणुत्वाधिकरणम्।

**ज्योतिराद्यधिष्ठानं तु तदामननात्**। रूपग्रहण[ हणादि ]कार्याश्चक्षुरादयः पूर्वं निर्णीताः; तत्रान्वयव्यतिरेकाभ्याम्,

### *भाष्यभावप्रकाशिका*

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'ति तस्य परिच्छेदेऽपि लिङ्गदर्शनाद् द्वयोर्लिङ्गयोर्विरोधे प्राणस्य स्वरूपाधिदैविकरूपाभ्यां व्यवस्था युक्तेति परिहरति—[ तदिति ].....विलिङ्गयोर्व्यवस्थोपपत्तावपीयमेव व्यवस्था कुतोऽभ्युपगम्या इत्याशङ्क्य त्वदुक्तलिङ्गस्य प्राणमात्रापरिच्छेदासाधकत्वात् 'समोऽनेने'त्याधिदैविकविषयत्वेन व्यवस्थाप्यत इत्याह— **अपि चेति**। इति षष्ठं श्रेष्ठाणुत्वाधिकरणम्।।

### *न्यायनिर्णयः*

द्वयोर्लिङ्गयोर्विरोधे सत्याध्यात्मिकाधिदैविकरूपाभ्यां व्यवस्थेति परिहरति— **तदिति**। **समष्टिव्यष्टिरूपेण** अनुवृत्तव्यावृत्तरूपेणेत्यर्थः। उभयथा लिङ्गयोर्व्यवस्थासिद्धावपीयमेव कुतो व्यवस्थेत्याशङ्क्य त्वदुक्तलिङ्गस्य प्राणमात्रपरिच्छेदासाधकत्वादाधिदैविकविषयत्वेन 'समोऽनेने'त्याद्यास्थेयमित्याह— **अपि चेति**। मुख्यप्राणस्य व्यापित्वपरिच्छिन्नत्वश्रुत्योरित्थमविरोधात्परिच्छिन्नप्राणकारणे ब्रह्मणि समन्वयधीरित्युपसंहरति— **तस्मादिति**।।१३।। इति षष्ठं श्रेष्ठाणुत्वाधिकरणम्।।

प्राणस्याध्यात्माधिदैवतभागेनाणुत्वविभुत्वनिरूपणप्रसङ्गेनाध्यात्मिकानां प्राणानामाधिदैविकादित्याद्यपेक्षां चेष्टामाचष्टे— **ज्योतिरादीति**। अधिकरणस्य विषयसंशयौ दर्शयति— **ते पुनरिति**। अन्वयव्यतिरेकाभ्यामाद्यो विकल्पः, द्वितीयो देवताधिष्ठितत्वोक्तेरिति विवेक्तव्यम्। 'चक्षुषा हि रूपाणि पश्यति' इति, 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इत्यादिश्रुतेरविरोधद्वारा देवताधिष्ठितचक्षुरादिकारणे

**प्रभवन्तीति विचार्यते। तत्र प्राप्तं तावद् यथास्वकार्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति। अपि च देवताधिष्ठितानां प्राणानां प्रवृत्तावभ्युपगम्यमानायां तासामेवाधिष्ठात्रीणां देवतानां भोक्तृत्वप्रसङ्गाच्छारीरस्य भोक्तृत्वं प्रलीयेत। अतः स्वमहिम्नैवैषां प्रवृत्तिरिति। एवं प्राप्त इदमुच्यते– 'ज्योतिराद्यधिष्ठानं तु' इति। तुशब्देन पूर्वपक्षो व्यावर्त्यते। ज्योतिरादिभिरग्न्याद्यभिमानिनीभिर्देवताभिरधिष्ठितं वागादि करणजातं स्वकार्येषु प्रवर्तत इति प्रतिजानीते। हेतुं व्याचष्टे– तदामननादिति। तथा ह्यामनन्ति– 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ.उ. १।२।४) इत्यादि। अग्नेश्चायं वाग्भावो मुखप्रवेशश्च देवतात्मनाऽधिष्ठातृत्वमङ्गीकृत्योच्यते। न हि**

### *प्रकटार्थविवरणम्*

देवताधिष्ठितत्ववचनाच्च संशयमाह— **ते पुनरिति**। पूर्वपक्षमाह— **तत्र प्राप्तं तावदिति**। सूत्रं योजयति— **तुशब्देनेत्यादिना**। नन्वग्नेर्वाग्भावो मुखप्रवेशश्च श्रूयते, न तु देवतात्वेनाधिष्ठातृत्वमित्याशङ्क्याह— **अग्नेश्चायमिति**। कण्ठोष्ठादिप्रदेशसमवेतं शब्दव्यञ्जकं करणं वागुच्यते। तस्याश्च वाचः श्रोत्रवच्छब्दव्यञ्जकत्वेन आकाशकार्यत्वान्नाग्नेरुपादानतया वाग्भावः संभवति; नापि मुखे प्रवेशः, दाहप्रसङ्गात्; अतोऽग्निर्वागभिमानिनी देवता, तस्या वागधिष्ठातृत्वमात्रं तद्भाव उपचर्यत इति भावः। उक्तं

### *भाष्यभावप्रकाशिका*

**ज्योतिराद्यधिष्ठानन्तु तथाम्नानात्**। केवलव्यतिरेकाभावात् देवताया अधिष्ठातृत्वमनुपपन्नमित्याह— **तत्र प्राप्तमिति**। न च दृष्टकारणक्लृप्तावन्वयव्यतिरेकापेक्षा आगमात्तु देवताया अधिष्ठातृत्वाभिधानात् तदपेक्षा नास्तीति 'परात्तु तच्छ्रुते'रित्यत्रोक्तमिति शङ्कनीयम्। त [तत्र हि] इह देवताया अधिष्ठातृत्वं न प्रतीयते, किन्तु वागादिभाव एव। न च चेतनस्याचेतनभावानुपपत्तेरधिष्ठातृत्वमेवेति वाच्यम्। अचेतनस्यावयवादेरचेतनप्राणादिभावोपपत्तेरित्यभिप्रायः। **अपि चेति**। देवताः चक्षुरादिजनितकर्मफलसंबन्धिन्यः करणाभिमानेन प्रवर्तकत्वात् जीववदित्यर्थः। ननूभयोर्भोक्तृत्वं भविष्यतीत्याशङ्क्य विरुद्धाभिप्रायानेकाधिष्ठिततया शरीरस्य गमनाद्यसंभवप्रसङ्गाच्छारीरस्य भोक्तृत्वं स्यादित्याह— **शारीरस्येति**। [न च]'न ह वै देवान् पापं गच्छती'त्यादिना देवताया भोक्तृत्वं निरस्तमिति वाच्यम्। यतो देवतायाः कर्माधिकाराभावेन तत्फलभोक्तृत्वाभावस्तत्रोक्तो, नतु भोक्तृत्वमात्राभावः। पुण्ये फलं देवा उपभुञ्जते न पापफलमित्येतावन्मात्रस्यैव तत्रोक्तत्वादित्यर्थः। ननु तद्भाव एव प्रतीयते, न तदधिष्ठातृत्वमिति; न, चेतनानां तद्भावस्यानुपपत्तेरधिष्ठातृत्वमेवेत्याह— **अग्नेश्चायमिति**। नन्वचेतनानामेव प्रवेश इत्युक्तमिति; मैवम्, प्रमाणाभावात्। अथ तैजसत्वाद्वाक्चक्षुषोरन्येषां च भौतिकत्वादग्न्यादीनां वागादिभाव उपपन्न इति; मैवम्; तथा सत्यग्न्यादित्यादिशब्दानां पौनरुक्त्यापातात्। अथाग्न्यादित्यादिव्यक्तीनां

### *न्यायनिर्णयः*

ब्रह्मणि समन्वयसाधनात् पादादिसंगतिः। पूर्वपक्षे श्रुत्योर्विरोधादुक्तसमन्वयासिद्धिः। सिद्धान्ते तदविरोधात् तत्सिद्धिः। केवलव्यतिरेकाभावाद्देवताया नाधिष्ठातृत्वमिति पूर्वपक्षयति— **तत्रेति**। न च दृष्टकारणक्लृप्तावन्वयव्यतिरेकापेक्षायामपि देवतायाः श्रुतेरधिष्ठातृत्वोक्तेर्न तदपेक्षेति वाच्यम्, देवतायास्तत्राधिष्ठातृत्वादृष्टेर्वागादिभावस्यैव भानात्। न च चेतनस्याचेतनभावासिद्धेरधिष्ठातृत्वमेवेति युक्तम्, अचेतनस्याग्न्यादेरचेतनवागादिभावसिद्धेरिति भावः। इतश्च स्वमहिम्नैव प्राणानां प्रवृत्तिरित्याह— **अपि चेति**। देवताश्चक्षुरादिजन्यकर्मतत्फलयोगिन्यश्चक्षुराद्यभिमानेन प्रवर्तकत्वाज्जीववदित्यनुमित्या तदेव स्फुटयति— **देवतेति**। सिद्धसाध्यत्वमाशङ्क्य विरोधाभिप्रायानेकाधिष्ठिततया शरीरस्य गमनाद्यसंभवापत्तेः शारीरस्य भोक्तृत्वं न स्यादित्याह— **शारीरस्येति**। 'न ह वै देवान् पापं गच्छति' इत्यादिना देवताया भोक्तृत्वं निरस्तमित्याशङ्क्य पुण्यफलमेव देवता भुञ्जते न पापफलमित्येतावन्मात्रस्य तत्रेष्टत्वान्नैवमिति मत्वोपसंहरति— **अत इति**। पूर्वपक्षमनूद्य सिद्धान्तयति— **एवमिति**। तत्र पूर्वपक्षनिषेधं विभजते— **तुशब्देनेति**। उत्तरपक्षप्रतिज्ञां प्रकटयति— **ज्योतिरादिभिरिति**। हेतुमवतार्य विवृणोति— **हेतुं चेति**। तद्भाव एवात्र भाति, न च तदधिष्ठातृत्वमित्याशङ्क्य चेतनानामचेतनत्वासिद्धेरधिष्ठातृत्वमेवात्रेष्टमित्याह— **अग्नेश्चेति**। अधिष्ठानाधिष्ठेयत्वं हित्वोपादानोपादेयत्वमुपेत्याग्न्यादीनामचेतनानामेव वागादिभावेन मुखादिषु प्रवेशः स्यादित्याशङ्क्याह— **न हीति**। वाक्चक्षुषोस्तैजसत्वेन तेजोमात्रत्वे सत्यग्न्यादित्यशब्दयोरैकार्थ्येन

**देवतासंबन्धं प्रत्याख्यायाग्नेर्वाचि मुखे वा कश्चिद् विशेषसंबन्धो दृश्यते। तथा 'वायुः प्राणो भूत्वा नासिके प्राविशत्' (ऐ.उ. २।४) इत्येवमाद्यपि योजयितव्यम्। तथाऽन्यत्रापि 'वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च' (छा.उ. ३।१८।३) इत्येवमादिना वागादीनामग्न्यादिज्योतिष्ट्वादिवचनेनैतमेवार्थं द्रढयति। 'स वै वाचमेव प्रथममात्यवहत् सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्' (बृ.उ. १।३।१२) इति चैवमादिना वागादीनामग्न्यादिभावापत्तिवचनेनैतमेवार्थं द्योतयति। सर्वत्र चाध्यात्माधिदैवतविभागेन वागाद्यग्न्याद्यनुक्रमणमनयैव प्रत्यासत्त्या भवति। स्मृतावपि- 'वागध्यात्ममिति प्राहुर्ब्राह्मणास्तत्त्वदर्शिनः। वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम्।' (म.भा. शान्ति. ३१३।५) इत्यादिना वागादीनामग्न्यादिदेवताधिष्ठितत्वं सप्रपञ्चं दर्शितम्। यदुक्तं स्वकार्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति। तदयुक्तम्। शक्तानामपि शकटादीनामनडुदाद्यधिष्ठितानां प्रवृत्तिदर्शनात्। उभयथोपपत्तौ चागमाद् देवताधिष्ठितत्वमेव निश्चीयते।।१४।।**

**यदप्युक्तं देवतानामेवाधिष्ठात्रीणां भोक्तृत्वप्रसङ्गो न शारीरस्येति; तत् परिह्रियते-**

### *प्रकटार्थविवरणम्*

व्याख्यानमन्यत्राप्यतिदिशति— **तथा वायुरिति**। घ्राणस्य पार्थिवत्वात् न साक्षाद्वायोस्तद्भावः संभवति; ततोऽत्राप्यधिष्ठातृत्वमेव विवक्षितमित्यर्थः। लिङ्गान्तरमाह— **स वै वाचमेवेति**। स प्राणः प्रथमां प्रधानाम् उद्ज्ञाने[१] वाचमेवात्यवहत् प्रापयत् स्वरूपं मृत्युमोक्षणेन; सा मृत्युं पाप्मानं यदाऽतीत्यामुच्यत मोचिता प्राणज्ञानेन, तदा सोऽग्निरभवत् इति वाचोऽग्निभावः प्रतीयते, स मुख्यो न संभवति, कारणादन्यत्र कार्यस्य लयानुपपत्तेः। तस्माद्वागिति वागभिमानिनी देवता तदभिमानं हित्वा केवलाग्न्यभिमानिन्यभवदित्यर्थः। किं च संवर्गविद्यादिषु अध्यात्मं वागादयः, अधिदैवमग्न्यादयः पठ्यन्ते। तदप्यधिष्ठातृत्वाधिष्ठेयत्वसम्बन्धेनैवेत्याह— **सर्वत्र चेति**। पूर्वपक्षबीजमुन्मूलयति— **यदुक्तमित्यादिना**। ननु शकटादीनां यद्यपि बलीवर्दाद्यधिष्ठितानां प्रवृत्तिर्दृष्टा, तथापि क्षीरादीनामनधिष्ठितानामपि दध्यादिप्रवृत्तिर्दृष्टा; उभयथा संभवे कथं निर्णय इत्याशङ्क्याह— **उभयथोपपत्तौ चेति**।

पूर्ववाद्युक्तमुपपत्त्यन्तरं निराकर्तुम् उत्तरसूत्रमवतारयति— **यदप्युक्तमित्यादिना**।

### *भाष्यभावप्रकाशिका*

कारणत्वान्न दोषः मैवम्; चक्षुरादीनामादित्यमण्डलादिव्यतिरिक्तस्थले कार्यानुपलब्धिप्रसंगादित्यभिप्रेत्याह— **न हि देवतेति**। शक्तानामपि प्रवृत्तिरयोगात् दृश्यते क्वचित्.....कथमत्र निर्णय इत्याशंक्याह— **उभयथोपपत्ताविति**। आगमबलाद्देवताधिष्ठितानां प्रवृत्तिरिति निश्चीयत इत्यर्थः।

### *न्यायनिर्णयः*

पौनरुक्त्यात्, व्यक्तिभेदेन कारणभेदे चक्षुरादेरादित्यमण्डलादिव्यतिरिक्तस्थल [२]कार्यानुपलब्धिप्रसङ्गाद् देवतानां चेतनानामेवाग्न्यादीनामधिष्ठातृत्वेन संबन्धो वागादिषु विवक्षितो न संबन्धान्तरं सदप्यत्राभिप्रेतमित्यर्थः। 'अग्निर्वाग्भूत्वे'त्याद्युक्तमन्यत्राप्यतिदिशति— **तथेति**। अग्न्यादीनामधिष्ठातृत्वं वागादीनामधिष्ठेयतेत्यत्रैव हेत्वन्तरमाह— **तथेति**। तत्रैव लिङ्गान्तरमाह— **स वा इति**। स प्राणो वाचं प्रथमामुद्गीथकर्मणि प्रधानां मृत्युमतीत्यावहत् प्रापयत्। किं प्रापितवानित्युच्यते। यदा हि मुक्ता तदा सा पूर्वमप्यग्निरेव सती मृत्युवियोगे प्रतिबन्धाभावादग्निरेवाभवदित्यर्थः। इतश्चाग्न्यादीनां वागादीनां चाधिष्ठानाधिष्ठेयत्वमित्याह— **सर्वत्रेति**। उक्तेऽर्थे स्मृतिमपि संवादयति— **स्मृताविति**। पूर्वमक्षबीजमनुभाषते— **यदिति**। प्राणानां स्वकार्यशक्तियोगेऽपि चेतनाधिष्ठितानामेव प्रवृत्तिरित्याह— **तदिति**। शकटादीनां बलीवर्दाद्यधिष्ठितानां प्रवृत्तिर्दृष्टा, क्षीरादीनामनधिष्ठितानामपि दध्यादिप्रवृत्तिसिद्धिः, तथा चोभयथा संभवे कथं निर्णयः, तत्राह— **उभयथेति**।।१४।।

उक्तं युक्त्यन्तरं निराकर्तुं सूत्रमवतारयति— **यदपीत्यादिना**।

---

१. 'उद्गाने' इति भाव्यम्। २. उपादाने कार्यस्य स्थितिनियमात् चक्षुरादिकमादित्यमण्डलादावेव स्यादिति भावः।

## प्राणवता शब्दात्।।१५।।

**सतीष्वपि प्राणानामधिष्ठात्रीषु देवतासु प्राणवता कार्यकरणसंघातस्वामिना शारीरेणैवैषां प्राणानां संबन्धः श्रुतेरवगम्यते। तथा हि श्रुतिः– 'अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्' (छा.उ. ८।१२।४) इत्येवंजातीयका शारीरेणैव प्राणानां संबन्धं श्रावयति। अपि चानेकत्वात् प्रतिकरणमधिष्ठात्रीणां देवतानां न भोक्तृत्वमस्मिञ्शरीरेऽवकल्पते। एको ह्ययमस्मिञ्शरीरे शारीरो भोक्ता प्रतिसंधानादिसंभवादवगम्यते।।१५।।**

## तस्य च नित्यत्वात्।।१६।।

**तस्य च शारीरस्यास्मिञ्शरीरे भोक्तृत्वेन नित्यत्वम्, पुण्यपापोपलेपसंभवात् सुखदुःखोपभोगसंभवाच्च; न देवतानाम्। ता हि परस्मिन्नैश्वर्ये पदेऽवतिष्ठमाना न हीनेऽस्मिञ्शरीरे भोक्तृत्वं प्रतिलब्धुमर्हन्ति। श्रुतिश्च भवति– 'पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति' (बृ.उ. १।५।२०) इति। शारीरेणैव च नित्यः प्राणानां संबन्धः, उत्क्रान्त्यादिषु तदनुवृत्तिदर्शनात्– 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं**

### *प्रकटार्थविवरणम्*

**प्राणवता शब्दात्।** यत्र यस्मिन् काले देहच्छिद्रमेव एतदाकाशमनुविषण्णमनुगतं चक्षुर्भवति, तत्र स पुरुषश्चाक्षुषः चक्षुरभिमानी सन् द्रष्टा भवति। तस्य च दर्शनाय साधनं चक्षुरित्यर्थः। 'योऽहं रूपमद्राक्षं सोऽहं शृणोमि' इत्येकस्यैव प्रत्यभिज्ञानात्, बहूनां च भोक्तृत्वे विरुद्धदिक्क्रियस्य शरीरस्य भेदप्रसङ्गान्न बहूनां भोक्तृत्वं युक्तमित्याह— **अपि चानेकत्वादिति।**

**तस्य च नित्यत्वात्।** किं च स्वकर्मोपार्जितशरीरे जीवस्य भोक्तृत्वस्य प्रतिनियतत्वादिनियमेन कदाचिद् देवतानां भोक्तृत्वम्, कदाचिज्जीवस्येत्यपि नाशङ्कनीयमित्याह— **तस्य च नित्यत्वादिति।** प्रकारान्तरेण व्याचष्टे— **शारीरेणैव च नित्य**

### *भाष्यभावप्रकाशिका*

**प्राणवतेति।** सूत्रं व्याचष्टे— **कार्यकरणेति। प्राणानां संबन्धः श्रुतेरिति।** उपलब्धिसाधकत्वेन संबन्धो जीवेनैव न तु देवताभिरित्यर्थः। न देवता एत....नि....कर्मतत्फलसंबन्धिन्यः एतच्चक्षुरादिसाधनजन्यरूपाद्युपलब्ध्यनाश्रयत्वात् पुरुषान्तरवदित्यनुमानमत्र द्रष्टव्यम्। भोक्तुरेकस्यैव प्रत्यभिज्ञाबलेनावगमादनेकेषां भोक्तृत्वमनुपपन्नमित्याह— **अपि चानेकत्वादिति।**

### *न्यायनिर्णयः*

सूत्रं व्याचष्टे— **सतीष्विति। शारीरेणैव** भोक्त्रेति शेषः। प्राणानां भोगसाधनत्वेनेति वक्तव्यम्। संबन्धः स्वस्वामिभावः। तामेव श्रुतिमाह— **तथा हीति।** देहे प्राणप्रवेशानन्तर्यमथशब्दार्थः। यत्र गोलकगतकृष्णसारे छिद्रमाकाशमनुविषण्णमनुगतं चक्षुस्तत्र स आत्मा चक्षुषि भवश्चाक्षुषस्तस्य दर्शनाय चक्षुर्न चैतन्यायेति यावत्। अथशब्दोऽप्यर्थः। दर्शनाद्यर्थं चक्षुराद्यपेक्षायामपि जिघ्राणीति संकल्पं स्वत एव यो वेद स आत्मा, तस्य गन्धज्ञानाय घ्राणमिति द्वितीयवाक्यार्थः। विमता देवता नैतच्चक्षुरादिजन्यधर्मतत्फलयोगिन्यः, एतच्चक्षुरादिसाधनोत्थरूपादिज्ञानानाश्रयत्वात्, पुरुषान्तरवदिति मत्वा श्रुतेस्तात्पर्यमाह— **शारीरेणेति।** इतश्चास्मिन् देहे देवतानां न भोक्तृतेत्याह— **अपि चेति।** अनेकत्वेऽपि तासामत्र भोक्तृत्वे का क्षतिः, तत्राह— **एको हीति।** योऽहं रूपमद्राक्षं सोऽहं शृणोमीत्येकस्यैव प्रत्यभिज्ञानं प्रतिसंधानम्। बहूनां भोक्तृत्वे विरुद्धक्रियस्य शरीरस्योन्मथनमादिशब्दार्थः।।१५।।

कदाचिद् देवतानामत्र भोक्तृत्वं कदाचिज्जीवस्येत्यवस्थां[१]माशङ्क्याह— **तस्येति।** स्वकर्मार्जिते देहे जीवस्य भोक्तृतानियमान्नैवमित्यर्थः। सूत्रार्थं विवृणोति— **तस्येत्यादिना।** न देवतानामत्र भोक्तृतेत्यत्र हेतुमाह— **ता हीति।** देवतानामिह देहे भोगाभावे श्रुतिमप्यनुकूलयति— **श्रुतिश्चेति।** सूत्रव्याख्यान्तरमाह— **शारीरेणेति।** उत्क्रमणादिषु जीवस्य प्राणाव्यभिचारात् तस्यैव प्राणस्वामित्वं, देवतानां तु

१. 'अव्यवस्थाम्' इति पाठः स्यात्।

**सर्वे प्राणा अनूत्क्रामन्ति' (बृ.उ. ४।४।२) इत्यादिश्रुतिभ्यः। तस्मात् सतीष्वपि करणानां नियन्त्रीषु देवतासु न शारीरस्य भोक्तृत्वमपगच्छति। करणपक्षस्यैव हि देवताः, न भोक्तृपक्षस्येति।।१६।।**

।।इति सप्तमं ज्योतिराद्यधिकरणम्।।

**८।।इन्द्रियाधिकरणम्।।सू. १७-१९।।**

## [1]त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्।।१७।।

**मुख्यश्चैक इतरे चैकादश प्राणा अनुक्रान्ताः। तत्रेदमपरं संदिह्यते— किं मुख्यस्यैव प्राणस्य वृत्तिभेदा इतरे प्राणाः, आहोस्वित् तत्त्वान्तराणीति। किं तावत् प्राप्तम्? मुख्यस्यैवेतरे वृत्तिभेदा इति। कुतः? श्रुतेः। तथाहि श्रुतिर्मुख्यमितरांश्च प्राणान् संनिधाप्य मुख्यात्मतामितरेषां ख्यापयति— 'हन्तास्यैव सर्वे रूपमसामेति**

### *शारीरकन्यायसंग्रहः*

**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्।।१७।। भेदश्रुतेः।।१८।। वैलक्षण्याच्च।।१९।।** "त एतस्यैव सर्वे रूपमभवन्" इति वाक्यात् "अत एतेनाख्यायन्ते प्राणाः" इति प्राणश्रुतेश्च इन्द्रियाणां प्राणमात्रत्वे प्राप्ते प्राणसंवादादिगतैः बहुभिः भेदलिङ्गैः प्राणादर्थान्तरत्वे सति इन्द्रियाणां वाक्यं बाध्यते। प्राणश्रुतिश्च नेन्द्रियाणां प्राणत्वविधिपरा, किन्तु इन्द्रियाणां पृथक् प्राणसंज्ञाविधिपरा इत्यन्यपरा श्रुतिश्च बहुभिः लिङ्गैः बाध्येत्युक्तम्।

### *प्रकटार्थविवरणम्*

**इति**। उत्क्रमणादिषु शारीरस्य प्राणसंबन्धाव्यभिचारात् तस्यैव प्राणस्वामित्वम्, देवतानां तु परस्वामिरथसारथिवदधिष्ठातृत्वमात्रमिति भावः। इति सप्तमं ज्योतिराद्यधिकरणम्।

**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्**। उक्तमनूद्य भेदाभेदश्रुतिद्वयदर्शनात् सन्देहमाह— **मुख्यश्चैक इत्यादिना**। पूर्वपक्षं रचयति— **किं तावदित्यादिना**। हन्तेदानीमस्यैव मुख्यस्यैव सर्वे वयं रूपमसाम भवामेत्याशिषं कृत्वा ते वागादयः

### *भाष्यभावप्रकाशिका*

सूत्रस्य व्याख्यानान्तरमाह— **शारीरेणैव चेति**। आलोकवत् करणोपकारकत्वमेव देवानान्न तज्जन्यभोगाभिमानित्वमित्याह— **करणपक्षस्येति**। इति सप्तमं ज्योतिराद्यधिकरणम्।।

### *न्यायनिर्णयः*

परस्वामिकरथसारथिवदधिष्ठातृत्वमात्रमित्यर्थः। देवतानामत्राभोक्तृत्वे फलितमाह— **तस्मादिति**। हेतुमेव स्फोरयति— **करणेति**। आलोकवत् करणोपकारकत्वमेव देवतानाम्, न तज्जन्यभोगवत्त्वमित्यर्थः। तदेवं 'चक्षुषा हि रूपाणि' इत्यादिश्रुतेः 'आदित्यश्चक्षुर्भूत्वा' इत्यादिश्रुतेश्चादित्यादिदेवताधिष्ठितचक्षुरादिकारणे ब्रह्मणि समन्वयसिद्धिरित्युपसंहर्तुमितिशब्दः।।१७।। इति सप्तमं ज्योतिराद्यधिकरणम्।।

सत्स्विन्द्रियेषु तदधिष्ठातृचिन्ता, तान्येव प्राणवृत्तिव्यतिरेकेण नेति चोदिते प्रत्याह— **त इति**। उक्तमनूद्य भेदाभेदश्रुतिभ्यां संदेहमाह— **मुख्यश्चेति**। **तत्रेति**। एकादशप्राणेष्विति यावत्। पूर्ववदाम्नानबलेन पूर्वपक्षयति— **किमित्यादिना**। अत्र भेदाभेदश्रुत्योरविरोधेन तत्त्वान्तरे मूलकारणे ब्रह्मणि समन्वयोक्त्या पादादिसंगतिः। पूर्वपक्षे श्रुत्योर्विरोधात् तदसिद्धिः। सिद्धान्ते तदविरोधात् तत्सिद्धिः। श्रुतिमेवाह— **तथा हीति**। हन्तेदानीमस्यैव मुख्यप्राणस्य सर्वे वयं रूपमसाम भवामेत्याशिषं दत्त्वा ते वागादय एतस्यैव मुख्यस्य

---

१. अत्र भाष्यकारीयाधिकरणरचनायां तत्त्वान्तराणीति पदाध्याहारः, 'भेदश्रुते'रिति सूत्रस्य पौनरुक्त्यम्, 'तद्व्यपदेशात्' इति तत्पदेनाध्याहृतार्थपरामर्शश्चेति दोषत्रयं मत्वा प्राणस्येन्द्रियत्वनिरासपरतया प्रथमसूत्रं योजितं कैश्चित्। द्र. भामती. पृ. ६४८, तन्निराकरणं परिमले विस्तरेण कृतं द्रष्टव्यम्। पृ. ६४९।

**त एतस्यैव सर्वे रूपमभवन्' (बृ.उ. १।५।२१) इति। प्राणैकशब्दत्वाच्चैकत्वाध्यवसायः, इतरथा ह्यन्याय्यमनेकार्थत्वं प्राणशब्दस्य प्रसज्येत। एकत्र वा मुख्यस्येतरत्र लाक्षणिकत्वमापद्येत। तस्माद् यथैकस्यैव प्राणस्य प्राणाद्याः पञ्च वृत्तयः, एवं वागाद्या अप्येकादशेति। एवं प्राप्ते ब्रूमः– तत्त्वान्तराण्येव प्राणाद् वागादीनीति। कुतः? व्यपदेशभेदात्। कोऽयं व्यपदेशभेदः? ते प्रकृताः प्राणाः श्रेष्ठं वर्जयित्वाऽवशिष्टा एकादशेन्द्रियाणीत्युच्यन्ते। श्रुतावेवं व्यपदेशदर्शनात्। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मु.उ. २।१।३) इति ह्येवंजातीयकेषु प्रदेशेषु पृथक् प्राणो व्यपदिश्यते, पृथक्चेन्द्रियाणि। ननु मनसोऽप्येवं सति वर्जनमिन्द्रियत्वेन प्राणवत् स्यात्, 'मनः सर्वेन्द्रियाणि च' इति पृथग्व्यपदेशदर्शनात्। सत्यमेतत्। स्मृतौ त्वेकादशेन्द्रियाणीति मनोऽपीन्द्रियत्वेन श्रोत्रादिवत् संगृह्यते। प्राणस्य त्विन्द्रियत्वं न श्रुतौ स्मृतौ वा प्रसिद्धमस्ति। व्यपदेशभेदश्चायं तत्त्वभेदपक्ष उपपद्यते। तत्त्वैकत्वे तु स एवैकः सन् प्राण इन्द्रियव्यपदेशं**

### *प्रकटार्थविवरणम्*

एतस्यैव मुख्यस्य रूपं बभूवुरिति श्रुतेर्वचनमित्यर्थः। उपपत्त्यन्तरमाह— **प्राणैकशब्दत्वाच्चेति**। बहिरेव सिद्धान्तं प्रतिज्ञाय सूत्रं योजयति— **तत्त्वान्तराण्येवेत्यादिना**। भेदव्यपदेशस्यातिप्रसङ्गित्वं शङ्कते— **ननु मनसोऽपीति**। यद्यप्यापाततो मनसोऽनिन्द्रियत्वं प्राप्नोति तथापि सकलश्रुतिस्मृतिपर्यालोचनया मनसोऽपीन्द्रियत्वमेव; भेदव्यपदेशस्त्वन्तर्बहिर्भावापेक्ष इत्याह— **सत्यमेतदिति**। प्राणस्य तद्वैलक्षण्यमाह— **प्राणस्य त्विति**। यथेन्द्रियत्वे नास्ति मानं तथा भेदेऽपि नास्तीत्याशङ्क्याह— **व्यपदेशभेदश्चायमिति**।

### *भाष्यभावप्रकाशिका*

**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्**।। वाचकशब्दस्य चैकत्वादेकत्वमित्याह— **प्राणैकशब्दत्वादिति**। अक्षादिशब्दवत् त्वनेकार्थत्वं किं न स्यादिति, न, एवमेकस्यानेकार्थत्वमगतिरित्याह— **इतरथा हीति**। ननु भङ्गादिशब्दवदप्युपपद्यत इति; सत्यम्। तत्र भेदे प्रमाणाभावात् लक्षणा घटत इह न तदस्त्यतो न मुख्यसंभवे लक्षणा युक्तेत्याह— **एकत्र वेति**। ननु सिद्धो भेदः, 'एतस्माज्जायते प्राण' इत्यादौ; नैवं व्यपदेशभेदमात्रत्वा...धकत्वादन्यथाह मनसोऽप्यनिन्द्रियत्वं मनस्सर्वेन्द्रियाणीति भेदेन व्यपदेशात्। अथ मनस इन्द्रियत्वं स्यातावगम्यत इति ब्राह्मणपरिव्राजकन्यायेन पृथग्व्यपदेशः इहापि तर्ह्यभेद श्रु......इत्याह **तस्माद्यथैकस्यैवेति**। सूत्रं योजयन् व्यपदेशभेदं दर्शयति— **ते प्रकृता इति**। उत्सर्गतस्तथैवापवादकसद्भावात्तु तस्येन्द्रियत्वमित्याह— **सत्यमेतदिति**। नन्विहापि व्यपदेशभेदस्यौपचारिकत्वं युक्तमिति नैवमपवादाभावादित्याह— **व्यपदेशभेदश्चायमिति**।

### *न्यायनिर्णयः*

रूपं बभूवुरिति श्रुत्यर्थः। वाचकशब्दैक्याच्चैकत्वमित्याह— **प्राणेति**। अक्षादिशब्दवदनेकार्थत्वं प्राणशब्दस्य किं न स्यादित्याशङ्क्यागतिका हीयं गतिरित्याह— **इतरथेति**। गङ्गादिशब्दवदनेकार्थत्वमाशङ्क्य भेदे मानाभावान्मुख्यसंभवे कुतो लक्षणेत्याह— **एकत्रेति**। ननु 'एतस्माज्जायते प्राणः' इत्यादौ भेदवादाद् वागादीनां प्राणात्तत्त्वान्तरत्वम्। न च 'मनः सर्वेन्द्रियाणी'तिवद्भेदोक्तेर्भेदासाधकत्वम्, तदिन्द्रियत्वस्य स्मृतिसिद्धत्वाद् ब्राह्मणपरिव्राजकवद्भेदवादेऽपि प्रकृते पृथगुक्तेरेव तत्त्वान्तरत्वध्रौव्यादित्याशङ्क्यात्राप्यभेदश्रुतेरभेदस्यैव सिद्धेर्भेदोक्तिर्ब्राह्मणपरिव्राजकवदिति मत्वाऽऽह— **तस्मादिति**। पूर्वपक्षमनूद्य सूत्राद् बहिरेव प्रतिजानीते— **एवमिति**। तत्र प्रश्नपूर्वकं हेतुमाह— **कुत इति**। आकाङ्क्षापूर्वकं हेतुं विवृण्वन्नेव सूत्राक्षराणि योजयति— **क इत्यादिना**। व्यपदेशभेदं विशदयति— **एतस्मादिति**। उक्तव्यपदेशभेदस्यातिप्रसङ्गित्वं शङ्कते— **नन्विति**। **एवं सति** उक्तहेतुना वागादीनां मुख्यात्तत्त्वान्तरत्वे सतीति यावत्। उत्सर्गतो भेदव्यपदेशस्य तत्त्वान्तरस्य साधकत्वमङ्गीकरोति— **सत्यमिति**। कथं तर्हीन्द्रियत्वं मनसः सिद्धम्, तत्राह— **स्मृतौ त्विति**। श्रुतिस्मृतिभ्यामपवादाद् भेदव्यपदेशस्यौपचारिकत्वमित्यर्थः। प्राणस्यापि मनोवदिन्द्रियत्वं किं न स्यात्, तत्राह— **प्राणस्येति**। तत्रापि भेदवादस्यौपचारिकत्वमाशङ्क्यापवादाभावान्नेत्याह— **व्यपदेशेति**। उपपत्तिमेव व्यतिरेकेण स्फोरयति— **तत्त्वेति**। व्यपदेशभेदानुपपत्त्योक्तं भेदमुपसंहरति— **तस्मादिति**।।१७।।

**लभते न लभते चेति विप्रतिषिद्धम्। तस्मात् तत्त्वान्तरभूता मुख्यादितरे।।१७।।**

**कुतश्च तत्त्वान्तरभूताः?**

**भेदश्रुतेः।।१८।।**

**भेदेन वागादिभ्यः प्राणः सर्वत्र श्रूयते– 'ते ह वाचमूचुः' (बृ.उ. १।३।२) इत्युपक्रम्य वागादीनसुरपाप्म-विध्वस्तानुपन्यस्योपसंहृत्य वागादिप्रकरणम् 'अथ हेममासन्यं प्राणमूचुः' (बृ.उ. १।३।७) इत्यसुरविध्वंसिनो मुख्यस्य प्राणस्य पृथगुपक्रमणात्। तथा 'मनो वाचं प्राणं तान्यात्मनेऽकुरुत' (बृ. उ. १।५।३) इत्येवमाद्या अपि भेदश्रुतय उदाहर्तव्याः। तस्मादपि तत्त्वान्तरभूता मुख्यादितरे।।१८।।**

**कुतश्च तत्त्वान्तरभूताः?**

**वैलक्षण्याच्च।।१९।।**

**वैलक्षण्यं च भवति मुख्यस्येतरेषां च। सुप्तेषु वागादिषु मुख्य एको जागर्ति; स एव चैको**

***प्रकटार्थविवरणम्***

**भेदश्रुतेः।** पूर्वं संज्ञाभेदात् तत्त्वभेदो दर्शितः। इदानीं प्रकरणभेदाद् भेदमाह— **भेदश्रुतेरिति**। शास्त्रोद्भासिता [ ताः सात्त्विक्यः ] इन्द्रियवृत्तयो देवाः; स्वाभाविक्यस्तमआत्मिकाः इन्द्रियवृत्तयोऽसुराः; तयोः सदाऽन्योन्याभिभवरूपः सङ्ग्रामः प्रवृत्तः; तत्रासुरपराजयाय देवा औद्गात्रं कर्माऽऽरेभिरे। 'ते ह देवा वाचमूचुः त्वं न उद्गाय' इत्युपक्रम्य ''तान् हासुराः पाप्मना विविधुः'' इत्यादिना वागादीनसुरैः पाप्मना कल्याणासङ्गनिमित्तेन विद्धानुपन्यस्य वागादिप्रकरणमुपसंहृत्याह ''अथ ह'' इति। अथेति प्रकरणविच्छेदे। ह किल। इमम् आसि[1] भवमासन्यम्। मुख्यं प्राणमूचुः वागादयः ''त्वं न उद्गाय'' इति; तेन चोद्गाने प्रारब्धे पूर्ववत् वेधायोपक्रममात्रेण [ अ ]सुरा विदध्वंसिरे पाषाणक्षिप्तलोष्टवदिति असुरविध्वंसिनो मुख्यस्य प्राणस्य पृथगुपक्रमाद्भेद इत्यर्थः। त्रीण्यन्नानि प्रजापतिरात्मने कृतवानिति सङ्ख्याभेदश्रवणादपि भेद इत्याह— **तथा मन इति**।

**वैलक्षण्याच्च**। विरुद्धधर्माक्रान्तत्वादपि भेद इत्याह— **वैलक्षण्याच्चेति**।

***भाष्यभावप्रकाशिका***

पूर्वं व्यपदेशभेदान्यथानुपपत्त्या भेद उक्तः, इदानीं तु वागादिभ्यः प्राणस्य भेदप्रतिपादनादपि भेद इत्याह— **भेदश्रुतेरिति**।

***न्यायनिर्णयः***

तत्रैव हेत्वन्तरं पृच्छति— **कुत इति**। प्राणस्य वागादिभ्यः साक्षाद् भेदोक्तेरपि भेदधीरित्याह— **भेदेति**। सूत्रं विभजते— **भेदेनेति**। इन्द्रियवृत्तयः शास्त्रोद्भासिता देवाः, स्वाभाविक्यः ता एवासुराः, तयोः सदाऽन्योन्यमभिभवरूपः संग्रामस्तत्रासुरपराजयायौद्गात्रं कर्म देवाः प्रारेभिरे, ते च देवा वाचमूचुस्त्वं न उद्गायेत्युपक्रम्य तां वाचमसुराः पाप्मनाऽविध्यन्नित्यादिना वागादीनसुरैः पाप्मना कल्याणासङ्गनिमित्तेन विद्धानुक्त्वा वागादिप्रकरणमुपसंहृत्य अथेति प्रकरणविच्छेदेन प्रसिद्धमास्ये भवं मुख्यप्राणमूचुर्वागादयस्त्वं न उद्गायेत्युक्त्वा तेन चोद्गाने प्रारब्धे पूर्ववद्वेधायोपक्रममात्रेणाभेद्यपाषाणक्षिप्तलोष्टवदसुरा नष्टा इत्यसुरविध्वंसिनो मुख्यप्राणस्य पृथगुक्तेर्भेदसिद्धिरित्याह— **ते हेत्यादिना**। भेदे श्रुत्यन्तरमाह— **तथेति**। तानि त्रीण्यन्नान्यात्मने स्वार्थं प्रजापतिरकुरुत कृतवानिति यावत्। भेदश्रुतिसिद्धमुपसंहरति— **तस्मादिति**।।१८।।

तत्रैव हेत्वन्तरं प्रश्नपूर्वकमाह— **कुतश्चेति**। विरुद्धधर्मवत्त्वादपि भेदधीरिति सूत्रार्थः। तमेवार्थं विवृणोति— **वैलक्षण्यं**

---

१. 'आस्नि' इति पाठः स्यात्।

**मृत्युनाऽनाप्तः, आप्तास्त्वितरे; तस्यैव च स्थित्युत्क्रान्तिभ्यां देहधारणपतनहेतुत्वम्, नेन्द्रियाणाम्; विषयालोचनहेतुत्वं चेन्द्रियाणाम्, न प्राणस्येत्येवंजातीयको भूयाल्लँक्षणभेदः प्राणेन्द्रियाणाम्। तस्मादप्येषां तत्त्वान्तरभावसिद्धिः। यदुक्तम्- 'त एतस्यैव सर्वे रूपमभवन् (बृ.उ. १।५।२१) इति श्रुतेः प्राण एवेन्द्रियाणीति, तदयुक्तम्। तत्रापि पौर्वापर्यालोचनाद्भेदप्रतीतेः। तथाहि- 'वदिष्याम्येवाहमिति वाग् दध्रे' (बृ.उ. १।५।२१) इति वागादीनीन्द्रियाण्यनुक्रम्य 'तानि मृत्युः श्रमो भूत्वोपयेमे..... तस्माच्छ्राम्यत्येव वाक्' इति च श्रमरूपेण मृत्युना ग्रस्तत्वं वागादीनामभिधाय 'अथेममेव नाऽऽप्नोद्योऽयं मध्यमः प्राणः' (बृ.उ. १।५।२१) इति पृथक्प्राणं मृत्युनाऽनभिभूतं तमनुक्रामति। 'अयं वै नः श्रेष्ठः' (बृ.उ. १।५।२१) इति च श्रेष्ठतामस्यावधारयति। तस्मात् तदविरोधेन वागादिषु परिस्पन्दलाभस्य प्राणायत्तत्वं तद्रूपभवनं वागादीनामिति मन्तव्यम्, न तादात्म्यम्। अत एव च प्राणशब्दस्येन्द्रियेषु लाक्षणिकत्वसिद्धिः। तथा च श्रुतिः- 'त एतस्यैव सर्वे रूपमभवन्; तस्मादेत एतेनाख्यायन्ते प्राणाः' (बृ.उ. १।५।२१) इति मुख्यप्राणविषयस्यैव प्राणशब्दस्येन्द्रियेषु लाक्षणिकीं वृत्तिं दर्शयति। तस्मात् तत्त्वान्तराणि [1]प्राणादिन्द्रियाणीति।।१९।।**

।।इत्यष्टममिन्द्रियाधिकरणम्।।

### *प्रकटार्थविवरणम्*

अभेदश्रुतिमुद्भाव्य पराकरोति— **यदुक्तमित्यादिना**। दध्रे धारणाभिप्रायं चक्रे। बहुतरभेदलिङ्गविरोधात् वागादीनां प्राणरूपभवनं प्राणाधीनवृत्तिमात्रमित्युक्तम्। अत एव मुख्यप्राणात्मत्वासंभवात् लाक्षणिकत्वमप्यदोष इत्याह— **अत एवेति**। इत्यष्टममिन्द्रियाधिकरणम्।

### *भाष्यभावप्रकाशिका*

विरुद्धधर्मसंसर्गश्रुतेरपि भेद इत्याह— **सुप्तेष्विति**। अर्थक्रियाभेदाच्च भेद इत्याह— **तस्यैवेति**। का तर्ह्यभेदश्रुतेर्गतिरिति तामाह— **तस्मात्तदिति**। अयमिह न्यायः— एतस्यैव सर्वे रूपमभवन्निति वाक्यात्तस्मात् एत एतेनाख्यायन्ते प्राणा इति प्राणशब्दश्रुतेश्च इन्द्रियाणां प्राणवृत्तिमात्रत्वे प्राप्ते प्राण....दलिङ्गैर्बहुभिः प्राणादर्थान्तरत्वे च प्राप्ते सति, वाक्यं...प्राण शब्दश्रुतिश्च नेन्द्रियाणां प्राणत्वविधिपरा, किन्त्विन्द्रियाणां प्राणसंज्ञाविधिपरेत्यन्यपरा श्रुतिर्बहुभिर्लिङ्गैर्बाध्येतेति। यस्मादेवं प्राणस्येन्द्रियेभ्यो भेदः प्रामाणिकः अत एव प्राणशब्दस्य न तेषु मुख्यत्वसंभव इत्याह— **अत एव चेति**। श्रुतिपर्यालोचनातोऽपि प्राणशब्दस्य लाक्षणिकत्वमवगम्यत इत्याह— **तथा चेति**।

### *न्यायनिर्णयः*

**चेति**। किमिदं वैलक्षण्यम्, तदाह— **सुप्तेष्विति**। अर्थक्रियाकृतं वैलक्षण्यान्तरमाह— **तस्यैवेति**। लक्षणभेदकृतं फलमुपसंहरति— **तस्मादिति**। अभेदश्रुतेरुक्तमभेदमनुवदति— **यदिति**। अभेदे तस्यास्तात्पर्याभावान्नैवमित्याह— **तदिति**। अभेदश्रुतिः सप्तम्यर्थः। भेदप्रतीतिं प्रकटयति— **तथाहीति**। दध्रे धारणाभिप्रायं चक्रे। तस्मान्मृत्युना श्रमेणाक्रान्तत्वादिति यावत्। प्रकारान्तरेण भेदप्रतीतिमाह— **अयमिति**। अभेदश्रुतेस्तर्हि का गतिः, तामाह— **तस्मादिति**। 'एतस्यैव सर्वे रूपमभव'न्निति वाक्यात् 'तस्मादेत एतेनाख्यायन्ते प्राणा' इति च प्राणश्रुतेरिन्द्रियाणां प्राणवृत्तित्वे प्राप्ते प्राणसंवादादिगतैर्बहुभिर्भेदलिङ्गैरर्थान्तरत्वे च लिङ्गैर्बलीयोभिरबलं वाक्यं बाध्यते। श्रुतिरपीन्द्रियाणां प्राणसंज्ञार्थेत्यन्यपरा लिङ्गैर्बहुभिर्बाध्येति भावः। यत्तु प्राणशब्दस्य मुख्यत्वसंभवे न लक्षणेति, तत्राह— **अत इति**। प्राणस्येन्द्रियेभ्यो भेदो यस्मात् प्रामाणिकस्तस्मादेव तच्छब्दस्य तेषु मुख्यताऽयोगाद् युक्ता लक्षणेत्यर्थः। श्रुत्यालोचनातोऽपि प्राणशब्दस्य लक्षणासिद्धिरित्याह— **तथा चेति**। अभेदश्रुतेर्गतिमुक्त्वोपसंहरति— **तस्मादिति**। तदेवं भेदाभेदश्रुत्योरविरोधात् तत्त्वान्तरभूतवागादिमूलकारणे ब्रह्मणि समन्वयधीरित्युपसंहर्तुमितीत्युक्तम्।।१९।। इत्यष्टममिन्द्रियाधिकरणम्।।

१. 'प्राणाद् वागादीन्द्रियाणि' इति पा.।

## ९।।संज्ञामूर्तिक्लृप्त्यधिकरणम्।।सू. २०-२२।।

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्।।२०।।

**सत्प्रक्रियायां तेजोबन्नानां सृष्टिमभिधायोपदिश्यते– 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति। तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति' (छा.उ. ६।३।२)। तत्र संशयः– किं जीवकर्तृकमिदं नामरूपव्याकरणमाहोस्वित् परमेश्वरकर्तृकमिति। तत्र प्राप्तं तावज्जीवकर्तृकमेवेदं**

*शारीरकन्यायसंग्रहः*

**संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्।।२०।। मांसादि भौमं यथाशब्दमितरयोश्च।।२१।। वैशेष्यात्तु तद्वादस्तद्वादः।।२२।।** यद्यपि 'जीवेनेति' पदस्य 'व्याकरवाणि' इति प्रधानक्रियया संबन्धो युक्तः, न 'अनुप्रविश्य' इति गुणभूतक्रियया, तथापि यत्राकाङ्क्षासन्निधियोग्यत्वं तेन सम्बन्धो युक्तः इति न्यायेन नदीसमुद्रादिव्याकरणे योग्यताद्यभावात्, प्रवेशने च योग्यतादिभावात् जीवस्य प्रवेशनेन सम्बन्धः इति व्याकरणे सैन्यसङ्कलनवत् जीवलक्षणस्वतन्त्रकर्त्रन्तरव्यवधानाभावात् अन्याव्यवधानेन ब्रह्मकर्तृकं नामरूपव्याकरणमित्युक्तम्।

**इति भगवत्प्रकाशात्मविरचिते शारीरकन्यायसंग्रहे द्वितीयाध्यायस्य चतुर्थः पादः।।**

*प्रकटार्थविवरणम्*

**संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्।** एवं तावत्प्राणानां सृष्ट्यादिश्रुतिविप्रतिषेधं परिहृत्य एतेषां नामरूपव्याकरणमितरनामरूपव्याकरणान्तर्भूतमिति प्रासङ्गिकं प्राणवादे वाक्यान्तरं विचारयितुमुपक्रमते— **सत्प्रक्रियायामिति**। जीवेनेत्यस्य प्रवेशव्याकरणाभ्यां सम्बन्धानिरूपणात् संशयमाह— **तत्र संशय इति**। पूर्वपक्षमाह— **तत्र प्राप्तं तावदिति**। क्रियापदस्य प्राधान्यात् प्रधानेनैव

*भाष्यभावप्रकाशिका*

**संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्।।** विषयं दर्शयति— **सत्प्रक्रियायामिति**। 'सेयं देवते'त्यादिवाक्यस्यायमर्थः— ईक्षणप्रयोजनं यत्पूर्वोक्तं बहुभवनं तदद्यापि न निष्पन्नमिति पुनरीक्षां कृतवती सदाख्या देवता हन्तेदानीमहमिमा यथोक्तास्तेजोबन्नाख्यास्तिस्रो देवता अनेन पूर्वसृष्टावनुभूतेन सम्प्रति स्मरणेन सन्निधापितेन जीवेनात्मना बुद्ध्यादिभूतमात्रायामादर्श इव मुखमनुप्रविश्य नाम च रूपं चेदमस्य नामेदं च रूपमिति ते व्याकरवाणि विस्पष्टं करवाणि। तासां तिसृणां देवतानां त्रिवृतं तेजोबन्नात्मनां त्र्यात्मिकां

*न्यायनिर्णयः*

उत्पत्तिरुत्पादनेति व्यापारावुत्पद्यमानोत्पादकगतौ प्रसिद्धौ। तत्र जगदुत्पत्तिश्रुतिविरोधोऽतीतेन संदर्भेण निरस्तः। सम्प्रत्युत्पादनाविषयश्रुतिविरोधो निरस्यते। तत्रापि भूतसूक्ष्मोत्पादनं पारमेश्वरमेवेति श्रुतिष्वविप्रतिपन्नम्। भौतिकनिर्माणश्रुतिषु विप्रतिपत्तिरिति तन्निरासार्थमाह— **संज्ञेति**। नामरूपाभेदात् करणानां प्राणाभेदशङ्कानिरासप्रसङ्गेन नामरूपव्याकरणं किंकर्तृकमिति निरूपयतीति विशेषसंगतिं गृहीत्वाऽधिकरणस्य विषयमाह— **सदिति**। उपदेशमेव दर्शयति— **सेयमिति**। ईक्षणप्रयोजनं यद् बहुभवनमुक्तं तदद्यापि न सिद्धमिति पुनरीक्षां कृतवती सदाख्या देवतेत्यर्थः। ईक्षणप्रकारमभिनयति— **हन्तेति**। इदानीमहमिमा यथोक्तास्तेजोबन्नाख्यास्तिस्रो देवता व्यवहारापेक्षायामनेन पूर्वसृष्टावनुभूतेनाधुना स्मृतेन जीवेनाऽऽत्मना बुद्ध्यादिभूतमात्रायामादर्शे मुखवदनुप्रविश्य नाम च रूपं च ते व्याकरवाणि, इदमस्य नामेदं च रूपमिति स्पष्टं करवाणि, एवमीक्षित्वा पुनरपि देवता व्यवहारार्थमीक्षां चकारेत्याह— **तासामिति**। तिसृणां देवतानामेकैकां देवतां त्रिवृतं त्रिवृतं तेजोऽबन्नात्मना त्र्यात्मिकां त्र्यात्मिकां करवाणि। तथा च स्थूलभूतेषु व्यवहारसिद्धिरित्यर्थः। नामरूपव्याकरणं विषयीकृत्य 'अनेन जीवेने'त्यस्य व्याकरवाणीत्यनेन वाऽनुप्रविश्येत्यनेन वा संबन्धसंभावनया संदेहमाह— **तत्रेति**। भौतिकसृष्टिश्रुतिविरोधनिरासेन परस्मिन्नेव तत्कारणे ब्रह्मणि समन्वयसाधनात् पादादिसंगतिः। पूर्वपक्षे जीवस्यैव भौतिकसृष्टिकारणत्वात् तस्मिन्नेव समन्वयाद् ब्रह्मणि तदसिद्धिः। सिद्धान्ते परस्यैव तद्धेतुत्वात् तत्रैव तत्सिद्धिरित्यभिसंधाय

**नामरूपव्याकरणमिति। कुतः? 'अनेन जीवेनात्मना' इति विशेषणात्। यथा लोके चारेणाहं परसैन्यमनुप्रविश्य संकलयानीत्येवंजातीयके प्रयोगे चारकर्तृकमेव सत् सैन्यसंकलनं हेतुकर्तृत्वाद् राजाऽऽत्मन्यध्यारोपयति संकलयानीत्युत्तमपुरुषप्रयोगेण, एवं जीवकर्तृकमेव सन्नामरूपव्याकरणं हेतुकर्तृत्वाद् देवताऽऽत्मन्यध्यारोपयति व्याकरवाणीत्युत्तमपुरुषप्रयोगेण। अपि च डित्थडवित्थादिषु नामसु, घटशरावादिषु च रूपेषु जीवस्यैव व्याकर्तृत्वं दृष्टम्। तस्माज्जीवकर्तृकमेवेदं नामरूपव्याकरणमित्येवं प्राप्तेऽभिधत्ते– 'संज्ञामूर्तिक्लृप्तिस्तु' इति। तुशब्देन पक्षं व्यावर्तयति। संज्ञामूर्तिक्लृप्तिरिति नामरूपव्याक्रियेत्येतत्। त्रिवृत्कुर्वत इति परमेश्वरं लक्षयति, त्रिवृत्करणे तस्य निरपवादकर्तृत्वनिर्देशात्। येयं संज्ञाक्लृप्तिर्मूर्तिक्लृप्तिश्चाग्निरादित्यश्चन्द्रमा विद्युदिति, तथा कुशकाशपलाशादिषु पशुमृगमनुष्यादिषु च प्रत्याकृति प्रतिव्यक्ति चानेकप्रकारा, सा खलु परमेश्वरस्यैव तेजोबन्नानां निर्मातुः कृतिर्भवितुमर्हति। कुतः? उपदेशात्। तथाहि– 'सेयं देवतैक्षत' इत्युपक्रम्य 'व्याकरवाणि' इत्युत्तमपुरुषप्रयोगेण परस्यैव ब्रह्मणो व्याकर्तृत्वमिहोपदिश्यते।**

### *प्रकटार्थविवरणम्*

चेतरेषामन्वयात् जीवेनेत्यस्य व्याकरवाणीत्यनेन संबन्ध इति भावः। कथं तर्हि देवताविषय उत्तमपुरुषप्रयोग इत्याशङ्क्य औपचारिकत्वमाह— **यथा लोक इत्यादिना**। किं च प्रत्यक्षानुग्रहादपि जीवकर्तृत्वनिश्चय इत्याह— **अपि च डित्थेति**। सूत्रं पदशो विभजते— **तुशब्देनेत्यादिना**।

### *भाष्यभावप्रकाशिका*

त्र्यात्मिकामेकैकां देवतां करवाणीति। तत्रानेन जीवेनेति जीवपदस्य व्याकरवाणीति क्रियापदेन प्रधानेनैव संबध्यत इति पूर्ववादी मन्यते। ननु 'सेयं देवते'त्युपक्रम्य व्याकरवाणीत्युत्तमपुरुषव्यपदेशाद् देवताया व्याकर्तृत्वावगमात् कथं जीवकर्तृत्वमित्याशङ्क्य उपचाराद् व्यपदेश उपपद्यत इत्याह— **यथा लोक इति**। ननूपचारान्मुख्य एवाभ्युपगन्तव्य इति; [ मैवम् ]विशेषणस्य वैयर्थ्यात्, प्रवेशनकर्तृत्वं जीवस्य, नामरूपव्याकरणं तु ब्रह्मण इत्यङ्गीकारे समानकर्तृकताऽभावात् क्त्वाप्रत्ययविरोधश्च स्यादिति भावः। ननु नदीसमुद्रव्याकरणादौ जीवस्य योग्यत्वाभावात् ब्रह्मकर्तृत्वमित्याशंक्यान्यत्र जीवकर्तृकत्वदर्शनात्तत्रापि तथात्वमनुमीयतामित्याह— **अपि च सिद्धेति[डित्थेति]**।

उपसर्जनमुपसर्जनेन संबन्धमर्हति, किन्तु प्रधानेनैवेत्युक्तमित्याशंक्य नैवम् व्याकरवाणि ह्युत्तमपुरुषयोगस्यौपचारिकत्व-

### *न्यायनिर्णयः*

पूर्वपक्षमाह— **तत्रेत्यादिना**। जीवेनेत्यस्य प्रविश्येत्यनेन संबन्धात्र जीवस्य व्याकर्तृत्वमिति शङ्कते— **कुत इति**। क्रियापदस्य प्राधान्यात् तेनान्येषामन्वयाज्जीवेनेत्यस्य व्याकरवाणीत्यनेन संगतिरित्याह— **अनेनेति**। 'सेयं देवते'त्युपक्रम्य 'व्याकरवाणी' त्युत्तमपुरुषप्रयोगाद् देवताया व्याकर्तृत्वं न जीवस्येत्याशङ्क्योपचारादुत्तमपुरुषप्रयोगं दृष्टान्तेन दर्शयति— **यथेत्यादिना**। उपचारान्मुख्यग्रहणं युक्तमित्याशङ्क्य जीवेनेति विशेषणवैयर्थ्यान्मैवमिति मत्वा दार्ष्टान्तिकमाह— **एवमिति**। जीवस्य प्रवेष्टृत्वं ब्रह्मणो व्याकर्तृत्वमित्यङ्गीकारे समानकर्तृकत्वाभावात् क्त्वाप्रत्ययविरोधः स्यादिति भावः। नदीसमुद्रादिव्याकरणे जीवस्यायोग्यत्वाद् ब्रह्मणस्तत्र कर्तृतेत्याशङ्क्यानुमानमाह— **अपि चेति**। विप्रतिपन्नमिदमा परामृश्यते। भौतिकसृष्टिश्रुतिषु विरोधान्न सर्वकारणे ब्रह्मणि समन्वयसिद्धिरिति पूर्वपक्षमनूद्य सिद्धान्तयति— **एवमिति**। सूत्रं पदशो विभजते— **तुशब्देनेति**। पदार्थमुक्त्वा प्रतिज्ञावाक्यार्थं स्फुटयति— **येयमिति**। अधिदैवविषयमग्न्याद्युदाहरणम्। अधिभूतविषयं कुशादि। पश्चाद्यध्यात्मविषयमिति भेदः। न केवलं जात्युपाधावनेकप्रकारम्, किंतु व्यक्त्युपाधावपीत्याह— **प्रतीति**। कारणविषयविप्रतिषेधनिषेधायावधारणम्। तत्र सौत्रं हेतुं प्रश्नपूर्वकमादाय व्याचष्टे— **कुत इति**।

**ननु जीवेनेति विशेषणाज्जीवकर्तृकत्वं व्याकरणस्याध्यवसितम्। नैतदेवम्। जीवेनेत्येतदनुप्रविश्येत्यनेन संबध्यत आनन्तर्यात्, न व्याकरवाणीत्यनेन। तेन हि संबन्धे व्याकरवाणीत्ययं देवताविषय उत्तमपुरुष औपचारिकः कल्प्येत। न च गिरिनदीसमुद्रादिषु नानाविधेषु नामरूपेष्वनीश्वरस्य जीवस्य व्याकरणसामर्थ्यमस्ति। येष्वपि चास्ति सामर्थ्यं तेष्वपि परमेश्वरायत्तमेव तत्। न च जीवो नाम परमेश्वरादत्यन्तभिन्नश्चार इव राज्ञः, आत्मनेति विशेषणात्। उपाधिमात्रनिबन्धनत्वाच्च जीवभावस्य। तेन तत्कृतमपि नामरूपव्याकरणं परमेश्वरकृतमेव भवति। परमेश्वर एव च नामरूपयोर्व्याकर्तेति सर्वोपनिषत्सिद्धान्तः, 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता' (छा.उ. ८।१४।१) इत्यादिश्रुतिभ्यः। तस्मात् परमेश्वरस्यैव त्रिवृत्कुर्वतः कर्म नामरूपयोर्व्याकरणम्। त्रिवृत्करणपूर्वकमेवेदमिह नामरूपव्याकरणं विवक्ष्यते, प्रत्येकं नामरूपव्याकरणस्य तेजोबन्नोत्पत्तिवचनेनैवोक्तत्वात्।**

### *प्रकटार्थविवरणम्*

परोक्तमनुकीर्त्य पराकरोति— **ननु जीवेनेत्यादिना**। आकाङ्क्षासन्निधियोग्यतावशेन अन्वयो भवति। तत्र जीवेनेत्यस्य प्रविश्येत्यनेन सन्निधिः; अस्ति च सकलनामरूपव्याकरणेऽयोग्यता; अतो जीवस्य प्रवेशेनैव संबन्ध इति भावः। ननु समानकर्तृकयोः पूर्वकाले क्त्वास्मरणात् पूर्वकालीनं प्रवेशनं जीवकर्तृकं चेत् उत्तरं व्याकरणमपि तत्कृतं वक्तव्यमित्याशङ्क्याह— **न च जीवो नामेति**। स्मरणप्रामाण्यमभ्युपगम्य स्वरूपाभेदाभिप्रायेण जीवकर्तृकमपि व्याकरणं परमेश्वरकर्तृकमेवेत्युक्तम्; इदानीमेवंविधेऽर्थे स्मरणं प्रमाणमपि[१] भवतीत्याह— **परमेश्वर एव चेति**। एवं तावत् सूत्रं व्याख्यायेदानीमुत्सूत्रमेव त्रिवृत्करणनामरूपव्याकरणयोः पाठक्रमातिलङ्घनेन अर्थक्रममाह— **त्रिवृत्करणपूर्वकमेव चेति**। त्रिवृत्करणाभिधानं च छन्दोगश्रुत्यनुसारेणाह—

### *भाष्यभावप्रकाशिका*

प्रसङ्गादित्याह— **तेन हीति। न च गिरिनदीसमुद्रादिष्विति**। अन्यत्र नामरूपकर्तृत्वदर्शनादिभाव्य[दिहाप्य]नुमीयत इति यदवोचस्तदयुक्तमागमविरोधाद्योग्यानुपलब्धिविरोधाच्चेत्यर्थः। ननु कर्तृभेदेक्त्वाप्रत्ययो विरुध्यत इत्याह— **न च जीवो नामेति**। व्यपदेशभेदस्तर्हि कथमित्यत आह— **उपाधिमात्रेति**। जीवब्रह्मणोरेकतया जीवकर्तृकमपि ब्रह्मकर्तृकञ्चेत् तर्हीदमपि व्याकरणं जीवकर्तृकमेव सद् ब्रह्मकर्तृकं स्यादित्याशङ्क्य नैवम् ब्रह्मकर्तृत्वस्यैव वेदान्तसिद्धत्वादित्याह— **परमेश्वर एवेति**। ननु 'जन्माद्यस्य यत' इत्यत्रैव एतस्यार्थस्य सिद्धत्वात् पौनरुक्त्यमित्यत आह— **त्रिवृत्करणपूर्वकमिति**। अथवा नामरूपव्याकरणस्य भूतविषयस्य त्रिवृत्करणात् पूर्वमपि सम्भवात् त्रिवत्कुर्वतः कर्म नामरूपव्याकरणमिति कथमुच्यत इत्यत आह— **त्रिवृत्करणपूर्वकमिति**। भौतिकविषयमेतदित्यर्थः। किं तत् त्रिवृत्करणम्? किं वा नामरूपव्याकरणमित्येतद् यथाक्रमं दर्शयति— **तच्चेति**।

### *न्यायनिर्णयः*

परोक्तमनुवदति— **नन्विति**। आकाङ्क्षासंनिधियोग्यतावशेनान्वयाज्जीवेनेत्यस्य प्रविश्येत्यनेन संनिधानाज्जीवस्य च सर्वनामरूपव्याकरणे योग्यत्वाभावात् तस्य प्रवेशेनैव संबन्धो नान्येनेत्याह— **नैतदिति**। उपसर्जनस्योपसर्जनेनासंबन्धात् प्रधानेन क्रियापदेनैव जीवपदस्य संगतिरुक्तेत्याशङ्क्य व्याकरवाणीत्युत्तमपुरुषस्यौपचारिकत्वापत्तेर्मैवमित्याह— **तेनेति**। परोक्तमनुमानं योग्यानुपलब्धिविरोधेन निरस्यति— **न चेति**। आगमविरोधाच्चायुक्तमनुमानमित्याह— **येष्विति**। यत्तु कर्तृभेदे क्त्वाप्रत्ययविरोध इति, तत्राह— **न चेति**। कथं तर्हि व्यपदेशभेदः, तत्राह— **उपाधीति**। औपाधिके भेदे, वास्तवे चाभेदे फलितमाह— **तेनेति**। जीवब्रह्मणोरैक्याज्जीवकर्तृकमपि व्याकरणं ब्रह्मकर्तृकं चेत् तर्हि जीवकर्तृकमेव सद् ब्रह्मकर्तृकं किं न स्यादित्याशङ्क्य ब्रह्मकर्तृकत्वस्यैव वेदान्तेषु प्रसिद्धेर्मैवमित्याह— **परमेश्वर इति**। सूत्रार्थमुपसंहरति— **तस्मादिति**। भूतविषयनामरूपव्याकरणस्य त्रिवृत्करणात् पूर्वमपि संभवात् त्रिवृत्कुर्वतो नामरूपव्याकरणं कर्मेति कथमुक्तमित्याशङ्क्य भौतिकविषयमेतदिति विशेषणसिद्धिमाह— **त्रिवृदिति**। इहेति व्याकरणवाक्योक्तिः। किं तत् त्रिवृत्करणं यद् व्याकरणात्पूर्वभावीत्याशङ्क्याह— **तच्चेति**। यथा छान्दोग्ये भूतत्रयसृष्टि-

---

१. 'न भवति' इति पाठः स्यादिति भाति।

**तच्च त्रिवृत्करणमग्न्यादित्यचन्द्रविद्युत्सु श्रुतिर्दर्शयति– 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' (छा.उ. ६।४।१) इत्यादिना। तत्राग्निरितीदं रूपं व्याक्रियते। सति च रूपव्याकरणे विषयप्रतिलम्भादग्निरितीदं नाम व्याक्रियते। एवमेवादित्यचन्द्रविद्युत्स्वपि द्रष्टव्यम्। अनेन चाग्न्याद्युदाहरणेन भौमाम्भसतैजसेषु त्रिष्वपि द्रव्येष्वविशेषेण त्रिवृत्करणमुक्तं भवति। उपक्रमोपसंहारयोः साधारणत्वात्। तथा ह्यविशेषेणैवोपक्रमः– 'इमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति' (छा.उ. ६।३।४) इति। अविशेषेणैव चोपसंहारः– 'यदु रोहितमिवाभूदिति तेजसस्तद्रूपम्' इत्येवमादिः 'यद्वविज्ञातमिवाभूदित्येतासामेव देवतानां समासः' (छा.उ. ६।४।६,७) इत्येवमन्तः।।२०।।**

**तासां तिसृणां देवतानां बहिस्त्रिवृत्कृतानां सतीनामध्यात्ममपरं त्रिवृत्करणमुक्तम्– 'इमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति' (छा.उ. ६।४।७) इति। तदिदानीमाचार्यो यथाश्रुत्येवोपदर्शयत्याशङ्कितं**

### *प्रकटार्थविवरणम्*

**तच्च त्रिवृत्करणमिति**। तैत्तिरीयकपर्यालोचनया तु पञ्चानां भूतानां सृष्टेरुपपादितत्वात् पञ्चीकरणं द्रष्टव्यम्। तथा हि— मायाप्रविष्टं ब्रह्म सच्छब्दवाच्यं पञ्च भूतानि सूक्ष्माणि सृष्ट्वा तावता व्यवहारासिद्धेः तानि द्विधा विभज्य एकैकशो विभक्तं च भागं पुनश्चतुर्धा कृत्वा विभक्तेतरेषु निक्षिप्य पञ्चीकृतान्यकरोत्; पञ्चात्मकत्वाविशेषेऽपि कारणगुणस्यैव कार्येष्वभिव्यक्तेः वैपरीत्यादर्शनात् पूर्वपूर्वस्य सौक्ष्म्यं गुणापचयात्, उत्तरोत्तरस्य स्थौल्यं गुणोपचयान्न विरुद्ध्यते। तस्मात् पञ्चीकरणोपलक्षणार्था त्रिवृत्करणश्रुतिरिति द्रष्टव्यम्। इदानीं नामरूपव्याकरणे क्रममाह— **तत्राग्निरितीदमिति**। नन्वादित्यादीनां तैजसानामेव श्रुत्योदाहृतत्वात् न सर्वत्र त्रिवृत्करणं विवक्षितमित्याशङ्क्याह— **अनेन चेति**। इमास्तिस्रो देवताः इति तिसृणां देवतानामेतासां तेजोबन्नानामेकैका देवता त्रिवृत्त्वात्मिका [ त्रिवृत् त्र्यात्मिका ] भवतीत्यर्थः। यत्कार्ष्ण्यादिविशेषरूपेणाविज्ञातमेवाभूत् कपोतरूपादि, तिसृणामेव देवतानां समासः समुदायो द्रष्टव्य इत्यर्थः।

नन्वेकैकस्या[ : ] त्र्यात्मकत्वं त्रिवृच्छब्दार्थो न भवति, अध्यात्ममन्यथा त्रिवृच्छब्दार्थावधारणात्; अतो नोपक्रमोपसंहारसाधारण्येन सर्वं त्र्यात्मकमित्याशङ्क्याह— **तासां तिसृणामिति**। अध्यात्मं देहकार्यत्रयरूपेण वर्तमानत्रिवृत्करणमन्यदेवोक्तमित्येतत् सत्यम्, न तु पूर्वमपि, उदाहरणविरोधादिति भावः। आध्यात्मत्रिवृत्करणमन्यादृशमित्यत्रैव सूत्रमवतारयति— **तदिदानीमिति**।

### *भाष्यभावप्रकाशिका*

यस्य त्रिवृत्करणमवगम्यते तस्यैव तद्भवतु किमन्यस्यातिदेशेनेत्यत आह— **उपक्रमोपसंहारयोरिति**। समासः समुदायः।

अनन्तरसूत्रस्य सङ्गतिं दर्शयितुं त्रिवृत्करणान्तरे श्रुत्यन्तरमाह— **तासां तिसृणामिति**। **आशङ्कितं कञ्चिद्दोषमिति**।

### *न्यायनिर्णयः*

स्तैत्तिरीयश्रुत्यनुरोधाद् भूतपञ्चकविषयोक्ता, तथाऽत्रापि त्रिवृत्करणं पञ्चीकरणाभिप्रायं द्रष्टव्यम्, श्रुत्यन्तरे पञ्चानां भूतानां सृष्टेरुक्तत्वात्। किं पुनर्नामरूपव्याकरणं, तदाह— **तत्रेति**। अग्नावुक्तन्यायमतिदिशति— **एवमिति**। आदित्यादीनां तैजसानामेव श्रुत्योक्तेर्न सर्वत्र त्रिवृत्करणमित्याशङ्क्याह— **अनेनेति**। यस्य त्रिवृत्करणं गम्यते तस्यैवास्तु, किमतिदेशेनेत्याशङ्क्याह— **उपक्रमेति**। तिस्रस्तावदिमास्तेजोबन्नाख्या देवतास्तासामेकैका देवता त्रिवृत् त्रिवृत् त्र्यात्मिका त्र्यात्मिका भवतीत्युपक्रमार्थः। उपसंहारस्थावितिशब्दौ क्रमेण यच्छब्दाभ्यां संबध्येते। अविज्ञातं विशेषरूपेणादृष्टम्। इवकारावुभयत्र दृष्टरूपस्याभासत्वार्थौ। एतासां तिसृणामेव देवतानां समासः समुदाय इति यावत्।।२०।।

बाह्यं त्रिवृत्करणमुक्त्वाऽऽध्यात्मिकेऽस्मिन् मानं वदन्नुत्तरसूत्रसंगतिमाह— **तासामिति**। अध्यात्मं देहे त्रिवृत्करणमपरं कार्यत्रयरूपेण वर्तनमिति यावत्। याः खल्विमा देवतास्तिस्रो बहिस्त्रिवृत्कृता दर्शितास्तासामेकैका देवता पुरुषं शरीरं प्राप्य त्रिवृत् कार्यत्रयरूपेण त्र्यात्मिका त्र्यात्मिका भवतीत्यर्थः। तदित्याध्यात्मिकं त्रिवृत्करणमुच्यते। सर्वस्य त्रिवृत्कृतत्वाविशेषे कथं व्यवहारविशेषः

**कंचिद् दोषं परिहरिष्यन्–**

**मांसादि भौमं यथाशब्दमितरयोश्च।।२१।।**

**भूमेस्त्रिवृत्कृतायाः पुरुषेणोपभुज्यमानाया मांसादि कार्यं यथाशब्दं निष्पद्यते। तथाहि श्रुतिः– 'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः' (छा.उ. ६।५।१) इति। त्रिवृत्कृता भूमिरेवैषा व्रीहियवाद्यन्नरूपेणाद्यत इत्यभिप्रायः। तस्याश्च स्थविष्ठं रूपं पुरीषभावेन बहिर्निर्गच्छति; मध्यममध्यात्मं मांसं वर्धयति; अणिष्ठं तु मनः। एवमितरयोरप्तेजसोर्यथाशब्दं**

***प्रकटार्थविवरणम्***

**मांसादि भौमं यथाशब्दमितरयोश्च**। अणिष्ठं त्वन्नस्य रूपं मनो वर्धयति; अनेनान्ननिमित्तवृद्ध्यभिधानेन मनसो भौतिकत्वं सूत्रितम्। तेन नित्यं मनः, निरवयवद्रव्यत्वादिति **वैशेषिकप्रक्रिया, साङ्ख्यानां** चाहङ्कारिकत्वप्रक्रिया निरस्ता द्रष्टव्या। मनः परमाणुपरिमाणम्, [१]परविशेषगुणासमवायित्वे सति नित्यत्वात्, संप्रतिपन्नवदिति, [२]विशेष्यासिद्धिः। [३]द्व्यणुकसमवायित्वं चोपाधिः। मनो विभु, [४]सर्वदा रूपस्पर्शशून्यद्रव्यत्वात्, आत्मवदित्यत्रापि असिद्धिः, अनुद्भूतरूपस्पर्शत्वाभ्युपगमादिति। सूत्रभागं व्याख्याति— **एवमितरयोरपीति**। प्राणस्य वाय्ववस्थाभेदत्वं प्रागेव निर्धारितमित्यप्कार्यत्वमपामुपष्टम्भकत्वमात्रेण, ग्रीष्मे पानीयपानाभावप्रयुक्तया प्राणविपत्तिप्रसिद्धेः; तेजसो घृतादेर्वाचः स्पष्टतानिमित्तत्वात् तत्कार्यत्वाभिधानं भौतिकत्वोपलक्षणार्थम्। तथा हि— श्रोत्रमाकाशकार्यम्,

***भाष्यभावप्रकाशिका***

सर्वस्य त्रिवृत्कृतत्वाविशेषे अन्नम् आपः इत्यादिव्यवहारविशेषो न स्यादिति दोषमाशङ्क्योत्तरसूत्रेण परिहर्तुं त्रिवृत्करणलक्षणविषयोऽनेन प्रदर्श्यत इत्यर्थः। ननु वैशेषिकैर्मनसो नित्यत्वाभ्युपगमात् तस्यान्नमयत्वमनुपपन्नम्। तथा सांख्यैराहंकारिकत्वमभ्युपपन्नम्। वाङ्मनसोरन्नभागता चास्य मनसोऽन्नसम्बन्धलक्षणा अन्नोपयोगेन मनस्स्वास्थ्यदृष्टेर्वाचोऽपि वा भवेन तेजःसाम्यमेवेत्याशङ्क्य वा परिहारमाह— **मांसादीति**। वाङ्मनआदीति वक्तव्ये मांसाद्यभिधानं सिद्धेन सह साध्यस्य मनआदेर्दृष्टान्तलाभाय। यथा मांसादिभौममेवं वाङ्मनसे अपि तैजसभौमे इत्यर्थः। भूमेर्मांसादिभावः सूत्रकारेणोक्तस्तदयुक्तमोदनस्यैव तथात्वदर्शनादित्यत आह— **त्रिवृत्कृताभूमि** ....धनस्थितत्वात् प्राणस्य तत्कार्यत्वमुपचर्यते। श्रुत्यन्तरे वायुकार्यत्वावगमात्, इतरत्र त्वपवादाभावान्मुख्यमेव तत्कार्यत्वमिति द्रष्टव्यम्।

***न्यायनिर्णयः***

स्यादित्याशङ्क्याह— **आशङ्कितमिति**। उत्तरसूत्रेण शङ्कितं दोषमुद्भाव्य परिहरिष्यन्नादौ त्रिवृत्करणं विषयं दर्शयतीति योजना। ननु वैशेषिका मनसो नित्यत्वम्, सांख्या वाङ्मनसयोराहंकारिकत्वमाहुः, अन्नमयता च मनसोऽन्नसंबन्धाल्लक्षणार्था, तदुपयोगे तत्स्वास्थ्यात्; वाचोऽपि तेजोमयत्वं पाटवेन तेजःसाम्यमेव, तत्राह— **मांसादीति**। मनआदि भौमादीति वक्तव्ये मांसादिवचनं सिद्धेन सह साध्यस्य मनआदेर्दृष्टान्तार्थम्। यथा मांसादि भौममेवं वाङ्मनसे अपि तैजसभौमे शब्दवशाज्ज्ञेये इत्यर्थः। सूत्राक्षराणि व्याचष्टे— **भूमेरिति**। यथाशब्दमित्युक्तं विशदयति— **तथाहीति**। भूमेर्मांसादिभावः सूत्रितस्तदयुक्तमोदनस्यैव तथात्वदृष्टेरित्याशङ्क्याह— **त्रिवृदिति**। सूत्रतात्पर्यमुक्त्वा श्रुतितात्पर्यमाह— **तस्याश्चेति**। इतरयोश्चेति भागं व्याकरोति— **एवमिति**। तदेव कार्यमुदाहरति—

---

१. 'परविशेषगुणासमवायिसमवायित्वे सति नित्यत्वात्' इति वेदान्ततत्त्वालोके शुद्धः पाठः। असमवायि = असमवायिकारणम्। तथा च स्वभिन्नसमवेतविशेषगुणासमवायिकारणसमवायित्वं विशेषणार्थः। यत्र हेतुः स्थाप्यः स स्वपदार्थः। स्वं मनः, तद्भिन्नः आत्मा, तत्समवेतो विशेषगुणः ज्ञानादिः, तदसमवायिकारणम् आत्ममनःसंयोगः, तत्समवायित्वं मनसि विद्यत इति पक्षे हेतुसत्त्वम्। घटरूपादेरसमवायिकारणं कपालरूपादि, तत्समवायित्वस्य कपालादौ सत्त्वाद् व्यभिचारवारणाय विशेष्यम्। आकाशादौ तद्वारणाय विशेषणम्। तत्र स्वगतज्ञानाद्य-समवायिकारणसंयोगसमवायित्वस्य सत्त्वादात्मादौ तद्वारणाय परेति। घटाकाशसंयोगाद्यसमवायिकारणकपालाकाशसंयोगादिसमवायित्वमादाय आकाशादौ तद्वारणाय विशेषेति।

२. मनसो नित्यत्वस्यासिद्धत्वादिति भावः। ३. दृष्टान्ते पार्थिवादिपरमाणौ द्व्यणुकसमवायित्वं साध्यव्यापकम्। पक्षे मनसि द्रव्यारम्भकत्वानङ्गीकारात् तत् साधनाव्यापकम्। ४. आद्यक्षणावच्छिन्नघटे, पार्थिवादिपरमाणौ, गुणादौ च व्यभिचारवारणाय सर्वदेत्यादिदलानि।

**कार्यमवगन्तव्यम्। मूत्रं लोहितं प्राणश्चापां कार्यम्। अस्थि मज्जा वाक् तेजस इति।।२१।।**

**अत्राह– यदि सर्वमेव त्रिवृत्कृतं भूतभौतिकमविशेषश्रुतेः– 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति; किंकृतस्तर्ह्ययं विशेषव्यपदेशः 'इदं तेज इमा आप इदमन्नम्' इति, तथा 'अध्यात्ममिदमन्नस्याशितस्य कार्यं मांसादि; इदमपां पीतानां कार्यं लोहितादि; इदं तेजसोऽशितस्य कार्यमस्थ्यादि' इति? अत्रोच्यते–**

**वैशेष्यात्तु तद्वादस्तद्वादः।।२२।।**

### *प्रकटार्थविवरणम्*

शब्दादिषु शब्दस्यैव व्यञ्जकत्वात्, शब्दशब्दवत्; त्वक् वायवीयम्, स्पर्शस्यैव व्यञ्जकत्वात्, व्यजनवायुवत्; चक्षुः तैजसम्, रूपस्यैव व्यञ्जकत्वात्, प्रदीपवत्; रसनमाप्यम्, रसस्यैव व्यञ्जकत्वात्, आस्योदकवत्; घ्राणं पार्थिवम्, गन्धस्यैव व्यञ्जकत्वात्, हिङ्ग्वादिवत्, मनश्च सर्वाभिव्यक्तिसाधारणत्वात् सर्वारब्धम्; तथा वागिन्द्रियम् आकाशकार्यम्, शब्दाभिव्यक्तिसाधनत्वात्; पाणिर्वायवीयः, स्पर्शवत एव द्रव्यस्य ग्राहकत्वात्; पादौ तैजसौ, रूपवन्तं प्रत्येव धावनात्; पायुराप्यः स्निग्धत्वात्; उपस्थः पार्थिवः, गन्धविशेषवत्त्वात्। ननु भौतिकत्वाविशेषे कथं केषांचित् ज्ञानसाधनत्वम्, केषांचित् कर्मसाधनत्वमिति; तदुच्यते। सत्त्वरजस्तमोगुणवद् द्रव्यं तावन्माया; तत्र सत्त्वं ज्ञानशक्तिमत्; रजः प्रवृत्तिशक्तिमत्; तमः मोहशक्तिमत्; तत्कार्याणि च भूतानि तत्तच्छक्तिमन्ति कार्ये कारणशक्तेराविर्भावात्। तत्र सत्त्वप्रधानभूतविकारत्वाच्चक्षुरादीनि ज्ञानजननशक्तिमन्ति; रजःप्रधानभूतविकारत्वाद्वागादीनि क्रियासमर्थानि; मौढ्यप्रधानभूतविकारत्वात् प्रायेण मोहकाः स्थूला विषयाः; स्थौल्यं च पञ्चीकरणप्रक्रियया दर्शितमिति सर्वेषामेव भौतिकत्वे न दोषः क्वचित्।

यच्च **काणादा** मन्यन्ते— कर्णशष्कुल्यवच्छिन्नो नभोदेशः श्रोत्रम्, [१]अस्पर्शवद्द्रव्यारब्धस्य द्रव्यत्वा[द्रव्यस्या]नुपलम्भादिति, तदसत्; यथा निरवयवद्रव्यारब्धस्य द्रव्यस्य लोकेऽनुपलम्भेऽपि बलवन्मानादभ्युपगमः, तथाऽत्रापि संभवात्; किंच विवरस्य श्रोत्रत्वे बधिराभावप्रसङ्गः[२]। [३]सत्यपि शब्दसमवाये दृष्टवैकल्यादनुपलम्भाच्चानुभवज्ञानोदयो न भवेत्; "सर्वे प्राणा अनूत्क्रामन्ति" इति च श्रुतिर्विरुध्येत। अतः करणत्वाच्चक्षुरादिवच्छ्रोत्रस्यापि सावयवत्वादिसिद्धिः। न च वीचीसन्ताननन्यायावतारो दूरस्थशब्दानुभवात्;[४] [५]दिक्सम्बन्धानुपपत्तिस्तु श्रोत्रदेशोपलम्भे समाना। या चाप्राप्यकारीणीन्द्रियाणीति **सुगतानां** कल्पना साऽप्यसङ्गतैव। विमतं प्राप्यकारि, बाह्येन्द्रियत्वात्, त्वगिन्द्रियवत्। गोलकमात्रस्येन्द्रियत्वे च सर्पादीनां तद्विरहिणामनुपलम्भप्रसङ्गः; अत एव तच्छक्तिपक्षोऽप्यसङ्गतः। कल्पनालाघवात् तदाश्रयणे जीवस्यैव क्रमकार्यनेकशक्तिकल्पनं ततो लघीयः। तस्मात् आगमप्रामाण्यात् भौतिकानीन्द्रियाण्यभ्युपगन्तव्यानीत्यलम्।

"आशङ्कितं कंचिद्दोषं परिहरिष्यन्" इत्युक्तम्। तामाशङ्कामाह— **अत्राहेत्यादिना**। परिहारसूत्रमवतारयति— **अत्रोच्यत इति**।

### *भाष्यभावप्रकाशिका*

सर्वेषां त्र्यात्मकत्वेऽन्नादिशब्दवाच्यत्वं कथमिति चोदयति— **अत्राहेति**।

### *न्यायनिर्णयः*

**मूत्रमिति**। जलाधीनस्थितित्वात् तत्कार्यत्वं प्राणस्योपचर्यते, श्रुत्यन्तरे तस्य वायुकार्यत्वसिद्धेः। अन्यत्रापवादाभावान्मुख्यमेतत्कार्यत्वमिति विवेकः।।२१।।

अविशेषेण सर्वेषां त्र्यात्मकत्वे कथमन्नादिशब्दवाच्यतेति चोदयति— **अत्रेति**। बाह्ये व्यवहारविशेषासंभवमुक्त्वा देहेऽपि तदसंभवमाह— **तथेति**। उत्तरसूत्रमवतारयति— **अत्रेति**।

---

१. ननु घ्राणादीनां पार्थिवत्वादिवत् श्रोत्रस्य नाभसत्वं किं न स्यादित्यत आह—**अस्पर्शेति**। २. बधिरस्यापि कर्णविवरस्याक्षतत्वादिति भावः। ३. ननु शब्दोपलम्भकादृष्टविशिष्टस्यैव कर्णविवरस्य श्रोत्रत्वाङ्गीकारात् तादृशादृष्टविरहदशायां तद्वैकल्याद् बाधिर्योपपत्तिरित्याशङ्क्यं निराचष्टे—**सत्यपीति**। (द्र. प्रशस्तपादभाष्यम् पृ. ११३) 'सत्यपि शब्दसमवायेऽदृष्टवैकल्यादनुपलम्भश्चेदभावज्ञानोदयो न भवेत्' इति पाठः संभाव्यते। योग्यानुपलब्ध्यभावात् शब्दाभावप्रत्यक्षं न स्यादिति तदाशयः। ४. श्रोत्रदेशोत्पन्ने शब्दे दूरस्थत्वाभावादिति भावः। ५. 'प्राच्यां दिशि शब्दः' इत्यादिदिक्संबन्धप्रतीत्यनुपपत्तिरित्यर्थः।

**तुशब्देन चोदितं दोषमपनुदति। विशेषस्य भावो वैशेष्यम्। भूयस्त्वमिति यावत्। सत्यपि त्रिवृत्करणे क्वचित् कस्यचिद् भूतधातोर्भूयस्त्वमुपलभ्यते- अग्नेस्तेजोभूयस्त्वमुदकस्याब्भूयस्त्वं पृथिव्या अन्नभूयस्त्वम् इति। व्यवहारप्रसिद्ध्यर्थं चेदं त्रिवृत्करणम्। व्यवहारश्च त्रिवृत्कृतरज्जुवदेकत्वापत्तौ सत्यां न भेदेन भूतत्रयगोचरो लोकस्य प्रसिध्येत्। तस्मात् सत्यपि त्रिवृत्करणे वैशेष्यादेष तेजोबन्नविशेषवादो भूतभौतिकविषय उपपद्यते। तद्वादस्तद्वाद इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति।।२२।।**

।।इति नवमं संज्ञामूर्तिक्लृप्त्यधिकरणम्।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः।।४।।**

### *प्रकटार्थविवरणम्*

**वैशेष्यात्तु तद्वादस्तद्वादः**। न केवलमनुभवसिद्धं भूयस्त्वम्, त्रिवृत्करणप्रयोजनसिद्ध्यनुपपत्तिगम्यं चेत्याह— **व्यवहारप्रसिद्ध्यर्थं चेति**। द्विरुक्तेरर्थमाह— **तद्वाद इति**। इति नवमं संज्ञामूर्तिक्लृप्त्यधिकरणम्।

[१]श्रुति[ स्मृति ]न्यायविरोधौ न मतान्तरविरुद्धता।
श्रुतिविप्रतिषेधो वा वेदान्तार्थसमन्वये।।

।।इति श्रीमच्छारीरकमीमांसाभाष्यव्याख्याने प्रकटार्थे द्वितीयस्याध्यायस्य चतुर्थः पादः।।

### *भाष्यभावप्रकाशिका*

स्तुनिष्प्रयोजनत्वात्तिवृत्करणत्रिप्रतिपाद्य[२]....

।।इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुखमुनिविरचितायां भाष्यभावप्रकाशिकायां द्वितीयाध्यायस्य चतुर्थः पादः समाप्तः।।

### *न्यायनिर्णयः*

तदक्षराणि व्याचष्टे— **तुशब्देनेति**। भूयस्त्वं विवृणोति— **सत्यपीति**। दृष्टं भूयस्त्वमुदाहरति— **अग्नेरिति**। अफलत्वादप्रतिपाद्यं त्रिवृत्करणमित्याशङ्क्याह— **व्यवहारेति**। एकैकभूतगोचरत्वेनापि व्यवहारस्य सुकरत्वान्न तादर्थ्येन त्रिवृत्करणमित्याशङ्क्याह— **व्यवहारश्चेति**। केवलभूततन्मात्राणामिन्द्रियागोचरत्वात् तदर्थं तदुक्तिरित्यर्थः। उक्तमनूद्यावशिष्टं भागं व्याचष्टे— **तस्मादिति**। विरोधसमाधिमुपसंहरन् पदाभ्यासस्य तात्पर्यमाह— **तद्वाद इति**।।२२।।इति नवमं संज्ञामूर्तिक्लृप्त्यधिकरणम्।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृते शारीरकभाष्यन्यायनिर्णये द्वितीयाध्यायस्य चतुर्थः पादः।।४।।**

**।।इति लिङ्गशरीरश्रुतीनां विरोधपरिहाराख्यश्चतुर्थः पादः।।**

**।।इति श्रीमद्ब्रह्मसूत्रशांकरभाष्येऽविरोधाख्यो द्वितीयोऽध्यायः।।**

---

१. वेदान्तार्थसमन्वये स्मृतिन्यायविरोधौ, मतान्तरविरुद्धता, श्रुतिविप्रतिषेधो वा नेत्यन्वयः। अत्र क्रमेण द्वितीयाध्याये प्रथमस्य द्वितीयस्य च पादस्य तृतीयचतुर्थयोश्च पादयोरर्थाः संगृहीताः। २. अत्र ग्रन्थस्त्रुटितः।

# ब्रह्मसूत्रशाङ्करभाष्यम्

## अथ तृतीयोऽध्यायः।

## प्रथमः पादः

१।।तदन्तरप्रतिपत्त्यधिकरणम्।।सू. १-७।।

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्।।१।।**

**द्वितीयेऽध्याये स्मृतिन्यायविरोधो वेदान्तविहिते ब्रह्मदर्शने परिहृतः; परपक्षाणां चानपेक्षत्वं प्रपञ्चितम्;**

*शारीरकन्यायसंग्रहः*

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्।।१।। त्र्यात्मकत्वात्तु भूयस्त्वात्।।२।। प्राणगतेश्च।।३।। अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्।।४।। प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः।।५।। अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः।।६।। भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति।।७।।** "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति यदि आपः पुरुषवचसो भवन्ति इति क्रियापदेनाप्शब्दस्य संबन्धः, तथापि आहुतीनां होमद्रव्यापेक्षायां संनिधानात् आप एव पञ्चानामाहुतीनां होमद्रव्यतया संबध्यन्ते; ततश्चायं वाक्यार्थः संवृत्तः— अपां पञ्चभिराहुतिभिः हूयमानानां पञ्चम्यामाहुतौ पुरुषाकारेण परिणाम इति; तथा "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इत्युपसंहारवाक्यस्याप्ययमेवार्थः, वाक्यसाम्यात्; एवमुपक्रमोपसंहारयोः अपामेव पञ्चभिराहुतिभिः संबन्धे सिद्धे मध्यवर्तिश्रद्धासोमवृष्ट्यन्नरेतसामप्यपामेवावस्थाविशेषत्वोपपत्तौ द्रव्यभेदकल्पनाद्यनुपपत्तेः, द्युलोकाद्यधिकरणभेदादेव आहुतिभेदोपपत्तेश्च पूर्वापरमहावाक्यपर्यालोचनायाम् अप्शब्दवाच्यानां त्रयाणां भूतानां पञ्चसु स्थानेषु हूयमानानां पञ्चम्यामाहुतौ पुरुषाकारेण परिणामः वाक्यप्रमाणादवगतः; तथा प्रथमाहुतिपरिणामे सोमभावे पञ्चमाहुतिपरिणामे च गर्भेऽपां चेतनसंबन्धावगमलिङ्गात् नियमेन भूताधारप्राणपरिवृतस्य जीवस्य पञ्चसु स्थानेषु गमनलिङ्गाच्च अप्शब्दवाच्यभूतपरिवृतो जीवः पञ्चसु स्थानेषु रंहतीति वाक्यलिङ्गाभ्यां—न भूतोपादाने प्रयोजनमस्ति, सर्वत्र विद्यमानत्वात् इति न्यायानुगृहीतं तृणजलूकादिदृष्टान्तलिङ्गं बाधित्वा इति सिद्धम्।

*प्रकटार्थविवरणम्*

वृत्तवर्तिष्यमाणयोरध्याययोः हेतुहेतुमद्भावलक्षणसम्बन्धाभिधित्सया वृत्तं सङ्क्षेपतः सङ्कीर्तयति— **द्वितीयेऽध्याय इति।** शब्दात् परोक्षतया प्रतिपन्ने परमपुरुषार्थरूपे ब्रह्मणि सकलविरोधविधुरे चावधारिते तत्साक्षात्करणाय साधनजिज्ञासोल्लसति इति अविरोधसाधनाध्याययोः हेतुहेतुमद्भाव इति भावः। पूर्वाध्यायान्त्यपादेनोत्तराध्यायाद्यपादस्यावान्तरसम्बन्धाभिधानायावान्तरार्थभेदमाह—

*भाष्यभावप्रकाशिका*

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्।** द्वितीयतृतीययोरध्याययोर्हेतुहेतुमद्भावलक्षणं संबन्धं दर्शयितुं तदर्थसंक्षेपमित्याह— **द्वितीय इति।** निरपवादे ब्रह्मणि समन्वये स्थिते स्मृतिन्यायश्रुतिविरोधपरिहारेणानध्यवसायलक्षणाप्रामाण्याभावात् तार्तीयविचारावसरः स्यादिति हेतुहेतुमल्लक्षणः सम्बन्ध इति महासङ्गतिः। अनन्तरपादस्यावान्तरसंगतिं कथयितुं तदुपयोगिनं

*न्यायनिर्णयः*

जीवोपकरणभूतभौतिकजन्मादिनिरूपणानन्तरं तदुपहितजीवस्य संसारप्रकारं निरूपयितुं देहान्तरारम्भे भूतसूक्ष्मपरिष्वक्तस्यैव गमनमिति तावदाह— **तदन्तरेति।** हेतुहेतुमद्भावसंबन्धमध्याययोर्वक्तुं पूर्वाध्यायार्थं संक्षिपति— **द्वितीय इति।** ब्रह्मणि निरपवादे समन्वये स्मृतिन्यायश्रुतिविरोधनिरासेनानध्यवसायरूपाप्रामाण्याभावात् तार्तीयविचारावसरः स्यादिति हेतुहेतुमत्त्वलक्षणसंगतिरिति

**श्रुतिविप्रतिषेधश्च परिहृतः। तत्र च जीवव्यतिरिक्तानि तत्त्वानि जीवोपकरणानि ब्रह्मणो जायन्त इत्युक्तम्। अथेदानीमुपकरणोपहितस्य जीवस्य संसारगतिप्रकारस्तदवस्थान्तराणि [1]ब्रह्मसतत्त्वं विद्याभेदाभेदौ गुणोपसंहारानुपसंहारौ सम्यग्दर्शनात्पुरुषार्थसिद्धिः सम्यग्दर्शनोपायविधिप्रभेदो मुक्तिफलानियमश्चेत्येतदर्थजातं तृतीयेऽध्याये निरूपयिष्यते, प्रसङ्गागतं च किमप्यन्यत्। तत्र प्रथमे तावत् पादे पञ्चाग्निविद्यामाश्रित्य**

### *प्रकटार्थविवरणम्*

**तत्र चेति**। श्रुतिविप्रतिषेधपरिहारावसरे जीवस्य भोगसाधनानि प्राणादीनि भूतपञ्चकद्वारेण ब्रह्मणो जायन्त इत्युक्तम्; इदानीं तैरेवोपकरणैः उपहितस्य संसारप्रकारः चिन्त्यते तृतीयस्याद्यपादेन वैराग्याख्यसाधनसिद्धय इत्यर्थः। द्वितीयेन च पादेन संसारे विरक्तस्य मुमुक्षोः मोक्षसाधनापरोक्षवाक्यार्थज्ञानसाधनलक्ष्यपदार्थज्ञानाय तस्य जीवस्यावस्थान्तराणि ब्रह्मरूपं च निरूप्यत इत्यर्थः। तृतीयेन च पादेन निर्गुणब्रह्मवाक्यगतापुनरुक्तवादो[पदो]पसंहारसिद्धये मन्दाधिकारिणां सगुणोपासनैकरूप्यसिद्धये च सर्वशाखासु विद्या भिन्ना उताभिन्ना, गुणानामुपसंहारोऽस्ति नास्ति वा इति विचार्यत इत्यर्थः। चतुर्थे च पादे विरक्तस्य लक्ष्यपदार्थाभिज्ञस्य सकलशाखागतापुनरुक्तपदोपसंहारेणैकरूपवाक्यार्थाभिज्ञस्य यद् ज्ञानं जायते तावन्मात्रादेव पुरुषार्थसिद्धिरित्युच्यते; तथा सम्यग्ज्ञानोपायानां यज्ञादिविधीनां शमादिविधीनां च बहिरङ्गत्वान्तरङ्गत्वप्रभेदः प्रदर्श्यते शुद्धसत्त्वानां बहिरङ्गव्यपोहेनान्तरङ्गपरिग्रहायेत्यर्थः। तथा यस्मिन् जन्मनि ज्ञानसाधनानुष्ठानं तस्मिन्नेव जन्मनि ज्ञानोदयेन मोक्षो भवतीति न नियम इत्यपि प्रदर्श्यते जन्मान्तरीयसंस्कारस्यापि साधनत्वसिद्धय इत्यर्थः। **प्रसङ्गागतं चेति**। देहात्मत्व-निराकरणादित्यर्थः[दीत्यर्थः]। एवं तावत् सकलाध्यायार्थं संक्षेपतोऽभिधाय विभज्य प्रथमपादार्थमाह— **तत्र प्रथम इति**। पञ्चसु द्युपर्जन्यपृथिवीपुरुषयोषित्सु अग्निदृष्ट्योपासनं पञ्चाग्निविद्या; तामाश्रित्य संसारे पुण्यपापफलगतिप्रभेदश्चिन्त्यते वैराग्यसिद्ध्यर्थम्। बह्वायासं कर्म कृत्वाऽपि न क्वापि स्वातन्त्र्यं लभ्यते; ततोऽधिकं [ततो

### *भाष्यभावप्रकाशिका*

वृत्तमर्थं कथयति— **तत्र चेति**। पादशो विभज्याध्यायार्थं संक्षेपतो दर्शयति प्रतिपत्तिसौकर्यार्थम्— **अथेदानीमित्यादिना**। तत्र प्रथमपादस्यार्थं कथयति—**यथेति**। पदार्थज्ञानस्य वाक्यार्थज्ञानोपयोगित्वाद् द्वितीयपादेन तद्विचारः क्रियत इत्याह— **तदवस्थेति**। तृतीयपादस्यार्थं कथयति— **विद्याभेदेति**। चतुर्थपादस्यार्थं कथयति— **सम्यग्दर्शनादिति**। ननु लोकायतमतनिरासोऽपि दृश्यत इत्यत आह— **प्रसङ्गेति**। अध्यायाध्य [यार्थसंक्षेपमुक्त्वा पादार्थ] संक्षेपमाह— **तत्र प्रथम इति**। ननु पुरुषार्थसाधनमेवात्र निरूपणीयम् किमर्थं संसारगतिप्रदर्शनमित्याशङ्क्य तत्फलमाह— **वैराग्येति**। नन्वत्र पञ्चाग्निविद्योपासना विधीयते। न संसारगति-

### *न्यायनिर्णयः*

भावः। अनन्तरपादस्यावान्तरसंगत्यर्थं तदुपयुक्तमनुद्रवति— **तत्र चेति**। तथा च तैरुपहितस्य जीवस्य संसारप्रकारविचारोऽवतरतीति शेषः। इदानीं तार्तीयमर्थं सौकर्यार्थं पादशो विभज्य दर्शयति— **अथेति**। वैराग्यपादार्थं संगृह्य पदार्थपादार्थं संगृह्णाति— **तदिति**। संसाराद्विरक्तस्य मुमुक्षोर्मोक्षहेत्वपरोक्षवाक्यार्थज्ञानसाधनलक्ष्यपदार्थज्ञानाय जीवस्यावस्थान्तराणि ब्रह्मस्वरूपं च निरूप्यत इत्यर्थः। तृतीयपादार्थमाह— **विद्येति**। निर्गुणब्रह्मवाक्यस्थापुनरुक्तपदोपसंहाराय, मन्दाधिकारिणां सगुणोपासनैकरूप्याय च सर्वशाखासु विद्या भिन्नाऽभिन्ना वा, गुणानामुपसंहारो न वेति विचार्यत इत्यर्थः। चतुर्थपादार्थमाह— **सम्यगिति**। विरक्तस्य लक्ष्यपदार्थज्ञस्य सर्वशाखास्वपुनरुक्तशब्दोपसंहारेणैकरूपवाक्यज्ञानवतो यज्ज्ञानं तावन्मात्रादेव पुरुषार्थस्तद्धेतूनां च यज्ञादिविधीनां शमादिविधीनां च बहिरङ्गत्वान्तरङ्गत्वभेदः शुद्धसत्त्वानां बहिरङ्गापोहेनान्तरङ्गग्रहायोच्यते। यस्मिञ्जन्मनि ज्ञानसाधनानुष्ठानं तस्मिन्नेव जन्मनि ज्ञानोदयेन मुक्तिरित्यनियमो जन्मान्तरीयसंस्कारस्यापि हेतुत्वादित्यर्थः। अध्यायार्थं संक्षिप्य निगमयति— **इत्येतदिति**। लोकायतिकमतनिरसनमपि समधिकमत्रास्तीत्याशङ्क्याह— **प्रसङ्गेति**। अध्यायार्थं संक्षिप्य पादार्थं संक्षिपति— **तत्रेति**। पञ्चसु द्युपर्जन्यपृथिवीपुरुषयोषित्स्वग्निदृष्ट्योपासनं पञ्चाग्निविद्या; तामाश्रित्य संसारे पुण्यपापफलगतिप्रकारोऽत्र निरूप्यत इति यावत्।

---
१. 'ब्रह्मतत्त्वं' इति पा.।

**संसारगतिप्रभेदः प्रदर्श्यते वैराग्यहेतोः। 'तस्माज्जुगुप्सेत' (छा.उ. ५।१०।८) इति चान्ते श्रवणात्।**

**जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्कोऽ[१]विद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यत इत्येतदवगतम्– 'अथैनमेते प्राणा अभिसमायन्ति' इत्येवमादेः 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते' (बृ.उ. ४।४।१,४) इत्येवमन्तात् संसारप्रकरणस्थाच्छब्दात्, धर्माधर्मफलोपभोगसंभवाच्च। स किं देहबीजैर्भूतसूक्ष्मैरसंपरिष्वक्तो गच्छत्याहोस्वित् संपरिष्वक्त इति चिन्त्यते। किं तावत् प्राप्तम्? असंपरिष्वक्त इति।**

### *प्रकटार्थविवरणम्*

धिक्] कर्मफलमित्यर्थः। न केवलं कर्मफलवैराग्यं दोषदर्शनान्वयव्यतिरेकसिद्धम्, श्रुतिसिद्धं चेत्याह— **तस्मादिति**। यस्मात् कर्मफलभूतः संसारो गत्यागतिरूप एव तस्माज्जुगुप्सां घृणां कुर्वीत कर्मफले विद्वानिति पञ्चाग्निविद्योपसंहारे श्रवणादित्यर्थः।

एवं पादस्य तात्पर्यमुक्त्वा प्रथमाधिकरणविचारविषयमाह— **जीव इत्यादिना**। अविद्या अनादिरनिर्वाच्या चितः प्रतिबिम्बभावनिमित्तहेतुतया[२] जीवत्वहेतुः; कर्म शुभाशुभव्यामिश्ररूपम्; पूर्वप्रज्ञा जन्मान्तरीयः संस्कारः; ते परिग्रहाः प्रधानभूताः संसरणे यस्य स तथोक्तः; पूर्वदेहं विहाय देहान्तरप्राप्तिः न केवलं शब्दैकसमधिगम्या, युक्तिसिद्धाऽपि भवतीत्याह— **धर्माधर्मेति**। प्रतिनियतकालोपभोगान्यथानुपपत्त्याऽपि देहान्तरसञ्चरणमवश्यं वाच्यमित्यर्थः। असौ देहान्तरसञ्चारी जीवो विषयः; स किं कालान्तरे प्रारब्धः[आरब्धव्य]स्थूलदेहारम्भकैः भूतसूक्ष्मैः परिवेष्टितो गच्छति, किं वा नेति संशयमाह— **स किं देहबीजैरिति**। वादिविप्रतिपत्तिरत्र संशयकारणम्। पूर्वपक्षं रचयति— **किं तावदिति**।

### *भाष्यभावप्रकाशिका*

वैराग्यायेत्याशङ्क्य उपसंहारात् संसारगतिर्विवक्षिता प्रतीयत इत्याह— **तस्माज्जुगुप्सेतेति**। ननु विरक्तवि[क्तस्याधि]काराद्वैराग्यं सिद्धमेवेति किमर्थं पुनर्वैराग्यं प्रतिपाद्यत इति। सत्यम्, तदेव युक्त्या दृढीक्रियत इत्यर्थः।

पूर्वापरशोधनाय भूमिकां रचयति— **जीवो मुख्यप्राणेति**। प्रमाणप्रतिपन्नस्य विषयत्वात् किमत्र प्रमाणमित्यपेक्षायामाह— **अथैनमिति**। न केवलं श्रुतित एवावगतम्, उपपत्तितश्चावगम्यत इत्याह— **धर्माधर्मेति**। **भूतोपादानस्याश्रुतत्वादिति**। यद्यपि

### *न्यायनिर्णयः*

तस्यापि प्रदर्शनमेव, न प्रतिपादनमिति मत्वोक्तं **प्रदर्श्यत इति**। पुमर्थसाधनमेवात्र निरूप्यं, किमर्थं संसारगतिप्रदर्शनं, तत्राह— **वैराग्येति**। अनेकायासं कर्म कृत्वाऽपि न स्वातन्त्र्यं क्वापि लभ्यते, तेन कृतं कर्मतत्फलाभ्यामित्यर्थः। पञ्चाग्निविद्योपास्तिरस्मिन् प्रकरणे विधीयते, न वैराग्याय संसारगतिरित्याशङ्क्योपसंहारालोचनया संसारगतिरत्र विवक्षितेत्याह— **तस्मादिति**। यस्मात् कर्मफलभूतः संसारो गत्यागतिरूपोऽनर्थस्तस्माज्जुगुप्सां घृणां कुर्वीत कर्मफले विद्वानिति पञ्चाग्निविद्योपसंहारे श्रवणादत्र वैराग्याय संसारगतिरभिहिता। यद्यपि विरक्तस्याधिकाराद् वैराग्यं शास्त्रादावधिकारिविशेषणं सिद्धं तथापि तदेव युक्त्या दृढीक्रियत इति भावः।

आद्यपादतात्पर्यमुक्त्वा तदवयवाद्याधिकरणविषयमाह— **जीव इति**। देहान्तरप्राप्तौ सहायसत्त्वं दर्शयति— **मुख्येति**। तत्र प्रधानकारणमाह— **अविद्येति**। अनाद्यनिर्वाच्या चित्प्रतिबिम्बनिमित्ततया जीवत्वहेतुरविद्या। कर्म शुभाशुभव्यामिश्ररूपम्। पूर्वप्रज्ञा जन्मान्तरीयसंस्कारः। ते परिग्रहाः प्रधानभूताः संसरणे यस्य स तथा। प्रमितस्य विषयत्वात् किमत्र प्रमाणम्, तदाह— **अथेति**। देहान्तरप्रेप्सानन्तर्यमथशब्दार्थः। न केवलं शब्दादेव तदवगतं, युक्तितश्चेत्याह— **धर्मेति**। नियतदेशकालफलभोगान्यथानुपपत्त्याऽपि देहान्तरसंचरणं सिद्धमित्यर्थः। देहान्तरसंचारिणं जीवं विषयीकृत्य वादिविप्रतिपत्तेः संदेहमाह— **स किमिति**। देहशब्दो भाविविषयः। आद्ये निराश्रयप्राणगत्यभावान्न वैराग्यम्, चरमे भूतपरिष्वङ्गे प्राणानां नरकादिगतेर्वैराग्यम् इत्युभयत्र फलम्। अत्र च परिष्वक्तरंहणनिरूपणेन वैराग्यदृढीकरणादधिकारिसिद्धौ तस्य शास्त्रे प्रवृत्तिरिति पादादिसंगतिरित्यङ्गीकृत्य पूर्वपक्षमाह— **किमित्यादिना**। करणैरिव

१. 'विद्याकर्मे'त्यादि पाठान्तरं 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति श्रुतिमूलकम्। तत्र विद्या = उपासना। 'अविद्या' इति पाठे तु कर्मपदेनैव तत्संग्रहो द्रष्टव्यः। २. प्रतिबिम्बभावे निमित्तकारणतयेत्यर्थः।

**कुतः? करणोपादानवद् भूतोपादानस्याश्रुतत्वात्। 'स एतास्तेजोमात्राः समभ्याददानः' (बृ.उ. ४।४।१) इति ह्यत्र तेजोमात्राशब्देन करणानामुपादानं संकीर्तयति, वाक्यशेषे चक्षुरादिसंकीर्तनात्। नैवं भूतमात्रोपादानसंकीर्तनमस्ति। सुलभाश्च सर्वत्र भूतमात्राः। यत्रैव देह आरब्धव्यस्तत्रैव सन्ति। ततश्च तासां नयनं निष्प्रयोजनम्। तस्मादसंपरिष्वक्तो यातीति।**

**एवं प्राप्ते पठत्याचार्यः– तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्त इति। तदन्तरप्रतिपत्तौ देहान्तरप्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः संपरिष्वक्तो रंहति गच्छतीत्यवगन्तव्यम्। कुतः? प्रश्ननिरूपणाभ्याम्। तथा हि प्रश्नः– 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा.उ. ५।३।३) इति। निरूपणं च प्रतिवचनं द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वा 'इति तु पञ्चम्यामाहुतावापः**

### *प्रकटार्थविवरणम्*

"स यत्रैष चाक्षुषः पुरुषः" इति वाक्यशेषे। भूतान्येव मीयन्त इति मात्राः। श्रुत्यभावेऽपि देहान्तरानुपपत्त्या भूतपरिवेष्टितस्य गमनं कल्प्यत इत्याशङ्क्याह— **सुलभाश्चेति।**

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्**।। सूत्रं योजयति— **तदन्तरप्रतिपत्तावित्यादिना।** पञ्चसु स्थानेषु हूयमाना आपः पञ्चम्यामाहुतौ यथा पुरुषशब्दवाच्या भवन्ति, पुरुषाकारेण परिणमन्ते, तथा किं त्वं वेत्थ इति श्वेतकेतुं प्रति प्रवाहणस्य प्रश्नः। तस्य चोत्तरापरिज्ञाने तत्पितरं प्रति निरूपणं राज्ञा कृतम् "असौ वाव लोको गौतमाग्निः" इत्यादिना। तदेव संक्षेपतः कथयति— **द्युपर्जन्येत्यादिना।** द्युप्रभृतीनामग्नित्वं होमाधारत्वसाम्येनोपासनार्थं संपादितम्। श्रद्धादीनां चाहुतित्वं तत्र तत्र

### *भाष्यभावप्रकाशिका*

करणोपादानश्रुत्यैव भौतिकत्वात् करणानां भूतोपादानमप्यर्थात् सिध्यति तथापीन्द्रियोपादान....द्रष्टव्यम्। करणोपादाने प्रमाणमाह— **स एतास्तेजोमात्रा इति।** ननु प्रश्नप्रतिवचनाभ्यामपां गमनमवगम्यते। तत्कथं भूतमात्राणामुपादानासंकीर्तनमित्याशङ्क्याह— **नैवं भूतमात्रेति।** 'आपः पुरुषवचसो भवन्ती'त्यपां पुरुषवचनक्रियासंबन्धात् पुरुषोपादानकारणत्वं न प्रतीयते....ञ्चसु स्थानेष्वपां गमनवस्थिति[मस्तीति] भावः। ननु देहान्तरारम्भान्यथानुपपत्त्या भूतपरिष्वक्तस्य संरंहणं कल्प्यत इति, नेत्याह— **सुलभाश्चेति।**

### *न्यायनिर्णयः*

भूतैरपि परिष्वक्तस्यैव रंहणमिति शङ्कते— **कुत इति।** वैषम्यं दर्शयन्नुत्तरमाह— **करणेति।** करणोपादाने मानमाह— **स इति।** तेजोमात्राशब्दस्य करणविषयत्वे हेतुमाह— **वाक्येति।** 'स यत्रैष चाक्षुषः पुरुष' इत्यादाविति यावत्। प्रश्नप्रतिवचनाभ्यामपां गमने गम्यमाने कथं भूतमात्राणामुपादानासंकीर्तनम्, तत्राह— **नैवमिति।** 'आपः पुरुषवचसो भवन्ती'त्यपां पुरुषवचनक्रियायोगमात्रं भाति, न पुरुषोपादानत्वम्। न च पञ्चसु स्थानेष्वपां गमनमस्ति, श्रद्धादीनामेव होम्यत्वावगमात्। यद्यपि करणानां भौतिकत्वात् तदुपादानश्रुत्यैव भूतोपादानमर्थाक्षिप्तं तथापीन्द्रियोपादाना[१]पञ्चीकृतभूतांशान्यभूतविवक्षयेदमश्रुतत्वमिति भावः। देहान्तरारम्भान्यथानुपपत्त्या भूतपरिष्वक्तस्य गमनमित्याशङ्क्याह— **सुलभाश्चेति।** परिष्वङ्गे मानफलयोरभावे फलितमुपसंहरति— **तस्मादिति।**

पूर्वपक्षमनुभाष्य सिद्धान्तप्रतिज्ञामवतार्य व्याकरोति— **एवमिति।** परिष्वङ्गे मानाभावान्नैवमित्युक्तमाशङ्क्य सौत्रं हेतुमादाय व्याचष्टे— **कुत इति।** पञ्चसु स्थानेष्वापो हुताः पञ्चम्यामाहुतौ हुतायां यथा पुरुषशब्दवाच्याः पुरुषाकारेण परिणमन्ते तथा किं त्वं वेत्थेति श्वेतकेतुं प्रति प्रवाहणस्य प्रश्नः। तस्य चोत्तराज्ञाने तत्पितरं प्रति निरूपणं राज्ञा कृतम्— 'असौ वाव लोको गौतमे'त्यादिना। तदिदं संक्षिप्याह— **द्युपर्जन्येति।** द्युप्रभृतीनामनग्नीनामग्नित्वं होमाधारत्वसाम्याद् ध्यानार्थं संपादितम्। श्रद्धादीनामाहुतित्वं च तत्र तत्र संनिपातमात्रेणोक्तम्। किं च पञ्चमे स्थाने गर्भाकारेणापः परिणमन्तीत्युपक्रमोपसंहारयोरेकवाक्यत्वावगतेः सिद्धान्तेन

---

१. इन्द्रियोपादानभूताः येऽपञ्चीकृतभूतांशास्तदन्यभूतविवक्षयेत्यर्थः। पञ्चीकृतभूतभागाः उत्तरदेहपरिणामिनो भूतसूक्ष्मा इति रत्नप्रभा।

**पुरुषवचसो भवन्ति' (छा.उ. ५।९।१) इति। तस्मादद्भिः परिवेष्टितो जीवो रंहति व्रजतीति गम्यते।**

**नन्वन्या श्रुतिर्जलूकावत् पूर्वदेहं न मुञ्चति यावन्न देहान्तरमाक्रामतीति दर्शयति– 'तद्यथा तृणजलायुका' (बृ.उ. ४।४।३) इति। तत्राप्यप्परिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलूकयोपमीयत इत्यविरोधः।**

**एवं श्रुत्युक्ते देहान्तरप्रतिपत्तिप्रकारे सति याः पुरुषमतिप्रभवाः कल्पनाः– व्यापिनां करणानामात्मनश्च देहान्तरप्रतिपत्तौ कर्मवशाद् वृत्तिलाभस्तत्र भवति; केवलस्यैवात्मनो वृत्तिलाभस्तत्र भवति, इन्द्रियाणि तु**

***प्रकटार्थविवरणम्***

सन्निपातमात्रेण। उपक्रमोपसंहारवाक्ययोरेकवाक्यतावगमादयमर्थोऽधिगतः— पञ्चमे स्थाने गर्भाकारेणापः परिणमन्त इति, ततस्तत्परिवेष्टितो गच्छतीति।

यदि शरीरविनिर्मुक्तस्य गमनं स्यात्तदा परिवेष्टितस्य गमनं कल्प्येत। न तु तदस्ति, किं तु यथा तृणजलूका तृणान्तरं गृहीत्वा पूर्वं तृणं त्यजति तथा जीवोऽपीत्याह— **नन्वन्या श्रुतिरिति**। अप्परिवेष्टितस्य गमनप्रतिपादकवाक्यस्य गत्यन्तराभावात् तृणजलूकादृष्टान्तगत्यन्तरसंभवान्न विरोध इत्याह— **तत्रापीति**। मरणकाले कर्मणोपस्थापिता या प्राप्तव्यदेहविषया वासना [भावना]; तस्याः सन्ततत्वमात्रं तृणजलूकादृष्टान्तेनोच्यते, न तु शरीरान्तरप्रवेश इत्यर्थः।

एवं स्वमतमुक्त्वा मतान्तराणां निष्प्रमाणत्वादनादरणीयत्वं दर्शयति— **एवं श्रुत्युक्त इत्यादिना**। साङ्ख्यकल्पनामाह— **व्यापिनामिति**। सुगतकल्पनामाह— **केवलस्यैवेति**। आत्मन आलयविज्ञानस्येत्यर्थः। वैशेषिकाणां कल्पनामाह—

***भाष्यभावप्रकाशिका***

यदि सूक्ष्मशरीरपरिष्वक्त एव रंहेत तदैवं स्यादस्ति त्वस्य वर्तमानस्थूलशरीरसंबन्ध आदेहान्तरप्राप्तेस्तृणजलायुकादृष्टान्तादतः श्रुतिविरोधान्न सूक्ष्मशरीरेणैव परिष्वक्तो रंहतीति चोदयति— **नन्वन्या श्रुतिरिति**। परिहरति— **तत्रापीति**। जीवस्य संसरतो देहेन्द्रियाद्युपाधेः प्रादेशिकत्वान्न तत्रस्थोऽसौ देहान्तरं गन्तुमर्हति। तस्मात् सूक्ष्मदेहेनैव परिष्वक्तो रहंतीति भावः। कर्मोपस्थापितः प्रतिपत्तव्यः प्राप्तव्यो यो देहस्तद्विषयाया भावनाया देवोऽहमित्यादिलक्षणाया दीर्घीभावमात्रम् व्यवहितविषयावलम्बनतामात्रं जलूकयोपमीयत इति योजना।

ननु सांख्यादयोऽन्यथा कल्पयन्ति तेषामन्यतमः पक्षः कस्मान्न परिगृहीत इत्याशङ्क्य श्रुतिविरोधादित्याह— **एवं श्रुत्युक्त इति**। तत्र सांख्यानां कल्पनामाह— **व्यापिनामिति**। करणानामाहंकारिकत्वात् तस्य च व्यापित्वात् करणानामपि व्यापितेति भावः। बौद्धानां कल्पनामाह— **केवलस्यैवेति**। आलयज्ञानसन्तान आत्मा तस्य वृत्तयः षट् प्रवृत्तिविज्ञानानि—

***न्यायनिर्णयः***

तत्परिवेष्टितो गच्छतीत्याह— **इति त्विति**। प्रश्नादीनां फलितं निगमयति— **तस्मादिति**।

अशरीरस्य गतिश्चेदद्भिः संपरिष्वक्तस्य सा कल्प्येत, न तु तस्य गतिः। किंतु यथा तृणजलायुका तृणान्तरं गृहीत्वा पूर्वतृणं त्यजति तथा जीवोऽपि देहान्तरं गृहीत्वैव पूर्वदेहं मुञ्चति, तेन श्रुत्यन्तरविरोधान्न परिष्वक्तरंहणमिति शङ्कते— **नन्विति**। प्रश्नप्रत्युक्तिश्रुत्यपेक्षया बृहदारण्यकश्रुतिरन्योक्ता। अप्परिवेष्टितस्य गत्युक्तिश्रुतेर्गत्यन्तराभावाद् दृष्टान्तश्रुतेश्च तद्भावान्न विरोधोऽस्तीत्याह— **तत्रापीति**। कर्मोपस्थापितः प्रतिपत्तव्यः प्राप्तव्यो यो देहस्तद्विषये भावनाया देवोऽहमित्यादिकाया दीर्घीभावो व्यवहितार्थालम्बनत्वं तावन्मात्रं जलूकयोपमीयत इति योजना। जीवो हि संसरन् देहेन्द्रियाद्युपाधिः स्वयं प्रादेशिकत्वान्न तत्रस्थो देहान्तरं गन्तुमर्हत्यतः सूक्ष्मदेहेनैव परिष्वक्तो रंहतीति भावः।

सांख्यादयोऽन्यथा देहान्तरप्राप्तिमाहुस्तथैव किं न गृह्येतेत्याशङ्क्य श्रुतिविरोधादित्याह— **एवमिति**। याः पुरुषमतिप्रभवास्ताः सर्वा एवानादर्तव्या इति संबन्धः। तत्र सांख्यीयकल्पनामाह— **व्यापिनामिति**। करणानामाहंकारिकत्वात् तस्य व्यापित्वात् तेषामात्मनां च विभुत्वे किमिति शरीरे वृत्तिलाभो नियम्यते, तत्राह— **कर्मेति**। सौगतानां कल्पनामाह— **केवलस्येति**। आत्मा खल्वालयज्ञानसंतानस्तस्य वृत्तयः शब्दादिज्ञानानि, तल्लाभः शरीरान्तरे भवति। केवलशब्दस्तु करणसाहित्यमात्मनो वारयति।

**देहवदभिनवान्येव तत्र तत्र भोगस्थान उत्पद्यन्ते; मन एव वा केवलं भोगस्थानमभि प्रतिष्ठते; जीव एव वोत्प्लुत्य देहाद् देहान्तरं प्रतिपद्यते, शुक इव वृक्षाद् वृक्षान्तरम्–इत्येवमाद्यास्ताः सर्वा एवानादर्तव्याः, श्रुतिविरोधात्।।१।।**

**ननूदाहृताभ्यां प्रश्नप्रतिवचनाभ्यां केवलाभिरद्भिः संपरिष्वक्तो रंहतीति प्राप्नोति, अप्शब्दश्रवणसामर्थ्यात्। तत्र कथं सामान्येन प्रतिज्ञायते– सर्वैरेव भूतसूक्ष्मैः संपरिष्वक्तो रंहतीति? अत उत्तरं पठति–**

**त्र्यात्मकत्वात्तु भूयस्त्वात्।।२।।**

**तुशब्देन चोदितामाशङ्कामुच्छिनत्ति। त्र्यात्मिका ह्यापस्त्रिवृत्करणश्रुतेः। तास्वारम्भिकास्वभ्युपगतास्वितरदपि भूतद्वयमवश्यमभ्युपगन्तव्यं भवति। त्र्यात्मकश्च देहस्त्रयाणामपि तेजोबन्नानां तस्मिन् कार्योपलब्धेः। पुनश्च**

***प्रकटार्थविवरणम्***

**मन एवेति।** दिगम्बरकल्पनामाह— **जीव एव वेति।** आदिशब्दान्मरणमेवापवर्ग इति लोकायतिककल्पनां कक्षीचकार।

आद्यसूत्रे भूतसूक्ष्मपरिवेष्टितस्य गमने प्रश्नप्रतिवचनाभ्यामिति हेतुरुक्तः। स न विवक्षितार्थसाधक इत्याह— **ननूदाहृताभ्यामिति।**

**त्र्यात्मकत्वात्तु भूयस्त्वात्।।** नायमप्शब्दः केवलाब्वाचकः; व्यवहारकालीनाब्वाचकत्वात्; अतो नासाधको हेतुरित्याह— **त्र्यात्मिका ह्याप इति।** किञ्च कार्यानुसरणेनापि कारणवाचकस्याप्शब्दस्य न केवलाब्वाचकत्वमित्याह— **त्र्यात्मकश्च देह इति।** पाकस्नेहधारणादीनां कार्याणामुपलब्धेर्न केवलाप्कार्यत्वं देहस्येत्यर्थः। केवलाप्कार्यत्वापाकरणाय प्रकारान्तरेण त्र्यात्मकत्वमाह— **पुनश्चेति।** अविकृताः वातपित्तश्लेष्माणः शरीरं धारयन्तीति धातवः; तत्र च तस्य [तत्र वातस्य] अङ्गचलनादिकार्यकरत्वाद् वाय्वात्मकत्वम्; पित्तस्य च तापहेतुत्वात् तैजसत्वम्; श्लेष्मणश्चात्यम्बुपाननिमित्तहेतुत्वादाप्यत्वम्; तैस्त्रिधातुत्वादपरं त्र्यात्मकत्वमित्यर्थः।

***भाष्यभावप्रकाशिका***

तल्लाभः। पञ्चेन्द्रियाणि तु चक्षुरादीनि गोलकमात्रत्वादभिनवानि जायन्त इत्यर्थः। वैशेषिककल्पनामाह— **मन एवेति।** भोगस्थानं भोगायतनम् अभिनवं शरीरमिति यावत्। क्षपणककल्पनां दर्शयति— **जीव एवेति।** आद्यग्रहणेन [लोकायतकल्पनां] संगृह्णाति। ते तु शरीरात्मवादिनो भस्मीभावमात्मन आहुर्न कस्यचित् गमनमिति।

सूत्रव्यावर्त्याशङ्कामाह— **ननूदाहृताभ्यामिति।** सूत्रेणोत्तरमाह— **त्र्यात्मकत्वादिति।**

नन्वेवं तर्हि भूतत्रयारब्धत्वमेव स्यान्न त्रिवृत्कृतभूतत्रयारब्धत्वमित्याशङ्क्यापरितोषात् पक्षान्तरमाह— **त्र्यात्मकं च [कश्च]देह इति।** ननु पञ्चानां भूतानां कार्यस्य गन्धस्वेदपाकप्राणावकाशदानलक्षणस्य दर्शनात् कार्यत्रयस्यैवोपलम्भोऽसिद्ध इत्याशङ्क्या-

***न्यायनिर्णयः***

कथं तर्हि देहान्तरे करणानीत्याशङ्क्य पञ्चेन्द्रियाणि चक्षुरादीनि गोलकमात्रत्वान्मनसश्च समनन्तरप्रत्ययमात्रत्वादभिनवानामेव तेषां शरीरान्तरे जन्मेत्याह— **इन्द्रियाणीति।** वैशेषिककल्पनामाह— **मन इति। केवलं** करणैरात्मना च रहितमिति यावत्। करणानि नूतनान्येव तत्रारभ्यन्ते, आत्मा तु विभुत्वादक्रियोऽपि तत्र वृत्तिमात्रमाप्नोति। **भोगस्थानं** भोगायतनं नूतनशरीरमित्यर्थः। दिगम्बरकल्पनामाह— **जीव इति।** वेदबाह्यकल्पनामुपसंहरति— **इत्येवमाद्या इति।** लोकायतकल्पनामाद्यग्रहणेन संगृह्णाति। ते हि देहमात्रात्मवादिनो भस्मीभावमेवात्मनो मन्यन्ते, न कस्यचिद् गमनम्। तासामनादर्तव्यत्वे हेतुं स्फुटयति— **श्रुतीति।।१।।**

भूतसूक्ष्मपरिवेष्टितस्य गमने प्रश्नप्रतिवचनाभ्यामिति हेतुरुक्तः; स विवक्षितार्थसाधको नेत्युत्तरसूत्रव्यावर्त्यां शङ्कामाह— **नन्विति।** हेतोरसाधकत्वशङ्कां प्रत्याह— **अत इति।** सूत्राक्षराणि व्याचष्टे— **तुशब्देनेति।** अपां त्र्यात्मकत्वेऽपि प्रकृते किं जातं, तदाह— **तास्विति।** एवं तर्हि भूतत्रयारब्धत्वमेव, न त्रिवृत्कृततदारभ्यत्वमित्यपरितोषात् पक्षान्तरमाह— **त्र्यात्मकश्चेति।** पञ्चानां भूतानां कार्यस्य गन्धस्वेदपाकप्राणावकाशदानस्य दर्शनात् कार्यत्रयस्यैवोपलब्धिरसिद्धेत्यपरितोषात् पक्षान्तरमाह— **पुनश्चेति।** वातपित्तश्लेष्मभिः शरीरधारणात्मकैर्धातुभिस्त्रिधातुत्वात् त्र्यात्मक इति योजना। एवं त्र्यात्मकत्वेऽपि कथं भूतान्तराणामारम्भकत्वं,

**वृत्त्युद्भवानुपपत्तिरिति। न ह्यनारब्धफलत्वसामान्येन जात्यन्तरोपभोग्यफलमप्यनेकं कर्मैकस्मिन् प्रायणे युगपदभिव्यक्तं सदेकां जातिमारभत इति शक्यं वक्तुम्, प्रतिनियतफलत्वविरोधात्। नापि कस्यचित् कर्मणः प्रायणेऽभिव्यक्तिः कस्यचिदुच्छेद इति शक्यते वक्तुम्, ऐकान्तिकफलत्वविरोधात्। न हि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्मणामुच्छेदः संभाव्यते। स्मृतिरपि विरुद्धफलेन कर्मणा प्रतिबद्धस्य कर्मान्तरस्य चिरमप्यवस्थानं दर्शयति– 'कदाचित् सुकृतं कर्म कूटस्थमिह तिष्ठति। मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते' (म.भा. १२।२९०।१८) इत्येवंजातीयका। यदि च कृत्स्नमनारब्धफलं कर्मैकस्मिन् प्रायणेऽभिव्यक्तं सदेकां जातिमारभेत, ततः स्वर्गनरकतिर्यग्योनिष्वधिकारानवगमाद्धर्माधर्मानुत्पत्तौ निमित्ताभावान्नोत्तरा जातिरुपपद्येत। ब्रह्महत्यादीनां चैकैकस्य कर्मणोऽनेकजन्मनिमित्तत्वं स्मर्यमाणमुपरुध्येत। न च धर्माधर्मयोः स्वरूपफलसाधनादिसमधिगमे शास्त्रादतिरिक्तं कारणं शक्यं संभावयितुम्। न च दृष्टफलस्य कर्मणः कारीर्यादेः प्रायणमभिव्यञ्जकं संभवतीत्यव्यापिकाऽपीयं**

### *प्रकटार्थविवरणम्*

सर्वमेव कर्मैकं जन्माऽऽरभत इत्याशङ्क्याह— **न ह्यनारब्धफलत्वेति**। भवेदेवं यदि सुखदुःखमात्रं फलं स्यात्; न तु तथा, किं तु देवदेहोपभोग्य आनन्दः फलमेकस्य, अपरस्य नारककलेवरे प्रचुरं दुःखम्; एवंजातीयकविरुद्धानेकफलस्य ब्रह्महत्याऽश्वमेधादेर्नैकजन्मारम्भसंभव इति भावः। ननु यदत्यन्तमेव विरुद्धफलं कर्मद्वयं तत्रैकेनापरस्य उच्छेद एवास्त्वित्याशङ्क्याह— **नापि कस्यचिदिति**। ननु कृतस्य कर्मणः फलमवश्यं भुज्यत इति नास्त्येकान्तः, प्रायश्चित्तेन ब्रह्मज्ञानेन च क्षयस्य शास्त्रसिद्धत्वादित्याशङ्क्य सत्यं तद्व्यतिरेकेण नियतफलत्वमेवेत्याह— **न हीति**। उक्तेऽर्थे स्मृतिं प्रमाणयति— **स्मृतिरपीति**। इतश्च प्रायणेऽभिव्यक्तं कृत्स्नमेव कर्मैकं देहमारभत इति न शक्यं वक्तुमित्याह— **यदि च कृत्स्नमित्यादिना**। मनुष्याधिकारत्वाच्छास्त्रस्य अन्यत्र धर्माद्यनिष्पत्तेः नोत्तरं जन्म स्यादित्यर्थः। ''श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम्। चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति।।'' इत्यादिस्मृतिविरोधोऽप्यैकभविकः कर्माशय इति वदतः स्यादित्याह— **ब्रह्महत्यादीनां चेति**। नन्वेकं कर्म एकफलं दृष्टम्; ततः सामान्यतोदृष्टविरुद्धं वचनमित्याशङ्क्याह— **न च धर्माधर्मयोरिति**। इतश्च प्रायणं सकलकर्मव्यञ्जकमिति न शक्यं वक्तुमित्याह—

### *भाष्यभावप्रकाशिका*

फलानामेकपूर्वजात्यारम्भकत्वं शास्त्रयुक्तिविरुद्धमित्याह— **न ह्यनारब्धेति**। ननु कथमेकान्तिकोपभोगफलत्वं प्रायश्चित्तादपि.... श्रवणादित्याशङ्क्याह— **न हीति**। इह प्रायश्चित्ताद्यभावादुच्छेदो न संभवतीत्यर्थः।। **निमित्ताभावादिति**। पूर्वकृतस्य कर्मणः कृत्स्नस्याप्येकजात्यारम्भकस्योपभोगेन प्रक्षयादस्मिंश्च जन्मनि कर्मानुत्पत्तेः पुनस्संसारो न स्यात्, ज्ञानाभावाच्च न मुक्तिरिति दुर्घटमापन्नमित्यर्थः। एकस्यापि कर्मणोऽनेकजात्यारम्भकत्वं दूरनिरस्तमित्याह— **ब्रह्महत्यादीनामिति**। नन्वेकस्यानेकफलत्वमयुक्तमित्यत आह— **न चेति**। प्रायणे व्यञ्जकत्वमप्यनियतमित्याह— **न च दृष्टफलस्येति**। इह जन्मन्यनुष्ठितस्येहैव जन्मन्युपभुज्यमानफलत्वात्र

### *न्यायनिर्णयः*

विरुद्धमेकजात्यारम्भकत्वमित्याह— **न हीति**। प्रायणावस्थायामुपस्थिते विरुद्धे कर्मणि प्रबलेन दुर्बलस्योच्छेदः स्यादित्याशङ्क्याह— **नापीति**। कृतं कर्मावश्यकफलकमिति नास्त्येकान्तः, प्रायश्चित्तेन ब्रह्मज्ञानेन च तत्क्षयश्रुतेरित्याशङ्क्य प्रकृते तदभावान्नोच्छेदोऽस्तीत्याह— **न हीति**। प्रायश्चित्तेन वा ब्रह्मज्ञानेन वा भोगेन वा विना कर्मणां विच्छेदो नेत्यत्र मानमाह— **स्मृतिरिति**। इतोऽपि प्रायणाभिव्यक्तं सर्वमेव कर्मैकजात्यारम्भकमित्ययुक्तमित्याह— **यदि चेति**। पूर्वस्य कर्मणः सर्वस्याप्येकजात्यारम्भकस्य भोगेन क्षयान्मनुष्याधिकारित्वाच्च शास्त्रस्य स्वर्गादियोनिषु कर्मासिद्धेर्न तन्निमित्तः संसारः स्यात्, न च ज्ञानाभावान्मुक्तिरिति दुर्घटतेत्यर्थः। 'श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम्। चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति।' इत्यादिस्मृतिविरोधोऽपि कर्माशयस्यैकभविकत्वे स्यादित्याह— **ब्रह्मेति**। एकस्यापि कर्मणोऽनेकजात्यारम्भकत्वस्मरणादनेकेषामेकजात्यारम्भकत्वं दूरनिरस्तमित्युक्तं, तदयुक्तम्। एकं हि कर्मैकफलं दृष्टम्। न च सामान्यतोदृष्टविरुद्धं वचनं मानमित्याशङ्क्याह— **न चेति**। किंच प्रायणं सर्वस्य वा कर्मणो व्यञ्जकं कस्यचिदेव वा? नाद्य इत्याह— **न चेति**। कारीर्यादेरिहैवानुष्ठितस्यात्रैव भुज्यमानत्वात्र प्रायणेन व्यङ्ग्यतेत्यर्थः। द्वितीयं निरस्यन् परोक्तं

**प्रायणस्याभिव्यञ्जकत्वकल्पना। प्रदीपोपन्यासोऽपि कर्मबलाबलप्रदर्शनेनैव प्रतिनीतः। स्थूलसूक्ष्मरूपाभिव्यक्त्यनभिव्यक्तिवच्चेदं द्रष्टव्यम्। यथा हि प्रदीपः समानेऽपि संनिधाने स्थूलं रूपमभिव्यनक्ति, न सूक्ष्मम्; एवं प्रायणं समानेऽप्यनारब्धफलस्य कर्मजातस्य प्राप्तावसरत्वे बलवतः कर्मणो वृत्तिमुद्भावयति, न दुर्बलस्येति। तस्माच्छ्रुतिस्मृतिन्यायविरोधादश्लिष्टोऽयमशेषकर्माभिव्यक्त्यभ्युपगमः। शेषकर्मसद्भावेऽनिर्मोक्षप्रसङ्ग इत्ययमप्यस्थाने संभ्रमः, सम्यग्दर्शनादशेषकर्मक्षयश्रुतेः। तस्मात् स्थितमेतदेवानुशयवन्तोऽवरोहन्तीति। ते चावरोहन्तो यथेतमनेवं चावरोहन्ति। यथेतमिति यथागतमित्यर्थः। अनेवमिति तद्विपर्ययेणेत्यर्थः। धूमाकाशयोः पितृयाणेऽध्वन्युपात्तयोरवरोहे संकीर्तनाद् यथेतंशब्दाच्च यथागतमिति प्रतीयते। रात्र्याद्यसंकीर्तनादभ्राद्युपसंख्यानाच्च विपर्ययोऽपि प्रतीयते।।८।।**

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः।।९।।

**अथापि स्यात्– या श्रुतिरनुशयसद्भावप्रतिपादनायोदाहृता– 'तद्य इह रमणीयचरणाः' (छा.उ.**

### *प्रकटार्थविवरणम्*

**न च दृष्टफलस्येति**। यश्च प्रदीपदृष्टान्तः, सोऽपिं प्रायणस्य सति व्यञ्जकत्वेऽनुकूलः स्यात्। यदा तु न प्रायणं व्यञ्जकम्, किन्तु बलवता प्रतिबद्धं दुर्बलं तिष्ठति इति दर्शितम्, तदा तेनैव सोऽपि निरस्तो भवतीत्यर्थः। किंच प्रायणस्य व्यञ्जकत्वाङ्गीकारेऽपि न सकलव्यञ्जकत्वे प्रदीपदृष्टान्तः, साध्यवैकल्यादित्याह— **स्थूलसूक्ष्मेति**। ननु यदि सकलं कर्मैकस्मिन् मुमुक्षुदेहे न भुज्यते, तदाऽवशिष्टकर्मानन्त्यान्न कदाचिन्मोक्षोपपत्तिः; अतो मोक्षसिद्ध्यन्यथानुपपत्त्या प्रायणेनाभिव्यक्तं सकलं कर्म एकं शरीरमारभत इत्यभ्युपगच्छाम इत्याशङ्क्याह— **शेषकर्मसद्भाव इति**। सूत्रशेषं व्याचष्टे— **ते चावरोहन्त इति**।

**चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः**।। पूर्वोदाहृतां श्रुतिमाक्षेपसमाधानाभ्यां विवृणोति— **चरणादित्यादिना**।

### *भाष्यभावप्रकाशिका*

प्रायणेनाभिव्यङ्ग्यत्वमि[ त्यर्थः।] न ह्यविशिष्टे प्रदीप इति यदुक्तं पूर्ववादिना तद्विघटयति— **प्रदीपेति**। प्रतिनीतो निराकृतः। अस्माकमप्यनुकूलोऽयं दृष्टान्त इत्याह— **स्थूलेति**। ऐकभविकत्वानभ्युपगमे तन्मानन्त्या[ कर्मानन्त्यात् ]मुक्तिर्न स्यादिति शङ्कां परिहरति— **शेषेति**। सूत्रावयवं व्याचष्टे— **ते चेति**। ननु विरुद्धमिदमित्यत आह— **धूमाकाशयोरिति**। **यथेतंशब्दादिति**। अथैतमेवाध्वानं.... तमिति श्रुतेरित्यर्थः।

इदानीं पूर्वपक्षिणोऽनुशयमुद्भाव्य निराकरोति— **अथापीत्यादिना**। 'अक्रोधःसर्वभूतेषु कर्मणा मनसा गिरा। अनुग्रहश्च ज्ञानं

### *न्यायनिर्णयः*

दृष्टान्तं प्रत्याह— **प्रदीपेति**। यश्च प्रदीपदृष्टान्तः सोऽपि प्रायणस्य सति व्यञ्जकत्वेऽनुकूलः स्यात्। यदा तु न तद्व्यञ्जकं किंतु बलवता प्रतिबद्धं दुर्बलं दृष्टमिति दर्शितं तदा तेनैव सोऽपि निरस्त इत्यर्थः। भवतु वा प्रायणस्य क्वचित्कर्मणि व्यञ्जकत्वम्, तदापि प्रदीपोऽनुकूलो भवतीत्याह— **स्थूलेति**। उक्तमेव व्यनक्ति— **यथेत्यादिना**। इति सर्वकर्मव्यञ्जकत्वासिद्धिः कतिपयव्यञ्जकत्वमिष्टमेवेति शेषः। ऐकभविकः कर्माशय इति मतनिरासं निगमयति— **तस्मादिति**। श्रुतिश्चरणश्रुतिः। स्मृतिश्च 'श्वसूकरे'त्याद्या। न्यायस्तु केन हेतुनेत्यादावुक्तः। यदि सर्वं कर्मैकस्मिन् मुमुक्षुदेहे न भुज्यते तदाऽवशिष्टकर्मानन्त्यान्न कदाचिन्मुक्तिरतो मुक्त्यनुपपत्त्या प्रायणव्यक्तं सर्वं कर्मैकदेहारम्भकमित्याशङ्क्याह— **शेषेति**। सूत्रावयवव्याख्यानमुपसंहरति— **तस्मादिति**। अवशिष्टं व्याचष्टे— **ते चेति**। विरुद्धमेतदित्याशङ्क्याह— **धूमेति**। **यथेतंशब्दाच्चेति**। 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेत'मिति श्रुतेश्चेत्यर्थः। विपर्ययप्रतीतिप्रापकमाह— **रात्र्यादीति**।।८।।

पूर्वोदाहृतां श्रुतिमाक्षेपसमाधिभ्यां विवृणोति— **चरणादिति**। चोद्यं व्याकरोति— **अथापीति**। श्रुत्याऽनुशयसत्त्वे दर्शितेऽपीति

**५।१०।७) इति, सा खलु चरणाद् योन्यापत्तिं दर्शयति, नानुशयात्। अन्यच्चरणमन्योऽनुशयः। चरणं चारित्रमाचारः शीलमित्यनर्थान्तरम्। अनुशयस्तु भुक्तफलात् कर्मणोऽतिरिक्तं कर्माभिप्रेतम्। श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति- 'यथाकारी यथाचारी तथा भवति' (बृ.उ. ४।४।५) इति, 'यान्यवद्यानि कर्माणि तानि सेवितव्यानि। नो इतराणि। यान्यस्माकं सुचरितानि। तानि त्वयोपास्यानि' (तै.उ. १।११।२) इति च। तस्माच्चरणाद् योन्यापत्तिश्रुतेर्नानुशयसिद्धिरिति चेत्। नैष दोषः। यतोऽनुशयोपलक्षणार्थैवैषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते।।९।।**

## आनर्थक्यमिति चेन्न तदपेक्षत्वात्।।१०।।

**स्यादेतत्- कस्मात्पुनश्चरणशब्देन श्रौतं शीलं विहाय लाक्षणिकोऽनुशयः प्रत्याय्यते? ननु शीलस्यैव श्रौतस्य विहितप्रतिषिद्धस्य साध्वसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति। अवश्यं च शीलस्यापि किंचित् फलमभ्युपगन्तव्यम्। अन्यथा ह्यानर्थक्यमेव शीलस्य प्रसज्येतेति चेत्? नैष दोषः। कुतः?**

### *प्रकटार्थविवरणम्*

**आनर्थक्यमिति चेन्न तदपेक्षत्वात्**।। कार्ष्णाजिनिवाक्यं पौरुषेयम्; तस्य मूलं वक्तव्यम्; अतो मुख्यपरित्यागेन लक्षणाश्रयणे किं कारणमित्युत्सूत्रमाह— **स्यादेतत् कस्मात्पुनरिति**। अथ शीलाद् योन्यापत्त्यनुपपत्त्या कर्म लक्ष्यत इत्याशङ्क्याह— **ननु शीलस्यैवेति**। "यथाचारी तथा भवति" इति श्रुतेरित्यर्थः। किं च वैयर्थ्यपरिहारार्थमपि फलं कल्पनीयमित्याह सूत्रभागेन— **अवश्यं चेति**। आचारस्य क्रत्वर्थत्वात् प्रयाजादिवत् तत्फलेनैव फलवत्त्वाद्वैयर्थ्यं तावन्नास्तीत्याह— **नैष दोष इति**। इदानीं

### *भाष्यभावप्रकाशिका*

च शीलमेतद्विदुर्बुधाः।' इति स्मृतिप्रतिपन्नशीलस्यापि कर्माङ्गत्वात् कपूयचरणा इत्यादिना शीलवाचिना शब्देन कर्मानुशयो लक्ष्यत इति परिहरति— **नैष दोष इति**।

कर्मणैव योन्यापत्तिहेतुत्वस्य व्याप्तत्वादि [१]भाविलक्षणेत्याशङ्क्य शास्त्रप्रामाण्यात् कर्मवच्चरणस्यापि योन्यापत्तिहेतुत्वमपि भविष्यतीति स एव पूर्ववाद्याह— **ननु शीलस्यैवेति**। किं च कर्मलक्षणायां तस्यैव फलं श्रुतमिति शीलस्य फलं कल्प्यं स्यात्तस्यापि विहितस्य निष्फलताऽयोगात्, तस्माच्चरणस्यैव यथाश्रुतं फलमभ्युपगन्तव्यमित्याह— **अवश्यञ्चेति**। आचारस्य

### *न्यायनिर्णयः*

यावत्। चरणाद् या योन्यापत्तिः साऽनुशयादेव, तयोरैक्यादित्याशङ्क्याह— **अन्यदिति**। तदेवान्यत्वं स्फुटयितुं चरणानुशयशब्दार्थमनुवदति— **चरणमिति**। तत्र श्रुतिमनुकूलयति— **श्रुतिश्चेति**। तयोर्भेदे फलितमाह— **तस्मादिति**। परिहारं व्याचष्टे— **नेत्यादिना**। 'अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा। अनुग्रहश्च ज्ञानं च शीलमेतद् विदुर्बुधाः' इति स्मृतस्य शीलस्यापि कर्माङ्गत्वाच्चरणशब्देन शीलवाचिना कर्मानुशयो लक्ष्यत इति भावः।।९।।

कार्ष्णाजिनिवाक्यस्य पौरुषेयत्वान्मूले वक्तव्ये मुख्यत्यागेन लक्षणाहेत्वभावाच्चरणशब्दितस्य शीलस्यैवानर्थक्यपरिहारार्थं योन्यापत्तिहेतुतेत्याशङ्क्य परिहरति— **आनर्थक्यमिति**। शङ्कां विभजते— **स्यादिति**। संभवति मुख्येऽर्थे लक्षणा न ग्राह्येत्यर्थः। कर्मणैव योन्यापत्तिसंभवाच्चरणशब्देन तल्लक्षणेत्याशङ्क्य शास्त्रप्रामाण्यात् कर्मवच्चरणस्यापि योन्यापत्तिहेतुता स्यादिति पूर्ववाद्येवाह— **नन्विति**। किंच कर्मलक्षणायां तस्यैव फलं श्रुतमिति शीलस्य तत् कल्प्येत, तस्यापि विहितस्याफलत्वायोगात्, तेन चरणस्यैव यथाश्रुतं फलमुपेतव्यमित्याह— **अवश्यं चेति**। तदनुपगमे दोषमाह— **अन्यथेति**। आचारस्य कर्माङ्गत्वादङ्गाङ्गिनोश्चैकाधिकारत्वात्र पृथक्फलकल्पनेत्याह— **नेत्यादिना**। उक्तमर्थं प्रश्नपूर्वकं सौत्रं हेतुमादाय विशदयति— **कुत इति**। कथमिष्टादिकर्मसमुदायस्य

१. अत्र पाठाशुद्धिः।

**तदपेक्षत्वात्। इष्टादि हि कर्मजातं चरणापेक्षम्। न हि सदाचारहीनः कश्चिदधिकृतः स्यात्– 'आचारहीनं न पुनन्ति वेदाः' (वसिष्ठस्मृतिः) इत्यादिस्मृतिभ्यः। पुरुषार्थत्वेऽप्याचारस्य नानर्थक्यम्। इष्टादौ हि कर्मजाते फलमारभमाणे तदपेक्ष एवाचारस्तत्रैव कंचिदतिशयमारप्स्यते। कर्म च सर्वार्थकारीति श्रुतिस्मृतिप्रसिद्धिः। तस्मात् कर्मैव शीलोपलक्षितमनुशयभूतं योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतम्। न हि कर्मणि संभवति शीलाद् योन्यापत्तिर्युक्ता। न हि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हतीति।।१०।।**

## सुकृतदुष्कृते एवेति तु बादरिः।।११।।

**बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते। चरणमनुष्ठानं कर्मेत्यनर्थान्तरम्। तथाहि– अविशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते। यो हीष्टादिलक्षणं पुण्यं कर्म करोति तं लौकिका आचक्षते–धर्मं चरत्येष महात्मेति। आचारोऽपि च धर्मविशेष एव। भेदव्यपदेशस्तु कर्मचरणयोर्ब्राह्मण-**

### *प्रकटार्थविवरणम्*

[१]स्नानादिवत् पुरुषार्थत्वमङ्गीकृत्याह— **पुरुषार्थत्वेऽपीति**। यच्चोक्तं कर्मलक्षणायाः किं कारणमिति, तत्राह— **कर्म चेति**। यच्चोक्तं शीलस्यैव योन्यापत्तिः फलं भविष्यतीति, तत्राह— **न हि कर्मणीति**।

**सुकृतदुष्कृते एवेति तु बादरिः।।** मतान्तरमाह— **बादरिस्त्विति**। यदुक्तं कर्म सर्वार्थकारि, नाचारो नाम कर्मास्तीति, तत्राह— **आचारोऽपि चेति**। ''अक्रोधः सर्वभूतेषु कर्मणा मनसा गिरा। अनुग्रहश्च ज्ञानं च शीलमेतद्विदुर्बुधाः।।'' इति स्मृतेरक्रोधादेः साधारणधर्मस्य शीलत्वावगमादित्यर्थः। आचारस्यापि कर्मत्वे कथं यथाकारी यथाचारी चेति भेदव्यपदेश इत्याशङ्क्याह—

### *भाष्यभावप्रकाशिका*

कर्माङ्गत्वादङ्गाङ्गिनोश्चैकाधिकारत्वान्न पृथक् फलकल्पनेत्याह— **नैष इत्यादिना**। वेदशब्देन वेदार्थोपलक्षणात्तच्छेष आचारो न तु स्वतन्त्रफल इत्युक्तम्। इदानीं स्नानादिवत् पुरुषसंस्कारतया भिन्नफलत्वेऽपि न विरोध इत्याह— **पुरुषार्थत्वेऽपीति**। नन्वाचारस्यैव योन्यापत्तिहेतुत्वमस्तु किमर्थमतिशयहेतुत्वं कल्प्यत इत्याशङ्क्य कर्मण एव तद्धेतुत्वप्रसिद्धेरित्याह— **कर्म चेति**। तदेव प्रपञ्चयति— **न हि कर्मणीति**।

साक्षात्सिद्धान्तमाह— **सुकृतदुष्कृते इति**। न लक्षणेत्यर्थः। चरणशब्देन मुख्यया वृत्त्या कथं कर्माभिधीयत इत्यत आह— **चरणमिति**। प्रयोगोऽपि विद्यत इत्याह— **तथा हीति**। कथं तर्हि श्रौतो भेदव्यपदेश इति, तत्राह— **भेदव्यपदेशस्त्विति**। इति द्वितीयं कृतात्ययाधिकरणम्।।

### *न्यायनिर्णयः*

चरणापेक्षत्वं, तत्राह— **न हीति**। सदाचारयुक्तस्य कर्माधिकारे मानमाह— **आचारेति**। वेदशब्देन वेदार्थोपलक्षणादाचारस्तच्छेषो न स्वतन्त्रफल इत्युक्तम्। इदानीं स्नानादिवत् पुरुषसंस्कारतया भिन्नफलत्वेऽपि न विरोधोऽस्तीत्याह— **पुरुषेति**। कथं तर्हि पृथक्फलत्वं, तत्राह— **इष्टादौ हीति**। अङ्गावबद्धोपास्तिवदित्यर्थः। आचारस्यैव योन्यापत्तिहेतुत्वेऽपि किमित्यनुशयस्य तत्कल्पनेत्याशङ्क्य कर्मणस्तद्धेतुत्वप्रसिद्धेरित्याह— **कर्म चेति**। एकदेशिमतमुपसंहरति— **तस्मादिति**। तदेव प्रपञ्चयति— **न हीति**। अयुक्तत्वं दृष्टान्तेन स्पष्टयति— **न हीति**। इतिशब्दो दार्ष्टान्तिकप्रदर्शनार्थः।।१०।।

साक्षात्सिद्धान्तमाह— **सुकृतेति**। तदेव विवृणोति— **बादरिस्त्विति**। कथं चरणशब्देन मुख्यवृत्त्या कर्मोच्यते, तत्राह— **चरणमिति**। वृद्धप्रयोगाभावे कथं तस्य कर्मविषयत्वं, तत्राह— **तथा हीति**। कर्मणः सर्वार्थकारित्वप्रसिद्धेराचारस्यातथात्वाद् भिन्नतेत्याशङ्क्य पूर्वोक्तस्मृतेरक्रोधादेः साधारणधर्मस्य शीलत्वसिद्धेर्मैवमित्याह— **आचारोऽपीति**। कथं तर्हि श्रौतो भेदवादः,

---

१. ज्योतिष्टोमप्रकरणे 'तीर्थे स्नाति' इति विहितस्नानस्य क्रतुयुक्तपुरुषधर्मत्वेन पुरुषार्थत्वेऽपि क्रत्वर्थत्वमुक्तं पूर्वमीमांसायाम्। (द्र. ३-४-९ अधि.) तथाऽऽचारस्यापि स्यादिति भावः।

**परिव्राजकन्यायेनाप्युपपद्यते। तस्माद् रमणीयचरणाः प्रशस्तकर्माणः, कपूयचरणा निन्दितकर्माण इति निर्णयः।।११।।**

।इति द्वितीयं कृतात्ययाधिकरणम्।।

३।।अनिष्टादिकार्यधिकरणम्।।सू. १२-२१।।

## अनिष्टादिकारिणामपि च श्रुतम्।।१२।।

**इष्टादिकारिणश्चन्द्रमसं गच्छन्तीत्युक्तम्। ये त्वितरेऽनिष्टादिकारिणस्तेऽपि किं चन्द्रमसं गच्छन्त्युत न गच्छन्तीति चिन्त्यते। तत्र तावदाहुः- इष्टादिकारिण एव चन्द्रमसं गच्छन्तीत्येतन्न। कस्मात्? यतोऽनिष्टादिकारिणामपि चन्द्रमण्डलं गन्तव्यत्वेन श्रुतम्। तथा ह्यविशेषेण कौषीतकिनः समामनन्ति- 'ये**

*शारीरकन्यायसंग्रहः*

**अनिष्टादिकारिणामपि च श्रुतम्।।१२।। संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्।।१३।। स्मरन्ति च।।१४।। अपि च सप्त।।१५।। तत्रापि च तद्व्यापारादविरोधः।।१६।। विद्याकर्मणोरिति तु प्रकृतत्वात्।।१७।। न तृतीये तथोपलब्धेः।।१८।। स्मर्यतेऽपि च लोके।।१९।। दर्शनाच्च।।२०।। तृतीयशब्दावरोधः संशोकजस्य।।२१।।** "ये वै के चास्माल्लोकात् प्रयन्ति" इति इष्टानिष्टादिकारिसामान्यविषयं चन्द्रलोकगमनवाक्यम्; तथा "वैवस्वतं संगमनं जनानाम्" इति च इष्टानिष्टादिकारिसामान्यविषयं यमलोकगमनवाक्यम्। तत्राविशेषेण चन्द्रगमनवाक्यं विद्याकर्मविशेषितमार्गद्वयभ्रष्टानामनिष्टादिकारिणां तृतीयस्थानगमनविषयविशेषवाक्येन इष्टादिकारिविषयविशेषे नियम्यते। तथाऽविशेषेण यमलोकगमनविषयं वाक्यमपीष्टादिकारिणां चन्द्रगमनविषयवाक्येनानिष्टादिकारिविषयविशेषे नियम्यत इति सामान्यवाक्यद्वयं विशेषवाक्याभ्यां नियम्यानिष्टादिकारिणां यमगमनमुक्तम्।।

*प्रकटार्थविवरणम्*

[भेद]**व्यपदेशस्त्विति**।यस्माल्लक्षणायां नास्ति निमित्तम्, तस्माच्चरणशब्दोऽनुशये मुख्य इति बादरीयमतं सिद्धान्त इत्याह— **तस्मादिति**। इति द्वितीयं कृतात्ययाधिकरणम्।।

**अनिष्टादिकारिणामपि च श्रुतम्**।। प्रथमाधिकरणेन सम्बन्धमाह— **इष्टादिकारिण इति**। "ये वै के च" इत्यविशेषवचनात् "वैवस्वतं सङ्गमनम्" इति वचनाच्च संशय इत्यर्थः। पूर्वपक्षसूत्रं योजयति— **तत्र तावदाहेति**। चकारसूचितामुपपत्तिमाह—

*भाष्यभावप्रकाशिका*

**अनिष्टादिकारणमिति**। इष्टादिकारिभ्योऽन्येऽनिष्टादिकारिण इति सूत्रपदं व्याचक्षाणः संशयं दर्शयति— **ये त्वितर इति**।

*न्यायनिर्णयः*

तत्राह— **भेदव्यपदेशस्त्विति**। लक्षणायां निमित्ताभावाच्चरणशब्दोऽनुशये मुख्य इति बादरिमतमुपसंहरति— **तस्मादिति**।।११।। इति द्वितीयं कृतात्ययाधिकरणम्।।

इष्टादिकारिणामनुशयवतामागतिरुक्ता। सम्प्रत्यनिष्टादिकारिणामपि चन्द्रस्थलस्खलितानामनुशयवतामागतिमभिप्रेत्य चोदयति— **अनिष्टादीति**। प्रथमाधिकरणेनास्य संगतिमाह— **इष्टादीति**। व्यवहितमनूद्यानिष्टादिकारिणो विषयीकृत्य 'ये वै के चे'त्यविशेषश्रुतेः 'वैवस्वतं संगमनं जनाना'मिति श्रुतेश्च संशयं दर्शयति— **ये त्विति**। अत्र चानिष्टादिकारिणां शुभमार्गेण गमनमात्रमपि नेत्युक्त्या वैराग्ये दृढीकृते पूर्ववदेव पादादिसंगतयः। पूर्वपक्षे शुभाशुभकारिणामविशेषेण चन्द्रगतेस्तत्र शुभकरणमकिंचित्करमिति फलति, सिद्धान्ते त्वशुभकारिणां गत्यन्तरध्रौव्याच्चन्द्रगतौ प्रयोजकमिष्टाद्येवेति मत्वा पूर्वपक्षसूत्रं योजयति— **तत्रेति**। तेषामिष्टादिकं कर्म चन्द्रलोकप्रापकमस्तीत्यतो नियमनिषेधो न युक्तिमानिति शङ्कते— **कस्मादिति**। श्रुत्या परिहरति— **यत इति**। तामेवोदाहरति— **तथाहीति**। श्रुतेश्चन्द्रलोकगमनमुपपाद्य चकारसूचितयुक्तितोऽपि तदुपपादयति— **देहेति**। देवयानपितृयाणातिरेकेण गमनागमन-

**वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौ.उ. १।२) इति। देहारम्भोऽपि च पुनर्जायमानानां नान्तरेण चन्द्रप्राप्तिमवकल्पते, पञ्चम्यामाहुतावित्याहुतिसंख्यानियमात्। तस्मात् सर्व एव चन्द्रमसमासीदेयुः। इष्टादिकारिणामितरेषां च समानगतित्वं न युक्तमिति चेत्? न; इतरेषां चन्द्रमण्डले भोगाभावात्।।१२।।**

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्।।१३।।

**तुशब्दः पक्षं व्यावर्तयति। नैतदस्ति– सर्वे चन्द्रमसं गच्छन्तीति। एतत् कस्मात्? यतो भोगायैव चन्द्रारोहणं न निष्प्रयोजनम्, नापि प्रत्यवरोहायैव। यथा कश्चिद् वृक्षमारोहति पुष्पफलोपादानायैव, न निष्प्रयोजनं नापि पतनायैव। भोगश्चानिष्टादिकारिणां चन्द्रमसि नास्तीत्युक्तम्। तस्मादिष्टादिकारिण एव चन्द्रमसमारोहन्ति, नेतरे। ते तु संयमनं यमालयमवगाह्य स्वदुष्कृतानुरूपा यामीर्यातना अनुभूय पुनरेवेमं लोकं प्रत्यवरोहन्ति। एवंभूतौ तेषामारोहावरोहौ भवतः। कुतः? तद्गतिदर्शनात्। तथा हि यमवचनसरूपा श्रुतिः प्रयतामनिष्टादिकारिणां यमवश्यतां दर्शयति– 'न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन**

### *प्रकटार्थविवरणम्*

**देहारम्भोऽपि चेति।** ननु साध्वसाधुकारिणोः समानमार्गत्वं लोकानुभवबाधितमित्याशङ्क्य विशेषमाह— **इष्टादिकारिणामित्यादिना।**

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्।।** सूत्रान्तरेण सिद्धान्तमुपक्रमते— **संयमने त्विति।** संपरायः परलोकः; तत्प्राप्तिसाधनभूतो धर्मविशेषः सांपरायः; स चायमविवेकिनं प्रति न प्रतिभाति, नात्मानं प्रकटीकरोतीत्यर्थः। अनिष्टादिकारिणां

### *भाष्यभावप्रकाशिका*

श्रुतितश्चन्द्रलोकगमनमुपपाद्य युक्तितोऽप्युपपादयति— **देहेति। सर्व एव चन्द्रमसमासीदेयुरिति।** अयमाशयः— देवयानपितृयाणव्यतिरेकेण गमनागमनाय मार्गाश्रवणादथैतयोः पथोर्न कतरेण चन तानीमानि जायस्व म्रियस्वेति तृतीयं स्थानमिति स्थानत्वमात्रावगमात् पथित्वेनाप्रतीतेश्चन्द्रमण्डलं प्राप्यावतीर्णानामपि तृतीयस्थानत्वसंभवान्न केषाञ्चिदेव गमनमिति। ननु सर्वेषां समानगतित्वे तत्प्राप्तिसाधनानुष्ठानवैयर्थ्यमिति शङ्कते— **इष्टादिकारिणामिति।** तत्र भोगाभावेऽप्यनन्यमार्गतया ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीतिवत् गमनमवकल्पत इति विशेषमाह— **नेतरेषामिति।**

यामीर्यमसंबन्धिन्यः। प्रयतां प्रेत्य गच्छताम्। ननु ये वै के चास्मादित्यादिश्रुत्या सर्वेषां चन्द्रगमनमवगम्यत इत्युक्तमित्याशङ्क्य

### *न्यायनिर्णयः*

मार्गाश्रवणाद् 'अथैतयोः पथोर्न कतरेणचने'त्यारभ्य 'जायस्व म्रियस्वेत्येतत्तृतीयं स्थान'मिति स्थानमात्रत्वश्रुत्या पथित्वेनाप्रतीतेश्चन्द्रमण्डलं प्राप्यावतीर्णानामपि तद्योगान्न केषांचिदेव गतिरिति मत्वोपसंहरति— **तस्मादिति।** सर्वेषां तुल्यगतित्वे तत्प्राप्तिहेत्वनुष्ठानवैयर्थ्यमिति शङ्कते— **इष्टादीति।** तत्र भोगाभावेऽपि मार्गान्तरशून्यतया ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीतिवदुपपन्ना गतिरित्याह— **नेतरेषामिति।।१२।।**

सिद्धान्तमुपक्रमते— **संयमने त्विति।** सूत्रं व्याचष्टे— **तुशब्द इति।** पक्षव्यावृत्तिमेव व्यनक्ति— **नैतदिति।** का पुनरत्रानुपपत्तिः? तत्र तेषां तद्गमनमफलं सफलं वेति विकल्प्याद्यं प्रत्याह— **भोगायेति।** द्वितीयेऽपि गमनस्य प्रत्यवरोहो वा भोगो वा फलं, नाद्य इत्याह— **नापीति।** पक्षद्वयनिरासं दृष्टान्तेन स्पष्टयति— **यथेति।** कल्पान्तरं निरस्यति— **भोगश्चेति।** तुशब्दार्थमुपसंहरति— **तस्मादिति।** कथं तर्हि तेषामारोहावरोहावित्याशङ्क्य संयमने त्वनुभूयेत्यादि विभजते— **ते त्विति।** तत्र प्रश्नपूर्वकं हेतुमाह— **कुत इति।** हेतुं व्याचष्टे— **तथाहीति।** प्रयतां प्रेत्य गच्छताम् संपरायः परलोकः; सम्यगवश्यंभावेन परा परस्ताद्देहपातादीयते गम्यत इति व्युत्पत्तेः। तत्प्राप्त्यर्थः साधनविशेषः सांपरायः। स बालमविवेकिनं विशेषतो वित्तनिमित्तेन मोहेन मूढं छन्नदृष्टिमत एव प्रमाद्यन्तं प्रमादं कुर्वन्तं विषयप्रवणं प्रति न भाति। स न केवलमज्ञ एव, किंतु विपरीतदर्शी च

**मूढम्। अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे' (क.उ. २।६) इति। 'वैवस्वतं संगमनं जनानाम्' (तै.आ. ६-१) इत्येवंजातीयकं च बह्वेव यमवश्यताप्राप्तिलिङ्गं भवति।।१३।।**

**स्मरन्ति च।।१४।।**

**अपि च मनुव्यासप्रभृतयः शिष्टाः संयमने पुरे यमायत्तं कपूयकर्मविपाकं स्मरन्ति नाचिकेतोपाख्यानादिषु।।१४।।**

**अपि च सप्त।।१५।।**

**अपि च सप्त नरका रौरवप्रमुखा दुष्कृतफलोपभोगभूमित्वेन स्मर्यन्ते पौराणिकैः।ताननिष्टादिकारिणः प्राप्नुवन्ति। कुतस्ते चन्द्रं प्राप्नुयुरित्यभिप्रायः।।१५।।**

**ननु विरुद्धमिदं यमायत्ता यातनाः पापकर्माणोऽनुभवन्तीति। यावता तेषु रौरवादिष्वन्ये चित्रगुप्तादयो नानाऽधिष्ठातारः स्मर्यन्त इति। नेत्याह—**

**तत्रापि च तद्व्यापारादविरोधः।।१६।।**

**तेष्वपि सप्तसु नरकेंषु तस्यैव यमस्याधिष्ठातृत्वव्यापाराभ्युपगमादविरोधः। यमप्रयुक्ता एव हि ते**

***प्रकटार्थविवरणम्***

चन्द्रमण्डले भोगाभावाद् यमवश्यतायाश्च श्रुतिस्मृतिसिद्धत्वान्नास्ति चन्द्रमण्डलगमनमिति सङ्क्षेपः।

**अपि च सप्त।। तत्रापि च तद्व्यापारादविरोधः।।**इदानीं यमवश्यतामाक्षिप्य समाधत्ते— **ननु विरुद्धमित्यादिना।**

***भाष्यभावप्रकाशिका***

विरोध्यनेकलिङ्गदर्शनादन्यथा तन्नेतव्यमित्याह— **बह्वेवेति**। 'ये वै के चास्माल्लोकाद्' 'वैतस्वतं संगमन'मित्यनयोर्वाक्ययोः सामान्येन चन्द्रलोकयमलोकगमनप्रतिपादकयोर्विद्याकर्मविशेषितमार्गद्वयभ्रष्टानामनिष्टादिकारिणां तृतीयस्थानगमनप्रतिपादकवाक्येनेष्टादिकारिणां चन्द्रलोकगमनवाक्येन च विशेषेण विषयविशेषनियमो युक्त इति भावः। एकत्रोभयोरधिष्ठातृत्वमयुक्तमित्यंत आह— **यमप्रयुक्ता इति।**

***न्यायनिर्णयः***

यस्मादयमेव लोकः स्त्र्यन्नपानादिरस्ति न पर इति मानी मननशीलस्तस्मात् तदनुरूपमाचरन् पुनः पुनर्जननमरणप्राप्त्या मे वशमापद्यत इति मृत्योर्नचिकेतसं प्रति वचनम्। श्रुत्यन्तरमाह— **वैवस्वतमिति**। जनानां परलोकगतानां संगमनं संगम्यं वैवस्वतं यमं राजानं हविषा दुवस्यत प्रीणयतेत्यर्थः। 'ये वै के चास्मा'दित्यादिश्रुत्या सर्वेषां चन्द्रगतिः सिद्धेत्युक्तमित्याशङ्क्य विरोध्यनेकलिङ्गदृष्ट्या तदन्यथा नेयमित्याह— **बह्वेवेति**। 'ये वै के च' 'वैवस्वतं संगमनम्' इत्यनयोर्वाक्ययोः सामान्येन चन्द्रलोकयमलोकगतिवादिनोर्विद्याकर्मविशेषितमार्गद्वयभ्रष्टानामनिष्टादिकारिणां तृतीयस्थानगतिवादिवाक्येनेष्टादिकारिणां चन्द्रगतिवाक्येन च विशेषार्थेन विषयविशेषनियतिरिति भावः।।१३।।

इतश्चेष्टादिकारिविषये 'ये वै के चे'त्यादिवाक्यस्य संकोच इत्याह— **स्मरन्ति चेति**। तद् व्याकरोति— **अपि चेत्यादिना।।१४।।**

इतश्चानिष्टादिकारिणां न चन्द्रगतिरित्याह— **अपीति**। तद् व्याख्याति— **अपि चेत्यादिना।।१५।।**

अनिष्टादिकारिणां चन्द्रमण्डले भोगाभावाद् यमवश्यतायाश्च श्रुतिस्मृतिसिद्धत्वात्र चन्द्रगतिरित्युक्तमिदानीं तेषां यमवश्यतामाक्षिपति— **नन्विति**। विरुद्धत्वे हेतुमाह— **यावतेति**। सूत्रेण परिहरति— **नेत्याहेति**। तद्विभजते— **तेष्वपीति**। एकत्रोभयोरधिष्ठातृत्वायो-

**चित्रगुप्तादयोऽधिष्ठातारः स्मर्यन्ते।।१६।।**

**विद्याकर्मणोरिति तु प्रकृतत्वात्।।१७।।**

**पञ्चाग्निविद्यायाम् 'वेत्थ यथाऽसौ लोको न संपूर्यते' (छा.उ. ५।३।३) इत्यस्य प्रश्नस्य प्रतिवचनावसरे श्रूयते– 'अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न संपूर्यते' (छा.उ. ५।१०।८) इति। तत्रैतयोः पथोरिति विद्याकर्मणोरित्येतत्। कस्मात्? प्रकृतत्वात्। विद्याकर्मणी हि देवयानपितृयाणयोः पथोः प्रतिपत्तौ[1] प्रकृते। 'तद्य इत्थं विदुः' (छा.उ. ५।१०।१) इति विद्या। तया प्रतिपत्तव्यो देवयानः पन्थाः प्रकीर्तितः। 'इष्टापूर्ते दत्तम्' (छा.उ. ५।१०।३) इति कर्म। तेन प्रतिपत्तव्यः पितृयाणः पन्थाः प्रकीर्तितः। तत्प्रक्रियायाम्– 'अथैतयोः पथोर्न कतरेणचन' इति श्रुतम्। एतदुक्तं भवति– ये न विद्यासाधनेन देवयाने पथ्यधिकृताः, नापि कर्मणा पितृयाणे, तेषामेष क्षुद्रजन्तुलक्षणोऽसकृदावर्ती तृतीयः पन्था भवतीति। तस्मादपि नानिष्टादिकारिभिश्चन्द्रमाः प्राप्यते।**

**स्यादेतत्– तेऽपि चन्द्रबिम्बमारुह्य ततोऽवरुह्य क्षुद्रजन्तुत्वं प्रतिपत्स्यन्त इति। तदपि नास्ति।**

***प्रकटार्थविवरणम्***

**विद्याकर्मणोरिति तु प्रकृतत्वात्**।। मार्गद्वयभ्रष्टानां तृतीयस्थानसङ्कीर्तनादपि नानिष्टादिकारिणां चन्द्रमण्डलगमनमिति हेत्वन्तरं दर्शयितुं श्रुतिं तावदाह— **पञ्चाग्निविद्यायामित्यादिना**। श्रुत्यर्थं सूत्रयोजनया दर्शयति— **तत्रैतयोरित्यादिना**। प्रतिपद्यन्ते याभ्यां ते प्रतिपदे साधनभेदे[भूते] विद्याकर्मणी इति सम्बन्धः। तृतीयस्थानसङ्कीर्तनं चन्द्रगमनं निवारयितुं न शक्नोति, आगत्याऽपि तृतीयस्थानप्राप्तिसंभवादित्याह— **स्यादेतत् तेऽपीति**। एवंविधकल्पनायां फलाभावान्मानाभावाच्च नैवं कल्पनीयमित्याह— **तदपि**

***भाष्यभावप्रकाशिका***

मार्गद्वयनिराकरणेन स्थानान्तरसंबन्धप्रतिपादनादनिष्टादिकारिणां चन्द्रगमनमनुपपन्नमित्याह— **पञ्चाग्निविद्यायामिति**। वाक्यस्यार्थमाह— **तत्रैतयोरिति**।

***न्यायनिर्णयः***

गमाशङ्क्याह— **यमेति**।।१६।।

मार्गद्वयभ्रष्टानां तृतीयस्थानोक्तेरपि नानिष्टादिकारिणां चन्द्रगतिरित्याह— **विद्येति**। हेत्वन्तरमेव प्रकटयन् भूमिकोक्तिपूर्वकं श्रुतिमुदाहरति— **पञ्चेति**। तद्विद्येति तत्प्रकरणमुक्तम्। श्रौती प्लुतिर्विचारणार्था। तृतीयस्थानोक्त्यारम्भार्थोऽथशब्दः। तत्प्रतिपत्तिफलमाह— **तेनेति**। श्रुत्यर्थं सूत्रयोजनया विशदयति— **तत्रेति**। उक्ता श्रुतिः सप्तम्यर्थः। पथिशब्दस्यार्थान्तरे रूढेर्विद्याकर्मार्थत्वे न मानमिति शङ्कते— **कस्मादिति**। तत्र प्रकरणं प्रमाणयति— **प्रकृतत्वादिति**। तदेव विवृणोति— **विद्येति**। प्रतिपत्तौ प्रतिपत्तिसाधने। तत्र देवयानस्य पथो विद्याद्वारा प्रकृतत्वं प्रकटयति— **तद्य इति**। कर्मद्वारा पितृयाणस्यापि प्रकृतत्वमाह— **इष्टेति**। विद्याकर्मणोरेवं प्रकृतत्वेऽपि प्रकृते किं जातम्, तदाह— **तदिति**। विद्याकर्महीनानां क्षुद्रजन्तुभावोऽत्र निर्दिश्यते, न पुनस्तृतीयोऽध्वेत्याशङ्क्याह— **एतदिति**। मार्गद्वयभ्रष्टानामनिष्टादिकारिणां तृतीयस्थानोक्तिफलमाह— **तस्मादिति**। यदिदं तृतीयस्थानकीर्तनं तत्र चन्द्रगतिं वारयति, आगत्याऽपि तत्प्राप्तिसंभवादिति शङ्कते— **स्यादिति**। मानफलाभ्यां हि कल्पना, न चेह तदुभयं, तथा च नैवं कल्पनेत्याह—

---

१. 'प्रतिपदे' इति पा.।

**आरोहानर्थक्यात्। अपि च सर्वेषु प्रयत्सु चन्द्रलोकं प्राप्नुवत्स्वसौ लोकः प्रयद्भिः संपूर्येतेत्यतः प्रश्नविरुद्धं प्रतिवचनं प्रसज्येत। तथा हि प्रतिवचनं दातव्यं यथाऽसौ लोको न संपूर्यते। अवरोहाभ्युपगमादसंपूरणोपपत्तिरिति चेत्? न। अश्रुतत्वात्। सत्यमवरोहादप्यसंपूरणमुपपद्यते। श्रुतिस्तु तृतीयस्थानसंकीर्तनेनासंपूरणं दर्शयति- 'एतत् तृतीयं स्थानं तेनासौ लोको न संपूर्यते' (छा.उ. ५।१०।८) इति। तेनानारोहादेवासंपूरणमिति युक्तम्। अवरोहस्येष्टादिकारिष्वप्यविशिष्टत्वे सति तृतीयस्थानोक्त्यानर्थक्यप्रसङ्गात्। तुशब्दस्तु शाखान्तरीयवाक्य-प्रभवामशेषगमनाशङ्कामुच्छिनत्ति। एवं सत्यधिकृतापेक्षः शाखान्तरीये वाक्ये सर्वशब्दोऽवतिष्ठते-ये वै केचिदधिकृता अस्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्तीति।।१७।।**

**यत्पुनरुक्तं देहलाभोपपत्तये सर्वे चन्द्रमसं गन्तुमर्हन्ति, पञ्चम्यामाहुतावित्याहुतिसंख्यानियमादिति। तत् प्रत्युच्यते-**

### न तृतीये तथोपलब्धेः।।१८।।

**न तृतीये स्थाने देहलाभाय पञ्चसंख्यानियम आहुतीनामादर्तव्यः। कुतः? तथोपलब्धेः। तथा ह्यन्तरेणैवाहुतिसंख्यानियमं वर्णितेन प्रकारेण तृतीयस्थानप्राप्तिरुपलभ्यते 'जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्'**

#### *प्रकटार्थविवरणम्*

**नास्तीति**। प्रश्नाननुरूपत्वप्रसङ्गादपि नेयं कल्पना युक्तेत्याह— **अपि चेति**। गमनपक्षेऽपि प्रश्नाननुरूपत्वं नास्तीत्याह— **अवरोहाभ्युपगमादिति**। अवरोहेणासंपूर्णत्वस्याश्रुतत्वान्नैतदपि श्रुतहान्या कल्पयितुं युक्तमित्याह— **नाश्रुतत्वादिति**। एतदेव विवृणोति— **सत्यमित्यादिना**। एवं तावदुपपत्तिभिः स्वपक्षमुपपाद्य परपक्षं च प्रतिषिध्य इदानीं पूर्ववादिनोद्भावितवाक्यगतिं दर्शयितुमुपक्रमते— **तुशब्दस्त्वित्यादिना**।

**न तृतीये तथोपलब्धेः।। जायस्व म्रियस्वेति**। पुनः पुनः जायन्ते म्रियन्ते चेति प्रसिद्धमेव कृमिकीटादीनामनवरतं

#### *भाष्यभावप्रकाशिका*

अश्रुतत्वादित्येतत् प्रपञ्चयति— **सत्यमवरोहादित्यादिना**।

#### *न्यायनिर्णयः*

**तदपीति**। प्रतिवचनस्य प्रश्नाननुरूपत्वप्रसङ्गादपि नेयं कल्पनेत्याह— **अपि चेति**। कथं तर्हि प्रश्नानुगुणं प्रतिवचनं, तत्राह— **तथा हीति**। गमनेऽपि तस्य प्रश्नानुगुणत्वसिद्धिरित्याह— **अवरोहेति**। अवरोहकृतासंपूरणस्याश्रुतेर्नैवमपि श्रुतहान्यादि कल्पयितव्यमित्याह— **नेति**। तदेव प्रपञ्चयति— **सत्यमिति**। तर्हि तथैवासंपूरणं स्यादित्याशङ्क्य श्रुतिविरोधान्मैवमित्याह— **श्रुतिस्त्विति**। श्रुतिसिद्धमसंपूरणं निगमयति— **तेनेति**। किमिति तदवरोहणकृतमेव श्रुतावपि नेष्टमित्याशङ्क्याह— **अवरोहस्येति**। युक्त्या स्वपक्षमुपपाद्य परपक्षं चापनुद्य पूर्ववाद्युद्भावितवाक्यस्य सूत्राक्षरेणैव गतिं दर्शयितुमारभते— **तुशब्दस्त्विति**। उच्छित्तिप्रकारं प्रकटयति— **एवमिति**। उक्तन्यायेनानिष्टादिकारिणां चन्द्रगत्ययोगे सतीति यावत्। अधिकृतशब्देनेष्टादिकारिणो गृह्यन्ते। सर्वशब्दस्याधिकृतार्थत्वे स्थिते स्थितं वाक्यार्थमाह— **ये वा इति**।।१७।।

परोक्तश्रुतेर्गतिमुक्त्वा तदीयां युक्तिमनुवदति— **यदिति**। तदुत्तरत्वेन सूत्रमादत्ते— **तदिति**। प्रतिज्ञां पूरयन् योजयति— **नेत्यादिना**। पृष्ट्वा हेतुमुक्त्वा व्याचष्टे— **कुत इति**। भोगाय हि चन्द्रारोहणमित्यादिवर्णितः प्रकारः। उपलम्भमेवाभिनयति— **जायस्वेति**। ज्ञानकर्मशून्या हि कृमिकीटादिभावेन पुनः पुनर्जायन्ते म्रियन्ते चेति प्रसिद्धम्। न च तत्राहुतिसंख्योपलभ्यते। न

**(छा.उ. ५।१०।८) इति। अपि च 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा.उ. ५।३।३) इति मनुष्यशरीरहेतुत्वेनाहुतिसंख्या संकीर्त्यते, न कीटपतङ्गादिशरीरहेतुत्वेन, पुरुषशब्दस्य मनुष्यजातिवचनत्वात्। अपि च पञ्चम्यामाहुतावपां पुरुषवचस्त्वमुपदिश्यते, नापञ्चम्यामाहुतौ पुरुषवचस्त्वं प्रतिषिध्यते, वाक्यस्य द्व्यर्थतादोषात्। तत्र येषामारोहावरोहौ संभवतस्तेषां पञ्चम्यामाहुतौ देह उद्भविष्यति। अन्येषां तु विनैवाहुतिसंख्यया भूतान्तरोपसृष्टाभिरद्भिर्देह आरप्स्यते।।१८।।**

## स्मर्यतेऽपि च लोके।।१९।।

**अपि च स्मर्यते लोके द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनां चायोनिजत्वम्। तत्र द्रोणादीनां योषिद्विषयैकाऽऽहुतिर्नास्ति। धृष्टद्युम्नादीनां तु योषित्पुरुषविषये द्वे अप्याहुती न स्तः। यथा च तत्राहुति-संख्याऽनादरो भवत्येवमन्यत्रापि भविष्यति। बलाकाऽप्यन्तरेणैव रेतःसेकं गर्भं धत्त इति लोकरूढिः।।१९।।**

## दर्शनाच्च।।२०।।

**अपि च चतुर्विधे भूतग्रामे जरायुजाण्डजस्वेदजोद्भिज्जलक्षणे स्वेदजोद्भिज्जयोरन्तरेणैव ग्राम्यधर्ममुत्पत्ति-दर्शनादाहुतिसंख्याऽनादरो भवति। एवमन्यत्रापि भविष्यति।।२०।।**

**ननु 'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जम्' (छा.उ. ६।३।१)**

### *प्रकटार्थविवरणम्*

जन्ममरणं सङ्कीर्तयति; न तत्राहुतिसङ्ख्या लभ्यते; न च दृष्टविरोधे कल्पयितुं शक्यत इत्यर्थः। किं च पुरुषशब्दप्रयोगात् कीटाद्याकारेण न पञ्चम्यामाहुतावापः परिणमन्त इत्याह— **अपि चेति**। इदानीं मनुष्यशरीरेऽपि नास्त्याहुतिसङ्ख्यानियम इत्याह— **अपि च पञ्चम्यामिति**।

**स्मर्यतेऽपि च लोके। दर्शनाच्च**।। "स्मर्यतेऽपि च" इत्यादिसूत्रद्वयेनोदाहरणादाहुतिसङ्ख्यानादरं विवृणोति। ऐतरेयकावष्टम्भेन

### *न्यायनिर्णयः*

च तेषां निरन्तरं जायमानानां म्रियमाणानां चाहुतिसंख्या कल्प्यते दृष्टविरोधे कल्पनानवकाशादित्यर्थः। किंच देहमात्रहेतुत्वेनाहुतिसंख्या नियम्यते मनुष्यदेहहेतुत्वेन वा? तत्राद्यं पुरुषशब्दविरोधेन प्रत्याह— **अपि चेति**। द्वितीयं निराह— **अपि चेत्यादिना**। तत्र हेतुमाह— **वाक्यस्येति**। तस्य विधिनिषेधार्थद्वयार्थतायां वाक्यभेदादैक्ये च संभवति तदयोगादित्यर्थः। पञ्चम्यामाहुतावपां पुरुषाकारपरिणामेऽपि नापञ्चम्यामाहुतौ तासां तन्निषेधश्चेत् तर्हि तासामुभयथा देहारम्भसंभवे कथं व्यवस्थेत्याशङ्क्याह— **तत्रेति**। **अन्येषां त्विति**। चन्द्रमण्डलं प्रत्यारोहस्ततोऽवरोहश्च येषां न युक्तस्तेषामिति यावत्।।१८।।

मनुष्यदेहारम्भं प्रत्याहुतिसंख्यानियमाभावे स्मृतिं संवादयति— **स्मर्यतेऽपीति**। सूत्रं व्याकरोति— **अपि चेति**। लोकशब्देन सूत्रभाष्ययोरितिहासादिरपि व्युत्पत्त्योच्यते। अयोनिजत्वाविशेषेऽपि द्रोणादिष्ववान्तरविशेषमाह— **तत्रेति**। तद्दृष्टान्तेनानिष्टादि-कारिष्वप्याहुतिसंख्यानियमाभावधीरिति फलितमाह— **यथेति**। देहमात्रहेतुत्वेनाहुतिसंख्यानियमो नेत्यत्रापि सूत्रस्य तात्पर्यमस्तीत्याह— **बलाकेति**।।१९।।

इतश्च देहमात्रारम्भे नाहुतिसंख्यानियमोऽस्तीत्याह— **दर्शनाच्चेति**। ऐतरेयश्रुत्यवष्टम्भेन सूत्रं व्याकरोति— **अपि चेत्यादिना**। अन्यत्रापीत्यनिष्टादिकारिणो निर्दिश्यन्ते।।२०।।

श्रुत्यन्तरविरोधं शङ्कते— **नन्विति**। अण्डजमेवाऽऽण्डजं पक्ष्यादि। जीवजं जरायुजम्। उद्भिद्य जायत इत्युद्भिज्जं वृक्षादि।

**इत्यत्र त्रिविध एव भूतग्रामः श्रूयते; कथं चतुर्विधत्वं भूतग्रामस्य प्रतिज्ञातमिति। अत्रोच्यते—**

**तृतीयशब्दावरोधः संशोकजस्य।।२१।।**

**'आण्डजं जीवजमुद्भिज्जम्' (छा.उ. ६।३।१) इत्यत्र तृतीयेनोद्भिज्जशब्देनैव स्वेदजोपसंग्रहः कृतः प्रत्येतव्यः। उभयोरपि स्वेदजोद्भिज्जयोर्भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वात्। स्थावरोद्भेदात्तु विलक्षणो जङ्गमोद्भेद इत्यन्यत्र स्वेदजोद्भिज्जयोर्भेदवाद इत्यविरोधः।।२१।।**

।।इति तृतीयमनिष्टादिकार्यधिकरणम्।।

४।।साभाव्यापत्त्यधिकरणम्।।सू. २२।।

**[1]साभाव्यापत्तिरुपपत्तेः।।२२।।**

**इष्टादिकारिणश्चन्द्रमसमारुह्य तस्मिन् यावत्संपातमुषित्वा ततः सानुशया अवरोहन्तीत्युक्तम्। अथावरोहप्रकारः परीक्ष्यते। तत्रेयमवरोहश्रुतिर्भवति— 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद् वायुं वायुर्भूत्वा**

***शारीरकन्यायसंग्रहः***

**साभाव्यापत्तिरुपपत्तेः।।२२।।** यद्यपि भवतिधातुः जीवस्याकाशादिभावपरिणामे श्रुतिर्भवति, तथाप्युत्तरत्र रमणीयचरणादिसंयुक्तस्य चेतनस्य आकाशादितिलमाषान्तेभ्यः स्वेनैव रूपेणाभिनिष्क्रमणान्यथानुपपत्तिलक्षणया श्रुतार्थापत्त्याऽन्यस्यान्यभावानुपपत्त्यनुगृहीततया [गृहीतया] विरोधात् श्रुतेरुपचरिततद्भावापत्तिविषयत्वमुक्तम्।।

***प्रकटार्थविवरणम्***

चतुर्विधो भूतग्राम इत्युक्तम्। तत्र छन्दोगश्रुतिविरोधं प्रसङ्गादाशङ्कते— **ननु तेषामिति**। अण्डजमेव आण्डजम् पक्ष्यादि पक्ष्याद्यन्तरस्य बीजम्; जीवजं जरायुजम्; उद्भिद्य जायत इत्युद्भिज्जम्; तदुद्भिज्जान्तरस्य बीजमित्यर्थः।

**तृतीयशब्दावरोधः संशोकजस्य**।। स्वेदजस्योद्भिज्जेऽन्तर्भावान्नास्ति छान्दोग्यैतरेयकयोर्विरोध इत्याह— **तृतीयेति**। इति तृतीयमनिष्टादिकार्यधिकरणम्।।

**साभाव्यापत्तिरुपपत्तेः**।। व्यवहितसंबन्धमभिदधाति— **इष्टादिकारिण इति**। भवतिश्रुतेः उत्तरत्र रमणीयचरणादिसंयुक्तचेतनस्य

***भाष्यभावप्रकाशिका***

जीवजं जरायुजं, संशोकजं संस्वेदजम्; लक्षणायां निमित्तमाह— **उभयोरपीति**। 'अण्डजानि च जरायुजानि [च स्वेदजानि] चोद्भिज्जानि चे'ति श्रुत्यन्तरे भेदव्यपदेशस्य का गतिरित्यत आह— **स्थावरोद्भेदादिति**।।इति तृतीयमनिष्टादिकार्यधिकरणम्।

***न्यायनिर्णयः***

छान्दोग्यश्रुतिविरोधं सूत्रेण परिहरति— **अत्रेति**। तद् व्याख्याति— **अण्डजमिति**। उद्भिज्जशब्देन स्वेदजोपसंग्रहे हेतुमाह— **उभयोरिति**। ऐतरेयके तर्हि भेदव्यपदेशस्य का गतिः, तत्राह— **स्थावरेति**। श्रुत्योर्विरोधं निराकृतमुपसंहरति— **इत्यविरोध इति**।।२१।।इति तृतीयमनिष्टादिकार्यधिकरणम्।।

अनिष्टादिकारिणामारोहावरोहरूपा गतिरुक्ता, सम्प्रतीष्टादिकारिणामवशिष्टमवरोहप्रकारं निरूपयति— **साभाव्येति**। व्यवहितेन संबन्धं दर्शयति— **इष्टादीति**। विषयवाक्यमुदाहरति— **तत्रेति**। चन्द्रमसि भोगं समाप्य प्राप्तावरोहेष्विष्टादिकारिष्विति यावत्। चन्द्रे भोक्तव्यकर्मणः समाप्त्यानन्तर्यमथेत्युक्तम्। एतमेव वक्ष्यमाणं पन्थानं पुनर्निवर्तन्ते; पुनःशब्दादनादौ संसारे पूर्वमपि चन्द्रं गता निवृत्ताश्चेति गम्यते। कोऽसावध्वा यं प्रति निवर्तन्ते, तमाह— **यथेति**। यथागतं मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमिति

१. 'तत्साभाव्यापत्तिः' इति पा.। 'स्वाभाव्यापत्तिः' इति पाठस्तु 'स्वसमो भावः येषां ते स्वभावाः, तत्त्वम्' इति समशब्दाध्याहारदोषाद् दूषितः कल्पतरौ।

**धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' (छा.उ. ५।१०।५) इति। तत्र संशयः– किमाकाशादिस्वरूपमेवावरोहन्तः प्रतिपद्यन्ते, किंवाऽऽकाशादिसाम्यमिति। तत्र प्राप्तं तावदाकाशादिस्वरूपमेव प्रतिपद्यन्त इति। कुतः? एवं हि श्रुतिर्भवति। इतरथा लक्षणा स्यात्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा। तथा च 'वायुर्भूत्वा धूमो भवती'त्येवमादीन्यक्षराणि तत्तत्स्वरूपोपपत्तावाञ्जस्येनावकल्पन्ते। तस्मादाकाशादिस्वरूपप्रतिपत्तिरिति।**

**एवं प्राप्ते ब्रूमः– आकाशादिसाम्यं प्रतिपद्यन्त इति। चन्द्रमण्डले यदम्मयं शरीरमुपभोगार्थमारब्धं तदुपभोगक्षये सति प्रविलीयमानं सूक्ष्ममाकाशसमं भवति, ततो वायोर्वशमेति, ततो धूमादिभिः संपृच्यत**

### *प्रकटार्थविवरणम्*

स्वरूपेणाभिनिष्क्रमणश्रवणाच्च संशयमाह— **तत्र संशय इति**। पूर्वपक्षमुपक्षिपति— **तत्र प्राप्तं तावदिति**। भवतिधातुर्जीवस्याकाशादिभावपरिणामे श्रुतिर्भवति, अतः स्वरूपमेव प्रतिपद्यते, श्रुतेः प्राबल्यादित्यर्थः। उक्तं स्फुटयति— **तथा चेति**। तथा हीत्यर्थः। स्वसमानो भावः सभावः; तस्य भावः साभाव्यं सादृश्यम्; तदापत्तिरिति योजनमभिप्रेत्याह— **आकाशादिसाम्यमिति**।

### *भाष्यभावप्रकाशिका*

**तत्साभाव्यापत्तिरुपपत्तेः। एवं श्रुतिर्भवतीति**। आकाशादिभावाभिधाने भूत्वेति श्रुतिर्मुख्यार्था भवतीत्यर्थः। इतरथा लक्षणा स्यात् गौणी स्यादिति व्याख्येयम्। अत्रापि गुणलक्षणासंभवात् 'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणते'ति वचनात्। यद्यपि यथेतमाकाशमाकाशाद्वायुमित्यत्र न तादात्म्यमवगम्यते तथापि वायुर्भूत्वेत्यादौ तादात्म्यावगमात्तत्रापि तादात्म्यमेवाङ्गीकरणीयम्। न चान्यस्यान्यात्मतानुपपत्तिः, नहुषश्रीनन्दिकेश्वरादिषु[१] दृष्टत्वादित्यभिप्रेत्य उपसंहरति— **तस्मादाकाशादिति**।

### *न्यायनिर्णयः*

गमनक्रमः, आगमनेऽप्याकाशोक्तेर्यथेतमिति भाति, पितृलोकाद्यकीर्तनादभ्रादिसंकीर्तनाच्चानेवमपीति गम्यते। तथा च यथेतमित्युपलक्षणम्। याः खल्वापश्चन्द्रमण्डले देहमारब्धवत्यस्ताः कर्मक्षये द्रुता आकाशं गतास्तत्सदृशा यदा जायन्ते तदा तदुपहिता अनुशयिनोऽप्याकाशसमा भवन्तीत्याह— **आकाशमिति**। तत्तुल्यतामापन्नाश्च वायुनेतश्चामुतश्च नीयमाना वायुसमा अनुशयिनोऽप्परिवेष्टिता वायुतुल्या भवन्तीत्याह— **आकाशादिति**। तदनन्तरं यो धूमो गमनदशायामासीत्तत्तुल्यो भवत्यनुशयीत्याह— **वायुरिति**। ततोऽपां धारणात् संभृतोदकं यदभ्रं तत्तुल्योऽनुशयीत्याह— **धूम इति**। ततो जलसेचनान्मेघो वर्षणकर्ता तत्तुल्यः स सिध्यतीत्याह— **अभ्रमिति**। तत्सादृश्यमापद्य वर्षधाराभिरनुशयी पृथिवीमापद्यत इत्याह— **मेघ इति**। अवरोहत्सु देहभृत्सु विषयेष्वाकाशं वायुमिति कर्मत्वोक्तेर्धूमो भवतीत्यादि भवतिश्रुतेश्च संदेहमाह— **तत्रेति**। देवयानपितृयाणौ पन्थानौ प्रक्रम्य तृतीयत्वोक्तेर्युक्तं स्थानशब्दस्य मार्गलक्षणत्वम्। भवतिश्रुतेश्च सादृश्यलक्षणत्वे हेत्वभावात् तादात्म्यार्थत्वमेवेति पूर्वपक्षयति— **तत्रेत्यादिना**। अत्र चावरोहरूपसंसारगतिनिरूपणद्वारा वैराग्यदृढीकरणात् पूर्ववत् पादादिसंगतयः। पूर्वपक्षे भवतिश्रुतेर्मुख्यार्थत्वसिद्धिः। सिद्धान्ते तूपपत्त्या लाक्षणिकार्थत्वधीः। 'यथेतमाकाशमाकाशाद्वायु'मित्यत्र तादात्म्यादृष्टेरन्यस्य चान्यात्मत्वासिद्धेर्नाकाशादितादात्म्यमनुशयिनामिति शङ्कते— **कुत इति**। 'वायुर्भूत्वे'त्यादौ तादात्म्यसिद्धेर्नहुषादिषु चाजगरादिभावानुभवाद् 'यथेतमाकाश'मित्यादावपि तादात्म्यमेवेति परिहरति— **एवं हीति**। भवतिश्रुतेः सादृश्यलक्षकत्वेऽपि नानुपपत्तिरित्याशङ्क्याह— **इतरथेति**। साऽपि शब्दवृत्तित्वादाश्रितेत्याशङ्क्याह— **श्रुतीति**। श्रुतेर्मुख्यार्थत्वे तदक्षरानुकूल्यं फलमाह— **तथा चेति**। पूर्वोक्तप्रकारेण श्रुतेर्मुख्यार्थत्वमाश्रित्यानुशयिनामाकाशादिस्वरूपापत्तावक्षराणि सम्यञ्चि भवन्तीत्यर्थः। श्रुत्या पूर्वपक्षमुपसंहरति— **तस्मादिति**।

आकाशादितादात्म्यं प्रत्याख्यातुं प्रयतितव्यमिति पक्षमनुभाष्य सिद्धान्तयति— **एवमिति**। समानो भावः साभाव्यं सादृश्यं तदापत्तिरिति योजनया प्रतिज्ञां विवृणोति— **आकाशादीति**। कथं पुनश्चेतनानामनुशयिनामचेतनैराकाशादिभिः सादृश्यमित्याशङ्क्य प्रतिज्ञातमेवार्थं प्रकटयति— **चन्द्रेति**। प्रतिज्ञासमाप्तावितिशब्दः। उक्तेऽर्थे श्रुतिमुदाहरति— **तदेतदिति**। भवतिश्रुत्या तादात्म्यमेवोपेयं,

---

१. 'नन्दिकेश्वरो हि रुद्रमाराध्य मानुषशरीरेणैव देवदेहत्वेन परिणाम' इति कल्पतरुः। पृ. ६७७। नहुषस्याजगरभावः प्रसिद्धः।

**इति। तदेतदुच्यते– 'यथेतमाकाशमाकाशाद्वायुम्' (छा.उ. ५।१०।५) इत्येवमादिना। कुत एतत्? उपपत्तेः। एवं ह्येतदुपपद्यते। न ह्यन्यस्यान्यभावो मुख्य उपपद्यते। आकाशस्वरूपप्रतिपत्तौ च वाय्वादिक्रमेणावरोहो नोपपद्यते। विभुत्वाच्चाकाशेन नित्यसंबन्धवत्त्वान्न तत्सादृश्यापत्तेरन्यस्तत्संबन्धो घटते। श्रुत्यसंभवे च लक्षणाश्रयणं न्याय्यमेव। अत आकाशादितुल्यतापत्तिरेवात्राकाशादिभाव इत्युपचर्यते।।२२।।**

।।इति चतुर्थं साभाव्यापत्त्यधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

#### नातिचिकाधिकरणम्

**नातिचिरेण विशेषात्।।२३।।** यद्यप्याकाशादिसाम्यं गतस्य "अतो वै खलु दुर्निष्प्रपतरम्" इति अतःशब्दस्य प्रकृतसर्वविषयत्वात् शीघ्रनिष्क्रमणकारणं नोपलभ्यते, तथापि "त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" इत्येकवाक्योपात्तव्रीह्यादिभावात् अतःशब्दपरामृष्टात् दुःखेन निष्क्रमणं तरप्प्रत्ययेन विशेष्यमाणं भिन्नवाक्योपात्तात् आकाशादिवर्षणान्तात् प्रकृतात् सुखेन निष्क्रमणमर्थापत्त्या गमयतीत्युक्तम्।

### *प्रकटार्थविवरणम्*

आकाशादिसाम्यं स्वस्थूलशरीरराहित्यं भेदास्फुरणं च। हेतुमवतारयति— **कुत एतदिति**। रमणीयचरणादिसंयुक्तचेतनस्याकाशादिभ्यस्तिलमाषान्तेभ्यः स्वेनैव रूपेणाभिनिष्क्रमणान्यथानुपपत्तिलक्षणया श्रुतार्थापत्त्याऽन्यस्य पूर्वसिद्धस्यान्यभावानुपपत्त्यनुगृहीतया विरोधात् श्रुतेरुपचरिततद्भावापत्तिविषयत्वमित्यर्थः। इति चतुर्थं साभाव्यापत्त्यधिकरणम्।

### *भाष्यभावप्रकाशिका*

उक्तेऽर्थे श्रुतिमुदाहरति— **तदेतदिति**। तदेव साधयति— **न हीति**। नहुषादिशरीरारम्भकभूतानामजगरवानरादिभावेन...घटते तच्छरीराणामयौगपद्यादिह तु सूक्ष्मशरीरस्याकाशादेश्च युगपद्भावान्नान्योन्यात्मत्वं घटत इत्यर्थः। आकाशादिभ्यस्तिलमाषान्तेभ्यः स्वेनैव रूपेणानुशयिनो निष्क्रमणान्यथानुपपत्तिलक्षणया श्रुतार्थापत्त्याऽन्यस्य पूर्वसिद्धान्यभावानुपपत्त्यनुगृहीतया विरोधाद्वायुर्भूत्वेत्यादिश्रुतेरुपचरिततद्भावापत्तिविषयत्वमित्याह— **आकाशस्वरूपेति**। नन्वाकाशभवनेन तत्संयोगमात्रं लक्ष्यतां किं सादृश्येनेत्यत आह— **विभुत्वाच्चेति**। यदुक्तमेवं श्रुतिर्भवतीतरथा लक्षणा स्यादिति, तत्राह— **श्रुत्यसंभवे चेति**। समानो भावो रूपं येषां ते सभावाः तेषां भावः साभाव्यं सारूप्यम्। तदापत्तिः साभाव्यापत्तिरिति सूत्रार्थमङ्गीकृत्योपसंहरति— **अत आकाशादीति**। इति चतुर्थं साभाव्यापत्त्यधिकरणम्।।

### *न्यायनिर्णयः*

न तत्सादृश्यमिति शङ्कते— **कुत इति**। तत्र हेतुमवतार्य व्याकरोति— **उपपत्तेरिति**। **एवं हीति**। आकाशादिसादृश्याङ्गीकारे सतीति यावत्। एतदित्याकाशादिभवनमुक्तम्। युक्तं हि नहुषादिदेहारम्भकभूतानामजगरादिभावेन परिणामित्वं, तद्देहानामयौगपद्यादिह तु सूक्ष्मदेहस्याकाशादेश्चापर्यायत्वान्न[१] परस्परात्मतेत्युक्तमेव साधयति— **न हीति**। 'वायुर्भूत्वे'त्यादिश्रुतेस्तर्हि का गतिः, तत्राह— **आकाशेति**। अनुशयिनामाकाशादिभ्यस्तिलमाषान्तेभ्यः स्वेनैव रूपेण निष्क्रमणान्यथानुपपत्तिरूपश्रुतार्थापत्त्याऽन्यस्य पूर्वसिद्धान्यभावानुपपत्त्यनुगृहीतया विरोधादुपचरिततद्भावापत्तिविषया श्रुतिरिति भावः। आकाशादिना संयोगमात्रं भवतिश्रुत्या लक्ष्यताम्, किं सादृश्येनेत्याशङ्क्याकाशे तदनुपपत्तेरवैरूप्यार्थं वाय्वादावपि सादृश्यमेवेत्याह— **विभुत्वाच्चेति**। यदुक्तमेवं सति श्रुतिर्भवतीतरथा लक्षणेति, तत्राह— **श्रुतीति**। अनुशयिनामाकाशादितादात्म्यायोगात् तत्तुल्यतापत्तेः श्रुत्यर्थत्वात् तत्परिहाराय प्रेक्षाकारिणा प्रयत्नवता भाव्यमित्युपसंहरति— **अत इति**।।२२।।इति चतुर्थं साभाव्यापत्त्यधिकरणम्।।

---

१. अपर्यायत्वात् = यौगपद्यात्।

५।।नातिचिराधिकरणम्।।सू. २३।।

## नातिचिरेण विशेषात्।।२३।।

**तत्राकाशादिप्रतिपत्तौ प्राग् व्रीह्यादिप्रतिपत्तेर्भवति विशयः–किं दीर्घं दीर्घं कालं पूर्वपूर्वसादृश्येनावस्थायोत्तरोत्तरसादृश्यं गच्छन्त्युताल्पमल्पमिति। तत्रानियमो नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्त इदमाह–नातिचिरेणेति। अल्पमल्पं कालमाकाशादिभावेनावस्थाय वर्षधाराभिः सहेमां भुवमापतन्ति। कुत एतत्? विशेषदर्शनात्। तथा हि व्रीह्यादिभावापत्तेरनन्तरं विशिनष्टि– 'अतो वै खलु दुर्निष्प्रपतरम्' (छा.उ. ५।१०।६) इति। तकार एकश्छान्दस्यां प्रक्रियायां लुप्तो मन्तव्यः। दुर्निष्प्रपततरं दुर्निष्क्रमतरं दुःखतरमस्माद् व्रीह्यादिभावान्निःसरणं भवतीत्यर्थः। तदत्र दुःखं निष्प्रपतनं प्रदर्शयन् पूर्वेषु सुखं निष्प्रपतनं दर्शयति। सुखदुःखताविशेषश्चायं निष्प्रपतनस्य कालाल्पत्वदीर्घत्वनिमित्तः। तस्मिन्नवधौ शरीरानिष्पत्तेरुपभोगासंभवात्।**

### *प्रकटार्थविवरणम्*

**नातिचिरेण विशेषात्**।। तत्रैवावरोहे सन्देहान्तरमाह— **तत्राकाशादीति**। गमनं कस्यचिच्चिरेण कस्यचिदचिरेणेत्युभयथा दर्शनात् संशयः। शास्त्रं ह्यतीन्द्रियार्थे विज्ञानकारणम्; नेह नियामकं शास्त्रं दृश्यते; अतो न निर्धारणमित्याह— **तत्रेति**। सूत्रं योजयति— **अल्पमल्पमिति**। ननु व्रीह्यादिभावात् दुःखेन निष्क्रमणान्यथानुपपत्त्या पूर्वत्र सुखेन निष्क्रमणमित्येतावद् गम्यते; न त्वल्पकालतेत्याशङ्क्याह— **सुखदुःखताविशेषश्चेति**। इति पञ्चमं नातिचिराधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**नातिचिरेण विशेषात्। नियमकारिणश्शास्त्रस्याभावादिति**। ननु कथमभावः? 'अतो वै खलु दुर्निष्प्रपतर'मिति व्रीहिभावादूर्ध्वमेव विलम्बगमनावगमात्; सत्यमत्र दुःखेन निस्सरणं ब्रूते श्रुतिः, न तु विलम्बेन, अथ शरीराद्यभावात् दुःखाद्यनुभवानुपपत्तेर्विलम्बगमनाभिप्रायमेतद्वचनम्, तथाप्यतश्शब्दस्य प्रकृतसर्वपरामर्शकत्वात् सर्वस्माद्विलम्बगमनं प्रतीयते, न तु व्रीह्यादिभावादेवेत्यभिप्रायः। वाक्यस्यार्थं दर्शयितुं पदं पूरयति— **तकार एक इति**। एतावता कथमाकाशादिभ्यो विलम्बेन निस्सरणमिति, तत्राह— **तदत्रेति**। ननु सुखनिस्सरणमेव दर्शयति, न त्वविलम्बनिस्सरणमित्यत आह— **सुखदुःखेति**। किमर्थमेवं कल्प्यत इति, तत्राह— **तस्मिन्निति**।

### *न्यायनिर्णयः*

पूर्वपूर्वसादृश्यं गतानामुत्तरोत्तरसादृश्यापत्तिरविलम्बेनेत्याह— **नातिचिरेणेति**। विषयसंशयौ दर्शयति— **तत्रेति**। अवरोहत्सु तत्तत्सादृश्यं गतेष्विति यावत्। गन्तृभेदेन चिराचिराभ्यां गतिदर्शनात् तमेव संशयं विशदयति— **किमिति**। शास्त्रमतीन्द्रियार्थे मानं, न चेह शास्त्रमस्ति, तथा चानिर्धारणेति पूर्वपक्षयति— **तत्रेति**। न च 'अतो वै खलु दुर्निष्प्रपतरम्' इति व्रीह्यादिभावादूर्ध्वमेव विलम्बगमनावगमात्पूर्वमविलम्बसिद्धिरिति वाच्यम्। तत्र दुःखनिःसरणस्यैव विवक्षितत्वेन विलम्बस्यानिष्टत्वात्। न च देहाद्यभावाद् दुःखासिद्धेर्विलम्बाभिप्रायमेतदिति युक्तम्। तथापि प्रकृतसर्वपरामर्शकातःशब्दात् पूर्व[सर्व]स्माद्विलम्बगमनप्रतीतेः। सर्वत्र प्रयत्नगौरवं तुल्यमिति भावः। अत्र चाकाशादिभावमारभ्य व्रीह्यादिभावपर्यन्तावरोहरूपसंसारगतेस्तत्तत्सादृश्यरूपायाश्चिराचिरत्वनिरूपणेन वैराग्यस्यैव दृढीकरणात् पादादिसंगतिः। पूर्वपक्षे सर्वत्र तत्तद्भावपरिहारार्थं प्रयत्नगौरवं कर्तव्यम्। सिद्धान्ते तु तदर्थं कर्तव्यप्रयत्नस्य क्वचिल्लाघवं क्वचिद् गौरवमिति फलभेदः। पूर्वपक्षमनूद्य सिद्धान्तमवतार्य प्रतिज्ञां पूरयन् विवृणोति— **एवमिति**। नियामकशास्त्राभावान्नैतदित्याह— **कुत इति**। नियामकविषयं हेतुमवतार्य व्याचष्टे— **विशेषेति**। वाक्यस्य विवक्षितमर्थं वदन् पदं पूरयति— **तकार इति**। पदं पूरयित्वा पदार्थं वदन् वाक्यार्थमाह— **दुर्निष्क्रमेति**। कथमेतावताऽऽकाशादिभ्यो विलम्बमन्तरेण निःसरणं भाति, तत्राह— **तदिति**। सुखनिःसरणमेवाकाशादिषु विशेषणादालक्ष्यते, नाविलम्बनिःसरणमित्याशङ्क्याह— **सुखेति**। किमर्थमित्थं कल्प्यत आकाशादेः सुखेन निःसरणं व्रीह्यादेस्तु दुःखेनेति, यथाश्रुतमेव किं न स्यात्, तत्राह— **तस्मिन्निति**।

**तस्माद् व्रीह्यादिभावापत्तेः प्रागल्पेनैव कालेनावरोहः स्यादिति।।२३।।**

।।इति पञ्चमं नातिचिराधिकरणम्।।

६।।अन्याधिष्ठिताधिकरणम्।।सू. २४-२७।।

## अन्याधिष्ठितेषु पूर्ववदभिलापात्।।२४।।

**तस्मिन्नेवावरोहे प्रवर्षणानन्तरं पठ्यते– 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' (छा.उ. ५।१०।६) इति। तत्र संशयः– किमस्मिन्नवधौ स्थावरजात्यापन्नाः स्थावरसुखदुःखभाजोऽनुशयिनो**

### *शारीरकन्यायसंग्रहः*

**अन्याधिष्ठिते पूर्ववदभिलापात्।।२४।।** यद्यपि व्रीह्यादिभावेन जन्मश्रुतिः मुख्यमेवानुशयिनां जन्म प्रतिपादयति, तथापि न व्रीह्यादिभावेन अनुशयिनां मुख्यं जन्म सम्भवति, अस्मिन् प्रकरणे कर्मव्यापारसङ्कीर्तनशून्यतयाऽभिधानात् आकाशादिभावाभिधानवत् इत्यनुमानात्, तथा ब्राह्मणादिजन्मनः कर्मव्यापारपूर्वकत्वसङ्कीर्तनं व्यर्थम्; प्रागपि व्रीह्यादिभावेन जन्मास्ति चेत्, अतस्तन्नास्तीति श्रुतार्थापत्त्या, तथोत्तराहुतिसंबन्धश्रुतिर्नोपपद्यते व्रीह्यादिभावे तत्पचनादिना प्रवासप्रसङ्गादिति श्रुतार्थापत्त्यन्तरेण जन्मश्रुतेः उपचरितार्थत्वं दर्शितम्।

**अशुद्धमिति चेन्न शब्दात्।।२५।। रेतस्सिग्योगोऽथ।।२६।। योनेः शरीरम्।।२७।।** यद्यपि पशुहिंसनस्य प्रतिषेधसामर्थ्यात् अनर्थहेतुत्वम्, क्रतुविधिसामर्थ्याच्च क्रतूपकारश्च इत्युभयं न विरुध्यते, एकस्यापि साधनस्य लोके अर्थानर्थहेतुत्वदर्शनात्, तथापि अनर्थं परिहृत्यैव क्रतूपकारद्वारेण अर्थबाहुल्यहेतुत्वाभावे विधानमनुपपन्नमिति अर्थानर्थहेतुतया विरोधमुद्भाव्य सावकाशनिरवकाशतया प्रामाण्यं व्यवस्थापितम्। तथा करणांशे प्रवृत्ती रागनिबन्धनेतिकर्तव्यांशे प्रवृत्तिः विधिनिबन्धनेति विभागं कल्पयित्वा श्येनयागे हिंसात्मके करणरूपे रागनिबन्धना प्रवृत्तिरिति तत्र प्रतिषेधविध्यवकाशमङ्गीकृत्य पशुहिंसायां, विधिनिबन्धनप्रवृत्तिकायां प्रतिषेधविधिः निरस्त इति दर्शितम्।।

**।।इति प्रकाशात्मयतिविरचिते शारीरकन्यायसंग्रहे तृतीयाध्यायस्य प्रथमः पादः।।**

### *प्रकटार्थविवरणम्*

**अन्याधिष्ठितेषु पूर्ववदभिलापात्।।** अवरोहवाक्यैकदेशं विचार्य परिशिष्टांशविचारमुपक्रमते— **तस्मिन्नेवेति**। जनिश्रुतेः

### *भाष्यभावप्रकाशिका*

यद्यप्यतश्शब्दः प्रकृतपरामर्शकस्तथाप्येकवाक्योपात्तव्रीह्यादिपरामर्शकतया निराकाङ्क्षत्वात् भिन्नवाक्योपात्ताकाशादिपरामर्शकताऽभावादाकाशादिवर्षणान्तात् प्रकृतादविलम्बेन निस्सरणमित्याह— **तस्माद् व्रीह्यादीति**।।इति पञ्चमं नातिचिराधिकरणम्।।

### *न्यायनिर्णयः*

अतःशब्दस्य प्रकृतपरामर्शित्वेऽप्येकवाक्योपात्तव्रीह्यादिपरामर्शित्वेन निराकाङ्क्षत्वाद् वाक्यान्तरोपात्ताकाशाद्यपरामर्शित्वादाकाशादिवर्षणान्तादविलम्बेन निःसरणमित्युपसंहरति— **तस्मादिति**। आकाशादौ व्रीह्यादौ च तद्भावं परिहर्तुं कर्तव्यप्रयत्नस्य लाघवगौरवविशेषं निगमयितुमितीत्युक्तम्।।२३।।इति पञ्चमं नातिचिराधिकरणम्।।

अनुशयिनामाकाशादिप्रवर्षणान्तसादृश्यं चिरभावि, तत्सादृश्यत्वात्, व्रीह्यादिसादृश्यवदित्यस्य विशेषणश्रुत्या बाधमुक्त्वा प्रकृतावरोहवाक्यैकदेशमवशिष्टं विचारयति— **अन्येति**। संगतिं सूचयन् विषयमाह— **तस्मिन्निति**। 'त इहे'ति तच्छब्देनानुशयिनो गृह्यन्ते। व्यवहारभूमिः सप्तम्यर्थः। व्रीह्यादिभावमापन्नेष्वनुशयिषु जायत इति श्रुतेः कर्मपूर्वकत्वाश्रुतेश्च विचारहेतुं संशयमाह— **तत्रेति**। **अस्मिन्नवधाविति**। आकाशादिवर्षणान्ततत्सादृश्यापत्त्यनन्तरदशायामित्यर्थः। अत्र च स्थावरभावस्य संसारगतेरालोचनद्वारा

**भवन्त्याहोस्वित् क्षेत्रज्ञान्तराधिष्ठितेषु स्थावरशरीरेषु संश्लेषमात्रं गच्छन्तीति। किं तावत् प्राप्तम्? स्थावरजात्यापन्नास्तत्सुखदुःखभाजोऽनुशयिनो भवन्तीति। कुत एतत्? जनेर्मुख्यार्थत्वोपपत्तेः, स्थावरभावस्य च श्रुतिस्मृत्योरुपभोगस्थानत्वप्रसिद्धेः। पशुहिंसादियोगाच्चेष्टादेः कर्मजातस्यानिष्टफलत्वोपपत्तेः। तस्मान्मुख्यमेवेदमनुशयिनां व्रीह्यादिजन्म, श्वादिजन्मवत्। यथा 'श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वे'ति मुख्यमेवानुशयिनां श्वादिजन्म तत्सुखदुःखान्वितं भवति, एवं व्रीह्यादिजन्मापीति।**

### *प्रकटार्थविवरणम्*

कर्मव्यापारसंकीर्तनविधुरत्वाच्च संशयमाह— **तत्रेति**। पूर्वपक्षं निक्षिपति— **किं तावदिति**। "स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्" "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इत्यादिश्रुतिस्मृत्योः। नन्विष्टादिकारिणां मध्ये दुःखोपभोगो नोपपद्यत इत्याशङ्क्याह— **पशुहिंसादीति**।

### *भाष्यभावप्रकाशिका*

**अन्याधिष्ठिते पूर्ववदभिलापात्। जनेर्मुख्यार्थत्वोपपत्तेरिति**। यद्यपि जीवस्य जनिर्नास्ति तथापि देवो जातो मनुष्यो जात इत्यादौ तत्तच्छरीराभिमानाज्जनेर्मुख्यत्वं च दृष्टम्। इहापि मुख्यत्वलाभाय तद्वच्छरीराभिमानपूर्वकं सुखदुःखभाक्त्वमभ्युपगन्तव्यमित्यर्थः। ननु कथं स्थावरभावेऽपि जनेर्मुख्यार्थत्वम्, तत्र शरीराभिमानपूर्वकं मनुष्यादिशरीर इव भोगाभावादित्यत आह— **स्थावरभावस्येति**। ननु 'शरीरजैः कर्मदोषैर्यान्ति स्थावरतां नर' इत्यादिना पापकर्मफलत्वावगमात् स्थावरादिभावस्य कथमिष्टादिकारणां तत्प्राप्तिरित्याशङ्क्याह— **पशुहिंसादीति**। न वाच्यमग्नीषोमीयं पशुमालभेतेति विशेषशास्त्रात् 'न हिंस्यात् सर्वभूतानी'ति सामान्यशास्त्रस्यापवादं परिहृत्योत्सर्गः प्रवर्तत इति न्यायेन विशेषविषये बाधात् पशुहिंसनस्यानिष्टफलत्वमनुपपन्नमिति। द्वयोरपि वाक्ययोर्भिन्नविषयतया विरोधाभावात् बाध्यबाधकतानुपपत्तेः। तथा ह्यग्नीषोमीयं पशुमालभेतेति क्रतुप्रकरणसमाम्नानात् क्रत्वर्थतां पशुभिर्हिंसनस्यैतद्वाक्यं गमयति, न तु न हिंस्यादिति निषेधबोधितामनर्थहेतुतामस्य निवारयति। अतो निषेधादस्य पुरुषं प्रत्यनर्थहेतुताऽवगम्यते, विधेश्च क्रत्वर्थता। तेन न हिंस्यादिति निषेधापादितानर्थहेतुताया विधिबोधितक्रत्वर्थतायामपि सत्यामनिवारणाद् युक्तैवेष्टादिकारिणां स्थावरादिप्राप्तिरिति भावः।

### *न्यायनिर्णयः*

वैराग्यस्यैव दृढीकरणात् पादादिसंगतिः। पूर्वपक्षे व्रीह्यादिजन्मनो मुख्यत्वेऽनुशयिनां तत्परिहारायाधिकृतेनाधिकं प्रयतितव्यम्; सिद्धान्ते तदीयसंश्लेषमात्रं निराकर्तुं प्रयत्नलाघवमिति विवक्षित्वा विमर्शपूर्वकं पूर्वपक्षयति— **किं तावदिति**। आकाशादिष्विव व्रीह्यादिष्वपि संश्लेषमात्रं, न तद्देहतेति शङ्कते— **कुत इति**। विशेषं दर्शयन् परिहरति— **जनेरिति**। जीवस्य जन्माभावेऽपि 'देवो जातो, मनुष्यो जात' इत्यादौ तत्तद्देहाभिमानद्वारा [१]जनेर्मुख्यत्वदर्शनादत्रापि मुख्यत्वार्थं देहाभिमानपूर्वकं सुखदुःखभाक्त्वमास्थेयमित्यर्थः। कथं स्थावरभावे जनेर्मुख्यत्वम्, न हि तत्र देहाभिमानपूर्वकं मनुष्यादिदेहवद्भोगोऽस्ति, तत्राह— **स्थावरेति**। 'स्थाणुमन्येऽनुसंयन्ति' इत्याद्या श्रुतिः, 'शरीरजैः कर्मदौषैर्याति स्थावरतां नरः' इत्याद्या च स्मृतिः। ननूदाहृताभ्यां श्रुतिस्मृतिभ्यां पापफलत्वं स्थावरभावस्य भाति, तत्कथमिष्टादिकारिणां चन्द्रस्थलस्खलितानां तत्प्राप्तिः शङ्क्यते, तत्राह— **पश्विति**। सोमपानावसरे परस्परमुच्छिष्टभक्षणमादिशब्देन विवक्षितम्। 'अग्नीषोमीयं पशुमालभेत' इति विशेषशास्त्रात् 'न हिंस्यादि'त्यादिसामान्यशास्त्रस्य विशेषविषये बाधात् पशुहिंसनस्य नानिष्टफलतेत्याशङ्क्य क्रत्वर्थतया पुरुषार्थतया च विधिनिषेधयोर्भिन्नार्थत्वेनाविरोधाद् बाध्यबाधकत्वासिद्धेरशक्यं पशुहिंसनस्य निषेधाधिगतमनर्थहेतुत्वमपाकर्तुमित्याशयवानुपसंहरति— **तस्मादिति**। पशुहिंसादेरङ्गत्वात्र स्वातन्त्र्येण व्रीह्यादिजन्महेतुतेत्याशङ्क्य पापान्तरस्य तद्धेतुत्वे दृष्टान्तमाह— **श्वादीति**। अवरोहाधिकारे श्वादिभावः श्रुतो नेत्याशङ्क्य श्रुत्यन्तरमाह— **यथेति**। अनुशयिनां व्रीह्यादिजन्मनो मुख्यत्वे तत्परिहारायाधिकृतेन प्रयत्नगौरवं कर्तव्यमित्युपसंहर्तुमितिशब्दः।

---

१. यद्यपि 'चराचरव्यपाश्रयस्तु—' (ब्र.सू. २-३-१६) इत्यधिकरणे जीवस्य जन्मव्यवहारो भाक्त इति स्थापितम्, तथापि देहतादात्म्याध्यासात् तथा व्यवहारस्य लोकसिद्धं मुख्यत्वमिह विवक्षितम्। भामत्यां तु देहपरिग्रह एवोक्तव्यवहारे जनेर्मुख्यार्थ इत्युक्तम्।

**एवं प्राप्ते ब्रूमः– अन्यैर्जीवैरधिष्ठितेषु व्रीह्यादिषु संसर्गमात्रमनुशयिनः प्रतिपद्यन्ते, न तत्सुखदुःखभाजो भवन्ति। पूर्ववत्। यथा वायुधूमादिभावोऽनुशयिनां तत्संश्लेषमात्रम्, एवं व्रीह्यादिभावोऽपि जातिस्थावरैः संश्लेषमात्रम्। कुत एतत्? तद्वदेवेहाप्यभिलापात्। कोऽभिलापस्य तद्वद्भावः? कर्मव्यापारमन्तरेण संकीर्तनम्। यथाऽऽकाशादिषु प्रवर्षणान्तेषु न कंचित् कर्मव्यापारं परामृशत्येवं व्रीह्यादिजन्मन्यपि। तस्मान्नास्त्यत्र सुखदुःखभाक्त्वमनुशयिनाम्। यत्र तु सुखदुःखभाक्त्वमभिप्रैति, परामृशति तत्र कर्मव्यापारं 'रमणीयचरणाः' 'कपूयचरणा' इति च। अपि च मुख्येऽनुशयिनां व्रीह्यादिजन्मनि व्रीह्यादिषु लूयमानेषु कण्ड्यमानेषु पच्यमानेषु भक्ष्यमाणेषु च तदभिमानिनोऽनुशयिनः प्रवसेयुः। यो हि जीवो यच्छरीरमभिमन्यते स तस्मिन् पीड्यमाने प्रवसतीति प्रसिद्धम्। तत्र व्रीह्यादिभावाद् रेतःसिग्भावोऽनुशयिनां नाभिलप्येत। अतः संसर्गमात्रमनुशयिनामन्याधिष्ठितेषु व्रीह्यादिषु भवति। एतेन जनेर्मुख्यार्थत्वं प्रतिब्रूयात्, उपभोगस्थानत्वं च**

### *प्रकटार्थविवरणम्*

सूत्रं योजयति— **अन्यैरित्यादिना**। यत्र मुख्यं जन्मास्मिन् प्रकरणे विवक्षितं तत्र कर्मसङ्कीर्तनमस्ति। तदिह व्यापकं व्यावर्तमानं स्वव्याप्यं मुख्यं जन्मापि व्यावर्तयतीति भावः। किं च व्रीह्यादिद्वारेण पितृशरीरप्रवेशान्यथानुपपत्त्याऽपि संश्लेषमात्रमित्याह— **अपि च मुख्येऽनुशयिनामिति**। यदुक्तं जनेः मुख्यार्थत्वादुपभोगस्थानत्वाच्च स्थावरभावस्येति, तत्राह— **एतेनेति**। व्रीह्यादिद्वारेण

### *भाष्यभावप्रकाशिका*

पूर्ववदिति सूत्रभागस्यार्थद्वयविवक्षया प्रयुक्तत्वादर्थान्तरमाह— **तद्वदेवेहेति**। व्रीह्यादिभावोऽनुशयिनां जन्म न भवति। अस्मिन् प्रकरणे कर्मव्यापारसंकीर्तनमन्तरेणाभिहितत्वादाकाशादिभाववदित्यर्थः। ब्राह्मण्यादिजन्मन्येव रमणीयचरणा इत्यादि कर्मव्यापारसंकीर्तनं व्यर्थं स्यात् प्रागपि ततो व्रीह्यादिभावेन जन्मसद्भाव इति श्रुतार्थापत्तिमाह— **यत्र त्विति**। उत्तरत्र पुरुषाहुतिसबन्धो 'यो यो ह्यन्नमत्ती'त्यादिना श्रूयमाणोऽनुपपन्नः स्यात्, व्रीह्यादिभावेन जन्माभ्युपगमे तल्लवनादौ प्रवासप्रसंगादिति श्रुतार्थापत्त्यन्तरमाह— **अपि च मुख्य इति**। ननु जीवस्य तद्व्यतिरिक्तत्वात्तत्पीडने कथं प्रवसनमित्यत आह— **यो हीति**। युक्तो[उक्तो]पपत्त्या जन्मश्रुतिरुपचरितार्थाऽभ्युपगन्तव्येत्याह— **एतेनेति**। यदुक्तं स्थावरस्योपभोगस्थानत्वं प्रसिद्धमिति, तत्र यत्त[वक्त]व्यमनुशयिनां

### *न्यायनिर्णयः*

पूर्वपक्षमनूद्य सिद्धान्तमवतार्य प्रतिज्ञां पूरयित्वा योजयति— **एवमिति**। तत्र सौत्रं दृष्टान्तमादाय व्याचष्टे— **पूर्ववदिति**। जनेर्मुख्यत्वाय व्रीह्यादिष्वनुशयिनस्तत्सुखदुःखभाजो भवन्तीत्युक्तम्; तथा च तेषां तेषु न संश्लेषमात्रमिति शङ्कते— **कुत इति**। पूर्ववदिति सूत्रभागस्यार्थद्वयविवक्षया प्रयुक्तत्वादर्थान्तरं दर्शयन् परिहरति— **तद्वदिति**। वायुर्भूत्वेत्यादौ व्रीह्यादिवाक्ये चोक्तिसाम्येऽपि स्थावरादिभावस्यानुशयिनां विरोधिनी पूर्ववाक्ये व्रीह्यादिवाक्ये वा न काचिदुक्तिरस्तीति शङ्कते— **कोऽभिलापस्येति**। कर्मपरिणामनिमित्तत्वकथनं विना तद्भावोक्तिस्तद्देहत्वप्राप्त्यभावे लिङ्गमिति ब्रुवन्नभिलापस्य तद्वद्भावमाह— **कर्मेति**। अन्तरेण कर्मव्यापारं व्रीह्यादितेति नास्ति संकीर्तनमित्याशङ्क्य कर्मविशेषव्यापारस्य निमित्तत्वेनानुक्तिरिष्टेत्याह— **यथेति**। अनुशयिनां व्रीह्यादिभावो न जन्मास्मिन् प्रकरणे कर्मव्यापारोक्तिं विनोक्तत्वादाकाशादिभाववदिति फलितमाह— **तस्मादिति**। किं च ब्राह्मणादिजन्मन्येव रमणीयचरणा इत्यादिकर्मकीर्तनं प्रागपि तज्जन्मनो व्रीह्यादिभावेन जन्मसत्त्वे व्यर्थं स्यात्। अतो नास्ति पुरस्ताज्जन्मेति श्रुतार्थापत्तिमाह— **यत्रेति**। किं च 'यो यो ह्यन्नमत्ती'त्यादिनोत्तरत्र पुरुषाहुतिसंबन्धोऽनुशयिनां श्रूयते; स च तेषां व्रीह्यादिभावेन जन्मोपगमेन तल्लवनादौ प्रवासप्रसङ्गादयुक्तः स्यादतो न पूर्वं मुख्यं जन्मेति श्रुतार्थापत्त्यन्तरमाह— **अपि चेति**। जीवानां व्रीह्यादिभ्योऽन्यत्वात् तत्पीडनेऽपि न प्रवासोऽस्तीत्याशङ्क्याह— **यो हीति**। अनुशयिनां प्रवासेऽपि का क्षतिः, तत्राह— **तत्रेति**। पूर्वोक्तहेतुफलमुपसंहरति— **अत इति**। यत्तु जनेर्मुख्यत्वसिद्धेर्भोगस्थानत्वाच्च स्थावरत्वस्य मुख्यमेवानुशयिनां व्रीह्यादिजन्मेति, तत्राह— **एतेनेति**। उक्तयुक्त्या जन्मश्रुतेरुपचरितार्थत्वेनेति यावत्। अनुशयिनां वा स्थावरजीवानां वा स्थावरभावस्य भोगस्थानतेति विकल्प्याद्यमुक्तन्यायेन

**स्थावरभावस्य। न च वयमुपभोगस्थानत्वं स्थावरभावस्यावजानीमहे। भवत्वन्येषां जन्तूनामपुण्यसामर्थ्येन स्थावरभावमुपगतानामेतदुपभोगस्थानम्। चन्द्रमसस्त्ववरोहन्तोऽनुशयिनो न स्थावरभावमुपभुञ्जत इत्याचक्ष्महे।।२४।।**

## अशुद्धमिति चेन्न शब्दात्।।२५।।

**यत्पुनरुक्तं पशुहिंसादियोगादशुद्धमाध्वरिकं कर्म, तस्यानिष्टमपि फलमवकल्पत इत्यतो मुख्यमेवानुशयिनां व्रीह्यादिजन्मास्तु; तत्र गौणी कल्पनाऽनर्थिकेति, तत् परिह्रियते। न, शास्त्रहेतुत्वाद् धर्माधर्मविज्ञानस्य। अयं धर्मोऽयमधर्म इति शास्त्रमेव विज्ञाने कारणम्। अतीन्द्रियत्वात् तयोः, अनियतदेशकालनिमित्तत्वाच्च। यस्मिन् देशे काले निमित्ते च यो धर्मोऽनुष्ठीयते, स एव देशकालनिमित्तान्तरेष्वधर्मो भवति। तेन न शास्त्रादृते धर्माधर्मविषयं विज्ञानं कस्यचिदस्ति। शास्त्राच्च हिंसानुग्रहाद्यात्मको ज्योतिष्टोमो धर्म इत्यवधारितः।**

***प्रकटार्थविवरणम्***

पितृशरीरप्रवेशासंभवप्रसङ्गेनेत्यर्थः। ननु स्थावरभावस्य भोगस्थानत्वं निराकर्तुं न शक्यते, श्रुतिस्मृतिविरोधादित्याशङ्क्याह— **न च वयमिति।**

**अशुद्धमिति चेन्न शब्दात्।।** परोक्तमनूद्य निराचष्टे— **यत्पुनरित्यादिना।** अन्वयव्यतिरेकादिगम्यत्वनिराकरणायोक्तम्— **अनियतदेशकालनिमित्तत्त्वाच्चेति।** तद्विवृणोति— **यस्मिन्देश इति।** यज्ञभूमौ दर्शादिकाले चोदनानिमित्तत्वेन च क्रियमाणा हिंसा यद्यपि धर्मः तथापि सैव हिंसा रागाक्रान्तस्वान्ततया देशान्तरादौ क्रियमाणा भवत्येवाधर्मः; ततो या हिंसाऽसौ धर्म इत्यन्वयादिनाऽवगन्तुं न शक्यते। भवतु तर्हि शास्त्रैकगम्योऽयमर्थः; ततः किमित्यत आह— **शास्त्राच्चेति।** दुष्टत्वमपि शास्त्रान्तरात्प्रतीयत इत्याह—

***भाष्यभावप्रकाशिका***

भोगस्थानत्वं किं वा स्थावरजीवानामिति, यद्याद्यस्तदा नोपपद्यत इत्याह— **उपभोगेति।** प्रतिब्रूयादिति संबन्धः। उत्तरपक्षोऽङ्गीक्रियत इत्याह— **न च वयमिति।**

शास्त्रहेतुत्वमेव प्रपञ्चयति— **अयं धर्म इति।** अनुमानमपि तत्र प्रमाणं भवत्वित्याशङ्कायां प्रत्यक्षदृष्टं किं वा सामान्यतो दृष्टमिति विकल्प्य न तावदाद्य इत्याह— **अतीन्द्रियत्वादिति।** नापि द्वितीय इत्याह— **अनियतदेशेति।** तत्प्रपञ्चयति— **यस्मिन्निति।** ततः किमायातमित्यत आह— **शास्त्राच्चेति।**

***न्यायनिर्णयः***

दूषयति— **उपभोगेति।** यदनुशयिनां स्थावरत्वस्य भोगस्थानत्वं तच्च प्रतिब्रूयादिति संबन्धः। द्वितीयमङ्गीकरोति— **न चेति।** केषां तर्हि तदुपभोगायतनं, तत्राह— **भवत्विति।** अन्येऽपि न तत्र भोक्तारो व्रीह्यादिसंश्लिष्टत्वादनुशयिवदित्याशङ्क्य तद्देहपरिणामिपापराहित्यमुपाधिरित्याह— **अपुण्येति।** अनुशयिनामपि व्रीह्यादिभावानुकूलपापविशेषवत्त्वं कल्प्यमित्युपाधेरसंभवमाशङ्क्य निरतिशयपुण्यकारिणां प्रबलपापपरिग्रहायोगादल्पपापैश्च स्थावरत्वासिद्धेर्मैवमित्याह— **चन्द्रमसस्त्विति।।**२४।।

परोक्तमनूद्य निरस्यति— **अशुद्धमिति।** अनुवादं विभजते— **यदिति।** इष्टादिकारिणोऽनिष्टफलवत्त्वसंभवे फलितमाह— **इत्यत इति।** एतेन गौणी जन्मश्रुतिरिति प्रत्युक्तमित्याह— **तत्रेति।** व्रीह्यादिजन्मनो मुख्यत्वे सतीति यावत्। परिहारमवतारयति— **तदिति।** न वैदिकं कर्माशुद्धमिति प्रतिज्ञायां शास्त्रहेतुत्वादित्युक्तं विवृणोति— **अयमिति।** अनुमानमपि कस्मादस्मिन्नर्थे न प्रमाणमित्याशङ्क्य दृष्टं सामान्यतोदृष्टं वा तदिति विकल्प्याद्यं प्रत्याह— **अतीन्द्रियत्वादिति।** द्वितीयं दूषयति— **अनियतेति।** तदेव प्रपञ्चयति— **यस्मिन्निति।** शुद्धे हि देशे सायंप्रातरित्यादौ काले जीवनादौ च निमित्ते योऽग्निहोत्रादिधर्मो निर्वर्त्यते स एवाशुद्धे देशे मध्यरात्रादौ काले मरणादौ च निमित्ते कृतः सन्नधर्म इति प्रसिद्धम्; तथा च न तत्र सामान्यतोदृष्टं सावकाशमित्यर्थः। धर्मादिज्ञानं नानुमानिकं, किंतु शास्त्रमात्रकृतमित्युक्तं तन्निगमयति— **तेनेति।** शास्त्रादेव धर्मादिज्ञानेऽपि प्रकृते

**स कथमशुद्ध इति शक्यते वक्तुम्। ननु 'न हिंस्यात्सर्वा भूतानि' इति शास्त्रमेव भूतविषयां हिंसामधर्म इत्यवगमयति। बाढम्। उत्सर्गस्तु सः। अपवादः 'अग्नीषोमीयं पशुमालभेत' इति। उत्सर्गापवादयोश्च व्यवस्थितविषयत्वम्। तस्माद् विशुद्धं कर्म वैदिकम्, शिष्टैरनुष्ठीयमानत्वादनिन्द्यमानत्वाच्च। तेन न तस्य प्रतिरूपं फलं जातिस्थावरत्वम्। न च श्वादिजन्मवदपि व्रीह्यादिजन्म भवितुमर्हति। तद्धि कपूयचरणानधिकृत्योच्यते। नैवमिह वैशेषिकः कश्चिदधिकारोऽस्ति। अतश्चन्द्रमण्डलस्खलितानामनुशयिनां व्रीह्यादिसंश्लेषमात्रं तद्भाव इत्युपचर्यते।।२५।।**

### *प्रकटार्थविवरणम्*

**ननु न हिंस्यादिति**। सत्यं धर्मत्ववदधर्मत्वमपि शास्त्रादेव गम्यते, किं तु भिन्नविषयत्वान्न विरोध इत्याह— **बाढमिति**। "न हिंस्यात्" इति निषेधस्य प्राप्तिसापेक्षत्वान्मानान्तरप्राप्तस्य च मानान्तरेण निषेद्धुमशक्यत्वाद् रागतः पुरुषार्थत्वेन प्राप्ताया हिंसायाः निषेधकत्वम्, न क्रत्वर्थायाः; अतः क्रत्वर्थहिंसायाः प्रतिषेधाभावान्नाधर्मत्वम्; पुरुषार्थहिंसायाश्च प्रतिषिद्धत्वेनाधर्मत्वमपि[मिति] [१]विभिन्नविषयत्वमित्यर्थः। उक्तमेव सङ्क्षेपेणाह— **तस्मादिति**। यच्चोक्तं श्वादिजन्मवदिति, तत्राह— **न चेति**।

### *भाष्यभावप्रकाशिका*

सांख्य आह— **ननु न हिंस्यादिति**। परिहरति— **बाढमिति**। यद्यपि पशुहिंसनस्य प्रतिषेधसामर्थ्यादनर्थहेतुत्वं क्रतुविधिसामर्थ्यात्क्रतूपकारश्चेत्युभयार्थत्वमविरुद्धं प्रतिभाति। एकस्यापि साधनस्यार्थानर्थहेतुतया लोके दृष्टत्वात् तथाप्यनर्थं परिहृत्यैव क्रतूपकारेणार्थबाहुल्यहेतुत्वाभावे विधानमनुपपन्नं स्यात्। न च श्येनयागेऽपि विधिनिबन्धना प्रवृत्तिरिति तस्यापि विशिष्टार्थसाधनत्वप्रसङ्ग इत्याशङ्कनीयम्। सर्वत्र काम्येषु करणांशे रागनिबन्धनत्वात् प्रवृत्तेरितिकर्तव्यतांशविषयप्रवृत्तेरेव विधिनिबन्धनत्वात्, श्येनयागस्येव च ज्योतिष्टोमस्य काम्यत्वेऽपि नाभिचरेदितिवन्निषिद्धत्वाभावादग्नीषोमीयपशुहिंसायामितिकर्तव्यरूपायां विधिनिबन्धनत्वात् प्रवृत्तेर्विशिष्टार्थसाधनत्वमेव न त्वनर्थहेतुत्वं विरोधात्। अतो विधिनिषेधयोर्विरोधे सावकाशनिरवकाशन्यायेन व्यवस्थेति भावः। **तस्माद्विशुद्धमिति**। नानृतं वदेदितिवत् कस्यचित् क्रतोः प्रकरणे पठितत्वाभावान्न हिंस्यादिति पुरुषार्थत्वेन प्राप्तहननस्यैव निषेधात् क्रत्वर्थाया हिंसाया निषेधाविषयत्वान्न तस्यानर्थहेतुता, किन्तु शुद्धत्वं सुखबहुलत्वमेवेत्यर्थः। प्रतिरूपमनिष्टम्। ननु तर्हि कर्मान्तरनिबन्धनोऽनुशयिनां व्रीह्यादिभावोऽस्त्विति तत्राह— **न च श्वादीति**।

### *न्यायनिर्णयः*

किं जातं, तदाह— **शास्त्राच्चेति**। दुष्टत्वमपि ज्योतिष्टोमस्य निषेधाधिगतमिति सांख्यः शङ्कते— **नन्विति**। पशुहिंसायां निषेधसामर्थ्यादनर्थहेतुत्वमौत्सर्गिकमित्यङ्गीकरोति— **बाढमिति**। तथापि विधिसामर्थ्यात् तस्य क्रतूपकारित्वेन श्रेयोहेतुत्वमापवादिकमुपेयमित्याह— **अपवाद इति**। तयोः सामान्यविशेषविषयत्वेन व्यवस्थितविषयत्वादविरुद्धतया न बाध्यबाधकतेत्युक्तं, तत्राह— **उत्सर्गेति**। पशुहिंसाया निषेधादनर्थहेतुत्वं, क्रतूपकारो विधेरित्युभयार्थत्वाविरोधेऽपि परिहृत्यैवानर्थं क्रतूपकारेणार्थबाहुल्यहेतुत्वाभावेन विधिरनर्थकः स्यात्। न च श्येनेऽपि वैधी प्रवृत्तिरिति तस्य विशिष्टार्थहेतुता। सर्वत्र कामेषु करणांशे रागात् प्रवृत्तिरितिकर्तव्यतांशे वैधीत्युपगमात्। ज्योतिष्टोमस्य श्येनस्येव काम्यत्वेऽपि 'नाभिचरेदि'तिवदनिषिद्धत्वादग्नीषोमीयहिंसायामितिकर्तव्यरूपायां प्रवृत्तेर्विध्यधीनत्वाद् विशिष्टार्थसाधनत्वमेव। तथा च विधिनिषेधयोर्विरोधे सावकाशानवकाशन्यायेन व्यवस्थेति भावः। विधिनिषेधयोरविरोधे फलितमाह— **तस्मादिति**। 'नानृतं वदेदि'तिवत् कस्यचित् प्रकरणे श्रुतत्वाभावात् पुरुषार्थत्वेन प्राप्तहननस्यैव 'न हिंस्यादि'ति निषेधाद् विहितक्रत्वर्थहिंसाया निषेधाविषयत्वात्रानर्थहेतुता, किं तु सुखफलत्वमेवेत्यर्थः। शिष्टैरनुष्ठीयमानमपि देशविशेषे मांसांशनादि विवादास्पदं देशान्तरे दृश्यते, तत्राह— **अनिन्द्यमानत्वादिति**। वैदिकस्य कर्मणः शुद्धत्वे सिद्धमर्थमाह— **नेति**। **प्रतिरूपं** प्रतिकूलमनिष्टमिति यावत्। कर्मान्तरनिबन्धनस्तर्हि व्रीह्यादिभावोऽनुशयिनां भविष्यतीत्युक्तम्, तत्राह— **न चेति**। **इहेति** व्रीह्यादिजन्मनीत्यर्थः। **वैशेषिकोऽधिकारोऽ**साधारणो हेतुः। अनुशयिनां तद्भावोक्तिस्तर्हि कथमित्याशङ्क्याह— **अत इति**।।२५।।

---

१. भिन्नविषयकत्वे उत्सर्गापवादन्यायो न प्रवर्तेत। अतो हिंसासामान्यस्य निषेधविषयत्वं स्वीकृत्यैव स उपपादनीयः। विस्तरः परिमले द्र.पृ. ६८४-६८५।

## रेत:सिग्योगोऽथ।।२६।।

**इतश्च व्रीह्यादिसंश्लेषमात्रं तद्भाव:, यत्कारणं व्रीह्यादिभावस्यानन्तरमनुशयिनां रेत:सिग्भाव आम्नायते— 'यो यो ह्यन्नमत्ति यो रेत: सिञ्चति तद्भूय एव भवति' (छा.उ. ५।१०।६) इति। न चात्र मुख्यो रेत:सिग्भाव: संभवति। चिरजातो हि प्राप्तयौवनो रेत:सिग् भवति। कथमिवानुपचरितं तद्भावमद्यमानान्नानुगतोऽनुशयी प्रतिपद्येत। तत्र तावदवश्यं रेत:सिग्योग एव रेत:सिग्भावोऽभ्युपगन्तव्य:। तद्वद् व्रीह्यादिभावोऽपि व्रीह्यादियोग एवेत्यविरोध:।।२६।।**

## योने: शरीरम्।।२७।।

**अथ रेत:सिग्भावस्यानन्तरं योनौ निषिक्ते रेतसि योनेरधि शरीरमनुशयिनामनुशयफलोपभोगाय जायत इत्याह शास्त्रम्— 'तद्य इह रमणीयचरणा:' (छा.उ. ५।१०।७) इत्यादि। तस्मादप्यवगम्यते नावरोहे व्रीह्यादिभावावसरे तच्छरीरमेव सुखदु:खान्वितं भवतीति। तस्माद् व्रीह्यादिसंश्लेषमात्रमनुशयिनां तज्जन्मेति**

### *प्रकटार्थविवरणम्*

**रेतस्सिग्योगोऽथ।।** किं च वाक्यशेषे संयोगस्यैव तद्भावशब्दार्थस्यावगमात् उपक्रमेऽपि स एवार्थ इत्याह— **रेतस्सिग्योगोऽथेति।** नन्वन्नानुगतोऽनुशयी यस्तरुण: पुरुषोऽन्नं भक्षयति स तद्भूय एव भवति, तद्भावमेवापद्यत इति श्रुतिराह, न संयोगमात्रमित्याशङ्क्याह— **न चात्रेति।**

**योने: शरीरम्।।** किं च भोगायतनस्य शरीरस्योत्तरत्रैवाभिधानान्न पूर्वं व्रीह्यादिशरीरं तस्य भोग [भोगाय] इत्याह— **योने: शरीरमिति।**

**इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे तृतीयस्याध्यायस्य प्रथम: पाद: समाप्त:।।**

### *भाष्यभावप्रकाशिका*

एतावता व्रीह्यादिषु संश्लेष एवेति कथमवगम्यत इत्याशङ्क्य शेष[वाक्यशेषे]संसर्गमात्रस्यैवावगमात् तद्वदिहापि प्रतिपत्तुं युक्तत्वादित्याह— **न चात्रेति।**

एवं तर्हि सर्वत्रानुशायिनां संसर्ग एवेति ब्राह्मणयोनिमित्यादिकाऽपि श्रुतिरुपचरितार्था स्यादित्यत्र आह— **योनेश्शरीरमिति।** एवं शरीरवत्त्वस्य विशिष्टावसरत्वप्रदर्शनाद् व्रीह्यादिषु न शरीरत्वम्, नापि सुखाद्यन्वितत्वमनुशयिनामित्युपसंहरति— **तस्मादिति।**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुखमुनिविरचितायां भाष्यभावप्रकाशिकायां तृतीयस्याध्यायस्य प्रथम: पाद: समाप्त:।।**

### *न्यायनिर्णय:*

किंच वाक्यशेषे संयोगस्यैव तद्भावस्य श्रुतेरुपक्रमेऽपि तद्भाव: संयोगान्नार्थान्तरमित्याह— **रेत:सिगिति।** सूत्रं व्याकरोति— **इतश्चेति।** प्रकृतोपयोगित्वेनान्नभक्षकं तरुणत्वेन विशिनष्टि— **यो रेत इति।** 'तद्भूय एव भवती'ति श्रुत्या तद्भावमेवान्नानुगतोऽनुशयी प्रतिपद्यत इत्युच्यते, न संयोगमात्रमित्याशङ्क्याह— **न चेति।** अत्रेत्यद्यमानान्नानुगतोऽनुशयी, वाक्यं वा प्रकृतमुच्यते। रेत:सिच: स्वभावालोचनया मुख्यस्य तद्भावस्यायोगं स्फोरयति— **चिरेति।** अनुशयिस्वभावालोचनयाऽपि तमेवार्थं समर्थयते— **कथमिति।** मुख्यस्य तद्भावस्यायोगे फलितमाह— **तत्रेति।** तथापि व्रीह्यादिभावे किं जातं, तदाह— **तद्वदिति।** अन्यथोपक्रमोपसंहारयोर्विरोध: स्यात्, तत्परिहारार्थमुपसंहारवदुपक्रमोऽपि नेतव्य इत्याह— **इत्यविरोध इति।।**२६।।

तर्हि सर्वत्रानुशयिनां संसर्गमात्रमिति 'ब्राह्मणयोनि'मित्यादिकाऽपि श्रुतिरुपचरितार्थेत्याशङ्क्योक्तम्— **योनेरिति।** सूत्रं व्याकरोति— **अथेत्यादिना।** शरीरवत्त्वस्य विशिष्टावसरत्वदर्शनाद् व्रीह्यादिषु नानुशयिनां तद्वत्त्वं, नापि सुखाद्यन्वितत्वमिति फलितमाह— **तस्मादिति।** अनुशयिनां व्रीह्यादिजन्मामुख्यमुपपाद्याधिकरणार्थमुपसंहरति— **तस्मादिति।** तदेवमिष्टादिकारिणामनिष्टादिकारिणां

**सिद्धम्।।२७।।**

**इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य प्रथमः पादः।।१।।**

***न्यायनिर्णयः***

चारोहावरोहरूपसंसारगतौ सिद्धायां ततो वैराग्यमधिकारिविशेषणतया वाक्यार्थधीसाधनं दृढीकृतं भवतीति पादार्थमुपसंहरति— **इति सिद्धमिति**।।२७।। इति षष्ठमन्याधिष्ठिताधिकरणम्।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां शारीरकभाष्यटीकायां तृतीयाध्यायस्य प्रथमः पादः।।१।।**

**।।इति तृतीयाध्यायस्य गत्यागतिचिन्तया वैराग्यनिरूपणाख्यः प्रथमः पादः।।**

***शारीरकन्यायसंग्रहः***

## तृतीयाध्याये द्वितीयः पादः।

### १।।संध्याधिकरणम्।।सू. १-६।।

**संध्ये सृष्टिराह हि।।१।। निर्मातारं चैके पुत्रादयश्च।।२।। मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्।।३।। सूचकश्च हि श्रुतेराचक्षते च तद्विदः।।४।। पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ।।५।। देहयोगाद्वा सोऽपि।।६।।** स्वप्ने द्रष्टृव्यतिरिक्ताः सर्वे पदार्थाः अर्थक्रियासामर्थ्यलक्षणसत्त्वोपेताः, चेतनेनाभिसन्धिपूर्वकं निर्मीयमाणत्वात्, जाग्रद्वत्, आगामिशुभाशुभविषयविज्ञानस्य स्वप्नस्त्र्यादिदर्शनजन्यत्वमन्वयव्यतिरेकलक्षणार्थापत्तिसमधिगतमित्यनुमानार्थापत्तिभ्यां स्वप्नप्रपञ्चस्यार्थक्रियाकारित्वे प्राप्ते देशकालविशिष्टार्थक्रियासमर्थप्रमात्रादिविषयबाधकप्रत्यक्षेण अर्थक्रियासमर्थरूपस्यैव बाधान्यथानुपपत्त्या, "न तत्र रथाः" इति श्रौतनिषेधान्यथानुपपत्त्या चार्थक्रियासमर्थाधिष्ठानवैपरीत्यस्यार्थक्रियाशून्यत्वस्यावगमादनुमानबाधो दर्शितः। पदार्थस्वरूपप्रयुक्तार्थक्रियाशून्यतयाऽसत्त्वेऽपि शुभाशुभादिव्याप्तिलक्षणधर्मोपाधावर्थक्रियाकारित्वस्याङ्गीकरणात् पदार्थानां स्वरूपतो मिथ्यात्वं दर्शितम्, स्थूलशरीरोपाधावेवात्मनो व्यावहारिकवस्तुसंस्पर्श इति दर्शयितुम्।

## तृतीयाध्याये द्वितीयः पादः।

१।।संध्याधिकरणम्।।सू. १-६।।

### संध्ये सृष्टिराह हि।।१।।

**अतिक्रान्ते पादे पञ्चाग्निविद्यामुदाहृत्य जीवस्य संसारगतिप्रभेदः प्रपञ्चितः। इदानीं तु तस्यैवावस्थाभेदः प्रपञ्च्यते। इदमामनन्ति– 'स यत्र प्रस्वपिति' (बृ.उ. ४।३।९) इत्युपक्रम्य 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते' (बृ.उ. ४।३।१०) इत्यादि। तत्र संशयः– किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिराहोस्विन्मायामयीति। तत्र तावत् प्रतिपद्यते– संध्ये तथ्यरूपा सृष्टिरिति। संध्यमिति स्वप्नस्थानमाचष्टे, वेदे प्रयोगदर्शनात् 'संध्यं तृतीयं स्वप्नस्थानम्' (बृ.उ. ४।३।९) इति। द्वयोर्लोकस्थानयोः प्रबोधसंप्रसादस्थानयोर्वा संधौ भवतीति संध्यम्। तस्मिन् संध्ये स्थाने तथ्यरूपैव**

*प्रकटार्थविवरणम्*

**सन्ध्ये सृष्टिराह हि**।। वृत्तानुश्रवणपूर्वकं पादसङ्गतिमाह— **अतिक्रान्त इति**। पुनः पुनः आरोहावरोहरूपत्वात् स्वास्थ्यवर्जिते संसारे विरक्तस्य तत्त्वंपदार्थपरिशोधनाय द्वितीयपादारम्भः। तत्रापि त्वमर्थस्योद्देश्यत्वात् प्रथमं तस्यावस्थावत्त्वविनिर्मुक्तत्वप्रतिपादनाय प्रयत्यत इत्यर्थः। आरम्भणाधिकरणे च स्वप्नस्य मायामात्रत्वं सिद्धवत्कृत्य तदवष्टम्भेन जाग्रदवस्थायाः मायामयत्वं न्यरुरूपत्। इदानीं तु तदेव स्वप्नस्य मायामात्रत्वं निरूपयितुं तद्विषयवाक्यं पठति— **इदमामनन्तीति**। सृष्टिश्रुतेस्तदुचितसामग्र्यभावाच्च संशयमाह— **तत्रेति**। पूर्वपक्षे सूत्रं योजयति— **तत्र तावदिति**। इहलोकपरलोकापेक्षया जाग्रत्सुषुप्तापेक्षया वा तृतीयं स्वप्नस्थानं

*भाष्यभावप्रकाशिका*

**सन्ध्ये सृष्टिराह हि**।। दृढीकृतवैराग्यस्य वाक्यार्थज्ञानोपयोगित्वेन तत्त्वम्पदार्थविचारोऽस्मिन् पादे क्रियत इत्याह— **इदानीन्त्विति**। प्रथमप्रयोगाभावे वैदिकप्रयोगः कथमुपपद्यत इत्याशङ्क्य यौगिकत्वात् प्रथमप्रयोगापेक्षा नास्तीत्याह— **द्वयोरिति**। ऐहिकलौकिकरूपादिविषयैन्द्रियकदर्शनाभावादामुष्मिकस्य चानुदयादुभयोर्लोकयोः सन्धौ भवतीति सन्ध्यम्।

*न्यायनिर्णयः*

संसारगतिनिरूपणेन ततो दृढीकृतवैराग्यस्य वाक्यार्थावगतये तत्त्वमर्थौ संशोधयितुं पादमारभमाणस्त्वमर्थस्य जाग्रदवस्था संसारनिरूपणेनैव निरूपितेत्युपेत्य स्वयंज्योतिष्ट्वसिद्धये स्वप्नावस्थां वक्तुं पूर्वपक्षयति— **संध्ये सृष्टिरिति**। वृत्तमनूद्य पादसंगतिमाह— **अतिक्रान्त इति**। संसारस्य पुनः पुनरारोहावरोहरूपत्वात् तस्मिन्नस्वास्थ्ये विरक्तस्य वाक्यार्थज्ञानार्थं पदार्थशोधनाय द्वितीयपादारम्भः। तत्रापि त्वमर्थस्योद्देश्यत्वात् 'न स्थानतोऽपि' इत्यतः प्राक्तन[प्राक् त]स्यावस्थाविनिर्मुक्तत्वप्रतिपादनाय प्रयत्यते। [१]ततश्चाऽऽपादसमाप्तेस्तत्पदार्थो विविच्यते। तत्रापि स्वयंज्योतिष्ट्वस्पाष्ट्यार्थं स्वप्नावस्था प्रथमं व्यवस्थाप्यत इत्यर्थः। आरम्भणाधिकरणे स्वप्नस्य मायामयत्वं सिद्धवत्कृत्य जाग्रदवस्थाया मायामयत्वं निरूपितम्। इदानीं तदेव स्वप्नस्य मायामयत्वं प्रकटयितुं तद्विषयवाक्यमुदाहरति— **इदमिति**। तस्मिन् वाक्ये स्वाप्नीं सृष्टिमधिकृत्य रथादिसर्गाम्नानाद् रथाद्यभावाम्नानाच्च संशयमाह— **तत्रेति**। पारमार्थिकत्वमर्थक्रियासमर्थत्वमित्यभिप्रेत्य प्रबोध इवेत्युदाहरणम्। अन्यथा तत्रापि वास्तव्याः सृष्टेरनिष्टत्वेन साध्यवैकल्यात्। मायामयत्वं प्रातीतिकसत्तामात्रोपेतत्वम्। अत्र च त्वमर्थस्य स्वप्नावस्थानिरूपणेन ततो निष्कृष्टस्य स्वयंज्योतिषः शुद्धतया वाक्यार्थान्वयित्वेन तद्धेतुत्वमस्तीति तत्प्रतिपादनात् पादादिसंगतयः। पूर्वपक्षे स्वप्नस्य सत्यतया ततो निष्कर्षायोगादशुद्धस्यास्वयंज्योतिषो वाक्यार्थान्वयासिद्धिः, सिद्धान्ते तस्य मिथ्यात्वात् ततो निष्कृष्टस्य स्वयंज्योतिष्ट्वात् तदन्वयेन तद्धीहेतुत्वमिति मत्वा पूर्वपक्षमुपादत्ते— **तत्रेति**। प्रतिज्ञां विवृण्वन्नादौ संध्यशब्दार्थमाह— **संध्यमितीति**। तत्र मानमाह— **वेद इति**। प्रथमप्रयोगाभावे कथं वैदिकप्रयोगसिद्धिरित्याशङ्क्य यौगिकत्वान्न तदपेक्षेत्याह— **द्वयोरिति**। [२]ऐहिकामुष्मिकं च यदैन्द्रियकं रूपादिज्ञानं तस्याभावादनुदयाच्च स्वप्नस्थानं तयोः संध्यमुक्तम्। स्थूलदर्शनस्य चाभावाद् वासनामयज्ञानस्य तत्र

---

१. ततः = 'स्थानतोऽपि' इत्यारभ्य। २. 'ऐहिकमामुष्मिकं च' इति पाठः स्यात्। तथा सति यथाक्रमम् 'अभावादनुदयाच्च' इत्यत्रान्वयः संगच्छते।

**सृष्टिर्भवितुमर्हति। कुतः? यतः प्रमाणभूता श्रुतिरेवमाह– 'अथ रथान् रथयोगान् पथः सृजते' (बृ.उ. ४।३।१०) इत्यादि। 'स हि कर्ता' (बृ.उ. ४।३।१०) इति चोपसंहारादेवमेवावगम्यते।।१।।**

## निर्मातारं चैके पुत्रादयश्च।।२।।

**अपि चैके शाखिनोऽस्मिन्नेव संध्ये स्थाने कामानां निर्मातारमात्मानमामनन्ति– 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' (क.उ. ५।८) इति। पुत्रादयश्च तत्र कामा अभिप्रेयन्ते काम्यन्त इति। ननु कामशब्देनेच्छाविशेषा एवोच्येरन्। न; 'शतायुषः पुत्रपौत्रान् वृणीष्व' (क.उ. १।२३) इति प्रकृत्यान्ते 'कामानां त्वा कामभाजं करोमि' (क.उ. १।२४) इति प्रकृतेषु [1]तत्र तत्र पुत्रादिषु कामशब्दस्य प्रयुक्तत्वात्। प्राज्ञं चैनं निर्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः। प्राज्ञस्य हीदं प्रकरणम् 'अन्यत्र धर्मादन्यत्राधर्मात्' (क.उ. २।१४) इत्यादि। तद्विषय एव च वाक्यशेषोऽपि– 'तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते।**

### *प्रकटार्थविवरणम्*

सन्ध्यमित्यर्थः। न केवलं सृष्टिश्रुत्यवष्टम्भत एव सत्यत्वं, सकर्तृकत्वाच्च जाग्रद्वदर्थक्रियासामर्थ्यलक्षणं सत्यत्वमित्याह— **स हि कर्तेति**।

**निर्मातारं चैके पुत्रादयश्च**।। किं च स्वप्ने द्रष्टृव्यतिरिक्ताः सर्वे पदार्थाः अर्थक्रियासामर्थ्यसत्त्वोपेताः, निर्मीयमाणत्वात्, जाग्रद्वदित्याह— **अपि चेति**। न च साध्यविकलो दृष्टान्तः, [2]प्रागेतत्सिद्धेः तस्य तावदवस्थ्यात्। कामशब्दस्य यौगिकार्थमाह— **पुत्रादयश्चेति**। रूढिबलेन चोदयति— **नन्विति**। रूढिरत्र ग्रहीतुं न शक्यते, प्रकरणविरोधादित्याह— **न; शतायुष इति**। किं च परमात्मकर्तृकत्वादपि महाभूतसृष्टिवत् सत्यैव स्वप्नसृष्टिरित्याह— **प्राज्ञं चैनमित्यादिना**।

### *भाष्यभावप्रकाशिका*

ननु स्वप्नेऽन्तःकरणस्य विद्यमानत्वात्तद्वृत्तीनामेव कामानामात्मनो निर्मातृत्वमित्याशङ्क्याह— **पुत्रादयश्चेति**। ननु रूढिर्योगमपहरतीति न्यायेन यौगिकोऽर्थो न स्वीकरणीय इति चोदयति— **नन्विति**। सत्यम्, प्रकरणाद्यौगिकार्थः प्रतीयत इत्याह— **न; शतायुष इति**। प्राज्ञकर्तृकत्वाच्च सत्यत्वम्, जाग्रत्सृष्टिवदित्यनुमानमाह— **प्राज्ञञ्चैनमिति**। क्वचिज्जीवकर्तृकत्वश्रवणेऽपि

### *न्यायनिर्णयः*

भावात् प्रबोधसंप्रसादयोर्वा संध्यं स्वप्नस्थानमिति विवेक्तव्यम्[3]। पदार्थमुक्त्वा प्रतिज्ञां पूरयति— **तस्मिन्निति**। स्वप्नसृष्टेर्न सत्यत्वं मानाभावादित्याह— **कुत इति**। श्रुतिं प्रमाणयन्नुत्तरमाह— **यत इति**। बाह्यरथाद्यभावेऽपीत्यथशब्दः। न केवलं सृष्टिश्रुत्या स्वप्नसृष्टेः सत्यत्वं, सकर्तृकत्वादपि, तस्माज्जागरितसृष्टिवदर्थक्रियासामर्थ्यं सत्यत्वमेष्टव्यमित्याह— **स हीति**।।१।।

किंच विमताः सत्याः, निर्मितत्वाज्जाग्रन्निर्मितरथादिवदित्याह— **निर्मातारं चेति**। निर्मितान् कामान् विशिनष्टि— **पुत्रादयश्चेति**। निर्मातारं चेत्यादि व्याकरोति— **अपि चेति**। सुप्तेषु करणेषु निर्व्यापारेष्वति यावत्। स त्वया पृष्ट आत्मेति शेषः। कामशब्दस्य यौगिकार्थमाह— **पुत्रादयश्चेति**। रूढिर्योगमपहरतीति न्यायेन शङ्कते— **नन्विति**। प्रकरणविरोधान्नात्र रूढिरित्याह— **नेत्यादिना**। **तत्रेति**। एष इत्यादि यत्र श्रुतं तत्रैव प्रकरण इति यावत्। [4]परकर्तृकत्वादपि सत्यैव स्वप्नसृष्टिः, संप्रतिपन्नवदित्याह— **प्राज्ञं चेति**। तद्विषयं प्रकरणं प्रकटयति— **प्राज्ञस्येति**। तद्विषयं वाक्यशेषमपि विशदयति— **तदिति**। दृष्टान्तस्य साध्यविकलतां

---

१. एकः तत्रशब्दो नास्ति पाठान्तरे। २. अयं भावः— स्वप्नदृष्टान्तेन हि जाग्रतो मिथ्यात्वमनुमेयम्। अतो दृष्टान्तसिद्धेः प्राग् जाग्रतो मिथ्यात्वासिद्ध्या सत्यत्वं स्थिरमिति। एतच्च पारमार्थिकत्वस्य साध्यत्वाभिप्रायेण। वस्तुतस्तु— अर्थक्रियासामर्थ्यरूपसत्त्वस्य जाग्रति मिथ्यात्ववादिनाऽपि स्वीकारात् न साध्यवैकल्यशङ्का। ३. मुमूर्षोः सर्वेन्द्रियोपरमे कर्मबलात् मानसः परलोकस्फूर्तिरूपः स्वप्नः लोकद्वयसंधौ भवः संध्यः। स च कादाचित्क इत्यरुच्या नित्यस्वप्नग्रहणार्थं द्वितीयकल्पानुसरणम् इति रत्नप्रभा। द्र.पृ. ६२३। ४. परेति। परमात्मेत्यर्थः।

**तस्मिल्ँलोकाः श्रिताः सर्वे तदु नात्येति कश्चन' (क.उ. ५।८) इति। प्राज्ञकर्तृका च सृष्टिस्तथ्यरूपा समधिगता जागरिताश्रया। तथा स्वप्नाश्रयाऽपि सृष्टिर्भवितुमर्हति। तथा च श्रुतिः– 'अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत् पश्यति तानि सुप्तः' (बृ.उ. ४।३।१४) इति स्वप्नजागरितयोः समानन्यायतां श्रावयति। तस्मात् तथ्यरूपैव संध्ये सृष्टिरिति।।२।।**

**एवं प्राप्ते प्रत्याह–**

**मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्।।३।।**

**तुशब्दः पक्षं व्यावर्तयति। नैतदस्ति, यदुक्तं संध्ये सृष्टिः पारमार्थिकीति। [१]मायैव संध्ये सृष्टिर्न परमार्थगन्धोऽप्यस्ति। कुतः? कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्। न हि कार्त्स्न्येन परमार्थवस्तुधर्मेणाभिव्यक्तस्वरूपः**

***प्रकटार्थविवरणम्***

किं च जाग्रत्समानदेशत्वाभिधानादपि सत्यत्वमित्याह— **अथो खल्वाहुरिति**।

सिद्धान्तसूत्रमवतारयति— **एवं प्राप्त इति**। **मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्**।। जीवोपाधिरयमविद्या मायावयवत्वान्मायेत्युच्यते। मात्रशब्देन च सति प्रमातरि बाध्यत्वं नाम भ्रमसिद्धत्वं जाग्रद्वैलक्षण्यमुच्यते। तत्सिद्धिश्च देशकालविशिष्टार्थक्रियासमर्थप्रमात्रादिविषयबाधकप्रत्यक्षेणार्थक्रियासमर्थरूपस्यैव बाधानुपपत्त्या।

यत्पुनरत्र **भास्करो** रुरोद "मायाशब्दस्य प्रज्ञानामसु पाठान्निरालम्बनः प्रत्ययो माया" इति, अत्रोच्यते— कथंकारं प्रज्ञानामसु पाठमात्रेण प्रत्ययविशेषपरिग्रहः? सम्यग्दर्शनमेव माया किं न भवेत्? अथ नास्ति सम्यग्दर्शने मायाप्रयोगः, तर्हि परिदृश्यमानदृष्टनष्टस्वभावकरिनरतुरगादौ वृद्धानां मायाशब्दप्रयोगादाप्तवाक्यस्य वृद्धव्यवहारमूलत्वाच्च न प्रज्ञानामसु मायाशब्दस्य रूढ्या प्रयोगो भागी, किं तु मीयतेऽर्थोऽनयेति बुद्धौ यौगिको मायाशब्दप्रयोगः। तस्मात् वृद्धव्यवहारानुसारेण मिथ्या-

***भाष्यभावप्रकाशिका***

जीवस्य प्राज्ञाभेदसिद्धये ब्रह्मणो जीवभावेनोच्यमानत्वात् प्राज्ञकर्तृकतासिद्धिरित्यर्थः। स्वप्नजागरितज्ञानयोरेकविषयत्वश्रवणादपि स्वप्नदृष्टस्य पारमार्थिकत्वमित्याह— **तथा चेति**। बाध्यमानत्वान्मिथ्यात्वमाशङ्क्य जाग्रत्सृष्टेः श्रुत्या बाध्यत्वेऽपि ब्रह्मसाक्षात्कारात् प्राग् यथाऽनुवृत्तेः सत्यत्वम्, तद्वत् स्वप्नस्यापि सत्यत्वमित्युपसंहरति— **तस्मात्तथ्येति**।

कार्त्स्न्येनानभिव्यक्तत्वेऽप्यपरमार्थत्वं कुत इत्यत्राह— **परमार्थेति**। वस्तुत्वस्य कार्त्स्न्यव्याप्यत्वात् तथाऽभिव्यक्त्यभावे

***न्यायनिर्णयः***

प्रत्याह— **प्राज्ञेति**। हेत्वसिद्धिमाशङ्क्य क्वचिज्जीवकर्तृकत्वश्रवणेऽपि जीवस्य प्राज्ञाभेदाय ब्रह्मणस्तद्भावात् प्राज्ञकर्तृकतेति मत्वा दार्ष्टान्तिकमाह— **तथेति**। स्वप्नजागरितयोस्तुल्यदेशत्वश्रवणादपि स्वप्नस्य सत्यतेत्याह— **तथा चेति**। स्वप्नजाग्रद्धियोरेकार्थत्वश्रुत्याऽपि स्वप्नसृष्टेः सत्यतेत्याह— **यानीति**। उक्तश्रुतेस्तात्पर्यमाह— **स्वप्नेति**। बाध्यत्वेन मिथ्यात्वमाशङ्क्य जागरितसृष्टेः श्रुत्या बाध्यत्वेऽपि तत्त्वसाक्षात्कारात्प्रागनुवृत्तेः सत्यत्ववदस्यापि स्वप्नस्य सत्यतेत्याह— **तस्मादिति**। स्वप्नसृष्टेः सत्यत्वे तद्विशिष्टात्मनोऽशुद्धेर्न वाक्यार्थान्वयितेत्युपसंहर्तु**मितीत्युक्तम्**।।२।।

पूर्वपक्षानुवादेन सिद्धान्तं सूत्रयति— **एवमिति**। अक्षरव्याख्यामारभते— **तुशब्द इति**। पक्षव्यावृत्तिमेव व्यावर्त्यानुवादेन व्यनक्ति— **नैतदिति**। पूर्वपक्षनिषेधं प्रतिज्ञायोत्तरपक्षं प्रतिजानीते— **मायेति**। मायाऽविद्ययोर्भेदो नेति वक्तुं सूत्रभाष्ययोर्मायाशब्दः। सूत्रे मात्रशब्देन सति मातरि बाध्यत्वं नाम भ्रान्तिसिद्धत्वं स्वप्नस्य जाग्रद्वैलक्षण्यं विवक्षितम्। श्रुतियुक्तिभ्यां स्वप्नसृष्टेः सत्यत्वोक्तेर्नेयं प्रतिज्ञेति शङ्कते— **कुत इति**। तयोरन्यथासिद्धेर्वक्ष्यमाणत्वं मत्वा हेतुमवतार्य व्याकरोति— **कार्त्स्न्येनेति**। परमार्थवस्तुधर्मो योग्यदेशकालनिमित्तसाहित्यम्। वस्तुत्वस्य कार्त्स्न्येन व्याप्तत्वात् [२]तथा व्यक्त्यभावे तद्व्याप्यं वस्तुत्वमपि

---

१. 'मायामय्येव' इति पा.। २. कार्त्स्न्येनाभिव्यक्तत्वाभावे इत्यर्थः।

**स्वप्नः। किं पुनरत्र कात्स्न्र्यमभिप्रेतम्? देशकालनिमित्तसंपत्तिरबाधश्च। न हि परमार्थवस्तुविषयाणि देशकालनिमित्तान्यबाधश्च स्वप्ने संभाव्यन्ते। न तावत् स्वप्ने रथादीनामुचितो देशः संभवति। न हि संवृते देहदेशे रथादयोऽवकाशं लभेरन्। स्यादेतत्– बहिर्देहात् स्वप्नं द्रक्ष्यति, देशान्तरितद्रव्यग्रहणात्। दर्शयति च श्रुतिर्बहिर्देहात् स्वप्नम्– 'बहिष्कुलायादमृतश्चरित्वा। स ईयतेऽमृतो यत्र कामम्' (बृ.उ. ४।३।१२) इति। स्थितिगतिप्रत्ययभेदश्च नानिष्क्रान्ते जन्तौ सामञ्जस्यमश्नुवीतेति। नेत्युच्यते। न हि सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं विपर्येतुं च ततः सामर्थ्यं संभाव्यते। क्वचिच्च प्रत्यागमनवर्जितं स्वप्नं श्रावयति 'कुरुष्वहमद्य शयानो निद्रयाऽभिप्लुतः स्वप्ने पञ्चालानभिगतश्चास्मिन् प्रतिबुद्धश्चे'ति। देहाच्चेदपेयात् पञ्चालेषु [1]प्रतिबुध्येत, तानसावभिगत इति; कुरुष्वेव तु प्रतिबुध्यते। येन चायं देहेन देशान्तरमश्नुवानो मन्यते, तमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति। यथाभूतानि चायं देशान्तराणि स्वप्ने पश्यति, न तानि तथाभूतान्येव भवन्ति। परिधावंश्चेत् पश्येज्जाग्रद्वद् वस्तुभूतमर्थमाकलयेत्। दर्शयति च श्रुतिरन्तरेव देहे स्वप्नम्– 'स यत्रैतत् स्वप्न्यया चरति' इत्युपक्रम्य 'स्वे शरीरे यथाकामं परिवर्तते' (बृ.उ. २।१।१८) इति। अतश्च श्रुत्युपपत्तिविरोधाद् बहिष्कुलायश्रुतिर्गौणी व्याख्यातव्या– बहिरिव कुलायादमृतश्चरित्वेति। यो हि वसन्नपि शरीरे न तेन प्रयोजनं करोति स बहिरिव शरीराद् भवतीति।**

### *प्रकटार्थविवरणम्*

हस्त्यादावनुगतमिथ्यावस्तुनि मायाशब्दो रूढ इति श्रुतिसूत्रयोरपि स एव मायाशब्दार्थ इति।

वस्तुसंग्रहवाक्ये देशासंभवं तावद् विवृणोति— **न तावत् स्वप्न इत्यादिना।**

### *भाष्यभावप्रकाशिका*

तद्व्याप्यं वस्तुत्वमपि व्यावर्तत इत्यर्थः। सर्वात्मना कस्याप्यनभिव्यक्तेरतिप्रसङ्ग इत्याक्षिपति— **किं पुनरिति**। युक्तश्चैतदित्याह— **स्थितिगतीति**। बहिर्गतस्य [आ]गमननियमाभावात् तत्रैव बोधप्रसङ्गादपि नैवमित्याह— **क्वचिच्चेति**। न केवलमुपपत्तेरेवेत्याह— **दर्शयति चेति**। उपचारे निमित्तमाह— **यो हि वसन्निति**।

### *न्यायनिर्णयः*

व्यावर्तेतेत्यर्थः। एकस्यापि सर्वात्मनाऽनभिव्यक्तेः सर्वत्र वस्तुत्वव्यावृत्तिरित्याक्षिपति— **किमिति**। अतिप्रसङ्गं प्रत्याख्यातुमिष्टं कात्स्न्र्यं व्याचष्टे— **देशेति**। स्वप्नेऽपि तत्सिद्धिमाशङ्क्याह— **नेत्यादिना**। तत्र स्वप्ने योग्यदेशायोगं विवृणोति— **न तावदिति**। यत्र स्वप्नो दृश्यते स एव रथादीनां योग्यो देशः स्यादित्याशङ्क्य स किं देहादन्तर्बहिर्वेति विकल्प्याद्यं प्रत्याह— **न हीति**। द्वितीयं शङ्कते— **स्यादिति**। तत्रोपपत्तिमाह— **देशेति**। तत्रैव श्रुतिमाह— **दर्शयतीति**। देहाद् बहिरेव स्वप्नधीरित्यत्र युक्त्यन्तरमाह— **स्थितीति**। अन्तरेव स्वप्नो न बहिरित्याह— **नेतीति**। बहिर्गतस्यागत्यनियमात् तत्रैव प्रबोधप्रसङ्गादपि न स्वप्नो बहिरित्याह— **क्वचिच्चेति**। श्रावयति स्वप्नद्रष्टा प्रबुद्धः सन् पार्श्वस्थानिति शेषः। उक्तमर्थं व्यतिरेकद्वारा स्फोरयति— **देहाच्चेदिति**। इतश्च देहाद् बहिर्देशान्तरं गत्वा न स्वप्नधीरित्याह— **येनेति**। न स्वप्नो देशान्तरं गतस्येत्यत्रैव हेत्वन्तरमाह— **यथेति**। तदेव व्यतिरेकेणोपपादयति— **परिधावन्निति**। देहाद् देहान्तरं गच्छन्निति यावत्। न केवलं स्वप्नोऽन्तरेवेत्युपपन्नं, किंतु श्रौतश्चेत्याह— **दर्शयतीति**। एतदिति स्वप्नवाचि क्रियाविशेषणम्। स्वप्न्ययेति वृत्तिर्विशेष्यते। अन्तरेव स्वप्नश्चेत् कथं तर्हि बहिष्कुलायश्रुतिरिति, तत्राह— **अतश्चेति**। कथं शरीरे वसतो बहिरिवेत्युक्तिरित्याशङ्क्योपचारे निमित्तमाह— **यो हीति**। यत्तु स्थितिगतिप्रत्ययभेदसामञ्जस्याय

१. 'प्रतिबुध्येत। न तानसावभिगत इति कुरुष्वेव' इति पा.।

**स्थितिगतिप्रत्ययभेदोऽप्येवं सति विप्रलम्भ एवाभ्युपगन्तव्यः। कालविसंवादोऽपि च स्वप्ने भवति– रजन्यां सुप्तो वासरं भारते वर्षे मन्यते। तथा मुहूर्तमात्रवर्तिनि स्वप्ने कदाचिद् बहुवर्षपूगानतिवाहयति। निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणे वोचितानि विद्यन्ते। करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति। रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा। बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे। स्वप्न एव चैते सुलभबाधा भवन्ति। आद्यन्तयोर्व्यभिचारदर्शनात्। रथोऽयमिति हि कदाचित् स्वप्ने निर्धारितः क्षणेन मनुष्यः संपद्यते, मनुष्योऽयमिति निर्धारितः क्षणेन वृक्षः। स्पष्टं चाभावं रथादीनां स्वप्ने श्रावयति शास्त्रम्– 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' (बृ.उ. ४।३।१०) इत्यादि। तस्मान्मायामात्रं स्वप्नदर्शनम्।।३।।**

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः।।४।।

**मायामात्रत्वात् तर्हि न कश्चित् स्वप्ने परमार्थगन्धोऽस्तीति। नेत्युच्यते। सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः। तथा हि श्रूयते– 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र**

### *प्रकटार्थविवरणम्*

कालासंभवं स्पष्टयति— **कालविसंवादोऽपि चेति**। रजन्यां रात्रौ; वासरं दिवसम्; भारते वर्षे सेतुहिमवन्मध्ये; वर्षपूगान् वर्षसमूहान् क्षपयतीत्यर्थः। निमित्तासंभवं प्रपञ्चयति— **निमित्तान्यपि चेति**। अबाधासंभवं विभजते— **बाध्यन्ते चैत इत्यादिना**।

**सूचकश्च हि श्रुतेराचक्षते च तद्विदः**।। [1]शङ्कासूत्रं व्याचष्टे— **मायामात्रत्वात्तर्हीत्यादिना**। ननु तर्हि सत्यशुभाशुभ-

### *भाष्यभावप्रकाशिका*

अत्र रजनीसमयेऽपि वर्षान्तरे केतुमालादौ वासरो भवतीति भारत इति विशेषणम्। एवमुचितदेशकालासंभवमभिधायेदानीमुचित-निमित्ताभावमाह— **निमित्तान्यपीति**। तदेवोपपादयति— **करणेति**। बुद्धिनिमित्तासंभवमभिधाय कर्मार्थनिमित्तासंभवमाह— **रथादीति**। अबाधोऽपि नास्तीत्याह— **बाध्यन्त इति**। श्रौतोऽपि वायो[बाधो]स्तीत्याह— **स्पष्टञ्चेति**।

शुभाशुभफलत्वान्वयव्यतिरेकाभ्यां शास्त्रेण च विरोधः स्वप्नस्य मायामयत्वे प्रसज्यत इति शङ्कते— **मायामात्रत्वादिति**। नोभयविरोध इति परिहरति— **नेत्युच्यत इति**। शुभाशुभादिना व्याप्तिलक्षणधर्मोपाधावर्थक्रियाकारित्वेऽपि पदार्थस्वरूपोचितार्थक्रिया-

### *न्यायनिर्णयः*

स्वप्नो बहिरिति, तत्राह— **स्थितीति**। **एवं सतीति**। श्रुतियुक्तिभ्यामन्तरेव स्वप्ने सिद्धे सतीत्यर्थः। **विप्रलम्भो** विभ्रमः। योग्यदेशायोगं स्वप्नस्योक्त्वा तादृक्कालायोगं स्पष्टयति— **कालेति**। अत्र रात्रिसमयेऽपि केतुमालादौ वर्षान्तरे वासरो भवतीति भारत इत्युक्तम्। विधान्तरेण कालविसंवादमाह— **तथेति**। योग्यकालायोगमुक्त्वा तादृङ्निमित्तायोगमाह— **निमित्तान्यपीति**। बुद्ध्यर्थं योग्यनिमित्तायोगं साधयति— **करणेति**। अस्येति स्वप्नद्रष्टुरुक्तिः। कर्मार्थं योग्यनिमित्ताभावमाह— **रथादीति**। अबाधासंभवं विभजते— **बाध्यन्ते चेति**। न केवलं प्रबोधे बाध्यत्वं, स्वप्नेऽपीत्याह— **स्वप्न इति**। आदावन्ते च व्यभिचारधीर्जागरेऽपि तुल्येत्याशङ्क्य विशेषमाह— **रथोऽयमिति**। न केवलमध्यक्षं स्वप्ने रथादीनां बाध्यत्वं, किंतु श्रुतमपीत्याह— **स्पष्टं चेति**। योग्यदेशाद्यभावेन सिद्धमर्थमुपसंहरति— **तस्मादिति**।।३।।

स्वप्नस्य मायामात्रत्वे शुभाशुभफलत्वान्वयव्यतिरेकाभ्यां शास्त्रेण च विरोधः स्यादित्याशङ्क्याह— **सूचकश्चेति**। सूत्रव्यावर्त्यामाशङ्कामाह— **मायेति**। विरोधद्वयं प्रत्याह— **नेतीति**। तत्र प्रथमं श्रुतिविरोधं निरस्यति— **सूचकश्च हीति**। स्वप्नो

---

१. 'शङ्कापूर्वं सूत्रं व्याचष्टे' इति पाठः स्यात्।

**जानीयात् तस्मिन् स्वप्ननिदर्शने' (छा.उ. ५।२।९) तथा 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' (ऐ.आ. ३।२।४) इत्येवमादिभिः स्वप्नैरचिरजीवित्वमावेद्यत इति श्रावयति। आचक्षते च स्वप्नाध्यायविदः— 'कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरयानादीन्यधन्यानि' इति। मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित् स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यन्ते। तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वम्, सूचकस्य तु स्त्रीदर्शनादेर्भवत्येव वैतथ्यम्, बाध्यमानत्वादित्यभिप्रायः। तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम्। यदुक्तम्— 'आह हि' इति; तदेवं सति भाक्तं व्याख्यातव्यम्। यथा लाङ्गलं गवादीनुद्वहतीति निमित्तमात्रत्वादेवमुच्यते, न तु प्रत्यक्षमेव लाङ्गलं गवादीनुद्वहति। एवं निमित्तमात्रत्वात् सुप्तो रथादीन् सृजते, स हि कर्तेति चोच्यते। न तु प्रत्यक्षमेव सुप्तो रथादीन् सृजति। निमित्तत्वं त्वस्य रथादिप्रतिभाननिमित्तमोदत्रासादिदर्शनात् तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वेनेति वक्तव्यम्।**

**अपि च जागरिते विषयेन्द्रियसंयोगादादित्यादिज्योतिर्व्यतिकराच्चात्मनः स्वयंज्योतिष्ट्वं दुर्विवेचनमिति तद्विवेचनाय स्वप्न उपन्यस्तः। तत्र यदि रथादिसृष्टिवचनं श्रुत्या नीयेत, तदा स्वयंज्योतिष्ट्वं न निर्णीतं स्यात्। तस्माद् रथाद्यभाववचनं [1]श्रुत्या, रथादिसृष्टिवचनं तु भक्त्येति व्याख्येयम्। एतेन निर्माणश्रवणं**

### *प्रकटार्थविवरणम्*

सूचकत्वान्यथानुपपत्त्या स्वरूपेणापि स्वप्नस्य सत्यत्वं प्रसक्तमित्याशङ्क्याह— **तत्रापि भवतु नामेति**।

परोक्तमनूद्य दूषयति— **यदुक्तमित्यादिना**। ननु सस्यादिद्वारेण लाङ्गलं गवादीनुद्वहति पुष्णातीति साक्षात् कारणत्वाभावेऽपि विद्यत एव निमित्तत्वम्; जीवस्य तु कथं निमित्तत्वमित्याशङ्क्याह— **निमित्तत्वं त्वस्येति**। पूर्वं सृष्टौ वाक्यस्य तात्पर्यमङ्गीकृत्य अदृष्टद्वारेण जीवस्य निमित्तत्वमित्युक्तम्; इदानीं तत्र तात्पर्यमपि नास्तीत्याह— **अपि चेति**। द्वितीयसूत्रोक्तं निराकरोति—

### *भाष्यभावप्रकाशिका*

शून्यत्वान्मिथ्यात्वमित्याह— **तत्रापि भवत्विति**। ननु धर्माधर्मयोरेव निमित्तत्वमित्याशङ्क्य तत्कर्तृकतया पुरुषोऽपि निमित्तमित्याह— **निमित्तत्वन्त्विति**। किं च पूर्वापरालोचनायामपि रथाद्यभाव एव श्रुतेरन्यपरत्वादवगम्यत इत्याह— **अपि च जागरित इति**। ननु

### *न्यायनिर्णयः*

भविष्यतः साधुनः सूचक इत्यत्र श्रुतिमुक्त्वा तादृशोऽसाधुनोऽपि सूचकोऽसावित्यत्र श्रुतिमाह— **तथेति**। अन्वयव्यतिरेकविरोधसमाधिं स्फुटयति— **आचक्षते चेति**। इतश्चोभयविधविरोधवैधुर्यमित्याह— **मन्त्रेति**। तर्हि शुभाशुभसूचकत्वानुपपत्त्या स्वप्नस्य सत्यत्वान्न मायामात्रत्वमित्याशङ्क्यार्थक्रियाकारित्वेऽपि परमार्थत्वाभावान्मिथ्यात्वमित्याह— **तत्रापीति**। स्वप्नस्य सत्यार्थसूचकत्वेऽपीति यावत्। द्विविधविरोधसमाधिफलमुपसंहरति— **तस्मादिति**। परोक्तमनूद्य दूषयति— **यदित्यादिना**। तदिति सुप्तस्य स्रष्टृत्वादिवचनम्। **एवं सतीति** पूर्वोक्तन्यायेन स्वप्नस्य मायामात्रत्वे सतीत्यर्थः। स्वप्नदृष्टरथादिस्रष्टृत्वादिवचसो गौणत्वं दृष्टान्तेन स्पष्टयति— **यथेति**। लाङ्गलस्यापि गवाद्युद्वोढृत्वं मुख्यमेव किं न स्यादित्यत्राह— **न त्विति**। तथापि दार्ष्टान्तिके मुख्यमेव स्रष्टृत्वं, सुप्तस्य चेतनत्वेन स्रष्टृत्वयोगादित्याशङ्क्याह— **न तु प्रत्यक्षमिति**। जाग्रतः स्रष्टृत्ववद् यदि सुप्तस्यापि तदिष्टं तर्हि सृष्टस्य रथादेर्न प्रबोधमात्रेण बाध्यता स्यादित्यर्थः। धर्माधर्मयोरेव निमित्तत्वात् कुतः सुप्तस्य निमित्ततेत्याशङ्क्य तत्फलित्वेन तत्कर्तृतयेत्याह— **निमित्तत्वं चेति**।

इतश्च श्रुत्या स्वप्नसृष्टिर्वास्तवी नाभीष्टेत्याह— **अपि चेति**। हेत्वन्तरं स्फोरयति— **जागरित इति**। अस्त्वात्मनः स्वयंज्योतिष्ट्वविवेचनाय स्वप्नोक्तिः, तथापि स्वप्ने सृष्टिवचनं मुख्यमेवेत्याशङ्क्याह— **तत्रेति**। जागरितादविशेषादित्यर्थः। पूर्वापरालोचनायां श्रुतेरन्यपरत्वादसत्त्वे रथादीनां सिद्धे फलितमाह— **तस्मादिति**। यत्तु निर्मातारं चेत्यादि, तत्राह— **एतेनेति**।

१. श्रुत्या = मुख्यवृत्त्या। तत्परतयेति यावत्।

**व्याख्यातम्। यदप्युक्तम्– 'प्राज्ञमेनं निर्मातारमामनन्ति' इति। तदप्यसत्। श्रुत्यन्तरे 'स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' (बृ.उ. ४।३।९) इति जीवव्यापारश्रवणात्। इहापि 'य एष सुप्तेषु जागर्ति' (क.उ. ५।८) इति प्रसिद्धानुवादाज्जीव एवायं कामानां निर्माता संकीर्त्यते। तस्य तु वाक्यशेषेण 'तदेव शुक्रं तद् ब्रह्म' इति जीवभावं व्यावर्त्य ब्रह्मभाव उपदिश्यते, 'तत्त्वमसि' (छा.उ. ६।८।७) इत्यादिवदिति न ब्रह्मप्रकरणं विरुध्यते। न चास्माभिः स्वप्नेऽपि प्राज्ञव्यवहारः प्रतिषिध्यते, तस्य सर्वेश्वरत्वात् सर्वास्वप्यवस्थास्वधिष्ठातृत्वोपपत्तेः। पारमार्थिकस्तु नायं संध्याश्रयः सर्गो वियदादिसर्गवदित्येतावत् प्रतिपाद्यते। न च वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति। प्रतिपादितं हि 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र. सू. २।१।१४) इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम्। प्राक् तु ब्रह्मात्मत्वदर्शनाद् वियदादिप्रपञ्चो व्यवस्थितरूपो भवति; संध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यत इत्यतो वैशेषिकमिदं संध्यस्य मायामात्रत्वमुदितम्।।४।।**

### *प्रकटार्थविवरणम्*

**यदप्युक्तमित्यादिना**। स्वयं विहत्य उपसंहृत्य। न केवलं बृहदारण्यके जीवस्य स्व[स्वयं]कर्तृत्वं श्रुतम्, काठकेऽपीत्याह— **इहापि य एष इति**। ननूक्तं प्रकरणवाक्यशेषाभ्यां परमात्मेति, तत्राह— **तस्य तु वाक्यशेषेणेति**। किं च यथा कुम्भकारस्य कुम्भकर्तृत्वेऽपि न परमेश्वरस्य सर्वस्रष्टृत्वं व्याहन्यते, तथा जीवाविद्याया निद्राऽदृष्टादिसहकारिवशेन स्वप्नप्रपञ्चाकारपरिणामित्वात् जीवकर्तृकत्वेऽपि स्वप्नस्य परमेश्वरकर्तृकत्वमपि न विरुध्यत इत्याह— **न चास्माभिरिति**। यच्चानुमानमुक्तं तत्र दोषमाह— **पारमार्थिकस्त्विति**। श्रौतनिषेधानुपपत्त्यनुगृहीतया बाधान्यथानुपपत्त्याऽर्थक्रियासमर्थाधिष्ठानवैपरीत्यस्यावगमादनुमानबाध इति भावः। दृष्टान्तोऽपि साध्यविकल इत्याह— **न च वियदादीति**। दृष्टान्तसिद्धेः प्रागप्यागमादेव मिथ्यात्वं वियदादेः सेद्धुं शक्नोतीति भावः। कस्तर्हि जाग्रत्प्रपञ्चाद्विशेषो येन पृथगारम्भ इत्याशङ्क्याह— **प्राक्त्विति**।

### *भाष्यभावप्रकाशिका*

जीव एव चेत् निर्माता ब्रह्मश्रुतेः सर्वलोकाश्रयत्वलिङ्गस्य च का गतिरिति, तामाह— **तस्य त्विति**। ननु जीवस्य प्राज्ञाभेदात् परात्तु तच्छ्रुतेरिति च समस्तक्रियाणामीश्वरहेतुकत्वप्रतिपादनात् स्वप्नस्यापि प्राज्ञकर्तृत्वमित्याशङ्क्य प्राज्ञस्य तदुपादानत्वं साध्यते किं वा निमित्तत्वमिति विकल्प्य जीवाविद्यादिदोषैर्विना रजतादिवदप्रतीतेः साक्षादुपादानत्वायोगादाद्यमुपेक्ष्योत्तरपक्षोऽङ्गीक्रियत इत्याह— **न चेति**। यदुक्तम्— प्राज्ञकर्तृकत्वाद्वियदादिवत् सत्यत्वमिति तत्किं व्यावहारिकमुत पारमार्थिकमिति विकल्प्याद्यपक्षो बाधकप्रत्यक्षेण विरुद्ध इत्याह— **पारमार्थिकस्त्विति**। पारमार्थिकत्वमिह सति व्यवहारे बाधरहितत्वम्। उत्तरपक्षे दूषणमाह— **न च वियदादीति**। आरम्भणाधिकरणेनैवास्यापि मिथ्यात्वे सिद्धे किमर्थं पुनरुच्यत इत्याशङ्क्य व्यवहारेऽपि मिथ्यात्वं प्रदर्शयितुमित्याह— **प्राक्त्विति**।

### *न्यायनिर्णयः*

रथादिसृष्टिवचनस्य भाक्तत्वोपपादनेनेति यावत्। परोक्तमनुमानमनूद्य हेत्वसिद्ध्या दूषयति— **यदपीति**। स्वयं विहत्य पूर्वदेहं निश्चेष्टं कृत्वा स्वयं निर्मायापूर्वं वासनामयं देहं संपाद्य स्वेन भासा स्वकीयबुद्धिवृत्त्या स्वेन ज्योतिषा स्वरूपचैतन्येन चेत्यर्थः। न केवलं बृहदारण्यके जीवस्य स्वापकर्तृत्वं श्रुतं, किंतु काठकेऽपीत्याह— **इहापीति**। प्रकरणवाक्यशेषाभ्यां परमात्मा निर्मातेत्युक्तमाशङ्क्य जीवभावमापन्नस्य परस्य स्वाविद्यया स्वप्नोपादानत्वं वा, विना तद्भावं स्वाविद्यया तदधिष्ठातृत्वं वेति विकल्प्याद्यमङ्गीकरोति— **न चेति**। द्वितीयमपि स्वीकरोति— **तस्येति**। तर्हि प्राज्ञकर्तृत्वहेतोः सिद्धेरनुमानमदुष्टमित्याशङ्क्य व्यावहारिकं पारमार्थिकं वा सत्यत्वं साध्यमिति विकल्प्याद्ये बाधकं प्रत्यक्षविरोधमाह— **पारमार्थिकस्त्विति**। व्यवहारे बाधवैधुर्यमिह पारमार्थिकत्वम्। द्वितीये दृष्टान्तस्य साध्यविकलतेत्याह— **न चेति**। वियदादिसर्गस्यासिद्धं मिथ्यात्वमिति कुतो दृष्टान्तस्य साध्यविकलता, तत्राह— **प्रतीति**। कस्तर्हि स्वप्नस्य जाग्रतो विशेषो येनैतन्मिथ्यात्वं पृथगुच्यते, तत्राह— **प्राक्त्विति**। व्यवहारेऽपि स्वप्नस्य मिथ्यात्वं वक्तुं पृथगुक्तिरिति भावः।।४।।

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ।।५।।

**अथापि स्यात्– परस्यैव तावदात्मनोंऽशो जीवोऽग्नेरिव विस्फुलिङ्गः। तत्रैवं सति यथाऽग्निविस्फुलिङ्गयोः समाने दहनप्रकाशनशक्ती भवतः, एवं जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती; ततश्च जीवस्य ज्ञानैश्वर्यवशात् सांकल्पिकी स्वप्ने रथादिसृष्टिर्भविष्यतीति। अत्रोच्यते– सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवस्येश्वरविपरीतधर्मत्वम्। किं पुनर्जीवस्येश्वरसमानधर्मत्वं नास्त्येव? न नास्त्येव; विद्यमानमपि तत् तिरोहितमविद्यादिव्यवधानात्। तत्पुनस्तिरोहितं सत् परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादात् संसिद्धस्य कस्यचिदेवाविर्भवति, न स्वभावत एव सर्वेषां जन्तूनाम्। कुतः? ततो हीश्वराद्धेतोरस्य जीवस्य बन्धमोक्षौ भवतः। ईश्वरस्वरूपापरिज्ञानाद् बन्धः, तत्स्वरूपपरिज्ञानात्तु मोक्षः। तथा च श्रुतिः– 'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः। तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः' (श्वे.उ. १।११) इत्येवमाद्या।।५।।**

### प्रकटार्थविवरणम्

**पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ।** अविद्यामयत्वं किमिति? साङ्कल्पिकी सत्यैव स्वप्नसृष्टिरस्त्वित्याह— **अथापि स्यादिति।** उत्सूत्रमेव परिहरति— **अत्रोच्यत इति।** असर्वज्ञत्वानीश्वरत्वयोः प्रत्यक्षसिद्धत्वाज्जीवस्य न सङ्कल्पमात्रेण रथादिसृष्टिः सङ्घटीतीत्यर्थः। इदानीं सूत्रमवतारयति— **किं पुनर्जीवस्येति। ज्ञात्वा देवमिति।** परमात्मैवाहमस्मीति साक्षादनुभूय सर्वपाशानामविद्यारागादिसंबन्धानामपहानिः परिक्षयो भवति। परिक्षीणेषु च तेष्वविद्यादिक्लेशेषु तत्कार्यजन्ममृत्युप्रबन्धध्वंस इति निर्गुणविद्याफलम्। सगुणोपासनफलमाह— तस्यैव परमेश्वरस्य अभिध्यानात् विराट्सूत्रापेक्षया तृतीयं विश्वैश्वर्यं देहपाते

### भाष्यभावप्रकाशिका

ननु जीवसंकल्पस्यैव निमित्तत्वोपपत्तेर्निमित्ताऽभावो ऽसिद्ध इत्याशङ्क्य परिहरति— **अथापि स्यादित्यादिना।** तर्हि विपरीतधर्मत्वादेव तयोरैक्यं न स्यादित्यभिप्रायेण शङ्कते— **किं पुनरिति।** कदाचिदप्यनुपलभ्यमानस्य कथं सत्त्वमित्यत आह— **तत्पुनरिति।** बन्धमोक्षयोरान्तरालिकं तृतीयं मन्त्रोक्तपाशहानिजन्मादिप्रहाणलक्षणसिद्धिद्वयापेक्षया तृतीयमणिमाद्यैश्वर्यम्, देहभेदे

### न्यायनिर्णयः

यदुक्तं स्वप्नो योग्यनिमित्ताभावान्मिथ्येति, तत्र, जीवसंकल्पस्यैव निमित्तत्वसिद्धेरित्याशङ्क्याह— **परेति।** सूत्रव्यावर्त्यमाह— **अथापीति।** पूर्वोक्तरीत्या मिथ्यात्वे स्वप्नस्योक्तेऽपीत्यर्थः। जीवेश्वरयोरंशांशित्वेऽपि किं स्यात्, तत्राह— **तत्रेति।** तस्मिञ्जीवे परस्यांशे श्रुतिस्मृतिसिद्धे सतीति यावत्। ज्ञानैश्वर्यशक्तिसाम्ये फलितमाह— **ततश्चेति।** नाविद्यामयी स्वप्नसृष्टिः, किंतु सांकल्पिकी सत्येति चोद्यमनूद्योत्सूत्रं परिहरति— **अत्रेति।** असर्वज्ञत्वानीश्वरत्वयोरध्यक्षत्वान्न जीवस्य संकल्पादेव रथादिसृष्टिरित्यर्थः। तर्हि विरुद्धत्वादेव न तयोरैक्यमिति शङ्कते— **किमिति।** प्रातीतिके विरोधेऽपि वस्तुतस्तदभावादैक्यमित्याह— **न नेति।** किमिति तर्हि जीवे सर्वज्ञत्वादि न भातीत्याशङ्क्य सूत्रं योजयति— **विद्यमानमिति।** अविद्यादीत्यादिपदं तत्कार्यार्थम्। यन्न कदाचिदुपलभ्यते तस्य सत्यत्वमेव कथम्, तत्राह— **तदिति।** आदरदीर्घकालनैरन्तर्यत्रयवत्त्वं ध्यानस्य सूचयति— **यतमानस्येति।** ध्यानकार्यमीश्वर-प्रसादप्रतिबन्धकपापध्वंसं दर्शयति— **विधूतेति।** किमिति तर्हि सर्वेषामीश्वरध्यायिनां तन्नाविर्भवति, तत्राह— **संसिद्धस्येति।** अणिमादिविशिष्टस्येति यावत्। ततः स्वतो व्यक्तौ हेतुं पृच्छति— **कुत इति।** सूत्रपदेनोत्तरम्— **ततो हीति।** कथमीश्वरस्य विरुद्धफलहेतुतेत्याशङ्क्य विभजते— **ईश्वरेति।** तत्र मानमाह— **तथा चेति।** परमात्मैवाहमिति साक्षादनुभूय सर्वपाशानाम-विद्यारागादिबन्धनानामपहानिरपक्षयो भवति। क्षीणैश्च क्लेशैस्तत्कार्यजन्ममृत्युध्वंस इति निर्गुणविद्याफलमुक्तम्। सगुणविद्याफलमाह— **तस्येति।** परस्याभिमुख्येन ध्यानाद् बन्धमोक्षापेक्षया वा मन्त्रोक्तपाशहानिजन्मादिप्रहाणसिद्धिद्वयापेक्षया वा तृतीयम्। अणिमाद्यैश्वर्यं

## देहयोगाद्वा सोऽपि।।६।।

**कस्मात्पुनर्जीवः परमात्मांश एव संस्तिरस्कृतज्ञानैश्वर्यो भवति? युक्तं तु ज्ञानैश्वर्ययोरतिरस्कृतत्वं विस्फुलिङ्गस्येव दहनप्रकाशनयोरिति। उच्यते– [१]सत्यमेवैतत्; सोऽपि तु जीवस्य ज्ञानैश्वर्यतिरोभावो देहयोगाद् देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद् भवति। अस्ति चात्रोपमा यथाऽग्नेर्दहनप्रकाशनसंपन्नस्याप्यरणिगतस्य दहनप्रकाशने तिरोहिते भवतः, यथा वा भस्मच्छन्नस्य। एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात् तदविवेकभ्रमकृतो जीवस्य ज्ञानैश्वर्यतिरोभावः। वाशब्दो जीवेश्वरयोरन्यत्वाशङ्काव्यावृत्त्यर्थः। नन्वन्य एव जीव ईश्वरादस्तु तिरस्कृतज्ञानैश्वर्यत्वात्; किं देहयोगकल्पनया? नेत्युच्यते। न ह्यन्यत्वं जीवस्येश्वरादुपपद्यते, 'सेयं देवतैक्षत' (छा.उ. ६।३।२) इत्युपक्रम्य 'अनेन जीवेनात्मनाऽनुप्रविश्य' (छा.उ. ६।३।२) इत्यात्मशब्देन जीवस्य परामर्शात्। 'तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छा.उ. ६।८।७) इति च**

***प्रकटार्थविवरणम्***

जगत्कारणसायुज्यापत्त्या भवतीत्यर्थः। भोगांश्च भुक्त्वा निर्गुणविद्योदये केवलाद्वितीय [केवलोऽद्वितीयः] आप्तकामः परमानन्दात्मनैवावतिष्ठत इति क्रममुक्तिफलमित्यर्थः।

**देहयोगाद्वा सोऽपि**। जीवस्य स्वत एवानाविर्भूतज्ञानैश्वर्यात् सङ्कल्पमात्रेण स्रष्टृत्वं न संभवतीत्युक्तम्, तत्राशयानभिज्ञो हेत्वसिद्धिमाशङ्कते— **कस्मात्पुनरिति**। यो यस्यांशः स तद्गुणशालीति दृष्ट इत्येतत् सत्यम्; इह तु जीवस्येश्वरांशत्वमेव न साक्षादस्तीत्यभिप्रेत्याह— **सत्यमेवमेतदिति**। ननु मा भूदंशांशिभावः, तथापि चित्स्वरूपाविशेषे कथं क्वचिदैश्वर्याद्यभिव्यक्तिः, क्वचिच्च नास्तीत्याशङ्क्योपाधिगतमेव विशेषमाह— **सोऽपि तु जीवस्येति**। उपाधिकृतविशेषसद्भावे दृष्टान्तमाह— **अस्ति चात्रोपमेति**। वाशब्देन निरस्याशङ्कामुद्भाव्य निरस्यति— **नन्वन्य एवेत्यादिना**।

***भाष्यभावप्रकाशिका***

सिद्धभेद[सिद्धदेहे] अथवा साधकशरीरपाते सतीत्यर्थः।

तस्मादित्याक्षेपः। तमेवाक्षेपं प्रपञ्चयति— **युक्तन्त्विति**। पारमार्थिकस्य प्रतिबन्धस्याभावः साध्यते, किं वाऽविद्यात्मकस्यापीति विकल्प्याद्यपक्षमङ्गीकरोति— **सत्यमिति**। द्वितीयपक्षस्त्वनुपपन्न इत्याह— **सोऽपि जीवस्येति**। सूत्रगतदेहशब्देन स्थूलं सूक्ष्मं च शरीरं गृह्यत इत्यङ्गीकृत्य व्याचष्टे— **देहेन्द्रियेत्यादिना**। तद्धर्मकस्यैवान्यसंपर्कात्तत्तिरस्कारे दृष्टान्तमाह— **अस्ति चेति**। अन्यत्वाशङ्कां तद्व्यावृत्तिप्रकारं च दर्शयति— **नन्वित्यादिना**।

***न्यायनिर्णयः***

देहभेदे देहविशेषे सिद्धदेहे साधकदेहपाते वा सति जगत्कारणसायुज्यापत्त्या भवति। ततश्च विश्वैश्वर्यं निरतिशयैश्वर्यं भुक्त्वा निर्गुणविद्योदये केवलोऽद्वितीयः सन्नाप्तकामो निरतिशयानन्दात्मनैव तिष्ठतीति क्रममुक्तिरित्यर्थः।।५।।

जीवस्य स्वत एवानाविर्भूतज्ञानैश्वर्यतया संकल्पमात्रात् न स्रष्टृतेत्युक्तम्, तत्र हेत्वसिद्धिमाशङ्क्याह— **देहयोगाद्वा सोऽपीति**। सूत्रव्यावर्त्यमाह— **कस्मादिति**। आक्षेपं विवृणोति— **युक्तं त्विति**। पारमार्थिकस्य प्रतिबन्धस्याभावः साध्यते, प्रातिभासिकस्य वेति विकल्पयति— **उच्यत इति**। आद्यमङ्गीकरोति— **सत्यमिति**। द्वितीयं दूषयति— **सोऽपीति**। सूत्रे देहशब्देन स्थूलं सूक्ष्मं च देहं गृहीत्वा व्याचष्टे— **देहेति**। वेदनाशब्देन सुखादयो गृह्यन्ते। आदिशब्देन तद्धेतुरविद्या। तद्धर्मकस्यैवान्यसंपर्कतिरस्कारे दृष्टान्तमाह— **अस्तीति**। अरणिस्थोऽग्निरस्तीत्येतदेव संदिग्धमित्याशङ्क्याह— **यथा वेति**। दार्ष्टान्तिकमाह— **एवमिति**। सूत्रे वाशब्दस्य पक्षान्तरद्योतित्वमाशङ्क्याह— **वाशब्द इति**। तत्रान्यत्वाशङ्कां दर्शयति— **नन्विति**। तद्व्यावृत्तिं विशदयति— **नेतीति**। इतश्च न वास्तवमन्यत्वमित्याह— **तदिति**।

१. 'सत्यमेवमेतत्' इति पा.।

**जीवायोपदिशतीश्वरात्मत्वम्। अतोऽनन्य एवेश्वराज्जीवः सन् देहयोगात् तिरोहितज्ञानैश्वर्यो भवति। अतश्च न सांकल्पिकी जीवस्य स्वप्ने रथादिसृष्टिर्घटते। यदि च सांकल्पिकी स्वप्ने रथादिसृष्टिः स्यान्नैवानिष्टं कश्चित् स्वप्नं पश्येत्। न हि कश्चिदनिष्टं संकल्पयते। यत्पुनरुक्तं जागरितदेशश्रुतिः स्वप्नस्य सत्यत्वं ख्यापयतीति; न तत्साम्यवचनं सत्यत्वाभिप्रायम्, स्वयंज्योतिष्ट्वविरोधात्। श्रुत्यैव च स्वप्ने रथाद्यभावस्य दर्शितत्वात्। जागरितप्रभववासनानिर्मितत्वात्तु स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत्। तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम्।।६।।**

।।इति प्रथमं संन्ध्याधिकरणम्।।

२।।तदभावाधिकरणम्।।सू. ७-८।।

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च।।७।।

**स्वप्नावस्था परीक्षिता; सुषुप्तावस्थेदानीं परीक्ष्यते। तत्रैताः सुषुप्तिविषयाः श्रुतयो भवन्ति। क्वचिच्छ्रूयते–**

### *शारीरकन्यायसंग्रहः*

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च।।७।। अतः प्रबोधोऽस्मात्।।८।।** नाडीपुरीतद्ब्रह्मसु प्रत्येकमधिकरणसप्तमीश्रवणात् उपाधिविशिष्टजीवाधारत्वसंभवाच्च प्रत्येकमधिकरणत्वे प्राप्ते विकल्पपक्षे च अन्यतमबाधप्रसङ्गात् सति संभवे नैरपेक्ष्यधर्ममेव बाधित्वा समुच्चयोपादानमेव युक्तमिति न्यायेन च नाडीपुरीततोरधिकरणसप्तमीबाधप्रसङ्गात् असंभवे प्राप्ते नाडीपुरीतद्ब्रह्मणां समुदायविषयैः श्रौतैर्लिङ्गैः नाडीपुरीतत्सप्तम्योः सामीप्यमर्थमुपादाय ब्रह्मण्यधिकरणसप्तमीपरिग्रहेण च नाडीपुरीतत्समीपवर्ति ब्रह्म सुप्तिस्थानं दर्शितम्।

### *प्रकटार्थविवरणम्*

साङ्कल्पिकत्वे दोषान्तरमाह— **यदि चेति**। पुनः परोक्तमुत्थाप्य गतिमाह— **यत्पुनरुक्तमित्यादिना**। सत्यत्वं चेद् विवक्षितं तदा स्वयंप्रकाशमानत्वे तात्पर्याभावात् न तत्सिध्येत्; जाग्रद्वच्च आदित्यादिज्योतिस्सद्भावात् पराधीनप्रकाशत्वप्रसङ्गे मनआदिद्रष्टृत्वं स्वत इत्येतद् विरुध्यते; अतो जाग्रत्सदृशभ्रमोदयात् साम्यवचनमित्यर्थः।। इति प्रथमं संध्याधिकरणम्।।

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च**।। अधिकरणसङ्गतिमाह— **स्वप्नावस्थेति**। विषयवाक्यानि पठति— **तत्रैता इति**।

### *भाष्यभावप्रकाशिका*

फलितमाह— **अतश्चेति**। स्वय.....ति। तत्रापि जागरितवद्विषयेन्द्रियसद्भावे दुर्विवेचनतया प्रतिपाद्यं स्वयंप्रकाशत्वन्न सिद्धेरि[सिध्येदि]त्यर्थः। इति प्रथमं संध्याधिकरणम्।।

### *न्यायनिर्णयः*

अनन्यत्वे फलितमाह— **अत इति**। जीवस्य ज्ञानादितिरोभावेऽपि किं स्यात्; तत्राह— **अतश्चेति**। सांकल्पिकत्वे दोषान्तरमाह— **यदि चेति**। तत्र हेतुः— **न हीति**। परोक्तमनूद्य निरस्यति— **यदिति**। स्वप्नेऽपि जागरवदर्थेन्द्रियसत्त्वे दुर्विवेचनतया साध्यं स्वयंज्योतिष्ट्वं न सिध्येदित्याह— **स्वयमिति**। इतश्च न स्वप्नस्य सत्यत्वार्थमेव तद्वाक्यमित्याह— **श्रुत्येति**। तर्हि केनाभिप्रायेणेदं साम्यमुक्तं, तत्राह— **जागरितेति**। स्वप्नस्य जागरितेन तुल्यनिर्भासत्वाभिप्रायं साम्यवचनमिति शेषः। स्वप्नस्य सत्यत्वसाधकाभावे मिथ्यात्वसाधके च फलितमुपसंहरति— **तस्मादिति**।।६।। इति प्रथमं संध्याधिकरणम्।।

बाह्यकरणोपरमं स्वप्नमात्मनः स्वयंज्योतिष्ट्वार्थं निरूप्यान्तःकरणोपरमं सुषुप्तं तस्य ब्रह्मत्वाय निरूपयति— **तदभाव इति**। अधिकरणसंगतिमाह— **स्वप्नेति**। स्वप्नाभावस्य प्रतियोगिस्वप्नाधीननिरूपणत्वाद्धेतुहेतुमत्तेत्यर्थः। विषयवाक्यान्युदाहरति— **तत्रेति**। सुषुप्तिचिन्ताप्रस्तावः सप्तम्यर्थः। तत् तत्र तास्ववस्थासु मध्ये सुषुप्तिरुच्यते। यस्यामवस्थायामेतत् स्वपनं यथा स्यात्

**'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति' (छा.उ. ८।६।३) इति। अन्यत्र तु नाडीरेवानुक्रम्य श्रूयते– 'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ.उ. २।१।१९) इति। तथाऽन्यत्र नाडीरेवानुक्रम्य 'तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन् प्राण एवैकधा भवति' (कौ.उ. ४।१९) इति। तथाऽन्यत्र 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' (बृ.उ. २।१।१७) इति। तथाऽन्यत्र 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' (छा.उ. ६।८।१) इति। तथा– 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' (बृ.उ. ४।३।२१) इति च। तत्र संशयः– किमेतानि नाड्यादीनि परस्परनिरपेक्षाणि भिन्नानि सुषुप्तिस्थानान्याहोस्वित् परस्परापेक्षयैकं सुषुप्तिस्थानमिति। किं तावत् प्राप्तम्? भिन्नानीति। कुतः? एकार्थत्वात्। न ह्येकार्थानां क्वचित् परस्परापेक्षत्वं दृश्यते व्रीहियवादीनाम्। नाड्यादीनां चैकार्थता सुषुप्तौ दृश्यते– 'नाडीषु सृप्तो भवति' (छा.उ. ८।६।३) 'पुरीतति शेते' (बृ.उ. २।१।१९) इति च तत्र तत्र सप्तमीनिर्देशस्य तुल्यत्वात्। ननु नैवं सति सप्तमीनिर्देशो दृश्यते– 'सता सोम्य तदा संपन्नो भवति' (छा.उ. ६।८।१) इति। नैष दोषः; तत्रापि सप्तम्यर्थस्य गम्यमानत्वात्। [१]वाक्यशेषो हि तत्रायतनैषी जीवः सदुपसर्पतीत्याह– 'अन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते' (छा.उ. ६।८।२) इति प्राणशब्देन तत्र प्रकृतस्य सत उपादानात्।**

### *प्रकटार्थविवरणम्*

समस्तः संहृतसकलकरण इत्यर्थः। सप्तमीनिर्देशात् समुच्चयवचनाच्च संशयमाह— **तत्र संशय इति**। पूर्वपक्षं विरचयति— **किं तावदिति**। यथा व्रीहिभिः पुरोडाशे निष्पादिते न यवाकाङ्क्षा, तथा नाडीपुरीतद्ब्रह्मणां जीवस्वापाधिकरणानामेकस्वापार्थत्वात् विकल्प एव युक्त इत्यर्थः। नाड्यादीनां निरपेक्षस्वापाधिकरणत्वमेव कुतः सिद्धमित्याशङ्क्याह— **नाड्यादीनां चेति**। सच्छब्दस्य तृतीयान्तत्वात् सप्तमीनिर्देशोऽसिद्ध इत्याह— **ननु नेति**। यद्यपि सप्तमी न श्रूयते, तथापि सप्तम्यर्थो गम्यत एवास्मात्, 'मृदि घटः', 'मृदात्मनाऽवस्थित' इत्युभयथा प्रयोगदर्शनादित्याह— **नैष दोष इति**। किं च वाक्यशेषे प्रकृतस्य सत आयतनत्वश्रवणात् पूर्वमप्यायतनत्वं विवक्षितमित्याह— **वाक्यशेषेऽपीति**। स्थानद्वयोत्थश्रमापनयायायतनैषी शरणप्रेप्सुरित्यर्थः। प्राणादन्यत्रान्यदायतनं श्रमापनयनस्थानमलब्ध्वा प्राणमेवोपश्रयत इत्येतावद् गम्यते, न तु सदुपगच्छतीति; तत्राह— **प्राणशब्देनेति**। ततः किमित्यत

### *न्यायनिर्णयः*

तथा सुप्तः। समस्तः संवृतसर्वबाह्येन्द्रियः। संप्रसन्नः संवृतान्तःकरणश्चेत्यर्थः। नाडीपुरीततोः समुच्चयवाक्यं पठति— **अन्यत्रेति**। नाडीपरमात्मनोः समुच्चयवाक्यं दर्शयति— **तथेति**। परमात्ममात्रविषयाणि वाक्यान्तराण्याह— **तथेति**। नाडीपुरीतद्ब्रह्मसु सप्तमीश्रुतेः समुच्चयोक्तेश्च संशयमाह— **तत्रेति**। अत्र स्वापनिरूपणद्वारा [२]ब्रह्माभिन्नत्वमर्थसिद्धेर्वाक्यार्थधीसंभवात् पादादिसंगतिः। पूर्वपक्षे स्थानविकल्पाज्जीवस्य ब्रह्मैक्यानियमः। सिद्धान्ते नाडीपुरीतद्द्वारा ब्रह्मस्थानत्वनियमाज्जीवस्य ब्रह्मात्मत्वनियतिरित्यभिसंधाय विमृश्य पूर्वपक्षयति— **किमिति**। नाडीपुरीतद्ब्रह्मणां विकल्पे प्रश्नपूर्वकं हेतुमाह— **कुत इति**। एकार्थत्वेऽपि समुच्चये का क्षतिः, तत्राह— **न हीति**। एकार्थत्वमेव नाड्यादिषु कथम्, तत्राह— **नाड्यादीनां चेति**। एकार्थता निरपेक्षस्वापाधारतेति यावत्। 'अस्मिन् प्राण एवैकधा भवती'त्यपि वाक्ये सप्तम्या चेदाधारत्वं तर्हि सतस्तृतीयोक्तेर्नाधारतेति शङ्कते— **नन्विति**। सप्तम्यभावेऽपि तदर्थसिद्धेराधारत्वं सतोऽपि स्यादित्याह— **नैष इति**। **तत्रापि** [३]सत्यपि नाड्यादाविवेत्यर्थः। तस्य गम्यमानत्वमेव दर्शयति— **वाक्येति**। **तत्र** 'सता सोम्ये'त्यादाविति यावत्। प्राणस्यायतनत्वेऽपि किं सतः स्यात्, तत्राह— **प्राणेति**। तथापि कथं

---

१. 'वाक्यशेषे हि' इति पा.। २. ब्रह्माभिन्नो यस्त्वमर्थः तस्य सिद्धेरित्यर्थः। ३. सति = ब्रह्मणि। अपिशब्दो नाड्यादिदृष्टान्तार्थः। तदाह— नाड्यादाविवेति।

**आयतनं च सप्तम्यर्थः। सप्तमीनिर्देशोऽपि तत्र वाक्यशेषे दृश्यते– 'सति संपद्य न विदुः सति संपद्यामहे' (छा.उ. ६।९।२) इति। सर्वत्र च विशेषविज्ञानोपरमलक्षणं सुषुप्तं न विशिष्यते। तस्मादेकार्थत्वान्नाड्यादीनां विकल्पेन कदाचित् किंचित् स्थानं स्वापायोपसर्पतीति।**

**एवं प्राप्ते प्रतिपाद्यते– तदभावो नाडीष्वात्मनि चेति। तदभाव इति तस्य प्रकृतस्य स्वप्नदर्शनस्याभावः, सुषुप्तमित्यर्थः। नाडीष्वात्मनि चेति समुच्चयेनैतानि नाड्यादीनि स्वापायोपैति, न विकल्पेनेत्यर्थः। कुतः? तच्छ्रुतेः। तथा हि– सर्वेषामेव नाड्यादीनां तत्र तत्र सुषुप्तिस्थानत्वं श्रूयते। तच्च समुच्चये संगृहीतं भवति। विकल्पे ह्येषां पक्षे बाधः स्यात्। नन्वेकार्थत्वाद् विकल्पो नाड्यादीनां व्रीहियवादिवदित्युक्तम्। नेत्युच्यते।**

### *प्रकटार्थविवरणम्*

आह— **आयतनं चेति**। पूर्वं सति सप्तमीनिर्देशाभावमङ्गीकृत्य तदर्थो गम्यत इत्युक्तम्। इदानीं सप्तम्यपि श्रूयत इत्याह— **सप्तमीनिर्देशोऽपि चेति**। ननु तथापि नाड्यादिषु सुषुप्तेरेवासंभवात् न विकल्प इत्याशङ्क्याह— **सर्वत्र चेति**।

समुच्चयपक्षं सिद्धान्तमाह— **एवं प्राप्त इत्यादिना**। यदा नाड्यः सुषुप्तिस्थानं तदा पुरीतन्न भवतीति पक्षे बाधः स्यात्; स च न युक्तः, बाधस्यागतिकगतित्वात् इत्याह— **विकल्पे तेषामिति**। विकल्पहेतुं परोक्तमनुवदति— **नन्वेकार्थत्वादिति**। दृष्टान्तदार्ष्टान्तिकयोर्वैलक्षण्येन दूषयति— **नेत्युच्यत इति**। प्रकृतक्रतुसाधनीभूतपुरोडाशद्रव्यप्रकृतितया व्रीहियवौ श्रुतौ, समर्थौ च

### *भाष्यभावप्रकाशिका*

**तदभावो नाडीष्विति**। नन्वायतनमेवावगम्यते, न सप्तम्यर्थ इत्यत आह— **आयतनं चेति**। अङ्गीकृत्यैतदुक्तम्, साक्षान्निर्देशाद्यस्तीत्याह— **सप्तमीनिर्देशोऽपीति**। ननु विशेषज्ञानोपशमलक्षणस्य सुषुप्तस्य नाडीपुरीततोरनुपपत्तेस्तयोः सुषुप्ति-स्थानत्वमनुपपन्नमित्याशङ्क्य शास्त्रप्रामाण्यात् सर्वमुपपद्यत इत्याह— **सर्वत्रेति**। न च जीवाधारत्वं नाडीपुरीततोरनुपपन्नमिति शङ्कनीयम्। तयोरपि मनउपाधिकजीवाधारत्वसंभवात्। न च विकल्पोऽपि वक्ष्ये[विकल्पेऽपि पक्षेऽ]न्यतमपदार्थबाधप्रसङ्गात् समुच्चयो युक्त इति शङ्कनीयम्। समुच्चयोपादाने प्रत्येकमधिकरणसप्तमीश्रवणाधिकरणनिरपेक्षाधिकरणत्वस्यात्यन्तबाधप्रसङ्गादन्यत्रापि नाडीपुरीतद्ब्रह्मणां समुच्चयः श्रूयते— ताभिः प्रत्यवसृप्य पुरीतति शेत इत्यादौ कदाचिन्नाड्य एवाधारः कदाचित्ताभिस्सञ्चरमाणस्य पुरीतदेव कदाचित्तु नाडिभिरेव सञ्चरमाणस्य ब्रह्मैवाधार इति द्रष्टव्यम्। अन्यथा निरपेक्षाधारत्वश्रुतिविरोधादित्यभिप्रेत्योपसंहरति— **तस्मादेकार्थत्वादिति**।

### *न्यायनिर्णयः*

सप्तम्यर्थस्य गम्यमानत्वं, तत्राह— **आयतनं चेति**। सति सप्तमीनिर्देशस्यासत्त्वमुपेत्योक्तम्; तदपि नास्तीत्याह— **सप्तमीति**। विशेषज्ञानोपरमलक्षणस्वापस्य नाडीपुरीततोरयोगात् तयोर्न सुप्तिस्थानतेत्याशङ्क्य शास्त्रप्रामाण्यमाश्रित्याह— **सर्वत्रेति**। न च जीवाधारत्वं नाड्यादेरयुक्तम्, बुद्ध्युपाधिकजीवाधारत्वाविरोधात्। न च विकल्पेऽन्यतरबाधाद् युक्तः समुच्चयः, तत्रापि प्रत्येकं सप्तमीश्रुतिसिद्धनिरपेक्षाधारत्वस्यात्यन्तबाधात्। 'ताभिः प्रत्यवसृप्ये'त्यादौ तु कदाचिन्नाड्य एव, कदाचित् ताभिः संचरमाणस्य पुरीतदेव, कदाचित् ताभिरेव संचरतो ब्रह्मैवाधार इति युक्तम्, अन्यथा निरपेक्षाधारत्वश्रुतिविरोधादिति मत्वोपसंहरति— **तस्मादिति**। विकल्पे जीवस्य ब्रह्मैक्यमनियतमिति फलितं वक्तुमि**तिशब्दः**।

पूर्वपक्षमनूद्य सिद्धान्तमाह— **एवमिति**। प्रतिज्ञां विभजते— **तदित्यादिना**। चकारेण पुरीतदुक्तिं गृहीत्वाऽऽह— **समुच्चयेनेति**। समुच्चये सिद्धान्ते प्रश्नपूर्वकं हेतुमुक्त्वा व्याचष्टे— **कुत इत्यादिना**। नाड्यादीनां सुप्तिस्थानत्वश्रुतिर्विकल्पेऽपि स्यादित्याशङ्क्याह— **विकल्पे हीति**। तेषामन्यतमस्य सुप्तिस्थानत्वे नान्यतमस्य तदिति पक्षे बाधः। स चायुक्तो बाधस्यागतिकगतित्वादित्यर्थः। परोक्तं विकल्पहेतुमनुवदति— **नन्विति**। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाह— **नेतीति**। प्रकृतदर्शादिसाधनीभूतपुरोडाशप्रकृतितया व्रीहियवौ

**न ह्येकविभक्तिनिर्देशमात्रेणैकार्थत्वं विकल्पश्चापतति। नानार्थत्वसमुच्चययोरप्येकविभक्तिनिर्देशदर्शनात्– प्रासादे शेते पर्यङ्के शेत इत्येवमादिषु। तथेहापि नाडीषु पुरीतति ब्रह्मणि च स्वपितीत्येतदुपपद्यते समुच्चयः। तथा च श्रुतिः– 'तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन् प्राण एवैकधा भवति' (कौ.उ. ४।१९) इति समुच्चयं नाडीनां प्राणस्य च सुषुप्तौ श्रावयत्येकवाक्योपादानात्। प्राणस्य च ब्रह्मत्वं समधिगतम्– 'प्राणस्तथाऽनुगमात्' (ब्र.सू. १।१।२८) इत्यत्र। यत्रापि निरपेक्षा इव नाडीः सुप्तिस्थानत्वेन श्रावयति– 'आसु तदा नाडीषु सृप्तो भवति' (छा.उ. ८।६।३) इति; तत्रापि प्रदेशान्तरप्रसिद्धस्य ब्रह्मणोऽप्रतिषेधान्नाडीद्वारेण ब्रह्मण्येवावतिष्ठत इति प्रतीयते। न चैवमपि नाडीषु सप्तमी विरुध्यते; [१]नाडीभिरपि ब्रह्मोपसर्पन् सृप्त एव नाडीषु भवति। यो हि गङ्गया सागरं गच्छति, गत एव स गङ्गायां भवति। अपि चात्र रश्मिनाडीद्वारात्मकस्य ब्रह्मलोकमार्गस्य विवक्षितत्वान्नाडीस्तुत्यर्थं सृप्तिसंकीर्तनम्। 'नाडीषु सृप्तो**

### *प्रकटार्थविवरणम्*

निरपेक्षतया तत् साधयितुम्; तयोः परस्परापेक्षायां निरपेक्षतया साधनत्वसमर्पकश्रुतिद्वयबाधः स्यादित्यनन्यगतित्वेन विकल्पाश्रयणम्; नाड्यादीनां तु न प्रत्येकं सुषुप्तिसाधने सामर्थ्यमिति वक्ष्यति; नापि प्रमाणमिति भावः। यश्च हेतुः सप्तमीनिर्देशस्य तुल्यत्वादिति, सोऽनैकान्तिक इत्याह— **न ह्येकविभक्तीति**। प्रासादस्य पर्यङ्कधारणार्थत्वम्, पर्यङ्कस्य च शयनार्थत्वमिति नानार्थत्वेऽप्येकविभक्तिनिर्देशः; व्यवधानाव्यवधानाभ्यां च शयनसाधनत्वात् समुच्चय इत्यर्थः। पूर्वमनेकश्रुतिसामर्थ्यपर्यालोचनया समुच्चयमूचे; अधुना श्रुतिमाह— **तथा च श्रुतिरिति**। ननु समुच्चये श्रुत्यन्तरं नैरपेक्ष्यद्योतकं निरुध्येतेत्याशङ्क्याह— **यत्रापि निरपेक्षा इति**। ननु नाडीनां द्वारत्वे अधिकरणश्रुतिविरोध इत्याशङ्क्याह— **न चैवमपीति**। इतश्च निरपेक्षतया नाडीनां सुषुप्तिस्थानत्वमिह न विवक्षितमित्याह— **अपि चात्रेति**।

### *भाष्यभावप्रकाशिका*

किं प्रमाणान्तरेणैकार्थत्वमधिगतम्, अथवा सप्तमीविभक्त्या? न तावदाद्यः, प्रमाणान्तरादुपलम्भात्। अथोत्तरः कल्पः, तत्राह— **न ह्येकविभक्तीति**। क्वचिन्निरपेक्षस्थानत्वावगमात् विकल्प इत्याशङ्क्याह— **यत्रापीति**। सप्तमीविभक्तेरत्यन्तबाधस्तर्हि प्रसज्यत इत्याशङ्क्य नाडीपुरीतत्सप्तम्योस्सामीप्यार्थमुपादाय ब्रह्मण्यधिकरणसप्तमीपरिग्रहे न सप्तमीविभक्तिबाध इत्याह— **न चैवमपीति**। ननु यदि ब्रह्मैव सुषुप्ताधिकरणं तर्हि नाड्याद्युपन्यासोऽनर्थक इत्यत आह— **अपि चात्रेति**। मार्गोपदेशायाभिहितानां

### *न्यायनिर्णयः*

श्रुतौ, समर्थौ च निरपेक्षतया पुरोडाशं कर्तुम्; तयोर्मिथोऽपेक्षायामनपेक्षसाधनत्वार्थकश्रुतिबाधादनन्यगतित्वेन विकल्पाश्रयणम्। नाड्यादीनां तु न प्रत्येकं स्वापसाधने शक्तिरिति वक्ष्यते, नापि मानमिति भावः। यत्त्वेकार्थत्वं तत्किं मानान्तरसिद्धं किंवा सप्तमीसिद्धम्? नाद्यः। तदनुपलम्भात्। न द्वितीय इत्याह— **न हीति**। प्रासादस्य पर्यङ्कधारणार्थत्वं, पर्यङ्कस्य शयनार्थतेति नानार्थत्वेऽप्येकविभक्तिनिर्देशः। व्यवधानाव्यवधानाभ्यां च शयनसाधनत्वात् समुच्चयः। तद्वदमूषु श्रुतिष्वपि नाड्यादिषु सप्तमी समुच्चयश्चेत्याह— **तथेति**। अनेकश्रुतिसामर्थ्यालोचनया समुच्चयमुक्त्वा तत्रैव श्रुतिमाह— **तथा चेति**। उक्तश्रुतेस्तात्पर्यमाह— **समुच्चयमिति**। तत्र हेतुः— **एकेति**। नाडीनां प्राणस्य चैकेन वाक्येनोपादानान्मिथः समुच्चय इत्यर्थः। प्राणस्य नाडीसमुच्चयेऽपि ब्रह्मणस्ताभिः समुच्चये किं जातं, तत्राह— **प्राणस्येति**। समुच्चये श्रुत्यन्तरं नैरपेक्ष्यद्योति विरुध्येतेत्याशङ्क्याह— **यत्रेति**। नाडीनां द्वारत्वे कथमधिकरणश्रुतिः, तत्राह— **न चेति**। नाड्यादौ सप्तम्याः सामीप्यमर्थमादाय ब्रह्मण्यधिकरणार्थत्वेऽपि न तद्विरोधोऽस्तीत्यर्थः। विरोधाभावं साधयति— **नाडीभिरिति**। तदेव दृष्टान्तेन स्पष्टयति— **यो हीति**। इतश्च **ब्रह्मैवैकं** स्वापाधिकरणमित्याह— **अपि चेति**। तर्हि नाडीषु सुप्तिसंकीर्तनमनर्थकमित्याशङ्क्य हेत्वन्तरमेव स्फोरयति— **अत्रेति**। नाडीप्रकरणं

---

१. 'नाडीद्वाराऽपि' इति पा.।

**भवति' (छा.उ. ८।६।३) इत्युक्त्वा 'तं न कश्चन पाप्मा स्पृशति' (छा.उ. ८।६।३) इति ब्रुवन् नाडीः प्रशंसति। ब्रवीति च पाप्मस्पर्शाभावे हेतुम्– 'तेजसा हि तदा संपन्नो भवति' (छा.उ. ८।६।३) इति। तेजसा नाडीगतेन पित्ताख्येनाभिव्याप्तकरणो न बाह्यान् विषयानीक्षत इत्यर्थः। अथवा तेजसेति ब्रह्मण एवायं निर्देशः, श्रुत्यन्तरे– 'ब्रह्मैव तेज एव' (बृ.उ. ४।४।७) इति तेजःशब्दस्य ब्रह्मणि प्रयुक्तत्वात्। ब्रह्मणा हि तदा संपन्नो भवति नाडीद्वारेण, अतस्तं न कश्चन पाप्मा स्पृशतीत्यर्थः। ब्रह्मसंपत्तिश्च पाप्मस्पर्शाभावे हेतुः समधिगतः– 'सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः' (छा.उ. ८।४।१) इत्यादिश्रुतिभ्यः। एवं च सति प्रदेशान्तरप्रसिद्धेन ब्रह्मणा सुषुप्तिस्थानेनानुगतो नाडीनां समुच्चयः [1]समधिगतो भवति। तथा पुरीततोऽपि ब्रह्मप्रक्रियायां संकीर्तनात् तदनुगुणमेव सुप्तिस्थानत्वं विज्ञायते। 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' (बृ.उ. २।१।१७) इति हृदयाकाशे सुप्तिस्थाने प्रकृत इदमुच्यते 'पुरीतति शेते' (बृ.उ. २।१।१९) इति। पुरीतदिति हृदयपरिवेष्टनमुच्यते। तदन्तर्वर्तिन्यपि हृदयाकाशे शयानः शक्यते 'पुरीतति शेत' इति वक्तुम्। प्राकारपरिक्षिप्तेऽपि पुरे वर्तमानः प्राकारे वर्तत इत्युच्यते। हृदयाकाशस्य च ब्रह्मत्वं समधिगतम्– 'दहर उत्तरेभ्यः' (ब्र.सू. १।३।१४) इत्यत्र। तथा नाडीपुरीतत्समुच्चयोऽपि– 'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ.उ. २।१।१९) इत्येकवाक्योपादानादवगम्यते। सत्प्राज्ञयोश्च प्रसिद्धमेव ब्रह्मत्वम्। एवमेतासु**

### *प्रकटार्थविवरणम्*

विषयदर्शनासंभवात् तज्जनितसुखदुःखाभावात् तद्धेतुधर्माधर्माभावात् पापासंस्पर्शो दर्शितः; इदानीं प्रकारान्तरमाह— **अथ वेति**। ननु ब्रह्मसंपत्तिमात्रेण पापासंस्पर्शः कुतः सिद्ध इत्याशङ्क्याह— **ब्रह्मसंपत्तिश्चेति**। किंच द्वारत्वे श्रुत्यन्तराविरोधोऽपि भवतीत्याह— **एवं च सतीति**। एवं तावत् नाडीब्रह्मणोर्गुणप्रधानभावेन समुच्चयमुक्त्वा अधुना पुरीतद्ब्रह्मणोर्गुणप्रधानभावेन समुच्चयमाह— **तथा पुरीततोऽपीत्यादिना**। इदानीं नाडीपुरीततोरपि परस्परसमुच्चयमाह— **तथा नाडीपुरीतदिति**। ननु सत्प्राज्ञयोरपि सुषुप्तिस्थानत्वसङ्कीर्तनात् कथं त्रयाणामेव समुच्चयवर्णनमित्याशङ्क्याह— **सत्प्राज्ञयोश्चेति**। नाडीपुरीततोः द्वारत्वे हेत्वन्तरमाह—

### *भाष्यभावप्रकाशिका*

स्तुत्यर्थोऽयमुपन्यास इत्यर्थः। पित्तेनाभिव्याप्तकरणतया (विषया)विषयानीक्षणान्न तज्जन्यपाप्मभिः स्पृश्यत इति स्तुतिः। द्वितीयव्याख्यानमेव युक्ततरमित्याह— **एवं च सतीति**। नाडीब्रह्मणोःसमुच्चय उक्तः। इदानीं पुरीतद्ब्रह्मणोरपि समुच्चयमाह— **तथा पुरीततोऽपीति**। इदानीं नाडिपुरीततः परस्परं समुच्चयमाह— **[तथेति]**। अन्येषामपि सुषुप्तिस्थानत्वावगमान्न त्रयाणामेव समुच्चय इत्याशङ्क्याह—

### *न्यायनिर्णयः*

सप्तम्यर्थः। मार्गोपदेशायोक्तानां नाडीनां स्तुत्यर्थं सुप्तिकीर्तनमित्यत्र गमकमाह— **नाडीष्विति**। तासु सुप्तस्य पाप्मास्पर्शे को हेतुः, तत्राह— **ब्रवीतीति**। हेतुं विभजते— **तेजसेति**। विषयदर्शनाभावे तदुत्थसुखाद्यभावात् तद्धेतुधर्माद्यनुमानायोगात् पाप्मभिरस्पर्श इति शेषः। हेतुवाक्यं विधान्तरेण व्याकरोति— **अथवेति**। ब्रह्मसंपत्तावपि कथं पापास्पर्शः, तत्राह— **ब्रह्मेति**। कतरद् व्याख्यानमादेयं, द्वितीयमित्याह— **एवं चेति**। नाडीनां ब्रह्मप्राप्तिद्वारत्वे सतीति यावत्। नाडीद्वारा ब्रह्मणः स्वापस्थानत्वे क्वचित् 'ताभिः प्रत्यवसृप्य पुरीतति शेत' इति पुरीतदुक्तिर्वृथेत्याशङ्क्य पुरीतद्ब्रह्मणोरपि गुणप्रधानत्वेन समुच्चयमाह— **तथेति**। उक्तमेव विवृणोति— **य इति**। आकाशे शेते चेत् पुरीतति कथं शेते, तत्राह— **तदिति**। तदेव दृष्टान्तेन स्पष्टयति— **प्राकारेति**। पुरीतदाकाशसमुच्चयेऽपि कथं पुरीतद्ब्रह्मणोः समुच्चयः, तत्राह— **हृदयेति**। नाडीब्रह्मणोरिव पुरीतद्ब्रह्मणोरपि समुच्चयमुक्त्वा नाडीपुरीततोः समुच्चयमाह— **तथेति**। सत्प्राज्ञयोरपि सुप्तिस्थानत्वोक्तेस्त्रयाणामेव कथं समुच्चयोक्तिरित्याशङ्क्याह— **सदिति**।

---

१. 'समाश्रितो' इति पा.।

**श्रुतिषु त्रीण्येव सुषुप्तिस्थानानि संकीर्तितानि– नाड्यः पुरीतद् ब्रह्म चेति। तत्रापि द्वारमात्रं नाड्यः पुरीतच्च। ब्रह्मैव त्वेकमनपायि सुषुप्तिस्थानम्। अपि च नाड्यः पुरीतद्वा जीवस्योपाध्याधार एव भवति, तत्रास्य करणानि वर्तन्त इति। न ह्युपाधिसंबन्धमन्तरेण स्वत एव जीवस्याधारः कश्चित् संभवति, ब्रह्माव्यतिरेकेण स्वमहिमप्रतिष्ठितत्वात्। ब्रह्माधारत्वमप्यस्य सुषुप्ते नैवाधाराधेयभेदाभिप्रायेणोच्यते। कथं तर्हि? तादात्म्याभिप्रायेण। यत आह– 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' (छा.उ. ६।८।१) इति। स्वशब्देनात्माऽभिलप्यते; स्वरूपमापन्नः सुप्तो भवतीत्यर्थः। अपि च न कदाचिज्जीवस्य ब्रह्मणा संपत्तिर्नास्ति स्वरूपस्यानपायित्वात्। स्वप्नजागरितयोस्तूपाधिसंपर्कवशात् पररूपापत्तिमिवापेक्ष्य तदुपशमात् सुषुप्ते स्वरूपापत्तिर्विवक्ष्यते। अतश्च सुप्तावस्थायां कदाचित् सता संपद्यते, कदाचिन्न संपद्यत इत्ययुक्तम्। अपि च स्थानविकल्पाभ्युपगमेऽपि विशेषविज्ञानोपशमलक्षणं तावत् सुषुप्तं न क्वचिद् विशिष्यते। तत्र सति संपन्नस्तावत् तदेकत्वान्न विजानातीति युक्तम्, 'तत्केन कं विजानीयात्' (बृ.उ. २।४।१४) इति श्रुतेः। नाडीषु पुरीतति च शयानस्य न किंचिदविज्ञाने कारणं शक्यं विज्ञातुं, भेदविषयत्वात्; 'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्' (बृ.उ.**

### *प्रकटार्थविवरणम्*

**अपि च नाड्य इति**। ननु नाडीपुरीततोः जीवाधारत्वासंभवान्न मुख्यं सुषुप्तिस्थानत्वं चेत् तर्हि ब्रह्मणोऽप्याधाराधेयभावायोगात् न मुख्यं सुषुप्तिस्थानत्वमित्याशङ्क्याह— **ब्रह्माधारत्वमिति**। विकल्पपक्षे जीवस्य ब्रह्मसंपत्तेः कादाचित्कत्वप्रसङ्गादपि विकल्पोऽनुपपन्न इत्याह— **अपि च न कदाचिदिति**। स्थानान्तरे सुषुप्तिरपि न संभवतीत्याह— **अपि च स्थानेति**। विकल्पवादिनाऽपि सुषुप्तं

### *भाष्यभावप्रकाशिका*

**सत्प्राज्ञयोश्चेति**। तत्र विभागमाह— **तत्रापीति**। जीवस्य साधारणत्वमङ्गीकृत्य एतदुक्तम्, तदेव तु नास्तीत्याह— **अपि च नाड्य इति**। जीवब्रह्मणोरेकत्वे कथमाधाराधेयभाव इति तत्राह— **ब्रह्माधारत्वमपीति**। अतो जीवस्य ब्रह्मात्मत्वमेव नाडीपुरीततो-स्तत्तदुपाध्याधारतया जीवाधारत्वव्यपदेश इत्यतुल्यार्थतया न विकल्प इति भावः। औत्सर्गिकत्वात् ब्रह्मरूपत्वस्यासति जाग्रत्स्वप्नाव-स्थालक्षणापवादे जीवस्य सुषुप्त्यवस्थायां तद्रूपता न निवारयितुं शक्येत्याह— **अपि चेति**। कथन्तर्हि सुषुप्तादौ स्वरूपापत्तिरिति, तदाह— **स्वप्नजागरितयोरिति**। परमात्मतादात्म्यमन्तरेण च विशेषज्ञानलयासंभवादपि तदभ्युगन्तव्यमित्याह— **अपि च स्थानेति**।

### *न्यायनिर्णयः*

समुच्चयपक्षमुपसंहरति— **एवमिति**। तेष्ववान्तरविभागमाह— **तत्रेति**। नाडीपुरीततोर्द्वारत्वे हेत्वन्तरमाह— **अपि चेति**। तयोरुपाध्याधारत्वमपि कथं, तत्राह— **तत्रेति**। नाडीषु पुरीतति च जीवस्योपाध्यन्तर्भूतानि करणानि कर्माणि तिष्ठन्तीत्युपाध्याधारत्वं तयोरुक्तम्। जीवस्य त्वाधारो ब्रह्मैवेत्यर्थः। किमिति तयोः साक्षादेव जीवाधारत्वं नेष्टं, तत्राह— **न हीति**। तर्हि ब्रह्मणोऽपि कुतो जीवाधारत्वमैक्यादित्याशङ्क्याह— **ब्रह्मेति**। तादात्म्याभिप्रायेण स्वापे जीवस्य ब्रह्माधारत्वोक्तिरित्यत्र लिङ्गमाह— **यत इति**। स्वशब्दस्य स्वकीयार्थत्वान्न तादात्म्यमत्र भातीत्याशङ्क्य पदार्थोक्त्या वाक्यार्थमाह— **स्वेति**। जीवस्य ब्रह्मैक्यमेव, नाडीपुरीततोस्तु तदुपाध्याधारतया तदाधारतेत्यतुल्यार्थत्वान्न विकल्पोऽस्तीत्युक्तम्। इदानीं विकल्पायोगे हेत्वन्तरमाह— **अपि चेति**। जीवस्य चेदौत्सर्गिकं ब्रह्मत्वं तर्हि किमिति स्वापे तस्य तद्रूपत्वमुच्यते, तत्राह— **स्वप्नेति**। सुषुप्तेरपवादाभावाज्जीवस्य ब्रह्मतादात्म्ये फलितमाह— **अतश्चेति**। इतश्च विकल्पासिद्धिरित्याह— **अपि चेति**। हेत्वन्तरमेव स्फोरयन् विकल्पवादिनोऽपि संमतमर्थमाह— **स्थानेति**। क्वचिदिति नाडीपुरीतद्ब्रह्मणामन्यतमोक्तिः। अन्यथा सुप्तिभङ्गो जागरादिवदिति भावः। स्वापस्यैवंरूपत्वेऽपि विकल्पे काऽनुपपत्तिः, तत्राह— **तत्रेति**। एकत्वमद्वैतावस्थत्वम्। सति संपन्नस्य विशेषज्ञानाभावे मानमाह— **तदिति**। अवशिष्टेऽपि स्थानद्वये यथोक्तं सुषुप्तं युक्तमेवेत्याशङ्क्याह— **नाडीष्विति**। नाड्यादिगोचरस्य पुंसो द्वैतावस्थत्वाद्विशेषाज्ञाने नास्ति हेतुरित्यर्थः। द्वैतावस्थस्य विशेषज्ञाननियमे मानमाह— **यत्रेति**। तस्यापि

**४।३।३१) इति श्रुतेः। ननु भेदविषयस्याप्यतिदूरादि कारणमविज्ञाने स्यात्। बाढमेवं स्याद् यदि जीवः स्वतः परिच्छिन्नोऽभ्युपगम्येत; यथा विष्णुमित्रः प्रवासी स्वगृहं न पश्यति। न तु जीवस्योपाधिव्यतिरेकेण परिच्छेदो विद्यते। उपाधिगतमेवातिदूरादि कारणमविज्ञान इति यद्युच्येत; तथाप्युपाधेरुपशान्तत्वात् सत्येव संपन्नो न विजानातीति युक्तम्। न च वयमिह तुल्यवन्नाड्यादिसमुच्चयं प्रतिपादयामः। न हि नाड्यः सुप्तिस्थानं [१]पुरीतच्चेत्यनेन विज्ञानेन किंचित् प्रयोजनमस्ति। न ह्येतद्विज्ञानप्रतिबद्धं किंचित् फलं श्रूयते। नाप्येतद्विज्ञानं फलवतः कस्यचिदङ्गमुपदिश्यते। ब्रह्म त्वनपायि सुप्तिस्थानमित्येतत् प्रतिपादयामः। तेन तु विज्ञानेन प्रयोजनमस्ति जीवस्य ब्रह्मात्मत्वावधारणं स्वप्नजागरितव्यवहारविमुक्तत्वावधारणं च। तस्मादात्मैव सुप्तिस्थानम्।।७।।**

## अतः प्रबोधोऽस्मात्।।८।।

### *प्रकटार्थविवरणम्*

न क्वचिद्विशिष्यत इति वक्तव्यम्; तच्च वक्तुं न पार्यत इत्यर्थः। यथा नभस्युत्पतितः पक्षी नोपलभ्यतेऽतिदूरत्वात्, यथा चान्धेन रूपमिन्द्रियप्रतिबन्धात्, एवं भेदावस्थस्यापि जीवस्य अतिदूरत्वाद्यविज्ञाने कारणं विद्यत इति स्थानान्तरेऽपि सुषुप्तिर्घटत इत्याह— **ननु भेदविषयस्यापीति**। तत्किं जीवस्यातिदूरत्वं स्वाभाविकं किं वौपाधिकम्? प्रथमं दूषयति— **बाढमेवं स्यादिति**। द्वितीयं दूषयति— **उपाधिगतमेवेति**। तस्मात् स्थानान्तरे सुषुप्त्यसंभवात् नाडीपुरीततोः द्वारत्वमेव; ब्रह्मैवैकं सुषुप्तिस्थानमिति स्थितम्। इदानीं संक्षेपतोऽधिकरणरहस्यमाह— **न च वयमिहेति**।

### *भाष्यभावप्रकाशिका*

भेदविषयत्वात् द्वैतावस्थत्वात्। शङ्कते— **ननु भेदविषयस्येति**। जीवस्य स्वतः परिच्छेदशून्यत्वादिति दूरादेरविज्ञानकारण इत्यर्थः(?)। (नाड्यादीनां सुषुप्तिस्थानत्वप्रतिपादने प्रयोजनाभावाच्च न समुच्चयो नापि विकल्प इत्याह— **न चेति**। भोजनादिवद् दृष्टफलवत्त्वाभावेऽपि यागादिवत्फलवत्त्वं स्यादित्यत्राह— **न च वयमिति**।) परिहरति— **बाढमिति**। उपाधीनामुपशमे कथं नाड्यादिसमुच्चय इति, तत्राह— **न च वयमिति**। (न) गुणप्रधानभावेन समुच्चय इत्यर्थः। नाड्यादीनां सुषुप्तिस्थानत्वप्रतिपादने प्रयोजनाभावाच्च न समुच्चयो नापि विकल्प इत्याह— **न चेति**। भोजनादिवद् दृष्टफलवत्त्वाभावेऽपि यागादिवत् फलतत्त्वं स्यादित्यत्राह— **न ह्येतदिति**। प्रयाजादिवदपि न फलवत्त्वमित्याह— **न ह्ये[नाप्ये]तदिति**। ब्रह्म त्वित्यनो[नेना]धिकरणस्यापि सप्रयोजनत्वं दर्शयति।

### *न्यायनिर्णयः*

विशेषाज्ञाने हेतुं शङ्कते— **नन्विति**। भिद्यत इति भेदो, भिद्यमानस्य[२] विषयस्यापीत्यर्थः। जीवस्यातिदूरत्वं स्वाभाविकमौपाधिकं वा? तत्राद्यं दूषयति— **बाढमिति**। स्वाभाविकमपि दूरत्वमज्ञाने हेतुरित्यत्र दृष्टान्तमाह— **यथेति**। अस्तु प्रस्तुतेऽपि तादृगतिदूरत्वमज्ञानहेतुः, नेत्याह— **न त्विति**। द्वितीयमनुवदति— **उपाधीति**। तर्हि विकल्पासिद्धिरित्याह— **तथापीति**। सुप्तिदशायामुपाधिपरिच्छेदाङ्गीकारे च कतिपयसंनिहितार्थज्ञानप्रसङ्गादशेषविशेषज्ञानशून्यतायै निरुपाधितया जीवस्य ब्रह्मरूपेणावस्थानमास्थेयमित्यर्थः। उपाधीनामुपशमे कथं नाड्यादिसमुच्चयोक्तिः, तत्राह— **न चेति**। इहेति स्वापस्थानमुक्तम्। गुणप्रधानत्वेन समुच्चयोक्तिरित्यर्थः। किंच नाड्यादीनां स्वापस्थानत्वोक्तेरफलत्वान्न समुच्चयो विकल्पो वेत्याह— **न हीति**। कथमस्याफलत्वमित्याशङ्क्य स्वातन्त्र्येण वा फलवदङ्गत्वेन वा फलवत्त्वमिति विकल्प्याद्यं प्रत्याह— **न हीति**। द्वितीयं दूषयति— **नापीति**। विकल्पसमुच्चययोरप्रतिपाद्यत्वे किमत्र प्रतिपाद्यं, तदाह— **ब्रह्म त्विति**। तद्विज्ञानेऽपि तुल्यमफलत्वमित्याशङ्क्याधिकरणत्वज्ञानस्य प्रयोजनमाह— **तेनेति**। ब्रह्म स्वापस्थानमिति ज्ञानस्य फलवत्त्वे फलितमाह— **तस्मादिति**।।७।।

---

१. 'पुरीतद्वा' पा.। २. 'विद्यमानस्य' पा.।

**यस्माच्चात्मैव सुप्तिस्थानमत एव च कारणान्नित्यवदेवास्मादात्मनः प्रबोधः स्वापाधिकारे शिष्यते– 'कुत एतदागात्' (बृ.उ. २।१।१६) इत्यस्य प्रश्नस्य प्रतिवचनावसरे 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः' (बृ.उ. २।१।२०) इत्यादिना, 'सत आगम्य न विदुः सत आगच्छामहे' (छा.उ. ६।१०।२) इति च। विकल्प्यमानेषु तु सुषुप्तिस्थानेषु कदाचिन्नाडीभ्यः प्रतिबुध्यते, कदाचित् पुरीततः, कदाचिदात्मन इत्यशासिष्यत्। तस्मादप्यात्मैव सुप्तिस्थानमिति।।८।।**

।।इति द्वितीयं तदभावाधिकरणम्।।

३।।कर्मानुस्मृतिशब्दविध्यधिकरणम्।।सू. ९।।

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः।।९।।

**तस्याः पुनः सत्संपत्तेः प्रतिबुध्यमानः किं य एव सत्संपन्नः स एव प्रतिबुध्यत उत स वाऽन्यो वेति चिन्त्यते। तत्र प्राप्तं तावदनियम इति। कुतः? यदा हि जलराशौ कश्चिज्जलबिन्दुः प्रक्षिप्यते, जलराशिरेव**

### *शारीरकन्यायसंग्रहः*

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः।।९।।** इह उपाधिभेदात् जीवभेदो देहान्तरेषु प्रसिद्धः। सुप्तस्यापि पूर्वोपाधिप्रविलयात्, उत्तरोपाध्युत्पत्तौ च उपाधिभेदात्, सुप्तादन्यस्य जीवस्य उत्थाने प्राप्ते कर्मानुस्मृतिशब्दविधिभिः प्रतिपन्नजीवैक्योपपादनायाज्ञानमेवानादिभूतं स्थूलसूक्ष्मतामापन्नं स्वकार्यान्तःकरणावच्छिन्नं सत् जीवोपाधिरित्युक्तम्।

### *प्रकटार्थविवरणम्*

**अतः प्रबोधोऽस्मात्**।। किंच सर्वत्र परमात्मन एव प्रबोधश्रवणादपि परमात्मैव सुषुप्तिस्थानमित्याह— **अतः प्रबोध इति**।।इति द्वितीयं तदभावाधिकरणम्।।

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः**।। पूर्वाधिकरणान्ते सतः प्रबोधो दर्शितः। तत्रैव विचारमारभते— **तस्याः पुनरिति**।

### *भाष्यभावप्रकाशिका*

ब्रह्मणः प्रबोधापादानत्वकथनादपि तदेव सुषुप्तिस्थानमित्याह— **यस्माच्चेति**।। इति द्वितीयं तदभावाधिकरणम्।।

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः**।। ननु जलबिन्दोःसावयवत्वादवयवप्रसर्पणद्वारेण एकत्वसंपन्नस्य तस्यैवोद्धरणं न

### *न्यायनिर्णयः*

ब्रह्मण एव प्रबोधापादानत्वोक्तेरपि तदेव सुप्तिस्थानमित्याह— **अत इति**। सूत्रं व्याचष्टे— **यस्मादिति**। विकल्पेऽपि तदपादानत्वोक्तिर्ब्रह्मणो घटिष्यते, नेत्याह— **विकल्प्यमानेष्विति**। न च नाडीपुरीततोरुत्थानापादानत्वं कदाचिदपि शिष्यते। ब्रह्मण एव तु तद्वचने फलितमुपसंहरति— **तस्मादपीति**। एवमात्मनो ब्रह्मात्मत्वं सिद्धमित्यधिकरणार्थमुपसंहर्तुमितीत्युक्तम्।।८।। इति द्वितीयं तदभावाधिकरणम्।।

अतः प्रबोधोऽस्मादिति स्वापानन्तरं ब्रह्मणः सकाशात् प्रबोधोक्तेस्तदात्मनैव सुप्तस्तिष्ठतीत्युक्तम्। इदानीं तस्मात् प्रबोधस्तदापत्तिं [न]गमयति, सुप्तादन्यस्य प्रबोधसंभवेन तस्य नाड्यादिस्थानत्वसंभवादित्याशङ्क्याह— **स एवेति**। स्वापस्थानाद् ब्रह्मणः प्रतिबुध्यमानं जीवमधिकृत्योपाधिनाशात् कर्मानुस्मृत्यादिदर्शनाच्च संशयमाह— **तस्या इति**। तस्यैवोत्थानोक्त्या स्वापातिरेकसाधनेन त्वमर्थशोधनात् तस्य ब्रह्मैक्ययोग्यतया वाक्यीयज्ञानोपयोगितेति पादादिसंगतिः। पूर्वपक्षे ज्ञानवैयर्थ्यं, सिद्धान्ते तस्यैवोत्थानादज्ञातब्रह्मात्मना सुप्तस्यावस्थानात् तदैक्यज्ञानादेव मुक्तेस्तदर्थवत्त्वनियतिरित्यभिप्रेत्य नियामकानुपलब्ध्या पूर्वपक्षयति— **तत्रेति**। नियमसंभवे नानियमो युक्तिमानिति शङ्कते— **कुत इति**। नियमायोगं दृष्टान्तेन साधयति— **यदेति**। जलबिन्दोः सावयवत्वादवयव-

**स तदा भवति, पुनरुद्धरणे च स एव जलबिन्दुर्भवतीति दुःसंपादम्। तद्वत् सुप्तः परेणैकत्वमापन्नः संप्रसीदतीति न स एव पुनरुत्थातुमर्हति। तस्मात् स एवेश्वरो वाऽन्यो वा जीवः प्रतिबुध्यत इति।**

**एवं प्राप्त इदमाह- स एव तु जीवः सुप्तः स्वास्थ्यं गतः पुनरुत्तिष्ठति, नान्यः। कस्मात्? कर्मानुस्मृतिशब्दविधिभ्यः। विभज्य हेतुं दर्शयिष्यामि। कर्मशेषानुष्ठानदर्शनात् तावत् स एवोत्थातुमर्हति, नान्यः। तथाहि- पूर्वेद्युरनुष्ठितस्य कर्मणोऽपरेद्युः शेषमनुतिष्ठन् दृश्यते। न चान्येन सामिकृतस्य कर्मणोऽन्यः शेषक्रियायां प्रवर्तितुमर्हति, अतिप्रसङ्गात्। तस्मादेक एव पूर्वेद्युरपरेद्युश्चैकस्य कर्मणः कर्तेति गम्यते। इतश्च स एवोत्तिष्ठति, यत्कारणमतीतेऽहन्यहमदोऽद्राक्षमिति पूर्वानुभूतस्य पश्चात् स्मरणमन्यस्योत्थाने नोपपद्यते। न ह्यन्यदृष्टमन्योऽनुस्मर्तुमर्हति। सोऽहमस्मीति चात्मानुस्मरणमात्मान्तरोत्थाने नावकल्पते। शब्देभ्यश्च तस्यैवोत्थानमवगम्यते। तथाहि- 'पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव' (बृ.उ. ४।३।१६) 'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' (छा.उ. ८।३।२) 'त इह व्याघ्रो वा सिंहो वा**

### *प्रकटार्थविवरणम्*

उपाधिविनाशात् कर्मानुस्मृत्यादिदर्शनाच्च संशय इत्यर्थः। नियामकानुपलम्भादनियम इति पूर्वः पक्षः।

सिद्धान्तसूत्रं योजयति— **स एव तु जीव इति**। सामिकृतस्य अर्धकृतस्य; कर्मपदं व्याख्यायानुस्मृतिपदं व्याचष्टे— **इतश्चेति**। शब्दशब्दार्थमाह— **शब्देभ्यश्चेति**। अयमाशयः— प्रतिनियतं गमनं प्रतिन्यायः, स यथा भवति तथा योनिं प्रति

### *भाष्यभावप्रकाशिका*

संभवति। इह तु जीवस्य सोपाधिकरणत्वादुपाधेश्च यावत्संसारिभावित्वादुद्धारसंभव इत्याशङ्क्य उपाधिविलयाभावे सत्संपत्त्यनुपपत्तेर्दुस्संपादमेतदित्याह— **तद्वत्सुप्त इति**। ईश्वरस्य नित्यमुक्तत्वात् संसारितयोत्थानाभावेऽपि संभावनामात्रेणैवोपन्यासः— **ईश्वरो वेति**। षड्यागानामिव समुच्चितानामिह न हेतुत्वं किन्तु प्रत्येकमित्येतदाह— **विभज्येति**। अनुस्मृतिरित्यत्रानुशब्देन प्रत्यभिज्ञा सूच्यत इत्यभिप्रेत्याह— **सोऽहमस्मीति**। **पुनः प्रतिन्यायं प्रतियोन्याद्रवतीति**। अयनं गमनम्, अयनमेवायः, नियमेन गमनं

### *न्यायनिर्णयः*

प्रसर्पणप्रणाडिकयैकत्वमापन्नस्य तस्यैव नोद्धरणम्। जीवस्य तु सोपाधित्वादुपाधेर्यावद्बन्धभावित्वादुद्धारसिद्धिरित्याशङ्क्योपाधिलयाभावे सत्संपत्त्यसिद्धेर्मैवमिति मत्वा दार्ष्टान्तिकमाह— **तद्वदिति**। नियामकायोगे फलितमाह— **तस्मादिति**। संभावनामात्रेणेश्वरो वेत्युक्तम्। अनियमपक्षे मोक्षः सुप्तस्येति ज्ञानवैयर्थ्यमिति वक्तुमितिशब्दः।

पूर्वपक्षमनूद्य सिद्धान्तप्रतिज्ञामाह— **एवमिति**। ऐक्यावस्थायामवच्छेदाभावे तस्यैवोत्थानं नियन्तुमशक्यमिति शङ्कते— **कस्मादिति**। अवच्छेदकाविद्याशक्तिं सिद्धवत्कृत्य तस्यैवोत्थाने मानमाह— **कर्मेति**। षड्यागानामिव समुच्चितानामिह न हेतुत्वं, किंतु प्रत्येकमित्याह— **विभज्येति**। तत्र कर्मशब्दोक्तं हेतुं विशदयति— **कर्मेति**। शेषानुष्ठानदर्शनमेव प्रकटयति— **तथा हीति**। कथमेतावता तस्यैवोत्थानमित्याशङ्क्योक्तम्— **न चेति**। सामिकृतस्यार्धमनुष्ठितस्येति यावत्। एकस्यैव ज्योतिष्टोमादेरनेकयजमानकत्वापातादित्याह— **अतिप्रसङ्गादिति**। उक्तहेतुफलमुपसंहरति— **तस्मादिति**। अतः स एवोत्तिष्ठतीति शेषः। अनुस्मृतिं व्याकरोति— **इतश्चेति**। का पुनरुक्तानुस्मृतेरन्योत्थानेऽनुपपत्तिः, तत्राह— **न हीति**। अनुस्मृतिरित्यत्रानुशब्देन प्रत्यभिज्ञाऽपि सूचितेत्याह— **सोऽहमिति**। शब्दशब्दार्थमाह— **शब्देभ्यश्चेति**। अयनं गमनमायः, प्रतिनियतं गमनं प्रतिन्यायः, स यथा भवति तथा योनिं योनिं प्रत्यागच्छति स्वापानन्तरं जागरायेत्यर्थः। सुप्तानामुत्थानयोग्यत्वमापन्नमेतं न विन्दन्तीति सूचितम्। इहेति

---

१. दर्शपूर्णमासगतानामाग्नेयादीनां षण्णां यागानां समुच्चितानामेव स्वर्गहेतुत्वम्। द्र. पू.मी. ११.१.१।

**वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तदाभवन्ति' (छा.उ. ६।९।३) इत्येवमादयः शब्दाः स्वापप्रबोधाधिकारे पठिता नात्मान्तरोत्थाने सामञ्जस्यमीयुः[१]। कर्मविद्या-विधिभ्यश्चैवमेवावगम्यते। अन्यथा हि कर्मविद्याविधयोऽनर्थकाः स्युः। अन्योत्थानपक्षे हि सुप्तमात्रो मुच्यत इत्यापद्येत। एवं चेत् स्याद् वद किं कालान्तरफलेन कर्मणा विद्यया वा कृतं स्यात्। अपि चान्योत्थानपक्षे यदि तावच्छरीरान्तरे व्यवहरमाणो जीव उत्तिष्ठेत्, तत्रत्यव्यवहारलोपप्रसङ्गः स्यात्। अथ तत्र सुप्त उत्तिष्ठेत्, कल्पनानर्थक्यं स्यात्। यो हि यस्मिञ्शरीरे सुप्तः स तस्मिन् नोत्तिष्ठत्यन्यस्मिञ्शरीरे सुप्तोऽन्यस्मिन्नुत्तिष्ठतीति कोऽस्यां कल्पनायां लाभः स्यात्? अथ मुक्त उत्तिष्ठेदन्तवान् मोक्ष आपद्येत। निवृत्ताविद्यस्य च पुनरुत्थानमनुपपन्नम्। एतेनेश्वरस्योत्थानं प्रत्युक्तम्; नित्यनिवृत्ताविद्यत्वात्। अकृताभ्यागम-कृतविप्रणाशौ च दुर्निवारावन्योत्थानपक्षे स्याताम्। तस्मात् स एवोत्तिष्ठति नान्य इति। यत्पुनरुक्तं यथा जलराशौ प्रक्षिप्तो जलबिन्दुर्नोद्धर्तुं शक्यत एवं सति संपन्नो जीवो नोत्पतितुमर्हतीति। तत् परिह्रियते। युक्तं तत्र विवेककारणाभावाज्जलबिन्दोरनुद्धरणम्। इह तु विद्यते विवेककारणं कर्म चाविद्या चेति वैषम्यम्। दृश्यते च दुर्विवेचनयोरप्यस्मज्जातीयैः क्षीरोदकयोः संसृष्टयोर्हंसेन विवेचनम्। अपि च न जीवो नाम**

### *प्रकटार्थविवरणम्*

प्रत्यागच्छति जागरणायेत्यर्थः। विधिपदं व्याचष्टे— **कर्मविद्येति**। उत्सूत्रमुपपत्त्यन्तरमाह— **अपि चान्येत्यादिना**। पूर्ववाद्युक्तं दृष्टान्तं वैषम्येण परिहरति— **यत्पुनरुक्तमित्यादिना**। नन्वस्मदादिभिः यद्दुर्विवेचनं तदविद्यादिना वा कथं विविच्यत इत्याशङ्क्याह—

### *भाष्यभावप्रकाशिका*

न्यायः प्रतिन्यायं सुषुप्त्यवस्थाया न्यायं प्रति प्रतियोनि पूर्वप्रबोधदशायां यो [२]यद्वास्मादियोनिः स तं प्रत्याद्रवति आगच्छति पुनः प्रबोधसमय इत्यर्थः। विद्याया आनर्थक्यं प्रथममाह— **अन्योत्थानेति**। अनुष्ठानसमये कर्मण उपासनस्य च फलाभावात् कालान्तर-फलस्यादन्योत्थानपक्षे वैयर्थ्यं स्यादित्याह— **एवं चेत्स्यादिति**। अन्योत्थानपक्षेऽपि स किं जीवः मुक्तः आहोस्विदितर इति। विकल्पक्रमेण दूषयति— **अपि चेत्यादिना**। ननु किमिति व्यवहारलोपः, शरीरान्तरे सुषुप्तस्य जीवस्य शरीरान्तरे व्यवहर्तृत्वेनोत्थानादित्याशङ्कते— **अथ तत्रेति**। तदेव दर्शयति— **यो हीति**। कल्पनागौरवं स्यादित्यर्थः। अन्तवत्त्वमपि भवत्वित्याशङ्क्याह— **निवृत्तेति**। प्रत्येकं दूषणमुक्त्वा सामान्यदूषणमाह— **अकृतेति**। किंच जलबिन्दुरवयवप्रसर्पणद्वारेणैकतां

### *न्यायनिर्णयः*

पूर्वप्रबोधोक्तिः। तदाभवन्तीति स्वापव्यवहितं जागरितमुच्यते। विधिपदं व्याचष्टे— **कर्मेति**। स एवोत्तिष्ठतीत्येतदेवमेवेत्युक्तम्। तदेव व्यतिरेकमुखेन विशदयति— **अन्यथेति**। विद्यानर्थक्यं व्यनक्ति— **अन्येति**। कर्मवैयर्थ्यमाह— **एवं चेदिति**। सुप्तमात्रस्य मुक्त्युपगमश्चेदित्यर्थः। अनुष्ठानकाले फलाभावात् कर्मणो ध्यानस्य च कालान्तरफलस्यान्योत्थानपक्षे वैयर्थ्यमित्यर्थः। विद्याऽत्र ध्यानम्। इतश्च नान्योत्थानमित्याह— **अपि चेति**। अन्योत्थाने सोऽन्यो जीवो वा स्यादीश्वरो वा, जीवश्चेद् बद्धो मुक्तो वा, बद्धोऽपि देहान्तरे व्यवहरमाणस्तत्र सुप्तो वेति विकल्प्याद्यमनूद्य प्रत्याह— **अन्येति**। द्वितीयमनुभाष्य दूषयति— **अथेत्यादिना**। विफलं गौरवमेव स्फोरयति— **यो हीति**। कल्पान्तरमनूद्य निरस्यति— **अथेति**। अन्तवत्त्वे का क्षतिः, तत्राह— **निवृत्तेति**। हेत्वभावादिति भावः। मुक्तस्य नोत्थानमित्युक्तन्यायेन कल्पान्तरं निराह— **एतेनेति**। तदीयस्वरूपापेक्षया हेतुमाह— **नित्येति**। प्रत्येकं सर्वपक्षेषु दोषमुक्त्वा साधारणं दोषमाह— **अकृतेति**। अन्योत्थाने पाश्चात्यप्रबोधकालीनसुखादेर्न पूर्वकर्मकार्यतेत्यकृतमागच्छेत्, कृतं च सुप्तस्य मुक्तौ फलमदत्त्वैव नश्येदिति दोषद्वयमित्यर्थः। अन्योत्थानायोगे फलितमाह— **तस्मादिति**। पूर्वपक्षबीजमनुवदति— **यदिति**। दृष्टान्तवैषम्योक्त्या प्रत्याह— **तदित्यादिना**। नास्माभिरेवान्यैरपि दुर्विवेचनत्वं तुल्यमित्याशङ्क्याह— **दृश्यते चेति**।

---

१. 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' इत्यत्र प्रश्लिष्टस्य 'ई'धातोः 'ईयुः' इति रूपम्। २. अत्र पाठेऽशुद्धिः।

**कश्चित् परस्मादन्यो विद्यते यो जलबिन्दुरिव जलराशेः सतो विविच्येत। सदेव तूपाधिसंपर्काज्जीव इत्युपचर्यत इत्यसकृत् प्रपञ्चितम्। एवं सति यावदेकोपाधिगता बन्धानुवृत्तिस्तावदेकजीवव्यवहारः। उपाध्यन्तरगतायां तु बन्धानुवृत्तौ जीवान्तरव्यवहारः। स एवायमुपाधिः स्वापप्रबोधयोर्बीजाङ्कुरन्यायेनेत्यतः स एव जीवः प्रतिबुध्यत इति युक्तम्।।९।।**

।। इति तृतीयं कर्मानुस्मृतिशब्दविध्यधिकरणम्।।

४।।मुग्धाधिकरणम्।।सू.१०।।

## मुग्धेऽर्धसंपत्तिः परिशेषात्।।१०।।

**अस्ति मुग्धो नाम यं मूर्च्छित इति लौकिकाः कथयन्ति। स तु किमवस्थ इति परीक्षायामुच्यते।**

***शारीरकन्यायसंग्रहः***

**मुग्धेऽर्धसंपत्तिः परिशेषात्।।१०।।** जीवस्यावस्थाचतुष्टयप्रसिद्धिनियमात् चतसृभ्यः लक्षणभेदप्रतिभासः मुग्धावस्थायां बलवान्, प्रसिद्धिनियमस्य मुग्धावस्थायाः सर्वजीवविषयत्वाभावात् सुषुप्त्युत्क्रान्त्योः अंशसाङ्कर्यादप्युपपत्तेः। अतो लक्षणभेदात् पञ्चम्यवस्था [1]मुग्धसम्पत्तिरित्युक्तम्।

***प्रकटार्थविवरणम्***

**दृश्यते चेति**। प्रकारान्तरेण दृष्टान्तवैषम्यमाह— **अपि चेति**। ननु सद्वस्त्वेव यदि जीवः, तर्ह्येक एव जीवः स्यादित्याशङ्क्याह— **एवं सतीति**। ननूपाधिभेदाच्चेज्जीवस्य भेदव्यवहारः, तर्हि पूर्वोत्तरवासरयोरुपाधिभेदात् जीवभेदप्रसङ्ग इत्याशङ्क्याह— **स एव चायमिति**। यद्यप्यन्तःकरणादेः व्यक्ताकारो नश्यति सुषुप्ते, तथाप्यव्यक्ताकारेण वर्तमानत्वाद् यस्य य उपाधिः स एव बीजाङ्कुरवद् व्यक्ताव्यक्तरूपेण वर्तत इति न जीवभेदो युक्त इत्यर्थः।। इति तृतीयं कर्मानुस्मृतिशब्दविध्यधिकरणम्।।

**मुग्धेऽर्धसंपत्तिः परिशेषात्**।। पूर्वं स्वप्नसुषुप्तिव्यतिरेको दर्शितः, इदानीं मूर्च्छावस्थाव्यतिरेकं दर्शयितुमुपक्रमते— **अस्ति**

***भाष्यभावप्रकाशिका***

गत इति भवतु दुर्विवेकः; जीवस्तु सोपाधिकत्वात्तद्वशाच्छक्यविवेक इत्याह— **अपि च न जीव इति**। कथं तर्हि जीवानां परस्परविभाग इति, तत्राह— **एवं सतीति**। ननूपाधिलयेन सुप्तस्य कथं तद्वशाद्विवेकः, कथञ्चोपाध्यैक्याज्जीवैक्यमित्याशङ्क्य बीजाङ्कुरन्यायेनोपाधेर्नित्यत्वादित्याह— **स एव चायमिति**।। इति तृतीयं कर्मानुस्मृतिशब्दविध्यधिकरणम्।।

**मुग्धेऽर्धसंपत्तिः परिशेषात्**।। प्रमाणसिद्धस्यैव विषयत्वं वक्तव्यमिति तस्य लोकप्रसिद्धतां दर्शयति— **यं मूर्च्छित इति**।

***न्यायनिर्णयः***

प्रकारान्तरेण दृष्टान्तवैषम्यमाह— **अपि चेति**। कस्तर्हि जीवः, तत्राह— **सदेवेति**। सत एवोपाधिना जीवत्वे नानाजीववादोऽपि प्रत्युक्त इत्याह— **एवमिति**। उक्तमेव व्यतिरेकद्वारोपपादयति— **उपाध्यन्तरेति**। उपाधिभेदमुपेत्य तत्र तत्र जीवभेदो गम्यतामित्याशङ्क्य बीजाङ्कुरवद् व्यक्ताव्यक्तात्मनैकस्यैवोपाधेः स्थितेर्मैवमित्याह— **स एवेति**। सुप्तस्यैवोत्थानादज्ञातब्रह्मणा तदवस्थानं सिद्धमित्युपसंहरति— **इत्यत इति**।।९।। इति तृतीयं कर्मानुस्मृतिशब्दविध्यधिकरणम्।।

अवस्थात्रयमुक्त्वा मूर्च्छाख्यमवस्थान्तरं दर्शयति— **मुग्ध इति**। विषयमाह— **अस्तीति**। प्रामाणिकस्य विषयत्वात् तस्य लोकसिद्धतामाह— **यमिति**। स किं जागराद्यवस्थानामन्यतमावस्थान्तर्गतः, किंवाऽवस्थान्तरगत इत्यवस्थाचतुष्टयप्रसिद्धिनियमवैलक्षण्याभ्यां संदेहे प्रत्यभिज्ञया स एवोत्तिष्ठतीत्युक्तेर्विशेषज्ञानाभावाविशेषेणैक्यप्रत्यभिज्ञानान्मुग्धिः सुप्तिरेवेति पूर्वपक्षयति— **स त्विति**। अत्र मुग्धेरवस्थान्तरत्वोक्त्या ततो विभक्ते त्वमर्थे शोधिते तस्य वाक्यार्थान्वयिनस्तद्धीहेतुत्वात् पादादिसंगतिः। पूर्वपक्षे मूर्च्छातिरेकार्थं

---

१. 'मुग्धिरित्युक्तम्' इति पा.।

**तिस्रस्तावदवस्थाः शरीरस्थस्य जीवस्य प्रसिद्धाः जागरितं, स्वप्नः, सुषुप्तमिति। चतुर्थी शरीरादपसृप्तिः। न तु पञ्चमी काचिदवस्था जीवस्य श्रुतौ स्मृतौ वा प्रसिद्धाऽस्ति। तस्माच्चतसृणामेवावस्थानामन्यतमाऽवस्था मूर्च्छेत्येवं प्राप्ते ब्रूमः– न तावन्मुग्धो जागरितावस्थो भवितुमर्हति। न ह्ययमिन्द्रियैर्विषयानीक्षते। स्यादेतत्– इषुकारन्यायेन मुग्धो भविष्यति। यथेषुकारो जाग्रदपीष्वासक्तमनस्तया नान्यान् विषयानीक्षत एवं मुग्धो मुसलसंपातादिजनितदुःखानुभवव्यग्रमनस्तया जाग्रदपि नान्यान् विषयानीक्षत इति। न; अचेतयमानत्वात्। इषुकारो हि व्यापृतमना ब्रवीति–'इषुमेवाहमेतावन्तं कालमुपलभमानोऽभूव'मिति। मुग्धस्तु लब्धसंज्ञो ब्रवीति 'अन्धे तमस्यहमेतावन्तं कालं प्रक्षिप्तोऽभूवम्, न किंचिन्मया चेतित'मिति। जाग्रतश्चैकविषयविषक्तचेतसोऽपि देहो विध्रियते। मुग्धस्य तु देहो धरण्यां पतति। तस्मान्न जागर्ति। नापि स्वप्नान् पश्यति, निःसंज्ञकत्वात्। नापि मृतः, प्राणोष्मणोर्भावात्। मुग्धे हि जन्तौ मृतोऽयं स्यान्न वा मृत इति संशयाना ऊष्माऽस्ति, नास्तीति हृदयदेशमालभन्ते निश्चयार्थम्, प्राणोऽस्ति नास्तीति च नासिकादेशम्। यदि प्राणोष्मणोरस्तित्वं नावगच्छन्ति, ततो मृतोऽयमित्यध्यवसाय दहनायारण्यं नयन्ति। अथ तु प्राणमूष्माणं वा प्रतिपद्यन्ते, ततो नायं मृत इत्यध्यवसाय संज्ञालाभाय भिषज्यन्ति। पुनरुत्थानाच्च न दिष्टं गतः। न हि [१]यमं गतो यमराष्ट्रात्**

*प्रकटार्थविवरणम्*

**मुग्धो नामेति**। मुग्धावस्था किं जाग्रदादिव्यतिरिक्ता, उताव्यतिरिक्तेत्यवस्थाचतुष्टयप्रसिद्धिनियमवैलक्षण्याभ्यां संशये पूर्ववाद्याह— **तिस्रस्तावदिति**। परिशेषादवस्थाचतुष्टयातिरिक्तां मुग्धावस्थां दर्शयितुं प्रसक्तप्रतिषेधमारभते— **न तावन्मुग्ध इत्यादिना**।

*भाष्यभावप्रकाशिका*

**न तु पञ्चमी काचिदिति**। यद्यपि चिरानुच्छ्वासवेपथुप्रभृतिधर्मभेदो मूर्च्छाया अवगम्यते। तथापि सुषुप्तेरेवावान्तरभेदादेवंविधतोपपत्तेर्न धर्मभेदः कल्पनीय इत्यर्थः। परिशेषादिति सूत्रावयवार्थं परिशेषं दर्शयति— **न तावन्मुग्ध इत्यादिना**। ननु पूर्ववत् प्राणोष्माणौ नोपलभ्येते इति, तत्राह— **मुग्धे हीति**। ननु पराध्यवसायो न परस्य गोचर इत्याशङ्क्य कार्यदर्शनादनुमीयत इत्याह—

*न्यायनिर्णयः*

पृथङ् न प्रयतितव्यम्, सिद्धान्ते पृथक्प्रयत्नध्रौव्यमिति मत्वा पूर्वपक्षं विवृणोति— **तिस्रस्तावदिति**। शरीरस्थस्येति विशेषण-सिद्धमवस्थान्तरमाह— **चतुर्थीति**। मूर्च्छाऽपि चिरोच्छ्वासवेपथुप्रभृतिधर्मभेदादवस्थान्तरमित्याशङ्क्य सुप्तेरेवावान्तरभेदादेवंविधत्वसिद्धेर्न धर्मिभेदकल्पनेत्याह— **न त्विति**। अवस्थान्तरस्याप्रसिद्धत्वे सुषुप्त्यन्तर्भावं मूर्च्छाया मत्वा निगमयति— **तस्मादिति**। तथा च तद्व्यतिरेकार्थं पृथङ् न प्रयतितव्यमिति फलितमितिशब्दार्थः। पूर्वपक्षमनूद्य सिद्धान्तयति— **एवमिति**। परिशेषादित्यस्यार्थं परिशेषं दर्शयितुमारभते— **न तावदिति**। जाग्रदवस्थो हीन्द्रियैरर्थानुपलभते, मुग्धो नैवमिति वैषम्यं हेतुमाह— **न हीति**। जाग्रदवस्थस्यैव मुग्धस्यार्थानुपलम्भो दुःखानुभवव्यग्रतया स्यादिति दृष्टान्तेन शङ्कते— **स्यादिति**। इषुकारन्यायं प्रपञ्चयति— **यथेत्यादिना**। वैषम्योक्त्या प्रत्याह— **नेत्यादिना**। मुग्धस्य जागरितावस्थत्वाभावे हेत्वन्तरमाह—**जाग्रतश्चेति**। देहधारणाभावाद् विषयमात्रानुपलब्धेश्च मुग्धो जाग्रदवस्थो नेति निगमयति— **तस्मादिति**। अस्तु तर्हि तस्य स्वप्नावस्थत्वं, नेत्याह— **नापीति**। तर्हि तस्य मृतावस्थत्वं नेत्याह— **नापीति**। पूर्ववत्प्राणोष्माणौ मुग्धे न सिद्धौ, तत्कुतोऽस्य मृतादन्यत्वं, तत्राह— **मुग्धे हीति**। ऊष्माऽस्ति नेति संशय्यान्यतरनिश्चयार्थं हृदयदेशमालभन्ते स्पृशन्तीति यावत्। प्राणोऽस्ति नेति च संदिह्यान्यतरार्थं नासिकादेशमालभन्त इति संबन्धः। नास्तित्वनिश्चयफलमाह— **यदीति**। परस्य पराध्यवसायो गोचरो नेत्याशङ्क्य कार्यलिङ्गकमनुमानमाह— **दहनायेति**। अस्तित्वनिश्चयफलमाह— **अथ त्विति**। तत्रापि कार्यलिङ्गकमनुमानमाह— **संज्ञेति**। मुग्धस्य मृतत्वाभावे हेत्वन्तरमाह— **पुनरिति**। यमराज्यं प्रविष्टस्यापि पुनरुत्थानं किं न स्यात्, तत्राह— **न हीति**।

---

१. 'यमं गतः' इति क्वचिन्न।

**प्रत्यागच्छति। अस्तु तर्हि सुषुप्तो निःसंज्ञत्वादमृतत्वाच्च। न; वैलक्षण्यात्। मुग्धः कदाचिच्चिरमपि नोच्छ्वसिति, सवेपथुरस्य देहो भवति, भयानकं च वदनं, विस्फारिते नेत्रे; सुषुप्तस्तु प्रसन्नवदनस्तुल्यकालं पुनः पुनरुच्छ्वसिति, निमीलिते अस्य नेत्रे भवतः; न चास्य देहो वेपते। पाणिपेषणमात्रेण च सुषुप्तमुत्थापयन्ति, न तु मुग्धं मुद्गरघातेनापि। निमित्तभेदश्च भवति मोहस्वापयोः। मुसलसंपातादिनिमित्तत्वान्मोहस्य, श्रमादिनिमित्तत्वाच्च स्वापस्य। न च लोकेऽस्ति प्रसिद्धिर्मुग्धः सुप्त इति। परिशेषादर्धसंपत्तिर्मुग्धतेत्यवगच्छामः। निःसंज्ञत्वात् संपन्न इतरस्माद् वैलक्षण्यादसंपन्न इति।**

**कथं पुनरर्धसंपत्तिर्मुग्धतेति शक्यते वक्तुम्? यावता सुप्तं प्रति तावदुक्तं श्रुत्या– 'सता सोम्य तदा संपन्नो भवति' (छा.उ. ६।८।१) इति, 'अत्र स्तेनोऽस्तेनो भवति' (बृ.उ. ४।३।२२) 'नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्' (छा.उ. ८।४।१) इत्यादि। जीवे हि सुकृतदुष्कृतयोः प्राप्तिः सुखित्वदुःखित्वप्रत्ययोत्पादनेन भवति। न च सुखित्वप्रत्ययो दुःखित्वप्रत्ययो वा सुषुप्ते विद्यते; मुग्धेऽपि तौ प्रत्ययौ नैव विद्येते। तस्मादुपाध्युपशमात् सुषुप्तवन्मुग्धेऽपि कृत्स्नसंपत्तिरेव भवितुमर्हति,**

### *प्रकटार्थविवरणम्*

आक्षिपति— **कथं पुनरर्धसंपत्तिरिति**। काऽनुपपत्तिरित्यत आह— **यावतेति**। यत् सुप्तं प्रति सत्संपन्नत्वं श्रुत्योक्तं तदुपाध्युपरमाभिप्रायेणैव; स चोपाध्युपरमो मुग्धस्यापि समान इति कृत्स्नसंपत्तिरेव वक्तव्येति भावः। ननु सुकृतदुष्कृतसंबन्धस्य यावत्संसारभावित्वात् सुकृतदुष्कृते न तरतो न संस्पृशत इत्यसङ्गतमित्याशङ्क्याह— **जीवे हीति**। सुकृतदुष्कृतकार्याभावादभावोपचार

### *भाष्यभावप्रकाशिका*

**दहनायेति**। सुषुप्तिसालक्षण्यमाह— **निस्संज्ञत्वादमृतत्वाच्चेति**। एवंविधसाम्येऽपि लक्षणनिमित्तप्रयोजनानां भेदाद्भेद एवेति परिहरति— **न वैलक्षण्यादित्यादिना**। श्रमापनयाय ब्रह्मणा संपत्तिः सुषुप्तं, [देह]परित्यागार्थानुत्पत्ति[र्था तत्संपत्ति]र्मोहः। सति मोहे मरणाभावेऽप्यसति मोहे तदभावादिति प्रयोजनभेदोऽपि द्रष्टव्यः। साम्यवैषम्याभ्यामर्धसंपत्तितामुपपादयति— **निस्संज्ञत्वादित्यादिना**।

शङ्कते— **कथमिति**। अर्धसंपत्त्यभावमुपपादयितुं मुग्धस्य सुषुप्तेन साम्यं पुण्यापुण्यतत्फललेपाभावेनाह— **यावतेति**।

### *न्यायनिर्णयः*

परिशेषसिद्धं मुग्धस्य स्वापावस्थत्वमित्याह— **अस्त्विति**। तत्र सालक्षण्यं हेतुमाह— **निःसंज्ञत्वादिति**। उक्तसालक्षण्येऽपि लक्षणनिमित्तफलानां भेदान्नैक्यमित्याह— **नेत्यादिना**। (लक्षणं) लक्षणभेदं विवृणोति— **मुग्ध इति**। निमित्तभेदमुदाहरति— **निमित्तेति**। आदिपदेनोभयत्रापि ज्वरादि गृह्यते। श्रमापनयार्था ब्रह्मसंपत्तिः सुषुप्तिः, देहत्यागार्था तत्संपत्तिर्मोहः, सति मोहे मरणाभावेऽपि तस्मिन्नसति तदभावादिति फलभेदं मत्वा मोहस्वापयोरैक्ये मानाभावमाह— **न चेति**। परिशेषायातमर्थमाह— **परीति**। साम्यवैलक्षण्याभ्यामर्धसपत्तिं साधयति— **निःसंज्ञत्वादिति**।

अर्धसंपत्तिमाक्षिपति— **कथमिति**। काऽनुपपत्तिरित्याशङ्क्य मुग्धस्यार्धसंपत्त्यभावं साधयितुं सुप्तेन साम्यं कर्मतत्फललेशाभावेन[१] कथयति— **यावतेति**। यत्सुप्तं प्रति सत्संपन्नत्वं श्रुतं तदुपाध्युपरमाभिप्रायं, स चोपाध्युपरमो मुग्धस्यापीति कृत्स्नसंपत्तिरेवेति भावः। कर्मसंबन्धस्य यावद्बन्धभावित्वात् सुप्तस्य कर्मराहित्यमसिद्धमित्याशङ्क्य तत्कार्यसुखदुःखधीराहित्यात् तद्धेतुकर्मराहित्यं कल्प्यमित्याह— **जीवे हीति**। सुप्तस्य सुखानुभवात् तदविनाभूतो दुःखानुभवोऽपि कल्प्यतामित्याशङ्क्य स्वप्रकाशस्वरूपसुखानुभवव्यतिरेकेण कर्मोत्थानुकूलप्रतिकूलार्थधीजन्यौ प्रत्ययावसंभाविनावित्याह— **न चेति**। सुप्तस्य कर्मफलवैकल्येऽपि मुग्धस्य किं सिद्धं, तत्राह— **मुग्धेऽपीति**। सुखादिधीराहित्यकल्पितकर्मराहित्येन संपूर्णा सत्संपत्तिर्मुग्धेऽपीति निगमयति— **तस्मादिति**।

---

१. 'कर्मतत्फललेपाभावेन' इति पाठो भवेदिति भाष्यभावप्रकाशिकातो ज्ञायते।

**नार्धसंपत्तिरिति। अत्रोच्यते– न ब्रूमो मुग्धेऽर्धसंपत्तिर्जीवस्य ब्रह्मणा भवतीति। किं तर्हि? अर्धेन सुषुप्तपक्षस्य भवति मुग्धत्वम्, अर्धेनावस्थान्तरपक्षस्येति ब्रूमः। दर्शिते च मोहस्य स्वापेन साम्यवैषम्ये। द्वारं चैतन्मरणस्य। यदाऽस्य सावशेषं कर्म भवति, तदा वाङ्मनसे प्रत्यागच्छतः। यदा तु निरवशेषं कर्म भवति, तदा प्राणोष्माणावपगच्छतः। तस्मादर्धसंपत्तिं ब्रह्मविद इच्छन्ति। यत्तूक्तं न पञ्चमी काचिदवस्था प्रसिद्धाऽस्तीति। नैष दोषः; कादाचित्कीयमवस्थेति न प्रसिद्धा स्यात्। प्रसिद्धा चैषा लोकायुर्वेदयोः। अर्धसंपत्त्यभ्युपगमाच्च न पञ्चमी गण्यत इत्यनवद्यम्।।१०।।**

।। इति चतुर्थं मुग्धाधिकरणम् ।।

### *प्रकटार्थविवरणम्*

इति भावः। अर्धशब्दो नार्धब्रह्मसंपत्त्यभिप्रायेण, किं तु सुषुप्तिवैलक्षण्याभिप्रायेणेत्याह— **न ब्रूम इत्यादिना**। इतोऽपि सुषुप्तिवैलक्षण्यमित्याह— **द्वारं चैतदिति**। यच्चाप्रसिद्धत्वम्, तत्र भेदाभावात्, किं तु सदातनत्वाभावादित्याह— **यत्तूक्तमित्यादिना**। इदानीमप्रसिद्धिरपि नास्तीत्याह— **प्रसिद्धा चैषेति**। आयुर्वेदः वैद्यशास्त्रम्। ननु तत्रापि चतस्रोऽवस्था मर्त्यानां गणिता इत्याशङ्क्याह— **अर्धेति**। अर्धसुषुप्तिसालक्षण्याभ्युपगमात् तत्रान्तर्भावाभिप्रायेण पृथक् [न पृथक्] गणनमित्यर्थः।। इति चतुर्थं मुग्धाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

ब्रह्मभूतत्वाभिप्रायेण सुकृतदुष्कृताभावे श्रूयत इत्यर्थः। ब्रह्मसंपत्त्यविशेषेऽपि तयोर्भेद इति परिहरति— **न ब्रूम इति**। **अवस्थान्तरपक्षस्येति**। मरणस्येत्यर्थः। कथमर्धेनावस्थान्तरपक्षस्येति तद् दर्शयति— **द्वारञ्चैतदिति**। जीवद्दशायां सर्वजीवसाधारण्याभावात् प्रसिद्ध्यभाव इत्याह— **कादाचित्कीति**। न चात्यन्तमप्रसिद्धिरस्तीत्याह— **प्रसिद्धा चेति**। कस्मात्तर्हि पञ्चमतया न गण्यत इति, तदाह— **अर्धेति**।। इति चतुर्थं मुग्धाधिकरणम्।।

### *न्यायनिर्णयः*

ब्रह्मसंपत्त्यविशेषेऽपि सुप्तिमूर्च्छयोर्भेदोऽस्तीत्याह— **अत्रेति**। यत्तु मूर्च्छायां जीवस्य ब्रह्मणा नार्धसंपत्तिरिति दर्शितं, तदङ्गीकरोति— **नेत्यादिना**। तर्हि किमपेक्षयाऽर्धसंपत्तिः, तत्राह— **किमिति**। अर्धेनादीयमानेन निःसंज्ञत्वेनेति यावत्। परित्यज्यमानेन चार्धेन प्रसन्नवदनत्वादिनेत्यर्थः। अवस्थान्तरं मरणम्। उपनेयापनेयार्धाभ्यामुभयपक्षत्वं कथं मुग्धे सिद्धं, तत्राह— **दर्शिते चेति**। तथापि कथमस्य मरणपक्षत्वं, तत्राह— **द्वारं चेति**। मुग्धत्वं मरणस्य द्वारं चेत् तस्मिन् सति स्यादेवेत्याशङ्क्याह— **यदेति**। कर्मणः सावशेषत्वे गमकमाह— **तदेति**। तर्हि कुतो द्वारत्वं मरणं प्रति मोहस्योक्तं, तत्राह— **यदा त्विति**। कर्मणो निःशेषत्वे प्रयोजकमाह— **तदेति**। साम्यवैषम्याभ्यां सिद्धमुपसंहरति— **तस्मादिति**। अवस्थान्तरमप्रसिद्धत्वान्नेत्युक्तमनुवदति— **यत्त्विति**। जीवद्दशायां सर्वजीवसाधारण्याभावादप्रसिद्धिर्न त्वभेदादित्याह— **नेत्यादिना**। इदानीमप्रसिद्धिरपि नास्तीत्याह— **प्रसिद्धा चेति**। आयुर्वेदो वैद्यशास्त्रम्। कथमन्यथा मुसलपातादिना मुग्धं बन्धुमुपलभ्य तदीयसंज्ञालाभार्थं तदीयपितृप्रभृतयश्चिकित्सा-शास्त्रकुशलमन्विष्यानुगच्छेयुरिति भावः। कस्मात् तर्हि पञ्चमतया मुग्धिर्न गण्यते, तत्राह— **अर्धेति**। निःसंज्ञत्वमप्रसन्नवदनतेत्यादिना सुप्तिमरणान्तर्भावधिया पञ्चमतया मूर्च्छा नोक्तेत्यर्थः। उक्तवैषम्यादनन्तर्भावधिया पृथगुक्तिरपि स्यादित्याशङ्क्यानन्तर्भावेऽपि सर्वसाधारणत्वाभावान्नैवमिति मत्वा त्वमर्थशोधनमुपसंहरति— **इत्यनवद्यमिति**।।१०।। इति चतुर्थं मुग्धाधिकरणम्।।

५।।उभयलिङ्गाधिकरणम्।।सू.११-२१।।

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि।।११।।

**येन ब्रह्मणा सुषुप्त्यादिषु जीव उपाध्युपशमात् संपद्यते, तस्येदानीं स्वरूपं श्रुतिवशेन निर्धार्यते। सन्त्युभयलिङ्गाः श्रुतयो ब्रह्मविषयाः– 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' (छा.उ. ३।१४।२)**

*शारीरकन्यायसंग्रहः*

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि।।११।। न भेदादिति चेन्न प्रत्येकमतद्वचनात्।।१२।। अपि चैवमेके।।१३।। अरूपवदेव हि तत्प्रधानत्वात्।।१४।। प्रकाशवच्चावैयर्थ्यात्।।१५।। आह च तन्मात्रम्।।१६।। दर्शयति चाथो अपि स्मर्यते।।१७।। अत एव चोपमा सूर्यकादिवत्।।१८।। अम्बुवदग्रहणात्तु न तथात्वम्।।१९।। वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्।।२०।। दर्शनाच्च।।२१।।** आकाशादिकार्यभेदैः, तदुपाध्यवच्छिन्नचिद्भेदैश्च कार्यकारणभावेन वा अंशाशिभावेन वा सामान्यविशेषभावेन वा ब्रह्मणो भिन्नाभिन्नत्वं सप्रपञ्चता, सत्यज्ञानानन्दलक्षणपरापरसामान्यत्रयावलम्बेन एकव्यक्तिमात्रात्मता निष्प्रपञ्चता, तदुभयविधमुभयविधश्रुतिप्राप्तं विकारान्तर्बहिर्देशभेदेन ब्रह्मणि व्यवस्थापयितुं न शक्यते, देशलक्षणभेदाभ्यां ब्रह्मभेदप्रसङ्गात्; नापि स्थितिप्रलयकालभेदेन; ब्रह्ममात्रोपाधिश्रवणविरोधात्; नापि कार्यकारणब्रह्मभेदेन, कारणब्रह्मण एव उभयाकारश्रवणात्; नापि कारणत्वविमुक्तब्रह्मभेदेन, ब्रह्मद्वयाभावात्; एकस्यैव उभयलक्षणत्वे धर्मिभेदात् इति। यद्यप्येवमसाङ्कर्येण रूपद्वयव्यवस्था न संभवति, तथाप्युभयविधश्रुतिसामर्थ्यादिवैकोपाधौ उभयात्मकं ब्रह्मेति निश्चिनुमः। यद्यपि निष्प्रपञ्चब्रह्मपरनिषेधवाक्यप्रकरणस्थानाम् "द्वे वाव ब्रह्मणो रूपे" इत्यादीनां निषेध्यवस्तुसमर्पणेनैवोपक्षयात् न पृथक् प्रपञ्चप्रतिपादने तात्पर्यम्, तथापि उपासनाप्रकरणपठितानां सप्रपञ्चवाक्यानां स्वशेष्युपासनविरोधाभावात् तत्परनिषेधवाक्यविरोधेऽपि स्वार्थे प्रामाण्यात् सप्रपञ्चं ब्रह्म इति प्राप्ते न्यायोऽवतार्यते— चेतनस्य भेदासंसर्गिता पुरुषार्थ इति स्मृतिसुषुप्त्योः दर्शनात् तत्परनिषेधवाक्यविरोधे सति अन्यपराणां सविशेषवाक्यानां स्वशेषिविरोधाभावेऽपि दौर्बल्यात् तत्परवाक्यविरोधे सति अतत्पराणां दौर्बल्यम् इत्येतावता स्वशेषिवाक्यविरोधेऽपि अन्यपरत्वमेव दौर्बल्यनिमित्तमिति न्यायेन सप्रपञ्चत्वमुपचरितमुपादाय निष्प्रपञ्चमेव ब्रह्म इति निरूपितम्।

अथ वा एकस्योभयरूपविरोधे सति "इन्द्रो मायाभिः" "नासदासीत् नो सदासीत्" "तम आसीत्" इति सदसद्विलक्षणानिर्वचनीयमायाव्यपाश्रयेण तत्त्वातत्त्वविषयभेदाद् रूपद्वयं व्यवस्थापितम्।

*प्रकटार्थविवरणम्*

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि।।** एवं तावत् स्वप्नाद्यवस्थोपन्यासेन तद्व्यतिरिक्तं स्वप्रकाशं ब्रह्मात्मकं सदैकरूपं त्वमर्थमुद्देश्यं परिशोध्येदानीं विधेयं तत्पदार्थं परिशोधयितुमुपक्रमते भगवान् सूत्रकार इति तात्पर्यमाह— **येन ब्रह्मणेति।**

*भाष्यभावप्रकाशिका*

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि।।** अवान्तरसङ्गतिमाह— **येनेति।** नन्वारम्भणाधिकरण एव निष्प्रपञ्चताया उपपादितत्वान्नेदमधिकरणमारम्भणीयमित्याशङ्क्य श्रुतीनामुभयरूपाणां व्यवस्थाप्रदर्शनायारम्भ इत्याह— **श्रुतिवशेनेति। सविशेषलिङ्गा**

*न्यायनिर्णयः*

स्वप्नाद्यवस्थोक्त्या तद्व्यतिरिक्तं स्वप्रकाशं ब्रह्मात्मकं सदैकरूपं त्वमर्थमुद्देश्यं परिशोध्येदानीं विधेयतदर्थशोधनमारभमाणस्तस्य तावन्निर्विशेषत्वमाह— **नेत्यादिना।** संगतिमाह— **येनेति।** ब्रह्मस्वरूपस्यासकृदुक्तत्वात् किमनेनारम्भेणेत्याशङ्क्य श्रुतिषु दृष्टविवादनिरासेन तन्निर्णयार्थमित्याह— **श्रुतीति।** विषयोक्तिपूर्वकं संशयबीजमाह— **सन्तीति।** सविशेषत्वं निर्विशेषत्वं चोभयं लिङ्ग्यते प्रकाश्यते याभिः श्रुतिभिस्तास्तथा। तत्र सविशेषब्रह्मश्रुतीरुदाहरति— **सर्वेति।** [१]चकारेणोक्तार्थाः श्रुतयोऽन्या 'यः सर्वज्ञः स सर्वविदि'त्याद्याः

१. अनेन 'इत्येवमाद्याश्च सविशेषलिङ्गाः' इति भाष्यपाठो व्याख्यातृसंमत इति ऊह्यते।

**इत्येवमाद्याः सविशेषलिङ्गाः; 'अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ.उ. ३।८।८) इत्येवमाद्याश्च निर्विशेषलिङ्गाः। किमासु श्रुतिषूभयलिङ्गं ब्रह्म प्रतिपत्तव्यमुतान्यतरलिङ्गम्; यदाऽप्यन्यतरलिङ्गम्, तदाऽपि किं सविशेषमुत निर्विशेषमिति मीमांस्यते। तत्रोभयलिङ्गश्रुत्यनुग्रहादुभयलिङ्गमेव ब्रह्मेति।**

**एवं प्राप्ते ब्रूमः:– न तावत् स्वत एव परस्य ब्रह्मण उभयलिङ्गत्वमुपपद्यते। न ह्येकं वस्तु स्वत एव रूपादिविशेषोपेतं तद्विपरीतं चेत्यवधारयितुं शक्यम्, विरोधात्। अस्तु तर्हि स्थानतः पृथिव्याद्युपाधियोगादिति।**

### *प्रकटार्थविवरणम्*

संशयबीजमाह— **सन्त्युभयलिङ्गा इति**। उभयलिङ्गाः उभयरूपाः। उभयोरपि प्रामाण्यादुभयरूपं ब्रह्मेति पूर्वपक्षयति— **तत्रेति**।

किं स्वाभाविकमुभयरूपमुच्यते, किं वा परोपाधिकमिति विकल्प्य आद्यं दूषयति— **न तावदिति**। रूपाभेदो ह्येकत्वव्यवस्थापकः; अत एकमनेकरूपं चेति विप्रतिषिद्धमिति भावः। द्वितीयमनूद्य दूषयति— **अस्तु तर्हीति**। ननु उभयरूपता तत्त्वतो न घटते

### *भाष्यभावप्रकाशिका*

**इति**। आकाशादिकार्यभेदैस्तदुपाध्यवच्छिन्नजीवभेदैश्च कार्यकारणभावेनांशांशिभावेन वा सामाद्यभावेनभा सप्रपञ्चत्वं प्रतिपादयन्तीत्यर्थः। **निर्विशेषलिङ्गा इति**। सत्यज्ञानानन्दलक्षणपरापरसामान्यत्रयालम्बनैकव्यक्तिमात्रताप्रतिपादिका इत्यर्थः। चतुष्पात् षोडशकलमित्यादि सविकारत्वप्रतिपादिकाः, नेति नेति नेह नानास्तीत्याद्या विशेषनिषेधिकाश्चोभयत्र चकाराभ्यां संगृह्यन्ते। ननूभयविधत्वं विकृताविकृतब्रह्मापेक्षया व्यवस्थापयितुं न शक्यते देशलक्षणभेदाभ्यां ब्रह्मभेदप्रसङ्गात्, नापि स्थितिप्रलयकालभेदेन कार्यकारणब्रह्मभेदेन वा कारणाकारण-ब्रह्मभेदेन वा व्यवस्थापयितुं शक्यं, ब्रह्मद्वयाभावात्। अतः कथमेकस्य विरुद्धोभयलिङ्गत्वमित्याशङ्क्योभयविधश्रुतिसामर्थ्यादित्याह— **तत्रोभयलिङ्गेति**। न च निष्प्रपञ्चब्रह्मप्रतिपादनप्रकरणे पठितानां शब्दानां निषेध्यवस्तुसमर्पणेनैव निषेधवाक्येनैकवाक्यतोपक्षयात् सप्रपञ्चताप्रतिपादने तात्पर्याभावात् सविशेषम् ब्रह्म न सिध्यतीत्याशङ्कनीयम्। उपासनाविधिप्रकरणपठितसप्रपञ्चवाक्यान्तरे स्वशेषि-विधिविरोधशून्यतया स्वार्थे प्रमाणभूतैः सप्रपञ्चतासिद्धेः। निषेधवाक्यविरोधेऽपि च तेषां स्वशेषिवाक्याविरुद्धत्वात् प्रामाण्योपपत्तेरिति भावः।

किमुभयलिङ्गत्वं पारमार्थिकं किं वाऽन्यतरदाविद्यमिति। आद्यः परेषामनुपपन्न इत्याह— **न तावदिति**। स्थानत इति सूत्रपदं व्याचष्टे— **पृथिव्यादीति**। स्थानमुपाधिस्तद्वे[स्तद्यो]गादित्यर्थः। न चौपाधिकत्वेऽपि मिथ्यात्वमग्निसंपर्कजन्यलौहित्यवत्सत्यत्वोपपत्तिरिति

### *न्यायनिर्णयः*

समुच्चिताः। सविशेषं ब्रह्म लिङ्ग्यते याभिस्ताः श्रुतयस्तथा। निर्विशेषब्रह्मश्रुतीरुदाहरति— **अस्थूलमिति**। 'यत्तदद्रेश्यम्' 'अदृश्येऽनात्म्ये' 'नेति ने'त्याद्याः श्रुतयश्चकारेण गृह्यन्ते। निर्विशेषं ब्रह्म लिङ्ग्यते याभिस्ताः श्रुतयस्तथेति। पूर्ववत् सविषयं संशयबीजमुक्त्वा संशयमाह— **किमिति**। उभयं सविशेषत्वं निर्विशेषत्वं च लिङ्ग्यते यस्मिन् ब्रह्मणि तत् तथेति यावत्। उभयत्र श्रुत्यनुग्रहादे-कत्रोभयोर्विरोधान्नाद्यो विकल्पः। सविशेषत्वं निर्विशेषत्वं वाऽन्यतरद्यत्र लिङ्ग्यते तद् ब्रह्म तथेत्येतत्। परस्य परिणामित्वकूटस्थत्वाभ्यां द्वितीयं विकल्पयति— **यदेति**। अत्र निर्विशेषस्य तदर्थस्य ब्रह्मणो निरूपणे तस्य वाक्यार्थान्वयितया तद्धीहेतुत्वलाभात् पादादिसंगतिः। पूर्वपक्षे द्विरूपं ब्रह्म ध्येयम्, सिद्धान्ते तु निर्विशेषमेव तज्ज्ञेयमित्यभिप्रेत्य पूर्वपक्षयति— **तत्रेति**। उभयविधत्वं विकृताविकृतब्रह्मापेक्षया वा स्थितिप्रलयकालभेदेन वा कार्यकारणब्रह्मभेदेन वा कारणाकारणब्रह्मभेदेन वा न व्यवस्थापयितुं शक्यं ब्रह्मद्वयाभावात्। तत्कथमेकस्य विरुद्धोभयरूपतेत्याशङ्क्याह— **उभयेति**। न च निर्विशेषब्रह्मप्रकरणस्थशब्दानां निषेध्यार्पणेन निषेधवाक्यैकवाक्यतया सप्रपञ्चातात्पर्यान्न सविशेषधीरिति वाच्यम्। उपास्तिप्रकरणस्थसप्रपञ्चवाक्यान्तरैः स्वशेषिविधिविरोधशून्यतया स्वार्थे प्रमाणैः सप्रपञ्चतासिद्धेर्निषेधवाक्यविरोधेऽपि तेषां स्वशेषिवाक्याविरुद्धत्वात् प्रामाण्योपपत्तेरिति भावः।

उभयरूपं ब्रह्म ध्येयमिति पूर्वपक्षमनूद्य सिद्धान्तसूत्रमादत्ते— **एवमिति**। उभयलिङ्गत्वं ब्रह्मणः स्वाभाविकमाहो परोपाधिकम्? आद्यं प्रत्याह— **न तावदिति**। अनुपपत्तिं स्फुटयति— **न हीति**। द्वितीयं शङ्कते— **अस्त्विति**। स्थानत इति व्याचष्टे— **पृथिव्यादीति**। स्थानमुपाधिस्तद्योगादिति यावत्। औपाधिकत्वेऽपि सत्यत्वमग्निसंपर्कजन्यलौहित्यवदिति भावः। उपाधिवशादा-

**तदपि नोपपद्यते। न ह्युपाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशः स्वभावः संभवति। न हि स्वच्छः सन् स्फटिकोऽलक्तकाद्युपाधियोगादस्वच्छो भवति, भ्रममात्रत्वादस्वच्छताभिनिवेशस्य। उपाधीनां चाविद्या-प्रत्युपस्थापितत्वात्। अतश्चान्यतरलिङ्गपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यं, न तद्विपरीतम्। सर्वत्र हि ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु 'अशब्दमस्पर्शमरूपमव्ययम्' (क.उ. ३।१५ मुक्तिको. २।७२) इत्येवमादिष्वपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यते।।११।।**

**न भेदादिति चेन्न प्रत्येकमतद्वचनात्।।१२।।**

**अथापि स्याद्- यदुक्तं निर्विकल्पमेकलिङ्गमेव ब्रह्म, नास्य स्वतः स्थानतो वोभयलिङ्गत्वमस्तीति। तन्नोपपद्यते। कस्मात्? भेदात्। भिन्ना हि प्रतिविद्यं ब्रह्मण आकारा उपदिश्यन्ते- चतुष्पाद् ब्रह्म षोडशकलं ब्रह्म वामनीत्वादिलक्षणं ब्रह्म त्रैलोक्यशरीरवैश्वानरशब्दोदितं ब्रह्मेत्येवंजातीयकाः। तस्मात् सविशेषत्वमपि ब्रह्मणोऽभ्युपगन्तव्यम्। ननूक्तं नोभयलिङ्गत्वं ब्रह्मणः संभवतीति। अयमप्यविरोधः; उपाधिकृतत्वादाकारभेदस्य।**

### *प्रकटार्थविवरणम्*

चेन्मा घटिष्ट तर्हि; सविशेषत्वमेवास्त्वित्याशङ्क्याह— **अतश्चान्यतरेति**। यतः सर्वो विशेषोऽविद्याप्रत्युपस्थापित एव अतश्चेति योजना। इतोऽपि निर्विशेषमेव ब्रह्म तत्पदलक्ष्यमित्याह— **सर्वत्र हीति**।

**न भेदादिति चेन्न प्रत्येकमतद्वचनात्**।। सूत्रस्य पूर्वपक्षभागं व्याचष्टे— **अथापि स्यादिति**। यच्चोक्तं विरोधादिति तदनूद्य दूषयति— **ननूक्तमित्यादिना**। रूपभेदप्रतिपादकशास्त्रस्याप्रामाण्यपरिहाराय औपाधिको रूपभेदो वक्तव्य इत्यर्थः। किमुपाधिगत एव

### *भाष्यभावप्रकाशिका*

भावः। उपाधिवशादविद्यात्मकोभयलिङ्गत्वसंभवे न पारमार्थिकमुभयलिङ्गत्वमपरिणामस्य ब्रह्मण उपाधितोऽपि पारमार्थिकरूपान्तरानुपपत्तेरिति परिहरति— **न ह्युपाधियोगादिति**। **भ्रममात्रत्वादिति**। शुक्लस्य वस्त्रस्य रक्ततादि द्रव्यान्तरवशादुपलभ्यमानं न पारमार्थिकं पटसंयुक्तद्रव्यस्यैव रक्ततया प्रतीतेरित्यर्थः। उपाधेस्सत्यत्वेऽप्यौपाधिकं मिथ्येत्युक्तम्। इदानीमुपाधीनामपि मिथ्यात्वात्तज्जं सुतरां मिथ्येत्याह— **उपाधीनामिति**। सूत्रावयवं व्याचष्टे— **सर्वत्र हीति**।

### *न्यायनिर्णयः*

विद्योभयलिङ्गत्वयोगेऽपि न तात्त्विकमुभयलिङ्गत्वं कूटस्थस्य ब्रह्मणो वास्तवरूपान्तरायोगादित्याह— **तदपीति**। उक्तमेव दृष्टान्तेन स्पष्टयति— **न हीति**। अलक्तकाद्युपाधिघटिते स्फटिकादावस्वच्छताधीस्तर्हि कथं, तत्राह— **भ्रमेति**। स्वरसधवलस्य स्फटिकादेरुपाधितो दृष्टोऽरुणिमा न वास्तवः, संयुक्तोपाधेरेवारुणतया भानादित्यर्थः। उपाधेरमिथ्यात्वेऽपि तत्कृतं मिथ्येत्युक्तम्। इदानीं तस्यापि मिथ्यात्वात् तन्मिथ्येति किं वक्तव्यमित्याह— **उपाधीनामिति**। उभयरूपत्वं तत्त्वतो ब्रह्मणो न चेत् तर्हि सविशेषत्वमेव नानाश्रुतिवशादिष्यतामित्याशङ्क्याह— **अतश्चेति**। सर्वस्य विशेषस्याविद्याकृतत्वादेवेति यावत्। तत्र हेतुत्वेन सूत्रावयवं व्याचष्टे— **सर्वत्रेति**।।११।।

'न स्थानतोऽपी'त्यादिनोक्तमाक्षिप्य समाधत्ते— **नेत्यादिना**। निषेध्यमनूद्य निषेद्धुं नञर्थमाह— **अथापीति**। श्रुतिभिर्ब्रह्मणो निर्विशेषत्वे मितेऽपीति यावत्। श्रौतस्य नासिद्धिरिति शङ्कते— **कस्मादिति**। श्रुत्यन्तरविरोधात् तदसिद्धिरिति सूत्रावयवेनाह— **भेदादिति**। तदेव विभजते— **भिन्ना हीति**। तादृगाकारोपदेशस्य फलमाह— **तस्मादिति**। निर्विशेषत्ववदित्यपेरर्थः। उक्तविरोधं स्मारयति— **नन्विति**। औपाधिकमाकारभेदमादाय प्रत्याह— **अयमपीति**। उभयरूपत्वस्वीकारेण विरोधसमाधिवदित्यपेरर्थः।

**अन्यथा हि निर्विषयमेव भेदशास्त्रं प्रसज्येतेति चेत्? नेति ब्रूमः। कस्मात्? प्रत्येकमतद्वचनात्। प्रत्युपाधिभेदं ह्यभेदमेव ब्रह्मणः श्रावयति शास्त्रम्– 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा' (बृ.उ. २।५।१) इत्यादि। अतश्च न भिन्नाकारयोगो ब्रह्मणः शास्त्रीय इति शक्यते वक्तुम्। भेदस्योपासनार्थत्वादभेदे तात्पर्यात्।।१२।।**

## अपि चैवमेके।।१३।।

**अपि चैवं भेददर्शननिन्दापूर्वकमभेददर्शनमेवैके शाखिनः समामनन्ति– 'मनसैवेदमाप्तव्यं नेह नानाऽस्ति किंचन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (क.उ. ४।११) इति। तथाऽन्येऽपि 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म मे तत्' (श्वे.उ. १।१२) इति समस्तस्य भोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावतामधीयते।।१३।।**

**कथं पुनराकारवदुपदेशिनीष्वनाकारोपदेशिनीषु च ब्रह्मविषयासु श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते, न पुनर्विपरीतमिति। अत उत्तरं पठति–**

## अरूपवदेव हि तत्प्रधानत्वात्।।१४।।

### *प्रकटार्थविवरणम्*

रूपभेदो ब्रह्मण्युपचर्यते, किंवोपाधिसन्निधानात् तत्त्वत एव ब्रह्मणोऽपि भेदो जायत इति? प्रथमे नोभयरूपतासिद्धिः, द्वितीये श्रुत्यन्तरविरोध इत्याह— **नेति ब्रूम इत्यादिना।**

**अपि चैवमेके।।** भेददर्शननिन्दापूर्वकमभेदोपदेशादपि न तत्त्वभेदः शास्त्रीय इत्याह— **अपि चैवमिति।** भोक्ता जीवो, भोग्यं रूपादिविषयजातं प्रेरितारं ईश्वरं च मत्वा विचार्य तत्सर्वं त्रिविधं मे मम प्रोक्तं ब्रह्मैवेति जानीयादित्यर्थः।

उत्तरसूत्रशङ्कामाह— **कथं पुनरिति।** तत्परातत्परयोः विरोधे तत्परं बलवदिति [1]न्यायः।

**अरूपवदेव हि तत्प्रधानत्वात्।।** विनिगमनकारणमाह— **अरूपवदेव हीति।**

### *भाष्यभावप्रकाशिका*

ननूपाधितोऽप्याकारभेदोऽनुपपन्न इत्युक्तमित्यत्राह— **अन्यथा हीति।** तस्य वाक्यस्यार्थमाह— **समस्तस्येति।**

### *न्यायनिर्णयः*

आकारभेदो नोपाधितोऽपीत्युक्तमित्याशङ्क्याह— **अन्यथेति।** रूपभेदवादिशास्त्रप्रामाण्यार्थमौपाधिकस्तद्भेदो वक्तव्य इत्यर्थः। किमुपाधिगत एव रूपभेदो ब्रह्मण्युपचर्यते, किं वोपाधिसंनिधेस्तत्त्वत एव ब्रह्मणोऽपि भेदो जायते? प्रथमे ब्रह्मणो नोभयरूपतेत्यभिप्रेत्याह— **नेतीति।** आकाङ्क्षापूर्वकं हेतुमवतार्य व्याकुर्वन् द्वितीये श्रुत्यन्तरविरोधमाह— **कस्मादित्यादिना।** कल्पद्वयफलमाह— **अतश्चेति।।१२।।**

भेददर्शननिन्दयाऽभेदोक्तेरपि न तात्त्विको भेदः शास्त्रीयोऽस्तीत्याह— **अपि चेति।** सूत्रं व्याकरोति— **अपि चेत्यादिना।** भोक्ता जीवो भोग्यं शब्दादि तदुभयं प्रेर्यं प्रेरितारं च नियन्तारमीश्वरं मत्वा विचार्य तत्सर्वं त्रिविधं मे मम प्रोक्तं ब्रह्मैवेति जानीयादित्यर्थः। उक्तवाक्यार्थमाह— **समस्तस्येति।।१३।।**

उत्तरसूत्रव्यावर्त्यां शङ्कामाह— **कथमिति।** श्रुतीनां तुल्यत्वाद् ब्रह्मणो निर्विशेषत्वे नियामकं नास्तीत्यर्थः। तत्परातत्परविरोधे तत्परं बलवदिति न्यायं नियामकं वदन्ननन्तरसूत्रमवतारयति— **अत इति।**

---

१. '.....न्यायं विनिगमनकारणमाह—' इति पाठः स्यात्।

**रूपाद्याकाररहितमेव ब्रह्मावधारयितव्यम्, न रूपादिमत्। कस्मात्? तत्प्रधानत्वात्। 'अस्थूलमनणव-ह्रस्वमदीर्घम्' (बृ.उ. ३।८।८) 'अशब्दमस्पर्शमरूपमव्ययम्' (क.उ. ३।१५। मुक्ति. २।७२) 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म' (छा.उ. ८।१४।१) 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः' (मु.उ. २।१।२), 'तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः' (बृ.उ. २।५।१९) इत्येवमादीनि वाक्यानि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि, नार्थान्तरप्रधानानीत्येतत् प्रतिष्ठापितं 'तत्तु समन्वयात्' (ब्र. सू. १।१।४) इत्यत्र। तस्मादेवंजातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्मावधारयितव्यम्। इतराणि त्वाकारवद्ब्रह्मविषयाणि वाक्यानि न तत्प्रधानानि। उपासनाविधिप्रधानानि हि तानि; तेष्वसति विरोधे यथाश्रुतमाश्रयितव्यम्; सति तु विरोधे तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसि भवन्तीत्येष विनिगमनायां हेतुः, येनोभयीष्वपि श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते, न पुनर्विपरीतमिति।।१४।।**

**का तर्ह्याकारवद्विषयाणां श्रुतीनां गतिरित्यत आह–**

## प्रकाशवच्चावैयर्थ्यात्।।१५।।

**यथा प्रकाशः सौरश्चान्द्रमसो वा वियद् व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसंबन्धात् तेष्वृजुवक्रादिभावं प्रतिपद्यमानेषु तद्भावमिव प्रतिपद्यते, एवं ब्रह्मापि पृथिव्याद्युपाधिसंबन्धात् तदाकारतामिव प्रतिपद्यते; तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते। एवमवैयर्थ्यमाकारवद्ब्रह्मविषयाणामपि वाक्यानां भविष्यति। न हि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिदनर्थवत्त्वमिति युक्तं प्रतिपत्तुम्, प्रमाणत्वाविशेषात्।**

### *प्रकटार्थविवरणम्*

**प्रकाशवच्चावैयर्थ्यात्**।। अनिर्वाच्यप्रपञ्चाकारालम्बना भेदश्रुतय इति गतिमाह— **प्रकाशवच्चेति**।

### *भाष्यभावप्रकाशिका*

नन्वितरेषामपि तत्प्रधानत्वमसिद्धमुपासना(वि)शेषत्वसंभवादित्याशङ्क्याह— **एतत्प्रतिष्ठापितमिति**। स्वशेषिविरोधाभावात्तेषां स्वार्थे प्रामाण्यमुक्तमित्याशङ्क्यान्यपराणां 'यस्य पर्णमयी जुहूर्भवती'त्यादिवाक्यानां स्वशेषिविरोधाभावेऽपि प्रमाणान्तरविरोधादेवा-प्रामाण्यदर्शनादिहापि सप्रपञ्चवाक्यानां तत्परवाक्यप्रमाणविरोधे न स्वार्थे प्रामाण्यसंभव इत्याह— **तेष्वसतीति**।

उत्तरसूत्र...[मवता]रयति— **का तर्हीति**। नन्वनाकारस्य ब्रह्मणः किमर्थोऽयमाकारोपदेश इति [तत्राह—] **तदालम्बन इति**। सूत्रपदं व्याचष्टे— **एवमिति**। निष्प्रपञ्चवाक्यविरोधाद्वैयर्थ्यमेव किं न स्यादित्यत आह— **न हि वेदेति**।

### *न्यायनिर्णयः*

तत्र प्रतिज्ञां विभजते— **रूपादीति**। प्रश्नद्वारा नियामकमुक्त्वा विवृणोति— **कस्मादित्यादिना**। एतेषामपि तत्प्रधानत्वमुपास्ति-विधिशेषत्वादसिद्धमित्याशङ्क्याह— **इत्येतदिति**। समन्वयाधिकरणमुपजीव्य फलितमाह— **तस्मादिति**। सप्रपञ्चवाक्यानामपि तुल्यं तत्प्रधानत्वमित्याशङ्क्याह— **इतराणीति**। तेषां वस्तुपरत्वाभावे हेतुमाह— **उपासनेति**। तेषामपि स्वशेष्यविरोधादुक्ता स्वार्थे मानतेत्याशङ्क्य पर्णमयीवाक्यवन्मानान्तरविरोधान्नैवमित्याह— **तेष्विति**। विरोधस्य तुल्यत्वात् कुतो निर्धारणेत्याशङ्क्याह— **सतीति**। उक्तहेतुकृतां विनिगमनामेवाभिनयति— **येनेति**।।१४।।

सूत्रान्तरं प्रश्नपूर्वकमवतारयति— **का तर्हीति**। दृष्टान्तं व्याचष्टे— **यथेति**। चकारार्थं दार्ष्टान्तिकमाह— **एवमिति**। किमर्थो ब्रह्मणो निराकारस्याकारोपदेशः, तत्राह— **तदिति**। अवैयर्थ्यादित्यत्र प्रातिपदिकार्थमाह— **एवमिति**। निष्प्रपञ्चवाक्यविरोधाद् वैयर्थ्यमेव तेषां किं न स्यादित्याशङ्क्य प्रत्ययार्थमाह— **न हीति**।

**नन्वेवमपि यत् पुरस्तात् प्रतिज्ञातं नोपाधियोगादप्युभयलिङ्गत्वं ब्रह्मणोऽस्तीति, तद् विरुध्यते। नेति ब्रूमः। उपाधिनिमित्तस्य वस्तुधर्मत्वानुपपत्तेः। उपाधीनां चाविद्याप्रत्युपस्थापितत्वात्। सत्यामेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र तत्रावोचाम।।१५।।**

**आह च तन्मात्रम्।।१६।।**

**आह च श्रुतिश्चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म- 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ.उ. ४।५।१३) इति। एतदुक्तं भवति- नास्यात्मनोऽन्तर्बहिर्वा चैतन्यादन्यद् रूपमस्ति; चैतन्यमेव तु निरन्तरमस्य स्वरूपम्। यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति, न रसान्तरं तथैवेति।।१६।।**

**दर्शयति चाथो अपि स्मर्यते।।१७।।**

***प्रकटार्थविवरणम्***

**आह च तन्मात्रम्।।** इतश्च मिथ्याभेदालम्बना एव भेदश्रुतयः; स्वतस्तु निर्विशेषं ब्रह्मेत्याह— **आह च तन्मात्रमिति।**

**दर्शयति चाथो अपि स्मर्यते।।** किंच श्रुतिस्मृत्योः परप्रतिषेधेन ब्रह्मोपदेशादपि निर्विशेषं ब्रह्मेत्याह— **दर्शयति चेति।**

***भाष्यभावप्रकाशिका***

ननूपाधीनामविद्यात्मकत्वमयुक्तं शास्त्रप्रमाणतस्तत्प्रतिपत्तिव्यतिरेकेण तद्विशिष्टोपास...भवादित्याशङ्क्य(ाह—) तत्त्वावेदकप्रमाणात् ब्रह्मप्रतिपत्तावविद्यानिवृत्तेरुपासनादिव्यवहारोऽपि निवर्तते। तेन व्यावहारिकसत्त्वेऽपि न परमार्थसत्त्वमित्याह— **सत्यामेव चेति।**

कीदृशं तर्हि निर्विशेषं ब्रह्मेति तत्राह— **आह चेति।** श्रुतिं पठति— **स यथेति।** ननु सगुणस्यैव दृष्टान्तत्वेनोपादानात् ब्रह्मणोऽपि सगुणत्वमायातमित्याशङ्क्य विवक्षितमर्थमाह— **एतदिति।**

अन्यव्यावृत्तिमुखेन बोध्यमानत्वादपि स्वगतविशेषशून्यं तदित्यवगम्यते, अन्यथा तदीयविशेषकथनेनापि प्रतिपादनोपपत्तावितरव्यावृत्तिव्यपदेशस्यासमञ्जसत्वमित्याह— **दर्शयति चेति।**

***न्यायनिर्णयः***

पूर्वापरविरोधं शङ्कते— **नन्विति। एवमपीति।** उक्तरीत्या श्रुतीनां व्यवस्थितत्वेऽपीत्यर्थः। औपाधिकमुभयलिङ्गत्वं वास्तवमुपेत्य विरोधः साध्यते, किंवाऽविद्याकृतमिति विकल्प्याद्यं निराह— **नेतीति। वस्तुधर्मत्वानुपपत्तेः** वस्तुनो धर्मः सत्यत्वं तद्वत्ताऽसिद्धेरिति यावत्। इतश्च नोपाधिकृतनानात्वस्य सत्यतेत्याह— **उपाधीनां चेति।** न तेषामाविद्यत्वं शास्त्रतस्तद्धियं विना तद्विशिष्टोपास्त्ययोगादित्याशङ्क्य तत्त्वावेदकमानाद् ब्रह्मज्ञाने तदज्ञानध्वस्तेरुपास्त्यादिव्यवहारस्यापि निरवकाशत्वादुपाधीनां व्यावहारिकसत्त्वेऽपि न तात्त्विकतेत्याह— **सत्यामिति।** आविद्यकं तु नानात्वं न विरोधहेतुः, तस्य पूर्वमपि सर्वव्यवहारहेतोरुपगतेरिति मत्वाऽऽह— **तत्र तत्रेति।।१५।।**

कीदृशं तर्हि निर्विशेषं ब्रह्म, तत्रोक्तम्— **आहेति।** तद् विभजते— **आह चेति।** मात्रचोऽर्थमाह— **विलक्षणेति।** काऽसौ श्रुतिस्तामाह— **स यथेति।** एकरसे चिन्मात्रे स दृष्टान्तो यथा येन प्रकारेण लोके सैन्धवस्य घनो मूर्तिविशेषः खिल्यभावोऽन्तर्बहिर्भेदशून्यः सर्वो लवणैकरसस्तथैवायमात्माऽन्तर्बहिर्विभागरहितः समस्तोऽपि प्रकृष्टज्ञप्त्येकतानस्तिष्ठतीत्यर्थः। सविशेषस्यैव सैन्धवघनस्य दृष्टान्तितत्वाद् दार्ष्टान्तिकस्यापि ब्रह्मणः सविशेषत्वं, दृष्टान्तदार्ष्टान्तिकयोरैकरूप्यादित्याशङ्क्याह— **एतदिति।।१६।।**

अन्यापोहमुखेन बोध्यमानत्वादपि स्वगतविशेषशून्यं ब्रह्म। विशेषवत्त्वे तदुक्त्याऽपि प्रतिपादनसिद्धावितरव्यावृत्तिवैयर्थ्यादित्याह—

**दर्शयति च श्रुतिः पररूपप्रतिषेधेनैव ब्रह्म, निर्विशेषत्वात्– 'अथात आदेशो नेति नेति' (बृ.उ. २।३।६) इति, 'अन्यदेव तद्विदितादथो अविदितादधि' (के.उ. १।३) 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह' (तै.उ. २।९।१) इत्येवमाद्या। बाष्कलिना च बाध्वः पृष्टः सन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते– 'स होवाचाधीहि भो इति स तूष्णीं बभूव तं ह द्वितीये वा तृतीये वा वचन उवाच ब्रूमः खलु त्वं तु न विजानासि। उपशान्तोऽयमात्मा' इति। तथा स्मृतिष्वपि परप्रतिषेधेनैवोपदिश्यते– 'ज्ञेयं यत् तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते। अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते' (भ.गी. १३।१२) इत्येवमाद्यासु। तथा विश्वरूपधरो नारायणो नारदमुवाचेति स्मर्यते– 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद। सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि' (म.भा.१२-३३९-४५) इति।।१७।।**

## अत एव चोपमा सूर्यकादिवत्।।१८।।

**यत एव चायमात्मा चैतन्यरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधोपदेश्योऽत एव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यकादिवदित्युपमोपादीयते मोक्षशास्त्रेषु– 'यथा ह्ययं ज्योतिरात्मा**

### *प्रकटार्थविवरणम्*

आदिमत् [न आदिमत्] अनादिमत्। भूतत्रयवत् प्रत्यक्षसद्बुद्धिगोचरत्वाभावान्न सत्, नापि तदसदुच्यते नास्तिबुद्धिगोचरत्वाभावादित्यर्थः।

**अत एव चोपमा सूर्यकादिवत्।।** किंच जलसूर्यकोपमोपादानादपि निर्विशेषतैव स्वाभाविकी; ईश्वरत्वादिविशेषवत्ता तु उपाधिसम्बन्धेनेत्याह— **अत एव चोपमेति।**

### *भाष्यभावप्रकाशिका*

विशिष्टदृष्टान्तोपादानमपि निर्विशेषत्वं गमयतीत्याह— **यत एवेति।** विवस्वान् यथा बहुधा क्रियते एवमात्मा भेदरूपः।

### *न्यायनिर्णयः*

**दर्शयतीति।** सूत्रं व्याचष्टे— **दर्शयतीत्यादिना।** अन्यनिषेधेनैव ब्रह्मोक्तौ स्वगतविशेषाभावे हेतुमाह— **निर्विशेषत्वादिति।** रूपद्वयव्याख्यानन्तर्यमथशब्दार्थः। तस्य ब्रह्मधीहेतुत्वमतःशब्दार्थः। विदितं कार्यमविदितं कारणम्। अथो इति निपातोऽप्यर्थः। अधीत्युपरिष्टादन्यदित्यर्थः। [१]तमानन्दं ब्रह्मस्वभावं विद्वान् न कुतश्चन बिभेतीति शेषः। तत्रैव श्रुत्यन्तरमाह— **बाष्कलिनेति।** स तु प्रश्ने कृते बाध्वस्य तूष्णींभावे भावमविद्वान् भूयो भूयः पप्रच्छ तं पुनरतिनिर्बन्धकारिणं बाध्वो द्वितीये तृतीये वा प्रश्ने प्रत्युक्तवानित्याह— **तं हेति।** उक्तं चेदुत्तरं किमिति न मया ज्ञातं, तत्राह— **त्वं त्विति।** कथं तूष्णींभाव एवोत्तरम्, तत्राह— **उपशान्त इति।** अथो इत्यादि व्याचष्टे— **तथेति।** सूत्रगताथोशब्दस्तथेत्यर्थे ज्ञेयः। उक्तिफलमाह— **यदिति।** ज्ञेयमेव विशिनष्टि— **अनादिमदिति।** आदिरस्यास्तीत्यादिमत् कार्यं तदस्य नास्तीत्यनादिमत् कार्यरहितमित्यर्थः। स्वयं च न कार्यमित्याह— **न सदिति।** न च तत्कारणमित्युक्तम्— **नासदिति।** तथा वास्तवनिर्विशेषत्ववशेनेति यावत्। सर्वेषां भूतानां पृथिव्यादीनां गुणा गन्धादयः, सर्वप्राणभृतां वा गुणा जनकत्वपालकत्वादयस्तैर्युक्तं मां पश्यसीति यदेतदेषा माया मया सृष्टेति योजना। कस्मादेषा मायेत्युक्ते निर्विशेषश्रुतिमाश्रित्याह— **नैवमिति।।१७।।**

विशिष्टदृष्टान्तोक्तिरपि निर्विशेषत्वमस्य गमयतीत्याह— **अत इति।** सूत्राक्षराणि व्याचष्टे— **यत इति।** पूर्वोक्तसर्वरूपाण्युपादाय विशेषाणामुपाधिनिमित्तत्वे विशेषवत्तायाः सत्यत्वं शङ्कित्वोक्तमपारमार्थिकीमिति। **जलसूर्यकादिवदिति।** कप्रत्ययो बिम्बाद्भेदेन प्रतिबिम्बस्याभासत्वधिया प्रयुक्तः। तान्येव मोक्षशास्त्राणि संक्षिप्याह— **यथेति।** अयं हि विवस्वाञ्ज्योतिःस्वभावः स्वयमेकोऽपि

---

१. 'यतो वाचो निवर्तन्ते' इति भाष्योदाहृतायाः श्रुतेर्निर्विशेषपरत्वस्फुटीकरणार्थं शेषं पूरयति— तमित्यादिना।

**विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इति, 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' (ब्र. बि. १२) इत्येवमादिषु।।१८।।**

**अत्र प्रत्यवस्थीयते–**

**अम्बुवदग्रहणात्तु न तथात्वम्।।१९।।**

**न जलसूर्यकादितुल्यत्वमिहोपपद्यते, तद्वदग्रहणात्। सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते। तत्र युक्तः सूर्यादिप्रतिबिम्बोदयः। न त्वात्मा मूर्तः, न चास्मात् पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः। सर्वगतत्वात् सर्वानन्यत्वाच्च। तस्मादयुक्तोऽयं दृष्टान्त इति।।१९।।**

**अत्र प्रतिविधीयते–**

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्।।२०।।**

**युक्त एव त्वयं दृष्टान्तो विवक्षितांशसंभवात्। न हि दृष्टान्तदार्ष्टान्तिकयोः क्वचित् कंचिद् विवक्षितांशं**

*प्रकटार्थविवरणम्*

**अम्बुवदग्रहणात्तु न तथात्वम्।।** वैषम्याभिधानेन पूर्ववादिना प्रत्यवस्थानं क्रियत इत्याह— **अत्र प्रत्यवस्थीयत इति।**

उपाध्यन्तर्भूतत्वेन तदनुप्रविष्टतया तद्गतधर्मभागित्वस्य विवक्षितांशस्य संभवान्न वैषम्यमात्रेण प्रतिषेधो युक्त इत्याशङ्क्याह [इत्याह]— **अत्र प्रतिविधीयत इति।**

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्।।** ब्रह्म न प्रतिबिम्बभावं गन्तुमर्हति, अमूर्तत्वात्, गन्धवदिति प्रयोगे तावदप्रयोजकत्वमेकं दूषणम्; रूपे चानेकान्तः, रूपवतः सूर्यादेः प्रतिबिम्बभावे रूपस्यापि प्रतिबिम्बभावस्यावर्जनीयत्वात्। [1]विच्छिन्नदेशस्थोपाधिविधुरत्वात् इत्यस्याकाशे व्यभिचारः स्फुट एवेति नोद्भावितः।

*भाष्यभावप्रकाशिका*

उत्तरसूत्रमवतारयति— **अत्रेति।** तद्वदग्रहणं दर्शयितुं दृष्टान्तस्वरूपं कथयति— **सूर्यादिभ्यो हीति।** इदानीं तद्वैषम्यमाह— **न त्वात्मेति।**

दृष्टान्तदार्ष्टान्तिकयोरत्यन्तं साम्येन भवितव्यमित्युच्यते, क्रिया [किंवा] विवक्षितांशेन? यदि विवक्षितांशेन तदस्तीत्याह— **युक्त एवेति।** आद्ये दूषयति— **न हि दृष्टान्तेति।** उपाधेर्भिन्नत्वं भिन्नदेशत्वं च तत्र दृष्टमिह तदभावाद्रूपशून्यत्वाच्च ब्रह्मणो

*न्यायनिर्णयः*

तत्तत्पात्रगता भिन्ना अपोऽनुगच्छन् बहुधा क्रियते। एवमयमात्मा तत्तत्क्षेत्रेष्वनुगच्छन् कूटस्थस्वप्रकाशचिद्धातुरेकोऽपि सन्नुपाधिना भेदरूपः क्रियत इति योजना। आदिशब्दोपात्तं जलचन्द्रकोपमानं दर्शयति— **एक एवेति।।**१८।।

उत्तरसूत्रमवतारयति— **अत्रेति।** श्रौतः स्मार्तश्च दृष्टान्तः सप्तम्यर्थः। 'न तथात्व'मिति व्याचष्टे— **नेत्यादिना।** इहेत्यात्मोक्तिः। हेतुमवतार्य तद्वदग्रहणं दर्शयितुं दृष्टान्तस्वरूपमाह— **सूर्यादिभ्यो हीति।** दार्ष्टान्तिके तद्वैषम्यमाह— **न त्विति।** उपाधीनामात्मनो विप्रकृष्टदेशत्वाभावे हेतुमाह— **सर्वगतत्वादिति।** तेषां तस्मात् पृथग्भूतत्वाभावे हेतुमाह— **सर्वेति।** वैषम्यफलमाह— **तस्मादिति।।**१९।।

चोद्यमनूद्य सिद्धान्तयति— **अत्रेति।** दृष्टान्तदार्ष्टान्तिकयोर्विवक्षितांशेन वा सर्वात्मना वा साम्यम्; तत्राद्यमङ्गीकरोति—

---

१. ब्रह्म न प्रतिबिम्बभावं गन्तुमर्हति, विच्छिन्नदेशस्थोपाधिविधुरत्वादिति प्रयोगान्तरं दूषयति—विच्छिन्नेति। विप्रकृष्टेत्यर्थः।

**मुक्त्वा सर्वसारूप्यं केनचिद् दर्शयितुं शक्यते। सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात्। न चेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनम्। शास्त्रप्रणीतस्य त्वस्य प्रयोजनमात्रमुपन्यस्यते। किं पुनरत्र विवक्षितं सारूप्यमिति? तदुच्यते- वृद्धिह्रासभाक्त्वमिति। जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते, जलह्रासे ह्रसति, जलचलने चलति, जलभेदे भिद्यत इत्येवं जलधर्मानुविधायि[१] भवति; न तु परमार्थतः सूर्यस्य तथात्वमस्ति। एवं परमार्थतोऽविकृतमेकरूपमपि सद् ब्रह्म देहाद्युपाध्यन्तर्भावाद् भजत इवोपाधिधर्मान् वृद्धिह्रासादीन्। एवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोधः।।२०।।**

## दर्शनाच्च।।२१।।

**दर्शयति च श्रुतिः परस्यैव ब्रह्मणो देहादिषूपाधिष्वन्तरनुप्रवेशम्- 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्' (बृ.उ. २।५।१८) इति, 'अनेन जीवेनात्मनाऽनुप्रविश्य' (छा.उ. ६।३।२) इति च। तस्माद् युक्तमेतत्- 'अत एव चोपमा सूर्यकादिवत्' (ब्र.सू. ३।२।१८) इति। तस्मान्निर्विकल्पकैकलिङ्गमेव ब्रह्म, नोभयलिङ्गं विपरीतलिङ्गं चेति सिद्धम्।**

**अत्र केचिद् द्वे अधिकरणे कल्पयन्ति। प्रथमं तावत्- किं प्रत्यस्तमिताशेषप्रपञ्चमेकाकारं ब्रह्मोत**

### *प्रकटार्थविवरणम्*

**दर्शनाच्च।।** इदानीमागमविरोधमाह— **दर्शनाच्चेति**। द्विपदः मनुष्याः। पुरः पुराणि चक्रे। पुरः पूर्वं स ईश्वरः पक्षी भूत्वा जीवरूपेण पुरः प्रविष्टः इत्यर्थः। यस्मात् प्रतिबिम्बपक्षोऽयं श्रुतिमूलः तस्मादित्युपसंहारः। मूलविचारं निगमयति— **तस्मादिति**।

एवं तावत् स्वाभिप्रायेणाधिकरणं व्याख्याय एकदेशिव्याख्यानमुद्भावयति— **अत्र केचिदिति**। 'न स्थानतोऽपि' इत्येतद्गतं

### *भाष्यभावप्रकाशिका*

न प्रतिबिम्बभावः कल्प्य इत्याशङ्क्य नास्माभिः कल्प्यते शास्त्रसिद्धत्वादित्याह— **न चेदमिति**। सूत्रभागस्यार्थमाह— **एवमुभयोरिति**।

पुरः स पक्षी भूत्वा पुरः पूर्वकाले सृष्टिसमये धर्माधर्मपक्षद्वययुक्तःसन् पुरः शरीराण्याविशदित्यर्थः।

### *न्यायनिर्णयः*

**युक्त इति**। द्वितीयं निराह— **न हीति**। उपाधेर्भिन्नत्वं भिन्नदेशत्वं च दृष्टान्ते दृष्टमिह तदभावाद् रूपशून्यत्वाच्च ब्रह्मणो न प्रतिबिम्बं कल्प्यमित्याशङ्क्याह— **न चेति**। शास्त्रीये दृष्टान्ते किं सूत्रेणेत्याशङ्क्याह— **शास्त्रेति**। प्रयोजनमात्मनो निर्विशेषत्वज्ञानम्। विवक्षितांशेन साम्येऽपि सर्वात्मना साम्यमतिप्रसङ्गीत्युक्तम्; इदानीमाकाङ्क्षापूर्वकं सूत्रमादाय विभजते— **किमित्यादिना**। वृद्धिह्रासेत्यादि व्याख्यायावशिष्टं व्याचष्टे— **एवमिति**। अविरोधस्तद्भावस्येति शेषः।।२०।।

ब्रह्म न प्रतिबिम्बभावं गन्तुमलममूर्तत्वाद् गन्धवदित्यत्राप्रयोजकत्वमुक्त्वा दोषान्तरमागमविरोधमाह— **दर्शनाच्चेति**। सूत्रं विवृणोति— **दर्शयतीति**। द्विपदोपलक्षितानि मनुष्यादिशरीराणि, चतुष्पदोपलक्षितानि च पश्वादिशरीराणि; पुरश्चक्रे; पुरश्चक्षुराद्यभिव्यक्तेः पुरस्तादेव स स्रष्टेश्वरः पक्षी लिङ्गशरीरी भूत्वा पुरस्तान्येव सृष्टानि शरीराण्याविशत् प्रविष्टवान्। स च वस्तुवृत्त्या पुरुषः पूर्णस्तदतिरिक्तवस्त्वभावादित्यर्थः। प्रतिबिम्बपक्षस्य श्रुतिमूलत्वे फलितमाह— **तस्मादिति**। स्वसिद्धान्तमुपसंहरति— **तस्मान्निर्विकल्पेति**।

स्वमतेनाधिकरणमुक्त्वा स्वयूथ्यमतमुत्थापयति— **अत्रेति**। व्याख्यातेषु सूत्रेष्विति यावत्। 'न स्थानतोऽपी'त्यादि 'प्रकाशवच्चे'त्यतः

---

१. 'धर्मानुयायि' इति पा.।

**प्रपञ्चवदनेकाकारोपेतमिति। द्वितीयं तु– स्थिते प्रत्यस्तमितप्रपञ्चत्वे किं सल्लक्षणं ब्रह्मोत बोधलक्षणमुतोभय-लक्षणमिति। अत्र वयं वदामः– सर्वथाऽप्यानर्थक्यमधिकरणान्तरारम्भस्येति। यदि तावदनेकलिङ्गत्वं परस्य ब्रह्मणो निराकर्तव्यमित्ययं प्रयासः, तत् पूर्वेणैव 'न स्थानतोऽपि' इत्यनेनाधिकरणेन निराकृतमित्युत्तरमधिकरणं 'प्रकाशवच्च' इत्येतद् व्यर्थमेव भवेत्। न च सल्लक्षणमेव ब्रह्म, न बोधलक्षणमिति शक्यं वक्तुम्। 'विज्ञानघन एवे'त्यादिश्रुतिवैयर्थ्यप्रसङ्गात्। कथं वा निरस्तचैतन्यं ब्रह्म चेतनस्य जीवस्यात्मत्वेनोपदिश्येत? नापि बोधलक्षणमेव ब्रह्म, न सल्लक्षणमिति शक्यं वक्तुम्, 'अस्तीत्येवोपलब्धव्यः' (क.उ. ६।१३) इत्यादिश्रुतिवैयर्थ्यप्रसङ्गात्। कथं वा निरस्तसत्ताको बोधोऽभ्युपगम्येत? नाप्युभयलक्षणमेव ब्रह्मेति शक्यं वक्तुम्। पूर्वाभ्युपगमविरोधप्रसङ्गात्। सत्ताव्यावृत्तेन च बोधेन, बोधव्यावृत्तया च सत्तयोपेतं ब्रह्म प्रतिजानानस्य तदेव पूर्वाधिकरणप्रतिषिद्धं सप्रपञ्चत्वं ब्रह्मणः प्रसज्येत। श्रुतत्वाददोष इति चेत्? न; एकस्यानेकस्व-**

***प्रकटार्थविवरणम्***

विचारमाह— **प्रथमं तावदिति**। द्वितीयं त्वधिकरणम् 'प्रकाशवच्च' इति। न केवलं सद्रूपं ब्रह्म, किं त्व[ किं तु ]चैतन्यप्रकाशवच्च [१]उभयश्रुत्यर्थवैलक्षण्यादिति पूर्वः पक्षः। 'आह च तन्मात्रम्' इति सिद्धान्तः। सन्दिग्धं सप्रयोजनं च विचार्यं भवति। तत्राधि-करणान्तरारम्भे किं प्रयोजनम्? न किंचिदस्ति। सन्देहो वा विद्यत इति वक्तव्यम्। सर्वथाऽपि नारम्भः संभवतीत्युक्तम्। तत्र प्रथमं प्रयोजनाभावमाह— **यदि तावदिति**। एकैकपक्षस्य सर्वथा युक्तिशून्यत्वात् सन्देहोऽपि नास्तीत्याह— **न च सल्लक्षणमेवेत्यादिना**। सत्ताविशिष्टो बोधो बोधविशिष्टा वा सत्ता ब्रह्मलक्षणमिति पूर्वपक्षोऽपि न युक्त इत्याह— **सत्ताव्यावृत्तेनेति**। उभयश्रुत्यनुरोधात् पूर्वपक्षो घटत इत्याह— **श्रुतत्वादिति**। विरुद्धमर्थं श्रुतिरपि न प्रतिपादयति; अतो न श्रुत्यवष्टम्भेनोभयात्मता शङ्कितुं शक्यत

***भाष्यभावप्रकाशिका***

**अत्र केचिदिति**। किं सल्लक्षणं प्रकाशलक्षणं च ब्रह्म उत प्रकाशलक्षणमेवेति विमर्शः। तत्र पूर्वपक्षसूत्रं **प्रकाशवच्चेति**। चकारात् सच्चेत्यर्थः। **अवैयर्थ्यादिति**। 'सत्यं ज्ञानं' 'सदेव सोम्ये'त्यादिश्रुतेः वैयर्थ्यपरिहारायेत्यर्थः। सिद्धान्तसूत्रम् **आह चेति**। सत्त्वं प्रकाशरूपादन्यत्र संभवतीत्यर्थः। तदेतद् दूषयति— **सर्वथापीति**। उभयथा लक्षण [२]नानेकलिङ्गत्वन्निराकर्तव्यम् किंवा सन्मात्रलक्षणत्वं न तावदाद्य इत्याह— **यदि तावदिति**। अथ द्वितीयस्तत्राह— **न च सल्लक्षणमिति**। एवं पूर्वपक्षोऽप्यनुपपन्न इत्यर्थः। इतोऽपि तेषां पूर्वपक्षोऽनुपपन्न इत्याह— **कथं वेति**। सिद्धान्तोऽपि तेषामयुक्त इत्याह— **नापि बोधेति**। न केवलं श्रुतिविरोधो युक्तिविरोधश्चेत्याह— **कथं वेति**। इतरोऽपि पूर्वपक्षोऽनुपपन्न इत्याह— **नाप्युभयेति**। पूर्वाधिकरणविरोधादित्यर्थः। तदेव प्रपञ्चयति— **सत्ताव्यावृत्तेनेति**। अन्योन्यविशेषितसत्तादिरूप इत्यर्थः।

***न्यायनिर्णयः***

प्रागेकमधिकरणम्; तद्गतं विचारं दर्शयति— **प्रथममिति**। 'प्रकाशवच्चे'त्यादि द्वितीयमधिकरणम्; तत्रत्यं विचारमाह— **द्वितीयं त्विति**। तत्र पूर्वपक्षसूत्रं 'प्रकाशवच्चे'ति। न केवलं सद्रूपमेव ब्रह्म, किंतु चैतन्यप्रकाशवच्च 'सत्यं ज्ञानं' 'सदेव' इत्युभयश्रुतेः एवं सत्यवैयर्थ्यात्। सिद्धान्तसूत्रम् 'आह चे'ति। सत्त्वं चैतन्यप्रकाशमात्रं 'सदेव' 'विज्ञानमानन्द'मित्याद्या श्रुतिराह; तत्र ब्रह्मणो नानारसत्वाशङ्केत्यर्थः। द्वितीयमधिकरणं दूषयति— **अत्रेति**। **सर्वथाऽपि** फलस्य संदेहस्य च भावेऽपीत्यर्थः। कथं फलस्य भावे वैयर्थ्यमित्याशङ्क्य तत् किमनेकरूपत्वनिराकरणं किंवा सन्मात्रत्वसाधनमथवा बोधमात्रत्वबोधनमिति विकल्प्याद्यं दूषयति— **यदीति**। द्वितीयं निरस्यति— **न चेति**। न केवलं श्रुतिविरोधोऽपि तु श्रुतार्थापत्तिविरोधश्चेत्याह— **कथं वेति**। एतेन पूर्वपक्षासिद्धिरुक्ता। तृतीयं प्रत्याह— **नापीति**। श्रुतिविरोधवद् युक्तिविरोधश्चास्तीत्याह— **कथमिति**। सतो व्यावृत्तस्य तुच्छत्वादित्यर्थः। एतेन सिद्धान्तासिद्धिरुक्ता। पूर्वपक्षान्तरमपि परस्यायुक्तं पूर्वाधिकरणविरोधादित्याह— **नापीति**। प्रसङ्गमेव प्रपञ्चयति— **सत्तेति**। तद्व्यावृत्तत्वं तद्विशेषितत्वम्। श्रुत्यवष्टम्भेन पूर्वपक्षसिद्धिं शङ्कते— **श्रुतत्वादिति**। विरुद्धमर्थं श्रुतिरपि न वदेदतो न तदवष्टम्भादुभयात्मता

१. 'उभयश्रुत्यवैयर्थ्यात्' इति पाठः स्यात्। २. अत्र पाठाशुद्धिः।

**भावत्वानुपपत्तेः। अथ सत्तैव बोधः, बोध एव च सत्ता, नानयोः परस्परव्यावृत्तिरस्तीति यद्युच्येत, तथापि किं सल्लक्षणं ब्रह्मोत बोधलक्षणमुतोभयलक्षणमित्ययं[१] विकल्पो निरालम्बन एव स्यात्। सूत्राणि त्वेकाधिकरणत्वेनैवास्माभिर्नीतानि। अपि च ब्रह्मविषयासु श्रुतिष्वाकारवदनाकारप्रतिपादनेन विप्रतिपन्नास्वनाकारे ब्रह्मणि परिगृहीतेऽवश्यं वक्तव्येतरासां श्रुतीनां गतिः। तादर्थ्येन 'प्रकाशवच्चे'त्यादीनि सूत्राण्यर्थवत्तराणि संपद्यन्ते।**

**यदप्याहुः– आकारवादिन्योऽपि श्रुतयः प्रपञ्चप्रविलयमुखेनानाकारप्रतिपत्त्यर्था एव, न पृथगर्था इति; तदपि न समीचीनमिव लक्ष्यते। कथम्? ये हि परविद्याधिकारे केचित् प्रपञ्चा उच्यन्ते, यथा– 'युक्ता**

### *प्रकटार्थविवरणम्*

इत्याह— **नैकस्येति**। विरोधपरिहारायाखण्डवाक्यार्थं शङ्कते— **अथ सत्तैवेति**। सद्बोधशब्दौ शून्यत्वजडत्वव्युदासेनैकामेव व्यक्तिं लक्षयत इति नानयोर्विशेषणविशेष्यभावोऽस्ति, भेदाधिष्ठानत्वात् तस्येति भावः। न चैवं पर्यायतापत्तिः निमित्तभेदात्; प्रवृत्तिनिमित्तभेदमन्तरेणैकार्थवृत्तिता हि पर्यायता। न च वैयर्थ्यं पदान्तरस्य, व्यावर्त्यभेदात्; यथा केवल[लं]भूतलमिति पदद्वयं घटादिसंसर्गव्युदासेनैकस्यां व्यक्तौ पर्यवस्यति। तथा च प्रयोगः— सदादिपदमखण्डार्थनिष्ठम्, निषिद्धभेदवस्तुनि वर्तमानत्वात्, केवलादिशब्दवत्। विमतं वाक्यं नाखण्डनिष्ठम्, वाक्यत्वात्, संप्रतिपन्नवदिति न बाधकम्, 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादौ व्यभिचारात्; न चास्य संज्ञासंज्ञिपरत्वम्, [२]प्रश्नानु[नु]रूपस्थत्वप्रसङ्गात्। गुणगुणिभावेन भिन्नं वस्त्विति हेत्वसिद्धम् [हेतुरसिद्धः], "विज्ञानघन एव" इत्यादिश्रुतिविरोधात्। यच्च न निर्गुणं वस्त्विति तत् गुणेष्वेव व्यभिचरति; तस्मात् सदादिशब्दैः तत्तदनिष्टव्यपोहेनैकस्या एव व्यक्तेर्लक्ष्यमाणत्वान्नास्ति विशेषणविशेष्यभावो लक्ष्ये वस्तुनीति। एवंभूतं चेद् वस्त्वभिप्रेतम्, तर्हि व्यर्थो विकल्पप्रयासस्तवेत्याह— **तथापि किं सल्लक्षणमिति**। अथैकाधिकरणपक्षे सूत्राणि न सङ्गच्छन्त इति, तत्राह— **सूत्राणि त्विति**। इदानीं स्वपक्ष एव सूत्रसामञ्जस्यमाह— **अपि चेति**।

इदानीं भेदप्रपञ्चविलयपक्षमुद्भावयति— **यदप्याहुरिति**। "सत्यकामः सत्यसङ्कल्पः" इत्याद्याः श्रुतयोऽपि असत्यकामत्वादिप्रविलयद्वारेण निषेध्यसमर्पणेन वा निषेधवाक्येनैकवाक्यतया निराकाब्रह्मपरा एव, नासां पृथगर्थो वक्तव्य इत्यर्थः। दूषणं संभावयन्नाह— **तदपि नेति**। सत्यकामत्वादीनां प्रविलयार्थत्वानुपलम्भादित्यर्थः। ननु त्वयाऽपि केचित् प्रपञ्चाः प्रविलयार्था इष्यन्ते; तथा सत्यकामादयोऽपि भविष्यन्ति; कथं समीचीनं न दृश्यत इत्याह— **कथमिति**। निर्गुणविद्याप्रकरणस्थानां प्रविलयार्थत्वेऽ-

### *भाष्यभावप्रकाशिका*

नन्वेकाधिकरणत्वे सूत्राणामसङ्गतत्वात् भिन्नाधिकरणत्वमिति तत्राह— **सूत्राणीति**। पूर्वाधिकरणापेक्षितार्थप्रतिपादकत्वेनोत्तरसूत्राणां तच्छेषतामुपपादयति— **अपि चेति**।

केचित्पुनराकारवच्छ्रुतीनामन्यथागतिं वर्णयन्ति, तेषामनुवदति— **यदप्याहुरिति**। ननु सर्वासां श्रुतीनामेकवाक्यत्वमेव भवति। तत्कथमसमीचीनतेति शङ्कते— **कथमिति**। तत्र वक्तव्यं किं परविद्याप्रकरणपठिताकारवच्छ्रुतीनामेकवाक्यत्वं, किं वा

### *न्यायनिर्णयः*

शङ्कनीयेत्याह— **नैकस्येति**। विरोधं परिहर्तुं वाक्यार्थस्याखण्डतां चोदयति— **अथेति**। वाक्यार्थाखण्डत्वमुपेत्य परस्य संशयानुपपत्तिमाह— **तथापीति**। एकाधिकरणत्वे सूत्राणामसांगत्याद् भिन्नाधिकरणत्वमाशङ्क्याह— **सूत्राणीति**। इतश्च नाधिकरणभेदोऽस्तीत्याह— **अपि चेति**। पूर्वाधिकरणापेक्षितहेत्वन्तरवादित्वेनोत्तरसूत्राणां तच्छेषत्वसिद्धेर्न भेदकल्पनेति हेत्वन्तरमेव स्फुटयति— **ब्रह्मेति**।

आकारवद्ब्रह्मवादिश्रुतीनां प्रकारान्तरेण गतिरिति मतमनुवदति— **यदपीति**। प्रपञ्चप्रविलयपक्षं दूषयति— **तदपीति**। सर्वश्रुतीनामेकवाक्यत्वसंभवे किमिति तदसमीचीनतेति पृच्छति— **कथमिति**। परविद्याप्रकरणस्थानामाकारवद्ब्रह्मवादिश्रुतीनामेकवाक्यत्वं

१. 'इत्येवं विकल्पो' इति पा.। २. 'प्रश्नाननुरूपत्वप्रसङ्गात्' इति वेदान्ततत्त्वालोके पाठः।

ह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च' (बृ.उ. २।५।१९) इत्येवमादयस्ते [१]भवन्ति प्रविलयार्थाः, 'तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' (बृ.उ. २।५।१९) इत्युपसंहारात्। ये पुनरुपासना[२]धिकारे प्रपञ्चा उच्यन्ते, यथा– 'मनोमयः प्राणशरीरो भारूपः' (छा.उ. ३।१४।२) इत्येवमादयः, न तेषां प्रविलयार्थत्वं न्याय्यम्। 'स क्रतुं कुर्वीत' (छा.उ. ३।१४।१) इत्येवंजातीयकेन प्रकृतेनैवोपासनविधिना तेषां संबन्धात्। श्रुत्या चैवंजातीयकानां गुणानामुपासनार्थत्वेऽवकल्पमाने न लक्षणया प्रविलयार्थत्वमवकल्पते। सर्वेषां च साधारणे प्रविलयार्थत्वे सति 'अरूपवदेव हि तत्प्रधानत्वात्' (ब्र.सू. ३।२।१४) इति विनिगमनकारणवचनमनवकाशं स्यात्। फलमप्येषां यथोपदेशं क्वचिद् दुरितक्षयः, क्वचिदैश्वर्यप्राप्तिः, क्वचित् क्रममुक्तिरित्यवगम्यत एवेत्यतः पार्थगर्थ्यमेवोपासनावाक्यानां ब्रह्मवाक्यानां च न्याय्यम्, नैकवाक्यत्वम्। कथं चैषामेकवाक्यतोत्प्रेक्ष्यत इति वक्तव्यम्। एकनियोगप्रतीतेः प्रयाजदर्शपूर्ण-

*प्रकटार्थविवरणम्*

प्युपासनाप्रकरणपठितानां नास्ति विलापार्थत्वमुपासनार्थत्वादेवेत्याह— **ये हीत्यादिना**। युक्ताः संयुक्ताः रथ इव वाजिनः विषयप्रकाशनायास्यात्मनो हरयः हरणादिन्द्रियाणि दश, प्राणिभेदापेक्षया च शता शतानि। तस्मादिन्द्रियाणां विषयप्रकाशनार्थमेव नियुक्तत्वादात्मा स्वतः प्रज्ञानघनरूपेण न प्रकाशते, किं तु बहुरूप एव गृह्यत इत्यर्थः। तर्ह्ययमन्यः; अन्ये च हरय इत्याशङ्क्याह— "अयं वै हरयः" एतद्व्यतिरेकेण पृथग्वस्तुभूता न भवन्तीत्यर्थः। प्रतिप्राणि दश प्राणिभेदापेक्षया च बहून्यनन्तानि सहस्राणि अयमेवेत्यर्थः। किंच "मनोमयः" इत्यादिवाक्यात् न साक्षात्प्रलयः [प्रविलयः] प्रतीयते, किं तु लक्षयितव्योऽसौ; न च श्रुतित्यागेन लक्षणाश्रयणं युक्तमित्याह— **श्रुत्या चैवमिति**। किं च सर्वेषां प्रलयार्थत्वं [प्रविलयार्थत्वं] सूत्रविरुद्धं चेत्याह— **सर्वेषां चेति**। नन्वध्ययनविध्युपात्तानामवश्यं पुरुषार्थपर्यवसायित्वं वक्तव्यम्; तत्सिद्धिश्च न प्रपञ्चविलयमन्तरेणेति सर्वस्य प्रविलयार्थत्वमेवास्थीयत इत्याशङ्क्याह— **फलमप्येषामिति**। एकवाक्यतायां कारणानुपलम्भादपि नैकवाक्यतेत्याह— **कथं चैषामिति**। एकवाक्यतायां कारणं शङ्कते— **एकनियोगेति**। यथैकस्वर्गकामिनियोगविषयत्वात् प्रयाजदर्शपूर्णमासवाक्ययोरेकवाक्यता,

*भाष्यभावप्रकाशिका*

सर्वासामिति। आद्यपक्षोऽङ्गीक्रियत इत्याह— **ये हि परविद्याधिकार इति**। उत्तरपक्षस्त्वनुपपन्न इत्याह— **ये पुनरिति**। प्रविलयार्थत्वे च तेषां मुख्यार्थबाधः श्रुतेः प्रसज्यत इत्याह— **श्रुत्या चेति**। किंच यदि काश्चिदप्याकारवादितया श्रुतयो नोपासनापरा भवेयुस्तदा सर्वासां प्रविलयार्थत्वेन निरूपणात् ब्रह्मप्रधानत्वादेता उपासनाविधिप्रधाना एतास्तु निष्प्रपञ्चब्रह्मतत्त्वप्रधाना इति विनिगमनं न स्यादित्याह— **सर्वेषां चेति**। ननु निष्प्रपञ्चवाक्य एव फलश्रवणादफलानां फलवदङ्गतान्यायेन सप्रपञ्च-

*न्यायनिर्णयः*

किं वोपास्तिप्रकरणस्थानामथवा सर्वासाम्? तत्राद्यमङ्गीकरोति— **ये हीति**। यथा रथे वाजिनो युज्यन्ते तथाऽस्यात्मनः संयुक्ताः स्वविषयप्रकाशनाय हरयो हरणादिन्द्रियाणि दश प्राणिभेदापेक्षया च शता शतानीत्युपक्रम्यात्मनश्चेन्द्रियाणां च भेदं शङ्कित्वोक्तम्— **अयमित्यादि**। तेषां प्रविलयद्वारा ब्रह्मवाक्येनैकवाक्यत्वे हेतुमाह— **तदेतदिति**। द्वितीयं दूषयति— **ये पुनरिति**। तेषां लयार्थत्वेन ब्रह्मवाक्यैकवाक्यत्वाभावे हेतुमाह— **स क्रतुमिति**। किंच मनोमयादिवाक्यात्र साक्षाल्लयो भाति, किंतु लक्षयितव्यः। न च श्रुतित्यागेन लक्षणा, श्रुतेर्बलीयस्त्वादित्याह— **श्रुत्या चेति**। तृतीयं प्रत्याह— **सर्वेषां चेति**। यदि हि काश्चिदपि श्रुतयो नाकारवादितयोपासनापराः स्युस्तदा सर्वासां लयार्थत्वेन निरूपणाद् ब्रह्मप्रधानत्वाविशेषाद् 'एता ध्यानविधिप्रधानाः, निष्प्रपञ्चप्रधानास्त्वेता' इति विनिगमनं न स्यात्; तथाच सूत्रं विरुध्येतेत्यर्थः। निष्प्रपञ्चवाक्येष्वेव फलश्रवणात् 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायात् सप्रपञ्चवाक्यानां तदेकवाक्यतेत्याशङ्क्याह— **फलमिति**। उपास्तिफलेन फलवत्त्वादुक्तन्यायाविषयत्वमाकारवद्वाक्यानामिति स्थिते फलितमाह— **इत्यत इति**। एकवाक्यताहेत्वदृष्टेरपि नैकवाक्यतेत्याह— **कथं चेति**। हेत्वनुपलब्धिरसिद्धेति शङ्कते— **एकेति**।

१. 'भवन्तु' इति पा.। २. 'उपासनाविधानाधिकारे' इति पा.।

**मासवाक्यवदिति चेत्? न; ब्रह्मवाक्येषु नियोगाभावात्। वस्तुमात्रपर्यवसायीनि हि ब्रह्मवाक्यानि, न नियोगोपदेशीनीत्येतद्विस्तरेण प्रतिष्ठापितम् 'तत्तु समन्वयात्' (ब्र.सू. १।१।४) इत्यत्र। किंविषयश्चात्र नियोगोऽभिप्रेयत इति वक्तव्यम्। पुरुषो हि नियुज्यमानः 'कुरु' इति स्वव्यापारे कस्मिंश्चिन्नियुज्यते। ननु द्वैतप्रपञ्चप्रविलयो नियोगविषयो भविष्यति। अप्रविलापिते हि द्वैतप्रपञ्चे ब्रह्मतत्त्वावबोधो न भवति; अतो ब्रह्मतत्त्वावबोधप्रत्यनीकभूतो द्वैतप्रपञ्चः प्रविलाप्यः। यथा स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्यत एवमपवर्गकामस्य प्रपञ्चप्रविलयः। यथा च तमसि व्यवस्थितं घटादितत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतं तमः प्रविलाप्यत एवं ब्रह्मतत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतः प्रपञ्चः प्रविलापयितव्यः। ब्रह्मस्वभावो हि प्रपञ्चो न प्रपञ्चस्वभावं ब्रह्म, तेन नामरूपप्रपञ्चप्रविलापनेन ब्रह्मतत्त्वावबोधो भवतीति।**

### *प्रकटार्थविवरणम्*

तथैकमुमुक्षुनियोगविषयत्वात् सविशेषनिर्विशेषवाक्यानामेकवाक्यतेत्यर्थः। भवेदेवं यदि तत्त्वमस्यादिवाक्ये नियोगः स्यात्; न त्वस्ति; उपक्रमोपसंहारपर्यालोचनया सिद्धपरतायाः प्रतिपादितत्वादित्याशङ्क्याह [दित्याह]— **न ब्रह्मवाक्येष्विति**। किं च नियोगस्य विषयनियोज्यावच्छिन्नत्वादिह च विषयानिरूपणात्र नियोगः संभवतीत्याह—**किंविषयश्चात्रेति**। विषयं शङ्कते— **ननु द्वैतेति**। नन्वपवर्गकामः प्रपञ्चं प्रविलापयेदति नियोगो नोपपनीपद्यते, ब्रह्मणः प्रपञ्चात्मकतया तद्विलये विलयप्रसङ्गादित्याशङ्क्याह— **ब्रह्मस्वभावो हि प्रपञ्च इति**। यथा घटो मृदात्मकः, न मृद् घटात्मिकेति न घटलये लीयते, तथा प्रपञ्चो ब्रह्मोपादानकत्वात् ब्रह्मात्मको, न प्रपञ्चात्मकं ब्रह्मेति न प्रपञ्चलये लीयत इत्यर्थः।

### *भाष्यभावप्रकाशिका*

वाक्यानामप्येकवाक्यत्वमित्याशङ्क्याह— **फलमप्येषामिति**। उपासनाफलेन फलवत्त्वादुक्तन्यायाविषयत्वमित्यर्थः। **प्रयाजदर्शपूर्णमासवाक्यवदिति**। यद्यपि विषयानुबन्धभेदात् भिन्नो ऽनयोर्नियोगस्तथाप्येकोऽधिकारनियोग इत्येकनियोगत्वमुक्तम्। एवं तत्त्वावबोधकामिन एको नियोग इत्यर्थः। विषयाभावाच्च नियोगो न संभवतीत्याह— **किंविषयश्चेति**। विषयं दर्शयति पूर्ववादी— **नन्विति**। ननु तत्त्वावबोधकामिनस्तत्त्वावबोधे विषये तदुपकारके वा नियोगो युक्तस्तत्कथं प्रपञ्चविलये नियोग इत्याशङ्क्य तदुपकारकत्वादित्याह— **अप्रविलापिते हीति**। अतस्तत्र नियोगो युक्त इति सदृष्टान्तमाह— **यथा स्वर्गेति**। ननु स्वर्गं प्रति यागस्य साधकत्वात् तत्र नियोगो घटते। इह तु काम्यमान- साधकत्वाभावात् कथं नियोग इत्याशङ्क्य प्रतिबन्धनिवृत्तितयाऽप्यनुष्ठेयत्वे दृष्टान्तान्तरमाह— **यथा चेति**। ननु प्रपञ्चे प्रविलीने तदभेदात् ब्रह्मापि प्रविलीयेतेत्यत आह— **ब्रह्मस्वभावो हीति**। लोके कार्यनाशेऽपि कारणनाशो न दृश्यत इति भावः।

### *न्यायनिर्णयः*

यद्यपि प्रयाजदर्शपूर्णमासवाक्ययोर्विषयानुबन्धभेदान्नियोगभेदस्तथाप्येकोऽधिकारनियोग इत्येकनियोगत्वम्। तथा तत्त्वावबोधकामस्यैको नियोगः सर्वत्रेत्येकवाक्यतेत्यर्थः। तत्त्वमादिवाक्येषु नियोगाभावादेकनियोगधीरसिद्धेति दूषयति— **नेति**। तेष्वपि कल्प्यतां नियोगोऽन्यथा प्रामाण्यायोगादित्याशङ्क्याह— **वस्त्विति**। विषयाभावाच्च न नियोगोऽत्रेत्याह— **किमिति**। नियोज्यावच्छिन्नो नियोगस्तस्य किं विषयेणेत्याशङ्क्याह— **पुरुषो हीति**। विषयोऽपि तर्हि नियोगावच्छेदकत्वेन कश्चित् कल्प्यतामित्याशङ्क्य द्वैतलयो वा स स्याद् ब्रह्मज्ञानं वा तदविद्यानिवृत्तिर्वा तत्कार्यनिवृत्तिर्वेति विकल्प्याद्यमादत्ते— **नन्विति**। तत्त्वावबोधकामिनस्तत्त्वावबोधफलके विषये तदुपकारके वा नियोगो युक्तः, तस्मात् कथं प्रपञ्चलये स्यादित्याशङ्क्य तदुपकारकत्वादित्याह— **अप्रविलापिते हीति**। काम्यमानतत्त्वावबोधोपकारकत्वे फलितमाह— **अत इति**। उक्तमर्थं वैदिकोदाहरणेन स्फुटयति— **यथेति**। स्वर्गं प्रति यागस्य साधनत्वात् तत्र नियोगेऽपि प्रकृते काम्यमानोपायत्वाभावात् कुतो नियोगः स्यादित्याशङ्क्य प्रतिबन्धनिवृत्तितया प्रपञ्चलयस्यानुष्ठेयत्वं लौकिकदृष्टान्तेन दर्शयति— **यथा चेत्यादिना**। तत्त्वज्ञानकामो द्वैतं प्रविलापयेदिति न नियोगो, ब्रह्मणोऽपि तल्लये लयापातादित्याशङ्क्याह— **ब्रह्मेति**। न हि लोके कार्यनाशेऽपि कारणं नश्यत्यारोपितस्याधिष्ठानान्तर्भावेऽपि तस्य तदनन्तर्भावादिति भावः। नैयोगिके द्वैतलये फलितमाह— **तेनेति**।

**अत्र वयं पृच्छामः– कोऽयं प्रपञ्चप्रविलयो नाम। किमग्निप्रतापसंपर्काद् घृतकाठिन्यप्रविलय इव प्रपञ्चप्रविलयः कर्तव्यः, आहोस्विदेकस्मिंश्चन्द्रे तिमिरकृतानेकचन्द्रप्रपञ्चवदविद्याकृतो ब्रह्मणि नामरूपप्रपञ्चो विद्यया प्रविलापयितव्य इति। तत्र यदि तावद् विद्यमानोऽयं प्रपञ्चो देहादिलक्षण आध्यात्मिको बाह्यश्च पृथिव्यादिलक्षणः प्रविलापयितव्य इत्युच्येत, स पुरुषमात्रेणाशक्यः प्रविलापयितुमिति तत्प्रविलयोपदेशोऽशक्यविषय एव स्यात्। एकेन चादिमुक्तेन पृथिव्यादिप्रविलयः कृत इतीदानीं पृथिव्यादिशून्यं जगदभविष्यत्। अथाविद्याध्यस्तो ब्रह्मण्येकस्मिन्नयं प्रपञ्चो विद्यया प्रविलाप्यत इति ब्रूयात्। ततो ब्रह्मैवाविद्याध्यस्तप्रपञ्चप्रत्याख्यानेनावेदयितव्यम्– 'एकमेवाद्वितीयं ब्रह्म,' 'तत्सत्यं स आत्मा तत्त्वमसि' (छा.उ. ६।८।७) इति। तस्मिन्नावेदिते विद्या स्वयमेवोत्पद्यते। तया चाविद्या बाध्यते। ततश्चाविद्याध्यस्तः सकलोऽयं नामरूपप्रपञ्चः स्वप्नप्रपञ्चवत् प्रविलीयते। अनावेदिते तु ब्रह्मणि 'ब्रह्मविज्ञानं कुरु प्रपञ्चप्रविलयं चे'ति शतकृत्वोऽप्युक्ते**

### *प्रकटार्थविवरणम्*

विलयो नाम सत्यस्य स्वरूपोपमर्दः, किं वा मायामयस्य तत्त्वांशप्रतिषेधेनाविद्यामयस्य विद्यया विनिवृत्तिरिति विकल्पयति— **अत्र वयं पृच्छाम इत्यादिना**। प्रथमं प्रत्याचष्टे— **तत्र यदि तावदिति**। आकाशग्रसननियोगवदयं नियोगः प्रसज्येतेत्यर्थः। किंचैकमुक्तौ जगन्मुक्तिरप्यापद्यत इत्याह— **एकेनादिमुक्तेनेति**। द्वितीयमुद्भावयति— **अथेति**। तर्हि प्रपञ्चलये नियोगो व्यर्थ इत्याह— **ततो ब्रह्मैवेति**। जीवस्य स्वाभाविकनिष्प्रपञ्चब्रह्मात्मत्वोपदेशेनैव मायामयस्यावस्तुत्वप्रतिपत्त्या तत्त्वांशप्रतिषेधलक्षणेऽपि[णोऽपि] लयः प्रमातृत्वप्रमुखस्य सर्वस्य अविद्यामयस्याविद्यानिवृत्त्या स्वरूपप्रध्वंस एव भविष्यतीति व्यर्थो नियोग इत्यर्थः। विपक्षे दोषमाह— **अनावेदिते त्विति**। ब्रह्मप्रतिपादनमन्तरेण ज्ञानकारणाभावात् ज्ञानं विलयो वा न घटते चेत् तर्हि परोक्षतया प्रतिपन्ने

### *भाष्यभावप्रकाशिका*

वास्तवस्य प्रविलय उतावास्तवस्येति विकल्प्य दूषयति— **कोऽयमित्यादिना। अशक्यविषय एव स्यादिति**। वस्तुभूतस्य तत्त्वज्ञानेन निवृत्त्यनुपपत्तेः मुसलप्रहारादिना च कृत्स्नप्रपञ्चस्य निवर्तयितुमशक्यत्वादविषय इत्यर्थः। ब्रह्मतत्त्वज्ञापनेनैव तथाभूतस्य विलयोपपत्तेः प्रपञ्चविभ्रमाधिष्ठानभूतं ब्रह्मैव वेदान्तैर्बोधनीयमलमिह नियोगेनेत्याह— **ततो ब्रह्मैवेति**। कथं तदावेदनमिति, तदाह— **एकमेवेति**। यदुक्तमप्रविलापिते प्रपञ्चे तत्त्वावबोधो न भवतीति, तत्राह— **तस्मिन्विद्येति**। नन्वविद्यानिवृत्तये नियोग इत्याशङ्क्याह— **तया चेति**। तर्हि तत्कार्यनिवृत्तयेऽस्त्वित्यत आह— **ततश्चेति**। तत्त्वावेदनार्थत्वात् प्रपञ्चविलयस्यावेदनात् प्रागेव तत्प्रविलये नियोग इत्याशङ्क्याह— **अनावेदित इति**।

### *न्यायनिर्णयः*

वेदान्तानां द्वैतलयनियोगनिष्ठत्वेनैकवाक्यत्वं शङ्कितं प्रत्याह— **अत्रेति**। प्रश्नमेव विशदयति— **कोऽयमिति**। किंशब्दोपात्तं पक्षद्वयं दर्शयति— **किमित्यादिना**। वास्तवस्यावास्तवस्य वा द्वैतस्य लयो नियोगविषयत्वेनेष्ट इति विकल्पार्थः। आद्यमनूद्य प्रत्याह— **यदीत्यादिना**। वस्तुनो ज्ञानादध्वस्तेर्मुसलादिना च कृत्स्नद्वैतनिवृत्त्ययोगान्नभोग्रसननियोगवदयं नियोगः स्यादित्यर्थः। किंचानादौ संसारे कश्चित् प्रागितो मुक्तो न वा? तत्राद्येऽद्यतनपृथिव्याद्युपलब्धिर्विरुध्येत। द्वितीये शुकादिमुक्तिश्रुतिविरोधः। तस्याश्चार्थवादत्वेऽपि द्वारार्थे तात्पर्याविरोधादित्यनेकजीववादमुपेत्याह— **एकेनेति**। द्वितीयमुत्थापयति— **अथेति**। तर्हि द्वैतलये नियोगवैयर्थ्यमित्याह— **तत इति**। ब्रह्मतत्त्वज्ञापनेनैव तदविद्याकृतद्वैतलयात् तदेव वेदान्तैर्ज्ञापनीयम्; कृतमत्र नियोगेनेत्यर्थः। कथं तदावेदनं, तदाह— **एकमिति**। मा तर्हि द्वैतलये नियोगो भूद्; ब्रह्मज्ञाने तु स्यादिति द्वितीयमाशङ्क्याह— **तस्मिन्निति**। शब्दोक्ते ब्रह्मणि नियोगापेक्षां विना शब्दशक्तेरेव ज्ञानोत्पत्तेर्न तद्विषयोऽपि नियोगोऽस्तीत्यर्थः। उत्पन्ने ज्ञाने नान्तरीयकत्वेनाज्ञाननिवृत्तेर्न नियोगस्तत्रापीति तृतीयं प्रत्याह— **तयेति**। चतुर्थं निरस्यति— **ततश्चेति**। कारणाविद्यानिवृत्तेरिति यावत्। किञ्च ब्रह्मज्ञानादौ नियोगो ब्रह्मण्यज्ञाते ज्ञाते वा? तत्राद्यं दूषयति— **अनावेदिते त्विति**।

**न ब्रह्मविज्ञानं प्रपञ्चप्रविलयो वा जायते। नन्वावेदिते ब्रह्मणि तद्विज्ञानविषयः प्रपञ्चविलयविषयो वा नियोगः स्यात्? न; निष्प्रपञ्चब्रह्मात्मत्वावेदनेनैवोभयसिद्धेः। रज्जुस्वरूपप्रकाशनेनैव हि तत्स्वरूपविज्ञानमविद्याध्यस्त-सर्पादिप्रपञ्चप्रविलयश्च भवति। न च कृतमेव पुनः क्रियते।**

**नियोज्योऽपि च प्रपञ्चावस्थायां योऽवगम्यते जीवो नाम, स प्रपञ्चपक्षस्यैव वा स्याद् ब्रह्मपक्षस्यैव वा। प्रथमे विकल्पे निष्प्रपञ्चब्रह्मतत्त्वप्रतिपादनेन पृथिव्यादिवज्जीवस्यापि प्रविलापितत्वात् कस्य प्रपञ्चविलये नियोग उच्येत, कस्य वा नियोगनिष्ठतया मोक्षोऽवाप्तव्य उच्येत? द्वितीयेऽपि ब्रह्मैवानियोज्यस्वभावं जीवस्य स्वरूपम्, जीवत्वं त्वविद्याकृतमेवेति प्रतिपादिते ब्रह्मणि नियोज्याभावान्नियोगाभाव एव। द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठितास्तत्त्वाभिमुखीकरणप्रधाना न तत्त्वावबोधविधिप्रधाना भवन्ति। लोकेऽपीदं पश्येदमाकर्णयेति चैवंजातीयकेषु निर्देशेषु प्रणिधानमात्रं कुर्वित्युच्यते, न साक्षाज्ज्ञानमेव कुर्विति। ज्ञेयाभिमुखस्यापि**

### *प्रकटार्थविवरणम्*

ब्रह्मणि अपरोक्षज्ञाने प्रपञ्चविलये वा नियोगोऽस्त्वित्याह— **नन्वावेदित इति**। निष्प्रपञ्चे ब्रह्मण्यात्मतया लक्ष्यपदार्थाभिज्ञस्य शब्देनावेदिते सत्यपरोक्षज्ञानं सकार्याविद्याध्वंसश्च सिध्यति। न च सिद्धविषयो नियोगो भागी। यदापि दोषवशात् परोक्षज्ञानं तस्य परमपुरुषार्थतया पारोक्ष्ये स्वयं प्रवृत्त इति व्यर्थो नियोग इति परिहारार्थः।

एवं तावद् विषयाभावान्नियोगाभावमुक्त्वा अधुना नियोज्याभावात् तदभावमाह— **नियोज्योऽपि चेति**। का तर्हि द्रष्टव्यादिशब्दानां गतिरित्याशङ्क्याह— **द्रष्टव्यादिशब्दा अपीति**। ननु यस्माद् धातोः प्रत्ययोऽपि विधीयते, तस्यैव धात्वर्थस्य कर्तव्यता प्रत्ययात् प्रतीयते लोके; कथं द्रष्टव्य इत्यस्य दर्शनतात्पर्यकारणार्थता[१] कल्प्यत इत्याशङ्क्याह— **लोकेऽपीदं पश्येति**। ननु तर्हि आत्मदर्शनाभिमुख्यमेव प्राधान्येन विधीयताम्, किं ब्रह्मप्रदर्शनेनेत्याशङ्क्याह— **ज्ञेयाभिमुखस्यापीति**। किं च नियोगवादिनाऽपि

### *भाष्यभावप्रकाशिका*

तर्ह्यावेदित एवास्त्वित्याशङ्कते— **नन्वावेदित इति**। नैवं कृतकरणतयाऽनर्थकत्वप्रसङ्गादित्याह— **निष्प्रपञ्चेति**।

अपि च नियोज्याभावादपि च न नियोगसंभव इत्याह— **नियोज्योऽपीति**। अथ ब्रह्मणोऽनन्योऽपि जीवोऽविद्ययाऽन्य इति तस्य नियोज्यत्वमुच्यते। तदपि न, आवेदिते ब्रह्मणि [२]भेदाभावादिकाया अविद्याया अप्यसंभवात् ब्रह्मरूपतयाऽनियोज्यत्वादित्याह— **जीवत्वन्त्विति**। अस्मत्पक्षे त्वविद्यावस्थायां सर्वमुपपन्नमिति भावः। ननु ब्रह्मज्ञाने विधयः श्रूयन्ते ते कथं तर्केण निरस्यन्त इति तत्राह— **द्रष्टव्यादिशब्दा इति**। ननु लोके द्रष्टव्यादि(ति) शब्दानामभिमुखीकरणार्थत्वं न दृष्टमिति, तत्राह— **लोकेऽपीति**। ननु ज्ञानमेव प्रकृत्यर्थतया श्रूयमाणं किमिति न विधीयत इत्याशङ्क्य[अपुरुषतन्त्र]त्वादित्याह— **विज्ञेयाभिमुखस्येति**। अपि च

### *न्यायनिर्णयः*

द्वितीयमालम्बते— **नन्विति**। ब्रह्मणि शाब्दे तद्वशादेव नियोगादृते ब्रह्मज्ञानादिसिद्धेर्नियोगवैयर्थ्यमित्याह— **नेत्यादिना**। तदेव दृष्टान्तेन स्फुटयति— **रज्ज्विति**। ब्रह्मतत्त्वावेदनसिद्धमपि ब्रह्म ज्ञानादिनियोगेन पुनः साध्यमित्याशङ्क्याह— **न चेति**। करणापर्यवसानादित्यर्थः।

विषयाभावान्नियोगाभावमुक्त्वा नियोज्याभावादपि वेदान्तेषु तदभावमाह— **नियोज्योऽपीति**। प्रपञ्चान्तर्भावपक्षं प्रत्याह— **प्रथम इति**। प्रपञ्चप्रविलयो ब्रह्मज्ञानादेरुपलक्षणम्। मुमुक्षोर्नियोज्यत्वमाशङ्क्योक्तम्— **कस्येति**। ब्रह्मान्तर्भावे नियोज्यत्वं दुर्वचमित्याह— **द्वितीयेऽपीति**। ब्रह्मणोऽनन्योऽपि जीवोऽविद्ययाऽन्यत्वान्नियोज्यः स्यादित्याशङ्क्य ब्रह्मण्यावेदिते भेदकाविद्याऽयोगान्नैवमित्याह— **जीवत्वमिति**। ब्रह्मज्ञाने श्रूयमाणा विधयस्तर्केण कथं निरस्यन्ते, तत्राह— **द्रष्टव्यादीति**। तेषामभिमुखीकरणार्थत्वं न क्वापि दृष्टमित्याशङ्क्याह— **लोकेऽपीति**। ज्ञानमेव प्रकृत्यर्थतया श्रुतं किमिति लोके वेदे वा न विधेयमित्याशङ्क्यापुरुषतन्त्रत्वादित्याह— **ज्ञेयेति**।

---

१. 'दर्शनतात्पर्यकरणार्थता' इति पाठो युक्तः। दर्शने तात्पर्यं = तत्परता, तत्करणं = तत्संपादनम्, तदर्थता तत्प्रयोजनकता। दर्शनतत्परतासंपादनार्थतेत्यर्थः। पुरुषस्य आत्मदर्शनाभिमुखीकरणार्थता 'आत्मा वा अरे द्रष्टव्यः' इत्यादिवाक्यस्येति यावत्। २. 'भेदापादिकाया' इति पाठः स्यात्।

**ज्ञानं कदाचिज्जायते, कदाचिन्न जायते। तस्मात् तं प्रति ज्ञानविषय एव दर्शयितव्यो ज्ञापयितुकामेन। तस्मिन् दर्शिते स्वयमेव यथाविषयं यथाप्रमाणं च ज्ञानमुत्पद्यते। न च प्रमाणान्तरेणान्यथाप्रसिद्धेऽर्थेऽन्यथाज्ञानं नियुक्तस्याप्युपपद्यते। यदि पुनर्नियुक्तोऽहमित्यन्यथा ज्ञानं कुर्यान्न तु तज्ज्ञानम्, किं तर्हि? मानसी सा क्रिया। स्वयमेव चेदन्यथोत्पद्येत भ्रान्तिरेव स्यात्। ज्ञानं तु प्रमाणजन्यं यथाभूतविषयं च। न तन्नियोगशतेनापि कारयितुं शक्यते; न च प्रतिषेधशतेनापि वारयितुं शक्यते। न हि तत्पुरुषतन्त्रम्; वस्तुतन्त्रमेव हि तत्। अतोऽपि नियोगाभावः। किंचान्यत्; नियोगनिष्ठतयैव पर्यवस्यत्याम्नाये यदभ्युपगतमनियोज्यब्रह्मात्मत्वं जीवस्य, तदप्रमाणकमेव स्यात्। अथ शास्त्रमेवानियोज्यब्रह्मात्मत्वमप्याचक्षीत, तदवबोधे च पुरुषं नियुञ्जीत, ततो**

### *प्रकटार्थविवरणम्*

प्रमाणानुसारेणैव ज्ञानं वक्तव्यम्, अन्यस्य सम्यग्ज्ञानत्वायोगात्; एवं चेदादावेव प्रमाणं शरणं जरीगृह्यतामित्याह— **न च प्रमाणान्तरेणेति**। प्रमाणहीनतया ब्रह्मासिद्धिप्रसङ्गादपि न नियोगनिष्ठतेत्याह— **किंचान्यदिति**। उक्तदोषपरिजिहीर्षया शङ्कते— **अथ शास्त्रमेवेति**। तर्ह्युभयतात्पर्याद् वाक्यभेद इत्याह— **तत इति**। शाब्दज्ञानविषयतया प्रधान[गुण]त्वोपादेयत्वविधेयत्वानि

### *भाष्यभावप्रकाशिका*

नियोगवादिनाऽपि तत्त्वप्रतिपादनपरत्वमवश्यं वेदान्तानामभ्युपेयमात्मा द्रष्टव्य इत्यादिनियोगमात्रात्तत्त्वज्ञानानुत्पत्तेः। तथा सति तेनैव तत्त्वज्ञानोत्पत्तेः किं विधिनेत्याह— **तस्मात्तं प्रतीति**। न च विधिः प्रमाणानपेक्षः सम्यग्ज्ञानं जनयितुमर्हति। न च मिथ्याज्ञाने मुमुक्षोरुपयोगः। न च तत् प्रमाणबाधिते जनयितुं शक्यमित्याह— **न च प्रमाणान्तरेणेति**। ननु योषिदादिष्वग्न्यादिदृष्टिविधानवदुपपद्यत इत्याशङ्क्याह— **यदि पुनरिति**। ननु शुक्तिकारजतादिविषयमन्यथाज्ञानं न मानसी क्रियेति, तत्राह— **स्वयमेव चेदिति**। शास्त्रप्रयत्नादिनिरपेक्षतया जायमानस्याक्रियात्वेऽपि शास्त्रजनितमन्यस्यान्यात्मताज्ञानं प्रयत्नादिजन्यं मानसी क्रियैवेत्यर्थः। तर्हि कथंभूतं सम्यग्ज्ञानमिति, तत्राह— **ज्ञानन्तु प्रमाणजन्यमिति**। तथापि नियोगाधीनं किं न स्यादिति तत्राह— **न च तदिति**। नेक्षेतेत्यादिनिषेधा[विषयत्ववद् विधि]विषयत्वमपि स्यादिति, तत्राह— **न च प्रतिषेधेति**। तत्रापि संकल्पप्रयत्न एव विधीयत इति भावः। कुत एतदित्यपेक्षायामाह— **न हि तदिति**। यस्मात्पुरुषप्रयत्नाधीनं न भवति तस्मादप्यविधेयमित्याह— **अतोऽपीति**। नियोगनिष्ठत्वे च शास्त्रस्य तत्त्वंपदार्थयोरैक्याभ्युपगमो विरुध्येतेत्यत आह— **किं चान्यदिति**। शास्त्रप्रतिपन्नत्वादुभयमप्यविरुद्धमिति शङ्कते— **अथ शास्त्रमेवेति**। निराकरोति— **ततो ब्रह्मेति**। अतोऽनेकार्थतया वाक्यभेदो विरुद्धार्थत्वादप्रामाण्यं च स्यादित्यर्थः।

### *न्यायनिर्णयः*

किंच नियोगवादिनाऽपि वेदान्तानां वस्तुवादित्वमवश्यं वाच्यं, नियोगमात्रात् तत्त्वज्ञानायोगात्। ततो वाक्यादेव तदुत्पत्तेर्नियोगानर्थक्यमित्याह— **तस्मादिति**। ज्ञानस्यापुरुषतन्त्रतया विधेयत्वायोगस्तच्छब्दार्थः। तं ज्ञेयाभिमुखं पुरुषं प्रतीति यावत्। तथापि नियोगाभावे कथं तत्र धीरित्याशङ्क्याह—**तस्मिन्निति**। किंच मानानपेक्षो विधिर्न सम्यग्ज्ञानं जनयति। न च मुमुक्षोर्मिथ्याज्ञानमुपयुक्तम्। न च प्रमाणबाधिते सम्यग्ज्ञानं जनयितुं शक्यम्। तथा च मानेनैव तत्सिद्धेर्व्यर्थो विधिरित्याह— **न चेति**। योषिदादिष्वग्न्यादिधीवन्मानविरुद्धेऽपि विधेर्युक्तं ज्ञानमित्याशङ्क्याह—**यदीति**। अन्यथाज्ञानमपि न मानसी क्रिया, रज्जुभुजङ्गादिधीवदित्याशङ्क्याह— **स्वयमिति**। शास्त्रीययत्नाद्यनपेक्षतया जातज्ञानस्याक्रियात्वेऽपि शास्त्रीयमन्यस्यान्यज्ञानं प्रयत्नादिकृतं मानसी क्रियैवेत्यर्थः। कथंभूतं तर्हि सम्यग्ज्ञानं, तत्राह— **ज्ञानं त्विति**। तदपि नियोगाधीनं किं न स्यात्, तत्राह— **नेति**। 'नेक्षेते'त्यादिनिषेधविषयत्ववद्विधिविषयत्वमपि स्यादित्याशङ्क्याह— **न चेति**। तत्रापि संकल्पप्रयत्न एव विधीयत इति भावः। सम्यग्ज्ञानस्य विधिनिषेधाविषयत्वे हेतुमाह— **न हीति**। प्रयत्नानधीनत्वे फलितमाह— **अत इति**। मानवस्तुतन्त्रत्वमपेरर्थः। नियोगवादिनं प्रत्यन्यच्च किंचिदुच्यते दूषणमित्याह— **किंचेति**। तदेव स्फोरयति— **नियोगेति**। शास्त्रस्य नियोगनिष्ठत्वे पदार्थयोरैक्योपगमो भ्रान्तिमूलः स्यादित्यर्थः। शास्त्रसिद्धत्वादुभयमपि प्रामाणिकमित्याह— **अथेति**। अनेकार्थतया वाक्यभेदो विरुद्धार्थत्वादप्रामाण्यं चेति दूषयति— **तत इति**। उपक्रमोपसंहारैकरूप्यादिसिद्धा

**ब्रह्मशास्त्रस्यैकस्य द्व्यर्थपरता [1]विरुद्धार्थपरता च प्रसज्येयाताम्। नियोगपरतायां च श्रुतहानिरश्रुतकल्पना कर्मफलवन्मोक्षस्यादृष्टफलत्वमनित्यत्वं चेत्येवमादयो दोषा न केनचित् परिहर्तुं शक्याः। तस्मादवगतिनिष्ठान्येव ब्रह्मवाक्यानि, न नियोगनिष्ठानि। अतश्चैकनियोगप्रतीतेरेकवाक्यतेत्ययुक्तम्। अभ्युपगम्यमानेऽपि च ब्रह्मवाक्येषु नियोगसद्भावे तदेकत्वं निष्प्रपञ्चोपदेशेषु सप्रपञ्चोपदेशेषु चासिद्धम्। न हि शब्दान्तरादिभिः प्रमाणैर्नियोग-भेदेऽवगम्यमाने सर्वत्रैको नियोग इति शक्यमाश्रयितुम्। प्रयाजदर्शपूर्णमासवाक्येषु त्वधिकारांशेनाभेदाद् युक्तमेकत्वम्। न त्विह सगुणनिर्गुणचोदनासु कश्चिदेकत्वाधिकारांशोऽस्ति। न हि भारूपत्वादयो गुणाः**

### *प्रकटार्थविवरणम्*

ब्रह्मणः, तदुद्देशेन ज्ञानविधानाच्च गुण[प्रधान]त्वोद्देश्यत्वानुवाद्यत्वानि तद्विरुद्धानि प्रसज्यन्त इति वाजपेयाधिकरणपूर्वपक्षोक्तन्यायेन [2]विरुद्धत्रिकद्वयापत्तिरापद्यत इत्याह— **विरूपार्थपरता चेति**। दूषणान्तरमाह— **नियोगपरतायां चेति**। उपसंहरति— **तस्मादिति**। इदानीं प्रौढवादेन नियोगमङ्गीकृत्यैकत्वं निषेधति— **अभ्युपगम्यमानेऽपि चेति**। तत्र हेतुमाह— **न हीति**। भिन्नभावार्थविषयः शब्दः शब्दान्तरम्, यथा यजतिजुहोतिददातयः; तथेहापि वेद उपासीत इति शब्दभेदः, तथा सगुणनिर्गुणभावेन रूपभेदः; तथा प्रकरणभेदः; तथा फलभेद इत्यादिभेदकप्रमाणैर्भेदे गम्यमाने कथमैक्यमित्यर्थः। प्रयाजदर्शपूर्णमासवाक्येषु तर्हि कथं नियोगैक्य-मित्याशङ्क्याह— **प्रयाजेति**। एकस्यैव स्वर्गकामिनः साङ्गप्रयोगाधिकार इत्येकत्वं युक्तमित्यर्थः। इहापि तर्हि मुमुक्षोः प्रपञ्चप्रविलयाधिकारात् सप्रपञ्चनिष्प्रपञ्चवाक्येषु नियोगैक्यं भविष्यतीत्याशङ्क्याह— **न त्विहेति**। यस्मात् सप्रपञ्चनिष्प्रपञ्चश्रुत्योः विभिन्नार्थत्वान्न सर्वप्रपञ्चविलयार्थत्वं

### *भाष्यभावप्रकाशिका*

उपक्रमावगतब्रह्मात्मपरता विनियोगपरत्वे वेदान्तानां बाध्येतेत्याह— **नियोगपरतायामिति**। ज्ञानस्य विधेयत्वे च कर्मवदपूर्वावान्तर-व्यापारात्फलसिद्धिरभ्युपगन्तव्या। ततश्चादृष्टफलत्वमनित्यत्वं सातिशयत्वं च तत्फलस्य स्वर्गादिवत्स्यादित्याह— **कर्मफलवदिति**। एवं वेदान्तेषु नियोगाभावादेकनियोगप्रतीतिरसिद्धेत्युक्तम्; इदानीं नियोगसद्भावेऽपि सप्रपञ्चनिष्प्रपञ्चवाक्येषु साध्यानुबन्ध-भेदादेकनियोगत्वमसिद्धमित्याह— **अभ्युपगम्यमानेऽपीति**। अनुबन्धभेदेऽपि यत्प्रयाजदर्शपूर्णमासवाक्येष्विव स्यादेकनियोगत्वमित्याशङ्क्य तत्रानुबन्धभेदेऽप्यधिकारांशस्य साध्यस्याभेदः; इह तु तदभावान्नियोगभेद एवेत्याह— **प्रयाजदर्शेति**। कथं नास्तीत्यत आह— **न हीति**। तर्हि भारूपत्वादीनां विशिष्टगुणप्रतिपादनपरत्वमन्येषां च प्रपञ्चप्रविलापनार्थत्वं स्यादित्याशङ्क्याह— **न हि कृत्स्नेति**।। इति पञ्चममुभयलिङ्गाधिकरणम्।।

### *न्यायनिर्णयः*

ब्रह्मपरताऽपि वेदान्तानां नियोगपरत्वे पीड्येतेत्याह— **नियोगेति**। किंच धियो विधेयत्वे कर्मवदपूर्वावान्तरव्यापारात् फलसिद्धिरेष्टव्या; ततश्चादृष्टफलत्वमनित्यत्वं सातिशयत्वं च स्वर्गादिवत्तत्फलस्य स्यादित्याह— **कर्मेति**। वेदान्तानां नियोगपरत्वाभावे कथं प्रामाण्यं, तत्राह— **तस्मादिति**। तेषामनियोगनिष्ठत्वे फलितमाह— **अतश्चेति**। वेदान्तेषु नियोगाभावादेकनियोगविधिरसिद्ध इत्युक्तम्। सम्प्रति प्रौढवादितया नियोगमङ्गीकृत्य तदेकत्वं प्रत्याह— **अभ्युपगम्यमानेऽपीति**। तत्र हेतुमाह— **न हीति**। भिन्नवाक्यार्थविषयः शब्दः शब्दान्तरम्। यथा यजतिददातिजुहोतयः, तथेहापि वेदोपासीतेति शब्दभेदः। आदिशब्देन रूपभेदः प्रकरणभेदः फलभेदश्च गृह्यते। एतैर्भेदे सिद्धे तदेकत्वासिद्धिरित्यर्थः। अनुबन्धभेदेऽपि प्रयाजदर्शपूर्ण-मासवाक्येष्विव नियोगैक्यमाशङ्क्याधिकारांशस्य तत्राभेदादिह तदभावान्नैवमित्याह— **प्रयाजेति**। एकस्यैव स्वर्गकामस्य साङ्गप्रयोगाधिकारवदत्रापि मुमुक्षोरेकस्यैव द्वैतलयादावधिकारादुभयविधिवाक्येषु नियोगैक्यं स्यादित्याशङ्क्याह— **न त्विति**। भिन्नाधिकारत्वादन्योन्योपकारायोगाच्चेति हेतुमाह— **न हीति**। तर्हि भारूपत्वादीनां विशिष्टगुणवादित्वमन्येषां तस्मिन्नेव धर्मिणि

---

१. 'विरूपार्थपरता' इति प्रकटार्थधृतः पाठः। २. गुणत्वम्, उपादेयत्वम्, विधेयत्वम् इति विधेयनिष्ठं त्रिकम्। प्रधानत्वम्, उद्देश्यत्वम्, अनुवाद्यत्वम् इति चोद्देश्यनिष्ठं त्रिकम्। वेदान्तानां च नियोगपरत्वे नियोगविषयतया गुणभूते ज्ञाने विषयस्य ब्रह्मणः गुणत्वादित्रिकं प्राप्नोति। तथा ब्रह्मज्ञानपरत्वस्यापि स्वीकारे प्रतिपाद्यत्वेन ब्रह्मणः प्राधान्यात् गुणत्वादित्रिकविरुद्धं प्रधानत्वादित्रिकं प्राप्नोति। वाजपेयाधिकरणे पूर्वपक्षे धात्वर्थस्य तन्त्रेण फलगुणसंबन्धे उक्तत्रिकद्वयापत्तिदोषः सिद्धान्तिनोक्तः। द्र.पू.मी. १.४.६।

**प्रपञ्चप्रविलयोपकारिणः। नापि प्रपञ्चप्रविलयो भारूपत्वादिगुणोपकारी, परस्परविरोधित्वात्। न हि कृत्स्नप्रपञ्चप्रविलापनं प्रपञ्चैकदेशापेक्षणं चैकस्मिन् धर्मिणि युक्तं समावेशयितुम्। तस्मादस्मदुक्त एव विभाग आकारवदनाकारोपदेशानां युक्ततर इति।।२१।।**

इति पञ्चममुभयलिङ्गाधिकरणम्।।

६।।प्रकृतैतावत्त्वाधिकरणम्।।सू.२२-३०।।

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः।।२२।।

**'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' (बृ.उ. २।३।१) इत्युपक्रम्य पञ्च महाभूतानि द्वैराश्येन प्रविभज्यामूर्तरसस्य च पुरुषशब्दोदितस्य माहारजनादीनि रूपाणि दर्शयित्वा पुनः पठ्यते– 'अथात आदेशो**

***शारीरकन्यायसंग्रहः***

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः।।२२।। तदव्यक्तमाह हि।।२३।। अपि संराधने प्रत्यक्षानुमानाभ्याम्।।२४।। प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्।।२५।। अतोऽनन्तेन तथा हि लिङ्गम्।।२६।। उभयव्यपदेशात्त्वहिकुण्डलवत्।।२७।। प्रकाशाश्रयवद्वा तेजस्त्वात्।।२८।। पूर्ववद्वा।।२९।। प्रतिषेधाच्च।।३०।।** वस्त्वन्तराभावविशिष्टवस्त्वन्तरज्ञानस्यैव निषेधवाक्यार्थत्वात् सति सम्भवे प्राप्तस्य कृत्स्ननिषेधकल्पनायोगात् एकांशस्यैव निषेधकल्पनं लघीयः इति न्यायेन ब्रह्मतद्रूपयोः अन्यतराभावविशिष्टतयाऽन्यतरस्य प्रतिपत्तिद्वित्वे प्राप्ते अर्थतः प्राधान्येऽपि ब्रह्मणः शब्दतो राजवत् गुणभूतत्वात् शब्दतः प्रधानतया प्रकृतं रूपद्वयमितिशब्देन परामृश्य प्रतिषिध्यते। ब्रह्म तु केवलं द्रष्टृमात्रं निष्प्रपञ्चं परिशिष्यत इति दर्शितम्।

***प्रकटार्थविवरणम्***

तस्मादनिर्वाच्यप्रपञ्चालम्बनाः सविशेषश्रुतयः, स्वाभाविकनिष्प्रपञ्चतालम्बनाश्च निर्विशेषश्रुतय इति निगमयति— **तस्मादिति**।। इति पञ्चममुभयलिङ्गाधिकरणम्।।

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः**।। पूर्वं निषेधश्रुत्यवष्टम्भेन निर्विशेषं ब्रह्म निरूपितम्। इदानीं तदेव निषेधवाक्यं विचारयितुं सोपक्रमं तावत् पठति— **द्वे वावेति**। पृथिव्यप्तेजोलक्षणं भूतत्रयं मूर्तं रूपं, वाय्वाकाशाख्यं चामूर्तं

***भाष्यभावप्रकाशिका***

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः**। अधिकरणस्य विषयं दर्शयति— **द्वे वावेत्यादिना**। पृथिव्यप्तेजांसीति त्रीणि भूतानि मूर्तं मूर्च्छितावयवमितरेतरप्रविष्टावयवतया कठिनमित्यभिधाय पुनस्तस्यैव मूर्तस्य विशेषणान्तराणि मर्त्यं मरणधर्मकं स्थितमव्यापि तदपरोक्षमित्युक्त्वा मूर्तसारतां च सवितृमण्डलस्योपदिश्य वायुश्चान्तरिक्षं चामूर्तमकठिनं तदेवामृतममरणधर्मकं

***न्यायनिर्णयः***

द्वैतविलापनार्थतेत्येकवाक्यतेत्याशङ्क्याह— **न हि कृत्स्नेति**। एकवाक्यत्वायोगे फलितमाह— **तस्मादिति**। अनिर्वाच्यद्वैतालम्बनाः सविशेषश्रुतयः, स्वाभाविकाद्वैतालम्बनाश्च निर्विशेषश्रुतय इत्यस्मदुक्तो विभागः। निष्प्रपञ्चमद्वयं चैतन्यैकरसं ब्रह्मेति तत्पदलक्ष्यमुपसंहर्तुमितीत्युक्तम्।।२१।। इति पञ्चममुभयलिङ्गाधिकरणम्।।

निषेधश्रुतिभिर्ब्रह्मणि निर्विशेषे निरूपिते तासां ब्रह्मनिषेधत्वमाशङ्क्योक्तम्— **प्रकृतेति**। ब्रह्म सन्मात्रम्; तच्च सामान्यत्वाद् विशेषापेक्षम्; तेन तेषु निषिद्धेषु नास्ति ब्रह्मेति शङ्कायामधिकरणम्। तस्य विषयवाक्यं सोपक्रममाह— **द्वे वावेति**। वावशब्दोऽवधारणे। रूपद्वयमेवावधृतं विशिनष्टि— **मूर्तं चेति**। किं तन्मूर्तं किं च तदमूर्तमित्याकाङ्क्षायामुक्तम्— **पञ्चेति**। पृथिव्यप्तेजोरूपं भूतत्रयं मूर्तरूपं, वाय्वाकाशं चामूर्तरूपमिति द्विराशित्वेन पञ्चभूतानि विभागेनोक्तानीत्यर्थः। अमूर्तस्य भूतद्वयस्य रसः सारो हिरण्यगर्भः

**नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्ति' (बृ.उ. २।३।६) इति। तत्र कोऽस्य प्रतिषेधस्य विषय इति जिज्ञासामहे। न ह्यत्रेदं तदिति विशेषितं किंचित् प्रतिषेध्यमुपलभ्यते। इतिशब्देन त्वत्र प्रतिषेध्यं किमपि समर्प्यते, 'नेति नेति' इतीतिपरत्वान्नञ्प्रयोगस्य। इतिशब्दश्चायं संनिहितालम्बन एवंशब्दसमानवृत्तिः प्रयुज्यमानो दृश्यते– 'इति ह स्मोपाध्यायः कथयति' इत्येवमादिषु। संनिहितं चात्र प्रकरणसामर्थ्याद् रूपद्वयं सप्रपञ्चं ब्रह्मणस्तच्च ब्रह्म यस्यैते द्वे रूपे। तत्र नः संशय उपजायते– किमयं प्रतिषेधो रूपे रूपवच्चोभयमपि प्रतिषेधत्याहोस्विदेकतरम्? यदाऽप्येकतरं तदापि किं ब्रह्म प्रतिषेधति रूपे परिशिनष्ट्याहोस्विद् रूपे**

### *प्रकटार्थविवरणम्*

रूपमिति विभज्येत्यर्थः। अमूर्तस्य भूतद्वयस्य रसः सारो हिरण्यगर्भः करणात्मा "य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः" इति पुरुषशब्दोदितः। तस्य वासनामयानि रूपाणि विचित्राणि "तद्यथा माहारजनं वासः" इत्यादिना दर्शितानि। महारजनं हरिद्रा; तया रक्तं वस्त्रं माहारजनम्; "यथा पाण्ड्वाविकं यथेन्द्रगोपः" इत्यादिनिदर्शनैर्वासनानां वैचित्र्याद् विचित्राणि रूपाणि दर्शयित्वा पठ्यत इत्यर्थः। विशेषानुपलब्धेः संशयमाह— **तत्र कोऽस्येत्यादिना**। पूर्वपक्षमाह— **तत्र प्रकृतत्वेति**। प्रतिषेधस्तावत् प्रतिषेध्यमाकाङ्क्षते। प्रकृतपरामर्शकेन चेतिशब्देन रूपे रूपवच्चोभयमपि परामृष्टं प्रतिषेध्यं समर्प्यत

### *भाष्यभावप्रकाशिका*

मूर्तान्तराभिघातादविभज्यमानावयवं यद् गच्छद् व्यापकम् त्यत्परोक्षमिति सविशेषणं भूतद्वयं तत्सारभूतं च सवितृमण्डलस्थं पुरुषं हिरण्यगर्भं सर्वकरणात्मकन्निर्दिश्या....त्ममपि मूर्तामूर्ततत्सारप्रदर्शनपूर्वकं तद्यथा माहारजनं वासो यथा पाण्ड्वाविकं यथाग्न्यर्चिरित्यादि दृष्टान्तैरमूर्तसारस्य लिङ्गशरीरस्य वासनामयं विचित्रं रूपमुक्त्वा सत्यस्य सत्यमिति निर्दिष्टस्य ब्रह्मणः सत्यरूपकथनानन्तरं स्वरूपं वक्तव्यमित्यारभ्यते— **अथात आदेशो नेति नेतीति**। तदर्थप्रतिषेधोऽधिकरणस्य विषय इत्यर्थः। ननु विचारे किं कारणमित्यत आह— **न ह्यत्रेति**। ननु सामान्यतः प्रतिपन्नस्यैव विशेषतोऽप्रतिपत्तौ संशयो भवति। इह तदभावात् कथं संशय इत्याशङ्क्याह— **इतिशब्देनेति**। तर्हि यत्किंचिदत्र प्रतिषिध्यतामितिशब्दस्यार्थवत्त्वायेत्यत आह— **इतिशब्दश्चेति**। तर्हि प्रत्यक्षादिसन्निहितघटाद्यालम्बनो भवत्वित्याशङ्क्य सजातीयप्रमाणसन्निहितस्य विजातीयप्रमाण (सन्निहितस्यापि जातीयप्रमाण) सन्निहितादन्तरङ्गत्वात्तदालम्बनतैव (युक्तैव) युक्तेत्याह— **सन्निहितं चेति**। तत्राद्यं पूर्वपक्षं दर्शयति— **तत्र प्रकृतत्वाविशेषादिति**। ननु सति संभवे प्राप्तस्य प्रतिषेधकल्पनादेकदेशस्यैव निषेधकल्पनं लघीय इत्याशङ्क्य प्रतिषेधद्वयवैयर्थ्यपरिहाराय सर्वस्य निषेध

### *न्यायनिर्णयः*

करणात्मा 'य एष एतस्मिन् मण्डले पुरुषो यश्चायमध्यात्मं दक्षिणेऽक्षन् पुरुष' इत्युक्तस्तस्य वासनामयानि रूपाणि 'तद्यथा माहारजन'मित्यादिना विचित्राणि दर्शयित्वा रूपिणो ब्रह्मणः स्वरूपोक्त्यर्थमथेत्यादि वाक्यमित्याह— **अमूर्तेति**। 'सत्यस्य सत्य'मित्यत्र षष्ठ्यन्तसत्यशब्दार्थोक्त्यनन्तरमित्यथशब्दार्थः। प्रथमान्तसत्यशब्दार्थस्य वक्तव्यत्वेनावशेषादित्यतःशब्दार्थः। अवशिष्टार्थस्तु व्यक्तीभविष्यति। वाक्योक्तिद्वारा तदर्थनिषेधमधिकरणविषयमुक्त्वा विशेषानुपलम्भकृतं संशयमाह— **तत्रेति**। जिज्ञासाहेतुमुक्तं व्यनक्ति— **न हीति**। सामान्येन दृष्टस्यैव विशेषतोऽदृष्टौ स्थाण्वादौ संशयदृष्टेरत्र तदभावे कथमसौ स्यादित्याशङ्क्याह— **इतिशब्देनेति**। अस्तु तर्हि तदर्थवत्त्वाय यत्किंचिदत्र निषेध्यमित्याशङ्क्योक्तम्— **इतिशब्दश्चेति**। प्रत्यक्षादिसंनिहितघटाद्यालम्बनस्तर्हि निषेधः स्यादित्याशङ्क्य सजातीयमानार्पितस्य विजातीयमानसिद्धादन्तरङ्गत्वात् तदालम्बनतैव निषेधस्येत्याह— **संनिहितं चेति**। प्रकृतत्वं विशेषासिद्धिश्चेति हेतुमुक्त्वा संशयं निगमयति— **तत्रेति**। अन्यतरनिषेधेनापि निषेधसिद्ध्या पक्षान्तरमाह— **आहोस्विदिति**। द्वितीयेऽपि ब्रह्मणो वाङ्मनसातीतत्वात् प्रपञ्चस्य चाध्यक्षादिसिद्धत्वात् तस्य व्यावहारिकमानसिद्धत्वेऽपि कल्पितत्वात् तत्कल्पनाधिष्ठानत्वात् तन्निषेधावधित्वाच्च ब्रह्मणः परिशेषार्हत्वादिति पक्षद्वयं दर्शयति— **यदापीति**। अत्र निषेधार्थोक्त्या तत्पदार्थस्यैव शोधनात् तस्यैव शुद्धस्य वाक्यार्थान्वयित्वेन तद्धीहेतुत्वात् पादादिसंगतिरिति मत्वा पूर्वपक्षयति— **तत्रेति**। पूर्वपक्षे निषेधस्य शून्यतान्तत्वाद् ब्रह्मणः शून्यस्य प्रत्यक्त्वेन ज्ञानानर्हता। सिद्धान्ते व्यतिरिक्तस्यैव निषेधादप्रपञ्चस्य ब्रह्मणस्तत्त्वेन ज्ञानयोग्यता। सति संभवे

**प्रतिषेधति ब्रह्म परिशिनष्टीति। तत्र प्रकृतत्वाविशेषादुभयमपि प्रतिषेधतीत्याशङ्कामहे। द्वौ चैतौ प्रतिषेधौ द्विर्नेतिशब्दप्रयोगात्। तयोरेकेन सप्रपञ्चं ब्रह्मणो रूपं प्रतिषिध्यतेऽपरेण रूपवद् ब्रह्मेति भवति मतिः। अथवा ब्रह्मैव रूपवत् प्रतिषिध्यते। तद्धि वाङ्मनसातीतत्वादसंभाव्यमानसद्भावं प्रतिषेधार्हम्। न तु रूपप्रपञ्चः प्रत्यक्षादिगोचरत्वात् प्रतिषेधार्हः। अभ्यासस्त्वादरार्थ इति।**

**एवं प्राप्ते ब्रूमः– न तावदुभयप्रतिषेध उपपद्यते शून्यवादप्रसङ्गात्। किंचिद्धि परमार्थमालम्ब्यापरमार्थः प्रतिषिध्यते, यथा रज्ज्वादिषु सर्पादयः। तच्च परिशिष्यमाणे कस्मिंश्चिद् भावेऽवकल्पते। उभयप्रतिषेधे तु कोऽन्यो भावः परिशिष्येत? अपरिशिष्यमाणे चान्यस्मिन् य इतरः प्रतिषेद्धुमारभ्यते प्रतिषेद्धुमशक्यत्वात्**

***प्रकटार्थविवरणम्***

इति भावः। किंचैवं सति प्रतिषेधद्वयस्यापौनरुक्त्यमपि लभ्यत इत्याह— **द्वौ चैताविति**। सप्रपञ्चमित्यध्यात्माधिदैवप्रपञ्चसहितम्। अरूपस्यापि ब्रह्मणोऽविद्याध्यस्तं रूपद्वयं प्रतिषिध्यत इत्यर्थः। पूर्वपक्षान्तरमाह— **अथ वेति**।

उत्सूत्रमेवाद्यपक्षे दोषमाह— **न तावदुभयप्रतिषेध इत्यादिना**। विशेषनिषेधे यदि शून्यवादः प्रसज्येत, अस्तु तर्हि; को दोष इत्याशङ्क्याह— **किंचिद्धि परमार्थमिति**। लोकसिद्धपदार्थान्वययोग्यतानुसारेण हि वाक्यार्थो ग्राह्यः; प्रतिषेधश्च लोके 'ने'त्येव न दृष्टः; किंतु 'अयमयं न भवति, इदमिह नास्ति' इति धर्मिप्रतियोग्यवच्छिन्नः, ततोऽविशेषनिषेधायोगात् निष्प्रमाणः शून्यवादः प्रसज्यत इत्यर्थः। किंच साधिष्ठानो हि लोके भ्रमो दृष्टः; परमार्थस्य चैकस्य अधिष्ठानस्याभावे प्रत्यक्षादिदृष्टस्य परमार्थत्वापत्तेः

***भाष्यभावप्रकाशिका***

इत्याह— **द्वौ चैताविति**। वस्त्वन्तराभावविशिष्टवस्त्वन्तरज्ञानस्यैव निषेधपदार्थत्वान्न सर्वस्य निषेध इत्याशङ्क्य द्वितीयं पक्षमाह— **अथवा ब्रह्मैवेति**। वाङ्मनसागोचरतया समस्तप्रमाणाविषयत्वात् तदेव निषेधार्हमित्याह— **तद्धीति**। प्रपञ्चनिषेधे तद्विषय-प्रत्यक्षादिविरोधप्रसङ्गान्न तस्य निषेध इत्याह— **न तु रूपेति**। ननु एवं सति प्रतिषेधद्वयवैयर्थ्यं स्यादित्यत आह— **अभ्यासस्त्विति**।

तत्राद्यं पक्षं निराकरोति— **न तावदुभयमिति**। भवतु शून्यवादप्रसङ्गः काऽनुपपत्तिरिति, तत्राह— **किंचिद्धीति**। तर्हि शून्यमेव परमार्थभूतमालम्ब्येतरत् प्रतिषिध्यतामित्याशङ्क्याह— **तच्चेति**। किं च प्रतिपन्नं पदार्थनिषेध समस्तवस्तुप्रतिपत्ति-लक्षणापवादाभावादुत्सर्गस्थितिरिति न्यायेन तस्यैव पूर्वप्रतिपन्नस्य परमार्थत्वप्रसङ्गादनाश्रयस्य निषेधस्य चासंभवाच्छून्यस्य चावस्तुत्वात् प्रतीयमानतया पूर्वप्रतिपन्ननिषेधकत्वायोगान्न तत्पर्यन्तो निषेध इत्याह— **अपरिशिष्यमाणे चेति**। इदानीं मध्यमं पक्षमपाकरोति—

***न्यायनिर्णयः***

प्राप्तसर्वनिषेधकल्पनादेकदेशस्यैव तत्कल्पनं युक्तं लाघवात्। नेदं रजतमित्यादौ तथा दर्शनादित्याशङ्क्य निषेधद्वयशक्त्या प्राप्तसर्वबाधकल्पनं युक्तमन्यत्र निषेधद्वयाभावादेकदेशस्यैव बाधेत्याह— **द्वौ चेति**। निषेधयोर्द्वयोरपुनरुक्तमर्थमभिनयति— **तयोरिति**। वस्त्वन्तराभावविशिष्टवस्त्वन्तरज्ञानस्यैव नेदं रजतमित्यादौ निषेधार्थत्वान्न सर्वनिषेधः संभवतीत्याशङ्क्याह— **अथवेति**। तत्र हेतुः— **तद्धीति**। प्रकृतत्वाविशेषात् प्रपञ्चस्यापि निषेधो ब्रह्मवदित्याशङ्क्याध्यक्षादिविरोधान्मैवमित्याह— **न त्विति**। ब्रह्ममात्रनिषेधे निषेधद्वयवैयर्थ्यमेकेनैव कृतत्वादित्याशङ्क्याह— **अभ्यासस्त्विति**।

पक्षद्वयमनूद्य सिद्धान्तयति— **एवमिति**। तत्र प्रथममुत्सूत्रमेव प्रथमं पक्षं प्रत्याह— **नेति**। प्रसङ्गस्येष्टत्वं निराचष्टे— **किंचिद्धीति**। वास्तवमधिष्ठानं ज्ञात्वाऽऽरोप्यं निरस्यमित्यत्र दृष्टान्तमाह— **यथेति**। अस्तु तर्हि शून्यमेव वस्तु, तदधिगम्येतरन्निषेध्यम्, नेत्याह— **तच्चेति**। निषेधनं तदर्थः। लोकसिद्धपदार्थान्वययोग्यतावशेन वाक्यार्थस्वीकारान्नेत्येव च निषेधादर्शनात् 'नायमयं, नेदमिहे'ति धर्मिप्रतियोगिघटितस्यैव निषेधस्य दृष्टेर्विशेषणावशेषस्यावश्यकत्वादयुक्ता शून्यतेत्यर्थः। किंच लोके भ्रमस्य साधिष्ठानत्वोपलम्भात् तात्त्विकाधिष्ठानाभावे प्रत्यक्षादिसिद्धद्वैतस्यैव तात्त्विकत्वापातान्निषेधो निरवकाशः स्यादित्याह— **अपरीति**। दृष्टसर्वनिषेधे तदेकदेशवस्तुधीरूपापवादाभावादुत्सर्गस्थितिरिति न्यायात् पूर्वदृष्टस्य वस्तुत्वप्रसङ्गादनवधिकनिषेधायोगादवस्तुतया च शून्यभानात्

**तस्यैव परमार्थत्वापत्तेः प्रतिषेधानुपपत्तिः। नापि ब्रह्मप्रतिषेध उपपद्यते, 'ब्रह्म ते ब्रवाणि' (बृ.उ. २।१।१) इत्याद्युपक्रमविरोधात्, 'असन्नेव स एव भवति। असद् ब्रह्मेति वेद चेत्' (तै.उ. २।६।१) इत्यादिनिन्दाविरोधात्, 'अस्तीत्येवोपलब्धव्यः' (क.उ. ६।१३) इत्यवधारणविरोधात्, सर्ववेदान्तव्याकोपप्रसङ्गाच्च। वाङ्मनसातीतत्वमपि ब्रह्मणो नाभावाभिप्रायेणाभिधीयते। न हि महता परिकरबन्धेन 'ब्रह्मविदाप्नोति परम्' (तै.उ. २।१।१) 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ. २।१।१) इत्येवमादिना वेदान्तेषु ब्रह्म प्रतिपाद्य तस्यैव पुनरभावोऽभिलप्येत। 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति हि न्यायः। प्रतिपादनप्रक्रिया त्वेषा– 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह' (तै.उ. २।९।१) इति। एतदुक्तं भवति– वाङ्मनसातीतमविषयान्तःपाति प्रत्यगात्मभूतं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मेति। तस्माद् ब्रह्मणो रूपप्रपञ्चं प्रतिषेधति, परिशिनष्टि ब्रह्मेत्यभ्युपगन्तव्यम्। तदेतदुच्यते– प्रकृतैतावत्त्वं हि प्रतिषेधतीति। प्रकृतं यदेतावदियत्तापरिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेष शब्दः प्रतिषेधति। तद्धि प्रकृतं, प्रपञ्चितं च पूर्वस्मिन् ग्रन्थेऽधिदैवतमध्यात्मं च। तज्जनितमेव च वासनालक्षणमपरं रूपममूर्तरसभूतं पुरुषशब्दोदितं लिङ्गात्मव्यपाश्रयं महारज-**

### *प्रकटार्थविवरणम्*

प्रतिषेध एव व्यासेधिष्यत इत्यर्थः। द्वितीयपूर्वपक्षं दूषयति— **नापीति**। यच्चोक्तं वाङ्मनसातीतत्वादिति, तत्राह— **वाङ्मनसातीतत्वमपीति**। उक्तेऽर्थे सूत्रं योजयति— **तदेतदुच्यत इत्यादिना**। वासनालक्षणमूर्तामूर्तविषयजनितमेव रूपं

### *भाष्यभावप्रकाशिका*

**नापि ब्रह्मेति**। प्राप्तिपूर्वकत्वात् प्रतिषेधस्य ब्रह्मणश्चाविद्यया प्रत्यक्षादिभिर्वा प्रपञ्चवत्प्राप्त्यभावात् शब्दप्रमाणेन प्राप्तस्य तेनैव निषेधायोगात् तन्निषेधो न युक्त इत्यर्थः। हेत्वन्तरमाह— **ब्रह्म ते ब्रवाणीति**। ननु वाङ्मनसागोचरत्वात्तस्यैव निषेधार्हत्वमुक्तमिति, तत्राह— **वाङ्मनसेति**। किमिति तर्हि तदुक्तमिति, तत्राह— **प्रतिपादनप्रक्रियेति**। तामाह— **एतदुक्तमिति**। उक्तेऽर्थे सूत्रं, योजयति— **तदेतदिति**। ननु प्रकृतत्वमात्रेण प्रतिषेधे ब्रह्मणोऽपि निषेधः किन्न स्यादिति, तत्राह— **प्रपञ्चितञ्चेति**। प्रधानं प्रकृतमुच्यते, ब्रह्म च न प्रधानम्, तस्य षष्ठ्यन्तपदनिर्दिष्टतया प्रपञ्चावच्छेदकत्वेनाप्रधानत्वात्, अतः प्रपञ्च्यमानप्रपञ्च एव प्रधानतया निषेधेन संबध्यत इत्यर्थः। ननु पुरुषशब्दश्रवणाद् ब्रह्मापि प्रपञ्चितमित्याशङ्क्य पुरुषशब्देनात्र लिङ्गशरीरमेवोच्यत इत्याह— **तज्जनितमेव चेति**। ननु वासनालक्षणमेव रूपमाभिः प्रदर्श्यत इति कस्मादभ्युपगम्यते, प्रसिद्धरूपवत्त्वमेव कस्मान्नाभ्युपगम्यत

### *न्यायनिर्णयः*

तद्दृष्ट्या पूर्वदृष्टनिषेधासंभवान्न तत्पर्यन्तो निषेध इति भावः। पूर्वपक्षान्तरं प्रत्याह— **नापीति**। प्राप्तिपूर्वकत्वान्निषेधस्य ब्रह्मणश्चाविद्यया प्रत्यक्षादिभिर्वा द्वैतवदप्राप्तेः शब्देन प्राप्तस्य तेनैव निषेधे पङ्कप्रक्षालनन्यायान्न तन्निषेध इति भावः। ब्रह्मणो निषेध्यत्वाभावे हेत्वन्तरमाह— **ब्रह्मेति**। आदिपदेन 'ब्रह्मविदाप्नोती' त्यादिरुपक्रमो गृह्यते। ब्रह्मणः सत्त्वासत्त्वधियोर्गुणदोषोक्तेरपि न तन्निषेध्यमित्याह— **असन्निति**। ब्रह्मणः सन्मात्रत्वसिद्धेरपि न तन्निषेध्यमित्याह— **अस्तीति**। किंच सर्वेषु वेदान्तेषु साक्षाद्वा परम्परया वा ब्रह्मैव प्रतिपाद्यते, तेन तद्विरोधादपि न तन्निषेध्यमित्याह— **सर्वेति**। यत्तु वाङ्मनसातीतत्वादसंभावितसद्भावं निषेधार्हं ब्रह्मेति, तत्राह— **वागिति**। तत्र हेतुः— **न हीति**। केनाभिप्रायेण तर्हि वाङ्मनसातीतत्वमुक्तं, तत्राह— **प्रतिपादनेति**। वागाद्यतीतत्वेनासत्त्वे ब्रह्मणोऽवगम्यमाने किमियं प्रतिपादनप्रक्रियेत्याशङ्क्याह— **एतदिति**। पक्षद्वयायोगे फलितं निषेधार्थं निगमयति— **तस्मादिति**। उक्तेऽर्थे सूत्रमवतार्य योजयति— **तदेतदित्यादिना**। ब्रह्मणो रूपद्वयं निषेध्यमित्यत्र हेतुमाह— **तद्धीति**। प्रकृतत्वमात्रेण निषेधे ब्रह्मणोऽपि निषेधः स्यादविशेषादित्याशङ्क्याह— **प्रपञ्चितं चेति**। ब्रह्मणः षष्ठ्यन्तपदवाच्यतया प्रपञ्चावच्छेदेनाप्रधानत्वात् प्रपञ्च एव प्रधानतया निषेधेन संबध्यत इत्यर्थः। पुरुषशब्दश्रवणात् तस्य च ब्रह्मविषयत्वाद् ब्रह्मापि प्रपञ्चितमित्याशङ्क्य पुरुषशब्दस्यात्र लिङ्गात्मविषयत्वान्नैवमित्याह— **तदिति**। वासनालक्षणमेव रूपं किमित्युपमाभिरुच्यते, प्रसिद्धरूपत्वमेव पुरुषस्य

**नाद्युपमाभिर्दर्शितम्। अमूर्तरसस्य पुरुषस्य चक्षुर्ग्राह्यरूपयोगित्वानुपपत्तेः। तदेतत् सप्रपञ्चं ब्रह्मणो रूपं संनिहितालम्बनेनेतिकरणेन प्रतिषेधकं नञं प्रत्युपनीयत इति गम्यते। ब्रह्म तु रूपविशेषणत्वेन षष्ठ्या निर्दिष्टं पूर्वस्मिन् ग्रन्थे, न स्वप्रधानत्वेन। प्रपञ्चिते च तदीये रूपद्वये रूपवतः स्वरूपजिज्ञासायामिदमुपक्रान्तम्– 'अथात आदेशो नेति नेति' (बृ.उ. २।३।६) इति। तत्र कल्पितरूपप्रत्याख्यानेन ब्रह्मणः स्वरूपावेदनमिदमिति निर्णीयते। तदास्पदं हीदं समस्तं कार्यं नेति नेतीति प्रतिषिद्धम्। युक्तं च कार्यस्य वाचारम्भणशब्दादिभ्योऽसत्त्वमिति नेति नेतीति प्रतिषेधनम्; न तु ब्रह्मणः, सर्वकल्पनामूलत्वात्। न चात्रेयमाशङ्का कर्तव्या– कथं हि शास्त्रं**

### *प्रकटार्थविवरणम्*

महारजनाद्युपमाभिर्दर्शितमित्येतत् कुत इत्याशङ्क्याह—[अ]**मूर्तरसस्येति**। भवत्वेवं रूपद्वयस्य प्रकृतत्वं प्रपञ्चितत्वं च; ततः किमित्याशङ्क्याह— **तदेतत् सप्रपञ्चमिति**। तर्हि ब्रह्मणोऽपि प्रकृतत्वाविशेषात् निषेधः स्यादित्याशङ्क्याह— **ब्रह्म त्विति**। राजवदर्थतः प्राधान्येऽपि शब्दतः प्राधान्येन प्रकृतत्वाभावात् नेतिशब्देन परामर्श इत्यर्थः। इतश्च न रूपवतः प्रतिषेध इत्याह— **प्रपञ्चिते चेति**। ननु यथा निर्घटं भूतलमिति निषेधेऽन्यत्र घटः परिशिष्यते, तथा ब्रह्मणि रूपद्वयनिषेधेऽपि अन्यत्र परिशिष्यते रूपद्वयमित्याशङ्क्याह— **तदास्पदं हीति**। उपादानादन्यत्र कार्यप्रसङ्गाभावात् तत्र निषिद्धस्य कथंकारमन्यत्र स्वरूपधारणं भवेदिति भावः। यच्चोक्तं प्रत्यक्षादिप्रमाणसिद्धस्य निषेधोऽशक्य इति, तत्राह— **युक्तं च कार्यस्येति**। प्रत्यक्षादिना पारमार्थिकसत्त्वासिद्धेः, वाचारम्भणशब्दादिभ्यश्च पारमार्थिकसत्त्ववैधुर्यं सिद्धमिति युक्तं वस्तुत्वप्रतिषेधनमित्यर्थः। ननु सत्त्वेन प्रतिपन्नोऽपि चेत् प्रपञ्चो निषिध्यते, तदा ब्रह्मणोऽपि निषेधः स्यात्, सत्त्वेन प्रतिपत्त्यविशेषात् इत्याशङ्क्याह— **न तु ब्रह्मण इति**। प्रतिषेधादिसाक्षितया परिशेषादिति भावः। ननु "द्वे वाव ब्रह्मणो रूपे" इत्यादिनोपन्यस्तं रूपद्वयं निषिध्यते चेत् तदा प्रसज्यप्रतिषेधव्यापारगौरवं स्यादित्याशङ्क्याह— **न चात्रेयमित्यादिना**।

### *भाष्यभावप्रकाशिका*

इत्यत आह— **अमूर्तरसस्येति**। उपसंहरति— **तदेतदिति**। अर्थतः प्राधान्यात् ब्रह्मणोऽपि प्रकृततया निषेध्यत्वं स्यादित्याशङ्क्यार्थतः प्राधान्येऽपि तस्य राजपुरुष आगतस्तं भोजयेत्यादाविव शब्दतः प्रधानतया प्रकृतं रूपद्वयमेवेतिपश्येन[तिशब्देन] परामृश्य प्रतिषिध्यत इत्याह— **ब्रह्म त्विति**। तर्हि प्रधानतया ब्रह्मणोऽप्रकृतत्वादुत्तरत्रापि प्रतिपाद्यत्वं न स्यादित्यत आह— **प्रपञ्चित इति**। ततः किं फलितमिति, तत्राह— **तत्र कल्पितेति**। ननु प्रत्यक्षादिप्रमाणसिद्धस्य कथं निषेधनमित्याशङ्क्य तत्त्वावेदनप्रमाणासिद्धत्वात् तेन निषेधनं युक्तमित्याह— **युक्तञ्चेति**। एवमपि प्रक्षालनन्यायः प्रसज्यत इत्याशङ्क्य मैवं प्रयोजनवत्त्वादित्याह— **शुद्धब्रह्मेति**।

### *न्यायनिर्णयः*

कुतो नेष्टमित्याशङ्क्याह— **अमूर्तेति**। रूपद्वयस्य प्राधान्येन प्रकृतत्वे फलमाह— **तदिति**। अर्थतो ब्रह्मणोऽपि प्राधान्येन प्रकृतत्वाविशेषान्निषेध्यत्वमित्याशङ्क्याह— **ब्रह्म त्विति**। अर्थतस्तस्य प्राधान्येऽपि राजपुरुषादाविव शब्दतः प्रधानतया प्रकृतं रूपद्वयमेव प्रकृतपरामर्शिनेतिशब्देनानूद्य निषेध्यमित्यर्थः। ब्रह्मणस्तर्हि प्राधान्येनाप्रकृतत्वादुत्तरत्रापि न प्रतिपाद्यतेत्याशङ्क्याह— **प्रपञ्चिते चेति**। एवमुपक्रमेऽपि कथं वाक्यार्थो निर्णीयतामित्याशङ्क्याध्यारोपापवादन्यायं सूचयति— **तत्रेति**। निर्घटं भूतलमित्युक्ते घटस्यान्यत्र सत्त्ववद् ब्रह्मणि रूपद्वयनिषेधेऽपि ततोऽन्यत्र तद्भवेदित्याशङ्क्याह— **तदास्पदमिति**। उपादानादन्यत्र कार्यायोगात् तत्र निषिद्धस्य न क्वापि सत्तेति भावः। यत्तु प्रत्यक्षादिसिद्धस्य न निषेधस्तद्विरोधादिति, तत्राह— **युक्तं चेति**। तत्त्वावेदनमानासिद्धत्वाद् वाचारम्भणादिशब्दाच्च द्वैतस्य वस्तुसत्त्ववैधुर्याद् युक्ता निषेध्यतेति भावः। सत्त्वेन सिद्धं द्वैतं निषिध्यते चेद् ब्रह्मणोऽपि तथा सिद्ध्यविशेषान्निषेधतादवस्थ्यमित्याशङ्क्याह— **न त्विति**। आरोपाधिष्ठानत्वेन निषेधावधित्वेन चावशेषान्न ब्रह्मणो निषेध्यतेत्यर्थः। द्वे वावेत्यादिनोक्तं रूपद्वयं निषिध्यते चेत् पङ्कप्रक्षालनन्यायात् प्रसज्यप्रतिषेधे गौरवं स्यादित्याशङ्क्याह— **न चेति**। अत्रेति

**स्वयमेव ब्रह्मणो रूपद्वयं दर्शयित्वा स्वयमेव पुनः प्रतिषेधति, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति; यतो नेदं शास्त्रं प्रतिपाद्यत्वेन ब्रह्मणो रूपद्वयं निर्दिशति। लोकप्रसिद्धं त्विदं रूपद्वयं ब्रह्मणि कल्पितं परामृशति प्रतिषेध्यत्वाय, शुद्धब्रह्मस्वरूपप्रतिपादनाय चेति निरवद्यम्। द्वौ चैतौ प्रतिषेधौ यथासंख्यन्यायेन द्वे अपि मूर्तामूर्ते प्रतिषेधतः। यद्वा पूर्वः प्रतिषेधो भूतराशिं प्रतिषेधत्युत्तरो वासनाराशिम्। अथवा 'नेति नेति' इति वीप्सेयम्, इतीति यावत्किंचिदुत्प्रेक्ष्यते तत् सर्वं न भवतीत्यर्थः। परिगणितप्रतिषेधे हि क्रियमाणे यदि नैतद् ब्रह्म, किमन्यद् ब्रह्म भवेदिति जिज्ञासा स्यात्। वीप्सायां तु सत्यां समस्तस्य विषयजातस्य प्रतिषेधादविषयः प्रत्यगात्मा ब्रह्मेति जिज्ञासा निवर्तते। तस्मात् प्रपञ्चमेव ब्रह्मणि कल्पितं प्रतिषेधति, परिशिनष्टि ब्रह्मेति निर्णयः।**

**इतश्चैष एव निर्णयः। यतस्ततः प्रतिषेधाद् भूयो ब्रवीति 'अन्यत्परमस्ति' (बृ.उ. २।३।६) इति। अभावावसाने हि प्रतिषेधे क्रियमाणे किमन्यत् परमस्तीति ब्रूयात्। तत्रैषाऽक्षरयोजना— नेति नेतीति ब्रह्मादिश्य तमेवादेशं पुनर्निर्वक्ति। नेति नेतीत्यस्य कोऽर्थः? न ह्येतस्माद् ब्रह्मणो व्यतिरिक्तमस्तीत्यतो नेति**

### *प्रकटार्थविवरणम्*

यच्चोक्तं प्रतिषेधद्वयस्यार्थवत्त्वाय [१]रूपे रूपवच्च प्रतिषिध्यत इति, तत्राह— **द्वौ चैताविति**। यावत्किंचिद् भावरूपमभावरूपं वा तस्य सर्वस्य वस्तुत्वप्रतिषेधो वीप्सापक्षे घटत इत्युक्तम्; इदानीं वीप्सायां लाभान्तरमाह— **परिगणितेति**।

"ततो ब्रवीति च भूयः" इति सूत्रभागं व्याचष्टे— **इतश्चैष इत्यादिना**।

### *भाष्यभावप्रकाशिका*

यदुक्तं द्वौ चेमौ प्रतिषेधौ, ततो वैयर्थ्यपरिहारायानयोः सर्वं प्रतिषेध्यमिति, तत्राह— **द्वौ चैताविति**। अथवा कश्चित्प्रतिषेधोऽभावविषयोऽपरश्च भावविषय इति द्रष्टव्यम्। एषां पक्षाणां वीप्सापक्षो युक्ततर इत्याह— **परिगणितेति**।

उक्तेऽर्थे सूत्रभागं हेत्वन्तरपरतया योजयति— **इतश्चेति**। ततः **प्रतिषेधान्नेति** नेतीति प्रतिषेधादित्यर्थः। ननु निषेधात् परमस्तीति प्रतिपादकं किं तदित्यपेक्षायामुक्तोपदेशनिर्वचनपरं वाक्यमेव [२]ब्रवीत्यक्षरयोजनया दर्शयति— **तत्रैषेति**। निर्वचन-प्रकारमेवाभिनयेनाह— **नेतीत्यस्येत्यादिना**। यस्मान्नेतिनेतीत्यादिष्टादेतस्मात् ब्रह्मणोऽन्यद्व्यतिरिक्तं नास्ति ब्रह्मैव परमस्त्यतो नेतीत्युपदिश्यते।

### *न्यायनिर्णयः*

रूपद्वयनिषेधपक्षोक्तिः। शङ्का न कार्येत्यत्र हेतुमाह— **यत इति**। अप्रतिपाद्यं चेदनुवाद्यत्वम्, न च प्राप्तिफले विनाऽनुवादः, तत्राह— **लोकेति**। तथापि कथं पङ्कप्रक्षालनन्यायो न स्यादित्याशङ्क्य निषेधस्य फलवत्त्वादित्याह— **शुद्धेति**। उक्तरीत्या निषेधस्य निर्दोषत्वमुक्तं निगमयति— **इति निरवद्यमिति**। द्वौ निषेधौ तयोरवैयर्थ्यार्थं सर्वं निषेध्यमित्युक्तं प्रत्याह— **द्वौ चेति**। संभावितं पक्षान्तरमाह— **यद्वेति**। भावाभावविषयत्वेन वा निषेधद्वयं विवक्षितम्। पक्षान्तरमाह— **अथवेति**। वीप्सापक्षे वाक्यार्थमाह— **इतीति**। यावदिति पक्षान्तरेभ्यो विशेषार्थम्। तेषु निराकाङ्क्षो वाक्यार्थो न सिध्यतीत्याह— **परीति**। वीप्सापक्षे निराकाङ्क्षा वाक्यार्थधीरिति विशेषमाह— **वीप्सायां त्विति**। सूत्रावयवव्याख्यामुपसंहरति— **तस्मादिति**।

अवयवान्तरमादाय व्याकरोति— **इतश्चेति**। कथं तावता निषेधस्य नाभावावसानत्वं, तत्राह— **अभावेति**। नेति नेतीति निषेधात् परमस्तीति प्रतिपादकं किमित्यपेक्षायामादेशनिर्वचनवाक्यमेवेत्यक्षरयोजनया दर्शयति— **तत्रेति**। निर्वचनप्रकार-मेवाकाङ्क्षापूर्वकमाह— **नेत्यादिना**। हि यस्मान्नेति नेत्यादिष्टादेतस्माद् ब्रह्मणोऽन्यद् व्यतिरिक्तं नास्ति, ब्रह्मैव परमस्ति,

१. 'रूपं' इति स्यात्। २. न्यायनिर्णयानुसारेणात्र पाठशुद्धिर्ज्ञेया।

**नेतीत्युच्यते; न पुनः स्वयमेव नास्तीत्यर्थः। तच्च दर्शयत्यन्यत्परमप्रतिषिद्धं ब्रह्मास्तीति। यदा पुनरेवमक्षराणि योज्यन्ते– न ह्येतस्मात् 'इति न इति न' इति प्रपञ्चप्रतिषेधरूपादादेशनादन्यत् परमादेशनं ब्रह्मणोऽस्तीति। तदा 'ततो ब्रवीति च भूय' इत्येतन्नामधेयविषयं योजयितव्यम्। 'अथ नामधेयम् सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' (बृ.उ. २।३।६) इति हि ब्रवीतीति। तच्च ब्रह्मावसाने प्रतिषेधे समञ्जसं भवति। अभावावसाने तु प्रतिषेधे किं सत्यस्य सत्यमित्युच्येत। तस्माद् ब्रह्मावसानोऽयं प्रतिषेधो नाभावावसान इत्यध्यवस्यामः।।२२।।**

## तदव्यक्तमाह हि।।२३।।

**यत्तत् प्रतिषिद्धात् प्रपञ्चजातादन्यत् परं ब्रह्म तदस्ति चेत् कस्मान्न गृह्यत इति? उच्यते– तदव्यक्तमनिन्द्रियग्राह्यं सर्वदृश्यसाक्षित्वात्। आह ह्येवं श्रुतिः– 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा' (मु.उ. ३।१।८) 'स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते' (बृ.उ. ३।९।२६) 'यत्तदद्रेश्यमग्राह्यम्' (मु.उ. १।१।६) 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने' (तै.उ. २।७।१) इत्याद्या। स्मृतिरपि– 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' (भ.गी. २।२५) इत्याद्या।।२३।।**

### *प्रकटार्थविवरणम्*

**तदव्यक्तमाह हि**।। एवं तावत् प्रतिषेधाविषयत्वेन परमार्थसत्यं ब्रह्मोपपाद्य इदानीं तस्यातीन्द्रियत्वं शङ्कानिरासेनाह— **यत्तत्प्रतिषिद्धादिति**।

### *भाष्यभावप्रकाशिका*

न तु सर्वाभावविवक्षयेति निर्वचनार्थः। एवंप्रकारमिदं निर्वचनमप्रतिषिद्धं ब्रह्म ब्रवीतीत्याह— **तच्च दर्शयतीति**। तच्छब्देन निर्वचनं परामृश्यते। पूर्वं निर्वचनमेव निषेधावशिष्टं ब्रह्म ब्रवीतीति श्रुतियोजनया दर्शितम्। इदानीं नामधेयमेव निषेधावशिष्टं ब्रह्म ब्रवीतीति प्रकारान्तेण श्रुत्यक्षरयोजनां दर्शयति— **यदा पुनरिति**। नामधेयमेव दर्शयति— **अथ नामधेयमिति**।

भावरूपत्वे घटादिवत्प्रत्यक्षेण किमिति न गृह्यत इत्युच्यते, किं वा प्रत्यगात्मनि गृह्यमाणे किमिति न गृह्यत इति? आद्यपक्षे परिहारमाह— **उच्यते— तदव्यक्तमिति**। **नान्यैर्देवैरिति**। इन्द्रियान्तरैरित्यर्थः। प्रत्यगात्मस्वरूपत्वेऽप्यविद्ययाऽऽवृतत्वात्तद्ग्रहेऽपि न गृह्यत इत्येतद् बहिरेव द्रष्टव्यम्।

### *न्यायनिर्णयः*

तस्मान्नेति नेत्युच्यते, न तु सर्वाभावधियेति निर्वचनस्यार्थः। एवंप्रकारमेतन्निर्वचनमनिषिद्धं ब्रह्म वदतीत्याह— **तच्चेति**। निर्वचनमेवानिषिद्धं ब्रह्माहेति श्रुतियोजनयोक्तम्। इदानीं नामधेयमेव निषेधावशिष्टं ब्रह्माहेति विधान्तरेण श्रुतियोजनया दर्शयति— **यदेति**। किं तन्नामधेयं, तदाह— **अथेति**। प्रकृतनिषेधस्याभावान्तत्वनिषेधार्थोऽथशब्दः। ननु नामधेयं निषेधस्याभावान्तत्वेऽपि तद्विषयं घटिष्यते। नेत्याह— **तच्चेति**। द्वेधा सूत्रावयवव्याख्यामुपसंहरति— **तस्मादिति**।।२२।।

अनिषेध्यत्वेन वस्तुसत्यं ब्रह्मोक्त्वा तस्याग्राह्यत्वेनासत्त्वमाशङ्क्य प्रत्याह— **तदव्यक्तमिति**। सूत्रव्यावर्त्यमाह— **यत्तदिति**। आत्मनि गृह्यमाणे तदभिन्नं ब्रह्मापि ग्राह्यमिति वाऽऽपाद्यते, भावत्वे घटवत् प्रत्यक्षग्राह्यता तस्य स्यादिति वा? नाद्यः। प्रत्यगभिन्नत्वेऽप्यविद्यावृतत्वात् तद्ग्रहेऽपि तदग्रहसिद्धेरित्याह— **उच्यत इति**। न द्वितीय इत्याह— **तदिति**। कथमिन्द्रियाग्राह्यत्वं ब्रह्मणः सिद्धं, तत्राह— **आह हीति**। **अन्यैर्देवैरि**न्द्रियान्तरैरिति यावत्। श्रुत्युक्तिपरत्वेन सूत्रावयवं व्याख्याय विधान्तरेण व्याचष्टे— **स्मृतिरिति**।।२३।।

### अपि [1]च संराधने प्रत्यक्षानुमानाभ्याम्।।२४।।

**अपि चैनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्ति योगिनः। संराधनं च भक्तिध्यान-प्रणिधानाद्यनुष्ठानम्। कथं पुनरवगम्यते संराधनकाले पश्यन्तीति? प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः। तथा हि श्रुतिः– 'पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन्। कश्चिद् धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' (क.उ. ४।१) इति, 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' (मु.उ. ३।१।८) इति चैवमाद्या। स्मृतिरपि– 'यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः। ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः।। (महा.भा.शा. ४७।५५) योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्' इति चैवमाद्या।।२४।।**

**ननु संराध्यसंराधकभावाभ्युपगमात् [2]परेतरात्मनोरन्यत्वं स्यादिति। नेत्युच्यते–**

### प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्।।२५।।

***प्रकटार्थविवरणम्***

**अपि च संराधने प्रत्यक्षानुमानाभ्याम्।।** अतीन्द्रियत्वेऽपि न सुप्तायमानत्वम्, किं तु विगलिताखिलमलकलङ्केऽन्तःकरणे व्यज्यत इत्याह— **अपि चैनमिति।**

प्रत्युक्तमप्यसकृत् तात्त्विकं भेदं पुनः प्रसङ्गादुद्भाव्य पराकरोति— **ननु संराध्येत्यादिना।**

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्।।** यथा प्रकाशादीनां स्वरूपेणावैशेष्यमेकरूपता तथा चितोऽपि स्वरूपेणैक्यं विशेषप्रकाशश्च कर्मण्युपाधौ, न स्वतः, ऐक्यस्याभ्यासादिति योजना।

***भाष्यभावप्रकाशिका***

नन्वविद्ययाऽऽवृतं चेन्न कदाचिदपि गृह्येतेत्यत आह— **अपि संराधन इति।** अथवा यन्न कदाचिदपि गृह्यते तत्संभव एव कथमित्यत्राह— **अपि संराधन इति।**

सूत्रान्तरमाशङ्कापूर्वकमवतारयति— **ननु संराध्येति।** कर्मणीति पदं व्याचष्टे— **कर्मसूपाधिभूतेष्विति।** दार्ष्टान्तिकमाह—

***न्यायनिर्णयः***

आत्मैव ब्रह्माविद्यावृतं चेन्न कदाचिदपि गृह्येतेत्याशङ्क्याह— **अपीति।** सूत्रं व्याकरोति— **अपि चेति।** नास्य सदा ग्राह्यत्वमग्राह्यत्वं वा, समाध्यवस्थायां प्रत्यक्त्वेन भानादित्यर्थः। भक्तिध्यानाभ्यां प्रकर्षेण स्वीये मनसि प्रतीचो निधानं भक्तिध्यानप्रणिधानम्। आदिपदेन तत्पूर्वकजपनमस्कारादिग्रहणम्। तत्र प्रश्नपूर्वकं प्रमाणमाह— **कथमिति।** स्वयंभूः स्रष्टा परमात्मा खानि छिद्रोपलक्षितानीन्द्रियाणि पराञ्च्यनात्मविषयाणि व्यतृणद्धिंसितवान्। सा हि तेषां हिंसा यदसदर्थविषयतया समर्पणमित्याह— **पराञ्चीति।** तेषां तथा सृष्टत्वे गमकमाह— **तस्मादिति।** यदि पराञ्चमेवार्थमिन्द्रियैः पश्यति, नान्तरात्मानम्, कथं तर्हि लोकस्य तत्र ज्ञानमित्याशङ्क्य साधनचतुष्टयवतः समाधिकाले शुद्धे मनसि प्रत्यक्त्वेन तद्दृष्टिरित्याह— **कश्चिदिति।** ततो नित्याद्यनुष्ठानात्परिशुद्धबुद्धिर्ज्ञानस्य करणव्युत्पत्त्याऽन्तःकरणस्य प्रसादो नैर्मल्यं तेन निरवयवं निष्प्रपञ्चं प्रत्यञ्चं ध्यायन्नविषयत्वेन तं साक्षात्करोतीत्याह— **ज्ञानेति।** विगता निद्रा येभ्यस्ते तथेति स्वापाद् विवेकः। जितः श्वासो यैरिति प्राणायामनिष्ठतोक्तिः। संतुष्टा इति मनोव्याकुलताव्यावृत्त्या स्वप्नाद् विवेकः। संयतानीन्द्रियाणि येषामिति जागरिताद् भेदः। एतानि विशेषणानि यमनियमादिसर्वाङ्गोपसंग्रहार्थानि। योगात्मत्वं तज्जधीगम्यत्वम्।।२४।।

सूत्रान्तरव्यावर्त्यमाह— **नन्विति।** व्यावर्तकं सूत्रमवतारयति— **नेतीति।** 'प्रकाशादिवच्चे'ति भागं विभजते— **यथेति।**

---

१. चकारः क्वचिन्नास्ति। २. 'परापरात्मनोः' इति पा.।

यथा प्रकाशाकाशसवितृप्रभृतयोऽङ्गुलिकरकोदकप्रभृतिषु कर्मसूपाधिभूतेषु सविशेषा इवावभासन्ते, न च स्वाभाविकीमविशेषात्मतां जहति। एवमुपाधिनिमित्त एवायमात्मभेदः स्वतस्त्वैकात्म्यमेव। तथाहि– वेदान्तेष्वभ्यासेनासकृज्जीवप्राज्ञयोरभेदः प्रतिपाद्यते।।२५।।

## अतोऽनन्तेन तथा हि लिङ्गम्।।२६।।

अतश्च स्वाभाविकत्वादभेदस्याविद्याकृतत्वाच्च भेदस्य विद्ययाऽविद्यां विधूय जीवः परेणानन्तेन प्राज्ञेनात्मनैकतां गच्छति। तथा हि लिङ्गम्– 'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति' (मु.उ. ३।२।९) 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ.उ. ४।४।६) इत्यादि।।२६।।

## उभयव्यपदेशात्त्वहिकुण्डलवत्।।२७।।

तस्मिन्नेव संराध्यसंराधकभावे मतान्तरमुपन्यस्यति स्वमतविशुद्धये। क्वचिज्जीवप्राज्ञयोर्भेदो व्यपदिश्यते 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' (मु.उ. ३।१।८) इति ध्यातृध्यातव्यत्वेन द्रष्टृद्रष्टव्यत्वेन च; 'परात्परं पुरुषमुपैति दिव्यम्' (मु.उ. ३।२।८) इति गन्तृगन्तव्यत्वेन; 'यः सर्वाणि भूतान्यन्तरो यमयति' (बृ.उ. ३।७।१५) इति नियन्तृनियन्तव्यत्वेन। क्वचित्तु तयोरेवाभेदो व्यपदिश्यते 'तत्त्वमसि' (छा.उ. ६।८।७) 'अहं ब्रह्मास्मि' (बृ.उ. १।४।१०) 'एष त आत्मा सर्वान्तरः' (बृ.उ. ३।४।१) 'एष त आत्माऽन्तर्याम्यमृतः' (बृ.उ. ३।७।३) इति। तत्रैवमुभयव्यपदेशे सति यद्यभेद एवैकान्ततो [१]गृह्यते,

### *प्रकटार्थविवरणम्*

अतोऽनन्तेन तथा हि लिङ्गम्।। अस्मिन्नेव पक्षे मोक्षलाभो घटत इत्याह— **अतः स्वाभाविकत्वादिति।**

**उभयव्यपदेशात्त्वहिकुण्डलवत्।। प्रकाशाश्रयवद्वा तेजस्त्वात्।।** सूत्रद्वयसङ्गतिमाह— **तस्मिन्नेवेति।**

### *भाष्यभावप्रकाशिका*

**एवमिति।** तदेवं प्रकाश आत्मा कर्मण्युपाधौ तथा विशिष्ट इति सूत्रभागव्याख्यानमूहनीयम्। अभ्यासादिति पदं व्याचष्टे— **तथाहि वेदान्तेष्विति।**

जीवस्य ब्रह्मात्मना प्राप्तिश्रुतेरपि सामर्थ्यादौपाधिक एव ब्रह्मभेद इत्यवगम्यत इत्याह— **अतोऽनन्तेनेति।**

उभयस्य व्यपदेशादहिकुण्डलवदित्यभि[हि]रूपेणाभेद इति।

### *न्यायनिर्णयः*

यद्यपि दृष्टान्तादात्मा प्रकाशशब्दितोऽज्ञानतत्कार्ये कर्मण्युपाधौ सविशेषस्तथापि वस्तुतस्तस्यावैशेष्यमैकरस्यमेवेति दार्ष्टान्तिकमाह— **एवमिति।** अभ्यासादिति व्याचष्टे— **तथा हीति।**।२५।।

जीवस्य ब्रह्मात्मत्वाप्तिश्रुतिवशादपि वास्तवमैक्यमौपाधिकं नानात्वमित्याह— **अत इति।** 'अतोऽनन्तेने'ति व्याचष्टे— **अतश्चेति।** अभेदस्य स्वाभाविकत्वे सूत्रावयवं व्याकुर्वाणो हेतुमाह— **तथा हीति।** आदिपदेन 'ब्रह्मविदाप्नोति पर'मित्यादि ग्राह्यम्।।२६।।

जीवब्रह्मणोरात्यन्तिकमैक्यमुक्त्वा भेदाभेदवादमुत्थापयति— **उभयेति।** सूत्रद्वयस्य संगतिमाह— **तस्मिन्निति।** तदुपन्यासफलमाह— **स्वमतेति।** अस्तु तर्हि भेदव्यपदेशात् तयोर्भिन्नत्वमेव, तत्राह— **क्वचिदिति।** अन्यतरव्यपदेशात् तदन्यस्य त्याज्यतामाशङ्क्याह—

---

१. 'गृह्येत' इति पा.।

**भेदव्यपदेशो निरालम्बन एव स्यात्। अत उभयव्यपदेशदर्शनादहिकुण्डलवदत्र तत्त्वं भवितुमर्हति। यथाऽहिरित्यभेदः, कुण्डलाभोगप्रांशुत्वादीनीति तु भेदः, एवमिहापीति।।२७।।**

## प्रकाशाश्रयवद्वा तेजस्त्वात्।।२८।।

**अथ वा प्रकाशाश्रयवदेतत् प्रतिपत्तव्यम्। यथा प्रकाशः सावित्रस्तदाश्रयश्च सविता नात्यन्तभिन्नावुभयोरपि तेजस्त्वाविशेषात्। अथ च भेदव्यपदेशभाजौ भवतः, एवमिहापीति।।२८।।**

## पूर्ववद्वा।।२९।।

**यथा वा पूर्वमुपन्यस्तं प्रकाशादिवच्चावैशेष्यमिति तथैवैतद् भवितुमर्हति। तथा ह्यविद्याकृतत्वाद् बन्धस्य विद्यया मोक्ष उपपद्यते। यदि पुनः परमार्थत एव बद्धः कश्चिदात्माऽहिकुण्डलन्यायेन परस्यात्मनः संस्थानभूतः, प्रकाशाश्रयन्यायेन [१]वैकदेशभूतोऽभ्युपगम्येत, ततः पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वान्मोक्ष-शास्त्रवैयर्थ्यं प्रसज्येत। न चात्रोभावपि भेदाभेदौ श्रुतिस्तुल्यवद् व्यपदिशति। अभेदमेव हि प्रतिपाद्यत्वेन निर्दिशति, भेदं तु पूर्वप्रसिद्धमेवानुवदत्यर्थान्तरविवक्षया। तस्मात् प्रकाशादिवच्चावैशेष्यमित्येष एव सिद्धान्तः।।२९।।**

## प्रतिषेधाच्च।।३०।।

**इतश्चैष एव सिद्धान्तः। यत्कारणं परस्मादात्मनोऽन्यं चेतनं प्रतिषेधति शास्त्रम्- 'नान्योऽतोऽस्ति**

### *प्रकटार्थविवरणम्*

**पूर्ववद्वा**।। सिद्धान्तमाह— **पूर्ववद्वेति**।। **प्रतिषेधाच्च**।। इति षष्ठं प्रकृतैतावत्त्वाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

विषयभेदेन भेदाभेदयोरविरोध उक्तः। इदानीमेकविषयत्वेऽपि तयोर्न विरोधः सवितृप्रकाशयोरिव प्रमाणसिद्धे विरोधाशङ्काऽसंभवादित्याह— **अथवेति**। यद्वा पूर्वत्र जीवः परमात्मनोऽहिकुण्डलन्यायेन संस्थानभूतः प्रदर्शितः। इदानीन्तु तदेकदेशभूत इति प्रदर्श्यत इति विशेषः।

स्वसिद्धान्तमाह— **यथा वेति**। यदुक्तं प्रमाणसिद्धत्वादविरोध इति, तत्राह— **न चात्रेति**। प्रसिद्धत्वाद् भेदमनुवदति परमप्रसिद्धाभेदविवक्षया। न चैकविषयत्वेऽप्यनुभूयमानत्वात् भेदाभेदावविरुद्धौ इति वाच्यम्, देहात्मभाववदनुभूयमानत्वेऽपि विचारासहत्वेन मिथ्यात्वोपपत्तेरिति भावः।

### *न्यायनिर्णयः*

**तत्रेति**। भेदो नियतो गृह्यते चेदभेदोक्तिरनालम्बना स्यादिति द्रष्टव्यम्। अन्यतरोक्तेरपि निरालम्बनत्वायोगे फलितमाह— **अत इति**। अत्रेति ब्रह्मात्मोक्तिः। अहिकुण्डलवदित्युक्तं विवृणोति— **यथेति**।।२७।।

अहिकुण्डलन्यायेन परस्य जीवः संस्थानभूतो दर्शितः। सम्प्रति तदेकदेशभूत इति विधान्तरमाह— **प्रकाशेति**। तद् व्याकरोति— **अथ वेति**। ब्रह्मात्मतत्त्वमेतदित्युक्तम्। दृष्टान्तं व्याचष्टे— **यथेति**। अभेद एव तर्हि तयोर्नेत्याह— **अथ चेति**। **इहापीति** पूर्ववद् ब्रह्मात्मोक्तिः। परमतमुपसंहर्तुमितिशब्दः।।२८।।

स्वसिद्धान्तमाह— **पूर्ववद्वेति**। तन् प्रपञ्चयति— **यथेति**। तर्हि भेदस्यैव प्रतिपाद्यता; मैवम्। प्रसिद्धानुवादेनाप्रसिद्धस्य तद्भावादित्याह— **अभेदमिति**। परमतायोगे स्वमतमुपसंहरति— **तस्मादिति**।।२९।।

स्वमतसंभवे हेत्वन्तरमाह— **प्रतिषेधाच्चेति**। चकारार्थमाह— **इतश्चेति**। इतःशब्दार्थं विवृण्वन्नादौ चेतनभेदनिषेधमुदाहरति—

१. 'चैकदेश' इति पा.।

**द्रष्टा' (बृ.उ. ३।७।२३) इत्येवमादि। 'अथात आदेशो नेति नेति' (बृ.उ. २।३।६) 'तदेतद् ब्रह्मापूर्व-मनपरमनन्तरमबाह्यम्' (बृ.उ. २।५।१९) इति च ब्रह्मव्यतिरिक्तप्रपञ्चनिराकरणाद् ब्रह्ममात्रपरिशेषाच्चैष एव सिद्धान्त इति गम्यते।।३०।।**

।। इति षष्ठं प्रकृतैतावत्त्वाधिकरणम्।।

७।।पराधिकरणम्।।सू.३१-३७।।

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः।।३१।।

**यदेतन्निरस्तसमस्तप्रपञ्चं ब्रह्म निर्धारितमस्मात् परमन्यत् तत्त्वमस्ति नास्तीति श्रुतिविप्रतिपत्तेः संशयः। कानिचिद्धि वाक्यान्यापातेनैव प्रतिभासमानानि ब्रह्मणोऽपि परमन्यत् तत्त्वं प्रतिपादयन्तीव। तेषां हि परिहारमभिधातुमयमुपक्रमः क्रियते। परमतो ब्रह्मणोऽन्यत् तत्त्वं भवितुमर्हति। कुतः? सेतुव्यपदेशादुन्मानव्यपदेशात्**

### *शारीरकन्यायसंग्रहः*

**परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः।।३१।। सामान्यात्तु।।३२।। बुद्ध्यर्थः पादवत्।।३३।। स्थानविशेषात् प्रकाशादिवत्।।३४।। उपपत्तेश्च।।३५।। तथाऽन्यप्रतिषेधात्।।३६।। अनेन सर्वगतत्वमायामशब्दादिभ्यः।।३७।।** ब्रह्म सद्वितीयम्, सेतुव्यपदेशवत्त्वात्, प्रसिद्धसेतुवत्। ब्रह्म सद्वितीयम्, उन्मानव्यपदेशवत्त्वात्, गवादिवत्। ब्रह्म सद्वितीयम्, संबन्धव्यपदेशवत्त्वात्, रज्जुघटवत्। ब्रह्म सद्वितीयम्, भेदव्यपदेशवत्त्वात्, घटादिवत्— इत्यनुमानचतुष्टयस्य ''एकमेवाद्वितीयम्'' ''यस्मात् परं नापरमस्ति किञ्चित्'' इत्यागमविरुद्धत्वं हेतूनां चोपचरितविषयत्वेन मुख्यसिद्धत्वं[स्वरूपासिद्धत्वं] च दर्शितम्।।

### *प्रकटार्थविवरणम्*

**परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः**।। सबीजं संशयमाह— **यदेतदिति**। ननु पूर्वं सकलश्रुतिविप्रतिषेधनिरासेनाद्वयं ब्रह्मैव वस्तु, नान्यदिति साधितम्। किमर्थः पुनरारम्भः इत्याशङ्क्याह— **कानिचिद्धीति**। मन्दाशङ्कापाकरणेन तत्पदलक्ष्यस्य अद्वितीयत्वप्रपञ्चार्थ एवायमारम्भ इत्यर्थः। पूर्वपक्षसूत्रं योजयति— **परमत इत्यादिना**। ब्रह्म सद्वितीयम्, सेतुत्वात्, लौकिकसेतुवदित्युक्तम्।

### *भाष्यभावप्रकाशिका*

इदानीमचेतनभेदनिषेधमाह— **अथात इति**।। इति षष्ठं प्रकृतैतावत्त्वाधिकरणम्।।

**परमत इति**। ननु संशयो नोपपद्यते, श्रुतितो युक्तितश्च ब्रह्मव्यतिरिक्तवस्त्वन्तराभावस्य निश्चितत्वादित्याशङ्क्य— सेत्वादि-श्रुतीना[मापा]ततस्तद्विरुद्धार्थतादर्शनात् तत्प्रतिसमाधा[नार्थम]यमुपक्रममि[इ]त्याह— **यदेतदिति**। तर्हि श्रुतिप्रतिपन्नत्वान्निराकरणम-शक्यमित्याशङ्क्याह— **कानिचिदिति**।

### *न्यायनिर्णयः*

**यदिति**। अचेतनभेदनिषेधं दर्शयति— **अथेति**। उक्तनिषेधद्वयात्मकशास्त्रतात्पर्यं संगृह्णाति— **ब्रह्मेति**। तदेवं निषेधवाक्यार्थालोचनया निष्प्रपञ्चं ब्रह्म वाक्यार्थान्वययोग्यं तत्पदलक्ष्यमिति।।३०।। इति षष्ठं प्रकृतैतावत्त्वाधिकरणम्।।

नेति नेतीति ब्रह्मातिरिक्तं सर्वं निषेध्यमित्युक्तम्, तदयुक्तम्, सेत्वादिव्यपदेशेभ्यो वस्त्वन्तरसत्त्वावगमात्। द्युभ्वाद्यधिकरणे सेतुव्यपदेशस्य प्रतिनीतत्वेऽपि भेदादिव्यपदेशानां गतिमजानन्नाशङ्कते— **परमिति**। विषयोक्तिपूर्वकं सबीजं संशयमाह— **यदिति**। सर्वश्रुतिविप्रतिपत्तिनिरासेनाद्वयं बह्मैव वस्तु, नान्यदिति स्थिते कथमयमारम्भः स्यादित्याशङ्क्याह— **कानिचिदिति**। मन्दाशङ्कानिरासाय तत्पदलक्ष्यस्याद्वयत्वप्रपञ्चार्थोऽयमारम्भः, ततोऽस्य पादादिसंगतिसौलभ्यम्। पूर्वपक्षे सद्वितीयत्वाद् ब्रह्मणो द्वितीयनिषेधासिद्धिः। सिद्धान्ते तस्याद्वयत्वाद् द्वैतनिषेधोपपत्तिः। अन्यस्य निषेधाद् ब्रह्मणश्च श्रुतत्वात् तदस्ति चेद् ब्रह्मातिरिक्तस्यापि श्रुत्योक्तत्वादस्तितेति

**संबन्धव्यपदेशाद्भेदव्यपदेशाच्चेति। सेतुव्यपदेशस्तावत्– 'अथ य आत्मा स सेतुर्विधृतिः' (छा.उ. ८।४।१) इत्यात्मशब्दाभिहितस्य ब्रह्मणः सेतुत्वं संकीर्तयति। सेतुशब्दश्च हि लोके जलसंतानविच्छेदकरे मृद्दार्वादिप्रचये प्रसिद्धः। इह तु सेतुशब्द आत्मनि प्रयुक्त इति लौकिकसेतोरिवात्मसेतोरन्यस्य वस्तुनोऽस्तित्वं गमयति। 'सेतुं तीर्त्वा' (छा.उ. ८।४।२) इति च तरतिशब्दप्रयोगात्। यथा लौकिकं सेतुं तीर्त्वा जाङ्गलमसेतुं प्राप्नोत्येवमात्मानं सेतुं तीर्त्वाऽनात्मानमसेतुं प्राप्नोतीति गम्यते। उन्मानव्यपदेशश्च भवति– तदेतद् ब्रह्म चतुष्पादष्टाशफं षोडशकलमिति। यच्च लोक उन्मितमेतावदिदमिति परिच्छिन्नं कार्षापणादि ततोऽन्यद् वस्त्वस्तीति प्रसिद्धम्। तथा ब्रह्मणोऽप्युन्मानात् ततोऽन्येन वस्तुना भवितव्यमिति गम्यते। तथा संबन्धव्यपदेशोऽपि भवति– 'सता सोम्य तदा संपन्नो भवति' (छा.उ. ६।८।१) इति, 'शारीर आत्मा प्राज्ञेनात्मना संपरिष्वक्तः' (बृ.उ.मा. ४।१।२१) इति च। मितानां च मितेन संबन्धो दृष्टो यथा नराणां नगरेण। जीवानां च ब्रह्मणा संबन्धं व्यपदिशति सुषुप्तौ। अतस्ततः परमन्यदमितमस्तीति गम्यते। भेदव्यपदेशश्चैतमेवार्थं**

### *प्रकटार्थविवरणम्*

इदानीं प्रकारान्तरमाह— **सेतुं तीर्त्वेति चेति**। जाङ्गलं तटम्। सेतुव्यपदेशं व्याख्यायोन्मानव्यपदेशमाह— **उन्मानेति**। प्राची प्रतीची दक्षिणोदीचीति चतस्रः कलाः, प्रकाशवान् पादः; पृथिव्यन्तरिक्षं द्यौः समुद्र इत्यनन्तवान्; अग्निः सूर्यश्चन्द्रमा विद्युदिति ज्योतिष्मान्; चक्षुः श्रोत्रं वाङ्मन इत्यायतनवान्; एते चत्वारः पादा अस्येति चतुष्पात्; पादानामर्धानि अष्टौ शफा अस्येत्यष्टाशफम्; चतस्रश्चतस्रः कला एकैकस्य पादस्येति षोडशकलमित्यर्थः। ततः किमित्यत आह— **यच्च लोक इति**। कार्षापण इति षोडशपणानां संज्ञा। ब्रह्म सद्वितीयम्, संबन्धव्यपदेशवत्त्वात्, नगरवदित्याह— **तथा सम्बन्धेति**। तथा ब्रह्म सद्वितीयम्, भेदव्यपदेशवत्त्वात्, घटवदित्याह— **भेदव्यपदेशश्चैनमित्यादिना**। आधारभेदो रूपभेद ऐश्वर्यभेदश्चेति त्रिविधो भेदव्यपदेशो दर्शित इति।

### *भाष्यभावप्रकाशिका*

कथं तरतिशब्दप्रयोगबलात् भेदोऽवगम्यत इति, तत्राह— **यथेति**। जाङ्गलं स्थलम्। प्रकाशवाननन्तवान् ज्योतिष्मानायतनवानिति पादाश्चत्वारोऽस्येति चतुष्पात्, अष्टौ शफा अस्येत्यष्टाशफम्, षोडश कला अवयवा अस्येति षोडशकलम्, ताश्च प्राची प्रतीची दक्षिणोदीचीति चतस्रः कलाः प्रकाशवान्नाम प्रथमः पादः। पृथिव्यन्तरिक्षं द्यौस्समुद्र इति चतस्रः कला द्वितीयः पादः। अग्निः सूर्यश्चन्द्रमा विद्युदिति चतस्रः कलास्तृतीयः पादः। प्राणश्चक्षुःश्रोत्रं [मनः] इति चतस्रः कलाः चतुर्थः पादः। नन्वस्ति चेत् [उच्यतां] परिसंख्यायैतावदित्यत आह— **अमितमस्तीति**। प्रमाणसिद्धमस्तीति। न त्वेतावदित्यर्थः। आधारतो देशतोऽवधितश्चेति

### *न्यायनिर्णयः*

मत्वा पूर्वपक्षसूत्रं योजयति— **परमित्यादिना**। इतिशब्दोऽक्षरयोजनासमाप्त्यर्थः। तत्राद्यं विवृणोति— **सेत्विति**। ब्रह्मणः सेतुत्वेऽपि कथं सद्वितीयत्वमित्याशङ्क्य व्याप्तिमाह— **सेतुशब्दश्चेति**। ब्रह्म सद्वितीयं सेतुत्वाल्लौकिकसेतुवदिति मत्वाऽऽह— **इह चेति**। इतश्च ब्रह्मसेतोः सद्वितीयत्वमित्याह— **सेतुमिति**। कथमेतावता वस्त्वन्तरास्तित्वम्, तत्राह— **यथेति**। 'जाङ्गलं वातभूयिष्ठ'मित्युक्तत्वाद् वातबहुलो देशो जाङ्गलम्। इह तु न्यायसाम्येन स्थलमात्रमुक्तम्। द्वितीयं हेतुं व्याकरोति— **उन्मानेति**। प्राची प्रतीची दक्षिणोदीचीति चतस्रः कलाः प्रकाशवान् पादः। पृथिव्यन्तरिक्षं द्यौः समुद्र इत्यनन्तवान् पादः। अग्निः सूर्यश्चन्द्रमा विद्युदिति ज्योतिष्मान् पादः। चक्षुः श्रोत्रं वाङ्मन इत्यायतनवान् पादः। एते पादाश्चत्वारोऽस्येति चतुष्पाद् ब्रह्म, पादानामर्धान्यष्टौ शफान्यस्येत्यष्टाशफं, चतस्रश्चतस्रः कला एकैकस्य पादस्येति षोडशकलं षोडशावयवमित्यर्थः। एवमुन्मानेऽपि कथं वस्त्वन्तरास्तित्वं, तत्राह— **यच्चेति**। कार्षापणशब्देन षोडशपणानां संज्ञोक्ता। ब्रह्म सद्वितीयमुन्मितत्वात् संमतवदित्याह— **तथेति**। तृतीयं हेतुं व्याचष्टे— **तथेति**। तथापि कथं सद्वितीयत्वमित्याशङ्क्य व्याप्तिमाह— **मितानां चेति**। व्याप्तस्य हेतोः पक्षधर्मतामाह— **जीवानां चेति**। विमतं सद्वितीयं, संबन्धवत्त्वात्, नगरवदित्याह— **अत इति**। चतुर्थं हेतुं विवृणोति— **भेदेति**। तत्राधारतो भेदव्यपदेशमुदाहरति—

गमयति। तथाहि– 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (छा.उ. १।६।६) इत्यादित्याधारमीश्वरं व्यपदिश्य ततो भेदेनाक्ष्याधारमीश्वरं व्यपदिशति– 'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' (छा.उ. १।७।५) इति। अतिदेशं चास्यामुना रूपादिषु करोति– 'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' (छा.उ. १।७।५) इति। सावधिकं चेश्वरत्वमुभयोर्व्यपदिशति– 'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च' (छा.उ. १।६।८) इत्येकस्य; 'ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च' (छा.उ. १।७।६) इत्येकस्य। यथेदं मागधस्य राज्यमिदं वैदेहस्येति। एवमेतेभ्यः सेत्वादिव्यपदेशेभ्यो ब्रह्मणः परमस्तीति।।३१।।

एवं प्राप्ते प्रतिपाद्यते–

## सामान्यात्तु।।३२।।

तुशब्देन प्रदर्शितां प्राप्तिं निरुणद्धि। न ब्रह्मणोऽन्यत् किंचिद् भवितुमर्हति, प्रमाणाभावात्। न ह्यन्यस्यास्तित्वे किंचित् प्रमाणमुपलभामहे। सर्वस्य हि जनिमतो वस्तुजातस्य जन्मादि ब्रह्मणो भवतीति निर्धारितम्; अनन्यत्वं च कारणात् कार्यस्य। न च ब्रह्मव्यतिरिक्तं किंचिदजं संभवति, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा.उ. ६।२।१) इत्यवधारणात्। एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानान्न ब्रह्मव्यतिरिक्त-वस्त्वस्तित्वमवकल्पते। ननु सेत्वादिव्यपदेशा ब्रह्मव्यतिरिक्तं तत्त्वं सूचयन्तीत्युक्तम्। नेत्युच्यते। सेतुव्यपदेशस्तावन्न

### *प्रकटार्थविवरणम्*

सामान्यात्तु।। सिद्धान्तसूत्रं व्याचष्टे— **तुशब्देनेत्यादिना**। यदन्यत् तत् किं सदन्नादिवा[किं सादि अनादि वा?]सादेः वस्त्वन्तरत्वे न प्रमाणमित्याह— **प्रमाणाभावादिति**। द्वितीयं दूषयति— **न च ब्रह्मव्यतिरिक्तमिति**। आगमविरुद्धकालात्यया-पदिष्टत्वान्नानुमानाद्यङ्गं धारयतीत्यर्थः। इदानीं सेत्वादिव्यपदेशानामुपचरितार्थत्वेन हतूनां स्वरूपासिद्धिप्रदर्शनायोपक्रमते— **ननु सेत्वादिव्यपदेशा इत्यादिना**।

### *भाष्यभावप्रकाशिका*

त्रिविधं भेदव्यपदेशं दर्शयति— **तथा हीति**।

अभेदेऽपि प्रमाणानुपलम्भस्तुल्य इत्यत्राह— **सर्वस्येति**। तथापि कथमभेद इत्यत्राह— **अनन्यत्वञ्चेति**। तज्जन्यस्य तदभेदेऽपि तद्व्यतिरिक्तमजं किंचित् स्यादित्यत्राह— **न चेति**। उक्तान्येव प्रमाणानीति शङ्कते— **नन्विति**। सेत्वादिव्यपदेशाः किं

### *न्यायनिर्णयः*

**तथाहीति**। अतिदेशतस्तं दर्शयति— **अतिदेशं चेति**। **अस्येति**। अक्षिस्थस्य पुरुषस्येत्यर्थः। **अमुनेति**। आादित्यमण्डलस्थेन पुरुषेण सहेति यावत्। अवधितोऽपि भेदोक्तिं साधयति— **सावधिकं चेति**। **एकस्येति**। आधिदैविकस्य पुरुषस्येति यावत्। **पुनरेकस्येति**, आध्यात्मिकस्य पुरुषस्येत्यर्थः। ऐश्वर्यस्य सावधिकत्वे दृष्टान्तमाह— **यथेति**। विमतं सद्वितीयं, भेदव्यपदेशभाक्त्वात्, घटवदित्यर्थः। पूर्वपक्षमुपसंहरति— **एवमिति**। ब्रह्मणः सद्वितीयत्वे ततोऽन्यस्य निषेध्यत्वोक्तिरयुक्तेति वक्तु**मितीत्युक्तम्**।।३१।।

पूर्वपक्षमनूद्य सिद्धान्तयति— **एवमिति**। सूत्रं व्याचष्टे— **तुशब्देनेति**। निरोधप्रकारमभिनयति— **नेति**। तत् किं सादि किंवाऽनादि? प्रथमं प्रत्याह— **प्रमाणेति**। तदेव स्फुटयति— **न हीति**। अभेदेऽपि मानादृष्टिस्तुल्येत्याशङ्क्य जन्मादिसूत्रमारभ्य तत्र तत्र सिद्धमर्थं स्मारयति— **सर्वस्येति**। आरम्भणाधिकरणसिद्धमर्थं कथयति— **अनन्यत्वं चेति**। द्वितीयं निराह— **न चेति**। ब्रह्मातिरिक्तवस्त्वभावे श्रुतिवत् तदर्थापत्तिमाह— **एकेति**। ब्रह्मणः सद्वितीयत्वे मानान्युक्तानीति शङ्कते— **नन्विति**। तत्र सेतुव्यपदेशस्य

**ब्रह्मणो बाह्यस्य सद्भावं प्रतिपादयितुं क्षमते। सेतुरात्मेति ह्याह, न ततः परमस्तीति। तत्र परस्मिन्नसति सेतुत्वं नावकल्पत इति परं किमपि कल्प्येत। न चैतन्याय्यम्, हठो ह्यप्रसिद्धकल्पना। अपि च सेतुव्यपदेशादात्मनो लौकिकसेतुनिदर्शनेन [1]सबाह्यवस्तुतां प्रसञ्जयता मृद्दारुमयताऽपि प्रासङ्क्ष्यत[2]। न चैतन्याय्यम्; अजत्वादिश्रुतिविरोधात्। सेतुसामान्यात्तु सेतुशब्द आत्मनि प्रयुक्त इति श्लिष्यते। जगतस्तन्मर्यादानां च विधारकत्वं सेतुसामान्यमात्मनः। अतः सेतुरिव सेतुरिति प्रकृत आत्मा स्तूयते। 'सेतुं तीर्त्वे'त्यपि तरतिरतिक्रमासंभवात् प्राप्नोत्यर्थ एव वर्तते। यथा 'व्याकरणं तीर्ण' इति प्राप्त इत्युच्यते, नातिक्रान्तस्तद्वत्।।३२।।**

## बुद्ध्यर्थः पादवत्।।३३।।

**यदप्युक्तमुन्मानव्यपदेशादस्ति परमिति; तत्राभिधीयते– उन्मानव्यपदेशोऽपि न ब्रह्मव्यतिरिक्त-वस्त्वस्तित्वप्रतिपत्त्यर्थः। किमर्थस्तर्हि? बुद्ध्यर्थः, उपासनार्थ इति यावत्। चतुष्पादष्टाशफं षोडशकलमित्येवंरूपा बुद्धिः कथं नु नाम ब्रह्मणि स्थिरा स्यादिति विकारद्वारेण ब्रह्मण उन्मानकल्पनैव क्रियते। न ह्यविकारेऽनन्ते ब्रह्मणि सर्वैः पुंभिः शक्या बुद्धिः स्थापयितुम्, मन्दमध्यमोत्तमबुद्धित्वात् पुंसामिति। पादवत्। यथा**

***भाष्यभावप्रकाशिका***

श्रुत्या वस्त्वन्तरं प्रतिपादयन्ति किं वा अर्थात्? न तावदाद्य इत्याह— **सेतुव्यपदेशस्तावदिति**। द्वितीयकल्पमाशङ्कते— **तत्र परस्मिन्निति**। तत्रापि श्रौतार्थविरोधादार्थिकार्थो न स्वीकार्यः, श्रुतेर्लिङ्गस्य दुर्बलत्वादित्याह— **हठो हीति**। विवक्षितं सेतुसाम्यं विहाय तद्व्याप्तार्थान्तरवत्त्वकल्पनायामतिप्रसङ्गश्च स्यादित्याह— **अपि[चेति]**(धि)यावत्यभ्युपगते श्रुतिर्न विरुध्यते तावदेवाभ्युपगन्तव्यं व्याप्तत्वेऽपीत्यर्थः। एवन्तर्हि सेतुशब्दस्य निरालम्बनत्वं स्यादित्याशङ्क्योपचरितार्थत्वेन सालम्बनतां सूत्रयोजनया दर्शयति— **सेतुसामान्यादिति**। मर्यादा तत्तन्नियतक्रियासु व्यवस्थितताऽस्या अप्यन्तर्यामितया विधारक आत्मा।

ननु विशुद्धं परित्यज्य किमिति सोपाधिके बुद्धिः स्थिरीक्रियत इति, तत्राह— **न हीति**। पादवदिति सूत्रावयवं व्याचष्टे— **यथा मन इति**। वाक्प्राणश्चक्षुःश्रोत्रमिति चत्वारो मनसः पादाः। अग्निर्वायुरादित्यो दिश इत्याकाशस्य। इदानीं लौकिकनिदर्शनपरतया

***न्यायनिर्णयः***

द्वितीयवस्तुसाधकत्वं नास्तीत्याह— **नेतीति**। स हि श्रुतितोऽर्थतो वा वस्त्वन्तरं साधयति, तत्राद्यं दूषयति— **सेत्विति**। द्वितीयं शङ्कते— **तत्रेति**। श्रौतार्थविरोधादार्थिकार्थो न युक्तो, लिङ्गस्य श्रुतितो दुर्बलत्वादित्याह— **न चेति**। इतश्च तस्य न वस्त्वन्तरसाधकत्वमित्याह— **अपि चेति**। विवक्षितं सेतुसाम्यमुपेक्ष्य तद्व्याप्तमर्थान्तरं कल्पयतोऽतिप्रसक्तिः स्यादिति हेत्वन्तरमेव स्फुटयति— **सेत्विति**। यावति स्वीकृते श्रुतिर्न विरुध्यते तावदेव स्वीकर्तव्यम्; तस्या निर्दोषत्वेन बलवत्तरत्वादित्याह— **न चेति**। सेतुशब्दस्य तर्हि का गतिरित्याशङ्क्य सूत्रयोजनया दर्शयति— **सेतुसामान्यादिति**। किं तत् प्रसिद्धेन सेतुना सामान्यमात्मनि सेतुशब्दप्रयोगे निमित्तम्, तदाह— **जगत इति**। तस्य जगतो मर्यादास्तत्तन्नियतार्थक्रियासु व्यवस्थितत्वलक्षणाः, तासां तदाश्रयस्य जगतश्चान्तर्यामितया यदात्मनो विधारकत्वं तत् तस्य सेतुसामान्यमित्यर्थः। तेनात्मनि सेतुशब्दप्रयोगे सति किं सिध्यति, तदाह— **अत इति**। यत्तु तरतिशब्दादात्मसेतोः सद्वितीयत्वं, तत्राह— **सेतुमिति**। स्वस्यैव स्वातिक्रमायोगात् प्राप्नोत्यर्थस्तरतिरित्ययुक्तम्, प्राप्नोतेरपि स्वात्मन्ययोगात्। 'ब्रह्मविदाप्नोती'तिवदुपपत्तावपि नात्र तरतिस्तदर्थो वृद्धप्रयोगानुपलब्धेरित्याशङ्क्याह— **यथेति**।।३२।।

सेतुव्यपदेशवद् द्वितीयं हेतुं निरस्यति— **बुद्ध्यर्थ इति**। व्यावर्त्यमनूद्य व्यावर्तकं सूत्रमादाय विभजते— **यदपीति**। उन्मानव्यपदेशोऽपीत्यपिना सेतुव्यपदेशो दृष्टान्त्यते। उपासनार्थत्वमुन्मानव्यपदेशस्य विशदयति— **चतुष्पादिति**। शुद्धं ब्रह्म हित्वा सोपाधिके किमिति तत्र बुद्धिः स्थिरीक्रियते, तत्राह— **न हीति**। उत्तमबुद्धीनां झटित्यनौपाधिके ब्रह्मणि बुद्धिप्रवेशेऽपीतरेषां तदभावात् तेषामपि संग्रहार्थं सोपाधिके ब्रह्मणि स्थिरीक्रियते बुद्धिरिति फलितं वक्तुमितीत्युक्तम्। सूत्रभागमादाय वैदिकोदाहरणत्वेन

१. 'सेतुबाह्यवस्तुताम्' इति पा.। २. प्रासङ्क्ष्यत = प्रसञ्जिताऽभविष्यत्। अन्तर्भावितण्यर्थोऽत्र धातुः। 'प्रासञ्ज्येत' इति पा.।

**मनआकाशयोरध्यात्ममधिदैवतं च ब्रह्मप्रतीकयोराम्नातयोश्चत्वारो वागादयो मनःसंबन्धिनः पादाः कल्प्यन्ते, चत्वारश्चाग्न्यादय आकाशसंबन्धिन आध्यानाय, तद्वत्। अथवा पादवदिति–यथा कार्षापणे पादविभागो व्यवहारप्राचुर्याय कल्प्यते। न हि सकलेनैव कार्षापणेन सर्वदा सर्वे जना व्यवहर्तुमीशते, क्रयविक्रये परिमाणानियमात्, तद्वदित्यर्थः।।३३।।**

**स्थानविशेषात् प्रकाशादिवत्।।३४।।**

**इह सूत्रे द्वयोरपि संबन्धभेदव्यपदेशयोः परिहारो विधीयते। यदप्युक्तं संबन्धव्यपदेशाद् भेदव्यपदेशाच्च परमतः स्यादिति; तदप्यसत्। यत एकस्यापि स्थानविशेषापेक्षयैतौ व्यपदेशावुपपद्येते। संबन्धव्यपदेशे तावदयमर्थः। बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य विशेषविज्ञानस्योपाध्युपशमे य उपशमः स परमात्मना संबन्ध इत्युपाध्यपेक्षयैवोपचर्यते, न परिमितत्वापेक्षया। तथा भेदव्यपदेशोऽपि ब्रह्मण उपाधिभेदापेक्षयोपचर्यते, न स्वरूपभेदापेक्षया। प्रकाशादिवदित्युपमोपादानम्। यथैकस्य प्रकाशस्य सौर्यस्य चान्द्रमसस्य वोपाधियोगादुपजातविशेषस्योपाध्युपशमात् संबन्धव्यपदेशो भवति, उपाधिभेदाच्च भेदव्यपदेशः; यथा वा सूचीपाशाकाशादिषूपाध्यपेक्षयैवैतौ संबन्धभेदव्यपदेशौ भवतस्तद्वत्।।३४।।**

**उपपत्तेश्च।।३५।।**

***प्रकटार्थविवरणम्***

**बुद्ध्यर्थः पादवत्।।** वागादय इति वाक्प्राणश्चक्षुःश्रोत्राणि। अग्न्यादय इति अग्निर्वायुरादित्यो दिश इति।

**स्थानविशेषात् प्रकाशादिवत्।। उपपत्तेश्च।।**

***भाष्यभावप्रकाशिका***

योजयति— **अथवेति। तद्वदिति** मन्दबुद्धीनामाध्यानव्यवहारायेत्यर्थः।

प्रथमं द्वयोरपि संक्षेपतः परिहारमाह— **एकस्यापीति**। सम्प्रति विभज्य दर्शयति— **संबन्धेति**। आदिशब्दसूचित-मुदाहरणान्तरमाह— **अथवा [यथा वा]सूचीति**।

ननु एकीभावापेक्षया कस्मादौपचारिकःसंबन्धो व्या[ख्याय]ते, न [मुख्य] इत्याशङ्क्याह— **उपपत्तेश्चेति**। ननु कथमेकस्मिन्

***न्यायनिर्णयः***

व्याकरोति— **पादवदित्यादिना**। वागादय इत्यादिशब्देन प्राणश्चक्षुः श्रोत्रमिति गृहीतम्। अग्न्यादय इत्यादिशब्देन वायुरादित्यो दिश इति त्रयमुक्तम्। इदानीं तमेव सूत्रावयवं लौकिकत्वेन योजयति— **अथवेति**। पादविभागं विनाऽपि व्यवहारबाहुल्यं स्यादित्याशङ्क्याह— **न हीति**। उक्तदृष्टान्तेन मन्दमध्यमधियां ध्यानव्यवहाराय ब्रह्मण्युन्मानकल्पनेति दार्ष्टान्तिकमाह— **तद्वदिति**।।३३।।

अवशिष्टं हेतुद्वयं निराचष्टे— **स्थानेति**। सूत्रतात्पर्यमाह— **इहेति**। तमेव परिहारमुक्त्वाऽनुवादद्वारा स्फोरयति— **यदपीति**। तत्र सूत्रावयवं हेतुत्वेन योजयति— **यत इति**। स्थानविशेषो बुद्धिः आदित्यश्चक्षुरित्यादिः। द्वयोरपि परिहारं संक्षिप्य विभज्य दर्शयन्नादौ संबन्धव्यपदेशं प्रत्याह— **संबन्धेति**। भेदव्यपदेशेऽपि स्थानविशेषादिति पदं योजयति— **तथेति**। व्यपदेशयोरौपाधिकत्वे प्रकाशदृष्टान्तं व्याचष्टे— **प्रकाशेत्यादिना**। आदिशब्देनोक्तमुदाहरणान्तरमाह— **यथा वेति**। एवमेकस्मिन्नपि ब्रह्मण्युपाध्यपेक्षावेतौ व्यपदेशावित्याह— **तद्वदिति**।।३४।।

मुख्ये व्यपदेशद्वये संभवति कुतस्तदौपचारिकमुच्यते, तत्राह— **उपपत्तेश्चेति**। तत्र संबन्धव्यपदेशे सूत्रं योजयति—

**उपपद्यते चात्रेदृश एव संबन्धो, नान्यादृशः। 'स्वमपीतो भवति' (छा.उ. ६।८।१) इति हि स्वरूप संबन्धमेनमामनन्ति। स्वरूपस्य चानपायित्वात् न नरनगरन्यायेन संबन्धो घटते। उपाधिकृतस्वरूपतिरोभावात्तु 'स्वमपीतो भवति' (छा.उ. ६।८।१) इत्युपपद्यते। तथा भेदोऽपि नान्यादृशः संभवति। बहुतरश्रुतिप्रसिद्धै-केश्वरत्वविरोधात्। तथा च श्रुतिरेकस्याप्याकाशस्य स्थानकृतं भेदव्यपदेशमुपपादयति— 'योऽयं बहिर्धा पुरुषादाकाशः' (छा.उ. ३।१२।७) 'योऽयमन्तः पुरुष आकाशः' (छा.उ. ३।१२।८) 'योऽयमन्तर्हृदय आकाशः' (छा.उ. ३।१२।९) इति।।३५।।**

## तथाऽन्यप्रतिषेधात्।।३६।।

**एवं सेत्वादिव्यपदेशान् परपक्षहेतूनुन्मथ्य सम्प्रति स्वपक्षं हेत्वन्तरेणोपसंहरति। तथाऽन्यप्रतिषेधादपि न ब्रह्मणः परं वस्त्वन्तरमस्तीति गम्यते। तथाहि— 'स एवाधस्तात्' (छा.उ. ७।२५।१) 'अहमेवाधस्तात्' (छा.उ. ७।२५।१) 'आत्मैवाधस्तात्', (छा.उ. ७।२५।२) 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' (बृ.उ. २।४।६), 'ब्रह्मैवेदं सर्वम्'[1] (मु.उ. २।२।११) 'आत्मैवेदं सर्वम्', (छा.उ. ७।२५।२), 'नेह नानाऽस्ति किंचन' (बृ.उ. ४।४।१९), 'यस्मात्परं नापरमस्ति किंचित्' (श्वे.उ. ३।९), 'तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' (बृ.उ. २।५।१९) इत्येवमादिवाक्यानि स्वप्रकरणस्थान्यन्यार्थत्वेन परिणेतुम-शक्यानि ब्रह्मव्यतिरिक्तं वस्त्वन्तरं वारयन्ति। सर्वान्तरश्रुतेश्च न परमात्मनोऽन्योऽन्तरात्माऽस्तीत्यवधार्यते।।३६।।**

## अनेन सर्वगतत्वमायामशब्दादिभ्यः।।३७।।

### *प्रकटार्थविवरणम्*

**तथाऽन्यप्रतिषेधात्।। अनेन सर्वगतत्वमायामशब्दादिभ्यः।।** एवमद्वितीयत्वं प्रपञ्च्य सर्वगतत्वं दर्शयति— **अनेन सर्वगतत्वमिति।**

### *भाष्यभावप्रकाशिका*

संबन्धा[ः], ता[स्य] द्विनिष्ठत्वादित्यत्राह— **उपाधिकृतेति।** श्रौतानां व्यपदेशानां मुख्यार्थत्वमभ्युपगन्तव्यम्, नौपचारिकत्वमित्याशङ्क्य नायं नियमोऽन्यत्रापि दृष्टत्वादित्याह— **तथा च श्रुतिरिति।**

सेत्वादिशब्दानामन्यप्रकरणस्थत्वात् बाधो युज्यते। एतेषान्तु स्वप्रकरणस्थत्वात्र बाधसंभव इत्याह— **स्वप्रकरणस्थानीति।**

### *न्यायनिर्णयः*

**उपपद्यते चेति।** अत्रेति ब्रह्मात्मनोरुक्तिः। औपचारिकस्यैव संबन्धस्योपपत्तिमुपपादयति— **स्वमिति।** मुख्यसंबन्धासंभवं साधयति— **स्वरूपस्येति।** संबन्धस्य द्विनिष्ठत्वादेकस्मिन्नयोगमाशङ्क्याह— **उपाधीति।** इदानीमौपचारिकं भेदमादाय सूत्रं योजयति— **तथेति।** श्रौतव्यपदेशस्य मुख्यत्वमेव, न त्वौपचारिकत्वमन्यत्रादृष्टेरित्याशङ्क्याह— **तथा चेति।**।३५।।

स्वपक्षे हेत्वन्तरमाह— **तथेति।** सूत्रतात्पर्यमाह— **एवमिति।** ब्रह्मणोऽद्वितीयत्वं स्वपक्षः। हेत्वन्तरमेव सूत्रयोजनया विशदयति— **तथेति।** यथा सेत्वादिव्यपदेशनिरासेभ्यो न वस्त्वन्तरधीस्तथेति यावत्। अन्यप्रतिषेधमुदाहरति— **तथा हीति।** तस्य ताटस्थ्यं व्यासेधति— **अहमेवेति।** अहंकारस्य सर्वात्मत्वप्राप्तिं प्रत्याह— **आत्मैवेति।** निन्दानुपपत्त्या भेदनिषेधं दर्शयति— **सर्वमिति।** बाधायां सामानाधिकरण्यादपि तत्सिद्धिरित्याह— **ब्रह्मैवेति।** आर्थिकीं निषेधधियमुक्त्वा साक्षादेव तत्प्रतीतिमाह— **नेहेति।** 'यस्मात्पर'मित्यत्र 'तेनेदं पूर्णं पुरुषेणे'त्युत्तरेण संबन्धः। सेत्वादिव्यपदेशेभ्यो दर्शितवाक्यानां विशेषमाह— **स्वप्रकरणेति।** ब्रह्मणोऽद्वयत्वे हेत्वन्तरमाह— **सर्वान्तरेति।**।३६।।

---

१. द्र.नृ.उ. ७-३।

**अनेन सेत्वादिव्यपदेशनिराकरणेनान्यप्रतिषेधसमाश्रयणेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति। अन्यथा हि तन्न सिध्येत्। सेत्वादिव्यपदेशेषु हि मुख्येष्वङ्गीक्रियमाणेषु परिच्छेद आत्मनः प्रसज्येत, सेत्वादीनामेवमात्मकत्वात्। तथाऽन्यप्रतिषेधेऽप्यसति वस्तु वस्त्वन्तराद् व्यावर्तत इति परिच्छेद एवात्मनः प्रसज्येत। सर्वगतत्वं चास्यायामशब्दादिभ्यो विज्ञायते। आयामशब्दो व्याप्तिवचनः शब्दः। 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' (छा.उ. ८।१।३) 'आकाशवत्सर्वगतश्च नित्यः' 'ज्यायान् दिवः' (छा.उ. ३।१४।३) 'ज्यायानाकाशात्' 'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः' (भ.गी. २।२४) इत्येवमादयो हि श्रुतिस्मृतिन्यायाः सर्वगतत्वमात्मनोऽवबोधयन्ति।।३७।।**

।। इति सप्तमं पराधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

।।फलाधिकरणम्।।

**फलमत उपपत्तेः।।३८।। श्रुतत्वाच्च।।३९।। धर्मं जैमिनिरत एव।।४०।। पूर्वं तु बादरायणो हेतुव्यपदेशात्।।४१।।** 'यागेन स्वर्गं भावयेत्' इति वाक्यार्थे फलभावनां प्रति यागस्य करणभावनया भाव्यमानस्य करणत्वमवगम्यमानं भाव्यस्वर्गादिनिर्वर्तनद्वारेण यागः फलभावनां प्रति करणमित्यवगमयति, फलभावनाकरणस्य कुठारादेः स्वयं फलभावनाविषयीकृतस्य द्वैधीभावनिर्वर्तनेन फलभावनाकरणत्वदर्शनात्। ततश्च यागस्य फलभावनाकरणत्वमवगम्यमानं कालान्तरभाविस्वर्गसाधनसमर्थं यागजन्यमपूर्वं नाम किञ्चिदर्थापत्त्या कल्पयति। अपूर्ववाक्यार्थपक्षेऽपि लिङादिप्रत्ययेन धात्वर्थकर्तव्यतायां लोके गृहीतसम्बन्धेन वेदेऽपि स्वर्गकामस्य यागकर्तव्यतायामभिहितायाम् तदन्यथानुपपत्त्या यागस्य स्वर्गसाधनत्वं सिध्यति। पुनश्च तदन्यथानुपपत्त्या अपूर्वं परिकल्प्य लिङादेः तदभिधायकत्वं च कल्पयित्वा अपूर्ववाक्यार्थः परिकल्प्यते। अपूर्वव्यतिरिक्तनियोगवाक्यार्थपक्षेऽपि स्वर्गकामस्य यागे नियोगान्यथानुपपत्त्या यागस्य स्वर्गसाधनत्वं परिकल्प्य ततोऽपूर्वं परिकल्प्यते। एवं त्रिष्वपि पक्षेषु यागस्य स्वर्गसाधनत्वान्यथानुपपत्तिः स्वर्गसाधनसमर्थं निरपेक्षमर्थं कल्पयन्ती परमेश्वरमर्थवादप्राप्तं फलदातारं निरुणद्धीति प्राप्ते।

### *प्रकटार्थविवरणम्*

**अन्यथा हीति**। सेत्वादिव्यपदेशस्य मुख्यत्वे सति तत् सर्वगतत्वं न सिध्येदित्यर्थः। इति सप्तमं पराधिकरणम्।।

### *भाष्यभावप्रकाशिका*

ब्रह्माद्वैतसिद्धावपि सर्वगतत्वं सर्वात्मत्वं च न सिध्यतीत्यत आह— **अनेनेति**। ननु सर्वगतत्वे सिद्धे सत्येतदुपपादनं युज्यते; तदेव कथमित्यत आह— **सर्वगतत्वञ्चेति**। न्यायः परिच्छिन्नत्वे सत्यनित्यत्वप्रसङ्गादिलक्षणः [१]अन्वेतत्वेऽप्यनिर्वचनीयप्रपञ्चावभासस्य ब्रह्माधिष्ठानतया ब्रह्मसंबन्धात् ब्रह्मणःसर्वगतत्वसिद्धिरित्यपि द्रष्टव्यम्।। इति सप्तमं पराधिकरणम्।।

### *न्यायनिर्णयः*

ब्रह्मणोऽद्वयत्वेऽपि सर्वगतत्वं सर्वात्मत्वं च कथम्, तत्राह— **अनेनेति**। सूत्रं व्याकरोति— **अनेनेत्यादिना**। सेत्वादिव्यपदेशानामनिरासे परप्रतिषेधानाश्रयणे च सर्वगतत्वमाकाशस्येव ब्रह्मणः स्यादित्याशङ्क्याह— **अन्यथेति**। तत्र सेत्वादिव्यपदेशानिरासे सर्वगतत्वासिद्धिं स्फुटयति— **सेत्वादीति**। परनिषेधानाश्रयणेऽपि तदसिद्धिं साधयति— **तथेति**। परिच्छेदप्रसक्तिरिष्टैवेत्याशङ्क्यावशिष्टं व्याचष्टे— **सर्वेति**। आदिशब्दः सूत्रे स्मृतिन्यायापेक्षया प्रयुक्तः। तत्र श्रुत्या सह स्मृतिरुक्ता। न्यायस्तु परिच्छिन्नत्वे सत्यनित्यत्वादिलक्षणो यावद्विकारसूत्रोक्तः। न च सर्वमूर्तसंयोगित्वं सर्वगतत्वं सत्त्वे द्वैतस्य स्यादिति युक्तम्। तत्कल्पनाधिष्ठानतया ब्रह्मणः सर्वगतत्वोपगमादतोऽद्वितीयमनवच्छिन्नं ब्रह्मेति।।३७।। इति सप्तमं पराधिकरणम्।।

---

१. 'अद्वैतत्वेऽपि' इति पाठः संभाव्यते।

### ८।।फलाधिकरणम्।।सू.३८-४१।।

## फलमत उपपत्तेः।।३८।।

**तस्यैव ब्रह्मणो व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायामयमन्यः स्वभावो वर्ण्यते। यदेतदिष्टानिष्टव्यामिश्रलक्षणं कर्मफलं संसारगोचरं त्रिविधं प्रसिद्धं जन्तूनां किमेतत् कर्मणो भवत्याहोस्विदीश्वरादिति भवति विचारणा। तत्र तावत् प्रतिपाद्यते– फलमत ईश्वराद् भवितुमर्हति। कुतः? उपपत्तेः। स हि सर्वाध्यक्षः सृष्टिस्थितिसंहारान् विचित्रान् विदधद् देशकालविशेषाभिज्ञत्वात् कर्मिणां कर्मानुरूपं फलं**

### *शारीरकन्यायसंग्रहः*

शुभाशुभव्यामिश्रकर्मफलं कर्मतत्फलसंप्रदानदेशकालनिमित्तविपाकादिविषयविज्ञानवता केनचित् प्रदीयमानं भवितुमर्हति, व्यवहितकर्मफलत्वात्, सेवादिकर्मफलवत् इत्यनुमानानुगृहीतश्रुत्युपस्थापितेश्वरपदार्थबाधकल्पनाद् वरम् अन्यनैरपेक्ष्यधर्मबाधकल्पनम्, वियदधिकरणन्यायेन इत्यन्वयव्यतिरेकसिद्धशरीरेन्द्रियादिसाधनव्यपेक्षादपूर्वात् फलसिद्धिवत् ईश्वरापेक्षादपूर्वादपूर्वापेक्षादीश्वराद्वा फलसिद्धिः। अथवा श्रुत्यनुमानप्राप्तेश्वरे प्राक्प्रवृत्तकर्मानुसन्धानेन लौकिकैश्वर्यवत् फलदातरि सत्यश्रुतकल्प्यापूर्वात् श्रुतमेव बलवत्तरम् इति न्यायेन अर्थापत्तेः श्रुतेश्वरेणोपक्षयात् नापूर्वकल्पनावकाश इति दर्शितम्।

**इति प्रकाशात्मयतिविरचिते शारीरकन्यायसंग्रहे तृतीयाध्यायस्य तृतीयः पादः।।**

### *प्रकटार्थविवरणम्*

**फलमत उपपत्तेः।।** "न स्थानतोऽपि" इत्यारभ्य निर्विशेषं सत्यमद्वितीयं सर्वगतं च ब्रह्म तत्पदलक्ष्यं निरूप्य तत्पदवाच्यमीश्वरमिदानीं निरूपयतीत्याह— **तस्यैवेति**। उभयोरपि फलहेतुत्वश्रवणात् संशयमाह— **यदेतदित्यादिना**।

### *भाष्यभावप्रकाशिका*

**फलमत उपपत्तेः।।** ननु ब्रह्म निर्विशेषमिति प्रतिपादितं न स्थानतोऽपीत्यादिना। तत्कथं फलहेतुत्वमीश्वरस्येत्यत आह— **व्या[वहारि]क्या[मिति]**...यदि ब्रह्मणोऽप्यन्यद्धर्मरूपं स्वतन्त्रं फलदातृ भवेत्तदा सर्वप्रपञ्चनिमित्तकारणत्वं तस्य व्याहन्येत। अतो निर्विशेषब्रह्मरूपप्रतिपादनप्रकरणे प्रसङ्गादिदमुच्यते। सगुणोपासनासु वक्ष्यमाणासूपयोक्ष्यत इतीति भावः। सिद्धान्तोपक्रममाह— **तत्र तावदिति**। देशकालविशेषाभिज्ञत्वे हेतुः **सर्वाध्यक्ष इति**। कर्मानुरूपफलदातृत्वे च हेतुः **सृष्टिस्थितिसंहारान्विदधदिति**।

### *न्यायनिर्णयः*

ब्रह्मातिरिक्तेऽर्थे निषिद्धे ब्रह्मणो निर्विशेषत्वान्न फलदातृत्वमित्याशङ्क्य व्यवहारतस्तदुपपादयितुमुपक्रमते— **फलमिति**। पूर्वाधिकरणयोस्तत्पदलक्ष्यं ब्रह्मोक्तम्; इदानीं तत्पदवाच्यमीश्वरं दर्शयतीत्यधिकरणस्य तात्पर्यमाह— **तस्यैवेति**। कुतो निर्विशेषत्वेनोक्तस्य फलहेतुतेत्याशङ्क्याह— **व्यावहारिक्यामिति**। निर्विशेषसत्याद्वितीयपूर्णस्वभावादन्यत्वं फलहेतुत्वाख्यं स्वभावः। तात्पर्यमुक्त्वा विचारविषयमाह— **यदिति**। इष्टं देवत्वादि। अनिष्टं तिर्यक्त्वादि। व्यामिश्रं मनुष्यत्वम्। कर्मफलत्वं साधयितुं संसारावस्थागतत्वमाह— **संसारेति**। त्रिविधकर्मफले लोकानुभवं प्रमाणयति— **प्रसिद्धमिति**। उभयोरपि फलहेतुत्वश्रुतेरुक्ते विषये संशयमाह— **किमिति**। सर्वगतत्वेन फ़लदातृत्वस्य सत्यपि समानन्यायत्वे कर्मपक्षं निराकरिष्यन्नादौ सिद्धान्तमुपक्रमते— **तत्रेति**। वाच्यार्थोक्तेर्लक्ष्यार्थोक्तिविशेषत्वात् तस्य च वाक्यार्थधीहेतुत्वादस्य पादादिसंगतयः। पूर्वपक्षे कर्मण एव फलदानसामर्थ्यादीश्वरस्याकिंचित्करत्वम्। सिद्धान्ते स्वतन्त्रस्य कर्मणोऽसामर्थ्यात् तद्द्वारा परस्यैव तद्भावात् तस्यार्थवत्त्वम्। कटवेष्टनसंस्कारादिवत् पुण्यादिसंस्कारात् फलोत्पत्तौ न प्रदात्रपेक्षेति शङ्कते— **कुत इति**। तत्र सौत्रं हेतुमवतार्य व्याकरोति— **उपपत्तेरिति**। देशकालविशेषाभिज्ञत्वे योग्यत्वमाह— **सर्वेति**। कर्मानुरूपफलदातृत्वे हेतुमाह— **सृष्टीति**। विमतं विशिष्टज्ञानवद्दातृकं, कर्मफलत्वात्, सेवादिकर्मफलवदित्यर्थः। कर्मपक्षे क्रियातो

**संपादयतीत्युपपद्यते। कर्मणस्त्वनुक्षणविनाशिनः कालान्तरभावि फलं भवतीत्यनुपपन्नम्। अभावाद् भावानुत्पत्तेः। स्यादेतत्— कर्म विनश्यत् स्वकालमेव स्वानुरूपं फलं जनयित्वा विनश्यति; तत्फलं कालान्तरितं कर्त्रा भोक्ष्यत इति। तदपि न परिशुध्यति; प्राग्भोक्तृसंबन्धात् फलत्वानुपपत्तेः। यत्कालं हि यत् सुखं दुःखं वाऽऽत्मना भुज्यते, तस्यैव लोके फलत्वं प्रसिद्धम्। न ह्यसंबद्धस्यात्मना सुखस्य दुःखस्य वा फलत्वं प्रतियन्ति लौकिकाः। अथोच्येत– मा भूत् कर्मानन्तरं फलोत्पादः, कर्मकार्यादपूर्वात् फलमुत्पत्स्यत इति। तदपि नोपपद्यते। अपूर्वस्याचेतनस्य काष्ठलोष्टसमस्य चेतनेनाप्रवर्तितस्य प्रवृत्त्यनुपपत्तेः। तदस्तित्वे च प्रमाणाभावात्। अर्थापत्तिः प्रमाणमिति चेत्? न; ईश्वरसिद्धेरर्थापत्तिक्षयात्।।३८।।**

### *प्रकटार्थविवरणम्*

सिद्धान्तेनैवोपक्रमते— **तत्र तावदिति**। केवलात्कर्मणः फलमिति परपक्षं दूषयति— **कर्मणस्त्विति**। **अनुक्षणविनाशिन इति**। क्षणिकात् कर्मणः फलं भवतीति ब्रुवतो हठात् विनष्टात् कर्मणः फलमिति प्रसज्यते; तदसङ्गतमित्यर्थः। उक्तदोषपरिहाराय कर्मवादिनो मतं शङ्कते— **स्यादेतदिति**। स्वनिवृत्तिसमकालमेव कर्म स्वफलमुत्पाद्य नश्यतीत्येतदपि तर्कपरिशुद्धं न भवतीत्याह— **तदपि नेति**। कर्मणः स्वनुष्ठितान्नियोगो निष्पद्यते। नियोगाच्च स्थायिनः कालान्तरे फलसिद्धिरित्याह— **अथोच्येतेति**। नियोगस्यापि स्वतन्त्रस्य फलदातृत्वं नोपपद्यत इत्याह— **तदपि नेति**। किं च नियोगस्य शब्दैकगम्यताऽङ्गीक्रियते; सा च न संभवति, व्युत्पत्तिविरहादित्याह— **तदस्तित्वे चेति**। क्षणिकस्य कालान्तरवर्तिस्वर्गसाधनत्वानुपपत्तेः कर्मातिरिक्तमपूर्वं परिकल्प्यते। यत्र स्वर्गकामो नियोज्यतयाऽन्वेति। तदेव च नियोक्तृत्वान्नियोग उच्यत इत्याह— **अर्थापत्तिरिति**। क्षणिकस्यापि कर्मण ईश्वरात् फलं भविष्यति सेवाफलवत्; अतो नास्त्यर्थापत्तेरुदय इत्याह— **नेश्वरसिद्धेरिति**।

### *भाष्यभावप्रकाशिका*

शुभाशुभव्यामिश्रकर्मफलं कर्मतत्फलदेशकालनिमित्तविपाकादिविषयज्ञानवता प्रदीयमानं भवितुमर्हति। व्यवहितकर्मफलत्वात् सेवादिकर्मफलवदित्यर्थः। अथ कर्मण एव फलं कस्मान्न भवतीत्यत आह— **कर्मणस्त्विति**। शङ्कते— **स्यादेतदिति**। उपार्जितमेव फलं कर्मान्तरप्रतिबन्धात् तदा भोक्तुमयोग्यत्वाद्वा न भुज्यत इत्यर्थः। स्वर्गादिभोगस्यैव प्रार्थ्यमानंतया फलत्वात् स्वर्गादेः स्वरूपमात्रेण फलत्वाभावात् 'फलं स्वरूपेणास्ति, तथापि न भुज्यत' इत्ययुक्तं वक्तुमिति परिहरति— **तदपि नेति**। स्वर्गनरकयोश्च तीव्रसुखदुःखरूपत्वादननुभूयमानयोः शशविषाणवदसत्वप्रसङ्गादननुभूयमानत्वेऽपि फलत्वं न युक्तमित्याह— **यत्कालं हीति**। प्रसिद्धमेव व्यतिरेकमुखेन दर्शयति— **न ह्यसंबन्धस्येति**। शङ्कते— **अथोच्येतेति**। अपूर्वस्य स्थायित्वात् कालान्तर-भाविफलदातृत्वमुपपन्नम्, तत्र किमीश्वरेणेत्यर्थः। न च तत्र प्रमाणमस्तीत्याह— **तदस्तित्वे चेति**। यागस्याशुतरविनाशिनः कालान्तरभाविस्वर्गफलत्वं श्रूयमाणं स्थायिवस्तुव्यतिरेकेणानुपपद्यमानमपूर्वं कल्पयति। अतः श्रुतार्थापत्तिरत्र प्रमाणमिति शङ्कते— **अर्थापत्तिरिति**। स्थायिन ईश्वरान्वै[रादेव] कर्मभिराराधितात् कालान्तरभाविनोऽपि फलस्योपपत्तेर्नापूर्वकल्पनावकाश इति

### *न्यायनिर्णयः*

वा तज्जन्यापूर्वाद्वा फलम्? आद्यं दूषयति— **कर्मणस्त्विति**। क्रियारूपं कर्म क्षणिकं, तच्च नष्टं वा फलमुत्पादयेदुत्पाद्य वा फलं नश्येत्? नाद्य इत्याह— **अभावादिति**। द्वितीयं शङ्कते— **स्यादिति**। तदैव तर्हि भोगः स्यादित्याशङ्क्य कर्मान्तरप्रतिबन्धात्, तदा भोक्तुमयोग्यत्वाद्वा नैवमित्याह— **तदिति**। स्वर्गादिभोगस्यैवार्थ्यमानत्वेन फलत्वादभुज्यमानमपि फलं स्वरूपेणास्तीत्ययुक्तमित्याह— **तदपीति**। किंच स्वर्गनरकयोरतितीव्रसुखदुःखत्वादननुभूयमानयोरसिद्धेः स्वरूपेण फलसत्त्वोक्तिरयुक्तेत्याह— **यदिति**। प्रसिद्धत्वमेव व्यतिरेकद्वारा स्फोरयति— **न हीति**। कल्पान्तरमुत्थापयति— **अथेति**। तस्य स्वतन्त्रस्य वा चेतनाधिष्ठितस्य वा फलदातृत्वं, नाद्य इत्याह— **तदपीति**। न द्वितीयस्तस्यैवाप्रामाणिकत्वादित्याह— **तदस्तित्वे चेति**। आशुतरविनाशिनो यागस्य कालान्तरभाविफलहेतुत्वं श्रुतं स्थायिवस्त्वतिरेकेणानुपपन्नमपूर्वं कल्पयतीत्यर्थापत्तिरत्र मानमिति शङ्कते— **अर्थापत्तिरिति**। कर्मभिराराधितादीश्वरादेव स्थायिनो यथोक्तफलसिद्धेर्नैवमित्याह— **नेश्वरेति**।।३८।।

## श्रुतत्वाच्च।।३९।।

**न केवलमुपपत्तेरेवेश्वरं फलहेतुं कल्पयामः; किं तर्हि? श्रुतत्वादपीश्वरमेव फलहेतुं मन्यामहे। तथा च श्रुतिर्भवति– 'स वा एष महानज आत्माऽन्नादो वसुदानः' (बृ.उ. ४।४।२४) इत्येवंजातीयका।।३९।।**

## धर्मं जैमिनिरत एव।।४०।।

**जैमिनिस्त्वाचार्यो धर्मं फलस्य दातारं मन्यते। अत एव हेतोः श्रुतेरुपपत्तेश्च। श्रूयते तावदयमर्थः– 'स्वर्गकामो यजेत' इत्येवमादिषु वाक्येषु। तत्र च विधिश्रुतेर्विषयभावोपगमाद् यागः स्वर्गस्योत्पादक इति गम्यते। अन्यथा ह्यननुष्ठातृको याग आपद्येत; तत्रास्योपदेशवैयर्थ्यं स्यात्। नन्वनुक्षणविनाशिनः कर्मणः फलं नोपपद्यत इति परित्यक्तोऽयं पक्षः। नैष दोषः। श्रुतिप्रामाण्यात्। श्रुतिश्चेत् प्रमाणं यथाऽयं कर्मफलसंबन्धः**

### *प्रकटार्थविवरणम्*

**श्रुतत्वाच्च।।** किं च नियोगात् फलकल्पना श्रुतिविरुद्धाऽपीत्याह— **श्रुतत्वाच्चेति।**

**धर्मं जैमिनिरत एव।।** इदानीं पूर्वपक्षं सूत्रयति— **धर्ममिति। यजेतेति।** यागः समीहितसाधनमिति लिङादिश्रुतेर्धात्वर्थ एव समीहितसाधनताकारेण विषयोऽभ्युपगम्यते। तत्र कस्य समीहितस्य साधनमिति वीक्षायां स्वर्गकामपदेनाधिकारिविशेषणीभूतः स्वर्गः समर्प्यते। तदा च यागः स्वर्गसाधनमिति वाक्यार्थः संपद्यते। अर्थात् तत्कामोऽधिकारीति भावः। उपपत्तिमाह— **अन्यथा हीति।** यागस्य स्वाभिमतसाधनत्वाभावे तस्य स्वयं क्लेशात्मकत्वादननुष्ठानमेव प्रसज्येतेत्यर्थः। विमतं कर्म न कालान्तरीयफलसाधकम्, क्षणिकत्वात्, संप्रतिपन्नवत् इत्यनुमानमागमबाधितमित्याह— **नन्वित्यादिना।** अपूर्वमपि स्वतन्त्रं नियोगाख्यं यद्यपि निरूपणं न

### *भाष्यभावप्रकाशिका*

परिहरति— **नेश्वरेति। अन्नादोऽन्नद** इति यावत्।

इदानीं पूर्वपक्षमस्याधिकरणस्य दर्शयति— **जैमिनिरिति।** कथमेतावता कर्मणः फलहेतुत्वमवगम्यत इत्यत आह— **तस्य च विधिश्रुतेर्विषयभावोपगमादिति।** विधिश्रुतिरिति लिङाद्यर्थो स[ऽभि] धीयते। तस्य विध्यर्थस्य प्रेरणात्मकस्य योग्यो विषयस्तद्भावावगमाद् यागः स्वर्गस्य साधनमिति गम्यते। पुरुषाभिलषितस्वर्गसाधनत्वाभावे यागस्य तत्र प्रेरणासंभवादित्यर्थः। ननु पुरुषप्रवृत्तेरर्थभावनायाः प्रथमतो भाव्याकाङ्क्षत्वादेकपदोपात्ततया सन्निहितत्वात् भाव्यत्वेन यागस्य संबन्धो युक्तः, न तु विषयत्वेनेत्याशङ्क्याह— **अन्यथा हीति।** सन्निधेर्योग्यताया अन्तरङ्गत्वाद् यागस्य च दुःखरूपत्वेन फलार्थप्रवृत्तभावनाभाव्यत्वायोगात् पुरुषविशेषणत्वेन

### *न्यायनिर्णयः*

श्रुतिविरुद्धत्वाच्च न फलहेतुत्वेन नियोगकल्पनेत्याह— **श्रुतत्वाच्चेति।** सूत्रं व्याचष्टे— **न केवलमिति।** कर्मफलत्वादिलक्षणा पूर्वोक्तोपपत्तिः। तामेव श्रुतिमुदाहरति— **तथा चेति।** निरुपाधिकं रूपमुक्त्वा सोपाधिकमाह— **अन्नाद इति।** अन्नमासमन्तात् प्राणिभ्यो ददातीत्यन्नादः। वसु धनमर्थिभ्यो ददातीति वसुदानः। तदुभयमन्नं वसु च कर्मफलम्।।३९।।

सम्प्रति पूर्वपक्षयति— **धर्ममिति।** सूत्रं विभजते— **जैमिनिस्त्विति।** श्रुतेरित्युक्तं व्यनक्ति— **श्रूयत इति।** कथमेतावता फलहेतुत्वं कर्मणः सिद्धं, तत्राह— **तत्र चेति।** विधिश्रुतिर्विध्यर्थस्तस्य लिङाद्यर्थस्य प्रेरणात्मनो यागो विषयस्तद्भावावगमाद्यागः स्वर्गस्य साधनमिति गम्यते, पुरुषाभिलषितस्वर्गसाधनत्वाभावे यागस्य तत्र प्रेरणायोगादित्यर्थः। पुरुषप्रवृत्तेरर्थभावनाया भाव्याकाङ्क्षत्वादेकपदोपात्ततया यागस्य संनिहितत्वाद् भाव्यत्वेन संबन्धो न विषयत्वेनेत्याशङ्क्याह— **अन्यथेति।** योग्यतायाः संनिधेः सकाशादन्तरङ्गत्वाद् यागस्य च क्लेशात्मकत्वेन फलार्थप्रवृत्तभावनाभाव्यत्वायोगात् पुरुषविशेषणत्वेन श्रुतस्वर्गादेरेव भावनोद्देश्यरूपभाव्यत्वसिद्धेरपुरुषार्थे पुरुषस्याप्रवृत्तेः स्वर्गादेरेव भाव्यत्वम्; यागस्य तु करणतया साध्यतेत्यर्थः। कर्म न कालान्तरीयफलदं क्षणिकत्वादित्युक्तं स्मारयति— **नन्विति।** श्रुत्यवष्टम्भेन निराचष्टे— **नेति।** तदेव व्यनक्ति— **श्रुतिश्चेदिति।**

**श्रुत उपपद्यते, तथा कल्पयितव्यः। न चानुत्पाद्य किमप्यपूर्वं कर्म विनश्यत् कालान्तरितं फलं दातुं शक्नोति। अतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था, फलस्य वा पूर्वावस्थाऽपूर्वं नामास्तीति तर्क्यते। उपपद्यते चायमर्थ उक्तेन प्रकारेण। ईश्वरस्तु फलं ददातीत्यनुपपन्नम्। अविचित्रस्य कारणस्य विचित्रकार्यानुपपत्तैर्वैषम्यनैर्घृण्यप्रसङ्गात्, तदनुष्ठानवैयर्थ्यापत्तेश्च। तस्माद्धर्मादेव फलमिति।।४०।।**

## पूर्वं तु बादरायणो हेतुव्यपदेशात्।।४१।।

**बादरायणस्त्वाचार्यः पूर्वोक्तमेवेश्वरं फलहेतुं मन्यते। केवलात् कर्मणोऽपूर्वाद्वा केवलात् फलमित्ययं पक्षस्तुशब्देन व्यावर्त्यते। कर्मापेक्षादपूर्वापेक्षाद्वा यथा तथाऽस्त्वीश्वरात् फलमिति सिद्धान्तः। कुतः? हेतु-**

### *प्रकटार्थविवरणम्*

सहते, तथापि श्रुतस्वर्गसाधनत्वनिर्वाहाय द्वारभूतं किमप्यतिशयरूपं कल्प्यत इति **कौमारिलकटाक्षमाह— न चानुत्पाद्य किमपीति**।

एवं स्वपक्षं सोपपत्तिकमुक्त्वा परपक्षं प्रतिक्षिपति— **ईश्वरस्त्विति**।

**पूर्वं तु बादरायणो हेतुव्यपदेशात्**।। अत्र सिद्धान्तमाह— **पूर्वं त्विति**। विमतं कर्मफलं कर्मादिज्ञानवता प्रदीयमानं

### *भाष्यभावप्रकाशिका*

श्रूयमाणस्वर्गादेरेव भावनोद्देश्यतालक्षणभाव्यत्वप्रतीतितोऽपुरुषार्थे पुरुषस्य प्रवृत्त्यसंभवात् स्वर्गादेरेव भाव्यत्वं यागादेस्तु करणतयैव साध्यत्वमित्यर्थः। उपपत्तिमेव व्यतिरेकमुखेन दर्शयति— **न चेति**। **कर्मणो वा काचिदवस्थेति**। कर्मणोऽवान्तरव्यापार इत्यर्थः। फलोपजननान्यथानुपपत्त्या कल्प्यमानत्वमभिप्रेत्याह— **फलस्य वा पूर्वावस्थेति**। ईश्वरात्फलं भवतीति कस्मान्न कल्प्यत इति तत्राह— **ईश्वरस्त्विति**। (एक)एकरूपात् कारणादनेकरूपं कार्यन्न संभवति कार्यान्तराणामाकस्मिकत्वप्रसङ्गादित्यर्थः। शुभाशुभफलदातृत्वे च रागद्वेषादिमत्त्वप्रसङ्गाच्चेत्याह— **वैषम्यनैर्घृण्येति**। यागेन स्वर्गं भावयेदिति वाक्यार्थाभ्युपगमे फलभावनां प्रति यागस्य करणभावनया भाव्यमानस्य करणत्वमवगम्यमानं भाव्यस्वर्गादिनिर्वर्तनद्वारेण यागः फलभावनां प्रति करणमित्यवगमयति। लोके कुठारादेः फलभावनाकरणस्य करणभावनाविषयीकृतस्य द्वैधीभावनिर्वर्तनेन फलभावनाकरणत्वदर्शनात् तच्च यागस्य फलभावनाकरणत्वमवगम्यमानं स्वर्गसाधनसमर्थमपूर्वं नाम यागजन्यं किमपि कल्पयति। अपूर्ववाक्यार्थपक्षेऽपि स्वर्गकामस्य यागकर्तव्यताविधानात् तदनुपपत्त्या अपूर्वं परिकल्प्य लिङादेस्तदभिधायकत्वं परिकल्पनीयम्। एवन्नियोगवाक्यार्थपक्षेऽपि विशिष्टनियोगान्यथानुपपत्त्या यागस्य स्वर्गसाधनत्वं परिकल्प्य ततश्चापूर्वं परिकल्प्यते। अतोऽपूर्वादेव फलसिद्धिर्नेश्वरादित्युपसंहरति— **तस्माद्धर्मादेवेति**।

ईश्वरात्फलमिति सिद्धान्तयति— **पूर्वं त्विति**। अचेतनस्यापूर्वस्य तेनानधिष्ठितस्य प्रवृत्त्यनुपपत्तेस्तस्यैव फलदातृत्व-

### *न्यायनिर्णयः*

उपपत्तिमेव व्यतिरेकद्वारा दर्शयति— **न चेति**। कर्मावान्तरव्यापारत्वमुपेत्य कर्मणो वेत्युक्तम्। फलोत्पत्त्यन्यथानुपपत्त्या कल्प्यमानत्वं गृहीत्वा फलस्य वेत्युक्तम्। उपपत्तेश्चेति द्वितीयहेतुं विवृणोति— **उपपद्यते चेति**। तत्र विधिश्रुतेरित्यादिरुक्तः प्रकारः। श्रुत्युपपत्तिभ्यां स्वपक्षमुक्त्वा सिद्धान्तं प्रत्याह— **ईश्वरस्त्विति**। एकरूपात्कारणान्नानेकरूपं कार्यम्, कार्यान्तराणामाकस्मिकत्वापातादित्यर्थः। शुभाशुभफलदातृत्वे रागद्वेषादिमत्त्वापत्तेश्च नेश्वरात् फलमित्याह— **वैषम्येति**। ईश्वरस्य फलदातृत्वे कर्मानुष्ठानवैयर्थ्यं दोषान्तरमाह— **तदिति**। उक्तदोषनिवृत्त्यर्थमपूर्वादेव फलं नेश्वरादित्युक्तमुपसंहरति— **तस्मादिति**।।४०।।

ईश्वरात् फलमिति सिद्धान्तयति— **पूर्वं त्विति**। उत्तरपक्षप्रतिज्ञां विभजते— **बादरायणस्त्विति**। परपक्षनिषेधप्रतिज्ञां प्रकटयति— **केवलादिति**। ईश्वरानपेक्षादिति यावत्। कथमीश्वरस्यापि केवलस्य फलहेतुत्वं, तत्राह— **कर्मेति**। यथा परपक्षे कर्मापेक्षादपूर्वापेक्षाद्वा कर्मणो युक्तं फलमित्युपगतं तथा तदन्यतरापेक्षादीश्वरादेव फलमस्तु। तथा च न वैषम्यादीत्यर्थः। तत्र प्रश्नपूर्वकं प्रमाणमाह— **कुत इति**। अपूर्वस्याचेतनस्य केवलस्याप्रवृत्तेस्तस्यैव फलदातृत्वकल्पनायां दृष्टविरोधाद् देवतापूजात्मकत्वाच्च

**व्यपदेशात्। धर्माधर्मयोरपि हि कारयितृत्वेनेश्वरो हेतुर्व्यपदिश्यते, फलस्य च दातृत्वेन 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इति। स्मर्यते चायमर्थो भगवद्गीतासु– 'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्। स तया श्रद्धया युक्तस्तस्याराधनमीहते। लभते च ततः कामान् मयैव विहितान् हि तान्' (भ.गी. ७।२१,२२) इति। सर्ववेदान्तेषु चेश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते। तदेव चेश्वरस्य फलहेतुत्वं यत् स्वकर्मानुरूपाः प्रजाः सृजतीति। विचित्रकार्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते।।४१।।**

**इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पादकृतौ श्रीमच्छारीरकमीमांसाभाष्ये तृतीयाध्यायस्य द्वितीयः पादः।।२।।**

### *प्रकटार्थविवरणम्*

व्यवहितकर्मफलत्वात्, सेवादिकर्मफलवदित्यनुमानानुगृहीतश्रुत्युपस्थापितेश्वरपदार्थबाधकल्पनाद् वरं कर्मणो नैरपेक्ष्यधर्मबाधकल्पनम्, श्रुतकल्प्ययोश्च श्रुतं बलवदिति न्यायेन अतिवृत्तकर्मानुसारेणेश्वरे फलदातरि श्रुते नापूर्वकल्पनावकाश इति भावः।। इत्यष्टमं फलाधिकरणम्।।

**इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे तृतीयस्याध्यायस्य द्वितीयः पादः समाप्तः।।**

### *भाष्यभावप्रकाशिका*

कल्पनायां दृष्टविरोधाद् देवपूजात्मकत्वाच्च यागस्य राजपूजादेरिव पूज्यमानप्रसादद्वारेण फलदातृत्वोपपत्तेः पूर्वोक्तायाः श्रुतार्थापत्तेरीश्वरेणापक्षयान्नापूर्वकल्पनावकाश इति परिहरति— **धर्माधर्मयोरिति**। हेतुव्यपदेशादित्यस्यार्थान्तरमाह— **सर्ववेदान्तेष्विति**। भवतु, तथापि कथं फलदातृत्वमिति, तत्राह— **तदेव चेति**। यदुक्तमविचित्रस्य कारणस्येत्यादिना, तत्परिहरति— **विचित्रेति**।। इत्यष्टमं फलाधिकरणम्।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तम पूज्यपादशिष्य श्रीचित्सुखमुनिविरचितायां भाष्यभावप्रकाशिकायां तृतीयस्याध्यायस्य द्वितीयः पादः समाप्तः।।**

### *न्यायनिर्णयः*

यागस्य पूज्यमानदेवताप्रसादद्वारा फलवत्त्वादुक्तश्रुतार्थापत्तेरीश्वरेणोपक्षयादपूर्वमप्रमाणमिति मत्वा हेतुं व्याचष्टे— **धर्मेति**। श्रौतं हेतुव्यपदेशमुक्त्वा स्मार्तं कथयति— **स्मर्यते चेति**। तस्य तत्तद्देवतास्वभावस्य ममेति यावत्। ततस्तस्मादाराधितादनुष्ठितादित्यर्थः। हेतुव्यपदेशादित्यस्यार्थान्तरमाह— **सर्वेति**। ईश्वरस्य सृष्ट्यादिहेतुत्वेऽपि कथं फलहेतुत्वं, तत्राह— **तदेवेति**। यच्चाविचित्रस्य कारणस्येत्यादि, तत्राह— **विचित्रेति**।।४१।। इत्यष्टमं फलाधिकरणम्।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृते शारीरकमीमांसाभाष्यविभागे न्यायनिर्णये तृतीयाध्यायस्य द्वितीयः पादः।।२।।**

**।।इति तृतीयाध्यायस्य तत्त्वंपदार्थपरिशोधनाख्यो द्वितीयः पादः।।**

## तृतीयाध्याये तृतीयः पादः।

१।।सर्ववेदान्तप्रत्ययाधिकरणम्।। सू. १-४।।

### सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्।।१।।

**व्याख्यातं विज्ञेयस्य ब्रह्मणस्तत्त्वम्। इदानीं तु प्रतिवेदान्तं विज्ञानानि भिद्यन्ते, न वेति विचार्यते। ननु विज्ञेयं ब्रह्म पूर्वापरादिभेदरहितमेकरसं सैन्धवघनवदवधारितम्; तत्र कुतो विज्ञानभेदाभेदचिन्तावतारः[1]? न**

*शारीरकन्यायसंग्रहः*

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्।।१।। भेदान्नेति चेन्नैकस्यामपि।।२।। स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः।।३।। दर्शयति च।।४।।** यजेत, दद्यात्, जुहुयात् इति प्रकृतिशब्दभेदात् प्रकृत्यर्थानुबन्धभेदेन प्रत्ययार्थकर्मभेदो निरूपितः। 'समिधो यजति' 'तनूनपातं यजति' इत्यादौ गुणविधानार्थत्वमन्तरेण यजत्यभ्यासाद् धात्वर्थभेदं कल्पयित्वा कर्मभेद उक्तः। 'तिस्र आहुतीर्जुहोति' इति विहिताहुत्यनुवादेन संख्याविधाने एकस्यैव कर्मणः आवृत्तिरेव स्यात्। संख्याविशिष्टकर्मविधाने तु कर्मभेद एवेत्युक्तम्। 'वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति वाजिशब्दोदितवैश्वदेवदेवत्ये कर्मणि वाजिनगुणभेदाद् द्रव्यदेवतात्मकयागरूपभेदेन कर्मभेद उक्तः। 'मासमग्निहोत्रं जुहोति मासं दर्शपूर्णमसाभ्यां यजेत' इति प्रसिद्धाग्निहोत्रविधिप्रकरणाद् भिन्नप्रकरणत्वात् अग्निहोत्रादेः कर्मान्तरमेव मासगुणविशिष्टं विधीयते इत्युक्तम्। 'अथैष ज्योतिः' 'अथैष सर्वज्योतिः' 'अथैष विश्वज्योतिः' इति प्रसिद्धज्योतिष्टोमशब्दात् समाख्यान्तरत्वात् सहस्रदक्षिणादिगुणविशिष्टं कर्मान्तरमित्युक्तम्। एवं शब्दान्तराभ्यास-संख्यागुणप्रक्रियानामधेयानि कर्मभेदहेतवः। 'एकं वा संयोगरूपचोदनाख्याविशेषात्' इति फलसंयोगैक्यम्, कतिपयगुणविशिष्टकर्मैक्यम्, विधायकपदचोदनैक्यम्, कर्मनामधेयैक्यं च शाखाभेदेऽपि कर्मैक्यहेतव उक्ताः। तथा च यथायोगमेतैर्हेतुभिः विद्याभेदाभेदौ निरूप्येते। तत्र रूपभेदाभेदौ इतरेभ्यो हेतुभ्यः बलवत्तरौ, अन्तरङ्गत्वात्। अस्मिन्नधिकरणे शाखाभेदेऽपि यासु विद्यासु संयोगादयः विकल्पेन समुच्चयेन वा यथायोगमवगम्यन्ते तासामेकत्वमिति सामान्येन दर्शितम्।

*प्रकटार्थविवरणम्*

पादसङ्गतिमाह— **व्याख्यातमिति**। पादार्थमाक्षिपति— **ननु विज्ञेयमिति**। ननु पूर्वतन्त्रे यथा सर्वशाखाविहितम् अग्निहोत्रमेकमेव,

*भाष्यभावप्रकाशिका*

**सर्ववेदान्तप्रत्ययञ्चोदनाद्यविशेषात्।** पूर्वेण पादेनास्य पादस्य सङ्गतिमाह— **व्याख्यातमिति**। विज्ञेये ब्रह्मणि स्वरूपे निरूपिते तद्विज्ञानं किंरूपमित्याकाङ्क्षायां तद्विचार्यत इत्याह— **इदानीं त्विति**। निरुपाधिब्रह्मतत्त्वविषयं विज्ञानं विचार्यत इत्युक्तमिति मन्वानः शङ्कते— **ननु विज्ञेयमिति**। अवयवभेदाभावात्तन्निबन्धनोऽपि विज्ञानभेदो न संभवतीत्याह— **पूर्वापरादीति**। स्वभावभेदाभाव इति (?) न युज्यत इत्याह— **एकरसमिति**। घनं कठिनम्। वेदान्तानां शक्तितात्पर्यपर्यालोचनायामप्येतदनुपपन्नमित्याह— **न हि**

*न्यायनिर्णयः*

तात्त्विकमतात्त्विकं च ब्रह्मणो रूपमुक्त्वा तद्धियां प्रतिवेदान्तं प्रतीतानां नामाद्यभेदादभेदमाह— **सर्ववेदान्तेति**। पूर्वोत्तरपादयोः संगतिं वक्तुं वृत्तं कीर्तयति— **व्याख्यातमिति**। ज्ञेये ब्रह्मण्युक्ते तज्ज्ञानं किंरूपमित्यपेक्षायां तद्विचारायोत्तरपादप्रवृत्तिरित्याह— **इदानीमिति**। पदार्थयोः शोधनानन्तरमपुनरुक्तापेक्षितपदपदार्थोसंहारेण सगुणनिर्गुणवाक्यानामर्थो निर्धार्यते। तत्र सगुणविद्यानां सत्त्वशुद्धिद्वारा निर्गुणविद्योपयोगात् पदार्थोपसंहारेण वाक्यार्थज्ञानार्थत्वाच्च सगुणवाक्यार्थचिन्ताऽर्थवती; निर्गुणचिन्ता तु तद्धीद्वारा मुक्तिहेतुरित्यर्थः। निरुपाधिकब्रह्मज्ञानं विचार्यत्वेनोक्तमिति मत्वा पादारम्भमाक्षिपति— **नन्विति**। अवयवभेदाभावात् तन्निमित्तो ज्ञानभेदो न संभवतीत्याह— **पूर्वेति**। स्वभावभेदाभावात् तत्कृतोऽपि ज्ञानभेदो नास्तीत्याह— **एकरसमिति**। ज्ञेयस्य ब्रह्मणः

---

१. 'चिन्तावसरः' इति पा.।

**हि कर्मबहुत्ववद् ब्रह्मबहुत्वमपि वेदान्तेषु प्रतिपिपादयिषितमिति शक्यं वक्तुम्, ब्रह्मण एकत्वादेकरूपत्वाच्च। न चैकरूपे ब्रह्मण्यनेकरूपाणि विज्ञानानि संभवन्ति। न ह्यन्यथाऽर्थोऽन्यथा ज्ञानमित्यभ्रान्तं भवति। यदि पुनरेकस्मिन् ब्रह्मणि बहूनि विज्ञानानि वेदान्तान्तरेषु प्रतिपिपादयिषितानि, तेषामेकमभ्रान्तं भ्रान्तानीतराणीत्यनाश्वासप्रसङ्गो वेदान्तेषु। तस्मान्न तावत् प्रतिवेदान्तं ब्रह्मविज्ञानभेद आशङ्कितुं शक्यते। नाप्यस्य चोदनाद्यविशेषादभेद उच्येत, ब्रह्मविज्ञानस्याचोदनालक्षणत्वात्। अविधिप्रधानैर्हि वस्तुपर्यवसायिभिर्ब्रह्मवाक्यैर्ब्रह्मविज्ञानं जन्यत इत्यवोचदाचार्यः 'तत्तु समन्वयात्' (ब्र.सू. १।१।४) इत्यत्र। तत् कथमिमां भेदाभेदचिन्तामारभत इति।**

**तदुच्यते– सगुणब्रह्मविषया प्राणादिविषया चेयं विज्ञानभेदाभेदचिन्तेत्यदोषः। [1]अत्र हि कर्मवदुपासनानां**

### *प्रकटार्थविवरणम्*

किं वा नेति विचारितम्, तथाऽत्रापि विचारो युक्त इत्याशङ्क्याह— **न हि कर्मबहुत्ववदिति**। एकत्वेऽपि धर्मिणो रूपभेदाद् भवेद् विज्ञानभेदः; सोऽपि नास्तीत्याह— **एकरूपत्वाच्चेति**। भवत्वेकरूपत्वम्; ततः किमित्यत आह— **न चैकरूप इति**। पूर्वपक्षे तावद् विज्ञानभेद आशङ्कितुं न शक्यत इत्युक्तम्; सिद्धान्ते चाभेदोऽपि चोदनाद्यभेदेन वक्तुं न शक्यत इत्याह— **नाप्यस्येति**। एवं पादारम्भमाक्षिप्य समाधत्ते— **तदुच्यत इति**। यद्यपि शुद्धब्रह्मज्ञानमेकरूपम्, तथापि प्रतिशाखं तद्वाक्यानां भेदादपुनरुक्तपदोपसंहारसिद्धये ज्ञानसाधनवाक्यभेदाभेदचिन्ता युक्तेत्यर्थः। तथा मन्दाधिकारिणामुपासनैकरूप्यसिद्धये च युक्ता भेदाभेदचिन्तेत्याह— **सगुणब्रह्मविषयेति**।

### *भाष्यभावप्रकाशिका*

**कर्मेति**। ननु एकस्याप्यनेकविज्ञानविषयत्वम् पिता पुत्रो भ्राता भर्तेत्यादिषु दृष्टम्, तद्वत् स्यादित्याशङ्क्याह— **एकरूपत्वाच्चेति**। ननु एकस्मिन्नेकरूपे स्मृत्याद्यनेकज्ञानवदुपपद्यत इत्यत आह— **न चैकरूप इति**। तत्र पूर्वकालविशिष्टादेतत्कालविशिष्टमन्यदिति विज्ञानानामाकारभेदो न (?) युक्त इत्यर्थः। नन्वर्थस्य तथात्वेऽपि ज्ञानमनेकविधं किं न स्यात्, तयोर्भेदादित्याशङ्क्याह— **न ह्यन्यथेति**। तदेव प्रपञ्चयति— **यदि पुनरिति**। किं च चोदनाभेदाभेदचिन्ताऽप्यनुपपत्तेर्नेत्याह— **नाप्यस्येति**। एवं तर्हि सूत्रकारविरोध इत्याशङ्क्य सूत्रकारस्याप्ययमभिप्रायो न भवति। पूर्वापरविरोधो[ध]प्रसङ्गादित्याह— **अविधिप्रधानैरिति**।

तत्तद्गुणोपधानब्रह्मविषयाण्युपासनाज्ञानानि प्राणादिविषयाणि च भिद्यन्त इति तद्विषयोऽयं विचारो न दुष्यतीति परिहरति— **उच्यते सगुणेति**। ननु तत्रापि विचार्यमाणानां तेषां ब्रह्ममात्रत्वात् कथमुपासनाभेद इत्याशङ्क्याह— **तत्र हीति**। न केवलं

### *न्यायनिर्णयः*

सर्वप्रकारभेदाभावे फलितमाह— **तत्रेति**। वेदान्तानां शक्तितात्पर्यालोचनायामपि नेयं चिन्तेत्याह— **न हीति**। एकस्यापि पिता पुत्रो भ्रातेत्यादावनेकविज्ञानविषयत्ववदिहापि स्यादित्याशङ्क्याह— **एकेति**। एकस्मिन्नेकरूपे स्मृत्याद्यनेकज्ञानवदनेकज्ञानसिद्धिरित्याशङ्क्याह— **न चेति**। दृष्टान्ते तु पूर्वकालविशिष्टादेतत्कालविशिष्टमन्यदिति ज्ञानभेदो युक्तो, ब्रह्मणि तु निरुपाधिके नैवमित्यर्थः। अर्थस्यैकरूपत्वेऽपि ज्ञानमनेकरूपं, तयोर्भेदादित्याशङ्क्याह— **न हीति**। तदेव प्रपञ्चयति— **यदीति**। पूर्वपक्षे ज्ञानभेदशङ्कायोगं निगमयति— **तस्मादिति**। सिद्धान्तेऽपि चोदनाद्यभेदाज्ज्ञानाभेदो न सिध्यतीत्याह— **नापीति**। तर्हि सूत्रविरोधः स्यादित्याशङ्क्य पूर्वापरविरोधात् त्याज्यमेतदित्यभिप्रेत्याह— **अविधीति**। आक्षेपमुपसंहरति— **तदिति**। तत्तदनेकोपाध्यवच्छिन्नब्रह्मविषयाणि प्राणादिविषयाणि चोपासनानि विचारयोग्यानीत्याह— **तदुच्यत इति**। निरुपाधिब्रह्मज्ञाने ज्ञेयैक्यादैक्यं सिद्धमिति न भेदाभेदचिन्ता। तत्र पुनर्गुणोपसंहारो लक्ष्याखण्डवाक्यार्थसिद्ध्यर्थं वाच्यार्थतद्वाचकपदोपसंहाररूपो वर्तिष्यते, तेनोक्तविचारारम्भसिद्धिरित्याह— **इत्यदोष इति**। सगुणमपि विचार्यमाणमद्वयं ब्रह्मैवेति कथं तस्मिन्नुपास्तिभेदाभेदचिन्तेत्याशङ्क्याह— **अत्रेति**। सोपाधिकं ब्रह्म सप्तम्यर्थः। न केवलं विषयभेदाद्भेदः, किंतु फलभेदादपीत्याह— **कर्मवदिति**। विरक्तस्य मुमुक्षोरलमनेन विचारेणेत्याशङ्क्याह—

१. 'तत्र' इति पा.।

**भेदाभेदौ संभवतः। कर्मवदेव चोपासनानि दृष्टफलान्यदृष्टफलानि चोच्यन्ते, क्रममुक्तिफलानि च कानिचित् सम्यग्ज्ञानोत्पत्तिद्वारेण। तेष्वेषा चिन्ता संभवति– किं प्रतिवेदान्तं विज्ञानभेद आहोस्विन्नेति।**

**तत्र पूर्वपक्षहेतवस्तावदुपन्यस्यन्ते। नाम्नस्तावद् भेदप्रतिपत्तिहेतुत्वं प्रसिद्धं ज्योतिरादिषु। अस्ति चात्र**

### *प्रकटार्थविवरणम्*

विज्ञानभेद इति पूर्वः पक्षः। तत्र हेतूनाह— **तत्रेत्यादिना**। शब्दान्तरम्, अभ्यासः, सङ्ख्या, गुणः, प्रक्रिया, नामधेयमिति द्वितीयेऽध्याये धर्मभेदे षट् प्रमाणानि निरूपितानि। तत्र नाम्नो भेदकत्वमुदाहरति— **नाम्नस्तावदिति**। 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत' इत्यत्र प्रकृतविच्छेदेन संज्ञान्तरं श्रूयमाणं संज्ञिनं भिनत्तीति स्थितम्;

### *भाष्यभावप्रकाशिका*

विषयभेदात् भेदः, किन्तु फलभेदादपीत्याह— **कर्मवदेव चेति**। ननु विरक्तस्य मुमुक्षोरनेन विचारेण किं प्रयोजनमित्याशङ्क्याह— **कानिचित्सम्यग्ज्ञानेति**। हेयोपादेयविवेकायेत्यर्थः। **तेष्वेषा चिन्तेति**। क्वचिद्भेदभ्रमापोभेदा[पोहेना]भेदः प्रतिपाद्यते। निर्गुणब्रह्मविद्यायामपुनरुक्तशब्दानां सत्यादिधर्माणाञ्चासाधारणस्वरूपलक्षणाय क्वचिदुपसंहारः, इतरत्र च सगुणविद्यासु क्वचिदभेदः, क्वचिद्भेदः, क्वचिद्गुणानामुपसंहारः, क्वचिदनुपसंहार इति चिन्त्यत इत्यर्थः। इदानीं पूर्वपक्षं दर्शयति— **तत्रेति**। **ज्योतिरादिष्विति**। 'अथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते' ति श्रूयते। तत्र संशयः— किं यजेतेति प्रकृतज्योतिष्टोमानुवादेन सहस्रदक्षिणालक्षणगुणो विधीयते, अथवैतद्गुणविशिष्टं कर्मान्तरं विधीयते इति। ज्योतिष्टोमस्य प्रकृतत्वाज्ज्योतिश्शब्देन तदेकादेशवाचिनाऽपि कृत्स्नज्योतिष्टोमाभिधानसंभवाल्लोके सत्या सत्यभामा भीमो भीमसेन इत्यादौ प्रतीकेनापि विशिष्टार्थाभिधानदर्शनात्, गुणविशिष्टकर्मान्तरविधेश्च गुणमात्रविधानस्य लाघवा...दशसहस्रदक्षिणायाश्चोत्पत्ताव(वि)शिष्टतया सहस्रदक्षिणया सह विकल्पोपपत्तेः प्रकृतज्योतिष्टोमानुवादेन गुणान्तरं विधीयत इति प्राप्तम्। तत्राभिधीयते। सत्यां गतावेकस्य संज्ञिनोऽनेकसंज्ञाश्रवणस्यायुक्तत्वादेकत्रानुपपत्त्या लक्षणया शब्दः प्रवृत्त इत्येतावताऽसत्यामप्यनुपपत्तौ ज्योतिश्शब्देन...या ज्योतिष्टोमे वर्तत इति वक्तुमयुक्तत्वादथशब्दस्यापि प्रकरणविच्छेदकत्वात् संज्ञान्तरादपूर्वार्थप्रतीतेः प्रकृतकर्मणोऽप्रतीयमानत्वात्तत्र गुणविधानासंभवात् कर्मान्तरमेव विधीयत इति नाम्नो भेदप्रतिपत्तिहेतुत्वम्। भवतु संज्ञान्तरात्कर्मभेदः प्रस्तुते किमायातमित्यत आह— **अस्ति चात्रेति**। न च शाखानामान्येतानि, न

### *न्यायनिर्णयः*

**क्रमेति**। तस्यापि यथोक्तो विचारो हेयोपादेयविवेकोपकारीत्यर्थः। निर्गुणविद्यायां क्वचिद् भेदभ्रमापोहेनाभेदो निरूप्यतेऽपुनरुक्तशब्दानां सत्यादिधर्माणां वा साधारणस्वरूपलक्षणार्थमुपसंहारो वर्ण्यते। सगुणविद्यासु पुनरभेदः क्वचित्, क्वचिद्भेदः, क्वचिद्गुणानामुपसंहारः क्वचिदनुपसंहार इत्युपसंहरति— **तेष्विति**। एवं पादारम्भमुक्त्वा प्रतिशाखं प्रतीतज्ञानानि विषयीकृत्य नामादिभेदाच्चोदनाद्यविशेषाच्चाद्याधिकरणावयवं संशयमाह— **किमिति**।

अत्र चोत्सर्गतः सर्वशाखासु विद्यैक्ये सिद्धे पूर्वोक्तन्यायेन विद्यातो मुक्तिसंभवात् पादादिसंगतिरिति मत्वा पूर्वपक्षयति— **तत्रेति**। पूर्वपक्षे प्रतिवेदान्तं विद्याभेदाद् गुणानुपसंहारः। सिद्धान्ते सर्वत्र विद्यैक्यात् तदुपसंहार इति फलमुत्तराधिकरणे वक्ष्यति। शाखान्तराधिकरणे 'नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनशब्दान्तरसंख्याप्रक्रियातोऽपि कर्मभेदः स्यात्' इति पूर्वपक्षसूत्रेण पूर्वपक्षे कर्मभेदे ये हेतवो नामादयो दर्शितास्ते विद्याभेदलक्षणपूर्वपक्षोपयोगित्वेनात्रानूद्यन्त इत्यर्थः। तत्र नाम्नो भेदकत्वमुदाहरति— **नाम्न इति**। आदिपदादेकप्रकरणस्थाग्निहोत्रदर्शपूर्णमासादिग्रहणम्। 'अथैष ज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत' इत्यत्र ज्योतिष्टोमानुवादेन सहस्रदक्षिणागुणविधिर्वा तद्गुणककर्मान्तरविधिर्वेति संदेहे, प्रकृतज्योतिष्टोमस्य तदेकदेशवाचिना ज्योतिःशब्देन भीमादिशब्दवदभिधानात् कर्मान्तरविधेश्च गुणमात्रविधानस्य लघुत्वाद् द्वादशशतदक्षिणायाश्च सहस्रदक्षिणया विकल्पात् प्रकृतानुवादेन गुणान्तरविधिरिति प्राप्ते— सत्यां गतावेकस्य संज्ञिनोऽनेकसंज्ञाऽयोगादेकत्रानुपपत्त्या लाक्षणिकः शब्द इत्येतावता ज्योतिःशब्दस्यासत्यामनुपपत्तौ ज्योतिष्टोमलक्षकत्वासिद्धेरथशब्दाच्च प्रकरणविच्छेदात् प्रकृते गुणविध्ययोगाद् गुणविशिष्टकर्मान्तरविधिरिति द्वितीये स्थितम्। अग्निहोत्रदर्शपूर्णमासादिषु संज्ञाभेदेन संज्ञिभेदे न विप्रतिपत्तिरिति भावः। संज्ञान्तरात् कर्मभेदेऽपि प्रकृते किं जातमित्याशङ्क्याह— **अस्ति चेति**। तैत्तिरीयकादिशब्दानां शाखानामत्वेऽपि ज्ञाननामत्वं प्रयोगाविशेषात्, प्रवृत्तिनिमित्तस्य च

**वेदान्तान्तरविहितेषु विज्ञानेष्वन्यदन्यन्नाम– तैत्तरीयकं वाजसनेयकं कौथुमकं कौषीतकं शाट्यायनकमित्येवमादि। तथा रूपभेदोऽपि कर्मभेदस्य प्रतिपादकः प्रसिद्धो 'वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन'मित्येवमादिषु। अस्ति चात्र रूपभेदः; तद्यथा– केचिच्छाखिनः पञ्चाग्निविद्यायां षष्ठमपरमग्निमामनन्ति, अपरे पुनः पञ्चैव पठन्ति। तथा प्राणसंवादादिषु केचिदूनान् वागादीनामनन्ति, के चिदधिकान्। तथा धर्मविशेषोऽपि कर्मभेदस्य**

### *प्रकटार्थविवरणम्*

तथेहापीत्यर्थः। गुणस्य भेदकत्वमाह— **तथा रूपभेदोऽपीति**। अप्रकृतदेवतासंबन्धवाजिनद्रव्यं गुणशब्दवाच्यं कर्मणो भेदकं सिद्धम्। तप्तपयो दधिसंसृष्टम् [१]आमिक्षा, वियुक्तं वाजिनमिति विभागः। इदानीं सर्वशाखाधिकरणपूर्वपक्षे हेतुमुदाहरति— **तथा धर्मविशेषोऽपीति**। कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति, नाचरन्त्यन्य इत्यादि धर्मभेदः। भेदकान्तराण्यतिदिशति—

### *भाष्यभावप्रकाशिका*

विज्ञाननामानीति शङ्कनीयम्; उभयत्रापि प्रयोगदर्शनात्, प्रणयनस्य च तैत्तिरीयकादिशब्दप्रवृत्तिनिमित्तस्य ग्रन्थविज्ञानयोरविशिष्टत्वान्मुख्य-गौणविभागस्याप्यसिद्धेरिति भावः। **तथा रूपभेदोऽपीति**। 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन' मिति श्रूयते। तत्र संशयः— वाजिभ्यो वाजिनमित्यनेन पूर्वस्मिन्नेव वैश्वदेवकर्मणि वाजिनगुणो विधीयते, उत द्रव्यदेवतान्तरविशिष्टं कर्मान्तरमेव विधीयत इति। किं प्राप्तम्? गुणविधिरिति। वाजेनान्नेनामिक्षया युक्ता वाजिनो विश्वदेवाः कथ्यन्ते। अतो वाजिभ्य इतिताननूद्य वाजिनं विधीयते। तेनामिक्षावद्वाजिनमपि वैश्वदेवमतो न कर्मान्तरमिति। अत्रोच्यते— विश्वेषां देवानामामिक्षाद्रव्यं प्रत्युपसर्जनीभूततया प्राधान्येनाप्रकृतत्वात्तेषां वाजिपदेन परामर्शानुपपत्तेर्वाजिनगुणस्याप्रकृतेन देवताभिधानेन संबन्धेना[न्धा]त्कर्मान्तरप्रतीतेः विश्वेषां देवानामियं वैश्वदेवीति तद्धितश्रुत्या दीक्षा[आमिक्षा]लक्षणगुणावरुध्या[द्ध]तया पूर्वकर्मणोऽवगतत्वाद्वाजिनद्रव्यस्य तत्रालब्धावकाशतया स्वसंबन्धिकर्मणः पूर्वस्मात् कर्मणो भेदकत्वात् तद्धितश्रुत्या विश्वेषान्देवानामामिक्षया सहैकवाक्यत्वप्रतीतेश्चतुर्थीनिर्देशः वाजिभ्य इति वाक्याद्वाजिनेनैकवाक्यत्वस्य तेषामभ्युपगन्तव्यत्वाच्छ्रुतिवाक्ययोर्विरोधे श्रुतेर्बलीयस्त्वादामिक्षावाक्ये देवतात्वं विश्वेषां देवानां वाजिनवाक्ये त्वप्रकृतैव देवता संबध्यत इति वाजिनं कर्मान्तरसिद्धमिति। भवतु प्रकृते किमायातमित्यत आह— **अस्ति चात्रेति**। यथा द्रव्यदेवते यागस्य स्वरूपम्, एवं विद्याया अपि वेद्यं रूपम्, अतस्तवभेदा[तद्भेदाद्]विद्याभेद इत्यर्थः। **तथा धर्मविशेषोऽपीति**। कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भुञ्जते, केचिन्न, तथाऽग्निमधीयानाः केचिदुपाध्यायस्योदकुम्भमाहरन्ति, न त्वन्ये। न च

### *न्यायनिर्णयः*

प्रवचनस्य ग्रन्थज्ञानयोरविशिष्टत्वान्न क्वचिन्मुख्यमन्यत्र गौणं नामाप्रसिद्धविभागायोगादिति भावः। विद्याभेदं नामभेदादुक्त्वा रूपभेदादपि तमुदाहरति— **तथेति**। आदिपदेनाग्नेयाग्नीषोमीयादिसंग्रहः। 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्र पूर्वस्मिन्नेव वैश्वदेवे कर्मणि वाजिनवाक्येन वाजिनगुणविधिर्वा, द्रव्यदेवतान्तरयुक्तकर्मान्तरविधिर्वेति संदेहे विश्वेषामेव देवानां वाजेनान्नेनामिक्षया युक्तानां वाजिपदेनोक्तेर्वाजिभ्य इति ताननूद्य वाजिनगुणविधेरामिक्षावद् वाजिनमपि वैश्वदेवमेवेति न कर्मान्तरविधिरिति प्राप्ते— विश्वेषां देवानामामिक्षां प्रत्युपसर्जनतया प्राधान्येनाप्रकृतत्वाद् वाजिपदेन परामर्शायोगाद् वाजिनगुणस्याप्रकृतदेवताभिधानेन संबन्धात् कर्मान्तरदृष्टेस्तद्धितश्रुत्या चामिक्षावरुद्धतया वाजिनस्य तत्रानवकाशात् पूर्वस्मात् कर्मणः स्वसंबन्धिकर्मणो भेदकत्वात् तद्धितश्रुतिविरोधे वाक्यस्य दौर्बल्याद् वाजिनवाक्येन द्रव्यदेवतान्तरयुक्तकर्मान्तरविधिरिति तत्रैव स्थितम्। आग्नेयादिषु पुना रूपभेदाद्भेदे न विगानमिति भावः। अस्तु रूपभेदात् कर्मभेदः, प्रस्तुते किं जातं, तदाह— **अस्ति चेति**। अत्रेति विद्योक्तिः। तदेव भिन्नं रूपमुदाहरति— **तद्यथेति**। यथा यागस्य द्रव्यदेवते रूपमेवं वेद्यमेव विद्याया रूपम्। तथा च वेद्यभेदे विद्याभेदः स्यादित्यर्थः। धर्मभेदाद् विद्याभेदं वक्तुं तस्य कर्मभेदकत्वमाह— **तथेति**। कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भुञ्जते, न तथाऽन्ये। अग्निमधीयानाश्च केचिदुपाध्यायस्योदकुम्भमाहरन्ति, न त्वन्ये। न च तान्येव कर्माणि भूमिभोजनादि-

१. तप्ते पयसि दधिप्रक्षेपेण द्विधा तस्य परिणामो जायते, तत्र कठिनभागः आमिक्षा, जलभागः वाजिनम् इति प्रसिद्धिः।

**प्रतिपादक आशङ्कितः कारीर्यादिषु। अस्ति चात्र धर्मविशेषः। यथाऽऽथर्वणिकानां शिरोव्रतमिति। एवं**

### *प्रकटार्थविवरणम्*

**एवं पुनरुक्त्यादयोऽपीति**। 'समिधो यजति' इत्यादिः पञ्चकृत्वो यजतिपदाभ्यासः पौनरुक्त्यभयाद्भेदकोऽङ्गीकृतः; तथेहापि 'ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मविदाप्नोति परम्' इति विज्ञानमभ्यस्यमानं भिन्नम्। यथा च यागदानहोमानुबन्धभावनाप्रतिपादकशब्दान्तरात् कर्मभेदः समर्थितः; तथा 'ब्रह्मविदाप्नोति परम्' 'तरति शोकमात्मवित्' इति शब्दान्तराद् विज्ञानभेदः। यथा च 'सप्तदश प्राजापत्यान् पशून्' इति तद्धितश्रुतिप्रापितद्रव्यदेवतारूपे सङ्ख्यानिवेशात् सङ्ख्यया कर्मभेदः; तथा 'तौ वा एतौ द्वौ संवर्गौ' इति सङ्ख्यातो विज्ञानभेदः। यथा वा कुण्डपायिनामयने 'द्वादशभिरुपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति' इत्यत्र प्रसिद्धाग्निहोत्रधर्म-

### *भाष्यभावप्रकाशिका*

तान्येव कर्माणि भोजनजन्योपकारणकांक्षा...ण चेति युक्तम् अतस्तत्र कर्मभेदः। अस्तु प्रस्तुते किमायातमित्यत आह— **अस्ति चात्रेति**। अन्येषान्तु शाखिनान्नास्तीति विशेषः। एवं पुनरुक्तादयोऽपीत्यादिग्रहणेन निन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनानि शब्दान्तरं (दर्शना) संख्या प्रक्रियेत्येतानि च गृह्यन्ते। समिधो यजती.......व पुनः श्रुतिरविशेषानर्थकं स्यादिति। समिदादिपदानां कर्मनामधेयत्वात् गुणवचनत्वाज्ज्योतिरादिनामवच्च विधानासंबन्धतया प्रथममेव समिदादीनामपूर्वनामत्वाप्रतीतेः प्रथमत एव कर्मसामानाधिकरण्येनावगमादाख्यातपारतन्त्र्यात् स्वातन्त्र्यासंभवात् गुणतो नामतोऽपि भेदानुपपत्तिर्यद्यपि तथापि परस्परानपेक्षाणां समिदादिवाक्यानां कस्यचिदपि प्राथम्यादीनिरूपे[म्यानिरूप]णात्पाठक्रमस्य चाप्रयोजकत्वात् प्रथमप्राप्तानुवादेनान्येषां गुणविधित्वासंभवात् स्वरससिद्धाप्राप्तकर्मविधिपरत्वादसति कस्मिंश्चिद्विशेषे पुनःश्रुतेरानर्थक्यप्रसङ्गात् प्रत्यभ्यासमपूर्वभेद इति। तथा शाखान्तरविहिता अपि विद्याः शाखान्तरविहितेभ्यो भिन्नाः पुनःश्रुतेरिति। निन्देति। 'प्रातः प्रातरनृतं ते वदन्ती' त्यनुदितहोमं केचिन्निन्दन्ति, अपरे तु शाखिन उदितहोमं 'यथाऽतिथये प्रद्रुतायान्नमाहरेयुस्तादृगेव तद्यदुदिते जुहोती' त्यतस्तत्र कर्मभेदः। एवमथ योऽन्यां देवतामुपास्त इत्यादिनिन्दातो विद्याभेद इति। अशक्तेश्च। न हि शक्यमेकेन पुरुषेण सर्वशाखाविहितं कर्म ज्ञातुमनुष्ठातुं वा, अतो भेद इति। तथा केषाञ्चिच्छाखिनां क्वचित्समाप्तिरन्येषामन्यत्रेति। एवं वेदान्तेष्वपि क्वचिदोङ्कारसर्वात्मकत्वकथनेन समाप्तिः, क्वचिदन्यत्रेत्युपासनाभेदः। प्रायश्चित्तविधानाच्च कर्मभेदः क्वचिदनुदितहोमव्यतिक्रमे....अन्यार्थदर्शनाच्च 'यदि पुरा दिदीक्षाणाः स्युरित्यारभ्याथ यद्यदीक्षाणा इष्टवतामनिष्टपूर्वाणाञ्चाधिकारस्य क्रतुविशेषदर्शनात्कर्मभेदः। शब्दान्तराद्भेदो यथा अस्ति ज्योतिष्टोमस्तत्र श्रूयते "सोमेन यजेत

### *न्यायनिर्णयः*

धर्मजन्योपकारवन्ति तद्रहितानि चेति युक्तम्, अतस्तत्र धर्मभेदाद्भेदधीरित्यर्थः। एवमपि प्रकृते किं स्यात्, तदाह— **अस्ति चेति**। अत्रेति पूर्ववद् विद्योक्तिः। अन्येषां तु शाखिनां नैवं शिरस्यग्निधारणं व्रतमस्तीति धर्मभेदाद्विद्याभेद इत्यर्थः। भेदकान्तराण्यतिदिशति— **एवमिति**। आदिग्रहणान्निन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनानि शब्दान्तरं संख्या प्रक्रियेत्येतानि च संगृह्यन्ते। तत्र 'समिधो यजति' इत्यादौ पञ्चकृत्वोऽभ्यस्ते यजतिशब्दे किमेकं कर्मापूर्वं किंवा पञ्चैवेति संशये धात्वर्थानुबन्धभेदमन्तरेणापूर्वभेदायोगात् प्रकृते तदयोगादेकं कर्मापूर्वमिति प्राप्ते समिदादिवाक्यानां स्वरससिद्धाप्राप्तकर्मविधिपरत्वादसति विशेषे पुनः श्रुतेरानर्थक्यात् प्रत्यभ्यासमपूर्वभेद इति पुनरुक्तेर्भेदकत्वं स्थितम्। एवं शाखान्तरोक्ता विद्याः शाखान्तरोक्तविद्याभ्यो भिन्नाः पुनरुक्तेरिति पुनरुक्तितो विद्याभेदः। निन्देत्युदितानुदितहोमनिन्दोक्ता। 'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्। दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम्' इत्यनुदितहोमनिन्दा, 'यथाऽतिथये प्रद्रुतायान्नं हरेयुस्तादृक्तद्यदुदिते जुह्वति' इत्युदितहोमनिन्दा। ततश्चैकस्यैवोदितेऽनुदिते च क्रमेणानुष्ठानायोगाद्भेदः। उदितानुदितहोमातिक्रमकृतप्रायश्चित्तादपि तद्भेदधीः। न च निन्दाप्रायश्चित्ते वेदान्तविद्यासु विद्येते इति नोदाह्रियेते। यत्तु– 'अथ योऽन्यामि'त्यादि, तद्भेदधीविषयत्वान्न विद्यां भिनत्ति। 'ततो भूय इवे'त्यादि तु केवलदेवताज्ञाननिन्दया तस्य कर्मणा समुच्चयपरम्। अशक्तिश्च कर्मवद्विद्याभेदिका। न हि सर्वशाखाविहितं कर्म शक्यमेकेनानुष्ठातुम्। तथोपासनान्यपि नानाशाखोक्तानि नैकेनानुष्ठीयेरन्निति भेदः। समाप्तिरपि शाखिनां केषांचित् क्वचिदिति कर्मणो भेदिका। तथा वेदान्तेष्वपि क्वचिदोङ्कारसर्वात्मत्ववचनेन समाप्तिरन्यत्र क्वचिदित्युपास्तिभेदः। अन्यार्थदर्शनं 'वायुर्वै क्षेपिष्ठा देवता' 'सोऽरोदीद्यदरोदीत्' इत्याद्यर्थवादरूपं कर्मभेदकम्, स्तुतिनिन्दयोरेकत्रासमवायात्। एवं वेदान्तेष्वपि नानाविधार्थवादस्य तत्र तत्र दृष्टेर्विद्याभेदः।

**पुनरुक्त्यादयोऽपि भेदहेतवो यथासंभवं वेदान्तान्तरेषु योजयितव्याः। तस्मात् प्रतिवेदान्तं विज्ञानभेद इति।**

### *प्रकटार्थविवरणम्*

विपरीतोपसदादिप्रक्रियाभेदात् कर्मान्यत्वम्; तथा वैश्वानराश्वमेधविज्ञानयोरपि प्रकरणभेदादेव भेद इत्यर्थः।

### *भाष्यभावप्रकाशिका*

दाक्षिणानि जुहोति हिरण्यमात्रेयाय ददातीति। तत्र संशयः— किं यजति ददाति जुहोति...रत्य कार्यं कुर्वन्ति, किं वा वियुत्येति। संहत्य तावत् त्रयो ग्रावाण एकामुखान्धारयन्तो दृश्यन्ते तथैतेऽपि संहत्य एकमपूर्वं साधयन्तीति युक्तम्। अदृष्टार्थानामुपकारकल्पना लघीयसी न्याय्येति पूर्वः पक्षः। सिद्धान्तस्तु 'शब्दान्तरे कर्मभेदः कृतानुबन्धत्वा'दिति। तथाहि यजतीति यागसाधनं भावनामाह; जुहोतीति होमसाधनाम्; ददातीति च दानसाधनाम्। तस्माच्छब्दभेदात् कर्मभेद इति। तथा संख्यातः 'सप्तदश प्राजपत्यान् पशूनालभत' इति। यो हि बहून् कल्पयति कल्पयत्यसावेकमिति कल्पनालाघवादेको यागः सप्तदशभिः पशुभिर्निर्वर्तित इति पूर्वः पक्षः। सिद्धान्तस्तु सप्तदशसंख्यायाः पशूनां पृथक्त्वे संभवात् बहुष्वेव यागेषु पशुपृथक्त्वस्य चोपपत्तेरेकादशभिरवदानैरेव एकयागस्य निष्पत्तेरेकादशावदानानाञ्चैकस्मादेव लभ्यत्वादितरे न प्राजापत्या भवेयुः। तथा सति प्राजापत्यानिति श्रवणमुपरुध्यते। तस्मात्सप्तदश यागा इति सिद्धान्तः। तथा प्रक्रिया कर्मभेदिका कुण्डपायिनामयने श्रूयते 'मासमग्निहोत्रं जुहोति मासन्दर्शपूर्णमासाभ्यां यजेते' त्येवमादिः। तत्र संशयः— किं नियतेऽग्निहोत्रे नियतयोश्च दर्शपूर्णमासयोर्मासाख्यो गुणो विधीयते, किं वा कर्मान्तरमिति। कालविधिरिति तावत्प्राप्तम्, अग्निहोत्रशब्दस्य सिद्धाग्निहोत्रानुवादकत्वान्मासमित्यप्रसिद्धत्वाद्दर्शपूर्णमासशब्दस्य च प्रसिद्धार्थत्वात्तदनुवादेनाप्रसिद्धमासाख्यगुणविधानोपपत्तेः कुण्डपायिनामयनप्रकरणस्य च वाक्याद् दुर्बलत्वात् वाक्येन प्रकरणस्य बाधोपपत्तेरिति। सिद्धान्तस्तु यस्य प्रकरणे श्रूयमाणं यद्वाक्यम् तत्तस्य बाधकं न भवतीत्यौत्सर्गिकन्यायादुपसद्भिश्चरित्वेत्युक्त्वा च मासमग्निहोत्रं जुह्वतीत्यादिविधिश्रवणात्रैयमिकाग्निहोत्रे दर्शपूर्णमासयोश्चोपसदामभावात्तदनुवादेन तत्र गुणविध्यसंभवादुपसदामपि तत्रैव विधानाङ्गीकारे सत्यनेकगुणविधानाशक्य(?) वाक्यभेदप्रसङ्गादग्निहोत्रशब्दस्य चाख्यातपरतन्त्रत्वदाख्यातार्थस्य च प्रकरणालोचनया वैलक्षण्यप्रतीतेः प्रसिद्धाग्निहोत्राप्रत्यभिज्ञापकत्वात् कर्मान्तरमिति। एवं वेदान्तविहितविद्यास्वपि यथासंभवं पुनरुक्त्यादिभिर्भेद ऊहनीय इति।

### *न्यायनिर्णयः*

शब्दान्तरादपि कर्मभेदः। ज्योतिष्टोमे— 'सोमेन यजेत', 'दाक्षिणानि जुहोति', 'हिरण्यमात्रेयाय ददाति' इत्यत्र यजतिददातिजुहोतयः संहत्य वा कार्यं कुर्वन्त्यसंहत्य वेति संदेहे संहतानामेकापूर्वसाधकत्वं लाघवादिति पूर्वपक्षे 'शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्' इत्यत्र शब्दभेदे भावार्थानुबन्धभेदाद्भावनाभेद इति स्थितम्। तथेहापि 'ब्रह्मविदाप्नोति परम्' 'तरति शोकमात्मवित्' इति शब्दान्तराज्ज्ञानभेदः। संख्याऽपि कर्मणो भेदिका 'सप्तदश प्राजापत्यान् पशूनालभत' इत्यत्र सप्तदशभिः पशुभिरेको वा यागो निर्वर्त्यः, सप्तदश वेति संशये यो हि बहून् कल्पयति कल्पयत्यसावेकमिति लाघवादेको यागः सप्तदशपशुभिर्निर्वर्त्यत इति पूर्वपक्षे पशूनां पृथक्त्वे सप्तदशसंख्यायाः संभवात् तत्पृथक्त्वस्य च यागभेदाधीनत्वाद् यागाः सप्तदशेति राद्धान्तितम्। तथाऽत्रापि 'तौ वा एतौ द्वौ संवर्गा'विति संख्यातो विद्याभेदः। प्रक्रियाऽपि कर्मभेदिका कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' 'मासं दर्शपूर्णमासाभ्यां यजेत' इत्यत्र नित्येऽग्निहोत्रादौ मासगुणविधिर्वा कर्मान्तरविधिर्वेति संदेहे सत्यग्निहोत्रादिशब्दस्य प्रसिद्धाग्निहोत्राद्यनुवादि-त्वान्मासमित्यप्रसिद्धत्वात् प्रसिद्धानुवादेनाप्रसिद्धगुणविधिसंभवात् प्रकरणस्य वाक्याद्दौर्बल्याद् गुणविधिरिति प्राप्ते यस्य प्रकरणे यद्वाक्यं श्रुतं न तत् तस्य बाधकमित्युत्सर्गात्, 'उपसद्भिश्चरित्वे'त्युक्त्वा 'मासमग्निहोत्र'मित्यादिश्रुतेर्नैयमिकाग्निहोत्रादौ चोपसदामभावात् तदनुवादेन गुणविध्यसिद्धेरुपसदामपि तत्रैव विधाने वाक्यभेदादग्निहोत्रादिशब्दस्य चाख्यातपारतन्त्र्यात् तदर्थस्य चाधिकारालोचनायां वैलक्षण्यात् प्रसिद्धाग्निहोत्राद्यप्रत्यभिज्ञापकत्वात् कर्मान्तरमित्युक्तम्। तथाऽत्रापि वैश्वानराश्वमेधोपासनादिषु प्रकरणभेदाद्विद्याभेद इत्यर्थः। **वेदान्तान्तरेष्विति**। प्रतिशाखं व्यवस्थिततत्तद्वेदान्तप्रभेदेष्विति यावत्। प्राच्यां मीमांसायामुक्तहेतुभिः सिद्धं पूर्वपक्षमुपसंहरति— **तस्मादिति**।

**एवं प्राप्ते ब्रूमः– सर्ववेदान्तप्रत्ययानि विज्ञानानि तस्मिंस्तस्मिन् वेदान्ते तानि तान्येव भवितुमर्हन्ति। कुतः? चोदनाद्यविशेषात्। आदिग्रहणेन शाखान्तराधिकरणसिद्धान्तसूत्रोदिता अभेदहेतव इहाकृष्यन्ते। संयोगरूपचोदनाख्याऽविशेषादित्यर्थः। यथैकस्मिन्नग्निहोत्रे शाखाभेदेऽपि पुरुषप्रयत्नस्तादृश एव चोद्यते– जुहुयादिति; एवम् 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' (बृ.उ. ६।१।१ छा.उ. ५।१।१) इति वाजसनेयिनां छन्दोगानां च तादृश्येव चोदना। प्रयोजनसंयोगोऽप्यविशिष्ट एव– 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति' (बृ.उ. ६।१।१) इति। रूपमप्युभयत्र तदेव विज्ञानस्य यदुत ज्येष्ठश्रेष्ठादिगुणविशेषणान्वितं प्राणतत्त्वम्। यथा च द्रव्यदेवते यागस्य रूपमेवं विज्ञेयं रूपं विज्ञानस्य; तेन हि तद् रूप्यते। समाख्याऽपि सैव– प्राणविद्येति। तस्मात् सर्ववेदान्तप्रत्ययत्वं विज्ञानानाम्। एवं पञ्चाग्निविद्या वैश्वानरविद्या शाण्डिल्यविद्येत्येवमादिषु योजयितव्यम्।**

### *प्रकटार्थविवरणम्*

विद्यैकत्वं सिद्धान्तमाह— **एवं प्राप्ते ब्रूम इति।**

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्।** सर्वेषु वेदान्तेषु प्रतीयन्त इति सर्ववेदान्तप्रत्ययानि सर्वशाखाविहितानीत्यर्थः। 'एकं वा संयोगरूपचोदनाख्याऽविशेषात्' इति शाखान्तराधिकरणे सिद्धान्तसूत्रम्। तत्र चोदनाया विधायकपदस्याविशेषं तावदाह— **यथैकस्मिन्निति।** संयोगाविशेषं दर्शयति— **प्रयोजनसंयोगोऽपीति।** रूप[ा]भेदं व्याचष्टे— **रूपमिति।** आख्याऽविशेषं व्याख्याति— **समाख्याऽपि सैवेति।** एवं सर्वशाखागतस्य प्राणविज्ञानस्य ऐक्यमुक्त्वा सर्वशाखागतपञ्चाग्निविद्या[दी]नामपि चोदनाद्यविशेषादेकत्वं द्रष्टव्यमित्याह— **एवं पञ्चाग्निविद्येति।**

### *भाष्यभावप्रकाशिका*

अत्र सिद्धान्तमाह— **सर्ववेदान्तेति।** सर्ववेदान्तप्रत्ययानि सर्ववेदान्तप्रमाणकानीत्यर्थः। **तस्मिंस्तस्मिन् वेदान्त इति।** यान्येकस्मिन् वेदान्ते तान्येव वेदान्तान्तरेष्वपीत्यर्थः। चोदनाद्यविशेषात् कथमभेदः, कथं वा चोदनाद्यविशेष इत्याकाङ्क्षायां तदिदं दर्शयति— **यथैकस्मिन्नग्निहोत्र इत्यादिना।** अत्र चोद्यत इति चोदना पुरुषप्रयत्नो होमादिधात्वर्थावच्छिन्नस्तथेहापि प्राणज्येष्ठत्वादिवेदनविषयः पुरुषप्रयत्नस्तुल्य इत्याह— **एवं यो ह वा इति।** द्रव्यदेवताभ्यां यागस्य रूप्यमाणत्वात् तयो रूपत्वं संभवति, इह तु कथमिति, तत्राह— **तेन हि तद्रूप्यत इति।** समाख्याद्यविशेषादुक्तमभेदमन्यत्राप्यतिदिशति— **एवं पञ्चाग्नीति।**

### *न्यायनिर्णयः*

पूर्वपक्षमनूद्य विद्यैक्यं सिद्धान्तमाह— **एवमिति।** सर्ववेदान्तेषु प्रतीयन्त इति सर्ववेदान्तप्रत्ययानि सर्ववेदान्तप्रमाणकानि तत्र तत्र विहितानीत्यर्थः। यान्येकस्मिन् वेदान्ते तान्येव वेदान्तान्तरेष्वपि विहितानीत्याह— **तस्मिन्निति।** सर्ववेदान्तप्रत्ययमित्येकवचनेन कर्तव्यतया प्रतीयमानज्ञानस्यैकत्वं [1]ग्रहैकत्ववदविवक्षितम्। साधारणनिर्देशेन विधीयमानसर्वोपासनज्ञानानि विवक्षितानीति प्रतिज्ञां व्याख्यायाकाङ्क्षाद्वारा हेतुमवतारयति— **कुत इति।** चोदनासाहचर्यादादिशब्देनार्थवादग्रहणमाशङ्क्य व्यावर्तयति— **आदीति।** 'एकं वा संयोगरूपचोदनाख्याऽविशेषात्' इति शाखान्तराधिकरणे सिद्धान्तसूत्रम्। तत्रोक्तान् कर्मभेदहेतूनत्रापि ज्ञानाभेदहेतुत्वेनाकृष्टानाचष्टे— **संयोगेति।** तत्र चोदनाया विधायकपदस्य, चोद्यत इति वा पुरुषप्रयत्नस्य धात्वर्थावच्छिन्नस्याविशेषं सदृष्टान्तमाह— **यथेति।** प्रतिशाखं होमाद्यवच्छिन्नप्रयत्नवदिहापि प्राणज्येष्ठत्वादिधीविषयप्रयत्नस्याविशेषः शाखाद्वयेऽपीत्यर्थः। संयोगाविशेषमाह— **प्रयोजनेति।** रूपाविशेषमाह— **रूपमिति।** कथं ज्ञानस्य प्राणतत्त्वं रूपं, तत्राह— **यथा चेति।** द्रव्यदेवताभ्यां यागस्य रूप्यमाणत्वात् तयोस्तद्रूपत्वम्; प्रकृते तु कथमित्याशङ्क्याह— **तेनेति।** आख्याऽविशेषमाह— **समाख्येति।** सर्वशाखास्थप्राणज्ञानस्य समाख्याद्यविशेषादैक्यं निगमयति— **तस्मादिति।** उक्तं न्यायं पञ्चाग्निविद्यादिषु सर्वशाखास्थेष्वतिदिशति— **एवमिति।**

---

१. अत्र 'नञ्' त्रुटित इति भाति। एकवचनसामर्थ्यलब्धमेकत्वं ह्यत्र विधेयम्। अतो न ग्रहैकत्ववदविवक्षेति ग्रन्थाशयः।

**ये तु नामरूपादयो भेदहेत्वाभासास्ते प्रथम एव काण्डे– 'न नाम्ना स्यादचोदनाभिधानत्वात्' (जै.सू. २।४।१०) इत्यारभ्य परिहृताः।।१।।**

**इहापि कंचिद् विशेषमाशङ्क्य परिहरति–**

***प्रकटार्थविवरणम्***

परोक्तमनूद्य दूषयति— **ये त्विति**। काठकमित्यादिनाम्ना न कर्मभेदः स्यात्; कुतः? अचोदनाभिधानत्वात् वैदिककर्मनामत्वाभावात् पाठकसंज्ञामात्रत्वादित्यर्थः।

**इहापीति**। यद्यपि पूर्वतन्त्रे परिहृताः तथापि भिन्नशास्त्रत्वात् क्रियायां ये न्यायास्ते ज्ञाने न संभवन्तीति मनसि निधाय सूत्रकारः परिहरति इत्यर्थः।

***भाष्यभावप्रकाशिका***

**न नाम्ना स्यादचोदनाभिधानत्वादित्यारभ्येति**। काठकं कालापकं पैप्पलादिकमित्येव नामभेदात् कर्मभेदो नहेत्[ न भवेत् ] कुतः? अचोदनाभिधानत्वात्। काठकादीनां ग्रन्थनामधेयतया कर्मनामधेयत्वाभावात् ग्रन्थयोगादेव च कर्मणां तद्द्वारा काठकादी[दि]नाम-सामानाधिकरण्योपपत्तेः तत्रापि शक्तिकल्पनायोगात् कर्मैकत्वेऽपि तत्तद्ग्रन्थसन्दर्भयोगात् काठकप्रायश्चित्त इत्यादिव्यपदेशसंभवात् न कर्मभेद इति परिहृतत्वात्र नाम्नो भेदकत्वम्। तथैककर्मत्वेऽपि अग्नीषोमीयस्यैकादशकपालत्व[द्वादशकपालत्व]रूपभेदो भवति वचनादिति। तथापि धर्मविशेषोऽपि विद्याग्रहणार्थो न कर्मणि भेद इत्युक्तम् 'विद्यायां कर्मशास्त्र'मिति। तथा चाद्विर्वचनं श्रुतिसंयोगाविशेषादिति। तर्ह्येतद् [ न ह्येतद् ] द्विर्वचनं यदेकार्थो बहुभिश्शाखिभिरुच्यत इति। एकस्मिन्नपि वेदे बहुभिरुच्यमाने पुनरुक्तताप्रसङ्गात्। तस्मादध्येतृभेदेन पुनरुक्त्यभावादेककर्मेति। अथैकनिन्दाया अन्यविधिपरत्वान्निन्द्यमानप्रतिषेधपरत्वाभावः, तथाऽसमर्थानामेकस्मिन्नपि वेदे कृत्स्नमङ्गजातमुपसंहर्तुं न शक्तिरस्ति...समर्थानान्तु शाखान्तरोदितेष्वध्ययनाभावेऽपि तदध्येतृभ्यो विश्वस्योपसंहर्तुं शक्तिरस्ति। अतो न कर्मभेद इति। तथैकस्मिन्नपि कर्मणि कस्यचिदंशस्य समाप्तेः समाप्तिवचनमुपपन्नम्। तथा कर्मैकत्वेऽप्यादितो[प्युदिते] होष्याम इति प्रक्रमे सत्यन्यथाकरणे प्रायश्चित्त...नम...प्यन्यपरत्वात् कर्मैकत्वं प्रमाणसिद्धं न भेत्तुमर्हतीत्येवं भेदहेतवो निराकृता इत्यर्थः।

ननु तर्हि तत्रैव सिद्धत्वात् किं पृथगधिकरणारम्भेणेति तत्राह— **इहापि कञ्चिदिति**। यत्रोत्पत्तित एव गुणभेदः प्रतीयते

***न्यायनिर्णयः***

परोक्तमनूद्य प्रत्याह— **ये त्विति**। अस्यार्थः— काठकं कालापकमित्यादिनामभेदान्न कर्मभेदः। कस्मात्? अचोदनाभिधानत्वात्। काठकादीनां ग्रन्थनामतया कर्मनामत्वाभावात्। ग्रन्थयोगादेव कर्मणां तद्द्वारा तन्नामत्वसिद्धौ तत्रापि शक्तिकल्पनायां गौरवात् कर्मैकत्वेऽपि तत्तद्ग्रन्थसंदर्भसंयोगात् काठकप्रायश्चित्तमित्यादिदर्शनान्न नाम्ना कर्मभेदः। तथाऽत्रापि नामभेदान्न विद्याभेदः। विद्यैक्येऽपि तत्तद्ग्रन्थसंयोगात् तत्तन्नामत्वसिद्धेः। नापि रूपभेदो भेदकोऽग्नीषोमीयस्यैककर्मत्वेऽप्येकादशकपालत्व(वद्)द्वादशकपालत्वरूपभेदो वाचनिकः। तथाऽग्न्यादिषु रूपभेदेऽपि विद्यैक्याविरोधात्। न च धर्मविशेषो भेदकः। तस्य विद्याग्रहणार्थतया कर्मानुपकारिण-स्तद्भेदकत्वाभावात्। उक्तं हि— 'विद्यायां कर्मशास्त्रम्' इति। तथाऽत्रापि धर्मविशेषो न विद्यार्थ इति वक्ष्यते। न च पुनरुक्तिर्भेदिका। न ह्येतद् द्विर्वचनं यदेकोऽर्थो बहुभिः शाखिभिरुच्यते। एकस्मिन्नपि वेदे बहुभिरुच्यमाने पुनरुक्तिप्रसङ्गात्। तस्मादध्येतृभेदेन पुनरुक्त्यभावात् कर्मैक्यम्। तदुक्तम्— 'अद्विर्वचनं श्रुतिसंयोगाविशेषात्' इति। एवमत्रापि विद्यैक्यं प्रतिशाखं प्रत्येतव्यम्। अशक्तिरपि न भेदहेतुः। असमर्थानामेकस्मिन्नपि वेदे सर्वाङ्गोपसंहारानर्हत्वात्। समर्थानां तु शाखाभेदे तदध्ययनाभावेऽपि तदध्येतृभ्यो विश्वस्य तत्तद्रूपमुपसंहर्तुं शक्यत्वात्। न च समाप्तिवचनं भेदकमेकत्वेऽपि कस्यचिदन्याङ्गस्य समाप्तौ समाप्तिवचनसंभवात्। न चान्यार्थदर्शनमन्यपरत्वात् कर्मैक्यं विद्यैक्यं वा प्रमितं निषेद्धुमर्हति। शब्दान्तरसंख्याप्रक्रियाणामपि प्रबलेनाभेदकेन भेदकत्वमपास्यमतो न विद्याभेदाशङ्केति।।१।।

तर्हि पूर्वतन्त्रोक्तन्यायेनैव प्रतिशाखं विद्यैक्यसिद्धौ किमनेनाधिकरणेनेत्याशङ्क्याह— **इहापीति**। शाखान्तराधिकरणे खल्वेकस्यां

**भेदान्नेति चेन्नैकस्यामपि।।२।।**

**स्यादेतत्– सर्ववेदान्तप्रत्ययत्वं विज्ञानानां गुणभेदान्नोपपद्यते। तथाहि– वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमपरमग्निमामनन्ति– 'तस्याग्निरेवाग्निर्भवति' (बृ.उ. ६।२।१४) इत्यादिना। छन्दोगास्तु तं नामनन्ति; पञ्चसंख्ययैव च त उपसंहरन्ति– 'अथ ह य एतानेवं पञ्चाग्नीन् वेद' (छा.उ. ५।१०।१०) इति। येषां च स गुणोऽस्ति येषां च नास्ति कथमुभयेषामेका विद्योपपद्येत? न चात्र गुणोपसंहारः शक्यते प्रत्येतुम्, पञ्चसंख्याविरोधात्। तथा प्राणसंवादे श्रेष्ठादन्यांश्चतुरः प्राणान् वाक्चक्षुःश्रोत्रमनांसि छन्दोगा आमनन्ति। वाजसनेयिनस्तु पञ्चममप्यामनन्ति– 'रेतो वै प्रजातिः प्रजायते ह प्रजया पशुभिर्य एवं वेद' (बृ.उ. ६।१।६) इति। आवापोद्वापभेदाच्च वेद्यभेदो भवति, वेद्यभेदाच्च विद्याभेदो द्रव्यदेवताभेदादिव यागस्येति चेत्।**

**नैष दोषः। यत एकस्यामपि विद्यायामेवंजातीयको गुणभेद उपपद्यते। यद्यपि षष्ठस्याग्नेरुपसंहारो न संभवति, तथापि द्युप्रभृतीनां पञ्चानामग्नीनामुभयत्र प्रत्यभिज्ञायमानत्वान्न विद्याभेदो भवितुमर्हति। न हि**

***प्रकटार्थविवरणम्***

**भेदान्नेति चेन्नैकस्यामपि**। रूपभेदादुक्तं विज्ञानभेदमुद्भावयति— **स्यादेतदित्यादिना**। ननु वाजसनेयकगतो योऽग्निः षष्ठोऽन्त्येष्टिगतः प्रसिद्धवदुपन्यस्तः, तं छान्दोग्येऽप्युपसंहृत्य रूपैक्यं गृह्यतामित्याशङ्क्याह— **न चात्रेति**। भवतु प्रजननगुणविशिष्टस्य रेतसो वाजसनेयिनामावापः, छन्दोगानां चोद्धारः [चोद्वापः]; ततः किमित्याशङ्क्याह— **आवापोद्वापभेदाच्चेति**।

एकस्यामपीति सिद्धान्तभागं व्याचष्टे— **नैष दोष इत्यादिना**। छन्दोगानां षष्ठाग्न्यभावमङ्गीकृत्य नैतावता विद्याभेद

***भाष्यभावप्रकाशिका***

तत्रोत्तरकालमभेदहेतुसंबन्धवि[न्धेऽपि] भेद एव। यत्र पुनरुत्पन्नस्य पश्चाद्गुणविशेषसंबन्धो यथाऽग्निहोत्रस्योत्पन्नस्य पश्चाद् दधि-तण्डुलादिसंबन्धस्तत्रापि [अ]भेद एव यथोत्पन्नस्य सर्वत्र प्रत्यभिज्ञायमानत्वात्। अत्र त्वग्निषूत्पत्तित एव गुणभेद इति वैश्वदेवीवद्भेद इति विशेषमाशङ्क्य परिहरत्युत्तरसूत्रेणेत्यर्थः। नन्वधिकाम्नानेऽपि न वेद्यभेद इतरेषां प्रत्यभिज्ञायमानत्वादित्याशङ्क्याह— **अवापोद्वापभेदादिति**।

परिहारत्वेन सूत्रावयवं व्याचष्टे— **यत एकस्यामिति**। ननु गुणभेदे वेद्यभेदाद्विद्याभेद इति, तत्राह— **यद्यपीति**। ननु

***न्यायनिर्णयः***

शाखायामग्नीषोमीयस्यैकादशकपालत्वमपरस्यां द्वादशकपालत्वमिति रूपभेदात् कर्मभेदं शङ्कित्वा संख्ययोर्विकल्प इत्युक्तम्। तद्युक्तम्। कपालसंख्ययोरुत्पन्नशिष्टयोरुत्पत्तावैकरूप्येण ज्ञातकर्मप्रत्यभिज्ञानाबाधकत्वेन कर्माभेदकत्वात्, अग्न्यादिगतपञ्च-संख्यादेरुत्पत्ति[1]विशिष्टत्वाद्वाजिनवद्भेदकत्वमिति शङ्कामुत्थाप्य परिहारादस्यार्थवत्तेत्यर्थः। शङ्कां विभजते— **स्यादिति**। गुणभेदं साधयति— **तथा हीति**। छन्दोगाः षष्ठमग्निं नामनन्तीति कथं सिद्धमित्याशङ्क्योपसंहारवशादित्याह— **पञ्चेति**। गुणभेदमुक्त्वा तत्फलं विद्याभेदमाह— **येषां चेति**। वाजसनेयकगतो योऽग्निः षष्ठोऽन्त्येष्टिनिविष्टः प्रसिद्धवदुक्तस्तस्य च्छान्दोग्येऽप्युपसंहारान्न गुणभेदोऽस्तीत्याशङ्क्याह— **न चेति**। पञ्चाग्निविद्यायां गुणभेदाद् भेदमुक्त्वा प्राणविद्यायामपि तद्भेदाद् भेदमाह— **तथेति**। अस्तु प्रजननगुणवतो रेतसो वाजसनेयिनामावापश्छन्दोगानां चोद्धारस्तथापि कथं विद्याभेदः, तत्राह— **आवापेति**।

सूत्रावयवं परिहारत्वेन व्याचष्टे— **नेत्यादिना**। ननु गुणभेदे वेद्यभेदाद्विद्याभेदः, न च षष्ठस्याग्नेरुपसंहारः पञ्चसंख्याविरोधात्,

---

१. 'उत्पत्तिशिष्टत्वात्' इति पाठो युक्तः।

**षोडशिग्रहणाग्रहणयोरतिरात्रो भिद्यते। पठ्यतेऽपि च षष्ठोऽग्निश्छन्दोगैः– 'तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति' (छा.उ. ५।९।२) इति। वाजसनेयिनस्तु सांपादिकेषु पञ्चस्वग्निष्वनुवृत्तायाः समिद्धूमादिकल्पनाया निवृत्तये 'तस्याग्निरेवाग्निर्भवति समित्समित्' (बृ.उ. ६।२।१४) इत्यादि समामनन्ति; स नित्यानुवादः। अथाप्युपासनार्थ एष वादस्तथापि स गुणः शक्यते छन्दोगैरप्युपसंहर्तुम्। न चात्र पञ्चसंख्याविरोध आशङ्क्यः। सांपादिकाग्न्यभिप्राया ह्येषा पञ्चसंख्या नित्यानुवादभूता, न विधिसमवायिनीत्यदोषः। एवं प्राणसंवादादिष्वप्यधिकस्य गुणस्येतरत्रोपसंहारो न विरुध्यते। न चावापोद्वापभेदाद् वेद्यभेदो विद्याभेदश्चाशङ्क्यः। कस्यचिद् वेद्यांशस्यावापोद्वापयोरपि भूयसो वेद्यराशेरभेदावगमात्। तस्मादैकविद्यमेव।।२।।**

***प्रकटार्थविवरणम्***

इत्युक्तम्। इदानीं तैरपि षष्ठः पठ्यत इत्याह— **पठ्यतेऽपि चेति**। इतोऽस्माल्लोकात्; तदिष्टं[तं दिष्टं] परलोकं प्रेतं ज्ञातयोऽग्नये हरन्तीत्यर्थः। तथापि विद्यते विशेषो वाजसनेयिनाम्, अग्न्यादिसंपादनप्रतीतेः इत्याशङ्क्याह— **वाजसनेयिनस्त्विति**। तस्योपासकस्य मृतस्य दाहायाग्निरेवाग्निर्भवतीति प्रसिद्धानुवादोऽयम्, न तु उपासनविधानम्। उपास्यास्तु पञ्चैवाग्नय उभयत्रापीति अविशेष इत्यर्थः। इदानीमुपासनार्थत्वं प्रौढवादेनाङ्गीकृत्याह— **अथापीति**। यदुक्तं पञ्चसंख्याविरोध इति, तत्राह— **न चेति**। द्युप्रभृतिषु पञ्चसु अग्नित्वासंवाद्य [अग्नित्वं संपाद्य] सिद्धमर्थमनुवदति 'य एतानेवं पञ्चाग्नीन् वेद' इति; न तु ध्येयत्वेन पञ्चसङ्ख्यासङ्कीर्तनमिति भावः। यच्चोक्तं प्राणसंवादे वाजसनेयिनां छन्दोगानां च वैरूप्यमिति, तत्राह— **एवं प्राणसंवादादिष्वपीति**।

***भाष्यभावप्रकाशिका***

सैव विद्या षष्ठाग्निसहिता तद्रहिता चेति विरुद्धमित्याशङ्क्याह— **न हि षोडशीति**। यत्र प्रत्यभिज्ञाविरोधी भेदहेतुर्न भवति तत्र भेदहेतुरपि न भेदहेतुः। यत्र चाभेदहेतुर्भेदविरोधी न भवति तत्राभेदहेतुरप्यभेदहेतुर्न भवतीत्यर्थः। अथवोपास्याः पञ्चैवाग्नयः, षष्ठस्तु नोपास्यः, अनुपास्यत्वेन च पठनं छन्दोगेऽपि दृश्यत इत्याह— **पठ्यतेऽपि चेति**। अनुपास्यश्चेत् किमिति तर्हि पठ्यते पूर्वाग्निवदिति, तत्राह— **वाजसनेयिनस्त्विति**। अत एवोत्पत्तौ गुणान्तरविधानाभावान्न विद्याभेदः। वैश्वदेव्यास्तूत्पत्तौ विशिष्टगुणो विधीयत इति भवति भेद इत्यर्थः। भवतु वाजसनेयिनां षष्ठाग्निविधानम्, तथा [तथापि न] विद्याभेद इत्याह— **अथापीति**। ननु 'य एतानेवं पञ्चाग्नीन् वेदे'ति श्रवणात् तद्विरोधान्न षष्ठस्याग्नेरुपसंहार इत्याशङ्क्य पंञ्चसंख्याया अविधेयत्वात् सांपादिकाग्न्यवच्छेदाय केवलमनूद्यमानत्वान्नोत्पत्तिशिष्टत्वं संख्यायास्ततो येषामुत्पत्तिस्तेषां प्रत्यभिज्ञायमानत्वान्न विद्याभेद इत्याह— **न चात्रेति**। उक्तन्यायं प्रसारयति— **एवं प्राणेति**। यदुक्तमावापोद्वापाभ्यां वेद्यभेद इति, तत्राह— **न चावापेति**। [1]प्रत्यभिज्ञाविरोधाभावादित्यर्थः।

***न्यायनिर्णयः***

तत्राह— **यद्यपीति**। एकैव विद्या षष्ठाग्नियुक्ता तद्रहिता चेति विरुद्धमित्याशङ्क्याह— **न हीति**। किंच वाजसनेयके षष्ठस्यापि ध्येयत्वमग्नेरुपेत्योक्तं, न तु तस्य ध्येयत्वं, पञ्चैवाग्नयस्तथोच्यन्ते। अनुपास्यत्वेन षष्ठोक्तिश्छान्दोग्येऽपि तुल्येत्याह— **पठ्यतेऽपीति**। इतोऽस्माल्लोकात् तं दिष्टं परलोकं प्रेतं गतं पुत्रा ज्ञातयो वाऽग्नये नैधनविधिं विधातुं हरन्तीत्यर्थः। अनुपास्यत्वे किमिति पूर्वाग्निवत्पठ्यते षष्ठोऽग्निः, तत्राह— **वाजसनेयिनस्त्विति**। तस्योपासकस्य मृतस्य दाहायाग्निरेवाग्निरिति प्रसिद्धानुवादो न तूपास्तिविधिरुपास्यास्तूभयत्रापि पञ्चैवाग्नयः। प्रसिद्धानुवादश्च कल्पनानिवृत्त्यर्थत्वादर्थवानित्यर्थः। उत्पत्तौ गुणान्तरविध्यभावान्न विद्याभेदः, वैश्वदेव्यास्तूत्पत्तौ विशिष्टगुणोक्तेर्भेद इत्युक्तम्। इदानीं वाजिनां षष्ठाग्निविधानेऽपि न विद्याभेद इत्याह— **अथापीति**। 'पञ्चाग्नीन् वेदे'ति श्रुतसंख्याविरोधान्न षष्ठस्याग्नेरुपसंहारसिद्धिरित्याशङ्क्य पञ्चसंख्याया विधेयत्वाभावात् सांपादिकाग्न्यवच्छेदकत्वेनैवानुवादादुत्पत्त्यशिष्टत्वादुत्पन्नानां च प्रत्यभिज्ञानान्न विद्याभेद इत्याह— **न चेति**। पञ्चाग्निविद्यायामुक्तन्यायं प्राणविद्यादिष्वतिदिशति— **एवमिति**। यत्त्वावापोद्वापाभ्यां वेद्यभेदाद्विद्याभेद इति, तत्राह— **न चेति**। बहुतरांशाभेदप्रत्यभिज्ञानादल्पतरांशभेदेऽपि प्रत्यभिज्ञाऽविरोधान्न विद्याभेद इत्यर्थः। रूपभेदाद्विद्याभेदं शङ्कितं निरस्योपसंहरति— **तस्मादिति**।।२।।

---

१. अत्र ग्रन्थस्त्रुटित इति भाति।

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ।।३।।

**यदप्युक्तमाथर्वणिकानां विद्यां प्रति शिरोव्रताद्यपेक्षणादन्येषां च तदनपेक्षणाद् विद्याभेद इति; तत् प्रत्युच्यते। स्वाध्यायस्यैष धर्मो, न विद्यायाः। कथमिदमवगम्यते? यतस्तथात्वेन स्वाध्यायधर्मत्वेन समाचारे वेदव्रतोपदेशपरे ग्रन्थ आथर्वणिका इदमपि वेदव्रतत्वेन व्याख्यातमिति समामनन्ति। 'नैतदचीर्णव्रतोऽधीते' (मु.उ. ३।२।११) इति चाधिकृतविषयादेतच्छब्दादध्ययनशब्दाच्च स्वोपनिषदध्ययनधर्म एवैष इति निर्धार्यते। ननु च 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद् यैस्तु चीर्णम्' (मु.उ. ३।२।१०) इति ब्रह्मविद्यासंयोगश्रवणादेकैव सर्वत्र ब्रह्मविद्येति संकीर्येतैष धर्मः। न; तत्राप्येतामिति प्रकृतप्रत्यवमर्शात्। प्रकृतत्वं च ब्रह्मविद्याया ग्रन्थविशेषापेक्षमिति ग्रन्थविशेषसंयोग्येवैष धर्मः। सववच्च तन्नियम इति निदर्शननिर्देशः। यथा च सवाः सप्त सौर्यादयः शतौदनपर्यन्ता वेदान्तरोदितत्रेताग्न्यनभिसंबन्धादाथर्वणोदितैकाग्न्यभि-**

### *प्रकटार्थविवरणम्*

**स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः**। एवं तावद् रूपभेदो न भेदक इत्युपपाद्य धर्मविशेषं पराकरोति— **यदप्युक्तमित्यादिना**। इदमपि शिरोव्रतं वेदव्रतेन गोदानादिना व्याख्यातम्; तद्यथाऽध्ययनाङ्गं तथेदमपीत्यर्थः। एतत् ग्रन्थरूपम्; अचीर्णव्रतोऽनाचरितशिरोव्रतः पुमान् नाधीत इति प्रकृतमुण्डकपरामर्शात् एतच्छब्दान्मुण्डकाध्ययनधर्म एवायं, न विद्याधर्म इत्यर्थः। 'अधिकाराच्च' इति अधिकृतविषयादेतच्छब्दात्, [१]चकारोऽध्ययनशब्दाच्चेति व्याख्यातम्। इदानीं शङ्कोत्तरत्वेन व्याचष्टे— **ननु चेत्यादिना। एतां ब्रह्मविद्यामिति**। ब्रह्मविद्याप्रकाशकमिमं ग्रन्थमिति योजनीयम्। इतरथा विद्यायाः साक्षात्प्रकृतत्वाभावात् प्रकृतविषयैतच्छब्दानुपपत्तेरित्याह— **न, तत्रापीति**। तस्य शिरोव्रतस्य नियमो मुण्डकाध्ययने। 'सववच्च' इत्येतद् विवृणोति— **यथा सवा इति**। सवा होमा आथर्वणग्रन्थोक्ताः यथा आथर्वणोदितो य एकर्षिसंज्ञकोऽग्निस्तत्रैव क्रियन्ते, तद्वदित्यर्थः।

### *भाष्यभावप्रकाशिका*

अधिकाराच्चेति सूत्रपदं व्याचष्टे— **नैतदचीर्णेति**। ननु ब्रह्मविद्यैव प्रकृताऽपीति सैव परामृश्यत इत्याशङ्क्य तस्याः सर्वत्रैकत्वादथर्ववेदविहितैव परामृश्यत इत्याह— **प्रकृतत्वञ्चेति**। सवा होमाः सप्त सौर्यादयः शतौदनान्ताः आथर्वणिकानाम्, ते एकस्मिन्नेवाथर्वणिकाग्नौ क्रियन्ते, न त्रेतायाम्।

### *न्यायनिर्णयः*

रूपभेदस्य भेदकत्वं निराकृत्य धर्मभेदस्य भेदकत्वं प्रत्याह— **स्वाध्यायस्येति**। व्यावर्त्यं चोद्यमनुद्रवति— **यदपीति**। शिरोव्रतं शिरस्यग्निधारणम्। आदिग्रहणादातपावस्थानादि गृह्यते। चोद्योत्तरत्वेन सूत्रमवतार्य व्याचष्टे— **तदिति**। स्वाध्यायाङ्गत्वेन श्रुत्यादिभिरविनियोगे न तदङ्गतेति शङ्कते— **कथमिति**। तथात्वेनेत्यादिनोत्तरमाह— **यत इति**। गोदानादीनि वेदाध्ययनाङ्गत्वेनानुष्ठेयानि व्रतानि। शिरोव्रतमपि वेदव्रतेष्वन्तर्गतत्वेनोक्तम् तेन यथा गोदानाद्यध्ययनाङ्गं तथेदमपीत्यर्थः। अधिकाराच्चेति व्याचष्टे— **नैतदिति**। एतद् ग्रन्थजातमचीर्णव्रतोऽननुष्ठितशिरोव्रतः पुरुषो नाधीत इति प्रकृतमुण्डकपरामर्शकादेतच्छब्दान्मुण्डकाध्ययनधर्म एवायं, न विद्याधर्म इति प्रतिभातीत्यर्थः। अधिकारादधिकृतविषयादेतच्छब्दाच्चकारादधीत इत्यध्ययनशब्दाच्चेति व्याख्यातम्। इदानीं शङ्कोत्तरत्वेन व्याख्यातुं शङ्कयति— **नन्विति**। सर्वत्र ब्रह्मविद्यैकैव चेत् तया शिरोव्रतस्य संयोगाद् धर्मसंकरः स्यात्, न च सोऽस्तीति विद्याभेद इत्यर्थः। एतां ब्रह्मविद्यामिति तत्प्रकाशकमिमं ग्रन्थमिति योज्यम्। अन्यथा प्रकृतविषयैतच्छब्दविरोधादित्याह— **नेति**। ब्रह्मविद्यैव प्रकृतेति सैव परामृश्यतामित्याशङ्क्य तस्याः सर्वत्रैक्यादथर्वविहितैवात्र परामृष्टव्येत्याह— **प्रकृतत्वं चेति**। सूत्रावयवान्तरमवतारयति— **सववच्चेति**। तस्य शिरोव्रतस्य मुण्डकाध्ययने नियम इत्यत्र सववदिति निदर्शनमिति योजना। ततश्च शिरोव्रतस्य संकरो नेति चकारार्थः। तदेव विवृणोति— **यथेति**। सवा होमाः आथर्वणैरुदित एकोऽग्निरेकऋषिसंज्ञया प्रसिद्धस्तेषामेव

---

१. 'चकारात्' इति पाठः स्यात्।

**संबन्धाच्चाथर्वणिकानामेव नियम्यन्ते, तथैवायमपि धर्मः स्वाध्यायविशेषसंबन्धात् तत्रैव नियम्यते। तस्मादप्यनवद्यं विद्यैकत्वम्।।३।।**

## दर्शयति च।।४।।

**दर्शयति च वेदोऽपि विद्यैकत्वं सर्ववेदान्तेषु वेद्यैकत्वोपदेशात्– 'सर्वे वेदा यत्पदमामनन्ति' (क.उ. २।१५) इति। तथा 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः (ऐ. आ. ३।२।३) इति च। तथा 'महद्भयं वज्रमुद्यतम्' (क.उ. ६।२) इति काठक उक्तस्येश्वरगुणस्य भयहेतुत्वस्य तैत्तिरीयके भेददर्शननिन्दार्थे परामर्शो दृश्यते– 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं विदुषोऽमन्वानस्य' (तै.उ. २।७।१) इति। तथा वाजसनेयके प्रादेशमात्रसंपादितस्य वैश्वानरस्य छान्दोग्ये सिद्धवदुपादानम्– 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छा.उ. ५।१८।१) इति। तथा सर्ववेदान्तप्रत्ययत्वेनान्यत्र विहितानामुक्थादीनामन्यत्रोपासनविधानायोपादानात् प्रायदर्शनन्यायेनोपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः।।४।।**

।। इति प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम् ।।

### *प्रकटार्थविवरणम्*

**दर्शयति च**। किंच वेद्यैकत्वोपदेशेन ब्रह्मविद्यायास्तावत् सर्वत्रैक्यं दर्शयति। तथाऽत्रापि वेद्यभेदे [वेद्याभेदे] विद्यैक्यं भविष्यतीत्याह— **दर्शयति चेति**। किं च शाखान्तरोक्तस्य पदार्थस्य शाखान्तरे सिद्धवत्परामर्शदर्शनादप्येकत्वं गम्यत इत्याह— **तथा महद्भयमित्यादिना**। तत्त्वेव तदेव ब्रह्म भयंकरं भवति भेदं विदुषः तत्त्वममन्वानस्येत्यर्थः। किंच सर्वेषु वेदान्तेषूक्थादीनां प्रतीयमानत्वेन कारणेनैतदवगम्यते, अन्यत्र विहितानामन्यत्रोपासनायोपादानमस्तीति; ततस्तदुपासनानामपि सर्ववेदान्तप्रमाणत्वं

### *भाष्यभावप्रकाशिका*

नन्वेवमपि सगुणोपासनासु न सर्वत्राभेदादर्शनमस्तीत्याशङ्क्य तासामपि तत्प्रायपठितत्वात् तत्प्रायदर्शनन्यायेन एकत्वमेवाग्र्यप्राये लिखितं दृष्ट्वा भवेदयमग्र्य इति बुद्धिवदित्याह— **प्रायदर्शनेति**। इति प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम्।।

### *न्यायनिर्णयः*

नियम्यन्ते तदीये तत्रैवाग्नौ क्रियन्ते। स्वाध्यायविशेषसंबन्धादेतच्छब्दादधीतिशब्दाच्च मुण्डकाध्ययनसंबन्धाधिगतेरिति यावत्। धर्मभेदस्य धर्म्यभेदकत्वे फलितमाह— **तस्मादिति**। नामादिवद् धर्मभेदस्यापि भेदकत्वायोगादित्यर्थः।।३।।

किंच वेद्यैकत्वोक्त्या ब्रह्मविद्यायास्तावदैक्यं सर्वत्र वेदो दर्शयति। तथाऽन्यत्रापि (वेद्याभेदेऽपि) विद्यैक्यमित्याह— **दर्शयति चेति**। सूत्रं व्याचष्टे— **दर्शयतीत्यादिना**। वेदत्रयेऽपि विद्यैक्यविषयमुपदेशान्तरमाह— **तथेति**। किंच शाखान्तरोक्तपदार्थस्य शाखान्तरे सिद्धवत्परामर्शादपि विद्यैक्यधीरित्याह— **तथेत्यादिना**। एष पुरुषो यदा यस्यामविद्यावस्थायामेतस्मिन्नात्मन्यद्वयत्वेन सर्ववेदान्तप्रसिद्धे स्वाविद्यावशादेवान्तरं भेददर्शनमुदरमल्पमपि करोत्यथ तदा तस्यामवस्थायां तस्य भेददर्शनवतो भयमावश्यकं 'द्वितीयाद्वै भयं भवति' इति श्रुत्यन्तरादित्यर्थः। भेददर्शनवतो भयकारणमाह— **तत्त्वेवेति**। भेददर्शनवतो विदुषस्तत्त्वममन्वानस्य तदेव ब्रह्म भयंकरमित्यर्थः। निर्गुणविद्यायां वेद्यैकत्वादेकत्वेऽपि कथं सगुणविद्यायामेकत्वं, तत्राह— **तथेति**। एवं ब्रह्मविद्यैक्येऽपि कथमुक्थाद्युपास्तीनामैक्यं, तत्राह— **तथेति**। यथा निर्गुणं सगुणं च ब्रह्म सर्वत्रैकमिति तद्विद्या न भिद्यते, तथोक्थादीनां सर्ववेदान्तप्रत्ययत्वादेतद् गम्यते– यदन्यत्रोक्तानामन्यत्रोपास्त्यर्थं तेषामादानमिति। ततस्तदुपास्तीनामपि सर्ववेदान्तप्रमाणकत्वेनैक्यं

२।। उपसंहाराधिकरणम् ।।सू.५।।

## उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने च।।५।।

**इदं प्रयोजनसूत्रम्। स्थिते चैवं सर्ववेदान्तप्रत्ययत्वे सर्वविज्ञानानामन्यत्रोदितानां विज्ञानगुणानामन्यत्रापि समाने विज्ञान उपसंहारो भवति, अर्थाभेदात्। य एव हि तेषां गुणानामेकत्रार्थो विशिष्टविज्ञानोपकारः, स एवान्यत्रापि। उभयत्रापि हि तदेवैकं विज्ञानम्, तस्मादुपसंहारः। विधिशेषवत्। यथा हि विधिशेषाणामग्निहोत्रादिधर्माणां तदेवैकमग्निहोत्रादि कर्म सर्वत्रेत्यर्थाभेदादुपसंहरणमेवमिहापि। यदि हि विज्ञानभेदो भवेत् ततो विज्ञानान्तरनिबद्धत्वाद् गुणानां, प्रकृतिविकृतिभावाभावाच्च न स्यादुपसंहारः। विज्ञानैकत्वे तु नैवमिति।**

*शारीरकन्यायसंग्रहः*

**उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने च।।५।।** उपास्यरूपैक्येऽपि अक्ष्यादित्यस्थानभेदनिर्दिष्टाहर्[हम]हर्गुणव्यवस्थावद् उपास्यैक्येऽपि शाखाभेदस्थाननिर्दिष्टानां गुणानां व्यवस्थायां प्राप्तायां शाखाभेदस्थानस्य अक्ष्यादित्यस्थानवद् उपास्यविशेषणतया गुणव्यवस्थापकत्वाभावाद् धर्म्युपाधिविहिततया तेनाविनाभूतानां गुणानां सर्वत्रगतेनापि धर्मिणाऽविनाभावेन अनुमीयमानतया सर्वत्र संबन्धसिद्धेः, शाखाभेदेऽपि सर्वगुणविशिष्टो गुणी तत्तच्छाखागतैर्गुणगुणिप्रतिपादकशब्दैः अनुमानानुगृहीतैः अनुप्रमीयत इति विद्यैक्ये गुणोपसंहारः सिद्धः, अनुमानानुगृहीतात् शब्दप्रमाणादिति।

*प्रकटार्थविवरणम्*

सिध्यति बाहुल्येनेत्यर्थः। इति प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम्।।

**उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च।** संक्षेपतस्तात्पर्यमाह— **इदमिति**। पूर्वाधिकरणविचारस्य प्रयोजनमनेन सूत्रेणोच्यत इत्यर्थः। तद्विवृणोति— **स्थिते चैवमिति**। उक्तमेव व्यतिरेकमुखेनाह— **यदि हीति**। यथा चाग्नेयसौर्यनिर्वापयोः कर्मणोः भेदेऽपि प्रकृतिविकृतिभावादाग्नेयगतस्येतिकर्तव्यताकलापस्य सौर्यचरुनिर्वापे प्राप्तिः, तथाभावोऽप्युपासनानां नास्तीत्याह— **प्रकृतीति**।

*भाष्यभावप्रकाशिका*

**उपसंहारोऽर्थाभेदादिति**। चिन्ताप्रयोजनप्रदर्शनार्थमिदं सूत्रमिति सूत्रस्य तात्पर्यमाह— **इदमिति**। सूत्रं व्याचष्टे— **स्थिते चैवमिति**। अर्थाभेदमेवाह— **य एव हीति**। एतदेव व्यतिरेकमुखेन दर्शयति— **यदि हीति**। ननु कर्मभेदेऽपि धर्मोपसंहारः स्यादित्याशङ्क्याह— **प्रकृतिविकृतिभावाभावाच्चेति**। ननु विज्ञानैक्ये शाखान्तरोक्तानां गुणानां न शाखान्तरोक्ते विज्ञाने

*न्यायनिर्णयः*

प्रायदर्शनन्यायेन बाहुल्येन सिध्यतीत्यर्थः।।४।। इति प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम् ।।

सर्वशाखासु विद्यैक्ये गुण्याकृष्टगुणानां तत्र तत्रोपसंहारमनन्तरविचारफलमाह— **उपसंहार इति**। संक्षेपतोऽधिकरणतात्पर्यमाह— **इदमिति**। पूर्वविचारफलमनेन सूत्रेणोच्यते। तेन तद्वदेवास्य पादादिसंगतिः। पूर्वपक्षे पूर्वाधिकरणस्य विवक्षितफलासिद्धिः। सिद्धान्ते तस्य तत्सिद्धिः। तुल्यधीबद्धा गुणा विषयाः। ते किं यथाश्रुति व्यवतिष्ठेरन्नुत प्रत्यभिज्ञया ज्ञानोपाधावुपसंह्रियेरन्निति मीमांसायामिच्छाभेदादतिरात्रे षोडशिग्रहाग्रहवदुपसंहारस्यानावश्यकत्वाद् यथाश्रुति व्यवस्थेति प्राप्ते सिद्धान्तयन्नुपसंहारः समाने चेति विभागं विभजते— **स्थिते चेति**। तत्र हेतुमुक्त्वा व्याकरोति— **अर्थेति**। कथं व्यवस्थया श्रुतानां गुणानामुपकारैक्यं, तत्राह— **उभयत्रेति**। गुणिद्वारा गुणानामपि प्रत्यभिज्ञाने फलितमाह— **तस्मादिति**। अर्थाभेदादुपसंहारे दृष्टान्तमाह— **विधीति**। प्रधानप्रत्यभिज्ञायां सर्वतद्धर्मप्रत्यभिज्ञानात् फलाविशेषाच्च व्यवस्थया श्रुतानामपि गुणानामेकज्ञानोपाधावुपसंहार इति दार्ष्टान्तिकमाह— **एवमिति**। उक्तमेव व्यतिरेकतः स्फोरयति— **यदीति**। आग्नेयसौर्ययोर्भेदेऽप्याग्नेयगतस्येतिकर्तव्यताजातस्य सौर्ये प्राप्तिवज्ज्ञानान्तरस्थानामपि गुणानां ज्ञानान्तरे प्राप्तिः स्यादित्याशङ्क्याह— **प्रकृतीति**। ज्ञानैक्येऽपि शाखान्तरोक्तगुणानां शाखान्तरोक्तज्ञाने नोपसंहारः।

**अस्यैव तु प्रयोजनसूत्रस्य प्रपञ्चः 'सर्वाभेदात्-' (ब्र.सू. ३।३।१०) इत्यारभ्य भविष्यति ।।५।।**

।। इति द्वितीयमुपसंहाराधिकरणम् ।।

### ३।।अन्यथात्वाधिकरणम्।।सू. ६-८।।

## अन्यथात्वं शब्दादिति चेन्नाविशेषात्।।६।।

**वाजसनेयके 'ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति' 'ते ह वाचमूचुस्त्वं न उद्गाय' (बृ.उ.**

### *शारीरकन्यायसंग्रहः*

**अन्यथात्वं शब्दादिति चेन्नाविशेषात्।।६।। न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्।।७।। संज्ञातश्चेत्तदुक्तमस्ति तु तदपि।।८।।** उद्गीथसंज्ञाविशेषात् अर्थवादविशेषाच्च बहिरङ्गभूतादुद्गीथभक्तेः कर्ता प्राणः क्वचिदुपास्यः, क्वचिदुद्गीथावयव ओंकारः प्राणदृष्टिविशिष्ट उपास्यः इत्यन्तरङ्गोपास्यरूपभेदस्य बलवत्तरत्वाद् रूपभेदेन विद्याभेदो दर्शितः।

### *प्रकटार्थविवरणम्*

समग्राङ्गसंयुक्तो विधिः प्रकृतिः दर्शपूर्णमासादिः। कतिपयाङ्गसंयुक्तो विकृतिः सौर्यादिः। द्वादशलक्षण्यां हि प्रथमषट्केन प्रकृतिसंबन्धो[बद्धः] विचारः कृतः, चरमेण विकृतिसंबन्धः [बद्धः]; सप्तमे च प्रकृतिगतानां विकृतौ सामान्यातिदेशो निरूपितः; तथेह नास्तीति भावः। उत्तरसूत्रसन्दर्भस्य पौनरुक्त्यं परिहरति— **अस्यैव चेति**। इति द्वितीयमुपसंहाराधिकरणम्।।

**अन्यथात्वं शब्दादिति चेन्नाविशेषात्**। विषयमाह— **वाजसनेयक इति**। तत् तत्रान्योन्याभिभवरूपे संग्रामे सति ह किल

### *भाष्यभावप्रकाशिका*

भवेदुपसंहारस्तावन्मात्रेणैव तच्छाखोक्तविज्ञानस्योपकारसिद्धेरधिकानपेक्षणादधिका(रा)पेक्षणायां च तत्रैव तस्यापि विधानप्रसङ्गात् तद्दर्शनाच्च। तस्मादुपास्याभेदेऽपि अक्ष्यादित्यस्थानभेदेन निर्दिष्टाहरहमिति गुणयोर्व्यवस्थावच्छाखाभेदेन निर्दिष्टानां व्यवस्थैवेत्याशङ्क्य शाखाभेदस्थानस्याक्ष्यादित्यस्थानवदुपास्यविशेषणतया गुणव्यवस्थापकत्वाभावाद् धर्म्युपाधौ विहिततया गुणानां सर्वत्रापि श्रूयमाणेऽपि धर्मिणाऽविनाभावात् तेनानुमीयमानतया सर्वत्र संबन्धसिद्धेर्विद्यैक्ये गुणोपसंहारो बलवद्बाधकाभावेन निराकरणीयः, शाखान्तरे कतिपयगुणविधानस्य तद्विधिपरतया गुणान्तरनिवारकताभावादित्यभिप्रेत्याह— **विज्ञानैकत्वे तु नैवमिति**। ननूत्तरत्राप्यस्यैव वक्ष्यमाणत्वात् पौनरुक्त्यमित्यत आह— **अस्यैवेति**। इति द्वितीयमुपसंहाराधिकरणम्।।

**अन्यथात्वं शब्दादिति**। **हन्तेति**। यदि सम्मतमित्यर्थः। उद्गीथेनात्ययामेति अस्मिन्नाभिचारिके यज्ञ उद्गीथलक्षणसामभक्त्युपलक्षितेन

### *न्यायनिर्णयः*

तत्रोक्तगुणमात्रेण तज्ज्ञानोपकारसिद्धेरधिकानपेक्षणात्। अन्यथा तत्रैव तद्विधिप्रसङ्गात्। तस्मादक्ष्यादित्यस्थानभेदेनोक्तयोरहरहमिति-गुणयोर्व्यवस्थानवदुपास्याभेदेऽपि शाखाभेदेनोक्तानां व्यवस्थैवेत्याशङ्क्य शाखाभेदस्योक्तस्थानवदुपास्यविशेषणतया गुणव्यवस्थापकत्वाभावाद् धर्म्युपाधावुक्तगुणानां सर्वत्रापि श्रुतेन धर्मिणा नियमादनुमानतः सार्वत्रिकत्वसिद्धेर्विद्यैक्ये गुणोपसंहारो बलद्बाधकाभावे वारयितुं न शक्यते। शाखान्तरे कतिपयगुणवादस्य तद्विध्यर्थतया गुणान्तरावारकत्वादित्याह— **विज्ञानेति**। एवमित्युपसंहाराभावोक्तिः। इतिशब्दः सिद्धान्तसमाप्त्यर्थः। उत्तरसंदर्भस्य पौनरुक्त्यं प्रत्याह— **अस्यैवेति**।।५।। इति द्वितीयमुपसंहाराधिकरणम्।।

संज्ञाऽभेदाज्ज्ञानैक्यं तद्गुणानां चान्यत्रोपसंहार इत्युक्त उद्गीथविद्ययोरपि च्छान्दोग्यबृहदारण्योक्तयोः संज्ञाऽभेदादभेदमाशङ्क्य प्रत्याह— **अन्यथात्वमिति**। चोदनाद्यविशेषादित्यस्यापवादार्थमिदमधिकरणम्। तस्य बृहदारण्यकस्थमुद्गीथब्राह्मणं छान्दोग्यस्थमुद्गीथाध्यायं च विषयमाह— **वाजसनेयक इति**। ते प्रकृता वागादयः प्राणा देवाः सात्त्विकवृत्तिप्रधानाः संभूयान्योन्यमुक्तवन्तो हन्त यदि

**१।३।१,२) इति प्रक्रम्य वागादीन् प्राणानसुरपाप्मविद्धत्वेन निन्दित्वा मुख्यप्राणपरिग्रहः पठ्यते– 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' (बृ.उ. १।३।७) इति। तथा छान्दोग्येऽपि– 'तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः' (छा.उ. १।२।१) इति प्रक्रम्येतरान् प्राणानसुरपाप्मविद्धत्वेन निन्दित्वा तथैव मुख्यप्राणपरिग्रहः पठ्यते– 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' (छा.उ. १।२।७) इति। उभयत्रापि च प्राणप्रशंसया प्राणविद्याविधिरध्यवसीयते। तत्र संशयः– किमत्र विद्याभेदः स्यादाहोस्विद् विद्यैकत्वमिति। किं तावत् प्राप्तम्? पूर्वेण न्यायेन विद्यैकत्वमिति। ननु न युक्तं विद्यैकत्वं, प्रक्रमभेदात्। अन्यथा हि प्रक्रमन्ते वाजसनेयिनोऽन्यथा छन्दोगाः। 'त्वं न उद्गाय' (बृ.उ. १।३।७) इति वाजसनेयिन उद्गीथस्य कर्तृत्वेन प्राणमामनन्ति, छन्दोगास्तूद्गीथत्वेन**

### *प्रकटार्थविवरणम्*

देवाः शास्त्रीयेन्द्रियवृत्तयः उद्गीथभक्त्युपलक्षितमौद्गात्रं कर्माजह्रुः आहृतवन्तः प्रारब्धवन्त इत्यर्थः। अनेन कर्मणैनानसुरान् स्वाभाविकेन्द्रियवृत्तिलक्षणानभिभविष्यामः इत्यभिप्रेत्येत्यर्थः। वाक्यद्वयस्य विवक्षितमर्थमाह— **उभयत्रापि चेति**। भेदाभेदप्रमाणाभ्यां संशयमाह— **तत्रेति**। पूर्वपक्षमाह— **विद्यैकत्वमिति**। पूर्वत्राख्याऽविशेषात् विद्यैक्यमुक्तम्; तथेहापि उद्गीथविद्येत्याख्याऽविशेषादैक्यमित्यर्थः। 'अन्यथात्वं शब्दादिति चेत्' इति सिद्धान्तशङ्काभागं व्याचष्टे— **ननु न युक्तमित्यादिना**। सकलोद्गीथभक्तेः कर्ता प्राण उपास्यो वाजसनेयके; छान्दोग्ये तूद्गीथभक्त्यवयव ओंकारः प्राणदृष्ट्योपास्य इति अन्यथात्वं विभिन्नत्वम् शब्दादवगम्यत इत्यर्थः।

### *भाष्यभावप्रकाशिका*

औद्गात्रेण कर्मणा असुरांस्तामसवृत्तिप्रधानाञ्जयामेति देवाः सात्त्विकवृत्तिप्रधाना ऊचुरित्यर्थः। **वागादीन् प्राणानिति**। वाक्प्राणचक्षुः-श्रोत्रमनांस्यासुरपाप्मविद्धानि 'पाप्मना ह्येषा विद्धे' त्यादिना दर्शयित्वेत्यर्थः। **आसन्यं प्राणमिति**। आस्ये भवमासन्यं मुखान्तर्बिलस्थं मुख्यप्राणं प्राणाभिमानिनीं देवतामिति यावत्। नन्वाख्यायिकैव श्रूयते, न विद्याविधिरिति, तत्राह— **उभयत्रापीति**। एवं विषयं दर्शयित्वा (संशयमाह तत्र) संशयमाह— **तत्र संशय इति**। अत्र पूर्वपक्षं दर्शयति— **विद्यैकत्वमिति**। पूर्वपक्षमाक्षिपति— **ननु न युक्तमिति**। वाजसनेय उद्गीथगानक्रियाकर्तृत्वेन प्राण उच्यते, छान्दोग्ये तूद्गीथत्वेन। अतः कर्तृकर्मरूपेण विस्पष्टो भेद

### *न्यायनिर्णयः*

संमतमस्माकं तदाऽस्मिन्नाभिचारिके यज्ञे वयमुद्गीथाख्यभक्तिलक्षितेनौद्गात्रेण कर्मणा तमोवृत्तिप्रधानानसुरानतीत्य स्वमग्न्यादिभावमयामेति। ते चैवं कृतसंवादा वाचमौद्गात्रे कर्मणि प्रधानां त्वमस्मदर्थमौद्गात्रं निर्वर्तयेति नियुक्तवन्तः। तथोपक्रम्य वागादीन् वाक्प्राणचक्षुःश्रोत्रमनांसि 'पाप्मना ह्येषा विद्धे'त्यादिना पाप्मविद्धत्वेन निन्दित्वा तेषामध्येयत्वं[१] निर्धार्य मुख्यप्राणस्योपास्यत्वं च निश्चित्य तत्परिग्रहः श्रूयत इत्यर्थः। वागादीनामनुपास्यत्वनिश्चयानन्तरमित्यथशब्दार्थः। आसन्यमास्ये भवं मुखान्तर्बिलस्थं प्राणं मुख्यप्राणाभिमानिनीं देवतामिति यावत्। उद्गीथब्राह्मणमुक्त्वोद्गीथाध्यायं कथयति— **तथेति**। तत् तत्रान्योन्याभिभवात्मके संग्रामे देवाः पूर्ववदुद्गीथलक्षितं कर्माजह्रुराहृतवन्तः। अनेन कर्मणैनानसुरान् स्वाभाविकेन्द्रियवृत्तिलक्षणानभिभविष्याम इत्यभिप्रेत्य कर्मारब्धवन्त इत्यर्थः। तथैवेत्युद्गीथब्राह्मणवदेवेत्यर्थः। आख्यायिकैव श्रुता, न विद्याविधिरित्याशङ्क्य ब्राह्मणाध्याययोर्विवक्षितमर्थमाह— **उभयत्रेति**। शाखाद्वयस्थोद्गीथविद्यां विषयमुक्त्वा विचारबीजं संशयमाह— **तत्रेति**। भेदाभेदमानाभ्यां तमेव विशदयति— **किमिति**। विमृश्य पूर्वपक्षयति— **किं तावदिति**। पूर्वत्राख्याऽविशेषाद्विद्यैक्यमुक्तम्, ता[द्व]दत्राप्युद्गीथविद्येत्याख्याऽविशेषादैक्यमित्यर्थः। अत्र चोपास्तिभेदोक्त्या वाक्यार्थधीहेतोरेव निरूपणात् पादादिसंगतयः। पूर्वपक्षे गुणोपसंहारः, सिद्धान्ते तदसत्तेति फलभेदः। अन्यथात्वमित्यादिसैद्धान्तिकीं शङ्कां व्याकुर्वन् पूर्वपक्षमाक्षिपति— **नन्विति**। प्रक्रमभेदादित्युक्तं व्यनक्ति— **अन्यथा हीति**। कथमुभयत्र प्रक्रमस्यान्यथात्वं, तत्राह— **त्वमिति**। **उद्गीथस्येति**। सर्वस्या भक्तेरिति यावत्। **उद्गीथत्वेनेति**। तदवयवो योऽयमोङ्कारस्तथात्वेनेत्यर्थः। उद्गानकर्ता प्राणो वाजसनेयके ध्येयत्वेनोच्यते। छान्दोग्ये

---

१. अध्येयत्वम् = अनुपास्यत्वम्।

**'तमुद्गीथमुपासांचक्रिरे' (छा.उ. १।२।७) इति। तत् कथं विद्यैकत्वं स्यादिति चेत्? नैष दोषः। न ह्येतावता विशेषेण विद्यैकत्वमपगच्छति। अविशेषस्यापि बहुतरस्य प्रतीयमानत्वात्। तथाहि- देवासुरसंग्रामोपक्रमत्वमसुरात्ययाभिप्राय उद्गीथोपन्यासो वागादिसंकीर्तनं तन्निन्दया मुख्यप्राणव्यपाश्रय-स्तद्वीर्याच्चासुरविध्वंसनमश्मलोष्टनिदर्शनेनेत्येवं बहवोऽर्था उभयत्राप्यविशिष्टाः प्रतीयन्ते। वाजसनेयकेऽपि चोद्गीथसामानाधिकरण्यं प्राणस्य श्रुतम्- 'एष उ वा उद्गीथः' (बृ.उ. १।३।२३) इति। तस्माच्छान्दोग्येऽपि कर्तृत्वं लक्षयितव्यम्। तस्माच्च विद्यैकत्वमिति।।६।।**

**न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्।।७।।**

**न वा विद्यैकत्वमत्र न्याय्यम्, विद्याभेद एवात्र न्याय्यः। कस्मात्? प्रकरणभेदादिति; प्रक्रमभेदादित्यर्थः।**

### *प्रकटार्थविवरणम्*

'नाविशेषात्' इति पूर्वपक्षभागं विभजते— **नैष दोष इत्यादिना**। यथाऽश्मभेदाभिप्रायेणाश्मनि क्षिप्तो लोष्टो विध्वंसते, तथा मुख्यप्राणस्याभिभवाभिप्रायमात्रेणासुराणां विध्वंसनमित्याह— **अश्मलोष्टनिदर्शनेनेति**। पूर्वमल्पं वैषम्यमङ्गीकृत्य बहुतरार्थवादसारूप्यात् विद्यैक्यमुक्तम्; इदानीमल्पमपि वैषम्यं नास्तीत्याह— **वाजसनेयकेऽपि चेति**। यथा छान्दोग्ये 'तमुद्गीथम्' इति प्राणसामानाधिकरण्य-मुद्गीथस्य तथा वाजसनेयकेऽपीति नास्ति वैषम्यमित्यर्थः। यच्च वाजसनेयके प्राणस्योद्गीथभक्तिकर्तृत्वं तच्छान्दोग्येऽपि द्रष्टव्य-मित्याह— **तस्मादिति**।

**न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्**। सिद्धान्तसूत्रं योजयति— **न वेत्यादिना**। ओमित्येतदक्षरम्; कथंभूतम्?

### *भाष्यभावप्रकाशिका*

इत्यर्थः। बहुतररूपप्रत्यभिज्ञानादप्रत्यभिज्ञायमानं किंचिल्लक्षणया नेतव्यमिति समाधत्ते— **न ह्येतावतेति**। **अश्मलोष्टेति**। यथाऽश्मानमाखणमृत्वा लोष्टो विध्वंसत इति। एवं विध्वंसमाना विष्वञ्चोऽसुरा विनेशुरिति पठ्यत इत्यर्थः। आखनं खननायोग्यम्। न केवलं शाखान्तरे रूपभेददर्शनम्, एकस्यामपि शाखायामेतद् दृश्यते, तथापि न तत्र विद्याभेदः, तद्वदुभयोरपि भविष्यतीत्याह— **वाजसनेयकेऽपि चेति**। उद्गीथात्मत्वमत्रापि श्रुतञ्चेत् कथमुपासनमिति, तत्राह— **तस्माच्छान्दोग्येऽपीति**।

सिद्धान्तयति— **न वा प्रकरणभेदादिति**। शाखाभेदादेव प्रकरणभेदः सिध्यतीति मन्वानो विवक्षितमर्थमाह— **प्रक्रमभेदादिति**।

### *न्यायनिर्णयः*

त्वोङ्कारः प्राणदृष्ट्योपास्य इष्टः। तथा च कर्तृकर्मणोर्भेदान्न विद्यैक्यमिति फलितमाह— **तदिति**। बहुतररूपप्रत्यभिज्ञानादप्रत्यभिज्ञातं किंचिल्लक्षणया नेयमिति मत्वा समाधत्ते— **नेत्यादिना**। अविशेषादित्येतद् व्याचष्टे— **न हीति**। **एतावता** क्वचित् कर्मरूपत्वेनोपास्यत्वं कर्तृत्वेनान्यत्रेत्येतावन्मात्रेणेत्यर्थः। बहुताविशेषप्रतीतिमेव प्रकटयति— **तथाहीति**। यथाऽश्मानं पाषाणं प्राप्य मृत्त्वाल्लोष्टो विध्वंसत एवं विध्वंसमाना विष्वञ्चो विनेशुरिति श्रूयत इत्याह— **तदिति**। अविशेषधियं निगमयति— **इत्येवमिति**। न केवलं शाखान्तरे रूपभेदो दृष्टः, किं त्वेकस्यामपि, तथापि न तत्र विद्याभेदस्तथोभयोरपि स्यादित्याह— **वाजेति**। प्राणस्योद्गीथत्वमत्रापि श्रुतं चेत् कथमुपास्तिः, तत्राह— **तस्मादिति**। उद्गीथत्वेन श्रुतेरुभयत्राविशेषाद् यदेकत्र कर्तृत्वं तदितरत्रापि लक्ष्यम्, तथा च प्राणस्य कर्तृत्वेन कर्मत्वेन च ध्यानं शास्त्रादित्यर्थः। उभयत्रापि [प्राणस्योद्गीथत्व] वेद्यरूपाविशेषे फलितमाह— **तस्माच्चेति**।।६।।

विद्यैक्ये पूर्वपक्षे तद्भेदं सिद्धान्तमाह— **न वेति**। वाशब्दस्यावधारणार्थत्वमुपेत्य प्रतिज्ञां विभजते— **नेति**। अत्रेति प्रकृतशाखाद्वयोक्तिः। उभयत्रापि प्राणस्योद्गीथत्वतत्कर्तृत्वाविशेषस्योक्तत्वाद् वेद्याभेदेन विद्याऽभेदे संभवति कुतस्तद्भेदोक्तिरिति शङ्कते— **कस्मादिति**। तत्र हेतुः— **प्रकरणेति**। शाखाभेदादेव प्रकरणभेदसिद्धेर्न तस्य धीभेदे प्रयोजकतेत्याशङ्क्याभीष्टमर्थमाह—

**तथाहि– इह प्रक्रमभेदो दृश्यते। छान्दोग्ये तावत्– 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा.उ. १।१।१) इत्येवमुद्गीथावयवस्योङ्कारस्योपास्यत्वं प्रस्तुत्य रसतमादिगुणोपव्याख्यानं तत्र कृत्वा अथ 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' (छा.उ. १।१।१०) इति पुनरपि तमेवोद्गीथावयवमोङ्कारमनुवर्त्य देवासुराख्यायिकाद्वारेण 'तम्[१] प्राणमुद्गीथमुपासांचक्रिरे' (छा.उ. १।२।७) इत्याह। तत्र यद्युद्गीथशब्देन सकला भक्तिरभिप्रेयेत, तस्याश्च कर्तोद्गातर्त्विक्, तत उपक्रमश्चोपरुध्येत, लक्षणा च प्रसज्येत। [२]उपक्रमतन्त्रेण चैकस्मिन् वाक्य उपसंहारेण भवितव्यम्। तस्मादत्र तावदुद्गीथावयव ओंकारे प्राणदृष्टिरुपदिश्यते; वाजसनेयके तूद्गीथ-**

*प्रकटार्थविवरणम्*

उद्गीथम् उद्गीथभक्त्यवयवम्; उद्गाता हि उद्गीथभक्तिं कुर्वन्नोमित्येवमुपक्रमते। उद्गीथशब्दलक्ष्यमुपासीतेत्युपक्रम्य कथमुपासीतेत्याकाङ्क्षायाम् 'स एष रसानां रसतमः परमः पारार्थ्यः[परार्ध्यः]' इत्यादिना तत्रैव गुणविधानं कृतमित्यर्थः। ननु यद्यपि छान्दोग्येऽन्यथोपक्रमोऽस्ति, तथापि सामभक्तेः सामावयवस्य कर्ता कल्प्यतामित्याशङ्क्याह— **तत्र यद्युद्गीथशब्देनेति**। अविरोधे हि कल्पना कल्पते। अत्र च ओङ्कारोपक्रमो विरुध्यत, वृथैव मुख्यार्थत्यागश्च प्रसज्यत इत्यर्थः। ननु उपक्रमोऽकिंचित्करः; उपसंहारवाक्ये अन्यथैवार्थो गृह्यतां वाक्यान्तरानुसारेणेत्याशङ्क्याह— **उपक्रमतन्त्रेणेति**। इदानीं छन्दोगविलक्षणमेव वाजसनेयकोपक्रममाह— **वाजसनेयके त्विति**।

*भाष्यभावप्रकाशिका*

प्रकरणविच्छेदाभावं दर्शयितुं प्रकरणमनुसन्धत्ते। **रसतमादीत्यादिना**। भूतपृथिव्योषधिपुरुषवागृक्सामानां पूर्वस्य पूर्वस्योत्तरमुत्तरं रसतया(म्ब)सारतया निर्दिष्टम्। तेषां चोङ्कारं रसतमत्वेन निर्दिश्य स एव पुनराप्तिसमृद्ध्यादिगुणत्वेन च निर्दिष्ट इत्यर्थः। तावता कथं प्रक्रमविरोध इति, तत्राह— **यद्युद्गीथशब्देनेति**। वाजसनेयके उद्गीथेनात्ययामेत्यत्रोद्गीथशब्दस्यावयवपरत्वाभावात् सकलैव भक्तिः, त्वं न उद्गायेत्यनेन वाक्येनोद्गातर्त्विगपि प्राणत्वेन निरूप्यते, तस्माद्विद्यैकत्वमिति यदुच्येत, अस्य वाक्यस्योद्गीथावयवोङ्काराक्षरे प्राणदृष्टिर्विरुध्येतेत्यर्थः। किंचोद्गीथावयवोङ्काराक्षरस्योद्गातृवाचकत्वाभावात् तेनोद्गातुर्लक्ष्यत्वमपि प्रसज्येतेत्याह— **लक्षणेति**। उपसंहारानुसारेणोपक्रमोऽपि क्वचिदन्यथा क्रियते, तद्वदिह प्राणमुद्गीथमुपासाञ्चक्रिर इति सकलभक्त्यभिधानोपसंहारानुसारेणोपक्रमो नीयतामित्याशङ्क्याह— **उपक्रमतन्त्रेण चेति**। यत्रोपक्रमः सन्दिग्धार्थस्तत्रैवोपसंहारापेक्षा, नेह विस्पष्टार्थत्वादित्यर्थः। ननु तर्हि तत्राप्युद्गीथशब्देन तदवयवो गृह्यतामिति, तत्राह— **वाजसनेयके त्विति**। **कारणाभावादिति**। उपक्रमस्यावयवपरत्वाभावादित्यर्थः।

*न्यायनिर्णयः*

**प्रक्रमेति**। शाखाद्वये तद्भेदं विवृणोति— **तथा हीति**। छान्दोग्यगतमुपक्रमप्रकारं दर्शयति— **छान्दोग्य इति**। उपक्रमवाक्यस्यार्थमाह— **उद्गीथेति**। प्रकरणविच्छेदाभावं वक्तुं तदनुसंधत्ते— **रसेति**। भूतपृथिव्योषधिपुरुषवागृक्सामानां पूर्वस्य पूर्वस्योत्तरमुत्तरं सारतयोक्त्वा तेषामोङ्कारं रसतमत्वेन निर्दिश्य तमेव पुनराप्तिसमृद्ध्यादिगुणकत्वेनोपदिश्य ध्येयमाख्यायिकया निर्धार्योद्गीथोपास्तिरवतारितेत्यर्थः। ननु वाजसनेयके यथा 'उद्गीथेनात्ययामे'त्यत्रोद्गीथशब्देन सकला भक्तिरुक्ता 'त्वं न उद्गाये'त्यनेनापि प्राणत्वेनोद्गातोच्यत एवम् 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्युपक्रमवाक्यस्थोद्गीथशब्देन सकला भक्तिस्तस्याश्च कर्तोद्गाता प्राणत्वेनोच्यताम्, तथा च प्रक्रमाभेदाद्विद्यैक्यं, तत्राह— **तत्रेति**। ऋत्विक् प्राणत्वेन निरुच्येतेति शेषः। तस्मिन् पक्षे यदुद्गीथावयवभूतमोङ्काराख्यमक्षरं तत्र प्राणदृष्टिरनुष्ठेयेत्युपक्रमो बाध्येतेत्यर्थः। चकारो वक्ष्यमाणदोषसमुच्चये। यदुद्गीथावयवभूतमोङ्काराख्यमक्षरं तद्विषयोद्गीथशब्दस्योद्गातृवाचित्वाभावात् तेनोद्गातुर्लक्ष्यत्वमपि ते स्यादित्याह— **लक्षणेति**। 'अक्ताः शर्करा उपदधाती'त्यस्य 'तेजो वै घृत'मिति शेषान्निर्णयवत् 'प्राणमुद्गीथमुपासांचक्रिर' इति सकलभक्तिविषयोपसंहारादुपक्रमो नीयतामित्याशङ्क्याह— **उपक्रमेति**। तस्य संदिग्धार्थत्वात् स्यादुपसंहारापेक्षा। प्रकृते तूपक्रमस्यातिस्पष्टत्वान्नैवमित्यर्थः। 'ओमित्येतदक्षर'मित्यादौ तर्हि कोऽर्थः स्यादित्याशङ्क्याह— **तस्मादिति**। 'उद्गीथेनात्ययामे'त्यत्रापि तदवयवस्योद्गीथशब्दत्वादुद्गातुश्चाश्रुतेर्न प्रक्रमभेदोऽस्तीत्याशङ्क्याह— **वाजेति**। 'ओमित्येतदक्षर'मित्युपक्रमस्यावयवार्थत्वात् 'तमुद्गीथ'मित्युद्गीथशब्देनावयवो गृहीतः। 'उद्गीथेनात्ययामे'त्यत्र तु तथा हेत्वदृष्टेः सकलभक्तिविषयत्वमेव तस्येत्यर्थः। यदुक्तमिहापि

१. तमित्यस्य विवरणम् प्राणमिति। २. 'उपक्रमानुरोधेन' इति पा.।

**शब्देनावयवग्रहणे कारणाभावात् सकलैव भक्तिरावेद्यते। 'त्वं न उद्गाय' (बृ.उ. १।३।७) इत्यपि तस्याः कर्तोद्गातर्त्विक् प्राणत्वेन निरूप्यत इति प्रस्थानान्तरम्। यदपि तत्रोद्गीथसामानाधिकरण्यं प्राणस्य तदप्युद्गातृत्वेनैव दिदर्शयिषितस्य प्राणस्य सर्वात्मत्वप्रतिपादनार्थमिति न विद्यैकत्वमावहति। सकलभक्तिविषय एव च तत्राप्युद्गीथशब्द इति वैषम्यम्। न च प्राणस्योद्गातृत्वमसंभवेन हेतुना परित्यज्यते, उद्गीथभाववदुद्गातृभावस्याप्युपासनार्थत्वेनोपदिश्यमानत्वात्। प्राणवीर्येणैव चोद्गातौद्गात्रं करोतीति नास्त्यसंभवः। तथा च तत्रैव श्रावितम्– 'वाचा च ह्येव स प्राणेन चोदगायत्' (बृ.उ. १।३।२४) इति।**

**न च विवक्षितार्थभेदेऽवगम्यमाने वाक्यच्छायानुकारमात्रेण समानार्थत्वमध्यवसातुं युक्तम्। तथा ह्यभ्युदयवाक्ये पशुकामवाक्ये च– 'त्रेधा तण्डुलान्विभजेद् ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं**

### *प्रकटार्थविवरणम्*

यच्च प्राणस्योद्गीथसामानाधिकरण्यसाम्यमुक्तं तद् दूषयति— **यदपीति**। किं च तत्सामानाधिकरण्यं छान्दोग्य इव नोद्गीथावयवे-नोङ्कारेणेत्याह— **सकलभक्तीति**। ननु प्राणस्योद्गातृत्वासंभवात् तत्परित्यज्य छान्दोग्यसाम्यं वाजसनेयकेऽपि गृह्यतामित्याशङ्क्याह— **न च प्राणस्येति**।

यच्चोक्तं बह्वर्थवादसारूप्यं दृश्यत इति, तत्राह— **न च विवक्षितार्थभेद इति**। एकत्रोद्गाता प्राण उपास्यः, परत्र ओंकारे प्राणदृष्ट्या उपासनमित्यन्तरङ्गोपास्यरूपभेदस्य बहिरङ्गादर्थवादाविशेषाद् बलवत्तरत्वाद् रूपभेदाद्विद्याभेदो युज्यत इति भावः। वाक्यसादृश्यमात्रेणैकार्थत्वं नास्तीत्यत्रोदाहरणमाह— **तथा हीति**। चतुर्दश्यामेवामावास्याभ्रान्त्या दर्शकर्मार्थं प्रवृत्तस्य यस्य चन्द्रमा अभ्युदेति तद्विषयं वाक्यम् अभ्युदयवाक्यम्। तस्मिन्नभ्युदयवाक्ये, पशुकामस्य इष्टिविधायकवाक्ये च यद्यपि 'त्रेधा तण्डुलान्

### *भाष्यभावप्रकाशिका*

ननु कथमुद्गीथकर्तृत्वमुद्गीथेन सामानाधिकरण्यश्रवणादित्यत आह— **यदपीति**। नन्वचेतनस्य कथमुद्गातृत्वमित्यत आह— **न च प्राणस्येति**। पूर्वमसंभवेऽपि वाचनिकमुद्गातृत्वमित्युक्तम्; इदानीं सोऽपि नास्तीत्याह— **प्राणवीर्येणेति**। तदेव कथमिति, तत्राह— **तथा चेति**।

ननु बहुतरार्थाविशेषाद् विद्यैकत्वमुक्तमिति, तत्राह— **न च विवक्षितार्थभेद इति**। एकत्र उद्गीथोद्गातारावुपासनीयत्वेन विवक्षितावन्य[वन्यत्र]तु तदवयव ओङ्कार इत्यर्थः। इदानीं सौत्रमुदाहरणं विहायानुरूपमुदाहरणं भाष्यकारो दर्शयति— **तथा ह्यभ्युदयवाक्य इति**। एवमामनन्ति— 'वि वा एनं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा

### *न्यायनिर्णयः*

नोद्गातुरस्ति धीरिति, तत्राह— **त्वमिति**। कथं प्राणस्योद्गीथकर्तृत्वमुद्गीथेन सामानाधिकरण्यश्रवणात्, ततो वेद्यैक्याद् विद्यैक्यं, तत्राह— **यदपीति**। तत्रेति वाजसनेयकोक्तिः। इतश्च नेदं सामानाधिकरण्यं विद्यैक्यक्षममित्याह— **सकलेति**। तत्रेति सामानाधिकरण्यवाक्योक्तिः। अपिरुद्गीथेनात्ययामेतिवाक्यदृष्टान्तार्थः। वैषम्यमुभयत्र विद्यानानात्वम्। प्राणस्याचेतनत्वान्नोद्गातृत्वमित्याशङ्क्याह— **न चेति**। असंभवमभ्युपेत्य वाचनिकमुद्गातृत्वमित्युक्तम्, सम्प्रत्यसंभवोऽपि नास्तीत्याह— **प्राणेति**। औद्गात्रमुद्गाता प्राणवीर्येण करोतीत्येतदेव कथं, तत्राह— **तथा चेति**। तत्रैवेत्युद्गीथप्रकरणोक्तिः। उद्गाता प्राणप्रधानया वाचा कृतवानौद्गात्रमिति श्रुत्यर्थः। यत्तु बहुतरार्थाविशेषाद् विद्यैक्यमिति, तत्राह— **न चेति**। वाजसनेयके तावदुद्गीथोद्गातारौ ध्येयत्वेनोच्येते, छान्दोग्ये त्वोंकारस्तदवयवः प्राणदृष्ट्योपास्य उक्तः। एवं विवक्षितार्थस्यान्तरङ्गोपास्यस्वरूपस्य भेदे गम्यमाने बहिरङ्गादर्थवादाविशेषान्नैकार्थत्वेन विद्यैक्यमित्यर्थः। वाक्यसादृश्यमात्रेणार्थैक्यं नास्तीत्यत्र दृष्टान्तमाह— **तथा हीति**। चतुर्दश्यामेवामावास्याभ्रान्त्या दर्शार्थं प्रवृत्तस्य यजमानस्य चन्द्रमाः पश्चादभ्युदेति, तद्विषयं वाक्यमभ्युदयवाक्यम्। तस्मिन् वाक्ये, पशुकामस्येष्टिविधायके च वाक्ये यद्यपि 'त्रेधा

**कुर्यात्' (तै.सं. २।५।५।२) इत्यादिनिर्देशसाम्येऽप्युपक्रमभेदादभ्युदयवाक्ये देवतापनयोऽध्यवसितः,**

### *प्रकटार्थविवरणम्*

विभजेद् ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे' इत्यादिनिर्देशः तुल्यः, तथापि 'वि वा एनं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति' इति कालातिक्रमादभ्युदयवाक्ये नित्यदर्शकर्मण्येव पूर्वदेवतापनयनेन दातृत्वादिगुणविशिष्टदेवताङ्गीकारः; पशुकामवाक्ये च 'यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा

### *भाष्यभावप्रकाशिका*

अभ्युदेति त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय श्रृते चरु'मिति। तत्र संशयः— किं कालान्तरापराधे अमावास्यायामनुष्ठेयस्य वेदिक्रियाग्निप्रणयनादेः कुतश्चित् भ्रमाच्चतुर्दश्यामेवामावास्याबुद्ध्याऽनुष्ठाय प्रवृत्तस्य यदि चन्द्रमा अभ्युदीय ते तत्राभ्युदये[स]ति किं नैमित्तिकमिदं कर्मान्तरं दर्शाच्चोद्यते उत तस्मिन्नेव दर्शकर्मणि पूर्वदेवतापनयनेन देवतान्तरं विधीयत इति। तत्र त्रेधा तण्डुलान्विभजेदिति हविष एव मध्यमादिक्रमेण विभागश्रवणात् पूर्वदेवताभ्यो हवींषि विभजेदिति चाश्रवणादनपनीता हविषां पूर्वदेवता इति पूर्वदेवतावरुद्धे हविषि देवतान्तरमलब्धावकाशं श्रूयमाणं कर्मान्तरमेव गोचरयेत्। यदि हि पूर्वदेवताभ्यो हविषां विभागः श्रूयेत तदा तान्येव हवींषि देवतान्तरैः संबध्यमानानि न कर्मान्तरं गमयन्ति। प्रकृतानामेव हविषां देवतान्तरैःसंबन्धादिह तु देवताभ्यो विभागाश्रवणाद्देवतान्तरयुक्तानि कर्मान्तराणीति प्राप्तम्, तत्राभिधीयते— न कर्मान्तरमेतदिति। त्रेधा तण्डुलान् विभजेदिति तण्डुलानां विभागपरमेतद्वाक्यं न भवति किन्तु वाक्यान्तरप्राप्तं त्रेधात्वमनूद्य विभजेदित्येव विधीयते। तत्र च वाक्यान्तरात्पूर्वतण्डुलादिति चाविवक्षितम्, हविषामेव तु विभागोऽविशेषेण; ततश्चापनीतदेवतासंबन्धे हविषि देवतान्तरं विधातुं शक्यमिति (पूर्वः पक्षः।) द्रव्यमुखेन प्रकृतकर्मणः प्रत्यभिज्ञानाद् देवतान्तरसंबन्धेऽपि न कर्मान्तरकल्पनेति। अतः समाप्ते नैमित्तिकाधिकारे नित्याधिकारसिद्ध्यर्थं पुनस्तान्येव

### *न्यायनिर्णयः*

तण्डुलान्विभजे'दित्यादिनिर्देशस्तुल्यस्तथापि 'वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति' इति कालातिक्रमापराधेनोपक्रमादभ्युदयवाक्ये नित्ये दर्शकर्मण्येव पूर्वदेवताभ्यो हविषामपनयनेन दातृत्वादि-गुणविशिष्टदेवतान्तराङ्गीकारः। पशुकामवाक्ये च 'यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्' इति नित्यं दर्शकर्म परिसमाप्य पुनर्दोहार्थं वत्सापाकरणविध्युपक्रमात् पशुकामस्येष्ट्यन्तरविधानमुपगतम्। न तु वाक्यद्वये निर्देशस्य सादृश्यमात्रेणार्थैक्यम्, प्रक्रमभेदादर्थभेदनिश्चयात्। तथा प्रकृते शाखाद्वये बहुतरार्थवादिकसादृश्येऽपि पूर्वोक्तप्रक्रमभेदाद्विद्याभेद इत्यक्षरार्थः। एतदुक्तं भवति— 'वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्' इत्यत्र यस्य यजमानस्य पुरस्तात् पूर्वं हविर्निरुप्तं देवतार्थं संकल्पितं चन्द्रमाश्च पश्चादाभिमुख्येनोदेति तमेतं यजमानं निरुप्तं हविः प्रजादिना विनाशयति, शत्रुं चास्य वर्धयति। तथा चासौ चतुर्दश्याममावास्याभ्रान्तिभागी मध्यमादिभावेन त्रेधाभूता ये तण्डुलास्तानग्न्यादिभ्यो दर्शदेवताभ्यो विभजेद्, विभज्य च दातृत्वादिगुणकाग्न्यादिभ्यो देवताभ्यो निर्वपेदित्येवमर्थायां श्रुतौ किमभ्युदये नैमित्तिकं कर्मान्तरं दर्शाच्चोद्यते किंवा दर्शकर्मण्येव पूर्वदेवतात्यागेन देवतान्तरं विधीयत इति संदेहे 'त्रेधा तण्डुलान्विभजेदि'ति हविषामेव मध्यमादिक्रमेण विभागश्रवणात् पूर्वदेवताभ्यो हवींषि विभजेदिति चाश्रुतेरनपनीता हविःषु पूर्वदेवता इति तदवरुद्धेषु देवतान्तरमलब्धावकाशं श्रुतं कर्मान्तरमेव गोचरयेदिति देवतान्तरयुक्तकर्मान्तरे विधिरिति प्राप्ते— 'त्रेधा तण्डुलान्विभजेदि'त्यत्र 'ये मध्यमाः स्यु'रित्यादिवाक्यान्तरप्राप्तं त्रेधात्वमनूद्य विभजेदित्यस्यैव विधानात् कस्मादित्यपेक्षायां मध्यमादिवाक्यैर्देवतान्तरेषूक्तेषु तत्प्रतियोगिनीनां देवतानामेव बुद्धिस्थानां विभागप्रतियोगित्वसिद्धेः तण्डुलशब्दस्य च हविर्मात्रविषयत्वाद्दधिपयसोरपि पूर्वदेवतातो विभागलाभादपनीते [१]पूर्वदेवताके हविषि देवतान्तरस्य सावकाशत्वात् पूर्वद्रव्यमुखेन

---

१. 'अपनीतपूर्वदेवताके' इति पाठः स्यात्।

**पशुकामवाक्ये तु यागविधिः। तथेहाप्युपक्रमभेदाद् विद्याभेदः। परोवरीयस्त्वादिवत्। यथा परमात्मदृष्ट्यध्याससाम्येऽपि 'आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्' 'स एष परोवरीयानुद्गीथः सं एषोऽनन्तः' (छा.उ. १।९।१,२) इति परोवरीयस्त्वगुणविशिष्टमुद्गीथोपासनमक्ष्यादित्यादिगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनाद् भिन्नम्। न चेतरेतरगुणोपसंहार एकस्यामपि शाखायाम्, तद्वच्छाखान्तरस्थेष्वप्येवंजातीयकेषूपासनेष्विति।।७।।**

## संज्ञातश्चेत् तदुक्तमस्ति तु तदपि।।८।।

**अथोच्येत– संज्ञैकत्वाद् विद्यैकत्वमत्र न्याय्यम्, उद्गीथविद्येति ह्युभयत्राप्येका संज्ञेति। तदपि नोपपद्यते। उक्तं ह्येतत्– 'न वा प्रकरणभेदात्परोवरीयस्त्वादिवत्' (ब्र.सू. ३।३।७) इति। तदेव चात्र न्याय्यतरम्;**

### *प्रकटार्थविवरणम्*

वत्सानपाकुर्यात्' इति नित्यं दर्शकर्म परिसमाप्य पुनर्दोहार्थं वत्सापाकरणविधानोपक्रमात् पशुकामस्येष्ट्यन्तरविधानमङ्गीकृतमित्यर्थः। पूर्वतन्त्रसिद्धदृष्टान्तं बहिरेवोक्त्वा सौत्रं व्याख्याति— **परोवरीयस्त्वादिवदिति।**

### *भाष्यभावप्रकाशिका*

कर्माण्यनुष्ठेयानीत्यतस्तदेव कर्मेति सिद्धमिति सिद्धान्तः। **पशुकामवाक्ये तु यागविधिरिति।** एवं श्रूयते— 'यः पशुकामःस्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्याद्ये स्थविष्ठास्तानग्नये सनिमितेऽष्टाकपालन्निर्वपेद्ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये क्षोदिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरु'मिति। अत्रामावास्यामिष्ट्वेति समाप्ते यागे पशुकामेष्टिविधानमिति पूर्वस्य कर्मणोऽननुवृत्तेर्यागान्तरविधिरभ्युदयवाक्यसारूप्येऽपि, तद्वदिहापि स्यादित्यर्थः। इदानीं सौत्रदृष्टान्तं व्याचष्टे— **यथा परमात्मेति।** उद्गीथोपासनासाम्येऽपि हिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनमन्यत् परोवरीयस्त्वादिगुणविशिष्टोद्गीथोपासनात्, तद्वदिदमपीत्यर्थः। परस्मात्परः पराच्च वरीयानिति परोवरीयान्। आकाशशब्देनात्र परमात्मेनो[त्मो]च्यते, अतस्तद्दृष्टिसंपन्नत्वादुद्गीथस्यानन्त्यं परोवरीयस्त्वादिकं च निर्दिश्यत इति द्रष्टव्यम्।

### *न्यायनिर्णयः*

प्रकृतकर्मप्रत्यभिज्ञानाद् देवतान्तरसंबन्धेऽपि कर्मान्तरकल्पनानवकाशान्नैमित्तिकाधिकारे समाप्ते नित्याधिकारार्थं तान्येव कर्माण्यनुष्ठेयानीति नास्ति कर्मभेद इति स्थितम्। 'यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्। ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेद्ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये क्षोदिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्' इत्यत्र तुल्यश्रुत्या दर्शसमाप्त्यनन्तरं वत्सापाकरणेन गोदोहनं कृत्वा पूर्ववद् देवताभ्यो हविर्विभज्य देवतान्तरविशिष्टपशुकामेष्टिविधानात् पूर्वस्य कर्मणोऽननुवृत्तेरभ्युदयवाक्यसारूप्येऽपि यागान्तरविधिः, तथेहापि स्यादिति पूर्वतन्त्रसिद्धं दृष्टान्तं बहिरेवोक्त्वा सौत्रं दृष्टान्तमादाय व्याचष्टे— **परोवरीयस्त्वेति।** परस्मात् स्वरप्राणादेः परो वराच्च तस्मादेव वरीयान् वरतरोऽयमुद्गीथः; स च परमात्मदृष्टिसंपत्तेरनन्त इति द्रष्टव्यम्। आकाशे चादित्यादौ च परमात्मदृष्टेरारोपादुद्गीथोपास्तिसाम्येऽपि परोवरीयस्त्वादिगुणकोद्गीथोपास्तिरन्या, अन्या च हिरण्यश्मश्रुत्वादिगुणकोद्गीथोपास्तिस्तथेहापीत्यर्थः। दृष्टान्तेऽप्यधिकगुणानामन्योन्यत्रोपसंहाराद् विद्यैक्यमित्याशङ्क्याह— **न चेति।** पुनरुक्त्या विद्याभेदस्यातिस्पष्टत्वं हेतुं मत्वोक्तम्— **एकस्यामिति।** शाखाभेदाद् बोद्धृभेदेनापौनरुक्त्येऽपि तात्पर्यप्रमेयगुणभेदविशिष्टोपासनेषु नानात्वमित्याह— **तद्वदिति।**।७।।

पूर्वपक्षबीजमुद्भाव्य दूषयति— **संज्ञातश्चेदिति।** अनुवादं व्याकरोति— **अथेति।** अत्रेति शाखाद्वयमुक्तम्। संज्ञैकत्वं विवृणोति— **उद्गीथेति।** पूर्वसूत्रगतं नञ्शब्दं तच्छब्देन संयोज्य परिहरति— **तदपीति।** पूर्वसूत्रोक्तपरिहारस्य बाधकत्वाच्चोद्याभासोऽयमित्याह— **उक्तं हीति।** समाख्याऽविशेषादभेदो गम्यते, रूपभेदाच्च भेदस्तथा सति किमत्र युक्तं, तत्राह— **तदेवेति।** रूपभेदस्यान्तरङ्गतया बलवत्तरत्वात् संज्ञायाश्च श्रुतिबाह्यतया बहिरङ्गत्वात् पौरुषेयतया च सापेक्षत्वेन दुर्बलत्वाद् रूपभेदादुक्तं

**श्रुत्यक्षरानुगतं हि तत्। संज्ञैकत्वं तु श्रुत्यक्षरबाह्यमुद्गीथशब्दमात्रप्रयोगाल्लौकिकैर्व्यवहर्तृभिरुपचर्यते। अस्ति चैतत् संज्ञैकत्वं प्रसिद्धभेदेष्वपि परोवरीयस्त्वाद्युपासनेषु–उद्गीथविद्येति। तथा प्रसिद्धभेदानामप्यग्निहोत्र-दर्शपूर्णमासादीनां काठकैकग्रन्थपरिपठितानां काठकसंज्ञैकत्वं दृश्यते; तथेहापि भविष्यति। यत्र तु नास्ति कश्चिदेवंजातीयको भेदहेतुस्तत्र भवतु संज्ञैकत्वाद् विद्यैकत्वं यथा संवर्गविद्यादिषु।।८।।**

।। इति तृतीयमन्यथात्वाधिकरणम् ।।

४।।व्याप्त्यधिकरणम्।।सू. ९।।

## व्याप्तेश्च समञ्जसम्।।९।।

**'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा.उ. १।१।१) इत्यत्राक्षरोद्गीथशब्दयोः सामानाधिकरण्ये**

### *शारीरकन्यायसंग्रहः*

**व्याप्तेश्च समञ्जसम्।।९।।** 'अक्षरमुद्गीथम्' इति सामानाधिकरण्यस्य अध्यासालम्बनत्वे अपूर्वसंबन्धकल्पना, प्रयोजनकल्पना, उद्गीथशब्दस्य अक्षरे विप्रकृष्टलक्षणाकल्पना चेति कल्पनागौरवात्, प्रमाणान्तरसिद्धसामान्यविशेषसंबन्धावलम्बनेन विशेषणविशेष्यभावेन उद्गीथावयवोङ्कारानुवादे वाक्यभेदाभावात्, उपासनाविधानार्थतया प्रयोजनवत्त्वाच्च पूर्वोक्तकल्पनात्रयाभावेन बुद्धिलाघवाद् विशेष्य[विशेषणविशेष्य]भावसंबन्धो लघीयान् इत्युक्तम्।

### *प्रकटार्थविवरणम्*

**संज्ञातश्चेत् तदुक्तमस्ति तु तदपि।** पूर्वपक्षबीजमुद्भाव्य दूषयति— **संज्ञातश्चेदिति। श्रुत्यक्षरानुगतं हि तदिति।** प्रक्रमभेदेन यद्वेद्यरूपवैलक्षण्यमुक्तं तच्छ्रुत्यक्षरानुसारित्वेन बलवदित्यर्थः। 'अस्ति तु तदपि' इत्यस्यार्थमाह— **अस्ति चैतदिति।** ननु संज्ञैकत्वं चेद् व्यभिचारि कथं तर्ह्याद्ये सूत्रे दर्शितमित्याशङ्क्याह— **यत्र तु नास्तीति।** असति बलवदपवादकसन्निपाते तदपि मानमित्यर्थः। इति तृतीयमन्यथात्वाधिकरणम्।।

**व्याप्तेश्च समञ्जसम्।** पूर्वस्मिन्नधिकरणे सिद्धवदुद्गीथभक्त्यवयव ओंकार उपास्य इति वाक्यार्थमुपादाय प्रक्रमभेदो दर्शितः।

### *भाष्यभावप्रकाशिका*

नन्वाख्याऽविशेषादभेदोऽवगम्यते रूपभेदाच्च भेदस्तथा सति किमत्र युक्तमिति, तत्राह— **तदेव चात्रेति।** रूपभेदस्यान्तरङ्गतया बलवत्तरत्वात् संज्ञायाश्च श्रुतिबाह्यतया बहिरङ्गत्वात् पौरुषेयतया सापेक्षतया च दुर्बलत्वाद्रूपभेदाद्विद्याभेदो युक्त इत्यर्थः। कथं बाह्यमिति, तदाह— **उद्गीथशब्देति।** संज्ञैक्याद्विद्यैक्याभ्युपगमे अतिप्रसङ्गश्च स्यादित्याह— **अस्ति चैतदिति।** क्व तर्हि संज्ञा-साम्यादभेद इति, तमाह— **यत्र तु नास्तीति।** इति तृतीयमन्यथात्वाधिकरणम्।

### *न्यायनिर्णयः*

विद्यानानात्वमेव युक्तमित्यर्थः। कथं संज्ञैक्यं श्रुत्यक्षरबाह्यं, तत्राह— **उद्गीथेति।** संज्ञैक्याद्विद्यैक्ये स्यादतिप्रसक्तिरिति 'अस्ती'त्यादि व्याकरोति— **अस्ति चेति।** अपिशब्दोपात्तमुदाहरणान्तरमाह— **तथेति।** संज्ञैक्येऽपि न चेत् तत्रैक्यं तर्हि संज्ञैक्यमुद्गीथज्ञानेऽप्य-प्रयोजकमित्याह— **तथेहेति।** कथं तर्हि संज्ञैक्यस्य व्यभिचारित्वे प्रथमसूत्रे तस्यैक्ये हेतुत्वमुक्तमित्याशङ्क्य तुशब्दसूचितमर्थमाह— **यत्रेति। एवंजातीयकः** प्रक्रमभेदो वा तत्तुल्यो वेत्यर्थः। असति बलवति बाधके संज्ञैक्यमपि साधकमित्यत्र दृष्टान्तमाह— **यथेति।** आदिपदेन पञ्चाग्निविद्या वैश्वानरविद्येत्यादि गृह्यते।।८।। इति तृतीयमन्यथात्वाधिकरणम्।।

'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यत्रोद्गीथविशेषितत्वमोङ्कारस्य सिद्धवत्कृत्य प्रक्रमभेदाद्विद्याभेदमुक्त्वा तमेव विशेषणविशेष्यभावं निरूपयति— **व्याप्तेश्चेति।** ओमुद्गीथशब्दयोः सामानाधिकरण्यमधिकरणस्य विषयं दर्शयति— **ओमित्येत्येतदिति।** विशेषानवधारणकृतं

**वस्तुतत्त्वप्रतिपादनपरम्; उपासनाविधिपरत्वात्। नाप्येकत्वपक्षः संगच्छते। निष्प्रयोजनं हि तदा शब्दद्वयोच्चारणं स्यात्। एकेनैव विवक्षितार्थसमर्पणात्। न च हौत्रविषय आध्वर्यवविषये वाऽक्षर ओंकारशब्दवाच्य उद्गीथशब्दप्रसिद्धिरस्ति। नापि सकलायां साम्नो द्वितीयायां भक्तावुद्गीथशब्दवाच्यायामोंकारशब्द-प्रसिद्धिर्येनानतिरिक्तार्थता स्यात्। परिशेषाद् विशेषणपक्षः परिगृह्यते। व्याप्तेः सर्ववेदसाधारण्यात्। सर्वव्याप्यक्षरमिह मा प्रसञ्जीत्यत उद्गीथशब्देनाक्षरं विशेष्यते। कथं नामोद्गीथावयवभूत ओंकारो गृह्येतेति। नन्वस्मिन्नपि पक्षे समाना लक्षणा। उद्गीथशब्दस्यावयवलक्षणार्थत्वात्। सत्यमेवमेतत्। लक्षणायामपि तु संनिकर्षविप्रकर्षौ भवत एव। अध्यासपक्षे ह्यर्थान्तरबुद्धिरर्थान्तरे निक्षिप्यत इति विप्रकृष्टा लक्षणा; विशेषणपक्षे**

### *प्रकटार्थविवरणम्*

**वाक्यमिति**। एकत्वपक्षे दोषमाह— **नापीति**। ओङ्कारोद्गीथशब्दयोः अपर्यायशब्दत्वाच्च नैकार्थत्वमित्याह— **न च हौत्रविषय इति**। **परिशेषेति**। परिशेषसिद्धे सिद्धान्ते सूत्रं योजयति— **व्याप्तेरिति**। पूर्वं लक्षणाप्रसङ्गेनाध्यासपक्षो दूषितः। इदानीं तद्दूषणं तवापि समानमित्याह— **नन्विति**। अर्धाङ्गीकारेण विप्रकृष्टलक्षणैव तव दूषणमित्याह— **सत्यमेवमिति**। इति चतुर्थं व्याप्त्यधिकरणम्।।

### *भाष्यभावप्रकाशिका*

ननु पिकः कोकिलः इत्यादाविव सप्रयोजनता किं न स्यादित्याशङ्क्य सन्दिग्धार्थताद्यभावान्नैवमित्याह— **एकेनेति**। उद्गीथोङ्कारशब्दयोरुद्गीथव्यतिरेकेणार्थाभावात्तयोरन्यतरेणोद्गीथार्थतया तत्रोद्गीथशब्दस्य वृत्तिरप्यनुपपन्नेत्याह— **न च हौत्रेति**। एवमुद्गीथशब्दस्यानतिरिक्तार्थतां निराकृत्य सम्प्रत्योङ्कारशब्दस्यातिरिक्तार्थतामाह— **नापि सकलायामिति**। सूत्रं व्याचष्टे— **व्याप्तेरिति**। ओङ्कारस्य सर्ववेदव्यापित्वात् किंगतोऽयमोङ्कार आप्त्यादिगुणविशिष्टतयोपास्य इत्यपेक्षायामोङ्कारावयवघटितसामविभक्तिभेदाभि-धायिनोद्गीथशब्देन ओङ्कारो विशिष्यते लक्षणयेत्यर्थः। न चोङ्कारेणावयवेनावयविन उद्गीथस्यैव लक्षणा स्यादिति शङ्कनीयम्। ओङ्कारस्यैवोपरिष्टाद्विस्तरेण व्याख्यास्यमानत्वात्। **लक्षणायामपीति**। गौण्या वृत्तेस्तल्लक्षणा वृत्तिर्बलीयसी, तदर्थस्य वाक्यार्थे अन्तर्भावात्, गङ्गायां घोष इत्यादिषु लक्ष्यमाणतीरस्य तथात्वदर्शनात्, गौण्यां तु गौर्वाहीक इत्यादौ गोसंबन्धितिष्ठन्मूत्रपुरीषत्वादिलक्षणस्य

### *न्यायनिर्णयः*

स्वार्थान्निवर्तेत। न चैवं दृष्टमतो नापवाद इत्यर्थः। किंचापवादे नास्य वाक्यस्य तात्पर्यमुपास्तिपरत्वादित्याह— **न चेति**। एकत्व-पक्षं निराह— **नापीति**। पिकशब्दस्य कोकिलशब्देन व्युत्पादनवदन्यतरशब्दस्यान्यतरशब्देन व्युत्पादनं फलवदेवेत्याशङ्क्य संदिग्धार्थता-देरसत्त्वान्नैवमित्याह— **एकेनेति**। ओंकारोद्गीथशब्दयोरुद्गीथार्थत्वादन्यतरेण तत्सिद्धेर्न शब्दान्तरमर्थवदित्यर्थः। किंचैकत्वपक्षे किमुद्गीथ-स्याक्षरेऽन्तर्भावोऽक्षरस्य वेतरस्मिन्निति विकल्प्याद्यं निराह— **न चेति**। द्वितीयं प्रत्याह— **नापीति**। उद्गीथशब्दस्याक्षरे तच्छब्दस्य चोद्गीथे प्रसिद्ध्यभावे तयोरेकार्थत्वराहित्यं फलतीत्याह— **येनेति**। पक्षत्रयं सावद्यत्वेनापोद्य निरवद्यं पक्षं गृह्णाति— **परिशेषादिति**। तत्र सौत्रं पदमादाय विभजते— **व्याप्तेरिति**। तथापि कथं विशेषणपक्षसिद्धिः, तत्राह— **सर्वेति**। इहेत्युपासनोक्तिः। तत्प्रसङ्गे वाक्य-शेषविरोधः स्यादिति मत्वा ब्रूते— **अत इति**। 'संभवे व्यभिचारे च विशेषणमर्थवदि'त्युपगमादोङ्कारस्य विशेष्यस्य सर्ववेदव्यापित्वादुद्गीथेन विशेषणेन व्यभिचारवारणेऽपि सर्वस्या द्वितीयस्या भक्तेरुद्गीथशब्दितायास्तदवयवे संभवाभावादयुक्तमोङ्कारविशेषणत्वमुद्गीथ-स्येत्याशङ्क्यावयवलक्षणार्थत्वमुद्गीथशब्दस्योपेत्याह— **कथमिति**। इतिशब्दो वृत्तक्रियापदेन संबध्यते। न चोद्गीथस्यैवावयविनो लक्षणा स्यादोङ्कारेणावयवेनेति युक्तमोङ्कारस्योपरिष्टाद्विस्तरेण व्याख्यास्यमानतया प्रधानत्वात्तेन भक्तिलक्षणायामुद्गीथपदेन भक्तिविशेषस्यैवार्पणे व्यभिचाराभावाद् विशेषणवैयर्थ्यमिति भावः। लक्षणाप्रसङ्गेनाध्यासस्य निरस्तत्वादयमपि पक्षो दोषसाम्यान्नोपादेयः स्यादिति शङ्कते— **नन्विति**। उद्गीथशब्दस्यावयवे लक्षणामङ्गीकरोति— **सत्यमिति**। अध्यासपक्षवदयमपि तर्हि पक्षो नोपादेयः स्यादित्याशङ्क्याह— **लक्षणायामिति**। पक्षद्वये तुल्यायामपि लक्षणायामध्यासपक्षमुपेक्ष्य विशेषणपक्षमाद्रियामहे। तत्र लक्षणार्थस्य वाक्यार्थान्वयित्वेन लक्षणायाः संनिकृष्टविषयतया बलीयस्त्वात्। अध्यासे तु गौणी धीरसावित्युक्तत्वात् लक्ष्यमाणगुणवत्येकस्मिन्नितरशब्दस्यावसानाल्लक्षणाया विप्रकृष्टविषयत्वेन दौर्बल्यादित्यर्थः। अध्यासपक्षे लक्षणाया विप्रकृष्टविषयत्वं स्पष्टयति— **अध्यासेति**। सिद्धान्ते लक्षणायाः

**त्ववयवविवचनेन शब्देनावयवः समर्प्यत इति संनिकृष्टा। समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि प्रवर्तमाना दृष्टाः पटग्रामादिषु। अतश्च व्याप्तेर्हेतोरोमित्येतदक्षरमित्येतस्योद्गीथमित्येतद् विशेषणमिति समञ्जसमेतन्निर-वद्यमित्यर्थः।।९।।**

**।। इति चतुर्थं व्याप्त्यधिकरणम् ।।**

**५।।सर्वाभेदाधिकरणम्।।सू. १०।।**

## सर्वाभेदादन्यत्रेमे।।१०।।

**वाजिनां छन्दोगानां च प्राणसंवादे श्रैष्ठ्यगुणान्वितस्य प्राणस्योपास्यत्वमुक्तम्। वागादयोऽपि हि तत्र**

### *शारीरकन्यायसंग्रहः*

**सर्वाभेदादन्यत्रेमे।।१०।।** छान्दोग्यादौ श्रैष्ठ्यादिगुणविशिष्टप्राणधर्मतया प्राणविद्याविषयत्वेन 'य एवं वेद' इत्येवंशब्दसमर्पितानां वसिष्ठत्वादिगुणानां कौषीतकिशाखायामपि श्रैष्ठ्यादिगुणविशिष्टप्राणप्रत्यभिज्ञानेन अविनाभावात् अनुमानेन प्राप्तानां श्रुत्यैव सन्निहितविशिष्टप्राणपरामर्शकेन 'अथो य एवं विद्वान्' इत्येवंशब्दानुब्देनानुमानबाधकेन बाधायां प्राप्तायां श्रैष्ठ्यादिशब्दसङ्कीर्तितप्राणादिना अविनाभावोपस्थापितत्वाद् गुणानां श्रुत्यर्थाभ्यां प्रकृतस्य परामर्शकत्वमेवंशब्दस्य विद्यत इति धर्म्यविनाभावप्राप्तानामपि वसिष्ठत्वादिगुणानाम् एवंशब्देनानुमानानुगृहीतेन परामर्शाद् गुणोपसंहारः सिद्ध इति दर्शितम्।

### *प्रकटार्थविवरणम्*

**सर्वाभेदादन्यत्रेमे।** विचारविषयं दर्शयितुमपि[मवि]प्रतिपन्नमर्थमाह— **वाजिनामिति।** वाग् वसिष्ठत्वगुणः[गुणा],वाग्मी हि सुखं लोके वसति। तथा चक्षुः प्रतिष्ठागुणम्, चक्षुष्मतः पादप्रतिष्ठादर्शनात्; श्रोत्रं सम्पद्गुणम्, श्रोत्रवत एव श्रवणार्थावधारणधर्मसंपत्तिसंभवात्; मन आयतनगुणम्, भोग्यानां तत्र विधानात् [निधानात्] इत्येवं वागादय उक्ता इत्यर्थः। अनन्तरं चान्वयव्यतिरेकाभ्यां वागाद्यवस्थानस्य प्राणा(द्य)धीनत्वात् स्वगुणा वागादिभिः प्राणे समर्पिता इत्यर्थः। निःश्रेयसम् श्रैष्ठ्यं

### *भाष्यभावप्रकाशिका*

न तत्परत्वं गोशब्दस्य; किन्तु तद्द्वारा व्यवहिततद्गुणयुक्तत्वाहिक [वाहीक] परत्वमिति गौरवमतो दुर्बलत्वमित्यर्थः। यद्यप्यध्यासपक्षे गौणीवृत्तिस्तथापि लक्षणेत्युच्यते लक्ष्यमाणगुणयोगात्। न चैतदलौकिकमित्याह— **समुदायेषु हीति।** ग्रामो दग्धः पटो दग्ध इति तदेकदेशदाहेऽपि समुदायशब्दो लक्षणयाऽवयवे दृष्ट इत्यर्थः। न च वाक्यभेदः, उद्गीथावयवोङ्कारानुवादेन उपासनस्यैव विधानादित्यपि द्रष्टव्यम्। इति चतुर्थं व्याप्त्यधिकरणम्।

### *न्यायनिर्णयः*

संनिकृष्टविषयत्वेन प्रबलत्वं प्रकटयति— **विशेषणेति।** अवयविवचनेन शब्देनावयवलक्षणाया लौकिकत्वाभावं प्रत्याह— **समुदायेष्विति।** 'पटो दग्धो' 'ग्रामो दग्ध' इति तदेकदेशदाहेऽपि समुदायशब्दो लक्षणयाऽवयवे प्रयुज्यते, तथोद्गीथशब्दोऽपि द्वितीयभक्त्यवयवेऽक्षरे लक्षणया वर्तिष्यते। न चाक्षरस्योद्गीथावयवत्वं तदुपासनं च विधेयमिति वाक्यभेदः। विशिष्टाक्षरानुवादेनोपास्तेरेव तत्तद्गुणवत्यास्तत्तत्फलविशिष्टायाः समस्तेन वाक्येन विधानादिति भावः। उक्तहेत्वनुवादेनावशिष्टं सूत्रपदं व्याकुर्वन् विशेषणपक्षस्य निरवद्यत्वमुपसंहरति— **अतश्चेति।**।।९।। इति चतुर्थं व्याप्त्यधिकरणम्।।

ओंकारस्योद्गीथगुणकस्यैवोपास्यतेत्युक्ते प्राणस्यापि तत्तदुक्तगुणमात्रस्यैव तत्र तत्रोपास्यतेत्याशङ्क्याह— **सर्वेति।** विषयं वक्तुमविगीतमर्थमाह— **वाजिनामिति।** शाखाद्वयेऽपि संमतमर्थान्तरमाह— **वागिति।** सा हि वसिष्ठत्वगुणा वाक्, वाग्मिनो हि लोके सुखिनो वसन्ति। चक्षुश्च प्रतिष्ठागुणं, चक्षुष्मतः पादप्रतिष्ठादर्शनात्। संपद्गुणं श्रोत्रम्, तद्वत एव श्रवणार्थावधारणकर्मसंपत्तिदर्शनात्।

**वसिष्ठत्वादिगुणान्विता उक्ताः। ते च गुणाः प्राणे पुनः प्रत्यर्पिताः– 'यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसि' (बृ.उ. ६।१।१४) इत्यादिना। अन्येषामपि तु शाखिनां कौषीतकिप्रभृतीनां प्राणसंवादेषु 'अथातो निःश्रेयसादानम्, एता ह वै देवता अहंश्रेयसे विवदमानाः' (कौ.उ. २।१४) इत्येवंजातीयकेषु प्राणस्य श्रैष्ठ्यमुक्तम्, न त्विमे वसिष्ठत्वादयोऽपि गुणा उक्ताः। तत्र संशयः– किमिमे वसिष्ठत्वादयो गुणाः क्वचिदुक्ता अन्यत्राप्यस्येरन्नुत नास्येरन्निति। तत्र प्राप्तं तावन्नास्येरन्निति। कुतः? एवंशब्दसंयोगात्। 'अथो[1] य एवं विद्वान् प्राणे निःश्रेयसं विदित्वा' (कौ.उ.२।१४) इति तत्र तत्रैवंशब्देन वेद्यं वस्तु निवेद्यते। एवंशब्दश्च संनिहितावलम्बनो न शाखान्तरपठितमेवंजातीयकं गुणजातं शक्नोति निवेदयितुम्। तस्मात् स्वप्रकरणस्थैरेव गुणैर्निराकाङ्क्षत्वमिति।**

**एवं प्राप्ते प्रत्याह– अस्येरन्निमे गुणाः क्वचिदुक्ता वसिष्ठत्वादयोऽन्यत्रापि। कुतः? सर्वाभेदात्।**

### *प्रकटार्थविवरणम्*

तस्यादानम् निर्धारणं प्रस्तुतमित्यर्थः। एवंशब्दात् श्रेष्ठत्वादिधर्मिप्रत्यभिज्ञानाच्च संशयमाह— **तत्रेति**। पूर्वपक्षं गृह्णाति— **तत्र प्राप्तं तावदिति**। पूर्वत्रोद्गीथविशेषणेन व्यापकोङ्कारव्यवच्छेदो यथोक्तः, तथेहापि विद्यैकत्वविधिप्रसक्तव्याप्तेः प्राणगुणगणस्य 'एवं विद्वान्' इति विशेषणात् शाखान्तरे व्यवच्छेद इत्यर्थः।

### *भाष्यभावप्रकाशिका*

**सर्वाभेदादन्यत्रेमे**। ननु विद्यैक्यादनुमानादुपसंहारोऽवगम्यते, तत्कथं संशय इति चोदयति— **कुत इति**। अनुमानादुपसंहारो न युक्तः, प्रकृतपरामर्शकेनैवंशब्देन विरोधादित्याह— **एवंशब्दसंयोगादिति**। ननु विद्याया एकत्वात् तेऽपि गुणाः सन्निहिता एवेति परामृश्यन्तामेवंशब्देनेति, तत्राह— **एवंशब्दश्चेति**। शब्दस्य शब्दोपस्थापितमेव सन्निहितमनुमानेनोपस्थापितादित्यर्थः।

### *न्यायनिर्णयः*

आयतनगुणं मनः, भोग्यानां तत्र वृत्तिद्वारा निधानादित्युभयत्रापि श्रुतमित्यर्थः। तत्र तर्हि बहूनामुपास्यतेष्टेत्याशङ्क्याह— **ते चेति**। अन्वयव्यतिरेकाभ्यां प्राणाधीनत्वसिद्धेर्वागादिस्थितेः प्राणे स्वगुणा वागादिभिरर्पिता इत्यर्थः। शाखान्तरेऽपि संमतमर्थमाह— **अन्येषामिति**। निःश्रेयसं श्रैष्ठ्यं तस्यादानं निर्धारणं तदन्तरेणोपास्तेरयोगात् तत् प्रस्तुतमधिकृतमित्याह— **अथेति**। एता ह वै देवता वागाद्यभिमानिन्योऽहंश्रेयसे स्वकीयश्रेष्ठत्वायेति यावत्। अविगीतमर्थमुक्त्वा विगीतमर्थमाह— **न त्विति**। एवंशब्दाज्ज्येष्ठ-त्वादिगुणकप्राणप्रत्यभिज्ञानाच्च वसिष्ठत्वादिगुणेषु संशयमाह— **तत्रेति**। क्वचिदिति वाजसनेयकच्छान्दोग्योक्तिः। अन्यत्रेति कौषीतकिप्रभृतिशाखोच्यते। अत्र च वसिष्ठत्वादिगुणोपसंहारद्वारा वाक्यार्थधीहेतोरेव निरूपणात् पादादिसंगतिः। पूर्वपक्षे यथाश्रुति गुणव्यवस्था। सिद्धान्ते गुण्यनुरोधात्तदव्यवस्थेति मत्वा पूर्वपक्षयति— **तत्रेति**। विद्यैक्यादनुमानादुपसंहारे कथमनुपसंहारः स्यादिति शङ्कते— **कुत इति**। ॐकारस्य सर्वत्र प्राप्तावुद्गीथविशेषणादन्यव्यावृत्तिवद् 'एवं विद्वान्' इति संनिहितालम्बनादे-वंशब्दादसंनिहितस्य विद्यैक्यद्वाराऽनुमितस्य वसिष्ठत्वादेर्व्यावृत्तिर्युक्तेत्याह— **एवंशब्देति**। यथा प्राणो वागादिभ्यः श्रेष्ठः सिद्धस्तथा प्राणं श्रैष्ठ्यगुणं विद्वान् यः कश्चिदधिकृतः सन्नुपास्ते सोऽपि प्राणे श्रैष्ठ्यं विदित्वोपास्यप्राणात्मकत्वप्राप्त्या श्रैष्ठ्याद्यन्वितो भवतीति श्रुत्यर्थः। एवंशब्दसंयोगेऽपि विद्याया वसिष्ठत्वादिगुणवत्त्वं किं न स्यात्, तत्राह— **तत्र तत्रेति**। वीप्सया तत्तद्विद्याप्रकरणमुच्यते। एकत्वाद्विद्याया वेद्यार्पकेणैवंशब्देन शाखान्तरोक्तानामपि वसिष्ठत्वादीनां परामर्शः स्यादित्याशङ्क्याह— **एवमिति**। शब्दस्य शाब्दमेवानुमानिकादपि संनिहितमिति कुतः शाखान्तरीयगुणधीरित्यर्थः। विद्याया निराकाङ्क्षत्वार्थं शाखान्तरीयमपि गुणजातमिह परामृष्टमित्याशङ्क्याह— **तस्मादिति**।

पूर्वपक्षमनुभाष्य सिद्धान्तसूत्रमवतार्य प्रतिज्ञां व्याकरोति— **एवमिति**। क्वचिदुक्तानां गुणानां गुणानभिधायिशाखा-सूपसंहारे सर्वत्र तत्प्रसङ्गात् क्वचिदेवोपसंहारे निमित्तं पृच्छति— **कुत इति**। तत्र सौत्रं हेतुमुक्त्वा व्याचष्टे—

१. 'तथो' इति पा.।

**सर्वत्रैव हि तदेवैकं प्राणविज्ञानमभिन्नं प्रत्यभिज्ञायते। प्राणसंवादादिसारूप्यात्। अभेदे च विज्ञानस्य कथमिमे गुणाः क्वचिदुक्ता अन्यत्र नास्येरन्? नन्वेवंशब्दस्तत्र तत्र भेदेनैवंजातीयकं गुणजातं वेद्यत्वाय समर्पयतीत्युक्तम्। अत्रोच्यते– यद्यपि कौषीतकिब्राह्मणगतेनैवंशब्देन वाजसनेयिब्राह्मणगतं गुणजातमसंशब्दितम-संनिहितत्वात्, तथापि तस्मिन्नेव विज्ञाने वाजसनेयिब्राह्मणगतेनैवंशब्देन तत् संशब्दितमिति न परशाखागतमप्य-भिन्नविज्ञानावरुद्धं गुणजातं स्वशाखागताद्विशिष्यते। न चैवं सति श्रुतहानिरश्रुतकल्पना वा भवति। एकस्यामपि हि शाखायां श्रुता गुणाः श्रुता एव सर्वत्र भवन्ति, गुणवतो भेदाभावात्। न हि देवदत्तः शौर्यादिगुणत्वेन स्वदेशे प्रसिद्धो देशान्तरं गतस्तद्देश्यैरविभावितशौर्यादिगुणोऽप्यतद्गुणो भवति। यथा च तत्र परिचयविशेषाद् देशान्तरेऽपि देवदत्तगुणा विभाव्यन्ते; एवमभियोगविशेषाच्छाखान्तरेऽप्युपास्या गुणाः**

***प्रकटार्थविवरणम्***

सिद्धान्ते सूत्रं योजयति— **अस्येरन्निति**। पूर्वपक्षबीजमनूद्य दूषयति— **नन्वेवमित्यादिना**। वाजसनेयब्राह्मणगतेन तावदेवंशब्देन वसिष्ठत्वादिगुणजातस्य प्राणविज्ञानसंबन्धः सिद्धः। तदेव च प्राणविज्ञानं कौषीतकिब्राह्मणेऽपि प्रत्यभिज्ञायते। अतः तद्गतेनाप्येवंशब्देनार्थाद् वसिष्ठत्वादिगुणजातं परामृष्टमित्यविशेष इत्यर्थः। किंचार्थाच्छाखान्तरीयगुणपरामर्शकल्पने श्रुताल्पगुणहानिरश्रुतबहुगुणकल्पनेत्ययमपि दोषो नास्तीत्याह— **न चैवं सतीति**। कौषीतकिगतश्रेष्ठप्राणो वसिष्ठत्वादिगुणवान्, श्रेष्ठत्वात्, वाजसनेयिगतश्रेष्ठप्राणवत्— इत्यनुमानानुगृहीतेनैवंशब्देन परामर्शात् वसिष्ठत्वादयः श्रुता एवेत्यर्थः। उक्तमर्थं दृष्टान्तेन द्रढयति— **न हीति**। अधिकरण-

***भाष्यभावप्रकाशिका***

सत्यम्, विद्यैकत्वाच्छ्रुत्यविरुद्धानुमानत उपसंहारो युज्यत इत्यभिप्रेत्य परिहरति— **यद्यपीति**। न च शब्दस्य शब्दोपस्थापितमेव सन्निहितम्, किन्तु शब्दाभिहितार्थनान्तरीयकतया [यत्] प्राप्तं तदपि बुद्धौ सन्निहितं शब्दस्य सन्निहितमेव। यथा पर्णमयी जुहूर्भवतीत्यत्राव्यभिचरितक्रतुसंबन्धाज्जुहूद्रव्येणोपस्थापितः क्रतुः पर्णमयीत्वस्य। तस्मात् सन्निधानाविशेषादेवंशब्देन तस्यापि परामर्शो युक्त इत्यभिप्रेत्याह— **न परशाखागतमपीति**। अनुमानतः शाखान्तरीयगुणानामुपसंहारे सति परिगणिततत्वं श्रूयमाणं हीयते, गुणान्तराणामप्यत्राश्रुतानामुपसंहारादित्याशङ्क्य श्रुत्यविरुद्धार्थसमर्पकत्वादनुमानस्य नायमपि दोष इत्याह— **न चैवं सतीति**। एतद् दृष्टान्तेन साधयति— **न हि देवदत्त इति**। शब्दोपस्थापितार्थनान्तरीयतया यत्प्राप्तं तदपि सन्निहितमेवेति यदुक्तम्, तदपि दृष्टान्तेन साधयति— **यथा च तत्रेति**। देवदत्तैक्यात् तद्गुणा अपि तस्मिन् बुद्धिस्थे बुद्धिस्था भवन्ति यथेत्यर्थः। इति पञ्चमं सर्वाभेदाधिकरणम्।

***न्यायनिर्णयः***

**सर्वेति**। सर्वासु शाखासु प्राणज्ञानस्यैक्ये मानमाह— **अभिन्नमिति**। प्रत्यभिज्ञापकं दर्शयति— **प्राणेति**। आदिशब्दः श्रेष्ठत्वादिग्राही। ज्ञानैक्येऽपि यथाश्रुति गुणव्यवस्थामाशङ्क्योक्तम्— **अभेदे चेति**। गुण्याकृष्टगुणानां व्यवस्थोक्तिरनुमानविरुद्धेत्यर्थः। पूर्वपक्षबीजमनुभाषते— **नन्विति**। अनुमानस्य शब्दविरोधं परिहरन्नाह— **अत्रेति**। असंनिहितत्वादेवंशब्देन वसिष्ठत्वादिग्रहायोगान्नानुमान[१]श्रुत्यविरुद्धेत्याशङ्क्याह— **यद्यपीति**। वाजसनेयिब्राह्मणस्थेन तावदेवंशब्देन वसिष्ठत्वादिगुणजातस्य प्राणधीसंबन्धः सिद्धः, [२]सैव कौषीतकिब्राह्मणेऽपि प्रत्यभिज्ञाता, तथा च तद्गतेनापि वसिष्ठत्वाद्येवंशब्देन शक्यं परामष्टुमित्यर्थः। शब्दस्य शब्दोक्तमेव संनिहितम्, न विजातीयानुमासिद्धमित्याशङ्क्याह— **इति नेति**। न हि शब्दस्य शाब्दमेव संनिहितं, किंतु शब्दोक्तार्थनान्तरीयकतया प्राप्तमपि बुद्धिस्थं शब्दस्य संनिहितमेव, पर्णमयीत्वस्य जुहूपस्थापितक्रतुवत्, अतः संनिध्यविशेषादेवंशब्देन तस्यापि संग्रहसिद्धिरिति भावः। अनुमानतः शाखान्तरीयगुणोपसंहारे परिगणितत्वं श्रुतं हीयेताश्रुतानामपि गुणान्तराणामत्रोपसंहारादित्याशङ्क्यानुमायाः श्रुत्यविरुद्धार्थत्वान्नैवमित्याह— **न चेति**। तदेव व्यनक्ति— **एकस्यामिति**। उक्तमर्थं दृष्टान्तेन समर्थयति— **न हीति**। शब्दोक्तनान्तरीयकमपि संनिहितमेवेत्युक्तं दृष्टान्तेन स्पष्टयति— **यथा चेति**। देवदत्तैक्यात्तस्मिन् बुद्धिस्थे तद्गुणानां बुद्धिस्थतावज्ज्ञानैक्यात्

---

१. 'नानुमा श्रुत्यविरुद्धा' इति पाठः स्यात्। २. सैव = प्राणधीरेव।

**शाखान्तरेऽप्यस्येरन्। तस्मादेकप्रधानसंबद्धा धर्मा एकत्राप्युच्यमानाः सर्वत्रैवोपसंहर्तव्या इति।।१०।।**

।। इति पञ्चमं सर्वाभेदाधिकरणम् ।।

६।।आनन्दाद्यधिकरणम्।।सू. ११-१३।।

## आनन्दादयः प्रधानस्य।।११।।

**ब्रह्मस्वरूपप्रतिपादनपरासु श्रुतिष्वानन्दरूपत्वं विज्ञानघनत्वं सर्वगतत्वं सर्वात्मत्वमित्येवंजातीयका ब्रह्मणो धर्माः क्वचित् केचिच्छ्रूयन्ते। तेषु संशयः– किमानन्दादयो ब्रह्मधर्मा यत्र यावन्तः श्रूयन्ते तावन्त एव तत्र प्रतिपत्तव्याः, किंवा सर्वे सर्वत्रेति। तत्र यथाश्रुतिविभागं धर्मप्रतिपत्तौ प्राप्तायामिदमुच्यते– आनन्दादयः**

***शारीरकन्यायसंग्रहः***

**आनन्दादयः प्रधानस्य।।११।। प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे।।१२।। इतरे त्वर्थसामान्यात्।।१३।।**यद्यपि शब्दगुणोपसंहारानुपसंहाराभ्यां वेद्यस्य निर्विकारस्य ब्रह्मणः सगुणविद्यायामिव उपचयापचयौ न स्तः, तथापि सत्यज्ञानानन्दात्मानन्तपदानां निरुपाधिभावरूपब्रह्मसमर्पकाणां सत्यत्वज्ञानत्वानन्दत्वात्मत्वपरिपूर्णत्वलक्षणपरापरसामान्याभिधानमुखेन स्वार्थं परित्यज्य सर्वसामान्यालम्बनमेकामानन्दव्यक्तिमुपलक्ष्यासाधारणब्रह्मस्वरूपसमर्पकत्वं यदा सिध्यति तदैव ब्रह्म असाधारणं लभ्यते, नान्यथा इति पञ्च पदार्थाः सर्वत्रैवोपसंहर्तव्याः, निर्विकारब्रह्मप्रमेयाविशेषात् प्रमाणाविशेषेणापि भवितव्यमिति न्यायेन। न च प्रपञ्चोपचयापचयोपाधावुपचितापचितरूपाणां सर्वज्ञसर्वशक्तिसर्वेश्वरत्वप्रियशिरस्त्वादिधर्माणां एकरूपे ब्रह्मणि प्राप्तिः, किं तु सगुणे; ते चात्रापि सिद्धस्य [शुद्धस्य] ब्रह्मणो गुणा इत्युच्यन्ते, नानन्दादयः, तेषां ब्रह्मस्वरूपलक्षणत्वात् इति दर्शितम्।

***प्रकटार्थविवरणम्***

सिद्धान्तमुपसंहरति— **तस्मादिति**। इति पञ्चमं सर्वाभेदाधिकरणम्।।

**आनन्दादयः प्रधानस्य**। विषयं दर्शयति— **ब्रह्मस्वरूपेति**। ब्रह्मैकत्वनिर्विशेषत्वाभ्यां संशयमाह— **तेषु संशय इति**। सविशेषे प्राणादौ गुणोपसंहारो युज्यते; निर्विशेषं तु ब्रह्म; तदेकस्मादपि पदात्प्रतिपन्नं चेत्तर्हि प्रतिपन्नमेवेति तत्र पदान्तरोपसंहारो व्यर्थ इत्यभिप्रेत्याह— **तत्र यथाश्रुतीति**। सिद्धान्तमाह— **आनन्दादय इति**। यद्यपि निर्विशेषं सर्वशाखास्वाख्यायते ब्रह्म,

***भाष्यभावप्रकाशिका***

**आनन्दादयः प्रधानस्य**। ननु वेद्यैकत्वादुपसंहारेण भवितव्यमित्याशङ्क्य उपचयापचयरूपस्य वस्तुरूपताऽसंभवादनुपसंहार इत्याह— **तत्र यथाश्रुतिविभागमिति**।

***न्यायनिर्णयः***

तस्मिन् बुद्धिसंनिहिते तद्गुणा अपि तथा भवन्तीत्याह— **एवमिति**। अनुमानस्याविरोधे फलितमाह— **तस्मादिति**।।१०।। इति पञ्चमं सर्वाभेदाधिकरणम्।।

प्राणस्य सविशेषत्वाद् युक्तः शाखान्तरीयवसिष्ठत्वाद्युपसंहारः, ब्रह्मणो निर्विशेषत्वात् तद्धर्मैः स्वशाखागतैरेव प्रमितिसिद्धेर्नानन्दाद्युपसंहारः स्यादित्याशङ्क्याह— **आनन्दादय इति**। विषयं दर्शयति— **ब्रह्मेति**। ब्रह्मैक्यनिर्विशेषत्वाभ्यां संशयमाह— **तेष्विति**। वेद्यब्रह्मैक्यादेवंशब्दवदपवादकादृष्टेश्चौत्सर्गिको गुणोपसंहारः स्यादित्याशङ्क्य ब्रह्मैक्यादानन्दादीनां सर्वत्रोपसंहारे संयद्वामत्वादयोऽपि किमिति नोपसंह्रियेरन्नित्यभिप्रेत्य पूर्वपक्षयति— **तत्रेति**। संयद्वामत्वादीनामुपासनार्थमुक्तानां यथाविधि व्यवस्था। सत्यादयस्तु वस्तुतत्त्वप्रमित्यर्था यत्र यत्र वस्तुतत्त्वधीस्तत्र तत्रोपसंह्रियेरन्नित्युक्त्या वाक्यार्थधीहेतोरेवात्र निरूपणात् पादादिसंगतिः। पूर्वपक्षे सत्याद्यनुसंहारे तत्त्वाप्रमितिः, सिद्धान्ते तदुपसंहारे तत्प्रमितिसिद्धिरिति मत्वा सिद्धान्तमाह— **इदमिति**। शाखाभेदेनोदितानुदित-

**प्रधानस्य ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः। कस्मात्? सर्वाभेदादेव। सर्वत्र हि तदेवैकं प्रधानं विशेष्यं ब्रह्म न भिद्यते। तस्मात् सार्वत्रिकत्वं ब्रह्मधर्माणां तेनैव पूर्वाधिकरणोदितेन देवदत्तशौर्यादिनिदर्शनेन।।११।।**

**नन्वेवं सति प्रियशिरस्त्वादयोऽपि धर्माः सर्वे सर्वत्र संकीर्येरन्। तथाहि– तैत्तिरीयक आनन्दमयमात्मानं प्रक्रम्याम्नायते– 'तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा' (तै.उ. २।५) इति। अत उत्तरं पठति–**

**प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे।।१२।।**

**प्रियशिरस्त्वादीनां धर्माणां तैत्तिरीयक आम्नातानां नास्त्यन्यत्र प्राप्तिः। यत्कारणम्, प्रियं मोदः प्रमोद आनन्द इत्येते परस्परापेक्षया भोक्त्रन्तरापेक्षया चोपचितापचितरूपा उपलभ्यन्ते। उपचयापचयौ च सति भेदे संभवतः। निर्भेदं तु ब्रह्म 'एकमेवाद्वितीयम्' (छा.उ. ६।२।१) इत्यादिश्रुतिभ्यः। न चैते प्रियशिरस्त्वादयो**

***प्रकटार्थविवरणम्***

तथाप्यनृतजडपरिच्छेदानात्मत्वादिव्यावृत्तिमन्तरेण सर्वविरोधिविनिर्मुक्तब्रह्मस्वरूपप्रतिपत्त्ययोगात् सकलानिष्टव्यवच्छेदेन ब्रह्मस्वरूपोपलक्षकाः आनन्दत्वादिसामान्यरूपाः पदार्थाः ब्रह्मण्यध्यस्तत्वेन तद्धर्माः सर्वत्रोपसंहर्तव्याः इति अपुनरुक्तपदोपसंहारसिद्धिरिति भावः।

शङ्कापूर्वकं सूत्रान्तरमवतारयति— **नन्वेवं सतीत्यादिना। प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे।**

***भाष्यभावप्रकाशिका***

ननु तत्त्वम्पदार्थयोरेकत्वलक्षणे वाक्यार्थे सति तत्पदार्थधर्माणामुपसंहाराश्चैवं [हारश्चेत् त्वं]पदार्थधर्माणा(मुपसंहार)मप्युपसंहारः स्यादिति शङ्कते— **नन्विति**। अथवाऽऽनन्दमयस्य ब्रह्मत्वात् तस्य च सर्वत्राभेदात्तद्धर्मतयाऽऽनन्दादिवत् प्रियशिरस्त्वादयोऽपि सर्वत्र संकीर्येरन्, नो चेदानन्दादयोऽपि सर्वत्र न स्युरिति चोदयति— **नन्वेवमिति**। तेषां ब्रह्मधर्मतैव नास्तीत्याशङ्क्याह— **तथा हीति**।

**परस्परापेक्षयेति**। मोदमात्रं मोदः, प्रकृष्टो मोदः प्रमोद इति परस्परापेक्षावेतावुपचयापचयरूपौ। **भोक्त्रन्तरापेक्षयेति**। जीवेषु सुखादिवैचित्र्यदर्शनादित्यर्थः। तथा किमायातमिति, तत्राह— **उपचयापचयौ हीति**। ब्रह्मधर्मत्वमप्येषामसिद्धमित्याह— **न**

***न्यायनिर्णयः***

होमकार्यताव्यवस्थावदिहापि शब्दभेदेन व्यवस्था स्यादिति शङ्कते— **कस्मादिति**। पूर्वहेतुमिहाकृष्योदाहरति— **सर्वेति**। हेतुमेव विवृणोति— **सर्वत्रेति**। ब्रह्मणः सर्वत्रैक्ये फलितमाह— **तस्मादिति**। धर्मिणः सार्वत्रिकत्वेऽपि धर्माणां यथाश्रुति व्यवस्था स्यादित्याशङ्क्याह— **तेनेति**। सत्यज्ञानादयो मिथो विशेषणविशेष्यभूता विरुद्धानृतजडादिभ्रान्तिं निवर्तयन्तः सत्त्वादिपरापरसामान्याधार-भूतामेकामानन्दव्यक्तिं लक्षयन्ति। न चैकस्मादेव पदादीदृशं ब्रह्म सिध्यति पदमात्रप्रयोगे विरोधाभावाल्लक्षणानुत्थानात् प्रयोक्तव्ये पदान्तरे संभावितसमस्तभ्रान्तिनिरसनसमर्थं पदजातं प्रयोक्तव्यमित्यारोपितभ्रान्तिनिवृत्त्यर्थं परशाखीयमपि पदवृन्दमत्रोपसंहर्तव्यमिति भावः।।११।।

आनन्दमयस्य ब्रह्मणः सर्वत्राभेदात् तद्धर्मत्वेनानन्दादिवत् प्रियशिरस्त्वादयोऽपि तत्र तत्र प्रसज्येरन्, नो चेदानन्दादयोऽपि सार्वत्रिका न स्युरिति शङ्कते— **नन्विति**। ब्रह्मधर्माणां सर्वत्र संकरे सतीति यावत्। ब्रह्मधर्मतैव तेषामसिद्धेत्याशङ्क्याह— **तथा हीति**। सूत्रेणोत्तरमाह— **अत इति**। तत्र प्रतिज्ञां विभजते— **प्रियेति**। हेतुं व्याकरोति— **यदिति**। इष्टवस्तुसामान्याप्तिकृतं प्रीतिमात्रं प्रियम्। पुत्रादिविशेषलाभकृतो हर्षविशेषो मोदः। स एव प्रकृष्टः सन् प्रमोदः। सुखसामान्यमानन्द इत्येवमेते परस्परापेक्षयोपचयापचयरूपा भोक्तृभेदाच्च तथात्वभाजो जीवेषु सुखादिवैचित्र्यदृष्टेरित्यर्थः। तेषामेवंरूपत्वोपलम्भेऽपि किमायातमित्याशङ्क्याह— **उपचयेति**। तर्हि ब्रह्मण्यपि भेदोऽस्तु, नेत्याह— **निर्भेदं त्विति**। अतो यत्र यत्र ब्रह्म प्रतिपाद्यं तत्र तत्र प्रियशिरस्त्वादीनां न प्राप्तिरिति शेषः। ब्रह्मधर्मत्वमेषामुपेत्योक्तम्, तदेव नास्तीत्याह— **न चेति**। आनन्दमयस्य ब्रह्मत्वे

**ब्रह्मधर्माः, कोशधर्मास्त्वेत इत्युपदिष्टमस्माभिः 'आनन्दमयोऽभ्यासात्' (ब्र.सू. १।१।१२) इत्यत्र। अपि च परस्मिन् ब्रह्मणि चित्तावतारोपायमात्रत्वेनैते परिकल्प्यन्ते, न द्रष्टव्यत्वेन। एवमपि सुतरामन्यत्राप्राप्तिः प्रियशिरस्त्वादीनाम्। ब्रह्मधर्मांस्त्वेतान् कृत्वा न्यायमात्रमिदमाचार्येण प्रदर्शितं प्रियशिरस्त्वाद्यप्राप्तिरिति। स च न्यायोऽन्येषु निश्चितेषु ब्रह्मधर्मेषूपासनायोपदिश्यमानेषु नेतव्यः संयद्वामादिषु सत्यकामादिषु च। तेषु हि सत्यप्युपास्यस्य ब्रह्मण एकत्वे प्रक्रमभेदादुपासनाभेदे सति नान्योन्यधर्माणामन्योन्यत्र प्राप्तिः। यथा च द्वे नार्यविकं नृपतिमुपासाते छत्रेणैका चामरेणान्या; तत्रोपास्यैकत्वेऽप्युपासनाभेदो धर्मव्यवस्था च भवत्येवमिहापीति। उपचितापचितगुणत्वं हि सति भेदव्यवहारे सगुणे ब्रह्मण्युपपद्यते, न निर्गुणे परस्मिन् ब्रह्मणि। अतो न सत्यकामत्वादीनां धर्माणां क्वचिच्छ्रुतानां सर्वत्र प्राप्तिरित्यर्थः।।१२।।**

### *प्रकटार्थविवरणम्*

किं च एतेषां ब्रह्मधर्मत्वाभावादेव नास्ति ब्रह्मवाक्ये प्राप्तिरित्याह— **न चैते प्रियशिरस्त्वादय इति**। किमर्थं तर्हीदं सूत्रमित्याशङ्क्याह— **ब्रह्मधर्मांस्त्वेतानिति**। प्रियशिरस्त्वादिग्रहणं संयद्वामत्वादीनामुपलक्षणार्थम्; तेषां नास्ति सर्वत्र प्राप्तिरिति न्यायो योजनीय इत्यर्थः। ननु सर्वत्रोपास्यस्य धर्मिण एकत्वात् भवत्येव तद्धर्मप्राप्तिरिति नायं न्यायोऽवतरतीत्याशङ्क्याह— **तेषु हि सत्यपीति**। उपचयापचयौ हि भेद इत्येतद् योजयति— **उपचितापचितगुणत्वं हीति**।

**इतरे त्वर्थसामान्यात्**। संयद्वामत्वादिगुणेभ्य आनन्दादिपदार्थानां वैषम्यमाह— **इतरे त्विति**। इति षष्ठमानन्दाद्यधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**चैत इति। एवमपि सुतरामिति**। चित्तावतारस्य तत्र तत्र निर्दिष्टैरेव धर्मैः संभवान्नैतेषामुपसंहार इत्यर्थः। [अ]ब्रह्मधर्मत्वे शङ्काया एव [अ]संभवात् प्रियशिरस्त्वाद्यप्राप्तिरिति न सूत्रयितव्यमिति, तत्राह— **ब्रह्मधर्मांस्त्विति**। कृत्वाचिन्तायाः किं प्रयोजनमिति शङ्कायामाह— **स न्यायोऽन्यत्रेति**। ननु तत्रापि ब्रह्मण एकत्वात् किमित्यन्योन्यत्रानुपसंहार इत्याशङ्क्य तेषामुपासनार्थानामुपदिश्यमानानां वस्तुधर्मत्वाभावाद् विधिपरतन्त्रतया यत्र यावद्गुणविशिष्टतयोपासनाविधिस्तत्र तावतामेव चिन्तनीयत्वम्, नान्येषामित्याह— **तेषु हि सत्यपीति**। ननूपास्यैकत्वे सति कथमुपासनानां तत्फलस्य च भेद इति, तत्राह— **यथा च द्वे इति**। ननु ब्रह्मत्वाविशेषात् सगुणवन्निर्गुणेऽपि कस्मान्नोपसंहारादिव्यवस्थेति, तत्राह— **उपचितापचितेति**। एवं वैषम्यमभिधाय सूत्राभिमतमर्थं कथयन्नुपसंहरति— **अतो नेति**।

इदानीं सत्यकामत्वादिभ्यो विधिपरतन्त्रेभ्यो वस्तुधर्माणामानन्दादीनां ब्रह्मतत्त्वात्मकतया यत्र यत्र ब्रह्म श्रूयते तत्र तत्र

### *न्यायनिर्णयः*

कथं तद्धर्माणामेषामब्रह्मधर्मतेत्याशङ्क्यानन्दमयाधिकरणे वृत्तं स्मारयति— **कोशेति**। इतश्च प्रियशिरस्त्वादीनां ब्रह्मवाक्ये न प्राप्तिरित्याह— **अपि चेति**। अस्तु तर्हि चित्तावतारोपायत्वेनैव सर्वत्र ब्रह्मवाक्ये तत्प्राप्तिः, तत्राह— **एवमपीति**। तेषां ब्रह्मणि चित्तावतारोपायत्वेऽपि न ब्रह्मवाक्ये सर्वत्र प्राप्तिर्द्रष्टव्यत्वेनानुपदेशात्, अब्रह्मधर्मत्वाच्च। चित्तावतारस्तु तत्र तत्रोक्तैरेव धर्मैः संभवान्नैषामुपसंहारं काङ्क्षतीत्यर्थः। अब्रह्मधर्मत्वेनैषामुपसंहारशङ्काऽभावादनर्थकमिदं सूत्रमित्याशङ्क्याह— **ब्रह्मेति**। कृत्वाचिन्ताफलमाह— **स चेति**। तत्रापि ब्रह्मैक्यात् किमित्यन्योन्यत्रोपसंहारो न स्यादित्याशङ्क्याह— **तेष्विति**। तेषां ध्यानार्थमुक्तानां विधिपारतन्त्र्याद् यत्र यावद्गुणविशिष्टतयोपास्तिर्विधीयते तत्र तावतामेव ध्येयता, नान्येषामित्यन्योन्यत्रानुसंहार इत्यर्थः। उपास्यैक्ये कथमुपास्तिभेदो धर्मभेदो वेत्याशङ्क्याह— **यथा चेति**। विध्यधीनेषु धर्मेषु विधिमतिक्रम्य संकरो नास्तीत्युपसंहर्तु**मिति**शब्दः। सगुणवन्निर्गुणेऽपि ब्रह्मत्वाविशेषादुपसंहारानुपसंहारव्यवस्था किं न स्यात्, तत्राह— **उपचितेति**। सगुणनिर्गुणयोर्वैषम्यमुक्त्वा सूत्रे विवक्षितं वदन्नुपसंहरति— **अतो नेति**।।१२।।

विधिपरतन्त्रेभ्यः सत्यकामत्वादिभ्यो वस्तुधर्माणामानन्दादीनां [१]ब्रह्मतत्त्वमित्युपयोगितया यत्र यत्र ज्ञेयं ब्रह्मोच्यते तत्र तत्र

१. ब्रह्मतत्त्वप्रमित्युपयोगितयेत्यर्थः।

## इतरे त्वर्थसामान्यात्।।१३।।

**इतरे त्वानन्दादयो धर्मा ब्रह्मस्वरूपप्रतिपादनायैवोच्यमाना अर्थसामान्यात् प्रतिपाद्यस्य ब्रह्मणो धर्मिण एकत्वात् सर्वे सर्वत्र प्रतीयेरन्निति वैषम्यम्, प्रतिपत्तिमात्रप्रयोजना हि त इति।।१३।।**

।। इति षष्ठमानन्दाद्यधिकरणम् ।।

७।।आध्यानाधिकरणम्।।सू. १४-१५।।

## आध्यानाय प्रयोजनाभावात्।।१४।।

**काठके हि पठ्यते– 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः' (क.उ. ३।१०) इत्यारभ्य 'पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः' (क.उ. ३।११) इति। तत्र संशयः– किमिमे सर्व एवार्थादयस्ततस्ततः परत्वेन प्रतिपाद्यन्त उत पुरुष एवैभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति। तत्र तावत् सर्वेषामेवैषां परत्वेन प्रतिपादनमिति भवति मतिः। तथाहि श्रूयते– 'इदमस्मात्परमिदमस्मात्परम्' इति। ननु बहुष्वर्थेषु परत्वेन प्रतिपिपादयिषितेषु वाक्यभेदः स्यात्। नैष दोषः; वाक्यबहुत्वोपपत्तेः।**

### *शारीरकन्यायसंग्रहः*

**आध्यानाय प्रयोजनाभावात्।।१४।। आत्मशब्दाच्च।।१५।।** 'तद्विष्णोः परमं पदम्' 'पुरुषान्न परं किञ्चित्' इति च उपक्रमोपसंहारयोरैकरूप्यात् पुरुषस्य सर्वस्मात् परत्वे प्रयोजनवति च प्रतिपादयितव्ये, अवान्तरवाक्यानां प्रयोजनवदेकवाक्यतायां संभविन्यां वाक्यभेदप्रयोजनकल्पने न युक्ते, कल्पनागौरवात् इति न्यायेन पुरुषपरत्वमवान्तरवाक्यानां दर्शितम्।

### *प्रकटार्थविवरणम्*

**आध्यानाय प्रयोजनाभावात्।** विषयवाक्यं पठति— **काठके इति।** वाक्यभेदाभेदानिर्धारणात् संशयमाह— **तत्रेति।** पूर्वत्र यथा प्रधानस्यानन्दादयः सर्वत्रोपसंहार्या उक्ताः, तथाऽर्थादीनां प्राधान्येन प्रतिपाद्यानां परत्वान्यन्यत्रोपसंहर्तव्यानीति पूर्वपक्षमाह— **तत्र तावदिति।** अर्थादीनां प्राधान्यमेव नास्ति, तत्प्रतिपादने वाक्यभेदप्रसङ्गादित्याह— **ननु बहुष्विति।** विभक्तिनिराकाङ्क्षेभ्यो

### *भाष्यभावप्रकाशिका*

प्राप्तिरिति विशेषमाह— **इतरे त्वित्यादिना। प्रतिपत्तिमात्रेति।** सत्यादिपदोसंहाराभावो[वे]ऽसाधारणब्रह्मस्वरूपस्यैवासिद्धेस्तत्र गुणानामुपसंहारोऽपि न सिध्यति। अतःसत्यत्वज्ञानत्वानन्दत्वात्मत्वपरिपूर्णत्वलक्षणपरापरसामान्याभिधानमुखेन स्वार्थं परित्यज्य सर्वसामान्यालम्बनामेकामानन्दव्यक्तिमसाधारणब्रह्मस्वरूपतया लक्षयितुं पञ्च पदार्थाः सर्वत्रैवोपसंहर्तव्या इत्यर्थः। इति षष्ठमानन्दाद्यधिकरणम्।

**आध्यानाय प्रयोजनाभावात्।** संभवत्येकवाक्यत्वे वाक्यभेदो दोषः। इह तु वाक्यभेद एव संभवतीत्याह— **वाक्यबहुत्वेति।**

### *न्यायनिर्णयः*

प्राप्तिरिति विशेषमाह— **इतरे त्विति।** सूत्रितं विशेषं विशदयति— **इतरे त्वित्यादिना।** ब्रह्मस्वरूपसिद्ध्यर्थमुच्यमानत्वमेवानन्दादीनां वैषम्यार्थं कथयति— **प्रतिपत्तीति।** सत्यत्वज्ञानत्वानन्दत्वात्मत्वपूर्णत्वलक्षणाः पञ्च पदार्था ज्ञानाधिकारे सर्वत्रोपसंहर्तव्या इति वक्तुमितिशब्दः।।१३।। इति षष्ठमानन्दाद्यधिकरणम्।।

ब्रह्मस्वभावभूतोपसंहार्यधर्मोक्त्यनन्तरमस्वभावस्यानुपसंहार्यस्याप्यर्थादिपरत्वरूपधर्मस्य ब्रह्मप्रमित्युपायत्वं वदति— **आध्यानायेति।** विषयवाक्यं पठति— **काठक इति।** वाक्यभेदाभेदानिर्धारणेनार्थादीनधिकृत्य संशयमाह— **तत्रेति।** विद्याभेदाभेदप्रसङ्गेन वाक्यभेदाभेदयोस्तन्निबन्धनविद्याभेदाभेदयोर्वा चिन्तया वाक्यार्थधीहेतोरेव चिन्तनात् पादादिसंगतिः। पूर्वपक्षे वाक्यभेदाद्विद्याभेदः। सिद्धान्ते तदभेदात्तदभेद इत्यभिप्रेत्य पूर्वपक्षमाह— **तत्रेति।** तत्र हेतुमाह— **तथा हीति।** पूर्वपक्षमाक्षिपति— **नन्विति।**

**बहून्येव ह्येतानि वाक्यानि प्रभवन्ति बहूनर्थान्[1] परत्वोपेतान् प्रतिपादयितुम्। तस्मात् प्रत्येकमेषां परत्वप्रतिपादनमिति।**

**एवं प्राप्ते ब्रूमः– पुरुष एव ह्येभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति युक्तम्, न प्रत्येकमेषां परत्वप्रतिपादनम्। कस्मात्? प्रयोजनाभावात्। न हीतरेषु परत्वेन प्रतिपन्नेषु किंचित् प्रयोजनं दृश्यते, श्रूयते वा। पुरुषे त्विन्द्रियादिभ्यः परस्मिन् सर्वानर्थव्रातातीते प्रतिपन्ने दृश्यते प्रयोजनं मोक्षसिद्धिः। तथा च श्रुतिः– 'निचाय्य तन्मृत्युमुखात्प्रमुच्यते' (क.उ. ३।१५) इति। अपि च परप्रतिषेधेन काष्ठाशब्देन च पुरुषविषयमादरं दर्शयन् पुरुषप्रतिपत्त्यर्थैव पूर्वापरप्रवाहोक्तिरिति दर्शयति। आध्यानायेति। आध्यानपूर्वकाय सम्यग्दर्शनायेत्यर्थः।**

### *प्रकटार्थविवरणम्*

वाक्येभ्योऽर्थमनोबुद्धिमहदव्यक्तपुरुषाः स्वप्रधानाः प्रतीयन्ते; अतोऽत्र वाक्यभेदो न दोषः, सदनकरणपुरोडाशप्रतिष्ठापनमन्त्रवदित्याह— **नैष दोष इति।**

उत्सूत्रमेव सिद्धान्तं प्रतिजानीते— **पुरुष एवैभ्य इति।** सौत्रं हेतुमाह— **कस्मादिति।** 'तद्विष्णोः परमं पदम्' 'पुरुषान्न परं किंचित्' इति चोपक्रमोपसंहारैकरूप्यात् पुरुषे सर्वस्मात् परत्वेन प्रयोजनवति च प्रतिपादयितव्ये अवान्तरवाक्यानां प्रयोजनवदेकवाक्यतायां संभवन्त्यां न वाक्यभेदप्रयोजनकल्पने युक्ते कल्पनागौरवादित्यर्थः। पुरुषस्यैव परत्वप्रतिपादने अभ्यासं तात्पर्यलिङ्गमाह— **अपि चेति। पूर्वेति।** [2]पूर्वतना परप्रवाहस्योत्तरोत्तरपरत्वस्य उक्तिः। उक्तेऽर्थे सूत्रभागं व्याख्याति— **आध्यानायेति।**

### *भाष्यभावप्रकाशिका*

उपपत्तिमेवाह— **बहून्येवेति।** सर्वेषां प्रत्येकं परत्वाभिधानस्याध्यानप्रयोजनत्वात् तत्राध्यानानां च 'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तका'..... योजनवत्त्वावगमादपूर्वार्थतया प्रामाणिकस्य च वाक्यभेदस्यानिराकार्यत्वाद् वाक्यभेद एव युक्त इत्यर्थः। नन्वागमैकसमधिगम्यत्वात् तत्प्रयोजनस्यादर्शनात्र[र्शनं न] दोषायेति, तत्राह— **श्रूयते वेति।** अस्य प्रकरणस्य वस्तुतत्त्वप्रतिपादनपरत्व-प्रतीतेरुपासनाविधिपरत्वकल्पनायोगात् परमपुरुषार्थहेतुभूततत्त्वज्ञानपरत्वे च संभवतीन्द्रियाद्युपासनासाध्यस्मृतिप्रसिद्धावान्तरपुरुषार्थपरत्वं न संभवतीत्यर्थः। कथं भवन्मते पुरुषार्थहेतुपरत्वमिति, तदाह— **पुरुषे त्विति।** अज्ञानमिथ्याज्ञानोपशमस्य दृष्टफलत्वाद् दृष्टे संभवत्यदृष्टकल्पनाऽन्यायेत्यर्थः। दृष्टफलत्वे प्रमाणमाह— **तथा चेति।** किं चादरादप्ययमेवास्यार्थ इत्याह— **अपि चेति।**

### *न्यायनिर्णयः*

संभवत्येकवाक्यत्वे वाक्यभेदो दोषः; अत्र तु वाक्यभेद एवेति समाधत्ते— **नेति।** उपपत्तिमेवाह— **बहूनीति।** सर्वेषां प्रत्येकं परत्वोक्तिरफलेत्याशङ्क्य 'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः' इत्यादिस्मृतेर्ध्यानद्वारा प्रत्येकं परत्वोक्तेः सफलत्वसिद्धेरपूर्वार्थतया च प्रामाणिकस्य वाक्यभेदस्येष्टत्वात् प्रत्येकमर्थादीनां परत्वं प्रतिपाद्यमित्युपसंहरति— **तस्मादिति।** पूर्वपक्षमनूद्य सूत्राद् बहिरेव सिद्धान्तं प्रतिजानीते— **एवमिति।** पुरुषपरत्वस्य शक्तिविषयस्य तात्पर्यगम्यत्ववदर्थादिपरत्वानामपि शक्तिविषयत्वादपूर्वत्वाच्च तात्पर्यमेयत्वं किं न स्यादिति शङ्कते— **कस्मादिति।** तात्पर्यमेयत्वनिमित्तफलाभावान्नार्थादिपरत्वानां तन्मेयतेति मत्वाऽऽह— **प्रयोजनेति।** कथं प्रयोजनाभावोक्तिरित्याशङ्क्यान्वयव्यतिरेकसिद्धं शास्त्रसिद्धं वा फलमिति विकल्प्याऽऽद्यं निराह— **न हीति।** द्वितीयं प्रत्याह— **श्रूयते चे[वे]ति।** प्रकरणस्यास्य वस्तुपरत्वदृष्टेरुपास्तिविधिपरत्वायोगात् परमपुरुषार्थहेतुतत्त्वधीपरत्वे च संभवतीन्द्रियाद्युपास्त्यधीनस्मृतिसिद्धावान्तरपुमर्थपरत्वायोगान्न प्रत्येकमर्थादिपरत्वसिद्धिरित्यर्थः। पुरुषस्य परत्वधीरपि न फलवती परत्वधीत्वादर्थादिपरत्वधीवदित्यनुमानात् कथं त्वन्मतेऽपि पुरुषार्थहेतुफलपरत्वमित्याशङ्क्यानर्थशून्यतोपलक्षितानवच्छिन्नचिद्धातुविषयत्वात् पुरुषपरत्वदृष्टेरनर्थध्वंसफलत्वमनुभवसिद्धमित्याह— **पुरुषे त्विति।** अज्ञानमिथ्याधीशान्तेर्दृष्टफलत्वाद् दृष्टे सत्यदृष्टकल्पना न युक्तेति मत्वाऽऽह— **दृश्यत इति।** विद्वदनुभवे विप्रतिपन्नं प्रति पुरुषपरत्वदृष्टेर्दृष्टफलत्वे श्रुतिमाह— **तथा चेति।** इतश्चास्य संदर्भस्य सर्वस्मात् परत्वेन पुरुषप्रमितिपरतेत्याह— **अपि चेति।** 'पुरुषान्न पर'मिति निषेधलिङ्गेन 'सा काष्ठे'ति काष्ठाशब्देन

---

१. 'बहुविषयान्' इति पा.। २. अनेन भाष्ये 'पूर्वा परप्रवाहोक्तिः' इति पदविभागो ज्ञायते।

**सम्यग्दर्शनार्थमेव हीहाध्यानमुपदिश्यते, न त्वाध्यानमेव स्वप्रधानम्।।१४।।**

**आत्मशब्दाच्च।।१५।।**

**इतश्च पुरुषप्रतिपत्त्यर्थैवेयमिन्द्रियादिप्रवाहोक्तिः। यत्कारणम्, 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' (क.उ. ३।१२) इति प्रकृतं पुरुषमात्मेत्याह। अतश्चानात्मत्वमितरेषां विवक्षितमिति गम्यते। तस्यैव च दुर्विज्ञानतां संस्कृतमतिगम्यतां च दर्शयति। तद्विज्ञानायैव 'यच्छेद् वाङ्मनसी प्राज्ञः' (क.उ. ३।१३) इत्याध्यानं विदधाति। तद् व्याख्यातम् 'आनुमानिकमप्येकेषाम्' (ब्र. सू. १।४।१) इत्यत्र। एवमनेकप्रकार आशयातिशयः श्रुतेः पुरुषे लक्ष्यते, नेतरेषु। अपि च 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (क.उ. ३।९) इत्युक्ते किं तदध्वनः पारं विष्णोः परमं पदमित्यस्यामाकाङ्क्षायामिन्द्रियाद्यनुक्रमणात् परमपदप्रतिपत्त्यर्थ एवायमायास[1] इत्यवसीयते।।१५।।**

।। इति सप्तममाध्यानाधिकरणम् ।।

***प्रकटार्थविवरणम्***

**आत्मशब्दाच्च।** पुरुषस्य प्रतिपाद्यत्वेऽर्थादीनां च हेयत्वे हेत्वन्तराण्याह— **इतश्चेत्यादिना।** इति सप्तममाध्यानाधिकरणम्।।

***भाष्यभावप्रकाशिका***

पुरुषा(र्थ)त्र परं किञ्चिदिति परप्रतिषेधः। नन्वत्राध्यानविधिर्नास्ति तत्कथमुच्यत आध्यानायेत्यत आह— **आध्यानायेति।**

अनधिगतार्थप्रतिपादनस्वभावत्वादागमस्यात्मनश्च स्वयं श्रुत्यैव दुरधिगमत्वकथनाद् वस्तुतश्च दुरधिगमत्वादर्थादीनां च सुगमत्वादर्थादीनां परत्वाभिधानमपि तत्परमेवेत्याह— **इतश्चेति।** नन्वत्राध्यानं न दृश्यत इति, तत्राह— **तद्व्याख्यातमिति।** 'तद्विष्णोः परमं पदम्' 'पुरुषान्न परं किञ्चिदि'ति चोपक्रमोपसंहारयोरैकरूप्यात् पुरुषस्य सर्वस्मात् परत्वे प्रयोजनवति च प्रतिपादयितव्येऽवान्तरवाक्यानां प्रयोजनवदेकवाक्यतायां संभविन्यां वाक्यभेदप्रयोजनकल्पने न युक्ते कल्पनागौरवादित्याह— **अपि च सोऽध्वन इति।** इति सप्तममाध्यानधिकरणम्।

***न्यायनिर्णयः***

बाधावधित्वेन परत्वोक्तिलिङ्गेन च पुरुषविषयमादरं तात्पर्यं दर्शयन् वेद इति यावत्। **पूर्वापरप्रवाहोक्तिः** पूर्वस्मात्पूर्वस्मादपरस्यापरस्य परत्वोक्तिः। ध्यानविधेरिहाभावात् परपुरुषमितेर्ध्यानार्थता कथं सूत्रितेत्याशङ्क्य सूत्रावयवं व्याचष्टे— **आध्यानेति।** निर्गुणब्रह्मप्रमितिरपि ध्यानार्था ब्रह्ममितित्वात् सगुणब्रह्ममितिवदित्याशङ्क्य 'ततस्तु तमि'त्यादिश्रुतिविरोधमाह— **सम्यगिति।**।१४।।

सर्वस्मात्परत्वेन पुरुषस्यैवात्र प्रतिपाद्यत्वे हेत्वन्तरमाह— **आत्मेति।** सूत्रस्थं चशब्दं व्याकरोति— **इतश्चेति।** तदेव स्फुटयन्नात्मशब्दं विभजते— **यदिति।** आत्मनोऽप्रकाशमानत्वं स्वाभाविकमिति शङ्कां वारयति— **दृश्यते त्विति।** तस्यां श्रुतावेष आत्मेत्यस्यार्थमाह—**प्रकृतमिति।** सूत्रगतपञ्चम्या विवक्षितमर्थमाह— **अतश्चेति।** अवशिष्टपूर्वार्धस्यार्थमाह— **तस्येति।** उत्तरार्धतात्पर्यमाह— **संस्कृतेति।** चशब्दसूचितं हेत्वन्तरमाह— **तदिति।** वागादिनियमनमात्रं मन्त्रे प्रतीतं, न तु ध्यानविधिरित्याशङ्क्याह— **तद् व्याख्यातमिति।** अज्ञातार्थज्ञापनस्वाभाव्यादागमस्यात्मनश्च श्रुत्यैव दुर्ज्ञानत्वोक्तेर्वस्तुतश्च तथात्वादर्थादीनां च सुगमत्वात्तेषां परत्वोक्तिरपि तत्परैवेत्यभिप्रेत्योपसंहरति— **एवमिति।** उपक्रमोपसंहारयोरैकरूप्यादपि पुरुषपरत्वे तात्पर्यं संदर्भस्य सिद्धमित्याह— **अपि चेति।** 'तद्विष्णोः परमं पदम्', 'पुरुषान्न परं किंचित्' इत्युपक्रमोपसंहारयोरैकरूप्यात् फलवति सर्वस्मात् परत्वे पुरुषस्य प्रतिपाद्ये सत्यवान्तरवाक्यानां तदेकवाक्यतायोगे वाक्यभेदादिकल्पने गौरवात् परपुरुषपरत्वमेव संदर्भस्येति हेत्वन्तरमेव स्फोरयति— **स इति।** प्रमित्सितत्वाच्च पुरुषस्यैव प्रमेयतेत्याह— **किमिति।** अर्थानामिन्द्रियाकर्षकत्वेन परत्ववत् परस्मिन्नात्मनि सर्वनियम्याकर्षकत्वेन परत्वं निश्चितमिति मत्वाऽऽह— **इन्द्रियादीति।**।१५।। इति सप्तममाध्यानाधिकरणम्।।

---

१. 'अयमाम्नायः' इति पा.।

## ८।।आत्मगृहीत्यधिकरणम्।।सू. १६-१७।।

## आत्मगृहीतिरितरवदुत्तरात्।।१६।।

**ऐतरेयके श्रूयते– 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत् स ईक्षत लोकान्नु सृजा इति' 'स इमाल्ँलोकानसृजताम्भो मरीचीर्मरमापः' (ऐ.उ. १।१,२) इत्यादि। तत्र संशयः– किं पर एवात्मेहात्मशब्देनाभिलप्यत उतान्यः कश्चिदिति। किं तावत् प्राप्तम्? न परमात्मेहात्मशब्दाभिलप्यो भवितुमर्हतीति।**

### *शारीरकन्यायसंग्रहः*

**आत्मगृहीतिरितरवत्तदुत्तरात्।।१६।। अन्वयादिति चेत् स्यादवधारणात्।।१७।।** सूत्रात्मविषयलोकसृष्ट्यादिबहुलिङ्गानामुपक्रमोपसंहारगतात्मब्रह्मश्रुतिभ्याम् 'एक एवाग्र आसीत्' 'एतया द्वारा' इति चावधारणप्रवेशादिलिङ्गैश्च बाधात् परमेव ब्रह्म वाक्यगम्यमित्युक्तम्।।

अपरा योजना। 'कतम आत्मा' इत्युपक्रम्य 'स वा एष महानज आत्मा' इत्यन्तं त्वंपदार्थप्रतिपादनपरं वाक्यम्; 'सदेव' इत्युपक्रम्य 'स आत्मा' इत्यन्तं तत्पदार्थप्रतिपादनपरं वाक्यम्; अनयोश्च वाक्यार्थान्वयितत्त्वंपदार्थभेदाद् वाक्यच्छायाभेदाच्च अतुल्यार्थत्वे प्राप्ते समानाधिकरणपदयोः वाच्यार्थभेदात् प्रतिपाद्यैकत्वसिद्धये लक्षणार्थपरिग्रहवत् लक्ष्यमाणार्थभेदेऽपि लक्षणान्तरपरिग्रहः स्यात् इत्यनवस्थापरिहाराय लक्ष्यमाणार्थैक्यमेव युक्तमिति न्यायेन त्वंपदार्थोऽप्यद्वितीयपर्यन्तः तत्पदार्थोऽपि प्रत्यगात्मपर्यन्तः इति लक्ष्यमाणत्वंपदार्थप्रतिपादकेन 'कतम आत्मा' इत्यनेन वाक्येन लक्ष्यमाणतत्पदार्थप्रतिपादकम् 'सदेव' इति वाक्यं प्रत्यगात्मभूतसदुपक्रमत्वात् तुल्यार्थमित्युक्तम्।[१]

### *प्रकटार्थविवरणम्*

**आत्मगृहीतिरितरवदुत्तरात्।** विषयवाक्यं पठति— **ऐतरेयक इति।** आत्मशब्दस्य परमात्मनि सूत्रात्मनि च 'आत्मैवेदमग्र आसीत् पुरुषविध' इति प्रयोगदर्शनात् संशयमाह— **तत्रेति।** पूर्वत्रात्मशब्दात् परमपुरुषस्य प्रतिपाद्यत्वाभिधानादिहापि तद्वदेव आत्मशब्दात् परमात्मग्रहणं प्राप्तं पूर्ववादी प्रतिषेधति— **न परमात्मेहेति।** वाक्यस्य सूत्रात्मनि तात्पर्यदर्शनात् सूत्रात्मविद्याऽत्र

### *भाष्यभावप्रकाशिका*

**आत्मगृहीतिरितरवदुत्तरात्। अन्यः कश्चिदिति।** हिरण्यगर्भ इत्यर्थः। ननु परमात्मनोऽपि लोकसृष्टि[स्रष्टृ]त्वमस्ति,

### *न्यायनिर्णयः*

वाक्यभेदभयादर्थादीनां पृथक्प्रतिपाद्यत्वे प्रत्युक्ते देवादिकर्तृत्वेन प्रकृतापरब्रह्मणोऽन्यो लोकस्रष्टा परो नोपेयो वाक्यभेदप्रसङ्गादित्याशङ्क्याह— **आत्मेति।** विषयवाक्यमुदाहरति— **ऐतरेयक इति।** आत्मशब्दस्य [२]परत्र [३]सूत्रे च प्रयोगात् तं विषयीकृत्य संशयमाह— **तत्रेति।** आत्मशब्दस्य वाक्यार्थज्ञानोपयुक्तस्य परमात्मविषयत्वोक्त्या सत्यत्वादीनां तत्रमित्युपयोगिनामुपसंहारसिद्धेरस्ति पादादिसंगतिः। आत्मशब्दस्यापरविषयत्वे तदर्थप्रमित्यर्थं पूर्वपक्षे सत्याद्यनुपसंहारः। सिद्धान्ते तस्य परविषयत्वे तत्प्रमित्यर्थं तदुपसंहार इत्यभिप्रेत्य विमृश्य पूर्वपक्षयति— **किमिति।** परशब्दवाच्यत्ववदात्मशब्दवाच्यत्वमपि तस्यैव किं न

---

१. 'तत्त्वमसि' इत्यत्र तत्त्वम्पदयोः सामानाधिकरण्यं वाच्यार्थयोरभेदायोगेनानुपपन्नम्। अतस्तत्र विरुद्धांशत्यागेन विशेष्यांशमात्रे लक्षणाऽऽश्रीयते। तथापि तत्त्वम्पदलक्ष्यार्थौ भेदेनैव प्रतीयेयाताम्, भेदस्य लक्ष्यार्थानन्तर्भावेऽपि 'तत्' 'त्व'मिति नामभेदप्रयुक्ता प्रतीतिरनिवार्या स्यात्। नामभेदस्यार्थभेदप्रत्यायकतायाः 'अथैष ज्योति'रित्यादौ क्लृप्तत्वात्। अतो भेदकविशेषणयोरिव भेदस्यापि त्यागाय लक्षणान्तरमाश्रयणीयम्। तदपि लक्षणान्तरमुक्तपदयोरेवेति उक्तरीत्या पुनर्भेदप्रतीतौ लक्षणान्तरमित्येवमनवस्था स्यात्। तत्परिहारायादावेव तत्त्वम्पदार्थौ जीवब्रह्मपर्यन्तौ लक्षणीयौ, तथा सति शाब्दस्याभेदस्य प्रतीतेर्नामभेदन्यायलभ्यो भेदो नोन्मज्जति। तथालक्षणा च लक्षणीयार्थप्रसिद्धिमपेक्षते। तत्र वाजसनेयिवाक्यं त्वमर्थं तदर्थपर्यन्तं समर्पयति, छान्दोग्यवाक्यं च तदर्थं त्वमर्थपर्यन्तं समर्पयतीति अनयोः परस्परोपकारकत्वेन विद्यैक्यमिति। अधिकं परिमले द्र.पृ. ७७४। २. परत्र = परमात्मनि। ३. सूत्रे = सूत्रात्मनि।

**कस्मात्? वाक्यान्वयदर्शनात्। ननु वाक्यान्वयः सुतरां परमात्मविषयो दृश्यते, प्रागुत्पत्तेरात्मैकत्वावधारणात्, ईक्षणपूर्वकस्रष्टृत्ववचनाच्च। नेत्युच्यते। लोकसृष्टिवचनात्। परमात्मनि हि स्रष्टरि परिगृह्यमाणे महाभूतसृष्टिरादौ वक्तव्या। लोकसृष्टिस्त्विहादावुच्यते। लोकाश्च महाभूतसंनिवेशविशेषाः। तथा चाम्भःप्रभृतीँल्लोकत्वेनैव निर्ब्रवीति– 'अदोऽम्भः परेण दिवम्' (ऐ.उ. १।२) इत्यादिना। लोकसृष्टिश्च परमेश्वराधिष्ठितेनापरेण केनचिदीश्वरेण क्रियत इति श्रुतिस्मृत्योरुपलभ्यते। तथा हि श्रुतिर्भवति– 'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ.उ. १।४।१) इत्याद्या। स्मृतिरपि– 'स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत' इति। ऐतरेयिणोऽपि 'अथातो रेतसः सृष्टिः प्रजापते रेतो देवाः' (ऐ.आ. २।१।३)**

### *प्रकटार्थविवरणम्*

विवक्षिता; अतो गुणोपसंहार इत्यर्थः। पूर्वपक्षमाक्षिप्य समाधत्ते— **नन्वित्यादिना**। न केवलम् 'लोकानसृजत' इति प्रक्रमाल्लोकसृष्टिर्विवक्षिता; निर्वचनाच्चेत्याह— **तथा चाम्भःप्रभृतीनिति**। 'अम्भो मरीचीर्मरमापः' इति सूत्रयित्वा स्वयमेव विवृणोति श्रुतिः अदस्तदम्भः परेण दिवं दिवः परस्तात्, द्यौः द्युप्रतिष्ठो लोकः इत्यर्थः। भवतु लोकसृष्टिर्विवक्षिता; ततः किमित्यत आह— **लोकसृष्टिश्चेति**। इतश्च सूत्रात्माऽत्र विवक्षित इत्याह— **एतरेयिणोऽपीति**। रेतो वीर्यं देवाः, तत्कार्यत्वादित्यर्थः। यच्च परमात्मलिङ्गमुक्तम्, तदन्यथासिद्धमित्याह— **आत्मशब्दोऽपीत्यादिना**। किंच प्रजाः सृष्ट्वा ताः प्रति गवानयनादिव्यापारोऽपि

### *भाष्यभावप्रकाशिका*

सर्वकारणत्वादित्याशङ्क्याह— **परमात्मनीति**। परमात्मकर्तृकस्य स्व[स]र्गस्याकाशादिमहाभूतादित्वादस्य चातथात्वात् श्रुतिस्मृत्योश्च हिरण्यगर्भस्य लोककर्तृकत्वावगमात्र परमेश्वरग्रहणमित्यर्थः। नन्वत्र लोकशब्देन महाभूतान्येवोच्यन्त इति, तत्राह— **लोकाश्चेति**। ननु यद्यपि लोकशब्दो महाभूतसन्निवेशविशेषे रूढस्तथापीह कारणानि भूतानि गृह्यन्ते प्रकरणादित्याशङ्क्याह— **तथा चेति**। तथापीश्वरः किं न स्यादिति, तत्राह— **लोकसृष्टिश्चेति**। किं च प्रजापतिकर्तृकैव लोकसृष्टिरित्येतत् प्रकरणादवगम्यत इत्याह— **ऐतरेयिणोऽपीति**। ननूपक्रमोपसंहारगताभ्यामात्मब्रह्मशब्दश्रुतिभ्यां परमेश्वरेऽवगम्यमाने लोकस्रष्टृत्वलिङ्गेन कथमपरब्रह्मपरिग्रह इत्याशङ्क्य

### *न्यायनिर्णयः*

स्यादित्याह— **कस्मादिति**। आत्मविषयवाक्यस्य सूत्रे तात्पर्यात् तद्विद्याऽत्राभीष्टा, तन्न गुणोपसंहारोऽस्तीत्याह— **वाक्येति**। पूर्वपक्षमाक्षिपति— **नन्विति**। सुतरामित्युक्तमेव हेतुद्वयोक्त्या प्रकटयति— **प्रागिति**। लोकस्रष्टृत्वलिङ्गाद् वाक्यान्वयः सूत्रविषयो, न परात्मगामीत्याह— **नेतीति**। परस्यापि लोकस्रष्टृत्वं सर्वकारणत्वादिति लिङ्गस्यान्यथासिद्धिमाशङ्क्याह— **परमात्मनीति**। तत्कर्तृकसर्गस्याकाशादिमहाभूतादित्वादस्य चातथात्वदृष्टेः सूत्रस्य च लोककर्तृकतायाः श्रुतिस्मृतिसिद्धत्वान्नात्र परगृहीतिरित्यर्थः। लोकशब्देनात्र महाभूतानामेवोक्तेः सृष्टेरिहापि महाभूतादित्वमिष्टमित्याशङ्क्याह— **लोकाश्चेति**। महाभूतसंनिवेशविशेषे लोकशब्दस्य रूढत्वेऽपि प्रकरणादिह महाभूतान्येव ते गृह्येरन्नित्याशङ्क्याह— **तथा चेति**। 'अम्भो मरीचीर्मरमाप' इति सूत्रयित्वा स्वयमेव श्रुतिर्विवृणोति–अदस्तदम्भः परेण दिवं दिवः परस्ताद् द्यौर्द्युप्रतिष्ठो लोको दिवमारभ्योपरितनलोकाश्चान्द्रमसैरम्भोभिरभिव्याप्तेरम्भःशब्दिता इत्यर्थः। अन्तरिक्षलोकः सवितृमरीचिव्याप्तेर्मरीचयः। स्थानभेदाद् बहूक्तिः। म्रियन्तेऽस्मिन् भूतानीति पृथिवीलोको मरम्। याः पृथिव्या अधस्तात् ता आपः पातालानि, तेषामब्बाहुल्याद्विधेयापेक्षया स्त्रीलिङ्गत्वम्। एवमादिपदेन 'द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आप' इति गृहीतम्। तथापि परमात्मैव स्रष्टा किं न स्यात्, तत्राह— **लोकेति**। आत्मा हिरण्यगर्भः, पुरुषविधस्तत्प्रकारः शिरःपाण्यादिमान्। भूतानां स्थूलभूतकार्याणां चराचराणामिति यावत्। प्रजापतिकर्तृकैव लोकसृष्टिरित्येतत् प्रकरणादपि भातीत्याह— **ऐतरेयिणोऽपीति**। नियम्यसृष्ट्यानन्तर्यमथेत्युक्तम्। नियन्तृसृष्ट्यतिरेकेण तत्सृष्टेरकिंचित्करत्वमतःशब्दार्थः। किं तद् रेतो यस्य सृष्टिरिष्टेत्याशङ्क्याह— **प्रजेति**। रेतो वीर्यं तत्कार्यत्वाद् देवास्तच्छब्दाः। वाक्यस्य तात्पर्यमाह— **इत्यत्रेति**। उपक्रमोपसंहारस्थाभ्यामात्मब्रह्मश्रुतिभ्यां परस्मिन् गम्यमाने कुतो लोकस्रष्टृत्वलिङ्गेनापरब्रह्मसिद्धिः? श्रुतिभ्यां लिङ्गस्य दुर्बलत्वादित्याशङ्क्य

**इत्यत्र पूर्वस्मिन् प्रकरणे प्रजापतिकर्तृकां विचित्रां सृष्टिमामनन्ति। आत्मशब्दोऽपि तस्मिन् प्रयुज्यमानो दृश्यते- 'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ.उ.१।४।१) इत्यत्र। एकत्वावधारणमपि प्रागुत्पत्तेः स्वविकारापेक्षमुपपद्यते। ईक्षणमपि तस्य चेतनत्वाभ्युपगमादुपपन्नम्। अपि च 'ताभ्यो गामानयत् ताभ्योऽश्वमानयत् ताभ्यः पुरुषमानयत् ता अब्रुवन्'इत्येवंजातीयको भूयान् व्यापारविशेषो लौकिकेषु विशेषवत्स्वात्मसु प्रसिद्ध इहानुगम्यते। तस्माद् विशेषवानेव कश्चिदिहात्मा स्यादिति।**

**एवं प्राप्ते ब्रूमः- पर एवात्मेहात्मशब्देन गृह्यत इतरवत्। यथेतरेषु सृष्टिश्रवणेषु 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै.उ. २।१।१) इत्येवमादिषु परस्यात्मनो ग्रहणम्, यथा चेतरस्मिँल्लौकिकात्मशब्दप्रयोगे प्रत्यगात्मैव मुख्य आत्मशब्देन गृह्यते, तथेहापि भवितुमर्हति। यत्र तु 'आत्मैवेदमग्र आसीत्' (बृ.उ.**

### *प्रकटार्थविवरणम्*

प्रजापतेरेव घटत इत्याह— **अपि च ताभ्य इति**।

नेदं सूत्रात्मविद्याविषयं वाक्यम्, किंतु परमात्मप्रतिपादनपरम्; अतो नास्ति गुणोपसंहार इति सिद्धान्तमाह— **एवं प्राप्ते ब्रूम इति**। आत्मशब्दस्य परमात्मनि मुख्यत्वात्, उत्तरत्र च श्रूयमाणस्येक्षणादेः परमात्मन्येव मुख्यत्वात् परमात्मपरमेवेदं वाक्यमित्यर्थः।

### *भाष्यभावप्रकाशिका*

तयोरन्यथासिद्धत्वाल्लिङ्गस्यैव प्राबल्यमित्यभिप्रेत्यान्यथासिद्धिमाह— **आत्मशब्दोऽपीति**। ब्रह्मशब्दस्याप्येतदुपलक्षणम्, ब्रह्मलोक इत्यादौ ब्रह्मशब्दस्यापि तत्र प्रयोगदर्शनात्। ननु एक एवेत्येकत्वावधारणं प्रजोत्पत्तौ[प्रजापतौ] नोपपद्यते, अतश्च परमात्मोच्यत इत्याशङ्क्याह— **एकत्वेति**। एवमवधारणसंभवेऽपीक्षितृत्वाभावात् परमात्मोच्यत इतिवत् तत्राह[इति चेत् तत्राह]— **ईक्षणमिति**। परमात्मन्यसंभावितविशेषदर्शनादपि हिरण्यगर्भ आत्मशब्देनोच्यत इत्याह— **अपि चेति**।

परमात्मन एव जगत्स्रष्टृत्वं सर्गात्प्रागेकत्वमात्मपदत्वञ्च मुख्यम्। तस्मादसत्यामनुपपत्तावन्यत्र न व्याख्येयम्। लोकसृष्ट्यभिधानेऽपि महाभूतसृष्टेः पूर्वसिद्धत्वस्य कल्पयितुं शक्यत्वादित्यभिप्रेत्य परिहरति— **एवमात्मेति**(?)। इतरवदिति दृष्टान्तस्य व्याख्यानान्तरं दर्शयति— **यथा चेति**। [१]आत्मशब्दात्परमेश्वरेऽवगम्यमाने लोकस्रष्टृत्वलिङ्गेन कथमपरब्रह्मपरिग्रह इत्याशङ्क्य तस्यान्यथा-सिद्धत्वाल्लिङ्गस्यैव प्राबल्यमित्यभिप्रेत्यान्यथासिद्धि.....ति चेत्, तत्राह— **यत्र त्विति**। यत्र त्वात्मैवेदमग्र इत्यादिबाधकम्,

### *न्यायनिर्णयः*

लिङ्गस्यैव प्राधान्यमिति वक्तुं तयोरन्यथासिद्धिमाह— **आत्मेति**। ब्रह्मलोक इत्यादौ ब्रह्मशब्दस्यापि तस्मिन् प्रयोगोऽस्तीति वक्तुमपीत्युक्तम्। एक एवेत्येकत्वावधारणस्य प्रजापतावयोगात् परमात्मैवात्रात्मशब्दः स्यादित्याशङ्क्याह— **एकत्वेति**। अवधारणस्यैवं संभवेऽपि तस्मिन्नीक्षितृत्वायोगात् परस्यैवात्रोक्तिरित्याशङ्क्याह— **ईक्षणमिति**। परस्मिन्नसंभावितविशेषदृष्टेरपि सूत्रस्यैवात्मशब्दतेत्याह— **अपि चेति**। ईश्वरो हि करणाधिष्ठात्रीरग्न्यादिदेवता वागादिभिः सह सृष्टवांस्ताश्च तं प्रति भोगार्थं शरीरमयाचन्त। स च ताभ्यो गां गोशरीरमश्वशरीरं पुरुषशरीरं च यथाकर्म यथाश्रुतमानीतवान्, ततस्ता देवताः सोऽब्रवीद् यथायतनं यथाचक्षुरादिस्थानमस्मिन् देहे प्रविशतेति, तदाह— **ताभ्य इति**। उक्तश्रुत्यर्थं संगृह्णाति— **एवमिति**। इहेति स्रष्टुरात्मनो निर्देशः। लिङ्गप्रकरणसिद्धमुपसंहरति— **तस्मादिति**।

सिद्धान्तसूत्रमवतार्य प्रतिज्ञां व्याकरोति— **एवमिति**। इहेत्युदाहरणोक्तिः। दृष्टान्तमादाय व्याचष्टे— **इतरवदिति**। तस्य व्याख्यान्तरमाह— **यथा चेति**। परस्यैव विश्वस्रष्टृत्वं प्रागेकत्वमात्मत्वं च मुख्यम्। तदसत्यामनुपपत्तौ नान्यत्रानुमेयम्। लोकसृष्टिवचनेऽपि महाभूतसर्गस्य पूर्वसिद्धतया वक्तुं शक्यत्वादिति मत्वा दार्ष्टान्तिकमाह— **तथेति**। आत्मब्रह्मशब्दयोरन्यथासिद्धिं प्रत्याह—

१. इयं पङ्क्तिः ईषद्भेदेन पूर्वपक्षे दृश्यते। द्र.पृ. ९४१। अत्र तु अनन्विता भाति।

**१।४।१) इत्येवमादौ 'पुरुषविधः' इत्येवमादि विशेषणान्तरं श्रूयते, भवेत् तत्र विशेषवत आत्मनो ग्रहणम्। अत्र पुनः परमात्मग्रहणानुगुणमेव विशेषणमप्युत्तरमुपलभ्यते 'स ईक्षत लोकान्नु सृजा इति' 'स इमाल्ँल्लोकानसृजत' (ऐ.उ.१।१,२) इत्येवमादि। तस्मात् तस्यैव ग्रहणमिति न्याय्यम्।।१६।।**

## अन्वयादिति चेत् स्यादवधारणात्।।१७।।

**वाक्यान्वयदर्शनान्न परमात्मग्रहणमिति पुनर्यदुक्तं तत् परिहर्तव्यमिति। अत्रोच्यते– स्यादवधारणादिति। भवेदुपपन्नं परमात्मनो ग्रहणम्। कस्मात्? अवधारणात्। परमात्मग्रहणे हि प्रागुत्पत्तेरात्मैकत्वावधारण-माञ्जसमवकल्पते। अन्यथा ह्यनाञ्जसं तत् परिकल्प्येत। लोकसृष्टिवचनं तु श्रुत्यन्तरप्रसिद्धमहाभूतसृष्ट्यनन्तरमिति योजयिष्यामि। यथा 'तत्तेजोऽसृजत' (छा.उ. ६।२।३) इत्येतच्छ्रुत्यन्तरप्रसिद्धवियद्वायुसृष्ट्यनन्तर-मित्ययूयुजमेवमिहापि। श्रुत्यन्तरप्रसिद्धो हि समानविषयो विशेषः श्रुत्यन्तरेषूपसंहर्तव्यो भवति। योऽप्ययं व्यापारविशेषानुगमः 'ताभ्यो गामानयदि'त्येवमादिः, सोऽपि विवक्षितार्थावधारणानुगुण्येनैव ग्रहीतव्यः। न ह्ययं सकलः कथाप्रबन्धो विवक्षित इति शक्यते वक्तुम्, तत्प्रतिपत्तौ पुरुषार्थाभावात्। ब्रह्मात्मत्वं त्विह विवक्षितम्। तथा हि–अम्भःप्रभृतीनां लोकानां लोकपालानां चाग्न्यादीनां सृष्टिं शिष्ट्वा करणानि करणायतनं**

### *प्रकटार्थविवरणम्*

**अन्वयादिति चेत् स्यादवधारणात्।** पूर्वपक्षबीजमनूद्य दूषयति— **अन्वयादिति चेदित्यादिना।** 'एक एवाग्र आसीत्' 'एतया द्वारा प्रापद्यत' इति चावधारणप्रवेशादिलिङ्गैः 'प्रज्ञानं ब्रह्म' इति सामानाधिकरण्यश्रुतेश्च सूत्रात्मविषयलोकसृष्ट्यादिलिङ्गानां बाध इत्यर्थः।

### *भाष्यभावप्रकाशिका*

तत्रान्यपरत्वमित्यर्थः। इह तु न बाधकमस्ति, प्रत्युत साधकमेवेत्याह— **अत्र पुनरिति।** ईक्षणपूर्विकायाः सृष्टेः परमात्मनि प्रसिद्धत्वादित्यर्थः।

लोकस्रष्टृत्वलिङ्गस्य बाधकमाह— **लोकेति।** तत्र दृष्टान्तमाह— **यथेति।** व्यापारविशेषानुगमस्य व्यापकमाह— **योऽपीति।** प्रयोजनशून्ये वेदस्य प्रमाण्यायोगात् ब्रह्मपरत्व एव प्रयोजनसंभवात् तदेव विवक्षितमित्याह— **न ह्ययमिति।** अपि चोपक्रमाद्यालोचनयाऽपि ब्रह्मपरत्वमस्यावसीयत इत्याह— **तथा ह्यम्भ इति।**

### *न्यायनिर्णयः*

**यत्रेति।** सति बाधकेऽन्यार्थत्वेऽपि प्रकृते तदभावात् प्रत्युत साधकस्यैव सत्त्वात् परविषयत्वमेवेत्याह— **अत्रेति।** ईक्षणपूर्वकसर्गस्य परस्मिन् प्रसिद्धत्वे फलितमाह— **तस्मादिति।**१६।।

पूर्वपक्षबीजमनूद्य दूषयति— **अन्वयादिति।** अनुवादं विभजते— **वाक्येति।** परिहारमवतारयति— **अत्रेति।** स्यादिति पदं पूरयित्वा व्याकरोति— **भवेदिति।** तत्र प्रश्नपूर्वकं हेतुमाह— **कस्मादिति।** अवधारणं विवृणोति— **परमात्मेति।** सूत्रग्रहेऽपि स्वविकारापेक्षया तदुक्तमित्याशङ्क्याह— **आञ्जसमिति।** तदेव व्यतिरेकतः स्फोरयति— **अन्यथेति।** यच्च लोकस्रष्टृत्वलिङ्गादपरग्रहणं, तत्राह— **लोकेति।** श्रुत्यन्तरं तैत्तिरीयादिश्रुतिः। तत्र दृष्टान्तमाह— **यथेति।** इहापीत्यैतरेयकोक्तिः। श्रुत्यन्तरप्रसिद्धा महाभूत-सृष्टिरत्रोपसंहर्तुमशक्या वाक्यभेदादित्याशङ्क्याह— **श्रुत्यन्तरेति।** न हि तैत्तिरीयादिवाक्यमैतरेयवाक्यं च भिन्नं सृष्ट्यनुवादेनाविकृत-ब्रह्मविषयत्वाविशेषादित्यर्थः। यत्तु व्यापारवत्स्वात्मसु प्रसिद्धव्यापारविशेषस्यात्रानुगमाद्विशेषवानेवायमात्मेति, तत्राह— **योऽपीति।** किंचाफले भेदे वेदस्याप्रामाण्याद् ब्रह्मपरत्वे च फलसंभवात् तदेव विवक्षितमित्याह— **न हीति।** पौर्वापर्यालोचनयाऽपि ब्रह्मपरत्वमेवास्य संदर्भस्येत्याह— **तथाहीति।** स परमेश्वर एतमेव सीमानं मूर्ध्नः केशविभागावसानं विदार्य च्छिद्रं कृत्वैतया

**च शरीरमुपदिश्य स एव स्रष्टा 'कथं न्विदं मदृते स्यात्' (ऐ.उ. ३।१।१) इति वीक्ष्येदं शरीरं प्रविवेशेति दर्शयति– 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' (ऐ.उ. ३।१२) इति। पुनश्च 'यदि वाचाऽभिव्याहृतं यदि प्राणेनाभिप्राणितम्' (ऐ.उ. ३।११) इत्येवमादिना करणव्यापारविवेचनपूर्वकम् 'अथ कोऽहम्' (ऐ.उ. ३।११) इति वीक्ष्य 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्' (ऐ.उ. ३।१३) इति ब्रह्मात्मत्व-दर्शनमवधारयति। तथोपरिष्टात् 'एष ब्रह्मैष इन्द्रः' (ऐ.उ. ५।३) इत्यादिना समस्तं भेदजातं सह महाभूतैरनुक्रम्य 'सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' (ऐ.उ. ५।३) इति ब्रह्मात्मत्वदर्शनमेवावधारयति। तस्मादिहात्मगृहीतिरित्यनपवादम्।**

**अपरा योजना– 'आत्मगृहीतिरितरवदुत्तरात्'। वाजसनेयके 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ.उ. ४।३।७) इत्यात्मशब्देनोपक्रम्य तस्यैव सर्वसङ्गविनिर्मुक्तत्वप्रतिपादनेन ब्रह्मात्मतामवधारयति। तथा ह्युपसंहरति– 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ.उ. ४।४।२५) इति। छान्दोग्ये तु 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा.उ. ६।२।१) इत्यन्तरेणैवात्मशब्दमुपक्रम्योदर्के 'स आत्मा तत्त्वमसि' (छा.उ. ६।८।७) इति तादात्म्यमुपदिशति। तत्र संशयः– तुल्यार्थत्वं किमनयोराम्नानयोः स्यादतुल्यार्थत्वं वेति। अतुल्यार्थत्वमिति तावत् प्राप्तम्,**

### *प्रकटार्थविवरणम्*

प्रकारान्तरेणाधिकरणं व्याख्यातुमुपक्रमते— **अपरा योजनेति**। इदं तदा विषयवाक्यमित्याह— **वाजसनेयक इति**। उपक्रमोपसंहारविगानात् अर्थैक्यप्रतिभानाच्च किं भिन्ना विद्या, किं वैकैवेति संशयमाह— **तत्रेति**। वाजसनेयके स्यादात्मविद्या उपक्रमात्, न छान्दोग्ये; तत्र तु तत्संपत्तिमात्रमिति पूर्वपक्षमाह— **अतुल्यार्थत्वमिति**। आम्नानवैषम्येऽपि विद्यैक्यप्रपञ्चार्थं

### *भाष्यभावप्रकाशिका*

आम्नानवैषम्यमाह— **वाजसनेयिन इत्यादिना**।

### *न्यायनिर्णयः*

द्वारा ब्रह्मरन्ध्रसंज्ञया शरीरं प्रापद्यत प्राप्तवानिति यावत्। इतश्च ब्रह्मपरत्वमेवास्येत्याह— **पुनश्चेति**। स शरीरे प्रविष्टः परमात्मा तमेव शरीरान्तर्गतं परमात्मानं ब्रह्म ततममेकस्तकारो लुप्तो मन्तव्यस्तततमं व्याप्ततमं यद् ब्रह्म तद्रूपेणैतमात्मानमपश्यदित्यर्थः। इतोऽपि वाक्यस्यास्ति ब्रह्मपरतेत्याह— **तथेति**। यः शरीरे प्रविष्टः परमेश्वर एष एव परब्रह्म परमात्मा प्रजापतिः सूत्रात्माऽप्येष एव। प्रज्ञा ब्रह्मचैतन्यं नीयतेऽनेनेति नेत्रं नियन्तृ यस्य तत् प्रज्ञानेत्रम्। प्रज्ञाने तस्मिन्नेवाधिष्ठाने प्रतिष्ठितं, लोकोऽपि भूरादिः प्रज्ञानेत्रः प्रज्ञानियन्तृकः। सैव प्रज्ञा सर्वस्य लोकस्य प्रतिष्ठाऽधिष्ठानम्। तच्च प्रज्ञानं ब्रह्म। एवमवधारणमनेकधा व्याख्याय प्रकृतमुपसंहरति— **तस्मादिति**।

पूर्ववर्णके विद्यैक्यगुणोपसंहारनिरूपणास्पाष्ट्यात्र साक्षात्पादसंगतिरिति तदर्थं वर्णकान्तरमाह— **अपरेति**। पूर्वत्र वाक्यैक्यबलादर्थादिपरत्वं परित्यज्य विद्यैक्यमुक्तम्। इदानीं भिन्नार्थोपक्रमेण वाक्यभेदशङ्कायामाह— **आत्मेति**। श्रुतिद्वयगतं वाक्यमुदाहरति— **वाजसनेयक इति**। उदाहृतवाक्यं त्वमर्थं तदर्थपर्यन्तं लक्षयतीत्यत्र गमकमाह— **तथा हीति**। तदर्थं त्वमर्थान्तं लक्षयद् वाक्यान्तरमाह— **छान्दोग्ये त्विति**। सच्छब्दस्यात्मानात्मार्थत्वानिर्णयेन वाक्यद्वये संशयमाह— **तत्रेति**। अर्थभेदाद्विद्याभेदोक्त्या वाक्यार्थधीहेतोरेवात्रोक्तिरिति पादादिसंगतिः। पूर्वपक्षे विद्याभेदाद् गुणानुपसंहारः। सिद्धान्ते तदभेदात्तदुपसंहार इति मत्वाऽर्थभेदाद्

**अतुल्यत्वादाम्नानयोः। न ह्याम्नानवैषम्ये सत्यर्थसाम्यं युक्तं प्रतिपत्तुमाम्नानतन्त्रत्वादर्थपरिग्रहस्य। वाजसनेयके चात्मशब्दोपक्रमादात्मतत्त्वोपदेश इति गम्यते। छान्दोग्ये तूपक्रमविपर्ययादुपदेशविपर्ययः। ननु छन्दोगानामप्यस्त्युदर्के तादात्म्योपदेश इत्युक्तम्। सत्यमुक्तम्। उपक्रमतन्त्रत्वादुपसंहारस्य तादात्म्यसंपत्तिः सेति मन्यते। तथा प्राप्तेऽभिधीयते– आत्मगृहीतिः 'सदेव सोम्येदमग्र आसीत्' (छा.उ. ६।२।१) इत्यत्र छन्दोगानामपि भवितुमर्हतीतरवत्। यथा 'कतम आत्मा' (बृ.उ. ४।३।७) इत्यत्र वाजसनेयिनामात्मगृहीतिस्तथैव। कस्मात्? उत्तरात् तादात्म्योपदेशात्।**

**'अन्वयादिति चेत् स्यादवधारणात्'। यदुक्तमुपक्रमान्वयादुपक्रमे चात्मशब्दश्रवणाभावान्नात्मगृहीतिरिति, तस्य कः परिहार इति चेत्, सोऽभिधीयते–स्यादवधारणादिति। भवेदुपपन्नेहात्मगृहीतिः, अवधारणात्। तथाहि– 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छा.उ. ६।१।३) इत्येकविज्ञानेन सर्वविज्ञानमवधार्य तत्संपिपादयिषया 'सदेव-' इत्याह। तच्चात्मगृहीतौ सत्यां संपद्यते। अन्यथा हि योऽयं मुख्य आत्मा स न विज्ञात इति नैव सर्वविज्ञानं संपद्येत। तथा प्रागुत्पत्तेरेकतावधारणं, जीवस्य चात्मशब्देन परामर्शः, स्वापावस्थायां च तत्स्वभावसंपत्तिकथनं, परिचोदनापूर्वकं च पुनःपुनः 'तत्त्वमसि' (छा.उ. ६।८।७)**

***प्रकटार्थविवरणम्***

पूर्वपक्षोपक्रममात्रम्। सिद्धान्तस्तु— वाक्यशेषे स्पष्टात्मोपदेशादुपक्रमेऽपि सद्वस्त्वात्मभूतमेवोक्तमिति लक्ष्यमाणत्वंपदार्थप्रतिपादकेन वाजसनेयकवाक्येन लक्ष्यमाणतत्पदार्थप्रतिपादकम् 'सदेव' इति वाक्यमभिन्नार्थं लक्ष्यस्वरूपस्यैकरसत्वात्; अत एकैव विद्येति। इत्यष्टममात्मगृहीत्यधिकरणम्।।

***भाष्यभावप्रकाशिका***

अवधारणादित्यस्यार्थान्तरमाह— **तथा प्रागुत्पत्तेरिति**। जीवस्य चात्मशब्देन परामर्शः 'अनेन जीवेनात्मने'ति। 'सति संपद्य'ति तत्स्वभावसंपत्तिः। 'भूय एव मा भगवान्विज्ञापयात्वि'ति परिचोदना। तच्छब्दस्य सत्तासामान्यवाचकत्वादात्मानात्मसाधारण्यात्

***न्यायनिर्णयः***

विद्याभेदं पूर्वपक्षमाह— **अतुल्येति**। आम्नानवैषम्येऽपि किमित्यर्थैक्याद्विद्यैक्यं न स्यात्, तत्राह— **न हीति**। तदेव विशदयति— **वाजसनेयके चेति**। छान्दोग्येऽपि वाक्यशेषादात्मार्थत्वसिद्धौ कथमाम्नानवैषम्यं, कथंतरामर्थभेदः, कथंतमां विद्यानानात्वमिति शङ्कते— **नन्विति**। 'स आत्मा तत्त्वमसि' इति तादात्म्योपदेशमङ्गीकरोति— **सत्यमिति**। तर्हि तदनुसारेणोपक्रमोऽपि नीयतामित्याशङ्क्याह— **उपक्रमेति**। स हि संदिग्धार्थो निश्चितार्थोपसंहारेण नीयते। प्रकृते तु तस्यासंदिग्धार्थत्वात् तदनुसारिण्युपसंहारे प्रतिमायां विष्णुदृष्टिवदात्मनि ब्रह्मदृष्टिरेष्टव्येत्यर्थः। वाजसनेयिवाक्यं ब्रह्मात्मविद्यार्थम्, छान्दोग्यवाक्यं त्वात्मनि ब्रह्मदृष्ट्यर्थमिति विद्याभेदमुपसंहरति— **इति मन्यत इति**। अतुल्यार्थतया विद्याभेदमनूद्य सिद्धान्तमाह— **तथेति**।

तादात्म्योपदेशस्य गत्यन्तरमनूद्य दूषयति— **अन्वयादिति**। तत्रानुवादं विभजते— **यदिति**। **उपक्रमान्वयात्** तत्तन्त्रत्वादुपसंहारस्येति यावत्। उपक्रमोऽपि तर्हि 'सदेवे'त्यवधारणादात्मानमेव गोचरयतीत्याशङ्क्याह— **उपक्रम इति**। तस्मादुपसंहारेऽपि न परमात्मतादात्म्यमात्मनो गृह्यते। न हि सच्छब्देनोपक्रमस्थेनात्मोच्यते, तस्य तस्मिन्नप्रसिद्धत्वात्। तथा च सतोऽनात्मनस्तादात्म्यसंपत्तिरात्मनि तत्त्वमसीति विवक्षितेत्याह— **नात्मेति**। परिहारमादत्ते— **स इति**। तत्र प्रतिज्ञां व्याचष्टे— **भवेदिति**। अवधारणादिति हेतुं विवृणोति— **तथा हीति**। एकविज्ञानेन सर्वविज्ञानं सच्छब्देनानात्मग्रहेऽपि सतः सर्वात्मत्वादविरुद्धमित्याशङ्क्याह— **तच्चेति**। उक्तमेव व्यतिरेकेण साधयति— **अन्यथेति**। प्रकारान्तरेण हेतुं व्याचष्टे— **तथेति**। 'एकमेवाद्वितीयमि'त्येकत्वावधारणम्, 'अनेन जीवेनात्मने'ति जीवस्यात्मशब्देन परामर्शः, 'सति संपद्य'त्यादि तत्स्वभावापत्तिवचनं, 'भूय एव मा भगवान्विज्ञापयत्वि'ति

**इत्यवधारणमिति च सर्वमेतत् तादात्म्यप्रतिपादनायामेवावकल्पते, न तादात्म्यसंपादनायाम्। न चात्रोपक्रमतन्त्रत्वोपन्यासो न्याय्यः। न ह्युपक्रम आत्मत्वसंकीर्तनमनात्मत्वसंकीर्तनं वाऽस्ति। सामान्योपक्रमश्च न वाक्यशेषगतेन विशेषेण विरुध्यते, विशेषाकाङ्क्षित्वात् सामान्यस्य। सच्छब्दार्थोऽपि च पर्यालोच्यमानो न मुख्यादात्मनोऽन्यः संभवति, अतोऽन्यस्य वस्तुजातस्यारम्भणशब्दादिभ्योऽनृतत्वोपपत्तेः। आम्नानवैषम्यमपि नावश्यमर्थवैषम्यमावहति। 'आहर पात्रं' 'पात्रमाहरे'त्येवमादिष्वर्थसाम्येऽपि तद्दर्शनात्। तस्मादेवंजातीयकेषु वाक्येषु प्रतिपादनप्रकारभेदेऽपि प्रतिपाद्यार्थभेद इति सिद्धम्।।१७।।**

।। इत्यष्टममात्मगृहीत्यधिकरणम् ।।

**९।। कार्याख्यानाधिकरणम्।। सू. १८।।**

## कार्याख्यानादपूर्वम्।।१८।।

**छन्दोगा वाजसनेयिनश्च प्राणसंवादे श्वादिमर्यादं प्राणस्यान्नमाम्नाय तस्यैवापो वास आमनन्ति। अनन्तरं**

### *शारीरकन्यायसंग्रहः*

**कार्याख्यानादपूर्वम्।।१८।।** आचमनानग्नताचिन्तनयोः एकवाक्यताप्रतीतावपि 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यः' इतिवत् अपूर्वत्वात् वाक्यभेदेनाप्युभयविधाने प्राप्ते सामान्यविषयस्मार्ताचमनस्य 'तद्विद्वांस आचामन्ति' इति प्राणविद्याविशेषविषयाचमनस्य मूलत्वानुपपत्तेः विदुषोऽपि सामान्यप्राप्ताचमनस्यानुवादेन आचमनीयास्वप्सु वासश्चिन्तनमेव विधीयते, प्रसिद्धानुवादेन अप्रसिद्धं विधीयते इति न्यायेन इत्युक्तम्।

### *भाष्यभावप्रकाशिका*

विशेषाकाङ्क्षायां सदात्मेत्युपसंहाराविरोधेन निर्णीयते, सन्दिग्धार्थेनोपक्रमेणोपसंहारस्य निर्णेतुमशक्यत्वादुपक्रमानुरोधन्यायस्य निर्णीतार्थोपक्रमविषयत्वादित्याह— **न ह्युपक्रम इति**। आत्मव्यतिरिक्तस्य सर्वस्यानिर्वचनीयत्वात् तच्छब्दस्यार्थत्वानुपपत्तेरात्मैव तच्छब्दार्थः। उपक्रमभेदोऽप्यसिद्ध इत्याह— **सच्छब्दार्थ इति**। कथमसंभव इति, तत्राह— **अतोऽन्यस्येति**। आम्नानवैषम्येऽपि न दोष इत्याह— **आम्नानेति**। इत्यष्टममात्मगृहीत्यधिकरणम्।

### *न्यायनिर्णयः*

परिचोदना। हेतुजातस्योक्तस्य फलमाह— **इति च सर्वमिति**। यत्तूपक्रमतन्त्रेणोपसंहारेण भाव्यमिति, तत्राह— **न चेति**। **अत्र** च्छान्दोग्ये 'स आत्मे'त्यादेरुपसंहारस्येति यावत्। तत्र हेतुः— **न हीति**। उपसंहारानुसारेणापि तर्हि नोपक्रमो नेयस्तयोर्भिन्नविषयत्वात्, तत्राह— **सामान्येति**। सच्छब्दस्य सत्तासामान्यवाचित्वेनात्मानात्मसाधारण्याद् विशेषाकाङ्क्षायामुपसंहारानुसारेणात्मैव तदर्थो निर्णीयते। संदिग्धार्थेनोपक्रमेणोपसंहारस्यानिर्णयादुपक्रमानुरोधन्यायस्यासंदिग्धोपक्रमविषयत्वादित्यर्थः। उपक्रमभेदमुपेत्य श्रुतिद्वयेऽपि वेद्यैक्येन विद्यैक्यमुक्तम्। सम्प्रत्युपक्रमभेदोऽपि नास्तीत्याह— **सच्छब्देति**। आत्मातिरिक्तस्य सर्वस्यानिर्वाच्यत्वादनात्मनः [१]सच्छब्दार्थासिद्धेरात्मन एव तदर्थत्वान्नोपक्रमभेदोऽस्तीत्यर्थः। यत्त्वाम्नानवैषम्ये सत्यर्थसाम्यमयुक्तमिति, तत्राह— **आम्नानेति**। तद्वैषम्यस्यार्थभेदेनानवश्यंभावे फलितमाह— **तस्मादिति**। **एवंजातीयकेषु** 'योऽयं विज्ञानमयः' 'सदेव सोम्येद'मित्यादिषु। **प्रतिपादनप्रकारभेदः** समाम्नानविशेषः। वाजसनेयके वाक्यार्थान्वयित्वमर्थस्य तदर्थपर्यन्तस्य, च्छान्दोग्ये तदर्थस्य त्वमर्थपर्यन्तस्य लक्ष्यतया वाक्यार्थभेदाभावादेकैवोभयत्रापि विद्येत्याह— **प्रतिपाद्येति**।।१७।। इत्यष्टममात्मगृहीत्यधिकरणम्।।

संदिग्धस्य सदुपक्रमस्य शेषान्निर्णयवदाचामन्तीति वर्तमानापदेशस्य विधित्वसंदेहे शेषात् 'अशिष्यन्नाचामेदि'त्यतो विधिपरत्वं निर्णेयमित्याशङ्क्याह— **कार्येति**। विषयं वक्तुमविगीतमाम्नानं दर्शयति— **छन्दोगा इति**। 'यदिदं किंचाश्वभ्य आ कृमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्न'मित्युक्त्वा तस्यैव प्राणस्यापो वासो वदन्तीति यावत्। छन्दोगानामविशेषाम्नानमुक्त्वा विशेषाम्नानमाह—

---

१. 'सच्छब्दार्थत्वासिद्धेः' इति पाठः स्यात्।

**च छन्दोगा आमनन्ति– 'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति' (छा.उ. ५।२।२) इति। वाजसनेयिनस्त्वामनन्ति– 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते' (बृ.उ.मा. ६।२।१५) इति। तत्र चाचमनमग्नताचिन्तनं च प्राणस्य प्रतीयते। तत् किमुभयमपि विधीयत उताऽऽचमन-मेवोतानग्नताचिन्तनमेवेति विचार्यते। किं तावत् प्राप्तम्? उभयमपि विधीयत इति। कुतः? उभयस्याप्यव-**

### *प्रकटार्थविवरणम्*

**कार्याख्यानादपूर्वम्**। विषयं निर्दिशति— **छन्दोगा इति**। 'यदिदं किंचा श्वभ्य आ कृमिभ्य आ शकुनिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नम्' इत्याम्नाय तस्यैव प्राणस्य अपो वस्त्रं समामनन्ति। विशेषाम्नानं विभागेनाह— **अनन्तरं चेति**। अशिष्यन्तः अशनं करिष्यन्तः एतत् कुर्वन्ति विद्वांसः। किम्? भोजनात्पूर्वमूर्ध्वं चाद्भिः प्राणं परिदधति परिधापयन्तीत्यर्थः। एतमेव अनं प्राणम्; तदनग्नं कुर्वन्तो मन्यन्ते विद्वांसो यस्मात् तस्मादिदानीन्तनोऽपि कुर्यादित्यर्थः। आपातप्रतिपन्नार्थमाह— **तत्र चेति**। उभयोरप्यपूर्वत्वात् संशयमाह— **तत्किमिति**। पूर्वं त्वमर्थस्य प्रसिद्धत्वात् तदुद्देशेन तदर्थभावो विधेय इत्येकरूपैवोभयत्र

### *भाष्यभावप्रकाशिका*

**कार्याख्यानादपूर्वम्**। विषयमाह— **छन्दोगा इति**। अनिति चेष्टत इत्यनः प्राणः। तं प्राणमनग्नं कुर्वन्तो मन्यन्ते, मननं चिन्तनं ध्यानं कुर्वन्तीति यावत्। प्राणं प्रत्यपां वासस्संकल्पनानन्तरं वाजसनेयिनामाम्नानप्रकारमाह— **वाजसनेयिनस्त्विति**। मन्यन्त इत्येतदन्तः काण्वानां पाठः, अनग्नं कुरुत इत्येतदन्तो माध्यन्दिनानां पाठ इत्येवं पाठविभागो द्रष्टव्यः। संशयमाह— **तत्किमिति**। नन्ववगम्यमानत्वमात्रेण न विधेयत्वमतिप्रसङ्गादिति, तत्राह— **उभयमपीति**। न चापूर्वत्वमसिद्धम्, स्मृत्याचारप्रसिद्धत्वादिति शङ्कनीयम्। स्मृत्याचारयोरेतद्वाक्यमूलत्वोपपत्तेः। न च भिन्नविषयत्वादनयोः श्रुतिस्मृत्योर्मूलमूलिभावासंभवादाचमनस्यान्यत एव सिद्धत्वादिह विधानमयुक्तमिति शङ्कनीयम्। सामान्यतः [१]प्रसिद्धानृतवदनप्रतिषेधस्य क्रतुसंबन्धितया विधानवत् प्रसिद्धस्याचमनस्य प्राणविद्यासंबन्धित्वेन विधानोपपत्तेः। न च वाक्यभेदप्रसङ्गो दोषायोपरिधारणविधानवदुपपत्तेरित्याशयः। ननु सत्यां गतौ वाक्यभेदो

### *न्यायनिर्णयः*

**अनन्तरं चेति**। तस्मादपां प्राणं प्रति वासोरूपत्वादिति यावत्। अशिष्यन्तः श्रोत्रियाः सन्तोऽशनं कुर्वन्तस्तावदेतत् कुर्वन्ति, किं तत्? भोजनात् पूर्वमूर्ध्वं चाऽद्भिः प्राणं परिदधति परिधापयन्त्याच्छादयन्तीत्यर्थः। शाखान्तरेऽपि विशेषाम्नानं कथयति— **वाजसनेयिनस्त्विति**। यस्मात् प्राणस्यापो वासस्तस्मादित्यस्मिन्नर्थे तच्छब्दः। विद्वांसः प्राणविद्यावन्तः, तेषां यथेष्टचेष्टानिषेधार्थं श्रोत्रियपदम्। एतमेवानं प्राणं तत् तेनाचमनेनानग्नं वाससा परिहितं कुर्वन्तो मन्यन्ते चिन्तयन्तीत्यर्थः। काण्वानामाम्नानविशेषमुक्त्वा माध्यंदिनानामाह— **तस्मादिति**। यस्मात् पूर्वे प्राणविदः स्वयमाचामन्तः प्राणमनग्नं वाससा परिहितं कुर्वन्तो मन्यन्ते तस्मादिदानीन्तनोऽपि प्राणविदेवं कुर्यादित्यर्थः। पाठत्रयेऽप्यापातिकमर्थमाह— **तत्र चेति**। उभयोरपूर्वत्वमुपेत्याह— **तदिति**। किंवा वाक्यभेदप्रसङ्गभयादन्यतरदेव विधेयमिति कल्पान्तरं द्रष्टव्यम्। द्वितीयमपि विशेषानवधारणाद् द्वेधा विकल्पयति— **उतेति**। तत्रापि प्रथमश्रुतत्वमालोच्य प्रथमो विकल्पो, दृष्टिविषयसंपादनेनाचमनस्यानग्नताचिन्तनशेषत्वं मत्वा द्वितीय इति भेदः। अत्र पाठत्रयेऽपि प्राणविद्याङ्गमनग्नताचिन्तनमेकमेव विधेयमिति चिन्ताया वाक्यार्थज्ञानसाधनगामित्वात् पादादिसंगतिः। पूर्वपक्षे द्वयोर्विधेयत्वाद्वाक्यभेदः, अन्यतरविधावप्याचमनस्यैव विधेयत्वाद्विशेषविषयस्य तस्यान्यत्रोपसंहारः। सिद्धान्ते त्वनग्नताचिन्तनस्यैव विधेयत्वाद्वाक्यैक्यादाचमनविशेषस्याविधेयस्य नोपसंहृतिरित्यङ्गीकृत्य विमृश्य पूर्वपक्षमाह— **किमिति**। गौरवादुभयविधानमयुक्तमिति शङ्कते— **कुत इति**। कर्तव्यत्वेन द्वयोरपि तात्पर्यगम्यत्वान्न गौरवमित्याह— **उभयस्येति**। गम्यमानत्वमात्रेण तात्पर्यगम्यतया विधेयत्वमतिप्रसक्तमित्याशङ्क्याह— **उभयमिति**।

---

१. दर्शपूर्णमासप्रकरणे 'नानृतं वदेत्' इति क्रत्वर्थतयाऽनृतवदननिषेधः। सामान्यतस्तु तन्निषेधो विद्यत एव। तेन क्रतुमध्ये पुरुषार्थानृतवदने पुरुषस्य प्रत्यवायः, क्रत्वर्थानृतवदने तु क्रतुवैगुण्यमपि। द्र.पू.मी. ३-४-४।

**गम्यमानत्वात्। उभयमपि चैतदपूर्वत्वाद् विध्यर्हम्। अथवाऽऽचमनमेव विधीयते; विस्पष्टा हि तस्मिन् विधिविभक्तिः—तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदिति। तस्यैव स्तुत्यर्थमनग्नतासंकीर्तनमिति।**

**एवं प्राप्ते ब्रूमः— नाचमनस्य विधेयत्वमुपपद्यते, कार्याख्यानात्। प्राप्तमेव हीदं कार्यत्वेनाचमनं प्रायत्यार्थं स्मृतिप्रसिद्धमन्वाख्यायते। नन्वियं श्रुतिस्तस्याः स्मृतेर्मूलं स्यात्। नेत्युच्यते; विषयनानात्वात्। सामान्यविषया हि स्मृतिः पुरुषमात्रसंबद्धं प्रायत्यार्थमाचमनं प्रापयति। श्रुतिस्तु प्राणविद्याप्रकरणपठिता तद्विषयमेवाचमनं विदधती विदध्यात्। न च भिन्नविषययोः श्रुतिस्मृत्योर्मूलमूलिभावोऽवकल्पते। न चेयं**

### *प्रकटार्थविवरणम्*

विद्योक्ता; अत्र तु तस्य न्यायस्याभावादुभयोरपि अपूर्वत्वादुभयमपि विधेयमित्येकः पक्षः। पक्षान्तरमाह— **अथवेति**। पूर्वाधिकरणे यथा सदुपक्रमे वाक्ये वाक्यशेषादात्मगृहीतिः, तथा 'तस्मादेवंविदशिष्यन्नाचामेत्' इति वाक्यशेषात् प्राणविद आचमनान्तरं विधीयत इत्यर्थः। 'अनग्नं कुरुते' इति तु वर्तमानापदेशत्वात् अपूर्वार्थमपि प्ररोचनामात्रम् 'वर्म वा एतद्यज्ञस्य क्रियते' इतिवदित्याह— **तस्यैव त्विति**। एवंविधं महार्हमिदमाचमनान्तरं यदनेन प्राणोऽनग्नो भवतीति स्तुतिः। तस्माद् विधेयमाचमनान्तर-मन्यत्राप्युपसंहर्तव्यमिति पूर्वः पक्षः।

सिद्धान्तस्तु— विदुषः सामान्यप्राप्ताचमनानुवादेन आचमनीयास्वप्सु प्राणवासश्चिन्तनमेव विधीयते, प्रसिद्धानुवादेनाप्रसिद्धं विधीयत इति न्यायेन; तदाह— **नाचमनस्येति**। प्रयतस्य भावः प्रायत्यम् शुद्धत्वम्; तदर्थं स्मृतिविहितमाचमनमनूद्यत इत्युक्तम्; तदाक्षिपति— **नन्वियमिति**। स्मृतेः श्रुतिमूलत्वेन प्रामाण्यादेतच्छ्रुतिमूलैव सा स्मृतिः, न तु स्मृतिसिद्धं श्रुत्याऽनूद्यत इत्यर्थः। भिन्नविषयत्वान्मूलमूलिभावो न संभवतीत्याह— **नेत्युच्यत इति**। आचमनान्तरविधानमङ्गीकृत्य मूलमूलिभावो निरस्तः। इदानीं तदपि नास्तीत्याह— **न चेयं श्रुतिरिति**। विद्वदविद्वत्साधारण्यस्येह प्रत्यभिज्ञायमानत्वादेवोभयविधानपक्षोऽपि निरस्त इत्याह—

### *भाष्यभावप्रकाशिका*

न न्याय्य इत्याशङ्क्य पक्षान्तरमाह पूर्वपक्षी— **अथवाऽऽचमनमिति**। अनग्नतासंकीर्तनं तर्हि किमर्थमित्यत आह— **तस्यैव तत्स्तुत्यर्थमिति**।

सिद्धान्तमाह— **नाचमनस्येति**। विषयनानात्वमेव दर्शयति— **सामान्य(परि)विषया हीति**। तुल्यार्थयोरेव मूलमूलिभावो नातुल्यार्थयोरित्यर्थः। साक्षात्पूर्ववादिनोऽभिप्रायं निराचष्टे— **न चेयमिति। (न चायमिति।)** न चानृतवदननिषेधेऽपि समानमेतदिति

### *न्यायनिर्णयः*

न च स्मृत्याचारसिद्धत्वान्नापूर्वत्वं तयोरेतद्वाक्यमूलत्वात्। न च सामान्यविशेषतया श्रुतिस्मृत्याचाराणां न मूलमूलिता, सामान्यसिद्धानृतवदननिषेधस्य क्रतुगामितया विधिवदाचमनस्यापि प्रसिद्धस्यैव प्राणविद्यायोगित्वेन विधानाद् वाक्यभेदप्रसङ्गस्य चोपरिधारणविधिवददोषत्वादिति भावः। न युक्तो वाक्यभेदः सत्यां गतावित्याशङ्क्य पक्षान्तरमाह— **अथवेति**। तत्र हेतुः— **विस्पष्टेति**। तर्हि किमर्थमनग्नताकीर्तनं, तत्राह— **तस्येति**। महार्हं हीदमाचमनं यदनेन प्राणोऽनग्नः स्यादिति स्तुतिः, तस्माद्विधेयं विशेषविषयमाचमनमन्यत्र चोपसंहर्तव्यमित्यर्थः।

सिद्धान्तयति— **एवमिति**। तत्र हेतुमादाय व्याचष्टे— **कार्येति**। प्रयतस्य प्रयत्नवतो भाव प्रायत्यं शुद्धत्वम्, तदर्थं स्मार्तमाचमनमनूद्यत इत्युक्तमाक्षिपति— **नन्विति**। स्मृतेः श्रुतिमूलत्वेन प्रामाण्यादुक्तश्रुतिमूलैव सा। न च स्मृतिसिद्धोऽर्थः श्रुत्याऽनूद्यते वैपरीत्यापत्तेरित्यर्थः। भिन्नविषयत्वान्मूलमूलिभावो नानयोरित्याह— **नेति**। विषयभेदं विशदयति— **सामान्येति**। भिन्नविषयत्वे फलितमाह— **न चेति**। अर्थैकत्वाभावेऽपि तद्भावेऽतिप्रसङ्गादित्यर्थः। आचमनान्तरविधानमुपेत्य मूलमूलिभावो निरस्तः, सम्प्रति तदपि नास्तीत्याह— **न चेति**। न च स्मार्तचमनस्य श्रुत्याऽनुवादे वैपरीत्यं, 'त्रिराचामेदि'त्यादिश्रुतिसिद्धस्यैव

**श्रुतिः प्राणविद्यासंयोग्यपूर्वमाचमनं विधास्यतीति शक्यमाश्रयितुम्। पूर्वस्यैव पुरुषमात्रसंयोगिन आचमनस्येह प्रत्यभिज्ञायमानत्वात्। अत एव च नोभयविधानम्। उभयविधाने च वाक्यं भिद्येत। तस्मात् प्राप्तमेवाशिशिषतामशितवतां चोभयत आचमनमनूद्य 'एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' (बृ.उ. ६।१।१४) इति प्राणस्यानग्नताकरणसंकल्पोऽनेन वाक्येनाचमनीयास्वप्सु प्राणविद्यासंबन्धित्वेनापूर्व उपदिश्यते। न चायमनग्नतावाद आचमनस्तुत्यर्थ इति न्याय्यम्। आचमनस्याविधेयत्वात्। स्वयं चानग्नतासंकल्पस्य विधेयत्वप्रतीतेः। न चैवं सत्येकस्याचमनस्योभयार्थताऽभ्युपगता भवति प्रायत्यार्थता परिधानार्थता चेति; क्रियान्तरत्वाभ्युपगमात्। क्रियान्तरमेव ह्याचमनं नाम प्रायत्यार्थं पुरुषस्याभ्युपगम्यते। तदीयासु त्वप्सु वासःसंकल्पनं नाम क्रियान्तरमेव परिधानार्थं प्राणस्याभ्युपगम्यत इत्यनवद्यम्।**

### *प्रकटार्थविवरणम्*

**अत एव चेति**। किंच स्वतन्त्रार्थद्वयविधाने वाक्यभेदोऽप्यापद्यत इत्यर्थः। यस्मादुभयविधानपक्षो नोपपद्यते, तस्मादित्युपसंहारः। यच्चोक्तमनग्नतासङ्कीर्तनं स्तुत्यर्थमिति, तत्राह— **न चायमिति**। ननु यच्छुद्धत्वार्थं विनियुक्तमाचमनं तदेव चेत् प्राणपरिधानार्थम्, तदा अन्यशेषस्यान्यशेषत्वं विरुद्धं प्रसज्येतेत्याशङ्क्याह— **न चैवं सतीति**।

### *भाष्यभावप्रकाशिका*

शङ्कनीयम्; पुरुषार्थतया विहितस्यापि क्रत्वर्थतयाऽप्राप्तत्वात् तत्र विधानोपपत्तेः। आचमनस्य तु सकलकर्माङ्गतया विहितस्य प्राणोपासनाकर्माङ्गत्वमपि सिद्धमिति पुनर्विधानमनर्थकमिति भावः। प्रथमपूर्वपक्षं निराचष्टे— **अत एव चेति**। युक्त्यन्तरमाह— **उभयविधाने चेति**। किं तर्हि विधेयमिति, तदाह— **तस्मात्प्राप्तमिति**। **न चायमनग्नतेति**। स्तोतव्यस्य विधेयस्याभावे स्तुतिर्नोपपद्यत इत्यर्थः। किं चान्यतः प्राप्तेनाप्राप्तं विधेयं स्तूयते। न चानग्नतासंकल्पोऽन्यतः प्राप्तो येन स्तावकः स्यात्, नाप्याचमनस्यान्यतोऽप्राप्तत्वं येन विधेयतया स्तोतव्यत्वं भवेदित्याह— **स्वयं चेति**। एकस्य कर्मण एकार्थतैवेत्यौत्सर्गिकत्वात् असति बाधके अनेकार्थत्वं नाभ्युपगन्तव्यम्, अतः संकल्पविधिपरत्वमेवाभ्युपगन्तव्यमित्याह— **न चैवं सतीति**। कथं क्रियान्तरत्वमिति, तदाह— **क्रियान्तरमिति**। विधेयमपि क्रियान्तरमित्याह— **तदीयास्विति**।

### *न्यायनिर्णयः*

सामान्याचमनस्यात्रानुवादादिति मत्वा हेतुमाह— **पूर्वस्येति**। अनृतवादनिषेधस्य पुरुषार्थतया विहितस्यापि क्रत्वर्थेनाप्राप्तस्य विधानमविरुद्धम्, आचमनस्य तु सर्वकर्माङ्गतया विहितस्य प्राणोपास्त्यङ्गत्वमपि सिद्धमिति पुनर्विधानानर्थक्यमिति भावः। आचमनस्य प्रकृते विधानायोगं हेतूकृत्याद्यं पूर्वपक्षं प्रत्याह— **अत एवेति**। युक्त्यन्तरमाह— **उभयेति**। न चोपरिधारणवद् वाक्यनानात्वमदोषः, संभवत्येकवाक्यत्वे तद्भेदस्यानिष्टत्वादिति भावः। तर्हि किमिह विधेयं, तदाह— **तस्मादिति**। अनुवादे हेतुमाह— **प्राप्तमिति**। अनग्नताकृतिसंकल्पे विधित्सिते कृतमनुवादेनेत्याशङ्क्याह— **आचमनीयास्विति**। प्राणविद्याधिकारे चेदनग्नतासंकल्पो विधीयते कथं वाक्यभेदो न स्यादित्याशङ्क्याह— **प्राणेति**। तस्य विधियोग्यत्वं सूचयति— **अपूर्व इति**। एतेनापूर्वमिति पदं व्याख्यातम्। यत्त्वनग्नतासंकीर्तनमाचमनस्तुत्यर्थमिति, तत्राह— **न चेति**। स्तोतव्यविधेयाभावे स्तुतिरयुक्तेत्यर्थः। किंच विधेयमप्राप्तं प्राप्तेन स्तूयते, न चानग्नतासंकल्पोऽन्येन प्राप्तो येन स्तावकः स्यात्, न चान्यतोऽप्राप्तमाचमनं येन विधेयतया स्तोतव्यमित्याह— **स्वयं चेति**। शुद्ध्यर्थं विनियुक्तस्यैवाचमनस्य प्राणपरिधानार्थत्वे विनियुक्तविनियोगविरोधः स्यादित्याशङ्क्याह— **न चेति**। एकस्य कर्मणः स्यादेकार्थतेत्युत्सर्गादसति बाधके तदनेकार्थत्वासिद्धेः संकल्पविधिपरत्वमेव वाक्यस्येत्याह— **क्रियेति**। हेतुमेव साधयति— **क्रियान्तरमिति**। वासःसंकल्पक्रियातो भेदादाचमनस्य क्रियान्तरत्वं, संकल्पस्यापि परिधानार्थस्याचमनादन्यत्वात् तथात्वम्। एवं क्रियाभेदे सत्युत्सर्गस्य भङ्गो नास्तीत्याह— **इत्यनवद्यमिति**।

**अपि च 'यदिदं किंचाश्वभ्य आ कृमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नम्' (बृ.उ. ६।१।१४) इत्यत्र तावन्न सर्वान्नाभ्यवहारश्चोद्यत इति शक्यं वक्तुम्, अशब्दत्वादशक्यत्वाच्च। सर्वं तु प्राणस्यान्नमितीयमन्नदृष्टिश्चोद्यते, तत्साहचर्याच्चापो वास इत्यत्रापि नापामाचमनं चोद्यते; प्रसिद्धास्वेव त्वाचमनीयास्वप्सु परिधानदृष्टिश्चोद्यत इति युक्तम्। न ह्यर्धवैशसं संभवति। अपि चाचामन्तीति वर्तमानापदेशित्वान्नायं शब्दो विधिक्षमः। ननु मन्यन्त इत्यपि समानं वर्तमानापदेशित्वम्। सत्यमेवमेतत्। अवश्यविधेये त्वन्यतरस्मिन् वासःकार्याख्यानादपां वासःसंकल्पनमेवापूर्वं विधीयते, नाचमनम्; पूर्ववद्धि तदित्युपपादितम्। यदप्युक्तं विस्पष्टा चाचमने विधिविभक्तिरिति, तदपि पूर्ववत्त्वेनैवाचमनस्य प्रत्युक्तम्। अत एवाचमनस्याविधित्सितत्वाद् 'एतमेव तदनमनग्नं**

***प्रकटार्थविवरणम्***

यथा पूर्ववाक्येऽन्नदृष्टिर्विधीयते, तथोत्तरवाक्ये वासोदृष्टिविधिरेव, अन्यथा अर्धजरतीयप्रसङ्गादित्याह— **अपि च यदिदमिति**। आचमनविधानाभावे हेत्वन्तरमाह— **अपि चेति**। प्रतिबन्दि[बन्दी]ग्रहेणाशङ्कते— **ननु मन्यन्त इत्यपीति**। मन्यन्त इत्यपि वर्तमानापदेश इत्येतत् सत्यम्; तथाप्युभयमप्यविधेयमिति न शक्यं वक्तुम्, अनुवादमात्रस्य वैयर्थ्यात्। अतोऽन्यतरस्य विधेयत्वं वक्तव्यम्; तच्च कस्येत्याकाङ्क्षायां अनग्नत्वं नाम यद्वासःकार्यं तस्याख्यानात् वासोदृष्टिकरणे तात्पर्यं गम्यत इत्यर्थः। द्वितीयपूर्वपक्षबीजमनूद्य दूषयति— **यदप्युक्तमित्यादिना। पूर्ववत्त्वेनेति**। अपूर्वत्वाभावेन तत्र श्रूयमाणा विधिः [विधि]विभक्तिर्वासःसङ्कल्पनेन

***भाष्यभावप्रकाशिका***

अपि च दृष्टिचोदनासाहचर्यादिहापि दृष्टिचोदनैवाभ्युपगन्तुं युक्ता, न चाचमनचोदनेत्याह— **अपि च यदिदमिति**। नन्वशब्दत्वमभ्यवहरणवदन्नदृष्टेरपि तुल्यमतोऽभ्यवहरणवत् तस्या अपि विधिरयुक्त इत्याशङ्क्य प्रतिपादकशब्द-श्रवणनान्तरीयकतया शब्देन दृष्टेः क्रियमाणत्वादभ्यवहरणस्य तु केवलमध्याहरणीयत्वाद् दृष्टिविधानमेवैतदित्याह— **सर्वन्तु प्राणस्यान्नमिति**। अपि च छान्दोग्ये वाजसनेये चाचामन्तीति प्रायेण वर्तमानापदेशदर्शनान्नाचमनं विधेयमित्याह— **अपि चाचामन्तीति**। तर्हि चिन्तनमप्यविधेयं स्यात् तुल्यदोषत्वादिति शङ्कते— **नन्विति**। तथाप्यप्राप्तत्वात् समिधो यजतीत्यादि-वद् विधिरेवेति प्रकारान्तरेण सूत्रं नियोजनन्दर्शयति[सूत्रयोजनं दर्शयति]— **सत्यमेवमित्यादिना। पूर्ववद्धि तदिति**। अन्यतः प्राप्तमित्यर्थः। **प्रत्युक्तमिति**। जर्तिलयवाग्वा वा जुहुयादितिवद् विधित्वमविवक्षितमित्यर्थः। काण्वानामनग्नकरण-मात्रेण वाक्यपरिसमाप्तित्वादाचमनस्याविधेयतां सूचयतीत्याह— **अत एवेति**। ननु तर्हि पाठवैयर्थ्यपरिहारायान्येषां

***न्यायनिर्णयः***

किंच दृष्टिचोदनासाहचर्यादिहापि सैव युक्ता, नाचमनचोदनेत्याह— **अपि चेति**। सर्वान्नभक्षणमेवात्रापि चोद्यते, न दृष्टिरित्याशङ्क्याह— **अत्रेति**। दृष्टिवाचकाभावं हेतुमाह— **अशब्दत्वादिति**। अन्नशब्दवशादभ्यवहरणं भातीत्याशङ्क्याह— **अशक्यत्वाच्चेति**। न हि श्वादिमर्यादं सर्वमन्नमेकेनात्तुं शक्यं भक्ष्याभक्ष्यविधिविरोधात्। प्राणविद्यासामर्थ्यादसामर्थ्यविरोधसमाधानं तु सर्वान्नानुमत्यधिकरणे निरस्यमिति भावः। अशब्दत्वस्य दृष्टेरपि तुल्यत्वादभ्यवहरणवदविधेयत्वमाशङ्क्य नान्तरीयकतया दृष्टेः शब्देन क्रियमाणत्वादभ्यवहरणस्य तज्जन्यत्वज्ञाप्यत्वयोरभावादनुपपत्तिकज्ञानस्य दृष्टिविधेरेव तच्छान्तावनुत्थानात् तद्विधानमेवैतदित्याह— **सर्वं त्विति**। तथापि प्रकृते संकल्पविधौ किमायातं, तदाह— **तदिति**। प्रकरणविरोधाद् वाक्यस्य क्रियाविधिपरत्वाभावे किंपरत्वं, तदाह— **प्रसिद्धास्विति**। अस्तु सर्वान्नवाक्ये दृष्टिविधिराचमनवाक्ये तु क्रियैव चोद्यते, तत्राह— **न हीति**। इतश्चाचमने विधिरत्र नास्तीत्याह— **अपि चेति**। तर्हि चिन्तनमपि न विधेयं दोषसाम्यादित्याह— **नन्विति**। आचमनचिन्तनयोर्वर्तमानापदेशमङ्गीकरोति— **सत्यमिति**। तर्हि द्वयोरविधेयत्वमित्याशङ्क्यानुवादमात्रस्याकिंचित्करत्वादन्यतरविधेरावश्यकत्वे संकल्पनमेव विधेयमिति विधान्तरेण सूत्रं योजयति— **अवश्येति**। तत्र हेतुत्वेनाचमनस्यान्यतः प्राप्तिमुक्तां स्मारयति— **पूर्ववदिति**। पूर्वपक्षबीजमनुभाष्य दूषयति— **यदपीति**। पूर्ववत्त्वेना[1]पूर्ववत्त्वाभावेनेति यावत्। तत्र श्रुता विधिविभक्तिरनग्नतासंकल्पेन नेया, 'जर्तिलयवाग्वा जुहुया'दितिवदविवक्षितं

१. 'अपूर्वत्वाभावेन' इति पाठः स्यात्।

**कुर्वन्तो मन्यन्ते' (बृ.उ. ६।१।१४) इत्यत्रैव काण्वाः पर्यवस्यन्ति, नामनन्ति 'तस्मादेवंविदि'त्यादि। तस्मान्माध्यंदिनानामपि पाठ आचमनानुवादेनैवंवित्त्वमेव प्रकृतप्राणवासोवित्त्वं विधीयत इति प्रतिपत्तव्यम्। योऽप्ययमभ्युपगमः क्वचिदाचमनं विधीयते, क्वचिद् वासोविज्ञानमिति; सोऽपि न साधुः। 'आपो वास' इत्यादिकाया वाक्यप्रवृत्तेः सर्वत्रैकरूप्यात्। तस्माद् वासोविज्ञानमेवेह विधीयते, नाचमनमिति न्याय्यम्।।१८।।**

।। इति नवमं कार्याख्यानाधिकरणम् ।।

१०।।समानाधिकरणम्।। सू.१९।।

## समान एवं चाभेदात्।।१९।।

**वाजसनेयिशाखायामग्निरहस्ये शाण्डिल्यनामाङ्किता विद्या विज्ञाता। तत्र च गुणाः श्रूयन्ते- 'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम्' (शत.१०।६।३।२) इत्येवमादयः। तस्यामेव शाखायां बृहदारण्यके पुनः पठ्यते- 'मनोमयोऽयं पुरुषो भाःसत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष**

### *शारीरकन्यायसंग्रहः*

**समान एवं चाभेदात्।।१९।।** एकस्यां शाखायां मनोमयत्वादिगुणविशिष्टाभ्यासस्य यजतेरभ्यासवत् उपासनाकर्मभेदनिमित्तत्वात्, गुणविधानार्थत्वे गुणिमात्रानुवाद एव स्यात् इति विद्याभेदे प्राप्ते, गुणान्तरविधानाय अग्निहोत्रानुवादवत् गुणान्तरविधानार्थं गुणविशिष्टगुण्यनुवादस्य स्पष्टप्रत्यभिज्ञानार्थत्वे संभवति कतिपयधर्मविशिष्टधर्म्यैक्यलक्षणरूपाविशेषाद् विद्यैक्यमित्युक्तम्।

### *प्रकटार्थविवरणम्*

नेतव्येति भावः। आचमनस्याविधेयत्वे लिङ्गान्तरमाह— **अत एव चेति**। माध्यन्दिनानामाचमनं विधीयताम्; काण्वानां तु वासःसङ्कल्पनम्; शाखाभेदेन उदितानुदितहोमवदित्येकदेशिमतमपाकरोति— **योऽपीत्यादिना**। इति नवमं कार्याख्यानाधिकरणम्।।

**समान एवं चाभेदात्।** विषयं दर्शयितुमुपक्रमते— **वाजसनेयीति**। शाण्डिल्येन दृष्टा विद्येति तन्नाम्नाऽङ्किता चिह्निता।

### *भाष्यभावप्रकाशिका*

विधिरभ्युपगन्तव्य इत्याशङ्क्य श्रुत्यन्तरानुसारेण तत्रापि चिन्तनमेव विधेयमित्याह— **तस्मान्माध्यन्दिनानामिति**। यदाचामेदित्यनूद्य तदेवंविदिति वेदनमेव विधीयत इत्यर्थः। शाखाभेदेन न्वय[द्वय]मपि विधेयमित्यपि न युक्तमित्याह— **योऽप्ययमिति**। इति नवमं कार्याख्यानाधिकरणम्।

**समान एवं चाभेदात्।** विषयं दर्शयति— **वाजसनेयेति**। अग्निहोत्रं जुहोतीत्यर्थमनूद्य दध्ना जुहोतीति गुणविधानवदिहापि

### *न्यायनिर्णयः*

वा विधित्वमिति भावः। आचमनस्याविधेयत्वे लिङ्गान्तरमाह— **अत इति**। तर्हि पाठावैयर्थ्यार्थं माध्यन्दिनानामाचमने विधिरिष्यतामित्याशङ्क्य श्रुत्यन्तरानुसारेण तत्रापि चिन्तनमेव विधेयमित्याह— **तस्मादिति**। एवंवित्त्वमेवेत्युक्तं व्यनक्ति— **प्रकृतेति**। यदाचामेदित्यनूद्य तदेवंविदिति वेदनमेव विधीयत इत्यर्थः। शाखाभेदेनोदितानुदितहोमवदुभयमपि विधेयमित्येकदेशिमतमाशङ्क्याह— **योऽप्ययमिति**। एकीयव्यवस्थाऽयोगे फलितमाह— **तस्मादिति**।।१८।। इति नवमं कार्याख्यानाधिकरणम्।।

पूर्वत्र प्राप्ताचमनानुवादेनानग्नताचिन्तनं विधेयमित्युक्तम्। इह तु वाक्ययोः कस्य विधित्वं कस्य वाऽनुवादत्वमित्यनिश्चयाद् द्वयोरपि विद्याविधित्वमाशङ्क्याह— **समान इति**। शाण्डिल्यविद्यामुदाहरति— **वाजसनेयीति**। शाण्डिल्येन दृष्टेति तन्नाम्नाऽङ्किता

**सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंच' (बृ.उ. ५।६।१) इति। तत्र संशयः- किमियमेका विद्याऽग्निरहस्यबृहदारण्यकयोर्गुणोपसंहारश्चोत द्वे इमे विद्ये गुणानुपसंहारश्चेति। किं तावत् प्राप्तम्? विद्याभेदो गुणव्यवस्था चेति। कुतः? पौनरुक्त्यप्रसङ्गात्। भिन्नासु हि शाखास्वध्येतृवेदितृभेदात् पौनरुक्त्यपरिहारमालोच्य विद्यैकत्वमध्यवसायैकत्रातिरिक्ता गुणा इतरत्रोपसंह्रियन्ते प्राणसंवादादिष्वित्युक्तम्। एकस्यां पुनः शाखायामध्येतृवेदितृभेदाभावादशक्यपरिहारे पौनरुक्त्ये न विप्रकृष्टदेशस्थैका विद्या भवितुमर्हति। न चात्रैकमाम्नानं विद्याविधानार्थमपरं गुणविधानार्थमिति विभागः संभवति। तदा ह्यतिरिक्ता एव गुणा इतरत्रेतरत्र चाम्नायेरन्,न समानाः। समाना अपि तूभयत्राम्नायन्ते मनोमयत्वादयः। तस्मान्नान्योन्य[1] गुणोपसंहार इति।**

**एवं प्राप्ते ब्रूमहे- यथा भिन्नासु शाखासु विद्यैकत्वं गुणोपसंहारश्च भवत्येवमेकस्यामपि शाखायां भवितुमर्हति, उपास्याभेदात्। तदेव हि ब्रह्म मनोमयत्वादिगुणकमुभयत्राप्युपास्यमभिन्नं प्रत्यभिजानीमहे[2]।**

### *प्रकटार्थविवरणम्*

एकशाखाभ्यासात् प्रत्यभिज्ञानाच्च संशयमाह— **तत्रेति**। पूर्वत्र यथाऽन्यतःप्राप्तस्याचमनस्याविधेयत्वादनग्नताचिन्तनं विधीयत इत्युक्तम्, तथाऽन्यत्र[तथाऽत्र] प्रकरणान्तरप्राप्तगुणवद्विज्ञानस्य अविधेयत्वादन्यद् विज्ञानं विधीयतामित्याह— **किं तावत्प्राप्तमिति**। ननु प्रथमाधिकरणे पौनरुक्त्याद्भेदमाशङ्क्य विद्यैक्यमुक्तम्; तथाऽत्राप्यस्त्वित्याशङ्क्याह— **भिन्नासु हीति**। नन्वेकत्र विद्याविधानम्, एकत्र गुणविधानमिति अपौनरुक्त्यं भविष्यति। अतो न पौनरुक्त्यपरिहाराय विद्याभेदो वक्तव्य इत्याशङ्क्याह— **न चात्रैकमिति**।"

सिद्धान्तसूत्रं योजयति— **यथा भिन्नास्विति**।

### *भाष्यभावप्रकाशिका*

स्यादित्याशङ्क्याह— **न चात्रेति**। द्वयोरगृह्यमाणविशेषतया वाक्यस्य[कस्य] कोऽनुवाद इति निश्चयहेतुत्वाभावात् समानगुणवैयर्थ्यप्रसङ्गाच्च नेयं व्यवस्था सिध्यतीत्यर्थः। अत उपासनाभेदाद् गुणानुपसंहार इत्युपसंहरति— **तस्मान्नेति**।

सूत्रं योजयन् सिद्धान्तमाह— **यथा भिन्नास्विति**। अभेदमेवाह— **तदेव हीति**। ननूपास्यैक्यमेवावगम्यते, न चैतावता

### *न्यायनिर्णयः*

चिह्निता विशेषिता विद्येति यावत्। एकस्यां शाखायां देशभेदेन कृतां विद्यां विषयीकृत्याभ्यासात् प्रत्यभिज्ञानाच्च संशयमाह— **तत्रेति**। अत्र च विद्याभेदादिनिरूपणद्वारा वाक्यार्थधीसाधनस्यैव निरूपणात् पादादिसंगतिः। पूर्वपक्षे पौनरुक्त्यपरिहाराय विद्याभेदाद् गुणानुपसंहारः, सिद्धान्ते विद्यैक्येऽप्यपौनरुक्त्याद् गुणोपसंहार इति मत्वा विमृश्य पूर्वपक्षयति— **किं तावदिति**। गौरवदुष्टं विद्यानानात्वमयुक्तमित्याह— **कुत इति**। प्रामाणिकं गौरवमदूषणमिति मत्वाऽऽह— **पौनरुक्त्येति**। विद्याभेदे पौनरुक्त्यमव्याप्तं, भिन्नशाखासु विद्यैक्येऽपि पौनरुक्त्यदृष्टेरित्याशङ्क्याह— **भिन्नास्विति**। अध्येतृभेदेन शब्दपौनरुक्त्यं वेदितृभेदेन चार्थपौनरुक्त्यं परिह्रियते। शाखाऽभेदेऽपि देशभेदोक्तविद्याफलार्थिनां प्रतिपत्तृत्वात् तत्तद्वाक्याध्येतृत्वाच्चापौनरुक्त्यमित्याशङ्क्यैकशाखाध्ययनस्य नित्यविधित्वेनैव प्राप्तत्वान्मैवमित्याह— **एकस्यामिति**। 'अग्निहोत्रं जुहोती'त्यत्र सिद्धं जुहोत्यर्थमनूद्य 'दध्ना जुहोती'ति गुणविधिवदिहापि स्यादित्यपौनरुक्त्यमाशङ्क्याह— **न चेति**। द्वयोरदृष्टविशेषतया विधित्वानुवादत्वानिश्चयात् तुल्यगुणोक्तिवैयर्थ्याच्च नेयं व्यवस्थेत्याह— **तदेति**। अपौनरुक्त्याय विद्याभेदाद् गुणानुपसंहार इत्युपसंहरति— **तस्मान्नेति**।

उक्तमनूद्य सिद्धान्तयति— **एवमिति**। क्रियापदेनेतिशब्दस्य संबन्धः। हेतुमादाय व्याकरोति— **उपास्येति**। तदैक्ये

१. 'अन्योन्यं' पा.। २. 'प्रत्यभिजानीमः' पा.।

**उपास्यं च रूपं विद्यायाः। न च विद्यमाने रूपाभेदे विद्याभेदमध्यवसातुं शक्नुमः। नापि विद्याऽभेदे गुणव्यवस्थानम्। ननु पौनरुक्त्यप्रसङ्गाद् विद्याभेदोऽध्यवसितः। नेत्युच्यते। अर्थविभागोपपत्तेः। एकं ह्याम्नानं विद्याविधानार्थमपरं गुणविधानार्थमिति न किंचिन्नोपपद्यते। नन्वेवं सति यदपठितमग्निरहस्ये तदेव बृहदारण्यके पठितव्यम् 'स एष सर्वस्येशानः' इत्यादि, यत्तु पठितमेव 'मनोमय' इत्यादि, तन्न पठितव्यम्। नैष दोषः। तद्बलेनैव प्रदेशान्तरपठितविद्याप्रत्यभिज्ञानात्। समानगुणाम्नानेन हि विप्रकृष्टदेशां शाण्डिल्यविद्यां प्रत्यभिज्ञाप्य तस्यामीशानत्वाद्युपदिश्यते। अन्यथा हि कथं तस्यामयं गुणविधिरभिधीयते। अपि चाप्राप्तांशोपदेशेनार्थवति वाक्ये संजाते प्राप्तांशपरामर्शस्य नित्यानुवादतयाऽप्युपपद्यमानत्वान्न तद्बलेन प्रत्यभिज्ञोपेक्षितुं शक्यते। तस्मादत्र समानायामपि शाखायां विद्यैकत्वं, गुणोपसंहारश्चेत्युपपन्नम्।।१९।।**

।। इति दशमं समानाधिकरणम् ।।

### *प्रकटार्थविवरणम्*

पूर्वपक्षबीजमुत्थाप्य दूषयति— **नन्वित्यादिना**। गुणान्तरविधानायाग्निहोत्राभ्यासवत् गुणान्तरविधानार्थं गुणविशिष्टगुण्यनुवादस्य स्पष्टप्रत्यभिज्ञार्थत्वान्न विद्याभेद इति भावः। इति दशमं समानाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

विद्यैक्यं संभवति, अभेदहेत्वभावादित्याशङ्क्य रूपाविशेषो हेतुरस्तीत्याह— **उपास्यञ्चेति**। हेतुत्वमेवाह— **न च रूपाभेद इति**। प्रत्यभिज्ञाविरोधादित्यर्थः। अतो गुणोपसंहारश्च सिद्ध इत्याह— **नापीति**। अध्येतृवेदितृभेदावान्[भावात्] पौनरुक्त्यमुक्तम् स्मारयति पूर्ववादी— **नन्विति**। अतिरिक्तार्थत्वान्न पौनरुक्त्यमिति परिहरति— **नेतीति**। न चागृह्यमाणविषयतया कस्य कोऽनुवाद इति विनिगमनाभावः। यत्र भूयांसो गुणा विधीयन्ते तत्र तस्य प्रधानस्य विधिरन्यत्र तदनुवादेन गुणविधिरिति निश्चयसंभवादिति भावः। समानगुणाभिधानवैयर्थ्यमुक्तं स्मारयति— **नन्वेवमिति**। प्रत्यभिज्ञादार्ढ्यार्थत्वान्न वैयर्थ्यमिति परिहरति— **तद्बलेनेति**। निष्प्रयोजनत्वेऽप्यनुवादस्य न दोषो द्य[ऽन्य]त्रापि निष्प्रयोजनानुवादानां 'नान्तरिक्षे चिन्वीते'त्यादिषु दर्शनादित्यभिप्रेत्याह— **अपि चाप्राप्तेति**। इति दशमं समानाधिकरणम्।

### *न्यायनिर्णयः*

गम्यमानेऽपि न विद्यैक्यं, तदैक्ये हेत्वभावादित्याशङ्क्य रूपाभेदो हेतुरित्या(शङ्क्या)ह— **उपास्यं चेति**। तस्य हेतुत्वमेव स्फुटयति— **न चेति**। प्रत्यभिज्ञाविरोधादित्यर्थः। विद्यैक्ये फलितमाह— **नापीति**। गुणव्यवस्थानमध्यवसातुं शक्नुम इति संबन्धः। अध्येतृवेदितृभेदाभावात् पौनरुक्त्यमुक्तं स्मारयति— **नन्विति**। अर्थभेदसंभवान्न पौनरुक्त्यमित्याह— **नेतीति**। अदृश्यमानविशेषतया कस्य कोऽनुवाद इत्यनिश्चयान्नार्थविभागसिद्धिरित्याशङ्क्य यत्र भूयांसो गुणा विधीयन्ते तत्र प्रधानविधिरन्यत्र तदनुवादेन गुणविधिरिति विभागमभिप्रेत्याह— **एकं हीति**। तुल्यगुणोक्तिवैयर्थ्यमुक्तं स्मारयति— **नन्विति**। बृहदारण्यके प्रधानविधिरग्निरहस्ये गुणविधिरित्येवं विभागे सतीति यावत्। प्रत्यभिज्ञादार्ढ्यार्थं तुल्यगुणोक्तिरर्थवतीत्याह— **नेति**। तदेव स्फुटयति— **समानेति**। प्रत्यभिज्ञानस्याकिंचित्करत्वमाशङ्क्याह— **अन्यथेति**। **तस्यां** बृहदारण्यके गुणविधानार्थमग्निरहस्योक्तायामिति यावत्। **अयं गुणविधिः** ईशानत्वादिगुणकथनमित्यर्थः। अग्निरहस्योत्पन्नां विद्यामनूद्य विशिष्टगुणत्वेन बृहदारण्यके तस्यां गुणविधानमित्युक्तम्। इतश्च तुल्यगुणोक्तिप्राप्ता प्रत्यभिज्ञा नोपेक्षितव्येत्याह— **अपि चेति**। तदेव कैमुतिकन्यायेन स्फोरयति— **अप्राप्तेति**। 'नान्तरिक्षे न दिवी'त्यादिषु निष्फलानुवादस्यापि निर्दोषत्वात् प्रकृते तुल्यगुणानुवादस्य प्रत्यभिज्ञानार्थत्वेनार्थवत्त्वात् तुल्यगुणोक्तिकृता प्रत्यभिज्ञा नोपेक्षितुं शक्या; तेनेशानत्वादिगुणवद्विद्योक्त्या बृहदारण्यकवाक्ये समानार्थे मनोमयत्वादितुल्यगुणानुवादस्य यथाकथंचिद्योगेऽपि प्रधानप्रत्यभिज्ञापकत्वेन सफलत्वात् तदधीनप्रत्यभिज्ञायाश्च विशिष्टविधिशेषत्वाद् बृहदारण्यके गुणविधिरन्यत्र प्रधानविधिरित्यर्थः। सिद्धे पुनरुक्तिपरिहारे फलितमाह— **तस्मादिति**।।१९।। इति दशमं समानाधिकरणम्।।

११।।संबन्धा(सत्यविद्या)धिकरणम्।।सू. २०-२२।।

## संबन्धादेवमन्यत्रापि।।२०।।

**बृहदारण्यके 'सत्यं ब्रह्म' (बृ.उ. ५।५।१) इत्युपक्रम्य 'तद्यत् तत् सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः' (बृ.उ. ५।५।२) इति तस्यैव सत्यस्य ब्रह्मणोऽधिदैवतमध्यात्मं चायतनविशेषमुपदिश्य व्याहृतिशरीरत्वं च संपाद्य द्वे उपनिषदावुपदिश्येते— 'तस्योपनिषदह'रित्यधिदैवतम्, 'तस्योपनिषदह'मित्यध्यात्मम्। तत्र संशयः—किमविभागेनैवोभे अप्युपनिषदावुभयत्रानुसंधातव्ये उत विभागेनैकाऽधिदैवमेकाऽध्यात्ममिति। तत्र सूत्रेणैवोपक्रमते। यथा शाण्डिल्यविद्यायां**

### *शारीरकन्यायसंग्रहः*

**संबन्धादेवमन्यत्रापि।।२०।। न वा विशेषात्।।२१।। दर्शयति च।।२२।।** यद्यप्यक्ष्यादित्यस्थानयोः अहरहमिति नामद्वयसंबन्धाभावात् सत्याख्योपास्यब्रह्मण एव तत्संबन्धादितरेतरस्थानगतनामवद् ब्रह्मप्रत्ययेन तदविनाभूतनामद्वयसंबन्धानुमानात् उभयत्र प्राप्तिः, तथापि 'तस्योपनिषदहः' 'तस्योपनिषदहम्' इति वाक्यद्वयेन नाम्नोः स्थानद्वयविशिष्टे ब्रह्मणि तच्छब्दाभ्यां प्रकृतस्थानद्वयविशिष्टानुवादेन व्यवस्थासङ्कीर्तनपरेण उपसंहारानुमानबाधया नामद्वयं व्यवस्थया उपास्यमिति निर्णीतम्।

### *प्रकटार्थविवरणम्*

**सम्बन्धादेवमन्यत्रापि।** विषयं दर्शयितुमुपक्रमवाक्यं पठति— **बृहदारण्यक इति।** अधिदैवे मण्डलम् अध्यात्मे चाक्षि दक्षिणमुपासनायायतनविशेषमुपदिश्य 'तस्य भूरिति शिरः' इत्यादिना व्याहृतिशरीरत्वं च संपाद्य द्वे उपनिषदौ रहस्ये उपदिश्येते इत्यर्थः। तच्छब्देन स्वरूपं परामृश्यते, विशिष्टं वेत्यनिश्चयात् संशयमाह— **तत्रेति।** पूर्वाधिकरणन्यायेन पूर्वपक्ष इत्याह—

### *भाष्यभावप्रकाशिका*

**सम्बन्धादेवमन्यत्रापि।** विषयमाह— **बृहदारण्यक इति। व्याहृतिशरीरत्वमिति।** तस्य भूरिति शिरः भुव इति बाहू स्वरिति प्रतिष्ठेत्युपदिश्येत्यर्थः। यद्येकस्यामपि शाखायां प्रत्यभिज्ञानादुपासनाऽभेदे सति तत्र तत्रोदितधर्माणां सङ्करस्तथा सति सत्यस्योपास्यस्योभयत्र भेदादुपनिषदोरपि संकरः स्यादित्याह— **यथा शाण्डिल्येति।** उपनिषदोः साङ्कर्यं नास्ति विद्याभेदादिति चेत्, तत्राह— **एका हीति।**

### *न्यायनिर्णयः*

विद्यैक्ये गुणोपसंहारमुक्त्वा तदैक्येऽपि तदनुपसंहारस्थलं वदन् पूर्वपक्षयति— **संबन्धादिति।** विषयमाह— **बृहदिति।** 'आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्ते'त्यत्र सत्यशब्दो हिरण्यगर्भवाची, तच्च सत्यं हिरण्यगर्भाख्यं ब्रह्म महदित्युपक्रम्येति यावत्। तत् तत्रैवं सति यत्तत्सत्यं ब्रह्म सोऽसावादित्यो, विधेयापेक्षया पुंलिङ्गप्रयोगः। किं मण्डलमेवादित्यो, नेत्याह— **य इति।** तस्य स्थानभेदेनादित्यचाक्षुषपुरुषात्मनाऽवस्थानमुक्त्वा 'तावेतावन्योन्यस्मिन्प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन्प्रतिष्ठित' इत्यन्योन्यव्यतिषङ्गमुक्त्वाऽऽदित्यपुरुषस्य 'य एष एतस्मिन् मण्डले पुरुषस्तस्य भूरिति शिरो भुव इति बाहू स्वरिति प्रतिष्ठे'ति व्याहृतिदेहत्वं संपाद्य 'तस्योपनिषदह'रित्यादित्यपुरुषस्याहर्नामत्वमुक्तम्। अनन्तरं च 'योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर' इत्यादिना व्याहृतिदेहत्वं संपाद्य 'तस्योपनिषदह'मित्यहंनामत्वमुक्तम्। **उपनिषदिति** देवतामुपगमयतीति तत्प्रकाशकं रहस्यं नामोच्यते। अहःशब्दः प्रकाशवचनोऽहंशब्दः प्रत्यगात्मवाची, तदाह— **तस्येत्यादिना।** उपनिषद्द्वयं विषयीकृत्य सत्यब्रह्मैक्यस्थानभेदाभ्यां संशयमाह— **तत्रेति।** अत्र च सत्यविद्यायामुपनिषद्व्यवस्थोक्त्या वाक्यार्थधीहेतुचिन्तनात् पादादिसंगतिः। पूर्वपक्षे विद्यैक्याद् गुणोपसंहारनियमे सत्युपनिषदोः सांकर्यादतिदेशासिद्धिः। सिद्धान्ते विद्यैक्येऽपि स्थानभेदोपलब्धानां धर्माणामनुपसंहारादुपनिषदोरसंकरादतिदेशः स्यादिति मत्वा पूर्वपक्षसूत्रमादत्ते— **तत्रेति।** सूत्राक्षराणि योजयति— **यथेति।** उपनिषदोर्विद्यैक्ये संकरः शङ्क्येत, तदैक्यं

**विभागेनाप्यधीतायां गुणोपसंहार उक्तः, एवमन्यत्राप्येवंजातीयके विषये भवितुमर्हति। एकविद्याभिसंबन्धात्। एका हीयं सत्यविद्याऽधिदैवमध्यात्मं चाधीता। उपक्रमाभेदाद्, व्यतिषक्तपाठाच्च। कथं तस्यामुदितो धर्मस्तस्यामेव न स्यात्। यो ह्याचार्ये कश्चिदनुगमनादिराचारश्चोदितः, स ग्रामगतेऽरण्यगते च तुल्यवदेव भवति। तस्मादुभयोरप्युपनिषदोरुभयत्र प्राप्तिरिति।।२०।।**

**एवं प्राप्ते प्रतिविधत्ते—**

## न वा विशेषात्।।२१।।

**न वोभयोरुभयत्र प्राप्तिः। कस्मात्? विशेषात्। उपासनस्थानविशेषोपनिबन्धादित्यर्थः। कथं स्थानविशेषोपनिबन्ध इति? उच्यते— 'य एष एतस्मिन्मण्डले पुरुषः' (बृ.उ. ५।५।३) इति ह्याधिदैविकं पुरुषं प्रकृत्य 'तस्योपनिषदह'रिति श्रावयति; 'योऽयं दक्षिणेऽक्षन्पुरुषः' (बृ.उ. ५।५।४) इति ह्याध्यात्मिकं पुरुषं प्रकृत्य 'तस्योपनिषदह'मिति। तस्येति चैतत् संनिहितावलम्बनं सर्वनाम; तस्मादायतनविशेषव्यपाश्रयेणैवैते**

### *प्रकटार्थविवरणम्*

**यथेति**। तच्छब्दस्य प्रकृतपरामर्शकत्वात् सत्याख्यब्रह्मण एवोपनिषद्द्वयसम्बन्धः; तच्चाविशिष्टं स्थानभेदेऽपीत्युपनिषद्द्वयमुभयत्रोपसंहर्तव्यमिति भावः।

**न वा विशेषात्**। सिद्धान्तसूत्रं व्याचष्टे— **न वोभयोरिति**। 'तस्योपनिषदहः' 'तस्योपनिषदहम्' इति वाक्यद्वयेन तच्छब्दाभ्यां प्रकृतविशिष्टानुवादेनोपनिषदोः स्थानद्वयविशिष्टे ब्रह्मणि व्यवस्थया संकीर्तनपरेणोपसंहारानुमानबाधादुपनिषद्द्वयं व्यवस्थयोपास्यमिति भावः।

### *भाष्यभावप्रकाशिका*

तत्र हेतुमाह— **उपक्रमेति**। 'सत्यं ब्रह्मे'त्युपक्रमाभेदात् 'तावेतावन्योन्यस्मिन् प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः प्राणैरयममुष्मिन्नि'ति व्यतिषिक्तपाठाच्चेत्यर्थः। यद्येवम्, ततः किं स्यादिति, तत्राह— **कथमिति**। ननु स्थानभेदादसंकरो युक्त इत्याशङ्क्य तस्योपनिषदिति प्रकृतस्य सत्यस्य परामर्शादधिदैवादिस्थानस्य विशेषणतयोपसर्जनत्वेन प्रस्तुतत्वात् सत्यस्य च प्रधानस्याभेदादुपसंहार एव गुणानां तदविनाभावादिति निदर्शनपूर्वकमाह— **यो ह्याचार्य इति**।

तस्योपनिषदित्युभयत्र तच्छब्देनाधिदैवादिविशेषणविशिष्टस्यैव परामर्शात् तत्संबन्धित्वादुपनिषदोः स्वरूपमात्रसंबन्धिताऽभावान्नामद्वयं व्यवस्थयोपास्यमिति परिहरति— **न वा विशेषादिति**। तच्छब्दस्य स्वरूपमात्रपरामर्शकत्वं न त्वधिदैवादिविशेषणविशिष्टस्येति

### *न्यायनिर्णयः*

कथमित्याशङ्क्याह— **एकेति**। विद्यैक्ये हेतुमाह— **उपक्रमेति**। 'सत्यं ब्रह्मे'त्युपक्रमाभेदः 'तावेतावन्योन्यस्मिन्'इत्यादिव्यतिषक्तपाठस्ताभ्यां विद्यैक्यं सिद्धमित्यर्थः। तदैक्येऽपि किं स्यात् तदाह— **कथमिति**। विद्यैक्येऽपि स्थानभेदादुपनिषदोरसंकरः स्यादित्याशङ्क्य दृष्टान्तेन परिहरति— **यो हीति**। तस्योपनिषदिति प्रकृतसत्यपरामर्शात् तस्य प्रधानस्याभेदाद्विशेषणतया स्थानस्योपसर्जनत्वाद् गुणप्रधानयोश्च प्रधाने संप्रत्ययात् तदविनाभावादुपसंहारो गुणानामित्यर्थः। विद्यैक्ये गुणोपसंहारध्रौव्ये फलितमाह— **तस्मादिति**।।२०।।

सिद्धान्तयति— **एवमिति**। वाशब्दस्यावधारणार्थत्वमुपेत्य प्रतिज्ञां विभजते— **न वेति**। ध्येयाभेदे ध्यानभेदात्किमिति न प्राप्तिरित्याह— **कस्मादिति**। हेतुं गृहीत्वा व्याचष्टे— **विशेषादिति**। ध्यानध्येयोपसर्जनभूतौ स्थानविशेषौ ताभ्यामुपनिषदोर्योगाद् व्यवस्था तयोर्युक्तेत्यर्थः। तस्येति परामृष्टब्रह्मणो नामद्वयविधाने तस्य स्थानविशेषसंगतिरसिद्धेति शङ्कते— **कथमिति**। उपनिषदोः स्थानविशेषयोगं साधयति— **उच्यत इति**। निष्कृष्टं ब्रह्मैव प्रधानं तच्छब्दमुपनिषद्भ्यां संबद्धमित्याशङ्क्याह— **तस्येति**।

**उपनिषदावुपदिश्येते। कुत उभयोरुभयत्र प्राप्तिः? नन्वेक एवायमधिदैवतमध्यात्मं च पुरुष एकस्यैव सत्यस्य ब्रह्मण आयतनद्वयप्रतिपादनात्। सत्यमेवमेतत्। एकस्यापि त्ववस्थाविशेषोपादानेनैवोपनिषद्विशेषोपदेशात् तदवस्थस्यैव सा भवितुमर्हति। अस्ति चायं दृष्टान्तः— सत्यप्याचार्यस्वरूपानपाये यदाचार्यस्यासीनस्यानुवर्तनमुक्तं न तत् तिष्ठतो भवति; यच्च तिष्ठत उक्तं न तदासीनस्येति। ग्रामारण्ययोस्त्वाचार्यस्वरूपानपायात् तत्स्वरूपानुबद्धस्य च धर्मस्य ग्रामारण्यकृतविशेषाभावादुभयत्र तुल्यवद्भाव इत्यदृष्टान्तः सः। तस्माद् व्यवस्थाऽनयो-रुपनिषदोः।।२१।।**

## दर्शयति च।।२२।।

**अपि चैवंजातीयकानां धर्माणां व्यवस्थेति लिङ्गदर्शनं भवति— 'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' (छा.उ. १।७।५) इति। कथमस्य लिङ्गत्वमिति? तदुच्यते। अक्ष्यादित्यस्थानभेदभिन्नान् धर्मानन्योन्यस्मिन्ननुपसंहार्यान् पश्यन्निहातिदेशेनादित्यपुरुषगतान् रूपादीनक्षिपुरुष उपसंहरति— 'तस्यैतस्य तदेव रूपम्' (छा.उ. १।७।५) इत्यादिना। तस्माद् व्यवस्थिते एवैते उपनिषदाविति निर्णयः।।२२।।**

।। इत्येकादशं सत्यविद्या(संबन्ध्या)धिकरणम् ।।

### *प्रकटार्थविवरणम्*

**दर्शयति च**। अतिदेशसामर्थ्यं लिङ्गमपि बाधकमाह— **अपि चैवमिति**। इत्येकादशं सम्बन्धाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

चेत्, तत्राह— **तस्येति**। उक्तार्थे दृष्टान्तमाह— **अस्ति चेति**। ननु विपरीतेऽपि दृष्टान्तो दर्शित इति, तत्राह— **ग्रामारण्ययोरिति**। स्वरूपोपाधौ विहितत्वात् तत्र युक्तमिह तु विशिष्टोपाधौ विहितत्वाद्वैषम्यमित्यर्थः।

नन्वेतद्वाक्यं धर्मसांकर्यमेव दर्शयतीति शङ्कते— **कथमस्येति**। अत्यन्तसांकर्ये अभेद एवेति नातिदेशः स्यात् अतोऽतिदेशसामर्थ्याद्विद्यैक्येऽपि स्वतो नात्यन्तसांकर्यमभिप्रेतमिति परिहरति— **तदुच्यत इत्यादिना**। इह चातिदेशाभावाद् व्य-वस्थैवेत्युपसंहरति— **तस्मादिति**। इत्येकादशं सत्यविद्याधिकरणम्।

### *न्यायनिर्णयः*

तस्योपनिषदित्युभयत्र तच्छब्देनाधिदैवादिविशिष्टस्यैव परामर्शात् तद्योगित्वादुपनिषदोः स्वरूपमात्रासंबन्धात् तदद्वयं व्यवस्थयाऽनुसंधेयम्। न हि सर्वनाम संनिहितं हित्वा व्यवहितं स्पृशतीत्यर्थः। तच्छब्दस्य विशिष्टार्थत्वे फलितमाह— **तस्मादिति**। विशेषणभेदेऽपि विशेष्याभेदादुपसंहारः स्यादिति शङ्कते— **नन्विति**। विशेष्याभेदमङ्गीकरोति— **सत्यमिति**। तर्हि कथमुपनिषद्व्यवस्थेत्याशङ्क्य विशिष्टभेदात्तन्निष्ठत्वाच्च तयोरित्याह— **एकस्येति**। उक्तेऽर्थे दृष्टान्तमाह— **अस्तीति**। प्रतिदृष्टान्तोऽपि दर्शित इत्याशङ्क्याह— **ग्रामेति**। तत्र स्वरूपोपाधावुक्तत्वाद् युक्तं तुल्यत्वमिह तु विशिष्टोपाधावुक्तेर्व्यवस्थेत्यर्थः। विशिष्टोपाध्युक्तिफलमाह— **तस्मादिति**।।२१।।

उपनिषदोर्व्यवस्थितत्वे हेत्वन्तरमाह— **दर्शयति चेति**। तदेव व्याकरोति— **अपि चेति**। यथोक्तं वाक्यं धर्माणां संकरमेव दर्शयतीति शङ्कते— **कथमिति**। अत्यन्तसंकरे सत्यभेद एवेति नातिदेशस्तेन तद्वशाद्विद्यैक्येऽपि स्वतो नात्यन्तसंकरो धर्माणामित्याह— **तदिति**। उपनिषदोस्त्वतिदेशाभावाद् व्यवस्थैवेत्युपसंहरति— **तस्मादिति**। इत्येकादशं सत्यविद्याधिकरणम्।।

१२।।संभृत्यधिकरणम्।।सू. २३।।

**संभृतिद्युव्याप्त्यपि चातः।।२३।।**

**'ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान' इत्येवं राणायनीयानां खिलेषु वीर्यसंभृतिद्युनिवेशप्रभृतयो ब्रह्मणो विभूतयः पठ्यन्ते। तेषामेव चोपनिषदि शाण्डिल्यविद्याप्रभृतयो ब्रह्मविद्याः पठ्यन्ते। तासु ब्रह्मविद्यासु ता ब्रह्मविभूतय उपसंह्रियेरन्, न वेति विचारणायां ब्रह्मसंबन्धादुपसंहारप्राप्तावेवं**

*शारीरकन्यायसंग्रहः*

**संभृतिद्युव्याप्त्यपि चातः।।२३।।** संभृतिद्युव्याप्त्यादिब्रह्मधर्माणां पृथगुपासनतत्फलकल्पनात् लघीयो वेद्यब्रह्मैक्यद्वारेण शाण्डिल्यादिविद्यासंबन्धकल्पनमिति प्राप्ते, कतिपयधर्मविशिष्टस्य ब्रह्ममात्रस्य रूपैक्यनिमित्तत्वाभावात् संभृत्यादिधर्मविशिष्टस्य ब्रह्मणः शाण्डिल्यविद्याद्युपास्यमनोमयत्वादिगुणविशिष्टब्रह्मणश्च रूपभेदाद् विद्यैक्यायोगात् संभृत्यादिविशिष्टमुपासनान्तरमेव कल्प्यत इत्युक्तम्।

*प्रकटार्थविवरणम्*

**संभृतिद्युव्याप्त्यपि चातः।** पूर्वाधिकरणन्यायेनैव वाक्यान्तरमपि व्याख्यातुं पठति— **ब्रह्मज्येष्ठेति**। ब्रह्म ज्येष्ठं येषां तानि ब्रह्मज्येष्ठा। शिलोपश्छान्दसः। ब्रह्मज्येष्ठानि वीर्याणि ब्रह्मणा संभृतानि विधृतानि, ज्येष्ठं ब्रह्माग्रे सृष्ट्यादौ दिवमाततान ऊर्ध्वदेशे निवेशितवदित्यर्थः। खिलेषु विधिनिषेधरहितेषु वेदप्रदेशेषु। ब्रह्मसंबन्धात् विद्याभेदप्रतिभानाच्च संशयमाह— **तास्विति**। ब्रह्मण

*भाष्यभावप्रकाशिका*

**संभृतीति**। 'ब्रह्म ज्येष्ठा वीर्या संभृतानि। ब्रह्माग्रे ज्येष्ठन्दिवमाततान। ब्रह्म देवानां प्रथमन्त्र जज्ञे। तेनार्हति ब्रह्मणा स्पर्धितुं कः' इत्यस्मिन् मन्त्रे ज्येष्ठा इति ज्येष्ठम् वीर्या इति वीर्यसंभृतानीति दिवमाततानेति द्युनिवेशः। ज्येष्ठमिति ज्येष्ठत्वमेवंविधानां गुणानां ब्रह्माश्रयतया साम्येन प्रत्यभिज्ञानसंभवाच्छाण्डिल्यादिविद्यासूपसंहार इति पूर्वपक्षं दर्शयति— **ब्रह्मसंबन्धादिति**। न चाध्यात्मसंबन्धविद्यास्वधिदैवसंबन्धिनां गुणानामुपसंहारो न संभवतीति शङ्कनीयम्। अध्यात्मसंबन्धविद्यास्वप्यधिदैवसंबन्धगुणानाम्

*न्यायनिर्णयः*

आयतनभेदाद् गुणानुपसंहारमुक्त्वा तेनैव हेतुना संभृतिप्रभृतीनां गुणानां विद्यान्तरेष्वनुपसंहारमाह— **संभृतीति**। पूर्वन्यायेनैव वाक्यान्तरं व्याख्यातुमुदाहरति— **ब्रह्मेति**। वीर्या वीर्याणि पराक्रमभेदाः। अन्ये हि पुरुषाः सहायानपेक्ष्य विक्रमान् बिभ्रति, तेन तत्पराक्रमाणां न त एव नियतपूर्वत्वरूपकारणत्वेन ज्येष्ठा भवन्ति, किंतु तत्सहकारिणोऽपि। ब्रह्मवीर्याणां तु ब्रह्मैव ज्येष्ठं, ब्रह्म ज्येष्ठं येषां तानि तथा। ब्रह्म खल्वनन्यापेक्षं जगज्जन्मादि करोति। किंचान्येषां पराक्रममाणानां बलवद्भिर्मध्ये भङ्गः संभवति, तेन ते स्ववीर्याणि न बिभ्रति। ब्रह्मवीर्याणि तु ब्रह्मणा संभृतान्यविघ्नेन संभृतानीत्यर्थः। तज्ज्येष्ठं ब्रह्माग्रे देवादिजन्मतः प्रागेव दिवं स्वर्गमाततान व्याप्तवन्नित्यमेव विश्वव्यापकमित्यर्थः। 'ब्रह्म भूतानां प्रथमं तु जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः' इत्युत्तरो भागः। **खिलेषु** विधिनिषेधहीनेषु परिशिष्टोपदेशेषु ग्रन्थेष्विति यावत्। विषयमुक्त्वा संशयं वक्तुं भूमिकां करोति— **तेषामिति**। ब्रह्मसंबन्धाद्विद्याभेददृष्ट्या च संशयमाह— **तास्विति**। अत्र च विद्याभेदेन गुणानुपसंहारोक्त्या वाक्यार्थधीहेतोरेव चिन्तनात् पादादिसंगतिः। पूर्वपक्षे विद्याभेदस्य गुणव्यवस्थापकत्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति मत्वा पूर्वपक्षयति— **ब्रह्मेति**। न चाधिदैविकगुणानामाध्यात्मिकविद्यास्वनुपसंहारः, 'एष हि सर्वेषु लोकेषु भाती'त्यादिषु व्यभिचारात्। अनुपसंहारे च पृथगुपासनं तत्फलं च कल्प्यमिति गौरवम्। अतो द्युनिवेशादीनां ब्रह्मसंबन्धेन सर्वत्र प्रत्यभिज्ञानादुपसंहारः इत्यर्थः। सिद्धान्तमवतार्य योजयति— **एवमिति**। संभृतिश्च द्युव्याप्तिश्च संभृतिद्युव्याप्ति, तदपि सर्वत्र नोपसंहर्तव्यमुपनिषदोरिव विशेषयोगव्यवस्थानादित्यर्थपरतया

**पठति। संभृतिद्युव्याप्तिप्रभृतयो विभूतयः शाण्डिल्यविद्याप्रभृतिषु नोपसंहर्तव्याः। अत एव चायतनविशेषयोगात्। तथाहि— शाण्डिल्यविद्यायां हृदयायतनत्वं ब्रह्मण उक्तम् 'एष म आत्माऽन्तर्हृदये' (छा.उ. ३।१४।३) इति। तद्वदेव दहरविद्यायामपि 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' (छा.उ. ८।१।१) इति। उपकोसलविद्यायां त्वक्ष्यायतनत्वम् 'य एषोऽक्षिणि पुरुषो दृश्यते' (छा.उ. ४।१५।१) इति। एवं तत्र तत्र तत्तदाध्यात्मिकमायतनमेतासु विद्यासु प्रतीयते। आधिदैविक्यस्त्वेता विभूतयः संभृतिद्युव्याप्तिप्रभृतयः; तासां कुत एतासु प्राप्तिः? नन्वेतास्वप्याधिदैविक्यो विभूतयः श्रूयन्ते— 'ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः' (छा.उ. ३।१४।३), 'एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति' (छा.उ. ४।१५।४) 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' (छा.उ. ८।१।३) इत्येवमाद्याः। सन्ति चान्या आयतनविशेषहीना अपीह ब्रह्मविद्याः षोडशकलाद्याः। सत्यमेवमेतत्। तथाप्यत्र विद्यते विशेषः संभृत्याद्यनुपसंहारहेतुः। समानगुणाम्नानेन हि प्रत्युपस्थापितासु विप्रकृष्टदेशास्वपि विद्यासु विप्रकृष्टदेशा गुणा उपसंह्रियेरन्निति युक्तम्। संभृत्यादयस्तु शाण्डिल्यादिवाक्यगोचराश्च मनोमयत्वादयो गुणाः परस्परव्यावृत्तस्वरूपत्वान्न प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनक्षमाः। न च ब्रह्मसंबन्धमात्रेण प्रदेशान्तर-**

### *प्रकटार्थविवरणम्*

एवोपास्यत्वेन विद्यैक्यादुपसंहार इति पूर्वः पक्षः। सिद्धान्तसूत्रं योजयति— **संभृतीति**। संभृत्यादिधर्मविशिष्टस्य ब्रह्मणः शाण्डिल्यविद्यादिषु उपास्यमनोमयत्वादिगुणविशिष्टब्रह्मणश्च रूपभेदाद् विद्यैक्यायोगात् संभृत्यादिषूपासनान्तरमेव कल्प्यत इति नास्त्युपसंहार इत्यर्थः। इति द्वादशं संभृत्यधिकरणम्॥

### *भाष्यभावप्रकाशिका*

'एष हि सर्वेषु लोकेषु भाति', ज्यायानग्निरिव['ज्यायान् दिवः'] इत्येवमादीनामन्वयश्रवणात्, अनुपसंहारे पृथगुपासनं तत्फलं च कल्प्यमिति गौरवप्रसङ्गाच्चेत्यर्थः। 'संहृतिश्च द्युव्याप्ति इदमपि नोपसंहर्तव्यम् अत एव पूर्वोक्तविशेषादित्येवमर्थपरतया सूत्रं योजयन् सिद्धान्तयति— **संभृतीति**। 'ज्यायान्दिव' इति शाण्डिल्यविद्यायाम्, 'एष उ एवे'त्याद्युपकोसलविद्यायाम्, 'यावान्वा अयमाकाश' इति दहरविद्यायामिति विभागो द्रष्टव्यः। अध्यात्माधिदैवविभागेनो[गेनो]पसंहारो न संभवति चेत्, तर्हि तद्विभागशून्योपासनासु भवेदुपसंहार इत्याह— **सन्ति चान्या इति**। विशेषहेतुतामाह— **समानेति**। संभृत्यादिधर्मविशिष्टस्य ब्रह्मणः, शाण्डिल्यादिविद्यासु

### *न्यायनिर्णयः*

सूत्रं व्याख्यातमित्यर्थः। इदानीं चकारस्यावधारणार्थत्वं गृहीत्वा हेतुं विवृणोति— **तथाहीति**। आयतनभेदयोगमुक्तमुपसंहरति— **एवमिति**। कथं तावता संभृत्यादीनामेतासु विद्यास्वनुपसंहारः, तत्राह— **आधिदैविक्यस्त्विति**। आध्यात्मिकविद्यास्वपि संभृत्याद्याधिदैविकगुणानामुपसंहारः स्यादिति लिङ्गेन शङ्कते— **नन्विति**। 'ज्यायान्दिव' इति शाण्डिल्यविद्यायाम् 'एष उ एवे'त्याद्युपकोसलविद्यायां 'यावान्वा अयमाकाश' इति दहरविद्यायामिति भेदः। अध्यात्माधिदैवभेदादनुपसंहारश्चेत् तर्हि तद्भेद-शून्योपासनासूपसंहारः स्यादित्याह— **सन्ति चेति**। आध्यात्मिकविद्यास्वाधिदैविकविभूतीनामायतनभेदशून्यब्रह्मधियां चास्मिन् प्रकरणे सत्त्वमङ्गीकरोति— **सत्यमिति**। तर्हि षोडशकलाद्यासु ब्रह्मविद्यासु संभृत्यादिगुणानां किमित्युपसंहारो न स्यादित्याशङ्क्याह— **तथापीति**। विशेषहेतुमेव विवृणोति— **समानेति**। प्रकृतेऽपि विद्याप्रत्यभिज्ञया गुणोपसंहारः स्यादित्याशङ्क्याह— **संभृत्यादयस्त्विति**। तद्धर्मविशिष्टब्रह्मणः शाण्डिल्यादिविद्यासु श्रुतमनोमयत्वादिधर्मकब्रह्मणश्च भेदान्न प्रत्यभिज्ञेति नोपसंहार इत्यर्थः। विशिष्टभेदेऽपि

१. न्यायनिर्णयानुसारेणात्र पाठः शोध्यः।

**वर्तिविद्याप्रत्युपस्थापनमित्युच्यते, विद्याभेदेऽपि तदुपपत्तेः। एकमपि हि ब्रह्म विभूतिभेदैरनेकधोपास्यत इति स्थितिः। परोवरीयस्त्वादिवद् भेददर्शनात्। तस्माद् वीर्यसंभृत्यादीनां शाण्डिल्यविद्यादिष्वनुपसंहार इति।।२३।।**

।। इति द्वादशं संभृत्यधिकरणम् ।।

**१३।।पुरुषविद्याधिकरणम्।।२४।।**

## पुरुषविद्यायामिव चेतरेषामनाम्नानात्।।२४।।

**अस्ति ताण्डिनां पैङ्गिनां च रहस्यब्राह्मणे पुरुषविद्या। तत्र पुरुषो यज्ञः कल्पितः। तदीयमायुस्त्रेधा**

### *शारीरकन्यायसंग्रहः*

**पुरुषविद्यायामिव चेतरेषामनाम्नानात्।।२४।।** उभयत्र मरणावभृथत्वविशिष्टसांपादिकपुरुषयज्ञत्वलक्षणरूपैक्यात् विद्यैक्ये प्राप्ते, यद्यपि 'विदुषो यज्ञस्य' इत्यभिहितत्वात् निषादस्थपतिन्यायेन सामानाधिकरण्यमेव युक्तम्, तथापि आध्यासिकापूर्वसंबन्धकल्पनात्[१] प्रमाणान्तरप्रसिद्धविद्वत्संबन्धियज्ञानुवादेन वाक्यभेदं च परिहृत्य ब्रह्मविद्याप्रशंसार्थस्य विद्वत्संबन्धियज्ञस्य पत्न्यादिसम्पादनमेकत्र क्रियत इति वरं प्रतिपत्तुम्। परत्र पुरुष एव फलार्थतया यज्ञत्वेन संपाद्यत इति अपुरुषलक्षणादन्यप्रशंसार्थादसांपादिकात् प्रातरादिसवनत्रयविशिष्टाद् यज्ञात् पुरुषलक्षणस्यानन्यशेषस्य आयुःसवनत्रयविशिष्टस्य सांपादिकयज्ञस्य रूपभेदाद् विद्याभेद उक्तः।

### *प्रकटार्थविवरणम्*

**पुरुषविद्यायामिव चेतरेषामनाम्नानात्।** छान्दोग्यशाखाभेदे तावदेका पुरुषविद्याऽस्तीत्याह— **अस्ति ताण्डिनामिति।** 'पुरुषो वाव यज्ञः तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनम् अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनम् अथ

### *भाष्यभावप्रकाशिका*

श्रूयमाणमनोमयत्वादिगुणविशिष्टब्रह्मणश्च भेदान्न प्रत्यभिज्ञासंभव इत्यर्थः। ननु विशिष्टभेदेऽपि स्वरूपाभेदात् प्रत्यभिज्ञानं स्यादित्यत आह— **न च ब्रह्मेति।** कतिपयगुणविशिष्टतया उभयत्राम्नानमन्तरेण स्वरूपमात्रस्यैव प्रत्यभिज्ञायमानतया विद्याभेदापादकत्वेऽतिप्रसङ्ग इत्यर्थः। इति द्वादशं संभृत्यधिकरणम्।

**पुरुषविद्यायामिव च इतरेषामनाम्नानात्। तत्र पुरुषो यज्ञः कल्पित इति।** 'पुरुषो वाव यज्ञ' इति सामानाधिकरण्यश्रवणादित्यर्थः। **त्रेधा विभज्येति।** यानि चतुर्विंशतिवर्षाणि तत्प्रातस्सवनम्, चतुश्चत्वारिंशद्वर्षाणि माध्यन्दिनं सवनम्, अष्टाचत्वारिंशद्वर्षाणि

### *न्यायनिर्णयः*

स्वरूपाभेदात् प्रत्यभिज्ञयोपसंहारसिद्धिमाशङ्क्याह— **न चेति।** कतिपयगुणविशिष्टतयोभयत्राम्नानं विना स्वरूपमात्रस्यैव प्रत्यभिज्ञानस्य ज्ञानाभेदकत्वे स्यादतिप्रसक्तिरित्यर्थः। तामेव व्यनक्ति— **एकमपीति।** एकस्यानेकगुणवत्त्वेनानेकधोपास्यत्वे दृष्टान्तमाह— **परेति।** यथोद्गीथस्यैकस्यैव परोवरीयस्त्वादिगुणवत्त्वेन हिरण्यश्मश्रुत्वादिगुणवत्त्वेन च बहुधोपासनं दृष्टं तथा ब्रह्मणोऽपि तत्तद्गुणकत्वेनानेकधोपासनाद् ब्रह्मसंबन्धमात्रेण प्रत्यभिज्ञाने स्यादतिप्रसक्तिरित्यर्थः। संभृत्यादीनां मनोमयत्वादीनां च विद्याप्रत्यभिज्ञापकत्वायोगे फलितमाह— **तस्मादिति।**।।२३।। इति द्वादशं संभृत्यधिकरणम्।।

तत्तद्देशभेदसंभिन्नविद्यासु गुणानुसंहारोक्तिप्रसङ्गात् कालभेदवद्विद्यायां गुणानुपसंहारमाह— **पुरुषेति।** विषयमाह— **अस्तीति।** 'पुरुषो वाव यज्ञ' इति सामानाधिकरण्यश्रुतेरर्थमाह— **तत्रेति।** छान्दोग्यशाखाभेदः सप्तम्यर्थः। तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनमथ यानि चतुश्चत्वारिंशद् वर्षाणि तन्माध्यन्दिनं सवनमथ यान्यष्टाचत्वारिंशद् वर्षाणि तत्तृतीयं सवनमिति प्रसिद्धयज्ञसाम्यार्थं सवनत्रयं कल्पितमित्याह— **तदीयमिति।** 'स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः' 'अथ यद्धसति यज्जक्षति

१. आरोपिततादात्म्यसंबन्धकल्पनापेक्षयेत्यर्थः।

**विभज्य सवनत्रयं कल्पितम्। अशिशिषादीनि च दीक्षादिभावेन कल्पितानि। अन्ये च धर्मास्तत्र समधिगता आशीर्मन्त्रप्रयोगादयः। तैत्तिरीयका अपि कंचित् पुरुषयज्ञं कल्पयन्ति– 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी' (म.ना. ८०) इत्येतेनानुवाकेन। तत्र संशयः– किं य इतरत्रोक्ताः[१] पुरुषयज्ञस्य धर्मास्ते तैत्तिरीयकेषूपसंहर्तव्याः, किंवा नोपसंहर्तव्या इति। पुरुषयज्ञत्वाविशेषादुपसंहारप्राप्तावाचक्ष्महे– नोपसंहर्तव्या इति। कस्मात्? तद्रूपप्रत्यभिज्ञानाभावात्। तदाहाचार्यः– पुरुषविद्यायामिवेति। यथैकेषां शाखिनां ताण्डिनां**

### *प्रकटार्थविवरणम्*

यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयसवनम्'' इति प्रसिद्धयज्ञसाम्यसिद्धये सवनत्रयं कल्पितम्। 'स यदशिशिषति, यत्पिपासति, यन्न रमते सा॒ऽस्य दीक्षा' इत्यादिना दीक्षादिकल्पनं; 'स ब्रूयात् प्राणा वाव वसव इदं मे प्रातः सवनं माध्यन्दिनं सवनम् अनुसन्तनुत' इत्यादिराशीः; सोऽन्तवेलायां मन्त्रत्रयं जपेत् 'अक्षितमस्यच्युतमसि प्राणसंशितमसि' इत्येवमादयोऽपि धर्मास्तत्रोक्ता इत्यर्थः। तथा तैत्तिरीयकाणामप्यारण्यकेऽस्ति पुरुषविद्येत्याह— **तैत्तिरीया अपीति**। समाख्यैकत्वादितरधर्मवैलक्षण्येन च विद्यान्यत्वाशङ्क्या संशयमाह-— **तत्रेति**। पूर्वत्र रूपभेदाद्विद्याभेदे सत्यनुपसंहार उक्तः। इह तूभयत्र मरणावभृथविशिष्टसाम्पादिकपुरुषयज्ञत्वलक्षणरूपैक्यात् समाख्यैकत्वाच्च विद्यैकत्वे सिद्धे सत्याशीर्मन्त्रप्रयोगादयस्तैत्तिरीयकेऽप्युपसंहर्तव्या इति पूर्वपक्षप्राप्तौ बहिरेव प्रतिजानीते— **नोपसंहर्तव्या इति**। छान्दोग्यगतपुरुषयज्ञरूपस्य तैत्तिरीयके प्रत्यभिज्ञानाभावादित्यर्थः। उक्तेऽर्थे सूत्रमवतार्य व्याचष्टे— **तदेतदाहेत्यादिना**। 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः वेदः शिखा हृदयं यूपः काम आज्यं मन्युः

### *भाष्यभावप्रकाशिका*

तृतीयसवनमिति श्रूयत इत्यर्थः। **अशिशिषादीनीति**। 'स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षा अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेत्यथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति। अथ यत्तपोदानवाङ्व[दानमार्जव]महिंसा सत्यवचनमिति ता अस्य दक्षिणा' इति दीक्षादिभावकल्पनाः श्रूयन्त इत्यर्थः। 'नाहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीये'त्याद्या आशिषः। अक्षितमस्युच्यतमसीत्यादयो मन्त्राः। इतरैस्ताण्डिभिः पैङ्गिभिश्च पठिता इतरप्रोक्ताः[१]। उभयत्रापि मरणावभृथविशिष्टसांपादिक-पुरुषयज्ञत्वलक्षणरूपैक्याद्विद्यैक्यं गुणोपसंहारश्चेति पूर्वपक्षं दर्शयति— **पुरुषयज्ञत्वाविशेषादिति**। न च क्वचिद् विद्वत्संबन्धित्वेन यज्ञः श्रूयते 'विदुषो यज्ञस्ये'ति, क्वचित् तस्यैव यज्ञत्वं 'पुरुषो वाव यज्ञः' इति; अतः पुरुषयज्ञ स....दमसिद्धमितरत्रेति शंकनीयम्। निषादस्थपतिन्यायेन विदुषो यज्ञस्येति समानाधिकरणाङ्गीकारात् पुरुषयज्ञस्योभयत्राविशिष्टत्वादित्यर्थः। 'आत्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमादि[नि] बर्हिर्वेदश्शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्नि[र्दमः]शमयिता दक्षिणा

### *न्यायनिर्णयः*

यन्मैथुनं चरति तत्स्तुतशस्त्रे' शब्दवत्त्वसाम्यादित्याह— **अशिशिषेति**। 'तं चेदेतस्मिन् वयसि किंचिद् व्याध्याद्युपतपेत् स ब्रूयात्प्राणा वा वसव इदं मे प्रातःसवनं माध्यंदिनं सवनमनुसंतनुते'त्यादिराशीः। 'सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसंशितमसी'ति मन्त्रप्रयोगस्तदाह— **अन्ये चेति**। संशयार्थं शाखान्तरीयपुरुषविद्यामुदाहरति— **तैत्तिरीयका इति**। तद्गतयोर्विदुषो यज्ञस्येति षष्ठ्योः सामानाधिकरण्यवैयधिकरण्यानिश्चयात् पुरुषविद्यामधिकृत्य संशयमाह— **तत्रेति**। इतरत्रेति च्छान्दोग्यभेदोक्तिः। अत्र च भेदानुपसंहारोक्त्या वाक्यार्थधीहेतुचिन्तनात् पादादिसङ्गतिः। पूर्वपक्षे विद्याऽभेदादुपसंहारः, सिद्धान्ते तद्भेदादनुपसंहार इत्यभिप्रेत्योभयत्रापि मरणावभृथविशिष्टसांपादिकपुरुषयज्ञत्वलक्षणरूपैक्याद् विद्यैक्यं गुणोपसंहारश्चेति पूर्वपक्षयति— **पुरुषेति**। निषादस्थपतिन्यायेन विदुषो यज्ञस्येति सामानाधिकरण्यात् पुरुषयज्ञस्योभयत्राविशेषादभेदोपसंहारावित्यर्थः। सिद्धान्तयति— **आचक्ष्मह इति**। पूर्वोक्तायतनविशेषयोगाभावादुपसंहारसिद्धिरिति शङ्कते— **कस्मादिति**। विद्यैक्यसाधकवेद्यैक्याभावात् तद्भेदे नोपसंहार इत्याह— **तदिति**। उक्तेऽर्थे सूत्रं पातयति— **तदाहेति**। तदक्षराणि व्याचष्टे— **यथेति**। अतो विद्याभेदादनुपसंहार इति शेषः।

---

१. 'इतरप्रोक्ताः' इति भाष्यभावप्रकाशिकादृतः पाठः।

**पैङ्गिनां च पुरुषविद्यायामाम्नानं नैवमितरेषां तैत्तिरीयाणामाम्नानमस्ति। तेषां हीतरविलक्षणमेव यज्ञसंपादनं दृश्यते, पत्नीयजमानवेदवेदिबर्हिर्यूपाज्यपशृत्विगाद्यनुक्रमणात्। यदपि सवनसंपादनं तदपीतरविलक्षणमेव 'यत्प्रातर्मध्यंदिनं सायं च तानि सवनानि' (म.ना. ८०) इति। यदपि किंचिन्मरणावभृथत्वादिसामान्यं तदप्यल्पीयस्त्वाद् भूयसा वैलक्षण्येनाभिभूयमानं न प्रत्यभिज्ञापनक्षमम्। न च तैत्तिरीयके पुरुषस्य यज्ञत्वं श्रूयते। विदुषो यज्ञस्येति हि न चैते समानाधिकरणे षष्ठ्यौ– विद्वानेव यो यज्ञस्तस्येति। न हि पुरुषस्य मुख्यं यज्ञत्वमस्ति। व्यधिकरणे त्वेते षष्ठ्यौ– विदुषो यो यज्ञस्तस्येति। भवति हि पुरुषस्य मुख्यो यज्ञसंबन्धः। सत्यां च गतौ मुख्य एवार्थ आश्रयितव्यो, न भाक्तः। 'आत्मा यजमान' इति च यजमानत्वं**

### *प्रकटार्थविवरणम्*

पशुस्तपोऽग्निः' इत्याद्यनुक्रमणात्। वेदः कुशमुष्टिनिर्मितः। एकत्र पत्न्यादिसंपादनम्, अपरत्र नेति वैलक्षण्यम्। तथा आयुः प्रविभज्यैकत्र सवनत्रयसंपादनम्, अपरत्र सायंकालादावित्यर्थः। ननु मरणावभृथत्वादिसाम्यमपि दृश्यत इत्याशङ्क्याह— **यदपि किंचिदिति**। किंचैकत्र पुरुषस्य यज्ञत्वम्, अपरत्र पुरुषसंबन्धित्वं यज्ञस्येति वैलक्षण्यान्तरमाह— **न च तैत्तिरीयके इति**। आध्यासिकापूर्वसंबन्धकल्पनात् प्रमाणान्तरप्रसिद्धविद्वत्संबन्धियज्ञानुवादस्यायुक्तत्वादित्यर्थः। एकस्यैव यज्ञत्वाप्रसङ्गादपि षष्ठ्यौ

### *भाष्यभावप्रकाशिका*

वाग्घोता प्राण उद्गाता चक्षुरध्वर्यु'रित्यादिबहुतरवैलक्षण्यात्र रूपैक्यमित्याह— **तेषां हीति**। सवनसंपत्तावपि न साम्यमित्याह— **यदपीति। यदपि किंचिदिति**। 'मरणमेवावभृथ' इति छान्दोग्ये, 'यन्मरणन्तदवभृथ' इति तैत्तिरीयके। अत्रादिग्रहणे यद्रमते तदुपसदैरेतीति मरणो[रमणो]पसदत्वं गृह्यते। अतो रूपैक्याद् विद्यैक्यमित्यर्थः। उत्तरमाह— **तदपीति**। बहुतरवैलक्षण्ये सति न किंचिन्मात्रसालक्षण्याद्विद्यैकत्वमतिप्रसङ्गादित्यर्थः। पुरुषय...विशेषोऽप्यसिद्ध इत्याह— **न च तैत्तरीयक इति**। ननु निषादस्थपत्यधिकरणन्यायेन वैयधिकरण्यात्सामानाधिकरण्यस्याभ्यर्हितत्वात् तदेवाभ्युपेयमिंत्याशङ्क्याह— **न चैते इति**। किमत्र कारणमिति, तत्राह— **न हि पुरुषस्येति**। यत्रार्थानुपपत्तिर्नास्ति तत्रैवायं न्यायः, इह तु पुरुषस्य कर्तृत्वाद्यज्ञस्य च क्रियात्वादचेतनत्वाच्च न पुरुषैक्यं संभवतीत्यर्थः। कथं तर्हि समन्वय इति, तत्राह— **व्यधिकरणे त्विति**। नन्वन्यत्र तथा भावेऽप्यनैकत्वं विवक्ष्यत इत्याशङ्क्याह— **सत्यां चेति**। प्रमाणान्तरप्रसिद्धं विद्वत्संबन्धित्वं यज्ञस्यापूर्वसंबन्धकल्पनया न बाधनीयम्, तदनुवादेन विद्याप्रशंसार्थं

### *न्यायनिर्णयः*

यत्तु रूपैक्याद् विद्यैक्यं गुणोपसंहारश्चेति, तत्राह— **तेषां हीति**। तत्र हेतुमाह— **पत्नीति**। 'आत्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता[१] दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत्' इत्यादिबहुतरवैलक्षण्यात्र तद्रूपैक्यमित्यर्थः। वैलक्षण्यान्तरमाह— **यदपीति**। छान्दोग्ये हि पुरुषस्यायुस्त्रेधा विभज्य सवनत्रयमुक्तम्। तैत्तिरीयके तु सायं प्रातर्मध्यंदिनमिति सवनसंपादनमितरविलक्षणं लक्ष्यते, तेन विद्याभेद इत्यर्थः। 'मरणमेवावभृथः' इति छान्दोग्ये, 'यन्मरणं तदवभृथः' इति तैत्तिरीये, 'यद्रमते तदुपसदः' इति चोभयत्रापि तुल्यम्, अतो रूपैक्याद्विद्यैक्यमिति चोद्यमनुवदति— **यदपीति**। बहुतरवैलक्षण्ये सति किंचिन्मात्रसालक्षण्यात्र विद्यैक्यमतिप्रसङ्गादित्याह— **तदपीति**। यत्तु पुरुषयज्ञत्वाविशेषादिति, तत्राह— **न चेति**। निषादस्थपतिन्यायेन षष्ठ्योः सामानाधिकरण्यात् पुरुषस्य यज्ञत्वमुक्तमित्याशङ्क्याह— **विदुष इति**। सामानाधिकरण्याभावे हेतुमाह— **न हीति**। अर्थानुपपत्त्यभावे न्यायोऽवतरति। प्रकृते च पुरुषस्य कर्तृत्वाद् यज्ञस्य क्रियात्वादचैतन्याच्च पुरुषैक्यायोगान्न्यायाप्रवृत्तिरित्यर्थः। कथं तर्हि षष्ठ्योरन्वयः, तत्राह— **व्यधिकरणे त्विति**। अर्थानुपपत्तिस्तत्रापि तुल्येत्याशङ्क्याह— **भवतीति**। अन्यत्र तथाभावेऽपि प्रकृते पुरुषस्य यज्ञत्वमेवेत्याशङ्क्योक्तम्— **सत्यां चेति**। यज्ञस्य [२]ज्ञानवद्योगित्वं मानान्तरसिद्धमपूर्वसंबन्धकल्पनया न त्याज्यं तदनुवादेन विद्याप्रशंसनार्थं पत्न्यादिसंपादनसंभवादित्यर्थः।

---

१. दमाख्यः शमयिता दक्षिणा। द्र. सायणभाष्यम्। २. विद्वत्सम्बन्धित्वमित्यर्थः।

**पुरुषस्य निर्ब्रुवन् वैयधिकरण्येनैवास्य यज्ञसंबन्धं दर्शयति। अपि च 'तस्यैवं विदुष' इति सिद्धवदनुवादश्रुतौ सत्यां पुरुषस्य यज्ञभावमात्मादीनां च यजमानादिभावं प्रतिपित्समानस्य वाक्यभेदः स्यात्। अपि च ससंन्यासामात्मविद्यां पुरस्तादुपदिश्यानन्तरं 'तस्यैवं विदुष' इत्याद्यनुक्रमणं पश्यन्तः पूर्वशेष एवैष आम्नायो, न स्वतन्त्र इति प्रतीमः। तथा चैकमेव फलमुभयोरप्यनुवाकयोरुपलभामहे—'ब्रह्मणो महिमानमाप्नोति' (म.ना.७९, ८०) इति। इतरेषां त्वनन्यशेषः पुरुषविद्याम्नायः। आयुरभिवृद्धिफलो ह्यसौ 'प्र ह षोडशं वर्षशतं जीवति य एवं वेद' (छा.उ. ३।१६।७) इति समभिव्याहारात्। तस्माच्छाखान्तराधीतानां पुरुषविद्याधर्माणामाशीर्मन्त्रादीनामप्राप्तिस्तैत्तिरीयके।।२४।।**

।। इति त्रयोदशं पुरुषविद्याधिकरणम् ।।

## *प्रकटार्थविवरणम्*

समानाधिकरणे इत्याह— **आत्मा यजमान इति चेति**। वाक्यभेदप्रसङ्गादपि न तैत्तिरीयके पुरुषस्य यज्ञत्वमित्याह— **अपि चेति**। विशेष्यमनूद्य यदा विदुष एव यज्ञत्वं यजमानत्वं च तदा विशेषणानामन्योन्यमनन्वयेऽनेको वाक्यार्थ इति स्याद् वाक्यभेद इत्यर्थः। किंचान्यशेषत्वानन्यशेषत्वाभ्यामपि विद्याभेद इत्याह— **अपि च ससंन्यासामिति**। षोडशाधिकं वर्षशतं प्रजीवतीत्यर्थः। यस्माद् विद्याभेदः तस्मादनुपसंहार इत्याह— **तस्मादिति**। इति त्रयोदशं पुरुषविद्याधिकरणम्।।

## *भाष्यभावप्रकाशिका*

पत्न्यादिसंपादनोपपत्तेरित्यर्थः। यजमानतया पुरुषस्य यज्ञसंबन्धिताभिधानादपि न यज्ञात्मकत्वं पुरुषस्येत्याह— **आत्मा यजमान इतीति। अपि च तस्यैवमिति**। अनुवादश्रुतावनेकार्थविधाने वाक्यभेददोषप्रसङ्ग इत्यर्थः। अपि च पैङ्गिनां ताण्डिनां च फलान्तरप्रयुक्ततया पुरुषस्य विद्या स्वतन्त्रा। तैत्तिरीयाणां तु 'तस्यैवं विदुष' इति पूर्वोक्तपरामर्शात् पूर्वेणैकफलत्वावगमाच्च परतन्त्रा। न च स्वतन्त्रपरतन्त्रयोरैक्यसंभव इत्याह— **अपि च ससंन्यासामिति**। इति त्रयोदशं पुरुषविद्याधिकरणम्।।

## *न्यायनिर्णयः*

यजमानतया पुरुषस्य यज्ञसंबन्धितावचनादपि न यज्ञात्मतेत्याह— **आत्मेति**। इतोऽपि तैत्तिरीयके पुरुषयज्ञत्वं नेष्टमित्याह— **अपि चेति**। यथा प्रमितेऽर्थे प्रवृत्तं प्रमाणमनुवादकं तथा यज्ञस्य प्रमाणान्तरसिद्धविद्वद्योगिताऽनुवादेन विशेषणविधिश्रुतौ प्रमितविशेषणानामनूदितविशेष्यगामित्वेनैकवाक्यत्वसंभवे विशेष्यस्य विशेषणानां च पृथक्प्रतिपादनेन वाक्यभेदः स्यादित्यर्थः। इतश्चोभयत्र भिन्ना पुरुषविद्येत्याह— **अपि चेति**। संन्यासेनाङ्गेन सहितामङ्गितया स्थितामात्मविद्यां पुरस्तात् 'प्राजपत्यो हारुणि'रित्यादावनुवाके 'न्यास इति ब्रह्मे'त्यादिनोक्त्वा 'तस्यैवं विदुष' इति पूर्वोक्तपरामर्शात्तच्छेषत्वमस्य भातीत्याह— **ससंन्यासामिति**। इतश्च पूर्वशेषोऽयमाम्नायो न स्वतन्त्र इत्याह— **तथा चेति**। तैत्तिरीयाणां पुरुषविद्याम्नायस्य पारतन्त्र्यमुक्त्वा पैङ्गिनां ताण्डिनां च तदाम्नायस्य स्वातन्त्र्यमाह— **इतरेषां त्विति**। तत्र हेतुमाह— **आयुरिति**। षोडशाधिकं वर्षशतं प्रकर्षेण व्याध्याद्यनुपद्रुतो जीवत्युक्तप्रकारेणात्मानं यज्ञाद्यात्मकं विद्वानिति विद्यया सहायुरभिवृद्धिफलस्य संकीर्तनात् तत्फलत्वेन स्वातन्त्र्यं पुरुषविद्यायाः सिद्धमित्यर्थः। स्वतन्त्रपरतन्त्रयोरैक्यायोगे फलितमाह— **तस्मादिति**।।२४।। इति त्रयोदशं पुरुषविद्याधिकरणम्।।

## १४।।वेधाद्यधिकरणम्।।सू. २५।।

## वेधाद्यर्थभेदात्।।२५।।

**अस्त्याथर्वणिकानामुपनिषदारम्भे मन्त्रसमाम्नायः– 'सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्य शिरोऽभिप्रवृज्य त्रिधा विपृक्तः' इत्यादिः; ताण्डिनाम्– 'देव सवितः प्रसुव यज्ञम्' (तां.ब्रा.१।१) इत्यादिः; शाट्यायनिनाम्– 'श्वेताश्वो हरितनीलोऽसि' इत्यादिः; कठानां तैत्तिरीयाणां च– 'शं नो मित्रः शं वरुणः' (तै.उ. १।१) इत्यादिः। वाजसनेयिनां तूपनिषदारम्भे प्रवर्ग्यब्राह्मणं पठ्यते– 'देवा ह वै सत्रं निषेदुः' (शत-१४।१।१।१) इत्यादि; कौषीतकिनामप्यग्निष्टोमब्राह्मणम्– 'ब्रह्म वा अग्निष्टोमो ब्रह्मैव तदहर्ब्रह्मणैव ते ब्रह्मोपयन्ति तेऽमृतत्वमाप्नुवन्ति य एतदहरुपयन्ति' इति। किमिमे 'सर्वं प्रविध्य' इत्यादयो**

### *शारीरकन्यायसंग्रहः*

**वेधाद्यर्थभेदात्।।२५।।** यद्यप्येकस्याग्निहोत्रस्य काम्यनित्यविनियोगद्वयवत् उपनिषत्प्रारम्भपठितानां मन्त्रकर्मणां लिङ्गवाक्यादिभिः कर्मान्तरेषु विनियोगे सत्यपि सन्निधिलक्षणात् प्रकरणप्रमाणाद् विद्यास्वपि विनियोगो न विरुध्यत इति प्राप्तम्, तथापि एकस्योभयार्थतायां स्वतो विरुद्धायां तुल्यप्रमाणसम्बन्धात् अविरोधोऽग्निहोत्रे कल्पितः, इह तु वाक्यलिङ्गैः सन्निधौ[सन्निधेः] दुर्बलतया बाधात् अध्ययनधर्मसामान्येनापि सन्निध्युपपत्तेः न विद्यासु विनियोगः इत्युक्तम्।

### *प्रकटार्थविवरणम्*

**वेधाद्यर्थभेदात्।** विषयं दर्शयति— **अस्तीति।** यजमानो देवतां प्रार्थयते— भोः देवते मदीयरिपोः सर्वमङ्गं प्रविध्य भिन्धि; विशेषतश्च हृदयं प्रविध्य, धमनीः सिराः प्रवृज्य विभज; त्रिधा आध्यात्मिकाधिभौतिकाधिदैविकोपतापैः विपृक्तो विप्रयुक्तो भवतु मदीयः शत्रुरित्यर्थः। हरितनीलमणिप्रभवत्वादिन्द्रस्य हरिनीलोऽसीति विशेषणम्। शं सुखं करोतु; नोऽस्माकम्; मित्रो नाम देवतेत्यर्थः। एतदहः कर्मोपयन्त्यनुतिष्ठन्तीत्यर्थः। उपकारभावाभावप्रमाणाभ्यां संशयमाह— **किमिम इति।** पूर्वाधिकरणवदनुपसंहारहेतोः

### *भाष्यभावप्रकाशिका*

**वेधाद्यर्थभेदात्।** विचारविषयमाह— **अस्तीति।** तत्तदुपनिषदामारम्भे ते ते मन्त्रास्तानि तानि च कर्माणि श्रूयमाणानि

### *न्यायनिर्णयः*

पूर्वत्रात्मविद्यासंनिधौ श्रवणात् तैत्तिरीयगतपुरुषयज्ञो ज्ञानाङ्गमित्यङ्गीकृत्यायुरभिवृद्धिफलविद्यातो भेदोऽस्य दर्शितः। सम्प्रति प्रवर्ग्यादीनामपि विद्यासंनिध्यविशेषात् तदङ्गत्वमित्याशङ्क्यान्यत्रानुपसंहारार्थं तेषामङ्गत्वं निरस्यति— **वेधादीति।** तत्तदुपनिषदारम्भे ते ते मन्त्रास्तानि तानि च कर्माणि श्रुतानि विषय इति वक्तुमारभते— **अस्तीति।** अभिचारदेवतामभिचारकर्ता प्रार्थयते— **सर्वमिति।** हे देवते, मद्रिपोः सर्वमङ्गं प्रविध्य विदारय। विशेषतश्च हृदयं प्रविध्य भिन्धि। धमनीः शिराः प्रवृज्य विभज त्रोटय। तदीयं शिरश्चाभितो विदारय। एवं मद्रिपुर्बहुधा विपृक्तो विश्लिष्टो भवत्वित्यर्थः। विश्वप्रकाशकत्वात् तत्प्रसवहेतुत्वाच्च देव सवितरित्यादित्यः संबोध्यते। स च यज्ञस्य यज्ञपतेश्च यजमानस्य निर्वर्तने नियुज्यते— प्रसुवेति। उच्चैःश्रवाः श्वेतोऽश्वो यस्य तव स त्वं श्वेताश्वोऽसि हरित इन्द्रनीलस्तद्वन्नीलोऽसीतीन्द्रः संबोध्यते। मित्रो नामादित्यो नोऽस्माकं सुखकरो भूयादिति विद्यार्थी प्रार्थयते। एवं शं वरुण इत्यादि योज्यम्। इन्द्रादयो देवाः किल कस्मिंश्चित् पूर्वस्मिन् काले सत्रं निर्वर्तयितुं निविष्टवन्तः इत्युपक्रम्य प्रवर्ग्याख्यं कर्म श्रुतमित्याह— **देवा इति।** अग्निष्टोमब्राह्मणमुपनिषदारम्भे पठ्यत इति संबन्धः। अग्निष्टोमो ब्रह्मैव, स यस्मिन्नहनि क्रियते तदपि ब्रह्म, अतश्चैतदहरहर्निर्वर्त्यं कर्म ये केचिदुपयन्त्यनुतिष्ठन्ति ते ब्रह्मणैव साधनेन ब्रह्मापरमुपगच्छन्ति, ते चामृतत्वं परं ब्रह्म क्रमेण प्राप्नुवन्तीत्यर्थः। विषयमुक्त्वोपकारभावाभावमानाभ्यां संशयमाह— **किमित्यादिना।** अत्र च

**मन्त्राः, प्रवर्ग्यादीनि च कर्माणि विद्यासूपसंह्रियेरन्, किंवा नोपसंह्रियेरन्निति मीमांसामहे। किं तावन्नः प्रतिभाति? उपसंहार एवैषां विद्यास्विति। कुतः? विद्याप्रधानानामुपनिषद्ग्रन्थानां समीपे पाठात्। नन्वेषां विद्यार्थतया विधानं नोपलभामहे। बाढम्। अनुपलभमाना अपि त्वनुमास्यामहे संनिधिसामर्थ्यात्। न हि संनिधेरर्थवत्त्वे संभवत्यकस्मादसावनाश्रयितुं[1] युक्तः। ननु नैषां मन्त्राणां विद्याविषयं किंचित्सामर्थ्यं पश्यामः; कथं च प्रवर्ग्यादीनि कर्माण्यन्यार्थत्वेनैव विनियुक्तानि सन्ति विद्यार्थत्वेनापि प्रतिपद्येमहीति। नैष दोषः।**

### *प्रकटार्थविवरणम्*

रूपभेदस्याभावादुपसंहार इत्याह— **किं तावदिति**। विद्याशेषत्वे विनियोजकप्रमाणाभावादनुपसंहारं शङ्कते— **नन्वेषामिति**। सत्यम्; यद्यपि श्रुत्यादि स्पष्टं नोपलभ्यते, तथाप्यनुपलभमाना अपि वयमनुमास्यामहे विनियोगं प्रकरणसामर्थ्यात्; न हि प्रकरणस्य सार्थकत्वे संभवत्यकस्मादसौ विनियोगाभाव आश्रयितुं शक्यत इत्यर्थः। विद्याप्रकाशनसामर्थ्याभावादनुपकारकत्वान्नास्त्युपसंहार इत्याह— **ननु नैषामिति**। किंच 'उपसदा चरिष्यन् प्रवर्ग्येण चरति' इत्यादिप्रमाणान्तरेण कर्माङ्गत्वेन विनियोगाद् विद्याङ्गत्वं विरुद्धमित्याह— **कथं चेति**। यद्यपि सर्वेषां मन्त्रपदानां नास्ति विद्याप्रकाशनसामर्थ्यं तथाप्येकदेशस्य विद्यत इत्याह— **नैष दोष**

### *भाष्यभावप्रकाशिका*

विषय इत्यर्थः। संशयमाह— **किमिम इति**। पूर्वपक्षमाह— **उपसंहार इति**। विनियोजकप्रमाणाभावे कथं विद्याशेषत्वमिति, तत्राह— **विद्याप्रधानानामिति**। फलवत्सन्निधावफलं तदङ्गमिति न्यायात् फलवद्विद्यासन्निधौ पठ्यमानानां तदङ्गतेत्यर्थः। श्रुतिलिङ्गादीनां विनियोजकानामन्यतस्याप्यनुपलम्भात् कांचिद्विद्यामारभ्य समाम्नातत्वाभावाद् यथाविहिताङ्गैरेव परिपूर्णाया विद्याया एतेष्वाकाङ्क्षाया अप्यभावान्नैषां विद्याशेषत्वमिति शङ्कते— **नन्वेषामिति**। विद्याया निराकाङ्क्षत्वेऽपि मन्त्रादीनां पुरुषार्थशेषत्ववयव (?) फलवत्संबन्ध-साकाङ्क्षत्वात् फलवद्विद्यासन्निधिपठितानां तच्छेषतया फलवत्त्वसंभवेऽपि फलान्तरकल्पनायोगादेकतराकाङ्क्षायामपि रक्तपटन्यायेन संबन्धोपपत्तेर्विद्याया अप्याकाङ्क्षामुत्थाप्य प्रकरणाद्याक्षेपेण तच्छेषत्वं कल्पनीयमिति परिहरति— **बाढमिति**। ननु सन्निधिपाठस्य धर्मसाम्येऽपि संभवान्न विद्याशेषत्वप्रसिद्धिरित्याशङ्क्याह— **न हि सन्निधेरिति**। अकस्मात् प्रयोजनं विनेत्यर्थः। नद्वद[नन्व]नुष्ठेयार्थ-प्रकाशकत्वान्मन्त्राणां विद्याशेषस्यार्थस्याप्रकाशकानां कथं विद्याशेषत्वमिति शङ्कते— **ननु नैषामिति**। 'पुरस्तादुपसदां प्रवर्ग्येण चरन्ती'ति वाक्येन प्रवर्ग्यस्य क्रतुविशेषतावगमान्न सन्निधिबलाद्विद्याशेषत्वमुपपन्नमित्याह— **कथं च प्रवर्ग्यादीनीति**। विद्या-समवेतार्थप्रकाशनेन मन्त्राणां तच्छेषत्वं साधयति— **सामर्थ्यं तावदिति**। भवतु हृदयादिसंकीर्तनम्, तथापीतरेषां मन्त्रवादानां विद्या-

### *न्यायनिर्णयः*

विद्यासांनिध्याम्नातानामपि मन्त्रादीनां तदुपकारकत्वाभावेनातच्छेषतया नान्यत्रोपसंहार्यतेत्युक्तिद्वारा विचारस्य ज्ञानहेतुयोगात् पादादिसंगतिः। पूर्वपक्षे मन्त्रादीनां विद्योपाधावुपसंहारः, सिद्धान्ते त्वनुपसंहार इत्यभिप्रेत्य विमृश्य पूर्वपक्षयति— **किमिति**। विनियोजकमानाभावे कथं विद्याशेषतेति शङ्कते— **कुत इति**। 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायात् फलवद्विद्यासंनिध्याम्नातानां तदङ्गतेत्याह— **विद्येति**। श्रुत्यादीनां विनियोजकानामन्यतमस्याप्यनुपलम्भादारभ्य कांचन विद्यामनाम्नानादाम्नाताङ्गैरेव पूर्णाया नैराकाङ्क्ष्यान्नैषां विद्याशेषतेति शङ्कते— **नन्विति**। विद्याया नैराकाङ्क्ष्येऽपि मन्त्रादीनां फलवत्त्वाय फलवन्नियोगसाकाङ्क्षत्वात् फलवद्विद्यासंनिहितानां तच्छेषतया फलवत्त्वे फलान्तरकल्पनायोगादेकतराकाङ्क्षायां विद्याकाङ्क्षामापाद्य प्रकरणाद्याक्षेपेण तच्छेषतेत्याह— **बाढमिति**। संनिधेर्धर्मसाम्येऽपि संभवान्न विद्याशेषतेत्याशङ्क्याह— **न हीति**। अकस्मात् फलं विनेति यावत्। अनुष्ठेयप्रकाशित्वान्मन्त्राणां विद्याशेषमर्थमप्रकाशयतां न तच्छेषतेति शङ्कते— **नन्विति**। कर्मणां विद्याशेषत्वं संनिधेरुक्तं प्रत्याह— **कथं चेति**। 'पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ती'ति वाक्येन प्रवर्ग्यस्य क्रतुशेषत्वसिद्धेर्न संनिधेर्विद्याशेषत्वम्, तस्य वाक्याद्दौर्बल्यादग्निष्टोमादेश्च ज्योतिष्टोमादिवाक्येन स्वर्गादिफलत्वज्ञानान्न विद्याशेषतेत्यर्थः। मन्त्राणां कर्मणां च विद्याशेषत्वाभावं दूषयति— **नेति**। तत्र मन्त्राणां विद्यासमवेतार्थप्रकाशनेन

---

१. 'आश्रयितुम्' इति पाठान्तरम्।

**सामर्थ्यं तावन्मन्त्राणां विद्याविषयमपि किंचिच्छक्यं कल्पयितुं हृदयादिसंकीर्तनात्। हृदयादीनि हि प्रायेणोपासनेष्वायतनादिभावेनोपदिष्टानि। तद्द्वारेण च 'हृदयं प्रविध्ये'त्येवंजातीयकानां मन्त्राणामुपपन्न-मुपासनाङ्गत्वम्। दृष्टश्चोपासनेष्वपि मन्त्रविनियोगः 'भूः प्रपद्येऽमुनाऽमुनाऽमुना' (छा.उ. ३।१५।३) इत्येवमादिः। तथा प्रवर्ग्यादीनां कर्मणामन्यत्रापि विनियुक्तानां सतामविरुद्धो विद्यासु विनियोगो वाजपेय इव बृहस्पतिसवस्येति।**

***प्रकटार्थविवरणम्***

**इति**। किंचोपनिषद्गतानां केषां चिन्मन्त्राणाम् उपासनशेषत्वदर्शनादितरेषामपि अनुमीयत इत्याह— **दृष्टश्चेति**। पुत्रस्य दीर्घायुष्ट्वफलाय कोशोपासने अयं प्रार्थनामन्त्रः पितुः 'भूः' इति भूमिलोकं प्रपद्ये प्रपन्नोऽस्मि। पुरुषस्य दीर्घायुषो[पुत्रस्य दीर्घायुषे]ऽमुनेति नाम गृह्णाति पुत्रस्य। यदुक्तं विनियुक्तानां विनियोगो विरुद्ध इति; तत्राह— **तथा प्रवर्ग्यादीनामिति**। 'ब्राह्मणो ब्रह्मवर्चसकामो बृहस्पतिसवेन यजेत' इति विनियुक्तस्यापि बृहस्पतिसवस्य यथा 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति वाजपेयाङ्गतया

***भाष्यभावप्रकाशिका***

स[म]वेतार्थप्रकाशकताभावान्न विद्याशेषत्वमित्याशङ्क्याह— **तद्द्वारेणेति**। यथा देवसत्रे.....मात्रेषु अग्नये जुष्टन्निर्वपामीति कतिपय पदानामेव प्रयोगसमवेतार्थप्रकाशकत्वेऽपीतरेषां तदेकवाक्यतया कथंचिन्नयनमेवं हृदयपदस्योपासनासमवेतार्थप्रकाशकतानुसारेण तदेकवाक्यतया पदान्तराणां गौवक्षणया या[गौण्या लक्षणया वा] वृत्त्या कथंचि[न्नय]नसंभवात् प्रयोगसमवेतार्थप्रकाश्यतेत्यर्थः। न चेदमपूर्वं कल्प्यतेऽन्यत्रापि दृष्टत्वादित्याह— **दृष्टश्चेति**। कथं तर्हि प्रवर्ग्यादिकर्मणां विद्याशेषत्वमिति, तदाह— **तथा प्रवर्ग्यादीनामिति**। यद्यपि 'पुरस्तादुपसदां प्रवर्ग्येण चरन्ती'ति वाक्यं क्रतुशेषताप्रतिपादकात्सन्निधेर्बलवत् तथाऽपि विरोधाभावान्न उपा[बा]ध्यते वाक्येन विनियुक्तस्यापि ज्योतिष्टोमे प्र...त्मस्य [प्रवर्ग्यस्य] सन्निधिना विद्यास्वपि विनियोगसंभवादित्यर्थः। तत्र दृष्टान्तमाह— **वाजपेय इवेति**। 'ब्रह्मवर्चसकामो बृहस्पतिसवेन यजेते'ति ब्रह्मवर्चसफलोऽपि बृहस्पतिसवो वाजपेयाङ्गत्वेन विधीयते। 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'त्यत्र हि क्त्वाप्रत्ययात् समानकर्तृकतावगमादेकप्रयोगतामन्तरेण च समानकर्तृकत्वा-भावादेकप्रयोगतायाश्च गुणप्रधानभावमन्तरेणासंभवाद् वाजपेयप्रकरणे समाम्नानाच्च वाजपेयः प्रधानं बृहस्पतिसवोऽङ्गमिति गम्यते।

***न्यायनिर्णयः***

तच्छेषत्वं साधयति— **सामर्थ्यमिति**। हृदयादीत्यादिपदेन नाडीनामादित्यादेश्च संग्रहः। तथापि कथं मन्त्राणां विद्यादिविषयं सामर्थ्यम्, तत्राह— **हृदयेति**। तदसंबद्धान्यपि सन्ति कानिचिदुपासनानीति **प्रायेणे**त्युक्तम्। हृदयादिपदस्य विद्यासमवेतार्थत्वेऽपि कथमितरेषां मन्त्रपदानां विद्याशेषतेत्याशङ्क्य हृदयादिपदानुसारेण तदेकवाक्यतया पदान्तराणामपि यथाकथंचिदुपास्यर्थतेत्याह— **तदिति**। उपास्तिषु मन्त्रविनियोगस्यादृष्टेरश्लिष्टा कल्पनेत्याशङ्क्याह— **दृष्टश्चेति**। पुत्रस्य दीर्घायुष्ट्वार्थं छान्दोग्ये त्रैलोक्यं कोशत्वेन परिकल्प्योपास्तिरुक्ता। तत्र पितुरयं प्रार्थनामन्त्रो भूरित्यादि। अमुनेति पुत्रस्य त्रिर्नाम गृह्णात्यमुना देवदत्तनाम्ना सह भूरितीमं लोकं प्रपद्य इत्यर्थः। यत्तु प्रवर्ग्यादीनामन्यत्र विनियोगान्न विद्याशेषतेति, तत्राह— **तथेति**। यद्यपि 'पुरस्तादुपसदामि'त्यादिवाक्यं प्रवर्ग्यादीनामन्यशेषत्ववादि विद्याशेषत्वसाधकसंनिधेर्बलीयस्तथाप्यविरोधान्न वाक्येन बाध्यः संनिधिर्वाक्येनान्यत्र विनियुक्तस्यापि प्रवर्ग्यादेः संनिधिना विद्यास्वपि विनियोगादित्यर्थः। तत्र दृष्टान्तमाह— **वाजपेय इति**। 'ब्रह्मवर्चसकामो बृहस्पतिसवेन यजेत' इति ब्रह्मवर्चसफलोऽपि बृहस्पतिसवो 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति वाजपेयाङ्गत्वेन विधीयते, क्त्वाप्रत्ययादेक-कर्तृकतासिद्धेरेकप्रयोगतामन्तरेण तदयोगादेकप्रयोगतया गुणप्रधानभावापेक्षत्वाद् वाजपेयप्रकरणाम्नानात् तस्याङ्गित्वं बृहस्पतिसवस्याङ्गत्वम्।

नन्वेवं मीमांसकानां मुद्राभेदः कृतः। यदि बृहस्पतिसववाक्यं प्रकरणान्तरस्थबृहस्पतिसवविपरिवृत्त्यर्थम् कस्तर्हि वाजपेयाङ्गविधिः? अथैष विधिः, कथं तर्हि प्रकरणान्तरस्थबृहस्पतिसवस्येह संनिधिः? न चैकमेव वाक्यं दूरस्थं कर्म संनिधापयत्यङ्गत्वेन च विदधाति। तस्मात् प्रकरणान्तरे कौण्डपायिनवत् कर्मान्तरं बृहस्पतिसवः। तन्नाम तु प्रसिद्धबृहस्पतिसवधर्मातिदेशार्थम्। तथा च कर्मान्तरमेव वाजपेयाङ्गत्वेन विधीयत इति मतद्वयेऽपि स्थिते कथं विनियुक्तविनियोगाशङ्केति? सत्यमभ्युपेत्य वादोऽयम्[१]।

---

१. वस्तुतस्तु मीमांसकानां मुद्राभेद एवात्र चिकीर्षित इति परिमले स्पष्टम्। पृ. ७८९।

**एवं प्राप्ते ब्रूमः– नैषामुपसंहारो विद्यास्विति। कस्मात्? वेधाद्यर्थभेदात्। 'हृदयं प्रविध्ये'त्येवंजातीयकानां हि मन्त्राणां येऽर्था हृदयवेधादयो भिन्ना अनभिसंबद्धास्त उपनिषदुदिताभिर्विद्याभिः। न तेषां ताभिः संगन्तुं सामर्थ्यमस्ति। ननु हृदयस्योपासनेष्वप्युपयोगात् तद्द्वारक उपासनासंबन्ध उपन्यस्तः। नेत्युच्यते। हृदयमात्रसंकीर्तनस्य ह्येवमुपयोगः कथंचिदुत्प्रेक्ष्येत। न च हृदयमात्रमत्र मन्त्रार्थः। 'हृदयं प्रविध्य धमनीः प्रवृज्ये'त्येवंजातीयको हि न सकलो मन्त्रार्थो विद्याभिरभिसंबध्यते। आभिचारिकविषयो ह्येषोऽर्थः, तस्मादाभिचारिकेण कर्मणा 'सर्वं प्रविध्ये'त्येतस्य मन्त्रस्याभिसंबन्धः। तथा 'देव सवितः प्रसुव यज्ञम्' इत्यस्य यज्ञप्रसवलिङ्गत्वाद् यज्ञेन**

*प्रकटार्थविवरणम्*

विनियोगः, तथेहापि प्रकरणाद् विद्याङ्गतया विनियोगो भविष्यतीत्यर्थः।

बहिरेवानुपसंहारं प्रतिज्ञाय हेतुत्वेन सूत्रं योजयति— **नैषामित्यादिना**। अभिचारविषयप्रकाशनसामर्थ्येन लिङ्गेन बलवताऽभिचारे विनियोगावगमात् न दुर्बलेन सन्निधिना विद्यायां विनियोग इति भावः। भोः देव सवितः त्वं प्रसुव जनयेति यज्ञप्रसवलिङ्गात् सामान्येन तावद् यज्ञेन कर्मणा सम्बन्धोऽवगत इत्याह— **तथा देवेति**। यज्ञसंबन्धिकर्मस्वपि मध्ये कुत्र संबन्ध इति

*भाष्यभावप्रकाशिका*

न च 'दर्शपूर्णमासाविष्ट्वा सोमेन यजेते'त्यत्र क्त्वाप्रत्ययप्रयोगेऽप्यङ्गाङ्गिभावादर्शनादिदमयुक्तमिति शङ्कनीयम्। दर्शपूर्णमासयोः सोमस्य वा प्रकरणे तद्वचनस्यानाम्नातत्वात्तयोरगृह्यमाणविशेषतया गुणप्रधानभावानवगमात् समानकर्तृकत्वस्यापि अधिष्ठानमात्रविवक्षया लाक्षणिकत्वोपपत्तेः कालार्थोऽयं संयोग इत्यर्थः।

भिन्नशब्दस्य सौत्रस्य विवक्षितमर्थमाह— **अनभिसंबन्धा इति**। ननु हृदयपदद्वाराऽन्येषामपि विद्यासंबन्धो दर्शित इत्याशङ्क्याह— **अभिचारविषय इति**। अयं भावः स्वरसतस्सकलैरेव पदैरयं मन्त्रोऽभिचारकर्मसमवेतार्थप्रकाशनं.....ते। अतः सामर्थ्यलक्षणं लिङ्गं

*न्यायनिर्णयः*

खादिरत्वादि चात्र व्यवस्थितमुदाहरणम्। न च साधिकारयोरपि कर्मणोरङ्गाङ्गित्वे 'दर्शपूर्णमासाविष्ट्वा सोमेन यजेते'त्यत्रापि स्याद् दर्शपूर्णमासयोः सोमस्य वा प्रकरणे तद्वचनानाम्नानात् तयोरगृह्यमाणविशेषतया गुणप्रधानत्वासिद्धेर्भिन्नप्रयोगत्वेऽपि क्रिययोः कर्तृत्वाधिष्ठानपुरुषस्यैक्यात् प्रत्ययसिद्धेरङ्गाङ्गित्वप्रमापकाभावे चाधिष्ठानलक्षणाविरोधाद् दर्शपूर्णमासोत्तरकालता सोमानुष्ठानस्येति कालार्थोऽयं संयोगः। प्रकृते तु प्रकरणाध्ययनसिद्धये प्रत्ययप्रमितमङ्गाङ्गित्वम्, अतो बृहस्पतिसवस्यान्यत्र विनियुक्तस्यैव वाजपेये क्त्वाप्रत्ययेन विनियोगवत् प्रवर्ग्यादीनामपि विनियुक्तानामेवान्यत्र संनिधिना विद्यास्वपि विनियोग इति भावः।

पूर्वपक्षमनूद्य सूत्राद् बहिरेवानुपसंहारं प्रतिजानीते— **एवमिति**। मन्त्राणां कर्मणां च संनिधेरुपसंहारो विद्यासूक्तः, स कस्मान्निषिध्यत इत्याह— **कस्मादिति**। तत्र हेतुत्वेन सूत्रमवतारयति— **वेधादीति**। आथर्वणिकानां मन्त्राम्नायस्य विद्याशेषत्वाभावपरत्वेनाक्षराणि योजयति— **हृदयमिति**। भिन्नशब्दस्याभीष्टमर्थमाह— **अनभिसंबद्धा इति**। अनभिसंबन्धमेवाभिव्यनक्ति— **नेति**। हृदयपदस्योपास्तिसंबन्धार्थत्वात् तद्द्वारा मन्त्रस्य तच्छेषतेत्युक्तं स्मारयति— **नन्विति**। मन्त्रस्योपास्तिशेषत्वं प्रत्याह— **नेतीति**। पदान्तरसमभिव्याहृतस्य तस्यापि नोपास्त्युपयोगो वस्तुतोऽस्तीति मत्वा कथंचिदित्युक्तम्। हृदयस्य विद्योपयोगे मन्त्रार्थस्य तद्भावान्मन्त्रस्य विद्याशेषतेत्याशङ्क्याह— **न चेति**। अत्रेत्याथर्वणश्रुत्यक्तिः। हृदयातिरिक्तस्यापि मन्त्रार्थस्य विद्यायोगः स्यादित्याशङ्क्य साक्षात् परंपरया वेति विकल्प्याद्यं दूषयति— **हृदयमिति**। तद्द्वाराऽन्येषामपि विद्यायोगः स्यादिति द्वितीयमाशङ्क्याह— **अभिचारेति**। सर्वैरेव पदैरयं मन्त्रः स्वतोऽभिचारगतार्थप्रकाशको दृश्यते। तथा च सामर्थ्यलक्षणं लिङ्गं संनिधिं बाधित्वा कर्मशेषत्वमस्यापादयति। न च सर्वपदानामभिचारे समवेतार्थत्वे सत्येकपदसमवेतार्थत्वमात्रेण विद्याशेषत्वम्, हृदयपदस्याभिचारेऽपि समवेतार्थत्वादित्यर्थः। आथर्वणिकानामुपनिषदुपक्रमस्य लिङ्गवशात् कर्मसंबन्धवत् ताण्डिनामपि तदुपक्रमस्य लिङ्गादेव कर्मसंगतिरित्याह—

**कर्मणा संबन्धः। तद्विशेषसंबन्धस्तु प्रमाणान्तरादनुसर्तव्यः। एवमन्येषामपि मन्त्राणां केषांचिल्लिङ्गेन केषांचिद् वचनेन केषांचित् प्रमाणान्तरेणेत्येवमर्थान्तरेषु विनियुक्तानां रहस्यपठितानामपि सतां न संनिधिमात्रेण विद्याशेषत्वोपपत्तिः। दुर्बलो हि संनिधिः श्रुत्यादिभ्य इत्युक्तं प्रथमे तन्त्रे– 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' (जै.सू. ३।३।१३) इत्यत्र।**

### *प्रकटार्थविवरणम्*

विशेषाकाङ्क्षायामाह— **तद्विशेषेति**। 'देव सवितः प्रसुव इति प्रदक्षिणतोऽग्निं पर्युक्षेत्' इति वाक्यादग्निपर्युक्षणे विनियोग इत्यर्थः। [उक्तमर्थं] 'श्वेताश्वः' इत्यादिमन्त्रेष्वतिदिशति— **एवमन्येषामपीति**। समवाये समानविषयत्वेन द्वयोर्विरोधे परस्य दौर्बल्यम्; कुतः? अर्थविप्रकर्षात्; अर्थेऽप्यव्यवधानेनोत्तरस्य[1] प्रवृत्तेरित्यर्थः। यथेन्द्रपदसामर्थ्यात् 'कदा चन स्तरीरसि नेन्द्र' इत्यस्या ऋचः इन्द्रोपस्थाने विनियोगः, 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रुत्या गार्हपत्योपस्थाने विनियोगः प्रतिभाति। एवं विरोधे परं लिङ्गं दुर्बलम्, श्रुतिर्हि साक्षात् बोधयति, लिङ्गं तु सामर्थ्यानुसन्धानव्यवधानेनेत्यर्थः।

### *भाष्यभावप्रकाशिका*

सन्निधेरपि बल....धिबोधेनाभिचारिककर्मशेषत्वमापादयति अस्य मन्त्रस्य। न च सकलपदानामाभिचारिकें कर्मणि समवेतार्थत्वे सत्येकपदसमवेतार्थतामात्रेण विद्याशेषत्वम्, तस्य हृदयपदस्याभिचारिकत्वेऽपि समवेतार्थत्वादिति। केन द्वारेण यज्ञकर्माभिसंबन्ध इत्यपेक्षायामाह— **तद्विशेषेति**। 'सावित्रं जुहोति कर्मणः कर्मणः पुरस्तात् सवने सवने जुहोती'त्यादि पूर्ववाक्याद् वाजपेयसंबन्धविशेषोऽधिगन्तव्य इत्यर्थः। **एवमन्येषामिति**। श्वेताश्व इत्येवमादीना केषांचिल्लिङ्गेन केषांचिच्छ्रुत्या केषांचित्प्रमाणान्तरेण प्रकरणेनेत्यर्थः। कुतः (अतः) सन्निधिर्लिङ्गादिभिर्बाध्यत इत्यपेक्षायामाह— **दुर्बलो हीति**। प्रमाणत्वाविशेषात् कथं दौर्बल्यमित्यत आह— **इत्युक्तं प्रथमे तन्त्र इति**। समवाये समानविषयत्वलक्षणे विरोधे परस्योत्तरस्य दौर्बल्यम्— श्रुतिविरोधे लिङ्गस्य, लिङ्गविरोधे वाक्यस्येत्यादि। कुत एतदित्यत आह— **अर्थविप्रकर्षादिति**। स्वार्थप्रतिपादने पूर्वपूर्वसापेक्षतया लिङ्गादीनां विलम्बेनार्थप्रतिपत्तिहेतुत्वादित्यर्थः। तत्र तत्र द्वयोर्द्वयोः संप्रधार्यते। तत्र श्रुतिलिङ्गयोर्विरोधे किं बलीय इति चिन्त्यते— अत्रोदाहरणमैन्द्रिया गार्हपत्यमुपतिष्ठत इति। कदाचनस्तरीरसि नेन्द्र सश्चसि दाशुष इत्येषा ऋगैन्द्री। तस्या गार्हपत्यमिति द्वितीयाश्रुतिर्विनियोक्त्री द्वितीयातो गार्हपत्यस्य कर्मतया क्रियां प्रति शेषित्वावगमादैन्द्रियेति च तृतीयाश्रुतेरैन्द्रिया ऋचः करणभावेन (वि)शेषतावगमात्। अतः श्रौत एव विनियोगः सामान्यावगतः पदान्तरवशात् विशेषे परस्यावस्थाप्यत इति वाक्यस्य न

### *न्यायनिर्णयः*

**तथेति**। कर्ममात्रप्रयोगेऽपि केन कर्मणाऽस्य संगतिरिति लिङ्गान्न गम्यते, तेन प्रमाणान्तरमन्वेष्यमित्याशङ्क्याह— **तदिति**। 'सावित्रं जुहोति कर्मणः कर्मणः पुरस्तात् सवने सवने जुहोति' इति वाक्याद् वाजपेयसंबन्धोऽस्य सिध्यतीत्यर्थः। उक्तन्यायं मन्त्रान्तरेष्वतिदिशति— **एवमिति**। अन्येषां तु 'श्वेताश्वो हरितनीलोऽसी'त्यादीनाम्, वचनं श्रुतिर्वाक्यं वा, प्रमाणान्तरं प्रकरणम्, तेन कर्मसंबन्धोऽत्र सर्वत्रानुसर्तव्य इति संबन्धः। लिङ्गादिभिरन्यत्र विनियोगे मन्त्राणां सिद्धे फलितमाह— **इत्येवमिति**। किमिति लिङ्गादिभिः संनिधिर्बाध्यते, तत्राह— **दुर्बलो हीति**। कथं दौर्बल्यं प्रमाणत्वाविशेषे, तत्राह— **इत्युक्तमिति**। स्वार्थं वक्तुं पदान्तरानपेक्षं पदं श्रुतिः। श्रुतभावगता शक्तिर्लिङ्गम्। संहत्यार्थं वदत् पदवृन्दं वाक्यम्। प्रधानवाक्यमङ्गोक्त्याकाङ्क्षं प्रकरणम्। समानदेशत्वं स्थानम्। यौगिकः शब्दः समाख्येत्युक्तलक्षणानामेषां समवाये समानविषयत्वविरोधे परस्योत्तरस्य दौर्बल्यम्– श्रुतिविरोधे लिङ्गस्य, तद्विरोधे वाक्यस्य, तद्विरोधे प्रकरणस्य, तद्विरोधे स्थानस्य, तद्विरोधे समाख्याया इति। अत्र हेतुमाह— **अर्थविप्रकर्षादिति**। स्वार्थोक्तेः पूर्वपूर्वापेक्षतया लिङ्गादीनां विलम्बेनार्थधीहेतुत्वमित्यर्थः। तत्र श्रुतिलिङ्गयोर्विरोधोदाहरणम्– 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति। अत्र गार्हपत्यमिति द्वितीया, अतो गार्हपत्यस्य कर्मतया क्रियां प्रति शेषित्वं सिद्धम्, ऐन्द्र्येति तृतीयाश्रुतेरैन्द्र्याख्यर्चः 'कदाचन स्तरीरसि' इत्याद्यायाः करणत्वेन शेषता। तदयं श्रौतः शेषशेषिभावः 'कदाचने'त्यस्या ऋच इन्द्रदेवतोक्तिसामर्थ्यलिङ्गेन

---

१. 'व्यवधानेन' इति पाठः स्यात्।

### *भाष्यभावप्रकाशिका*

विनियोजकत्वम्। तदयं श्रौतशेषशेषिभावः 'कदाचनस्तरीरसी'त्यस्या ऋचः इन्द्रदेवताभिधानसामर्थ्यलिङ्गेन विरुध्यते, लिङ्गादिन्द्रे विनियोगप्रतीतेः....। तत्र संशयः— किं लिङ्गानुगुण्येन गार्हपत्यमिति द्वितीयाश्रुतिः सप्तम्यर्थे व्याख्यायताम्— गार्हपत्यसमीपे इन्द्र उपस्थेय इति, क्रिया [किंवा] श्रुत्यनुगुणतया लिङ्गं व्याख्यायताम्— इन्द्र ईश्वरः स्वोचितक्रियायां गार्हपत्य इति। तत्र सामर्थ्यानुरोधेनैव श्रुतेर्विनियोजकत्वादग्निना सिञ्चेदित्यादावसमर्थस्य विनियोगादर्शनादस्याश्च ऐन्द्रियेति शब्दतोत्युत्सन्न-जानाग्व्युत्पन्नजनानुभवतश्चेन्द्र एव सामर्थ्यप्रतीतेः सामर्थ्यस्य च पूर्वभावितया श्रुत्यनुसारेण जघन्यवृत्त्या नयनायोगाच्छ्रुतेरेव तदनुरोधेन व्याख्यातव्यत्वादैन्द्र्या इन्द्र एव गार्हपत्यसमीपे उपस्थातव्य इति प्राप्तम्। तत्राभिधीयते— श्रुतेर्विनियोगाय सामर्थ्यापेक्षत्वेऽपि सामर्थ्यज्ञानानपेक्षत्वादवगतश्रौतविनियोगनिर्वाहाय पश्चात्सामर्थ्यस्य तदन्यथानुपपत्त्या अवगम्यमानत्वात् पूर्वाधिगतश्रौतविनियोगानुरोधेनैव तस्य व्यवस्थानात् स्वरसतश्च सामर्थ्यलक्षणाल्लिङ्गादिन्द्र उपस्थाप्य इत्यप्रतीतेरीदृश इन्द्र इत्येतावन्मात्रस्यैव प्रतीतेर्विनियोगाय श्रुतेः कल्पनीयत्वात् तत्रप्रकरणाम्नानावगतेदमर्थतान्यथानुपपत्त्या विनियोगकल्पनायामपि श्रौताद्विनियोगात् कल्पनीयस्यार्थविप्रकर्षाद् विनियोगाय श्रुतेरेव कल्पयितुमुचितत्वाद् विनियोगलक्षणार्थमात्रस्यैव कल्पनायोगात् सामर्थ्यवशात् कल्प्यमानविनियोगश्रुतेः पूर्वमेव प्रत्यक्षया श्रुत्या गार्हपत्ये विनियोगस्य प्रतिपादितत्वात् तावतैव प्रकरणस्य निवृत्ताकाङ्क्षत्वात् प्रकरणपाठान्यथानुपपत्त्या वाक्यं परिकल्प्य लिङ्गवशाद् विनियोजकश्रुतिकल्पनानुपपत्तेः प्रतीतश्रौतविनियोगोपपत्तये सामर्थ्यस्यैव तदनुगुणत्वेन नेतव्यत्वान्मुख्यवृत्त्यसंभवे जघन्ययाऽपि तत्रेयमिति। 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान' इति लिङ्गवाक्ययोर्विरोध उदाहरणम्। अत्र सन्दिह्यते। किं कृत्स्नो मन्त्र उपस्तरणे पुरोडाशसादने च प्रयोक्तव्य उत कल्पयाम्यन्त उपस्तरणे प्रयोक्तव्यः, तस्मिन् सीदेत्येवमादिस्तु पुरोडाशसादन इति। यदि वाक्यं बलीयस्तदा उभयत्र। कथम्? सुशेवं कल्पयामीत्येतदपेक्षिता हि तस्मिन् सीदेत्येवमादिः पूर्वेणैकवाक्यतामुपैति— यत्कल्पयामि तस्मिन् सीदेति। अथ लिङ्गं बलीयस्ततः कल्पयाम्यन्तः सदनकरणे तत्प्रकाशने तस्य सामर्थ्यात्। तस्मिन्सीदेत्ययमपि पुरोडाशसदनप्रकाशने समर्थ इति तत्र विनियुज्यते। तत्र लिङ्गाद्वाक्यस्य बलीयस्त्वादुभयत्र कृत्स्नविनियोग इति प्राप्तम्। तथा हि— यत्तत्पदसमभिव्याकरणे [व्याहारेण] विभज्यमाने साकाङ्क्षत्वादेकवाक्यतायां सिद्धायां तदनुसारेण तदभिधानसामर्थ्यस्य देवस्य त्वेति मन्त्रे अग्नये निर्वपामीति पदयोः समवेतार्थत्वेन तदेकवाक्यतया पदान्तराणां तत्परत्वेन सामर्थ्यस्यैव कल्पनीयत्वात्तदनुगुणतया क्लृप्तेन सामर्थ्येन तस्यैव वाक्यस्य बाधायोगात् तेनापि तदनुगुणैव विनियोजिका श्रुतिः कल्पनीया। अतो वाक्यस्य लिङ्गात् बलीयस्त्वादुभयत्र कृत्स्नो मन्त्रः प्रयोक्तव्य इति। अत्रोच्यते— अवधृतसामर्थ्यानां पदानां सह प्रयुक्तानां सामर्थ्यवशेन प्रयोजनैकत्वेनैकवाक्यत्वावधारणादेक-वाक्यतावगमपूर्वकताभावात् सामर्थ्यावधारणस्य यावतां प्रधानैकार्थाभिधानसामर्थ्यं विभागे च साकाङ्क्षता पदानाम्, तान्येकं वाक्यम्। तथा सत्यनुष्ठेयस्यार्थस्य प्रकाश्यमानस्य मन्त्रेषु प्रधानत्वात् तयोश्च सदनकरणपुरोडाशासादनयोः प्रधानयोरनुष्ठेययो-र्विभागेनैवानयोर्मन्त्रयोः प्रकाशने समर्थत्वादेकवाक्यतावशेन सामर्थ्यानुमानात् प्रागेव प्रतीतं सामर्थ्यमेकैकस्य भागस्यैकैकस्मिन्नर्थे विनियोजिकां श्रुतिं कल्पयति। तथा सति प्रकरणमपि निराकाङ्क्षत्वादेकवाक्यताकल्पितलिङ्गानुमितां विनियोजिकां श्रुतिमपरां कल्पयितुं न [प्र]भवतीत्येकवाक्यताबुद्धिरुत्पन्नाऽप्याभासीभवति लिङ्गेन बाधनात्। यत्र(त्य) लिङ्गंनास्ति तत्र कतिपयपदानां

### *न्यायनिर्णयः*

विरुध्यते। तत्र लिङ्गानुगुण्येन गार्हपत्यमिति श्रुतिः सप्तम्यर्थे तत्समीप इन्द्र उपस्थेय इति व्याख्येया, श्रुत्यनुगुणतया वा लिङ्गम् इन्द्र ईश्वरः स्वोचितक्रियाया गार्हपत्य इति व्याख्येयमिति संदेहे श्रुतेर्विनियोगाय सामर्थ्यापेक्षत्वेऽपि तज्ज्ञानानपेक्षत्वादवगतश्रौत-विनियोगनिर्वाहाय सामर्थ्यस्य तदन्यथानुपपत्त्या गम्यमानत्वात् पूर्वावगतश्रौतविनियोगानुरोधेनैव लिङ्गस्थितेस्तदेव श्रुत्यनुसारेण नेयमिति स्थितम्। लिङ्गवाक्ययोर्विरोधोदाहरणम्— 'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमस्यमानः' इति किमुपस्तरणे पुरोडाशासादने च कृत्स्नो मन्त्रः प्रयोक्तव्यः, किंवा कल्पयाम्यन्त उपस्तरणे, शेषस्तु पुरोडाशासादन इति संदेहे सामर्थ्यस्यैकवाक्यताधीपूर्वत्वाभावात् सदनकरणपुरोडाशासादनयोरनुष्ठेययोर्विभागेनैव

### *भाष्यभावप्रकाशिका*

समवेतार्थतयैकवाक्यत्वं पदान्तराणामपि सामर्थ्यं कल्पयतीति तत्र वाक्यस्य विनियोजकत्वं संभवति। तस्मात् वाक्याल्लिङ्गं बलवदिति सिद्धम्। वाक्यप्रकरणयोः कथमिति चिन्त्यते। अन्योन्याकाङ्क्षाणि विशिष्टार्थपर्यवसितानि पदानि वाक्यम्। लब्धवाक्यभावानां च पुनः कार्यान्तरापेक्षावशेन वाक्यान्तरेण संबन्धः प्रकरणम्। कर्तव्यस्येतिकर्तव्यताकाङ्क्षस्य वचनं प्रकरणमिति यावत्। त योर्विरोधे सूत्रवाकनिगद उदाहरणम्। तत्र हि पौर्णमासीदेवता अमावास्यादेवताश्च समाम्नाताः, ताः परस्परेणैकवाक्यतां नाभ्युपयन्ति। तत्र लिङ्गसामर्थ्यात् पौर्णमासीप्रयोगादिन्द्राग्निशब्द उत्कृष्टव्योऽमावास्यायां च समवेतार्थत्वात् प्रयोक्तव्यः। तत्रेदानीं सन्दिह्यते— यदिन्द्राग्नीपदैकवाक्यतया प्रतीयते-अवीवृधेतां महो ज्यायोऽक्रातामिति तत्किं नोत्क्रष्टव्यम्। उत यत्रेन्द्राग्निशब्द उत्कृष्य नीतस्तत्रैवोत्कृष्य प्रयोक्तव्यमिति। यदि प्रकरणं बलीयस्ततोऽपनीतदेवताकोऽपि शेषः प्रयोक्तव्यः, यदि वाक्यं बलीयस्ततो यत्र देवताशब्दस्तत्रैव प्रयोक्तव्यः। तत्र प्रकरणस्यैवाङ्गसंबन्धापादकत्वादितिकर्तव्यतासाकाङ्क्षस्य प्रधानकर्तव्यस्य वचनलक्षणत्वात् प्रकरणस्य फलवतः प्रधानस्य साकाङ्क्षस्य सन्निधौ पठितानि फलान्तरशून्यानि तदङ्गभावं प्रतिपद्यन्त इति न्यायात्तदुपजीवनेन श्रुत्यादीनां विशेषसंबन्धापादकत्वात् प्रकरणविरोधे तदुपजीवि वाक्यं बाध्यत इति प्राप्तम्। तत्रोच्यते— प्रकरणस्यापि विनियोज्यस्वरूपसामर्थ्यमनपेक्ष्य विनियोजकत्वासंभवात् तद्रूपालोचनायां च यद्यदेव शीघ्रं प्रत्याययति तस्य तस्य बलवत्तरया विनियोजकत्वादिह च प्रकरणाद् वाक्यस्य शीघ्रप्रवृत्तस्य प्रथमत एव विनियोजकत्वोपपत्तेः, प्रकरणे स्वार्थपूर्णानां वाक्यानामुपकार्योपकारकाकाङ्क्षामात्रस्यैव दर्शनात्, वाक्ये च पदानामेकवाक्यतासंबन्धस्य प्रत्यक्षत्वात्, प्रकृतस्य साकाङ्क्षत्वमवगम्य तेनेदमेकं वाक्यमित्यनुमानात् प्रागेवाभिधानसामर्थ्यात् पदानामेकवाक्यभावस्य प्रत्यक्षतः प्रतीतेः, प्रत्यक्षविरोधे चानुमानस्य बाधात्, प्रकरणेन च वाक्यादिपरंपराकल्पनाद्वारेण विनियोगात् प्रागेव वाक्येन लिङ्गादिकल्पनया विनियोजकत्वसिद्धेर्वाक्यस्य तस्माद् बलीयस्त्वाद् देवताशेषाणां तदपनये अपकर्ष एवेति। क्रमप्रकरणयोर्विरोधोदाहरणम्— राजसूयप्रकरणे अभिषेचनीयस्य सन्निधौ शौनश्शेपोपाख्यानाद्याम्नातम्, तत्र किं समस्तराजसूयस्य तदङ्गमुताभिषेचनीयस्यापीति संशयः। यदि प्रकरणं बलवत्तदा समस्तराजसूयस्य, अथ क्रमस्तदा अभिषेचनीयस्यापि। तत्राकाङ्क्षामात्रेण सन्निधानमात्रेण वा लोके गामानय प्रासादं पश्य पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादिषु गां प्रासादं राज्ञ इति पदानां पश्यानय पुरुष इति पदैः संबन्धदर्शनादुभयोः संबन्धं प्रति समानबलत्वात् क्रमप्रकरणयोः सान्निध्याकाङ्क्षालक्षणयोः समुच्चयासंभवाच्च विकल्पेन राजसूयाभिषेचनीययोरेतान्याख्यानानि विनियुज्यन्त इति प्राप्तम्। तत्राभिधीयते— राजसूयस्य करणीन[प्रकरणिनः] इतिकर्तव्यताकाङ्क्षत्वात् 'अविच्छिन्ने कथंभावे यत्प्रधानस्य पठ्यते। अविज्ञातफलं कर्म तस्य प्रकरणाङ्गते'ति न्यायात् प्रकरणस्य साकाङ्क्षतायाः प्रत्यक्षत्वात्, सन्निधिपाठेन त्वभिषेचनीयस्य स्ववाक्योपात्तपदार्थनिराकाङ्क्षस्या(या) काङ्क्षाया उत्थाप्यत्वादुत्थिताकाङ्क्षं

### *न्यायनिर्णयः*

प्रकाशने मन्त्रयोः सामर्थ्यादेकवाक्यतावशेन सामर्थ्यानुमानात् प्रागेव प्रतीतं सामर्थ्यमेकैकस्य भागस्यैकैकस्मिन्नर्थे विनियोजिकां श्रुतिं कल्पयतीति वाक्याल्लिङ्गमेव बलवदिति सिद्धम्। वाक्यप्रकरणयोर्विरोधोदाहरणं सूक्तवाकः। तत्र हि पौर्णमासीदेवताः अमावास्यादेवताश्चाम्नाताः;ताश्च मिथो नैकवाक्यतां गच्छन्तीति लिङ्गसामर्थ्यात् पौर्णमासीप्रयोगादिन्द्राग्निशब्दोत्कर्षे समवेतार्थत्वादमावास्यायां च तत्प्रयोगे तदेकवाक्यताप्रतीतम् 'अवीवृधेतां महो ज्यायोऽक्राताम्' इत्येतदुत्कृष्य न प्रयोक्तव्यमुत यत्रेन्द्राग्निशब्द उत्कृष्य नीतस्तत्रैवैतदपि पौर्णमासीत उत्कृष्य प्रयोक्तव्यमिति संशये प्रकरणस्य विनियोज्यस्वरूपसामर्थ्यमनपेक्ष्याविनियोजकत्वात् तद्रूपालोचनायां च प्रथमभाविनो विनियोजकत्वात् प्रकरणाद्वाक्यस्य शीघ्रप्रवृत्तस्यादौ विनियोजकत्वसंभवात् प्रकृतस्य साकाङ्क्षत्वं ज्ञात्वा तेनेदमेकं वाक्यमित्यनुमानात्प्रागेवोक्तिसामर्थ्यात् पदानामेकवाक्यत्वस्य प्रात्यक्ष्यात् तद्विरोधेऽनुमानानुत्थानाद् देवतापनये तच्छेषाणां वाक्यादपकर्ष एवेति। क्रमप्रकरणयोर्विरोधोदाहरणम्— राजसूयसंनिधावभिषेचनीयसमीपे शौनःशेपोपाख्यानाद्याम्नातम्। नानेष्टिपशुसोमसमुदायो हि राजसूयः, तत्राभिषेचनीयः सोमयागः। तस्य संनिधौ— शुनःशेपो नाम कश्चिदृषिपुत्रो हरिश्चन्द्रपुत्रेण पुरुषमेधार्थं पशुत्वेन क्रीतो वरुणाय स्वालम्भे कर्तुमारब्धे वरुणं तुष्टाव, स च तुष्टः सन्नेनं ररक्षेत्याख्यानम्, अक्षद्यूतादि च श्रुतम्, तत्किं समस्तराजसूयाङ्ग-

**तथा कर्मणामपि प्रवर्ग्यादीनामन्यत्र विनियुक्तानां न विद्याशेषत्वोपपत्तिः। न ह्येषां विद्याभिः सहैकार्थ्यं**

***प्रकटार्थविवरणम्***

एवं मन्त्राणां विद्याशेषत्वं निराकृत्य कर्मणां निराचष्टे— **तथा कर्मणामपीति**। यथा प्रयाजाद्युपकृतस्य दर्शनादेः [दर्शादेः]

***भाष्यभावप्रकाशिका***

प्रकरणमेकवाक्यतादिकल्पनापरंपरया प्रागेव विनियोगं कल्पयतीति सन्निधानस्याकाङ्क्षैकवाक्यतादिपरिकल्पनमन्तरा प्रलीयते। तत्प्रकरणिनश्च राजसूयस्य सर्वदा बुद्धिसान्निध्यात् तत्सन्निधेरकल्पनीयत्वात्। अतः प्रकरणेन विरोधे सन्निधेर्बाध इति। क्रम-समाख्ययोर्विरोधोदाहरणम्— पौरोडाशिक इति समाख्याते काण्डे सान्नाय्यक्रमे 'शुन्धध्वं दैव्याय कर्मण' इति शुन्धनार्थो मन्त्रः समाम्नातः। तत्र संशयः— किं समाख्यानस्य बलीयस्त्वात् पुरोडाशपात्राणां शुन्धने विनियोक्तव्यो मन्त्रः अथवा सान्नाय्यपात्राणां शुन्धने क्रमो बलीयानिति। किं तावत्प्राप्तम्? समाख्यानं बलीय इति। पौरोडाशिकशब्देन पुरोडाशसंबन्धिनामभिधाना [त् ता] न्यधिकृत्य प्रवृत्तं काण्डम् पौरोडाशिकमित्युच्यते। ततो यावत् क्रमेण प्रकरणाद्यनुमानपरंपरया संबन्धः प्रतिपादनीयस्तावत् समाख्यया साक्षादेव श्रुत्या संबन्धः प्रतिपादित इत्यर्थविप्रकर्षिणः क्रमात् समाख्यैव बलीयसीति पुरोडाशपात्रशुन्धने मन्त्राः प्रयोक्तव्या नेतरत्रेति प्राप्ते, तत्राभिधीयते समाख्यानात् क्रमो बलीयानर्थाविप्रकर्षात्। तथा हि— समाख्याया न साक्षात् संबन्धवाचकता, किन्तु पुरोडाशविशिष्टकाण्डवाचकत्वमेव, तद्विशिष्टत्वान्यथानुपपत्त्या तु काण्डस्य संबन्धोऽनुमीयते मन्त्रभेदस्य। न तु साक्षात्संबन्धः प्रतीयते। न चानुमितोऽपि संबन्धः श्रुत्यैव शेषशेषिभावलक्षणः प्रतीयते। अपि तु संबन्धमात्रम्, तस्मात् श्रुतिवैलक्षण्यात् समाख्यानस्य सान्नाय्यक्रमः सान्नाय्यं प्रति[प्र]करणाद्यनुमानद्वारेण विनियोगं कल्पयति। न तु समाख्यानम्, तस्य दुर्बलत्वात्, तथा हि— समाख्या संबन्धनिबन्धना सती तत्सिद्ध्यर्थं सन्निधिमुपकल्पयति यावत् तावद्वैदिकेन प्रत्यक्षदृष्टेन सन्निधानेनाकाङ्क्षा कल्प्यते न [तद्]द्वारेण परंपरया श्रुतिं परिकल्प्य [वि]नियोगः। इतरत्र तु विलम्बनेति दौर्बल्यम्। पुरोडाशाभिधायक-मन्त्रबाहुल्यर्च[ल्याच्च]काण्डस्य पौरोडाशिकसमाख्योपपत्तिरिति द्रष्टव्यम्। एवमेकद्वित्रिचतुष्पञ्चवस्त्वन्तरकृतं श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयत इत्यर्थः विवक्षा[र्थविप्रकर्षा]दित्युक्तम्। बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा। मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षयेति विशेषः।

एवं मन्त्राणां विद्याशेषत्वन्निराकृत्य संप्रति प्रवर्ग्यादीनां कर्मणां निराचष्टे— **तथा कर्मणामपीति**। अनुपकारस्य शेषताऽभावादुपकारस्य चोभा[चेहा]निरूपणात्र शेषत्वमित्याह— **न ह्येषामिति**। ननु विनियुक्तविनियोगो न विरोधाय बृहस्पतिसवेऽपि

***न्यायनिर्णयः***

मुताभिषेचनीयस्यैवेति संशये प्रकरणस्य साकाङ्क्षतायाः प्रात्यक्ष्यात् संनिधिपाठेनाभिषेचनीयस्य स्ववाक्योपात्तपदार्थनिराकाङ्क्ष-स्याप्याकाङ्क्षोत्थापनादुत्थिताकाङ्क्षं प्रकरणमेकवाक्यतादिकल्पनापरम्परया प्रागेव विनियोगं कल्पयतीति प्रकरणविरोधे संनिधिर्बाध्यते। क्रमसमाख्ययोर्विरोधोदाहरणम्—पौरोडाशिकाख्याने काण्डे कर्मणामाग्नेयादीनां क्रमेण मन्त्राः श्रुताः, तत्रामावास्यकसांनाय्यक्रमे 'शुन्धध्वं दैव्याय कर्मण' इति शुन्धनार्थो मन्त्रः समाम्नातः, तत्र पुरोडाशपात्राणां वा शुन्धने मन्त्रोऽयं प्रयोक्तव्यः, सांनाय्यपात्राणां वेति संदेहे समाख्या संबन्धनिबन्धना सती तदर्थं यावत् संनिधिं कल्पयति तावद् वैदिकेन प्रत्यक्षेण संनिधिनाऽऽकाङ्क्षाद्वारा परंपरया श्रुतिं परिकल्प्य विनियोगस्य कृतत्वात् पुरोडाशवादिमन्त्रबाहुल्याच्च तत्समाख्यासिद्धेः स्थानविरोधे न सा विनियोक्त्रीति स्थितम्। तदेवं लिङ्गस्यैकया श्रुत्या श्रुत्यर्थविनियोगं प्रति व्यवधानम्, वाक्यस्य द्वाभ्यां लिङ्गश्रुतिभ्याम्, प्रकरणस्य तिसृभिर्वाक्यलिङ्गश्रुतिभिः, स्थानस्य चतसृभिः प्रकरणवाक्यलिङ्गश्रुतिभिः, समाख्यायाः स्थानप्रकरणवाक्यलिङ्गश्रुतिभिः पञ्चभिरित्यवान्तरभेदान्मिथो विरोधे श्रुतेर्बाधकत्वमेव, लिङ्गवाक्यप्रकरणस्थानानां पूर्वपूर्वापेक्षया बाध्यत्वमुत्तरोत्तरापेक्षया बाधकतेत्युभयथात्वम्, समाख्याया बाध्यतैवेति विवेकः।

मन्त्राणां विद्याशेषत्वं निरस्य प्रवर्ग्यादिकर्मणां तच्छेषत्वं निरस्यति— **तथेति**। तत्र हेतुः— **न हीति**। अनुपकारकस्य शेषत्वाभावादुपकार(क)स्य च प्रवर्ग्यादिकृतस्य विद्यायामनिरूपणात्र तेषां तच्छेषतेत्यर्थः। यत्तु विनियुक्तविनियोगो न

**किंचिदस्ति। वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तरम्– 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति। अपि चैकोऽयं प्रवर्ग्यः सकृदुत्पन्नो बलीयसा प्रमाणेनान्यत्र विनियुक्तो न दुर्बलेन प्रमाणेनान्यत्रापि विनियोगमर्हति। अगृह्यमाणविशेषत्वे हि प्रमाणयोरेतदेवं स्यात्, न तु बलवदबलवतोः प्रमाणयोरगृह्यमाणविशेषता संभवति, बलवदबलवत्त्वविशेषादेव। तस्मादेवंजातीयकानां मन्त्राणां कर्मणां वा न संनिधिपाठमात्रेण विद्याशेषत्वमाशङ्कितव्यम्। अरण्यानुवचनादिधर्मसामान्यात्तु संनिधिपाठ इति संतोष्टव्यम्।।२५।।**

।। इति चतुर्दशं वेधाद्यधिकरणम् ।।

### *शारीरकन्यायसंग्रहः*

**१५।। हान्यधिकरणम् ।।सू.२६।।**

**हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्स्तुत्युपगानवत्तदुक्तम्।।२६।।** यद्यपि छान्दोग्याथर्वणयोः निर्गुणब्रह्मविद्याविषयं सुकृतदुष्कृतहानं स्वतो नोपायनमपेक्षते, उपायनमन्तरेणापि हानोपपत्तेः, अर्थवादत्वेन प्रयोजनाभावाच्च, तथापि विवादाध्यासितं हानमुपायनसंबन्धि, विदुषः सुकृतदुष्कृतहानत्वात्, कौषीतक्यादिगतसुकृतदुष्कृतहानवत् इत्यनुमानेन स्तुतिबुद्धिप्रयोजनाय उपायनमुपसंह्रियत इति।

### *प्रकटार्थविवरणम्*

एकप्रयोजनसाधकत्वं तथा प्रवर्ग्याद्युपकृतविद्यानामेकप्रयोजनसाधकत्वे [न] किंचिन्मानमस्तीति भावः। ननु उक्तं प्रकरणमित्याशङ्क्याह— **अपि चेति**। एकस्योभयार्थतायां स्वतो विरुद्धायां तुल्यप्रमाणसंबन्धादविरोध इष्यते, अत्र तु वाक्येन सन्निधेर्बाधादध्ययनधर्मसाम्येनापि सन्निध्युपपत्तेः न विद्यासु विनियोग इति न सर्वैरनुष्ठेयत्वमित्यर्थः। इति चतुर्दशं वेधाद्यधिकरणम्।।

### *भाष्यभावप्रकाशिका*

प्रदर्शनादिति यदुक्तम्, तत्राह— **वाजपेये त्विति**। क्त्वाश्रुतिर्धातुसंबन्धाधिकारात् समानकर्तृकतायां विहिता संयोगपृथक्त्वेन विनियुक्तमपि विनियोजयति। अतो न तत्र श्रुत्योस्तुल्यबलयोः परस्परबाध इत्यर्थः। अत्र तुल्यबलता विनियोजकयोर्नास्तीत्याह— **अपि चैक इति**। शङ्कापाकरणद्वारेण समुच्चयार्थोऽयमपिचेति शब्दः, न तु पृथग्युक्तितया परस्पराक्षेपत्वात्। ननु विरोधाभावादसति च विरोधे बाधाभावादुभयत्रापि प्रमाणाभ्यां विनियोगो भवेदित्यत आह— **अगृह्यमाणेति**। अयमर्थः— प्रकरणपाठानर्थक्यपरिहाराय विनियोगः कल्पनीयः। तदिह बलवत्प्रमाणेनैवान्यत्र विनियोगे सति प्रकरणस्य चरितार्थतया निराकाङ्क्षत्वान्न क्रमस्य पृथग्विनियोजकत्वं दुर्बलत्वात्। तथा चाचार्य**वाचस्पते**रत्र संग्रहश्लोकः— 'नेह लिङ्गविरोधेन क्रमबाधोऽभिधीयते। किन्तु लिङ्गपरिच्छिन्ने न क्रमः कल्पनाक्षम' इति। तर्हि सन्निधिपाठस्य का गतिरिति, तामाह— **अरण्येति**। इति चतुर्दशं वेधाद्यधिकरणम्।

### *न्यायनिर्णयः*

विरोधायेत्यत्रोपेत्यवादेनोदाहरणम्, तत्राह— **वाजपेये त्विति**। इष्ट्वेति क्त्वाश्रुतिः समानकर्तृकत्वे विहिता संयोगपृथक्त्वेन विनियुक्तमपि विनियोजयत्यतो न तत्र श्रुत्योस्तुल्यबलयोर्मिथो बाध इत्युभयथात्वं बृहस्पतिसवस्येष्टमित्यर्थः। प्रकृते तुल्यबलत्वं विनियोजकयोर्नास्तीत्याह— **अपि चेति**। तुल्यबलत्वशङ्कानिरासद्वारा विनियुक्तविनियोगायोगे हेत्वन्तरसमुच्चयार्थमपिचेत्युक्तम्। 'पुरस्तादुपसदामि'त्यादिवाक्यं बलीयः प्रमाणम्। अन्यत्रेति ज्योतिष्टोमाद्युक्तम्। दुर्बलं प्रमाणं संनिधिः। अन्यत्रापीति विद्योक्ता। विरोधाभावादसति विरोधे बाधाभावादुभयत्रापि प्रमाणाभ्यां विनियोगः स्यादित्याशङ्क्याह— **अगृह्यमाणेति**। **एतद्** उभयत्र विनियुक्तत्वम्, **एवं** द्वाभ्यां मानाभ्यामिति यावत्। वाक्यादेः संनिधेश्च विशेषो निश्चितो नास्तीत्याशङ्क्याह— **न त्विति**। मानयोर्विशेषग्रहे फलितमाह— **तस्मादिति**। प्रकरणपाठसिद्धये विनियोगो मन्त्रादीनां कल्प्यते। तथा च बलवत्प्रमाणेनान्यत्र विनियोगे प्रकरणपाठसिद्धौ न क्रमो विनियोजको दौर्बल्यादित्यर्थः। तर्हि संनिधिपाठस्य का गतिस्तामाह— **अरण्येति**।।२५।। इति चतुर्दशं वेधाद्यधिकरणम्।।

१५।।हान्यधिकरणम्।।सू. २६।।

## हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम्।।२६।।

**अस्ति ताण्डिनां श्रुतिः– 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' (छा.उ. ८।१३।१) इति। तथाऽऽथर्वणिकानाम्– '[1]तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु.उ. ३।२।८) इति। तथा शाट्यायनिनः पठन्ति– 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति। तथैव कौषीतकिनः– 'तत् सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' (कौ.उ. १।४) इति। तदिह क्वचित् सुकृतदुष्कृतयोर्हानं श्रूयते, क्वचित् तयोरेव विभागेन प्रियैरप्रियैश्चोपायनम्, क्वचित् तूभयमपि हानमुपायनं च। तद्यत्रोभयं**

### *शारीरकन्यायसंग्रहः*

अथवा यद्यपि गुणस्य अदृष्टस्य स्वरूपेण वा स्वाश्रयसर्वगतात्मद्रव्यकम्पनद्वारेण वा कम्पनं न संभवति, तथापि विद्यया प्रतिबन्धात् अदृष्टस्य कञ्चित्कालं फलदानायोन्मुखीभावलक्षणात् स्वभावात् प्रच्यवनं कम्पमानेऽपि वस्तुनि विद्यमानधर्मो विधूननशब्देन लक्षणयाऽभिधीयते, न हानमिति शङ्किते, तत्र मुख्यार्थासम्भवेन शब्दस्य लक्षणोपादाने सत्राधिकरणन्यायेन सन्निहितपदानुसारेण लक्षणा न्याय्या इत्युपायनशब्दसन्निधानाद्धानमेव लक्ष्यत इत्युक्तम्।

### *प्रकटार्थविवरणम्*

**हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम्।** विषयं दर्शयितुं वाक्यानि तावत् पठति— **अस्तीत्यादिना।** यथाऽश्वो रोमाणि रजःसंपृक्तानि विधूय निर्मलो भवति, तथा पापं विधूय निर्मलोऽहं ब्रह्मलोकमभिसंभवामीति संबन्धः। यथा राहोर्मुखात्प्रमुच्य चन्द्रः स्वच्छो भवति, तथा शरीरमकृतमशुद्धं धूत्वा हित्वा कृतात्मा स्वच्छः सन्नित्यर्थः। वाक्यानामापाततोऽर्थमाह— **तदिह क्वचिदिति।** सन्देहं दर्शयितुमसन्दिग्धमंशमाह— **तद्यत्रोभयमिति।** उपायनस्य हानसन्निधिश्रवणा[2]र्थभावाभावाभ्यां संशयमाह—

### *भाष्यभावप्रकाशिका*

**हानौ तूपायनेत्यादि।** विषयं परिशेषयति— **तदिहेत्यादिना।** उपायनमुपादानम्। पूर्वपक्षमाह— **अश्रवणादिति।** अश्रवणेऽप्यन्यत्र

### *न्यायनिर्णयः*

विद्यासंनिधौ श्रुतस्यापि मन्त्रादेर्विद्यायामसामर्थ्यादनुपसंहारवत् क्वचिदेव हानसंनिधौ श्रुतस्योपायनस्य तदन्तरेणापि हानसंभवेन तदुपपादनासामर्थ्यादनुपसंहार इत्याशङ्क्याह— **हानौ त्विति।** विषयं वक्तुं तत्तच्छाखास्थवाक्यान्युदाहरति— **अस्तीत्यादिना।** यथाऽश्वो जीर्णानि रोमाणि रजोभिः सह शातयित्वा स्वच्छो भवति तथाऽहमपि पापं सर्वं विधूय निर्मलः सन् ब्रह्मलोकमभिसंभवामीति संबन्धः। यथा च चन्द्रो राहुग्रस्तो राहोर्मुखात्प्रमुच्य भास्वरो भवत्येवं शरीरमकृतमशुद्धं प्रवाहरूपेणानादिसिद्धं वा धूत्वा त्यक्त्वा स्वच्छो भूत्वा कृतः सिद्धो न पुनरपूर्वपुण्योपचयेन साध्यो यस्यात्मा सोऽहं कृतकृत्यः सन् ब्रह्मलक्षणं रूपमभिसंभवामि प्रत्यक्त्वेन प्राप्नोमीत्यर्थः। तथा ताण्डिनामिवाथर्वणिकानामस्ति श्रुतिरिति संबन्धः। 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय' इति दृष्टान्तं परामृशति— **तथेति।** ताण्डिनश्चाथर्वणिकाश्च तथेत्युच्यन्ते **तस्येति।** विदुषो मृतस्येत्यर्थः। तथैवेति शाट्यायनिनो दृष्टान्तिताः। तत् तेन विद्याबलेन सुकृतं च दुष्कृतं च ते विधूनुते निरस्यति विद्वानित्यर्थः। त्यक्तयोस्तयोर्विनियोगं दर्शयति— **तस्येति।** विषयपरिशेषार्थमापाततो वाक्यार्थमाह— **तदिति।** तत् तत्र श्रुतौ इह उदाहृतेषु वाक्येष्विति यावत्। क्वचित् ताण्डिनामाथर्वणिकानां च श्रुतावित्यर्थः। क्वचित्तयोरेवेत्यत्र क्वचिदिति शाट्यायनिश्रुतिरुक्ता। क्वचित्तूभयमित्यत्र क्वचिदिति

---

१. 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु.उ. ३-१-३) इति पाठो युक्तः। २. अर्थः = प्रयोजनम्।

**श्रूयते तत्र तावन्न किंचिद् वक्तव्यमस्ति। यत्राप्युपायनमेव श्रूयते न हानं, तत्राप्यर्थादेव हानं संनिपतति। अन्यैरात्मीययोः सुकृतदुष्कृतयोरुपेयमानयोरावश्यकत्वात् तद्धानस्य। यत्र तु हानमेव श्रूयते नोपायनं, तत्रोपायनं संनिपतेद्वा न वेति विचिकित्सायाम्—अश्रवणादसंनिपातः। विद्यान्तरगोचरत्वाच्च शाखान्तरीयस्य श्रवणस्य। अपि चात्मकर्तृकं सुकृतदुष्कृतयोर्हानम्, परकर्तृकं तूपायनम्, तयोरसत्यावश्यकभावे कथं हानेनोपायनमाक्षिप्येत? तस्मादसंनिपातो हानावुपायनस्येति।**

**अस्यां प्राप्तौ पठति— हानौ त्विति। हानौ त्वेतस्यां केवलायामपि श्रूयमाणायामुपायनं संनिपतितुमर्हति, तच्छेषत्वात्। हानशब्दशेषो ह्युपायनशब्दः समधिगतः कौषीतकिरहस्ये। तस्मादन्यत्र केवलहानशब्द-श्रवणेऽप्युपायनानुवृत्तिः। यदुक्तमश्रवणाद् विद्यान्तरगोचरत्वादनावश्यकत्वाच्चासंनिपात इति; तदुच्यते। भवेदेषा**

### *प्रकटार्थविवरणम्*

**यत्र तु हानमेवेति।** यथा तैत्तिरीयके पुरुषस्य यज्ञत्वश्रवणादनुपसंहार उक्तः, तथाऽत्राप्यनुपसंहारो हानावुपायनस्येत्याह— **अश्रवणादिति।** यथा च पूर्वस्मिन्नधिकरणे मन्त्राणां कर्मणां चान्यशेषत्वावगमाद् विद्यायामनुपसंहारः, तथाऽत्रापि कौषीतकिनां हानानन्तरं श्रुतस्योपायनस्य सगुणविद्याशेषत्वात् छन्दोगादिषु नास्त्युपसंहारो [1]निर्गुणविद्यानामित्याह— **विद्यान्तरेति।** उपायनमन्तरेणापि हानोपपत्तेः अर्थवादत्वेन प्रयोजनाभावाच्च नोपसंह्रियत इत्याह— **अपि चेति।**

विवादाध्यासितं हानमुपायनसंबन्धि, विदुषः सुकृतदुष्कृतहानत्वात्, कौषीतकिगतसुकृतादिहानवदित्यनुमानेन स्तुतिप्रकर्षप्रयोजनाय उपायनमुपसंह्रियत इत्याह— **हानौ त्वित्यादिना।**

### *भाष्यभावप्रकाशिका*

श्रवणादिहोपसंह्रियतामित्याशङ्क्याह— **विद्यान्तरगोचरत्वादिति।** विद्यैकत्वे सत्युपसंहारो भवेत्, न चेह विद्यैकत्वमस्ति सगुण-निर्गुणत्वेन भेदादित्यर्थः। न केवलमश्रवणादननुवृत्तिर्युक्तिविरोधादपीत्याह— **अपि चेति।** ननु यथोपायने श्रूयमाणे हानानुवृत्तिरेवं हानेऽपि तस्यानुवृत्तिः स्यादित्याशङ्क्य तत्रानुपपत्त्या संबन्धः। इह तु नास्त्यनुपपत्तिरित्याह— **असत्यावश्यकभाव इति।**

तच्छब्दार्थं दर्शयति— **केवलायामिति।** यत्रानुष्ठेयत्वेन श्रवणं तत्रोपसंहारे विद्यैकत्वेन भवितव्यम्, इह त्वनुष्ठेयतया विहितस्योपसंहारो न भवति, किन्तु सिद्धस्यैव [स्तुत्यर्थतयोक्तस्य; तेना] सति बाधके तस्योपसंहारः स्तुतिप्रकर्षायाभ्युपगन्तव्य इत्याह— **भवेदेषेति।**

### *न्यायनिर्णयः*

कौषीतकिश्रुतिर्गृह्यते। तत्र कौषीतकिश्रुतिर्न विचारापेक्षेत्याह— **तदिति।** शाट्यायनिश्रुतिरपि नापेक्षते विचारमित्याह— **यत्रेति।** आर्थिकं हानसंनिपातं साधयति— **अन्यैरिति।** परिशिष्टं विषयमाह— **यत्र त्विति।** हानोपायनयोः सहभावस्यावश्यकत्वानावश्यकत्वाभ्यां संशयमाह— **तत्रेति।** अत्र च विद्यास्तुतिप्रकर्षप्रयोजनस्योपायनोपसंहारस्योक्त्या वाक्यार्थधीहेतुवर्णनात् पादादिसंगतिः। पूर्वपक्षे स्तुतिप्रकर्षासिद्धिः, सिद्धान्ते तत्सिद्धिरिति मत्वा पूर्वपक्षं गृह्णाति— **अश्रवणादिति।** क्वचिदश्रवणेऽप्यन्यत्र श्रवणादिहोपसंहार-माशङ्क्याह— **विद्येति।** विद्यैक्ये सत्युपसंहारः स्यात्, न चेह तदस्ति, कौषीतकिगतपर्यङ्कविद्यायाः सगुणत्वात् ताण्ड्याथर्वणिकश्रुत्योश्च पुण्यपापविधूननहेतुत्वेन श्रुतविद्याया निर्गुणत्वादिति यत्र हानमेव श्रुतं तत्र नोपायनं संनिपतेदित्यर्थः। न केवलमश्रवणादन-नुवृत्तिर्युक्तिविरोधादपीत्याह— **अपि चेति।** यथा शाट्यायनिश्रुतावुपायने श्रुते हानानुवृत्तिस्तथा ताण्ड्यादिश्रुतावपि हाने श्रुते स्यादुपायनानुवृत्तिरित्याशङ्क्य तत्रानुपपत्त्या संबन्धेऽपि प्रकृते नैवमित्याह— **तयोरिति।** अश्रवणादिफलमुपसंहरति— **तस्मादिति।** अनुपसंहारे स्तुतिप्रकर्षासिद्धिरिति वक्तुमितीत्युक्तम्।

सिद्धान्तयति— **अस्यामिति।** अश्वरोमादिदृष्टान्ताद् विधूतयोः सुकृतदुष्कृतयोः परत्रावस्थानापेक्षत्वादत्र हानसंनिधौ श्रुतमुपायनं केवलहानश्रवणेऽप्यपेक्षितत्वादायातीति व्याचष्टे— **हानौ त्विति।** तुशब्दार्थमाह— **केवलायामिति।** तच्छेषत्वादित्युक्तं विवृणोति— **हानेति।** हेतुफलमाह— **तस्मादिति।** अन्यत्र ताण्ड्यादिश्रुतावित्यर्थः। पूर्वपक्षबीजमनुभाषते— **यदिति।** यत्रानुष्ठेयत्वेन श्रवणं

---

१. 'निर्गुणविद्यायाम्' इति पाठः स्यात्।

**व्यवस्थोक्तिर्यद्यनुष्ठेयं किंचिदन्यत्र श्रुतमन्यत्र निनीष्येत। न त्विह हानमुपायनं वाऽनुष्ठेयत्वेन संकीर्त्यते। विद्यास्तुत्यर्थं त्वनयोः संकीर्तनम्– इत्थं महाभागा विद्या यत्सामर्थ्यादस्य विदुषः सुकृतदुष्कृते संसारकारणभूते विधूयेते, ते चास्य सुहृद्द्विषत्सु निविशेते इति। स्तुत्यर्थे चास्मिन् संकीर्तने हानानन्तरभावित्वेनोपायनस्य क्वचिच्छ्रुतत्वादन्यत्रापि हानश्रुतावुपायनानुवृत्तिं मन्यते स्तुतिप्रकर्षलाभाय। प्रसिद्धा चार्थवादान्तरापेक्षाऽर्थवादान्तरप्रवृत्तिः– 'एकविंशो वा इतोऽसावादित्यः' (छा.उ. २।१०।५) इत्येवमादिषु। कथं हीहैकविंशताऽऽदित्यस्याभिधीयेतानपेक्ष्यमाणेऽर्थवादान्तरे– 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इत्येतस्मिन्। तथा– 'त्रिष्टुभौ भवतः सेन्द्रियत्वाय' (ऐ.ब्रा. १-४-११) इत्येवमादिवादेषु 'इन्द्रियं वै त्रिष्टुप्' (तै.सं. ३-२-९-३) इत्येवमाद्यर्थवादान्तरापेक्षा दृश्यते। विद्यास्तुत्यर्थत्वाच्चास्योपायनवादस्य कथमन्यदीये सुकृतदुष्कृते अन्यैरुपेयेते इति नातीवाभिनिवेष्टव्यम्। उपायनशब्दशेषत्वादिति तु शब्दशब्दं**

### *प्रकटार्थविवरणम्*

अश्रुतमपि श्रुत्यन्तरानुसारेण ग्राह्यमित्यत्र दृष्टान्तमाह— **प्रसिद्धा चेत्यादिना**। यज्ञस्य पुरुषाकारककल्पनायां सेन्द्रियत्वाय त्रिष्टभौ भवत इत्युक्तं बह्वृचब्राह्मणे। तत्र त्रिष्टुप्छब्देन [1]छन्दोमात्रविधानात् कथं सेन्द्रियत्वमित्याकाङ्क्षायां वाजसनेयके त्रिष्टुभ इन्द्रियत्वेन स्तुतत्वात् तद्ग्रहणमित्यर्थः। ननु श्रुत्यन्तरप्रसिद्धमप्युपायनं न हानावुपसंहर्तव्यम्, परकीययोः सुकृतदुष्कृतयोः परेणोपादानासंभवात् इत्याशङ्क्याह— **स्तुत्यर्थत्वाच्चेति**। ननु सूत्रकारेण हानावुपायनानुवृत्तेः दर्शितत्वात् न स्तुतिमात्रमित्याशङ्क्याह— **उपायनशब्देति**। उपायनस्य शेषत्वादिति वक्तव्ये शब्दशब्दोच्चारणात् स्तुत्यर्थत्वमेव सूत्रकारस्याभिमतमित्यर्थः।

### *भाष्यभावप्रकाशिका*

नन्वर्थवादत्वे विधिशेषत्वं स्यान्नार्थवादान्तरशेषत्वम, विधिशेषाऽर्थवाद इति न्यायादित्याशङ्क्याह— **प्रसिद्धा चेति**। कथं तत्रापेक्षेति तामुपपादयति— **कथं हीति**। हानस्योपायनाविनाभावित्वाभावात् कथं हानादुपायनस्योपसंहारः, निर्गुणायां वा किं विद्यायां सगुण विद्योक्तगुणोपसंहारः, कथं वा पुरुषान्तरगुणयोः पुरुषान्तरेणोपादानमित्याशङ्क्याह— **स्तुत्यर्थत्वादिति**। स्तुत्यर्थत्वं कथमवगम्यत इत्याशङ्क्य सूत्रकारवचनादित्याह— **उपायनशब्देति**। तदुपपादयति— **गुणोपसंहारेति**। उपायनशेषत्वादिति वक्तव्ये उपायनशब्दशेषत्वादिति वदन्नर्थस्योपसंहारं न विवक्षतीत्यर्थः। ननु विद्यागुणोपसंहारप्रस्तावे स्तुत्यर्थः विचारो न युक्त इत्याशङ्क्य प्रासङ्गिकत्वाददोष इत्याह— **तस्मादिति**।

### *न्यायनिर्णयः*

तत्रोपसंहारे विद्यैक्यमपेक्षितम्। इह त्वनुष्ठेयतयोक्तस्य नोपसंहारः, किंतु सिद्धस्यैव स्तुत्यर्थतयोक्तस्य। तेनासति बाधके तस्योपसंहारः स्तुतिप्रकर्षायेत्याह— **तदिति**। **व्यवस्थोक्तिः** विद्याभेदे गुणं प्रति नियमस्तदभेदे तदुपसंहार इति निर्देश इत्यर्थः। तर्हि किमर्थमनयोः संकीर्तनम्, तदाह— **विद्येति**। संकीर्तनस्य स्तुत्यर्थत्वमभिनयति— **इत्थमिति**। अस्तु स्तुत्यर्थं संकीर्तनं तथापि किमर्था हानावुपायनानुवृत्तिः, तत्राह— **स्तुत्यर्थे चेति**। हानावुपायनानुवृत्तिं सूत्रकारो मन्यते चेत् तर्हि कथं स्तुतिप्रकर्षस्योपायनोपसंहारकल्पकत्वम्, तत्राह— **स्तुतीति**। स्तुतिर्हि विद्यायाः कार्या। सा च केवलश्रुतहानेनापि लभ्या। तदैव प्रकर्षोऽपेक्ष्येत यद्यप्रकर्षे न स्तुतिः। न चैवम्, तस्मात् प्रमाणसिद्धोपायनोपसंहारस्य फलं स्तुतिप्रकर्षसिद्धिरित्यर्थः। ननूपायनवादस्यार्थवादत्वे विधिशेषत्वं, तस्य तच्छेषत्वात्र तु हानवादार्थवादशेषत्वं, तत्राह— **प्रसिद्धा चेति**। इतोऽस्मात् पृथिवीरूपाल्लोकादिति यावत्। तत्रापि कथमर्थवादान्तरापेक्षा, तत्राह— **कथं हीति**। इहेति पूर्वोक्तार्थवादोक्तिः। हेमन्तशिशिरयोरैक्यं मत्वा पञ्चर्तव इत्युक्तम्। अश्रुतमपि श्रुत्यन्तरानुसाराद् ग्राह्यमित्यत्र दृष्टान्तमाह— **तथेति**। यज्ञस्य पुरुषाकारकल्पनायां सेन्द्रियत्वाय त्रिष्टुभौ भवत इत्युक्तं बह्वृचब्राह्मणे। तत्र त्रिष्टुप्शब्देन च्छन्दोमात्राभिधानात् कथं सेन्द्रियत्वमित्युक्ते वाजसनेयके तथात्वेन त्रिष्टुभस्तत्त्वं गृहीतमित्यर्थः। ननु श्रुत्यन्तरश्रुतमप्युपायनं न हानावुपसंहर्तव्यं परकीयसुकृतदुष्कृतोपादानस्य परेण कर्तुमशक्यत्वात्, तत्राह— **विद्येति**। विद्यासामर्थ्यादन्यत्र सुकृतदुष्कृतफलसंचारोक्त्या विद्यास्तुतेरिष्टत्वात्राभिनिवेशावकाश इत्यर्थः। उपायनवादस्य स्तुत्यर्थत्वं कथमित्याशङ्क्य सूत्रकारोक्तिसामर्थ्यादित्याह— **उपायनेति**।

१. 'छन्दोमात्राभिधानात्' इति पाठः स्यात्।

**समुच्चारयन् स्तुत्यर्थमेव हानावुपायनानुवृत्तिं सूचयति। गुणोपसंहारविवक्षायां ह्युपायनार्थस्यैव हानावनुवृत्तिं ब्रूयात्। तस्माद् गुणोपसंहारविचारप्रसङ्गेन स्तुत्युपसंहारप्रदर्शनार्थमिदं सूत्रम्।**

**कुशाच्छन्दस्तुत्युपगानवदित्युपमोपादानम्। तद्यथा भाल्लविनाम्– 'कुशा वानस्पत्याः स्थ ता मा पात' इत्येतस्मिन् निगमे कुशानामविशेषेण वनस्पतियोनित्वेन श्रवणे शाट्यायनिनाम्– 'औदुम्बराः कुशाः' इति विशेषवचनादौदुम्बर्यः कुशा आश्रीयन्ते। यथा च क्वचिद् देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे 'देवच्छन्दांसि पूर्वाणि' इति पैङ्ग्याम्नानात् प्रतीयन्ते। यथा च षोडशिस्तोत्रे केषांचित् [१]'कालविशेषाप्राप्तौ 'समयाध्युषिते सूर्ये' इत्यार्चश्रुतेः कालविशेषप्रतिपत्तिः। यथैव चाविशेषेणोपगानं केचित् समामनन्ति, विशेषेण भाल्लविनः।**

### *प्रकटार्थविवरणम्*

शाखान्तरगतोऽपि विशेषः शाखान्तरेऽप्याश्रयणीय इत्यत्र कुशादृष्टान्तं व्याचष्टे— **तद्यथेति**। भोः कुशाः यूयं वानस्पत्या वनस्पतिप्रभवाः स्थ भवथ। ता मा मां पात रक्षतेत्यर्थः। **औदुम्बर्यः कुशा इति**। समित् [समिद्वाचि]कुशाशब्दस्य स्त्रीलिङ्गत्वापरिज्ञानात् 'छन्द एवाच्छन्दः' इति पदं चिच्छेद[२] **वाचस्पतिः**। छन्दोदृष्टान्तं व्याचष्टे— **यथा चेति**। 'पञ्चदशाक्षरादीनि देवच्छन्दांसि; नवाक्षरादीनि आसुराणि; तेषां क्वचिन्नवाक्षरमसुराणामपच्छन्द आसीत् सप्ताक्षरं परमम्' इत्यादौ छान्दोग्ये पौर्वापर्यविशेषाभावे पैङ्ग्याम्नानाद् विशेषनिश्चय इत्यर्थः। स्तुतिं विवृणोति— **यथा च षोडशीति**। अतिरात्रे षोडशिनः पात्रविशेषस्य ग्रहणे यदङ्गभूतं स्तोत्रं तत् कस्मिन् काले गेयमिति छन्दोगानां विशेषाश्रवणात् कालविशेषाप्राप्तौ सूर्ये समयाध्युषिते सूर्योदयसमीपे इति कालविशेषप्रतीतिः, ऋचोऽधीयत इत्यार्चाः, तदीयश्रुतेर्भवतीत्यर्थः। उपगानं विवृणोति— **यथैव चेति**। 'ऋत्विज उपगायन्ति'

### *भाष्यभावप्रकाशिका*

कुशाः शङ्कवः, ता यूयं मा मां पात रक्षत। **समयाध्युषित इति**। 'समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोती'ति तैत्तिरीयकाणां वचनाच्च षोडशिस्तोत्रेऽर्द्धास्तमितलक्षणकालविशेषनिर्णय इत्यर्थः। **अविशेषेणोपगानमिति**। ऋत्विज उपगायन्तीत्यर्थः।

### *न्यायनिर्णयः*

तदेवोपपादयति— **गुणेति**। **उपायनार्थ**शब्देन सुकृतादिस्वरूपोपायनमिष्टम्, फलत उपायनस्येष्टत्वात्। फलोपसंहारं विनाऽर्थोपसंहारोऽभीष्टश्चेदुपायनशेषत्वादिति स्यात्, तच्छब्दशेषत्वादिति चाह; तथा च वदन्नर्थस्योपसंहारं नेच्छतीत्यर्थः। विद्यागुणोपसंहारप्रस्तावे स्तुत्यर्थविचारो न युक्त इत्याशङ्क्य प्रासङ्गिकत्वादयमदोष इत्याह— **तस्मादिति**। **स्तुत्युपसंहारः** स्तुत्युपयोगिनो गुणस्य सुकृतदुष्कृतयोरन्यत्र फलसंचारस्योपसंहारः, तत्प्रकारस्यानुपास्यस्यापि प्रदर्शनार्थं सूत्रमित्यर्थः।

शाखान्तरस्थो विशेषः शाखान्तरेऽप्याश्रयणीय इत्यत्र दृष्टान्तमाह— **कुशेति**। तदिदमुपमानं यथा तथा व्याख्येयमिति प्रतिज्ञाय कुशादृष्टान्तं व्याचष्टे— **भाल्लविनामिति**। भोः कुशाः शङ्कवः, यूयं वानस्पत्या वनस्पतिप्रभवाः स्थ भवथ ता मा मां पात रक्षतेति यजमानस्य वचनम्। औदुम्बरा इति श्रुतेर्दर्भविषयकुशशब्दस्यास्त्रीत्वम्। अत एव 'अस्त्री कुश'मित्यमरसिंहेनानुशिष्टम्। औदुम्बर्य इति भाष्यात् कुशशब्दस्य शङ्कुविषयस्य स्त्रीत्वमपीति विवेक्तव्यम्। छन्दोदृष्टान्तं व्याचष्टे— **यथा चेति**। दशाक्षरादीनि देवच्छन्दांसि, नवाक्षराण्यासुराणि; तेषां क्वचित् 'छन्दोभिः स्तुवत' इत्यादावविशेषेण पूर्वापरत्वप्रसङ्गे पैङ्गिश्रुतिवशाद् विशेषसिद्धिरित्यर्थः। स्तुतिदृष्टान्तं विवृणोति— **यथा चेति**। अतिरात्रे षोडशिनः पात्रविशेषस्य ग्रहणे यदङ्गभूतं स्तोत्रं तत् कस्मिन् काले गेयमिति केषांचिच्छन्दोगादीनां कालविशेषाश्रवणात् कालविशेषाप्राप्तौ सूर्ये समयाध्युषिते समीपाध्युषिते सूर्यस्योदयसंनिधौ षोडशिस्तोत्रमुपाकर्तव्यमिति विशेषधीरार्चादिश्रुतेर्भवति, ऋचोऽधीयत इत्यार्चास्तदीयश्रुतेर्विशेषधीः। यद्वा 'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति' इति तैत्तिरीयश्रुतेः षोडशिस्तोत्रेऽर्धास्तमितकालविशेषसिद्धिरित्यर्थः। उपगानं विभजते— **यथैवेति**। 'ऋत्विज उपगायन्ती'त्यविशेषेणोपगा-

१. 'कालाविशेषप्राप्तौ' इति पा.। २. खण्डनमिदमुदधृतं कल्पतरौ। द्र.पृ. ८०६।

**यथैतेषु कुशादिषु श्रुत्यन्तरगतविशेषान्वयः, एवं हानावप्युपायनान्वय इत्यर्थः। श्रुत्यन्तरकृतं हि विशेषं श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्रैव विकल्पः स्यात्। स चान्याय्यः सत्यां गतौ। तदुक्तं द्वादशलक्षण्याम्-'अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात्' (जै.सू. १०।८।१५) इति।**

*प्रकटार्थविवरणम्*

इत्यविशेषेण; 'नाध्वर्युरुपगायति' इति विशेषेणाधाने। इदानीं विवक्षितांशमाह— **यथैतेष्विति**। विपक्षे दोषमाह— **श्रुत्यन्तरकृतं हीति**। सत्यां गतौ विकल्पो न न्याय्योऽष्टदोषदुष्टत्वात्; अगतिकगतिन्यायेन व्रीहियववाक्ययोस्तदाश्रयणम्। तथा हि— यदा "व्रीहिभिर्यजेत' इति वाक्यमाश्रीयते तदा 'यवैर्यजेत' इत्यस्य इष्टप्रामाण्यत्यागः, अनिष्टाप्रामाण्योपादानम्, कदाचित् तस्यापि प्रामाण्योपादाने परित्यक्तोपादानम्, उपात्तत्यागश्चेति एकस्मिन् वाक्ये चत्वारो दोषाः। एवमितरत्रापीति। तदुक्तम्— "एवमेषोऽष्टदोषोऽपि यद् व्रीहियववाक्ययोः। विकल्प आश्रितस्तत्र गतिरन्या न विद्यते।।" इति। विकल्पपरिहाराय श्रुत्यन्तरगतो विशेषः समाश्रयणीय इत्येतद् द्वादशाध्याय्यां मीमांसायामप्युक्तमित्याह— **तदुक्तमिति**। 'नानूयाजेषु येयजामहं करोति' इत्यत्र निषेधपर्युदासयोः संशये

*भाष्यभावप्रकाशिका*

ननु तत्रापि श्रुत्यन्तरस्य श्रुत्यन्तरार्थान्वयो मा भूत्, स्वतन्त्राण्येन भवन्तु वाक्यानीत्याशङ्क्याह— **श्रुत्यन्तरकृतमिति**। भवतु विकल्प इति तत्राह— **स चान्याय्य इति**। विकल्पस्याष्टदोषदुष्टत्वात्। तथा हि व्रीहिभिर्यवैर्वा यजेतेति वाक्यद्वयमपि प्रमाणम्, तत्र व्रीहिवाक्याश्रयणे यववाक्यमनाश्रयणीयं भवति। श्रुतनैरपेक्ष्यविरोधेर[धाद]शक्यत्वाद्युगपदुभयानुष्ठानस्य। तत्र प्रतीतं यववाक्यगतं प्रामाण्यं विना कारणेन परित्यक्तव्यं स्यात्, परित्यक्तप्रामाण्यस्य च यववाक्यस्याप्रमाणत्वमङ्गीकर्तव्यमपि। केनापि हेतुना प्रयोगसाधनत्वेन यवाभ्युपगमे पूर्वपरित्यक्तस्य प्रमाणस्य पुनराश्रयणम्, तन्निरासेनाङ्गीकृतस्याप्रामाण्यस्य पुनः परित्याग इति चत्वारो दोषा एकस्मिन् वाक्ये प्रसज्यन्ते। द्वितीयेऽपि प्राप्तपरित्यागाप्राप्ताश्रयणपरित्यक्तोपादानोपात्तपरित्यागा इति चत्वारो दोषाः। तथापि तुल्यबलत्वाद् गत्यन्तराभावाच्च व्रीहियववाक्ययोर्विकल्पाश्रयणम्, इह तु सत्यां गतौ न तदाश्रयणं युक्तमित्यर्थः। अष्टदोषदुष्टविकल्पप्रसङ्गपरिहाराय वाक्यान्तरशेषत्वं वाक्यान्तरस्य **जैमिनेरपि** सम्मतमित्याह— **तदुक्तमिति**। ज्योतिष्टोमे श्रूयते— 'दीक्षितो न ददाति न जुहोति न पचती'ति च। तत्र संशयः— किं सर्वदानहोमपाकानां प्रतिषेधः, उताक्रतुप्रयुक्तानाम्, अथवा क्रतुप्रयुक्तानामपि चोदकप्राप्तानां प्रतिषेधः, किं वा पर्युदास इति। किं तावत्प्राप्तम्? सर्वदानहोमपाकानां प्रतिषेधो विशेषाभावादिति। प्रत्यक्षमेव क्रतौ दानादीनां विधानात् तद्विरोधेन प्रतिषेधायोगात् अक्रतुप्रयुक्तानामेवायं प्रतिषेध इत्यपरः पक्षः। अथवा तस्य क्रतोर्यच्चोदकप्राप्तं तत् प्रतिषिध्यते। तस्यानुमानिकतया प्रत्यक्षदानादिविधानेनाविरुद्धतया निषेद्धुं शक्यत्वादिति। तत्र सिद्धान्तसूत्रम्—

*न्यायनिर्णयः*

नाम्नानात् 'नाध्वर्युरुपगायती'त्यध्वर्युवर्जिता ऋत्विज उपगायन्तीति विशेषेणोपगानमिति शेषः। दृष्टान्तेष्वभीष्टमंशमनूद्य दार्ष्टान्तिकमाह— **यथेति**। दृष्टान्तेऽपि श्रुत्यन्तरस्य श्रुत्यन्तरान्वयो मा भूत्, भवन्त्वेतानि स्वतन्त्राण्येव वाक्यानीत्याशङ्क्याह— **श्रुत्यन्तरेति**। विकल्पोऽपि व्रीहियववदस्तु, नेत्याह— **स चेति**। अगतिका हीयं गतिर्यद्विकल्पाश्रयणम्, तस्याष्टदोषदुष्टत्वात्। तथाहि— व्रीहिभिर्यवैर्वा यजेतेति वाक्यद्वयमपि मानम्; तत्र व्रीहिवाक्याश्रयणे यववाक्यमनाश्रयणीयं श्रुतनैरपेक्ष्यविरोधाद् युगपदुभयानुष्ठानायोगात्। अतो यववाक्यस्थं मानत्वं हेतुमृते त्याज्यम्, तस्य त्यक्तमानत्वस्यामानत्वमेष्टव्यम्। केनापि हेतुना प्रयोगाङ्गत्वेन यवाङ्गीकारे त्यक्तमानत्वस्य पुनराश्रयणं तन्निरासेन स्वीकृतामानत्वस्य पुनस्त्यागश्चेत्येकस्मिन् वाक्ये चत्वारो दोषाः। द्वितीयेऽपि वाक्ये प्राप्तत्यागाप्राप्ताश्रयणत्यक्तस्वीकारोपात्तत्यागा इति त एव दोषाः। तथापि तुल्यबलत्वाद् गत्यन्तराभावाच्च व्रीहियववाक्ययोर्विकल्पोऽङ्गीकृतः। यथाहुः— 'एवमेषोऽष्टदोषोऽपि यद् व्रीहियववाक्ययोः। विकल्प आश्रितस्तत्र गतिरन्या न विद्यते' इति। इह तु सत्यां गतौ न तदाश्रयणमित्यर्थः। अष्टदोषविकल्पपरिहाराय वाक्यान्तरशेषत्वं वाक्यान्तरस्य **जैमिनेरपि** संमतमित्याह— **तदुक्तमिति**। द्वादशाध्याय्यां मीमांसायां दाशमिकमुदाहरति— **अपि त्विति**। 'दीक्षितो न ददाति न जुहोति न पचती'ति ज्योतिष्टोमाधिकारे श्रुतम्। तत्र किं सर्वदानहोमपाकानां निषेधः, किंवा तेषामक्रतुप्रयुक्तानामथ वा तत्प्रयुक्तानामपि चोदकप्राप्तानामाहो पर्युदास इति संशये सर्वहोमादिनिषेधे प्रत्यक्षविधिविरोधादक्रतुप्रयुक्तानां वा तत्प्रयुक्तानामपि चोदकप्राप्तानामानुमानिकतया निषेधस्य प्रत्यक्षाविरुद्धत्वेन निषेद्धुं शक्यत्वान्निषेध

### प्रकटार्थविवरणम्

सिद्धान्तितम्— नायं प्रतिषेध इति। स विकल्पः स्याद्यजतिषु येयजामहकरणस्य विहितत्वात्, षोडशिग्रहणाग्रहणवत्। स च सत्यां गतौ न न्याय्यः; अपि तु येयजामहकरणविधेः वाक्यशेषत्वात् इतरेषामनूयाजानां पर्युदासः स्यात् अनूयाजवर्जितेषु यजतिषु येयजामहः कर्तव्यः इति विधिः परिपूर्णो भवतीत्यर्थः।

### भाष्यभावप्रकाशिका

अपि तु वाक्यशेषत्वादित्यादि। तुशब्दोऽवधारणायाम्। नायं प्रतिषेधः। किन्तु न दीक्षितोऽदीक्षित इति पर्युदास इत्यर्थः। तत्र हेतुर्वाक्यशेषत्वादिति। उक्तानामविशेषणादनादीनां ज्योतिष्टोमैकपर्युदासोऽहरहर्दद्यादिति वाक्यशेषः(?)। अन्यथा असति पर्युदासे प्रतिषेधे सति विकल्पः स्यात्, स चान्याय्य इति दशमे चिन्तितम्[१]। 'अपि तु वाक्यशेषः स्यादन्याय्यत्वाद् विकल्पस्य विधीनामेकदशः स्यादि'त्येतद्वा [२]सूत्रमर्थद्वारेण पठितम्— **अपि तु वाक्यशेषत्वादिति**। एवं श्रूयते— 'एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त' इति। ततो 'नानुयाजेषु येयजामहं करोती'ति। तदत्र अनारभ्य किञ्चिद् यज्ञेषु ये यजामह इति करणमुपदिष्टम्। तदुद्दिश्य चाम्नातं नानुयाजेष्विति। तत्र संशयः— किं विधिप्रतिषेधयोर्विकल्पः उत पर्युदासोऽनुयाजं वर्जयित्वेतरेषु यजतिषु येयजमाहः कर्तव्यः इति। तत्रोभयो र्विधिनिषेधयोःशास्त्रीयतया तुल्यबलत्वात् षोडशिग्रहणाग्रहणवद्विकल्पः। न च वाच्यं सामान्यविषयत्वाद् विधेर्विशेषविषयत्वाच्च निषेधस्य निषेधो बलवानिति। प्राप्तिपूर्वकत्वात् प्रतिषेधस्य येयजामहस्य चान्यतोऽप्राप्तेस्तन्निषेधेन स्वसिद्धये तद्विधेरपेक्ष्यमाणत्वात्। न च शङ्कनीयम्— सापेक्षान्निषेधाद्विधिरेव बलीयानित्यतुल्यविशिष्टतया न विकल्पः स्यात्, किन्तु निषेधस्यैव बाध इति। तथा सति निषेधशास्त्रस्याप्रामाण्यप्रसङ्गात्। तस्माद् विहितप्रसिद्धतया [प्रतिषिद्धतया] विकल्प इति प्राप्तम्। तत्रोच्यते— षोडशिग्रहणाग्रहणयोर्गत्यन्तराभावादष्टदोषदुष्टोऽपि विकल्प आश्रितः, इह तु पर्युदासेनाप्युपपत्तौ विकल्पाश्रयणमयुक्तम्। अतोऽननुयाजेषु यजतिष्वनुयाजवर्जितेषु येयजामहः कर्तव्य इति विधिरेवायमिति प्रतिषेधाभावान्न विकल्पः। न चासमस्तत्वं तन्त्रो [नञो] दोषाय, विभाषाधिकारे **पाणिनिना** समासस्मरणात्। ततश्च नानुयाजेष्वित्येतद्वाक्यमपरिपूर्णं साकाङ्क्षं पूर्ववाक्यैकदेशेन संबध्यते। यदेतद् ये यजामहं करोतीत्येतन्नानुयाजेष्वनुयाजवर्जितेष्विति। तदेतद् दशमे चिन्तितमिति।

### न्यायनिर्णयः

इति प्राप्ते सिद्धान्तसूत्रम्-अपि त्वित्यादि। तुशब्दोऽवधारणार्थः। नायं निषेधः, किंतु न दीक्षितोऽदीक्षित इत्युक्तानामितरेषामविशेषेण होमादीनां ज्योतिष्टोमे कस्य पर्युदासः स्यादित्यत्र हेतुमाह— **वाक्येति**। 'अहरहर्दद्या'दिति वाक्यशेषस्य सत्त्वादिति यावत्। पर्युदासमनाश्रित्य निषेधेऽभीष्टे ज्योतिष्टोमे दानादीनां विकल्पः स्यात्,स चान्याय्य इत्याह— **प्रतिषेध इति**। 'अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात्' इत्येतद् दाशमिकं वा सूत्रमर्थद्वारा पठति— **अपि त्विति**। 'एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त' इत्युपक्रम्य 'आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार' इति सप्तदशाक्षरं मन्त्रगणं सप्तदशकलिङ्गदेहसमष्टिरूपप्रजापतित्वेन स्तुत्वा यज्ञे यज्ञेऽन्वायत्तोऽनुगत इत्यनारभ्यवादेन सर्वयज्ञेषु मन्त्रगणो विनियुक्तः। तत्र च यज्ञेषु येयजामहकरणमुक्त्वा 'नानुयाजेष्वि'ति श्रुतम्। तत्र नानुयाजेष्विति निषेधाद्विधिनिषेधसंनिपाताद्विकल्पो वा स्यात्, पर्युदासेनानुयाजं वर्जयित्वेतरेषु यजतिषु येयजामहः कर्तव्य इति वाक्यशेषः सन् विधिरेव वेति संदेहे विधिनिषेधयोः शास्त्रीयतया तुल्यबलवत्त्वेन षोडशिग्रहणाग्रहणवद्विकल्पे प्राप्ते सिद्धान्तितम्—अपि त्विति। नानुयाजेष्वित्ययं न निषेधोऽपि तु येयजामहकरणविधेर्वाक्यशेषः सन् पर्युदासः स्यात्, तन्निषेधे तु विकल्पो भवेत् तस्यान्याय्यत्वाद् येयजामहकरणविधीनां नानुयाजेष्विति पर्युदासः सन्नेकदेशः स्यादतः षोडशिग्रहणाग्रहणयोरगत्या विकल्पेऽपि प्रकृते पर्युदासेनोपपत्तौ तदभावादनुयाजवर्जितेषु यजतिषु येयजामहः कर्तव्य इति विधिरेवायमित्यर्थः।

---

१. द्र.पू.मी. १०-७-७। २. द्र.पू.मी. १०-८-१ भामतीमतमिदम्। अस्याभिप्रायवर्णनम् यथाश्रुतभाष्यसमर्थनं च परिमले विस्तृतम्। द्र.पृ. ८०६-८०८।

**अथवैतास्वेव विधूननश्रुतिष्वेतेन सूत्रेणैतच्चिन्तयितव्यम्। किमनेन विधूननवचनेन सुकृतदुष्कृतयोर्हानमभिधीयते, किंवाऽर्थान्तरमिति। तत्र चैवं प्रापयितव्यम्— न हानं विधूननमभिधीयते 'धूञ् कम्पने' इति स्मरणात्। 'दोधूयन्ते ध्वजाग्राणी'ति च वायुना चाल्यमानेषु ध्वजाग्रेषु प्रयोगदर्शनात्। तस्माच्चालनं विधूननमभिधीयते। चालनं तु सुकृतदुष्कृतयोः कंचित्कालं फलप्रतिबन्धनादित्येवं प्रापय्य प्रतिवक्तव्यम्— हानावेवैष विधूननशब्दो वर्तितुमर्हति, उपायनशब्दशेषत्वात्। न हि परपरिग्रहभूतयोः सुकृतदुष्कृतयोरप्रहीणयोः परैरुपायनं संभवति। यद्यपीदं परकीययोः सुकृतदुष्कृतयोः परैरुपायनं नाञ्जसं संभाव्यते, तथापि तत्संकीर्तनात्तावत् तदानुगुण्येन हानमेव विधूननं नामेति निर्णेतुं शक्यते। क्वचिदपि चेदं विधूननसंनिधावुपायनं श्रूयमाणं**

### *प्रकटार्थविवरणम्*

प्रकारान्तरेणाधिकरणमाविष्करोति— **अथवेति**। धात्वर्थस्य मुख्यत्वलाभेन पूर्वपक्षमाह— **तत्र चैवमिति**। नन्वमूर्तत्वात् सुकृतदुष्कृतयोश्चालनं नोपपद्यते, तस्य मूर्त्यनुविधायित्वात्। 'असर्वगतद्रव्यपरिमाणं च मूर्तिः'[१] इत्याशङ्क्याह— **चालनं त्विति**। किंचित्कालं फलदानायोन्मुखीभावलक्षणात् स्वभावात् प्रच्यवनं विद्याप्रतिबन्धाच्चालनं लक्ष्यत इति भावः। मुख्यार्थासंभवेन शब्दस्य लक्षणोपादाने सन्निहितपदानुसारेण लक्षणा न्याय्येत्युपायनशब्दसन्निधानाद्धानमेव लक्ष्यत इत्याह— **हानावेवैष इति**। ननु उपायनशब्दस्याप्यत्र मुख्यार्थत्वायोगात् कथं तद्बलेन हानं लक्ष्यत इत्याशङ्क्याह— **यद्यपीदमिति**। ननु उपायनं न सर्वत्र विधूननसन्निधौ श्रूयते; तत्कथं निर्णयकारणमित्याशङ्क्याह— **क्वचिदपि चेदमिति**। कुशाच्छन्दस्तुत्युपगानैर्यथा शाखान्तरगतो

### *भाष्यभावप्रकाशिका*

वर्णकान्तरमाह— **अथवेति**। कुत इत्यपेक्षायां **पाणिनिस्मरणादि**त्याह— **धूञ् कम्पन इति**। लोकप्रयोगसामर्थ्याच्चेत्याह— **दोधूयन्त इति**। कथममूर्तयोः सुकृतदुष्कृतयोः कम्पनम्, मूर्त्यनुविधायित्वात् कम्पनस्येत्याशङ्क्य कम्प्यमानस्य यो धर्मो विशिष्टार्थक्रियाकारित्वाभावः लक्षणयाऽभिधीयत इत्याह— **चालनं त्विति। उपायनशब्दशेषत्वादिति** तत्सन्निधौ पठितत्वादित्यर्थः। तत् प्रपञ्चयति— **न हीति**। पूर्वपक्षे विधि (?) लक्षणाया अवश्यंभावित्वात् सन्निहितपदानुसारेण (अ) हानमेव लक्ष्यत इत्यर्थः। ननूपायनमपि मुख्यं न संभवति, कथं तच्छेषतया हानस्य लक्षणमिति, तत्राह— **यद्यपीदमिति**। ननु सर्वत्रोपायनशब्दाश्रवणात्

### *न्यायनिर्णयः*

वर्णकान्तरमाह— **अथवेति**। सुकृतदुष्कृते विधूनुत इत्यादौ विधूननशब्दं विषयीकृत्य धात्वर्थमुख्यतोपायनशब्दसंनिधिभ्यां संशयमाह— **किमिति**। अर्थान्तरं चालनम्। मन्त्रादीनां विद्यासंनिधेरकिंचित्करत्ववदत्रापि विधूननशब्दस्योपायनशब्दसंनिधिरप्रयोजक इत्यभिप्रेत्य पूर्वपक्षमाह— **तत्रेति**। पूर्वपक्षे विद्यावशान्न सुकृतादिनिवृत्तिः। सिद्धान्ते ततस्तत्सिद्धिः। **पाणिनिस्मरणं** पूर्वपक्षे हेतूकरोति— **धूञिति**। लोकप्रयोगसामर्थ्याच्च विधूननस्य चालनतेत्याह— **दोधूयन्त इति**। स्मृत्या लोकतश्च सिद्धं निगमयति— **तस्मादिति**। कम्पनस्य मूर्त्यनुविधानादमूर्तयोः सुकृतदुष्कृतयोर्न तद् युक्तमित्याशङ्क्य विशिष्टार्थक्रियाकारित्वाभावस्तद्धर्मोऽत्र लक्षणीय इत्याह— **चालनं त्विति**। चालनस्य विधूननत्वे विद्यया न सुकृतादिध्वस्तिरिति फलं वक्तुमितीत्युक्तम्। पूर्वपक्षमनुभाष्य सूत्राक्षरैः सिद्धान्तयति— **एवमिति। उपायनशब्दशेषत्वादि**त्युपायनशब्दसंनिधौ विधूननशब्दस्य श्रुतत्वादित्यर्थः। तदेव प्रपञ्चयति— **न हीति**। पूर्वपक्षेऽपि लक्षणाध्रौव्याद् विधूननशब्दसंनिहितोपायनशब्दानुसारेण हानमेव लक्ष्यमित्यर्थः। उपायनस्यापि मुख्यस्यायोगात् तच्छेषतया कथं हानमित्याशङ्क्याह— **यद्यपीति**। उपायनशब्दस्य विधूननशब्दसंनिधौ क्वचिदेव भावात् कथं तद्वशान्निर्णयः, तत्राह— **क्वचिदपीति**। यथा कुशादिषु क्वचिदुक्तेषु संदिग्धेषु श्रुत्यन्तरान्निर्णयोऽङ्गीकृतस्तथेदमुपायनं विधूननसंनिधौ क्वचिदेव श्रुतमपि यत्र यत्र विधूननं श्रूयते तत्र तत्र सर्वत्र तत्संदिग्धार्थनिर्णायकत्वेनापेक्षितं निर्णायकमित्यर्थः। यत्तु लौकिकप्रयोगाद्विधूननं

---

१. अविभुवृत्तिपरिमाणवत्त्वं मूर्तत्वम्।

**कुशाच्छन्दस्तुत्युपगानवद् विधूननश्रुत्या सर्वत्रापेक्ष्यमाणं सार्वत्रिकं निर्णयकारणं संपद्यते। न च चालनं ध्वजाग्रवत् सुकृतदुष्कृतयोर्मुख्यं संभवति, अद्रव्यत्वात्। अश्वश्च रोमाणि विधून्वानस्त्यजन् रजः सहैव तेन रोमाण्यपि जीर्णानि शातयति। 'अश्व इव रोमाणि विधूय पापम्' (छा.उ. ८।१३।१) इति च ब्राह्मणम्। अनेकार्थत्वाभ्युपगमाच्च धातूनां न स्मरणविरोधः। तदुक्तमिति व्याख्यातम्।।२६।।**

।। इति पञ्चदशं हान्यधिकरणम् ।।

१६।।सांपरायाधिकरणम्।।सू. २७-२८।।

## सांपराये तर्तव्याभावात् तथा ह्यन्ये।।२७।।

### *शारीरकन्यायसंग्रहः*

**सांपराये तर्तव्याभावात् तथा ह्यन्ये।।२७।। छन्दत उभयाविरोधात्।।२८।।** 'तां मनसाऽत्येति तत्सुकृतदुष्कृते विधूनुते' इति वाक्येन व्यध्वनि हानमवगतम्। 'अश्व इव रोमाणि' इति वाक्येन देहत्यागात् प्रागेव हानमवगतम्। तत्र वाक्ययोर्विरोधे, सति पुष्कलकरणे अनन्तरं कार्यं भवति, नासति न कालान्तर इति लौकिकन्यायानुगृहीतेन अप्रतिबद्धविद्यापौष्कल्यानन्तरं हानप्रतिपादकताण्डिवाक्येन सुकृतदुष्कृताद्यनुगमनहानयोः प्रयोजनकारणशून्यतया कारणोपपत्तिशून्यं व्यध्वनि हानविषयं वाक्यं बाधित्वा देहवियोगात् प्रागेव हानं दर्शितम्।

### *प्रकटार्थविवरणम्*

विशेषोऽपेक्ष्यते तद्वदपेक्ष्यमाणमित्यर्थः। ध्वजाग्रदृष्टान्तोऽपि न सम इत्याह— **न च चालनमिति**। ननु हानपक्षे श्रौतो दृष्टान्तो नानुकूलः स्यादित्याशङ्क्याह— **अश्वश्चेति**। नन्वश्वो जीर्णानि रोमाणि त्यजतीति यद्यपि प्रत्यक्षसिद्धम्, तथापि तद्वत्पापप्रहाणे न प्रमाणमित्याशङ्क्याह— **अश्व इव रोमाणीति**। प्रहाणपक्षे धातुस्मरणविरोधोऽपि नास्तीत्याह— **अनेकार्थत्वेति**। तस्माद् यत्र विधूननमेव केवलं श्रूयते, तत्रापि शाखान्तरीयादुपायनशब्दाद्धानं ग्राह्यम्, अन्यथा विकल्पप्रसङ्गात्; तस्य चान्याय्यत्वं पूर्वतन्त्रेऽभिहितमित्यर्थः। इति पञ्चदशं हान्यधिकरणम्।।

**सांपराये तर्तव्याभावात्तथा ह्यन्ये**। विधूननं हानमिति व्याख्याय तदेव हानं क्वचिद् व्यध्वनि अर्थपक्षे [अर्धपथे] श्रूयते;

### *भाष्यभावप्रकाशिका*

तद्वशात् कथं निर्णय इति, तत्राह— **क्वचिदपीति**। यदुक्तं प्रयोगसामर्थ्यात् कम्पनं ग्राह्यमिति, तत्राह— **न चेति**। ननु दृष्टान्तेऽपि कम्पनमेवावभासत इति, नेत्याह— **अश्वश्चेति**। हानमपि प्रतीयत इत्यर्थः। यदुक्तं पाणिनिस्मरणविधेराडादिति [विरोधादिति], तत्राह— **अनेकार्थत्वेति**। इति पञ्चदशं हान्यधिकरणम्।

**सांपराये तर्तव्याभावादिति**। ननु 'अश्व इव रोमाणि विधूय पापं धूत्वा शरीर'मिति शाट्यायनिनां ताण्डिनां च

### *न्यायनिर्णयः*

कम्पनमेवेति, तत्राह— **न चेति**। दृष्टान्ते कम्पनस्यैव दृष्टेर्दार्ष्टान्तिकेऽपि तदेव ग्राह्यमित्याशङ्क्याह— **अश्वश्चेति**। हानमपि तत्र भातीत्यर्थः। तथापि दार्ष्टान्तिके विधूननं चालनमेवेत्याशङ्क्य तयोस्तुल्यत्वान्मैवमित्याह— **अश्व इवेति**। यत्तु पाणिनिस्मरणाद्विधूननं कम्पनमेवेति, तत्राह— **अनेकेति**। श्रुत्यन्तरस्थो विशेषः श्रुत्यन्तरेऽनाश्रितश्चेद् विकल्पः सर्वत्र स्यात्। स चायुक्तः सत्यां गताविति पर्युदासाधिकरणे व्युत्पादितमित्याह— **तदुक्तमिति**।।२६।। इति पञ्चदशं हान्यधिकरणम्।।

कर्मक्षयहेतुत्वं विद्यायाः सिद्धं कृत्वा हानसंनिधावुपायनोपसंहारो दर्शितः, सम्प्रति तदेवासिद्धम्, मार्गमध्ये श्रुतकर्मक्षयस्य विद्याहेतुकत्वाभावादित्याशङ्क्याह— **सांपराय इति**। यद्वा द्वितीयवर्णकोक्तविधूननशब्दस्य हानस्य कालोऽनेन निरूप्यते। विधूननं

**देवयानेन पथा पर्यङ्कस्थं ब्रह्माभि प्रस्थितस्य व्यध्वनि सुकृतदुष्कृतयोर्वियोगं कौषीतकिनः पर्यङ्कविद्यायामामनन्ति– 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति' (कौ.उ. १।३) इत्युपक्रम्य 'स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते' (कौ.उ. १।४) इति। तत् किं यथाश्रुतं व्यध्वन्येव वियोगवचनं प्रतिपत्तव्यमाहोस्विदादावेव देहादपसर्पण इति विचारणायां श्रुतिप्रामाण्याद् यथाश्रुति प्रतिपत्तिप्रसक्तौ पठति– सांपराय इति। सांपराये गमन एव देहादपसर्पण इदं विद्यासामर्थ्यात् सुकृतदुष्कृतहानं भवतीति प्रतिजानीते। हेतुं चाचष्टे– तर्तव्याभावादिति। न हि विदुषः संपरेतस्य विद्यया ब्रह्म संप्रेप्सतोऽन्तराले सुकृतदुष्कृताभ्यां किंचित् प्राप्तव्यमस्ति यदर्थं कतिचित् क्षणानक्षीणे ते कल्प्येयाताम्। विद्याविरुद्धफलत्वात्तु विद्यासामर्थ्येन तयोः क्षयः। स च यदैव विद्या फलाभिमुखी तदैव भवितुमर्हति। तस्मात् प्रागेव सन्नयं**

### *प्रकटार्थविवरणम्*

तद् विचारयितुमुपक्रमते— **देवयानेनेति**। श्रुतिद्वैविध्यात् संशयः। पूर्वपक्षप्राप्तिमुक्त्वा सिद्धान्तसूत्रं योजयति— **श्रुतिप्रामाण्यादित्यादिना**। **संपरेतस्येति**। परलोकं प्रस्थितस्येत्यर्थः। सुकृतदुष्कृतयोरनुगमनप्रयोजनाभावादनुगमनं न संभवतीत्युक्तम्। कदा तर्हि प्रहाणं युक्तमित्याशङ्क्याह— **विद्याविरुद्धेति**।

### *भाष्यभावप्रकाशिका*

देहपरित्यागात् प्रागेव सुकृतदुष्कृतहानं श्रूयते। विद्यासामर्थ्याच्च तयोर्हानं जीवत एवेति प्रतीयते। पुष्कलकारणा[न]न्तरं कार्यं भवति। ननु [न तु] तस्मिन्नसति कालान्तर इति न्यायात् विद्यायां[याः] च तत्र पुष्कलकारणत्वात् कौषीतकीनां तु पाठक्रमादर्धपथे सुकृतदुष्कृत करणं प्रतीयते। पाठक्रमाच्चार्थक्रमो बलवान्। अतः पूर्वपक्षाभावान्नेदमधिकरणमारम्भणीयमित्याशङ्क्याह— **श्रुतिप्रामाण्यादिति**। अयमभिप्रायः— नैतत्पाठक्रममात्रमपि तु श्रुतिः। सा हि 'तत् सुकृतदुष्कृते विधूनुत' इति तच्छब्देन सर्वनाम्ना तस्मादिति हेत्वर्थेन विरजानद्यतिक्रमणस्य विधूननहेतुतां प्रतिपादयति। न च श्रुत्यन्तरविरोधः, अर्धपथेऽपि पापविमोचनस्य ब्रह्मलोकसंभवनात् प्राक्कालतोपपत्तेरिति। प्रयोजनवशादर्धपथे सुकृतदुष्कृतहानं कल्प्यते, किं वा तत्र हानकारणभावात्? न तावदाद्य इत्याह— **न हि विदुष इति**। अथ द्वितीयस्तदा वैपरीत्यमेव प्रागेव तत्संभवादित्याह— **विद्याविरुद्धेति**। अक्षीणकलुषस्योत्तरेण पथा गमनासंभवाज्जीवत एव विद्यासामर्थ्यात् कल्मष[क्षय] इत्यर्थः। कौषीतकीश्रुतेस्तर्हि का गतिरिति, तत्राह— **तस्मात्प्रागेवेति**।

### *न्यायनिर्णयः*

हानमित्युक्त्वा तदेव क्वचिद् व्यध्वन्यर्धपथे श्रुतं विचारयितुं विचारविषयमाह— **देवयानेनेति**। उक्तं विभागवचनमधिकृत्य श्रुतिविप्रतिपत्त्या संशयमाह— **तदिति**। 'अश्व इव रोमाणि विधूय पाप'मित्यारभ्य 'धूत्वा शरीर'मित्युक्त्वा 'ब्रह्मलोकमभिसंभवामी'ति श्रुत्या देहत्यागात्प्रागेव सुकृतादिहानोक्तेर्विद्यासामर्थ्याच्च जीवत एव तद्धानसिद्धेः सति पुष्कले हेतौ कार्यक्षेपा[१]योगाद् विद्यायाश्च कर्मक्षये पुष्कलहेतुत्वात् 'सुकृतदुष्कृते विधूनुत' इत्यत्र च पाठक्रमादर्धपथे सुकृतादित्यागानुगमात् पाठक्रमाच्चार्थक्रमस्य बलवत्त्वात् पूर्वपक्षाभावमाशङ्क्य तत्राप्तिमाह— **श्रुतीति**। 'तत्सुकृतदुष्कृते विधूनुत' इत्येतन्न पाठमात्रम्, किंतु तच्छब्देन सर्वनाम्ना तस्मादिति हेत्वर्थेन विरजानद्यतिक्रमस्य विधूननं प्रति हेतुतां वदन्ती श्रुतिरियम्। न च श्रुत्यन्तरविरोधः, अर्धपथेऽपि कर्मक्षयस्य ब्रह्मलोक-संभवनात्प्राक्कालत्वसिद्धेरिति भावः। विधूननशब्दितसुकृतादिहानस्य कालोक्तिद्वारा वाक्यार्थधीहेतुकथनात् पादादिसंगतिः। पूर्वपक्षे विद्यासामर्थ्यानादरः। सिद्धान्ते तदादरणमित्यभिप्रेत्य पूर्वपक्षप्राप्तिमुक्त्वा सिद्धान्तसूत्रमवतार्य योजयति— **पठतीत्यादिना**। किं फलवशादर्धपथे दुष्कृतादिहानं कल्प्यं किंवा तत्रैव हानहेतोः सत्त्वात्? तत्राद्यं प्रत्याह— **न हीति**। **संपरेतस्य** परलोकं प्रति प्रस्थितस्येत्यर्थः। द्वितीयं निराह— **विद्येति**। अनपाकृतपापस्य देवयानेन पथा गमनायोगाज्जीवत एव विदुषो विद्यासामर्थ्यात् पापहानमित्यर्थः। का तर्हि कौषीतकिश्रुतेर्गतिः, तत्राह— **तस्मादिति**। तदिति सर्वनामश्रुत्या प्रकरणपठितविद्यायाः प्राधान्यात्

---

१. क्षेपः = विलम्बः।

**सुकृतदुष्कृतक्षयः पश्चात् पठ्यते। तथा ह्यन्येऽपि शाखिनस्ताण्डिनः शाट्यायनिनश्च प्रागवस्थायामेव सुकृतदुष्कृतहानमामनन्ति– 'अश्व इव रोमाणि विधूय पापम्' (छा.उ. ८।१३।१) इति, 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति च।।२७।।**

**छन्दत उभयाविरोधात्।।२८।।**

**यदि च देहादपसृप्तस्य देवयानेन पथा प्रस्थितस्यार्धपथे सुकृतदुष्कृतक्षयोऽभ्युपगम्येत, ततः पतिते देहे यमनियमविद्याभ्यासात्मकस्य सुकृतदुष्कृतक्षयहेतोः पुरुषप्रयत्नस्येच्छातोऽनुष्ठानानुपपत्तेरनुपपत्तिरेव तद्धेतुकस्य सुकृतदुष्कृतक्षयस्य स्यात्। तस्मात् पूर्वमेव साधकावस्थायां छन्दतोऽनुष्ठानं तस्य स्यात्। तत्पूर्वकं च सुकृतदुष्कृतहानमिति द्रष्टव्यम्। एवं निमित्तनैमित्तिकयोरुपपत्तिः, ताण्डिशाट्यायनिश्रुत्योश्च संगतिरिति।।२८।।**

**।। इति षोडशं सांपरायाधिकरणम् ।।**

***प्रकटार्थविवरणम्***

पुष्कलकारणानन्तरं कार्यं भवतीति लौकिकन्यायानुग्रहात् श्रुत्यन्तरमेव बलवदित्यभिप्रेत्योदाहरति— **तथा ह्यन्येऽपीति**।

**छन्दत उभयाविरोधात्**। किं च परपक्षे स्वेच्छातो विद्यानुष्ठानाभावात् उभयोर्विद्याप्रहाणयोर्निमित्तनैमित्तिकभाव एव विरुध्यते, नास्मत्पक्ष इत्याह— **छन्दत इति**। इति षोडशं साम्परायाधिकरणम्।।

***भाष्यभावप्रकाशिका***

सर्वनामश्रुत्या प्रकरणपठिताया विद्यायाः प्राधान्यात् परामर्शाद् विरजात्यतिक्रमणस्य समनन्तरस्य प्रकृतस्याप्यप्रधानत्वेनापरामर्शात् पाठक्रमबाधेनार्थक्रमो बलीयान् स्वीकर्तव्य इत्यर्थः। ताण्ड्यादिश्रुतेरविरोधेन नयनमपि पूर्ववादिनो न सम्भवति। अश्व इव रोमाणि विधूय पापमिति विधूननव्यापारे पुरुषस्य स्वातन्त्र्यप्रतीतेरित्याह— **तथा ह्यन्येऽपीति**।

ननु विद्याफलत्वाद् ब्रह्मलोकप्राप्तिवत्सुकृतदुष्कृतक्षयोऽपि देहत्यागोत्तरकालीनो भवितुमर्हतीत्याशङ्क्याह— **यदि देहादिति**। जीवतो ब्रह्मलोकप्राप्तेरसंभवाद् देहपातापेक्षेह तु देहवत एव संभवात् न तदपेक्षेत्यर्थः। **छन्दतः** स्वच्छन्दतः स्वेच्छयेति यावत्। उभयाविरोधादिति सूत्रभागं व्याचष्टे— **एवन्निमित्तनैमित्तिकयोरिति**। समर्थस्य क्षेपायोगात् पुष्कलकारणे सति समनन्तरमेव कार्योत्पत्तिरभ्युपगन्तव्या, अन्यथा निमित्तनैमित्तिक[भाव] एव तयोर्न स्यादित्यर्थः। सूत्रपदस्यार्थान्तरमाह— **ताण्डिशाट्यायनीति**। इति षोडशं साम्परायाधिकरणम्।

***न्यायनिर्णयः***

परामर्शाद् विरजानद्यतिक्रमस्यानन्तरप्रकृतस्याप्यप्राधान्यादपरामर्शात् पाठक्रमबाधेनार्थक्रमः स्वीकर्तव्य इत्यर्थः। किंच सति पुष्कलहेतौ कार्यं भवत्येवेति न्यायानुगृहीतं श्रुत्यन्तरमेव बलवदिति मत्वा श्रुत्यन्तरमुदाहरति— **तथा हीति**। न हि तस्याविरोधेन नयनं पूर्वपक्षे युक्तम्, विधूय पापमिति विधूनने पुंसः स्वातन्त्र्यदृष्टेरित्याशयेनाह— **अश्व इवेति**। किंच प्रागवस्थायामेव सुकृताद्यादानस्य श्रुतत्वादृते च तत्त्यागात् तदादानायोगान्नार्धपथे कर्मनिवृत्तिरित्याह— **तस्येति**।।२७।।

विद्याफलत्वाद् ब्रह्मलोकाप्तिवत् कर्मक्षयो देहत्यागादूर्ध्वं स्यादित्याशङ्क्याह— **छन्दत इति**। सूत्रं व्याचष्टे— **यदि चेति**। जीवतो ब्रह्मलोकाप्तेरयोगाद् देहपातापेक्षा, कर्महानेस्तु देहवत एव सिद्धेर्नैवमित्यर्थः। **छन्दतः** स्वच्छन्दतः स्वेच्छयेति व्याकरोति— **इच्छात इति**। अर्धपथे हेत्वनुष्ठानासिद्ध्या साध्यासिद्धौ फलितमाह— **तस्मादिति**। उभयाविरोधादिति भागं व्याकरोति— **एवमिति**। समर्थस्य क्षेपायोगात् पूर्णे हेतावनन्तरमेव कार्योत्पत्तिरन्यथा निमित्तनैमित्तिकत्वमेव तयोर्न स्यादित्यर्थः। सूत्रपदस्यार्थान्तरमाह— **ताण्डीति**। इत्थं विद्यासामर्थ्यात् प्रागेव सुकृतादिनिवृत्तिरित्युपसंहर्तुमितीत्युक्तम्।।२८।। इति षोडशं साम्परायाधिकरणम्।।

### १७।।गतेरर्थवत्त्वाधिकरणम्।।सू. २९-३०।।

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः।।२९।।

**क्वचित् पुण्यपापहानसंनिधौ देवयानः पन्थाः श्रूयते, क्वचिन्न। तत्र संशयः— किं हानावविशेषेणैव देवयानः पन्थाः संनिपतेदुत विभागेन— क्वचित् संनिपतेत्, क्वचिन्नेति। यथा तावद्धानावविशेषेणैवोपायनानुवृत्तिरुक्तैवं देवयानानुवृत्तिरपि भवितुमर्हतीत्यस्यां प्राप्तावाचक्ष्महे। गतेर्देवयानस्य पथोऽर्थवत्त्वमुभयथा विभागेन भवितुमर्हति— क्वचिदर्थवती गतिः, क्वचिन्नेति; नाविशेषेण। अन्यथा ह्यविशेषेणैवैतस्यां गतावङ्गीक्रियमाणायां विरोधः स्यात्। 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु.उ. ३।१।३) इत्यस्यां श्रुतौ देशान्तरप्रापणी गतिर्विरुध्येत। कथं हि निरञ्जनोऽगन्ता देशान्तरं गच्छेत्। गन्तव्यं च परमं साम्यं न देशान्तरप्राप्त्यायत्त-**

*शारीरकन्यायसंग्रहः*

**गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः।।२९।। उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्।।३०।।** निर्विशेषब्रह्माविर्भावलक्षणा विद्या अर्चिरादिगतिसम्बन्धिनी, ब्रह्मविद्यात्वात् सगुणब्रह्मविद्यावत्— इत्यनुमानस्य न निर्गुणब्रह्मवित् अर्चिरादिगतिमान्, मुक्तिफलत्वात्, प्रलये मुच्यमानहिरण्यगर्भवत् इति प्रत्यनुमानबाधात्, 'शतं चैका च हृदयस्य नाड्यः' इति काठकवाक्यस्य प्राकरणिकनिर्गुणविद्यासम्बद्धस्य दहरविद्यायामर्थसाम्यलिङ्गसम्बन्धेन बाधाच्च देशाद्यव्यवहितवस्तुप्राप्तौ न गत्यपेक्षा इति लौकिकन्यायानुगृहीतेन 'निरञ्जनः परमं साम्यमुपैति' इति वाक्येन गतिबाधो दर्शितः।

*प्रकटार्थविवरणम्*

**गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः।** हानसन्निधौ मार्गश्रवणात् विशेषापरिज्ञानाच्च संशयः। व्यवहितसंबन्धमाह— **यथा तावदिति।** निर्विशेषब्रह्मविद्या अर्चिरादिगतिसंबन्धिनी ब्रह्मविद्यात्वात्, सगुणवदित्यनुमानेनोपसंहार इत्यर्थः। निर्गुणब्रह्मवित् नार्चिरादिगतिमान्, मुक्तिफलत्वात्, प्रलये मुच्यमानहिरण्यगर्भवदिति प्रत्यनुमानेनोपसंहारानुमानस्य बाधान्नाविशेषेणेत्यर्थः। विपक्षे दोषमाह— **अन्यथा हीति।** देशाद्यव्यवहितवस्तुप्राप्तौ न गत्यपेक्षेति लौकिकन्यायानुगृहीतेन वाक्येन बाधात् न प्रकरणेनापि गतिप्राप्तिरिति भावः।

*भाष्यभावप्रकाशिका*

**गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः।** यथा हानसन्निधौ क्वचिच्छ्रूयमाणस्योपायनस्य सर्वत्रानुवृत्तिस्तथा क्वचित् सुकृतदुष्कृतक्षयसन्निधौ श्रुतो देवयानः पन्थाः केवलक्षयश्रवणेऽपि अनुवर्तत इति पूर्वपक्षं दर्शयति— **यथा तावदिति।** निर्गुणब्रह्मविद्या अर्चिरादिगतिमती ब्रह्मविद्यात्वात् सगुणब्रह्मविद्यावदिति भावः। सूत्रस्योत्तरभागं व्याचष्टे— **अन्यथा हीति।** कथं विरुध्यत इति, तदाह— **कथं हीति।** निरञ्जनस्य (इति) सर्वगतस्योपाधिव्यतिरेकेण गमनं न संभवतीत्यर्थः। गन्तृस्वभावालोचनया

*न्यायनिर्णयः*

सुकृतादिहानसंनिधानोक्तदेवयानगतेरुपायनवदेव सार्वत्रिकत्वप्राप्तावुक्तम्— **गतेरिति।** विचारविषयमाह— **क्वचिदिति।** संशयार्थं कोट्यन्तरमाह— **क्वचिन्नेति।** हानसंनिधौ मार्गश्रुतेर्विशेषाज्ञानाच्च मार्गविषये संशयमाह— **तत्रेति।** हानसंनिधौ क्वचिदेव श्रुतोपायनस्य सार्वत्रिकत्ववत् क्वचिदेव कर्मक्षयसंनिध्युक्तस्य पथो देवयानस्य केवलक्षयश्रवणेऽपि युक्ताऽनुवृत्तिरिति संगतिगर्भं पूर्वपक्षमाह— **यथेति।** निर्गुणब्रह्मविद्या गतिमती ब्रह्मविद्यात्वात्, सगुणब्रह्मविद्यावदिति भावः। प्रासङ्गिकविधूननसमयोक्त्या प्रस्तुतगुणोपसंहारोक्तेरपवादोक्तिद्वारा विचारस्य वाक्यार्थज्ञानोपायगामित्वात् पादादिसंगतिः। पूर्वपक्षे निर्गुणविदोऽपि गत्यपेक्षाया नियतिः। सिद्धान्ते सगुणविद्यावत एव तदपेक्षेति विवक्षित्वा सिद्धान्तयति— **अस्यामिति।** प्रतिज्ञां व्याख्याय हेतुं व्याख्याति— **अन्यथेति।** विरोधमेव साधयति— **कथं हीति।** सर्वगतस्यासङ्गस्यात्मनो नोपाध्यतिरेकेण गत्युपपत्तिरित्यर्थः। गन्तृरूपालोचनया

**मित्यानर्थक्यमेवात्र गतेर्मन्यामहे।।२९।।**

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्।।३०।।**

**उपपन्नश्चायमुभयथाभावः क्वचिदर्थवती गतिः, क्वचिन्नेति। तल्लक्षणार्थोपलब्धेः। गतिकारणभूतो ह्यर्थः पर्यङ्कविद्यादिषु सगुणेषूपासनेषूपलभ्यते। तत्र हि पर्यङ्कारोहणं पर्यङ्कस्थेन ब्रह्मणा संवदनं विशिष्टगन्धादिप्राप्तिश्चेत्येवमादि बहु देशान्तरप्राप्त्यायत्तं फलं श्रूयते। तत्रार्थवती गतिः। [१]न हि सम्यग्दर्शने तल्लक्षणार्थोपलब्धिरस्ति। न ह्यात्मैकत्वदर्शिनामाप्तकामानामिहैव दग्धाशेषक्लेशबीजानामारब्धभोगकर्माशयक्षपण-व्यतिरेकेणापेक्षितव्यं किंचिदस्ति। तत्रानर्थिका गतिः। लोकवच्चैष विभागो द्रष्टव्यः— यथा लोके ग्रामप्राप्तौ देशान्तरप्रापणः पन्था अपेक्ष्यते, नारोग्यप्राप्तावेवमिहापीति। भूयश्चैनं विभागं चतुर्थाध्याये निपुणतरमुप-पादयिष्यामः।।३०।।**

।। इति सप्तदशं गतेरर्थवत्त्वाधिकरणम् ।।

***प्रकटार्थविवरणम्***

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्।** गतिसाध्यप्रयोजनाभावादपि न निर्गुणविदुषो गतिकल्पनेत्याह— **उपपन्नश्चायमिति।** पौनरुक्त्यपरिहारायाह— **भूयश्चैतमिति।** इति सप्तदशं गतेरर्थवत्त्वाधिकरणम्।।

***भाष्यभावप्रकाशिका***

गतिर्न संभवतीत्युक्तम्। इदानीं गन्तव्यस्वभावालोचनयाऽपि न गतिरित्याह— **गन्तव्यश्चेति।** स्वभावयोर्भिन्नयोरैक्यप्राप्त्यसंभवात् अविद्याकृतो भेद एष्टव्यः; तथा सति विद्ययैव तन्निवृत्तिः; न च विद्या फलदानाय स्वजन्मने वा देशविशेषसापेक्षेति व्यर्था गतिरित्यर्थः।

पूर्वसूत्रेण निर्गुणविद्यायां गतिर्व्यर्थेति प्राधान्येन प्रदर्शितम्, द्वितीयेन सूत्रेण पर्यङ्कविद्यायां गतेरर्थवत्त्वं प्राधान्येन प्रदर्शयति— **उपपन्न इत्यादिना।** उभयविधपुरुषावाप्तिं क्रमेण दर्शयति— **आप्तकामानामित्यादिना।** तर्हि सद्य एव शरीरं पतेदिति, तत्राह— **आरब्धेति।** अत्रायं प्रयोगः— निर्गुणब्रह्मविदर्चिरादिगतिमान्न भवति मुक्तिफलकत्वान्मुच्यमानहिरण्यगर्भवदिति। सूत्रावयवं व्याचष्टे— **लौकवच्चैष इति।** 'ननु तयोर्ध्वमायन्नमृतत्वमेती'त्यादिश्रुतिभ्यो देवयानेन पथा गतस्यैव मुक्तिरिति तत्राह— **भूयश्चैनमिति।** इति सप्तदशं गतेरर्थवत्त्वाधिकरणम्।

***न्यायनिर्णयः***

गतेरयोगमुक्त्वा गन्तव्यरूपालोचनयाऽपि तदयोगमाह— **गन्तव्यं चेति।** स्वतो भिन्नयोरैक्यायोगादाविद्ये भेदे विद्ययैव तन्निवृत्तेर्विद्यायाश्च स्वोत्पत्तौ स्वफले वा देशभेदापेक्षाऽभावादनर्थिका गतिरित्युपसंहरति— **इतीति।** निर्गुणब्रह्मधीः सप्तम्यर्थः।।२९।।

निर्गुणविद्यायां गतिर्व्यर्थेति प्राधान्येनोक्त्वा पर्यङ्कविद्यादौ प्राधान्येन तदर्थवत्त्वमाह— **उपपन्न इति।** तत्र प्रतिज्ञां व्याकरोति— **उपपन्नश्चेति।** क्वचिदर्थवती गतिरित्यत्र हेतुमवतार्य लक्षणशब्दस्य लक्षणया कारणार्थत्वं गृहीत्वा व्याचष्टे— **तदिति।** उपलब्धिमेवाभिनयति— **तत्रेति।** देशान्तरप्राप्त्यायत्ते फले श्रुते फलितमाह— **तत्रेति।** पर्यङ्कविद्या सगुणोपास्तिः सप्तम्यर्थः। निर्गुणविद्यायामपि हेतुरस्तीत्याशङ्क्याह— **न त्विति।** तदेवोपपादयति— **न हीति।** तेषां प्राप्तपरानन्दत्वमाह— **आप्तेति।** इहेति जीवदवस्थोक्तिः। निरस्तसमस्तानर्थत्वमाह— **दग्धेति।** तर्हि सद्यो देहपातः स्यान्नेत्याह— **आरब्धेति।** हेतोर्व्यभिचारं निरस्य क्वचिन्नेत्युक्तं निगमयति— **तत्रेति।** सम्यग्धीः सप्तम्यर्थः। निर्गुणब्रह्मविन्नार्चिरादिगतिमान् मुक्तिफलभाक्त्वान्मुच्यपानहिरण्यगर्भवदिति भावः। क्वचिर्थवती गतिः क्वचिन्नेत्युक्तं सौत्रेण दृष्टान्तेन स्पष्टयति— **लोकवच्चेति।** इहेति सगुणनिर्गुणविद्योक्तिः। इतिशब्दः सूत्रव्याख्यासमाप्तौ। 'तयोर्ध्वमायन्नमृतत्वमेति' इति श्रुतेर्देवयानेनाध्वना गतस्यैव मुक्तिरित्याशङ्क्याह— **भूयश्चेति।**।।३०।। इति सप्तदशं गतेरर्थवत्त्वाधिकरणम्।।

---

१. 'न तु' इति पा.।

१८।।अनियमाधिकरणम् ।।सू.३१।।

## अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्।।३१।।

**सगुणासु विद्यासु गतिरर्थवती, न निर्गुणायां परमात्मविद्यायामित्युक्तम्। सगुणास्वपि विद्यासु कासुचिद् गतिः श्रूयते- यथा पर्यङ्कविद्यायामुपकोसलविद्यायां पञ्चाग्निविद्यायां दहरविद्यायामिति। नान्यासु; यथा मधुविद्यायां शाण्डिल्यविद्यायां षोडशकलविद्यायां वैश्वानरविद्यायामिति। तत्र संशयः- किं यास्वेवैषा गतिः श्रूयते तास्वेव नियम्येतोतानियमेन सर्वाभिरेवंजातीयकाभिर्विद्याभिरभिसंबध्येतेति। किं तावत् प्राप्तम्? नियम इति। यत्रैव श्रूयते तत्रैव भवितुमर्हति। प्रकरणस्य नियामकत्वात्। यद्यन्यत्र श्रूयमाणाऽपि गतिर्विद्यान्तरं गच्छेच्छ्रुत्यादीनां प्रामाण्यं हीयेत, सर्वस्य सर्वार्थत्वप्रसङ्गात्। अपि चार्चिरादिकैकैव गतिरुपकोसलविद्यायां**

### *शारीरकन्यायसंग्रहः*

**अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्।।३१।।** सगुणासु विद्यासु यासु श्रूयते गतिः तास्वेव प्रकरणान्नियमः प्राप्तः। तत्र 'ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसंभवन्ति' इति सत्यशब्देन सत्यार्थवचनपरिग्रहात् सत्यार्थपरिग्रह एव लघीयानिति न्यायेन 'न तत्र दक्षिणा यन्ति' इति निषेधाच्च सत्यशब्देन ब्रह्मैवोपादाय तदुपासकानां सर्वेषां वाक्यप्रमाणादेव गतिसम्बन्धप्रतिपादनात् प्रकरणान्नियमो बाध्यते इत्युक्तम्।

### *प्रकटार्थविवरणम्*

**अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्।** अधिकरणसङ्गतिमाह— **सगुणास्विति।** विद्याविशेषप्रकरणाद् वाक्याविशेषावगमाच्च संशयः। पूर्वपक्षं रचयति— **किं तावदिति।** पौनरुक्त्यपरिहारायापि नियमोऽभ्युपगन्तव्य इत्याह— **अपि चेति।**

### *भाष्यभावप्रकाशिका*

**अनियमःसर्वेषामिति। प्रकरणस्य नियामकत्वादिति।** प्रकरणवशात् सामान्येन संबन्धे सिद्धे सति श्रुत्यादिभ्यो विनियोगोऽवगम्यते। यत्र पुनः श्रुत्यादय एव केवलं विनियोजका उपलभ्यन्ते, न प्रकरणम्, तत्रापि तन्निर्वाहाय प्रकरणमवश्यं कल्पनीयम्; तदभावे दर्शपूर्णमासज्योतिष्टोमादिधर्माणां सांकर्यप्रसङ्गात्, तस्मात् प्रकरणं विनियोगाय तन्निर्वाहाय चावश्याभ्युपगन्तव्यम्; अन्यथा श्रुत्यादीनामप्रामाण्यप्रसङ्गादित्यर्थः। तत्रैव संबन्ध इति नियमे लिङ्गमप्यस्तीत्याह— **अपि चार्चिरिति।** एकत्रोक्तस्य सर्वत्र संबन्धोपपत्तेरित्यर्थः।

### *न्यायनिर्णयः*

सगुणनिर्गुणविद्यासु गतिभावाभावव्यवस्थावत् सगुणविद्यास्वपि व्यवस्थामाशङ्क्याह— **अनियम इति।** वृत्तं कीर्तयति— **सगुणास्विति।** गतेर्द्विधाऽर्थवत्त्वे स्थिते किमनेनाधिकरणेनेत्याशङ्क्य विषयमाह— **सगुणास्वपीति।** विचारबीजं संशयं वक्तुं कोट्यन्तरमाह— **नेति।** अर्चिरादिपर्वाणं पन्थानमधिकृत्य विद्याविशेषाधिकाराद्, वाक्यादविशेषदृष्टेश्च संशयमाह— **तत्रेति।** सगुणासु विद्यासु गतेः सार्वत्रिकत्वोक्त्या वाक्यार्थधीहेतोरेव चिन्तनात् पादादिसंगतिः। पूर्वपक्षे नियतताया गतेरुपसंहारासिद्धिः। सिद्धान्ते त्वनियततायाः सार्वत्रिकत्वमित्यङ्गीकृत्य विमृश्य पूर्वपक्षमाह— **किमिति।** नियमं व्याकरोति— **यत्रेति।** तत्र हेतुः— **प्रकरणस्येति।** हेतुं व्यतिरेकतो विवृणोति— **यदीति।** प्राकरणिके सामान्यसंबन्धे श्रुत्यादिभ्यो विशेषविनियोगधीः। यत्र श्रुत्यादय एव विनियोजका न प्रकरणं तत्रापि तन्निर्वाहाय प्रकरणं कल्प्यम्। तदभावे दर्शपूर्णमासज्योतिष्टोमादिधर्माणां संकरात्। तस्माद् विनियोगाय तन्निर्वाहाय च प्रकरणध्रौव्यम्, अन्यथा श्रुत्याद्यप्रामाण्यात्, तेन प्राकरणिकी विशेषसंगतिरित्यर्थः। न केवलं नियमे प्रकरणमेव प्रमाणम्, किंतु लिङ्गमपीत्याह— **अपि चेति।** एकत्रोक्तस्य सर्वत्र संबन्धसिद्धौ पुनरुक्तिरनर्थिकेत्यर्थः। लिङ्गप्रकरणाभ्यां

**पञ्चाग्निविद्यायां च तुल्यवत् पठ्यते, तत् सर्वार्थत्वेऽनर्थकं पुनर्वचनं स्यात्। तस्मान्नियम इत्येवं प्राप्ते पठति–**

**अनियम इति। सर्वासामेवाभ्युदयप्राप्तिफलानां सगुणानां विद्यानामविशेषेणैषा देवयानाख्या गतिर्भवितुमर्हति। नन्वनियमाभ्युपगमे प्रकरणविरोध उक्तः। नैषोऽस्ति विरोधः। शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः। तथाहि श्रुतिः– 'तद्य इत्थं विदुः' (छा.उ. ५।१०।१) इति पञ्चाग्निविद्यावतां देवयानं पन्थानमवतारयन्ती 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छा.उ. ५।१०।१) इति विद्यान्तरशीलिनामपि पञ्चाग्निविद्याविद्भिः समानमार्गतां गमयति। कथं पुनरवगम्यते विद्यान्तरशीलिनामियं गतिरिति? ननु श्रद्धातपःपरायणानामेव स्यात्, तन्मात्रश्रवणात्। नैष दोषः। न हि केवलाभ्यां श्रद्धातपोभ्यामन्तरेण विद्याबलमेषा गतिर्लभ्यते, 'विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' (शत.१०।५।४।१६) इति श्रुत्यन्तरात्। तस्मादिह श्रद्धातपोभ्यां विद्यान्तरोपलक्षणम्। वाजसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते–**

### *प्रकटार्थविवरणम्*

अनियमं विवृणोति— **सर्वासामेवेति**। गतिमन्तरेण फलप्राप्तेरेवासंभवादित्यर्थः। उक्तदोषपरिहाराय सूत्रभागमवतारयति— **नन्वित्यादिना**। अविशेषेण विद्यान्तरशीलिनां देवयानप्रापकवाक्येन प्रकरणबाध इत्यर्थः। ये चेमे अरण्ये स्थित्वा श्रद्धा तप इत्युपासते अनुतिष्ठन्ति तेऽप्यर्चिषमभिसंभवन्ति इत्येतावदवगम्यते, न तु विद्यान्तरानुष्ठायित्वमित्याह— **कथं पुनरिति**। कस्तर्ह्यस्यार्थ इत्याशङ्क्याह— **ननु श्रद्धेति**। अविदुषां प्रतिषेधश्रवणान्नैवं कल्पयितुं शक्यत इत्याह— **नैष दोष इति**। विद्यया तद् ब्रह्मारोहन्ति प्राप्नुवन्ति यत्र सर्वे कामाः परागताः परावृत्ताः, न तत्र दक्षिणा[दक्षिण]मार्गगाः केवलकर्मिणो यान्ति; नाविद्वांसः तपस्विनोऽपीत्यर्थः। यस्मान्मुख्ये बाधकमस्ति तस्मात्। श्रद्धातपःपरायणाः सन्तः परमेश्वरमहमित्युपासते ये संन्यासिनः, न च साक्षात्कृतब्रह्माणः, तेऽप्यर्चिरादिना गच्छन्तीत्यर्थः। अत्रैव वाजसनेयकसंशयमाह— **वाजसनेयिनस्त्विति**। किंच विद्याकर्मलक्षण-

### *भाष्यभावप्रकाशिका*

वाक्यात् सर्वत्रान्वयप्रतीतेः प्रकरणं दुर्बलमिति बाध्यत इत्याह— **तथा हि श्रुतिरिति**। स एवाक्षेप्ताऽऽह— **ननु श्रद्धातप**

### *न्यायनिर्णयः*

वाक्यबाधं मत्वोपसंहरति— **तस्मादिति**। नियता गतिर्नोपसंहारार्हेति प्राप्तं पूर्वपक्षमनूद्य सिद्धान्तयति— **एवमिति**।

अनियमं व्याचष्टे— **सर्वासामिति**। कर्मसमृद्ध्यादिफलोपासनानि व्यवच्छिनत्ति— **अभ्युदयेति**। अनियमे प्रकरणविरोधं स्मारयति— **नन्विति**। सूत्रावयवेनोत्तरमाह— **नेति**। गतेर्वाक्यीयान्वयस्य सार्वत्रिकत्वाद् दुर्बलं प्रकरणं बाध्यमित्यभिप्रेत्य श्रुतिमाह— **तथा हीति**। तत् तत्राधिकृतानां मध्ये ये केचिद् द्युलोकादीनग्नित्वेन विदुस्तेऽर्चिषमभिसंभवन्तीति संबन्धः। 'ये चे'त्यत्रापि तथैवान्वयः। अविशेषेण विद्यान्तरशीलिनां देवयानप्रापकवाक्येन प्रकरणं बाध्यमित्युक्तम्। इदानीं वाक्यं न विद्यान्तरशीलिनामपि देवयानप्रापकमिति शङ्कते— **कथमिति**। वाक्यस्य तर्हि कोऽर्थः स्यादित्याशङ्क्याक्षेप्तैवाह— **नन्विति**। श्रद्धातपोनुष्ठानमात्रस्य श्रुतत्वात् तन्निष्ठानामेव गतिर्वाक्येनोक्ता स्यादित्यर्थः। वाक्यान्यथासिद्धिं दूषयति— **नेति**। अविदुषामेषा गतिर्नेत्यत्र श्रुतिं हेतुमाह— **विद्येति**। तदित्युक्तं ब्रह्मलोकाख्यस्थानं विशिनष्टि— **यत्रेति**। यस्मिन् प्राप्ते कामाः क्षुद्रविषयाः परागता व्यावृत्ताः, कामक्रोधादिस्पर्शवर्जितं प्राप्यं ब्रह्मलोकस्थानमित्यर्थः। दक्षिणा दक्षिणमार्गगामिनः केवलकर्मिणस्तपस्विनोऽप्यविद्वांसो न तत्र गच्छन्तीत्यपिशब्दो ज्ञेयः। 'ये चे'त्यादिवाक्यस्य तर्हि का गतिः, तत्राह— **तस्मादिति**। उक्तच्छन्दोगवाक्यमिहेत्युक्तम्। उपलक्षणमन्तरेणापि विद्यान्तरशीलिनामियं गतिरवगतेत्याह— **वाजेति**।

**'य एवमेतद् विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते' (बृ.उ.६।२।१५) इति। तत्र श्रद्धालवो ये सत्यं ब्रह्मोपासत इति व्याख्येयम्। सत्यशब्दस्य ब्रह्मण्यसकृत्प्रयुक्तत्वात्। पञ्चाग्निविद्याविदां चेत्थंवित्तयैवोपात्तत्वाद् विद्यान्तरपरायणानामेवैतदुपादानं न्याय्यम्। 'अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्' (बृ.उ. ६।२।१६) इति च मार्गद्वयभ्रष्टानां कष्टामधोगतिं गमयन्ती श्रुतिर्देवयानपितृयाण-योरेवैनानन्तर्भावयति। तत्रापि विद्याविशेषादेषां देवयानप्रतिपत्तिः। स्मृतिरपि- 'शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः' (भ. गी. ८।२६) इति। यत्पुनर्देवयानस्य पथो द्विराम्नानमुपकोसलविद्यायां पञ्चाग्निविद्यायां च, तदुभयत्राप्यनुचिन्तनार्थम्। तस्मादनियमः।।३१।।**

।। इत्यष्टादशमनियमाधिकरणम् ।।

### *शारीरकन्यायसंग्रहः*

**१९।। यावदधिकाराधिकरणम् ।।सू.३२।।**

**यावदधिकारमवस्थितिराधिकारिकाणाम्।।३२।।** वसिष्ठादीनां विद्यासंबन्धिशरीरात् शरीरान्तरग्रहणं पूर्वशरीरारम्भकेभ्यः कर्मभ्यः कर्मान्तरनिबन्धनम्, शरीरान्तरग्रहणत्वात्, प्राकृतपुरुषशरीरान्तरग्रहणवत्। ततश्च सर्वेषामपि ब्रह्मविदामनारब्धकर्मनिमित्तमेव शरीरान्तरग्रहणं भवितुमर्हति, ब्रह्मविद्यावत्त्वात्, आधिकारिकपुरुषवत् इत्यनुमानेन आविर्भूतब्रह्मणोऽपि अनारब्धकर्मनिमित्तशरीरग्रहणे प्राप्ते 'क्षीयन्ते चास्य कर्माणि' 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते' इति च श्रुतिस्मृतिभ्यामनारब्धफलकर्माद्यभावेऽवगते सति

### *प्रकटार्थविवरणम्*

मार्गद्वयभ्रष्टानामधोगत्यभिधानादपि विद्यान्तरशीलिनां देवयानप्राप्तिरित्याह— **अथ य एताविति**। दन्दशूकः सर्पः। श्रुतिमुक्त्वा स्मृतिमाह— **स्मृतिरपीति**। शुक्लपक्षोपलक्षिता देवयानाख्या गतिः, कृष्णपक्षोपलक्षिता पितृयाणाख्या, जगत एते गती शाश्वते नित्ये मते; एकया शुक्लगत्या यात्यनावृत्तिं विद्वान्; अन्यया आवर्तते पुनः कर्मीति अविशेषेणैवोक्तमित्यर्थः। नियमकारणान्तरमनूद्य गतिराह— **यत्पुनरिति**। गत्यनुचिन्तनमुभयत्राप्यङ्गमिति दर्शयितुमित्यर्थः। इत्यष्टादशमनियमाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**इति**। ननु तत्रापि सत्यशब्देन सत्यार्थवचनमेव गृह्यते, न ब्रह्मेत्याशङ्क्याह— **तत्रेति**। सत्यार्थवचनपरिग्रहात् सत्यार्थपरिग्रह एव लघीयानित्यर्थः। ननु पञ्चाग्निविद एव कस्मात् सत्यमुपासत इति न गृह्यन्त इत्याशङ्क्य तेषां पृथगेव गृहीतत्वादित्याह— **पञ्चाग्निविदामिति**। लिङ्गादप्येतदवगम्यत इत्याह— **अथ य एताविति**। तथापि देवयानसंबन्धः कथमिति, तत्राह— **तत्रापीति**। योग्यतावशादित्यर्थः। पूर्ववादिनोक्तस्य लिङ्गस्यान्यथासिद्धिमाह— **यत्पुनरिति**। इत्यष्टादशमनियमाधिकरणम्।

### *न्यायनिर्णयः*

तत्रापि सत्यशब्देन सत्यार्थोक्तेरेव संग्रहात् कुतो विद्यान्तरयुक्तानां गतिधीरित्याशङ्क्याह— **तत्रेति**। तेऽर्चिषमभिसंभवन्तीति संबन्धः। सत्यशब्देन ब्रह्मोक्तौ हेतुमाह— **सत्येति**। 'सत्यं ज्ञानमनन्तं ब्रह्म', 'तत्सत्यं स आत्मा', 'सत्यस्य सत्यम्' इत्येवमादावित्यर्थः। सत्यार्थवचनग्रहात् सत्यार्थग्रहो लघीयानित्युक्तम्। इदानीं पञ्चाग्निविद एव सत्यमुपासत इति कस्मान्न गृह्यन्त इत्याशङ्क्य तेषां पृथग्गृहीतत्वादित्याह— **पञ्चेति**। इतश्च विद्यान्तरशीलिनां गतिरिति लिङ्गदर्शनं समुच्चिनोति— **अथेति**। **एनानिति** विद्यान्तरपरा गृह्यन्ते। तथापि कथं देवयानयोगस्तेषामित्याशङ्क्य योग्यतयेत्याह— **तत्रापीति**। श्रुतिस्मृतिभ्यां प्रकरणविरोधसमाधिं प्रतिज्ञाय श्रुतिरुक्ता। सम्प्रति स्मृतिमाह— **स्मृतिरिति**। जगतोः ज्ञानकर्माधिकृतस्येत्यर्थः। परोक्तं लिङ्गमनूद्यान्यथासिद्धिमाह— **यदिति**। लिङ्गवाक्याभ्यां प्रकरणं भङ्क्त्वा सगुणविद्यासु गतेः सार्वत्रिकत्वमुपसंहरति— **तस्मादिति**।।३१।। इत्यष्टादशमनियमाधिकरणम्।।

**१९।।यावदधिकाराधिकरणम्।।सू. ३२।।**

## यावदधिकारमवस्थितिराधिकारिकाणाम्।।३२।।

**विदुषो वर्तमानदेहपातानन्तरं देहान्तरमुत्पद्यते, न वेति चिन्त्यते। ननु विद्यायाः साधनभूतायाः संपत्तौ कैवल्यनिर्वृत्तिः स्यान्न वेति नेयं चिन्तोपपद्यते। न हि पाकसाधनसंपत्तावोदनो भवेन्न वेति चिन्ता संभवति; नापि भुञ्जानस्तृप्येन्न वेति चिन्त्यते। उपपन्ना त्वियं चिन्ता, ब्रह्मविदामपि केषांचिदितिहासपुराणयोर्देहान्तरोत्पत्ति-दर्शनात्। तथा हि– अपान्तरतमा नाम वेदाचार्यः पुराणर्षिर्विष्णुनियोगात् कलिद्वापरयोः संधौ कृष्णद्वैपायनः संबभूवेति स्मरन्ति[१]। वसिष्ठश्च ब्रह्मणो मानसः पुत्रः सन् निमिशापादपगतपूर्वदेहः पुनर्ब्रह्मादेशान्मित्रावरुणाभ्यां संबभूवेति। भृग्वादीनामपि ब्रह्मण एव मानसपुत्राणां वारुणे यज्ञे पुनरुत्पत्तिः[२] श्रूयते। सनत्कुमारोऽपि ब्रह्मण एव मानसः पुत्रः स्वयं रुद्राय वरप्रदानात् स्कन्दत्वेन प्रादुर्बभूव[३]। एवमेव दक्षनारदप्रभृतीनां भूयसी देहान्तरोत्पत्तिः कथ्यते तेन तेन निमित्तेन स्मृतौ।[४] श्रुतावपि मन्त्रार्थवादयोः प्रायेणोपलभ्यते। ते च केचित्**

### *शारीरकन्यायसंग्रहः*

अधिकारिपुरुषाणामितरेषां च सर्वेषां विदुषामनारब्धकर्मनिमित्तं शरीरान्तरं नोत्पद्यते, अविद्याकामकर्मलक्षणनिमित्ताभावात्, यत् निमित्तशून्यं न तत् उत्पद्यते, यथा बीजाभावेऽङ्कुरः इति प्रत्यनुमानात्, 'श्वसूकरखरोष्ट्राणां गोऽजावि' इत्यादिब्रह्महत्याफले चा[फल]शरीरान्तरग्रहणस्य पूर्वशरीरारम्भकब्रह्महत्यानिमित्तत्वेन तत्रानैकान्तिकत्वाच्च पूर्वपक्षानुमानं बाधित्वा आविर्भूतब्रह्मणः अनारब्धकर्मनिमित्तं शरीरान्तरग्रहणं नास्तीत्युक्तम्।

### *प्रकटार्थविवरणम्*

**यावदधिकारमवस्थितिराधिकारिकाणाम्**। एवं तावदविशेषेणोपासकानां देवयानेन पथा ब्रह्मलोकप्राप्तिमुक्त्वा अधुना तेषामुपासनाफलभुजां परविद्याभाजां शरीरान्तरं प्रवृत्तफलकर्मातिरिक्तकर्मनिमित्तमुत्पद्यते न वेति प्रासङ्गिकं विचारान्तरमारभते— **विदुष इति**। संशयकारणाभावाद्विचारमाक्षिपति— **ननु विद्याया इति**। संशयकारणप्रदर्शनेन विचारारम्भं समर्थयति— **उपपन्ना**

### *भाष्यभावप्रकाशिका*

**यावदधिकारमवस्थितिराधिकारिकाणाम्**। इदानीं निर्गुणविद्यायां विचारयति— **विदुष इति**। अधिकरणमाक्षिपति— **ननु विद्याया इति**। तदेव दृष्टान्तेन साधयति— **न हीति**। अतः संशयाभावादधिकरणं नारम्भणीयमित्यर्थः। समाधत्ते— **उपपन्ना त्विति**। क्वचिद्विदुषामपि मुक्त्यनुपलब्धेः संशय इत्यर्थः। ननु सनत्कुमारादीनां पूर्वशरीरत्यागाभावान्न देहान्तरोत्पत्तिः स्यादिति,

### *न्यायनिर्णयः*

सगुणविद्यासु व्यवहितफलासु सर्वास्वपि गतिरर्थवतीत्युक्तम्। इदानीं निर्गुणायामपि विद्यायां सद्योमुक्तिफलत्वानवगमात् कालान्तरभाविफलत्वाविशेषादविशिष्टा गतेरर्थवत्तेत्याशङ्क्याह— **यावदिति**। विषयसंशयौ दर्शयति— **विदुष इति**। अकारणसंशयायोगं मन्वानो विचारमाक्षिपति— **नन्विति**। तदेव दृष्टान्तेन स्पष्टयति— **न हीति**। सत्यां सामग्र्यामसति प्रतिबन्धे कार्यनिश्चयेऽपि कुतो विद्यया सद्योमुक्तिरित्याशङ्क्याह— **नापीति**। संशयाभावादधिकरणानारम्भं परिहरति— **उपपन्नेति**। विदुषामपि केषांचिदमुक्तेः संशयसिद्धिरित्युपपत्तिमेव दर्शयति— **ब्रह्मेति**। दर्शनमेव विशदयति— **तथा हीति**। सर्वेषामेव तेषां कर्मनिष्ठत्वमाशङ्क्योक्तम्— **सनत्कुमारोऽपीति**। उक्तन्यायमतिदिशति— **एवमिति**। स्मृतेर्मूलाभावादप्रामाण्यमाशङ्क्याह— **श्रुताविति**। उपलभ्यते पूर्वोक्ता

---

१. द्र. महाभा. शान्ति. ३४९ अ.। २. 'स्मर्यते' इति पा.। ३. द्र. त्रिपुररहस्ये माहात्म्यखण्डे ३७ अध्याये। ४. 'मेधातिथेर्मेषे'ति मन्त्रे इन्द्रस्य मेषजन्मोपलभ्यते। वसिष्ठ उर्वशीपुत्रो जात इत्ययमर्थो बह्वृचार्थवादे इति रत्नप्रभा।

**पतिते पूर्वदेहे देहान्तरमाददते, केचित्तु स्थित एव तस्मिन् योगैश्वर्यवशादनेकदेहादानन्यायेन। सर्वे चैते समधिगतसकलवेदार्थाः स्मर्यन्ते। तदेतेषां देहान्तरोत्पत्तिदर्शनात् प्राप्तं ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वेति।**

**अत उत्तरमुच्यते- न। तेषामपान्तरतमःप्रभृतीनां वेदप्रवर्तनादिषु लोकस्थितिहेतुष्वधिकारेषु नियुक्तानामधिकारतन्त्रत्वात् स्थितेः। यथाऽसौ भगवान् सविता सहस्रयुगपर्यन्तं जगतोऽधिकारं चरित्वा तदवसान उदयास्तमयवर्जितं कैवल्यमनुभवति 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता' (छा.उ. ३।११।१) इति श्रुतेः, यथा च वर्तमाना ब्रह्मविद आरब्धभोगक्षये कैवल्यमनुभवन्ति-**

### *प्रकटार्थविवरणम्*

**त्वियमिति**। समधिगतसकलवेदार्थानां देहान्तरोत्पत्तिदर्शनं संशयकारणमुक्त्वा पूर्वपक्षमाह— **तदेतेषामिति**। वसिष्ठादीनां शरीरान्तरं पूर्वशरीरारम्भकातिरिक्तकर्मनिबन्धनम्, शरीरान्तरत्वात्, संप्रतिपन्नवत्। अतश्च ब्रह्मवित्त्वाविशेषादन्यस्याप्याविर्भूतब्रह्मणोऽनारब्धकर्मनिमित्तशरीरग्रहणे सति विद्यायाः पाक्षिकमोक्षहेतुत्वान्नास्त्येव वा हेतुत्वम्, तत्तद्भोगकालेऽपि कर्मान्तरसंभवादित्यर्थः।

अनारब्धकर्मनिमित्तं विदुषां शरीरग्रहणं न भवतीत्याह— **नेति**। ततो भोगकालादूर्ध्वमुदेत्य उद्गम्य हित्वा पूर्वदेहं नैवोदेता नास्तमेता उदयास्तमयवर्जित एक एवाद्वितीय एव मध्ये ब्रह्मस्वरूपेण स्थातेत्यर्थः। श्रुत्यन्तरावष्टम्भेनोदाहरणान्तरमाह— **यथा**

### *भाष्यभावप्रकाशिका*

तत्राह— **ते च केचिदिति**। **अनेकदेहादानन्यायेनेति**। एकस्यैव किंशुकादेर्युगपदनेकदेहान्दृष्टान्तन्यायेनेत्यर्थः। तर्हि ते ब्रह्मविद एव न भवन्तीत्याशङ्क्याह— **सर्वे चैत इति**। पूर्वपक्षमाह— **अहेतुत्वमिति**। ब्रह्मविद्या संसारविरोधिनी न भवति, ब्रह्मविद्यात्वात्, वसिष्ठादीनां ब्रह्मविद्यावत्। न च 'तस्य तावदेव चिरम्' 'न च पुनरावर्तत' इत्यादिश्रुतिविरोधः; तासां प्रशंसार्थतयाऽप्युपपत्तेरिति भावः।

'निश्चाय्य तं मृत्युमुखात् प्रमुच्यते' 'भिद्यते हृदयग्रन्थिरि'त्यादीनां ब्रह्मविद्याया मोक्षसाधनत्वप्रतिपादने तात्पर्यावधारणात् स्तुतिमात्रत्वानुपपत्तेर्वसिष्ठादीनां ब्रह्मविद्यायामधिकार(प्रतद)प्रतिबन्धान्मोक्षाभावस्यान्यथोपपत्तेरप्रतिबन्धाया न मोक्षं प्रत्यहेतुत्वं विद्याया इति परिहरति— **अत उत्तरमुच्यत इत्यादिना**। यावदधिकारं तावदवस्थितिरित्युक्तम्, अत्र दृष्टान्तमाह— **यथा ऽसाविति**। तत्र किं प्रमाणमिति, तदाह— **अथ तत इति**। दृष्टान्तान्तरमाह— **यथा चेति**। ननु ब्रह्मविदोऽपि देहान्तरप्राप्तिः प्रारब्धकर्मभ्यः

### *न्यायनिर्णयः*

कथेति शेषः। सनत्कुमारादीनां पूर्वदेहात्यागान्न देहान्तरोत्पत्तिरित्याशङ्क्याह— **ते चेति**। एकस्यैव मायाविनो युगपदनेकदेहादानदृष्टान्तोऽनेकदेहादानन्यायः। तर्हि ते न ब्रह्मविदः, तत्राह— **सर्वे चेति**। अनुपलब्धिहेतुकं संशयमुपसंहरन् विचारोपपत्तिं निगमयति— **तदेतेषामिति**। निर्गुणविद्यायां गतिं प्रतिषिध्य सगुणविद्यायां तत्प्रयोजकैश्वर्यविशेषदर्शनादर्थवती सर्वत्र गतिरित्युक्ते निर्गुणविद्यायामपि मोक्षासिद्धेरैश्वर्यफलत्वे वाच्ये गतिरुपसंहर्तव्येति पूर्वपक्षमाह— **अहेतुत्वमिति**। वाशब्दोऽवधारणे। ब्रह्मविद्या न संसारविरोधिनी ब्रह्मविद्यात्वाद् वसिष्ठादिनिष्ठब्रह्मविद्यावत्। न च 'तस्य तावदेव चिर'मित्यादिश्रुतिविरोधः, प्रशंसार्थतया तदुपपत्तेरिति भावः। 'निचाय्य त'मित्यादिश्रुतेर्ब्रह्मविद्याया मोक्षहेतुत्वोक्तौ तात्पर्यसिद्धेः स्तुतिमात्रत्वानुपपत्तेर्वसिष्ठादीनां ब्रह्मविदामधिकारप्रतिबन्धान्मुक्त्यभावस्यान्यथासिद्धेरप्रतिबद्धाया विद्याया न मोक्षं प्रत्यहेतुतेति कुतो गत्युपसंहार इत्युक्त्या वाक्यार्थधीहेतुनिरूपणात् पादादिसंगतिः। पूर्वपक्षे धियो मोक्षाहेतुत्वाद् गत्युपसंहारः। सिद्धान्ते तस्यास्तद्धेतुत्वध्रौव्यात् तदनुपसंहार इत्यभिप्रेत्य सिद्धान्तयति— **अत इति**। ब्रह्मविद्याया मोक्षं प्रत्यहेतुत्वं निषेधति— **नेति**। ब्रह्मवित्स्वेव केषुचिन्मोक्षादृष्टेरहेतुत्वं कथं निषिध्यत इत्याशङ्क्य प्रतिबन्धाभावमपेक्ष्य विद्या मोक्षहेतुरिति मत्वाऽऽह— **तेषामिति**। यावदधिकारं तावदवस्थितिरित्यत्र दृष्टान्तमाह— **यथेति**। तत्र मानमाह— **अथेति**। आधिकारिकैश्वर्यहेतुकर्मक्षयानन्तरं ततः पश्चादूर्ध्वो विलक्षणः सन्नुदेत्योद्गम्य पुनरादित्यो नैवोदेता नास्तमेता

**'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छा.उ. ६।१४।२) इति श्रुतेः। एवमपान्तरतमः-प्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते, तदवसाने चापवृज्यन्त इत्यविरुद्धम्। सकृत्प्रवृत्तमेव हि ते फलदानाय कर्माशयमतिवाहयन्तः स्वातन्त्र्येणैव गृहादिव गृहान्तरमन्यमन्यं देहं संचरन्तः स्वाधिकारनिर्वर्तनायापरिमुषितस्मृतय एव देहेन्द्रियप्रकृतिवशित्वान्निर्माय देहान् युगपत् क्रमेण वाऽधितिष्ठन्ति। न चैते जातिस्मरा इत्युच्यन्ते, 'त एवैते' इति स्मृतिप्रसिद्धेः। यथा हि [1]'सुलभा नाम ब्रह्मवादिनी जनकेन विवदितुकामा व्युदस्य स्वं देहं जानकं देहमाविश्य व्युद्य तेन पश्चात् स्वमेव देहमाविवेशेति स्मर्यते। यदि ह्युपयुक्ते सकृत्प्रवृत्ते कर्मणि कर्मान्तरं देहान्तरारम्भकारणमाविर्भवेत् ततोऽन्यदप्यदग्धबीजं कर्मान्तरं तद्वदेव प्रसज्येतेति ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वाऽऽशङ्क्येत, न त्वियमाशङ्का युक्ता, ज्ञानात् कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात्।**

### *प्रकटार्थविवरणम्*

**चेति**। यच्चानुमितं शरीरान्तरं कर्मान्तराधीनमिति, तत्राह— **सकृत्प्रवृत्तमेवेति**। यस्य जातिस्मरव्यतिरिक्तस्य कर्मान्तराधीनं शरीरान्तरम्, तस्य स्मृतिप्रमोषो दृष्टः। स च तेषु नोपलभ्यत इति व्यापकानुपलब्धिबाध इत्यर्थः। तर्हि तेऽपि जातिस्मरा एवेत्याशङ्क्याह— **न चैत इति**। जानकं जनकस्य देहमाविश्य व्यूह्य [व्युद्य] विवादं कृत्वा तेन जनकेन सहेत्यर्थः। किं च विदुषोऽदग्धकर्माभावादेव न तन्निमित्तं शरीरान्तरं संभाव्यते, अङ्कुर इव बीजाभाव इत्याह— **यद्युपयुक्त इत्यादिना**। न केवलं

### *भाष्यभावप्रकाशिका*

कर्मान्तरनिबन्धना देहान्तरप्राप्तित्वादविदुषां देहान्तरप्राप्तिवदित्याशङ्क्याह— **सकृत्प्रवृत्तमिति**। देहान्तरप्राप्तिः कर्मान्तरनिबन्धनेति न नियम एकस्मादपि ब्रह्महत्यादिकर्मणः शास्त्रकारा[श्वसूकरा]द्यनेकदेहप्राप्तिस्मरणादित्यर्थः। ननु तर्ह्यस्मदादिभ्यः किं वैलक्षण्यमिति, तत्राह— **स्वातन्त्र्येणेति**। स्वतन्त्राश्चेत् किमिति देहान्तरं गृह्णन्तीत्याशङ्क्य प्रारब्धाधिकारलक्षणफलकर्मक्षयायेत्याह— **स्वाधिकारेति**। नन्वेवं सति स्मृतिभ्रंशः स्यादित्यत आह— **अपरिमुषितेति**। ननूत्पद्यमानानामपरिमुषितस्मृतित्वेऽपि जातिस्मृतित्वमेव, न पुनस्तज्जन्मान्तरीयवसिष्ठादिनामत्वमिति, तत्राह— **न चैत इति**। ब्रह्मविदां स्वातन्त्र्येण देहान्तरसंचारः क्व दृष्ट इति, तत्राह— **यथा सुलभेति**। **व्युद्येति**। विवादं कृत्वेत्यर्थः। एतावता कथं ज्ञानस्य नियतफलत्वमित्याकाङ्क्षायां व्यतिरेकमुखेनैतद् दर्शयति— **यदि हीति**। कर्मान्तरमिति नारब्धविपाकमित्यर्थः। ननु निश्शेषकर्माशयनिवृत्तिरनुपपन्नाऽनादिभवपरंपरासञ्चितस्यानियतविपाककालस्य

### *न्यायनिर्णयः*

किं त्वेकल एवाद्वितीयो मध्ये स्वात्मनि स्थाता स्यादित्यर्थः। तत्रोदाहरणान्तरमाह— **यथा चेति**। तत्रापि मानमाह— **तस्येति**। दृष्टान्तयोरर्थं दार्ष्टान्तिके योजयति— **एवमिति**। ब्रह्मविदोऽपि देहान्तरप्राप्तिः प्रारब्धकर्मातिरिक्तकर्मकृता देहान्तरप्राप्तित्वाद-विद्वद्देहान्तरप्राप्तिवदित्याह— **सकृदिति**। देहान्तरं कर्मान्तरायत्तमिति न व्याप्तिरेकस्मादपि ब्रह्मवधादेः श्वसूकराद्यनेकदेहस्मरणादित्यर्थः। किं तर्हि तेषामस्मदादिभ्यो वैषम्यम्, तत्राह— **स्वातन्त्र्येणेति**। स्वतन्त्राश्चेत् किमिति देहान्तरं गृह्णन्तीत्याशङ्क्यारब्धाधिकार-फलकर्मक्षयायेत्याह— **स्वाधिकारेति**। देहान्तरग्रहे स्मृतिभ्रंशः स्यादित्याशङ्क्याह— **अपरिमुषितेति**। तथापि देहादिपारतन्त्र्यमाशङ्क्याह— **देहेति**। तथापि कथमनेकेषु देहेष्वधिष्ठातृत्वं, तत्राह— **निर्मायेति**। उत्पद्यमानानामपरिमुषितस्मृतित्वेऽपि जातिस्मरत्वमेव न वसिष्ठादिनामत्वमित्याशङ्क्याह— **न चेति**। ब्रह्मविदां स्वातन्त्र्येण देहान्तरसंचारे दृष्टान्तमाह— **यथेति**। **व्युद्य** विवादं कृत्वा। कथमेतावता ज्ञानस्य नियतफलत्वमित्याशङ्क्य व्यतिरेकेणैतदुपपादयति— **यदीति**। **कर्मान्तरम**ारब्धकर्मातिरिक्तं कर्मेति यावत्। **देहान्तरं** वर्तमानदेहातिरिक्तो भाविदेहः। ज्ञानस्यैकान्तिकफलत्वं व्यतिरेकतः श्रुतिस्मृतिभ्यामुक्त्वा क्रमेण श्रुतिस्मृती दर्शयति—

---

१. द्र. महाभा. शान्ति. ३२० अ.।

**तथाहि श्रुतिः– 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु.उ. २।२।८) इति, 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (छा.उ. ७।२६।२) इति चैवमाद्या। स्मृतिरपि– 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' (भ. गी. ४।३७) 'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः। ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः' इति चैवमाद्या। न चाविद्यादिक्लेशदाहे सति क्लेशबीजस्य कर्माशयस्यैकदेशदाह एकदेशप्ररोहश्चेत्युपपद्यते। न ह्यग्निदग्धस्य शालिबीजस्यैकदेशप्ररोहो दृश्यते। प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयान्निवृत्तिः। 'तस्य तावदेव चिरम्' (छा.उ. ६।१४।२) इति शरीरपातावधि क्षेपकरणात्। तस्मादुपपन्ना यावदधिकारमाधिकारिकाणामवस्थितिः। न च ज्ञानफलस्यानैकान्तिकता। तथा च श्रुतिरविशेषेणैव सर्वेषां ज्ञानान्मोक्षं दर्शयति– 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां तथा मनुष्याणाम्' (बृ. उ.१।४।१०) इति। ज्ञानान्तरेषु चैश्वर्यादिफलेष्वासक्ताः स्युर्महर्षयः। ते पश्चादैश्वर्यक्षयदर्शनेन निर्विण्णाः**

### *प्रकटार्थविवरणम्*

श्रुतिस्मृतिसिद्ध एव कर्मदाहः, किं तु युक्तिसिद्धोऽपीत्याह— **न चाविद्यादिक्लेशदाहे सतीति**। ननु क्लेशदाहे सति तत्कार्यस्य कर्मणोऽवशेषो नोपपद्यते चेत्, तर्हि प्रारब्धफलस्य वा कथमवशिष्टतेत्याशङ्क्याह— **प्रवृत्तफलस्य त्विति**। यथा मुक्तेषोर्बलवत्प्रतिबन्धमन्तरेण मध्ये क्षयो न घटते, तथा प्रवृत्तफलस्यापि कर्मणो मध्ये नास्ति क्षयः, समुत्पन्नेऽपि ज्ञाने शरीरपातावधिकरणान्मोक्षस्य; प्रवृत्तफलकर्मोपादानाज्ञाननिवर्तने न समर्थं ज्ञानमित्यर्थः। उपसंहृतेऽर्थे प्रमाणमाह— **तथा च श्रुतिरिति**। नन्वपान्तरतमःप्रभृतीनां निर्गुणब्रह्मविदाम् ईश्वरनियोगो वा कथं घटत इत्याशङ्क्य उपासकावस्थायां तेषां नियोगो बभूवेत्यभिप्रेत्याह— **ज्ञानान्तरेषु चेति**। प्रतिसञ्चरे महाप्रलये; परस्य हिरण्यगर्भस्य; अन्ते अधिकारावसाने; कृतात्मानः साक्षात्कृतब्रह्माण इत्यर्थः। इतश्च न ब्रह्मविद्याया

### *भाष्यभावप्रकाशिका*

कर्मणोऽसंख्येयत्वादिति, तत्राह— **न चाविद्यादीति**। विनाशपुष्कलकारणसद्भावादित्यर्थः। तर्हि प्रवृत्तफलमपि कर्म नश्येदिति वसिष्ठादेर्देहधारणं न स्यादित्यत आह— **प्रवृत्तफलस्य त्विति**। श्रुतिप्रमाणादप्रवृत्तफलमेव नश्यति, न तु प्रवृत्तफलमित्यवगम्यत इत्यर्थः। एवं सति शरीरान्तरोत्पत्तिः ज्ञानस्यैकान्तिकफलत्वं च न विरुद्धमित्युक्तमुपसंहरति— **तस्मादिति**। ननु मनुष्याणामेव मोक्षस्तेषामेव कर्मज्ञानयोरधिकारित्वादिति, तत्राह— **तथा च श्रुतिरिति**। न च सर्वेषामधिकारवतामात्म(ज्ञात्म)ज्ञानमस्ति येनाविशेषेण ज्ञानस्यानैकान्तिकफलत्वमाशङ्क्येतेत्याह— **ज्ञानान्तरेषु चेति**। कथं तर्हि तेषां मोक्ष इति, तत्राह— **ते पश्चादिति**। **निर्विण्णा**

### *न्यायनिर्णयः*

**तथा हीत्यादिना**। अनादिभवपरंपरासंचितस्यानियतकालविपाकस्य कर्मणोऽसंख्यत्वात् कुतो निःशेषकर्मक्षयः, तत्राह— **न चेति**। नाशपुष्कलहेतुयोगे नाश्यैकदेशस्यार्थक्रियाऽभावे दृष्टान्तमाह— **न हीति**। तर्हि प्रारब्धमपि कर्म नाशहेतुसांनिध्यान्नश्येदिति कुतो वसिष्ठादेर्देहधारणेत्याशङ्क्याह— **प्रवृत्तेति**। यथा मुक्तस्येषोर्बलवत्प्रतिबन्धकाभावे मध्ये न क्षयस्तथा प्रवृत्तफलस्यापि कर्मणो मध्ये नास्ति क्षयः। जातेऽपि ज्ञाने मोक्षस्य देहपातावधिकरणादारब्धककर्मोपादानाज्ञाननिवर्तने तस्यासामर्थ्यात्। अतः श्रुतिस्मृतिप्रामाण्यादनारब्धमेव कर्म नश्यति, न त्वारब्धमित्यर्थः। अप्रवृत्तफलकर्मनिवृत्तावपि प्रवृत्तफलस्य कर्मणो न भोगादृते निवृत्तिरिति स्थिते ज्ञानिनोऽपि देहान्तरं ज्ञानस्यैकान्तिकफलत्वं चाविरुद्धमित्युक्तमुपसंहरति— **तस्मादिति**। कर्मज्ञानाधिकृतानां मनुष्याणामेव तर्हि मोक्षो, नान्येषां तदभावादित्याशङ्क्याह— **तथा चेति**। किंचाधिकारिकेषु केषुचिदमुक्त्या ज्ञानस्यानैकान्तिकफलत्वं किंवा सर्वेषु तेष्विति विकल्प्याद्ये पूर्वोक्तसमाधिं सिद्धवत्कृत्य द्वितीयं प्रत्याह— **ज्ञानान्तरेष्विति**। तेषां ज्ञानाभावादेवामुक्तिरित्यर्थः। ऐश्वर्यभेदस्त्वादिशब्दार्थः। तर्हि

**परमात्मज्ञाने परिनिष्ठाय कैवल्यं प्रापुरित्युपपद्यते। 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति स्मरणात्। प्रत्यक्षफलत्वाच्च ज्ञानस्य फलविरहाशङ्कानुपपत्तिः। कर्मफले हि स्वर्गादावनुभवानारूढे स्यादपि कदाचिदाशङ्का- भवेद्वा न वेति। अनुभवारूढं तु ज्ञानफलम्- 'यत्साक्षादपरोक्षाद् ब्रह्म' (बृ.उ. ३।४।१) इति श्रुतेः, 'तत्त्वमसि' (छा.उ. ६।८।७) इति च सिद्धवदुपदेशात्। न हि 'तत्त्वमसि' इत्यस्य वाक्यस्यार्थस्तत्त्वं मृतो भविष्यसीत्येवं परिणेतुं शक्यः। 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' (बृ.उ. १।४।१०) इति च सम्यग्दर्शनकालमेव तत्फलं सर्वात्मत्वं दर्शयति। तस्मादैकान्तिकी विदुषः कैवल्यसिद्धिः।।३२।।**

।। इत्येकोनविंशं यावदधिकाराधिकरणम् ।।

### *शारीरकन्यायसंग्रहः*

२०।। अक्षरध्यधिकरणम् ।।

**अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्।।३३।।** यद्यपि प्रपञ्चनिषेधमुखेन ब्रह्मणि प्रतिपाद्ये तत्र तत्र श्रुतानामेव निषेधशब्दानां स्थालीपुलाकन्यायेन सर्वप्रपञ्चनिषेधेन ब्रह्मावगमयितुं सामर्थ्यमस्ति, तथाप्यश्रुतप्रपञ्चनिषेधाय शब्दस्य लक्षणापरिग्रहः, प्रपञ्चैकदेशपरिशेषो वा स्यात्। ततः परब्रह्मणि प्रपञ्चनिषेधकतया क्लृप्तसर्वशब्दोपसंहारेण एकवाक्योपपादनम्। निषेधशब्दाश्च न स्थूलादिभ्योऽन्यविषयाः, किं तु मुख्यत्वा[स्थूलत्वाद्य]भावविषया इत्युक्तम्। आनन्दादय इत्यत्र पञ्चपदार्थाभावे ब्रह्मस्वरूपमेव न सिध्यतीत्युक्तम्। इह तु सिद्धे ब्रह्मणि प्रपञ्चनिषेधाय शब्दोपसंहारो दर्शितः।

### *प्रकटार्थविवरणम्*

मोक्षे हेतुत्वानुपपत्तिरित्याह— **प्रत्यक्षेति**। इत्येकोनविंशं यादवधिकाराधिकरणम्।।

### *भाष्यभावप्रकाशिका*

विरक्ताः। **प्रतिसंचरः** प्रलयः। **प्रत्यक्षफलत्वाच्चेति**। ज्ञानस्यान्वयव्यतिरेकसिद्धफलत्वाद् भुजिक्रियाया इव तत्फलशङ्का नोपपद्यत इत्यर्थः। प्रत्यक्षफलत्वमपि कथमित्याकाङ्क्षायां प्रत्यक्षवस्तुविषयत्वात् परिनिष्पन्नवस्तुविषयत्वाच्चेत्याह— **यत्साक्षादित्यादिना**। ननु परिनिष्पन्नवस्तुविषयत्वमसिद्धमुपासनासाध्यत्वाद् ब्रह्मभावस्येति, तत्राह— **न हि तत्त्वमसीति**। वर्तमानापदेशस्य भविष्यदर्थता मृतशब्दाध्याहारश्च न युक्त इत्यर्थः। **तद्धैतदिति**। क्रियाया अव्यवधाने हेतौ शतुर्विधानात् सम्यग्दर्शनस्य सर्वात्मभावं प्रति पुष्कलकारणत्वमवगम्यत इत्यर्थः। इत्येकोनविंशं यावदधिकाराधिकरणम्।

### *न्यायनिर्णयः*

तेषामैश्वर्यासक्तानां न कदाचिन्मुक्तिः, तत्राह— **ते पश्चादिति**। निर्विण्णा विरक्ताः। तेषां क्रममुक्तौ मानमाह— **ब्रह्मणेति**। प्रतिसंचरो महाप्रलयः। कृतात्मानः संस्कृतान्तःकरणा ज्ञानिनः। ज्ञानस्य नियतफलत्वे हेत्वन्तरमाह— **प्रत्यक्षेति**। भुजिवद् धियोऽन्वयव्यतिरेकसिद्धफलत्वान्न फलाभावशङ्केत्यर्थः। उक्तमर्थं व्यतिरेकद्वारा स्फोरयति— **कर्मेति**। ज्ञानफले तुल्यमनुभवानारूढत्वमित्याशङ्क्याह— **अनुभवेति**। तत्कथमित्यपेक्षायां प्रत्यक्षवस्तुविषयत्वादित्याह— **यदिति**। परिनिष्पन्नवस्तुविषयत्वाच्च ज्ञानस्य प्रत्यक्षफलतेत्याह— **तत्त्वमिति**। उपास्तिसाध्यत्वाद् ब्रह्मभावस्यासिद्धं ज्ञानस्य परिनिष्पन्नविषयत्वमित्याशङ्क्याह— **न हीति**। वर्तमानापदेशस्य भविष्यदर्थता मृतशब्दाध्याहारश्चायुक्त इत्यर्थः। इतश्च ज्ञानस्यैकान्तिकफलतेत्याह— **तद्धेति**। अव्यवहिते क्रियाहेतौ शतुर्विधानात् पुष्कलहेतुत्वं सर्वात्मत्वं प्रति सम्यग्धियः सिद्धमित्यर्थः। श्रुतिस्मृतिन्यायसिद्धमर्थमुपसंहरति— **तस्मादिति**।।३२।। इत्येकोनविंशं यावदधिकाराधिकरणम्।।

२०।।अक्षरध्यधिकरणम्।।सू.३३।।

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम्।।३३।।

**वाजसनेयके श्रूयते- 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहम्' (बृ.उ. ३।८।८) इत्यादि। तथाऽऽथर्वणे श्रूयते- 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यम-ग्राह्यमगोत्रमवर्णम्' (मु.उ. १।१।५) इत्यादि। तथैवान्यत्रापि विशेषनिराकरणद्वारेणाक्षरं परं ब्रह्म श्राव्यते। तत्र च क्वचित् केचिदतिरिक्ता विशेषाः प्रतिषिध्यन्ते। तासां विशेषप्रतिषेधबुद्धीनां किं सर्वासां सर्वत्र प्राप्तिरुत व्यवस्थेति संशये श्रुतिविभागाद् व्यवस्थाप्राप्तावुच्यते-**

**अक्षरविषयास्तु विशेषप्रतिषेधबुद्धयः सर्वाः सर्वत्रावरोद्धव्याः, सामान्यतद्भावाभ्याम्। समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकारः। तदेव च सर्वत्र प्रतिपाद्यं ब्रह्माभिन्नं प्रत्यभिज्ञायते। तत्र**

### *प्रकटार्थविवरणम्*

**अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम्।** विषयं दर्शयितुं वाक्यानि पठति— **वाजसनेयक इत्यादिना।** निषेधमुखेन ब्रह्मप्रतिपादकाः शब्दाः विषयाः। ते किं सर्वत्रोपसंहर्तव्या न वेति न्यायसंभवोवि[भवोप]कारासंभवाभ्यां संशय इत्यर्थः। पूर्वत्र विद्यैकत्वेऽपि शरीरस्यानुपसंहार उक्तः। तथेह विद्यैकत्वेऽप्यनुपसंहारः। [1]तत्र श्रुतानां निषेधशब्दानां स्थालीपुलाकन्यायेन सर्वप्रपञ्चनिषेधेन ब्रह्मावगमसमर्थत्वादित्यभिप्रेत्याह— **श्रुतिविभागादिति।** अश्रुतप्रपञ्चनिषेधाय शब्दस्य लक्षणापरिग्रहः, प्रपञ्चैकदेशपरिशेषो वा स्यात्। ततो वरं ब्रह्मणि प्रपञ्चस्य निषेधकतया क्लृप्तसर्वशब्दोपसंहारेणैकवाक्यतोपादानमिति सिद्धान्ताशयः।

### *भाष्यभावप्रकाशिका*

**अक्षरधियां त्विति। तथाऽन्यत्रापीति।** तैत्तिरीयकादावदृश्येऽनात्म्य इत्यादिविशेषप्रतिषेधः श्रूयत इत्यर्थः। **श्रुतिविभागादिति।** तत्र तत्र श्रुतानामेव निषेधशब्दानां स्थालीपुलाकन्यायेन कृत्स्नप्रपञ्चनिषेधेन निर्विशेषब्रह्मप्रतिपादने समर्थत्वादित्यर्थः। **समानो हीति।** प्रतिपाद्यप्रतिषेधस्य सामान्यात् अक्षरस्य च तद्भावेन प्रत्यभिज्ञानात् तत्संबन्धानामुपसंहार इत्यर्थः। ननु स्थालीपुलाकन्यायो दर्शित इति, तत्राह— **तत्र किमितीति।** अनुपसंहारे अतः [अ?]श्रुतप्रपञ्चनिषेधाय तत्र तत्र कतिपयनिषेधशब्दानां लक्षणापरिग्रहः, प्रपञ्चैकदेशपरिशेषो वा स्यात्, ततो वरं प्रपञ्चनिषेधककृत्स्नशब्दोपसंहारेणैकवाक्यतोपपादनमित्यर्थः। ननु पूर्वमेवैतद्गतमित्याशङ्क्याह—

### *न्यायनिर्णयः*

आधिकारिकाणामारब्धकर्मवशाद्देहान्तरारम्भसिद्धेर्न कर्मान्तरनिमित्ततेत्युक्तम्। तथेहापि तत्तत्प्रकरणाधीतनिषेधैरेवोपलक्षणतया सर्वद्वैतनिषेधसिद्धेर्न शाखान्तरीयनिषेधानां तत्र ब्रह्मप्रमितिहेतुतेत्याशङ्क्याह— **अक्षरेति।** विषयं वक्तुं वाक्यमुदाहरति— **वाजसनेयक इति। अन्यत्रापीति।** 'अदृश्येऽनात्म्य'इत्यादाविति यावत्। निषेधमुखेन ब्रह्मवादितत्तद्वाक्यस्थापुनरुक्तशब्दान् विषयत्वेन परिशिनष्टि— **तत्रेति।** तानधिकृत्य न्यायसंभवोपकारासंभवाभ्यां संशयमाह— **तासामिति।** बुद्धिग्रहणं तत्पूर्वकशब्दोपलक्षणार्थम्। विद्यैक्येऽपि शरीरानुपसंहारवदनुपसंहारो निषेधशब्दानामिति पूर्वपक्षयति— **श्रुतीति।** तत्र श्रुतानामेव निषेधशब्दानामुपलक्षणत्वेनाशेषद्वैतनिषेधद्वारा निर्विशेषब्रह्मोक्तिसामर्थ्यादित्यर्थः। अपुनरुक्तनिषेधशब्दोपसंहारोक्तिद्वारा वाक्यार्थधीहेतुवादात् पादादिसंगतिः। पूर्वपक्षे श्रुतैरेव निषेधैरुप-लक्षणतया सर्वनिषेधे निर्विशेषब्रह्मप्रमित्या लाघवम्। सिद्धान्ते लक्षणैकदेशपरिशेषौ परिहृत्य निर्विशेषब्रह्मप्रमितिनैराकाङ्क्ष्यमिति मत्वा सिद्धान्तयति— **उच्यत इति।** अक्षरे धर्मिणि द्वैतनिषेधधियोऽक्षरधिय इत्यर्थे सूत्रपदं व्याचष्टे— **अक्षरेति।** तत्र हेतुमवतार्य विभजते— **सामान्येति।** आरोपितविशेषनिरासेन ब्रह्मोक्तेस्तत्र तत्र तुल्यत्वाद्, ब्रह्मणश्च प्रतिपाद्यस्य सर्वत्रैक्येन प्रत्यभिज्ञानात् तद्योगिनां शब्दप्रत्ययानामुपसंहार इत्यर्थः। श्रुतकतिपयनिषेधैरेव सर्वनिषेधोपलक्षणात् किमुपसंहारेणेत्याशङ्क्याह— **तत्रेति।** अन्यत्रेति

१. 'तत्र तत्र' इति पा.।

**किमित्यन्यत्र कृता बुद्धयोऽन्यत्र न स्युः। तथा च 'आनन्दादयः प्रधानस्य' (ब्र.सू. ३।३।११) इत्यत्र व्याख्यातम्। तत्र विधिरूपाणि विशेषणानि चिन्तितानि, इह प्रतिषेधरूपाणीति विशेषः। प्रपञ्चार्थश्चायं चिन्ताभेदः। औपसदवदिति निदर्शनम्। यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु पुरोडाशप्रदानमन्त्राणाम् 'अग्ने वेर्होत्रं वेरध्वरम्' (तां.ब्रा. २१।१०।११) इत्येवमादीनामुद्गातृवेदोत्पन्नानामप्यध्वर्युभिरभिसंबन्धो भवति, अध्वर्युकर्तृकत्वात्पुरोडाशप्रदानस्य, प्रधानतन्त्रत्वाच्चाङ्गानाम्। एवमिहाप्यक्षरतन्त्रत्वात् तद्विशेषणानां यत्र क्वचिदप्युत्पन्नानामक्षरेण सर्वत्राभिसंबन्ध इत्यर्थः। तदुक्तं प्रथमे काण्डे– 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः (जै.सू. ३।३।८) इत्यत्र।।३३।।**

।। इति विंशमक्षरध्यधिकरणम् ।।

### *प्रकटार्थविवरणम्*

उक्तमनुस्मार्यावान्तरविशेषं कथयति— **तथा चेति**। शाखान्तरोक्तानामपि प्रधानसंबद्धानामुपसंहार इत्यत्रोदाहरणं व्याचष्टे— **यथेति**। जामदग्न्योऽहीनो नाम कर्मविशेषः। तत्र पुरोडाशसाध्या उपसच्छब्दवाच्या इष्टयः। आज्याहुतयः अन्यत्र। तासु पुरोडाशप्रदानमन्त्राणां सामवेदोत्पन्नानामप्यध्वर्युभिः अभिसंबन्ध इत्यर्थः। वाति गच्छति सर्वत्रेति विः सुरगणः, तस्य वेर्देवगणस्य भो अग्ने त्वं होत्रं होताऽसि। ततो वेर्देवगणस्याध्वरं त्वमेव। आद्यपुरोडाशस्याग्नेयत्वादग्नेरामन्त्रणमित्यर्थः। प्रधानसंबन्धे पूर्वतन्त्रसंमतिमाह— **तदुक्तमिति**। अस्ति तावदग्न्याधानम् 'य एवं विद्वानग्निमाधत्ते' इति, तद् याजुर्वैदिकम्; तत्र सामगानमामनन्ति 'य एवं विद्वान् वारवन्तीयं गायते, य एवं विद्वान् यज्ञायज्ञियं गायते, य एवं विद्वान् वामदेव्यं गायते' इति। किं तदुच्चैः कार्यं किं वोपांशु इति सन्देहे निर्णयमाह— **गुणमुख्यव्यतिक्रम इति**। गुणभूतं सामगानम्, तस्योच्चैःस्वर[;]प्रधानमाधानम्,

### *भाष्यभावप्रकाशिका*

**तथा चेति**। भावाभावरूपधर्मविषयतया न पौनरुक्त्यमित्यर्थः। तथापि न्यायस्य तुल्यत्वात् पौनरुक्त्यमित्यत आह— **प्रपञ्चार्थश्चेति**। तत्र प्रपञ्चपदार्थाभावे ब्रह्मस्वरूपमेव न सिध्यतीत्युक्तम्। इह तु शुद्धे ब्रह्मणि प्रपञ्चनिषेधाय शब्दोपसंहारः प्रदर्श्यत इति भावः। निदर्शनं विवृणोति— **यथेति**। तैत्तिरीयके 'पुरोडाशिन्य उपसदो भवन्ती'त्यत्र चोदितासूपसत्सूद्गातृवेदोत्पन्नानां मन्त्राणामुद्गात्रा प्रयोगे प्राप्ते अध्वर्युप्रदानके पुरोडाशे विनियुक्तत्वाद् विनियोगस्य चोत्पत्त्यपेक्षया प्रधानत्वात् प्रधानानुरोधेनाध्वर्युणैव तेषां प्रयोगो, नोद्गात्रेति दर्शितमित्यर्थः। दार्ष्टान्तिके योजयति— **एवमिहेति**। अत्र जैमिनीयं सूत्रमुदाहरति— **तदुक्तमिति**।

### *न्यायनिर्णयः*

शाखाभेदोक्तिः। अनुपसंहारश्चेदश्रुतद्वैतनिषेधाय तत्र तत्र कतिपयनिषेधशब्दानां लक्षणा, द्वैतैकदेशशेषो वा स्यात्; ततो वरं द्वैतनिषेधात् कृत्स्नशब्दोपसंहारेणैकवाक्यत्वमित्यर्थः। तत्रानुग्राहकन्यायं दर्शयति— **तथा चेति**। तर्हि पुनरुक्तिरित्याशङ्क्य भावाभावधर्मविषयतया परिहरति— **तत्रेति**। तथापि न्यायसाम्यात् तदवस्थं पौनरुक्त्यम्, तत्राह— **प्रपञ्चेति**। ब्रह्मस्वरूपत्वादानन्दाद्युपसंहारेऽपि निषेधानामनात्मत्वान्निषेध्यानन्त्येनानन्त्याच्चैकत्रोपसंहारायोगात् किंचिन्निषेधेनान्यलक्षणायां च श्रुतेनैव सिद्धेरुपसंहारानर्थक्यात्र निषेधोपसंहारसिद्धिरित्याशङ्क्य निषेधानामनात्मत्वेऽप्यात्मलक्षणतया तत्प्रमित्यर्थं सार्वत्रिकत्वान्निषेध्यद्वैतस्य भूतभौतिकत्वादिरूपस्य मितत्वेन तत्रापि मितिसिद्धेरुपसंहारः स्यादित्यभिप्रेत्योक्तम्— **प्रपञ्चार्थश्चेति**। शाखान्तरोक्तानामपि प्रधानयोगिनामुपसंहार इत्यत्र दृष्टान्तमाह— **औपसदवदिति**। निदर्शनं विवृणोति— **यथेति**। 'जमदग्निः पुष्टिकामश्चतूरात्रेणायजते'त्युत्पन्ने जामदग्न्येऽहीने 'पुरोडाशिन्य उपसदो भवन्ती'ति तैत्तिरीये पुरोडाशयुक्तासूपसत्स्विष्टिषूपदिष्टासु पुरोडाशप्रदानमन्त्राणामुद्गातृवेदोत्पन्नानामुद्गात्रा प्रयोगे प्राप्तेऽध्वर्युप्रदानके पुरोडाशे विनियोगात् तस्य चोत्पत्त्यपेक्षया प्राधान्यात्तदनुरोधेनाध्वर्युणैव तेषां प्रयोगो नोद्गात्रेत्यर्थः। उक्तमर्थं दार्ष्टान्तिके योजयति— **एवमिति**। अत्रैवोदाहरणान्तरविवक्षया तार्तीयं सूत्रमुदाहरति— **तदुक्तमिति**। याजुर्वैदिकेऽग्न्याधाने 'य

२१।।इयदधिकरणम्।।सू. ३४।।

## इयदामननात्।।३४।।

### *शारीरकन्यायसंग्रहः*

**इयदामननात्।।३४।।** 'द्वा सुपर्णा' 'ऋतं पिबन्तौ' इति यद्यपि वाक्यच्छायायां प्रतिपादनप्रकारभेदात् रूपभेदेनातुल्यार्थत्वं प्राप्तम्, तथापि वाक्यार्थनिरूपणायां संसारिणो जीवादन्यः अशनायाद्यतीतः, निष्प्रपञ्चः, परमात्मैव प्रतिपाद्यत इति प्रतिपाद्यरूपैक्यस्य प्रतिपादनप्रकारभेदादन्तरङ्गत्वात् प्रतिपाद्यरूपैक्यात् तुल्यार्थत्वं मन्त्रयोरित्युक्तम्।

### *प्रकटार्थविवरणम्*

तस्योपांशुस्वर इत्येवं गुणमुख्ययोः व्यतिक्रमे वैपरीत्ये सति मुख्याधानानुसारेण वेदसंयोगः सामगानस्य याजुर्वैदिकोपांशुस्वरसंबन्धः कृतः, तदर्थत्वात् प्रधानसिद्ध्यर्थत्वात्, गुणानुष्ठानस्येत्यर्थः। इति विंशमक्षरध्यधिकरणम्।।

### *भाष्यभावप्रकाशिका*

एवं विद्वानग्निमाधत्त इति यजुर्वेदे अग्न्याधानं श्रूयते। तदङ्गत्वेन च सामगानं यजुर्वेद एवामनन्ति— 'य एवं विद्वान् वारवन्तीयं गायति' 'य एवं विद्वान् यज्ञायज्ञीयं गायते' 'एवं विद्वान् वामदेव्यं गायत' इति। तत्र सन्देहः— किमेतानि यत्र सामवेद उत्पन्नानि तत्रोत्पन्नोच्चैस्त्वेन स्वरेणाधाने प्रयोक्तव्यानि, किंवा यत्र विनियुज्यन्ते तत्रोत्पन्ननोपांशुत्वेन स्वरेण? तथाहि श्रुतिः 'उच्चैःसाम्नोपांशु यजुषे'ति स्वरविभागं दर्शयति। किं तावत्प्राप्तम्? उत्पत्तिविधिनैवापेक्षितोपायतात्मना विहितत्वादङ्गानाम्, तस्यैव प्राथम्यात् तन्निबन्धन एवोच्चैस्स्वरे प्राप्तेऽभिधीयते— 'गुणमुख्यव्यतिक्रमे तदर्थत्वात् मुख्येन वेदसंयोग' इति। तत्रोत्पत्तिविधिर्गुणः, विनियोगविधिश्च प्रमाणान्तरयो[प्रधानम्,तयो]र्व्यतिक्रमो विरोधः उत्पत्तिविध्यालोचनयोच्चैस्त्वं विनियोगविध्यालोचनायामुपांशुत्वमिति व्यतिक्रमे सति मुख्येन प्रधानेन विनियुज्यमानत्वेन रूपेण तस्य वारवन्तीयादेर्वेदसंयोगो ग्राह्यो नोत्पद्यमानत्वगुणेन। तत्र हेतुमाह— **तदर्थत्वादिति**। उत्पद्यमानस्य विनियुज्यमानार्थत्वात्। अतो यद्यपि सामवेदे सामानि विहितानि तथापि तद्वाक्यानां तदुत्पत्तिमात्रपरता अर्थविनियोगस्य यजुर्वेदवाक्यैरेव प्राप्तत्वात् तत एव समीहितार्थान्येवोत्पत्तिवाक्यानि विनियुज्यन्ते; तस्यैव स्वरस्यार्थसाधनत्वसंस्पर्शिनो ग्रहणमिति तृतीये चिन्तितमित्यर्थः[1]। भाष्यकारैस्तु तुल्यन्यायतयोदाहरणान्तरं दर्शितम्। इति विंशमक्षरध्यधिकरणम्।

### *न्यायनिर्णयः*

एवं विद्वानग्निमाधत्त' इति श्रुतेस्त [श्रूयते।त] दङ्गत्वेन 'य एवं विद्वान् वारवन्तीयं गायति' 'य एवं विद्वान् यज्ञायज्ञीयं गायति' 'य एवं विद्वान् वामदेव्यं गायती'ति तत्रैव सामगानं श्रुतम्। तत्र किमेतानि वारवन्तीयादीनि सामवेदोत्पन्नत्वात् तत्रोत्पन्नोच्चैस्त्वेन स्वरेणाधाने प्रयोक्तव्यानि किंवा यत्र विनियुज्यन्ते तत्रोत्पन्नोपांशुत्वेनेति संदेहे सत्युत्पत्तिविधिनैवापेक्षितोपायत्वात्मना विहितत्वादङ्गानां तस्यैव प्राथम्यात् तन्निमित्तोच्चैःस्वरे प्राप्ते प्रत्याह— **गुणेति**। उत्पत्तिविधिर्गुणो, विनियोगविधिर्मुख्यः, तयोर्व्यतिक्रमो विरोध उत्पत्तिविध्यालोचनयोच्चैस्त्वं विनियोगविध्यालोचनयोपांशुत्वमिति, तस्मिन् व्यतिक्रमे सति मुख्येन प्रधानेन विनियुज्यमानेन रूपेण वारवन्तीयादेर्वेदस्य संयोगो ग्राह्यो नोत्पद्यमानत्वेन गुणेनेति प्रतिज्ञायां हेतुमाह— **तदर्थत्वादिति**। उत्पद्यमानस्य विनियुज्यमानार्थत्वात्। यद्यपि सामवेदे सामानि विहितानि तथापि तद्वाक्यानां तदुत्पत्तिमात्रपरत्वं विनियोगस्य याजुर्वैदिकवाक्यैरेव प्राप्तेस्तत एव समीहितार्थप्रतिलम्भात् तदर्थान्येवोत्पत्तिवाक्यानीति तस्यैव स्वरस्यार्थसंस्पर्शिनो ग्रहणमित्यर्थः। उदाहरणान्तरं तु समानन्यायतया दर्शितमिति न शाबरविरोधः।।३३।। इति विंशमक्षरध्यधिकरणम्।।

प्रतिपाद्यब्रह्मप्रत्यभिज्ञानाज्ज्ञानैक्येऽक्षरधियामुपसंहारवत् प्रतिपाद्यभेदाद्विद्याभेदः स्यादित्याशङ्क्याह— **इयदिति**। 'गुहां प्रविष्टा'वित्यत्र

---

१. द्र.पू.मी. ३-३-२।

**'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मु.उ. ३।१।१ ,श्वे.उ.४।६) इत्यध्यात्माधिकारे मन्त्रमाथर्वणिकाः श्वेताश्वतराश्च पठन्ति। तथा कठाः– 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः' (क.उ. ३।१) इति। किमत्र विद्यैकत्वमुत विद्यानानात्वमिति संशयः। किं तावत् प्राप्तम्? विद्यानानात्वमिति। कुतः? विशेषदर्शनात्। द्वा सुपर्णेत्यत्र ह्येकस्य भोक्तृत्वं दृश्यते, एकस्य चाभोक्तृत्वं दृश्यते। ऋतं पिबन्तावित्यत्रोभयोरपि भोक्तृत्वमेव दृश्यते। तद्वेद्यरूपं भिद्यमानं विद्यां भिन्द्यादिति।**

**एवं प्राप्ते ब्रवीति– विद्यैकत्वमिति। कुतः? यत उभयोरप्यनयोर्मन्त्रयोरियत्तापरिच्छिन्नं द्वित्वोपेतं वेद्यरूपमभिन्नमामनन्ति। ननु दर्शितो रूपभेदः। नेत्युच्यते। उभावप्येतौ मन्त्रौ जीवद्वितीयमीश्वरं प्रतिपादयतो नार्थान्तरम्। 'द्वा सुपर्णा' इत्यत्र तावत् 'अनश्नन्नन्यो अभिचाकशीति' इत्यशनायाद्यतीतः परमात्मा प्रतिपाद्यते।**

### *प्रकटार्थविवरणम्*

**इयदामननात्।** विषयवाक्यं निर्णीतार्थमपि उपसंहारप्रसङ्गेन पुनः पठति— **द्वा सुपर्णेति।** प्रतिपादनप्रकारभेदेन विद्याभेदप्रतिभानात् प्रतिपाद्यासंसार्यात्मप्रतिभानाच्च संशयमाह— **किमत्रेति।** पूर्वत्र प्रतिपादनप्रकारसामान्येन तद्रूपप्रत्यभिज्ञानेन च विद्यैक्यमुपादाय अपुनरुक्तपदोपसंहारः कृतः। इह तदभावाद् विद्याभेदोऽनयोर्मन्त्रयोरुप[योरनुप]संहारश्चेति पूर्वपक्षाशयः।

बहिरेव सिद्धान्तं प्रतिज्ञाय हेतुत्वेन सूत्रं योजयति— **विद्यैकत्वमित्यादिना।** वाक्यार्थनिरूपणाय जीवोद्देशेनासंसारी परमात्मैवोभयत्र प्रतिपाद्यत इति प्रतिपाद्यैकरूप्याद् विद्यैक्यं मन्त्रयोरिति भावः। इत्येकविंशमियदधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**इयदामननात्। विशेषदर्शनादिति।** रूपभेददर्शनादित्यर्थः। एतदेव दर्शयति— **द्वा सुपर्णेति। वेद्यरूपं भिद्यमानमिति।** एकत्र भोक्त्रभोक्त्रोर्वेद्यता, अन्यत्र तु भोक्त्रोरेवेति वेद्यभेदाद् विद्याभेदः। न च पिबन्ताविति छत्रिन्यायेन लक्षणा, मुख्यार्थे संभवति लक्षणाया अयुक्तत्वात्। न च वाक्यशेषानुरोधाल्लक्षणाश्रयणमुपक्रमस्य मुख्यलाक्षणिकग्रहणविषये तुल्यबलत्वाभावादेव संशयितत्वानुपपत्तेः। न च प्रकरणबलाल्लक्षणाश्रयणम्, ततो बलीयसा वाक्येन तस्य बाधनादिति भावः।

इयत्तापरिच्छिन्नमित्यस्य व्याख्यानं **द्वित्वोपेतमिति। नार्थान्तरमिति।** न जीवं प्रतिपादयत इत्यर्थः। मन्त्रयोरीश्वरप्रतिपादनमेव दर्शयति— **द्वा सुपर्णेति।**

### *न्यायनिर्णयः*

सिद्धार्थमपि वाक्यमुपसंहारानुपसंहारप्रसङ्गात्पुनरुदाहरति— **द्वा सुपर्णेति।** तथाविधमेव काठकवाक्यमपि पठति— **तथेति।** मन्त्रद्वयं विषयीकृत्य प्रतिपादनप्रकारभेदाद्विद्याभेदभानात् प्रतिपाद्यासंसार्यात्मदृष्टेस्तदैक्यदृष्टेश्च संशयमाह— **किमिति।** मन्त्रद्वयेऽपि विद्यैक्योक्त्या वाक्यार्थधीहेतोरेवोक्तत्वात्पादादिसंगतिः। पूर्वपक्षे गुणानुपसंहारः, सिद्धान्ते तदुपसंहार इत्यङ्गीकृत्य विमृश्य पूर्वपक्षमाह— **किं तावदिति।** अर्थैक्यदृष्टेर्न विद्यानानात्वमिति शङ्कते— **कुत इति।** रूपभेददृष्टेरर्थैक्यधीरसिद्धेत्याह— **विशेषेति।** तदेव विवृणोति— **द्वा सुपर्णेति।** भोक्त्रभोक्त्रोर्द्वा सुपर्णेत्यत्र वेद्यता, भोक्त्रोरेवान्यत्रेति वेद्यभेदाद्विद्याभेदः। न च छत्रिन्यायेन पिबन्ताविति लक्षणा, मुख्यसंभवे तदयोगात्। न च वाक्यशेषाल्लक्षणोपक्रमस्य मुख्यलाक्षणिकग्रहणविषये तुल्यबलत्वाभावादेव संशयानुपपत्तेः। न च प्रकरणं लक्षणाबीजं वाक्येन बाधादिति मत्वोपसंहरति— **तदिति।**

मन्त्रयोर्विद्यानानात्वमनुपसंहारश्चेति पक्षमनूद्य बहिरेव सिद्धान्तमाह— **एवमिति।** तत्र प्रश्नपूर्वकं हेतुत्वेन सूत्रं योजयति— **कुत इति।** इयत्तापरिच्छिन्नमित्येतदेव व्याचष्टे— **द्वित्वेति।** रूपभेदाद् विद्याभेदं स्मारयति— **नन्विति।** रूपभेदासिद्ध्या प्रत्याह— **नेति।** अर्थान्तरशब्देन जीवो गृह्यते। जीवानुवादेन तद्याथार्थ्यं परमात्मतत्त्वं प्रतिपाद्यमित्येतदाथर्वणादिमन्त्रे साधयति— **द्वा**

**वाक्यशेषेऽपि च स एव प्रतिपाद्यमानो दृश्यते– 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्' (मु.उ.३।१।२,श्वे.उ. ४।७) इति। 'ऋतं पिबन्तौ' इत्यत्र तु जीवे पिबत्यशनायाद्यतीतः परमात्माऽपि साहचर्याच्छत्रिन्यायेन पिबतीत्युपचर्यते। परमात्मप्रकरणं ह्येतत् 'अन्यत्र धर्मादन्यत्राधर्मात्' (क.उ. २।१४) इत्युपक्रमात्। तद्विषय एव चात्रापि वाक्यशेषो भवति 'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्' (क.उ. ३।२) इति। 'गुहां प्रविष्टावात्मानौ हि' (ब्र.सू. १।२।११) इत्यत्र चैतत् प्रपञ्चितम्। तस्मान्नास्ति वेद्यभेदः, तस्माच्च विद्यैकत्वम्। अपि च त्रिष्वप्येतेषु वेदान्तेषु पौर्वापर्यालोचने परमात्मविद्यैवावगम्यते। तादात्म्यविवक्षयैव जीवोपादानं, नार्थान्तरविवक्षया। न च परमात्मविद्यायां भेदाभेदविचारावतारोऽस्तीत्युक्तम्। तस्मात् प्रपञ्चार्थ एवैष योगः। तस्माच्चाधिककधर्मोपसंहार इति।।३४।।**

।। इत्येकविंशमियदधिकरणम् ।।

***शारीरकन्यायसंग्रहः***

२२।। अन्तरत्वाधिकरणम् ।।

**अन्तरा भूतग्रामवत् स्वात्मनः।।३५।। अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्।।३६।।** 'यत्साक्षात्' 'यदेव साक्षात्' इत्येकस्यां शाखायामनेकगुणविशिष्टधर्मिणोऽभ्यासाद् वाक्यशेषवशाच्च जीवपरमात्मरूपेण वेद्यभेदादाम्नाययोः अतुल्यार्थत्वे प्राप्ते, अभ्यासस्य विशेषविधानार्थत्वोपपत्तौ सत्यां द्वयोः सर्वान्तरत्वानुपपत्त्यनुगृहीतया 'यदेव साक्षात्' इत्यवधारणश्रुत्या अनेकगुणविशिष्टधर्मिप्रत्यभिज्ञानेन च रूपैक्यावगतेः तुल्यार्थत्वमाम्नाययोरित्युक्तम्। सर्वत्र चाभ्यासस्य विशेषविधानार्थत्वाभावे कर्मभेदकत्वमिति द्रष्टव्यम्।

***भाष्यभावप्रकाशिका***

वाक्यशेषमेव दर्शयति— **जुष्टमिति**। नन्वन्यस्मिन् मन्त्रे भोक्त्रोरेव प्रतिपादनान्नेश्वरस्य प्रतिपादनमस्तीति, तत्राह— **ऋतं पिबन्ताविति**। उभयोरपि मन्त्रयोर्द्वित्वसंख्यायाः प्रतीतेरुभयोः समानस्वभावतामन्तरेण च द्वित्वसंख्याया अनिवेशाच्चेतनस्य जीवस्य चेतनः परमेश्वर एव समानस्वभाव इति लक्षणा पिबन्ताविति पदस्य बलादापततीत्यर्थः। अन्यप्रकरणत्वादविवक्षितः परमात्मेत्यपि नाशङ्कनीयमित्याह— **परमात्मप्रकरणमिति**। न केवल उपक्रम एव परमात्मविषयः, किन्तूपसंहारोऽपीत्याह— **तद्विषय एव चेति**। उपक्रमोपसंहारयोरैकरूप्यान्मध्यमपि तदनुसारेण नेतव्यमिति भावः। निर्णीतार्थत्वाच्चास्य परमेश्वरविषयत्वे न विवाद इत्याह— **गुहायामिति**। न केवलमिमावेव मन्त्रौ परमेश्वरविषयौ, अपि तु तत्सन्निधिपठिताः सर्वेऽपीत्याह— **तद्विषय एव चेति**। मुण्डकवाक्यस्यापि पठितत्वात् त्रिष्वपीत्युक्तम्। कथं तर्हि जीवोपादानमिति, तत्राह— **तादात्म्येति**। एकत्वं प्रतिपादयितुं जीवोऽनूद्यत इत्यर्थः। अतः परमात्मैकविषयत्वाद् रूपभेदाभावाद् विद्याभेदाशङ्काऽपि न करणीयेत्याह— **न चेति**। ननु तर्हि पूर्वमेव निर्णीतत्वाद् व्यर्थोऽधिकरणारम्भ इति, तत्र— **तस्मादिति**। इत्येकविंशमियदधिकरणम्।

***न्यायनिर्णयः***

**सुपर्णेति**। तत्र वाक्यशेषमनुकूलयति— **वाक्येति**। तमेव दर्शयति— **जुष्टमिति**। तथापि काठके भोक्त्रोरेवोक्तेर्नेश्वरार्थतेत्याशङ्क्याह— **ऋतमिति**। मन्त्रद्वयेऽपि द्वित्वसंख्यादृष्टेरुभयोस्तुल्यतां विना च द्वित्वसंख्याऽयोगाच्चेतनस्य जीवस्य परमात्मैव चेतनत्वात् तुल्य इति पिबन्तावित्यस्य लक्षणा बलादायातीत्यर्थः। किंच प्रकरणादपि परमात्मैवात्र भातीत्याह— **परमात्मेति**। उपक्रमवदुपसंहारोऽपि तद्विषय एवेत्याह— **तदिति**। अत्रापीत्यपिशब्दादाथर्वणिकादिवाक्यं दृष्टान्त्यते। उपक्रमोपसंहारैकरूप्यान्मध्यमपि तथा नेयमिति भावः। सिद्धार्थत्वाच्च मन्त्रद्वयस्य परविषयतेत्याह— **गुहामिति**। मन्त्रद्वयस्य परमात्मैकार्थत्वाद् रूपाभेदाद् विद्याभेदो नेति निगमयति— **तस्मादिति**। न केवलं मन्त्रद्वयमेव परविषयम्, किंतु तत्संनिध्याम्नातं सर्वमपि मन्त्रजातमित्याह— **अपि चेति**। आथर्वणिकश्वेताश्वतरकाठकविवक्षया **त्रिष्वित्युक्तम्**। किमिति तर्हि जीवोपादानं, तदाह— **तादात्म्येति**। ऐक्यं वक्तुं जीवोऽनूद्यत इत्यर्थः। तदनुवादेन परप्रतिपादनेऽपि कुतो विद्यैक्यं, तत्राह— **न चेति**। प्रागेव मन्त्रद्वयस्य सिद्धार्थत्वे किमनेनाधिकरणेनेत्याशङ्क्याह— **तस्मादिति**। गुणोपसंहारप्रस्तावे मन्त्रद्वयविवरणं कुत्रोपयुक्तम्, तत्राह— **तस्माच्चेति**।।३४।। इत्येकविंशमियदधिकरणम्।।

२२।।अन्तरत्वाधिकरणम्।।सू.३५-३६।।

## अन्तरा भूतग्रामवत् स्वात्मनः।।३५।।

**'यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः' (बृ.उ. ३।४।१-३।५।१) इत्येवं द्विरुषस्तकहोल-प्रश्नयोर्नैरन्तर्येण वाजसनेयिनः समामनन्ति। तत्र संशयः- विद्यैकत्वं वा स्याद् विद्यानानात्वं वेति। विद्यानानात्वमिति तावत् प्राप्तम्, अभ्याससामर्थ्यात्। अन्यथा ह्यन्यूनानतिरिक्तार्थे द्विराम्नानमनर्थकमेव स्यात्। तस्माद् यथाऽभ्यासात् कर्मभेद एवमभ्यासाद् विद्याभेद इत्येवं प्राप्ते प्रत्याह-**

**अन्तराऽऽम्नानाविशेषात् स्वात्मनो विद्यैकत्वमिति। सर्वान्तरो हि स्वात्मोभयत्राप्यविशिष्टः पृच्छ्यते च प्रत्युच्यते च। न हि द्वावात्मानावेकस्मिन् देहे सर्वान्तरौ संभवतः। तदा ह्येकस्याञ्जसं सर्वान्तरत्वमवकल्पेत। एकस्य तु भूतग्रामवन्नैव सर्वान्तरत्वं स्यात्। यथा पञ्चभूतसमूहे देहे पृथिव्या आपोऽन्तरा अद्भ्यस्तेजोऽन्तरमिति**

### *प्रकटार्थविवरणम्*

**अन्तरा भूतग्रामवत् स्वात्मनः**। यथा घटादेः स्वातिरेकसंविन्निबन्धनमापरोक्ष्यं न तथेति साक्षात् स्वत एव यदपरोक्षं ब्रह्म, य आत्मा सर्वान्तरः तं मे व्याचक्ष्वेति द्विराम्नानं विषयः; तत्र सर्वान्तरत्वश्रवणादभ्यासाच्च संशयमाह— **तत्रेति**। पूर्वत्र वेद्याभेदाद् विद्यैक्यमुक्तम्। इह त्वेकत्र जीवाभिधानमपरत्राशनायाद्यतीतपरमात्माभिधानमिति वेद्यभेदाद् भेद इत्याह— **विद्यानानात्वमिति**। किं च 'यत्साक्षाद्' 'यदेव साक्षादि'त्येकस्यां शाखायामभ्यासाद् यजत्यभ्यासवद् भेद इत्याह— **अभ्याससामर्थ्यादिति**।

द्वयोः सर्वान्तरत्वानुपपत्त्या रूपैक्यावगतेः विद्यैक्यमित्याह—. **अन्तराऽऽम्नानेत्यादिना**।

### *भाष्यभावप्रकाशिका*

**अन्तरा भूतग्रामवत् स्वात्मनः। अभ्याससामर्थ्यादिति**। 'एकस्यैवं पुनः श्रुतिविरोधादनर्थकं हि स्या'दिति न्यायेन यजत्याभ्यासे कर्मभेदवद् विद्याभेद इत्यर्थः। अनन्तराधिकरणे स्थितमामननादिति पदमिहानुषज्यत इत्यभिप्रेत्यान्त**राम्नानाविशेषा**दित्युक्तम्। स्वात्मनोऽन्तराम्नानादित्यन्वयः। भूतग्रामवदिति वैधर्म्यदृष्टान्तः, श्रुत्यन्तरनिदर्शनाय वा। ननु प्राणमयादिवत् संभवतीति, तत्राह— **तदा हीति**। तदेव प्रपञ्चयति— **यथा पञ्चभूतेति**।

### *न्यायनिर्णयः*

मन्त्रयोरर्थाभेदोक्तिप्रसङ्गेन ब्राह्मणयोरपि तुल्यार्थतामाह— **अन्तरेति**। बृहदारण्यके पाञ्चमिकं ब्राह्मणद्वयमुदाहरति— **यदिति**। घटादि संवित्कर्मत्वेनापरोक्षम्, ब्रह्म तु साक्षादपरोक्षम्, तदेव प्रत्यगात्मेत्याह— **य इति**। स च सर्वान्तरः। ब्रह्मणि सिद्धस्य सर्वान्तरत्वस्यात्मनि स्थितस्य चापरोक्षत्वस्य ब्रह्मणि संकीर्तनादुभयोरैक्यमित्यर्थः। तन्मे व्याचक्ष्वेति शेषः। ब्राह्मणद्वयं विषयीकृत्याभ्यासात् सर्वान्तरत्वप्रत्यभिज्ञानाच्च संशयमाह— **तत्रेति**। पिबन्तावित्यस्य लाक्षणिकत्वं गृहीत्वा मन्त्रयोर्भोक्त्र-भोक्तृपरत्वेनात्मैक्याद्विद्यैक्यमुक्तम्। इह त्वर्थैक्येऽपि न विद्यैक्यमभ्यासादिति पूर्वपक्षमाह— **विद्येति**। हेतुं व्यतिरेकतः स्फोरयति— **अन्यथेति**। 'एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्या'दिति न्यायाद् यजत्यभ्यासे कर्मभेदवद्विद्याभेद इत्युपसंहरति— **तस्मादिति**। ब्राह्मणयोरेकार्थत्वेन विद्यैक्योक्त्या वाक्यार्थधीहेतोरेवात्र चिन्तनात् पादादिसंगतिः।

पूर्वपक्षे विद्याभेदाद्गुणानुपसंहारः। सिद्धान्ते तदैक्यात् तदुपसंहारसिद्धिरिति सिद्धवत्कृत्य सिद्धान्तयति— **एवमिति**। पूर्वसूत्रस्थमामननादिति पदमिहानुषक्तमित्यङ्गीकृत्य स्वात्मनोऽन्तराम्नानाविशेषादित्युक्तम्, तदेव स्फुटयति— **सर्वेति**। तथापि कथं ब्राह्मणयोरैकार्थ्यम्, तत्राह— **न हीति**। द्वयोः सर्वान्तरत्वायुक्ते रूपैक्यसिद्धेर्विद्यैक्यमित्यर्थः। कथं पुनर्द्वयोः सर्वान्तर-त्वानुपपत्तिर्मनोमयत्वादिवदुपपत्तेः, तत्राह— **तदा हीति**। भूतग्रामदृष्टान्तं व्याचष्टे— **यथेति**। तमेवानूद्य विधान्तरेण व्याकरोति—

सत्यप्यापेक्षिकेऽन्तरत्वे नैव मुख्यं सर्वान्तरत्वं भवति, तथेहापीत्यर्थः। अथवा भूतग्रामवदिति श्रुत्यन्तरं निदर्शयति। यथा- 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' (श्वे.उ. ६।११) इत्यस्मिन् मन्त्रे समस्तेषु भूतग्रामेष्वेक एव सर्वान्तर आत्माऽऽम्नायते, एवमनयोरपि ब्राह्मणयोरित्यर्थः। तस्माद् वेद्यैक्याद् विद्यैकत्वमिति।।३५।।

**अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ।।३६।।**

अथ यदुक्तमनभ्युपगम्यमाने विद्याभेद आम्नानभेदानुपपत्तिरिति, तत् परिहर्तव्यम्। अत्रोच्यते- नायं दोषः। उपदेशान्तरवदुपपत्तेः। यथा ताण्डिनामुपनिषदि षष्ठे प्रपाठके- 'स आत्मा तत्त्वमसि श्वेतकेतो' (छा.उ. ६।८।७) इति नवकृत्वोऽप्युपदेशे न विद्याभेदो भवत्येवमिहापि भविष्यति। कथं च नवकृत्वोऽप्युपदेशे विद्याभेदो न भवति? उपक्रमोपसंहाराभ्यामेकार्थताऽवगमात्। 'भूय एव मा भगवान् विज्ञापयतु' (छा. उ. ६।८।७) इति चैकस्यैवार्थस्य पुनः पुनः प्रतिपिपादयिषितव्यत्वेनोपक्षेपात्। आशङ्कान्तरनिराकरणेन चासकृदुपदेशोपपत्तेः। एवमिहापि प्रश्नरूपाभेदात् 'अतोऽन्यदार्तम्' (बृ.उ. ३।४।२-३।५।१) इति च परिसमाप्त्यविशेषादुपक्रमोपसंहारौ तावदेकार्थविषयौ दृश्येते। 'यदेव साक्षादपरोक्षाद् ब्रह्म' (बृ.उ. ३।५।१) इति द्वितीये प्रश्न एवकारं प्रयुञ्जानः पूर्वप्रश्नगतमेवार्थमुत्तरत्रानुकृष्यमाणं दर्शयति। पूर्वस्मिंश्च ब्राह्मणे कार्यकरणव्यतिरिक्तस्यात्मनः सद्भावः कथ्यते। उत्तरस्मिंस्तु तस्यैवाशनायादिसंसारधर्मातीतत्वं कथ्यते

***प्रकटार्थविवरणम्***

**अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्।** पूर्वपक्षबीजमुच्छिनत्ति— **अथ यदुक्तमित्यादिना।** अभ्यासस्य विशेषविधानार्थत्वेनोपपत्तेर्न भेदकत्वमित्यर्थः। इति द्वाविंशमन्तरत्वाधिकरणम्।।

***भाष्यभावप्रकाशिका***

दृष्टान्तोऽप्यसंप्रतिपन्न इत्याह— **कथं चेति।** परिहरति— **उपक्रमेति।** नवै[नन्वे]कस्यैव भूयःशब्दसामर्थ्यात् प्रतिपाद्यत्वञ्चेत् पौनरुक्त्यं स्यादित्याशङ्क्याह— **आशङ्कान्तरेति।** दार्ष्टान्तिकमाह— **एवमिहेति।** एवकारसामर्थ्यादपि विद्यैकत्वमित्याह— **यदेवेति।** कथं तर्हि पौनरुक्त्यादानर्थक्यप्रसङ्गः परिह्रियत इति, तत्राह— **पूर्वस्मिन्निति।** इति द्वाविंशमन्तरत्वाधिकरणम्।

***न्यायनिर्णयः***

**अथवेति।** द्वयोः सर्वान्तरत्वायोगलभ्यमर्थमुपसंहरति— **तस्मादिति।।३५।।**

पूर्वपक्षबीजमनूद्य दूषयति— **अन्यथेति।** तत्रानुवादं व्याकरोति— **अथेति।** परिहारमवतारयति— **अत्रेति।** नञोऽर्थमुक्त्वा दृष्टान्तेनाम्नानभेदोपपत्तिं सूत्रावयवार्थमाह— **नेत्यादिना।** तदेव विवृणोति— **यथेति।** दृष्टान्तोऽपि संमतो नेति शङ्कते— **कथं चेति।** दृष्टान्ते विद्यैक्यं साधयति— **उपक्रमेति।** ऐकार्थ्यसिद्धौ हेत्वन्तरमाह— **भूय इति।** एकस्यैव भूयःशब्दात् प्रतिपाद्यत्वे पौनरुक्त्यमित्याशङ्क्याह— **आशङ्कान्तरेति।** दार्ष्टान्तिकमाह— **एवमिति।** इहेति ब्राह्मणद्वयोक्तिः। एवकारसामर्थ्यादपि विद्यैक्यमित्याह— **यदेवेति।** यत्साक्षादपरोक्षादेव, न कदाचिदपि परोक्षमित्येवमेवकारो योज्यतामित्याशङ्क्य व्यवहितान्वयान्मैवमिति मत्वाऽऽह— **पूर्वेति।** कथं तर्हि पौनरुक्त्यादानर्थक्यापत्तिसमाधिः, तत्राह— **पूर्वस्मिन्निति।** उषस्तप्रश्ने कार्यकरणविरहः साध्यते 'यः प्राणेन प्राणिती'त्यादिनिर्देशात्, कहोलप्रश्ने त्वशनायादिविरहो 'योऽशनायापिपासे शोकं मोह'मित्यादिदर्शनात्; तथा चैकस्यैवाकारभेदेनोक्तौ

**इत्येकार्थतोपपत्तिः। तस्मादेका विद्येति।।३६।।**

।। इति द्वाविंशमन्तराधिकरणम् ।।

२३।।व्यतिहाराधिकरणम्।।सू.३७।।

## व्यतिहारो विशिंषन्ति हीतरवत्।।३७।।

**यथा– 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' (ऐ.आ. २।२।४) इत्यादित्यपुरुषं प्रकृत्यैतरेयिणः समामनन्ति; तथा जाबालाः– 'त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि' इति। तत्र संशयः– किमिह व्यतिहारेणोभयरूपा मतिः कर्तव्योतैकरूपैवेति। एकरूपैवेति तावदाह। न ह्यत्रात्मन ईश्वरेणैकत्वं मुक्त्वाऽन्यत्किंचिच्चिन्तयितव्यमस्ति। यदि चैवं चिन्तयितव्यो विशेषः परिकल्प्येत, संसारिणश्चेश्वरात्मत्वमीश्वरस्य संसार्यात्मत्वमिति। तत्र संसारिणस्तावदीश्वरात्मत्व उत्कर्षो भवेदीश्वरस्य तु संसार्यात्मत्वे निकर्षः कृतः स्यात्। तस्मादैकरूप्यमेव मतेः। व्यतिहाराम्नायस्त्वेकत्वदृढीकारार्थ इति।**

### *शारीरकन्यायसंग्रहः*

**व्यतिहारो विशिंषन्ति हीतरवत्।।३७।।** निकर्षवत्युत्कृष्टबुद्धिः फलवती, नोत्कृष्टे निकृष्टबुद्धिः इति लौककव्याप्त्या ब्रह्मणि जीवबुद्धेरफलत्वात् जीवे ब्रह्मबुद्धिमात्रस्यैव प्राप्तौ वचनादन्यत्रैव लौकिको न्यायः सावकाशः इति न्यायेन व्यतिहारवचनसामर्थ्यात् जीवब्रह्मणोः इतरेतरात्मतादृष्टिः फलाय चोद्यते इत्युक्तमुपासनापक्षे। ऐकात्म्यपक्षे तु जीवगतस्यापि निकर्षस्य निवृत्तेर्ब्रह्मणि निकर्षबुद्ध्यभावात् न लौकिकन्यायावतारः इति।

### *प्रकटार्थविवरणम्*

**व्यतिहारो विशिंषन्ति हीतरवत्।** विषयवाक्यं पठति— **तद्योऽहमिति।** व्यतिहारस्येतरेतरविशेषणविशेष्यभावस्य प्रतिभासादुत्कृष्टदृष्टिर्निकृष्टे फलवतीति लौकिकन्यायाच्च संशयमाह— **तत्रेति। उभयरूपेति।** जीवे ब्रह्मदृष्टिः, ब्रह्मणि च जीवदृष्टिरित्यर्थः। **एकरूपेति।** जीवे ब्रह्मदृष्टिरेवेत्यर्थः। पूर्वत्रैकार्थेऽप्यभ्यासोपपत्तिरुक्ता; तद्वदिहापि पुनरुक्त्युपपत्तेः वाक्यस्य चैकात्म्यपरत्वावगतेः जीवोद्देशेन ब्रह्ममतिः कर्तव्येत्याह— **एकरूपैवेति।** विपक्षे लौकिकन्यायविरोध इत्याह— **यदि चैवमित्यादिना।**

### *भाष्यभावप्रकाशिका*

**व्यतिहारो विशिंषन्ति हीतरवत्।** ननु पदान्तराणामर्थान्तरपरत्वं स्वारसिकमित्यत आह— **न हीति।** कुत इत्यत्राह— **यदि चेति।** ईश्वरानुवादेन संसारित्वविधानेऽनर्थकप्रसङ्गान्नैवं रूपमतीव(?)कार्येत्यर्थः। तर्हि व्यतिहाराम्नानस्यानर्थक्यमिति, तत्राह— **व्यतिहारेति।**

### *न्यायनिर्णयः*

पौनरुक्त्यं कुतस्त्यमित्याह— **इत्येकार्थतेति।** ऐकार्थ्ये फलितमाह— **तस्मादिति।।३६।।** इति द्वाविंशमन्तरत्वाधिकरणम्।।

'तत्त्वमसी'त्येकत्वोपदेशस्योपदेशान्तरवदित्यनेन सूत्रावयवेनोदाहृतत्वात् तत्प्रसङ्गेनैकत्ववादिवाक्यान्तराणां तात्पर्यमाह— **व्यतिहार इति।** ऐतरेयकवाक्यं जाबालवाक्यं चोदाहरति— **तदिति।** वाक्यद्वयमधिकृत्य व्यतिहारस्यान्योन्यं विशेषणविशेष्यत्वस्य दृष्टेरुत्कृष्टदृष्टिर्निकृष्टे फलवतीति न्यायाच्च संशयमाह— **तत्रेति।** उषस्तकहोलयोर्विद्यैक्येऽपि यथाऽऽदरार्थोऽभ्यासस्तथाऽयमपीति मत्वा पूर्वपक्षयति— **एकेति।** पदान्तराणामर्थान्तरपरत्वस्वारस्यात् कथं मतेरैकरूप्यमित्याशङ्क्याह— **न हीति।** अन्योन्यात्मत्वमर्थान्तर-मित्याशङ्क्याह— **यदीति।** अन्योन्यात्मनाऽनुचिन्तनस्यायुक्तत्वे फलितमाह— **तस्मादिति।** तर्हि किमर्थं व्यतिहाराम्नानं, तदाह— **व्यतिहारेति।**

**एवं प्राप्ते प्रत्याह– व्यतिहारोऽयमाध्यानायाऽऽम्नायते। इतरवत्। यथेतरे गुणाः सर्वात्मत्वप्रभृतय आध्यानायाऽऽम्नायन्ते, तद्वत्। तथा हि विशिंषन्ति समाम्नातार उभयोच्चारणेन 'त्वमहमस्म्यहं च त्वमसि' इति। तच्चोभयरूपायां मतौ कर्तव्यायामर्थवद् भवति। अन्यथा हीदं विशेषेणोभयाम्नानमनर्थकं स्यात्; एकेनैव कृतत्वात्। ननूभयाम्नानस्यार्थविशेषे परिकल्प्यमाने देवतायाः संसार्यात्मत्वापत्तेर्निकर्षः प्रसज्येतेत्युक्तम्। नैष दोषः; ऐकात्म्यस्यैवानेन प्रकारेणानुचिन्त्यमानत्वात्। नन्वेवं सति स एवैकत्वदृढीकार आपद्येत। न वयमेकत्वदृढीकारं वारयामः; किं तर्हि? व्यतिहारेणेह द्विरूपा मतिः कर्तव्या, वचनप्रामाण्यान्नैक-रूपेत्येतावदुपपादयामः। फलतस्त्वेकत्वमपि दृढीभवति। यथाऽऽध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रसिध्यति, तद्वत्। तस्मादयमाध्यातव्यो व्यतिहारः, समाने च विषय उपसंहर्तव्यो भवतीति।।३७।।**

।। इति त्रयोविंशं व्यतिहाराधिकरणम् ।।

### *प्रकटार्थविवरणम्*

उभयोच्चारणार्थपरत्वानुपपत्त्योभयरूपैव मतिः कर्तव्येत्याह— **व्यतिहारोऽयमिति**। उक्तं स्मारयति— **नन्विति**। 'वचनादन्यत्रैव लौकिको न्यायः सावकाशः' इति न्यायेन व्यतिहारवचनसामर्थ्यात् जीवब्रह्मणोरितरेतरात्मतादृष्टिः फलाय चोद्यते; न तु जीवगतनिकृष्टत्वानुचिन्तनमित्याह— **नैष दोष इति**। जीवगतनिकृष्टत्वं चेन्नानुचिन्त्यते, तर्हि मदुक्तमेवायातमित्याह— **नन्वेवं सतीति**। अभ्युपगम्य विरोधमाह— **न वयमिति**। इति त्रयोविंशं व्यतिहाराधिकरणम्।।

### *भाष्यभावप्रकाशिका*

तदेव व्यतिरेकमुखेनाह— **अन्यथा हीति**। तथा ध्यानमात्रस्य विधीयमानत्वाद् वस्तुतो निकृष्टत्वं न प्रसज्यते निर्गुणस्यैव सगुणतोपदेश इत्याह— **नैष दोष इति**। एकत्वमेव तत्त्वमसीत्यादिवाक्यवदुपदिश्यत इत्युच्यते, किं वा नान्तरीयकतयैकत्वमपि दृढीकृतं भवतीति? यदि द्वितीयस्तत्राह— **न वयमिति**। अथ प्रथमः, स नोपपद्यते, उपासनाविधिपरत्वाद् वाक्यस्येत्याह— **किन्तर्हीति**। नन्वेकत्वावगमोऽपि दृश्यत इति, तत्राह— **फलत इति**। फलत इत्यर्थादित्यर्थः। नन्वतत्परत्वे तदप्यनुपपन्नमिति, तत्राह— **यथेति**। प्रमाणान्तराविरुद्धेऽर्थे प्रामाण्यमन्यपरस्यापि संभवतीत्यर्थः। इति त्रयोविंशं व्यतिहाराधिकरणम्।

### *न्यायनिर्णयः*

व्यतिहारपाठे द्विरूपाया मतेरनुष्ठेयत्वोक्त्या विद्यैक्योक्तेर्वाक्यार्थधीहेतोरेव चिन्तनात् पादादिसंगतिः। पूर्वपक्षे मतेरेकरूपत्वे लाघवम्। सिद्धान्ते तस्या द्वैरूप्ये दृढत्वमैक्यस्य सिध्यतीति मन्वानः सिद्धान्तयति— **एवमिति**। व्यतिहारो मिथो विशेषणविशेष्यत्वम्,आध्यानमुभयरूपमतिकरणम्। प्रतिज्ञातमर्थं दृष्टान्तेन स्पष्टयति— **इतरवदिति**। दृष्टान्तदार्ष्टान्तिकभागौ व्याख्याय हेतुं व्याख्याति— **तथा हीति**। उभयरूपोच्चारणेऽपि कथं प्रतिज्ञासिद्धिः, तत्राह— **तच्चेति**। तदेव व्यतिरेकमुखेनाह— **अन्यथेति**। जीवे ब्रह्मधीरेकैव चेत् तदा त्वमहमित्येतावतैव सिद्धेरुभयोच्चारणमनर्थकम्; तस्मात् तदर्थवत्त्वानुपपत्त्या मतिरुभयरूपैव कार्येत्यर्थः। उक्तं स्मारयति— **नन्विति**। निर्गुणस्य सगुणत्वोक्तिवदन्योन्यात्मतया ध्यानमात्रस्य विधानान्न वस्तुतो निकृष्टतेत्याह— **नेत्यादिना**। ईश्वरे जीवतादात्म्यस्यारोप्योपास्यत्वान्नेश्वरस्योत्कर्षनिवृत्तिरित्यर्थः। वचनादुभयत्रोभयानुचिन्तने मदुक्तमेवायातमिति शङ्कते— **नन्विति**। किमिह नान्तरीयत्वेनैकत्वमपि दृढीभवतीत्युच्यते, किंवा तत्त्वमस्यादिवत् तदेवोपदिश्यत इति, तत्राद्यं प्रत्याह— **न वयमिति**। न द्वितीयो, ध्यानविधिपरत्वाद् वाक्यस्येत्याह— **किं तर्हीति**। इहेत्युदाहरणोक्तिः। एकत्वज्ञानस्यापीह भानात् तत्परत्वं किं न स्यात्, तत्राह— **फलतस्त्विति**। अर्थादित्यर्थः। कथमुपास्तिपरत्वेऽर्थादपि तद्दृढीकरणम्, तत्राह— **यथेति**। अन्यपरस्यापि मानान्तराविरुद्धेऽर्थे स्यान्मानत्वमित्यर्थः। उभयोच्चारणसामर्थ्यसिद्धमुपसंहरति— **तस्मादिति**। व्यतिहारानुचिन्तनकार्यताकीर्तनस्य पादसंगतिं सूचयति— **समाने चेति**। यत्र यत्राहंग्रहेणोपास्तिस्तत्र तत्रेति यावत्। उभयरूपमतिकरणे सत्येकत्वमर्थतो दृढीभवतीति वक्तुमितीत्युक्तम्।।३७।। इति त्रयोविंशं व्यतिहाराधिकरणम्।।

२४।।सत्याद्यधिकरणम्।।सू.३८।।

## सैव हि सत्यादयः।।३८।।

**'स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' (बृ.उ. ५।४।१) इत्यादिना वाजसनेयके सत्यविद्यां सनामाक्षरोपासनां विधायानन्तरमाम्नायते– 'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः (बृ.उ. ५।५।२) इत्यादि। तत्र संशयः– किं द्वे एते सत्यविद्ये, किंवैकैवेति। द्वे इति तावत् प्राप्तम्। भेदेन हि फलसंयोगो भवति 'जयतीमाल्ँल्लोकान्' (बृ.उ. ५।४।१) इति पुरस्तात्,**

### *शारीरकन्यायसंग्रहः*

**सैव हि सत्यादयः।।३८।।** 'जयतीमाल्ँल्लोकान्' 'हन्ति पाप्मानम्' इति च फलसंयोगभेदात्, सत्यनामाक्षरत्रय-विशिष्टस्याक्ष्यादित्याधिकरणाहरहंगुणविशिष्टस्य च रूपभेदात् विद्याभेदे प्राप्ते 'तद्यत्तत्सत्यमसौ स आदित्यः' इति वाक्यप्रमाणात् सत्यनामाक्षरत्रयविशिष्टस्यैव ब्रह्मण उत्तरत्र स्थानगुणसंबन्धप्रतिपादनाद् रूपैक्यसिद्धेः विद्यैक्ये सति अयं न्यायः प्रदर्श्यते— यत्र विध्युद्देशः फलवान् तत्राङ्गानां प्रधानान्वयद्वारेण फलसंबन्धसिद्धेः अर्थवादगतानि गुणफलान्युपेक्ष्यन्ते; यत्र तु प्रधानतदङ्गानां अर्थवादात् फलं सत्रन्यायेन कल्प्यते, तत्र विहितानां फलाकाङ्क्षाविशेषात् अर्थवादात् फलकल्पनाविशेषाच्च यत्किंचिदर्थवादगतं फलं तत् सर्वमेकीकृत्य गुणविशिष्टस्य गुणिनः फलत्वेन कल्पनीयमिति न संयोगभेद इति।

### *प्रकटार्थविवरणम्*

**सैव हि सत्यादयः।** स यः कश्चित् ह किल एतन्महद् व्यापकं यक्षं पूज्यमग्रजं सच्च त्यच्चेति सत्यं ब्रह्म वेदोपास्ते तस्य लोकजयः फलमित्यर्थः। पूर्वोक्तब्राह्मणयोः फलभेदात् 'तद्यत्सत्यम्' इति प्रकृताकर्षणाच्च संशयमाह— **तत्रेति**। पूर्वाधिकरणोक्तस्य व्यतिहाराम्नानस्याभेदहेतोरभावात् फलभेदाच्च भेद इत्याह— **द्वे इति**।

### *भाष्यभावप्रकाशिका*

**सैव हि सत्यादयः।** यक्षं पूज्यम्। **सनामाक्षरोपासनामिति**। 'तदेतत् त्र्यक्षरं सत्यमिति स इत्येकमक्षर'मित्यादिना सत्यनामविशिष्टमुपासनं प्रदर्शितमित्यर्थः। न केवलं फलसंयोगभेदो, रूपभेदोऽपि विद्यते। सत्यनामाक्षरत्रयविशिष्ट.....हरहंगुणविशिष्टस्य च वैलक्षण्यादिति द्रष्टव्यम्। तद्यत्तत्सत्यमिति प्रकृताकर्षणेन सत्यनामाक्षरविशिष्टस्य ब्रह्मण उत्तरत्र स्थानगुणसंबन्धप्रतिपादनाद्

### *न्यायनिर्णयः*

जीवब्रह्मणोरन्योन्यात्मत्वोक्तिभेदाद् द्विरूपा मतिरनुष्ठेयेत्युक्तम्। सम्प्रति 'जयतीमाल्ँल्लोकान्' 'हन्ति पाप्मान'मिति च फलोक्तिभेदाद् विद्याभेदमाशङ्क्योक्तम्— **सैवेति**। सत्यविद्यामुदाहरति— **स यो हेति**। अविशेषेणाधिकारी सर्वनामभ्यामुक्तः। उपास्यप्रसिद्ध्यर्थो हशब्दः। एतदिति बुद्धिस्थमुपास्यं परामृश्यते। तस्य व्यापकत्वमाह— **महदिति**। यक्षं पूज्यं प्रथमजं भौतिकानां मध्ये प्रथमं जातं सच्च त्यच्चेति सत्त्यं ब्रह्म हिरण्यगर्भाख्यं वेदोपास्ते तस्य लोकजयः फलमित्यर्थः। तदेतदक्षरं सत्यमिति स इत्येकमक्षरमित्यादिना सत्यनामविशिष्टमुपासनमुक्तमित्याह— **सनामेति**। तत् तत्र ब्रह्मणो हृदयात्मत्वे सिद्धे यत्तद् ब्रह्म सत्यं हृदयाख्यं सोऽसावादित्य इति योजना। विशेष्यादित्यवशेन स इत्युक्तम्। तस्य मण्डलमात्रत्वं व्यावर्तयति— **य एष इति**। तस्यैवाध्यात्मिकत्वमाह— **यश्चेति**। वाक्यद्वये श्रुतां सत्यविद्यां विषयीकृत्य फलभेदात् प्रकृताकर्षणाच्च संशयमाह— **तत्रेति**। विद्याभेदाभेदनिरूपणद्वारा वाक्यार्थधीहेतूक्तेरत्र पादादिसंगतिः। पूर्वपक्षे गुणव्यवस्था, सिद्धान्ते तदव्यवस्थेत्यभिप्रेत्य पूर्वपक्षयति— **द्वे इति**। सत्यनामाक्षरत्रयविशिष्टादहरहंगुणविशिष्टस्य विलक्षणतया रूपभेदाद् विद्याभेद इत्यर्थः। तत्रैव फलसंयोगभेदं हेत्वन्तरमाह— **भेदेनेति**। तद्यदिति प्रकृताकर्षणाद् ब्रह्मणः सत्यनामाक्षरविशिष्टस्योत्तरत्र स्थानगुणसंबन्धकथनाद् रूपैक्ये कुतो विद्यानानात्वम्,

**'हन्ति पाप्मानं जहाति च' (बृ.उ. ५।५।३,४) इत्युपरिष्टात्। प्रकृताकर्षणं तूपास्यैकत्वादिति।**

**एवं प्राप्ते ब्रूमः- एकैवेयं सत्यविद्येति। कुतः? 'तद्यत् तत् सत्यम्' (बृ.उ. ५।५।२) इति प्रकृताकर्षणात्। ननु विद्याभेदेऽपि प्रकृताकर्षणमुपास्यैकत्वादुपपद्यत इत्युक्तम्। नैतदेवम्। यत्र तु विस्पष्टात् कारणान्तराद् विद्याभेदः प्रतीयते, तत्रैतदेवं स्यात्। अत्र तूभयथा संभवे 'तद् यत् तत् सत्यम्' इति प्रकृताकर्षणात् पूर्वविद्यासंबद्धमेव सत्यमुत्तरत्राकृष्यत इत्येकविद्यात्वनिश्चयः। यत्पुनरुक्तं फलान्तरश्रवणाद् विद्यान्तरमिति। अत्रोच्यते- तस्योपनिषदहरहमिति चाङ्गान्तरोपदेशस्य स्तावकमिदं फलान्तरश्रवणमित्यदोषः। अपि चार्थवादादेव फले कल्पयितव्ये सति विद्यैकत्वे चावयवेषु श्रूयमाणानि बहून्यपि फलान्यवयविन्यामेव**

### *प्रकटार्थविवरणम्*

'सैव हि' इति सूत्रभागं व्याचष्टे— **एकैवेयमिति**। तद्यत्पूर्वं प्रकृतं ब्रह्म सत्यमसौ प्रसिद्धः स आदित्य इति वाक्यप्रामाण्यात् सत्यनामाक्षरत्रयविशिष्टस्यैव ब्रह्मण उत्तरत्र स्थानगुणसंबन्धप्रतिपादकाद् रूपैक्यप्रसिद्धेः विद्यैक्यमिति भावः। पूर्वपक्षबीजमुन्मूलयति— **यत्पुनरुक्तमित्यादिना**। यथा प्रयाजादिषु फलश्रवणमर्थवादमात्रम्, तथेदमपीति अङ्गफलं न प्रधानभेदापादकमित्यर्थः। फलान्तरश्रवणस्य गत्यन्तरमाह— **अपि चेति**। यत्र विध्युद्देशः फलवान्, तत्राङ्गानां प्रधानान्वयद्वारेण फलसंबन्धसिद्धेरर्थवादगतानि गुणफलान्युपेक्ष्यन्ते। यत्र तु प्रधानतदङ्गानामर्थवादात्फलं सत्रन्यायेन कल्प्यते, तत्र विहितानां फलाकाङ्क्षाविशेषादर्थवादात्फलकल्पनाविशेषाच्च यत्किंचिदर्थवादगतं फलं तत्सर्वमेकीकृत्य गुणविशिष्टस्य गुणिनः फलत्वेन

### *भाष्यभावप्रकाशिका*

रूपैक्यमित्याशङ्क्याह— **प्रकृताकर्षणन्त्विति**। फलभेदान्नित्यकाम्यदर्शपूर्णमासवत् सत्यप्यनुबन्धा[भेदे] भेद इत्यर्थः। 'खल्वेतस्याक्षरस्योपव्याख्यान'मिति विद्याभेदेऽपि प्रकृताकर्षणं संभवतीति चोदयति— **ननु विद्याभेदेऽपीति**। तच्छब्देन प्रकृतपरामर्शात् अभेदेन प्रत्यभिज्ञानाद्विद्यैकत्वमत्र तु कारणान्तरादपवादादित्यभेद (?) इह त्वपवादकं नास्तीति परिहरति— **नैतदेवमिति**। नन्वत्रापि संयोगभेदो [भेदो]पपादक इत्युक्तमिति, तत्राह— **यत्पुनरिति**। फलविधिरेवायं न भवति प्रशंसार्थापादकत्वात्। अतो न संयोगभेद इति परिहरति— **अत्रोच्यत इति**। विध्युद्देशवाक्ये फलान्तराश्रवणाद् रात्रिसत्रन्यायेन फलं कल्पनीयम्। तथा सति फलभेदाद्विद्याभेदो नाशङ्कनीयः, अगृह्यमाणविशेषतया कृत्स्नस्यापि फलस्य तत्संबन्धिताकल्पनादित्याह— **अपि चेति**। अतः पूर्वापरवाक्यगतानि

### *न्यायनिर्णयः*

तत्राह— **प्रकृतेति**। फलभेदस्योक्तत्वान्नित्यकाम्यदर्शपूर्णमासवदनुबन्धाभेदेऽपि विद्यानानात्वमिति भावः।

विद्याभेदाद् गुणव्यवस्थेति पक्षमनूद्य सैवेति सूत्रावयवेन सिद्धान्तमाह— **एवमिति**। तत्र हेतुं हिशब्दसूचितं प्रश्नपूर्वकमाह— **कुत इति**। 'खल्वेतस्यैवाक्षरस्योपव्याख्यान'मितिवद् विद्याभेदेऽपि प्रकृताकर्षणं स्यादिति शङ्कते— **नन्विति**। तत्र कारणान्तरादपवादाद् विद्याभेदेऽपि प्रकृते तदभावात् तच्छब्देन प्रकृतग्रहादभेदेन प्रत्यभिज्ञानाद् विद्यैक्यमित्याह— **नैतदिति**। खल्वेतस्येत्यादि **यत्रे**त्युक्तम्। **कारणान्तरं** फलभेदादि। **एतदिति** प्रकृताकर्षणमुक्तम्। **एवमिति** तस्य विद्यैक्यव्यभिचारित्वमिति भेदः। **अत्रेति** सत्यविद्योच्यते। **उभयथा संभवो** भेदाभेदाभ्यामुपपत्तिः। प्रकृते फलसंयोगभेदो भेदोपपादकोऽस्तीत्युक्तम्, तत्राह— **यत्पुनरिति**। प्रशंसार्थवादत्वेनास्य फलविधित्वाभावात्र फलसंयोगभेदसिद्धिरित्याह— **अत्रेति**। इतश्च फलभेदाद् विद्याभेदो नात्रेत्याह— **अपि चेति**। विध्युद्देशे फलान्तराश्रुते रात्रिसत्रवत् फले कल्प्ये सत्यगृहीतविशेषतया सर्वस्यापि फलस्य तत्संबन्धिताकल्पनात्र फलभेदाद् विद्याभेदाशङ्केत्याह— **अर्थेति**।

**विद्यायामुपसंहर्तव्यानि भवन्ति। तस्मात् सैवेयमेका सत्यविद्या तेन तेन विशेषेणोपेताऽऽम्नातेत्यतः सर्व एव सत्यादयो गुणा एकस्मिन्नेव प्रयोग उपसंहर्तव्याः।**

**केचित्पुनरस्मिन् सूत्र इदं च वाजसनेयकमक्ष्यादित्यपुरुषविषयं वाक्यं, छान्दोग्ये च– 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (छा.उ. १।६।६) 'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' (छा.उ. १।७।५) इत्युदाहृत्य सैवेयमक्ष्यादित्यपुरुषविषया विद्योभयत्रैकैवेति कृत्वा सत्यादीन् गुणान् वाजसनेयिभ्यश्छन्दोगानामुपसंहार्यान् मन्यन्ते। तन्न साधु लक्ष्यते। छान्दोग्ये हि [1]ज्योतिष्टोमकर्मसंबन्धिनीय-मुद्गीथव्यपाश्रया विद्या विज्ञायते। तत्र ह्यादिमध्यावसानेषु कर्मसंबन्धिचिह्नानि भवन्ति– 'इयमेवर्ग्गिनः साम' (छा.उ. १।६।१) इत्युपक्रमे, 'तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथः' (छा.उ. १।६।८) इति मध्ये, 'य एवं विद्वान् साम गायति' (छा.उ. १।७।९) इत्युपसंहारे। नैवं वाजसनेयके किंचित्कर्मसंबन्धि चिह्नमस्ति। तत्र प्रक्रमभेदाद् विद्याभेदे सति गुणव्यवस्थैव युक्तेति।।३८।।**

।। इति चतुर्विंशं सत्याद्यधिकरणम् ।।

### *प्रकटार्थविवरणम्*

कल्पनीयमिति न संयोगभेद इति भावः। सूत्रार्थमुपसंहरति— **तस्मादिति**।

परेषां व्याख्यामनूद्य दूषयति— **केचित्पुनरित्यादिना**। 'अथ य एषोऽन्तरादित्ये' इत्यस्यादिमध्यावसानेष्वृक्सामयोः कर्माङ्गभूतयोः पृथिव्यादिदृष्टिविशिष्टयोः उपास्यत्वप्रतीतेरादित्याक्षिपुरुषदृष्टिविशिष्टकर्माङ्गभूतोद्गीथोपासनं छान्दोग्ये विवक्षितम्; न तथा वाजसनेयके; अतो विद्याभेदादनुपसंहार एव तत्र युक्त इत्यर्थः। इति चतुर्विंशं सत्याद्यधिकरणम्।।

### *भाष्यभावप्रकाशिका*

विशेषणान्येकीकृत्योपासनं कार्यमित्याह— **तस्मात्सैवेति**।

वपरत्रयं[परकीयं] व्याख्यानमाह— **केचिदिति**। कर्मसंबन्धिनी ज्योतिष्टोमकर्मसंबन्धिनीत्यर्थः। अतोऽनुबन्धांशाभेदेऽपि साध्यभेदाद्भेद इति गुणानामनुपसंहार इत्युपसंहरति— **तत्र प्रक्रमेति**। इति चतुर्विंशं सत्याद्यधिकरणम्।

### *न्यायनिर्णयः*

अपवादरहितं हेतुमुक्त्वा प्रतिज्ञातं विद्यैक्यमुपसंहरति— **तस्मादिति**। अवशिष्टं सूत्रावयवं व्याकुर्वन् पूर्वापरवाक्यार्थविशेषणान्येकीकृत्य ध्यानं कार्यमित्याह— **इत्यत इति**।

परकीयव्याख्यामुत्थापयति— **केचिदिति**। तद् दूषयति— **तन्नेति**। कर्मसंबन्धिनीत्यत्र कर्म ज्योतिष्टोमस्तदङ्गभूतोद्गीथव्यपाश्रयत्वमेव विद्याया विशदयति— **तत्रेति**। उद्गीथशब्दवाच्यर्क्सामगेष्णत्वात् परमात्मोद्गीथशब्दवाच्य इत्याह— **तस्मादिति**। 'अथ य एषोऽन्तरादित्य' इत्यस्यादिमध्यावसानेषु ऋक्सामयोः कर्माङ्गयोः पृथिव्यादिदृष्टिविशिष्टयोर्ध्येयत्वदृष्टेरादित्याक्षिपुरुषविशिष्टकर्माङ्गोद्गीथध्यानं छान्दोग्येऽभीष्टमित्यर्थः। वाजसनेयकेऽपि कर्माङ्गावबद्धमेव ध्यानमिष्टमिति न विद्यानानात्वमित्याशङ्क्याह— **नैवमिति**। नित्यकाम्याग्निहोत्र-योर्धात्वर्थभेदेऽपि साध्यभेदेन भेदवदुपास्यैक्येऽपि फलभेदेन विद्ययोर्भेदे गुणानुपसंहार इत्युपसंहरति— **तत्रेति**।।३८।। इति चतुर्विंशं सत्याद्यधिकरणम्।।

---

१. ज्योतिष्टोमपदरहितः पाठः व्याख्यातृसंमतः।

२५।।कामाद्यधिकरणम्।।सू.३९।।

## कामादीतरत्र तत्र चायतनादिभ्यः।।३९।।

**'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' (छा.उ. ८।१।१) इति प्रस्तुत्य च्छन्दोगा अधीयते– 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' (छा.उ. ८।१।५) इत्यादि। तथा वाजसनेयिनः– 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी' (बृ.उ. ४।४।२२) इत्यादि। तत्र विद्यैकत्वं परस्परगुणयोगश्च, किं वा नेति संशये– विद्यैकत्वमिति। तत्रेदमुच्यते– कामादीति। सत्यकामादीत्यर्थः। यथा देवदत्तो दत्तः, सत्यभामा भामेति। यदेतच्छान्दोग्ये हृदयाकाशस्य सत्यकामत्वादिगुणजातमुपलभ्यते तदितरत्र वाजसनेयके 'स वा एष महानज आत्मा' (बृ.उ.४।४।२२) इत्यत्र संबध्यते। यच्च वाजसनेयके वशित्वाद्युपलभ्यते तदपीतरत्र च्छान्दोग्ये 'एष आत्माऽपहतपाप्मा' (छा.उ. ८।१।५) इत्यत्र संबध्यते। कुतः? आयतनादिसामान्यात्। समानं ह्युभयत्रापि हृदयमायतनं, समानश्च वेद्य ईश्वरः, समानं च तस्य सेतुत्वं लोकासंभेदप्रयोजनमित्येवमादि बहु सामान्यं दृश्यते।**

### *शारीरकन्यायसंग्रहः*

**कामादीतरत्र तत्र चायतनादिभ्यः।।३९।।** वशित्वादिगुणसमुदायस्य अपहतपाप्मत्वादिगुणसमुदायस्य च सगुणनिर्गुणविद्याभेदाद् विद्यान्तरवदितरत्र अनुपसंहारोऽनुमानात्प्राप्तः। तत्र वशित्वादेः प्रपञ्चोपाधिकस्य तदुपचयापचयाभ्यामुपचयापचयवतो निर्विशेषे ब्रह्मणि वेद्यत्वानुपपत्तेः प्रशंसामात्रेण कृतार्थत्वायोगात् क्वचिदुपास्याकाङ्क्षा विद्यते। स्तूयमानस्य च ब्रह्मणः स्तुतिपौष्कल्याकाङ्क्षाऽस्ति। हृदयायतनाद्यर्थद्वारेण सन्निधानं चास्ति। दहरस्य च वशित्वादिसंबन्धयोग्यता विद्यते। ब्रह्मणश्च अपहतपाप्मत्वादिस्तुतियोग्यता। एवं ब्रह्मणः स्तुत्याकाङ्क्षासन्निधियोग्यत्वैः अपहतपाप्मत्वादिगुणानां निर्गुणविद्यायां स्तावकतयोपसंहारात्[रम्] निर्गुणविद्यागतोपचितापचितगुणानां चोपास्यत्वाकाङ्क्षाणां सगुणासूपसंहारं च कल्पयित्वा तद्वाक्यानां च उपसंहृतगुणविशिष्टार्थप्रतिपादनसामर्थ्यकल्पनेनानुमानस्य बाधो दर्शितः।

### *प्रकटार्थविवरणम्*

**कामादीतरत्र तत्र चायतनादिभ्यः।** विषयं दर्शयितुं सगुणनिर्गुणविद्याविषयं वाक्यद्वयं पठति— **अथ यदिदमित्यादिना।** परापरविद्यापठिताः सर्वे वशित्वादयः सत्यकामादयश्च गुणा विषयाः। ते किमन्यत्रोपसंहर्तव्या न वेति सन्देहः; स च सत्यकामत्वादीनां निर्गुणविद्यायां प्रयोजनानिरूपणात्, वशित्वादीनां च सगुणविद्यायां प्रयोजनसंभवात्। तत्र पूर्वाधिकरणोक्तविद्यैकत्वहेतोः वेद्यप्रत्यभिज्ञानस्याभावात् सगुणनिर्गुणविद्याभेदादनुपसंहार इति बहिरेव पूर्वपक्षमुपन्यस्य सिद्धान्तमाह— **तत्रेदमुच्यत इति।** बहुतरसाम्यदर्शनादितरेतरगुणोपसंहार इत्यर्थः।

### *न्यायनिर्णयः*

'तद्यत्तत्सत्य'मिति प्रकृताकर्षणाद् रूपाभेदाद् गुणोपसंहारश्चेत् क्वचिदाकाशस्योपास्यत्वं क्वचित्तदाश्रयस्य ज्ञेयतेति रूपभेदाद् गुणानुपसंहारः स्यादित्याशङ्क्याह— **कामादीति।** सगुणनिर्गुणविद्याविषयं वाक्यमुदाहरति— **अथेति।** परावरविद्यागता वशित्वादयः सत्यकामादयश्च गुणा विषयाः, ते किमन्योन्यत्र नोपसंहर्तव्याः किंवोपसंहर्तव्या इत्युभयत्रोभयेषामुपयोगभावाभावाभ्यां संशये ध्यानस्तुत्युपयोगित्वेन गुणानामन्योन्यत्रोपसंहारोक्त्या वाक्यार्थधीतद्धेतुचिन्तनात् पादादिसंगतिः। पूर्वपक्षे क्वचिदाकाशस्य ध्येयत्वं, क्वचित् तदाश्रयस्य ज्ञेयतेति विशेषसिद्धिः। सिद्धान्तेऽपि ब्रह्मण एवाकाशशब्दत्वादुक्तविशेषोपपत्तिरित्यङ्गीकृत्य सिद्धान्तमाह— **तत्रेति।** अवयववाचकेनावयविग्रहे दृष्टान्तमाह— **यथेति।** पदार्थमुक्त्वा वाक्यार्थमाह— **यदेतदिति।** हेतुमुक्तं विवृणोति— **समानं हीति।** आदिपदेनात्मत्वादि गृह्यते। बहुतरसाम्यदर्शनादितरेतरगुणोपसंहार इत्यर्थः।

**ननु विशेषोऽपि दृश्यते– छान्दोग्ये हृदयाकाशस्य गुणयोगः, वाजसनेयके त्वाकाशाश्रयस्य ब्रह्मण इति। न; 'दहर उत्तरेभ्यः' (ब्र. सू. १।३।१४) इत्यत्र च्छान्दोग्येऽप्याकाशशब्दं ब्रह्मैवेति प्रतिष्ठापितत्वात्। अयं त्वत्र विद्यते विशेषः। सगुणा हि ब्रह्मविद्या छान्दोग्य उपदिश्यते– 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' (छा.उ. ८।१।६) इत्यात्मवत् कामानामपि वेद्यत्वश्रवणात्। वाजसनेयके तु निर्गुणमेव परं ब्रह्मोपदिश्यमानं दृश्यते– 'अत ऊर्ध्वं विमोक्षाय ब्रूहि' (बृ.उ. ४।३।१४) 'असङ्गो ह्ययं पुरुषः' (बृ.उ. ४।३।१५) इत्यादिप्रश्नप्रतिवचनसमन्वयात्। वशित्वादि तु तत्स्तुत्यर्थमेव गुणजातं वाजसनेयके संकीर्त्यते। तथा चोपरिष्टात् 'स एष नेति नेत्यात्मा' (बृ.उ. ४।४।२२) इत्यादिना निर्गुणमेव ब्रह्मोपसंहरति। गुणवतस्तु ब्रह्मण एकत्वाद्विभूतिप्रदर्शनायायं गुणोपसंहारः सूत्रितो, नोपासनायेति द्रष्टव्यम्।।३९।।**

।। इति पञ्चविंशं कामाद्यधिकरणम् ।।

### *प्रकटार्थविवरणम्*

विस्मरणशीलस्य वैलक्षण्यशङ्कामपाकरोति— **ननु विशेषोऽपीत्यादिना**। इदानीं स्वाभिप्रेतं विशेषमाह— **अयं त्वत्रेति**। कथं तर्हि वाजसनेयकेऽपि गुणसङ्कीर्तनमित्याशङ्क्याह— **वशित्वादीति**। अन्यथोपसंहारविरोधाच्चेत्याह— **तथा चेति**। यद्येवं विद्याभेदः, कथं तर्हि गुणोपसंहारः सूत्रित इत्याशङ्क्याह— **गुणवतस्त्विति**। वशित्वादेः प्रपञ्चोपाधिकस्य निर्विशेषब्रह्मणि वेद्यत्वानुपपत्तेः, प्रशंसामात्रेण च कृतार्थत्वानुपपत्तेः क्वचिदुपास्यत्वाकाङ्क्षा विद्यते; स्तूयमानस्य च ब्रह्मणः स्तुतिपौष्कल्याकाङ्क्षाऽप्यस्ति; हृदयायतनाद्यर्थद्वारेण सन्निधानं चास्ति; दहरस्य च वशित्वादिसंबन्धयोग्यता विद्यते; ब्रह्मणश्चापहतपाप्मत्वादिस्तुतियोग्यता; तदेवमाकाङ्क्षासन्निधियोग्यत्वैरपहतपाप्मत्वादिगुणानां निर्गुणविद्यायाः स्तावकत्वेनोपसंहारो निर्गुणविद्यागतानां चोपास्यत्वसाकाङ्क्षाणां सगुणासूपसंहार इत्याशयः। इति पञ्चविंशं कामाद्यधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**कामादीतरत्र तत्र चायतनादिभ्यः**। अस्याधिकरणस्य पूर्वपक्षं दर्शयति— **ननु विशेषोऽपीति**। नायं विशेषस्तत्राप्याकाशशब्देन परब्रह्माभिधानादित्याह— **न दहर इति**। ननु सगुणनिर्गुणविषयतया विद्याभेदाद् वशित्वादपहतपाप्मत्वादीनाञ्चेतरेतरानुपसंहार इत्याशङ्क्याह— **अयं त्विति**। ननु तत्रापि वशित्वादिगुणसंकीर्तनात् सगुणमेवोपदिश्यत इत्याशङ्क्याह— **स्तुत्यर्थमेवेति**। कथं निर्णय इति, वाक्यशेषादित्याह— **तथा चेति**। कथं तर्हि गुणोपसंहार इति, तत्राह— **गुणवत इति**। साम्यबाहुल्येनोपास्य-ब्रह्मणः स्तूयमानस्य चेतरेतरत्र सन्निधानात् क्वचिदुपास्यत्वाय क्वचित् स्तुतिपौष्कल्याय चाकाङ्क्षायाः सद्भावात्तत्तद्गुणसंबन्धयोग्यत्वाच्च ब्रह्मणो वशित्वादीनामपहतपात्मत्वादीनां चेतरेतरत्रोपसंहार इत्यर्थः। इति पञ्चविंशं कामाद्यधिकरणम्।

### *न्यायनिर्णयः*

अस्याधिकरणस्य पूर्वपक्षमाह— **नन्विति**। नायं विशेषस्तत्राप्याकाशस्य ब्रह्मत्वादित्याह— **नेत्यादिना**। सगुणनिर्गुणतया विद्याभेदादपहतपाप्मत्वादीनां वशित्वादीनां चेतरेतरत्रानुपसंहार इत्याशङ्क्याह— **अयं त्विति**। वाजसनेयकेऽपि वशित्वाद्युपदेशदर्शनाद् ब्रह्म सगुणमेवेत्याशङ्क्याह— **स्तुत्यर्थमिति**। तत्र निर्णायकत्वेन वाक्यशेषं दर्शयति— **तथा चेति**। कथं तर्हि गुणोपसंहारः सूत्रितः, तत्राह— **गुणवतस्त्विति**। साम्यबाहुल्याद् ब्रह्मणो ध्येयस्य स्तूयमानस्येतरेतरत्र संनिधानाच्च क्वचिदुपास्यत्वाय, क्वचिच्च स्तुतिपौष्कल्यायाकाङ्क्षितत्वात् तत्तद्गुणसंयोगयोग्यत्वाच्च ब्रह्मणो वशित्वादीनामपहतपाप्मत्वादीनां चेतरेतरत्रोपसंहारः। स्तुतिर्हि दृष्टेन द्वारेण कर्तुं शक्येति सगुणविद्यासु ध्येयत्वेनोक्तानामपि गुणानां निर्गुणविद्यायां युक्तः स्तुत्यर्थत्वेनान्वयः। ध्येयत्वं त्वपूर्वविध्येकगम्यम्। यत्र वशित्वादयः श्रुता न तत्रैषां ध्येयत्वेन विधानमित्यन्यत्र गतानामपि न ध्येयत्वम्। स्तुत्यर्थत्वं तु स्यात्; तदपि न शब्दतस्तत्रैषां नयनमपेक्षते। सत्यकामत्वादिसामर्थ्यादेव सर्वेश्वरत्वादिसिद्धिः। अतोऽन्तर्भावमात्रमुपसंहार इति भावः।।३९।। इति पञ्चविंशं कामाद्यधिकरणम्।।

२६।।आदराधिकरणम्।।सू. ४०-४१।।

## आदरादलोपः।।४०।।

**छान्दोग्ये वैश्वानरविद्यां प्रकृत्य श्रूयते- 'तद्यद् भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहा' (छा.उ. ५।१९।१) इत्यादि। तत्र पञ्च प्राणाहुतयो विहिताः। तासु च परस्तादग्निहोत्रशब्दः प्रयुक्तः- 'य एतदेवं विद्वानग्निहोत्रं जुहोति' (छा.उ. ५।२४।२) इति, 'यथेह क्षुधिता बाला मातरं पर्युपासते। एवं सर्वाणि भूतान्यग्निहोत्रमुपासते' (छा.उ. ५।२४।५) इति च। तत्रेदं विचार्यते- किं भोजनलोपे लोपः प्राणाग्निहोत्रस्योतालोप इति। 'तद्यद्भक्त'मिति भक्तागमनसंयोग-**

### *शारीरकन्यायसंग्रहः*

**आदरादलोपः।।४०।। उपस्थितेऽतस्तद्वचनात्।।४१।।** कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' इत्यग्निहोत्रशब्दः प्रसिद्धाग्निहोत्रात् प्रकरणभेदात् कर्मान्तरविषयोऽपि प्रसिद्धाग्निहोत्रधर्मसाम्यात् यथा प्रयुज्यते, एवम् 'य एतदेवं विद्वानग्निहोत्रं जुहोति' इति प्राणाद्याहुतिपञ्चकविषयः अग्निहोत्रशब्दः प्रसिद्धाग्निहोत्रधर्मान् पयआदीनुपस्थापयति। तदपवादेन 'तद्यद्भक्तम्' इति द्रव्यान्तरं होम्यत्वेन विधीयते; तत्रापवादाभाव उत्सर्गस्य स्थितिरिति न्यायेन भोजनाभावेऽप्याहुतिपञ्चकं पयआदिना कर्तव्यमिति प्राप्तम्। तत्र 'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयम्' इत्यन्यार्थागतद्रव्योद्देशेन आहुतिकर्मविधानात् आहवनीयाभावे होमाभाववदुद्देश्याभावे उपादेयाप्रवृत्तेः आमिक्षार्थदध्यानयनाभावाद्वाजिकर्माभाववदिति न्यायेन भोजनार्थद्रव्यलोपे प्राणाग्निहोत्रलोप एव। अग्निहोत्रशब्दस्य अर्थवादगतस्य स्तुतित्वेनाप्युपपत्तेः अग्निहोत्रधर्माप्रापकत्वादित्युक्तम्।

### *प्रकटार्थविवरणम्*

**आदरादलोपः।** विषयं दर्शयितुं वाक्यं पठति— **छान्दोग्य इति।** यच्छब्दाग्निहोत्रशब्दाभ्यां संशयमाह— **तत्रेदं विचार्यत इति।** आद्यं पूर्वपक्षसूत्रमवतारयितुं निरस्यां सिद्धान्त्याशङ्कामाह— **तद्यद्भक्तमिति।** यद्भक्तं प्रथममागच्छति तद्धोतव्यमिति भोजनार्थभक्तागमनोद्देशेन आहुतिकर्मविधानादुद्देश्याभावे चोपादेयाप्रवृत्तेराहवनीयाभावे होमाभाववदित्यर्थः। एवं सिद्धान्ताशङ्कामुपन्यस्य

### *भाष्यभावप्रकाशिका*

**आदरादलोपः।** उपासनाविचारप्रसङ्गेन तत्संबन्धप्रथमभोजनाश्रितचिन्तामारभते। विवादगोचरं दर्शयति— **छान्दोग्य इति।** सन्देहं दर्शयितुं शब्दान्तरप्रयोगं पूर्वपक्षबीजं दर्शयति— **तासु चेति।** इदानीं पूर्वपक्षाभावेन संशयमाक्षिपति— **तद्यद्भक्तमिति।** भोजनप्रयुक्तत्वात् भक्तागमनस्य तदुपजीवित्वाच्च होमस्य न भक्तागमनप्रयोजकत्वमतस्तल्लोपे लोप इति पूर्वपक्षो नोपपद्यत

### *न्यायनिर्णयः*

उपास्तिलोपेऽपि स्तुत्यर्थत्वेन गुणालोपवत् 'पूर्वोऽतिथिभ्य' इत्यादिश्रुत्युपपत्तये भोजनलोपेऽपि प्राणाग्निहोत्रालोप इति चोदयति— **आदरादिति।** वैश्वानरविद्यागतं प्राणाग्निहोत्रं विषयत्वेनोपन्यस्यति— **छान्दोग्ये इति।** स इति वैश्वानरविद्याविदुक्तः। श्रुतितात्पर्यार्थं संगृह्णाति— **तत्रेति।** संदेहार्थं शब्दान्तरप्रयोगं पूर्वपक्षबीजमाह— **तास्विति।** न कश्चिदपि पाप्मा तं स्पृशतीति यच्छब्दस्य संबन्धः। प्राणाग्निहोत्रे यच्छब्दाग्निहोत्रशब्दाभ्यां संशयमाह— **तत्रेति।** उपास्तिविचारप्रस्तावेन तद्गतप्रथमभोजनाश्रितविचारद्वारा वाक्यार्थधीहेतुविचारसंक्रान्तेरस्ति पादादिसंगतिः। पूर्वपक्षे प्रतिनिधिन्यायेन प्राणाग्निहोत्रकार्यताध्रौव्यम्। सिद्धान्ते तदनवतारात् तदनावश्यकत्वमित्याशयेन पूर्वपक्षसूत्रव्यावर्त्यां सिद्धान्ताशङ्कामुत्थापयति— **तद्यदिति।** भक्तागमनसंबन्धात् प्राणाग्निहोत्रस्येति संबन्धः। न च होमस्य भक्तागमनप्रयोजकत्वम्, भोजनप्रयुक्तभक्तोपजीवित्वादतस्तल्लोपे लोपात् पूर्वपक्षाभावादधिकरणमनारभ्यमित्यर्थः।

**श्रवणाद्भक्तागमनस्य च भोजनार्थत्वाद् भोजनलोपे लोपः प्राणाग्निहोत्रस्येति। एवं प्राप्ते न लुप्येतेति तावदाह। कस्मात्? आदरात्। तथाहि वैश्वानरविद्यायामेव जाबालानां श्रुतिः– 'पूर्वोऽतिथिभ्योऽश्नीयात्। यथा ह वै स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयादेवं तत्' इत्यतिथिभोजनस्य प्राथम्यं निन्दित्वा स्वामिभोजनं प्रथमं प्रापयन्ती प्राणाग्निहोत्र आदरं करोति। या हि न प्राथम्यलोपं सहते, नतरां सा प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेतेति मन्यते। ननु भोजनार्थभक्तागमनसंयोगाद्भोजनलोपे लोपः प्रापितः। न। तस्य द्रव्यविशेष-विधानार्थत्वात्। [1]'प्राकृते ह्यग्निहोत्रे पयःप्रभृतीनां द्रव्याणां नियतत्वादिहाप्यग्निहोत्रशब्दात् कौण्डपायिनामयनवत् तद्धर्मप्राप्तौ सत्यां भक्तद्रव्यकतागुणविशेषविधानार्थमिदं वाक्यं 'तद्यद्भक्त'मिति। अतो गुणलोपे न मुख्यस्येत्येवं**

*प्रकटार्थविवरणम्*

एतन्निरासाय पूर्वपक्षसूत्रं योजयति— **एवं प्राप्ते न लुप्येतेति**। यथा पूर्वत्र निर्गुणायामपि विद्यायां स्तुतिप्रकर्षलाभाय गुणोपसंहारोऽङ्गीकृतः, तथेहापि स्तुतिप्रकर्षलाभायाभोजनेऽपि दिने प्राणाग्निहोत्रमनुष्ठेयमित्यर्थः। उक्तं स्मारयति— **नन्विति**। नानेनान्यार्थद्रव्योद्देशेनाहुतिविधानम्, किं तु द्रव्यविशेषविधिरित्याह— **न तस्येति**। ननु कुतो द्रव्यप्राप्तिः, येन विशेषविधानमित्याशङ्क्याह— **प्राकृते हीति**। यथा कुण्डपायिनामयने 'मासमग्निहोत्रं जुह्वति' इत्यग्निहोत्रशब्दः प्रसिद्धादग्निहोत्रात् प्रकरणभेदात् कर्मान्तरविषयोऽपि प्रसिद्धाग्निहोत्रधर्मसाम्यात् प्रयुक्तः, तथाऽत्राप्यग्निहोत्रशब्दः प्रसिद्धाग्निहोत्रधर्मान् पयःप्रभृतीनुपस्थापयति। तदपवादेन 'तद्यद्भक्तम्' इति द्रव्यान्तरं होम्यत्वेन

*भाष्यभावप्रकाशिका*

इत्यर्थः। इदानीं पूर्वपक्षं समर्थयते— **न लुप्येतेति तावदाहेति**। तावच्छब्दः सिद्धान्तशङ्कावारणार्थः। पूर्वपक्षी हेतुत्वेन सूत्रपदमवतारयति— **आदरादिति**। तदेव स्पष्टयति— **तथा हीति**। अग्रे भोजनाभावं निन्दति— **यथा वा इति**। नन्वेतावता कथमलोप इति, तत्राह— **या हीति**। अतिथिभोजनोत्तरकालविहितमपि स्वामिभोजनमपोद्यातिथिभोजनात् प्रागेव प्राणाग्निहोत्रलक्षणस्वामिभोजनं प्रतिपादयन्ती श्रुतिः प्राथम्यधर्मलोपमपि तस्य न सहते। तत्र का वार्ता धर्मिलोपसहनस्येत्यर्थः। पूर्वपक्षाक्षेपमनूद्य दूषयति— **ननु भोजनार्थेति**। परिहरति— **तस्येति**। तदेव प्रपञ्चयति— **प्राकृते हीति**। अयमर्थः— कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोती'ति श्रूयते। तत्र प्रकरणान्तर[रात्]नैयमिकाग्निहोत्राद्भिन्नत्वे तस्य कर्मणोऽवगते नैयमिकाग्निहोत्रवाचकशब्दप्रयोगात् तद्धर्मातिदेशनरूपधर्मान्तरप्राप्तिर्यथा तथा प्राणाग्निहोत्रेऽपि नैयमिकाग्निहोत्रगतपयःप्रभृतिद्रव्यप्राप्तौ भोजनागतभक्तद्रव्यकता विधीयत

*न्यायनिर्णयः*

सूत्रेण पूर्वपक्षं समादधानोऽधिकरणारम्भमुपपादयति— **एवमिति**। तावच्छब्दः सिद्धान्तशङ्कानिरासार्थः। पूर्वपक्षी प्रश्नपूर्वकं स्वं हेतुमवतारयति— **कस्मादिति**। आदरमेव स्फोरयति— **तथा हीति**। विध्यपेक्षितमर्थवादं दर्शयति— **यथेति**। ननु स्वामिभोजनस्य प्राथम्याभावोऽत्र निन्द्यते, कथमेतावता भोजनलोपेऽपि प्राणाग्निहोत्रं न लुप्यते, तत्राह— **या हीति**। अतिथिभोजनोत्तरकालविहितमपि स्वामिभोजनमपोद्यातिथिभोजनात्प्रागेव प्राणाग्निहोत्रलक्षणं स्वामिभोजनं प्रतिपादयन्ती श्रुतिस्तस्य प्राथम्यधर्मलोपमपि न सहते, तत्र धर्मिलोपसहनं तु दूरनिरस्तमित्यर्थः। पूर्वपक्षाक्षेपं स्मारयति— **नन्विति**। तद्यद् भक्तमिति वाक्यस्यान्यार्थत्वाद् भोजनलोपेऽपि नास्ति लोपोऽग्निहोत्रस्येति दूषयति— **नेति**। तदेव प्रपञ्चयति— **प्राकृते हीति**। **इहापीति**। प्राणाग्निहोत्रं सप्तम्यर्थः। **कौण्डपायिनामयनवदिति**। स्थितं भेदलक्षणे–'प्रकरणान्तरे प्रयोजनान्यत्वम्'। कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोती'त्यत्र नित्याग्निहोत्रे मासगुणो वा विधीयते, कर्मान्तरं वेति संदेहे प्रदेशभेदे सत्यपि नाम्ना नित्याग्निहोत्रस्य बुद्धिसंनिधापनात् तत्समभिव्याहृताख्यातस्य तत्संनिधापितार्थपरत्वान्नित्याग्निहोत्रानुवादेन मासविधिरिति प्राप्ते कालस्य पुरुषानिष्पाद्य-त्वेनानुपादेयत्वाज्जुहोतीत्याख्यातेन होमानुवादेन मासविधेरयोगात् तदुद्देशेन नित्याग्निहोत्रविधेरपि तदसंनिधेरसंभवान्नाम्ना च सिद्धार्थबोधिना पूर्वापरीभूततयाऽऽख्यातेनोक्तस्यानुपस्थापनात् प्रकरणभेदे प्रयोजनस्य विधेयभावनाख्यस्यान्यत्वमिति कर्मान्तरविधिरिति। **तद्धर्मप्राप्ताविति**।

---

१. नित्याग्निहोत्रे इत्यर्थः।

**प्राप्तम्। भोजनलोपेऽप्यद्भिर्वाऽन्येन वा द्रव्येणाविरुद्धेन प्रतिनिधानन्यायेन प्राणाग्निहोत्रस्यानुष्ठानमिति।।४०।।**

**अत उत्तरं पठति–**

## उपस्थितेऽतस्तद्वचनात्।।४१।।

**उपस्थिते भोजनेऽतस्तस्मादेव भोजनद्रव्यात् प्रथमोपनिपतितात् प्राणाग्निहोत्रं निर्वर्तयितव्यम्। कस्मात्?**

### *प्रकटार्थविवरणम्*

विधीयत इत्यर्थः। उपसंहरति— **अत इति**। गुणभूतस्य द्रव्यस्य लोपोऽपि[लोपेऽपि] मुख्यस्य यथासंभवं संपादनमिति न्यायेनैवं प्राप्तम्। किं तदित्याह— **भोजनलोपेऽपीति**। मुख्यसाधनासंभवेऽधिकारी स्वाधिकारनिष्पत्तये यत्साधनान्तरमुपादत्ते तत् प्रतिनिधानं, यथा सोमाभावे पूतीकोपादानम्; तेनैव न्यायेनेहापि संभविष्यतीत्यर्थः।

**उपस्थितेऽतस्तद्वचनात्**। सिद्धान्तसूत्रं विवृणोति— **उपस्थित इत्यादिना**। परार्थसाध्यतां वाक्यं विदधातु; ततः किमायातं

### *भाष्यभावप्रकाशिका*

इति। नन्वेवमपि भोजनप्रयुक्तभक्तागमनोपजीवित्वाद् भोजनलोपे लोपः स्यादिति, तत्राह— **अतो गुणलोपे चेति**। अपवादाभाव उत्सर्गस्थितिरिति न्यायेन भोजनाभावेन भक्तद्रव्याभावेऽपि पयआदिना तत्कर्तव्यमित्यर्थः।

तद्धोमीयमिति तच्छब्देन प्रकृतसाकाङ्क्षेण स्वाभिधानपर्यवसानाय यद्भक्तं प्रथममागच्छेदिति सन्निहितं भोजनार्थभक्तमवगमयितव्यमिति। न स्वतन्त्रद्रव्यं प्रयोक्तुं शक्नोति तच्छब्द इत्याह— **तथा हीति**। अतो भोजनार्थावगतभक्तद्रव्योद्देशेन तद्धोमीयमित्याहुतिकर्म-

### *न्यायनिर्णयः*

सप्तमे स्थितम्— 'उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्'। 'मासमग्निहोत्रं जुहोती'त्यत्रैवाग्निहोत्रशब्दो नित्याग्निहोत्रधर्मानिहातिदिशेन्न वेति संदेहे गौणत्वाभावादग्निहोत्रशब्दस्य जुहोतिसामानाधिकरण्याविशेषादत्रापि नामधेयत्वान्नातिदिशेदिति प्राप्ते— सिद्धे कर्मभेदेऽनेकार्थत्वस्यान्याय्यत्वादेकत्राग्निहोत्रशब्दस्य मुख्यत्वादन्यत्र गौणत्वान्नित्याग्निहोत्रे च नामप्रवृत्तिनिमित्तस्याग्निदेवतासंबन्धस्य भावात् तत्रैव मुख्यत्वात् परशब्दस्य परत्र सादृश्यात्प्रवृत्तिरिति तत्सिद्ध्यर्थं नित्यधर्मानतिदिशति। क्रियाया नित्याग्निहोत्रस्याभिधानं नामधेयमग्निहोत्रपदमुक्तं तत्प्रख्याधिकरणे तस्यान्यत्र श्रवणे विधिप्रदेशो विधेयधर्मातिदेशः स्यादिति सूत्रार्थः। तथा च यथा कुण्डपायिनामयनगते कर्मणि प्रकरणान्तरान्नैयमिकाग्निहोत्राद्भिन्नत्वेन सिद्धे नैयमिकाग्निहोत्रवाचकाग्निहोत्रशब्दप्रयोगात् तद्धर्मातिदेशरूपधर्मान्तरप्राप्तिः, तथा नैयमिकाग्निहोत्रे पयोघृतादीनां प्रसिद्धत्वात् प्राणाग्निहोत्रे च नित्याग्निहोत्रवाचिशब्दात् तद्धर्माणां पयःप्रभृतीनां प्राप्तौ भोजनागतभक्तद्रव्यकताविधानार्थं तद्यद्भक्तमिति वाक्यमित्यर्थः। तथापि भोजनार्थभक्तोपजीवित्वात् प्राणाग्निहोत्रस्य भोजनलोपे लोपः स्यात्, तत्राह— **अत इति**। अग्न्याधाने पवमानेष्टिषु 'अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपती'त्याद्यासु प्रकृतौ 'अग्निहोत्रहवण्या हविर्निर्वपेदि'ति विहितो हविर्निर्वापोऽतिदेशेन प्राप्तः। न चाधानकालेऽग्निहोत्रमिति कुतोऽग्निहोत्रहवणी? येन [तेन] तन्निर्वापस्य तल्लोपे लोपप्राप्तौ दाशमिकं सिद्धान्तमाह— **गुणेति**। विकृतौ हि कार्यद्वारा पदार्थाः प्राप्नुवन्ति। तेन हविःसंस्कारार्थो निर्वापः प्रथमं प्राप्तः, तद्द्वारा च तदङ्गमग्निहोत्रहवणी पश्चात् प्राप्नोति। तेनाङ्गस्याग्निहोत्रहवण्या लोपेऽपि मुख्यस्य लोपो नास्तीति प्रकृते भोजनलोपेऽपि न लुप्यते प्राणाग्निहोत्रमित्यर्थः। **प्रतिनिधिन्यायेनेति**। अग्निहोत्रादिनित्यकर्मसु घृतव्रीह्याद्यलाभे कर्मोत्सर्गे प्राप्ते नित्यानामनित्यानां वाऽऽरब्धानामवश्यकार्यत्वात् प्रतिनिहितैः श्रुतैश्च क्रियमाणप्रयोगस्याविशिष्टत्वेन प्रत्यभिज्ञानात् प्रतिनिधायापि कर्म कर्तव्यमित्यधिकारलक्षणे स्थितम्। तथा च भोजनलोपेऽपि जलादिना केनापि द्रव्येण प्राणाग्निहोत्रमनुष्ठेयमित्यर्थः।।४०।।

अङ्गलोपेऽपि प्रधानस्य न लोपोऽस्तीति प्राप्ते सिद्धान्तयति— **अत इति**। तत्र प्रतिज्ञां विभजते— **उपेति**। 'पूर्वोऽतिथिभ्योऽश्नीया'दिति श्रुत्या विशिनष्टि— **प्रथमेति**। भोजनाभावे तत्प्रयुक्तद्रव्याभावेऽपि स्वतन्त्रद्रव्येण प्राणाग्निहोत्रं निर्वर्त्यमिति शङ्कते— **कस्मादिति**। सौत्रं हेतुमादत्ते— **तदिति**। तद्धोमीयमिति तच्छब्देन प्रकृताकाङ्क्षेण स्वोक्तिपर्यवसानार्थं

**तद्वचनात्। तथाहि– 'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयम्' (छा.उ. ५।१९।१) इति सिद्धवद् भक्तोपनिपातपरामर्शेन परार्थद्रव्यसाध्यतां प्राणाहुतीनां विदधाति। ता अप्रयोजकलक्षणापन्नाः सत्यः कथं भोजनलोपे द्रव्यान्तरं प्रतिनिधापयेयुः। न चात्र प्राकृताग्निहोत्रधर्मप्राप्तिरस्ति। कुण्डपायिनामयने हि 'मासमग्निहोत्रं जुहोती'ति विध्युद्देशगतोऽग्निहोत्रशब्दस्तद्वद्भावं विधापयेदिति युक्ता तद्धर्मप्राप्तिः। इह पुनरर्थवादगतोऽग्निहोत्रशब्दो न तद्वद्भावं विधापयितुमर्हति। तद्धर्मप्राप्तौ चाभ्युपगम्यमानायामग्न्युद्धरणादयोऽपि प्राप्येरन्। न चास्ति संभवः। अग्न्युद्धरणं तावद्धोमाधिकरणभावाय। न चायमग्नौ होमो भोजनार्थताव्याघातप्रसङ्गात्। भोजनोपनीतद्रव्यसंबन्धाच्चाऽऽस्य एवैष होमः। तथा च जाबालश्रुतिः 'पूर्वोऽतिथिभ्योऽश्नीयादि'त्यास्याधारामेवेमां**

### *प्रकटार्थविवरणम्*

प्रतिनिधौ इत्याशङ्क्याह— **ता अप्रयोजकेति**। अन्यार्थागतद्रव्योद्देशेनाहुतीनां विधानात् ता आहुतयो न द्रव्याक्षेपकाः, यथा आमिक्षार्थदध्यानयनाश्रयेण विहितं वाजिनकर्म न दध्यानयनं प्रयोजयति, तद्वत्; अतः प्रयोजकत्वसामर्थ्याभावान्न प्रतिनिधापकत्वमित्यर्थः। अग्निहोत्रशब्दस्यार्थवादगतस्य स्तुतित्वेनाप्युपपत्तेर्न प्रसिद्धाग्निहोत्रधर्मप्रापकत्वं संभवतीत्याह— **न चात्रेति**। इतश्च न प्रसिद्धाग्निहोत्रधर्मप्राप्तिरित्याह— **तद्धर्मप्राप्तौ चेति**। होमाय गार्हपत्यादग्नेरुद्धरणमाहवनीये च क्षेपः उपस्थानं परिसमूहनं पर्युक्षणमित्येवमादयोऽपि धर्माः प्रसज्येरन्, अपवादाभाव उत्सर्गसिद्धेरित्यर्थः। तेऽपि भवन्त्विति न वाच्यमित्याह— **न चास्तीति**। कथमसंभव इत्याकाङ्क्षायां अग्न्युद्धरणासंभवं तावदाह— **उद्धरणं तावदिति**। भक्तद्रव्यस्य भोजनार्थताव्याघातप्रसङ्गाच्चेन्नाग्नौ होमः, तर्हि कुत्रायं होम इत्याशङ्क्याह— **भोजनोपनीतेति**। भोजनायोपस्थितं यद्द्रव्यं तत्साध्यत्वादास्ये मुखेऽयं होम इत्यर्थः।

### *भाष्यभावप्रकाशिका*

विधानादाहवनीयाभावे होमाभाववदुद्देश्याभावे चोपादेयाप्रवृत्तेरामिक्षार्थदध्यानयनाभावे वाजिनकर्माभाववद्भोजनार्थद्रव्यलोपे लोप एव प्राणाग्निहोत्रस्येत्याह— **ता अप्रयोजकेति**। यदुक्तमग्निहोत्रशब्दात् तद्धर्मप्राप्तौ भक्तद्रव्यकतागुणविधिरिति, तत्राह— **न चात्रेति**। अर्थवादगतस्याग्निहोत्रशब्दस्य किंचित्सादृश्यमुपादाय स्तावकत्वेनाप्युपपत्तेरित्यर्थः। विपक्षे दोषमाह— **तद्धर्मप्राप्तौ चेति**। तदपि किमिति न भवेदित्यत आह— **न चास्ति संभव इति**। असंभवमेव विवृणोति— **अग्न्युद्धरणमिति**। अत्राग्न्यधिकरणहोमाभावादग्न्युद्धरणं न संभवतीत्यर्थः। अत्राप्याहुतीनामधिकरणमग्निरिति चेत्, नेत्याह— **न चायमिति**। आहुतीनामग्न्यधिकरणाभावे हेत्वन्तरमाह— **भोजनेति**।

### *न्यायनिर्णयः*

यद्भक्तं प्रथममागच्छेदिति संनिहितं भोजनार्थं भक्तं गमयितव्यमिति न स्वतन्त्रद्रव्यं प्रयोक्तव्यम्, तच्छब्दविरोधादिति व्याचष्टे— **तथा हीति**। सिद्धस्य प्रमितस्यानन्तरप्रकृतस्यार्थस्य यथा तच्छब्देन परामर्शस्तथा, भक्तस्य भोजनार्थमुपनिपातो नामागमनं, तस्य यस्तच्छब्देन परामर्शस्तेन, परार्थं भोजनार्थं यद्भक्तं द्रव्यं तेन साध्यतां निर्वर्त्यतामिति यावत्। भोजनार्थागतभक्तद्रव्योद्देशेन तद्धोमीयमित्याहुतिविधाने फलितमाह— **ता इति**। आहवनीयाभावे होमाभाववदामिक्षार्थदध्यानयनाभावे वाजिनाभाववच्चोद्देश्याभावे सत्युपादेयस्याप्रवृत्तेर्भोजनार्थद्रव्यलोपे लोप एव प्राणाग्निहोत्रस्येत्यर्थः। यत्त्वग्निहोत्रशब्दात् तद्धर्मप्राप्तौ भक्तद्रव्यकतागुणविधानार्थं तद्यद्भक्तमित्यादि वाक्यमिति, तत्राह— **न चेति**। अर्थवादस्थाग्निहोत्रशब्दस्य किंचित्सादृश्यमादाय स्तावकत्वेनापि संभवान्न तद्वशात् प्राणाग्निहोत्रे नैयमिकाग्निहोत्रधर्मप्राप्तिरित्यर्थः। कौण्डपायिनवदित्युक्तं विघटयति— **कुण्डेति**। दार्ष्टान्तिके प्रागुक्तमेव वैषम्यं विशदयति— **इहेति**। प्राणाग्निहोत्रं सप्तम्यर्थः। विपक्षे दोषमाह— **तद्धर्मेति**। तेषामपि प्राप्तौ का हानिः, तत्राह— **न चेति**। असंभवमेव तेषां साधयति— **अग्नीति**। अग्न्याधारहोमाभावात् प्राणाग्निहोत्रे नाग्न्युद्धरणसिद्धिरित्यर्थः। अस्तु प्रस्तुतेऽपि तदर्थमेवाग्न्युद्धरणं नेत्याह— **न चेति**। आहुतीनामग्न्याधारत्वाभावे युक्त्यन्तरमाह— **भोजनेति**। तर्हि किमिहाहुतीनामधिकरणं, तदाह— **आस्य इति**।

**होमनिर्वृत्तिं दर्शयति। अत एव चेहापि सांपादिकान्येवाग्निहोत्राङ्गानि दर्शयति– 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' (छा.उ. ५।१८।२) इति। वेदिश्रुतिश्चात्र स्थण्डिलमात्रोपलक्षणार्था द्रष्टव्या, मुख्याग्निहोत्रे वेद्यभावात्। तदङ्गानां चेह संपिपादयिषितत्वात्। भोजनेनैव च कृतकालेन संयोगान्नाग्निहोत्रकालावरोधसंभवः। एवमन्येऽप्युपस्थानादयो धर्माः केचित् कथंचिद्विरुध्यन्ते। तस्माद्भोजनपक्ष एवैते मन्त्रद्रव्यदेवतासंयोगात् पञ्च होमा निर्वर्तयितव्याः। यत्त्वादरदर्शनवचनम्, तद्भोजनपक्षे प्राथम्यविधानार्थम्। न ह्यस्ति वचनस्यातिभारः। न त्वनेनास्य नित्यता शक्यते दर्शयितुम्। तस्माद्भोजनलोपे**

### *प्रकटार्थविवरणम्*

उक्तेऽर्थे श्रुतिसंवादमाह— **तथा चेति**। अग्निहोत्रधर्माणां प्राप्त्यभावे लिङ्गमाह— **अत एव चेति**। प्रसिद्धानां धर्माणां प्राप्तिश्चेत् संपादनं व्यर्थमिति भावः। अग्निहोत्राङ्गानि चेत् संपाद्यन्ते, कथं तर्हि वेदिसंपादनमित्याशङ्क्याह— **वेदिश्रुतिश्चेति**। संस्कृता भूः वेदिरुच्यते। तदभावात् स्थण्डिलमात्रं लक्ष्यत इत्यर्थः। एवं तावदग्न्युद्धरणासंभवं स्फुटीकृत्याग्निहोत्रसंबन्धिनः सायंप्रातःकालस्याप्यत्रोपसंहारो न संभाव्यते, भोजनेनैव नियतकालेन संबन्धादित्याह— **भोजनेनैवेति**। उपस्थानपरिसमूहनादयोऽप्यग्न्यभावादेव न संभाव्यन्त इत्यर्थः। यस्मादग्निहोत्रधर्माणां प्राप्त्यभावात् 'तद्यद्भक्तम्' इत्यस्य द्रव्यविशेषविधायकत्वाभावान्न प्रतिनिधानन्यायावतारः, तस्मादित्युपसंहारः। विशेषवचनेऽस्य[वचनस्य] सामान्यवचनावबाधने न ह्यतिभारोऽस्तीत्यर्थः। इति षड्विंशमादराधिकरणम्।।

### *भाष्यभावप्रकाशिका*

तर्ह्यधिकरणं किमिति चेत्, आस्यमित्याह— **आस्य इति**। श्रुत्यन्तरसामर्थ्यादप्येतदेव गम्यत इत्याह— **तथा चेति**। भोजन एवाग्निहोत्रशब्दप्रयोगादित्यर्थः। यस्मादास्याधारत्वमाहुतीनां यस्माच्चाग्निहोत्रशब्दात्तद्धर्मप्राप्तिः अत एवास्यादीनामाहवनीयादिरूपेण संपादनमित्यत आह[त्याह]— **अत एव चेति**। तद्धर्मप्राप्तौ मुख्यानामेव संभवात् संपादनवैयर्थ्यमित्यर्थः। नन्वितराङ्गाणां संपादनाय संकीर्तनवदस्यापि किं न स्यादित्यत आह— **मुख्याग्निहोत्र इति**। दर्शपूर्णमासवन्मुख्याग्निहोत्रे वेदिकरणाभावादित्यर्थः। मा भून्मुख्याग्निहोत्रे वेदिकरणम्, तथा विभोपादनार्था(?)वेदिरस्त्विति, तत्राह— **तदङ्गानां चेति**। अग्निहोत्रवत् कालद्वयावरोधोऽपि नास्तीत्याह— **भोजनेनैवेति**। ननु धर्मलोपमप्यसहमाना श्रुतिः सुतरां धर्मिलोपं न सहत इत्युक्तमिति, तत्राह— **यत्त्वादरेति**। यस्मिन् पक्षे धर्मी न विलुप्यते तस्मिन् धर्मोऽपि। न त्वेतावता धर्मिणो नित्यत्वसिद्धिरिति भावः। नन्वतिथिभोजनोत्तरकालता स्वामिभोजनस्य विहिता, तत्कथं प्राथम्यविधानमिति, तत्राह— **न ह्यस्तीति**। एतद्व्यतिरिक्तविषयं तदित्यर्थः। इति षड्विंशमादराधिकरणम्।

### *न्यायनिर्णयः*

प्राणाग्निहोत्रे होमाधिकरणमास्यमेवेत्यत्र श्रुत्यन्तरमाह— **तथा चेति**। आहुतीनामास्याधारत्वे प्राणाग्निहोत्रेऽग्निहोत्रशब्दान्नैयमिकाग्निहोत्रधर्मप्राप्तौ च गमकमाह— **अत इति**। तद्धर्मप्राप्तौ मुख्यानामेव संभवात् संपादनवैयर्थ्यमित्यर्थः। 'उर एव वेदि'रित्यत्रावान्तरविशेषमाह— **वेदीति**। अत्रेति प्राणाग्निहोत्रोक्तिः। वेदिकरणस्यापि संपादनार्थमितराङ्गवदिह संकीर्तनं किं न स्यात्, तत्राह— **मुख्येति**। दर्शपूर्णमासवन्मुख्येऽग्निहोत्रे वेदिकरणाभावेऽपि प्रकृते ध्यानार्था वेदिरुच्यतामित्याशङ्क्याह— **तदङ्गानां चेति**। अग्निहोत्रवदग्न्युद्धरणायोगमुक्त्वा कालद्वयावरोधोऽपि नास्तीत्याह— **भोजनेनेति**। अग्न्युद्धरणादावुक्तन्यायमतिदिशति— **एवमिति**। आदिशब्देन परिस्तरणादयो गृह्यन्ते। सिद्धान्तसूत्रार्थमुपसंहरति— **तस्मादिति**। धर्मलोपमपि श्रुतिरसहमाना सुतरां न सहते धर्मिलोपमित्युक्तमनूद्य दूषयति— **यत्त्विति**। धर्मिलोपाभावपक्षे धर्मोऽपि न लुप्यते, न चैतावता धर्मिणो नित्यतेत्यर्थः। अतिथिभोजनोत्तरकालता स्वामिभोजनस्य श्रुतिस्मृतिसिद्धा, तत्कथं प्राथम्यविधानं, तत्राह— **न हीति**। प्राणाग्निहोत्रातिरिक्तविषयं स्वामिभोजनस्योत्तरकालत्वविधानमित्यर्थः। प्राणाग्निहोत्रस्य प्राथम्ये कथमागन्तुकत्वं, तत्राह— **न त्विति**। अनेन प्राथम्यविधानेनेति यावत्। अस्य प्राणाग्निहोत्रस्येत्यर्थः। तस्य नित्यतां विना प्राथम्यसिद्धेरुक्तत्वादिति भावः। आदरोक्तेरन्यथासिद्धौ फलितमाह—

**लोप एव प्राणाग्निहोत्रस्येति।।४१।।**

।। इति षड्विंशमादराधिकरणम् ।।

२७।।तन्निर्धारणाधिकरणम्।।सू. ४२।।

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्।।४२।।**

**सन्ति कर्माङ्गव्यपाश्रयाणि विज्ञानानि– 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा.उ. १।१।१) इत्येवमादीनि। किं तानि नित्यान्येव स्युः कर्मसु, पर्णमयीत्वादिवदुतानित्यानि गोदोहनादिवदिति विचारयामः। किं तावत्**

*शारीरकन्यायसंग्रहः*

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्।।४२।।** अङ्गाश्रितोपासनानि प्रधानार्थमङ्गानि प्रयोजयता प्रयोगवचनेन क्रत्वङ्गतयोपादेयानि, साध्यफलव्यपदेशशून्यत्वे सति क्रत्वङ्गव्यपाश्रयेण विहितत्वात्; यदेवं तत्तथा, यथा पर्णमयीत्वादि इत्यनुमानम् 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धया उपनिषदा तदेव वीर्यवत्तरं भवति' 'तां चेदविद्वानुद्गास्यसि' इत्यादिश्रौतैर्लिङ्गैः विद्यारहितानामपि साङ्गे कर्मणि प्रवृत्तिविषयैः श्रुतार्थापत्तिलक्षणैः विद्यानामनङ्गत्वसाधकैः बाध्यते, सति चानङ्गत्वे सत्रन्यायेन फलं च साध्यतया विपरिणम्यत इत्युक्तम्।

*प्रकटार्थविवरणम्*

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्।** उद्गीथादिकर्माङ्गालम्बनान्युपासनानि विषय इत्याह— **सन्तीति**। उभयविधोदाहरणदर्शनात् संशयमाह— **किं तानीति**। पर्णमयीत्वं पालाशमयीत्वम्; तद् यथा जुह्वाः क्रतुषु नित्यं तद्वन्नित्यत्वं भवतु, किं वा यथा प्रकृताप्रणयनाश्रयो गोदोहनोपरागः पशुभ्यो विधीयते तद्वन्नैमित्तिकत्वमित्यर्थः। पूर्वत्रानित्यभोजनार्थभक्तद्रव्यप्रयुक्तस्य होमस्यानित्यत्वमुक्तम्। इह तथाविधानित्यत्वहेतोरभावात् नित्यक्रत्वङ्गोपजीविनामुद्गीथाद्युपासनानां साङ्गकर्मानुष्ठापकेन प्रयोगविधिना परिगृहीतत्वान्नित्यत्वमित्याह— **किं तावदिति**। ननु प्रयोगविधिरङ्गानुष्ठानं प्रयोजयति, उपासनानां च क्रतुसन्निधावनधीतानां

*भाष्यभावप्रकाशिका*

**तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्।** विषयं दर्शयति— **सन्तीति**। विचारमाह— **किन्तानीति**। पूर्वपक्षं दर्शयति— **नित्यानीति**। नन्वङ्गत्वे सति प्रयोगविधिपरिग्रहः, प्रयोगवचनपरिग्रहे चाङ्गत्वमिति परस्पराश्रयत्वम्। किं च स्वप्रकरणे

*न्यायनिर्णयः*

**तस्मादिति**। प्रतिनिधिन्यायो नावतरतीति फलितं वक्तुमितीत्युक्तम्।।४१।। इति षड्विंशमादराधिकरणम्।।

वैश्वानरविद्याङ्गप्राणाहुतीनामनित्यत्वोक्तिप्रसक्त्या कर्माङ्गसङ्गिनामपि ज्ञानानामनित्यत्वमाह— **तन्निर्धारणेति**। अङ्गावबद्धोपासनानि विषयत्वेनोपन्यस्यति— **सन्तीति**। उभयविधदृष्टान्तदृष्ट्या संशयमाह— **किमिति**। यथा द्रव्यसंस्कारकर्मसु क्रत्वर्थेषु फलश्रुतेरर्थवादत्वादगत्या रात्रिसत्राणां विपरिणामेऽपि प्रकृतेषु क्रतूपकारस्य सिद्धत्वाद् विपरिणामायोगात् क्रतूपकारद्वारा पर्णमयीत्वं प्रयाजादिवत् तत्र नित्यमिष्टं तथैतान्यङ्गसङ्गीन्युपासनानि कर्मसु नित्यान्येवेत्येको विकल्पः। यथा प्राकृताप्रणयनाश्रयो गोदोहनोपरागः पशुभ्यो विधीयते, यथा च कांस्योपरागस्तदाश्रयो ब्रह्मवर्चसफलोऽभिलप्यते, बैल्वश्चान्नाद्यफलो यूपाश्रयो दृश्यते, तथैतान्युपासनानि कर्मस्वनित्यानीति विकल्पान्तरम्। अत्र चाङ्गाश्रितोपास्तीनां क्रतुषु नित्यत्वानित्यत्वनिरूपणद्वारा वाक्यार्थधीहेतुनिरूपणात् पादादिसंगतिः। पूर्वपक्षे यथोक्तोपास्तीनां क्रतुषु पर्णतादिवदावश्यकत्वम्। सिद्धान्ते तद्राहित्यमित्यङ्गीकृत्य विमृशति— **किमिति**। अनित्यभोजनाश्रित-

**प्राप्तम्? नित्यानीति। कुतः? प्रयोगवचनपरिग्रहात्। अनारभ्याधीतान्यपि ह्येतान्युद्गीथादिद्वारेण क्रतुसंबन्धात् क्रतुप्रयोगवचनेनैवाङ्गान्तरवत् संस्पृश्यन्ते। यत्त्वेषां स्ववाक्येषु फलश्रवणम्– 'आपयिता ह वै कामानां भवति' (छा.उ. १।१।७) इत्यादि, तद् वर्तमानापदेशरूपत्वादर्थवादमात्रमेवापापश्लोकश्रवणादिवन्न फलप्रधानम्। तस्माद् यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' (तै.सं.३।५।७।२) इत्येवमादीनामप्रकरणपठितानामपि जुह्वादिद्वारेण क्रतुप्रवेशात् प्रकरणपठितवन्नित्यतैवमुद्गीथाद्युपासनानामपीति।**

**एवं प्राप्ते ब्रूमः– तन्निर्धारणानियम इति। यान्येतान्युद्गीथादिकर्मगुणयाथात्म्यनिर्धारणानि रसतम आप्तिः समृद्धिर्मुख्यप्राण आदित्य इत्येवमादीनि नैतानि नित्यवत् कर्मसु नियम्येरन्। कुतः? तद्दृष्टेः। तथा**

### *प्रकटार्थविवरणम्*

क्रत्वङ्गत्वाभावात् कथं प्रयोगविधिप्रयोज्यत्वमित्याशङ्क्याह— **अनारभ्याधीतान्यपीति**। यद्यप्यनारभ्याधीतानि क्रतुसन्निधावनधीतान्युपासनानि, तथापि 'य एवं विद्वान् गायति' इत्यादिवाक्यप्रमाणेन क्रतुसंबन्धसिद्धेः क्रतुप्रयोगवचनेन संस्पृश्यन्ते। यथा पर्णमयीत्वस्यानारभ्याधीतत्वेऽपि जुहूद्वारेण 'यस्य पर्णमयी जुहूर्भवति' इति वाक्येन क्रत्वङ्गत्वसिद्धये प्रयोगवचनप्रयोज्यत्वं, तद्वदित्यर्थः। ननूपासनानां पृथक् फलश्रवणात् स्वातन्त्र्यमेवास्तु, किं क्रत्वङ्गत्वकल्पनयेत्याशङ्क्याह— **यत्त्वेषामिति**। साध्यरूपतया फलानिर्देशात्र स्वातन्त्र्यमित्यर्थः। पूर्वपक्षमुपसंहरति— **तस्मादिति**।

नैमित्तिकान्युपासनानि गोदोहनादिवत्; न तेषां नियमेन क्रतुष्वन्वय इत्याह— **एवं प्राप्ते ब्रूम इति**। उद्गीथादयः कर्मगुणाः कर्माङ्गभूताः, तेषां यानि यथास्वरूपोपासनानि न तानि नित्यपर्णमयीत्वादिवत् कर्मसु नियम्येरन् इति संबन्धः। तान्युदाहरति— **रसतम इति**। सारिष्ठगुण उद्गीथः; आप्तिगुणः, समृद्धिगुणः; तथा मुख्यप्राणदृष्टिविषयत्वान्मुख्यः प्राणः; आदित्यदृष्टिविषयत्वादादित्य

### *भाष्यभावप्रकाशिका*

पठितानि प्रयोगवचनेन परिगृह्यन्त इह तु तदभावात् कथं तेन परिगृह्यत इत्याशङ्क्याह— **अनारभ्याधीतान्यपीति**। अव्यभिचरितक्रतुसंबन्धजुहूद्वारा पर्णमयीत्वादिवदित्यर्थः। ननु फलान्तरश्रवणात् कर्मान्तरत्वमिति, तत्राह— **यत्त्वेषामिति**। न फलप्रधानमिति। 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादि'ति न्यायादित्यर्थः। अङ्गाश्रितोपासनानि प्रयोगवचनेन क्रत्वङ्गतयोपादेयानि साध्यफलव्यपदेशशून्यत्वे सति क्रत्वङ्गव्यपाश्रयेण विहितत्वात् पर्णमयीत्वादिवदित्यभिप्रेत्योपसंहरति— **तस्मादिति**। आदिशब्देन यथोक्ते [यदाङ्क्ते] चक्षुरेव भ्रातृव्यस्य वृङ्क्ते इत्यादि दर्शयति।

### *न्यायनिर्णयः*

प्राणाग्निहोत्रानित्यत्ववन्नित्यकर्माङ्गाश्रितोपास्तीनां नित्यतेति पूर्वपक्षयति— **नित्यानीति**। क्रतुप्रकरणापाठात् प्रयोगवचनापरिग्रहादुपास्तीनां नास्ति क्रतुषु नित्यतेति शङ्कते— **कुत इति**। अव्यभिचरितक्रतुसंबन्धजुहूद्वारा पर्णतावदुद्गीथादिद्वारेणोपास्तीनामपि क्रतुसंबन्धात् प्रयोगवचनपरिग्रहादमूषां क्रतुषु नित्यतेत्याह— **प्रयोगेति**। क्रत्वङ्गताप्रयोगवचनपरिग्रहयोरन्योन्याश्रयत्वात् प्रकरणान्तरत्वाच्च नोपास्तीनां तत्परिग्रहः स्यादित्याशङ्क्याह— **अनारभ्येति**। अङ्गान्तरं पर्णमयीत्वादि। उपास्तीनां फलान्तरश्रुतेरस्ति स्वातन्त्र्यमित्याशङ्क्याह— **यत्त्विति**। क्रतूपकारद्वारेण व्यवहितफलोपादानादव्यवहितश्रुतफलस्य साध्यत्वविपरिणामः श्रेयानित्यपापश्लोकश्रुतेरपि फलविधित्वमेवेत्याशङ्क्याह— **नेति**। क्वचिदगत्या विपरिणामेऽपि प्रकृते कर्माङ्गत्वं गतिरिति न विपरिणामसिद्धिरित्यर्थः। अङ्गाश्रितोपासनानि प्रयोगवचनेन क्रत्वङ्गतयोपादेयानि साध्यफलोक्तिशून्यत्वे सति क्रत्वङ्गसङ्गितया विहितत्वात्, पर्णमयीत्वादिवदिति मत्वोपसंहरति— **तस्मादिति**। एवमादीनामित्यादिशब्देन 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' 'यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियत' इत्यादि गृह्यते। जुह्वादिद्वारेणेत्यत्रादिपदेन कर्तृग्रहणम्।

उद्गीथाद्युपासनानां कर्मसु नित्यत्वादविदुषो न कर्मेति प्राप्तमनूद्य सिद्धान्तयति— **एवमिति**। प्रतिज्ञां विभजते— **यानीति**। **नित्यवत्** पर्णमयीत्वादिवदित्येतत्, अनुमानतो नियमे निवेदिते नानियमप्रतिज्ञेति शङ्कते— **कुत इति**। तत्र सूत्रपदमवतारयति—

**ह्यनियतत्वमेवंजातीयकानां दर्शयति श्रुतिः– 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' (छा.उ. १।१।१०) इत्यविदुषोऽपि क्रियाभ्यनुज्ञानात्। प्रस्तावादिदेवताविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनाध्यवसानदर्शनात्– 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि' (छा.उ. १।१०।९) 'तां चेदविद्वानुद्गास्यसि' (छा.उ. १।१०।१०) 'तां चेदविद्वान् प्रतिहरिष्यसि' (छा.उ. १।१०।११) इति च। अपि चैवंजातीयकस्य कर्मव्यपाश्रयस्य विज्ञानस्य पृथगेव कर्मणः फलमुपलभ्यते कर्मफलसिद्ध्यप्रतिबन्धस्तत्समृद्धिरतिशयविशेषः कश्चित्– 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद। नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा.उ. १।१।१०) इति। तत्र नाना त्विति विद्वदविद्वत्प्रयोगयोः पृथक्करणाद् वीर्यवत्तरमिति च तरप्प्रत्ययप्रयोगाद् विद्याविहीनमपि कर्म वीर्यवदिति गम्यते। तच्चानित्यत्वे विद्याया उपपद्यते। नित्यत्वे तु कथं तद्विहीनं कर्म वीर्यवदित्यनुज्ञायेत? सर्वाङ्गोपसंहारे हि वीर्यवत् कर्मेति स्थितिः।**

### *प्रकटार्थविवरणम्*

उद्गीथ इत्यादीनीति। सूत्रस्य प्रतिज्ञाभागं व्याख्याय हेतुभागमवतारयति— **कुत इति**। येन कर्मणः फलं, न ज्ञानात् अनभिज्ञस्यापि हरीतकीभक्षणे विरेकदर्शनात्; तेन कारणेन यो रसतमादिगुणकमुद्गीथं वेद यश्च न वेद तावुभावपि ज्ञाज्ञौ कर्म कुरुत इति योजना। विद्यायाः कर्माङ्गत्वनियमाभावे लिङ्गान्तरमाह— **प्रस्तावादीति**। 'तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यती'ति चाक्रायणेनाक्षेपकरणादविद्वत्ता सिद्धेत्यर्थः। पृथग्घ्यप्रतिबन्धः फलमित्येतद् व्याचष्टे— **अपि चेत्यादिना**। 'तेनोभौ कुरुत' इति पूर्वपक्षमुपन्यस्य स्वयमेव तन्निरस्यति— **नाना त्विति**। विद्याविद्ये नाना भिन्नफले; दृष्टो हि मणिविक्रयणे शबराद् वणिजो ज्ञानाधिक्यात् फलातिशयः। तस्माद्यदेव कर्म विद्यया प्रकृतोद्गीथादिविषयया करोति, श्रद्धया आस्तिक्यबुद्ध्या, तथोपनिषदा देवताध्यानेनेत्यर्थः। श्रुतेर्विवक्षितांशमाह— **तत्रेति**।

### *भाष्यभावप्रकाशिका*

तद्दृष्टेरनियमदृष्टेरिति सूत्रपदं व्याचष्टे— **तथा हीति**। श्रौतैर्लिङ्गैर्विद्यानामनङ्गत्वसाधनैरनुमानं बाध्यत इत्यर्थः। पृथक् फलश्रवणादपि न कर्माङ्गत्वमित्याह— **अपि चैवमिति**। ननु विज्ञानाभावे कर्मणः फलं प्रतिबध्यते चेद् विज्ञानस्य कर्माङ्गत्वं स्यादिति, तत्राह— **तत्समृद्धिरिति**। कर्मफलस्य वीर्यवत्तरत्वमित्यर्थः। फलभेदे प्रमाणमाह—**तेनोभौ कुरुत इति**। किमेतावता सिद्धमिति, तदाह— **तत्र नानात्विति**। अङ्गिमात्रस्य फलं वीर्यवत्त्वमङ्गसंहितस्यैतदभ्यनुज्ञा न दोषायेति, तत्राह— **सर्वाङ्गेति**।

### *न्यायनिर्णयः*

**तद्दृष्टेरिति**। तस्यानियमस्य दृष्टेरिति व्याचक्षाणः श्रौतैर्लिङ्गैर्विद्यानामनङ्गत्वसाधनैरनुमानं बाध्यमित्याह— **तथा हीति**। तेनेत्योङ्काराख्यमक्षरमुक्तम्। एतदक्षरमुद्गीथावयवभूतमेवं रसतमादिगुणकं यो वेद, यश्च न तथा, तावुभावपि ज्ञाज्ञौ कर्म कुरुत इति योजना। विद्यायाः कर्माङ्गत्वानियमे लिङ्गान्तरमाह— **प्रस्तावादीति**। 'तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यति' इति चाक्रायणेनाक्षेपकरणादविद्वत्ता प्रस्तोत्रादेः सिद्धेत्यर्थः। उद्गीथाद्युपास्तीनां पृथक्फलश्रवणादपि न कर्माङ्गतेत्यवशिष्टसूत्रावयवं व्याचष्टे— **अपि चेति**। ज्ञानाभावे कर्मफलप्रतिबन्धे ज्ञानस्य कर्माङ्गता स्यादित्याशङ्क्याह— **तदिति**। कर्मफलस्य वीर्यवत्तरत्वं ज्ञानफलम्, तदभावेऽपि वीर्यवदेव कर्मेत्यर्थः। फलभेदे मानमाह— **तेनेति**। पूर्वपक्षमुपन्यस्य श्रुतिः स्वयमेव तुशब्देन निरस्यति— **नाना त्विति**। भिन्नफलत्वं नानात्वम्। दृष्टं हि मणिविक्रये शबरवणिजोर्ज्ञानभावाभावाभ्यां फलवैलक्षण्यम्। तस्माद् यदेव कर्म विद्यया प्रकृतोद्गीथाद्यर्थया करोति श्रद्धयाऽऽस्तिक्यबुद्ध्या तथोपनिषदा तत्तद्देवताध्यानेनेत्यर्थः। श्रुतेस्तात्पर्यमाह— **तत्रेति**। किं तावता ते सिद्धं, तत्राह— **तच्चेति**। विद्याहीनस्य कर्मणो वीर्यवत्त्वं कर्मणि तदनित्यत्वगमकमिति व्यतिरेकतः स्फुटयति— **नित्यत्वे त्विति**। अङ्गिमात्रस्य फलं वीर्यवत्त्वमङ्गसहितस्य तु वीर्यवत्तरत्वमित्यनुज्ञोपपत्तिमाशङ्क्याह— **सर्वेति**।

**तथा लोकसामादिषु प्रतिनियतानि प्रत्युपासनं फलानि शिष्यन्ते– 'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च' (छा.उ. २।२।३) इत्येवमादीनि। न चेदं फलश्रवणमर्थवादमात्रं युक्तं प्रतिपत्तुम्। तथा हि गुणवाद आपद्येत; फलोपदेशे तु मुख्यवादोपपत्तिः। प्रयाजादिषु त्वितिकर्तव्यताकाङ्क्षस्य क्रतोः प्रकृतत्वात् तादर्थ्ये सति युक्तं फलश्रुतेरर्थवादत्वम्। तथाऽनारभ्याधीतेष्वपि पर्णमयीत्वादिषु। न हि पर्णमयीत्वादीनामक्रियात्म-**

### *प्रकटार्थविवरणम्*

किं च लोकदृष्ट्या सामाद्युपासनेषु प्रतिनियतफलोपदेशादपि न कर्माङ्गत्वमित्याह— **तथेति**। आवृत्ताः तिर्यञ्चः। कल्पन्ते भोगाय समर्था भवन्ति अस्मै विदुषे। यदुक्तं फलश्रवणमर्थवादमात्रमिति, तत्राह— **न चेदमिति**। **तथा हीति**। अर्थवादमात्रत्वे सति गुणवाद एवंगुणकमुपासनमिति स्तुतिलक्षणा प्रसज्येत। फलोपदेशकत्वे पुनर्मुख्य एवार्थो लभ्यते। न च मुख्ये संभवति लक्षणाश्रयणं वाच्यम्। तस्मात् सत्रन्यायेन साध्यतया फलं परिणम्यत इति भावः। नन्वेवं सति 'यत्प्रयाजानूयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै' इत्यत्रापि वर्तमानापदिष्टस्य फलस्य कामोपबन्धकरणलक्षणपरिणामाश्रयणेनानित्यत्वमेवोपपद्येतेत्याशङ्क्याह— **प्रयाजादिष्विति**। करणं सेतिकर्तव्यमेव कार्यं साधयति इति लोके नियमात् करणस्य क्रतोरितिकर्तव्यताकाङ्क्षाऽस्ति; तस्य प्रकृतत्वात् प्रकरणप्रमाणेनाधिकारशून्यानां प्रयाजादीनां क्रतूपकारकत्वे सति तत्फलेनैव फलवत्त्वाद् युक्तं तत्फलश्रुतेः अर्थवादत्वम्। उपासनायां पुनः न तथा क्रतुप्रकरणे समाम्नानमिति वैषम्यमित्यर्थः। ननु क्रतुप्रकरणाम्नानाभावेऽपि पर्णमयीत्वादिषु फलश्रवणस्य अर्थवादत्वं दृष्टम्; तथोपासनेष्वपि भविष्यतीत्याशङ्क्याह— **तथेति**। क्रतुमनारभ्य अप्रक्रम्य अधीतेष्वपि पर्णमयीत्वादिषु फलश्रवणस्य युक्तमर्थवादत्वम् योग्यानुपलब्धिबाधात्, वर्तमानायां जुहूसत्तायां वर्तमानमपापश्लोकश्रवणं योग्यत्वे सत्युपलभ्येत, न चोपलभ्यत इत्यर्थः। किंच क्रिया फलसाधनं भवति। पर्णमयीत्वादीनां च अक्रियात्मकत्वान्नान्याश्रयमन्तरेण स्वत एव साधकत्वं घटत इत्याह— **न हि पर्णमयीत्वादीनामिति**। नन्वक्रियात्मकत्वाच्चेत्

### *भाष्यभावप्रकाशिका*

कर्मफलसमृद्धिव्यतिरिक्तमपि विद्यायाः फलं श्रूयत इत्याह— **तथा लोकेति**। 'आपयिता ह वै कामाना'मित्यादिफलान्तरश्रवणस्यार्थवादरूपत्वान्न फलप्रधानत्वमिति। उद्गीथाद्युपासनानां कर्मसु नित्यतोक्तेति चेत्, तत्राह— **न चेति**। **गुणवाद आपद्येतेति**। अर्थवादमात्रत्वे विधेयप्राशस्त्यलक्षणया अत्यन्तपरोक्षवृत्तिः स्यात्। फलपरत्वे तु वर्तमानापदेशिनोऽपि साक्षात्फलप्रतीतिः। ततो मुख्ये संभवति लक्षणाश्रयणमनुपपन्नमित्यर्थः। नन्वेवं तर्हि प्रयाजादिसंबन्धफलेष्वपि तत् स्यादित्यत आह— **प्रयाजादिष्वपीति**। प्रयाजादीनां तत्प्रकरणपठिततया दर्शाद्यङ्गत्वान्न पृथक्फलत्वमित्यर्थः। ननु पर्णमयीत्वादीनां प्रकरणाभावेऽपि वर्तमानापदेशात् पृथक्फलत्वं न दृश्यत इति द्रव्यसाकाङ्क्षत्वात् पर्णमयीत्वादित्यस्य च पुरुषार्थत्वाय क्रियासंबन्धसापेक्षत्वाज्जुहूप्रकृतिद्रव्यसमर्पकवाक्यात् क्रतुसंबन्धः केवलद्रव्यस्य पृथक्फलत्वानुपपत्तेरित्यर्थः। ननु गोदोहनस्यापि द्रव्यत्वात् पर्णमयीत्वादिवत्क्रतुसंबन्ध इति। मैवम्; उभयाकाङ्क्षाऽभावात् तद्वाक्येन संबन्धानुपपत्तेः। तथाहि— चमसस्य प्रणयनद्रव्यस्य समर्पितस्यादन्यतरस्याकाङ्क्षा न विद्यते।

### *न्यायनिर्णयः*

कर्मसमृद्ध्यतिरिक्तमपि फलं विद्यायाः श्रुतम्, ततोऽपि तस्या न कर्माङ्गतेत्याह— **तथेति**। **लोकसामादिषु** लोकदृष्ट्या सामाद्युपासनेष्विति यावत्। कल्पन्ते भोगाय समर्था भवन्त्यस्मै विदुषे लोका भोगभूमयो भूमेरुपरिष्टात् ततोऽधस्ताच्च व्यवस्थिता ऊर्ध्वा आवृत्ताश्चेत्युक्ताः। 'आपयिता ह वै कामाना'मित्यादेरर्थवादत्वान्न (च) फलप्रधानतेत्युद्गीथाद्युपास्तीनां कर्मसु नित्यत्वोक्तिरित्याशङ्क्याह— **न चेति**। अर्थवादमात्रत्वे फलश्रुतेर्विधेयप्राशस्त्यलक्षणयाऽत्यन्तपरोक्षा वृत्तिः स्यात्। फलपरत्वे तु वर्तमानापदेशिनोऽपि साक्षात्फलप्रतीतेर्मुख्यवादसिद्धिः। ततो मुख्ये संभवति लक्षणाश्रयणमयुक्तमित्याह— **तथा हीति**। तर्हि प्रयाजादिष्वपि फलश्रुतेर्नार्थवादमात्रत्वं, तत्राह— **प्रयाजादिष्विति**। दर्शपूर्णमासादिप्रकरणस्थत्वेन प्रयाजादीनां तदङ्गत्वान्न पृथक्फलवत्त्वमिति तत्फलश्रुतेरर्थवादतेत्यर्थः। तर्हि पर्णमयीत्वादिषु प्रकरणाभावात् पृथक्फलवत्त्वसिद्धेर्न फलश्रुतेरर्थवादमात्रत्वं, तत्राह— **तथेति**। किं तेषां साक्षादेव फलवत्त्वं किंवा क्रतुद्वारेति विकल्प्याद्यं दूषयति— **न हीति**। द्वितीये क्रतोर्द्रव्यसाकाङ्क्षत्वात्पर्णमयीत्वस्य च

**कानामाश्रयमन्तरेण फलसंबन्धोऽवकल्पते। गोदोहनादीनां हि प्रकृताप्प्रणयनाद्याश्रयलाभादुपपन्नः [१]फले विधिः। तथा बैल्वादीनामपि प्रकृतयूपाद्याश्रयलाभादुपपन्नः फलविधिः। न तु पर्णमयीत्वादिष्वेवंविधः कश्चिदाश्रयः प्रकृतोऽस्ति। वाक्येनैव तु जुह्वाद्याश्रयतां विवक्षित्वा फलेऽपि विधिं विवक्षतो वाक्यभेदः स्यात्। उपासनानां तु क्रियात्मकत्वाद् विशिष्टविधानोपपत्तेरुद्गीथाद्याश्रयाणां फले विधानं न विरुध्यते। तस्माद् यथा क्रत्वाश्रयाण्यपि**

### *प्रकटार्थविवरणम्*

फलसंबन्धो नोपपद्यते, तर्हि 'गोदोहनेन पशुकामस्य प्रणयेत्' 'कांस्येन ब्रह्मवर्चसकामस्य' 'बैल्वमन्नाद्यकामस्य यूपं कुर्यात्' इत्यादिष्वपि फलसम्बन्धो न स्यादित्याशङ्क्याह— **गोदोहनादीनां हीति**। गोदोहनादिविधानं तावन्न क्रत्वर्थम् 'चमसेनापः प्रणयेत्' इति प्रकृतेनैव क्रतुसिद्धेः। तस्माद्विशेषविधानात् फलार्थतैवेत्यर्थः। 'यूपे पशुं बध्नाति' इति प्रकृतयूपाश्रयणेन बैल्वादिविशेषविधानमपि फलार्थमेवेत्यर्थः। तर्हि जुह्वाश्रयणेन पर्णमयीत्वविशेषविधानमपि फलाय किं नेष्यत इत्याशङ्क्याह— **न तु पर्णमयीत्वादिष्विति**। 'यस्य पर्णमयी जुहूः' इति वाक्यमन्तरेणान्यस्य जुह्वाः क्रत्वर्थत्वे प्रमाणस्यादर्शनात् सर्वक्रतुषु पर्णमय्येव जुहूर्नान्या काचित् पर्णम्यीत्वस्याधारभूता क्रतुशेषतया प्रकृताऽस्ति, यदाश्रयणेन पर्णमयीत्वं फलाय विधीयेतेत्यर्थः। एतदेव वाक्यं जुह्वाः क्रत्वर्थताम्, पर्णमय्याः फलसाधनतां च बोधयतीति न वाच्यमित्याह— **वाक्येनैव त्विति**। एवं पर्णमयीत्वादिफलश्रवणस्यार्थवादत्वमुपपाद्य तद्वैलक्षण्यमुपासनानामाह— **उपासनानां त्विति**। स्वयं क्रियात्मकत्वात् यागादिवत् विशिष्टफलोद्देशेन विधानमुपपद्यते, प्रकरणादिना

### *भाष्यभावप्रकाशिका*

तस्मात् तस्मिन् सीदेति मन्त्रपदानां साकाङ्क्षत्वेऽपीरेषामाकाङ्क्षाऽभावात् संबन्धाभाववदिहापि संबन्धाभावः। तस्मात् क्रत्वर्थतया अविधेयत्वात् युक्तं तत्र पृथक्फलविधित्वमित्याह— **गोदोहनेति**। 'बैल्वमन्नाद्यकाम' इत्यादिषु का गतिरिति, तत्राह— **तथा बैल्वादीनामिति**। **वाक्यभेदः स्यादिति**। वाक्येनैव जूहूसंबन्धद्वारेण पर्णतायाः क्रतुराश्रयो ज्ञापनीयः। अतस्तत्र तात्पर्यं कल्पनीयम्। तथा च फलसंबन्धप्रतिपादनेऽपि तात्पर्यं कल्पनीयम्। अतस्तात्पर्यभेदाद् वाक्यभेद इत्यर्थः। उपासनानां तु व्यापार-रूपत्वादव्यापारात्मकपर्णतादिभ्यो वैलक्षण्यात् फलसाधकत्वं युक्तमित्याह— **उपासनानां त्विति**। (विशिष्टा) **विशिष्टविधानोपपत्तेरिति**। स्वर्गकामो यजेतेत्यादिवन्न वाक्यभेदो भवतीत्यर्थः। कल्पसूत्रकारैरेवं कर्माङ्गत्वेनानभिधानादपि विद्यानामनङ्गत्वं कर्मस्ववगम्यत

### *न्यायनिर्णयः*

पुमर्थत्वाय तद्योगापेक्षत्वाज्जुहूप्रकृतिद्रव्यार्पकवाक्यात् क्रतुयोगे पृथक्फलवत्त्वायोगादुक्तफलश्रुतेरर्थवादतेति भावः। गोदोहनादीनामपि तर्हि द्रव्यत्वात् पर्णमयीत्वादिवत्क्रतुसंबन्धान्न पृथक्फलवत्त्वं, तत्राह— **गोदोहनेति**। 'तस्मिन् सीदे'ति मन्त्रपदानां साकाङ्क्षत्वेऽपि 'स्योनं ते सदन'मित्यादीनामाकाङ्क्षाऽभावान्मिथःसंबन्धाभाववद् गोदोहनकांस्यादीनां साकाङ्क्षत्वेऽपि प्रणयनादेश्चमसयूपाद्याश्रय-लाभादाकाङ्क्षाऽभावाद् वाक्यीयक्रतुसंबन्धासिद्धेस्तादर्थ्येनाविधेयत्वाद् युक्तं पृथगेव फलमुद्दिश्य विधानमित्यर्थः। 'बैल्वमन्नाद्यकामस्य यूपं कुर्यात्' 'खादिरं वीर्यकामस्ये'त्यादिषु फले विधानवत् पर्णमयीत्वादिष्वपि स्यादित्याशङ्क्याह— **तथेति**। बैल्वखादिरदध्यादीनामुपपन्नः फले विधिरिति संबन्धः। तत्र हेतुमाह— **प्रकृतेति**। तेषु प्रकृतक्रतुसंबन्धी यूपहोमादिराश्रयोऽस्ति। प्रत्यक्षविधिश्रुतेः साक्षात्कमि-वादयुक्तफलश्रुतेश्च युक्तस्तेषां फले विधिरित्यर्थः। पर्णमयीत्वादिषु वैषम्यमाह— **न त्विति**। **एवंविधो** यूपादितुल्यः, तेषामनारभ्याधीतत्वादित्यर्थः। ननु पर्णमयीत्वादीनां विना प्रकरणं वाक्यादेव फले विधिः स्यान्नेत्याह— **वाक्येनेति**। पर्णतादीनां जुह्वादिद्वारा क्रत्वाश्रयताया वाक्यीयत्वात् तत्र वाक्यतात्पर्यकल्पने फलसंबन्धप्रतिपादने च तत्कल्पने तात्पर्यभेदाद् वाक्यभेदापातान्न युक्तस्तेषु फले विधिरित्यर्थः। पर्णमयीत्वादिषु फलश्रुतेरर्थवादत्वमुपपाद्योद्गीथाद्युपासनेषु तेभ्यो वैषम्यमाह— **उपासनानां त्विति**। तासां व्यापाररूपत्वादव्यापारात्मकपर्णतादिभ्यो वैलक्षण्यात् फलवत्त्वेन विधानसिद्धेः 'स्वर्गकामो यजेते'त्यादिवद् वाक्यभेदाभावाद् युक्तं फलविधानमित्यर्थः। प्रस्तुतोपास्तीनां प्रकरणादिना क्रत्वर्थाश्रितताया: सिद्धत्वात् तदाश्रयणेन गोदोहनादिवद् विशिष्टफलोद्देशेन विधानसंभवे फलितमुपसंहरति— **तस्मादिति**।

---

१. 'फलविधिः' इति पा.।

**गोदोहनादीनि फलसंयोगादनित्यान्येवमुद्गीथाद्युपासनान्यपीति द्रष्टव्यम्। अत एव च कल्पसूत्रकारा नैवंजातीयकान्युपासनानि क्रतुषु कल्पयांचक्रुः।।४२।।**

।। इति सप्तविंशं तन्निर्धारणाधिकरणम् ।।

**२८।।प्रदानाधिकरणम्।।सू.४३।।**

## प्रदानवदेव तदुक्तम्।।४३।।

**वाजसनेयके– 'वदिष्याम्येवाहमिति वाग् दध्रे' (बृ.उ. १।५।२१) इत्यत्राध्यात्मं वागादीनां प्राणः श्रेष्ठोऽवधारितोऽधिदैवतमग्न्यादीनां वायुः। तथा छान्दोग्ये– 'वायुर्वाव संवर्गः' (छा.उ. ४।३।१) इत्यत्राधिदैवतमग्न्यादीनां वायुः संवर्गोऽवधारितः, 'प्राणो वाव संवर्गः' (छा.उ. ४।३।३) इत्यत्राध्यात्मं वागादीनां प्राणः। तत्र संशयः– किं पृथगेवेमौ वायुप्राणावुपगन्तव्यौ स्यातामपृथग्वेति। अपृथगेवेति तावत्**

***शारीरकन्यायसंग्रहः***

**प्रदानवदेव तदुक्तम्।।४३।।** 'यः प्राणः स वायुः' इत्यैक्यव्यपदेशस्य प्रयोजनान्तराभावम्[भावात्] वागादिसंवर्गस्य प्राणस्याग्न्यादिसंवर्गस्य च वायोरैक्यचिन्तनमेव प्रयोजनमिति वाक्यतात्पर्यादैक्यचिन्तनं प्राप्तम्। 'तौ वा एतौ द्वौ संवर्गौ' इति वाक्यस्याप्युपास्यसंवर्गगुणविशिष्टभेदाभिधानस्य भेदेनानुचिन्तने तात्पर्याद् वाक्यप्रमाणाद् भेदेनाप्यनुचिन्तनं प्राप्तम्। तत्रोपास्यतया प्रधानभूतसंवर्गगुणविशिष्टवायुप्राणधर्मिभेदविषयेण वाक्येन गुणभूतसमीरणस्वभावैक्यविषयं वाक्यमध्यात्माधिदैवासाधारणसंबन्धप्रतिपत्तिप्रयोजनं बाध्यत इत्युक्तम्।

***प्रकटार्थविवरणम्***

च क्रत्वर्थतायाः सिद्धत्वात् तदाश्रयणेन फलायोपासनविधानमपि घटते यस्मात् तस्मादित्युपसंहारः। अत्रैव लिङ्गमाह— **अत एव चेति**। इति सप्तविंशं तन्निर्धारणाधिकरणम्।।

**प्रदानदेव तदुक्तम्**। वायुप्राणौ विषय इत्याह— **वाजसनेयक इत्यादिना**। तयोः भेदाभेदप्रतिपादकवाक्याभ्यां संशयमाह— **तत्रेति**। पूर्वत्रोपासनानां पृथक्फलश्रवणात् कर्माङ्गेभ्यो भेदेनानुष्ठानमुक्तम्। इह वायुप्राणयोस्तत्त्वाभेदेन एकमेव फलं प्राणात्मनाऽवस्थानमिति

***भाष्यभावप्रकाशिका***

इत्याह— **अत एवेति**। यतोऽनङ्गत्वमत एवेत्यर्थः। इति सप्तविंशं तन्निर्धारणाधिकरणम्।

**प्रदानवदेव तदुक्तम्। श्रेष्ठोऽवधारित इति**। अभग्नव्रतत्वेनोत्कृष्टो दर्शित इत्यर्थः। बहुश्रुत्यालोचनया वायुप्राणयोरेकत्वे सिद्धे तद्विषयोपासनाया अपि तदधीननिरूपणत्वादभेदः। न चाध्यात्माधिदैवतगुणभेदाद् भेद इति शङ्कनीयम्; उत्पन्नोपासनासंयोगात् तद्विभागोपदेशस्य। न ह्यग्निहोत्रं जुहोतीत्युत्पन्नस्याग्निहोत्रस्य दधितण्डुलादिगुणभेदो भेदकः। उत्पद्यमानकर्मसंबन्धगुणभेदस्यैव

***न्यायनिर्णयः***

उद्गीथादिविद्यानां पर्णतादिवत् कर्माङ्गत्वाभावे लिङ्गान्तरमाह— **अत इति**। अङ्गत्वाभावादेवेति यावत्। तथा च विदुष इवाविदुषोऽपि कर्माधिकारोऽस्तीति भावः।।४२।। इति सप्तविंशं तन्निर्धारणाधिकरणम्।।

पृथगप्रतिबन्धः फलमिति फलपृथक्त्ववदुपगमनपृथक्त्वमाह— **प्रदानवदिति**। बृहदारण्यके छान्दोग्ये चाधिदैवाध्यात्मभेदेनोक्तौ वायुप्राणावुदाहरति— **वाजसनेयक इत्यादिना**। श्रेष्ठत्वमभग्नव्रतत्वेनोत्कृष्टत्वम्। तयोर्भेदाभेदवादिवाक्याभ्यां संशयमाह— **तत्रेति**। अत्र वायुप्राणयोरुपगमनविद्योक्त्या वाक्यार्थधीहेतोरेव कथनात् पादादिसंगतिः। पूर्वपक्षे विद्यैक्यात् प्रवृत्तिभेदासिद्धिः। सिद्धान्ते तदैक्येऽपि गुणभेदात् तत्सिद्धिरिति सिद्धवत्कृत्य पूर्वपक्षयति— **अपृथगिति**। फलभेदात् कर्माङ्गानां तद्युक्तोपास्तीनां च

**प्राप्तम्, तत्त्वाभेदात्। न ह्यभिन्ने तत्त्वे पृथगनुचिन्तनं न्याय्यम्। दर्शयति च श्रुतिरध्यात्ममधिदैवतं च तत्त्वाभेदम्– 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ.उ. २।४) इत्यारभ्य। तथा 'त एते सर्व एव समाः सर्वेऽनन्ताः (बृ.उ. १।५।१३) इत्याध्यात्मिकानां प्राणानामाधिदैविकीं विभूतिमात्मभूतां दर्शयति। तथाऽन्यत्रापि तत्र तत्राध्यात्ममधिदैवतं च बहुधा तत्त्वाभेददर्शनं भवति। क्वचिच्च 'यः प्राणः स वायुः' (ऐ.आ. २।३।३) इति स्पष्टमेव वायुं प्राणं चैकं करोति। तथोदाहृतेऽपि वाजसनेयिब्राह्मणे 'यतश्चोदेति सूर्यः' (बृ.उ. १।५।२३) इत्यस्मिन्नुपसंहारश्लोके 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' (बृ.उ. १।५।२३) इति प्राणेनैवोपसंहरन्नेकत्वं दर्शयति। 'तस्मादेकमेव व्रतं चरेत् प्राण्याच्चैवापान्याच्च' (बृ.उ. १।५।२३) इति च प्राणव्रतेनैकेनोपसंहरन्नेतदेव द्रढयति। तथा छान्दोग्येऽपि परस्तात् 'महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः' (छा.उ. ४।३।६) इत्येकमेव संवर्गं गमयति, न ब्रवीत्येक एकेषां चतुर्णां**

### *प्रकटार्थविवरणम्*

वायुप्राणावपृथगनुचिन्तनीयावित्याह— **अपृथगिति**। स्वरूपाभेदं प्रमाणतः प्रकटयति— **दर्शयति चेति**। यदि वायुप्राणयोः पृथगनुचिन्तनं विधित्सितं स्यात् तदोपासनाङ्गव्रतोपदेशोऽपि पृथगेव स्यात्। इह च प्राणापानयोर्निरोधं न कुर्यादित्येकमेव व्रतं दर्शयति। ततोऽप्यपृथगनुचिन्तनमित्याह— **तस्मादेकमेवेति**। तथा छान्दोग्येऽपि वायुं प्राणं च संवर्गगुणविशिष्टं भेदेनोपक्रम्य परस्ताद्वाक्यशेषे संवर्गमेकमेव गमयतीत्यन्वयः। महात्मन इति द्वितीयाबहुवचनम्। चतुरो वागादीन् देव एकः कः प्रजापतिः प्राणः स जगार गीर्णवानुपसंहृतवानित्यर्थः। एको वायुरेकेषाम् अग्निरादित्यश्चन्द्रमा आप इति चतुर्णां संहरणात् संवर्गः, अपरः प्राणोऽपरेषां वाक्चक्षुःश्रोत्रमनसां संवर्ग इति न ब्रवीतीत्यर्थः।

### *भाष्यभावप्रकाशिका*

भेदकत्वात्। तस्मादुत्पन्नोपासनासंबन्धित्वाद् गुणभेदस्योपासनाया भेदनाभावादपृथगनुचिन्तनमिति पूर्वपक्षं दर्शयति— **अपृथगिति तावदिति**। 'वायुः प्राणो भूत्वा नासिके प्राविशदि'ति श्रूयत इत्यर्थः। तथोपक्रमोपसंहारालोचनयाऽपि तत्त्वाभेदेन विद्यैकत्वावगमादपृथगनुचिन्तनमित्याह— **तथोदाहृतेति**। भेदे प्रमाणाभावादप्येकत्वमित्याह— **न ब्रवीतीति**।

### *न्यायनिर्णयः*

नित्यत्वानित्यत्वरूपप्रयोगभेदवद् वायुप्राणयोस्तत्त्वाभेदात् तत्प्राप्तिफलैक्याच्चोपास्तिप्रयोगैक्यमिति भावः। तत्त्वाभेदेऽपि कथमपृथगनुचिन्तनं तत्राह— **नेति**। न खल्वेकस्मिन्नग्निहोत्रे प्रयोगभेदोऽस्तीत्यर्थः। तत्त्वाभेदे मानमाह— **दर्शयतीति**। 'वायुः प्राणो भूत्वा नासिके प्राविशदि'ति श्रुतिरत्रोपयुक्ता। आध्यात्मिकप्राणस्याधिदैविकवाय्वभेदे लिङ्गमाह— **तथेति**। अध्यात्ममधिदैवं च तयोस्तत्त्वाभेदे सर्वश्रुतिसंमतिमाह— **तथाऽन्यत्रेति**। वायुप्राणयोस्तत्त्वाभेदे वाक्यमपि मानमित्याह— **क्वचिच्चेति**। 'अथेममेव नाप्नोन्मृत्युर्योऽयं मध्यमः प्राण' इत्युपक्रम्य 'प्राणाद्वा एष सूर्य उदेती'त्युपसंहाराच्च तयोरैक्यमित्याह— **तथेति**। यदि पृथगनुचिन्तनं तयोर्विधित्सितं तर्हि तदङ्गव्रतोपदेशोऽपि पृथगेव स्यात्। इह च प्राण्यादिति प्राणने प्राप्तेऽपान्यादित्यपाननमुक्त्वा तस्मिन् प्राप्ते प्राण्यादिति प्राणनवचनेन प्राणापाननिरोधं कुर्यादित्येकमेव व्रतं दर्शयति। ततश्चापृथगनुचिन्तनमित्याह— **तस्मादिति**। छान्दोग्यालोचनायामपि तयोः स्वरूपाभेदधीरित्याह— **तथेति**। वायुं प्राणं च संवर्गगुणकं भेदेनोपक्रम्य परस्ताद् वाक्यशेषे संवर्गमेकमेव गमयतीति संबन्धः। महात्मन इति द्वितीयाबहुवचनम्। चतुरश्चतुःसंख्याकानग्निसूर्योदकचन्द्रान्, अन्यांश्च वाक्चक्षुःश्रोत्रमनोलक्षणान्, एको निरपेक्षः सन् को देवः प्रजापतिर्जगार गीर्णवानुपसंहृतवानिति यावत्। भेदे मानाभावादपि तयोरैक्यमित्याह— **नेति**। बहुश्रुत्यालोचनया वायुप्राणैक्यसिद्धेस्तदुपास्तेरपि तदधीनत्वादभेदः। न चाध्यात्माधिदैवगुणभेदाद् भेदः, तदभेदोक्तेरुत्पन्नोपास्तिसंयोगाद् भेदकत्वायोगात्। नो खलु 'अग्निहोत्रं जुहोती'त्युत्पन्नाग्निहोत्रस्य दधितण्डुलादिभेदाद् भेदः, उत्पद्यमानकर्मयोगिगुणभेदस्यैव भेदकत्वात्। तस्मादुत्पन्नो-

**संवर्गोऽपरोऽपरेषामिति। तस्मादपृथक्त्वमुपगमनस्येति।**

**एवं प्राप्ते ब्रूमः– पृथगेव वायुप्राणावुपगन्तव्याविति। कस्मात्? पृथगुपदेशात्। आध्यानार्थो ह्ययमध्यात्माधिदैवविभागोपदेशः; सोऽसत्याध्यानपृथक्त्वेऽनर्थक एव स्यात्। ननूक्तं न पृथगनुचिन्तनं तत्त्वाभेदादिति। नैष दोषः। तत्त्वाभेदेऽप्यवस्थाभेदादुपदेशभेदवशेनानुचिन्तनभेदोपपत्तेः। श्लोकोपन्यासस्य च तत्त्वाभेदाभिप्रायेणाप्युपपद्यमानस्य पूर्वोदितध्येयभेदनिराकरणसामर्थ्याभावात्। 'स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुः' (बृ.उ. १।५।२२) इति चोपमानोपमेयकरणात्। एतेन व्रतोपदेशो व्याख्यातः। 'एकमेव व्रतम्' (बृ.उ. १।५।२३) इति चैवकारो वागादिव्रतनिवर्तनेन प्राणव्रतप्रतिपत्त्यर्थः; भग्नव्रतानि हि वागादीन्युक्तानि, 'तानि मृत्युः श्रमो भूत्वोपयेमे' (बृ.उ. १।५।२१) इति श्रुतेः; न**

### *प्रकटार्थविवरणम्*

उत्सूत्रमेव सिद्धान्तमाह— **पृथगेवेति**। 'तौ वा एतौ द्वौ संवर्गौ' इति वाक्यस्य उपास्यगुणविशिष्टभेदाभिधायकस्य भेदेनानुचिन्तने तात्पर्याद् वाक्यप्रमाणात् भेदेनानुचिन्तनमित्यर्थः। पूर्वपक्षबीजमुन्मूलयति— **ननूक्तमित्यादिना**। उपास्यतया प्रधानभूतसंवर्गगुणविशिष्टवायुप्राणधर्मिभेदविषयेण वाक्येन गुणभूतसमीरणस्वभावैक्यविषयं वाक्यं बाध्यत इति भावः। वाजसनेयिगत-श्लोकस्य गतिमाह— **श्लोकोपन्यासस्य चेति**। सूर्योदयास्तमययोः वाय्वधीनत्वात् तदभेदाभिप्रायेण प्राणात् सूर्यस्योदयास्तमयौ दर्शितौ। ततोऽध्यात्माधिदैवविभागोक्तस्य ध्येयभेदस्य निराकरणे नास्ति श्लोकस्य सामर्थ्यमित्यर्थः। इतोऽपि विशिष्टभेदो न निराचिकीर्षित इत्याह— **स यथैषामिति**। **एतेनेति**। श्लोकस्य स्वरूपे चैक्याभिप्रायेणेत्यर्थः। व्रतोपदेशस्य प्रकारान्तरेण गतिमाह— **एकमेव व्रतमिति**। वेत्य[**नेति**। 'अ]थेममेव नाप्नोद्योऽयं मध्यमः प्राण' इत्यध्यात्मं मुख्यस्य प्राणस्य मृत्युनाऽनाप्तत्वमुक्त्वा

### *भाष्यभावप्रकाशिका*

उक्तनीत्या विद्यैकत्वेऽप्यध्यात्माधिदैवगुणभेदात् प्रवृत्तिभेदः, सायंप्रातःकालगुणभेदादेकस्मिन्नप्यग्निहोत्रे प्रवृत्तिभेदवदभ्युपगन्तव्य इति परिहरति— **पृथगेवेति**। **आध्यानार्थो ह्ययमिति**। अग्निहोत्रस्येव दधितण्डुलादिराध्यानस्य कृतो [कृते] विभागोपदेशोऽयमित्यर्थः। एतेन व्रतोपन्यास इति। तत्त्वाभेदमात्राभिप्रायं तदित्यर्थः। नन्वेवकारश्रवणादपृथक्प्रवृत्तिः प्रतीयत इति, तत्राह— **एकमेवेति**। किमिति तद्व्रतं प्रतिपाद्यत इत्युपगम्यत इति, तत्राह— **भग्नव्रतानीति**। फलवचनमपि वायुव्रतनिवृत्त्यभावाच्छिन्ना (?) इति।

### *न्यायनिर्णयः*

पास्तियोगित्वाद् गुणभेदस्योपास्तिभेदाभावादपृथगनुचिन्तनमित्युपसंहरति— **तस्मादिति**।

उक्तनीत्या विद्यैक्येऽप्यध्यात्माधिदैवगुणभेदात् प्रवृत्तिभेदः सायंप्रातःकालगुणभेदादेकस्मिन्नप्यग्निहोत्रे प्रवृत्तिभेदवदिति सिद्धान्तयति— **एवमिति**। उपास्त्यैक्यात् प्रयोगैक्योक्तेर्न पृथगनुचिन्तनमिति शङ्कते— **कस्मादिति**। अग्निहोत्रस्येव दधितण्डुलादेर्ध्यानस्य प्रकृते भेदोपदेशात् पृथगनुचिन्तनसिद्धिरित्याह— **पृथगिति**। तदेव विवृणोति— **आध्यानेति**। 'तौ वा एतौ संवर्गा'विति वाक्य-स्योपास्यगुणविशिष्टभेदवाचिनो भेदेनानुचिन्तने तात्पर्याद् वाक्यप्रामाण्याद् भेदेनैव चिन्तनमित्यर्थः। पूर्वपक्षबीजमनुवदति— **नन्विति**। उपास्यतया प्रधानभूतसंवर्गगुणकवायुप्राणधर्मिभेदविषयेण वाक्येन गुणभूतसमीरणस्वभावैक्यविषयं वाक्यं बाध्यमित्यभिप्रेत्याह— **नेति**। 'यतश्चोदेती'त्यादिश्लोकोक्तेर्वायुप्राणैक्यसिद्धेरुपास्तेरपि तथात्वादपृथगुपगतिरित्याशङ्क्याह— **श्लोकेति**। सूर्योदयास्त-मययोर्वाय्वधीनत्वात् तदभेदधिया प्राणात् सूर्योदयास्तमयावुक्तौ ततोऽध्यात्माधिदैवविभागोक्तस्य ध्येयभेदस्य निरासे श्लोकस्य न सामर्थ्यमित्यर्थः। इतोऽपि विशिष्टध्येयभेदोऽस्तीत्याह— **स यथेति**। यत्तु प्राणव्रतेनोपसंहारादैक्ये सत्यपृथगुपगमनमिति, तत्राह— **एतेनेति**। श्लोकस्य स्वरूपैक्याभिप्रायत्ववादेन व्रतवचनमपि तत्त्वाभेदाभिप्रायं युक्तमित्यर्थः। एवंकारश्रुतेरपृथक्प्रवृत्तिरत्र भातीत्याशङ्क्याह— **एकमिति**। किमिति वागादिव्रतनिवर्तनेन प्राणव्रतं साध्यते, तत्राह— **भग्नेति**। वायुव्रतनिवृत्त्यर्थमेवावधारणं किं न स्यात्, तत्राह— **नेति**।

**वायुव्रतनिवृत्त्यर्थः; 'अथातो व्रतमीमांसा' (बृ.उ. १।५।२१) इति प्रस्तुत्य तुल्यवद्वायुप्राणयोरभग्नव्रतत्वस्य निर्धारितत्वात्। 'एकमेव व्रतं चरेत्' (बृ.उ. १।५।२३) इति चोक्त्वा 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' (बृ.उ. १।५।२३) इति वायुप्राप्तिं फलं ब्रुवन् वायुव्रतमनिवर्तितं दर्शयति। देवतेत्यत्र वायुः स्यादपरिच्छिन्नात्मकत्वस्य प्रेप्सितत्वात्। पुरस्तात्प्रयोगाच्च 'सैषाऽनस्तमिता देवता यद्वायुः' (बृ.उ. १।५।२२) इति। तथा 'तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु' (छा.उ. ४।३।४) इति भेदेन व्यपदिशति। 'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्' (छा.उ. ४।३।८) इति च भेदेनैवोपसंहरति। तस्मात् पृथगेवोपगमनम्।**

**प्रदानवत्। यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे' (तै.सं. २।३।६।१) इत्यस्यां त्रिपुरोडाशिन्यामिष्टौ 'सर्वेषामभिगमयन्नवद्यत्यछम्बट्कार'मित्यतो वचनादिन्द्राभेदाच्च**

***प्रकटार्थविवरणम्***

आधिदैविकं चाग्न्यादीनां ज्वलनादिव्रतभङ्गमुक्त्वा वायोरभग्नव्रतत्वं निर्धारितम्— 'निम्लोचन्त्यन्या देवताः न वायुः' 'स यथैषां प्राणानां मध्यमः प्राणः' इत्यादिनेत्यर्थः। इतश्च न वायुव्रतनिवृत्तिरित्याह— **एकमेव व्रतमिति**। तेन सव्रतेनोपासनेन; निरर्थकः उः; एतस्यै एतस्या देवतायाः सायुज्यं समानदेहतां समानलोकतां च प्राप्नोतीत्यर्थः। नन्वत्र देवताप्राप्तिरुच्यते, न वायुप्राप्तिरित्याशङ्क्याह— **देवतेत्यत्रेति**। यदुक्तं पृथगुपदेशादिति, तदिदानीं विवृणोति— **तथा तौ वा इति**।

इदानीं सौत्रमुदाहरणं व्याचष्टे— **प्रदानवदित्यादिना**। त्रयः पुरोडाशा यस्यां सा त्रिपुरोडाशा; तस्यां सहैव प्रदानं किं वा भेदेनेति सन्देहे पूर्वपक्षमाह— **सर्वेषामिति**। अच्छं शुद्धं बट्कारं भागं सर्वेषामभिगमयन् प्रापयन्नवद्यति गृह्णातीति वचनात्

***भाष्यभावप्रकाशिका***

संवर्गगुणो वायुरनवच्छिन्ना देवता तदात्मत्वमिह प्रेप्सितमित्यर्थः। न केवलं प्रकरणालोचनयैवैतदपि तु साक्षाच्छ्रुतेरपीत्याह— **पुरस्तादपीति**। तथा तौ वा एताविति प्रधानभूतसंवर्गगुणविशिष्टोपास्यवायुप्राणधर्मिभेदविषयेण वाक्येन समीरणस्वभावैक्यविषयं 'यः प्राणः स वायु' रित्यादि वाक्यमध्यात्माधिदैवसाधारणसंबन्धप्रतिपत्तिप्रयोजनं बाध्यमित्यर्थः।

प्रदानवदिति सूत्रपदं विवृणोति— **यथेति**। 'सर्वेषामभिगमयन्नि'त्यविशेषेण मिलितानां श्रवणाद् देवताया अभेदाच्च त्रयाणामपि पुरोडाशानां सहप्रदानाशङ्कायामुत्पत्तिवाक्य एव राजाधिराजस्वराजगुणभेदात् यथान्यासं देवताभेदात् प्रदानपृथक्त्वं भवतीत्यर्थः।

***न्यायनिर्णयः***

'अथेममेव नाप्नोदि'त्यध्यात्मं मुख्यप्राणस्य मृत्युनाऽनाप्तत्वमधिदैवतं चाग्न्यादीनां ज्वलनादिव्रतभङ्गमुक्त्वा वायोरभग्नव्रतत्वमुक्तम्। 'निम्लोचन्त्यन्या देवता न वायु'रिति न वायुव्रतनिवृत्तिरेवकारार्थ इत्यर्थः। फलोक्तिरपि वायुव्रतनिवृत्त्यभावं दर्शयतीत्याह— **एकमिति**। तेन व्रतेन। अपिशब्देन समानार्थः सन्नुशब्दः सायुज्यं सलोकतामपीत्युपरि संबध्यते। **एतस्यै** एतस्या देवतायाः सायुज्यं समानदेहतां वा सालोक्यं समानलोकतां वोपास्तेस्तारतम्याज्जयति प्राप्नोतीत्यर्थः। अन्यव्रतानुष्ठानादन्याप्राप्तेरत्र च वायुप्राप्तिनिर्देशान्न तद्व्रतनिवृत्तिरिति श्रुतितात्पर्यमाह— **वाय्विति**। देवताप्राप्तिरेवात्र श्रुता न वायुप्राप्तिरित्याशङ्क्याह— **देवतेति**। अग्न्यादीनपेक्ष्यानवच्छिन्नो देवो वायुः, ते तु तेनैवावच्छिन्ना इति संवर्गगुणो वायुरनवच्छिन्ना देवता, तदात्मत्वमत्राप्तुमिष्टम्, अतो देवताप्तिर्वायुप्राप्तिरित्यर्थः। न केवलं प्रकरणालोचनया देवता वायुः, किंतु साक्षादेव श्रुतेरित्याह— **पुरस्तादिति**। यत्तु पृथगुपदेशात् पृथगुपगमनमुक्तं तदिदानीं विवृणोति— **तथेति**। संवर्गभेदेनोपक्रमवद् भेदेनोपसंहारादपि पृथगनुचिन्तनमित्याह— **ते वा इति**। उपक्रमोपसंहारैकरूप्यफलमुपसंहरति— **तस्मादिति**।

तत्रोदाहरणमवतार्य व्याचष्टे— **प्रदानवदिति**। त्रयः पुरोडाशा यस्यां सा त्रिपुरोडाशिनी तस्यामुत्पत्तिवाक्यमुदाहरति— **इन्द्रायेति**। किं तस्यां सह प्रदानं किंवा भेदेनेति संदेहे पूर्वपक्षमाह— **सर्वेषामिति**। याज्ञिकाः खल्वस्यामिष्टौ युगपदेवावदानं

**सहप्रदानाशङ्कायां राजादिगुणभेदाद् याज्यानुवाक्याव्यत्यासविधानाच्च यथान्यासमेव देवतापृथक्त्वात् प्रदानपृथक्त्वं भवति। एवं तत्त्वाभेदेऽप्याध्येयांशपृथक्त्वादाध्यानपृथक्त्वमित्यर्थः। तदुक्तं संकर्षे– 'नाना वा देवता पृथग्ज्ञानात्' इति। तत्र तु द्रव्यदेवताभेदाद् यागभेदो विद्यते। नैवमिह विद्याभेदोऽस्ति। उपक्रमोपसंहाराभ्याम-**

***प्रकटार्थविवरणम्***

सहैव प्रक्षेपाशङ्का जायते। अन्यथा प्रत्येकमभिगमयन्निति स्यात्। दैवतैक्याच्च सहप्रदानाशङ्कायां प्रधानपृथक्त्वमिति सिद्धान्तः। स्वरूपेणेन्द्रस्यैक्येऽपि राजादिगुणविशिष्टदेवताभेदादित्यर्थः। हेत्वन्तरमाह— **याज्येति**। यजेति प्रैषे कृते या ऋचः शस्यन्ते होत्रा ता याज्याः; अनुब्रूहीति प्रैषे याः शस्यन्ते ता अनुवाक्याः। तयोः व्यत्यासविधानाच्च 'इन्द्राय राज्ञेऽनुब्रूहि' इति प्रथमम्; पश्चात् 'इन्द्रायाधिराजाय अनुब्रूहि' इत्यादि;[१] सहप्रदानं चेदेकैव याज्याऽनुवाक्या च स्यादित्यर्थः। सङ्कर्षे देवताकाण्डे। नाना भेदेनाग्नौ प्रक्षेपः; कुतः? तत्तद्गुणभेदेन देवतापृथक्त्वज्ञानादित्यर्थः। देवतोद्देशेन द्रव्यत्यागो यागः; तस्य यथेह दृष्टान्ते भेदः, तथा विद्याभेदोऽपि स्यादित्याशङ्क्याह— **तत्र त्विति**। यत्रोत्पत्तिवाक्यादेव नानादेवतं कर्म प्रतीयते, तत्र देवतादिभेदात् कर्मभेदः, न

***भाष्यभावप्रकाशिका***

**याज्यानुवाक्याव्यत्यासविधानाच्चेति**। सहप्रदाने व्यत्यासविधानमनुपपन्नं क्रमापेक्षत्वाद् व्यत्यासविधानस्य। तेन तथाविध एव क्रमो विवक्षित इति क्रमवत्येव प्रदाने तदुपपन्नमित्यर्थः। अत्रेज्यमानदेवताप्रकाशका मन्त्रा याज्याः, यक्ष्यमाणदेवता प्रकाशका(नुप्रकाशका) मन्त्राः पुरोनुवाक्याः। अथवा यजेत्युक्तो यावन्मन्त्राद्ये [यान् मन्त्रान् ये] यजामह इत्यादीन् वौषडन्तान् ब्रूते ता याज्या। अनुब्रूहीत्युक्तो यान् प्रणवान्तान् ब्रूते [ताः] पुरोनुवाक्याः। दार्ष्टान्तिकमाह— **एवं तत्त्वाभेदेऽपीति**। संकर्षे देवताकाण्डे। वाशब्दो देवतैकत्वशङ्काव्यावृत्त्यर्थः। नाना देवता कस्मादित्यत आह— **पृथक्ज्ञानादिति**। उत्पत्तिवाक्य एव राजाधिराजादिगुणानां पृथक् ज्ञानादित्यर्थः। ननु तर्हि देवताभेदाद् यथा कर्मभेदस्तथेहापि वायुः प्राण इति शब्दभेदादादित्यसूर्यादि शब्दभेद 'आदित्यञ्चरुं' 'सौर्यञ्चरु' मित्यादिष्विव देवताभेदेन विद्याभेदः स्यादित्यत आह— **तत्र द्रव्येति**। यत्रोत्पत्तिवाक्यादेव नानाद्रव्यदेवतं कर्म प्रतीयते, तत्र कर्मभेदो यथा वैश्वदेव्यामिक्षेत्यादि। यत्र तूत्पत्ति तत्कर्मैक्यम्, तत्र न देवतादिभेदात् कर्मभेदो यथाऽग्निहोत्रादिषु।

***न्यायनिर्णयः***

कुर्वन्ति, तेन सर्वेषां देवताविशेषाणामभिगमयन् प्रापयन्नपर्यायेणैव पुरोडाशानवद्यति तत्तद्भागं गृह्णातीत्यत्र हेतुमाह— **अछम्बट्कारमिति**। अव्यर्थत्वायेति यावत्। एकार्थं सर्वतोऽवदाने शेषो यागानर्हः स्याद् युगपत्सर्वार्थमवदाने त्ववैयर्थ्यमित्यर्थः। उक्ताद् वाक्यात् सर्वार्थं सहावदानश्रुतेर्देवतायां भेदाभावाच्च त्रयाणां पुरोडाशानां सहप्रदानं प्राप्तमित्याह— **अत इति**। सिद्धान्तमाह— **राजादीति**। उत्पत्तिवाक्य एव राजाधिराजस्वराजगुणभेदाद् यथान्यासं यथावचनं तत्तद्गुणविशिष्टदेवताभेदात् प्रदानस्य प्रक्षेपस्य पृथक्त्वमित्यर्थः। किंच त्रिपुरोडाशिन्यामिष्टौ प्रथमपुरोडाशप्रदाने या याज्या सा पुनःप्रयोगेऽनुवाक्या, या च पूर्वमनुवाक्या सा पश्चाद्याज्येति 'व्यत्यासमन्वाहे'त्यनेन विहितम्; तत् प्रयोगभेदे युज्यत एकस्या ऋच एकस्मिन् प्रयोगे याज्यानुवाक्यात्वविरोधादित्याह— **याज्येति**। अध्वर्युणा यजेति प्रैषे कृते होत्रा प्रयुज्यमानो मन्त्रो याज्या, अनुब्रूहीति प्रैषानन्तरं प्रयुज्यमानस्तु मन्त्रोऽनुवाक्येति भेदः। पूर्वोत्तरपक्षाभ्यां दृष्टान्तं व्याख्याय दार्ष्टान्तिकमाह— **एवमिति**। उक्तेऽर्थे देवताकाण्डस्थमधिकरणं प्रदानभेदविषयमुदाहरति— **तदुक्तमिति**। संकृष्यते कर्मकाण्डस्थमेवावशिष्टं कर्म संक्षिप्योच्यते [अस्मिन्] इति संकर्षो देवताकाण्डं तस्मिन्निति यावत्। वाशब्दो देवतैकत्वाशङ्काव्यावृत्त्यर्थः। नाना देवतेत्यत्र हेतुमाह— **पृथगिति**। उत्पत्तिवाक्य एव राजाधिराजादिगुणानां पृथग्ज्ञानात् तत्तद्गुणविशिष्टदेवतानामपि पृथक्त्वस्य युक्तत्वादित्यर्थः। दृष्टान्ते देवताद्रव्यभेदात् कर्मभेदवदिहापि वायुः प्राणः इतिशब्दात् 'आदित्यं चरुं' 'सौर्यं चरु'मित्यादिष्वादित्यसूर्यादिशब्दभेदादिव देवताभेदेन विद्याभेदः स्यादित्याशङ्क्याह— **तत्रेति**। यत्रोत्पत्तिवाक्यादेव नानाद्रव्यदैवतं कर्म दृष्टं तत्र तद्भेदो 'वैश्वदेव्यामिक्षे'त्यादिवत्। यत्र तूत्पत्तित एव कर्मैक्यं तत्र देवतादिभेदेऽपि न कर्मभेदोऽग्निहोत्रादिवत्।

१. अत्र पाठे प्रमाद इति भाति। व्यत्यासस्वरूपं तु न्यायनिर्णयानुसारेण बोध्यम्। तस्य विवरणं परिमले द्र.पृ. ८३८।

ध्यात्माधिदैवोपदेशेष्वेकविद्याविधानप्रतीतेः। विद्यैक्येऽपि त्वध्यात्माधिदैवभेदात् प्रवृत्तिभेदो भवति, अग्निहोत्र इव सायंप्रातःकालभेदात् इत्येतावदभिप्रेत्य प्रदानवदित्युक्तम्।।४३।।

।। इत्यष्टाविंशं प्रदानाधिकरणम् ।।

२९।। लिङ्गभूयस्त्वाधिकरणम् ।।सू.४४-५२।।

## लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि।।४४।।

**वाजसनेयिनोऽग्निरहस्ये– 'नैव वा इदमग्रे सदासीत्' (शत.१०।५।३।१) इत्येतस्मिन् ब्राह्मणे**

*शारीरकन्यायसंग्रहः*

**लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि।।४४।। पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्।।४५।। अतिदेशाच्च।।४६।। विद्यैव तु निर्धारणात्।।४७।। दर्शनाच्च।।४८।। श्रुत्यादिबलीयस्त्वाच्च न बाधः।।४९।। अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्।।५०।। न सामान्यादप्युपलब्धेः मृत्युवन्न हि लोकापत्तिः।।५१।। परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः।।५२।।** क्रत्वङ्गभूतेष्टकामयाग्निचयनप्रकरणात् 'तेषामेकैक एव तावान् यावानसौ पुरुषः[पूर्वः]' इति क्रत्वङ्गतालक्षणसादृश्यसापेक्षादतिदेशाच्च मनश्चिदादीनां भावनामयानां पुरुषायुषत्वेन क्लृप्तशतवर्षान्तर्गतषट्-त्रिंशत्सहस्राहोरात्रावच्छिन्नैः मनोवाक्चक्षुःश्रोत्रवृत्तिनिचयैः इष्टकात्वेन भाव्यमानैः चीयमानानां प्रकृतेष्टकामयचयनेन विकल्प्य क्रत्वङ्गत्वे प्राप्ते 'ते हैते विद्याचित एव' 'सर्वदा सर्वाणि भूतानि चिन्वन्ति' 'विद्यया हैवेत एवंविदश्चिता भवन्ति' इति श्रुतिलिङ्गवाक्यैः प्रकरणातिदेशयोर्मुख्याग्निसन्निधेः संपादनसौकर्यार्थत्वादतिदेशस्य चयनत्वसामान्यविषयत्वादिति प्रयोजनान्तरं परिकल्प्य मनश्चिदादीनां क्रत्वङ्गतायां प्रकरणातिदेशयोः प्रामाण्यं चापबाध्य फलार्थतया स्वातन्त्र्यमेव परिकल्पितम्— इति।

*प्रकटार्थविवरणम्*

तथेह विद्याभेदः उत्पत्तित एव प्राणविद्यैक्यावगमादित्यर्थः। कथं तर्हि विद्यैक्ये भेदेनानुचिन्तनमित्याशङ्क्याह— **विद्यैक्येऽपीति**। 'सायं प्रातरग्निहोत्रं जुहोति' इति श्रूयते। तत्र सायमन्यथाऽनुष्ठानं प्रातश्चान्यथा; देवता चाग्निः प्रजापतिश्च सायम्; सूर्यः प्रजापतिश्च प्रातः, तत्प्रदानभेदो यथा कर्मैक्येऽपि तथा विद्यैक्येऽपि अनुचिन्तनभेदो न विरुध्यत इत्यर्थः। इत्यष्टाविंशं प्रदानाधिकरणम्।।

**लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि**। विषयं दर्शयितुमुपक्रमते— **वाजसनेयिन इति**। उत्पत्तेः प्राक् इदं सर्वं नैव सदासीत् इत्युपक्रम्यानन्तरं मनसः प्रादुर्भावमुक्त्वा तन्मन आत्मानमैक्षतेति ईक्षणपूर्वकं तन्मन आत्मनोऽग्नीनपश्यदिति मनोऽधिकृत्याधीयत

*भाष्यभावप्रकाशिका*

इह त्वग्निहोत्रादिवद्विद्याया एकत्वमित्यर्थः। तर्हि केन साम्येन निदर्शनं प्रदर्शितमिति, तत्राह— **विद्यैकत्वेऽपीति**। **अग्निहोत्र इवेति**। अग्निः प्रजापतिश्च सायं देवता; सूर्यः प्रजापतिश्च प्रातः। अनुष्ठानञ्चोभयत्रान्यादृशं यथा तद्वदिहापि ध्यानभेद इत्यर्थः। इत्यष्टाविंशं प्रदानाधिकरणम्।

*न्यायनिर्णयः*

इह त्वग्निहोत्रादिवदेव विद्यैक्यमित्यर्थः। तर्हि केन साम्येन प्रदानवदित्युक्तं, तत्राह— **विद्येति**। अग्निहोत्रे हि सायमग्निः प्रजापतिश्च देवता, सूर्यः प्रजापतिश्च प्रातः, अनुष्ठानं चोभयत्रान्यादृशं तथेहापि ध्यानभेदसिद्धिरित्यर्थः।।४३।। इत्यष्टाविंशं प्रदानाधिकरणम्।।

वायुविद्योक्त्यनन्तरं सांपादिकाग्निविद्याचिन्तामारभते— **लिङ्गेति**। सांपादिकानग्नीन् क्रियाप्रकरणस्थान् मनश्चिदादीन् विषयत्वेनोपन्यस्यति— **वाजसनेयिन इति**। उत्पत्तेः प्रागिदं सर्वं नैव सदासीन्नाप्यसदित्युपक्रम्य मनसः प्रादुर्भावमुक्त्वा तदात्मानमैक्षतेतीक्षणपूर्वकं तन्मन आत्मनोऽग्नीनपश्यदिति मनोऽधिकृत्य पठन्तीत्यर्थः। पुरुषस्यायुष्ट्वेन क्लृप्तशतवर्षान्तर्गतषट्त्रिं-

**मनोऽधिकृत्याधीयते 'तत्षट्त्रिंशत्सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितः' (शत. १०।५।३।३।) इत्यादि। तथैव 'वाक्चितः [1]प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः' इति पृथगग्नीनामनन्ति सांपादिकान्। तेषु संशयः– किमेते मनश्चिदादयः क्रियानुप्रवेशिनस्तच्छेषभूता उत स्वतन्त्राः केवलविद्यात्मका इति। तत्र प्रकरणात्क्रियानुप्रवेशे प्राप्ते स्वातन्त्र्यं तावत् प्रतिजानीते– लिङ्गभूयस्त्वादिति। भूयांसि हि लिङ्गान्यस्मिन् ब्राह्मणे केवलविद्यात्मकत्वमेषामुपोद्बलयन्ति दृश्यन्ते– 'तद्यत्किंचेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः' इति (शत. १०।५।३।३) 'तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' (शत. १०।५।३।१२) इति चैवंजातीयकानि। तद्धि लिङ्गं प्रकरणाद् बलीयः, तदप्युक्तं पूर्वस्मिन्**

### *प्रकटार्थविवरणम्*

इत्यर्थः। पुरुषायुष्ट्वेन क्लृप्तशतवर्षान्तर्गतषट्त्रिंशत्सहस्राहोरात्रावच्छिन्नतया मनोवृत्तीनां तावत्संख्याकत्वमाह— **षट्त्रिंशतं सहस्राण्यग्नीनिति**। अर्कान् स्तोतव्यान् मनोवृत्तिभावितत्वात् मनोमयान् इष्टकाभिरिव मनोवृत्तिभिरेव चीयन्त इति मनश्चित इत्यर्थः। तथा वागादिवृत्तिभिरिष्टकात्वेन भाविताभिश्चीयन्त इति वाक्चिदादीनात्मनोऽग्नीन् वागादयोऽपश्यन्नित्यर्थः। क्रत्वर्थत्वपुरुषार्थत्वविनियोजकप्रमाणादर्शनात् संशयमाह— **तेषु संशय इति**। केवलविद्यात्मका भावनामया इत्यर्थः। पूर्वत्राध्यात्माधिदैवतस्थानभेदात् अभिध्यानभेदो दर्शितः; तद्वदिह स्थानभेदाभावात् क्रत्वङ्गभूतेष्टकामयाग्निचयनप्रकरणात् क्रियास्थानत्वावगमात् क्रियान्तर्गता इत्याह— **तत्र प्रकरणादिति**। सिद्धान्तमुपक्रमते— **स्वातन्त्र्यं तावदिति**। इदानीं भूतानि यत्किंचन मनसा सङ्कल्पयन्ति, तेषामेवाग्नीनां सा कृतिः करणमित्येतत् स्वातन्त्र्येण भावनात्मकत्वे लिङ्गम्; न हि क्रियाङ्गम् यत्किंचित्करणेन सिध्यति, चोदनैकलभ्यत्वादित्यर्थः। एवंविदे स्वपते जाग्रतेऽपि तानेतानग्नीन् सर्वदा सर्वाणि भूतानि चिन्वन्तीति लिङ्गान्तरम्। न हि कर्माङ्गं सर्वदा सर्वैरेवानुष्ठीयते,

### *भाष्यभावप्रकाशिका*

**लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि। षट्त्रिंशतं सहस्राणीति**। पुरुषस्यायुष्ट्वेन क्लृप्तशतवर्षान्तर्गतषट्त्रिंशत्सहस्राहोरात्रावच्छिन्नैर्मनोवाक्प्राणचक्षुःश्रोत्रकायवृत्तिनिचयैरिष्टकात्वेन भाव्यमानैश्चीयमानान् संपादितानग्नीन् कथयन्तीत्यर्थः। स्वातन्त्र्यमेव दर्शयति— **केवलेति**। सिद्धान्तेन तावदुपक्रमते— **स्वातन्त्र्यन्तावदिति**। सर्वदा सर्वाणीति विशेषणमनुपपन्नं क्रियाशेषत्वे, क्रियायाः परिमितकालादिभावित्वादित्यर्थः।

### *न्यायनिर्णयः*

शतसहस्राहोरात्रावच्छिन्नैर्मनोवाक्प्राणचक्षुःश्रोत्रत्वक्कायवृत्तिनिचयैरिष्टकात्वेन भाव्यमानैश्चीयमानान् सांपादिकानग्नीन् वदन्तीत्याह— **तदिति**। अर्कानर्चनीयान् मनोमयान् मनोवृत्तिभावितत्वात्। वागादिवृत्तिभिरिष्टकात्वेन भाविताभिश्चीयन्त इति वाक्चिदादीनग्नीनात्मनो वागादयोऽप्यपश्यन्नित्याह— **तथैवेति**। क्रत्वर्थत्वपुरुषार्थत्वविनियोजकमानदृष्ट्या संशयमाह— **तेष्विति**। केवलविद्यात्मकत्वं क्रियानुप्रवेशं विना भावनामयत्वम्। वायुप्राणयोरेकप्रयोगायोगात् प्रयोगभेदेन ध्येयत्वेऽपि मनश्चिदादीनां कर्माङ्गत्वेनैकप्रयोगत्वं युक्तमित्याह— **तत्रेति**। सांपादिकाग्नीनां केवलविद्यात्मत्वेन पुरुषार्थत्वसमर्थनद्वारा वाक्यार्थधीहेतोरेवोक्तेरत्र पादादिसंगतिः। पूर्वपक्षे क्रियार्थानामग्नीनां क्रियात्वं सिद्धान्ते पुमर्थानां तेषां केवलविद्यामयत्वमित्यङ्गीकृत्य सिद्धान्तमुपक्रमते– **स्वातन्त्र्यमिति**। सूत्राक्षराणि योजयति— **भूयांसीति**। सर्वाण्यपीमानि भूतानि यत्किमपि मनसा संकल्पयन्ति तेषामेवाग्नीनां सा कृतिः करणमित्येतत् प्रकृताग्नीनां स्वातन्त्र्येण भावनामयत्वे लिङ्गम्। न हि क्रियाङ्गं यत्किंचित्करणे सिध्यति चोदनैकलभ्यत्वादित्याह— **तद्यदिति**। एवंविदे स्वपते जाग्रतेऽपि तानेतानग्नीन् भूतानि सर्वाणि सर्वदा चिन्वन्तीति लिङ्गान्तरम्, न हि कर्माङ्गं सर्वदा सर्वैरनुष्ठीयते प्रतिनियतदेशकालनिमित्तेषु चोदितत्वादित्याह— **तानिति**। कार्यकरणव्यापारैः षट्त्रिंशत्सहस्राहोरात्रावच्छिन्नैरिष्टकात्वेन भावितैरेतैः [रेते] संपाद्यन्ते। तत्रेष्टकास्वग्निषु च संख्याधिक्यमग्नीनां केवलविद्यात्वे लिङ्गम्। न हि क्रियाङ्गत्वे प्रसिद्धसंख्यातिरेकसिद्धिरिति मत्वाऽऽह— **एवमिति**।

---

१. प्राणः घ्राणः, कर्म कर्मेन्द्रियं हस्तादि, अग्निः त्वक्। रत्न.।

**काण्डे– 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' (जै.सू. ३।३।१३) इति।।४४।।**

**पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्।।४५।।**

**नैतद् युक्तं स्वतन्त्रा एतेऽग्नयोऽनन्यशेषभूता इति। पूर्वस्य क्रियामयस्याग्नेः प्रकरणात् तद्विषय एवायं विकल्पविशेषोपदेशः स्यान्न स्वतन्त्रः। ननु प्रकरणाल्लिङ्गं बलीयः। सत्यमेवमेतत्। लिङ्गमपि त्वेवंजातीयकं न प्रकरणाद् बलीयो भवति। अन्यार्थदर्शनं ह्येतत्। सांपादिकाग्निप्रशंसारूपत्वात्। अन्यार्थदर्शनं चासत्यामन्यस्यां प्राप्तौ गुणवादेनाप्युपपद्यमानं न प्रकरणं बाधितुमुत्सहते। तस्मात् सांपादिका अप्येतेऽग्नयः प्रकरणात् क्रियानुप्रवेशिन एव स्युः। मानसवत्। यथा दशरात्रस्य दशमेऽहन्यविवाक्ये पृथिव्या पात्रेण समुद्रस्य**

*प्रकटार्थविवरणम्*

प्रतिनियतदेशकालनिमित्तेषु चोदितत्वादित्यर्थः। यच्चोक्तं प्रकरणात्क्रियाङ्गत्वमिति, तत्राह— **तद्धि लिङ्गमिति**।

**पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्**। सिद्धान्तोपक्रममिदमधिकरणम्; तत्र सूत्रेण पूर्वपक्षमाह— **पूर्वविकल्प इति**। पूर्वस्य क्रियामयस्येष्टकाभिरग्निश्चीयत इति विहितस्यायं विकल्पः स्यात्, यथाऽसौ क्रत्वङ्गं तथाऽयमपीत्यर्थः। सिद्धान्तिनोक्तमनूद्य दूषयति— **नन्वित्यादिना**। यद्यपि विध्युद्देशगतं लिङ्गं प्रकरणाद् बलीयः, तथापि नार्थवादगतम्, न्यायतः प्राप्तस्यावद्योतकत्वादर्थवादलिङ्गानामित्यर्थः। क्रियेति सूत्रपदनिगमनेन व्याचष्टे— **तस्मादिति**। ननु क्रियाया बाह्यसाधनसाध्यतानियमात् कथं भावनात्मकानां क्रत्वङ्गतेत्याशङ्क्योदाहरणमाह— **मानसवदिति**। दशरात्रस्य कर्मणो यद्दशममहः तदविवाक्यं नाम। न विद्यते

*भाष्यभावप्रकाशिका*

एवं सिद्धान्तेनोपक्रम्येदानीं पूर्वपक्षं दर्शयति— **पूर्वविकल्प इत्यादिना**। **कल्पविशेषोपदेशः स्यादिति**। इष्टकाभिरग्निं चिनुत इति विहितस्य क्रियामयस्यायमग्निविकल्पो यथा असौ क्रत्वङ्गं तथाऽयमपीत्यर्थः। **एवञ्जातीयकमिति**। नेदं सामर्थ्यलक्षणं लिङ्गं, विध्युपद्देशेनैकवाक्यतया विधिपरत्वात्। अतः स्वातन्त्र्येण प्रापकप्रमाणं न भवति स्तुतिमात्रत्वादित्यर्थः। नन्वन्यार्थदर्शनानामपि प्रापकत्वं दृश्यत इत्याशङ्क्य यत्र मूलप्रमाणमस्ति तत्र तथाभावेऽप्यत्र तदभावान्न प्रापकत्वमित्याह— **अन्यार्थदर्शनञ्चेति**। नन्वक्रियारूपाणां कथं क्रियाशेषत्वमिति, तत्राह— **मानसवदिति**। तद् व्याचष्टे— **यथेति**। यद्यपि द्वादशाहसंबन्धिनो दशमस्याह्नो

*न्यायनिर्णयः*

प्रकरणादेषां क्रियाङ्गत्वं सिद्धं, लिङ्गाच्च स्वातन्त्र्यं, तेन संशयः स्यादित्याशङ्क्याह— **तद्धीति**। प्रमाणत्वाविशेषे कुतो बलाबलव्यवस्थेत्याशङ्क्याह— **तदपीति**।।४४।।

सिद्धान्तेनोपक्रम्याधुना पूर्वपक्षयति— **पूर्वेति**। पूर्वपक्षं विवृण्वन्नुक्तसिद्धान्तप्रतिज्ञां निषेधति— **नैतदिति**। सम्प्रति सहेतुकं पूर्वपक्षं प्रतिजानीते— **पूर्वस्येति**। 'इष्टाकाभिरग्नींश्चिनुत' इत्युक्तक्रियामयाग्न्यधिकारे श्रवणादयमपि सांपादिकाग्न्युपदेशस्तद्विषयो विकल्पोपदेशः; तथा च यथा क्रियाङ्गं क्रियामयोऽग्निस्तथा सांपादिकाग्निरपि तदङ्गं स्यादित्यर्थः। विकल्पविशेषः प्रकारभेदः। उक्तं सैद्धान्तिकं मतमनुवदति— **नन्विति**। तेन प्राकरणिकं क्रियाशेषत्वं हित्वा लैङ्गिकं पुमर्थत्वमेष्टव्यमिति शेषः। विध्युद्देशस्थमर्थवादस्थं वा लिङ्गं प्रकरणाद् बलवदिति विकल्प्याद्यमङ्गीकरोति— **सत्यमिति**। द्वितीयं दूषयति— **लिङ्गमिति**। एवंजातीयकं 'सर्वदा सर्वाणि भूतानि चिन्वन्ती'त्याद्यर्थवादस्थमिति यावत्। तदेव साधयति— **अन्यार्थेति**। न हीदं साधनात्मकं लिङ्गम्, विध्युद्देशैकवाक्यतया तत्परत्वादतो नेदं स्वातन्त्र्येण प्रमापकं स्तुतिमात्रत्वादित्यर्थः। अन्यार्थदर्शनानामपि प्रमापकत्वमाशङ्क्य मूलप्रमाणभावे तथाभावेऽपि प्रकृते तदभावान्नैवमित्याह— **अन्येति**। प्रकृतलिङ्गस्य प्रकरणाबाधकत्वे फलितमाह— **तस्मादिति**। एतेन क्रियेति पदं व्याख्यातम्। कथमक्रियारूपाणामेतेषां क्रियाशेषत्वं, तत्राह— **मानसवदिति**। द्वादशाहे श्रूयते—'अनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं

**सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहणासादनहवनाहरणोपह्वानभक्षणानि मानसान्येवाम्नायन्ते। स च मानसोऽपि ग्रहकल्पः क्रियाप्रकरणात् क्रियाशेष एव भवति। एवमयमप्यग्निकल्प इत्यर्थः।।४५।।**

### *प्रकटार्थविवरणम्*

विविधं वाक्यम् ऋत्विजां यस्मिन् मानसत्वात् सङ्कल्पव्यापारस्य तस्मिन्नेवं श्रूयते 'अनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णाति' इति। तदर्थत उपन्यस्यति— **पृथिव्येत्यादिना**। ग्रहणं सोमाधारपात्रस्योपादानम्। आसादनं गृहीतस्य स्वस्थाने निक्षेपः; तदनन्तरं सोमस्य हवनम्; हुतशेषोपादानमाहरणम्; पश्चादृत्विजां तद्भक्षणाय अन्योन्यमनुज्ञाकरणमुपस्थानं [मुपह्वानम्] पश्चाद्भक्षणं सोमस्येत्येतानि मानसान्येवेत्यर्थः। **ग्रहकल्प इति**। ग्रहसंबन्धिकल्पनाप्रकार इत्यर्थः।

### *भाष्यभावप्रकाशिका*

मानसमङ्गमिति कर्ममीमांसायां दर्शितम्[१], तथापि श्रुत्यन्तरावष्टम्भेन दशरात्रगतस्यापि दशमस्याह्नोऽङ्गमिति भाष्यकारेण प्रदर्शितम्[२]। अविवाक्यमिति दशमस्याह्नो नाम। द्वादशाहे श्रूयते— 'अनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णाती'ति। तत्र संशयः— किं मानसं द्वादशाहादहरन्तरं किं वा तन्मध्यपातिनो दशमस्याह्नोऽङ्गमिति। तत्र वाग्वै द्वादशाहो मनो मानसमिति भेदेन व्यपदेशान्मानसस्य द्वादशाहात् भेदः प्रतीयते। द्वादशाहस्य गतरसादीनिं त्वङ्गानि मानसेनैवाप्याययन्तीति च मानसेन द्वादशाहस्य स्तूयमानत्वात् स्तुतिस्तुत्यभावस्य भेदाकाङ्क्षत्वात् पत्नीसंयाजान्तत्वाच्चाह्नो मानसस्य च पत्नीसंयाजात् परस्तात्पत्नीः संयाज्य मानसाय प्रसर्पतीति श्रूयमाणत्वाद् द्वादशाहसंज्ञाया अपि त्रयोदशाहे द्वादशाहसद्भावेन कथञ्चिदुपपन्नत्वाद् द्वादशाहादहरन्तरं मानसमिति प्राप्तम्। अत्राभिधीयते— त्रयोदशाहत्वे प्रमाणान्तराभावाद् द्वादशाहसंज्ञाया गौण्या वृत्त्या नेतुमयुक्तत्वादङ्गिभेदेन व्यपदेशभेदस्य स्तुतिस्तुत्यभावस्य चोपपत्तेः पत्नीसंयाजान्तताया अप्यह्न औत्सर्गिकत्वात् विशेषवचनेन दशमस्याह्नो ग्रहणासादनानां मानसानां पत्नीसंयाजात्परत्वोपपत्तेः; 'एष वै दशमस्याह्नो विसर्गो यन्मानसमिति च वचनाद्' विसर्गस्यान्तस्यान्तवतो धर्मत्वेन दशमाहरङ्गताप्रतीतेर्दशमेऽहनि मानसादवसर्पन्तीति दशमस्याह्न आधारत्वनिर्देशाच्च तदङ्गमेव मानसम्, नाहरन्तरमिति यथा तत्र

### *न्यायनिर्णयः*

मनोग्रहं गृह्णाती'ति। तत्र किं मानसं द्वादशाहादहरन्तरं किंवा तन्मध्यपातिनो दशमस्याङ्गमिति संदेहे 'वाग्वै द्वादशाहो मनो मानस'मिति भेदोक्त्या मानसस्य द्वादशाहाद्भेदसिद्धेः 'द्वादशाहस्य गतरसान्यङ्गानि मानसेनैवाप्याययन्ती'ति च मानसेन द्वादशाहस्य स्तुतेः स्तुतिस्तुत्यभावस्य भेदाकाङ्क्षत्वात् 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्त' इत्युक्त्वा द्वादशाहान्तर्गतानामह्नां पत्नीसंयाजान्तत्व-दृष्टेर्मानसस्य च 'पत्नीः संयाज्य मानसाय प्रसर्पन्ती'ति पत्नीसंयाजादुपरिष्टादेव श्रुतेर्द्वादशाहसंज्ञायाश्च त्रयोदशाहेऽपि द्वादशाहसत्त्वेन कथंचिदुपपत्तेर्द्वादशाहादहरन्तरं मानसमिति प्राप्ते मानसस्य त्रयोदशाहत्वे मानाभावाद् द्वादशाहसंज्ञाया गुणवृत्त्या नेतुमयुक्तत्वादङ्गाङ्गि-भेदेनोक्तिभेदस्य स्तुतिस्तुत्यभावस्य च सिद्धेरह्नां पत्नीसंयाजान्ततायाश्चौत्सर्गिकत्वाद्विशेषोक्त्या दशमस्याह्नो ग्रहणादीनां मानसानां पत्नीसंयाजात्परत्वाविरोधाद् 'एष वै दशमस्याह्नो विसर्गो यन्मानस'मिति चोक्तेर्विसर्गस्यान्तस्यान्तवतो धर्मत्वाद् दशमाहरङ्गतावगते'र्दशमेऽहनि मानसाय प्रसर्पन्ती'ति चाधारत्वोक्तेस्तदङ्गमेव मानसं नाहरन्तरमिति राद्धान्तितम्। तदेवं द्वादशाहयोगिनो दशमस्याह्नो मानसमङ्गमिति कर्ममीमांसायामुक्तं तथापि दशरात्रस्य द्वादशाहविकृतित्वात् क्रमेणाहर्धर्मेष्वतिदिष्टेषु दशरात्रगतदशमाहन्यपि द्वादशाहान्तर्गतदशमाहरङ्गस्य मानसस्यास्ति प्राप्तिरित्यभिप्रेत्य व्याचष्टे— **यथेति**। अविवाक्यमिति दशमस्याह्नो नामधेयं, विविधानि वाक्यानि यत्र मानसत्वादृत्विजां न सन्ति तत्तथेति व्युत्पत्तेः। तत्रेदं श्रुतम्—'अनया त्वा पात्रेणे'त्यादि। त्वां समुद्रमनया रसया पृथिव्या पात्रेण प्रजापतिदेवताकं मनोग्रहं ध्यानमयं ग्रहमापाद्याध्वर्युर्गृह्णातीति वाक्यार्थः। तमिमं सोपस्कारमुपन्यस्यति— **पृथिव्येति**। ग्रहणं सोमाधारपात्रस्योपादानमासादनं गृहीतस्य स्वस्थाने स्थापनं, ततः सोमस्य होमो हवनं, हुतशेषादानमाहरणं, पश्चादृत्विजां तद्भक्षणाय मिथोऽनुज्ञाकरणमुपह्वानं, ततोऽवशिष्टस्य सोमस्य भक्षणमित्येतानि मानसान्येवेत्यर्थः। कथमन्यग्रहयोगिनो मानसस्य कल्पनाभेदस्य क्रियानुप्रवेशित्वं, तत्राह— **स चेति**। उक्तदृष्टान्तादग्निसंबन्धिकल्पनाभेदोऽपि क्रियाधिकारात् क्रियानुप्रवेशीति दार्ष्टान्तिकमाह— **एवमिति**।।४५।।

---

१. द्र.पू.मी. १०-६-१३। २. एतच्च भामत्यनुरोधेन। द्वादशाहान्तर्गतमध्यमदशरात्रपरताऽपि भाष्यस्योपपादिता परिमले। द्र. ८४२ पृ.।

**अतिदेशाच्च।।४६।।**

**अतिदेशश्चैषामग्नीनां क्रियानुप्रवेशमुपोद्बलयति– 'षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान् यावानसौ पूर्वः' (शत. १०।५।३।११) इति। सति हि सामान्येऽतिदेशः प्रवर्तते। ततश्च पूर्वेणेष्टकाचितेन क्रियानुप्रवेशिनाऽग्निना सांपादिकानग्नीनतिदिशन् क्रियानुप्रवेशमेवैषां द्योतयति।।४६।।**

**विद्यैव तु निर्धारणात्।।४७।।**

**तुशब्दः पक्षं व्यावर्तयति। विद्यात्मका एवैते स्वतन्त्रा मनश्चिदादयोऽग्नयः स्युर्न क्रियाशेषभूताः। तथाहि निर्धारयति– 'ते हैते विद्याचित एव' इति, 'विद्यया हैवैत एवंविदश्चिता भवन्ति' (शत.१०।५।३।१२) इति च।।४७।।**

**दर्शनाच्च।।४८।।**

**दृश्यते चैषां स्वातन्त्र्ये लिङ्गम्। तत् पुरस्ताद् दर्शितम्– 'लिङ्गभूयस्त्वात्' (ब्र. सू. ३।३।४४) इत्यत्र।।४८।।**

**ननु लिङ्गमप्यसत्यामन्यस्यां प्राप्तावसाधकं कस्यचिदर्थस्येत्यपास्य तत् प्रकरणसामर्थ्यात्क्रियाशेषत्व-मध्यवसितमित्यत उत्तरं पठति–**

*प्रकटार्थविवरणम्*

**अतिदेशाच्च**। क्रत्वङ्गतालक्षणसादृश्यसापेक्षाददतिदेशाच्च क्रियाङ्गत्वमित्यर्थः।

**विद्यैव तु निर्धारणात्। दर्शनाच्च। श्रुत्यादिबलीयस्त्वाच्च न बाधः।** श्रुतिलिङ्गवाक्यैः प्रकरणमपबाध्य फलार्थतया निर्णीतम्, तथा प्रकरणवशादस्यापि क्रियाशेषत्वमित्यर्थः।

*भाष्यभावप्रकाशिका*

अतिदेशं दर्शयति— **षट्त्रिंशदिति**। एतावता कथमङ्गत्वमिति, तत्राह— **स हीति**। न च क्रियानुप्रवेशितामन्तरेणान्यत् सादृश्यं दृश्यत इत्यर्थः।

सिद्धान्तमाह— **विद्यैव तु निर्द्धारणादिति**। निर्द्धारणं दर्शयति— **ते हैत इति**। एवकारश्रुतिविरोधात् प्रकरणं बाध्यत इत्यर्थः।

*न्यायनिर्णयः*

मनश्चिदाद्यग्नीनां क्रियानुप्रवेशे लिङ्गान्तरमाह— **अतिदेशाच्चेति**। सूत्रं व्याकरोति— **अतिदेशश्चेति**। तमेव दर्शयति— **षडिति**। कथं तावता क्रत्वङ्गत्वं, तदाह— **सतीति**। क्रियानुप्रवेशमन्तरेणान्यदेव सादृश्यमतिदेशकृतमित्याशङ्क्य तस्य योग्यानुपलम्भान्नैवमित्याह— **ततश्चेति**।।४६।।

सिद्धान्तमाह— **विद्यैवेति**। परपक्षनिषेधं प्रतिजानीते— **तुशब्द इति**। सिद्धान्तप्रतिज्ञामाह— **विद्येति**। हेतुं व्याचष्टे— **तथा हीति**। एवकारश्रुत्या प्रकरणं बाध्यमिति भावः। मनश्चिदाद्यग्नीनां विद्यात्मत्वे श्रुतितात्पर्यं वक्तुं श्रुत्याभासं दर्शयन् वाक्यमपि समुच्चिनोति— **विद्ययेति**।।४७।।

न श्रुत्यैव प्रकरणं बाध्यं, लिङ्गादपीत्याह— **दर्शनाच्चेति**। तद् विभजते— **दृश्यते चेति**। किं तदित्यपेक्षायामाह— **तत्पुरस्तादिति**।।४८।।

उत्तरसूत्रव्यावर्त्यं पूर्वोक्तं चोद्यमनुस्मारयति— **नन्विति**। तदुत्तरं सूत्रमवतारयति— **अत इति**। 'न बाध' इत्येतद्

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ।।४९।।

**नैवं प्रकरणसामर्थ्यात् क्रियाशेषत्वमध्यवसाय स्वातन्त्र्यपक्षो बाधितव्यः, श्रुत्यादेर्बलीयस्त्वात्। बलीयांसि हि प्रकरणाच्छ्रुतिलिङ्गवाक्यानीति स्थितं श्रुतिलिङ्गसूत्रे। तानि चेह स्वातन्त्र्यपक्षं साधयन्ति दृश्यन्ते। कथम्? श्रुतिस्तावत्- 'ते हैते विद्याचित एव' (शत. १०।५।३।१३) इति। तथा लिङ्गम्- 'सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति। तथा वाक्यमपि- 'विद्यया हैवैत एवंविदश्चिता भवन्ति' इति। 'विद्याचित एव' इति हि सावधारणेयं श्रुतिः क्रियानुप्रवेशेऽमीषामभ्युपगम्यमाने पीडिता स्यात्। नन्वबाह्यसाधनत्वाभिप्रायमिदमवधारणं भविष्यति। नेत्युच्यते। तदभिप्रायतायां हि 'विद्याचित' इतीयता स्वरूपसंकीर्तनेनैव कृतत्वादनर्थकमवधारणं भवेत्। स्वरूपमेव ह्येषामबाह्यसाधनत्वमिति। अबाह्यसाधनत्वेऽपि तु मानसग्रहवत् क्रियानुप्रवेशशङ्कायां तन्निवृत्तिफलमवधारणमर्थवद् भविष्यति। तथा 'स्वपते जाग्रते चैवंविदे सर्वदा सर्वाणि भूतान्येतानग्नींश्चिन्वन्ति' इति सातत्यदर्शनमेषां स्वातन्त्र्येऽवकल्पते। यथा सांपादिके वाक्प्राणमयेऽग्निहोत्रे 'प्राणं तदा वाचि जुहोति'। 'वाचं तदा प्राणे जुहोति' (कौ.उ. २।५) इति चोक्त्वोच्यते- 'एते अनन्ते अमृते आहुती जाग्रच्च स्वपंश्च सततं जुहोति' (कौ.उ. २।५) इति, तद्वत्। क्रियानुप्रवेशे तु क्रियाप्रयोगस्याल्पकालत्वेन न सातत्येनैषां प्रयोगः कल्पेत। न चेदमर्थवादमात्रमिति न्याय्यम्। यत्र हि**

### *प्रकटार्थविवरणम्*

मनश्चिदादीनां स्वातन्त्र्यमाह— 'विद्यैव तु' इत्यादि सूत्रत्रयेण। श्रुतिं विवृणोति आक्षेपसमाधानाभ्याम्— **विद्याचित एवेति सावधारणेयमित्यादिना**। इदानीं लिङ्गं व्यनक्ति— **तथा स्वपत इति**। यच्चोक्तमर्थवादगतं लिङ्गं न प्रकरणबाधने समर्थमिति, तत्राह— **न चेदमर्थवादमात्रमिति**। प्राप्तिविरोधयोरसतोः यथाश्रुतेऽर्थवादानां प्रामाण्यमिति देवताधिकारन्यायेन सर्वदा सर्वाणि भूतानि मदर्थमग्निं चिन्वन्तीति मन्वीतेति विधिः कल्प्यत इत्यर्थः। पूर्वोक्तेन यथाश्रुतग्रहणन्यायेन यत्किंचेत्यत्रापि अग्निकरणसंकल्पनमेव

### *भाष्यभावप्रकाशिका*

विद्याशब्देनैव बाह्यसाधनत्वं व्यावर्त्यते चेत् किमर्थमवधारणमिति, तत्राह— **बाह्यसाधनत्वेऽपीति**। परिशेषात् क्रियानुप्रवेशशङ्कापाकरणेनार्थवत्त्वमित्यर्थः। लिङ्गमपि स्वातन्त्र्य एवोपपद्यते, न तु क्रियानुप्रवेश इत्याह— **तथा स्वपत इति**। सातत्यं सर्वकालसर्वपुरुषव्यापित्वं, सातत्येन क्रियानुप्रवेशाभावे निदर्शनमाह— **यथा सांपादिक इति**। यदुक्तं नेदं सामर्थ्यलक्षणं लिङ्गं विध्युद्देशेनैकवाक्यतया विधिपरत्वादस्वातन्त्र्येण प्रापकप्रमाणं न भवतीति, तदयुक्तमित्याह— **न चेदमर्थवादमात्रमिति**।

### *न्यायनिर्णयः*

व्याचष्टे— **नैवमिति**। हेतुमवतार्य व्याचष्टे— **श्रुत्यादीति**। तेषां प्रकरणाद् बलीयस्त्वेऽपि प्रकृते किं जातं, तत्राह— **तानि चेति**। स्वातन्त्र्यसाधकश्रुत्यादिदृष्टिमेव प्रश्नद्वारा स्फुटयति— **कथमित्यादिना**। तत्र श्रुतिं विवृणोति— **विद्येति**। अवधारणश्रुतेरन्यथासिद्धिं शङ्कते— **नन्विति**। दूषयति— **नेत्युच्यत इति**। कृतत्वादभिप्रेतस्याबाह्यसाधनत्वस्य ज्ञातत्वादिति यावत्। स्वरूपसंकीर्तनेन कृतत्वमेव स्फुटयति— **स्वरूपमिति**। विद्याशब्देनैव बाह्यसाधनत्वं व्यावर्त्यते चेत्, त्वन्मतेऽपि किमर्थमवधारणमित्याशङ्क्याह— **अबाह्येति**। सम्प्रत्यवधारणश्रुतिवदेव लिङ्गं व्यनक्ति— **तथेति**। सातत्यं सर्वकालसर्वपुरुषव्यापित्वं, तेन हेतुना क्रियानुप्रवेशाभावे दृष्टान्तमाह— **यथेति**। तदेति संपादनावस्थोक्तिः। आहुत्योरनन्तत्वमक्षयफलत्वादित्याह— **अमृते इति**। तयोरपि क्रियाङ्गत्वशङ्कां प्रत्याह— **जाग्रच्चेति**। उक्तदृष्टान्तात् प्रकृताग्नीनां सातत्यदृष्टेर्न क्रियाप्रवेशितेति दार्ष्टान्तिकमाह— **तद्वदिति**। सातत्यप्रयोगेऽपि किमित्यग्नीनां क्रियाप्रवेशो न स्यात्, तत्राह— **क्रियेति**। यत्पुनरर्थवादस्थं लिङ्गं न प्रकरणबाधकमिति, तत्राह— **न चेति**। अन्येषां श्रुतिविध्युद्देशानामन्यार्थदर्शनानामप्रापकत्वेऽपि प्रकृतेषु 'वचनानि त्वपूर्वत्वा'दिति न्यायेन सर्वदा सर्वाणि भूतानि मदर्थमग्निं

**विस्पष्टो विधायको लिङादिरुपलभ्यते युक्तं तत्र संकीर्तनमात्रस्यार्थवादत्वम्। इह तु विस्पष्टविध्यन्तरानुपलब्धेः संकीर्तनादेवैषां विज्ञानविधानं कल्पनीयम्। तच्च यथासंकीर्तनमेव कल्पियतुं शक्यत इति सातत्यदर्शनात् तथाभूतमेव कल्प्यते। ततश्च सामर्थ्यादेषां स्वातन्त्र्यसिद्धिः। एतेन 'तद्यत्किंचेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः' इत्यादि व्याख्यातम्। तथा वाक्यमपि 'एवंविद' इति पुरुषविशेषसंबन्धमेवैषामाचक्षाणं न क्रतुसंबन्धं मृष्यते। तस्मात् स्वातन्त्र्यपक्ष एव ज्यायानिति।।४९।।**

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्।।५०।।**

**इतश्च प्रकरणमुपमृद्य स्वातन्त्र्यं मनश्चिदादीनां प्रतिपत्तव्यम्। यत् क्रियावयवान् मनआदिव्यापारेष्वनुबध्नाति 'ते मनसैवाधीयन्त मनसाऽचीयन्त मनसैव ग्रहा अगृह्यन्त मनसाऽस्तुवन् मनसाऽशंसन् यत्किंच यज्ञे कर्म क्रियते यत्किंच यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमेव क्रियते' (शत.१०।५।३।३) इत्यादिना। संपत्फलो ह्ययमनुबन्धः। न च प्रत्यक्षाः क्रियावयवाः सन्तः संपदा लिप्सितव्याः। न**

***प्रकटार्थविवरणम्***

विधीयत इत्याह— **एतेनेति**। एवं लिङ्गं विविच्य वाक्यं विवेक्ति [विविनक्ति]— **तथा वाक्यमपीति**।

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्**। क्रियाङ्गानां मनआदिव्यापारेषु संबन्धकरणान्यथानुपपत्त्याऽपि न क्रियाशेषत्वमित्याह— **इतश्चेत्यादिना**। मनसैवैतेऽग्नय आधीयन्ते[न्त] विदुषाऽऽधीयन्ते; छन्दसि लकारनियमाभावादित्यर्थः। आधानमग्नीनां चयनमिष्टकादीनां ग्रहशब्दवाच्यानां पात्राणां ग्रहणं तत्प्रतिबन्धात् स्तुतिः शसनं चान्यदपि यत्किंचित् यज्ञे पुरुषार्थं क्रियते, यच्च यज्ञाङ्गं क्रत्वर्थं तत्सर्वमेव मनसैव क्रियत इत्यर्थः। अनुबन्धकरणस्य फलमाह— **संपत्फलो हीति**। क्रियाङ्गानां मनआदिव्यापारेषु संपादनार्थमिदं संबन्धकरणमित्यर्थः। ततः क्रियाङ्गत्वे किमायातमित्याशङ्क्याह— **न च प्रत्यक्षा इति**।

***भाष्यभावप्रकाशिका***

यद्यप्यन्येषां श्रुतिविध्युद्देशानामन्यार्थदर्शनानामप्रापकत्वम्, तथाप्येतेषु 'वचनानि त्वपूर्वत्वा'दिति न्यायेन विधिः कल्पनीयः। अपूर्वार्थप्रतिपादकतयाऽवभासमानानां द्योतकत्वमात्राङ्गीकरणेन गुणवादाश्रयणायोगादित्यर्थः। उक्तन्यायं वाक्यान्तरेऽप्यतिदिशति— **एतेनेति**।

निष्ठीवनादिकमपि यज्ञे क्रियत इति तन्निवृत्यर्थमाह— **यत्किंच यज्ञीयमिति**। एतच्चोपासनार्थमेवेत्याह— **संपत्फल इति**।

***न्यायनिर्णयः***

चिन्वन्तीति मन्वीतेति विधिः कल्प्यते। अपूर्वार्थवादितया भासमानानां द्योतकत्वमात्राङ्गीकारेण गुणवादाश्रयणायोगादिति मत्वाऽऽह— **यत्रेति**। उक्तन्यायं वाक्यान्तरेऽपि संचारयति— **एतेनेति**। श्रुतिलिङ्गे विविच्य वाक्यं विविनक्ति— **तथेति**। श्रुतिलिङ्गवाक्येभ्यो भग्ने प्रकरणे फलितमाह— **तस्मादिति**।।४९।।

स्वातन्त्र्ये हेत्वन्तराण्याह— **अनुबन्धादिभ्य इति**। सूत्रस्य हेत्वन्तरोक्तौ तात्पर्यमाह— **इतश्चेति**। तत्रानुबन्धं हेतुं विवृणोति— **यदिति**। क्रियाङ्गानां मनआदिव्यापारेषु संयोजनान्यथानुपपत्त्याऽपि न क्रियाशेषत्वं मनश्चिदादीनामित्यर्थः। तेऽग्नयो विदुषा मनसैवाधीयन्ताधीयन्ते छन्दसि कालानियमात्। मनसाऽचीयन्त इष्टकाश्चीयन्ते। मानसेषु मनश्चित्स्वग्निषु ग्रहाः पात्राणि विदुषाऽगृह्यन्त गृह्यन्ते। मनसैवास्तुवन्नुद्गातृप्रभृतयः स्तुवन्ति। मनसैवाऽशंसन् होत्रादयः शंसन्ति। अन्यदपि यत्किंचिद् यज्ञेषु पुरुषार्थं क्रियते यच्च यज्ञार्हं क्रत्वर्थं तत्रानुष्ठीयते तत्सर्वमेव मनोमयं भावनामयं विदुषा मनसैवाक्रियत क्रियत इत्यर्थः। किमर्थमिदमनुबन्धकरणं, तदाह— **संपदिति**। उपास्त्यर्थो ह्यनुबन्धः। तथापि मनश्चिदादीनामक्रियाङ्गत्वे किमायातं, तदाह— **न चेति**।

**चात्रोद्गीथाद्युपासनवत् क्रियाङ्गसंबन्धात् तदनुप्रवेशित्वमाशङ्कितव्यम्, श्रुतिवैरूप्यात्। न ह्यत्र क्रियाङ्गं किंचिदादाय तस्मिन्नदो नामाध्यसितव्यमिति वदति। षट्त्रिंशत्सहस्राणि तु मनोवृत्तिभेदानादाय तेष्वग्नित्वं ग्रहादींश्च कल्पयति पुरुषयज्ञादिवत्। संख्या चेयं पुरुषायुषस्याहःसु दृष्टा सती तत्संबन्धिनीषु मनोवृत्तिष्वारोप्यत इति द्रष्टव्यम्। एवमनुबन्धात् स्वातन्त्र्यं मनश्चिदादीनाम्। आदिशब्दादतिदेशाद्यपि यथासंभवं योजयितव्यम्। तथाहि– 'तेषामेकैक एव तावान् यावानसौ पूर्वः' इति क्रियामयस्याग्नेर्माहात्म्यं ज्ञानमयानामेकैकस्यातिदिशन् क्रियायामनादरं दर्शयति। न च सत्येव क्रियासंबन्धे विकल्पः पूर्वेणोत्तरेषामिति शक्यं वक्तुम्। न हि येन व्यापारेणाहवनीयधारणादिना पूर्वः क्रियायामुपकरोति तेनोत्तर उपकर्तुं शक्नुवन्ति। यत्तु पूर्वपक्षेऽप्यतिदेश उपोद्बलक इत्युक्तम्– सति हि सामान्येऽतिदेशः प्रवर्तत इति; तदस्मत्पक्षेऽप्यग्नित्वसामान्येनातिदेशसंभवात्**

### *प्रकटार्थविवरणम्*

मनश्चिदादीनां क्रियाङ्गत्वे साक्षादेव आधानादिसंभवात् संपादनं व्यर्थमापद्यत इत्यर्थः। ननु तर्हि कर्माङ्गसंबन्धादुद्गीथाद्युपासनवदाश्रित्य विधानं स्यात्र स्वातन्त्र्येणेत्याशङ्क्याह— **न चात्रोद्गीथादीति**। अदो नाम तन्नाम किंचिदध्यसितव्यमिति न हि वदति श्रुतिः। अतः स्वातन्त्र्योपलम्भादाश्रित्य विधानश्रुतिवैलक्षण्यमित्यर्थः। किं तर्हि अत्र विधीयत इत्याशङ्क्याह— **षट्त्रिंशदिति**। कथं मनोवृत्तिषु सङ्ख्योपादानमित्याशङ्क्याह— **संख्या चेयमिति**। उक्तानुवादपूर्वकं सूत्रभागं योजयति— **इत्येवमनुबन्धादिति**। प्रथममतिदेशं योजयति— **तथा हीति**। ननु विकल्पार्थोऽयमतिदेशो नादरार्थ इत्याशङ्क्याह— **न चेति**। एकस्मिन् साध्ये तुल्यप्रापकाभ्यां द्वयोः सन्निपातो विकल्पो नाम, नात्रैकं साध्यमस्ति; तस्मादतिदेशोऽयं ज्ञानमयस्तुत्यर्थ इत्यर्थः। क्रियाङ्गत्वेऽप्यतिदेशादिति हेतुरुक्तः; स न तत्साधक इत्याह— **यत्त्वित्यादिना**। अतिदेशं योजयित्वा आदिशब्दार्थमाह— **श्रुत्यादीनि चेति**। स्वातन्त्र्ये दृष्टान्तमाह— **दृष्टश्चेति**। 'राजा

### *भाष्यभावप्रकाशिका*

भवत्वेवमर्थोऽनुबन्धस्तथापि कथं विद्यायाः स्वातन्त्र्यमित्यत आह— **न च प्रत्यक्षा इति**। ननूपासनार्थत्वेऽपि क्रियानुप्रवेश उद्गीथोपासनादिवन्न विरुध्यत इत्याशङ्क्याह— **न चात्रेति**। कथं तर्हीति, तदाह— **षट्त्रिंशदिति**। नन्विष्टकाचयनवत्क्रियाऽनुप्रवेशाभावे संख्या नोपपद्यत इत्यत आह— **संख्या चेयमिति**। यदुक्तं पूर्वेणेष्टकाचितेन मनश्चितादीनां विकल्पः स्यादिति, तत् तुल्यकार्यताभावादयुक्तमित्याह— **न च सत्येवेति**। व्रीहिभिर्यावत्क्रियते, यवैरपि तावत्क्रियत इति विकल्पो युक्तः। इह तु मनश्चितादीनां तदभावान्नेष्टकाचितेन विकल्प इत्यर्थः। नन्वादिशब्देन कथमतिदेशो गृह्यते तस्य पूर्वपक्षानुगुणत्वादिति, तत्राह— **यत्तत्पूर्वपक्ष इति**। अग्नित्वसामान्येनाप्यतिदेशसंभवान्न पारिशेष्यसिद्धिरित्यर्थः। तथाप्यनुबन्धादिभ्य इति बहुवचनं कथमित्याशङ्क्य

### *न्यायनिर्णयः*

तेषां क्रियाङ्गत्वे साक्षादेवाधानादिप्रसिद्धेरनर्थिका संपदित्यर्थः। तर्हि कर्माङ्गयोगादुद्गीथाद्युपासनावदिदमपि क्रियागतमुपासनं स्यान्नेत्याह— **न चेति**। उपासनं सप्तम्यर्थः। उद्गीथाद्युपास्तिविधिश्रुतिवैपरीत्यमेव प्रस्तुतोपास्तिविधौ दर्शयति— **न हीति**। कथं तर्हि विधानं, तदाह— **षडिति**। मनोवृत्तिभेदेष्वग्नित्वादिरहितेषु तत्कल्पनायां दृष्टान्तमाह— **पुरुषेति**। कथं मनोवृत्तिषु संख्याभेदोपादानं, तदाह— **संख्या चेति**। अनुबन्धसामर्थ्यसिद्धमर्थमुपसंहरति— **एवमिति**। सौत्रमादिशब्दं योजयति— **आदीति**। तत्र मनश्चिदादीनां स्वातन्त्र्यप्रापकमतिदेशं विशदयति— **तथा हीति**। वाक्यतात्पर्यमाह— **क्रियेति**। ननु पूर्वेणेष्टकाचितेनाग्निना मनश्चिदादीनां विकल्पः स्यादित्युक्तम्, तेन विकल्पार्थोऽतिदेशो नादरार्थ इति, तत्राह— **न चेति**। व्रीहिभिर्यावत्क्रियते यवैरपि तावदिति युक्तो विकल्पः। प्रकृते तु मनश्चिदादीनां तदभावान्नेष्टकाचितेन विकल्पः स्यादित्याह— **न हीति**। अतिदेशस्य पूर्वपक्षानुगुण्यात् कथमादिशब्देन ग्रहणमित्याशङ्क्यानुवदति— **यत्त्विति**। अग्नित्वसाम्येनाप्यतिदेशसिद्धेर्न पारिशेष्यमिति दूषयति— **तदिति**।

**प्रत्युक्तम्। अस्ति हि सांपादिकानामप्यग्नीनामग्नित्वमिति। श्रुत्यादीनि च कारणानि दर्शितानि। एवमनुबन्धादिभ्यः कारणेभ्यः स्वातन्त्र्यं मनश्चिदादीनाम्। प्रज्ञान्तरपृथक्त्ववत्। यथा प्रज्ञान्तराणि शाण्डिल्यविद्याप्रभृतीनि स्वेन स्वेनानुबन्धेनानुबध्यमानानि पृथगेव कर्मभ्यः प्रज्ञान्तरेभ्यश्च स्वतन्त्राणि भवन्त्येवमिति। दृष्टश्चावेष्टे राजसूय-**

### *प्रकटार्थविवरणम्*

स्वाराज्यकामो राजसूयेन यजेत' इति प्रकृत्यावेष्टिं नामेष्टिमामनन्ति 'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा' इत्यादिना। अतः प्रकरणात् राजसूयक्रत्वर्थायामिष्टौ प्रवृत्तिरिति चेन्न, वर्णत्रयसंयोगात् 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघारयेद् यदि वैश्यो वैश्वदेवं यदि राजन्य ऐन्द्रम्' इति। तस्माद् यथा प्रकरणं हित्वा राजयज्ञादवेष्टेरन्यत्वं साधितं तथेहाप्येवंवित्संयोगान्मनश्चिदादीनां स्वातन्त्र्यमित्यर्थः।

### *भाष्यभावप्रकाशिका*

श्रुतिलिङ्गादिभिः सहेत्याह— **श्रुत्यादीति**। प्रज्ञान्तरपृथक्त्ववदिति सूत्रभागं व्याचष्टे— **यथा प्रज्ञान्तराणीति**। ननु तर्हि स्वातन्त्र्ये क्रियाप्रकरणपाठोऽनुपपन्न इति, तत्राह— **दृष्टश्चेति**। वर्णत्रयसंबन्धेऽपि राजसूयाङ्गत्वं किं न स्यादिति, तत्राह— **राजयज्ञत्वाच्चेति**। अयं भावः— 'राजा स्वाराज्यकामो राजसूयेन यजेते'त्यारभ्य 'आग्नेयोऽष्टाकपालो हिरण्यन्दक्षिणे'त्यादिना अवेष्टिन्नामेष्टिमामनन्ति। तत्र च श्रूयते— 'यदि ब्राह्मणो यजते बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघारयेद्यदि वैश्यो वैश्वदेवं यदि राजन्यस्त्वैन्द्र'मिति। तत्र संशयः— किं ब्राह्मणादीनां प्राप्तानां निमित्तार्थेन श्रवणमुत ब्राह्मणादीनामयं यागो विधीयत इति। अत्र यदि प्रजापालनकण्टकोद्धारणादि कर्म राज्यम्, तस्य कर्ता राजा, तदा त्रैवर्णिकानामपि राजसूये प्राप्तिरस्तीति निमित्तार्थाः 'यदि ब्राह्मणो यजेते'त्याद्याः श्रुतयः। अथ राज्ञः कर्म राज्यमिति राजकर्तृयोगात् कर्म राज्यम्, ततः [कोऽसौ] राजेत्यपेक्षायामार्य्येषु तत्प्रसिद्ध्यभावात् म्लेच्छप्रसिद्धिस्तदवधारणमिति क्षत्रिय एव राजा, तत्रैव तेषां राजशब्दप्रयोगात्। तदा न ब्राह्मणवैश्ययोः प्राप्तिरस्तीति राजसूयप्रकरणं हित्वा ब्राह्मणादिकर्तृकाणि कर्मान्तराणि, न तु कर्मान्तराजेति(?)निमित्तार्थाः श्रुतय इति प्राप्तम्। तत्राभिधीयते— यववराहादिषु 'यदाऽन्या ओषधयो म्लायन्ते तदैता मोदमानास्तिष्ठन्ति' 'वराहं गावोऽनुधावन्ती' ति वैदिकाद्वाक्यशेषाद्विशेषवाक्यार्थपरत्वस्य तत्र प्रदर्शितत्वादिहापि वैदिकवाक्यशेषादिवत्

### *न्यायनिर्णयः*

अग्नित्वसाम्यसंभवमेव स्फुटयति— **अस्तीति**। बहुवचनं घटयति— **श्रुत्यादीनीति**। उक्तहेतुफलं निगमयति— **एवमिति**। दृष्टान्तमवतार्य व्याचष्टे— **प्रज्ञान्तरेति**। उक्तदृष्टान्तानुसारादनुबन्धाद्युक्तहेतुभ्यो मनश्चिदादीनामपि स्वातन्त्र्यमिति दार्ष्टान्तिकमाह— **एवमिति**। सूत्रभागव्याख्यासमाप्तावितिशब्दः। मनश्चिदादीनां स्वातन्त्र्ये क्रियाप्रकरणपाठासिद्धिरित्याशङ्क्याह— **दृष्टश्चेति**। उत्कर्षे हेतुमाह— **वर्णेति**। तथापि राजसूयाङ्गत्वयोगादुत्कर्षासिद्धिः, तत्राह— **राजेति**। 'राजा स्वाराज्यकामो राजसूयेन यजेते'त्यारभ्य 'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणे'त्यादिनाऽवेष्टिर्नामेष्टिराम्नाता। तत्र 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघारयेद् यदि वैश्यो वैश्वदेवं यदि राजन्यस्तदैन्द्र'मिति श्रूयते। तत्र किं ब्राह्मणादीनां राजसूये प्राप्तानां निमित्तार्थेन श्रवणमुत तेषामेष यागो विधीयत इति संदेहे— प्रजापालनकण्टकोद्धरणादि राज्यं, तस्य कर्ता राजेत्यार्यप्रसिद्धेस्त्रैवर्णिकानामपि तत्कर्तृत्वप्रसिद्ध्या राजशब्दवत्त्वेन राजसूयाधिकारित्वाद् 'यदि ब्राह्मणो यजेते'त्याद्याः श्रुतयो निमित्तार्था इति नास्ति प्रकरणादुत्कर्षोऽवेष्टेरिति प्राप्ते— 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति **पाणिनिना** गुणवचनेभ्यः शुक्लादिशब्देभ्यो ब्राह्मणादिशब्देभ्यश्च कर्मणि ष्यञ्प्रत्ययस्मरणाद् राज्ञः कर्म राज्यमिति राजकर्तृयोगाद् राज्यमित्यवगमात् कोऽसौ राजेत्यपेक्षायामार्येषु तत्प्रसिद्ध्यभावेऽपि म्लेच्छानां क्षत्रियमात्रे राजशब्दप्रयोगान्म्लेच्छप्रसिद्ध्या राजशब्दार्थनिर्णयाद् ब्राह्मणादौ च पालनादिकर्तरि राजशब्दस्य गौणत्वात् क्षत्रियस्यैव राजसूयेऽधिकाराद् ब्राह्मणवैश्ययोस्तत्राप्राप्ते राजसूयप्रकरणं हित्वा ब्राह्मणादिकर्तृकाणि कर्मान्तराणि विधीयन्त इति राजसूयप्रकरणादुत्कर्षोऽवेष्टेरिति द्वितीये स्थितम्। तत्र यथा क्षत्रियकर्तृके राजसूये ब्राह्मणादेरनधिकारादवेष्टे राजसूयप्रकरणादुत्कर्षस्तथा

**प्रकरणपठितायाः प्रकरणादुत्कर्षो वर्णत्रयानुबन्धाद्, राजयज्ञत्वाच्च राजसूयस्य। तदुक्तं प्रथमे काण्डे- 'क्रत्वर्थायामिति चेन्न वर्णत्रयसंयोगात्' (जै. सू. ११।४।११) इति।।५०।।**

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः।।५१।।

**यदुक्तं मानसवदिति तत् प्रत्युच्यते। न मानसग्रहसामान्यादपि मनश्चिदादीनां क्रियाशेषत्वं कल्प्यम्। पूर्वोक्तेभ्यः श्रुत्यादिहेतुभ्यः केवलपुरुषार्थत्वोपलब्धेः। न हि किंचित् कस्यचित् केनचित् सामान्यं न संभवति। न च तावता यथास्वं वैषम्यं निवर्तते। मृत्युवत्। यथा 'स वा एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः' (शत. १०।५।२।३) इति, 'अग्निर्वै मृत्युः' (बृ.उ. ३।२।१०) इति चाग्न्यादित्यपुरुषयोः समानेऽपि मृत्युशब्दप्रयोगे नात्यन्तसाम्यापत्तिः। यथा च 'असौ वाव लोको गौतमाग्निस्तस्यादित्य एव**

### *प्रकटार्थविवरणम्*

**न सामान्यादप्युपलब्धेः मृत्युवन्न हि लोकापत्तिः।** परोक्तदृष्टान्तं विघटयति— **न सामान्यादिति।**

### *भाष्यभावप्रकाशिका*

'गुणवचनब्राह्मणादिभ्यः कर्मणि चे'त्यत्र राज्ञः कर्म राज्यमिति पाणिनिस्मृतिवशान्निर्णयोपपत्तेःपाणिनीयस्मृत्यनुमतान्ध्रप्रसिद्धेश्च क्षत्रियत्वजातौ राजशब्दस्य मुख्यत्वादतज्जातौ च प्रजापालनादिकर्तरि गौणत्वात् क्षत्रियस्यैव राजसूयेऽधिकार इति प्रकरणादवेष्टेरुत्कर्षो यदि शब्दस्याप्यपूर्वविधौ सति तद्बाधनासमर्थत्वाद्बुच्यध्याहारेणाप्युपपत्तेः कर्मान्तरत्वमित्येतच्च चिन्तितं मीमांसायां द्वितीयेऽध्याये। एकादशे चैतदुक्तमित्याह— **तदुक्तमिति।** अवेष्टौ त्वेकलिङ्गं स्याल्लिङ्गदर्शनादिति पूर्वपक्षसूत्रम्। राजसूयप्रक्रमे अवेष्टिः श्रुता। सा किं राजसूयाङ्गमुत स्वतन्त्रेति विशये 'यदि ब्राह्मणो यजेते' त्यादिलिङ्गदर्शनात् तन्त्रभाव इति प्राप्तेऽभिधीयते— **क्रत्वर्थायामित्यादि।** अयमर्थः— यदि मन्यसे क्रत्वर्थायामेवैतद्दर्शनमेवञ्च प्रकृतशेषत्वं भविष्यतीति; तन्न; कुतो वर्णसंयोगात् त्रैवर्णिकसंयोगादवेष्टेः राजयज्ञत्वाच्च राजसूयस्य। तस्मात् स्वातन्त्र्यमेवावेष्टेरिति।

न हि लोकापत्तिरिति सूत्रावयवं व्याचष्टे— **यथेति।**

### *न्यायनिर्णयः*

मनश्चिदादीनामपि क्रियाप्रकरणादुत्कर्षो लिङ्गादिभिरिति भावः। एकादशेऽपि चिन्तितमेतदित्याह— **तदुक्तमिति।** राजसूयप्रक्रियायाम-वेष्टिर्नामेष्टिराम्नाता 'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणे'ति। तत्राग्नेयादिहविःष्वङ्गानां तन्त्रेण प्रयोगः, किंवाऽऽवृत्त्येति संशये पूर्वपक्षसूत्रम् 'अवेष्टौ त्वेकतन्त्रं स्याल्लिङ्गदर्शनात्' इति। 'बार्हस्पत्यं मध्ये निधाये'ति लिङ्गोपलम्भात् प्रयोगभेदे च मध्ये निधानायोगात् 'एतयाऽन्नाद्यकाम'मित्येकवचनाच्चैकतन्त्र्यमवेष्टावेकस्मिन् प्रयोगेऽङ्गानां तन्त्रेण भावः सकृदनुष्ठानमिति पूर्वपक्षं कृत्वाऽन्नाद्यकामप्रयोगेऽवेष्टेरिदं लिङ्गदर्शनादि, न क्रत्वर्थप्रयोगे, तस्य तु दक्षिणाभेदाद्भेद इत्यङ्गावृत्तिरेवेति राद्धान्तिते क्रत्वर्थायामपीष्टाविदं लिङ्गदर्शनाद्यस्तीत्यङ्गानावृत्तिरित्याशङ्कामनूद्य दूषयति— **क्रत्वर्थायामिति चेदिति।** काम्यायामिष्टौ 'यदि ब्राह्मण' इत्यादिना वर्णत्रयसंयोगात् तस्यां च मध्यनिधानादिसिद्धेर्न राजकर्तृकक्रत्वर्थेष्टौ तत्प्राप्तिरतोऽङ्गावृत्तिरित्यर्थः। अत्र चैकप्रयोगत्वलिङ्गस्य क्रत्वर्थेष्टावसंभवं काम्येष्टौ च संभवं वदताऽनेन सूत्रेण काम्येष्टेः क्रत्वर्थेष्टिवैलक्षण्यसूचनाद्द्वारेणार्थात् प्रकरणादुत्कर्षोऽपि सिध्यतीति क्रियाप्रकरणान्मनश्चिदादीनामुत्कर्षो [र्षे] भवत्येतदनुगुणमुदाहरणमिति द्रष्टव्यम्।।५०।।

परोदीरितमुदाहरणं विघटयति— **नेति।** परोक्तमनूद्य तदुत्तरत्वेन सूत्राक्षराणि व्याचष्टे— **यदित्यादिना।** मानसेन ग्रहेण सह मनश्चिदादीनां (च) भावनामयत्वे तुल्ये कथं श्रुत्यादिभिः स्वातन्त्र्यं, तत्राह— **न हीति।** सत्यपि सादृश्ये यथास्वं वैषम्यमव्यावृत्तमित्यत्र दृष्टान्तमादाय व्याचष्टे— **मृत्युवदिति।** न हीत्यादि विभजते— **यथा चेति।** उक्तदृष्टान्तानुरोधान्मानसग्रहस्य

**समित्' (छा.उ. ५।४।१) इत्यत्र न समिदादिसामान्याल्लोकस्याग्निभावापत्तिस्तद्वत्।।५१।।**

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः।।५२।।**

**परस्तादपि 'अयं वाव लोक एषोऽग्निश्चितः' (शत. १०।५।४।१) इत्यस्मिन्ननन्तरे ब्राह्मणे ताद्विध्यं केवलविद्याविधित्वं शब्दस्य प्रयोजनं लक्ष्यते, न शुद्धकर्माङ्गविधित्वम्। तत्र हि– 'विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' (शत. १०।५।४।१६) इत्यनेन श्लोकेन केवलं कर्म निन्दन् विद्यां च प्रशंसन्निदं गमयति। तथा पुरस्तादपि 'यदेतन्मण्डलं तपति' (शत. १०।५।२।१) इत्यस्मिन् ब्राह्मणे विद्याप्रधानत्वमेव लक्ष्यते, 'सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति' (शत. १०।५।२।२३) इति विद्याफलेनैवोपसंहारान्न कर्मप्रधानता। तत्सामान्यादिहापि तथात्वम्। भूयांसस्त्वग्न्यवयवाः संपादयितव्या विद्याकामित्येतस्मात्कारणादग्निनाऽनुबध्यते विद्या, न कर्माङ्गत्वात्। तस्मान्मनश्चिदादीनां केवलविद्यात्मकत्वसिद्धिः।।५२।।**

।। इत्येकोनत्रिंशं लिङ्गभूयस्त्वाधिकरणम् ।।

*शारीरकन्यायसंग्रहः*

३०।। ऐकात्म्याधिकरणम् ।।

**एक आत्मनः शरीरे भावात्।।५३।। व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्।।५४।।** 'अहं मनुष्यः' इति प्रत्यक्षप्रत्ययात् सति शरीरे चैतन्योपलब्धेः असति च अनुपलब्धेः इत्यन्वयव्यतिरेकाभ्यां चैतन्यस्य देहधर्मत्वावगमाद् देह एवात्मेति प्राप्तम्। स्वप्नावस्थायाम् 'अहं पश्यामि' इति द्रष्टर्यबाध्यमानप्रत्यक्षस्य स्थूलशरीराकाररहितस्य शरीरव्यतिरिक्तात्मविषयत्वात्

*प्रकटार्थविवरणम्*

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः।** किंचोपरितनेऽपि ब्राह्मणे चितेऽग्नावेतल्लोकदृष्टिविधानं स्वतन्त्रमुपलभ्यते। तत्साहचर्यात् पूर्वमपि स्वतन्त्रोपासनविधानमित्याह— **परस्तादपीति**। ननु स्वतन्त्रविद्याविधानं चेद्विवक्षितं किमिति तर्ह्यग्निना संबध्यते विद्येत्याशङ्क्याह— **भूयांसस्त्विति**। इत्येकोनत्रिंशं लिङ्गभूयस्त्वाधिकरणम्।।

*भाष्यभावप्रकाशिका*

पूर्वापरभागयोर्विद्याप्राधान्यदर्शनात्तन्मध्यपातिनोऽपि तत्सामान्याद्विद्याप्रधानत्वमेव ग्राह्यमित्याह— **परस्तादपीति**। सूत्रगतचशब्दस्यार्थमाह— **तथा पुरस्तादपीति**। ननु स्वतन्त्रा चेदियं विद्या तर्हि कर्मप्रकरणे पाठः किमर्थ इत्यत आह— **भूयांस इति**। इत्येकोनत्रिंशं लिङ्गभूयस्त्वाधिकरणम्।

*न्यायनिर्णयः*

मनश्चिदादीनां च भावनामयत्वाविशेषेऽपि पारतन्त्र्यस्वातन्त्र्ययोः सिद्धिरित्याह— **तद्वदिति**।।५१।।

पूर्वोत्तरब्राह्मणयोर्विद्याप्राधान्यदर्शनात् तन्मध्यपातिनोऽस्यापि तत्प्राधान्यमित्याह— **परेण चेति**। संदिग्धस्य निर्णयो वाक्यशेषादिति न्यायेन सूत्रावयवं व्याकुर्वन् वाक्यशेषमनुसंधत्ते— **परस्तादिति**। उत्तरब्राह्मणस्य विद्याप्राधान्ये गमकमाह— **तत्रेति**। ब्राह्मणस्य विद्याप्राधान्यमेतदित्युक्तम्। उपक्रमतन्त्रेणोपसंहारेणैकस्मिन् वाक्ये भवितव्यमिति न्यायेन चकारं व्याकुर्वन् पूर्वमपि ब्राह्मणमनुसंधत्ते— **तथेति**। तस्य विद्याप्राधान्ये लिङ्गमाह— **सोऽमृत इति**। पूर्वोत्तरब्राह्मणयोर्विद्याप्राधान्येऽपि प्रकृतब्राह्मणस्य कर्मप्राधान्ये का हानिः, तत्राह— **तदिति**। कथं तर्हि विद्यायाः स्वातन्त्र्ये कर्माधिकारे समाम्नानमित्याशङ्क्य भूयस्त्वादित्यादि व्याचष्टे— **भूयांसस्त्विति**। श्रुतिलिङ्गादिभिः सिद्धमर्थमुपसंहरति— **तस्मादिति**।५२।। इत्येकोनत्रिंशं लिङ्गभूयस्त्वाधिकरणम्।।

३०।।शरीरेभावा(ऐकात्म्या)धिकरणम्।।सू. ५३-५४।।

## एक आत्मनः शरीरे भावात्।।५३।।

**इह देहव्यतिरिक्तस्यात्मनः सद्भावः समर्थ्यते बन्धमोक्षाधिकारसिद्धये। न ह्यसति देहव्यतिरिक्तात्मनि परलोकफलाश्चोदना उपपद्येरन्। कस्य वा ब्रह्मात्मत्वमुपदिश्येत? ननु शास्त्रप्रमुख एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुक्तम्। सत्यमुक्तं भाष्यकृता; न तु तत्रात्मास्तित्वे सूत्रमस्ति। इह तु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरःसरं प्रतिष्ठापितम्। इत एव चाकृष्याचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम्। अत एव च भगवतोपवर्षेण प्रथमे तन्त्र आत्मास्तित्वाभिधानप्रसक्तौ**

### *शारीरकन्यायसंग्रहः*

द्वयोश्च प्रत्यक्षयोर्विरोधे व्यतिरेकप्रत्यक्षस्य गत्यन्तराभावात् 'अहं मनुष्यः' इति संसर्गप्रत्ययस्याध्यासनिबन्धनत्वोत्पत्तेः[त्वोपपत्तेः], असति देहे चैतन्याभावस्यासिद्धत्वात् व्यतिरेकासिद्धेः, सति च देहे चैतन्याभावदर्शनात्, घटवदतद्धर्मत्वात् इति प्रत्यक्षानुमानाभ्यां देहव्यतिरिक्तात्मा सिद्धः पूर्वप्रत्यक्षानुमानबाधेन इति दर्शितम्।।

### *प्रकटार्थविवरणम्*

**एक आत्मनः शरीरे भावात्**। संक्षेपतः तात्पर्यमाह— **इह देहेति**। ननु देहस्यैव अनुष्ठाने समर्थत्वात् तस्यैवाधिकारित्वं भविष्यति, किं व्यतिरेकविचारेणेत्याशङ्क्याह— **न ह्यसतीति**। तथापि पूर्वतन्त्र एवात्मनो विचारितत्वादयं विचारो व्यर्थ इत्याह— **ननु शास्त्रेति**। उत्सूत्रमेव **शबरस्वामिना** आत्मास्तित्वं विचारितम्। न तत्र जैमिनीयं सूत्रम्। अतोऽयं विचारोऽन्यतोऽप्राप्त एव क्रियत इत्याह— **सत्यमुक्तमिति**। नन्वसूत्रितं चेत् कथं भाष्यकारो व्यररचदित्याशङ्क्याह— **इत एवाकृष्येति**। 'स एष यज्ञायुधी (यं) यजमानः' इत्यस्य वाक्यस्य विचारप्रसङ्गेनास्मादेवाधिकरणादाकृष्य प्रथमाध्याये वर्णितमित्यर्थः। इत एवाकृष्य विचारः कृत इत्यत्र **वृत्तिकारवचनं** लिङ्गमाह— **अत एव चेति**। तथा चाहुः स्मात्रभवन्तो भट्टमिश्राः—

> "इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
> दृढत्वमेतद्विषयस्य[यस्तु] बोधः प्रयाति वेदान्तनिषेवणेन।।"इति।

### *भाष्यभावप्रकाशिका*

**एक आत्मनश्शरीरे भावात्**। अधिकरणतात्पर्यमाह— **इहेति**। किमर्थं तत्समर्थनमिति तत्राह— **बन्धमोक्षेति**। असमर्थने बन्धमोक्षाधिकाराभावमाह— **न ह्यसतीति**। पूर्वतन्त्रेण पौनरुक्त्यमाशङ्कते— **ननु शास्त्रेति**। सूत्रकारेण तत्रोक्तश्चेत् पुनरुक्तं भवेन्न तु तदस्तीत्याह— **सत्यमुक्तमिति**। कथं तर्हि प्रथमपादे प्रदर्शितमिति चोद्यमिति, तत्राह— **इत एवेति**। यत इह सूत्रकृद्वक्ष्यति

### *न्यायनिर्णयः*

मनश्चिदादीनां न पुरुषार्थत्वं पुरुषस्यैव देहातिरिक्तस्याभावादित्याक्षिपति— **एक इति**। अधिकरणस्य तात्पर्यमाह— **इहेति**। तत्समर्थनफलमाह— **बन्धेति**। साधनानुष्ठानसामर्थ्याद् देहस्यैव स्वर्गापवर्गाधिकारित्वसिद्धौ कृतं व्यतिरेकचिन्तयेत्याशङ्क्याह— **न हीति**। व्यतिरेकविचारस्य पूर्वतन्त्रेण पौनरुक्त्यं शङ्कते— **नन्विति**। सूत्रकृता तत्रातिरिक्तात्मानुक्तेर्न पौनरुक्त्यमित्याह— **सत्यमिति**। प्रकृते पूर्वमीमांसातो विशेषमाह— **इह त्विति**। कथं तर्हि प्रथमे पादे दर्शितमात्मास्तित्वम्। न हि मूलभूतं सूत्रं विना भाष्यं युक्तं, तत्राह— **इत इति**। 'यज्ञायुधी यजमानः स्वर्गं लोकं याती'ति वाक्यस्यातिरिक्तात्माभावादप्रामाण्यप्राप्तौ तत्परिहारेण प्रथमाध्यायोपयोगितया तदस्तित्वमिदमेवाधिकरणमवष्टभ्योक्तमिति सूचयति— **प्रमाणेति**। एतस्मादेवाकृष्य तत्रात्मास्तित्वमुक्तमित्यत्र वृत्तिकारवचनं गमकमित्याह— **अत इति**। यस्मादत्र सूत्रकारो निरूपयति तस्मादेवेति यावत्।

**'शारीरके वक्ष्याम' इत्युद्धारः कृतः। इह चेदं चोदनालक्षणेषूपासनेषु विचार्यमाणेष्वात्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रदर्शनाय। अपि च पूर्वस्मिन्नधिकरणे प्रकरणोत्कर्षाभ्युपगमेन मनश्चिदादीनां पुरुषार्थत्वं वर्णितम्, कोऽसौ पुरुषो यदर्था एते मनश्चिदादय इत्यस्यां प्रसक्ताविदं देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुच्यते। तदस्तित्वाक्षेपार्थं चेदमादिमं सूत्रम्। आक्षेपपूर्विका हि परिहारोक्तिर्विवक्षितेऽर्थे स्थूणानिखननन्यायेन दृढां बुद्धिमुत्पादयति।**

**अत्रैके देहमात्रात्मदर्शिनो लोकायतिका देहव्यतिरिक्तस्यात्मनोऽभावं मन्यमानाः समस्तव्यस्तेषु बाह्येषु पृथिव्यादिष्वदृष्टमपि चैतन्यं शरीराकारपरिणतेषु भूतेषु स्यादिति संभावयन्तस्तेभ्यश्चैतन्यं मदशक्तिवद्विज्ञानं**

### *प्रकटार्थविवरणम्*

नन्विहाप्याद्ये सूत्रेऽथशब्दोपात्तोऽधिकारी विचारितः। कथमिह पुनस्तन्निरूपणमित्याशङ्क्याह— **इह चेदमिति**। प्रथमसूत्रे लोकसिद्धात्मोपादानेन अधिकारी समर्थितः, न तद्विशेषो विचारितः। इह तु विधिप्रमाणके तस्य विशेषतोऽस्तित्वं विचार्यत इति सकलशास्त्रशेषभूतमिदमधिकरणमित्यर्थः। तथापि पूर्वाधिकरणेन कथं संबन्ध इत्याशङ्क्याह— **अपि चेति**। इदानीम् आद्यस्यावान्तरसङ्गतिमाह— **तदस्तित्वाक्षेपार्थं चेति**।

पुरुषो विषयः। स किं देहः; किं वा तद्व्यतिरिक्त इति संशये लोकायतिकाः प्राहुरित्याह— **अत्रैक इति**। अहं मनुष्य इति देहस्यैव अहंप्रत्ययालम्बनत्वदर्शनाददतिरिक्तात्मसद्भावे च प्रमाणाभावाद् देह एवात्मेत्यर्थः। ननु चैतन्यं तावन्न संहतानां भूतानाम्, तप्तायःपिण्डे वायुसमुद्धुते समवापितजले चैतन्यादर्शनात्; नापि व्यस्तानाम्, एकैकस्मिन् अदर्शनात्। अतश्चैतन्यमेव स्वाधारमात्मानं गमयतीत्याशङ्क्याह— **समस्तव्यस्तेष्विति**। स्वभाववैचित्र्याद् देहाकारपरिणतेष्वेव चैतन्यं स्यादिति संभावयन्तः तेभ्यो भूतेभ्यश्चैतन्यमिति प्राहुः। संघातविशेषे कार्यविशेषः संभाव्यत इत्यत्रोदाहरणमाह— **मदशक्तिवदिति**। यथैकैकस्मादन्नादेः

### *भाष्यभावप्रकाशिका*

अत एव तत्रान्यैर्नोक्तमित्याह— **अपि चेति**। नन्वनेन सूत्रेण तत्रोच्यत इति, तत्राह— **तदस्तित्वेति**। नन्वात्मासिद्ध[त्मास्ति]त्वसिद्धये युक्तय एव तर्हि कथ्यन्तम्, किं तदाक्षेपेणेति, तत्राह— **आक्षेपपूर्विका हीति**।

तदानीमाक्षेपपरतया सूत्रं योजयति— **अत्रैक इति**। ननु चैतन्याधारस्यात्मत्वात् भौतिकत्वेनाचेतनस्य देहस्य कथमात्मत्वमिति, तत्राह— **समस्तव्यस्तेष्विति**।

### *न्यायनिर्णयः*

आत्मास्तित्वस्यास्मात्पूर्वकाण्डं प्रति नयनमपकर्षस्तस्योद्धारो निवृत्तिरित्यर्थः। अथात्रापि प्रथमसूत्रेऽथशब्दोपात्तोऽधिकारी विचारितः;तत् कथमिह पुनस्तन्निरूपणं, तत्राह— **इह चेति**। तत्र लोकसिद्धात्मादानेनाधिकारी दर्शितो न तद्विशेषश्चिन्तितः। प्रकृते तु विधिप्रमाणकेषूपासनेषु विचार्यमाणेषु विचार्यते विशेषतस्तदस्तितेत्यस्ति भेद इत्यर्थः। प्रासङ्गिकीमध्यायपादसंगतिमधिकरणस्योक्त्वा श्रुतिशास्त्रसंगतिं सूचयति— **कृत्स्नेति**। सर्वस्यैवाम्नायस्य तदर्थविचारात्मनश्च शास्त्रस्य शेषभूतमिदमधिकरणमतिरिक्तात्मविचारे सर्वस्यास्य दुर्घटत्वादतोऽतिरिक्तस्यात्मनः शेषत्वं दर्शयितुमेष विचारः इत्यर्थः। संगतिचतुष्टयमित्थमुक्त्वा पूर्वोत्तराधिकरणसंगतिमाह— **अपि चेति**। इतश्चेदमिह संगतमित्यर्थः। अनेन सूत्रेण तत्रोच्यत इत्याशङ्क्याद्यसूत्रस्यावान्तरसंगतिमाह— **तदस्तित्वेति**। अतिरिक्तात्मास्तित्वे साध्ये किं तदाक्षेपेणेत्याशङ्क्याह— **आक्षेपेति**। इत्याक्षेपस्योपयुक्ततेति शेषः। मनश्चिदादयोऽग्नयो यदर्थाः स पुरुषो विषयः। स किं देहस्तदतिरिक्तो वेति विप्रतिपत्तेः संशये पूर्वपक्षयति— **अत्रेति**। पूर्वपक्षे देहात्मवादसिद्धिः, सिद्धान्ते वैदिकात्मसिद्धिरिति फलभेदः। परीक्षकव्यवहारभूमिः सप्तम्यर्थः। स्वतन्त्रमन्याधारं वा चैतन्यमात्रं वा व्यावर्तते। मनुष्योऽहमिति देहस्याहंप्रत्यया-लम्बनत्वाददतिरिक्तात्मसत्त्वे मानाभावं गृहीत्वाऽऽह— **देहेति**। चैतन्याधारस्यात्मत्वाद् भौतिकत्वेनाचेतनस्य कथमात्मत्वमित्याशङ्क्याह— **समस्तेति**। एकैकस्मिन्नविद्यमानं कथं संघाते स्यात्, तत्राह— **तेभ्य इति**। चैतन्यं संभावयन्त इति संबन्धः। संघातविशेषे कार्यविशेषसत्त्वे दृष्टान्तमाह— **मदेति**। यथैकैकस्मात् ताम्बूलादेरदृष्टाऽपि मदशक्तिः संघाते दृश्यते तथेदं ज्ञानमेकैकस्मिन्नदृष्टमपि

**चैतन्यविशिष्टः कायः पुरुषः इति चाहुः। न स्वर्गगमनायापवर्गगमनाय वा समर्थो देहव्यतिरिक्त आत्माऽस्ति, यत्कृतं चैतन्यं देहे स्यात्। देह एव तु चेतनश्चात्मा चेति प्रतिजानते। हेतुं चाचक्षते- शरीरे भावादिति। यद्धि यस्मिन् सति भवत्यसति च न भवति, तत् तद्धर्मत्वेनाध्यवसीयते, यथाऽग्निधर्मावौष्ण्यप्रकाशौ। प्राणचेष्टाचैतन्यस्मृत्यादयश्चात्मधर्मत्वेनाभिमता आत्मवादिनाम्, तेऽप्यन्तरेव देह उपलभ्यमाना बहिश्चानुपलभ्यमाना असिद्धे देहव्यतिरिक्ते धर्मिणि देहधर्मा एव भवितुमर्हन्ति। तस्मादव्यतिरेको देहादात्मन इति।।५३।।**

**एवं प्राप्ते ब्रूमः-**

**व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्।।५४।।**

**न त्वेतदस्ति, यदुक्तमव्यतिरेको देहादात्मन इति। व्यतिरेक एवास्य देहाद् भवितुमर्हति, तद्भावाभावित्वात्।**

### *प्रकटार्थविवरणम्*

अदृष्टाऽपि मदशक्तिः संघातविशेषे स्यात्, तद्वदित्यर्थः। देह एव चेद् भोक्ता, मृतदेहेऽपि किं भोगो न स्यादित्याशङ्क्याह— **चैतन्यविशिष्ट इति**। ननु स्वर्गापवर्गभोक्ताऽन्य एव चेतनः। तच्चैतन्यमेव देहे भाति, अयो दहतीतिवत्; अतो न चैतन्यविशिष्टत्वं कायस्यास्तीत्याशङ्क्याह— **न स्वर्गगमनायेति**। अन्वयव्यतिरेकाभ्यां चैतन्यस्य देहधर्मत्वमेवेत्यर्थः। यच्चानुमीयते— प्राणचेष्टादयः साश्रयाः, कार्यत्वात्, संप्रतिपन्नवत्; यश्चाश्रयः स देहव्यतिरिक्त आत्मेति, तदपि प्रत्यक्षबाधितमित्याह— **प्राणचेष्टेति**।

**व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्**। नतुशब्दं प्रथमं व्याचष्टे— **न त्वेतदस्तीति**। 'अहं मनुष्यः' इति

### *भाष्यभावप्रकाशिका*

नन्वेकैकस्मिन्नविद्यमानं कथं संघाते स्यादित्याशङ्क्याह— **तेभ्यश्चैतन्यमिति**। चैतन्यं संभावयन्त इत्यन्वयः। विज्ञानं मदशक्तिवदिति चाहुरिति योजना। नन्वग्निसन्निधानादयःपिण्डस्यौष्ण्यमिवात्मसन्निधानाद् देहे चैतन्यमुपलभ्यत इत्याशङ्क्य मैवम् तस्यैवासिद्धेरित्याह— **न स्वर्गेति**। **यत्कृतमित्यात्मकृतमित्यर्थः**। कस्तर्ह्यात्मेति, तत्राह— **देह एव त्विति**। तद् व्याचष्टे— **यद्धीति**। आत्मवादिनामात्मधर्मत्वेनाभिमतानां प्राणचेष्टाचैतन्यस्मृत्यादीनामन्तरेव देहे उपलभ्यमानत्वात् बहिरनुपलभ्यमानत्वाच्च तेषां देहव्यतिरिक्तात्मधर्मत्वमिति चेत्, तत्राह— **प्राणचेष्टेति**। चेष्टा हिताहितप्राप्तिपरिहारार्थो व्यापारः। ननु स्मृतीच्छाप्रयत्नादयः शरीराधारतया नोपलभ्यन्ते। तत्कथमेषां धर्मत्वमिति, तत्राह— **असिद्धे देहव्यतिरिक्त इति**। प्रत्यक्षेण देहव्यतिरिक्तस्यात्मनोऽनवभासनात् प्रत्यक्षातिरिक्तानाञ्चानुमानादीनां प्रामाण्यासंभवात् प्रत्यक्षेण च गौरोऽहं स्थूलोऽहमिति च देहस्यैवात्मत्वेनानुभवाद् देहाधारत्वमेव तेषामित्यर्थः।

### *न्यायनिर्णयः*

देहाकारपरिणतभूतेषु संहतेषु भवतीति चाहुरिति योजना। देहस्यैव भोक्तृत्वे मृतदेहेऽपि भोगः स्यादित्याशङ्क्याह— **चैतन्येति**। अग्निसंनिधानादयःपिण्डस्यौष्ण्यमिवात्मसंनिधेर्देहचैतन्यमित्यतिरिक्तस्यात्मनः स्वर्गापवर्गान्वयिनोऽभावान्न देहस्य चैतन्यवैशिष्ट्यमित्याशङ्क्याह— **नेत्यादिना**। आत्मा तर्हि कः स्यादित्यपेक्षायामाह— **देहेति**। सूत्रभागेन प्रतिज्ञातेऽर्थे हेतुमवतार्य व्याचष्टे— **यद्धीति**। अन्वयव्यतिरेकाभ्यां चैतन्यस्य देहधर्मतैवेति नातिरिक्तात्मसिद्धिरित्यर्थः। प्राणचेष्टादयः साश्रयाः, कार्यत्वात्, संमतवत् इत्यनुमानात् प्राणाद्याश्रयस्यातिरिक्तात्मनः सिद्धिरित्याशङ्क्यानुमानाप्रामाण्यात् प्रामाण्येऽपि सिद्धसाध्यत्वान्मैवमित्याह— **प्राणेति**। चेष्टा हिताहितप्राप्तिपरिहारार्थो व्यापारः। आदिपदेनेच्छाद्वेषादय उक्ताः। तेषां देहधर्मत्वेनादृष्टानां कथं तद्धर्मतेत्याशङ्क्याह— **असिद्ध इति**। प्रत्यक्षेणातिरिक्तात्मनोऽदृष्टेर्मानान्तरे चासंमतेर्गौरोऽहं स्थूलोऽहमिति च देहस्यैवात्मत्वेनाध्यक्षत्वात् तदाधारत्वमेव प्राणादीनामित्यर्थः। देहात्मवादी प्रत्यक्षफलमुपसंहरति— **तस्मादिति**।।५३।।

सिद्धान्तसूत्रमवतारयति— **एवमिति**। तत्र न त्विति पूर्वपक्षनिषेधप्रतिज्ञां विभजते— **न त्विति**। उत्तरपक्षप्रतिज्ञां व्याकरोति—

**यदि देहभावे भावाद् देहधर्मत्वमात्मधर्माणां मन्येत, ततो देहभावेऽप्यभावादतद्धर्मत्वमेवैषां किं न मन्येत? देहधर्मवैलक्षण्यात्। ये हि देहधर्मा रूपादयस्ते यावद्देहं भवन्ति। प्राणचेष्टादयस्तु सत्यपि देहे मृतावस्थायां न भवन्ति। देहधर्माश्च रूपादयः परैरप्युपलभ्यन्ते, न त्वात्मधर्माश्चैतन्यस्मृत्यादयः। अपि च सति हि तावद् देहे जीवदवस्थायामेषां भावः शक्यते निश्चेतुम्, न त्वसत्यभावः। पतितेऽपि कदाचिदस्मिन् देहे देहान्तरसंचारेणात्मधर्मा अनुवर्तेरन्। संशयमात्रेणापि परपक्षः प्रतिषिध्यते।**

**किमात्मकं च पुनरिदं चैतन्यं मन्यते यस्य भूतेभ्य उत्पत्तिमिच्छतीति परः पर्यनुयोक्तव्यः। न हि**

### *प्रकटार्थविवरणम्*

सामानाधिकरण्यप्रत्ययात् देहात्मनोरैक्यमिति यदुक्तं तत्तावन्नास्ति, 'सर्पोऽयम्' इतवदध्यासादपि सामानाधिकरण्यसंभवात्; बाधकादर्शनान्नेति चेन्न, 'मम शरीरम्' इति भेदप्रत्ययस्य दर्शनात्; विपरीतं किं न स्यादिति चेन्न, एकस्मिंश्चन्द्रे भेदाध्यासे द्वितीयचन्द्राकारवन्मनुष्याकारस्य द्वितीयस्य प्रसङ्गात्; स्पष्टं च मनुष्यत्वभावनान्न तदज्ञाननिर्मितो भेदभ्रमः, उपाध्यनुपलम्भाच्च नौपाधिकः, तादात्म्यभ्रमस्तु तत्त्वात्म[ा]ज्ञानविजृम्भितः संबोभाव्यते। स्वप्ने च मनुष्यत्वाकारसंसर्गविधुराहंकाराविष्कारात् नैतच्छरीरगोचरोऽहंप्रत्यय इति भावः। किं च देहः स्वव्यतिरिक्तद्रष्टृकः, दृश्यत्वात्, घटवदित्याह— **व्यतिरेक एवास्येति**। यच्चोक्तं चैतन्यादीनां देहधर्मत्वमिति, तत्राह— **तद्भावाभावित्वादिति**। चैतन्यादयो न देहस्य विशेषगुणाः, तद्भावाभावित्वात्, ये तद्विशेषगुणास्ते तद्भावभाविनः, यथा

### *भाष्यभावप्रकाशिका*

सूत्रं व्याचष्टे— **न त्वेतदस्तीत्यादिना**। **देहभावेऽपीति**। मृतावस्थायामित्यर्थः। संप्रतिपन्नरूपादिदेह[धर्म]वैलक्षण्याच्च प्राणचेष्टादीनां देहाद् व्यतिरिक्तत्वमेवात्मन इत्याह— **देहेति**। वैलक्षण्यमेव दर्शयति— **ये हीति**। देहगुणत्वेऽपि चैतन्यस्य संख्यापरिमाणपृथक्त्वसंयोगविभागादिवत् सामान्यगुणत्वाभावाद्रूपादिवद्विशेषगुणत्वं वक्तव्यम्। तथा च सति यावद्भूतभावित्वं कार्यगतविशेषगतगुणत्वभावद्रूपादिवत् स्यात्। तद[भा]वात्र देहाकारपरिणतभूतधर्मत्वमित्यर्थः। प्राणचेष्टादीनां तु यद्यपि न विशेषगुणत्वम् तथापि तेन देहमात्र प्र....वा स्मृतावस्थायामदर्शनात् (?) तस्माद् देहव्यतिरिक्तस्तदधिष्ठाताऽऽत्माऽभ्युपेय इत्यभ्युपेत्याह— **प्राणचेष्टादय इति**। वैलक्षण्यान्तरमाह— **देहधर्माश्चेति**। अपि च नान्वयमात्राद्धर्मधर्मिभावोऽतिप्रसङ्गात्। तस्माद् व्यतिरेकोऽपि वक्तव्य।ः स चात्र सन्दिग्ध इत्याह— **अपि च सति तावदिति**। ननु तत्रापि प्रमाणं न पश्याम इति तत्राह— **संशयमात्रेणेति**।

दूषणान्तरं विवक्षुराक्षिपति— **किमात्मकञ्चेति**।

### *न्यायनिर्णयः*

**व्यतिरेकेति**। तत्र हेतुमवतार्य व्याचष्टे— **तदिति**। देहभावेऽपि प्राणादीनामभावो मृतावस्थायामास्थेयः। चैतन्यादयो न देहस्य विशेषगुणास्तद्भावाभावित्वात्। ये तद्विशेषगुणास्ते न तद्भावाभाविनो यथा रूपादय इत्याह— **देहेति**। वैलक्षण्यं स्पष्टयन् दृष्टान्तस्य साधनाव्यावृत्तिं वारयति— **ये हीति**। हेत्वसिद्धिं प्रत्याह— **प्राणेति**। तेषां विशेषगुणत्वाभावेऽपि न देहमात्रप्रभवत्वं मृतावस्थायामदर्शनात्। अतो देहातिरिक्तस्तदधिष्ठातेति भावः। चैतन्यादीनां देहधर्मत्वाभावे हेत्वन्तरमाह— **देहेति**। विमता न देहधर्माः परैरनुपलभ्यमानत्वात्, ये तद्धर्मास्ते परैरुपलभ्यन्ते, यथा रूपादय इत्यर्थः। इतश्च तेषां न देहधर्मतेत्याह— **अपि चेति**। न हि धर्मधर्मित्वमन्वयमात्राद् युक्तमतिप्रसङ्गादतो व्यतिरेकोऽपि वाच्यः; सोऽत्र संदिग्ध इति न धर्मधर्मितेत्याह— **सतीति**। व्यतिरेकसंदेहे हेतुमाह— **पतितेऽपीति**। तत्रापि न प्रमाणमित्याशङ्क्याह— **संशयेति**। न तावत् तवादर्शनमभावनिश्चायकं प्रत्यक्षस्यैव प्रामाण्यात्, मम त्वात्मनो देहान्तरसंचारात् तद्धर्मदृष्टिरिति संदिह्यते, तावन्मात्रेण चैतन्यादीनां देहधर्मत्वासिद्धिरावयोरुभयोरपि निश्चितान्वयादेरेव साधकत्वाविवादादिति भावः।

उपलब्धिवदिति पदं चोद्यमुखेन व्याख्यातुं पृच्छति— **किमात्मकमिति**। तत्किं भूतचतुष्टयातिरिक्तं न वेति विमर्शार्थः। अप्रकृतेऽर्थे कथं प्रश्नः स्यात्, तत्राह— **यस्येति**। आद्ये सिद्धान्तविरोधमाह— **न हीति**। धर्मधर्मिणोस्तादात्म्या[द]भेदपक्षमालम्बते—

**भूतचतुष्टयव्यतिरेकेण लोकायतिकः किंचित् तत्त्वं प्रत्येति। यदनुभवनं भूतभौतिकानां तच्चैतन्यमिति चेत्? तर्हि विषयत्वात् तेषां न तद्धर्मत्वमश्नुवीत, स्वात्मनि क्रियाविरोधात्। न ह्यग्निरुष्णः सन् स्वात्मानं दहति। न हि नटः शिक्षितः सन् स्वस्कन्धमधिरोक्ष्यति। न हि भूतभौतिकधर्मेण सता चैतन्येन भूतभौतिकानि विषयीक्रियेरन्। न हि रूपादिभिः स्वरूपं पररूपं वा विषयीक्रियते। विषयीक्रियन्ते तु बाह्याध्यात्मिकानि भूतभौतिकानि चैतन्येन। अतश्च यथैवास्या भूतभौतिकविषयाया उपलब्धेर्भावोऽभ्युपगम्यत एवं व्यतिरेकोऽप्यस्यास्तेभ्योऽभ्युपगन्तव्यः। उपलब्धिस्वरूप एव च न आत्मेत्यात्मनो देहव्यतिरिक्तत्वम्। नित्यत्वं चोपलब्धेरैकरूप्यात्। 'अहमिदमद्राक्ष'मिति चावस्थान्तरयोगेऽप्युपलब्धृत्वेन प्रत्यभिज्ञानात्, स्मृत्याद्युपपत्तेश्च।**

### *प्रकटार्थविवरणम्*

रूपादय इत्यर्थः। किंच चैतन्यधर्मकत्वाच्चेत् 'अहं मनुष्यः' इति सामानाधिकरण्यं तदा परशरीरेऽपि गौरो देह इतिवत् 'अहं मनुष्यः' इति सामानाधिकरण्यप्रत्ययः स्यात्। आत्मीयत्वाभावे च व्यतिरिक्तात्मसाधकत्वानुपपत्त्यैव चैतन्यस्य तद्व्यतिरेको वक्तव्य इत्याह— **न हि भूतभौतिकधर्मेणेत्यादिना**। ननूपलब्धेरस्तु व्यतिरेकः; ततः आत्मनि किमायातमित्याशङ्क्याह— **उपलब्धिस्वरूप एव चेति**। ननूपलब्धेः क्षणिकत्वात् कथं नित्यात्मस्वरूपतेत्याशङ्क्याह— **नित्यत्वं चेति**। कुम्भोपलब्धिरिति स्तम्भकुम्भादिव्यावृत्तावप्युपलब्धिस्वरूपैक्यपरिस्फुरणात् स्थायित्वं साधितमित्यर्थः।

### *भाष्यभावप्रकाशिका*

स एवैकग्रन्थेनाह— **न हीति**। लोकायतिक आह— **यदनुभवनमिति**। भूतपरिणामरूपत्वाच्चैतन्यस्य रूपादिवद्भूतेभ्योऽर्थान्तरत्वाभावान्न तत्त्वातिरेकः प्रसज्यत इति भावः। भूतपरिमाणत्वञ्चैतन्यस्य स्वरूपादिवैलक्षण्यप्रदर्शनेन निराकृतमिति मन्वानो दूषणान्तरमाह— **तत्तर्हीति**। उपलब्धिवदिति सूत्रावयवं योजयति— **अतश्च यथैवास्या इति**। भवतु तर्हि भूतेभ्यो व्यतिरिक्तोपलब्धिः स्वतन्त्रा; तथाप्यात्मसिद्धिः कथमित्यत आह— **उप....रूप इति**। ननूपलब्धेः क्षणिकत्वात् कथन्नित्यात्मस्वरूपत्वमित्याशङ्क्या(ह—) [आ]जानत उपलब्धेर्भेदानुपलम्भात् विषयोपरागनिबन्धनो भेदावभासो विषयोपराग एव चानित्यो न तूपलब्धिरित्याह— **उपलब्धेरैकरूप्यादिति**। स्थूलशरीराभिमानरहितस्य स्वप्नावस्थायां प्रत्यभिज्ञायमानत्वात् तद्व्यतिरिक्तात्मनः सिद्धिरित्याह— **अहमिदमिति**। ननु स्वप्नेऽपि स्थूलदेहान्तरस्यैवोपलभ्यत्वमिति, तत्राह— **स्मृत्याद्युपपत्तेरिति**। नानात्वे सत्य(मन्यो)न्योपलब्धेऽन्यस्य स्मृतिरिच्छादयश्च न संभवतीत्यर्थः।

### *न्यायनिर्णयः*

**यदिति**। भूतपरिणामत्वाच्चैतन्यस्य रूपादिवद्भूतेभ्योऽर्थान्तरत्वाभावान्न व्यतिरेकापत्तिरिति भावः। भूतपरिणामत्वं चैतन्यस्य रूपादिवैषम्योक्त्या प्रत्युक्तमिति मन्वानो दोषान्तरमाह— **तदिति**। उक्तरूपं चेच्चैतन्यं तर्हि स्वात्मानं प्रति भूतभौतिकानां विषयत्वान्न तद्धर्मत्वेन तदभेदं प्रतिपद्येतेत्यत्र हेतुमाह— **स्वात्मनीति**। असिधारा स्वात्मानं छिनत्तीतिवदेकत्र विषयविषयित्वायोगादिति हेत्वर्थः। किंच यो यस्य धर्मः स न तत्साधको यथा रूपादिः। तथा च चैतन्यस्य भूतभौतिकसाधकत्वादेव तदतिरेकसिद्धिरित्याह— **न हीति**। रूपादिदृष्टान्तं स्पष्टयति— **न हीति**। तर्हि चैतन्यस्यापि साधकत्वं मा भूत्, तत्राह— **विषयीति**। सूत्रावयवं फलितपरत्वेन योजयति— **अतश्चेति**। भवतु तर्हि भूतेभ्योऽतिरिक्ता स्वतन्त्रोपलब्धिस्तथापि कथमात्मसिद्धिः, तत्राह— **उपलब्धीति**। क्षणिकत्वात् तस्या नित्यात्मरूपत्वमयुक्तमित्याशङ्क्याऽऽजानतस्तद्भेदाभावाद् विषयोपरागात् तद्भानादसावेवानित्यो नोपलब्धिरित्याह— **नित्यत्वं चेति**। किंच स्थूलदेहाभिमानहीनस्य स्वप्ने प्रत्यभिज्ञानादतिरिक्तात्मसिद्धिरित्याह— **अहमिति**। स्वप्नेऽपि स्थूलदेहान्तरस्यैवोपलब्धृत्वमित्याशङ्क्याह— **स्मृत्यादीति**। उपलब्धृस्मर्त्रोर्भेदे सत्यन्योपलब्धेऽन्यस्य स्मृतिरिच्छादयश्च नेति न तयोरन्यतेत्यर्थः।

**यत्तूक्तं शरीरे भावाच्छरीरधर्म उपलब्धिरिति, तद् वर्णितेन प्रकारेण प्रत्युक्तम्। अपि च सत्सु प्रदीपादिषूपकरणेषूपलब्धिर्भवत्यसत्सु न भवति; न चैतावता प्रदीपादिधर्म एवोपलब्धिर्भवति। एवं सति देह उपलब्धिर्भवत्यसति च न भवतीति न देहधर्मो भवितुमर्हति। उपकरणत्वमात्रेणापि प्रदीपादिवद् देहोपयोगोपपत्तेः। न चात्यन्तं देहस्योपलब्धावुपयोगोऽपि दृश्यते, निश्चेष्टेऽप्यस्मिन् देहे स्वप्ने नानाविधोपलब्धिदर्शनात्। तस्मादनवद्यं देहव्यतिरिक्तस्यात्मनोऽस्तित्वम्।।५४।।**

**।। इति त्रिंशं शरीरेभावा(ऐकात्म्या)धिकरणम् ।।**

***प्रकटार्थविवरणम्***

अधिकाभिधित्सया निरस्तमप्यनुवदति— **यत्तूक्तमिति**। अन्वयव्यतिरेकयोरन्यथासिद्धिरिति अधिकमाह— **अपि चेति**। इदानीमुपकरणत्वमपि देहस्योपलब्धौ न संभवतीत्याह— **न चात्यन्तमिति**। उपलब्धिर्न देहजन्या, तस्मिन्नव्याप्रियमाणेऽपि सद्भाववत्त्वात्, पदार्थान्तरवत्; जागरिते च व्यञ्जकजनकतया कथंचिदुपयोगमङ्गीकृत्यात्यन्तमित्युक्तम्।

ननु नानुमानं मानं **लोकायतिकानाम्**; मैवं वोचः, अन्तर्भावाभ्युपगमात्। नो खल्वमानं मानेऽन्तर्बिभावयिषितम्; कथं च मानान्तरानङ्गीकारे तदन्तर्भावो वा परं प्रति प्रतिपाद्येत? न हि मानान्तराणां प्रत्यक्षे अन्तर्भाव इत्ययमर्थो ऽस्माकं प्रत्यक्षगोचरः। न च वाङ्मात्रेण विप्रतिपत्तिनिरासः। किंच कोऽयमन्तर्भावः? अप्रत्यक्षे किं प्रत्यक्षत्वापादनम्, किं वा प्रामाण्यम्, किं वा विलक्षणसामग्र्यनिरूपणम्, किं वा प्रमेयानिरूपणम्, उत स्वातन्त्र्यप्रतिषेध इति। नाद्यः— तर्कसहस्रेणापि वस्तुस्वभाववैपरीत्यासंभवात्। परोक्षत्वं च प्रत्यक्षत्वस्यापलापात् प्रत्यक्षेऽन्तर्भाव इति व्यर्थं वचः स्यात्। यदि प्रत्यक्षवत् प्रामाण्यं तत्रान्तर्भावः, स इष्टमे[ए]वास्माकम्। नापि तृतीयः, अन्तर्भावोक्त्यैव विलक्षणसामग्र्यङ्गीकारात्। न हि तावन्मात्रसामग्रीकस्यैव तत्रान्तर्भावोपपादनं कश्चिच्चिकीर्षत्यमूढः। चतुर्थोऽप्यर्थशून्यः, प्रत्यक्षस्येव प्रसिद्धेनैवार्थेन अर्थवत्त्वात्। सामान्यविशेषविकल्पासहत्वेन प्रमेयानिरूपणं तु प्रत्यक्षेऽपि समानम्। तथा हि— न तावत् प्रथमप्रत्यक्षस्य सामान्यमालम्बनम्, वस्त्वन्तरानुसन्धानापेक्षत्वात् सामान्यप्रत्ययस्य; नापि विशेषः, व्यावृत्तो हि विशेष उच्यते। न च सर्वपरिचयमन्तरेण सर्वतो व्यावृत्तिं कश्चिन्निश्चिकीषति। ततः सर्वज्ञस्यैव विशेषः प्रकाशेत। व्यावृत्तत्व[वृत्तितन्त्रः] प्रतियोगी प्रतियोगितन्त्रा च व्यावृत्ति[रिति] दुरुत्तरं परस्पराश्रयम्। तस्माद् व्यावहारिकेणैवालम्बनेन यथा प्रत्यक्षं सालम्बनं तथा मानान्तरमपीति। पञ्चमोऽप्यनभिमतः, न ह्यनुमानादिशब्दाभिधेयं ज्ञानं स्वतन्त्रं ब्रूमः। तस्मादन्तर्भावोऽप्यविचारितरमणीय एव। न च वयं कस्यचिदन्तर्भावं ब्रूमः, प्रसिद्धविभागाङ्गीकारात्; तस्माद्विशेषग्रहं परिहृत्य व्यावहारिकैः प्रमाणैः प्रमेयं निरूपणीयं निरूपकैरित्यलम्। इति त्रिंशं शरीरेभावाधिकरणम्।।

***भाष्यभावप्रकाशिका***

दूषितमपि दूषणान्तरं वक्तुमनुवदति— **यत्तूक्तमिति**। अपि च अनन्यथासिद्धान्वयव्यतिरेकौ वक्तव्यौ। देहस्य च चैतन्यान्वयव्यतिरेकावधिष्ठानतयाऽन्यथासिद्धावित्याह— **[सत्स्विति]**स्वप्नावस्थायामहं पश्यामीत्यादि दृष्टस्य बाध्यमानप्रत्यक्षस्य स्थूलशरीराकाररहितस्य शरीरव्यतिरिक्तात्मविषयत्वाच्च न देह आत्मेत्याह— **न चेति**। इति त्रिंशमैकात्म्याधिकरणम्।

***न्यायनिर्णयः***

दूषितमपि दोषान्तरं वक्तुमनुभाषते— **यत्त्विति**। तद्भावाभावित्वव्याख्यानेन प्रत्याख्यातमेतदित्युक्तं स्मारयति— **तदिति**। अधिकं दोषं दर्शयति— **अपि चेति**। अनन्यथासिद्धावन्वयव्यतिरेकौ वाच्यौ। देहस्य च चैतन्यान्वयव्यतिरेकावधिष्ठानविषयतयाऽन्यथासिद्धाविति सदृष्टान्तं साधयति— **सत्स्विति**। उपकरणत्वमपि देहस्योपलब्धौ न सिध्यतीत्याह— **न चेति**। उपलब्धिर्न देहजन्या तस्मिन्नव्याप्रियमाणेऽपि सत्त्वादर्थान्तरवत्। जागरे तु व्यञ्जकजनकतया कथंचिदुपयोगमङ्गीकृत्यात्यन्तमित्युक्तम्। स्वप्ने द्रष्टरि 'अहं पश्यामी'त्याद्यबाधिताध्यक्षस्य स्थूलदेहाकारहीनस्य देहातिरिक्तात्मविषयत्वान्न देहात्मवादसिद्धिरिति भावः। अनुमानाद्यप्रामाण्यं तु प्रतिज्ञामात्रमिति मत्वोपसंहरति— **तस्मादिति**।।५४।। इति त्रिंशमैकात्म्याधिकरणम्।।

३१।।अङ्गावबद्धाधिकरणम्।।सू.५५-५६।।

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्।।५५।।**

**समाप्ता प्रासङ्गिकी कथा। सम्प्रति तु प्रकृतामेवानुवर्तामहे। 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा.उ. १।१।१), 'लोकेषु पञ्चविधं सामोपासीत' (छा.उ. २।२।१), 'उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थम्, इयमेव पृथिवी' (ऐ.आ. २।१।२), 'अयं वाव लोक एषोऽग्निश्चितः'(शत.१०।५।४।१) इत्येवमाद्या य उद्गीथादिकर्माङ्गावबद्धाः प्रत्ययाः प्रतिवेदं शाखाभेदेषु विहितास्ते तत्तच्छाखागतेष्वेवोद्गीथादिषु भवेयुरथवा सर्वशाखागतेष्विति विशयः। प्रतिशाखं च स्वरादिभेदादुद्गीथादिभेदानुपादायायमुपन्यासः। किं**

*शारीरकन्यायसंग्रहः*

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्।।५५।। मन्त्रादिवद्वाऽविरोधः।।५६।।** 'उद्गीथमुपासीत' 'इदमेवोक्थम् इयमेव पृथिवी' 'अयं वाव लोक एषोऽग्निश्चितः' इत्यादीनि त्रिवेदविहितान्युपासनानि उद्गीथोक्थचित्यादीनामालम्बनानां त्रिवेदविहितप्रधानकर्माङ्गत्वेन प्रयुज्यमानानां प्रतिवेदमुपांशुस्वरादिभेदेन भेदादुद्गीथादिश्रुतिभिरुपासनालम्बनानामुद्गीथादीनां सामान्येनोपात्तानां विशेषाकाङ्क्षायां तत्तदुद्देशविहितप्रधानकर्माङ्गत्वेन प्रयुज्यमानोद्गीथादिविशेषेषु प्रकरणान्नियम्यन्त इति प्राप्तम्। तत्र सामान्यप्रवृत्तायाः श्रुतेः विशेषाकाङ्क्षायां प्रकरणाद्विशेषनियमः स्यात्; इह तु उद्गीथादिसामान्येऽपि उपासनासंभवाच्छ्रौतेन सामान्येन प्राकरणिकस्य विशेषनियमस्य बाधात् सर्वशाखाविहितप्रधानकर्माङ्गत्वेन प्रयुज्यमानसर्वोद्गीथादिविशेषेषु तदालम्बनोपासनानामुपसंहार उक्तः।

*प्रकटार्थविवरणम्*

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्।** अवान्तरसङ्गतिमाह— **समाप्तेति**। कर्माङ्गावबद्धान्युपासनानि विषय इत्येतद् दर्शयितुं वाक्यानि पठति— **ओमित्येतदिति**। **लोकेष्विति**। लोकदृष्ट्या पञ्चविधं सामोपासीत 'पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथः आदित्यः प्रतिहारो द्यौर्निधनम्' इति। उक्थं कर्माङ्गभूतं शस्त्रं तच्चानेनैव नाम्ना प्रसिद्धं प्रजा वदन्ति। तदुक्थमिदमेव येयं पृथिवीति पृथिवीदृष्ट्या उक्थोपासनमित्यर्थः। चितोऽग्निः कर्माङ्गभूतः तत्रैतल्लोकदृष्टिरित्यर्थः। प्रकरणादुद्गीथादिशब्दसाधारण्याच्च संशय इत्यर्थः। ननु उद्गीथादेः सर्वत्रैकरूप्याद् वेद्यरूपाभेदेनोपासनाभेदः पूर्वन्यायेनैव सिद्ध इति कथमयं विचार इत्याशङ्क्याह— **प्रतिशाखं चेति**।

*भाष्यभावप्रकाशिका*

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्।** ननूद्गीथादेरेकत्वात्तदुपाधौ विहितानामपि सर्वत्रानुवृत्तिरेव ततः संशयाभावादधिकरणत्रारम्भणीयमित्याशङ्क्योद्गीथादेरपि भेदावलम्बनेन संशय इत्याह— **प्रतिशाखञ्चेति**। सन्निधानात् प्रकरणादित्यर्थः। एतदेव

*न्यायनिर्णयः*

देहभावे भवतश्चैतन्यस्य तद्भावेऽप्यभाववदुद्गीथादिभावे भवत उपासनस्य तद्भावेऽप्यभावमाशङ्क्याह— **अङ्गेति**। अवान्तरसंगतिमाह— **समाप्तेति**। उद्गीथाद्यङ्गाश्रितोपासनानि विषय इति तत्तद्वाक्योक्त्या दर्शयति— **ओमित्येतदिति**। इदं वाक्यं व्याप्तेश्चेत्येतदधिकरणे व्याख्यातम्। लोकेषु पृथिव्यादिषु। लोकशब्दो लोकालोकेषु लाक्षणिकः। पृथिव्यादिदृष्ट्या पञ्चविधं सामोपासीतेत्यर्थः। 'पृथिवी हिंकारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनम्' इति। उक्थं कर्माङ्गं शस्त्रमिति वीप्सया यत्प्रजा वदन्ति तदिदमेव येयं पृथिवीत्युक्थे पृथिवीदृष्टिविधिः। चितोऽग्निः कर्माङ्गभूतस्तत्रायं लोक इति दृष्टिरित्यर्थः। उद्गीथादिप्रत्ययानुक्तानधिकृत्य प्रकरणादुद्गीथादिशब्दसाधारण्याच्च संशयमाह— **त इति**। उद्गीथादीनां सर्वशाखास्वैक्यादुपास्तिव्यवस्थाशङ्काऽभावादनारभ्यमिदमधिकरणमित्याशङ्क्याह— **प्रतीति**। नीचैस्त्वादिस्वरभेदादध्ययनधर्मभेदाच्चोद्गीथादेरपि भेदमङ्गीकृत्य विद्याविचार इत्यर्थः। अत्र हि श्रौतेन सामान्येन प्राकरणिकस्य विशेषनियमस्य बाधात् सर्वशाखाविहितप्रधानकर्माङ्गत्वेन

**तावत् प्राप्तम्? स्वशाखागतेष्वेवोद्गीथादिषु विधीयेरन्निति। कुतः? संनिधानात्। 'उद्गीथमुपासीत' (छा.उ. १।१।१) इति हि सामान्यविहितानां विशेषाकाङ्क्षायां संनिकृष्टेनैव स्वशाखागतेन विशेषेणाकाङ्क्षादिनिवृत्तेः तदतिलङ्घनेन शाखान्तरविहितविशेषोपादाने कारणं नास्ति। तस्मात् प्रतिशाखं व्यवस्थेति।**

**एवं प्राप्ते ब्रवीत्यङ्गावबद्धास्त्विति। तुशब्दः पक्षं व्यावर्तयति। नैते प्रतिवेदं स्वशाखास्वेव व्यवतिष्ठेरन्। अपि तु सर्वशाखास्वनुवर्तेरन्। कुतः? उद्गीथादिश्रुत्यविशेषात्। स्वशाखाव्यवस्थायां ह्युद्गीथमुपासीतेति सामान्यश्रुतिरविशेषप्रवृत्ता सती संनिधानवशेन विशेषे व्यवस्थाप्यमाना पीडिता स्यात्। न चैतन्न्याय्यम्।**

***प्रकटार्थविवरणम्***

नीचैष्ट्वादिस्वभावादध्ययनधर्मभेदाच्चोद्गीथादेरपि भेदोऽस्तीत्यर्थः। यच्छाखाविहितमुपासनं तच्छाखाभिरेव[शाखिभिरेव] तदनुष्ठेयं नान्यैरित्याह— **स्वशाखागतेष्वेति।**

श्रौतेन सामान्येन प्राकरणिकस्य विशेषनियमस्य बाधात् सर्वशाखाविहितप्रधानकर्माङ्गत्वेन प्रयुज्यमानसर्वोद्गीथादिविशेषेषु तदालम्बनोपासनानामुपसंहार इति सर्वशाखिभिरनुष्ठेयत्वमित्याह— **नैते प्रतिवेदमिति।** ननु तत्तत्स्वरविशिष्टोद्गीथादिभेदात् सामान्यस्य च अनुपास्यत्वान्न सर्वत्रोपास्याभेद इत्याशङ्क्याह— **न चेति।** 'नाम ब्रह्मेत्युपासीत' इत्यादौ सामान्येन नामादेरुपास्यत्वदर्शनात्।

***भाष्यभावप्रकाशिका***

विवृणोति— **उद्गीथमिति।** उद्गीथो......कथमित्यग्नीनां प्रत्ययालम्बनानां त्रिवेदविहितप्रधानकर्मस्वङ्गत्वेन प्रयुज्यमानानां प्रतिशाखं स्वरादिभेदेन भेदादुद्गीथादिश्रुतिभिः प्रत्ययालम्बनानामुद्गीथादीनां सामान्येनोपात्तानां विशेषाकाङ्क्षायां तत्तच्शाखाविहितप्रधानकर्माङ्गत्वेन प्रयुज्यमानोद्गीथादिविशेषेषु 'उद्गीथमुपासीते'त्यादिप्रत्ययाः प्रकरणान्नियम्यन्त इत्यर्थः। सामान्यप्रवृत्तायाः श्रुतेर्विशेषाकाङ्क्षायां प्रकरणाद्विशेषनियमः स्यादिह तूद्गीथादिसामान्येऽप्युपासनासंभवेन विशेषाकाङ्क्षाभावाच्छ्रौतेन सामान्येन प्राकरणिकस्य विशेषनियमस्य बाधात् सर्वशाखाविहितप्रधानकर्माङ्गत्वेन विनियुज्यमानसर्वोद्गीथादिविशेषेषु तदालम्बनप्रत्ययानामुपसंहार इत्याह— **उद्गीथादि-श्रुत्यविशेषादिति। विद्धिता [पीडिता] स्यादिति।** यद्यपि विशेषसमर्पणे सामान्यं न बाध्यते तथाप्यत्र संकोचे प्रमाणाभावात् सामान्यद्वारेण सर्वविशेषगामिन्याः श्रुतेरेकस्मिन्विशेषे नियमनं पीडैवेत्यर्थः।

***न्यायनिर्णयः***

प्रयुक्तसर्वोद्गीथादिविशेषेषु तदालम्बनोपास्तीनामुपसंहारोक्त्या सर्वशाखाभिरनुष्ठेयत्वोक्तेर्वाक्यार्थधीहेतोरेव चिन्तनात् पादादिसंगतिः। पूर्वपक्षेऽनुष्ठानव्यवस्थासिद्धिः, सिद्धान्ते तदव्यवस्थेत्यास्थाय पूर्वपक्षयितुं विमृशति— **किमिति।** यथा देहात्मनोर्भेदादात्मधर्मा देहे न भवन्त्येवमेकशाखागतोद्गीथधर्माणां भिन्नशाखोद्गीथादौ न प्राप्तिरिति पूर्वपक्षमाह— **स्वशाखेति।** 'विद्याचित एवे'त्येवश्रुत्या मनश्चिदादीनां क्रियाप्रकरणभङ्गेन पुरुषार्थत्ववदिहाप्युद्गीथादिश्रुतेर्बलीयस्त्वात् तया प्रकरणभङ्गान्नास्त्युपास्तीनां व्यवस्थेत्याह— **कुत इति।** उद्गीथादिसामान्यश्रुतेः प्रकरणोपनीतविशेषाकाङ्क्षत्वेनाबाधकत्वादुपास्तिव्यवस्था युक्तेति मत्वाऽऽह— **संनिधानादिति।** प्रकरणं विवृणोति— **उद्गीथमिति।** उद्गीथोक्तचित्याग्नीनां प्रत्ययालम्बनानां वेदत्रयोक्तप्रधानकर्मस्वङ्गत्वेन प्रयुक्तानां प्रतिशाखं स्वरादिभेदेन भेदादुद्गीथादिश्रुतिभिः प्रत्ययालम्बनानामुद्गीथादीनां सामान्येनोपात्तानां विशेषाकाङ्क्षायां तत्तच्छाखास्थप्रधानकर्माङ्गत्वेन प्रयुक्तोद्गीथादिविशेषेषूद्गीथमुपासीतेत्यादिप्रत्ययाः प्रकरणान्नियम्यन्त इत्यर्थः। प्रकरणाद् व्यवस्थायां यच्छाखास्थं यदुपासनं तत् तच्छाखिभिरेवानुष्ठेयमित्युपसंहरति— **तस्मादिति।**

पूर्वपक्षमनूद्य सिद्धान्तयति— **एवमिति।** सूत्राक्षराणि योजयति— **तुशब्द इति।** हिशब्दोपात्तं हेतुं प्रश्नपूर्वकमाह— **कुत इति।** सामान्यप्रवृत्तश्रुतेर्विशेषाकाङ्क्षायां प्रकरणाद् विशेषनियमो युक्तः। प्रकृते तूद्गीथादिसामान्येषूपास्तिसंभवेन विशेषाकाङ्क्षाभावे श्रौतसामान्येन प्राकरणिकविशेषनियमबाधात् सर्वशाखास्थप्रधानकर्माङ्गत्वेन विनियुक्तोद्गीथादिविशेषेषु तदालम्बनधियामुपसंहारः स्यादिति हेतुं विवृणोति— **स्वेति।** प्रकरणेन विशेषार्थे सामान्यश्रुत्यबाधेऽपि संकोचे मानाभावात् सामान्यद्वारा सर्वविशेषगामिश्रुतेरेकस्मिन् विशेषे नियमनं पीडैवेति मत्वोक्तम्— **पीडितेति।** त्वत्पक्षे श्रुत्या प्रकरणबाधवन्मत्पक्षेऽपि तेन श्रुतिर्बाध्यतामविशेषादित्याशङ्क्याह—

**संनिधानात्तु श्रुतिर्बलीयसी। न च सामान्याश्रयः प्रत्ययो नोपपद्यते। तस्मात् स्वरादिभेदे सत्यप्युद्गीथत्वाद्यविशेषात् सर्वशाखागतेष्वेवोद्गीथादिष्वेवंजातीयकाः प्रत्ययाः स्युः।।५५।।**

## मन्त्रादिवद्वाऽविरोधः।।५६।।

**अथवा नैवात्र विरोधः शङ्कितव्यः— कथमन्यशाखागतेषूद्गीथादिष्वन्यशाखाविहिताः प्रत्यया भवेयुरिति। मन्त्रादिवदविरोधोपपत्तेः। तथाहि— मन्त्राणां कर्मणां गुणानां च शाखान्तरोत्पन्नानामपि शाखान्तर उपसंग्रहो दृश्यते। येषामपि हि शाखिनां 'कुटरुरसी'त्यश्मादानमन्त्रो नाम्नातस्तेषामप्यसौ विनियोगो[1] दृश्यते— 'कुक्कुटोऽसीत्यश्मानमादत्ते कुटरुरसीति वे'ति। येषामपि समिदादयः प्रयाजा नाम्नातास्तेषामपि तेषु गुणविधिराम्नायते— 'ऋतवो वै प्रयाजाः समानत्र होतव्याः' (मै.सं. १।४।१२) इति। तथा येषामपि**

### *प्रकटार्थविवरणम्*

**मन्त्रादिवद्वाऽविरोधः**। पूर्वमुद्गीथश्रुत्यवष्टम्भेन यत्र यत्रोद्गीथो विहितः, तत्र सर्वत्रैव क्वचिद्विहितस्यापि प्रत्ययस्यानुवृत्तिरित्युक्तम्। इदानीम् उदाहरणावष्टम्भेनाविरोधमाह— **अथ वेति**। प्रथमं मन्त्रोदाहरणमाह— **येषामपि हीति**। तण्डुलपेषणाय 'कुटरुरसि' इत्यश्मादानमन्त्रो येषां यजुर्वेदिनां नाम्नातः; तेषां हि 'कुक्कुटोऽसि मधुजिह्वः' इत्ययं मन्त्र आम्नायते। तथापि सूत्रेण वि[नि]योगेऽसौ मन्त्रो दृश्यत इत्यर्थः। इदानीं कर्मणामुदाहरणमाह— **येषामपि चेति**। मैत्रायणीयानाम् 'समिधो यजति' 'तनूनपातं यजति' 'इडो यजति' 'बर्हिर्यजति' 'स्वाहाकारं यजति' इति समिदादयः प्रयाजा नाम्नाताः तथापि तेषु प्रयाजेषु संख्यादिगुणविधिराम्नायते। 'द्वादश मासाः पञ्चर्तवः' इत्यत्र हेमन्तशिशिरयोरेकीकरणेन पञ्चर्तवः सिद्धाः। अतः ऋतुवत्पञ्चसंख्याकाः प्रयाजाः समानत्र समानदेशे होतव्या इत्यर्थः। गुणोदाहरणमाह— **तथा येषामिति**। 'अग्नीषोमीयं पशुमालभेत' इति यजुर्वेदिनामग्नीषोमीयः

### *भाष्यभावप्रकाशिका*

अन्यत्राप्येवंभूतस्य प्रामाणिकत्वदर्शनादविरोध इत्याह— **अथवेति**। मन्त्रादीनामुपसंग्रहं क्रमेण दर्शयति— **येषामपीति**। **तेषामपि तद्विषयो मन्त्रवर्ण इति**। अग्नीषोमीयं पशुमालभेतेत्यविशेषण श्रवणाद् यः कश्चित्पशुरालम्भनीय इति प्राप्ते च्छागो वा मन्त्रवर्णादिति सूत्रेण छागप्रकाशनसमर्थवर्णस्य नियमकारणस्य भावाच्छागोऽग्नीषोमीयः पशुरिति सिद्धान्तितमित्यर्थः।

### *न्यायनिर्णयः*

**संनिधानादिति**। सामान्यस्योपास्यत्वायोगाद् विशेषाकाङ्क्षायां तदर्थकं प्रकरणं कथं श्रुत्या बाध्यमित्याशङ्क्याह— **न चेति**। तथापि प्रतिवेदं स्वरादिभेदेनोद्गीथादिभेदादुपास्तिव्यवस्थोक्तेत्याशङ्क्याह— **तस्मादिति**। श्रुतिप्राबल्यं तच्छब्दार्थः।।५५।।

उद्गीथादिश्रुत्यवष्टम्भेन यत्र यत्रोद्गीथादिरुक्तस्तत्र तत्र सर्वत्रैव क्वाचित्कस्यापि प्रत्ययस्यानुवृत्तिरित्युक्तम्। इदानीमुदाहरणेनापीममर्थं समर्थयति— **मन्त्रादिवदिति**। वाशब्दार्थं कथयति— **अथवेत्यादिना**। हेतुमवतार्याक्षरार्थमाह— **मन्त्रेति**। तत्र मन्त्रोदाहरणं दर्शयति— **येषामिति**। तण्डुलपेषणार्थं 'कुटरुरसी'त्यश्मादानमन्त्रो येषां शाखिनां नाम्नातः 'कुक्कुटोऽसि मधुजिह्व' इत्ययमेव मन्त्रः समाम्नायते तथापि तेषां प्रयोगसूत्रेण विनियोगे सोऽपि मन्त्रो दृश्यते। तेन शाखान्तरोत्पन्नस्य मन्त्रस्य शाखान्तरे संग्रहोऽस्तीत्यर्थः। कर्मणामुदाहरणमाह— **येषामपीति**। मैत्रायणीयानां 'समिधो यजति तनूनपातं यजतीडो यजति बर्हिर्यजति स्वाहाकारं यजती'ति समिदादयः प्रयाजा नाम्नातास्तथापि तेषु संख्यादिगुणविधिराम्नायते। 'द्वादश मासाः पञ्चर्तव' इत्यत्र हेमन्तशिशिरयोरेकीकरणेन पञ्चर्तवः प्रसिद्धाः। तथा च ऋतुवत् पञ्चसंख्याकाः प्रयाजाः समानत्र समानदेशे होतव्या इति यावत्। तत्र शाखान्तरोत्पन्नकर्मणां शाखान्तरे संग्रहो दृष्टोऽन्यथा तत्र गुणविध्ययोगादित्यर्थः। गुणोदाहरणमाह— **तथेति**। 'अग्नीषोमीयं पशुमालभेत' इति यजुर्वेदिनामग्नीषोमीयः पशुराम्नायते; नाज इति जातिविशेषस्तेन विशेषाश्रवणाद् यःकश्चित्पशुरालम्भनीय इति प्राप्ते 'छागो वा मन्त्रवर्णात्' इति सूत्रेण च्छागादेर्होमार्थमनुवाक्यां पठ होतरित्यध्वर्युप्रैषार्थं लिङ्गस्य नियमकारणस्य भावाच्छागोऽग्नीषोमीयः

१. 'विनियोगे' इति पाठो व्याख्यानादवगम्यते।

**'अजोऽग्नीषोमीयः' इति जातिविशेषोपदेशो नास्ति तेषामपि तद्विषयो मन्त्रवर्ण उपलभ्यते– 'छागस्य वपाया मेदसोऽनुब्रूहि' इति। तथा वेदान्तरोत्पन्नानामपि 'अग्ने वेर्होत्रं वेरध्वरम्' (तां.ब्रा. २१।१०।११) इत्येवमादिमन्त्राणां वेदान्तरे परिग्रहो दृष्टः। तथा बहवृचपठितस्य सूक्तस्य 'यो जात एव प्रथमो मनस्वान्' (ऋ.सं. २।६।७) इत्यस्याध्वर्यवे[1] 'सजनीयं शस्यम्' (तै.सं. ७।५।५।२) इत्यत्र परिग्रहो दृष्टः। तस्माद् यथाऽऽश्रयाणां कर्माङ्गानां सर्वत्रानुवृत्तिरेवमाश्रितानामपि प्रत्ययानामित्यविरोधः।।५६।।**

।। इत्येकत्रिंशमङ्गावबद्धाधिकरणम् ।।

**३२।। भूमज्यायस्त्वाधिकरणम् ।।सू.५७।।**

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति।।५७।।

**'प्राचीनशाल औपमन्यवः' (छा.उ. ५।११।१) इत्यस्यामाख्यायिकायां व्यस्तस्य समस्तस्य च**

### *शारीरकन्यायसंग्रहः*

**भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति।।५७।।** 'आत्मनो वैश्वानरस्य मूर्धैव सुतेजा' इत्यादिवाक्यप्रकरणाभ्यां समस्तोपासनाङ्गत्वेन तदन्तर्भावेऽपि व्यस्तोपासनानाम् 'अत्त्यन्नम् पश्यति प्रियम् भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवात्मानं वैश्वानरमुपास्ते' इति प्रत्यवयवमुपासनानां विधिफलयोः श्रवणात् स्वातन्त्र्येणापि पृथग्विधानं कल्प्यते, वाजपेयाङ्गस्य बृहस्पतिसवस्य प्रकरणान्तरे स्वातन्त्र्यवदिति प्राप्ते, विहितानामपि व्यस्तोपासनानां प्रकरणवाक्याभ्यां समस्तोपासनान्तर्भावेण प्रयाजदर्श-पूर्णमासादिवदेकप्रयोगत्वे सिद्धे प्रधानतदङ्गफलानां चार्थवादगतानामेकीकृत्य साङ्गप्रधानस्य फलत्वेन सत्राधिकरणन्यायेन कल्पयितव्यत्वे न प्रकरणान्तरविहितबृहस्पतिसववद् व्यस्तोपासनानां प्रयोगपृथक्त्वं युक्तमित्युक्तम्।

### *प्रकटार्थविवरणम्*

पशुराम्नायते, नाज इति जातिविशेषः, तथापि जातिविशेषोपसंग्रहो दृश्यते प्रैषमन्त्रलिङ्गादित्यर्थः। मन्त्राणामुदाहरणान्तरमाह— **तथा वेदान्तरोत्पन्नानामिति**। 'स जनास इन्द्रः' इत्येतेनोपलक्षितं सूक्तं सजनीयम्, शंसनीयमित्यध्वर्युकर्तृके प्रयोगे परिग्रहो दृश्यत इत्यर्थः। भो जनासः स इन्द्र एवंविधः यो जातमात्र एवोत्पन्नमात्र एव प्रथमः श्रेष्ठः मनस्वी मेधावीत्यर्थः। इदानीं दृष्टान्तानुवादेन दार्ष्टान्तिकं निगमयति— **तस्मादिति**। इत्येकत्रिंशमङ्गावबद्धाधिकरणम्।।

**भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति**। वैश्वानरोपासनमिह विषय इति दर्शयितुमाह— **प्राचीनशाल इत्यादिना**।

### *भाष्यभावप्रकाशिका*

उदाहरणान्तराण्याह— **तथा वेदान्तरेति**। सजनीयं शस्यमित्यत्र सजनीयशब्देन 'यो जात एवे'त्यादि पञ्चदशर्चं सूक्तमुच्यते। तेन तत्परिग्रहो ज्ञायत इत्यर्थः। इत्येकत्रिंशमङ्गावबद्धाधिकरणम्।

### *न्यायनिर्णयः*

पशुरिति स्थितम्। अतश्च गुणस्यापि प्रैषमन्त्रलिङ्गादुपसंग्रहो दृष्ट इत्यर्थः। मन्त्राणामुदाहरणान्तरमाह— **तथेति**। वेदान्तर-शब्दाभ्यामुद्गात्रध्वर्युवेदावुच्येते। तत्रैवोदाहरणान्तरमाह— **तथेति**। यो जातो बाल एव सन् प्रथमो गुणैः श्रेष्ठो मनस्वान्विवेकवान् स जनास इन्द्र इति शेषः। जनासो जनास्ते संबोध्यन्ते, स इन्द्र एवंविध इति यावत्। अध्वर्यवे तत्कर्तृकप्रयोगार्थं सजनीयं 'स जनासः' इत्येतेनोपलक्षितं सूक्तं शस्यं शंसनीयमित्यर्थः। दृष्टान्तानुवादेन दार्ष्टान्तिकं निगमयति— **तस्मादिति**। शाखान्तरोत्पन्नस्य शाखान्तरे संग्रहबाहुल्यं तच्छब्दार्थः।।५६।। इत्येकत्रिंशमङ्गावबद्धाधिकरणम्।।

उद्गीथाद्युपासनं तत्तदङ्गविशेषालम्बनं नेत्युक्तिप्रसङ्गेन वैश्वानरोपास्तिरपि तत्तदङ्गविशेषालम्बना नेति साधयति— **भूम्न इति**। सैव हीत्यत्र 'तद्यत्तत्सत्य'मिति तच्छब्देन प्रकृतपरामर्शाद् विद्यैक्यमुक्तम्। अत्र तु तद्वदभेदे हेत्वभावादगतार्थतेति मत्वा व्यस्तस्य

---

१. अत्र 'आध्वर्यवे' इति पदच्छेदो युक्तः। 'अध्वर्युकर्तृकप्रयोगे' इति तदर्थः। न्यायनिर्णये 'अध्वर्यवे' इति पदच्छेदं कृत्वा व्याख्यानं क्लिष्टं भाति।

**वैश्वानरस्योपासनं श्रूयते। व्यस्तोपासनं तावत्– 'औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से' (छा.उ. ५।१२।१) इत्यादि। तथा समस्तोपासनमपि– 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ' (छा.उ. ५।१८।२) इत्यादि। तत्र संशयः– किमिहोभयथाऽप्युपासनं स्याद् व्यस्तस्य समस्तस्य चोत समस्तस्यैवेति। किं तावत् प्राप्तम्? प्रत्यवयवं सुतेजःप्रभृतिषूपास्स इति क्रियापदश्रवणात् 'तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यते' (छा.उ. ५।१२।१) इत्यादिफलभेदश्रवणाच्च व्यस्तान्यप्युपासनानि स्युरिति प्राप्तम्।**

**ततोऽभिधीयते– भूम्नः पदार्थोपचयात्मकस्य समस्तस्य वैश्वानरोपासनस्य ज्यायस्त्वं प्राधान्यमस्मिन् वाक्ये विवक्षितं भवितुमर्हति, न प्रत्येकमवयवोपासनानामपि। क्रतुवत्। यथा क्रतुषु दर्शपूर्णमासप्रभृतिषु**

***प्रकटार्थविवरणम्***

उभयत्र विधिफलयोः श्रवणात् संशयमाह— **तत्रेति**। प्राक् श्रुत्या सन्निधानं बाधित्वा उद्गीथाद्युपासनानां सर्वत्रानुगम उक्तः, तद्वदिहापि समस्तोपासनसन्निधिं विधिश्रुतिफलश्रुतिभ्यां बाधित्वा व्यस्तोपासनमपि स्यादित्याह— **किं तावदित्यादिना**। सुतमित्यभिषवस्य कुण्डनस्य[कण्डनस्य]कर्मतापन्नं सोमरूपम्; प्रसुतम्, आसुतमित्यवस्थाविशेषापेक्षं तस्यैव विशेषणम्; सोमयागकारणसंपत्तिः तव कुले दृश्यत इत्यर्थः। व्यस्तोपासनानां प्रकरणवाक्याभ्यां [१]समस्तोपासनानां तदभावेन प्रयाजदर्शपूर्णमासाद्येकप्रयोगत्वे सिद्धे प्रधानतदङ्गफलानामर्थवादगतानामेकीकरणेन समस्तोपासनमेव 'ज्याय इति सिद्धान्ताशयः।

***भाष्यभावप्रकाशिका***

**भूम्नः क्रतुवज्ज्यायस्त्वन्तथा च दर्शयति**। अधिकरणस्य पूर्वपक्षं दर्शयति— **प्रत्यवयवमिति**। 'आत्मनो वैश्वानरस्ये' त्यादिवाक्यप्रकरणाभ्यां समस्तोपासनाङ्गत्वेन तदन्तर्भावेऽपि व्यस्तोपासनानामत्त्यन्नं पश्यति प्रियं भवतीत्यादि प्रत्यवयवमुपासनानां विधिफलयोः श्रवणात् स्वातन्त्र्येणापि पृथग्विधानं कल्प्यते। वाजपेयाङ्गस्य बृहस्पतिसवस्य प्रकरणान्तरे स्वातन्त्र्यवदित्यर्थः।

भूम्न इति पदं व्याचष्टे— **पदार्थेति**। ज्यायस्त्वेऽपि नोपासनैक्यं सिध्येदिति, तत्राह— **प्राधान्येनेति**। सूत्रपदमवतारयति— **तथा हीति**।

***न्यायनिर्णयः***

समस्तस्य च वैश्वानरस्योपासनं श्रौतमुदाहरति— **प्राचीनेति**। तत्र प्रश्नप्रतिवचनरूपवाक्येन व्यस्तोपास्तिमुपन्यस्यति— **व्यस्तेति**। वैश्वानराधिकरणे व्याख्यातं वाक्यमनुस्मृत्य समस्तोपास्तिं दर्शयति— **तथेति**। द्विविधामुपास्तिमधिकृत्योभयत्र विधिफलश्रुतिभ्यामेकवाक्यत्वोपपत्तेश्च संशयमाह— **तत्रेति**। एकवाक्यतालाभेन समस्तस्यैव वैश्वानरस्योपास्तिरित्युक्त्या वाक्यार्थधीहेतोरेवात्रापि चिन्तनात् पादादिसंगतिः। पूर्वपक्षे वाक्यभेदः, सिद्धान्ते तदैक्यमित्यङ्गीकृत्य पूर्वपक्षार्थं विमृशति— **किमिति**। उद्गीथादिश्रुत्या संनिधिं बाधित्वोद्गीथाद्युपास्तीनां सर्वशाखासूपसंहारोक्तिवदत्रापि व्यस्तोपासनस्य विधिफलयोः श्रुतेः समस्तोपास्तिसंनिधिप्राप्तं स्तुत्यर्थत्वं बाधित्वा विधेयतेति पूर्वपक्षमाह— **प्रतीति**। सुतमित्यभिषवस्य कण्डनस्य कर्मतापन्नं सोमरूपम्। प्रसुतमासुतमित्यवस्थाविशेषापेक्षं तस्यैव विशेषणम्। सोमयागकरणसंपत्तिस्तव कुले दृश्यत इति यावत्। 'आत्मनो वैश्वानरस्ये'त्यादिवाक्यप्रकरणाभ्यां समस्तोपासनाङ्गत्वेन तदन्तर्भावेऽपि व्यस्तोपासनानाम् 'अत्त्यन्नं पश्यति प्रिय'मित्यादिना प्रत्यवयवं विधिफलश्रुतेः स्वातन्त्र्येणापि विधानं कल्प्यम्, तेनोभयथोपासनं कार्यमिति भिन्नान्येवैतानि वाक्यानीत्यर्थः।

सिद्धान्तसूत्रमवतार्य भूम्नो ज्यायस्त्वमिति प्रतिज्ञां व्याचष्टे— **तत इति**। समस्तोपासनवद् व्यस्तोपासनमपीष्यतां, तत्राह— **नेति**। तत्र दृष्टान्तमादाय विभजते— **क्रतुवदिति**। सामस्त्येनेत्यौत्सर्गिकोक्तिः। प्रयाजादीनां प्रत्येकमप्रयोगेऽपि नित्यादीनां

---

१. 'समस्तोपासनान्तर्भावेण प्रयाजदर्शपूर्णमासादिवदेकप्रयोगत्वे' इति पाठः शारीरकन्यायसंग्रहतो ज्ञायते।

**सामस्त्येन साङ्गप्रधानप्रयोग एवैको विवक्ष्यते, न व्यस्तानामपि प्रयोगः प्रयाजादीनाम्, नाप्येकदेशाङ्गयुक्तस्य प्रधानस्य, तद्वत्। कुत एतद् भूमैव ज्यायानिति? तथा हि श्रुतिर्भूम्नो ज्यायस्त्वं दर्शयति एकवाक्यतावगमात्। एकं हीदं वाक्यं वैश्वानरविद्याविषयं पौर्वापर्यालोचनात् प्रतीयते। तथाहि– प्राचीनशालप्रभृतय उद्दालकावसानाः षड् ऋषयो वैश्वानरविद्यायां परिनिष्ठामप्रतिपद्यमाना अश्वपतिं कैकेयं राजानमभ्याजग्मुरित्युपक्रम्यैकैकस्यर्षेरुपास्यं द्युप्रभृतीनामेकैकं श्रावयित्वा 'मूर्धा त्वेष आत्मन इति होवाच' (छा.उ. ५।१२।२) इत्यादिना मूर्धादिभावं तेषां विदधाति। 'मूर्धा ते व्यपतिष्यद् यन्मां नागमिष्यः' (छा.उ. ५।१२।२) इत्यादिना च व्यस्तोपासनमपवदति। पुनश्च व्यस्तोपासनं व्यावर्त्य समस्तोपासनमेवानुवर्त्य 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' (छा.उ. ५।१८।१) इति भूमाश्रयमेव फलं दर्शयति। यत्तु प्रत्येकं सुतेजःप्रभृतिषु फलभेदश्रवणम्, तदेवं सत्यङ्गफलानि प्रधान एवाभ्युच्चिनोतीति द्रष्टव्यम्। तथोपास्स इत्यपि प्रत्यवयवमाख्यातश्रवणं पराभिप्रायानुवादार्थम्, न व्यस्तोपासनविधानार्थम्। तस्मात् समस्तोपासनपक्ष एव श्रेयानिति।**

**केचित्त्वत्र समस्तोपासनपक्षं ज्यायांसं प्रतिष्ठाप्य ज्यायस्त्ववचनादेव किल व्यस्तोपासनपक्षमपि**

### *प्रकटार्थविवरणम्*

परकीयं व्याख्यानमनूद्य दूषयति— **केचित्त्वत्रेति**। यदोभयथोपासनमिति सिद्धान्तः, तदा व्यस्तोपासनमेवेति पूर्वः पक्षो

### *भाष्यभावप्रकाशिका*

ननु साक्षाज्ज्यायस्त्वकथनं न दृश्यत इति, तत्राह— **एकवाक्येति**। प्रकरणवाक्याभ्यामेकवाक्यत्वमेवोपपादयति— **एकं हीति**। विहितानामपि व्यस्तोपासनानां समस्तोपासने अन्तर्भावादित्यर्थः। व्यस्तोपासने अपवादश्रवणाच्च समस्तस्य ज्यायस्त्वमित्याह— **मूर्द्धेति**। समस्तोपासने फलाभावान्न ज्यायस्त्वमिति चेत्तत्राह— **पुनरिति**। ननु व्यस्तोपासने वि[ऽपि]फलं श्रूयत इति, तत्राह— **यत्त्विति**। व्यस्तानां विहितानामप्युपासनानां वाक्यप्रकरणाभ्यां समस्तोपासनेऽन्तर्भावात् प्रयाजदर्शपूर्णमासादिवदेकप्रयोगत्वे सिद्धे प्रधानतदङ्गफलानां चार्थवादगतानामेकीकृत्य साङ्गप्रधानफलत्वेन सत्राधिकारन्यायेन कल्पयितव्यत्वे प्रकरणान्तरविहितबृहस्पतिसववद् व्यस्तोपासनानां प्रयोगपृथक्त्वं न युक्तमित्यर्थः। अनु[ननु]प्रत्यवयवमुपासनाविधिश्रवणाद् व्यस्तोपासनं प्रतीयत इति, तत्राह— **तथोपास्स इति**। औपमन्यवाद्यवगतरूपमनूद्यत इत्यर्थः।

एकदेशिव्याख्यानमुपन्यस्य दूषयति— **केचिदित्यादिना**। नन्वेकवाक्यताभङ्गेन वाक्यभेदं कृत्वा व्यस्तोपासनान्यपि

### *न्यायनिर्णयः*

किंचिद्गुणवतामपि प्रयोगोऽस्तीत्याशङ्क्य काम्येषु नैवमित्याह— **नापीति**। सर्वाङ्गोपेतकाम्यक्रतोरिष्टत्ववद् वैश्वानरोपासनस्यापि समस्तस्यैव प्राधान्येनेष्टतेत्याह— **तद्वदिति**। हेतुं प्रश्नपूर्वकमेव व्याकरोति— **कुत इति**। साक्षाज्ज्यायस्त्वोक्तिरदृष्टेत्याशङ्क्याह— **एकेति**। वाक्यप्रकरणाभ्यामेकवाक्यत्वं साधयति— **एकं हीति**। विहितानामपि व्यस्तोपास्तीनां समस्तोपास्त्यन्तर्भावान्न पृथक्कार्यतेति मत्वाऽऽह— **तथा हीति**। व्यस्तोपास्त्यपवादश्रुतेश्च समस्तस्यैवोपासनस्य ज्यायस्त्वमित्याह— **मूर्धेति**। समस्तोपासने वैफल्यान्न तस्य ज्यायस्त्वमित्याशङ्क्याह— **पुनश्चेति**। व्यस्तोपासनेऽपि फलश्रवणमस्तीत्युक्तं, तत्राह— **यत्त्विति**। व्यस्तोपास्तीनां प्रकरणवाक्याभ्यां समस्तोपास्त्यन्तर्भावेन प्रयाजदर्शपूर्णमासवदेकप्रयोगत्वे सिद्धे प्रधानतदङ्गफलानामर्थवादगतानामेकीकरणेन समस्तोपास्तिरेव ज्यायसीत्याह— **तदिति**। प्रत्यवयवमुपास्तिविधिश्रुतेर्व्यस्तोपास्तिर्भातीत्युक्तमित्याशङ्क्याह— **तथेति**। औपमन्यवाद्यवगतरूपानुवादेन समस्तोपास्तिरेवात्र विधित्सितेत्यर्थः। स्वपक्षमुपसंहरति— **तस्मादिति**।

**सूत्रकारोऽनुमन्यत इति कथयन्ति। तदयुक्तम्। एकवाक्यताऽवगतौ सत्यां वाक्यभेदकल्पनस्यान्याय्यत्वात्। 'मूर्धा ते व्यपतिष्यत्' (छा. ५.१२।२) इति चैवमादिनिन्दावचनविरोधात्। स्पष्टे चोपसंहारस्थे समस्तोपासनावगमे तदभावस्य पूर्वपक्षे वक्तुमशक्यत्वात्। सौत्रस्य च ज्यायस्त्ववचनस्य प्रमाणवत्त्वाभिप्रायेणाप्युपपद्यमानत्वात्।।५७।।**

।। इति द्वात्रिंशं भूमज्यायस्त्वाधिकरणम् ।।

३३।।नानाशब्दाधिकरणम्।।सू. ५८।।

## नाना शब्दादिभेदात्।।५८।।

**पूर्वस्मिन्नधिकरणे सत्यामपि सुतेजःप्रभृतीनां फलभेदश्रुतौ समस्तोपासनं ज्याय इत्युक्तम्। अतः प्राप्ता**

### *शारीरकन्यायसंग्रहः*

**नाना शब्दादिभेदात्।।५८।।** गायत्रीशाण्डिल्यषोडशकलोपकोसलवैश्वानरदहरसत्यब्रह्मादिविद्यानामर्चिरादिफलसंयोगैक्यात्, उपास्यब्रह्मरूपैक्याच्छब्दमात्रभेदेऽपि प्रकृत्यर्थोपासनावच्छिन्नप्रत्ययार्थप्रयत्नचोदनैक्यात्, ब्रह्मविद्यासमाख्यैक्याच्च समुच्चित्यैकप्रयोगत्वे प्राप्ते 'पूर्णामप्रवर्तिनीं श्रियं लभते' 'एतमितः प्रेत्याभिसंभवितास्मि' 'ज्योतिष्मतो ह लोकान् जयति' 'एवंविदि पापं कर्म न श्लिष्यते' 'सर्वेष्वात्मस्वन्नमत्ति' 'सर्वेषु लोकेषु कामचारो भवति' 'जयतीमाल्ँलोकान्' इत्याद्यवान्तरफलसंयोगभेदात् ब्रह्ममात्रैक्येऽपि तत्तत्प्रकरणविहितगुणकलाप-विशिष्टोपास्यरूपभेदादुपास्यानुबन्धभेदभिन्नोपासनानुबन्धभेदेन प्रयत्नचोदनाभेदात् प्रतिविद्यं नामधेयभेदात् कौण्डपाय्ययनवत् प्रकरणभेदात् कृत्स्नोपसंहारस्याशक्यप्रयोगत्वाच्च प्रधानफलैक्येऽपि स्वर्गकामाग्निहोत्रदर्शपूर्णमासवद् विद्यानां भेद एवेत्युक्तम्।

### *प्रकटार्थविवरणम्*

वक्तव्यः। स च न संभवतीत्याह— **स्पष्टे चोपसंहारस्थ इति**। कथं तर्हि सूत्रे ज्यायस्त्वविशेषणमित्याह— **सौत्रस्य चेति**। इति द्वात्रिंशं भूमज्यायस्त्वाधिकरणम्।।

**नाना शब्दादिभेदात्**। वृत्तानुवादेन पूर्वाधिकरणन्यायेन शङ्काप्राप्तिमाह— **पूर्वस्मिन्निति**। वेद्यैकत्वाच्च विद्यैकत्वं युक्तमित्याह—

### *भाष्यभावप्रकाशिका*

पृथग्विधीयन्तामिति, तत्राह— **मूर्ध्नाक [मूर्धा त] इति**। एकदेशिव्याख्याने पूर्वपक्षोऽप्यधिकरणस्य न सिध्यतीत्याह— **स्पष्टे चेति**। ननु व्यस्तोपासनानामभावे किमपेक्ष्य सूत्रकारस्य ज्यायस्त्ववचनमित्याशङ्क्याह— **सौत्रस्य चेति**। समस्तोपासनस्य प्रमाणवत्त्वकथनेन व्यस्तोपासनानां वाक्यतात्पर्यविषयाविषयद्वेनाप्रामाणिकत्वन्ये न्यत(?)इत्यर्थः। इति द्वात्रिंशं भूमज्यायस्त्वाधिकरणम्।

### *न्यायनिर्णयः*

एकदेशिव्याख्यामनूद्य दूषयति— **केचित् त्विति**। किलकारोऽनिच्छायाम्। एकवाक्यताभङ्गेन वाक्यभेदं कृत्वा व्यस्तोपासनान्यपि पृथग्विधीयन्तामित्याशङ्क्याह— **मूर्धेति**। यदोभयथोपास्तिः सिद्धान्तस्तदा व्यस्तोपास्तिरेव वा समस्तोपास्तिरेव वा पूर्वपक्षः स्यात्, नाद्य इत्याह— **स्पष्टे चेति**। द्वितीयश्च तवायुक्तो वाक्योपक्रमस्थव्यस्तोपास्तिधीविरोधात्, समस्तोपास्तिविध्यर्थं पराभिप्रायानुवादे सिद्धान्तादविशेषादिति भावः। समस्तोपास्तिरेव कार्या न व्यस्तोपास्तिरित्यत्र किमपेक्ष्य सौत्रं ज्यायस्त्ववचनं, तत्राह— **सौत्रस्येति**। समस्तोपास्तेर्मानवत्त्वोक्त्या व्यस्तोपास्तेर्वाक्यतात्पर्याविषयत्वेनाप्रामाणिकत्वं द्योतयितुं सूत्रे भूम्नो ज्यायस्त्वमुक्तम्। अतः समस्तोपास्तिरेव कार्येत्येकवाक्यता सिद्धेत्यर्थः।।५७।। इति द्वात्रिंशं भूमज्यायस्त्वाधिकरणम्।।

भिन्नश्रुतीनामपि सुतेजस्त्वप्रभृतीनां समस्तोपासनं ज्यायश्चेत् तर्हि सर्वोपास्तीनामपि भिन्नश्रुतीनां समस्तोपासनं ज्यायः स्यादित्याशङ्क्याह— **नानेति**। दहरविद्यादिब्रह्मोपासनानि प्राणोपासनानि च वेद्याभेदादभिन्नानि वा शब्दादिभेदाद्भिन्नानि वेति संदेहे

**बुद्धिरन्यान्यपि भिन्नश्रुतीन्युपासनानि समस्योपासिष्यन्त इति। अपि च नैव वेद्याभेदे विद्याभेदो विज्ञातुं शक्यते। वेद्यं हि रूपं विद्याया द्रव्यदैवतमिव यागस्य। वेद्यश्चैक एवेश्वरः श्रुतिनानात्वेऽप्यवगम्यते 'मनोमयः प्राणशरीरः' (छा.उ. ३।१४।२), 'कं ब्रह्म खं ब्रह्म' (छा.उ. ४।१०।५) 'सत्यकामः सत्यसंकल्पः (छा.उ. ८।१।५) इत्येवमादिषु। तथा एक एव प्राणः, 'प्राणो वाव संवर्गः' (छा.उ. ४।३।३), 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' (छा.उ. ५।१।१), 'प्राणो ह पिता प्राणो माता' (छा.उ. ७।१५।१) इत्येवमादिषु। वेद्यैकत्वाच्च विद्यैकत्वम्। श्रुतिनानात्वमप्यस्मिन् पक्षे गुणान्तरपरत्वान्नानर्थकम्। तस्मात् स्वपरशाखाविहितमेकवेद्यव्यपाश्रयं गुणजातमुपसंहर्तव्यं विद्याकार्त्स्न्यायेति।**

**एवं प्राप्ते प्रतिपाद्यते– नानेति। वेद्याभेदेऽप्येवंजातीयका विद्या भिन्ना भवितुमर्हति। कुतः? शब्दादिभेदात्। भवति हि शब्दभेदः 'वेद' 'उपासीत' 'स क्रतुं कुर्वीत' (छा.उ. ३।१४।१) इत्येवमादिः। शब्दभेदश्च कर्मभेदहेतुः समधिगतः पुरस्तात्– 'शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्' (जै.सू. २।२।१) इति।**

***प्रकटार्थविवरणम्***

**अपि चेति।** सर्वत्र विद्यैक्यं चेत् तर्हि पृथगुपदेशो व्यर्थ इत्याशङ्क्याह— **श्रुतिनानात्वमपीति।** दहरवैश्वानरादिविद्या एका नाना वेति सन्देहे विद्यैक्यमुक्तन्यायेन प्राप्ते[प्राप्तं] यस्मात् तस्मादिति पूर्वपक्षफलोपसंहारः।

सिद्धान्तसूत्रं योजयति— **वेद्याभेदेऽपीति।** भिन्नभावार्थविषयः शब्दः शब्दान्तरम्, यथा— यजति, जुहोति, ददाति— इति। तस्मिन् सति कर्मभेदो भवितुमर्हति; कुतः? कृतावच्छेदत्वाद्विधेर्धात्वर्थभेदेन भिन्नधात्वर्थावच्छिन्नतया विधिभेदादित्यर्थः।

***भाष्यभावप्रकाशिका***

**नाना शब्दादिभेदात्।** सङ्गतिमाह— **पूर्वस्मिन्निति।** रूपाभेदादपि शाण्डिल्यादिविद्यानामभेद इत्याह— **अपि च नैवेति।** ननु वेद्याभेदोऽपि नास्ति, तत्र तत्र सत्यसंकल्पादिगुणविशिष्टस्य भेदादित्याशङ्क्य ब्रह्मणस्सिद्धरूपत्वात्तद्गुणानामपि तदुपाधौ व्यवस्थितत्वान्न वेद्यभेद इत्याह— **वेद्यश्चेति।** भवत्वेवं ब्रह्मोपासनेषु। अब्रह्मोपासनेषु तु कथं वेद्याभेद इति, तत्राह— **तथैक इति।** ननु विद्यैकत्वे तस्या एकत्र विहिताया इतरत्र विधानं व्यर्थं स्यादिति, तत्राह— **श्रुतिनानात्वमपीति।** तदेवं ब्रह्मप्राप्तिलक्षणफलसंयोगोपास्यब्रह्मरूपप्रकृत्यर्थोपासनावच्छिन्नप्रत्ययार्थप्रयत्नचोदनाब्रह्मविद्यासमाख्यानामैक्याद्विद्याया एकत्वमेवेति गुणा अपि तत्र तत्रोपसंहर्तव्या इत्याह— **तस्मात् स्वपरेति।**

शब्दभेदेऽप्यनुबन्धभेदाभावाद्विद्याभेदो न युक्त इति शङ्कते— **ननु वेदेति।** ननु वेदोपासीतेत्यादिशब्दानां क्वचिज्ज्ञानं

***न्यायनिर्णयः***

पूर्वन्यायेन पूर्वपक्षयति— **पूर्वस्मिन्निति।** शाण्डिल्यविद्यादीनामभेदे हेत्वन्तरमाह— **अपि चेति।** तत्र सदृष्टान्तं हेतुमाह— **वेद्यं हीति।** तत्र तत्र श्रुतिषु सत्यसंकल्पत्वादिगुणविशिष्टब्रह्मभेदाद् वेद्याभेदोऽपि नास्तीत्याशङ्क्य ब्रह्मणः सिद्धत्वात् तदुपाधौ तद्गुणानामपि व्यवस्थानाद् युक्तं वेद्यैक्यमित्याह— **वेद्यश्चेति। श्रुतिनानात्वेऽपि** तत्तदाध्येयगुणश्रुतिभेदेऽपीति यावत्। ब्रह्मोपासनेषु वेद्याभेदेऽपि कथमब्रह्मोपासनेष्वित्याशङ्क्याह— **तथेति।** तदेकत्वेऽपि विद्यानानात्वं किं न स्यादित्याशङ्क्य रूपाभेदान्नैवमित्याह— **वेद्येति।** विद्यैक्यं चेदेकत्र विहितायास्तस्या नान्यत्र विधानमर्थवदित्याशङ्क्याह— **श्रुतीति।** ब्रह्मप्राप्तिफलसंयोगस्योपास्यब्रह्मरूपप्रकृत्यर्थोपासनाभ्यामवच्छिन्नप्रत्ययार्थप्रयत्नचोदनायाश्च ब्रह्मविद्यासमाख्यायाश्चैक्याद् विद्यैक्ये फलितमाह— **तस्मादिति।**

शब्दादिभेदाद् विद्याभेदोक्त्या वाक्यार्थधीहेतोरेवात्रापि चिन्तनात् पादादिसंगतिः। पूर्वपक्षे पूर्ववद्विद्यैक्यम्। सिद्धान्ते तदयोगात् तन्नानात्वमिति सिद्धवत्कृत्य सिद्धान्तयति— **एवमिति।** सूत्राक्षराणि योजयति— **वेद्येति।** रूपाभेदादभेदोक्तेर्न विद्यानानात्वमित्याह— **कुत इति।** सौत्रहेतुमुक्त्वा शब्दभेदं विभजते— **शब्दादीति।** तद्भेदेऽपि मा भूदुपास्तिनानात्वमित्याशङ्क्याह— **शब्देति।** पुरस्तादिति पूर्वतन्त्रोक्तिः। भिन्नभावार्थविषयः शब्दः शब्दान्तरम्। यथा यजति ददाति जुहोतीति। तस्मिन् सति कर्मभेदः

**आदिग्रहणाद् गुणादयोऽपि यथासंभवं भेदहेतवो योजयितव्याः?**

**ननु वेदेत्यादिषु शब्दभेद एवावगम्यते, न यजतीत्यादिवदर्थभेदः, सर्वेषामेवैषां मनोवृत्त्यर्थत्वाभेदात्, अर्थान्तरासंभवाच्च। तत् कथं शब्दभेदाद् विद्याभेद इति। नैष दोषः। मनोवृत्त्यर्थत्वाभेदेऽप्यनुबन्धभेदाद् वेद्यभेदे सति विद्याभेदोपपत्तेः। एकस्यापीश्वरस्योपास्यस्य प्रतिप्रकरणं व्यावृत्ता गुणाः शिष्यन्ते। तथैकस्यापि प्राणस्य तत्र तत्रोपास्यस्याभेदेऽप्यन्यादृग्गुणोऽन्यत्रोपासितव्योऽन्यादृग्गुणश्चान्यत्रेत्येवमनुबन्धभेदाद् वेद्यभेदे सति विद्याभेदो विज्ञायते। न चात्रैको विद्याविधिरितरे गुणविधय इति शक्यं वक्तुम्। विनिगमनायां हेत्वभावात्। अनेकत्वाच्च प्रतिप्रकरणं गुणानां प्राप्तविद्यानुवादेन विधानानुपपत्तेः। न चास्मिन् पक्षे समानाः**

### *प्रकटार्थविवरणम्*

आदिशब्दार्थमाह— **आदिग्रहणादिति**। तत्तत्प्रकरणविहितगुणकलापविशिष्टोपास्यरूपभेदात्, प्रतिविद्यं नामधेयभेदात्, कौण्डपायिनवत् [पायिनामयनवत्]प्रकरणभेदात्, कृत्स्नोपसंहारस्याशक्यानुष्ठानत्वाच्चेत्यर्थः।

इदानीं शब्दभेदमाक्षिपति— **नन्विति**। यथा क्रियात्वाविशेषेऽपि यागदानहोमानामवान्तररूपभेदः, तथा मनोवृत्तित्वाविशेषेऽपि वेदनादीनां तत्तद्गुणविशिष्टवेद्यरूपभेदाद्विद्याभेद उपपद्यत इत्याह— **नैष दोष इति**। उक्तमेव विवृणोति— **एकस्यापि हीति**। यदुक्तं गुणान्तरविधानार्थमुपदेशान्तरमिति, तत्राह— **न चात्रैक इति**। किं च पौनरुक्त्यप्रसङ्गादपि विद्याभेद एव युक्त इत्याह— **न चास्मिन्पक्ष इति**। किं च 'सर्वेषु लोकेषु कामचारो भवति' 'सर्वेष्वात्मस्वन्नमत्ति' 'जयतीमान् लोकान्' इत्यादिफलसंयोगभेदादपि

### *भाष्यभावप्रकाशिका*

क्वचिद्ध्यानमित्यर्थभेदो विद्यत इत्याशङ्क्य सम्यज्ज्ञानस्य विधेयताभावाद्विधीयमानमुपासनमेवेत्याह— **अर्थान्तरासंभवाच्चेति**। उपासनास्वरूपमात्राभेदेऽपि तत्तत्प्रकरणेषूत्पत्तिशिष्टतत्तद्गुणभेदाद्विशिष्टोपासनानुबन्धो भिद्यत इत्याह— **मनोवृत्त्यर्थत्वाभेदेऽपीति**। न च ब्रह्मोपाधौ व्यवस्थितत्वं गुणानामिति शङ्कनीयम्। वस्तुनिष्ठत्वादुपासनावाक्यानां तत्तत्फलाय क्वचित्केनचित् गुणेन विशिष्टब्रह्मविषयोपासनाविधानोपपत्तेरिति भावः। श्रुतिनानात्वमनर्थकन्न भवति गुणान्तरपरत्वादिति यदुक्तम्, तत्राह— **न चात्रेति**। गुणान्तरविधिपरत्वे अप्राप्तानेकगुणपरतया वाक्यभेदश्च स्यादित्याह— **अनेकत्वाच्चेति**। विद्यैकत्वे सत्येकत्रोक्तानां गुणानामन्यत्र वर्तनञ्चायुक्तम्, पौनरुक्त्यप्रसङ्गादित्याह— **न चास्मिन्निति**। विद्याभेदे तु न पौनरुक्त्यं विद्यान्तरस्यापि तद्गुणत्वाय कथनोपपत्तेरिति

### *न्यायनिर्णयः*

कृतानुबन्धत्वाद्धात्वर्थावच्छेदे भिन्नधात्वर्थावच्छिन्नतया विधेर्भेदादित्यर्थः। शब्दान्तराधिकरणं तु सर्ववेदान्तप्रत्ययाधिकरणेऽनुक्रान्तम्। सौत्रमादिशब्दं व्याकरोति— **आदीति**। गुणादयोऽपीत्यादिग्रहणेन संयोगरूपसमाख्यादयो गृह्यन्ते। तत्तत्प्रकरणोक्तगुणजात-विशिष्टोपास्यरूपभेदात् प्रतिविद्यं फलभेदान्नामधेयभेदात् कौण्डपायिवत्कृत्स्नोपसंहारस्याशक्यानुष्ठानत्वाच्च विद्यानानात्वमित्यर्थः।

सत्यपि शब्दभेदेऽनुबन्धभेदाभावान्न विद्या भिन्नेति शब्दभेदमाक्षिपति— **नन्विति**। वेदोपासीतेत्यादिशब्दानां क्वचिज्ज्ञानं क्वचिद् ध्यानमित्यर्थभेदमाशङ्क्य ज्ञानस्याविधेयत्वाद् विधीयमानमुपासनमेवेत्याह— **अर्थान्तरेति**। अनुबन्धभेदाभावे फलितमाह— **तदिति**। क्रियात्वाविशेषेऽपि यागदानहोमानामवान्तरभेदवद् वेदोपासीतेत्यादीनां मनोवृत्तित्वाविशेषेऽपि तत्तत्प्रकरणेषूत्पत्ति-शिष्टतत्तद्गुणविशिष्टवेद्यरूपभेदाद् विशिष्टोपास्त्यनुबन्धो भिद्यत इत्याह— **नेत्यादिना**। गुणानामपि ब्रह्मोपाधौ व्यवस्थानान्नानुबन्धभेद इत्याशङ्क्य वस्तुनिष्ठत्वाभावादुपास्तिवाक्यानां तत्तत्फलाय क्वचित् केनचिद् गुणेन विशिष्टब्रह्मोपास्तिविधेरनुबन्धभेदः स्यादित्यभिप्रेत्याह— **एकस्यापीति**। ब्रह्मण्युक्तं न्यायं प्राणेऽपि दर्शयति— **तथेति**। प्रतिप्रकरणं गुणभेदोक्तौ फलितमाह— **एवमिति**। यत्तु श्रुतिनानात्वं गुणान्तरपरमिति तद् दूषयति— **न चेति**। गुणान्तरविधिपरत्वे वाऽप्राप्तानेकगुणपरतया वाक्यभेदान्न युक्तेयं व्यवस्थेति दोषान्तरमाह— **अनेकत्वाच्चेति**। विद्यैक्ये सत्येकत्रोक्तानां गुणानामन्यत्रोक्तिरयुक्ता पौनरुक्त्यात्। विद्याभेदे तु नैवं, विद्यान्तरस्यापि तद्गुणत्वाय पुनरुक्तिसंभवादतोऽपि विद्यानानात्वमित्याह— **न चेति**। तत्रैव हेत्वन्तरमाह— **प्रतीति**। 'सर्वेषु लोकेषु कामचारो भवति'

**सन्तः सत्यकामादयो गुणा असकृच्छ्रावयितव्याः। प्रतिप्रकरणं चेदंकामेनेदमुपासितव्यमिदंकामेन चेदमिति नैराकाङ्क्ष्यावगमान्नैकवाक्यतापत्तिः। न चात्र वैश्वानरविद्यायामिव समस्तचोदनाऽपराऽस्ति यद्बलेन प्रतिप्रकरणवर्तीन्यवयवोपासनानि भूत्वैकवाक्यतामियुः। वेद्यैकत्वनिमित्ते च विद्यैकत्वे सर्वत्र निरङ्कुशे प्रतिज्ञायमाने समस्तगुणोपसंहारोऽशक्यः प्रतिज्ञायेत। तस्मात् सुष्ठूच्यते– नाना शब्दादिभेदादिति। स्थिते चैतस्मिन्नधिकरणे सर्ववेदान्तप्रत्ययमित्यादि द्रष्टव्यम्।।५८।।**

।। इति त्रयस्त्रिंशं नानाशब्दाधिकरणम् ।।

### *शारीरकन्यायसंग्रहः*

३४।। विकल्पाधिकरणम् ।।

**विकल्पोऽविशिष्टफलत्वात्।।५९।।** यद्यपि विकल्पसमुच्चययोः अहंग्रहोपासनानां नियमहेत्वभावात् 'तं यथा यथोपासते' इति न्यायेनोपास्यगुणोपचयापचयाभ्यां ब्रह्मलोकेऽपि फलोपचयापचयसम्भवेन तत्कामिनो याथाकाम्येनानुष्ठानं प्राप्तम्, तथापि 'यस्य स्यादद्धा' इत्यादिशास्त्रादुपास्यसाक्षात्करणेऽन्त्यकाले वक्तव्ये द्वयोस्तदसंभवात् द्वयोः साक्षात्करणपर्यन्तसंस्कारोपचयापचयसंभवाच्चित्तविक्षेपाच्च विकल्प एवेत्युक्तम्।

### *प्रकटार्थविवरणम्*

विद्याभेद इत्याह— **प्रतिप्रकरणं चेति**। यच्चोक्तं पूर्वाधिकरणन्यायेनेति, तत्राह— **न चात्रेति**। [यदपि] वेद्यैकत्वाद्विद्यैक्यमिति, तत्राह— **वेद्यैकत्वनिमित्ते चेति**। ननु यदि शब्दादिभेदाद्विद्याभेदः, कथं तर्ह्याद्येऽधिकरणे विद्यैक्यं साधितमित्याशङ्क्याह— **स्थिते चैतस्मिन्निति**। शब्दादिभेदाद् विद्याभेदे सिद्धे सति सर्वशाखागतं तत्तद्ब्रह्मविज्ञानं प्राणविज्ञानं च भिन्नमिति शङ्कायां सर्ववेदान्तगतं तद्विज्ञानमेकमिति साधितमित्यर्थः। इति त्रयस्त्रिंशं नानाशब्दाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

भावः। फलभेदादपि विद्याभेद इत्याह— **प्रतिप्रकरणञ्चेति**। आकाङ्क्षासंभवात् संबन्धोऽपि नोपपद्यत इति भावः। सर्वमङ्गमनूद्य एका विद्या विधीयते वैश्वानरविद्यायामतस्तत्र विद्यैकत्वमिह तु तथाविधं विधानं नास्तीत्याह— **न चात्रेति**। सर्वगुणानुपसंहृत्य प्रत्ययकर्तुरधिकारिणोऽसंभवादपि न विद्यैक्य[१]त्वनिमित्त इति। इदं प्रसङ्गादत्रोक्तमार्थिकी तु सङ्गतिरस्याधिकरणस्य पादादावेवेत्याह— **स्थिते चेति**। विद्याभेदं सिद्धवत्कृत्याधस्तनं विचारजातं निर्वर्तितम्। इति त्रयस्त्रिंशं नानाशब्दाधिकरणम्।

### *न्यायनिर्णयः*

'सर्वेष्वात्मस्वन्नमत्ति' 'जयतीमाल्लँलोकानि'त्यादिफलसंयोगभेदादाकाङ्क्षाभावादेकवाक्यत्वायोगाद् विद्यानानात्वमित्यर्थः। यत्तु पूर्वन्यायेन समस्तोपास्तेर्ज्यायस्त्वमुक्तं तत् प्रत्याह— **न चेति**। अत्रेति शाण्डिल्यादिविद्योक्तिः। यत्तु वेद्यैक्याद् विद्यैक्यमिति, तत्राह— **वेद्येति**। सर्वगुणानुपसंहृत्य प्रत्ययकर्तुरधिकारिणोऽसंभवान्न विद्यैक्यमित्यर्थः। शब्दादिभेदकृतं विद्याभेदमुपसंहरति— **तस्मादिति**। शब्दादिभेदाद् विद्याभेदे सति कथं सर्ववेदान्तप्रत्ययाधिकरणे विद्यैक्यमुक्तं, तत्राह— **स्थिते चेति**। शब्दादिभेदाद् विद्याभेदे सिद्धे सति सर्वशाखागततत्तद्ब्रह्मज्ञानं प्राणज्ञानं च भिन्नमेवेति शङ्किते सर्ववेदान्तगतं तद्विज्ञानमेकमित्युक्तम्, अतोऽस्याधिकरणस्य पादादावेवार्थिकी संगतिः, अत्र तु प्रसङ्गादुक्तमित्यर्थः।।५८।। इति त्रयस्त्रिंशं नानाशब्दाधिकरणम्।।

---

१. अत्र ग्रन्थस्त्रुटित इति भाति।

३४।।विकल्पाधिकरणम्।।सू. ५९।।

## विकल्पोऽविशिष्टफलत्वात्।।५९।।

**स्थिते विद्याभेदे विचार्यते– किमासामिच्छया समुच्चयो विकल्पो वा स्यात्, अथवा विकल्प एव नियमेनेति। तत्र स्थितत्वात् तावद् विद्याभेदस्य न समुच्चयनियमे किंचित्कारणमस्ति। ननु भिन्नानामप्यग्निहोत्रदर्शपूर्णमासादीनां समुच्चयनियमो दृश्यते। नैष दोषः। नित्यताश्रुतिर्हि तत्र कारणम्; नैवं विद्यानां काचिन्नित्यताश्रुतिरस्ति। तस्मान्न समुच्चयनियमः। नापि विकल्पनियमः। विद्यान्तराधिकृतस्य विद्यान्तराप्रतिषेधात्। पारिशेष्याद् याथाकाम्यमापद्यते।**

**नन्वविशिष्टफलत्वादासां विकल्पो न्याय्यः। तथाहि– 'मनोमयः प्राणशरीरः' (छा.उ. ३।१४।२) 'कं ब्रह्म खं ब्रह्म' (छा.उ. ४।१०।५), 'सत्यकामः सत्यसंकल्पः' (छा.उ. ८।१।५) इत्येव-**

### *प्रकटार्थविवरणम्*

**विकल्पोऽविशिष्टफलत्वात्**। एवं तावदुपासनानां स्वरूपमवधार्यानुष्ठानप्रकारं निरूपयितुमुपक्रमत इत्याह— **स्थित इति**। उपासनान्यपि त्रिधा भिद्यन्ते— कानिचिदहंग्रहोपासनानि, कानिचिदनङ्गावबद्धान्यप्यनहंग्रहोपासनानि, कानिचिदङ्गावबद्धानीति। तत्रेह तावदहंग्रहोपासनेषु संशयः। स च याथाकाम्यविकल्पयोः विद्यानात्मत्वस्य साधारण्याद् भवतीत्यर्थः। याथाकाम्येनानुष्ठानमिति पूर्वपक्षमाह— **तत्र स्थितत्वादित्यादिना**। भिन्नफलत्वात्समुच्चयनियमो नास्तीत्यस्य व्यभिचारं शङ्कते— **ननु भिन्नानामपीति**। 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' 'यावज्जीवं[यावज्जीवमग्निहोत्रं] जुहुयात्' इत्यादिश्रुतिबलात् तत्र समुच्चयाङ्गीकारः। उपासनानां तु नित्यत्वे न श्रुतिरस्तीत्याह— **नैष दोष इति**। ननु समुच्चयो न घटते चेत् तर्हि विकल्पोऽस्त्वित्याशङ्क्याह— **नापीति**।

यथा व्रीहिभिरेव पुरोडाशे निष्पन्ने न यवानां समुच्चयोऽङ्गीक्रियते, कृतकरत्वप्रसङ्गात्, तथाऽत्राप्यविशिष्टं ब्रह्मावाप्तिलक्षणं फलमस्ति, तदेकेनैवोपासनेन कृतं चेत् किं समुच्चयेनेत्याह— **नन्वविशिष्टफलत्वादिति**। कर्मभूयस्त्वात्फलभूयस्त्वमिति न्यायेनैकफलत्वेऽपि

### *भाष्यभावप्रकाशिका*

**विकल्पोऽविशिष्टफलत्वात्। किमासामिति**। अहंग्रहोपासनानामित्यर्थः। ननु नियमेन समुच्चयपक्षः कस्मान्नाशङ्क्यत इति, तत्राह— **तत्र स्थितत्वादिति**। उपासनानां काम्यत्वान्नित्याग्निहोत्रदर्शपूर्णमासवन्न नियमेन समुच्चयसंभव इत्याह— **नित्यतेति**। तर्हि नियमविकल्पः किमिति नाश्रीयत इति, तत्राह— **नापीति**। तस्मादिच्छया समुच्चयो वि.......य इत्याह— **परिशेषादिति**।

### *न्यायनिर्णयः*

विद्याभेदमुक्त्वा तदनुष्ठानभेदं वदन्नादावहंग्रहोपास्तीनामनुष्ठानप्रकारमाह— **विकल्प इति**। अहंग्रहोपासनान्यधिकृत्य याथाकाम्यविकल्पयोर्विद्यानानात्वसाम्यादधिकरणसंगतिगर्भं संशयमाह— **स्थित इति**। अहंग्रहोपास्तीनां विकल्पेनानुष्ठानोक्त्या वाक्यार्थधीहेतोरेवोक्तेरत्र पादादिसंगतिः। पूर्वपक्षे स्वेच्छया प्रवृत्तेरनुष्ठानानियमः, सिद्धान्ते व्रीह्यादिष्विव तन्नियतिरिति मत्वा याथाकाम्येनानुष्ठानमिति पूर्वपक्षयिष्यन्नादौ समुच्चयनियमं निरस्यति— **तत्रेति**। उपासनानां भिन्नत्वेऽपि समुच्चय (नियमे) नियमो युक्तो नित्याग्निहोत्रदर्शपूर्णमासादिवदिति शङ्कते— **नन्विति**। उपास्तीनां काम्यत्वान्नैवमित्याह— **नेत्यादिना**। अग्निहोत्रादिषु समुच्चयस्तत्रेत्युक्तः। तर्हि किमिति विकल्पनियमो नाश्रीयते, तत्राह— **नापीति**। समुच्चयविकल्पयोर्नियमायोगादिच्छयाऽन्यतरोऽङ्गीकर्तव्य इत्याह— **पारिशेष्यादिति**।

यथा व्रीहिभिरेव पुरोडाशे सिद्धे यवा न समुच्चीयन्ते कृतकरणत्वप्रसङ्गात्। तथाऽत्रापि ब्रह्मप्राप्तिफलमविशिष्टं तदेकेनैवोपासनेन कृतं चेन्नावकाशः समुच्चयस्येति शङ्कते— **नन्विति**। तदेवाविशिष्टफलत्वं स्पष्टयति— **तथा हीति**। काम्यदर्शपूर्णमासज्योतिष्टोमादिवत्

**माद्यास्तुल्यवदीश्वरप्राप्तिफला लक्ष्यन्ते। नैष दोषः। समानफलेष्वपि स्वर्गादिसाधनेषु कर्मसु याथाकाम्यदर्शनात्। तस्माद् याथाकाम्यप्राप्तावुच्यते–**

**विकल्प एवासां भवितुमर्हति, न समुच्चयः। कस्मात्? अविशिष्टफलत्वात्। अविशिष्टं ह्यासां फलमुपास्यविषयसाक्षात्करणम्। एकेन चोपासनेन साक्षात्कृत उपास्ये विषय ईश्वरादौ द्वितीयमनर्थकम्। अपि चासंभव एव साक्षात्करणस्य समुच्चयपक्षे चित्तविक्षेपहेतुत्वात्। साक्षात्करणसाध्यं च विद्याफलं दर्शयन्ति श्रुतयः– 'यस्य स्यादद्धा न विचिकित्साऽस्ति' (छा.उ. ३।१४।४) इति, 'देवो भूत्वा देवानप्येति' (बृ.उ. ४।१।२) इति चैवमाद्याः। स्मृतयश्च– 'सदा तद्भावभावितः' (भ.गी. ८।६) इत्येवमाद्याः। तस्मादविशिष्टफलानां विद्यानामन्यतमामादाय तत्परः स्याद् यावदुपास्यविषयसाक्षात्करणेन तत्फलं प्राप्तमिति।।५९।।**

।। इति चतुस्त्रिंशं विकल्पाधिकरणम् ।।

### *शारीरकन्यायसंग्रहः*

३५।। काम्याधिकरणम् ।।

**काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात्।।६०।।** अनहंग्रहाणि अकर्माङ्गावरुद्धानि च 'मनो ब्रह्मेत्युपासीत' इत्यादीन्यभ्युदफलान्यपि नियमेन विकल्प्येरन्, उपासनात्वात्, अहंग्रहोपासनवत् इति प्राप्ते याथाकाम्येनानुष्ठेयानि, अविरुद्धभिन्नफलत्वात् स्वर्गपश्वर्थचित्राज्योतिष्टोमवत्— इति विशेषानुमानेन यथाकाम्यमुक्तम्।

### *प्रकटार्थविवरणम्*

न विकल्पनियमो भविष्यतीत्याह— **नैष दोष इति**। सिद्धान्तसूत्रं योजयति— **विकल्प एवासामिति**। साक्षात्कारस्य अनतिशयत्वात् द्वयोः साक्षात्करणपर्यन्तः संस्कारोपचयासंभवात् चित्तविक्षेपाच्च विकल्प एवेत्यर्थः। नन्वन्त्यकाले चेत् साक्षात्करणमनेकोपासने न घटते, मा घटिष्ट, किं तेनेत्याशङ्क्याह— **साक्षात्करणसाध्यं चेति**। यस्य पुंसः स्यादद्धा साक्षात्कारः, न विचिकित्सा संशयोऽस्ति, तस्यैवैष ब्रह्मलोक इत्यर्थः। देवो भूत्वा जीवन्नेव देवभावमनुभूय पतितेऽपि देहे देवान् प्राप्नोतीत्यर्थः। इति चतुस्त्रिंशं विकल्पाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

काम्यदर्शपूर्णमासज्योतिष्टोमादिवत् फलभूमार्थिनः समुच्चयः संभवतीत्याह— **समानेति**। ननु साक्षात्करणापेक्षैव नास्त्यदृष्टद्वारेण यागादिवत् फलसाधनत्वोपपत्तेरित्याशङ्क्याह— .....ग्रहोपासनानां साक्षात्कारसाध्यं फलम्, तथा श्रुतेरित्याह— **साक्षात्करणसाध्यञ्चेति**। इति चतुस्त्रिंशं विकल्पाधिकरणम्।

### *न्यायनिर्णयः*

फलभूमार्थिनः समुच्चयः स्यादित्याह— **नेत्यादिना**। विकल्पसमुच्चयनियमनिवृत्तिफलमुपसंहत्य सिद्धान्तसूत्रमवतार्य प्रतिज्ञां विभजते— **तस्मादित्यादिना**। उक्तेऽर्थे प्रश्नपूर्वकं हेतुमादाय व्याचष्टे— **कस्मादित्यादिना**। ध्येयसाक्षात्कारार्थमेव समुच्चयाङ्गीकारे का क्षतिः, तत्राह— **एकेनेति**। अभीष्टफलघातित्वाच्च समुच्चयोऽत्र नास्तीत्याह— **अपि चेति**। उपास्तेरदृष्टद्वारा यागादिवत् फलोपायत्वोपपत्तेरुपास्यसाक्षात्कारापेक्षैव नास्तीत्याशङ्क्याहंग्रहोपास्तीनां साक्षात्कारसाध्यं फलं, तथा श्रुतेरित्याह— **साक्षादिति**। यस्योपासकस्याद्धा साक्षादुपास्यं स्यान्न विचिकित्सा संशयोऽस्ति प्राप्नुयामहं फलं न वेति तस्य ब्रह्माप्तिः स्यादित्यर्थः। देवो भूत्वा जीवन्नेव साक्षात्कारेण देवभावमनुभूय पतिते देहे देवानप्येति प्राप्नोतीत्यर्थः। न चाविशिष्टफलत्वे फलभूमार्थिनः समुच्चयानुष्ठानम्, उपास्यसाक्षात्कारे तन्निमित्तं, तत्प्राप्तौ च विशेषाभावादित्याशयेनोपसंहरति— **तस्मादिति**।।५९।। इति चतुस्त्रिंशं विकल्पाधिकरणम्।।

३५।।काम्याधिकरणम्।।सू. ६०।।

## काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात्।।६०।।

**अविशिष्टफलत्वादित्यस्य प्रत्युदाहरणम्। यासु पुनः काम्यासु विद्यासु 'स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति' (छा.उ. ३।१५।२) 'स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' (छा.उ. ७।१।५) इति चैवमाद्यासु क्रियावददृष्टेनात्मनाऽऽत्मीयं फलं साधयन्तीषु साक्षात्करणापेक्षा नास्ति; ता यथाकामं समुच्चीयेरन्, न वा समुच्चीयेरन्, पूर्वहेत्वभावात्। पूर्वस्या-विशिष्टफलत्वादित्यस्य विकल्पहेतोरभावात्।।६०।।**

।।इति पञ्चत्रिंशं काम्याधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

**अङ्गेषु यथाश्रयभावः।।६१।। शिष्टेश्च।।६२।। समाहारात्।।६३।। गुणसाधारण्यश्रुतेश्च।।६४।। न वा तत्सहभावाश्रुतेः।।६५।। दर्शनाच्च।।६६।।** अङ्गाश्रितान्युपासनानि नियमेन क्रतौ समुच्चित्यानुष्ठेयानि, नियमेन समुच्चीयमानाङ्गव्यपाश्रयत्वात्, अङ्गाश्रितोपाङ्गवत् इति प्राप्ते, क्रतौ समुच्चित्य नियमेन नानुष्ठेयानि, अङ्गाश्रितत्वे सति तद्भिन्नफलत्वात् गोदोहनवदिति विशेषानुमानेनात्रापि याथाकाम्यमेवोक्तम्।

**इति भगवत्प्रकाशात्मविरचिते शारीरकन्यायसंग्रहे तृतीयाध्यायस्य तृतीयः पादः।।**

### *प्रकटार्थविवरणम्*

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्।** अनहंग्रहाणि अकर्माङ्गावबद्धानि उपासनानि विषयः। तेषु किं विकल्पनियमो याथाकाम्यं वेति संशये अहंग्रहोपासनवदुपासनत्वाविशेषात् विकल्पनियमे प्राप्ते तद्वैपरीत्यमाह— **अविशिष्ट-फलत्वादित्यस्येति**। स यः कश्चिदेवं वायुं दिशां गोत्वेन कल्पितानां वत्सं वेद नासौ पुत्रमरणनिमित्तं रोदनं रोदिति लभत इत्यर्थः। एतानि याथाकाम्येनानुष्ठेयान्यविरुद्धविभिन्नफलत्वात् स्वर्गपश्वर्थचित्राज्योतिष्टोमवदित्यर्थः। इति पञ्चत्रिंशं काम्याधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्।** अनहंग्रहाण्यकर्माङ्गबद्धानि च 'मनो ब्रह्मेत्युपासीते'-त्येवमादीन्यभ्युदयफलान्यपि नियमेन विकल्पेरन्नुपासनत्वादहंग्रहोपासनवदिति प्राप्तेरनेनाधिकरणेन प्रत्याचष्टे— **काम्यास्त्विति**। एतानि याथाकाम्येनानुष्ठेयान्यविरुद्धभिन्नफलत्वात् चित्राज्योतिष्टोमादिवदिति भावः। इति पञ्चत्रिंशं काम्याधिकरणम्।

### *न्यायनिर्णयः*

अहंग्रहोपास्तीनामनुष्ठानप्रकारमुक्त्वा प्रतीकोपास्तीनां तत्प्रकारमाह— **काम्यास्त्विति**। अनहंग्रहाण्यकर्माङ्गावबद्धानि च 'मनो ब्रह्मेत्युपासीते'त्येवमादीन्यभ्युदयफलान्युपासनानि विषयः। तेषु किं विकल्पनियमो याथाकाम्यं वेत्युभयोपपत्त्या संशये प्रतीकोपास्तीनामुपास्तित्वादहंग्रहोपास्तिवद् विकल्पनियमे प्राप्ते तद्वैपरीत्यमाह— **अविशिष्टेति**। अत्र प्रतीकोपास्तिषु पूर्ववैपरीत्येनानुष्ठानस्य याथाकाम्योक्त्या वाक्यार्थधीहेतोरेव कथनात् पादादिसंगतिः। पूर्वपक्षे व्रीह्यादिष्विवानुष्ठाननियमसिद्धिः। सिद्धान्ते फलवशादतन्नियतिरित्यङ्गीकृत्य सूत्राक्षराणि योजयति— **यास्त्विति**। स यः कश्चिदेतं वायुं दिशां गोत्वेन कल्पितानां वत्सं वेद नासौ पुत्रमरणनिमित्तं रोदं रोदनं रोदिति लभते किंतु नित्यमवियुक्तवत्सादिगुणोपासनाज्जीवत्पुत्रो भवतीत्यर्थः। अहंग्रहोपास्तिषु साक्षात्कारसाधनत्वमुपाधिरिति मत्वा विशिनष्टि— **साक्षादिति**। विमतान्युपासनानि याथाकाम्येनानुष्ठेयान्यविरुद्धभिन्नफलत्वात् चित्राज्योतिष्टोमादिवदिति भावः।।६०।। इति पञ्चत्रिंशं काम्याधिकरणम्।।

**३६।।यथाश्रयभावाधिकरणम्।।सू. ६१-६६।।**

## अङ्गेषु यथाश्रयभावः।।६१।।

**कर्माङ्गेषूद्गीथादिषु य आश्रिताः प्रत्यया वेदत्रयविहिताः किं ते समुच्चीयेरन्, किंवा यथाकामं स्युरिति संशये यथाश्रयभाव इत्याह। यथैवैषामाश्रयाः स्तोत्रादयः संभूय भवन्त्येवं प्रत्यया अपि; आश्रयतन्त्रत्वात् प्रत्ययानाम्।।६१।।**

## शिष्टेश्च।।६२।।

**यथा वाऽऽश्रयाः स्तोत्रादयस्त्रिषु वेदेषु शिष्यन्त एवमाश्रिता अपि प्रत्ययाः। नोपदेशकृतोऽपि कश्चिद् विशेषोऽङ्गानां तदाश्रयाणां च प्रत्ययानामित्यर्थः।।६२।।**

### *प्रकटार्थविवरणम्*

**अङ्गेषु यथाश्रयभावः**। इहोद्गीथाद्यङ्गावबद्धोपासनानि विषयः। तेषां किमङ्गवत् समुच्चयनियमः, उत प्रतीकदृष्टिवद् याथाकाम्यमित्यङ्गद्वारेण कृतसंबन्धात्फलसन्निकर्षाच्च संशयमाह— **कर्माङ्गेष्विति**। 'तन्निर्धारणानियमः' इत्यत्र क्रत्वर्थत्वं पुरुषार्थत्वं वेति विचारः। इह त्वग्निहोत्रदर्शादिवत् पुरुषार्थत्वेऽपि समुच्चये प्रमाणमस्ति वा न वेति विचार्यते। पूर्वाधिकरणवत् यथारुच्यधि[च्यनु]ष्ठानं न संभवतीत्यत्र पूर्वपक्षे सूत्रं योजयति— **यथैषामिति**। अङ्गाश्रितोपासनानि नियमेन क्रतौ समुच्चित्यानुष्ठेयानि, नियमेन समुच्चीयमानाङ्गव्यपाश्रयत्वात्, अङ्गाश्रितोपाङ्गवदित्यर्थः।

**शिष्टेश्च**। इतश्च समुच्चय इत्याह— **शिष्टेश्चेति**। शिष्टिः शासनम् विधानम्, तस्याप्यविशेषादङ्गानां प्रत्ययानां च न गोदोहनवदसार्वत्रिकत्वमित्यर्थः।

### *भाष्यभावप्रकाशिका*

**अङ्गेषु यथाश्रयभावः**। एतत् पूर्वपक्षसूत्रम्। अधिकरणस्य विषयं दर्शयितुमङ्गेष्विति पदस्यार्थमाह— **कर्माङ्गेष्विति**। विषयं दर्शयति— **य आश्रिता इति**। संशयमाह— **किन्त इति**। पूर्वपक्षसूत्रं व्याचष्टे— **[यथेति]** अङ्गाश्रितान्युपासनानि नियमेन क्रतौ समुच्चित्यानुष्ठेयानि नियमेन समुच्चीयमानाङ्गव्यपाश्रयत्वादङ्गाश्रितोपाङ्गवदित्यर्थः।

न केवलमनुमानादुपदेशाच्चैवमवगम्यत इत्याह— **शिष्टेश्चेति**। एतद्व्याचष्टे— **यथेति**। एतदुक्तं भवतीत्याह— **नोपदेशेति**।

### *न्यायनिर्णयः*

प्रतीकोपास्तीनामनुष्ठानक्रममुक्त्वाऽङ्गावबद्धोपास्तीनां क्रमं निरूपयिष्यन् पूर्वपक्षमाह— **अङ्गेष्विति**। अधिकरणस्य विषयं वक्तुमङ्गेष्विति पदं व्याचष्टे— **कर्मेति**। तदाश्रितोपासनानि विषयत्वेन दर्शयति— **य इति**। अङ्गद्वारा क्रतुसंबन्धात् फलसंनिकर्षाच्च संशय इत्याह— **किं त इति**। तन्निर्धारणानियमाधिकरणे पुरुषार्थत्वमङ्गोपास्तीनामुक्तमिह सत्यपि पुरुषार्थत्वे समुच्चये मानं नेत्युच्यते। अङ्गोपास्तीनामङ्गवत् समुच्चयनियमः किंवा प्रतीकदृष्टिवद् याथाकाम्यमिति संशयमनूद्य पूर्वाधिकरणवद् यथारुच्यनुष्ठानं नेति पूर्वपक्षयति— **इति संशय इति**। अत्र चाङ्गोपास्तिषु यथारुच्यनुष्ठानोक्त्या वाक्यार्थधीसाधनस्यैव चिन्तनात् पादादिसंगतिः। पूर्वपक्षे समुच्चयानुष्ठानात् फलबाहुल्यसिद्धिः, सिद्धान्ते समुच्चयस्याप्रामाणिकत्वात् तथाऽनुष्ठाने फलबाहुल्यायोगाद्यथारुच्यनुष्ठाने प्रवृत्तिसौकर्यमित्युपेत्य पूर्वपक्षसूत्रं योजयति— **यथेति**। अङ्गाश्रितोपासनानि नियमेन क्रतौ समुच्चित्यानुष्ठेयानि नियमेन समुच्चीयमानाङ्गाश्रितत्वात् तदाश्रितोपाङ्गवदित्यर्थः।।६१।।

इतश्चाङ्गोपास्तीनां समुच्चित्यानुष्ठानमित्याह— **शिष्टेश्चेति**। शिष्टिः शासनं विधानं, तस्या विशेषाभावादङ्गानां प्रत्ययानां च समुच्चयनियम इत्यर्थः। सूत्रस्याक्षरोत्थमर्थमाह— **यथा वेति**। तस्यैव तात्पर्यार्थमाह— **नेत्यादिना**।।६२।।

## समाहारात्।।६३।।

**'होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरति' (छा.उ. १।५।५) इति च प्रणवोद्गीथैकत्वविज्ञानमाहात्म्यादुद्गाता स्वकर्मण्युत्पन्नं क्षतं हौत्रात् कर्मणः प्रतिसमादधातीति ब्रुवन् वेदान्तरोदितस्य वेदान्तरोदितपदार्थसंबन्धसामान्यात् सर्ववेदोदितप्रत्ययोपसंहारं सूचयतीति लिङ्गदर्शनम्।।६३।।**

## गुणसाधारण्यश्रुतेश्च।।६४।।

**विद्यागुणं च विद्याश्रयं सन्तमोङ्कारं वेदत्रयसाधारणं श्रावयति– 'तेनेयं त्रयी विद्या वर्तत**

### *प्रकटार्थविवरणम्*

**समाहारात्**। इतश्चोपासनानानां समुच्चय इत्याह— **समाहारादिति**। समाहरणं समताकरणम्, क्षतस्य सन्धानं समाहारः। तस्माल्लिङ्गात् समुच्चयो गम्यते प्रत्ययानामिति योजना। यः प्रणवो बह्वृचानामिति प्रणवोद्गीथयोः एकत्वेन यदुपासनमुद्गात्रा कृतं तस्येदं फलमाह— **होतृषदनादिति**। होतुः सदनम्, होता यत्रस्थः शंसति, तद्धोतृषदनम्, हौत्रं कर्म; तस्माद्धोतृषदनात् सम्यक् संपादितात् हैवापि दुरुद्गीतं दृष्टं[दुष्टं] यदुद्गानं कृतं स्वरोष्मव्यञ्जनादिप्रमादात् उद्गाताऽनुसमाहरति प्रतिसंदधाति, क्षतमिव वैद्य इत्यर्थः। किमनेन सूचितं भवतीत्याशङ्क्याह— **प्रणवेत्यादिना**। वेदद्वयसंबद्धयोः प्रणवोद्गीथयोरेकत्वविज्ञानस्यैतादृशं फलं ब्रुवन् सर्ववेदोदितानां प्रत्ययानामुपसंहारं समुच्चयं सूचयतीत्यन्वयः। कुतः? सर्वोपासनेषु वेदान्तरोदितप्रत्ययस्य वेदान्तरोदितेन पदार्थेन संबन्धस्य समानत्वादित्यर्थः।

**गुणसाधारण्यश्रुतेश्च**। किंचोपास्यस्योङ्कारस्य साधारण्यादप्युपासनानां साधारण्यं समुच्चित्यानुष्ठानमित्याह— **गुणसाधारण्येति**।

### *भाष्यभावप्रकाशिका*

वाक्यस्यार्थमाह— **प्राणोद्गीथेत्यादिना**। दुरुद्गीतमित्यस्यार्थमाह— **स्वकर्मण्युत्पन्नं क्षतमिति**। होतृषदनादित्यस्यार्थमाह— **हौत्रात् कर्मण इति**। अनेन किमुक्तं भवतीति चेत्। स्थानवाचिना सदनशब्देन तत्कर्मणो लक्षणात्। अनुसमाहरतीति पदस्यार्थमाह— **प्रतिसमादधातीति**। ततः प्रकृते किमायातमिति, तत्राह— **इति ब्रुवन्निति**। **वेदान्तरेति**। 'अथ खलु य उद्गीथः स प्रणवो यः प्रणवस्स उद्गीथ' इति सामवेदनिर्दिष्टस्य प्रणवोद्गीथैकत्वविज्ञानस्येत्यर्थः। **वेदान्तरोदितपदार्थसंबन्धेति**। वेदान्तरोदितमृग्वेदविहितं यद्धौत्रं कर्म शंसनम् तेन दुरुद्गीतप्रतिसमाधानहेतुना प्रयोजकतया संबन्धदृष्टेस्तत्सामान्यात् प्रत्ययान्तराणामपि वेदान्तरोदितकर्मसंबन्धं संभावयन्नुपसंहारं सूचयतीत्यर्थः।

अन्वयमुखेन सूत्रं व्याचष्टे— **विद्यागुणमिति**। अस्य व्याख्यानं विद्याश्रयं सन्तमिति। उद्गीथविद्याश्रयं सन्तमित्यर्थः। इदानीं

### *न्यायनिर्णयः*

इतश्चोपासनानि समुच्चित्यानुष्ठीयेरन्नित्याह— **समाहारादिति**। समाहरणं समताकरणं क्षतस्य संधानं समाहारः, तस्माल्लिङ्गात् समुच्चयो गम्यते प्रत्ययानामिति योजना। यः प्रणवो बह्वृचानां स च्छन्दोगानामुद्गीथः। यश्च तेषामुद्गीथः स प्रणवोऽन्येषामिति प्रणवोद्गीथयोरेकत्वेन यदुपासनमुद्गात्रा कृतं तत्फलवादिवाक्यं सूत्रं व्याकर्तुमनुवदति— **होतृषदनादिति**। होतुः सदनं स्थानं होता यत्रस्थः शंसति तद्धोतृषदनं, तेन च हौत्रं कर्म लक्ष्यते। ततः सम्यगनुष्ठिताद् दुरुद्गीतं दुष्टं यदुद्गानं स्वरव्यञ्जनादिप्रमादादुद्गात्रा कृतं तदप्युद्गाता तेनैक्यविज्ञानेनानुसमाहरति प्रतिसंदधात्येव क्षतमिव वैद्य इत्यर्थः। वाक्यस्याभीष्टमर्थं कथयति— **प्रणवेति**। तथापि प्रकृते किमायातं तदाह— **इति ब्रुवन्निति**। वेदद्वययुक्तप्रणवोद्गीथयोरैक्यज्ञानस्येदृशं फलं ब्रुवाणः सर्ववेदस्थानां प्रत्ययानां सर्वत्रोपसंहारं समुच्चयं सूचयति। सर्वोपासनेषु वेदान्तरोक्तप्रत्ययस्य वेदान्तरोक्तपदार्थेन संबन्धस्य समानत्वादिति योजना।।६३।।

ॐकारस्योपास्यस्य साधारण्यादप्युपासनानां साधारण्यं समुच्चित्यानुष्ठानमिति हेत्वन्तरमाह— **गुणेति**। विद्यागुणमित्यस्य व्याख्या विद्याश्रयमिति। विद्योद्गीथविद्या। तेनेत्योङ्कारोक्तिः। त्रयी विद्या वेदत्रयविहितं कर्मेत्यर्थः। अन्वयमुखेन व्याख्यामुपसंहरति—

**ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति' (छा.उ. १।१।९) इति च। ततश्चाश्रयसाधारण्यादाश्रितसाधारण्यमिति लिङ्गदर्शनमेव।**

**अथवा– गुणसाधारण्यश्रुतेश्चेति। यदीमे कर्मगुणा उद्गीथादयः सर्वे सर्वप्रयोगसाधारणा न स्युर्न स्यात् ततस्तदाश्रयाणां प्रत्ययानां सहभावः। ते तूद्गीथादयः सर्वाङ्गग्राहिणा प्रयोगवचनेन सर्वे सर्वप्रयोगसाधारणाः श्राव्यन्ते। ततश्चाश्रयसहभावात् प्रत्ययसहभाव इति।।६४।।**

**न वा तत्सहभावाश्रुतेः।।६५।।**

**न वेति पक्षव्यावर्तनम्। न यथाश्रयभाव आश्रितानामुपासनानां भवितुमर्हति। कुतः? तत्सहभावाश्रुतेः। यथा हि त्रिवेदीविहितानामङ्गानां स्तोत्रादीनां सहभावः श्रूयते– 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति, स्तुतमनुशंसति, प्रस्तोतः साम गाय, होतरेतद् यज' इत्यादिना; नैवमुपासनानां सहभावश्रुतिरस्ति। ननु प्रयोगवचन एषां सहभावं प्रापयेत्। नेति ब्रूमः, पुरुषार्थत्वाद्उपासनानाम्। प्रयोगवचनो हि क्रत्वर्थानामुद्गीथादीनां सहभावं प्रापयेत्। उद्गीथाद्युपासनानि क्रत्वर्थाश्रयाण्यपि गोदोहनादिवत् पुरुषार्थानीत्यवोचाम 'पृथग्घ्यप्रतिबन्धः फलम्' (ब्र.सू. ३।३।४२) इत्यत्र।**

*प्रकटार्थविवरणम्*

तेनोङ्कारेणेयं त्रयी विद्या वेदत्रयविहितं कर्म प्रवर्तते। तदेवाह— **ओमित्यादिना**। व्यतिरेकमुखेन सूत्रं योजयति— **यदीत्यादिना**।

**न वा तत्सहभावाश्रुतेः**। यस्य यस्मिन्नुपासनेऽभिरुचिरुत्पद्यते, स तदनुतिष्ठति। सर्वोपासनानां समुच्चये न प्रमाणमस्तीति सिद्धान्तमाह— **न वेति**। [न]अङ्गावबद्धान्युपासनानि समुच्चित्यानुष्ठेयानि, अङ्गाश्रितत्वेऽपि भिन्नफलत्वात्, गोदोहनवत्, इति विशेषानुमानेन यथारुच्यनुष्ठानमित्यर्थः।

यदुक्तं शिष्टेश्चाविशेष इति तत्राह— **अयमेव चोपदेशाश्रय इति**। यच्चोक्तम् 'समाहारात्' 'गुणसाधारण्यश्रुतेश्च' इति,

*भाष्यभावप्रकाशिका*

व्यतिरेकमुखेन व्याचष्टे— **यदि तु कर्मगुणा इति**। गुणेन सहैव गुणिनः प्रत्ययस्यागमनं सूच्यत इत्याह— **ततश्चाश्रयेति**।

सिद्धान्तयति— **न वेति**। पूर्वोक्तानुमानाभिप्रायेण शङ्कते— **ननु प्रयोगवचन इति**। विगीतोपासना.....क्रतौ समुच्चित्यानुष्ठेयानि न भवन्त्यङ्गाश्रितत्वे सति भिन्नफलत्वात् गोदोहनादिवदित्यभिप्रेत्य परिहरति— **पुरुषार्थत्वादित्यादिना**।

*न्यायनिर्णयः*

**ततश्चेति**। आश्रयसाधारण्ये सत्याश्रितसाधारण्यमन्वयः। तमेवाश्रयसाधारण्याभावे सत्याश्रितसाधारण्याभावरूपव्यतिरेकव्याख्यया द्रढयितुं सूत्रमादत्ते— **अथवेति**। व्यतिरेकेण सूत्रं योजयति— **यदीति**। उद्गीथादीनामपि तर्हि साधारण्यं मा भूत्, तत्राह— **ते त्विति**। गुणेन सहैव गुणिनः प्रत्ययस्यागमनं सूच्यत इति फलितमाह— **ततश्चेति**।।६४।।

यस्मिन्नुपासने यस्याभिरुचिः स तदनुतिष्ठति, सर्वोपासनसमुच्चये तु न मानमिति सिद्धान्तयति— **न वेति**। तत्र वाकारार्थमाह— **नेत्यादिना**। नञ्पदं व्याचष्टे— **न यथेति**। प्रश्नपूर्वकमवशिष्टमादाय व्याकरोति— **कुत इति**। नियमेन समुच्चीयमानाङ्गाश्रयत्वादित्युक्त्वाऽनुमानधिया शङ्कते— **नन्विति**। विमतोपासनानि न क्रतौ समुच्चित्यानुष्ठेयानि, अङ्गाश्रितत्वे सति भिन्नफलत्वाद् गोदोहनादिवदिति मत्वाऽऽह— **नेतीति**। उक्तमेव व्यक्तीकरोति— **प्रयोगेति**।

**अयमेव चोपदेशाश्रयो विशेषोऽङ्गानां तदालम्बनानां चोपासनानां यदेकेषां क्रत्वर्थत्वमेकेषां पुरुषार्थत्वमिति। परं च लिङ्गद्वयमकारणमुपासनासहभावस्य श्रुतिन्यायाभावात्। न च प्रतिप्रयोगमाश्रयकार्त्स्न्योपसंहारादाश्रितानामपि तथात्वं विज्ञातुं शक्यम्, अतत्प्रयुक्तत्वादुपासनानाम्। आश्रयतन्त्राण्यपि ह्युपासनानि काममाश्रयाभावे मा भूवन्, न त्वाश्रयसहभावेन सहभावनियममर्हन्ति तत्सहभावाश्रुतेरेव। तस्माद् यथाकाममेवोपासनान्यनुष्ठीयेरन्।।६५।।**

## दर्शनाच्च।।६६।।

**दर्शयति च श्रुतिरसहभावं प्रत्ययानाम्– 'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' (छा.उ. ४।१७।१०) इति। सर्वप्रत्ययोपसंहारे हि सर्वे सर्वविद इति न विज्ञानवता ब्रह्मणा परिपाल्यत्वमितरेषां संकीर्त्येत। तस्माद् यथाकाममुपासनानां समुच्चयो विकल्पो वेति।।६६।।**

**इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ श्रीमच्छारीरकमीमांसाभाष्ये तृतीयाध्यायस्य तृतीयः पादः।।३।।**

### *प्रकटार्थविवरणम्*

तद्दूषयति— **परं च लिङ्गद्वयमिति**। अर्थवादसामर्थ्यं तदन्यतःप्राप्तद्योतकं भवति। न ह्युपासनानां समुच्चये प्रापकं दृश्यत इत्यर्थः। गुणसाधारण्यश्रुतेश्चेत्यस्य द्वितीयं व्याख्यानं दूषयति— **न च प्रतिप्रयोगमिति**।

**दर्शनाच्च**। किं च विदुषा ब्रह्मणाऽन्येषाम् ऋत्विजां परिपाल्यत्ववचनादपि न सर्वविज्ञानोपसंहार इत्याह— **दर्शनाच्चेति**। इति षट्त्रिंशं यथाश्रयभावाधिकरणम्।।

**इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे तृतीयस्याध्यायस्य तृतीयः पादः समाप्तः।।**

### *भाष्यभावप्रकाशिका*

शिष्टेश्चेति यदुक्तम्, तद्विघटयति— **अयमेवेति**। यदुक्तं समाहारादित्यादि तत्राह— **परतश्चेति**। यदुक्तमाश्रयसहभावात् प्रत्ययसहभाव इति, तत्राह— **न च प्रतिप्रयोगमिति**। इदमेवाश्रयतन्त्रत्वमाश्रितानां यदाश्रये सत्येव वृत्तिर्नासतीति ननु तत्रवृत्तिरेव नावृत्तिरित्याह— **आश्रयतन्त्राण्यपीति**। कामानामनित्यत्वात् तदवबद्धानामुपासनानामप्यनित्यतया नित्यसंयोगविरोधाच्चेत्यर्थः। एतावता कथं विवक्षितसिद्धिरिति, तत्राह— **सर्वप्रत्ययेति**। इति षट्त्रिंशं यथाश्रयभावाधिकरणम्।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्य श्रीचित्सुखमुनिविरचितायां भाष्यभावप्रकाशिकायां तृतीयस्याध्यायस्य तृतीयः पादः समाप्तः।।**

### *न्यायनिर्णयः*

'शिष्टेश्चे'त्युक्तं विघटयति— **अयमेवेति**। 'समाहाराद्' 'गुणसाधारण्यश्रुतेश्चे'त्येतद् दूषयति— **परं चेति**। यदर्थवादसामर्थ्यं तदन्यतः प्राप्तस्यावद्योतकं न चेहोपासनानां समुच्चये प्रापकमस्तीत्यर्थः। गुणसाधारण्येत्यादौ व्यतिरेकव्याख्यानं प्रत्याह— **न चेति**। उपासनानामाश्रयभावेऽपि सत्त्वाभावे कथमाश्रयतन्त्रत्वं, तत्राह— **आश्रयेति**। इदमेवाश्रितानामाश्रयतन्त्रत्वं यदाश्रये सत्येव वृत्तिर्नासतीति। न तु तत्र वृत्तिरेव नावृत्तिरिति; कामानामनित्यत्वात् तदुपबन्धोपास्तीनामपि तथात्वान्नित्यसंयोगविरोधादित्यर्थः। अङ्गोपास्तीनामङ्गवदसमुच्चये प्रतीकदृष्टिवद् यथारुच्यनुष्ठानमित्युपसंहरति— **तस्मादिति**।।६५।।

किंच विदुषा ब्रह्मणाऽन्येषामृत्विजां पाल्यत्वोक्तेरपि न सर्वविज्ञानोपसंहारधीरित्याह— **दर्शनाच्चेति**। सूत्रं विभजते— **दर्शयतीति**। ऋग्वेदादिविहिताङ्गलोपे व्याहृतिहोमप्रायश्चित्तादिविज्ञानवत्त्वमेवंवित्त्वं ब्रह्मणोऽभीष्टं कथं तावता विवक्षितानुपसंहारः, तत्राह— **सर्वेति**। अस्ति च तेनेतरेषामृत्विजां पाल्यत्वकीर्तनम्, तेन प्रत्ययानुपसंहारधीरिति शेषः। अनुमानाल्लिङ्गाच्च सिद्धमर्थमुपसंहरति— **तस्मादिति**। याथाकाम्यं व्याचष्टे— **समुच्चयो विकल्पो वेतीति**।।६६।। इति षट्त्रिंशं यथाश्रयभावाधिकरणम्।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचिते शारीरकभाष्यविभागे न्यायनिर्णये तृतीयाध्यायस्य तृतीयः पादः।।३।।**

**।।इति तृतीयाध्यायस्य परापरब्रह्मविद्यागुणोपसंहाराख्यस्तृतीयः पादः।।**

# तृतीयाध्याये चतुर्थः पादः।

१।। पुरुषार्थाधिकरणम्।।सू.१-१७।।

## पुरुषार्थोऽतः शब्दादिति बादरायणः।।१।।

*शारीरकन्यायसंग्रहः*

**पुरुषार्थोऽतः शब्दादिति बादरायणः।।१।। शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः।।२।। आचारदर्शनात्।।३।। तच्छ्रुतेः।।४।। समन्वारम्भणात्।।५।। तद्वतो विधानात्।।६।। नियमाच्च।।७।। अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्।।८।। तुल्यं तु दर्शनम्।।९।। असार्वत्रिकी।।१०।। विभागः शतवत्।।११।। अध्ययनमात्रवतः।।१२।। नाविशेषात्।।१३।। स्तुतयेऽनुमतिर्वा।।१४।। कामकारेण चैके।।१५।। उपमर्दं च।।१६।। ऊर्ध्वरेतस्सु च शब्दे हि।।१७।।** निर्विशेषब्रह्माविर्भावलक्षणं तत्त्वज्ञानं कर्माङ्गभूतकर्तृद्वारेण प्रयोगविधिनोपादेयम्, कर्माङ्गभूतकर्तृव्यपाश्रयत्वे सति शास्त्रप्रतिपन्नत्वात्, यजमानसंस्काराङ्गभूताञ्जनादिवत्; तथा तत्त्वज्ञानं प्रयोगविधिनोपादेयम्, साध्यफलव्यपदेशशून्यत्वे सति कर्माङ्गव्यपाश्रयत्वात्, पर्णमयीत्वादिवत्; जनकादीनां विद्यया सह कर्मानुष्ठानं 'विद्याया मोक्षसाधनत्वे व्यर्थमिति सहानुष्ठानं विद्यायाः स्वातन्त्र्याभावेन कर्माङ्गत्वे लिङ्गम्; 'यदेव विद्यया' इति च श्रुतिः। तदेवं श्रुतिलिङ्गानुमानैः विद्यायाः कर्माङ्गत्वं प्राप्तम्। तत्र च यथा स्वर्गादिकामिनो यागादौ नियोगानुपपत्त्यैव यागादेः स्वर्गादिसाधनत्वं प्रमीयते, न शब्देनैव, तथा 'ब्रह्म वेद ब्रह्मैव भवति' 'तरति शोकमात्मवित्' इत्यादिवचनैः ज्ञानफलयोरितरेतरसाध्यसाधनताकाङ्क्षायोग्यतासन्निधिमतोः एकपुरुषसंबन्धसन्निधाननिर्देशः अन्यथानुपपत्त्या साध्यसाधनसंबन्धं गमयति, शब्देन च 'विद्ययाऽमृतमश्नुते' इत्युक्तम्। सर्वत्र च फलश्रुतीनां न वर्तमानताव्यपदेशोऽर्थवादत्वे निमित्तम्, किन्तु प्रमाणान्तरविरोधः, 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इत्यादेर्वर्तमानत्वे योग्यत्वे सत्यनुपलम्भात्; विद्याफले तु वर्तमानव्यपदेशेऽपि न प्रमाणान्तरविरोधः, ब्रह्माविर्भावसमय एवाविर्भावफलस्य शोकादिनिवृत्तेः ब्रह्मात्मतावाप्तेश्च स्वानुभवसिद्धत्वात्, प्रमाणान्तरायोग्यत्वाच्च ब्रह्मज्ञानस्योचितमेव वर्तमानफलोपदेशनमिति न सत्रवत् फलविपरिणामापेक्षा। तत्रायं प्रयोगः— ब्रह्मज्ञानं न क्रतुप्रयोगविधिनोपादेयम्, क्रत्वङ्गसंबन्धित्वे सत्यपि स्वोचितफलान्तरसंबन्धित्वात्, गोदोहनवत्। तथा— न ब्रह्मज्ञानं क्रत्वङ्गव्यपाश्रयम्, प्रकरणान्तरसंबन्धित्वे सति कर्तृत्वेनाविनियुक्तपुरुषमात्रसंबन्धित्वात्, रात्रिसत्रवत्; तथाऽकर्तृब्रह्मात्मज्ञानं न क्रतुप्रयोगविधिनोपादेयम्, उपादीयमानक्रत्वङ्गविरोधित्वात्, क्रतुप्रयोगविधिनोपादीयमानोदितहोमविरोध्यनुदितहोमवदिति। तथा ब्रह्मज्ञानकर्मणी न परस्पराङ्गाङ्गिभूते, परिव्राजकादिष्वितरेतरव्यतिरेकित्वात्, ऋतुगमननैष्ठिकव्रतवत् इति विशेषानुमानैरनुगृहीतया फलश्रुत्या स्वतन्त्रमेव ब्रह्मज्ञानं फलसाधनमिति दर्शितम्।

*प्रकटार्थविवरणम्*

**पुरुषार्थोऽतःशब्दादिति बादरायणः।।** एवं तावन्मन्दमध्यमाधिकारिणामुपासनज्ञानमुच्चावचरूपं निरूप्य उत्तमाधिकारिणां चैकरूपब्रह्मज्ञानायापुनरुक्तपदोपसंहारमुक्त्वा अधुना तस्यैव एकरूपब्रह्मज्ञानस्य स्वातन्त्र्येण परमपुरुषार्थसाधनत्वमन्तरङ्गबहिरङ्गसाधनकलापं

*भाष्यभावप्रकाशिका*

**पुरुषार्थोऽतःशब्दादिति बादरायणः।।** एवं दृढीकृतवैराग्यस्य वाक्यार्थज्ञानाय पदार्थपरिशोधनं विधाय निर्गुणवाक्यानामियत्तां च गुणोपसंहारनिरूपणेनावधार्य सम्प्रति वाक्यार्थज्ञानस्यान्तरङ्गबहिरङ्गसाधनानि निरूपयत्यनेन पादेन। तत्र ज्ञानस्य स्वातन्त्र्येण

*न्यायनिर्णयः*

कर्माङ्गसङ्गिविद्योक्तिप्रसङ्गाद् ब्रह्मज्ञानस्य कर्माङ्गत्वमाशङ्क्य परिहरति— **पुरुषार्थ इति।** परापरब्रह्मविद्यानां गुणोपसंहारोक्त्या परिमाणमवधार्य तासां कर्मानपेक्षाणामेव पुरुषार्थसाधनत्वमवसरप्राप्तौ निरूप्यते। तत्र कर्मानपेक्षाणाममूषां का नामेतिकर्तव्यता,

---

१. 'केवलायाः' इति शेषः।

**अथेदानीमौपनिषदमात्मज्ञानं किमधिकारिद्वारेण कर्मण्येवानुप्रविशत्याहोस्वित् स्वतन्त्रमेव पुरुषार्थसाधनं भवतीति मीमांसमानः सिद्धान्तेनैव तावदुपक्रमते– 'पुरुषार्थोऽत' इति। अस्माद् वेदान्तविहितादात्मज्ञानात् स्वतन्त्रात् पुरुषार्थः सिध्यतीति बादरायण आचार्यो मन्यते। कुत एतदवगम्यते? शब्दादित्याह। तथाहि– 'तरति शोकमात्मवित्' (छा.उ. ७।१।३), 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' (मु.उ. ३।२।९), ब्रह्मविदाप्नोति परम्' (तै.उ. २।१।१), 'आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छा.उ. ६।१४।२) इति, 'य आत्माऽपहतपाप्मा' (छा.उ. ८।७।१) इत्युपक्रम्य 'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति' (छा.उ. ८।७।१) इति, 'आत्मा वा अरे द्रष्टव्यः' (बृ.उ. ४।५।६) इत्युपक्रम्य 'एतावदरे खल्वमृतत्वम्' (बृ.उ. ४।५।१५) इत्येवंजातीयका श्रुतिः केवलाया विद्यायाः पुरुषार्थहेतुत्वं श्रावयति।।१।।**

**[१]अथात्र प्रत्यवतिष्ठते–**

## शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः।।२।।

***प्रकटार्थविवरणम्***

च निरूपयितुं परः पादः प्रवर्तते। तत्र प्रथमाधिकरणविचारमाह— **अथेदानीमिति**। वादिविप्रतिपत्तेरियं मीमांसा— क्रत्वर्थमात्मज्ञानम्, किं वा पुरुषार्थमिति। तत्रापि सिद्धान्तमुपन्यस्य पूर्वपक्षं स्वयमेव दर्शयिष्यति; अतो बहिर्नोपन्यस्यत इत्याह— **सिद्धान्तेनैव तावदिति**।

पूर्वपक्षसूत्रमवतारयति— **अथात्रेति**। **शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः**।। "भूतं भव्यायोपदिश्यते" इति न्यायेनात्मनः कर्तृकारकत्वेन क्रियाङ्गत्वात् तज्ज्ञानस्यापि क्रियाफलेनैव फलवत्त्वसिद्धिः। तत्र फलश्रवणं स्तुतिमात्रमित्याह—

***भाष्यभावप्रकाशिका***

पुरुषार्थसाधनत्वं सिद्धवदुपन्यस्तं निरूपयति प्रथमाधिकरणे इत्याह— **अथेदानीमिति**। **एवंजातीयकेति**। न चात्र विद्याफलयोः साध्यसाधनभावो नावगम्यत इत्याशङ्कनीयम्। एकपुरुषसंबन्धसामर्थ्यादेव तदवगतेरिति भावः।

पुरुषार्थवाद इत्यत्रार्थग्रहणं तन्त्रेणोपात्तम्, तेन पुरुषार्थवादोऽर्थवाद इति द्रष्टव्यम्। तत्त्वज्ञानं कर्माङ्गभूतकर्तृद्वारेण

***न्यायनिर्णयः***

न हि तां विना कारणतेत्याशङ्क्य यज्ञादयः श्रवणादयः शमदमादयश्च विद्योत्पत्त्युपयोगिन्य इतिकर्तव्या निरूप्यन्ते। तदभिप्रेत्याह— **अथेति**। फलभेदाभेदौ विना न विद्याभेदाभेदौ। न च तौ विना गुणोपसंहारानुपसंहारौ। तेन प्रागेव विद्यानां पुमर्थहेतुत्वे स्थिते प्रथममौपनिषदमात्मज्ञानमधिकृत्य वादिविप्रतिपत्त्या संशयमाह— **औपनिषदमिति**। अनेन चात्मज्ञानविशेषणेन शास्त्रश्रुतिसंगतिरुच्यते। सिद्धे फलवत्त्वे स्वतन्त्रमेवेदं फलवदिति साधनादध्यायपादसंगती। पूर्वपक्षे समुच्चयपक्षसिद्धिः, सिद्धान्ते केवलस्य ज्ञानस्य कैवल्यसाधनतेति मत्वा पूर्वपक्षमग्रे दर्शयिष्यन्नादौ सिद्धान्तमाह— **सिद्धान्तेनेति**। सूत्रस्थां प्रतिज्ञां योजयति— **अस्मादिति**। तत्र प्रमाणं पृच्छति— **कुत इति**। सूत्रावयवेनोत्तरमाह— **शब्दादित्याहेति**। प्रमाणं विवृणोति— **तथा हीत्यादिना**। सगुणब्रह्मज्ञानस्यापि स्वातन्त्र्येण पुमर्थहेतुतेति वक्तुं तद्विषयां श्रुतिमाह— **य आत्मेति**। निर्गुणविद्याविषयं वाक्यान्तरमाह— **आत्मेति**। उक्तश्रुतिषु विद्याफलयोः साध्यसाधनत्वं न भातीत्याशङ्क्य तयोरेकपुरुषसंबन्धसामर्थ्यादेव तद्धीरित्याशयेनाह— **केवलाया इति**।।१।।

पूर्वपक्षमवतारयति— **अथेति**। सिद्धान्तोक्त्यनन्तरमात्मज्ञाने विषये फलश्रुतिमधिकृत्य मीमांसकश्चोदयतीत्यर्थः। पुरुषार्थवाद इत्यत्रार्थग्रहणं तन्त्रेणोपात्तम्; तेन पुरुषार्थवादोऽर्थवाद इति द्रष्टव्यम्। तत्त्वज्ञानं कर्माङ्गकर्तृद्वारा प्रयोगविधिनाऽऽदेयमादीयमान-

१. 'अथात्र परः प्रत्यवतिष्ठते' इति पा.।

**कर्तृत्वेनात्मनः कर्मशेषत्वात् तद्विज्ञानमपि व्रीहिप्रोक्षणादिवद् विषयद्वारेण कर्मसंबन्ध्येवेत्यतस्तस्मिन्नव-गतप्रयोजन आत्मज्ञाने या फलश्रुतिः साऽर्थवाद इति जैमिनिराचार्यो मन्यते। यथाऽन्येषु द्रव्यसंस्कारकर्मसु 'यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति' 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' 'यत्प्रयाजानूयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै' इत्येवंजातीयका फलश्रुतिरर्थवादः, तद्वत्।**

**कथं पुनरस्यानारभ्याधीतस्यात्मज्ञानस्य प्रकरणादीनामन्यतमेनापि हेतुना विना क्रतुप्रवेश आशङ्क्यते? कर्तृद्वारेण वाक्यात् तद्विज्ञानस्य क्रतुसंबन्ध इति चेत्, न; [१]वाक्याद् विनियोगानुपपत्तेः। अव्यभिचारिणा**

### *प्रकटार्थविवरणम्*

**कर्तृत्वेनेति**। अत्र प्रयोगः— आत्मज्ञानं प्रयोगविधिनोपादेयम्, साध्यफलव्यपदेशशून्यत्वे सति कर्माङ्गव्यपाश्रयत्वात्, पर्णमयीत्वादिवत् इति। वेदार्थजिज्ञासायां तत्त्वनिर्णयार्थं संशयविपर्यासप्रतिभासात्[भासाः] गुरोरग्रे शिष्यैर्निवेदनीयाः। गुरुणा च तद्व्युदासेन तत्त्वमाविष्कर्तव्यमिति शिष्टव्यवहारप्रदर्शनाय जैमिनिग्रहणम्, न तु प्रतिपक्षत्वेनेति द्रष्टव्यम्। फलश्रुतेरर्थवादत्वे दृष्टान्तमाह— **यथाऽन्येष्विति**। पर्णमयीद्रव्ये यजमानगताञ्जनादिसंस्कारे प्रयाजादिकर्मसु च फलश्रुतिरर्थवादः स्यात्, परार्थत्वात्पर्णमय्यादेः फलशेषत्वानुपपत्तेरित्यर्थः।

श्रुतिलिङ्गादीनि हि विनियोजकप्रमाणानि; तदभावे नात्मज्ञानस्य कर्माङ्गतैव; कुतः फलश्रुतेरर्थवादत्वमित्याह— **कथं पुनरिति**। व्रीहिमात्रे प्रोक्षणस्य वैयर्थ्यादशक्यत्वाच्च प्रकृतापूर्वसंबद्धव्रीहिषु प्रोक्षणं विधीयत इति तस्य क्रत्वङ्गता; आत्मज्ञानस्य तु न प्रकरणम-स्तीत्यर्थः। यथा जुहूद्वारेण पर्णमयीत्वस्य वाक्यात्क्रतुसंबन्धोऽनारभ्याधीतत्वेऽपि तथा कर्तृद्वारेण तद्विज्ञानस्य 'विद्वान् यजते' 'विद्वान् याजयति' इति वाक्यात् क्रतुसंबन्ध इति शङ्कते— **कर्तृद्वारेणेति**। जुहूः क्रतुसंबन्धं न व्यभिचरतीति तद्द्वारेण पर्णमयीत्वस्य वाक्येन विनियोगो घटते; कर्ता तु क्रतुसंबन्धं व्यभिचरतीति न तज्ज्ञानस्य वाक्येन विनियोगो घटत इत्याह— **न वाक्येति**।

### *भाष्यभावप्रकाशिका*

प्रयोगविधिनोपादेयमुपादीयमानकर्माङ्गभूतकर्तृव्यपाश्रयेण शास्त्रप्रतिपन्नत्वाद् यजमानसंस्कारभूता[ञ्जना]दिवत्। तथा तत्त्वज्ञानं प्रयोगविधिनोपादेयं साध्यफलव्यपदेशशून्यत्वे सति कर्माङ्गव्यपाश्रयत्वात् पर्णमयीत्वादिवदिति शङ्कते— **कर्तृत्वेनेति**। स्वतन्त्रफलस्य कथं प्रोक्षणादिवत् कर्माङ्गत्वमित्याशङ्क्याह— **अतस्तस्मिन्निति**। क्रमेण फलश्रुतीरुदाहरति— **यस्य पर्णमयीत्यादिना**।

विनियोजकप्रमाणाभावादङ्गत्वमयुक्तमिति शङ्कते— **कथं पुनरिति**। प्रकरणादिना क्रतुसंबन्धाभावेऽपि जुहूद्वारेण पर्णमयीत्वादीनां यथा वाक्यात् क्रतुसंबन्धस्तथौपनिषदात्मज्ञानस्यापि कर्तृद्वारेण वाक्यात् क्रतुसंबन्ध इति सिद्धान्तवादी पूर्ववादिनं प्रति मतप्रदानं करोति— **कर्तृद्वारेणेति**। एतदेव विवृणोति— **अव्यभिचारिणेति**। परिहरति पूर्ववादी— **न व्यतिरेकेति**। लौकिकस्यापि

### *न्यायनिर्णयः*

कर्माङ्गकर्त्राश्रयेण शास्त्रसिद्धत्वाद् यजमानसंस्काराञ्जनादिवदिति मत्वा शेषत्वादित्येतद् व्याचष्टे— **कर्तृत्वेनेति**। तत्त्वज्ञानं प्रयोगविधिनाऽऽदेयं साध्यफलोक्तिशून्यत्वे सति कर्माङ्गाश्रयत्वात् पर्णमयीत्वादिवदिति प्रयोगः। स्वतन्त्रफलस्य कथं प्रोक्षणादिवत् कर्माङ्गतेत्याशङ्क्य पुरुषार्थवाद इत्यस्यार्थमाह— **इत्यत इति**। वेदार्थजिज्ञासायां तत्त्वनिर्णयार्थं संशयादिप्रतिभासो गुरोरग्रे शिष्येण दर्शनीयो, गुरुणा च तन्निरासेन तत्त्वमाविष्करणीयमिति शिष्टाचारं दर्शयितुं जैमिनिग्रहणम्, न प्रतिपक्षतया, शिष्यस्य तदयोगात्। फलश्रुतेरर्थवादत्वे सूत्रितं दृष्टान्तं व्याचष्टे— **यथेति**। पर्णमयीद्रव्ये, यजमानस्याञ्जनादिसंस्कारे, प्रयाजादिकर्मसु च क्रमेण फलश्रुतीराह— **यस्येत्यादिना**। सा च फलश्रुतिर्न फलपरा, फलवत्क्रत्वर्थत्वात् पर्णतादेः फलशेषत्वायोगात्। अतः साऽर्थवाद एवेति पर्णमयीत्वाधिकरणे समर्थितम्। तथाऽऽत्मज्ञानेऽपि फलश्रुतिरर्थवाद एव स्यादित्याह— **तद्वदिति**।

विनियोजकमानाभावादात्मधियोऽनङ्गत्वात् तत्र फलश्रुतिनार्थवाद इति शङ्कते— **कथमिति**। प्रकरणादिना क्रत्वसंबन्धेऽपि जुहूद्वारा पर्णमयीत्वस्य वाक्यात् क्रतुसंबन्धवदात्मधियोऽपि कर्तृद्वारा वेदान्तवाक्यात् क्रतुसंगतिरिति पूर्ववाद्याह— **कर्त्रिति**। सिद्धान्ती दूषयति— **नेति**। तदेव विवृणोति— **अव्यभिचारिणेति**। जुहूवदात्मज्ञाने कर्तैवाव्यभिचारि द्वारमित्याशङ्क्याह—

१. 'वाक्यविनियोगानुपपत्तेः' इति पा.।

**हि केनचिद् द्वारेणानारभ्याधीतानामपि वाक्यनिमित्तः क्रतुसंबन्धोऽवकल्पते। कर्ता तु व्यभिचारि द्वारम्, लौकिकवैदिककर्मसाधारण्यात्। तस्मान्न तद्द्वारेणात्मज्ञानस्य क्रतुसंबन्धसिद्धिरिति। न; व्यतिरेकविज्ञानस्य वैदिकेभ्यः कर्मभ्योऽन्यत्रानुपयोगात्। न हि देहव्यतिरिक्तात्मज्ञानं लौकिकेषु कर्मसूपयुज्यते। सर्वथा दृष्टार्थप्रवृत्त्युपपत्तेः। वैदिकेषु तु देहपातोत्तरकालफलेषु देहव्यतिरिक्तात्मज्ञानमन्तरेण प्रवृत्तिर्नोपपद्यत इत्युपयुज्यते व्यतिरेकविज्ञानम्। नन्वपहतपाप्मत्वादिविशेषणादसंसार्यात्मविषयमौपनिषदं दर्शनं न प्रवृत्त्यङ्गं स्यात्। न; प्रियादिसंसूचितस्य संसारिण एवात्मनो द्रष्टव्यत्वेनोपदेशात्। अपहतपाप्मत्वादि विशेषणं तु स्तुत्यर्थं भविष्यति।**

**ननु तत्र तत्र प्रसाधितमेतदधिकमसंसारि ब्रह्म जगत्कारणम्, तदेव च संसारिण आत्मनः पारमार्थिकं स्वरूपमुपनिषत्सूपदिश्यत इति। सत्यं प्रसाधितम्, तस्यैव तु स्थूणानिखननवत् फलद्वारेणाक्षेपसमाधाने क्रियेते दार्ढ्याय।।२।।**

### *प्रकटार्थविवरणम्*

देहव्यतिरिक्तः कर्ताऽधिगतः क्रतुसंबन्धं न व्यभिचरतीति पूर्ववादी दूषयति— **न, व्यतिरेकेति**। अव्यभिचरितक्रतुसम्बन्धव्यतिरिक्तकर्तृद्वारेण भवतु तज्ज्ञानस्य कर्मशेषता, न त्वशेषकर्मोन्मूलनसमर्थौपनिषदात्मज्ञानस्येति सिद्धान्ती शङ्कते— **नन्वपहतेति**। औपनिषदमप्यात्मज्ञानं संसारिविषयमेवेत्याह— **न, प्रियादीति**। 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति प्रियत्वसंबद्धसंसार्यात्मप्रक्रमानुसारेणोत्तरं द्रष्टव्यत्वादिवचनं तद्विषयं चेत् कथं तत्रापहतपाप्मत्वादिसङ्कीर्तनमित्याशङ्क्याह— **अपहतपाप्मत्वादीति**। पूर्वपक्षमाक्षिप्य समाधत्ते— **नन्वित्यादिना**।

### *भाष्यभावप्रकाशिका*

कर्तृद्वारेणो[ण] देहव्यतिरिक्तात्मज्ञानापेक्षा भविष्यति कर्मत्वात् वैदिककर्मवदित्याशङ्क्याह— **न हीति**। **सर्वथेति**। व्यतिरेकज्ञानाज्ञानयोरित्यर्थः। वैदिकवृत्तिरपि तत्रोपपद्यते इत्याशङ्क्याह— **वैदिकेष्विति**। कारीर्या(नीहा)दिनिवृत्त्यर्थमाह— **देहपातेति**। अनुपयोगित्वाद्विरोधित्वाच्चाङ्गत्वमयुक्तमिति शङ्कते— **नन्वपहतेति**। क्रत्वपेक्षितरूपं विहायान्यदविवक्षितमिति परिहरति— **न प्रियादीति**। जायादीनामात्मार्थत्वेन प्रियत्वमुक्त्वा 'आत्मा द्रष्टव्य' इति वदतः संसारिण एव द्रष्टव्यत्वमभिमतमित्यर्थः। ननु 'जन्माद्यस्य यत' इत्यारभ्य निष्प्रपञ्चब्रह्मात्मपरता वेदान्तानां प्रदर्शिता, तत्कथं स्तुत्यर्थत्वं शङ्क्यत इति शङ्कते— **ननु तत्र तत्रेति**।

### *न्यायनिर्णयः*

**कर्तेति**। तस्य व्यभिचारित्वे फलितमाह— **तस्मादिति**। किं देहातिरिक्तात्मज्ञानस्य कर्माङ्गत्वं विनियोजकाभावान्निरस्यते, किं वाऽपहतपाप्मत्वादिविशेषितासंसार्यात्मविषयौपनिषदज्ञानस्येति विकल्प्याद्यं पूर्ववादी दूषयति— **नेति**। तस्य विषयद्वारा तेष्वनुप्रवेशात्र कर्माङ्गत्वं निषेद्धुं शक्यमित्यर्थः। लौकिककर्मणोऽपि कर्मत्वाद् वैदिककर्मवत्कर्तृद्वारेणातिरिक्तज्ञानापेक्षेति कर्तुः साधारण्यमित्याशङ्क्याह— **न हीति**। **सर्वथेति**। व्यतिरेकज्ञानाज्ञानयोरित्यर्थः। तर्हि वैदिकान्यपि कर्माणि कर्मत्वादितरवन्न व्यतिरेकज्ञानापेक्षाणीत्याशङ्क्याह— **वैदिकेष्विति**। कारीर्यादिनिवृत्त्यर्थं देहपातेत्यादिविशेषणम्। द्वितीयमाशङ्कते— **नन्विति**। अनुपयोगित्वाद्विरोधित्वाच्च तस्य न क्रत्वङ्गतेति भावः। क्रत्वपेक्षितं रूपं हित्वाऽन्यदविवक्षितमित्याह— **नेत्यादिना**। जायादीनामात्मार्थत्वेन प्रियत्वमुक्त्वा 'आत्मा द्रष्टव्य' इति वदता जायादिना भोग्येन सूचितस्य संसारिणो भोक्तुरेव द्रष्टव्यत्वमिष्टम्, भोक्तृज्ञानं च कर्मसूपयुक्तमतो भोक्त्रतिरिक्तमात्मरूपं न श्रौतमित्यर्थः। अपहतपाप्मत्वादिविशेषणस्य भोक्तर्ययुक्तत्वादतिरिक्तमात्मरूपमेष्टव्यमित्याशङ्क्याह— **अपहतेति**। जन्मादिसूत्रमारभ्य तत्र तत्राप्रपञ्चब्रह्मात्मपरता वेदान्तानामुक्ता, तत् कथमपहतापाप्मत्वादिकीर्तनस्य स्तुत्यर्थतेति शङ्कते— **नन्विति**। अधिकमिति विशेषणादाशङ्कितं द्वैतं वारयति— **तदेवेति**। संसारिणोऽसंसारीश्वरो रूपमिति व्याहतिं प्रत्याह— **पारमार्थिकमिति**। ऐक्ये प्रमाणं पूर्वोक्तं सूचयति— **उपनिषत्स्विति**। पूर्वपक्षाक्षेपं समाधत्ते— **सत्यमित्यादिना**। **फलद्वारेणेति**। आत्मज्ञानं वेदान्तानां फलं, तत् क्रत्वर्थं पुरुषार्थं वेति विचारद्वारेणेत्यर्थः। साधितस्यैवाक्षेपसमाधिभ्यां साधनस्य फलमाह— **दार्ढ्यायेति**।।२।।

## आचारदर्शनात्।।३।।

**'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' (बृ.उ. ३।१।१), 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' (छा.उ. ५।११।५) इत्येवमादीनि ब्रह्मविदामप्यन्यपरेषु वाक्येषु कर्मसंबन्धदर्शनानि भवन्ति। तथोद्दालकादीनामपि पुत्रानुशासनादिदर्शनाद् गार्हस्थ्यसंबन्धोऽवगम्यते। केवलाच्चेज्ज्ञानात् पुरुषार्थसिद्धिः स्यात्, किमर्थमनेकायाससमन्वितानि कर्माणि ते कुर्युः? 'अर्के[१] चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायात्।।३।।**

## तच्छ्रुतेः।।४।।

**'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा.उ. १।१।१०) इति च कर्मशेषत्वश्रवणाद् विद्याया न केवलायाः पुरुषार्थहेतुत्वम्।।४।।**

### *प्रकटार्थविवरणम्*

**आचारदर्शनात्**।। किं च जनकादीनां विद्यया सह कर्माचरणदर्शनान्न केवलैव विद्या मोक्षसाधनम्; अतः सहानुष्ठानं विद्यायाः स्वातन्त्र्याभावेन कर्माङ्गत्वे लिङ्गमित्याह— **आचारदर्शनादिति**। ईजे यागं चक्रे। भगवन्तः पूजावन्तः, अहं **यक्ष्यमाणोऽस्मि**, तत [२]आध्वं कतिचिद्दिनानीति कैकयस्य ब्रह्मविदो वचनम्। ननु कैश्चिद्विद्वद्भिः कर्म कृतमित्येतावता किं ज्ञानस्य सामर्थ्यमपगच्छति; तत्त्वज्ञानं तु केवलमेव मोक्षायालमित्याह— **केवलाच्चेदिति**। न ह्यल्पायासं हित्वा बह्वायासं कोऽप्यवलम्बत इत्यर्थः। अक्के समीपे।

**तच्छ्रुतेः**।। "यदेव विद्यया" इति च श्रुतिः प्रमाणम् कर्माङ्गत्वेऽपि विद्याया इत्याह— **तच्छ्रुतेरिति**।

### *भाष्यभावप्रकाशिका*

विद्यायाः स्वातन्त्र्याभावेन कर्माङ्गत्वे लिङ्गमाह— **जनको हेति**।

न केवलं लिङ्गादेव, किन्तु तृतीयाश्रुतेरपीत्याह— **यदेवेति**।

### *न्यायनिर्णयः*

किंच जनकादीनां विद्यया सह कर्माचरणदर्शनान्न केवलैव विद्या मोक्षहेतुः, अतः सहानुष्ठानं विद्यायाः स्वातन्त्र्याभावेन कर्माङ्गत्वे लिङ्गमित्याह— **आचारेति**। सूत्रं व्याचष्टे— **जनको हेति**। विदेहानामधिपतिर्जनको नाम राजा बहुदक्षिणसंज्ञेन यज्ञेनाश्वमेधेन वा बहुदक्षिणायुक्तेन पुरा कदाचिदीजे यागं कृतवान्। कैकेयस्य राज्ञो ब्रह्मविदो वाक्यमाह— **यक्ष्यमाण इति**। विद्यार्थिनः समागतान् प्राचीनशालादीन् भगवन्त इति संबोध्याहं यक्ष्यमाणोऽस्मि, ततश्च कतिचिद् दिनान्याध्वमिति राजोक्तवानित्यर्थः। उक्तवाक्यानि विद्यार्थानि, न कर्मार्थानीत्याशङ्क्याह— **अन्येति**। इतश्च ब्रह्मविदामस्ति कर्मसंगतिरित्याह— **तथेति**। आदिपदेन व्यासयाज्ञवल्क्यादिसंग्रहः। द्वितीयेन भार्यानुशासनादि गृह्यते। कर्म कृतं विद्वद्भिरेव कैश्चिदित्येतावता विद्याशक्तेरपह्नवायोगात् केवलैव सा मुक्तिहेतुरित्याशङ्क्याह— **केवलादिति**। अल्पायासमुपायं हित्वा न कोऽपि महायासं तमाद्रियत इत्यत्र लौकिकन्यायमाह— **अर्के चेदिति**। समीपवचनोऽर्कशब्दः।।३।।

न केवलं विद्याया लिङ्गादेव कर्माङ्गत्वम्, किंतु तृतीयाश्रुतेरपीत्याह— **तदिति**। सूत्रार्थं विवृणोति— **यदेवेति**।।४।।

---

१. 'अक्के' 'अक्वे' इति पाठान्तरे। 'अत्के' इत्यंपि अन्यत्र पाठः उपलभ्यते। शाबरभाष्ये आनन्दाश्रममुद्रिते (१-२-४) सूत्रे एवं दृश्यते—'तद् यथा—पथि जातेऽर्के मधूत्सृज्य तेनैव पथा मध्वर्थिनः पर्वतं न गच्छेयुः, तादृशं हि तत्। अपि चाहुः—अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्। इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् इति। अत्र 'पथि जाते' इत्युक्त्या अर्कपर्णापरपर्यायो वृक्षो विवक्षित इति भाति।

२. आध्वमिति आस् धातोः लोटि मध्यमपुरुषबहुवचनम्।

## समन्वारम्भणात्।।५।।

**'तं विद्याकर्मणी समन्वारभेते' (बृ.उ. ४।४।२) इति च विद्याकर्मणोः फलारम्भे सहकारित्वदर्शनान्न स्वातन्त्र्यं विद्यायाः।।५।।**

## तद्वतो विधानात्।।६।।

**'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' (छा.उ. ८।१५।१) इति चैवंजातीयका श्रुतिः समस्तवेदार्थविज्ञानवतः कर्माधिकारं दर्शयति। तस्मादपि न विज्ञानस्य स्वातन्त्र्येण फलहेतुत्वम्। नन्वत्राधीत्येत्यध्ययनमात्रं वेदस्य श्रूयते, नार्थविज्ञानम्। नैष दोषः; दृष्टार्थत्वाद् वेदाध्ययनमर्थावबोधपर्यन्तमिति स्थितम्।।६।।**

## नियमाच्च।।७।।

**'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' (ई.उ.२) इति, तथा 'एतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान्मुच्यते मृत्युना वा' (शत. १२।४।१।१) इत्येवंजातीयकान्नियमादपि कर्मशेषत्वमेव विद्याया इति।।७।।**

### *प्रकटार्थविवरणम्*

**समन्वारम्भणात्**।। इतश्च न स्वतन्त्रा विद्या पुरुषार्थसाधनमित्याह— **समन्वारम्भणादिति**। तं परलोकं व्रजन्तं विद्याकर्मणी समनुगच्छत इत्यर्थः।

**तद्वतो विधानात्**।। विद्यायाः स्वातन्त्र्याभावे लिङ्गान्तरमाह— **तद्वत इति**। गुरोः शुश्रूषालक्षणं कर्म कृत्वा अतिशेषेण परिशिष्टेन कालेन यथाविधानं वेदमधीत्यानन्तरमभिसमावृत्य व्रतविसर्गं कृत्वा दारानाहृत्य कुटुम्बे गार्हस्थ्ये स्थितः शुचौ देशे स्वाध्यायाध्ययनादिकर्म कुर्वाणः ब्रह्मलोकमभिसंपद्यत इत्यर्थः। अध्ययनशब्दस्य यथाश्रुतमर्थं गृहीत्वाऽऽह— **नन्वत्रेति**। अध्ययनविधेरवघातादिविधिवद् दृष्टफलत्वादर्थावबोधपर्यन्तो व्यापारः विध्याक्षिप्तोऽध्ययनमिति[1] प्रथमसूत्रे सिद्धमित्याह— **नैष दोष इति**।

**नियमाच्च**।। इतोऽपि न स्वतन्त्रा विद्या पुरुषार्थहेतुरित्याह— **नियमाच्चेति**। शतं समाः शतसंख्याकान् संवत्सरान्

### *न्यायनिर्णयः*

इतश्च न स्वतन्त्रा विद्या पुमर्थहेतुरित्याह— **समन्वारम्भणादिति**। सूत्रं विवृणोति— **तमित्यादिना**। तं परलोकं व्रजन्तं विद्याकर्मणी समनुगच्छत इति यावत्।।५।।

तदस्वातन्त्र्ये लिङ्गान्तरमाह— **तद्वत इति**। तद् व्याकरोति— **आचार्येति**। तस्य कुलं गृहम्; उपनयनं कृत्वा तत्प्राप्त्यनन्तरं गुरोः शुश्रूषारूपं कर्म विधायातिशेषेण शिष्टेन कालेन यथाविधानं पवित्रपाणित्वप्राङ्मुखत्वादिविधानमनतिक्रम्य वेदमधीत्यानन्तरमभिसमावृत्य व्रतविसर्गं कृत्वा दारानाहृत्य कुटुम्बे गार्हस्थ्ये स्थितः शुचौ देशे स्वाध्यायाध्ययनं कुर्वन् कर्मान्तराणि च विहितानि यथाशक्ति कुर्वाणो ब्रह्मलोकमभिसंपद्यत इत्यर्थः। अध्ययनशब्दस्य यथाश्रुतमर्थं गृहीत्वा शङ्कते— **नन्विति**। अध्ययनविधेरवघातादिविधिवद् दृष्टार्थत्वादर्थावबोधान्तो व्यापारोऽस्तीति प्रथमे तन्त्रे समर्थितमित्याह— **नेत्यादिना**।।६।।

इतश्च न स्वतन्त्रा विद्या पुमर्थहेतुरित्याह— **नियमाच्चेति**। नियमं विभजते— **कुर्वन्निति**। इह देहे शतं समाः शतसंख्याकान् संवत्सरान् यज्जिजीविषेत् तत् कर्माणि कुर्वन्नेवेति नियमविधिः। एवं त्वयि नरे वर्तमाने सत्यशुभं कर्म न लिप्यते तेन त्वं न लिप्यस इति यावत्। इतः प्रकारादन्यथा प्रकारान्तरं नास्ति यतो न कर्मलेपः स्यादित्यर्थः। नियमान्तरमाह— **तथेति**। जरामर्यं जरामरणावधिकम्। तदेव विशदयति— **जरयेति**। श्रुत्यादिभिरात्मधियः सिद्धे कर्माङ्गत्वे तत्फलेनैव फलवत्त्वमित्युपसंहर्तुमितीत्युक्तम्।।७।।

---

१. अध्ययनमित्यस्य स्थाने 'अस्ति' इति पाठो न्यायनिर्णयाज्ज्ञायते।

एवं प्राप्ते प्रतिविधत्ते-

**अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्।।८।।**

तुशब्दात् पक्षो विपरिवर्तते। यदुक्तम्-'शेषत्वात्पुरुषार्थवादः' (ब्र.सू. ३।४।२) इति; तन्नोपपद्यते। कस्मात् ? अधिकोपदेशात्। यदि संसार्येवात्मा शारीरः कर्ता भोक्ता च शरीरमात्रव्यतिरेकेण वेदान्तेषूपदिष्टः स्यात्, ततो वर्णितेन प्रकारेण फलश्रुतेरर्थवादत्वं स्यात्। अधिकस्तावच्छारीरादात्मनोऽसंसारीश्वरः कर्तृत्वादिसंसारिधर्मरहितोऽपहतपाप्मत्वादिविशेषणः परमात्मा वेद्यत्वेनोपदिश्यते वेदान्तेषु। न च तद्विज्ञानं कर्मणां प्रवर्तकं भवति, प्रत्युत कर्माण्युच्छिनत्तीति वक्ष्यति-'उपमर्दं च' (ब्र.सू. ३।४।१६) इत्यत्र। तस्मात् 'पुरुषार्थोऽतः शब्दात्' (ब्र.सू. ३।४।१) इति यन्मतं भगवतो बादरायणस्य तत् तथैव तिष्ठति, न शेषत्वप्रभृतिभिर्हेत्वाभासैश्चालयितुं शक्यते। तथा हि तमधिकं शारीरादीश्वरमात्मानं दर्शयन्ति श्रुतयः- 'यः सर्वज्ञः सर्ववित्' (मु.उ. १।१।९), 'भीषाऽस्माद्वातः पवते' (तै.उ. २।८।१),'महद्भयं वज्रमुद्यतम्' (क.उ. ६।२),'एतस्य वा अक्षरस्य प्रशासने गार्गि' (बृ.उ. ३।८।९), 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' (छा.उ. ६।२।३) इत्येवमाद्याः। यत्तु प्रियादिसंसूचितस्य संसारिण एवात्मनो वेद्यतयाऽनुकर्षणम् 'आत्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः' (बृ.उ. २।४।५), 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' (बृ.उ. ३।४।१), 'य एषोऽक्षिणि पुरुषो दृश्यते' (छा.उ. ८।७।४) इत्युपक्रम्य 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छा.उ. ८।९।३) इति चैवमादि, तदपि 'अस्य महतो भूतस्य

### *प्रकटार्थविवरणम्*

यज्जिजीविषेत् तत्कर्माणि कुर्वन्नेवेति नियमविधानम्। एवं त्वयि नरे वर्तमाने सति इतोऽन्यथा प्रकारान्तरं नास्ति, येन कर्म न लिप्यते, पापेन कर्मणा त्वं न लिप्यस इत्यर्थः। जरामरणावधिकत्वात् जरामर्यम्।

**अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्**।। तदेवं श्रुत्यादिभिर्विद्यायाः कर्माङ्गत्वे प्राप्ते सिद्धान्तमुपक्रमते— **अधिकोपदेशात्त्विति**। यः कर्ता कर्माङ्गभूतः नासौ वेदान्तवेद्यः; यद् ब्रह्म वेदान्तवेद्यं न तत्कर्माङ्गम्; अतः तज्ज्ञानस्य कुतः कर्मशेषता, कुतस्तरां फलश्रुतेरर्थवादतेत्यर्थः।

### *भाष्यभावप्रकाशिका*

ब्रह्मात्मज्ञानं क्रतुप्रयोगविधिना नोपादेयमुपादीयमानक्रतुविरोधित्वादुपादीयमानोदितहोमविरोध्यनुदितहोमवदिति परिहरति— **अधिकोपदेशादिति**। उदाहृतवाक्यानां ब्रह्मपरत्वनिर्णायकवाक्यशेषान् क्रमेणोदाहरति— **तदपीति**। ननु जीवब्रह्मणोरैक्यमनुपपन्नं

### *न्यायनिर्णयः*

पूर्वपक्षमनूद्य सिद्धान्तयति— **एवमिति**। सूत्रं योजयति— **तुशब्दादिति**। पक्षविपरिवर्तनमेव पक्षमनूद्य दर्शयति— **यदिति**। अनुपपत्तिहेतुं प्रश्नपूर्वकमाह— **कस्मादिति**। अधिकोपदेशं व्यतिरेकतो दर्शयति— **यदीति**। यः कर्ता कर्माङ्गं नासौ वेदान्तवेद्य, यच्च ब्रह्म तद्वेद्यं न तत्कर्माङ्गमतस्तज्ज्ञानस्य कुतः शेषता, कुतस्तरां फलश्रुतेरर्थवादतेत्यर्थः। ब्रह्मात्मधीर्न क्रतुप्रयोगविधिनोपादेया तद्विरोधित्वाद‌ादीयमानोदितहोमविरोध्यनुदितहोमवदिति मत्वाऽऽह— **प्रत्युतेति**। बादरायणस्येत्यादि व्याचष्टे— **तस्मादिति**। उक्तात्मज्ञानस्य क्रतुशेषत्वायोगस्तच्छब्दार्थः। अधिकोपदेशासिद्धिमाशङ्क्य तद्दर्शनादित्यनेन प्रत्याह— **तथा हीति**। क्रत्वपेक्षितं रूपं हित्वाऽन्यदात्मरूपमनिष्टमित्युक्तं, तत्राह— **यत्त्विति**। आत्मनस्तु कामायेत्युपक्रम्यात्मा वा अरे द्रष्टव्य इति वाक्यं ब्रह्मोपदिदिक्षायां सत्यामेव ब्रह्मात्मैक्याभिप्रायमित्यत्र वाक्यशेषमाह— **अस्येति**। 'यः प्राणेने'त्यादि वाक्यमप्यैक्यपरमित्यत्र

निःश्वसितमेतद्यदृग्वेदः' (बृ.उ. २।४।१०) 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' (बृ.उ. ३।५।१) 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' (छा.उ. ८।१२।३) इत्येवमादिभिर्वाक्यशेषैः सत्यामेवाधिकोपदिदिक्षायामत्यन्ताभेदाभिप्रायमित्यविरोधः। पारमेश्वरमेव हि शारीरस्य पारमार्थिकं स्वरूपम्। उपाधिकृतं तु शारीरत्वम्, 'तत्त्वमसि' (छा.उ. ६।८।७), 'नान्यदतोऽस्ति द्रष्टृ' (बृ.उ. ३।८।११) इत्यादिश्रुतिभ्यः। सर्वं चैतद् विस्तरेणास्माभिः पुरस्तात् तत्र तत्र वर्णितम्।।८।।

## तुल्यं तु दर्शनम्।।९।।

यत्तूक्तमाचारदर्शनात् कर्मशेषो विद्येति। अत्र ब्रूमः– तुल्यमाचारदर्शनमकर्मशेषत्वेऽपि विद्यायाः। तथाहि श्रुतिर्भवति–'एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे' (ऐ.आ. २।६।३), 'एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रिरे' (कौ.उ. २।५), 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृ.उ. ३।५।१) इत्येवंजातीयका। याज्ञवल्क्यादीनामपि ब्रह्मविदामकर्मनिष्ठत्वं दृश्यते–'एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार' (बृ.उ. ४।५।१५) इत्यादिश्रुतिभ्यः। अपि च 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' (छा.उ. ५।११।५) इत्येतल्लिङ्गदर्शनं वैश्वानरविद्याविषयम्। संभवति च सोपाधिकायां

### प्रकटार्थविवरणम्

**तुल्यं तु दर्शनम्।।** यच्च लिङ्गमुपन्यस्तं तद् व्यभिचरति इत्याह— **तुल्यं तु दर्शनमिति।** इदानीमुदाहृतवाक्यस्य गत्यन्तरमाह— **अपि चेति।** येषां च ब्रह्मविदामपि कर्म दृश्यते, न तत्तेषां कर्म; चोदनालक्षणं हि कर्म; तेषां च मनुष्यत्वाभिमानाभावेन चोदनाऽभावात् कथंचिद् वर्तमानमप्याभासमात्रं तदिति द्रष्टव्यम्।

### भाष्यभावप्रकाशिका

परस्परविरोधादित्याशङ्क्य परमार्थतो विरोधो नास्तीत्याह— **पारमेश्वरमिति।** ननु संपदादिविषयं तत्वमस्यादिवाक्यमित्यत आह— **सर्वञ्चैतदिति।**

उभयथा लिङ्गदर्शने संशय एव स्यादित्यभिप्रेत्य लिङ्गान्तराणामन्यथासिद्धिं दर्शयति— **अपि च यक्ष्यमाण इति।** ननु तत्रापि विद्यात्वाविशेषात् कर्मसाहित्यं न संभवतीति, तत्राह— **संभवति चेति।** विद्यासमये कर्मसद्भावेऽपि विद्याकर्मणोर्नाङ्गाङ्गिभाव इत्याह— **न त्वत्रापीति।**

### न्यायनिर्णयः

वाक्यशेषं दर्शयति— **योऽशनायेति।** 'य एषोऽक्षिणी'त्यादिवाक्यमपि तथेत्यस्मिन्नर्थे शेषानुगुण्यमाह— **परमिति।** उक्तैः शेषैः संसारिणो यदधिकं ब्रह्म तस्योपदिदिक्षायां सत्यामेव ब्रह्मणो जीवस्यात्यन्तभेदाभावधिया द्रष्टव्यादिवाक्यमिति क्रत्वनपेक्षितमात्मरूपं वेदान्तेषु विवक्षितमित्युपगमे न कश्चिद् विरोधोऽस्तीति योजना। कुतो जीवब्रह्मैक्यं मिथो विरोधादित्याशङ्क्य तात्त्विको विरोधो नास्तीत्याह— **पारमेश्वरमिति।** प्रातिभासिकस्तु विरोधस्तात्त्विकाभेदाविरोधीति मत्वाऽऽह— **उपाधीति।** जीवस्य तात्त्विकं रूपं ब्रह्मैवेत्यत्र श्रुतिसंवादमाह— **तत्त्वमिति।** संपदादिविषयं तत्त्वमादिवाक्यं, न वस्तुविषयमित्याशङ्क्याह— **सर्वं चेति।।८।।**

परोक्तं लिङ्गदर्शनं प्रत्याह— **तुल्यं त्विति।** उक्तमनूद्य सूत्रमुत्तरत्वेन योजयति— **यदित्यादिना।** इतश्च विद्याया न शेषतेत्याह— **याज्ञवल्क्येति।** आदिशब्देन शुकादयो गृह्यन्ते। कथं तेषामकर्मनिष्ठत्वं तदाह— **एतावदिति।** उभयथा लिङ्गदर्शने संशयमाशङ्क्य परकीयलिङ्गानामन्यथासिद्धिं वक्तुमारभते— **अपि चेति।** तत्र यक्ष्यमाण इत्यादिलिङ्गदर्शनस्यान्यथासिद्धिमाह— **यक्ष्यमाण इति।** तत्रापि विद्यात्वात्र कर्मसाहित्यमन्यथा ब्रह्मविद्यायामपि तत्प्रसङ्गादित्याशङ्क्याह— **संभवतीति।** तर्हि वैश्वानरविद्याया

**ब्रह्मविद्यायां कर्मसाहित्यदर्शनम्, न त्वत्रापि कर्माङ्गत्वमस्ति, प्रकरणाद्यभावात्।।९।।**

**यत्पुनरुक्तम्- 'तच्छ्रुतेः' (ब्र.सू. ३।४।४) इतिः; अत्र ब्रूमः-**

**असार्वत्रिकी।।१०।।**

**'यदेव विद्यया करोति' (छा.उ. १।१।१०) इत्येषा श्रुतिर्न सर्वविद्याविषया, प्रकृतविद्याभिसंबन्धात्। प्रकृता चोद्गीथविद्या 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा.उ. १।१।१) इत्यत्र।।१०।।**

**विभागः शतवत्।।११।।**

**यदप्युक्तम्- 'तं विद्याकर्मणी समन्वारभेते' (बृ.उ. ४।४।२) इत्येतत् समन्वारम्भवचनमस्वातन्त्र्ये विद्याया लिङ्गमिति; तत् प्रत्युच्यते। विभागोऽत्र द्रष्टव्यो विद्याऽन्यं पुरुषमन्वारभते, कर्मान्यमिति, शतवत्। यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै पञ्चाशदपरस्मै, तद्वत्। न चेदं समन्वारम्भवचनं मुमुक्षुविषयम्, 'इति नु कामयमानः' (बृ.उ. ४।४।६) इति संसारिविषयत्वोपसंहारात्, 'अथाकामयमानः' (बृ.उ. ४।४।६) इति च मुमुक्षोः पृथगुपक्रमात्। तत्र संसारिविषये विद्या विहिता प्रतिषिद्धा च परिगृह्यते, विशेषाभावात्। कर्मापि विहितं प्रतिषिद्धं च, यथाप्राप्तानुवादित्वात्। एवं सत्यविभागेनापीदं समन्वारम्भ-वचनमवकल्पते।।११।।**

### *प्रकटार्थविवरणम्*

**असार्वत्रिकी।। विभागः शतवत्।।** समन्वारम्भवचनस्य मुमुक्षुविषयत्वमङ्गीकृत्य कर्मसाहित्ये लिङ्गं न भवतीत्युक्तम्। इदानीं तदपि नास्तीत्याह— **न चेदं समन्वारम्भवचनमिति**। विहिता विद्या उद्गीथादिविषया; प्रतिषिद्धा च नग्नस्त्रीसन्दर्शनादिलक्षणा।

### *भाष्यभावप्रकाशिका*

विद्याशब्दस्य सामान्यविषयस्य विशेषसाकाङ्क्षस्य प्रकरणसमर्पितविशेषेण चरितार्थत्वमित्याह— **प्रकृतविद्येति**।

अविभागेऽपि न दोष इत्याह— **न चेदमिति**। **तत्र संसारिविषये विद्येति**। उद्गीथात[स]च्छास्त्रादिविषयविद्येत्यर्थः। तथाभूतकर्मसाहचर्यादपि विद्या तथाविधैवेत्याह— **कर्मापीति**।

### *न्यायनिर्णयः*

न स्वातन्त्र्येण फलवत्त्वं कर्माङ्गत्वाङ्गीकारात्, तत्राह— **न त्विति**। येषां च ब्रह्मविदामपि कर्म दृश्यते न तत् तेषां कर्म। तद्धि चोदनालक्षणम्। तेषां चाहंममाभिमानाभावेन चोदनाभावात् कथंचिदनुवर्तमानमपि तदाभासमात्रमिति भावः।।९।।

परोक्तां श्रुतिमनूद्य तदुत्तरत्वेन सूत्रमवतारयति— **यदिति**। तद् विभजते— **यदेवेति**। विद्याशब्दस्य सामान्यविषयस्य विशेषाकाङ्क्षस्य प्राकरणिकविशेषेण चरितार्थत्वादिति हेतुमाह— **प्रकृतेति**। आत्मधियस्तथात्वशङ्कां प्रत्याह— **प्रकृता चेति**।।१०।।

परकीयं लिङ्गान्तरं दूषयति— **विभाग इति**। चोद्यमनूद्योत्तरत्वेन सूत्रं व्याचष्टे— **यदपीत्यादिना**। सामान्यश्रुतौ कथं विभागः स्यात्, तत्र सदृष्टान्तमाह— **शतवदिति**। समन्वारम्भवचनस्य मुमुक्षुविषयत्वमुपेत्य कर्मसाहित्ये न तल्लिङ्गं विभागादित्युक्तम्। इदानीममुमुक्षुविषयत्वादविभागेऽपि न दूषणमित्याह— **न चेति**। तस्यामुमुक्षुविषयत्वे हेत्वन्तरमाह— **अथेति**। संसारिविषये 'तं विद्ये'त्यादिवाक्ये विद्याशब्दार्थमाह— **तत्रेति**। उद्गीथादिविषया विहिता विद्या, प्रतिषिद्धा च नग्नस्त्रीदर्शनादिरूपा। तथाभूतकर्मसाहचर्यादपि तथाविधैव विद्येत्याह— **कर्मापीति**। प्रकृते वाक्येऽपि विद्याकर्मणोरविशेषोपादाने हेतुमाह— **यथेति**। उक्तार्थवाक्यस्य संसारिविषयत्वे फलितमाह— **एवमिति**।।११।।

**यच्चैतत् 'तद्वतो विधानात्' (ब्र.सू. ३।४।६) इति; अत उत्तरं पठति –**

**अध्ययनमात्रवतः।।१२।।**

**'आचार्यकुलाद्वेदमधीत्य' (छा.उ. ८।१५।१) इत्यत्राध्ययनमात्रस्य श्रवणादध्ययनमात्रवत एव कर्मविधिरित्यध्यवस्यामः। नन्वेवं सत्यविद्यत्वादनधिकारः कर्मसु प्रसज्येत। नैष दोषः। न वयमध्ययनप्रभवं कर्मावबोधनमधिकारकारणं वारयामः। किं तर्ह्यौपनिषदमात्मज्ञानं स्वातन्त्र्येणैव प्रयोजनवत् प्रतीयमानं न कर्माधिकारकारणतां प्रतिपद्यत इत्येतावत् प्रतिपादयामः। यथा च न क्रत्वन्तरज्ञानं क्रत्वन्तराधिकारेणापेक्ष्यत एवमेतदपि द्रष्टव्यमिति ।।१२।।**

**यदप्युक्तं 'नियमाच्च' (ब्र.सू. ३।४।७) इति; अत्राभिधीयते–**

**नाविशेषात्।।१३।।**

**'कुर्वन्नेवेह कर्माणि जिजीविषेत्' (ईशा.उ. २) इत्येवमादिषु नियमश्रवणेषु न विदुष इति विशेषोऽस्ति; अविशेषेण नियमविधानात्।।१३।।**

**स्तुतयेऽनुमतिर्वा।।१४।।**

**'कुर्वन्नेवेह कर्माणि' (ई.उ. २) इत्यत्रापरो विशेष आख्यायते। यद्यप्यत्र प्रकरणसामर्थ्याद् विद्वानेव कुर्वन्निति संबध्यते, तथापि विद्यास्तुतये कर्मानुज्ञानमेतद् द्रष्टव्यम्। 'न कर्म लिप्यते नरे' (ई.उ. २) इति**

*प्रकटार्थविवरणम्*

**अध्ययनमात्रवतः।। नाविशेषात्।।** [१](यथा एतत् यच्चैतत्) "अध्ययनमात्रवतवति[वतः" इति]मात्रार्थापरिज्ञानात् शङ्कते— **नन्वेवं सतीति**। अविद्यत्वात् विद्यारहितत्वादित्यर्थः। अधीतवाक्यप्रसूतं ज्ञानं मात्रशब्देनास्माभिर्न वार्यते, किंतु तत्त्वज्ञानमनुपयोगादित्याह— **नैष दोष इति**।

**स्तुतयेऽनुमतिर्वा।।** नियमविधानम् अज्ञविषयमित्येकं परिहारमुक्त्वा प्रकरणभङ्गभयात् परिहारान्तरमाह— **स्तुतय इति**।

*भाष्यभावप्रकाशिका*

अध्ययनमात्रग्रहणेन कृत्स्नवेदार्थज्ञानं व्यवच्छिन्नमिति मन्वानः शङ्कते— **नन्वेवं सतीति**। मात्रग्रहणमात्मज्ञानापेक्षम्, न तु कर्मकाण्डार्थावबोधापेक्षमिति परिहरति— **न वयमिति**। ननु वेदार्थत्वादात्मनस्तद्विषयज्ञानमप्यपेक्षणीयमिति, तत्राह— **यथा च नेति**। कुर्वन्नेवेत्यविद्यावद्विषयमित्याह— **कुर्वन्निति**।

विद्यावद्विषयत्वेऽप्यविरोधो विद्यावतः स्तुत्यर्थत्वादित्याह— **स्तुतय इति**। तथापि कथं स्तुतित्वमिति, तदाह— **एतदुक्तं**

*न्यायनिर्णयः*

लिङ्गान्तरमनूद्य सूत्रमादत्ते— **यच्चेति**। यच्चैतदुक्तमित्यर्थः। सूत्रं विवृणोति— **आचार्येति**। मात्रग्रहणेनार्थज्ञानमात्रं व्यवच्छिन्नमिति मन्वानः शङ्कते— **नन्विति**। अविद्यत्वाद्विद्याहीनत्वादिति यावत्। मात्रग्रहणमात्मज्ञानापेक्षं न कर्मावबोधापेक्षमित्याह— **नेत्यादिना**। वेदार्थत्वादात्मनस्तज्ज्ञानमपि कर्मबोधवदधिकारेऽपेक्षितव्यमित्याशङ्क्याह— **यथेति**। पूर्वसूत्रव्याख्यासमाप्ताविवितिशब्दः।।१२।।

लिङ्गान्तरमनूद्य सूत्रान्तरमादत्ते— **यदपीति**। अविद्वद्विषयं नियमविधानमिति व्याचष्टे— **कुर्वन्निति** ।।१३।।

विद्वद्विषयत्वमुपेत्य परिहारान्तरमाह— **स्तुतय इति**। एवं तर्हि प्रकरणमभग्नमिति मत्वा सूत्रं विभजते— **कुर्वन्नेवेति**। विशेषमेव विशदयति— **यद्यपीति**। स्तुत्यर्थं कर्मानुज्ञानमित्यत्र वाक्यशेषमनुकूलयति— **नेति**। तथापि कथं स्तुतिः, तत्राह—

---

१. अत्र पाठेऽशुद्धिः।

**हि वक्ष्यति। एतदुक्तं भवति–यावज्जीवं कर्म कुर्वत्यपि विदुषि पुरुषे न कर्म लेपाय भवति विद्यासामर्थ्यादिति, तदेवं विद्या स्तूयते।।१४।।**

**कामकारेण चैके।।१५।।**

**अपि चैके विद्वांसः प्रत्यक्षीकृतविद्याफलाः सन्तस्तदवष्टम्भात् फलान्तरसाधनेषु प्रजादिषु प्रयोजनाभावं परामृशन्ति कामकारेणेति श्रुतिर्भवति वाजसनेयिनाम्–'एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' (बृ.उ. ४।४।२२) इति। अनुभवारूढमेव च विद्याफलं, न क्रियाफलवत् कालान्तरभावीत्यसकृदवोचाम। अतोऽपि न विद्यायाः कर्मशेषत्वं, नापि तद्विषयायाः फलश्रुतेरयथार्थत्वं शक्यमाश्रयितुम्।।१५।।**

**उपमर्दं च।।१६।।**

**अपि च कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्याविद्याकृतस्य विद्यासामर्थ्यात् स्वरूपोपमर्दमामनन्ति–'यत्र [1]वा अस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्' (बृ.उ. २।४।१४)**

***प्रकटार्थविवरणम्***

एवं कर्म कुर्वत्यपि त्वयि नेतो ब्रह्मभावाद्विद्याविषयात् अन्यथा संसारापत्तिरस्ति, यतो न कर्म लिप्यत इति योजना।

**कामकारेण चैके।। कामकारेणेति।** स्वेच्छातः कर्मसाधनप्रजादिपरित्यागलिङ्गादपि विद्यायाः स्वातन्त्र्यमित्यर्थः। येषां नोऽस्माकम् अयमात्मैवायं प्राप्यो लोको मोक्षाख्य इत्यर्थः। ननु मोक्षस्यादृष्टफलत्वात् कथं मुक्तत्वनिश्चयात् प्रजापरित्याग इत्याशङ्क्याह— **अनुभवारूढमेव चेति।**

**उपमर्दं च।।** किंच अकर्तृब्रह्मात्मज्ञानं न क्रतुप्रयोगविधिनोपादेयम्, उपादीयमानक्रत्वङ्गविरोधित्वात्, क्रतुप्रयोगविधिनोपादीयमानोदितहोमविरोध्यनुदितहोमवदित्याह— **उपमर्द चेति।**

***भाष्यभावप्रकाशिका***

**भवतीति।**

अपि च विद्याफलं प्रत्यक्षं श्रावयन्ती श्रुतिः कामान्तरकर्माङ्गत्वं विद्याया निवारयतीत्याह— **कामकारेणेति। अतोऽपि न विद्याया इति।** अयं भावः— ब्रह्मज्ञानं न क्रतुप्रयोगविधिनोपादेयं क्रत्वङ्गसंबन्धित्वेऽपि फलान्तरसंबन्धित्वात् गोदोहनवदिति।

अधिकोपदेशादित्यत्राशनायाद्यतीतत्वादात्मनः कर्माङ्गत्वं तज्ज्ञानस्य निराकृतमिदानीं समस्तक्रियाकारकफलविभागाभावादपि न कर्माङ्गत्वमित्याह— **उपमर्दमिति।**

***न्यायनिर्णयः***

**एतदिति।** एवं कर्म कुर्वत्यपि त्वयि नेतो ब्रह्मभावाद् विद्यागम्यादन्यथा संसारापत्तिरस्ति, यतो न कर्म लिप्यत इति योजनां गृहीत्वोपसंहरति— **तदेवमिति।।१४।।**

पूर्वपक्षहेतूनेवमुन्मथ्य स्वपक्षे हेत्वन्तरमाह— **कामेति।** इतश्च विद्याया न कर्माङ्गतेति चकारार्थमाह— **अपि चेति।** स्वेच्छातः कर्मसाधनप्रजादित्यागलिङ्गादपि विद्यायाः स्वातन्त्र्यमिति हेत्वन्तरमेव स्फोरयति— **एक इति।** येषां नोऽस्माकमयमपरोक्षः सन्नात्माऽयं लोकः प्रत्यक्षं फलं ते वयं किं प्रजया करिष्याम इति निश्चित्याग्निहोत्रादि न हुतवन्त इत्यर्थः। मोक्षस्यादृष्टफलत्वात् कथं मुक्तत्वनिश्चयात् प्रजादित्यागसिद्धिः, तत्राह— **अनुभवेति।** ब्रह्मधीर्न क्रतुप्रयोगविधिनाऽऽदेया क्रत्वङ्गसंबन्धित्वेऽपि फलान्तरयोगित्वाद् गोदोहनवदिति मत्वाऽऽह— **अतोऽपीति।।१५।।**

अधिकोपदेशादित्यत्रात्मनोऽशनायाद्यत्ययात् तद्धीर्न कर्माङ्गमित्युक्तम्। इदानीमशेषक्रियादिविभागोपमर्दकत्वादपि न कर्माङ्गमित्याह— **उपमर्दं चेति।** इतश्चात्मधीर्न कर्माङ्गमिति चकारार्थमाह— **अपि चेति।** हेत्वन्तरं स्फोरयति— **कर्मेति।** विद्यासामर्थ्यात्

१. 'यत्र त्वस्य' इति पा.।

**इत्यादिना। वेदान्तोदितात्मज्ञानपूर्विकां तु कर्माधिकारसिद्धिं प्रत्याशासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत। तस्मादपि स्वातन्त्र्यं विद्यायाः।।१६।।**

## ऊर्ध्वरेतःसु च शब्दे हि।।१७।।

**ऊर्ध्वरेतःसु चाश्रमेषु विद्या श्रूयते। न च तत्र कर्माङ्गत्वं विद्याया उपपद्यते, कर्माभावात्। न ह्यग्निहोत्रादीनि वैदिकानि कर्माणि तेषां सन्ति। स्यादेतत्- ऊर्ध्वरेतस आश्रमा न श्रूयन्ते वेदे इति; तदपि नास्ति, तेऽपि हि वैदिकेषु शब्देष्ववगम्यन्ते-'त्रयो धर्मस्कन्धाः' (छा.उ. २।२३।१), 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छा.उ. ५।१०।१), 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये' (मु.उ. १।२।११), 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ.उ. ४।४।२२), 'ब्रह्मचर्यादेव प्रव्रजेत् (जा.उ. ४) इत्येवमादिषु। प्रतिपन्नाप्रतिपन्न-गार्हस्थ्यानामपाकृतानपाकृतर्णत्रयाणां चोर्ध्वरेतस्त्वं श्रुतिस्मृतिप्रसिद्धम्। तस्मादपि स्वातन्त्र्यं विद्यायाः।।१७।।**

।।इति प्रथमं पुरुषार्थाधिकरणम्।।

### *प्रकटार्थविवरणम्*

**ऊर्ध्वरेतःसु च शब्दे हि।।** किं च ब्रह्मज्ञानकर्मणी नाङ्गाङ्गिभूते, इतरेतरव्यतिरेकित्वात्, ऋतुगमननैष्ठिकव्रतवदिति विशेषानुमानानुगृहीतया फलश्रुत्या स्वतन्त्रमेव ब्रह्मज्ञानं फलसाधनमित्याह— **ऊर्ध्वरेतस्सु चेति**। "शब्दे हि" इति सूत्रभागं शङ्कापूर्वकं व्याचष्टे— **स्यादेतदित्यादिना**। "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति श्रुतेः, "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु सेवमानः पतत्यधः।।" इति स्मृतेश्च गार्हस्थ्यं स्वीकृत्यैव ऋणत्रयं चापाकृत्यैवोर्ध्वरेतःशब्दाभिधेयमैथुनासमाचरणोपलक्षितं पारिव्राज्यमनुष्ठेयमित्यपि नाशङ्कनीयमित्याह— **प्रतिपन्नेति**। साक्षाद्विधिश्रुतिविरोधेऽर्थवादश्रुतिः स्मृतिर्वा बाध्यत इति भावः। तथा च श्रुतिस्मृत्यन्तराणि—"तस्याश्रमविकल्पमेके ब्रुवते" "यमिच्छेत्तमाविशेत्" "गृहस्थाश्रमकामस्तु गृहस्थाश्रममाविशेत्। वानप्रस्थाश्रमं वाऽपि चतुर्थं वेच्छयाऽऽत्मनः।। ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ वा पुनः। वियुक्तः सर्वकामेभ्यः पारिव्राज्यं समाचरेत्।।" इति च। तस्माद् यस्य ब्राह्मणस्य पूर्वत्र

### *भाष्यभावप्रकाशिका*

न ज्ञानकर्मणी परस्पराङ्गभूते परिव्राजकादिष्वितरेतरव्यतिरेकित्वादृतुगमननैष्ठिकव्रतवदित्यभिप्रेत्याह— **ऊर्ध्वरेतस्सु चेति**। ननु तेषामपि स्नानभिक्षाटनादि कर्मास्तीति, तत्राह— **न ह्यग्निहोत्रादीति**। ननु कर्मण्यनधिकृतान्धपङ्ग्वादिविषयं पारिव्राज्यमित्यत आह— **प्रतिपन्नेति**। इति प्रथमं पुरुषार्थाधिकरणम्।।

### *न्यायनिर्णयः*

प्रपञ्चोपमर्दे फलितमाह— **वेदान्तेति**। आत्मज्ञानस्यादीयमानक्रत्वङ्गविरोधित्वे फलितं निगमयति— **तस्मादिति**।।१६।।

विद्यास्वातन्त्र्ये हेत्वन्तरमाह— **ऊर्ध्वरेतःस्विति**। विद्याकर्मणी नाङ्गाङ्गिभूते मिथो व्यतिरेकित्वाद् ऋतुगमननैष्ठिकव्रतवदिति मत्वा योजयति— **ऊर्ध्वेत्यादिना**। तथापि कथं कर्माङ्गत्वं विद्याया व्यासेध्यते, तत्राह— **न चेति**। तेषामपि स्नानादि कर्मास्तीत्याशङ्क्याह— **न हीति**। बाधितानुवृत्त्या तत्सद्भावेऽपि वैदिकाग्निहोत्राद्यभावान्न क्रत्वङ्गता ज्ञानस्येत्यर्थः। शब्दे हीति सूत्रावयवव्यावर्त्यामाशङ्कामाह—**स्यादिति**। सूत्रावयवेनोत्तरमाह— **तदपीति**। कर्मानधिकृतान्धादिविषयं पारिव्राज्यमित्याशङ्क्याह— **प्रतिपन्नेति**। ऋणापाकरणे श्रुतिस्मृतिभ्यां गृहस्थस्यैवापाकृतर्णत्रयस्यैवोर्ध्वरेतःशब्दितमैथुनासमाचारोपलक्षितं पारिव्राज्यमित्याशङ्क्याह— **अपाकृतेति**। साक्षाद्विधिश्रुतिविरोधेऽर्थवादश्रुतिस्मृत्योर्बाध्यतेत्यभिप्रेत्योक्तम्— **श्रुतीति**। श्रुतिर्ब्रह्मचर्यादेव प्रव्रजेदित्याद्या दर्शिता। स्मृतिस्तु 'तस्याश्रमविकल्पमेके ब्रुवते, यमिच्छेत्तमावसेदि'त्याद्योदाहार्या। ऊर्ध्वरेतःस्वाश्रमेषु विद्यायाः सिद्धौ फलितमाह— **तस्मादिति**। तस्याः स्वातन्त्र्ये केवलायाः सिद्धा मुक्तिफलतेति वक्तुमितीत्युक्तम्।।१७।। इति प्रथमं पुरुषार्थाधिकरणम् ।।

## २।।परामर्शाधिकरणम्।। सू. १८-२०।।

## परामर्शं जैमिनिरचोदना चापवदति हि।।१८।।

**'त्रयो धर्मस्कन्धाः' (छा.उ. २।२३।१) इत्यादयो ये शब्दा ऊर्ध्वरेतसामाश्रमाणां सद्भावायोदाहृताः, न ते तत्प्रतिपादनाय प्रभवन्ति। यतः परामर्शमेषु शब्देष्वाश्रमान्तराणां जैमिनिराचार्यो मन्यते, न विधिम्। कुतः? न ह्यत्र लिङादीनामन्यतमश्चोदनाशब्दोऽस्ति। अर्थान्तरपरत्वं चैषु प्रत्येकमुपलभ्यते। 'त्रयो धर्मस्कन्धा' इत्यत्र तावद् 'यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एते पुण्यलोका भवन्ती'ति परामर्शपूर्वकमाश्रमाणामनात्यन्तिकफलत्वं संकीर्त्यात्यन्तिकफलतया ब्रह्मसंस्थता स्तूयते—'ब्रह्मसंस्थोऽमृतत्वमेति' (छा.उ. २।२३।१) इति। ननु**

### *शारीरकन्यायसंग्रहः*

**परामर्शं जैमिनिरचोदना चापवदति हि।।१८।। अनुष्ठेयं बादरायणः साम्यश्रुतेः।।१९।। विधिर्वा धारणवत्।।२०।।** स्मृत्याचारयोराश्रमचतुष्टयविषययोः भ्रान्तित्वासंभवेन मूलाकाङ्क्षायां विधिसंयुक्तवाक्यकल्पनात् लघीयः 'त्रयो धर्मस्कन्धाः' इत्यादिषु स्कन्धानां धर्मत्रित्वोपाधित्वेन प्रतिपन्नेष्वाश्रमेषु विधिकल्पनमित्यन्यपरेष्वपि वाक्येषु उपरिधारणवद् विधिमाश्रमाणां कल्पयित्वा यथाधिकारमिच्छयाऽऽश्रमविकल्पसमुच्चयप्रतिपत्तिरुक्ता। अथवा यज्ञाध्ययनदानतपआचार्यकुलवासानां कथञ्चित् सर्वाश्रमसाधारण्ये संभवत्यवान्तरप्राधान्येनासाधारणसंबन्धमाश्रित्यैकैकेन धर्मकलापेनैकैक एवाश्रमः परामृश्यते यथा, तथा ब्रह्मसंस्थताया अपि कथंचित् सर्वाश्रमसंबन्धेऽपि सर्वशास्त्रेषु परिव्राजकमाश्रित्य नियमेन विधानात्, तेना[तद]साधारण्यादन्यनिन्दया विधीयमानब्रह्मसंस्थतया तदाश्रयत्वेन लिङ्ग्यमानपारिव्राज्येन सहैव ब्रह्मसंस्थता विधीयते, अनाश्रमिसंबन्धानुपपत्तेः इत्युक्तम्।

### *प्रकटार्थविवरणम्*

वैराग्यमुत्तरोपादित्सा च जायते, तस्यानियमेनैव आश्रमस्वीकारः प्रत्यवायाप्राप्तिश्च [1]सूतकादिप्रतिबन्ध इवेत्यर्थः।।इति प्रथमं पुरुषार्थाधिकरणम्।।

**परामर्शं जैमिनिरचोदना चापवदति हि।।** पूर्वाधिकरणोक्तपारिव्राज्यस्यानुष्ठेयत्वं प्रासङ्गिकमनेन अधिकरणेन प्रपञ्च्यते। तत्र पूर्वपक्षमुपन्यस्यति— **त्रयो धर्मस्कन्धा इत्यादय इति**। विध्यश्रवणात्, ब्रह्मसंस्थतास्तुतिपरत्वाच्चाश्रमपरामर्शमात्रमित्युक्तम्;

### *भाष्यभावप्रकाशिका*

**परामर्शञ्जैमिनिरचोदना चापवदति हि।।** ऊर्ध्वरेतसामाश्रमित्वे सिद्धे तद्विद्यानामकर्माङ्गत्वं सिध्येत्। तदेव तु नास्ति, प्रमाणाभावादित्याक्षिपति— **त्रयो धर्मस्कन्धा इति**। ननु 'पूषा प्रपिष्टभाग' इत्यादाविव कल्प्यतां विधिरित्याशङ्क्य विध्यन्तरशेषत्वाभावे सत्येतदुपपद्यते। इह तु तन्नास्ति, ब्रह्मसंस्थतादिविधिपरत्वाद् वाक्यजातस्येत्याह— **अर्थान्तरपरत्वञ्चेति**। अन्यत्र विहितस्यान्यत्र

### *न्यायनिर्णयः*

पूर्वाधिकरणावान्तरसूत्रेणाक्षेपलक्षणां संगतिं विवक्षन्नाक्षिपति— **परामर्शमिति**। ऊर्ध्वरेतःशब्दितं पारिव्राज्यं नानुष्ठेयमनुष्ठेयं वेति भ्रान्तिप्रमाणमूलत्वाभ्यां संदेहे पूर्वपक्षयति— **त्रय इति**। अत्र शास्त्रीयसम्यग्ज्ञानस्यान्तरङ्गसाधनप्रसङ्गादनुष्ठेयमुच्यत इति स्फुटा पादादिसंगतिः। पूर्वपक्षे परिव्राजके विद्याप्रसिद्धेर्विभ्रमत्वात् तस्या न स्वातन्त्र्यसिद्धिः, सिद्धान्ते तस्यास्तत्र प्रामाणिकत्वात् तत्सिद्धिरिति स्वीकृत्य 'परामर्शं जैमिनि' रिति व्याख्याय हेत्वाकाङ्क्षायामचोदनेति हेतुत्वेन व्याचष्टे— **कुत इति**। 'पूषा प्रपिष्टभाग' इतिवत् कल्प्यतां विधिरित्याशङ्क्य ब्रह्मसंस्थतादिविधिपरत्वाद् वाक्यजातस्य नैवमिति चशब्दार्थमाह— **अर्थान्तरेति**। तत्र ब्रह्मसंस्थतादिविधिपरत्वं त्रय इत्यादिवाक्यस्य साधयति— **त्रय इत्यादिना**। अन्यत्र विहितस्यान्यत्र परामर्शादन्यत्र विधिकल्पनादिहैव

१. संन्यासिनां पूर्वाश्रमज्ञातिसम्बन्धिजननादौ यथा सूतकादि न भवति, तथा नित्याकरणनिमित्तप्रत्यवायोऽपि नेत्यर्थः।

**परामर्शेऽप्याश्रमा गम्यन्त एव। सत्यं गम्यन्ते। स्मृत्याचाराभ्यां तु तेषां प्रसिद्धिर्न प्रत्यक्षश्रुतेः। [1]अतश्च**

***प्रकटार्थविवरणम्***

तत्र शङ्कते— **ननु परामर्शेऽपीति**। अनुवादस्य पुरोवादसापेक्षत्वादित्यर्थः। परामर्शानुपपत्त्या आश्रमा गम्यन्त इत्येतत् सत्यम्; किंतु स्मृत्याचाराभ्यां तेषां प्रसिद्धिः, न विधिश्रुतेरित्यर्थः।

तथा च काण्वायनस्मृतिः आश्रमचतुष्टयं व्याचचक्षे— "ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाश्चत्वार आश्रमाः षोडशभेदा भवन्ति। तत्र ब्रह्मचारिणः चतुर्विधा भवन्ति— गायत्रो ब्राह्मः प्राजापत्यो बृहन्निति। य उपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रीमधीते, स गायत्रः। योऽष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत्, प्रतिवेदं द्वादश द्वादश वा, यावद्ग्रहणान्तं वा वेदस्य स ब्राह्मः। स्वदारर्तुकालाभिगामी सदा परदारवर्जी यः स प्राजापत्यः। आ प्रायणात् गुरोरपरित्यागी यः स नैष्ठिको बृहन्निति।

गृहस्था अपि चतुर्विधा भवन्ति— वार्ताकवृत्तयः, शालीनवृत्तयः, यायावराः, घोरसंन्यासिकाश्चेति। तत्र वार्ताकवृत्तयः कृषिगोरक्षणवाणिज्यमगर्हितमुपभुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते। शालीनवृत्तयो यजन्तः [यजन्तोऽयाजयन्तः]अधीयाना नाध्यापयन्तः, ददतो न प्रतिगृह्णन्तः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते। यायावराः यजन्तो याजयन्तः अधीयाना अध्यापयन्तः ददतः प्रतिगृह्णन्तः शतसंवत्सराभिः क्रियाभिः यजन्त आत्मानं प्रार्थयन्ते। घोरसंन्यासिका उद्धृतपरिपूताभिरद्भिः कार्यं कुर्वन्तः प्रतिदिवसमाहृतोञ्छवृत्तिमुपभुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते।

वानप्रस्था अपि चतुर्विधा भवन्ति— वैखानसा औदुम्बरा वालखिल्याः फेनपाश्चेति। तत्र वैखानसा अकृष्टपच्यौषधिवनस्पतिभि-र्ग्रामबहिष्कृताभिरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते। औदुम्बराः प्रातरुत्थाय यां दिशमभिप्रेक्षन्ते, [2]तथाहृतोदुम्बरबदरनीवारकश्यामाकैरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते। वालखिल्याः जटाधराश्चीरचर्मवल्कलपरिवृताः कार्तिक्यां पौर्णमास्यां पुष्पफलमुत्सृजन्तः शेषानष्टौ मासान् वृत्त्युपार्जनं कृत्वाऽग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्तः आत्मानं प्रार्थयन्ते। फेनपाः उन्मत्तकाः शीर्णपर्णफलभोजिनो यत्र तत्र वा वसन्तः अग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते।

परिव्राजका अपि चतुर्विधा भवन्ति— कुटीचकाः बहूदकाः हंसाः परमहंसाश्चेति। तत्र कुटीचकाः स्वपुत्रगेहेषु भैक्षचर्यं चरन्त आत्मानं प्रार्थयन्ते। बहूदकाः त्रिदण्डकमण्डलुशिक्यपक्ष्मजलपवित्रपादुकासनशिखायज्ञोपवीतकौपीनकाषायवेषधारिणः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षं चरन्तः आत्मानं प्रार्थयन्ते। हंसाः एकदण्डधराः शिखावर्जिताः यज्ञोपवीतधारिणः शिक्यकमण्डलुहस्ताः ग्रामैकरात्रवासिनो नगरे तीर्थेषु च पञ्चरात्रं वसन्तः एकरात्रद्विरात्रत्रिरात्रकृच्छ्रचान्द्रायणादि चरन्त आत्मानं प्रार्थयन्ते। परमहंसा नामैकदण्डधरा मुण्डाः कन्थाकौपीनवासिनोऽव्यक्तलिङ्गाव्यक्ताचाराः अनुन्मत्ता उन्मत्तवदाचरन्तः त्रिदण्डकमण्डलुशिक्यपक्ष्मजल-पवित्रपादुकासनशिखायज्ञोपवीतानां च त्यागिनः शून्यागारदेवगृहनिवासिनः। न तेषां धर्मो नाधर्मो न सत्यं नापि चानृतम्। सर्वसहाः सर्वसमाः समलोष्टाश्मकाञ्चनाः।। यथोपपन्नचातुर्वर्ण्यभैक्षाचर्यं चरन्तः आत्मानं मोक्षयन्ते—

यतीनामुपशमो धर्मो नियमो वनवासिनाम्। दानमेकं गृहस्थानां शुश्रूषा ब्रह्मचारिणाम्।।"इति।।

***भाष्यभावप्रकाशिका***

परामर्शो भवति। तथा च सत्यन्यत्र विधिकल्पनादिहैव विधिकल्पनं लघीय इति शङ्कते— **ननु परामर्शेऽपीति**। ननु स्मृतिरपि श्रुतिमूलैव, अतो विधिसंयुक्तवाक्यकल्पनाल्लघीयः 'त्रयो धर्मस्कन्धा' इत्यादिषु विधिकल्पनमित्याशङ्क्य प्रत्यक्षश्रुतिविरोधान्नैवमित्याह—

***न्यायनिर्णयः***

कल्पना लघ्वीत्याशङ्कते— **नन्विति**। परामर्शस्यानुवादाख्यस्य पुरोवादापेक्षत्वात् तद्वशादाश्रमप्रतीतिमङ्गीकरोति— **सत्यमिति**। तर्हि तद्विषयश्रुतेरन्यत्राश्रितत्वाद् गौरवमित्याशङ्क्याह— **स्मृतीति**। तयोरपि श्रुतिमूलत्वाद् विधियुक्तश्रुतिकल्पनादिहैव तत्कल्पने

१. 'ततश्च' इति पा.। २. 'तदाहृत' इति स्यात्।

**प्रत्यक्षश्रुतिविरोधे सत्यनादरणीयास्ते भविष्यन्ति। अनधिकृतविषया वा। ननु गार्हस्थ्यमपि सहैवोर्ध्वरेतोभिः परामृष्टं 'यज्ञोऽध्ययनं दानमिति प्रथम' इति। सत्यमेवम्, तथापि तु गृहस्थं प्रत्येवाग्निहोत्रादीनां कर्मणां विधानाच्छ्रुतिप्रसिद्धमेव हि तदस्तित्वम्। तस्मात् स्तुत्यर्थ एवायं परामर्शो न चोदनार्थः। अपि चापवदति हि प्रत्यक्षा श्रुतिराश्रमान्तरम्–'वीरहा वा एष देवानां योऽग्निमुद्वासयते' (तै.सं. १।५।२।५), 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' (तै.उ. १।११।१) 'नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः' (ऐ.ब्रा. ७।१३।१२) इत्येवमाद्या। तथा 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छा.उ. ५।१०।१), 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये' (मु.उ. १।२।११) इति च देवयानोपदेशो नाश्रमान्तरोपदेशः। संदिग्धं चाश्रमान्तराभिधानम् 'तप एव द्वितीयः' (छा.उ. २।२३।१) इत्येवमादिषु। तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ.उ. ४।४।२२) इति लोकसंस्तवोऽयं न पारिव्राज्यविधिः। ननु 'ब्रह्मचर्यादेव**

### *प्रकटार्थविवरणम्*

भवत्वेवं स्मार्तत्वम्, ततः किमित्याशङ्क्याह— **ततश्चेति**। यावज्जीवादिश्रुतिविरोधे नादरणीया ऊर्ध्वरेतस आश्रमाः, धर्मानधिकृतान्धपङ्ग्वादिविषया वा भविष्यन्तीत्यर्थः। आश्रमान्तराणामननुष्ठेयत्वं चेत् गार्हस्थ्यस्याप्यननुष्ठेयत्वं स्यात्, परामर्शाविशेषादित्याह— **ननु गार्हस्थ्यमपीति**। परामर्शसाम्येऽपि श्रौतत्वात् तस्यानुष्ठेयत्वमित्याह— **सत्यमेवमिति**। यस्मात् गार्हस्थ्यमेवैकं श्रौतं तस्माद् ब्रह्मसंस्थतास्तुत्यर्थ एवाश्रमान्तरानुवाद इत्युपसंहारः। "अपवदति हि" इति सूत्रभागं व्याचष्टे— **अपि चेति**। यच्चोदाहृतं वाक्यान्तरं तदप्यन्यपरमित्याह— **तथा ये चेति**। "तेऽर्चिरभिसंभवन्ति" इत्यादिना देवयानोपदेशार्थमित्यर्थः। आश्रमाभिधायिशब्दाभावाच्चार्थान्तरपरत्वं वक्तव्यमित्याह— **सन्दिग्धं चेति**। तर्हि प्रव्रजन्तीति स्पष्ट एवाश्रमाभिधायी शब्दोऽस्तीत्याशङ्क्याह— **तथैतमेवेति**। एवं विशिष्टोऽयमात्मलोकः यदेनमिच्छन्तः साक्षात्कर्तुं प्रव्रज्यामपि कुर्वन्तीति। इदानीं

### *भाष्यभावप्रकाशिका*

**अतश्चेति**। ननु निरालम्बनत्वकल्पनात् कथञ्चित् सालम्बनत्वं युक्तमिति, तत्राह— **अनधिकृतविषया वेति**। ये नित्यनैमित्तिककर्मण्यनधिकृता अन्धपङ्ग्वादयस्तद्विषया स्मृतय इत्यर्थः। ननु परामृश्यमानानामपि गार्हस्थ्यवत् प्रामाणिकत्वं स्यादिति शङ्कते— **नन्विति**। न परामर्शमात्रात् तत्सिद्धिरपि तु प्रत्यक्षविधानादिति परिहरति— **सत्यमेतदिति**। निन्द्यमानत्वाच्चाश्रमान्तरवन्न लभ्यत इत्याह— **अपि चापवादतीति**। पूर्वोक्तवाक्यान्तरात् तत्सिद्धिमाशङ्क्याह— **तथा ये चेम इति**। देवयानोपदेशपरं तदित्यर्थः। **संदिग्धमिति**। तद्वाचकशब्दाभावादित्यर्थः। प्रत्यक्षवचनभावादधिकरणं नारम्भणीयमित्याशङ्क्य नास्तीति कृत्वाचिन्तेयमिति समाधत्ते— **ननु ब्रह्मचर्यादेवेत्यादिना**।

### *न्यायनिर्णयः*

लाघवमित्याशङ्क्याह— **अतश्चेति**। प्रत्यक्षश्रुतिर्यावज्जीवादिश्रुतिः। निरालम्बनत्वात् कथमपि सालम्बनत्वं युक्तमिति कल्पान्तरमाह— **अनधिकृतेति**। येऽन्धादयो नित्यादिकर्मस्वनधिकृतास्तद्विषया आश्रमान्तरस्मृतयस्तदाचाराश्चेत्यर्थः। आश्रमान्तराणां परामर्शेऽपि गार्हस्थ्यवत् प्रामाणिकत्वसिद्धेरनुष्ठेयतेति शङ्कते— **नन्विति**। परामर्शसाम्यमङ्गीकरोति— **सत्यमिति**। तर्हि प्रामाणिकत्वेनानुष्ठेयत्वमपि तुल्यं स्यादित्याशङ्क्य न परामर्शमात्राद् गार्हस्थ्यसिद्धिः, अपि तु प्रत्यक्षश्रुतिविधानादिति विशेषमाह— **तथापीति**। गार्हस्थ्यमेकमेव श्रौतमिति स्थिते ब्रह्मसंस्थतास्तुत्यर्थमेव 'त्रय' इत्याद्याश्रमान्तरवचनमित्युपसंहरति— **तस्मादिति**। निन्द्यमानत्वाच्चाश्रमान्तरमननुष्ठेयमित्याह— **अपि चेति**। तत्र सूत्रावयवं योजयति— **अपवदतीति**। तत्र 'त्रय' इत्यादिवाक्यस्यान्यार्थत्वमुक्त्वा वाक्यान्तरस्यापि तद्वदेवार्थान्तरपरत्वमाह— **तथेति**। 'तेऽर्चिषमभिसंभवन्ति' 'सूर्यद्वारेण ते विरजाः प्रयान्ती'ति वाक्यशेषाद् देवयानोक्तिपरं तदित्यर्थः। आश्रमवाचकशब्दाभावाच्चार्थान्तरपरत्वमित्याह— **संदिग्धं चेति**। प्रव्रजन्तीत्याश्रमवाचिशब्ददृष्टेरनुष्ठेयं पारिव्राज्यमित्याशङ्क्याह— **तथेति**। एवं विशिष्टोऽयमात्मलोको यदेनं साक्षात्कर्तुमिच्छन्तो दुरनुष्ठेयामपि प्रव्रज्यां कुर्वन्तीति स्तुतिर्न तद्विषयो विधिर्वर्तमानापदेशादित्यर्थः। पूर्वपक्षमाक्षिपति—**नन्विति**।

**प्रव्रजेत्' (जा.उ. ४) इति विस्पष्टमिदं प्रत्यक्षं पारिव्राज्यविधानं जाबालानाम्। सत्यमेवमेतत्। अनपेक्ष्य त्वेतां श्रुतिमयं विचार इति द्रष्टव्यम्।।१८।।**

## अनुष्ठेयं बादरायणः साम्यश्रुतेः।।१९।।

**अनुष्ठेयमाश्रमान्तरं बादरायण आचार्यो मन्यते। वेदेऽश्रवणात्, अग्निहोत्रादीनां चावश्यानुष्ठेयत्वात् तद्विरोधादनधिकृतानुष्ठेयमाश्रमान्तरमिति हीमां मतिं निराकरोति गार्हस्थ्यवदेवाश्रमान्तरमप्यनिच्छता प्रतिपत्तव्यमिति मन्यमानः। कुतः? साम्यश्रुतेः। समा हि गार्हस्थ्येनाश्रमान्तरस्य परामर्शश्रुतिर्दृश्यते–'त्रयो धर्मस्कन्धाः' (छा.उ. २।२३।१) इत्याद्या। यथेह श्रुत्यन्तरविहितमेव गार्हस्थ्यं परामृष्टमेवमाश्रमान्तरमपीति प्रतिपत्तव्यम्। यथा च शास्त्रान्तरप्राप्तयोरेव निवीतप्राचीनावीतयोः परामर्श उपवीतविधिपरे वाक्ये। तस्मात् तुल्यमनुष्ठेयत्वं गार्हस्थ्येनाश्रमान्तरस्य। तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ.उ. ४।४।२२) इत्यस्य वेदानुवचनादिभिः समभिव्याहारः। 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छा.उ. ५।१०।१) इत्यस्य च**

### *प्रकटार्थविवरणम्*

पूर्वपक्षमाक्षिपति— **नन्विति**। एतां श्रुतिं करेण पिधायायं विचारः प्रवृत्त इत्याह— **सत्यमेवमेतदिति**।

**अनुष्ठेयं बादरायणः साम्यश्रुतेः**।। सिद्धान्तसूत्रं व्याचष्टे— **अनुष्ठेयमिति**। पूर्वपक्षं सङ्क्षेपतोऽनूद्य तन्निराकरणप्रतिज्ञामाचार्यस्य विवृणोति— **वेदेऽश्रवणादित्यादिना**। "त्रयो धर्मस्कन्धाः" इत्यत्र ऊर्ध्वरेतस आश्रमाः श्रुत्यन्तरविहिताः एव परामृष्टाः, एतद्वाक्यपरामृष्टत्वात्, गार्हस्थ्यवदित्युक्तम्। उदाहरणान्तरमाह— **यथा चेति**। "निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत" इत्यस्मिन् वाक्ये यथा कण्ठलम्बितापसव्ययोः शास्त्रान्तरविहितयोरेव परामर्शः, तथाऽऽश्रमाणामपीत्यर्थः। वाक्यान्तरेऽपि पारिव्राज्यमनुष्ठेयसाहचर्यादनुष्ठेयमेवोपदिष्टमित्याह— **तथैवेति[तथैतमिति]**। परोक्तमुद्भाव्य परिहरति—

### *भाष्यभावप्रकाशिका*

सौत्रस्य साम्यपदस्य विवक्षितमर्थमाह— **अग्निहोत्रादीनामिति**। परामर्शस्य विधिपूर्वकत्वे निदर्शनमाह— **यथा चेति**। 'निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत' इत्यत्रोपवीतविधिपरे वाक्ये विध्यन्तरसिद्धयोरेव परामर्शो यथा तथाऽत्रापीत्यर्थः। वाक्यान्तरयोरप्याश्रमान्तरस्य गार्हस्थ्येन साम्यश्रुतिं दर्शयति— **तथैतमेवेति**। विधेयसमभिव्याहारादस्यापि

### *न्यायनिर्णयः*

प्रत्यक्षविधानमङ्गीकरोति— **सत्यमिति**। तर्हि पूर्वपक्षासिद्धिरित्याशङ्क्य नास्तीदं विधानमितिकृत्वा चिन्तेयमित्याह— **अनपेक्ष्येति**।।१८।।

सिद्धान्तसूत्रमवतार्य व्याकरोति— **अनुष्ठेयमिति**। पूर्वपक्षमनुभाष्य तन्निरासप्रतिज्ञां विवृणोति— **वेद इति**। तत्र प्रश्नपूर्वकं हेतुमाह— **कुत इति**। तस्याक्षरार्थमाह— **समा हीति**। तस्यैव तात्पर्यार्थमाह— **यथेति**। 'त्रयो धर्मस्कन्धा' इत्यत्रोर्ध्वरेतस आश्रमाः श्रुत्यन्तरप्रसिद्धा एव परामृश्यन्ते एतद्वाक्यपरामृष्टत्वाद् गार्हस्थ्यवदित्यर्थः। परामर्शस्य विधिपूर्वकत्वे दृष्टान्तमाह— **यथेति**। 'निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत' इत्यत्रोपवीतविधिपरे वाक्ये विध्यन्तरसिद्धयोरेव निवीतप्राचीनावीतयोर्यथा परामर्शस्तथाऽत्रापीत्यक्षरार्थः। 'निवीतं मनुष्याणा' मित्यादि। दर्शपूर्णमासयोः श्रुतम्। तत्रोपवीतं विधीयत एवतरयोस्तु विधिरर्थवादो वेति संशये सत्यपूर्वार्थलाभान्मनुष्यशब्दस्य च मनुष्यप्राधान्यवाचित्वादातिथ्ये कर्मणि निवीतं, पित्र्ये च प्राचीनावीतमिति प्राप्ते मनुष्याणां क्रियासु सौकर्याय कण्ठलम्बिवस्त्रधारणस्य वा देहार्धबन्धनस्य वा निवीतस्य प्राप्तत्वात् प्राचीनावीतस्य च पितृयज्ञे वाक्यान्तरेण प्राप्तेस्तदनुवादेन निवीतमित्यादिरुपवीतं स्तोतुमर्थवाद इति प्राच्यां मीमांसायां स्थितम्। तथैव परामर्शश्रुतावपि त्रय इत्याद्यायां गार्हस्थ्यवदाश्रमान्तरमपि विहितमेवान्यत्र परामृश्यते, तस्य विध्यपेक्षत्वादित्यर्थः। साम्यश्रुतिफलमाह— **तस्मादिति**। 'त्रय' इत्यत्राश्रमान्तरस्य गार्हस्थ्येन साम्यश्रुतिरुक्ता, सम्प्रति पारिव्राज्यवाक्येऽपि साम्यश्रुतिमाह— तथेति। अस्येति पारिव्राज्योक्तिः। विधेयसाहित्यादस्यापि विधेयतेत्यर्थः। वाक्यान्तरेऽपि साम्यश्रुतिमाह— **ये चेति**। अस्येति

**पञ्चाग्निविद्यया। यत्तूक्तम् 'तप एव द्वितीयः' (छा.उ. २।२३।१) इत्यादिष्वाश्रमान्तराभिधानं संदिग्धमिति। नैष दोषः; निश्चयकारणसद्भावात्। 'त्रयो धर्मस्कन्धाः' (छा.उ. २।२३।१) इति हि धर्मस्कन्धत्रित्वं प्रतिज्ञातम्। न च यज्ञादयो भूयांसो धर्मा उत्पत्तिभिन्नाः सन्तोऽन्यत्राश्रमसंबन्धात् त्रित्वेऽन्तर्भावयितुं शक्यन्ते। तत्र यज्ञादिलिङ्गो गृहाश्रम एको धर्मस्कन्धो निर्दिष्टः; ब्रह्मचारीति च स्पष्ट आश्रमनिर्देशः; तप इत्यपि कोऽन्यस्तपःप्रधानादाश्रमाद्धर्मस्कन्धोऽभ्युपगम्येत ? 'ये चेमेऽरण्ये' (छा.उ. ५।१०।१) इति चारण्यलिङ्गाच्छ्रद्धातपोभ्यामाश्रमगृहीतिः। तस्मात् परामर्शेऽप्यनुष्ठेयमाश्रमान्तरम्।।१९।।**

## विधिर्वा धारणवत्।।२०।।

**[1]विधिर्वाऽयमाश्रमान्तरस्य, न परामर्शमात्रम्। ननु विधित्वाभ्युपगम एकवाक्यताप्रतीतिरुपरुध्येत, प्रतीयते**

### *प्रकटार्थविवरणम्*

**यत्तूक्तमित्यादिना। उत्पत्तिभिन्ना इति।** यजेत दद्यात् इत्याद्युत्पत्तिविधिभिन्नाः सन्तो बहवो धर्माः आश्रमसंबन्धमन्तरेण न त्रित्वेऽन्तर्भावयितुं शक्यन्ते; अतस्त्रित्वेनोपादानमेवाश्रमनिश्चायकमित्यर्थः। तत्र केन धर्मेण कतम आश्रम उपात्त इत्याशङ्क्याह— **तत्र यज्ञादीति।**

**विधिर्वा धारणवत्।।** पूर्वं परामर्शमभ्युपगम्यानुष्ठेयत्वमुक्तम्। इदानीं विधिरेवायमित्याह— **विधिरेवेति।** स्मृत्याचारयोराश्रमचतुष्टयप्रतिपादकयोर्भ्रान्तित्वासंभवेन मूलकल्पनायां विधिसंयुक्तवाक्यकल्पनाल्लघीयः "त्रयो धर्मस्कन्धाः" इत्यादिषु आश्रमविधिकल्पनमित्यर्थः। अल्पफलत्वेनाश्रमत्रयनिन्दापूर्वकं ब्रह्मसंस्थास्तुतिलक्षणैकार्थपरत्वादेकमिदं वाक्यम्; तद्भिद्येताश्रमविधिकल्पनायामित्याह— **ननु विधित्वेति।** संभवत्येकवाक्यत्वे वाक्यभेददोषः स्यात्। नात्रैकवाक्यतैवास्ति, अपूर्वत्वात् संसर्गभेदस्य, पुण्यलोकफलास्त्रयो धर्मस्कन्धाः, ब्रह्मसंस्थताऽमृतत्वफलत्वेति[फलेति]। विध्यन्तरमपि सन्निहितं न दृश्यते, यच्छेषभूतार्थसमर्पणेनैकवाक्यता स्यादित्याह—

### *भाष्यभावप्रकाशिका*

तथात्वमित्यर्थः। निश्चयकारणमाह— **त्रयो धर्मस्कन्धा इति।** यद्याश्रमपरः स्कन्धशब्दो न स्यात्, ततो यज्ञादीनां त्रित्वसंख्या न स्यात् तेषामधिकत्वात्। अतः समूहवचनः स्कन्धशब्दोऽयं न भवति, किन्तु आश्रमवचन इत्यर्थः। कथं तर्हि विभाग इति, तत्राह— **तत्र यज्ञादीति।**

ब्रह्मसंस्थतास्तुतिपरत्वाद् विधिपरत्वमयुक्तं वाक्यभेदप्रसङ्गादिति शङ्कते— **ननु विधित्वेति।** आश्रमाणां पूर्वसिद्धेरभावात्तत्परामर्शेन

### *न्यायनिर्णयः*

वानप्रस्थोक्तिः। विधेयपञ्चाग्निविद्यया तस्य सहोक्तिरस्ति, तेन तद्वदेव वानप्रस्थमनुष्ठेयमित्यर्थः। परोक्तिमुद्भाव्य प्रत्याह— **यत्त्वित्यादिना।** किं तन्निश्चयकारणम्, तदाह— **त्रय इति।** स्कन्धशब्दस्य समूहवाचित्वेऽपि त्रित्वप्रतिज्ञा स्यादित्याशङ्क्याह— **न चेति।** यजेत दद्यादित्याद्युत्पत्तिविधिभिन्नाः सन्तो बहवो धर्मा नाश्रमसंबन्धमन्तरेण त्रित्वेऽन्तर्भावयितुं शक्यन्ते। यद्याश्रमपरः स्कन्धशब्दो न स्यात्, न स्यात् ततो यज्ञादीनां त्रित्वं तेषामधिकत्वादतः स्कन्धशब्दस्य समूहार्थत्वायोगात् त्रित्वमेव स्कन्धानामाश्रमत्वनिश्चायकमित्यर्थः। कथं तर्हि तेषामाश्रमाणां विभागः, तत्राह— **तत्रेति।** वाक्यान्तरेऽपि निश्चायकं दर्शयति— **ये चेति।** परोक्तं निरस्य स्वमतमुपसंहरति— **तस्मादिति।**।१९।।

परामर्शमुपेत्यानुष्ठेयत्वमुक्तम्; इदानीं विधिरेवायमित्याह— **विधिर्वेति।** प्रतिज्ञां विभजते— **विधिरिति।** स्मृत्याचारयोराश्रमचतुष्टयनिविष्टयोर्भ्रान्तित्वायोगान्मूलकल्पनायां विधियुक्तवाक्यकल्पनाल्लघीयः 'त्रय' इत्यादिष्वाश्रमविधिकल्पनमिति भावः। अल्पफलत्वेनाश्रमत्रयनिन्दया ब्रह्मसंस्थतास्तुतेरेकवाक्यत्वनिश्चयात् तद्भङ्गेनात्राश्रमविधिकल्पनमयुक्तमिति शङ्कते— **नन्विति।**

---

१. 'विधिरेवायम्' इति प्रकटार्थधृतः पाठः।

**चात्रैकवाक्यता— पुण्यलोकफलास्त्रयो धर्मस्कन्धाः, ब्रह्मसंस्थता त्वमृतत्वफलेति। सत्यमेतत्। सतीमपि त्वेकवाक्यताप्रतीतिं परित्यज्य विधिरेवाभ्युपगन्तव्योऽपूर्वत्वात्। विध्यन्तरस्यादर्शनात्। विस्पष्टाच्चाश्रमान्तरप्रत्ययाद् गुणवादकल्पनयैकवाक्यत्वयोजनानुपपत्तेः। धारणवत्। यथा 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरिधारणमपूर्वत्वात्। तथा चोक्तं शेषलक्षणे— 'विधिस्तु धारणेऽपूर्वत्वात्' (जै.सू. ३।४।१५) इति। तद्वदिहाप्याश्रमपरामर्शश्रुतिर्विधिरेवेति कल्प्यते।**

**यदाऽपि परामर्श एवायमाश्रमान्तराणां तदाऽपि ब्रह्मसंस्थता तावत् संस्तवसामर्थ्यादवश्यं विधेयाऽभ्युपगन्तव्या। सा च किं चतुर्ष्वाश्रमेषु यस्य कस्यचिदाहोस्वित् परिव्राजकस्यैवेति विवेक्तव्यम्। यदि च**

### *प्रकटार्थविवरणम्*

**सत्यमेतदित्यादिना**। किं च मुख्यमाश्रमान्तरप्रत्ययं परित्यज्य स्तुतिलक्षणैकवाक्यत्वकल्पना नोपपद्यत इत्याह— **विस्पष्टाच्चेति**। अवान्तरपदान्वयेनापूर्वार्थविधाने दृष्टान्तमाह— **धारणवदिति**। अग्निहोत्रविशेषे स्रुचि क्षिप्तस्य हविषः आहवनीयं नीयमानस्य पित्रिये[पित्र्य]होमेऽधस्तात् समिद्धारणस्य विहितत्वात् तच्छेषभूतोऽयमनुवादः "उपरि हि देवेभ्यः" इत्येकवाक्यता-प्रतीतावप्युपरिष्टात् समित्प्रच्छादनस्यापूर्वत्वाद् दैवे होमे तद्विधीयत इत्यर्थः। शेषलक्षणे तृतीयाध्याये जैमिनिनाऽप्येतदुक्तम्; एतच्च व्याचचक्षिरे **वार्तिककारमिश्राः**। [१]**प्रभाकरेण** तूपेक्षितम्।

पुनः परामर्शपक्षमवलम्ब्याह— **यदापीति**। यत्स्तूयते तद्विधीयत इति न्यायादित्यर्थः। ततस्तव को लाभ इत्याकाङ्क्षायां लाभं दर्शयितुं विचारमारभते— **सा चेति**। ननु पक्षद्वयस्यापि निर्बीजत्वान्नैतद्विचारणीयमित्याशङ्क्याह— **यदि चेति**। अनाश्रमित्वस्य

### *भाष्यभावप्रकाशिका*

स्तुतेरप्यसंभवादेकवाक्यत्वमत्र न युक्तमिति परिहरति— **सत्यमेतदित्यादिना**। **विध्यन्तरस्यादर्शनादिति**। विधिसंयुक्तवाक्यान्तरकल्पने विहितत्वाभ्युपगमप्रसङ्गादाश्रमान्तराणां स्वपक्षहानात् तत्कल्पनात् संप्रतिपन्नवाक्येषु विधिमात्रकल्पनमेव लघीय इत्यर्थः। इतराश्रमाणां परामर्शेऽपि पारिव्राज्यस्य विधिरङ्गीकरणीयः अविधेयत्वे स्तुत्यसंभवादित्याह— **[यदेति]**.....विचारमाह— **सा च किमिति**।

### *न्यायनिर्णयः*

एकवाक्यताधीरेव कथं, तत्राह— **प्रतीयते चेति**। एकवाक्यत्वसंभवे तद्भेदो न युक्तिमानित्यङ्गीकरोति— **सत्यमिति**। आश्रमाणां पूर्वसिद्धेरभावात् तत्परामर्शेन स्तुतेरयोगादेकवाक्यतैवात्रायुक्तेत्याह— **सतीमिति**। किंच विधियुक्तवाक्यान्तरकल्पनायामाश्रमान्तराणां विहितत्वोपगमप्रसक्त्या स्वपक्षहानात् तत्कल्पनादिहैवाभीष्टे वाक्ये विधिमात्रकल्पना युक्तेत्याह— **विध्यन्तरस्येति**। किंच मुख्यमाश्रमान्तरप्रत्ययं त्यक्त्वा स्तुतिलक्षणयैकवाक्यत्वकल्पनायोगाद् वाक्यभेदेन विधिरेवायमित्याह— **विस्पष्टाच्चेति**। एकवाक्यताज्ञानेऽपि तत्त्यागेनापूर्वार्थविधौ दृष्टान्तमाह— **धारणवदिति**। महापितृयज्ञे दिष्टंगताग्निहोत्रे च श्रुतं वाक्यमुदाहरति— **अधस्तादिति**। उदाहरणव्याख्योपयोगित्वेन वाक्यस्याभीष्टमर्थमाह— **अत्रेति**। प्रकृते कर्मविशेषे स्रुचि प्रक्षिप्तं हविराहनीयं प्रति यदा नीयते तदा पित्र्ये होमे तस्य हविषोऽधस्तात् समिधं धारयन्ननुद्रवेदित्यधोधारणस्य विहितत्वादुपरि हीति तच्छेषानुवादतया तदेकवाक्यत्व-सिद्धावुपरिष्टात्समिद्धारणस्यापूर्वत्वाद्दैवे होमे वाक्यभेदं कृत्वा तद्विधीयत इत्यर्थः। उक्तेऽर्थे तार्तीयं सूत्रमुदाहरति— **तथेति**। 'उपरि हि देवेभ्यो धारयती' त्यत्रोपरिधारणं विधीयते न वेति संदेहे धारयतीति वर्तमानापदेशादुपरि हीति हिशब्दश्रुतेश्चोपरि समिधः प्राप्तेर्हविषश्चाभ्यर्हितद्रव्यत्वेन येन केनाच्छादनप्राप्तौ 'स्रुग्दण्डे समिधमुपसंगृह्यानुद्रवती'ति वाक्यान्तरप्राप्तसमिन्नियमनादयमनुवादो न विधिरिति प्राप्ते 'स्रुग्दण्डे समिधमुपसंगृह्ये'ति हविषः प्राग्देशे समिद्धारणस्य प्राप्तत्वेऽपि तस्मादुपरि तद्धारणस्याप्राप्तेर्भङ्क्त्वा हिशब्दं पञ्चमलकारेण विधिरेवायमित्याह— **विधिस्त्विति**। दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह— **तद्वदिति**। परामर्शपक्षमेवावलम्ब्याश्रमाणां परामर्शेऽपि पारिव्राज्यस्य विधिरेष्टव्योऽन्यथा स्तुत्ययोगादित्याह— **यदेति**। ब्रह्मसंस्थताया 'यत्स्तूयते तद्विधीयत' इति न्यायाद् विधेयत्वेऽपि पारिव्राज्यस्य किं स्यादित्याशङ्क्य तदर्थं विचारमवतारयति— **सा चेति**। पक्षद्वयस्य निर्बीजत्वान्नेदं विचार्यमित्याशङ्क्य

१. अस्य सूत्रस्य शाबरभाष्यं न विद्यते। तथापि वृत्त्यन्तरकारैः सर्वैः व्याख्यातत्वात् कुमारिलभट्टपादैरपि तत् व्याख्यातम्। प्रभाकरेण तु न व्याख्यातम्।

**ब्रह्मचार्यन्तेष्वाश्रमेषु परामृश्यमानेषु परिव्राजकोऽपि परामृष्टस्ततश्चतुर्णामप्याश्रमाणां परामृष्टत्वाविशेषादना- श्रमित्वानुपपत्तेश्च यः कश्चिच्चतुर्ष्वाश्रमेषु ब्रह्मसंस्थो भविष्यति। अथ न परामृष्टस्ततः परिशिष्यमाणः परिव्राडेव ब्रह्मसंस्थ इति सेत्स्यति। तत्र तपःशब्देन वैखानसग्राहिणा परामृष्टः परिव्राडपीति केचित्। तदयुक्तम्। न हि सत्यां गतौ वानप्रस्थविशेषणेन परिव्राजको ग्रहणमर्हति। यथाऽत्र ब्रह्मचारिगृहमेधिनावसाधारणेनैव स्वेन स्वेन विशेषणेन विशेषितावेवं भिक्षुवैखानसावपीति युक्तम्। तपश्चासाधारणो धर्मो वानप्रस्थानां कायक्लेशप्रधानत्वात्। तपःशब्दस्य तत्र रूढेः। भिक्षोस्तु धर्म इन्द्रियसंयमादिलक्षणो नैव तपःशब्देनाभिलप्यते[१]। चतुष्ट्वेन च प्रसिद्धा आश्रमास्त्रित्वेन परामृश्यन्त इत्यन्याय्यम्। अपि च भेदव्यपदेशोऽत्र भवति-'त्रय एते**

### *प्रकटार्थविवरणम्*

निन्द्यमानत्वेन ब्रह्मसंस्थस्यानाश्रमित्वानुपपत्तेश्चेत्यर्थः। पक्षद्वयसंभावनायां विचारारम्भमुक्त्वा पूर्वपक्षमाह— **तत्र तपःशब्देनेति**। परिव्राजकस्यापि यमनियमादितपःसंभवादित्यर्थः। सिद्धान्ती दूषयति— **तदयुक्तमिति**। एकेनैव शब्देनोभयग्रहणमगतिकगतिन्यायेनाङ्गीक्रियते, [२]यथोद्भिज्जशब्देन स्वेदजस्य। न तु सत्यां गतौ, अनेकशक्तिकल्पनप्रसङ्गादित्यर्थः। किं तर्हि युक्तमित्याशङ्क्याह— **यथाऽत्रेति**। दानाध्ययनादीनां कथंचिदाश्रमान्तरसाधारण्येऽपि प्राधान्येनासाधारणसंबन्धमाश्रित्यैकैकेन धर्मकलापेनैकैक एवाश्रमः परामृश्यते। तथा भिक्षोर्ब्रह्मसंस्थताप्राधान्यात्, वानप्रस्थस्य च तपःप्राधान्यात्, कथंचित्तयोरितराश्रमसाधारण्येऽपि तपःशब्देन वानप्रस्थस्य ग्रहणम्, ब्रह्मसंस्थशब्देन च परिव्राजकस्य। तत्र च ब्रह्मसंस्थता सहैवाश्रयेण पारिव्राज्येन विधीयते, स्तुतिसामर्थ्यादिति भावः। किंच तपःशब्दस्य कृच्छ्रादौ रूढत्वात् अन्यत्र चारूढत्वात् तेन वानप्रस्थ एव परामृश्यत इत्याह— **तपश्चासाधारण इति**। प्रसिद्धसंख्यापह्नवप्रसङ्गादपि न पूर्वं परिव्राट् परामृष्ट इत्याह— **चतुष्ट्वेन चेति**। किंच पृथगुपदेशसामर्थ्यादपि प्रकृताश्रमत्रयविलक्षणो ब्रह्मसंस्थ इत्याह— **अपि चेति**।

### *भाष्यभावप्रकाशिका*

विचारप्रयोजनमाह— **यदि चेति**। ननु ब्रह्मसंस्थोऽनाश्रमी कस्मान्न भवेदिति तत्राह— **अनाश्रमित्वेति**। पूर्वपक्षमाह— **तत्र तप इति**। असाधारणधर्मैराश्रमाणामेकैकशो वक्तुमुपक्रान्तत्वादुपक्रमानुसारेण च परिसमापनस्योचितत्वात् तपश्शब्देनोभयग्रहणमयुक्तमिति परिहरति— **तदयुक्तमिति**। कस्तर्हि तपश्शब्देन निर्दिश्यत इति, तत्राह— **तपश्चेति**। तथापि साधारणस्तपश्शब्द इत्यत आह— **तपश्शब्दस्येति**। परिव्राजकधर्मेऽपि तपश्शब्दः प्रयुज्यत इत्यत आह— **भिक्षोरिति**। प्रसिद्धसंख्याभेदेषु संख्यान्तराभि- धानमप्यनुचितमित्याह— **चतुष्ट्वेन चेति**। **अपि च[भेद]व्यपदेशोऽत्रेति**। 'सर्व एते पुण्यलोका' इत्यत्र किं भिक्षुरपि परामृश्यते,

### *न्यायनिर्णयः*

परामर्शश्रुतौ परिव्राजकोऽपि परामृष्टो न वेति विकल्प्याद्यमनूद्य प्रथमपक्षप्राप्तिमाह— **यदीति**। परामृष्टत्वा- विशेषाच्चतुर्ष्वाश्रमेषु यः कश्चिद् ब्रह्मसंस्थो भविष्यतीति संबन्धः। ब्रह्मसंस्थोऽनाश्रमी कस्मान्न स्यादित्याशङ्क्यानाश्रमित्वस्य निन्द्यमानत्वादित्याह— **अनाश्रमित्वेति**। द्वितीयमनूद्य द्वितीयपक्षप्राप्तिमाह— **अथेति**। पक्षयोः संभावनया विचारारम्भमुक्त्वा पूर्वपक्षमाह— **तत्रेति**। परिव्राजकस्यापि यमनियमादितपःसंभवादित्यर्थः। आश्रमाणामेकैकशोऽसाधारणधर्मरूपदर्शनायोपक्रमात् तदनुसारेण चोपसंहारस्य युक्तत्वात् तपःशब्देन नोभयग्रहणमिति दूषयति— **तदिति**। किं तर्हि युक्तम्, तदाह— **यथेति**। कस्तर्हि तपःशब्दार्थः, तत्राह— **तपश्चेति**। तेषां तत्प्रधानत्वेऽपि तपःशब्दस्य साधारण्यं किं न स्यात्, तत्राह— **तपःशब्दस्येति**। तस्य कृच्छ्रादौ रूढेरन्यत्र तदभावात् तेन वानप्रस्थ एव परामृश्यत इत्यर्थः। कथं तर्हि परिव्राजकधर्मेऽपि तपःशब्दप्रयोगः, तत्राह— **भिक्षोस्त्विति**। इतश्च पूर्वं परिव्राजको नोक्त इत्याह— **चतुष्ट्वेनेति**। न हि प्रसिद्धसंख्याभेदेषु संख्यान्तरोक्तिर्युक्तेत्यर्थः। पृथगुक्तिसामर्थ्यादपि प्रकृताश्रमत्रयातिरिक्तो ब्रह्मसंस्थ इत्याह— **अपि चेति**। भेदव्यपदेशेऽपि कथं पृथक्त्वम्, तत्राह—

---

१. 'इन्द्रियसंयमादिर्लक्षणयैव तपःशब्देनाभिलप्यते' इति पा.। २. द्र.ब्र.सू. ३-१-२१।

**पुण्यलोकभाज एकोऽमृतत्वभाक्' इति। पृथक्त्वे चैष भेदव्यपदेशोऽवकल्पते। न ह्येवं भवति– 'देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, अन्यतरस्त्वनयोर्महाप्रज्ञ' इति। भवति त्वेवं 'देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, विष्णुमित्रस्तु महाप्रज्ञ' इति। तस्मात् पूर्वे त्रय आश्रमिणः पुण्यलोकभाजः, परिशिष्यमाणः परिव्राडेवामृतत्वभाक्।**

**कथं पुनर्ब्रह्मसंस्थशब्दो योगात् प्रवर्तमानः सर्वत्र संभवन् परिव्राजक एवावतिष्ठेत? रूढ्यभ्युपगमे चाश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इति। अत्रोच्यते– ब्रह्मसंस्थ इति हि ब्रह्मणि परिसमाप्तिर-**

***प्रकटार्थविवरणम्***

यदत्र **भास्करो** व्याजहार— 'अवस्थान्तरापेक्षया व्यपदेशभेदो न विरुध्यते; केवलकर्मिणः पुण्यलोका एव ब्रह्मसंस्था अमृतत्वभागिन इति। दृष्टान्तेऽपि पूर्वं तौ मन्दप्रज्ञावभूताम्, इदानीमन्यतरो महाप्राज्ञो वर्तत इत्यविरोधः'। तत्रैतद्वक्तव्यम्— किमवस्थान्तरेऽपि पूर्वोपात्तकर्मनिष्ठतापरिहारेण ब्रह्मसंस्थतोच्यते, किं वा नेति। प्रथमे त्वयाऽपि ब्रह्मसंस्थः परिव्राडेवोक्तः; चरमस्य चासंभवं वक्ष्यति; कर्मनिष्ठतायां सत्यामेव ब्रह्मनिष्ठताया मुख्याया असंभवात्; न हि मन्दप्रज्ञत्वे सत्येव महाप्रज्ञत्वमपि संभवति। भगवताऽपि— "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते" इति प्रागेव ब्रह्मनिष्ठताया कर्मानुष्ठानत्वमुक्त्वा— "योगारूढस्य तस्यैव शमः कारणमुच्यते" इति ब्रह्मनिष्ठस्य कर्मणः उपशम उक्तः। तथा— "अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा। ततः परं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः।।"इति।

यच्चान्यज्जगौ— 'ब्रह्मसंस्थशब्दोऽयं यौगिकः; सन्निहितालम्बनत्वं च यौगिके प्रसिद्धम्। यथा "आग्नेय्याऽग्नीध्रमुपतिष्ठते" इति प्रकृतेनै[प्रकृतौ]वाग्नेयी [1]गृह्यते। तत्र यदि तपःशब्देन परिव्राजकः सन्निधापितः, तदा तस्य नामृतत्वाशा' इति। तत्र तावन्न यौगिकस्य सन्निहितावलम्बनत्वनियमः "वाजिभ्यो वाजिनम्" इत्यत्र वाजमन्नं विद्यते येषां ते वाजिन इति यौगिकत्वप्रतिभासेऽपि सन्निहितालम्बनानभ्युपगमात्; भूमाधिकरणे च भूमशब्दस्य यौगिकत्वेऽपि प्रकृतालम्बित्वाभ्युपगमात्; अतोऽकिञ्चित्करं यौगिकत्वम्, प्रकृतसंभव एव तु तत्र प्रयोजकः। तथापि ब्रह्मसंस्थताक्रियायोगात् सर्वत्रैव पाचकादिशब्दवत् प्रवर्तमानः कथं परिव्राजक एवावतिष्ठेत? न कथंचिदित्याह— **कथं पुनरिति**। यद्यश्वकर्णादिशब्दवद्रूढ एवायं परिव्राजकेऽभ्युपगम्येत, तत्राह— **रूढ्यभ्युपगमे चेति**। प्रथमं यौगिकत्वमभ्युपगम्य परिहरति— **अत्रोच्यत इति**। ब्रह्मेत्योङ्कारोऽभिधीयते, प्रकरणात्। तस्मिन् संस्था सम्यगवस्थानं नाम तदभिधेयब्रह्मानुध्यानम्, तज्जपः, स्नानाचमनादिव्यापारोऽपि तेनैव, नान्येन मन्त्रादिना व्यापारवत्त्वं तन्निष्ठत्वमुच्यते। तच्च

***भाष्यभावप्रकाशिका***

किं वा तद्वर्जं त्रय एव, न तावत्तपश्शब्देन भिक्षोरपि संग्रहणे तद्वर्जनं युक्तम्, एत इति प्रकृतानां कार्त्स्न्येन परामृश्यमानत्वात्। अथ सोऽपि परामृश्यते, तर्हि भिक्षोर्ब्रह्मसंस्थताऽभावादमृतत्वमेवेति न पुण्यलोकत्वममृतत्वपुण्यलोकत्वयोर्विरोधादित्यर्थः।

पूर्वपक्षी स्वाभिप्रायमाह— **कथं पुनरिति**। योगात्प्रवर्तमानोऽपि परिव्राजक एव वर्तते, नान्यत्रेत्याह— **ब्रह्मसंस्थ इति**।

***न्यायनिर्णयः***

**पृथक्त्वे चेति**। 'सर्व एते पुण्यलोका' इत्यत्र भिक्षुरपि परामृष्टश्चेत् तस्याब्रह्मसंस्थत्वाभावादमृतत्वमेवेति न पुण्यलोकत्वं विरोधात्। न च तपःशब्देन भिक्षोरपि ग्रहे तद्वर्जनं युक्तम्, 'एत' इति प्रकृतानां कार्त्स्न्येन परामर्शात्। तस्माद्भेदोक्त्या पृथक्त्वमेवेत्यर्थः। अपृथक्त्वे भेदोक्तिरयुक्तेत्यत्र दृष्टान्तमाह— **न हीति**। पृथक्त्वे तु तदुक्तिर्युक्तेत्याह— **भवतीति**। न चावस्थाभेदापेक्षया दृष्टान्तदार्ष्टान्तिकयोः सिद्धिरपृथक्त्वेऽपीति वाच्यम्। सति कर्मित्वे, मन्दप्रज्ञत्वे च ब्रह्मसंस्थताया, महाप्रज्ञत्वस्य चायोगात् पृथक्त्वध्रौव्यादिति मत्वोपसंहरति— **तस्मादिति**।

किमेष ब्रह्मसंस्थशब्दो यौगिको रूढो वेति विकल्प्याद्ये न परिव्राजकमात्रविषयतेति शङ्कते— **कथमिति**। द्वितीयं निराह— **रूढीति**। यौगिकत्वमुपेत्य परिहरति— **अत्रेति**। यथोक्तं ब्रह्मसंस्थत्वमन्येषामपि सिध्यतीत्याशङ्क्याह—

१. ज्योतिष्टोमे काश्चिदाग्नेय्य ऋचः पठिताः। तत्रैव 'आग्नेय्याऽग्नीध्रमुपतिष्ठते' इत्यपि श्रुतम्। तत्र आग्नेयीति सामान्यशब्दस्य प्रकृताग्नेयीपरत्वं निर्णीतम्। द्र.पू.मी. ३-२-७।

**नन्यव्यापारतारूपं तन्निष्ठत्वमभिधीयते। तच्च त्रयाणामाश्रमाणां न संभवति। स्वाश्रमविहितकर्माननुष्ठाने प्रत्यवायश्रवणात्। परिव्राजकस्य तु सर्वकर्मसंन्यासात् प्रत्यवायो न संभवत्यननुष्ठाननिमित्तः। शमदमादिस्तु तदीयो धर्मो ब्रह्मसंस्थताया उपोद्बलको न विरोधी। ब्रह्मनिष्ठत्वमेव हि तस्य शमदमाद्युपबृंहितं स्वाश्रमविहितं**

***प्रकटार्थविवरणम्***

गृहस्थादीनां न संभाव्यते, गायत्रीजपाद्यकरणे प्रत्यवायश्रवणात्— "अकुर्वन् विहितं कर्म" इति। "श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्। स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।।" इति भगवद्वचनम्। अतो यौगिकोऽप्ययं ब्रह्मनिष्ठे भिक्षौ वर्तत इत्यर्थः।

ननु भिक्षोरपि सन्ध्यावन्दनाकरणे प्रत्यवायः स्मर्यते हारीते— "चत्वारोऽप्याश्रमा एते सन्ध्योपासनवर्जिताः। ब्राह्मण्यादेव हीयन्ते यद्यप्युग्रतपोरताः।।"इति। बोधायनोऽपि स्मरति स्म— "अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम्। सन्ध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः।। सायं प्रातः सदा सन्ध्यां ये विप्रा नो उपासते। कामं तान् धार्मिको राजा शूद्रकर्मसु योजयेत्।।"इति। तत्राह— **परिव्राजकस्य त्विति**। 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति तैत्तिरीयकश्रुतेः कर्मादिनिन्दापूर्वकं तत्त्यागस्यामृतत्वफलसंबन्धावगमात्, अपूर्वत्वाच्च अमृतत्वकामं प्रति तद्विधाने तात्पर्यावगतौ नित्यनैमित्तिकानामप्यविशेषप्राप्ते परित्यागे का नाम सन्ध्यावन्दनमात्रस्यातिक्षुद्रस्यावस्थानसंभावना? तथा चारुणी श्रुतिः— "अत ऊर्ध्वम् अमन्त्रवदाचरेत् सन्ध्यं समाधावात्मन्याचरेत्" इति। तथाऽऽथर्वणिकाः— "सशिखं वपनं कृत्वा बहिः सूत्रं त्यजेद् बुधः। यदक्षरं परं ब्रह्म तत्सूत्रमिति कल्पयेत्।। धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत्। कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः।। तैस्तु धार्यं बहिःसूत्रं क्रियाङ्गं तद्धि वै स्मृतम्। अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा।। स शिखीत्युच्यते विद्वान् नेतरे केशधारिणः।।" इत्यादिना शिखायज्ञोपवीतादिपरित्यागोपदेशेन सर्वकर्मपरित्यागोऽभिधीयते। काठके— 'सशिखान् केशान्निकृत्य विसृज्य यज्ञोपवीतं भूः स्वाहेत्यप्सु जुहुयात्' इति। तथा वाजसनेयके—'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति वित्तपदोपात्तकर्माङ्गपरित्यागाभिधानेन सर्वकर्मसंन्यास एव दर्शितः। तस्मात् सन्ध्यावन्दनाकरणात्र परमहंसानां प्रत्यवायप्राप्तिः। स्मृतेस्तु सन्ध्यावन्दनादियुक्तपरिव्राजकविशेषविषयत्वादविरोध इति भावः। ननु तस्यापि शमदमादिस्वाश्रमधर्मसद्भावान्न सदा ब्रह्मनिष्ठत्वमेवेत्याशङ्क्याह— **शमदमादिस्त्विति**। रागाद्याक्षिप्तचित्तस्य ब्रह्मसंस्थताया एवासंभवात्तदुपरम इवोल्बणक [उपोद्बलक] एव ब्रह्मसंस्थताया इत्यर्थः। ननु यद्यपि शमदमादिर्निवृत्तिरूपत्वात् ब्रह्मसंस्थताया विरोधी न भवति, तथापि तीर्थयात्रादिस्तद्धर्मो भवेद् विरोधीत्याशङ्क्य, नेत्याह— **ब्रह्मनिष्ठत्वमेव हीति**। तथा च मनुः— "यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः। आत्मज्ञाने शमे च स्यात् वेदाभ्यासे च यत्नवान्।। एतद्धि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः। प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा।।"इति।

तथा कूर्मपुराणे योगिनामधेयं संन्यासिनमधिकृत्योक्तम्—

"न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चितः। निर्ममो निर्भयः शान्तो निर्द्वन्द्वः पर्णभोजनः ।।
शीर्णकौपीनवासाः स्यान्नग्नो वा ध्यानतत्परः। ब्रह्मचारी मिताहारो ग्रामादन्नं समाहरेत् ।।
अध्यात्मरतिरासीत निरपेक्षो निरामिषः[शिषः]। आत्मनैव सहायेन सुखार्थं विचरेदिह ।।

***भाष्यभावप्रकाशिका***

.....हीण्मयमस्तीति तत्राह— **शमदमेति**। तदङ्गत्वादङ्गिविरोधी न भवतीत्यर्थः। तत्र कर्मान्तराभावे प्रमाणमाह— **तथा चेति**।

***न्यायनिर्णयः***

**तच्चेति**। तुल्यं संन्यासिनोऽपि स्वाश्रमकर्माननुष्ठाने प्रत्यवायित्वम्, तत् कुतोऽस्य ब्रह्मसंस्थत्वं, तत्राह— **परिव्राजकस्येति**। तस्यापि शमदमाद्यनुष्ठेयमिति कुतो ब्रह्मसंस्थतेत्याशङ्क्याह— **शमेति**। तत्र हेतुः— **ब्रह्मेति**। शमादेर्ब्रह्मसंस्थताङ्गत्वान्न तद्विरोधितेत्यर्थः।

**कर्म, यज्ञादीनि चेतरेषाम्। तद्व्यतिक्रमे च तस्य प्रत्यवायः। तथा च 'न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्' (नारा. ७८), 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः' (मु.उ. ३।२।६ नारा. १२।३ कैवल्य. ३) इत्याद्याः श्रुतयः, स्मृतयश्च– 'तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः' (भ.गी. ५।१७) इत्याद्या ब्रह्मसंस्थस्य कर्माभावं दर्शयन्ति।**

### *प्रकटार्थविवरणम्*

नाभिनन्देत मरणं नाभिनन्देत जीवितम्। कालमेव प्रतीक्षेत निर्देशं भृतको यथा ।।''इति।

भागवते चैकादशस्कन्धे—

''यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतावरम्। तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ।।
शौचमाचमनं स्नानं न तु चोदनया चरेत्। अन्यांश्च नियमान् ज्ञानी यथाऽहं लीलयेश्वरः ।।
न हि तस्य विकल्पाख्या या च मद्वीक्षया हता। आ देहान्तात् क्वचित्ख्यातिः ततः संपद्यते मया ।।''इति।

परिपक्वज्ञानस्य संन्यासिनो वृत्तिमुक्त्वा विविदिषुविषयमुक्तम्—

''दुःखोदर्केषु पापेषु जातनिर्वेद आत्मवान्। अजिज्ञासितमद्धर्मा गुरुं मुनिमुपव्रजेत् ।।
तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः। यावद् ब्रह्म विजानाति मामेव गुरुमादृतः ।।''इति।

अतः सूक्तं परमहंसस्य विदुषः शमाद्युपबृंहितं ब्रह्मनिष्ठत्वमेवाश्रमकर्मेति; तदकरणे च प्रत्यवायः स्यात्। उक्तं हि—

''त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम्। श्रुत्या विधीयते यस्मात् तत्त्यागी पतितो भवेत् ।।''इति।

सकलकर्मप्रहाणपूर्वकं ब्रह्मसंस्थत्वमेव स्वाश्रमधर्म इत्यत्र प्रमाणमाह— **तथा चेति**। न्यास इति संन्यासः। ''कर्मणां बन्धहेतूनां कृतानामकृतैः सह। कुशलाकुशलानां च प्रहाणं न्यास उच्यते।।''इति स्मृतेः। संन्यासो ब्रह्मेति स्तूयते। कथम्? ब्रह्मा हि परः प्रसिद्धः श्रुतिस्मृतिषु; संन्यासश्च परं ब्रह्म ज्ञानप्राधान्यात्; परो हि यस्मात्संन्यासो ब्रह्मा। तत्परत्वं प्रकथयति— तानि वै प्रसिद्धानि गार्हस्थ्यादीन्येतान्यपराणि तपांसि ज्ञानहीनतयाऽपरफलहेतुत्वात्; न्यास एवैभ्योऽतिरिक्तः श्रेष्ठो भवति, ब्रह्मसंस्थताया अमृतत्वहेतुत्वादित्यर्थः।

यत्तु **भास्करेण** व्याख्यायि— न्यासशब्देन हिरण्यगर्भो भण्यत इति, तदुक्तस्मृतिविरुद्धम्। अन्वयोऽपि च न सङ्गच्छते।

### *न्यायनिर्णयः*

गृहस्थादीनामपि ब्रह्मसंस्थत्वाविरोध्येव स्वाश्रमविहितं कर्मेत्याशङ्क्याह— **यज्ञेति**। तानि हि रागाद्याक्षिप्तानि; न च रागादिमतां ब्रह्मसंस्थतेति भावः। शमदमाद्युपेतं ब्रह्मनिष्ठत्वमेव संन्यासिनः स्वाश्रमकर्मेत्युक्तम्; तदकरणे तस्य प्रत्यवायित्वम् 'त्वंपदार्थविवेकायैवे'ति स्मृतेरित्याह— **तदिति**। चकारादितरेषामपि तत्तदाश्रमकर्मातिक्रमे प्रत्यवायित्वम् 'अकुर्वन्विहितं कर्मे'त्यादिस्मृतेरिति सूच्यते। संन्यासिनः सर्वकर्मत्यागेन ब्रह्मसंस्थत्वमेव स्वाश्रमकर्मेत्यत्र मानमाह— **तथा चेति**। न्यासः संन्यासो ब्रह्मेति स्तूयते। तत्र हेतुमाह— **ब्रह्मा हीति**। हिरण्यगर्भो हि श्रुतिस्मृतिषु परोऽभीष्टः, तथापि कथं संन्यासस्तदात्मकः, तत्राह— **परो हीति**। तस्य परत्वे हेतुः— **ब्रह्मेति**। तद्धीहेतुत्वात् परो यस्मादेष संन्यासस्तस्माद् ब्रह्मेत्यर्थः। तस्य परत्वं स्फोरयति— **तानीति**। पूर्वोक्तानि सत्यादीनि प्रसिद्धानि तानि ज्ञानहीनान्यवराण्येतानि तपांसि निकृष्टत्वहेतुत्वात्, न्यास एवैभ्योऽतिरिक्तः श्रेष्ठो ब्रह्मसंस्थताद्वाराऽमृतत्वहेतुत्वादित्यर्थः। तस्य कर्मान्तराभावे वाक्यान्तरमाह— **वेदान्तेति**। शुद्धबुद्धयो विरक्ताः संन्यासयोगाद् वेदान्तविज्ञानेन सुनिश्चितार्था मुच्यन्त इति वचनात् कर्मान्तराभावः संन्यासिनां भातीत्यर्थः। 'न कर्मणा न प्रजये'त्याद्या भूयस्यः श्रुतयोऽत्र सन्तीति वक्तुमादिपदम्। तस्मिन् ब्रह्मणि बुद्धिर्मनो येषां ते तथा, तदेव ब्रह्मात्मा स्वरूपं येषां ते तदात्मानः। तत्रैव निश्चयेन स्थितिमाह— **तन्निष्ठा इति**। विषयान्तरपारवश्यं व्यावर्तयति— **तदिति**। 'यथोक्तान्यपि कर्माणि परिहाये'त्यादिस्मृतिसंग्रहार्थमादिपदम्।

## *प्रकटार्थविवरणम्*

यच्चाभिदधौ— शौचाचमनव्याख्यान[स्नान]भिक्षाटनादि कर्म क्रियते, तद्विरुद्धश्च कर्मसंन्यासः प्रतिज्ञायत इति; तत् प्रतिप्रसवविध्य-परिज्ञानविलसितमेव। निमित्तान्तरादप्राप्तविषयो हि विधिः प्रतिप्रसव उच्यते। यथा ज्वरार्तस्याविशेषेण अन्नपानप्रतिषेधेऽपि औषधं पिबेदिति, तथेहापि संन्यसेदित्यविशेषण सर्वस्वत्यागविधानेन संन्यासे विहिते यत्प्रतिप्रसवविध्युपात्तं शौचादि तत्कथं नोपादीयते। तथा च मैत्रायणीब्राह्मणे—'अथ परिव्राडेकशाटीपरिवृतो मुण्डोदरपात्र्यरण्यनित्यो भिक्षार्थी ग्रामं प्रविशेत्। असायंप्रदक्षिणेनापि विचिकित्सन् सार्ववर्णिकः भैक्षचरणमभिशस्तपतितवर्जं [अ]यज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीत' इत्युक्तम्। जाबालश्रुतावपि— 'अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षान्नो ब्रह्मभूयाय कल्पत' इति। न चैवमुपवीतादेः प्रतिप्रसवः श्रूयते, प्रत्युत अयज्ञोपवीतीति संन्यासधर्मविधिसमये मैत्रायणश्रुतौ विशेषणादयज्ञोपवीतित्वमेव सिद्धम्। बाष्कलश्रुतावपि—

"कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः। यज्ञं यज्ञोपवीतं च त्यक्त्वाऽमूढश्चरेन्मुनिः।।"इति।

तथा कौषीतकिब्राह्मणे—'सशिखान् केशान्निकृत्य यज्ञोपवीतम्' इत्युपक्रम्य 'किमस्य यज्ञोपवीतं का वाऽस्य शिखा कथं चास्योपस्पर्शनमिति तान् होवाचेदमेवास्य यज्ञोपवीतं यदात्मध्यानं विद्या शिखा नीरैः सर्वत्रावस्थितैः कार्यं निर्वर्तयन्ति' इति। न चैतेषां वाक्यानां सर्वत्रासिद्धिमात्रेण प्रहाणम्। न हि सर्वे सर्वशाखाविदः, तत्तच्छाखाध्येतॄणां देशविशेषेषु बहुलमुपलम्भात्, घटिकास्थानस्य चानियतत्वात्। अन्यथा शाबरभाष्योदाहृतसर्ववाक्यानां सांप्रतमधीयमानशाखास्वनुपलम्भात् प्रहाणप्रसङ्गः। यदि तत्र शिष्टपरिग्रहादाश्वासः, तर्हि किं व्यासादयः शिष्टा न भवन्ति? तथा च व्यासः—

"यज्ञोपवीतं कर्माङ्गं वदन्त्युत्तमबुद्धयः। उपकुर्वाणकान् पूर्वं यतो लोके न दृश्यते।।
यावत्कर्माणि कुरुते तावदस्यैव धारणम्। यस्मादस्य परित्यागः क्रियते कर्मभिः सह।।"इति।

नारदश्च—

"कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः। तैस्तु धार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम्।।"इति।

'मुण्डोऽममोऽपरिग्रहः' इति वसिष्ठः। विश्वामित्रोऽपि—'अथापरं परिव्राजकलिङ्गं सर्वतः परिमोक्षमेके सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्य आत्मानमन्विच्छेत् शिखायज्ञोपवीतकमण्डलुकपालानां च त्यागी तस्याप्यरण्यनित्यत्वं मुण्डः काषायपरिहितः कन्थाध्यानयोगपरो नित्यम्' इति। शौनकप्रोक्ते च संन्यासविधौ—'अथान्यः परिव्राजको मुण्डोऽपरिग्रहः काषायवासा वाङ्मनःकर्मदण्डो भूतानामद्रोह्युदरपात्रो भिक्षाशीलः सर्ववर्णेष्वभिशस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः क्षमी तुल्यनिन्दास्तुतिः समो भूतेषु मौनी' इत्यादि। बोधायने च— 'अत ऊर्ध्वं यज्ञोपवीतमात्राच्छादनं यष्टयः शिक्यं जलपवित्रं कमण्डलुं पात्रमित्येतानि वर्जयित्वाऽथ दण्डमादत्ते— सखा मां गोपाय' इति। तस्माद्यथोक्तश्रुत्यर्थस्यानेकस्मृतिषु परिग्रहदर्शनात् नानाश्वासः।

यच्च जाबालश्रुतौ पूर्वमुपवीतत्यागविधानाभावात् 'अयज्ञोपवीती कथं ब्राह्मण' इत्याकस्मिकप्रश्नानुपपत्तेः प्रक्षिप्तमेवेदं वचनं केनचिद्दुर्विदग्धेन इति, तत्पूर्वापरापर्यालोचनाविजृम्भितम्। पूर्वमेव हि सर्वस्वत्यागात्मकसंन्यासविधिना दारादिवदुपवीतस्यापि त्यागसिद्धौ कथमाकस्मिकप्रश्नप्रसङ्ग इति। न चाचमनादिसिद्धये यज्ञोपवीतापेक्षा, स्त्रीशूद्रयोर्विनाऽपि यज्ञोपवीतेन आचमनदर्शनात्। यच्च स्मृतिवचनम् 'नवमुपादायाश्रमं प्रविशेत्' इत्युदाहृतम्, तत्रापि प्रविश्योपाददीतेत्यश्रवणात्, निहीनाधिकारिगोचरवृत्त्यन्तरविषयत्वाद्वा न विरोधः। यच्च 'सशिखं वपनम्' इत्यस्य यथा शिखा परिशिष्यत इति व्याख्यानम्, तदग्नेरिव शिखा नान्येति वाक्यशेषविरुद्धम्। गोवधप्रायश्चित्तादौ च प्रसिद्धार्थं सशिखं वपनपदम्। न च अविशेषप्रवृत्तस्य छन्दोगब्रह्मचारिविषयत्वकल्पनं न्याय्यम्। यच्च त्रिदण्डालाभविषयमेकदण्डमिति, तत्— "त्रिदण्डस्य परित्याग एकदण्डस्य धारणम्। एकस्मिन्दृश्यते वाक्ये तस्मादस्य प्रधानता।।"

**तस्मात् परिव्राजकस्याश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इत्येषोऽपि दोषो नावतरति। तदेवं परामर्शेऽपीतरेषामाश्रमाणां पारिव्राज्यं तावद् ब्रह्मसंस्थतालक्षणं लभ्यतैव। अनपेक्ष्यैव जाबालश्रुतिमाश्रमान्तरविधायिनीमयमाचार्येण विचारः प्रवर्तितः। विद्यत एव त्वाश्रमान्तरविधिश्रुतिः प्रत्यक्षा– 'ब्रह्मचर्यं परिसमाप्य गृही भवेद् गृही भूत्वा वनी भवेद् वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा' (जाबा. ४) इति। न चेयं श्रुतिरनधिकृतविषया शक्या वक्तुम्। अविशेषश्रवणात्। पृथग्विधानाच्चानधिकृतानाम् 'अथ पुनरेव व्रती वाऽव्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा' (जाबा. ४) इत्यादिना।**

## *प्रकटार्थविवरणम्*

इति व्यासवचनविरुद्धम्; 'यावन्न स्युस्त्रयो दण्डास्तावदेकेन पर्यटेत्' इति(। न) च नष्टत्रिदण्डविषयम्। 'त्रिदण्डेन यतिश्चैव' इति तत्स्मृत्युक्तत्रिदण्डप्रशंसार्थम्, यथा उदितहोमिनामनुदितहोमो निन्द्यः। अन्यथा— "चतुर्विधा भिक्षवस्तु कुटीचबहूदकौ। हंसः परमहंसश्च यो यः पश्चात् स उत्तमः।।" इत्यादिविरोधप्रसङ्गात्। यच्च सर्वकर्मसंन्यासवचनं काम्यसकलकर्मसंन्यासविषयमिति, तदसत्; विरक्तस्य संन्यासेऽधिकारात्, काम्यत्यागस्य प्रागेव सिद्धत्वात् संन्यासविधिवैयर्थ्यात्— "परमात्मनि यो रक्तो विरक्तः[क्तोऽ] परमात्मनि। सर्वेषां नापि [सर्वेषणावि]निर्मुक्तः स भैक्षं भोक्तुमर्हति।।" [इति] स्मरणात्, नित्याग्निहोत्राद्यनुष्ठानप्रसङ्गाच्च। यच्च भगवद्वचनम्—"काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः" इति, तद् गृहस्थविषयम्, अर्जुनस्य स्वकर्मकरणे भगवतस्तात्पर्यदर्शनात्। तस्मात् **केशव**प्रभृतीनां स्वयंकक्षीकृतपक्षसंरक्षणाय प्रक्षिप्तपरापदेशबहुवाक्यानां परमहंसप्रद्वेषानलज्वलितकलेबरतयाऽतिव्याकुलतया मत्सरमुत्सृज्य सर्वकर्मसंन्यासपूर्विका ब्रह्मसंस्थताऽऽस्थेया स्वस्थैः, बहु चात्र वक्तव्यमस्ति; ग्रन्थभूयस्त्वभयात् तूपरम्यते।

इदानीं ब्रह्मसंस्थशब्दस्य परिव्राजके रूढत्वमभ्युपगम्योपसंहरति— **तस्मात्परिव्राजकस्येति**। यथा गृहस्थशब्दस्य यौगिकत्वे सत्यतिप्रसङ्गपरिहारायाश्रमिविशेषरूढ्यभ्युपगमेऽपि न गार्हस्थ्यमात्रात् पुण्यलोकावाप्तिः, किंतु यथोक्ताग्निहोत्रादिकरणात्; तथा परिव्राजकस्यापि प्रणवब्रह्मसंस्थस्य ब्रह्मलोकावाप्तिरापेक्षिकममृतत्वम्; वाक्यार्थसाक्षात्कारवतस्तु मुख्यमेवामृतत्वमिति भावः। एवमेकदेशिमतं प्रत्याख्याय मूलप्रमेयं निगमयति— **तदेवमिति**। विधिश्रुतिं करेण विधाय शिष्यबुद्धिविकासायानुवादवाक्यमेवावलम्ब्यायं विचारः कृतः। परमार्थतस्तु नानेन कृत्यम्, स्पष्टविधिसद्भावादित्याह— **अनपेक्ष्य चेति**। 'यदि वेतरथा' इति ब्रह्मचर्यस्थितस्यैव पारिव्राज्येच्छा गार्हस्थ्ये च वैराग्यमित्यर्थः। यच्चोक्तमन्धपङ्ग्वादिविषयः संन्यासो भविष्यतीति, तत्राह— **न चेयं श्रुतिरिति**। अविशेषप्रवृत्ता श्रुतिर्विशेषे स्थाप्यमाना बाधिता स्यादित्यर्थः। व्रती गोदानादिवेदव्रतवान्, अव्रती तद्विपरीतः; स्नातकः यो गुरुकुलनिवृत्तिरूपस्नानानन्तरमपि गुरुशुश्रूषादि करोति; तद्विपरीतोऽस्नातकः; उत्सन्नाग्निः मृतभार्यः, पूर्वमेवाग्निपरिग्रहरहितो वा प्रव्रजेदिति कर्माधिकारप्रतिपत्तिहीनानामपि संन्यासस्य पृथग्विधानान्न पूर्ववाक्यमनधिकृतविषयमित्यर्थः। प्रकरणप्रमाणात् श्रवणादिद्वारेण

## *न्यायनिर्णयः*

उक्तश्रुतिस्मृतितात्पर्यमाह— **ब्रह्मेति**। ब्रह्मसंस्थशब्दस्य परिव्राजके रूढिमुपेत्योपसंहरति— **तस्मादिति**। यथा गृहस्थशब्दस्य यौगिकत्वे सत्यतिप्रसङ्गपरिहारायाश्रमविशेषे रूढत्वेऽपि न गार्हस्थ्यमात्रात् पुण्यलोकाप्तिः, किंतु यथोक्ताग्निहोत्रादिकरणात्। तथा परिव्राजकस्यापि ब्रह्मसंस्थस्य वाक्यार्थसाक्षात्कारद्वारैव मुख्यममृतत्वमिति कुतो ज्ञानानर्थक्यमित्यर्थः। एवमेकदेशिमतं प्रत्याख्याय ब्रह्मसंस्थशब्दस्य परिव्राजकविषयत्वे स्थिते संस्तवसामर्थ्याद् ब्रह्मसंस्थत्वं पारिव्राज्यमितरपरामर्शेऽपि विधेयमिति परमप्रकृतमुपसंहरति— **तदेवमिति**। शिष्यबुद्धिविकासार्थं परामर्शश्रुतिमाश्रित्य कृत्वाचिन्तया विचारं कृत्वा कृत्वाचिन्तामुद्घाटयति— **अनपेक्ष्येति। यदि वेतरथेति**। ब्रह्मचर्ये स्थितस्यैव पारिव्राज्येच्छा गार्हस्थ्ये च वैराग्यं दैवयोगाद् यदि स्यादित्यर्थः। यत्त्वनधिकृतान्धादिविषयः संन्यासः स्यादिति, तत्राह— **न चेति**। अविशेषश्रुतिरसति बाधके न विशेषे संकोचमर्हतीत्यर्थः। इतश्चेदं वाक्यं नानधिकृतविषयमित्याह— **पृथगिति**। अनधिकृतानां संन्यासस्येति शेषः। व्रती गोदानादिवेदव्रतवान्; अव्रती तद्विपरीतः; स्नातको गुरुकुलनिवृत्तिरूपस्नानानन्तरमपि गुरुशुश्रूषापरः; तद्विपरीतोऽस्नातकः; उत्सन्नाग्निर्मृतभार्यः, पूर्वमेवाग्निपरिग्रहरहितो वा; परिव्रजेदिति **कर्माधिकारप्रतिपत्तिहीनानामपि**

**ब्रह्मज्ञानपरिपाकाङ्गत्वाच्च पारिव्राज्यस्य नानधिकृतविषयत्वम्। तच्च दर्शयति–'अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति' (जाबा. ५) इति। तस्मात् सिद्धा ऊर्ध्वरितसामाश्रमाः[१]। सिद्धं चोर्ध्वरितःसु विधानाद् विद्यायाः स्वातन्त्र्यमिति।।२०।।**

।।इति द्वितीयं परामर्शाधिकरणम्।।

३।।स्तुतिमात्राधिकरणम्।।सू.२१-२२।।

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्।।२१।।

**'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' (छा.उ. १।१।३) 'इयमेवर्गग्निः साम'**

### *शारीरकन्यायसंग्रहः*

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्।।२१।। भावशब्दाच्च।।२२।।** उद्गीथादिपदार्थेषूत्कृष्टपदार्थाध्यासप्रत्ययाः स्तुतयः विधिपदरहितत्वे सति विहिततया स्तुत्यपेक्षेष्वङ्गेषु उत्कृष्टपदार्थाध्यासप्रत्ययत्वात्, 'स्वर्गो वै लोक आहवनीयः' इत्यादिप्रत्ययवदिति 'स एष रसानां रसतमः' 'इयमेवर्गग्निः साम' इत्यादिप्रत्ययानां स्तुतित्वे प्राप्ते, नैते प्रत्ययाः स्तुतयः, प्रकरणान्तरत्वे सति विशिष्टफलसंबन्धितयाऽपूर्वत्वात् क्रत्वन्तरवदित्यनुमानेन, स्तुतित्वकल्पनाद्विधिकल्पनमेव युक्तमनुष्ठानफललाभात् इति न्यायोपबृंहितेन विधिरेव दर्शितः।

### *प्रकटार्थविवरणम्*

संन्यासस्य ब्रह्मज्ञानदार्ढ्यार्थत्वादपि श्रवणादिसमर्थस्यैव संन्यासाधिकार इत्याह— **ब्रह्मज्ञानेति**। ब्रह्मभूयाय ब्रह्मभावानुभवायेत्यर्थः। प्रकृतमवान्तरविचारं मूलविचारं चोपसंहरति— **तस्मादिति**। इति द्वितीयं परामर्शाधिकरणम्।।

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्।।** विधिपदशून्यमपि 'त्रयो धर्मस्कन्धाः' इत्यादिवाक्यमपूर्वार्थत्वाद् विधिपरं निर्णीतम्। तेनैव न्यायेन वाक्यान्तरमपि तादृशं निर्णेतुं पठति— **स एष इति**। रसानां पृथिव्युदकौषधिपुरुषवागृक्साम्नां भूतेषूत्तरोत्तरसारत्वेन

### *भाष्यभावप्रकाशिका*

इतोऽप्यनधिकृतविषयं न भवतीत्याह— **ब्रह्मज्ञानेति**। शाब्दस्य ज्ञानस्य यः परिपाकः साक्षात्कारस्तदङ्गं संन्यासः। अतो नानधिकृतजडान्धादिविषयत्वम्, तेषां मननभिक्षाटनाद्यनुष्ठानासंभवात्। अतः पारिव्राज्येन सहैव ब्रह्मसंस्थता विधीयते। ब्रह्मसंस्थतायास्तत्रैव संभवादिति भावः। अन्तरागर्भिताधिकरणार्थमुपसंहरति— **तस्मात्सिद्धा इति**। प्रथमाधिकरणार्थमुपसंहरति— **सिद्धञ्चेति**। इति द्वितीयं परामर्शाधिकरणम्।।

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्।।** विवादाध्यासिताः प्रत्ययाः स्तुतयः, कर्माङ्गेषूत्कृष्टपदार्थाध्यासप्रत्ययत्वात् 'स्वर्गो

### *न्यायनिर्णयः*

संन्यासस्य पृथगुक्तेर्न वाक्यमनधिकृतविषयमित्यर्थः। संन्यासविधेरनधिकृताविषयत्वे हेत्वन्तरमाह— **ब्रह्मेति**। श्रवणादिद्वारा संन्यासस्य ब्रह्मज्ञानदार्ढ्यार्थत्वं प्रकरणादिसिद्धम्; तेन समर्थस्यैवाधिकारस्तस्मिन्नित्यर्थः। पारिव्राज्यस्य ब्रह्मधीदार्ढ्यार्थत्वे श्रुतिं प्रमाणयति— **तच्चेति**। ब्रह्मभूयाय ब्रह्मभावाय तत्साक्षात्कारायेत्यर्थः। अन्तर्गर्भिताधिकरणार्थमुपसंहरति— **तस्मादिति**। प्रामाणिकत्वं तच्छब्दार्थः। तेषां प्रमितत्वेनानुष्ठीयमानत्वेऽपि प्रकृते किं जातमित्याशङ्क्य प्रथमाधिकरणार्थं निगमयति— **सिद्धं चेति**।।२०।। इति द्वितीयं परामर्शाधिकरणम्।।

अनुष्ठेयसाम्यश्रुतेराश्रमान्तरमनुष्ठेयतया विधेयमित्युक्तम्। सम्प्रति रसतमत्वादीनामङ्गाश्रितत्वेन 'इयमेव जुहू'रित्यादिश्रुतितुल्यतया स्तुत्यर्थत्वमित्याशङ्क्य प्रत्याह— **स्तुतीति**। अधिकरणस्य विषयं वदन् वाक्यानि पठति— **स इति**। 'एषां भूतानां पृथिवी रसः

---

१. 'ऊर्ध्वरेतस आश्रमाः' इति पा.।

**(छा.उ. १।६।१) 'अयं वाव लोक एषोऽग्निश्चितः' (शत. १०।५।४।१) 'तदिदमेवोक्थमियमेव पृथिवी' (ऐ.आ. २।१।२) इत्येवंजातीयकाः श्रुतयः किमुद्गीथादेः स्तुत्यर्था आहोस्विदुपासनाविध्यर्था इत्यस्मिन् संशये स्तुत्यर्था इति युक्तम्। उद्गीथादीनि कर्माङ्गान्युपादाय श्रवणात्। यथा– 'इयमेव जुहूः', 'आदित्यः कूर्मः' 'स्वर्गो लोक आहवनीयः' इत्याद्या जुह्वादिस्तुत्यर्थास्तद्वदिति चेत्, नेत्याह। न हि[1] स्तुतिमात्रमासां श्रुतीनां प्रयोजनं युक्तमपूर्वत्वात्। विध्यर्थतायां ह्यपूर्वोऽर्थो विहितो भवति, स्तुत्यर्थतायां त्वानर्थक्यमेव स्यात्। विधायकस्य हि शब्दस्य वाक्यशेषभावं प्रतिपद्यमाना स्तुतिरुपयुज्यत इत्युक्तम्–'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' (जै.सू. १।२।७) इत्यत्र। प्रदेशान्तरविहितानां तूद्गीथादीनामियं प्रदेशान्तरपठिता**

***प्रकटार्थविवरणम्***

गृहीतानामतिशयेन सारो रसतमः परमः श्रेष्ठो ब्रह्मोपासनप्रतीकानां परस्य ब्रह्मणोऽर्धं स्थानं तदर्हतीति परार्ध्यः, अष्टमः पृथिव्याद्यपेक्षया; यदुद्गीथः य ओङ्कार इत्यर्थः। अङ्गसंबन्धे पर्णमयीत्वादौ विधिरुपलभ्यते, क्वचिदङ्गसंबद्धे 'स्वर्गो लोक' इत्यादौ स्तुतिरुपलभ्यत इत्युभयोरुपलम्भात् संशयः। पूर्वत्रानुष्ठेयगार्हस्थ्यसाम्यश्रुतेराश्रमान्तराणामनुष्ठेयत्वं यथा तथा अत्राप्यङ्गसंबद्धविधिपदशून्यवाक्यस्य स्तुतित्वदर्शनात् तत्साम्यात् स्तुतित्वमिति पूर्वपक्षभागार्थमाह— **स्तुत्यर्था इति**। जुहूरियमेव पृथिवीति स्तूयते; कूर्मश्चयनगत आदित्यः; आहवनीयोऽग्निः स्वर्गो लोक इति स्तुतिरित्यर्थः। सिद्धान्तभागं व्याचष्टे— **न स्तुतिमात्रमिति**। स्तुतिमात्रकल्पनाद् विधिकल्पनमेव युक्तमनुष्ठानफललाभादित्यर्थः। ननु स्तुत्यर्थतयाऽप्यर्थवत्त्वमुक्तम् पूर्वतन्त्रे; कथमानर्थक्यमुच्यत इत्याशङ्क्याह— **विधायकस्य**

***भाष्यभावप्रकाशिका***

लोक आहवनीय' इत्यादिप्रत्ययवदिति पूर्वपक्षं दर्शयति— **स्तुत्यर्था इति**। एते प्रत्ययाः कर्माङ्गानां स्तुतयो न भवन्त्यतत्प्रकरणत्वविशिष्टफलसंबन्धित्वापूर्वत्वेभ्यः क्रत्वन्तरवदित्यभिप्रेत्य परिहरति— **न स्तुतिमात्रमिति**। स्तुतिकल्पनाद् विधिकल्पनं युक्तमनुष्ठानफललाभादित्याह— **विध्यर्थतायां हीति**। ननु सोऽरोदीदित्यादीनामिव सार्थकत्वं भविष्यतीत्यत आह— **विधायकस्य हीति**। तत्र विधिप्रकरणे पाठात् प्रतीतसमभिव्याहृततया तदेकवाक्यतया स्तुतित्वम्, इह पुनरतत्प्रकरणतया तदेकवाक्यतानुपपत्तेः स्तुतिपरतायामानर्थक्यमित्यर्थः।

अतत्प्रकरणे विधे.....वर्णात्तद्विषयसमर्पणेनार्थवत्त्वे संभवति तत्स्तुतिपरत्वमपि यत्रायुक्तम्, विधिविषयसमर्पणस्यान्तरङ्गत्वात्

***न्यायनिर्णयः***

पृथिव्या आपोऽपामोषधय ओषधीनां पुरुषः पुरुषस्य वाग्वाच ऋगृचः साम साम्न उद्गीथो रस' इत्युपक्रम्य श्रूयते— स एष रसानां पृथिव्यादीनां सामान्तानां भूतेषूत्तरोत्तरं सारत्वेनोक्तानामतिशयेन सारो रसतमः परमः परमात्मप्रतीकत्वात् परस्य ब्रह्मणोऽर्धं स्थानं तदर्हतीति परार्ध्यः परब्रह्मवदुपास्य इत्यर्थः। पृथिव्याद्यपेक्षयाऽष्टमः, कोऽसौ? यदुद्गीथो य उद्गीथ ओंकार इत्यर्थः। उद्गीथाद्यङ्गावबद्धश्रुतीरधिकृत्य पर्णमयीत्वादावङ्गसंबन्धे विध्युपलब्धेस्तथाविधेऽपि 'स्वर्गो लोक' इत्यादौ स्तुत्युपलब्धेश्च संशयमाह— **किमिति**। अङ्गावबद्धानामपि बुद्धीनां स्तुतित्वाभावाद्विधेयतया स्वातन्त्र्येण पुरुषार्थहेतुत्वे सत्यनङ्गात्मधियः स्वतन्त्रतया फलवत्त्वमुपनिषदुत्पन्नायाः किं वक्तव्यमित्युक्तेरत्र पादादिसंगतिः। पूर्वपक्षे स्तुतित्वादङ्गधीष्वनुष्ठानासिद्धिः। सिद्धान्ते तासां विधेयत्वात्तत्सिद्धिरित्यङ्गीकृत्य संशयमनूद्य पूर्वपक्षयति— **इत्यस्मिन्निति**। विमताः प्रत्ययाः स्तुतयः कर्माङ्गेषूत्कृष्टपदार्थाध्यासप्रत्ययरूपत्वात् 'स्वर्गो लोक आहवनीय' इत्यादिप्रत्ययवदित्यर्थः। जुहूरियमेव पृथिवीति स्तूयते, कूर्मश्चयनगतः सन्नादित्य इत्याहवनीयोऽग्निः स्वर्गो लोक इतिवत् स्तुतिरेवेत्यर्थः। स्तुतिकल्पनाद्विधिकल्पनमेव युक्तमनुष्ठानफललाभादिति परिहरति— **नेत्यादिना**। विमताः प्रत्यया न कर्माङ्गस्तुतयोऽपूर्वार्थत्वात् क्रत्वन्तरवदित्याह— **नेति**। विमता धियो न कर्माङ्गस्तुतयो विशिष्टफलसंबन्धित्वात् संमतवदित्याह— **विधीति**। 'वायुर्वै क्षेपिष्ठे'त्यादिवदुद्गीथादिश्रुतीनां स्तुत्यर्थत्वेऽपि कस्मादर्थवत्त्वं न स्यादित्याशङ्क्याह— **विधायकस्येति**। अस्तु तर्हि विधायकशब्दशेषत्वेनैवोद्गीथादिश्रुतीनामपि स्तावकतयाऽर्थवादत्वम्। तत्र वाच्यं किमुद्गीथादिप्रत्ययैरुद्गीथादिविधिः

१. 'हि' शब्दः क्वचिन्न।

**स्तुतिर्वाक्यशेषभावमप्रतिपद्यमानाऽनर्थिकैव स्यात्। 'इयमेव जुहू'रित्यादि तु विधिसंनिधावेवाम्नातमिति वैषम्यम्। तस्माद् विध्यर्था एवैवंजातीयकाः श्रुतयः।।२१।।**

**भावशब्दाच्च।।२२।।**

**'उद्गीथमुपासीत' (छा.उ. १।१।१) 'सामोपासीत' (छा.उ. २।२।१) 'अहमुक्थमस्मीति विद्यात्' (ऐ.आ. २।१।२) इत्यादयश्च विस्पष्टा विधिशब्दाः श्रूयन्ते। ते च स्तुतिमात्रप्रयोजनतायां व्याहन्येरन्। तथा च न्यायविदां स्मरणम्[1]– 'कुर्यात्क्रियेत कर्तव्यं भवेत् स्यादिति पञ्चमम्। एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम्' इति। लिङाद्यर्थो विधिरिति मन्यमानास्त एवं स्मरन्ति। प्रतिप्रकरणं च फलानि श्राव्यन्ते– 'आपयिता ह वै कामानां भवति' (छा.उ. १।१।७), 'एष ह्येव कामागानस्येष्टे' (छा.उ. १।७।९),**

*प्रकटार्थविवरणम्*

**हीति**। प्रकरणान्तरत्वे सति विशिष्टफलसंबन्धितयाऽपूर्वत्वात् क्रत्वन्तरवत् स्तुतिमात्रं नोपपद्यत इत्यर्थः। दृष्टान्तवैषम्यमाह— **इयमेव जुहूरिति**। 'जुह्वा जुहोति' 'कूर्ममुपदधाति' 'आहवनीये जुहोति' इत्यादिविधिसन्निधावित्यर्थः।

**भावशब्दाच्च**।। भाव्यतेऽनुष्ठीयतेऽधिकारिभिरिति विध्यर्थो भावः; तच्छब्दाच्च स्तुतिमात्रत्वं न संभवतीत्यर्थः। भाव्यते प्रार्थ्यत इति भावः फलं भण्यते; तच्छ्रवणाच्चेति प्रकारान्तरमाह— **प्रतिप्रकरणमिति**। **कामागानस्येति**। आगानेन कामसंपादनस्य समर्थ इति। इति तृतीयं स्तुतिमात्राधिकरणम्।।

*भाष्यभावप्रकाशिका*

स्तुतेश्च बहिरङ्गत्वात् तत्र कर्माङ्गस्तुतिपरत्वमयुक्तमिति किमु वक्तव्यमित्याह— **भावशब्दाच्चेति**। निमन्त्रणामन्त्रणादिष्वपि लिङादिस्मरणात् कथं विधिपरत्वमिति, तत्राह— **तथा च न्यायविदामिति**। क्रियासामान्यवाचकस्य करोतिधातोर्ग्रहणे तद्विशेषा गृहीता भवन्तीत्यभिप्रायेण 'कुर्यात् क्रियेते'त्यादि निर्देशः। उत्सर्गतो विधिपरा वेदे लिङादयोऽपवादात्तु तदन्यथात्वमित्यर्थः। इति तृतीयं स्तुतिमात्राधिकरणम्।।

*न्यायनिर्णयः*

स्तूयते, किंवा तदुपास्तिविधिरिति विकल्प्याद्यं दूषयति— **प्रदेशान्तरेति**। उद्गीथादिविधेः कर्मप्रकरणस्थत्वेन व्यवधानात्र तेनोद्गीथादिश्रुतीनामेकवाक्यता। विमता धियो न कर्माङ्गस्तुतयोऽतत्प्रकरणस्थत्वात्क्रत्वन्तरवदिति भावः। परोक्तं दृष्टान्तं विघटयति— **इयमेवेति**। अनुमानत्रयफलं निगमयति— **तस्मादिति**।।२१।।

न द्वितीयः, उपास्यविषयार्पणेन विध्यन्वययोगे लक्षणया स्तुत्यर्थत्वायोगादित्याह— **भावेति**। संनिहितविधेर्विषयार्पणेनार्थवत्त्वे रसतमादिवादानां संभवति तदीयस्तुतिपरत्वमपि तत्रायुक्तं, स्तुत्यपेक्षया विषयार्पणस्यान्तरङ्गत्वात्, तत्र कर्माङ्गस्तुतिपरत्वं नेति किमु वक्तव्यमिति मन्वानो व्याचष्टे— **उद्गीथमिति**। निमन्त्रणादिष्वपि लिङादिस्मरणात् कथमुपासीतेत्यादिशब्दस्य विधिपरतेत्याशङ्क्याह— **तथा चेति**। धातूनामनेकत्वेऽपि 'डुकृञ् करणे' 'भू सत्तायाम्' 'अस् भुवि' इति त्रीनेव धातून् भावनासामान्यवाचिनः सर्वव्याप्त्यर्थमुदाहरति— **कुर्यादिति**। आक्षिप्तकर्तृका भावना कुर्यादित्युक्ता, सैवाक्षिप्तकर्मिका क्रियेतेत्युदाहृता। सैव कर्तव्यमिति धात्वर्थोपसर्जनभूताऽभिहितेति भेदः। भवेदित्यत्रापि भूयेत भवितव्यमित्युदाहार्यम्। भवतेरस्तेश्चैकार्थ्येऽपि प्राप्त्याद्यर्थं भवतिं दृष्ट्वा पृथगस्तिमुदाहरति— **स्यादितीति**। यथापूर्वमुदाहरणमिहापि द्रष्टव्यम्। पाठक्रममनुसृत्य पञ्चममित्युक्तम्। एतद्धात्वनुगतप्रत्ययैः सर्वभावनानुगतश्रेयःसाधनत्वरूपो विधिरुच्यते, न तु प्रतिधातुप्रत्ययं च भावनाभेदोऽस्तीति मत्वाऽऽह— **एतदिति**। कथं तर्हि निमन्त्रणादिषु लिङादिस्मरणं मिथोविरोधादित्याशङ्क्योत्सर्गतो वेदे विधिपरा लिङादयोऽपवादादन्यथात्वमित्यभिप्रेत्याह— **लिङादीति**। उद्गीथादिश्रुतीनां स्तुत्यर्थत्वाभावे हेत्वन्तरं चकारसूचितमाह— **प्रतीति**। फलभेदश्रवणमुपसंहरति— **तस्मादिति**। पूर्वोक्तापूर्वत्वादि-समुच्चयार्थमपीत्युक्तम्।।२२।। इति तृतीयं स्तुतिमात्राधिकरणम्।।

१. एतच्च न्यायविदां स्मरणं शाबरभाष्येऽप्युदाहृतम्। द्र. शाबरभाष्यम् ४-३-३।

**'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च' (छा.उ. २।२।३) इत्यादीनि। तस्मादप्युपासनविधानार्था उद्गीथादिश्रुतयः।।२२।।**

।।इति तृतीयं स्तुतिमात्राधिकरणम्।।

४।।पारिप्लवाधिकरणम्।।सू. २३-२४।।

## पारिप्लवार्था इति चेन्न विशेषितत्वात्।।२३।।

**'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च' (बृ.उ. ४।५।१), 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम'(कौ.उ. ३।१), 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस'(छा.उ. ४।१।१) इत्येवमादिषु वेदान्तपठितेष्वाख्यानेषु संशयः-किमिमानि पारिप्लवप्रयोगार्थान्याहोस्वित् संनिहितविद्याप्रतिपत्त्यर्थानीति। पारिप्लवार्था इमा आख्यानश्रुतयः, आख्यानसामान्यात्। आख्यानप्रयोगस्य**

### *शारीरकन्यायसंग्रहः*

**पारिप्लवार्था चेन्न विशेषितत्वात्।।२३।। तथा चैकवाक्यतोपबन्धात्।।२४।।** आख्यानानां गुरुशिष्यसमाचारप्रदर्शनद्वारेण बुद्धिसौकर्यद्वारेण च वाक्यार्थप्रत्ययहेतुत्वं सामर्थ्यलिङ्गसिद्धम्। अस्य च 'पारिप्लवमाचक्षीत' इति पारिप्लवश्रुत्या आख्यानानामन्यपरत्वप्रतिपादिकयाऽपवादे प्राप्ते, सामान्यश्रुतेः 'मनुर्वैवस्वतो राजा' इति विशेषसङ्कीर्तनवैफल्यपरिहाराय विशेषपरतया सङ्कोचप्रदर्शनेन श्रुत्या लिङ्गस्याबाधो दर्शितः।

### *प्रकटार्थविवरणम्*

**पारिप्लवार्था इति चेन्न विशेषितत्वात्।।** अपरमपि वाक्यं विधिशून्यं प्रसङ्गान्निर्णेतुं पठति— **अथ हेति**। अश्वमेधे पारिप्लवप्रयोगो नामाख्यानकथनं विहितम्—'पुत्रामात्यपरिवृताय राज्ञेऽध्वर्युः पारिप्लवमाचक्षीत' इत्यादिना; तदर्थान्याख्यानान्येतानि किं वा विद्याशेषभूतानीति संशयः आख्यानत्वसाम्यात् विद्यासन्निधानाच्चेत्यर्थः। पूर्वाधिकरणन्यायेनापूर्वत्वाद्विध्यर्थत्वोपपत्तेः पारिप्लवार्था इति पूर्वः पक्षः। ननु सन्निधानाद् विद्यार्थत्वं युक्तमित्याशङ्क्याह— **आख्यानसामान्यादिति**। सन्निधिः श्रुत्या बाध्यत इत्यर्थः।

### *भाष्यभावप्रकाशिका*

**पारिप्लवार्था इति चेन्न विशेषितत्वात्।।** ननु गुरुशिष्यसमाचारप्रदर्शनेन बुद्धिसौकर्यद्वारेण च विद्याशेषत्वं सामर्थ्यलिङ्गादवगम्यत इत्याशङ्क्य पारिप्लवश्रुतिविरोधे लिङ्गं दुर्बलमित्याह— **आख्यानप्रयोगस्येति**। नन्वन्यार्थत्वेऽपि विद्यार्थत्वमपि भवेद् यथा 'सर्वा

### *न्यायनिर्णयः*

[१]उद्गीथादिस्तुतेरुपास्तिविषयार्पकत्वं ज्यायो रसतमत्वादेरित्युक्तम्। अधुनाऽऽख्यानानामपि विद्यास्तुतेः सकाशात् पारिप्लवशेषत्वं ज्यायोऽनुष्ठानावसानयोगादित्याशङ्क्य परिहरति— **पारिप्लवेति**। विषयोक्तिपूर्वकमाख्यानत्वसाम्याद् विद्यासंनिधेश्च संशयमाह— **अथेत्यादिना**। पारिप्लवप्रयोगो नामाश्वमेधे 'पुत्रामात्यपरिवृताय राज्ञे पारिप्लवमाचक्षीते'त्यादिना नानाविधाख्यानकथनं विहितम्। अत्र चोपनिषद्गताख्यानानां तादर्थ्यनिरासेन तत्र तत्र संनिहितस्वतन्त्रपुरुषार्थहेतुविद्यार्थत्वसमर्थनात् पादादिसंगतिः। पूर्वपक्षे प्रयोगशेषत्वादाख्यानानां वेदान्तगतानामपि तद्भावाद् विद्याप्राधान्यासिद्धिः। सिद्धान्ते विशेषणादुपनिषदाख्यानानां व्यवच्छेदात्तेषाम-प्रयोगशेषत्वाद् विद्याप्रधानत्वसिद्धिरिति स्वीकृत्य पूर्वपक्षयति— **पारिप्लवेति**। गुरुशिष्यसमाचारप्रदर्शनेन बुद्धिसौकर्यद्वारा च विद्याशेषत्वं सामर्थ्यलिङ्गादासां सिद्धमित्याशङ्क्य पारिप्लवश्रुतिविरोधे लिङ्गमप्रयोजकमित्याह— **आख्यानेति**। 'यस्याश्विने शस्यमाने सूर्योऽभ्युदियादपि सर्वा दाशतयीरनुब्रूयादि'ति सर्वासामृचामाश्विनग्रहशंसने सर्वश्रुत्या विनियुक्तानामपि प्रातिस्विकविनियोगवदाख्यानानां

१. पञ्चम्यन्तमिदम्। उद्गीथादिस्तुत्यपेक्षयेति यावत्। 'उद्गीथादिश्रुतेः' इति पा.।

**च पारिप्लवे चोदितत्वात्। ततश्च विद्याप्रधानत्वं वेदान्तानां न स्यात्, मन्त्रवत् प्रयोगशेषत्वादिति चेत्। तन्न। कस्मात्? विशेषितत्वात्। 'पारिप्लवमाचक्षीत' इति हि प्रकृत्य 'मनुर्वैवस्वतो राजा' इत्येवमादीनि कानिचिदेवाख्यानानि तत्र विशेष्यन्ते। आख्यानसामान्याच्चेत् सर्वगृहीतिः स्यादनर्थकमेवेदं विशेषणं भवेत्। तस्मान्न पारिप्लवार्था एता आख्यानश्रुतयः।।२३।।**

**तथा चैकवाक्यतोपबन्धात्।।२४।।**

**असति च पारिप्लवार्थत्व आख्यानानां संनिहितविद्याप्रतिपादनोपयोगितैव न्याय्या, एकवाक्यतोपबन्धात्। तथाहि- तत्र तत्र संनिहिताभिर्विद्याभिरेकवाक्यता दृश्यते, प्ररोचनोपयोगात्, प्रतिपत्तिसौकर्योपयोगाच्च। मैत्रेयीब्राह्मणे तावत्- 'आत्मा वा अरे द्रष्टव्यः' (बृ.उ. ४।५।६) इत्याद्यया विद्ययैकवाक्यता दृश्यते। प्रातर्दनेऽपि 'प्राणोऽस्मि प्रज्ञात्मा' (कौ.उ. ३।२) इत्याद्यया। 'जानश्रुति'रित्यत्रापि 'वायुर्वाव संवर्गः'**

***प्रकटार्थविवरणम्***

पूर्वपक्षफलमाह— **ततश्चेति**। प्रथमेऽहनि मनुर्वैवस्वतः, द्वितीयेऽहनि यमो वैवस्वतः, तृतीयेऽहनि वरुण आदित्यः, इत्यादिविशेषसङ्कीर्तनवैफल्यपरिहाराय सामान्यश्रुतेः सङ्कोचः कर्तव्य इति सिद्धान्ताशयः।

**तथा चैकवाक्यतोपबन्धात्**।। किं विशेषत्वं [किंशेषत्वं] तर्हि आख्यानानामित्याशङ्क्याह— **तथा चेति**। प्ररोचनमनुरागजननम्।

***भाष्यभावप्रकाशिका***

दाशतयीरनुब्रूया'दिति विनियोगेऽपि दाशतयीनां प्रातिस्विकस्तत्तत्कर्मणि विनियोगस्तद्वदितीत्यत आह— **ततश्चेति**। तुल्यबलप्रमाणाभ्यां विनियोगे तथा स्यादिह तु तदभावान्न संभवतीति भावः। सामान्यश्रुतेर्विशेषसंकीर्तनेन विशेषपरतावगमान्न तया लिङ्गस्य बाधो युक्त इति परिहरति— **विशेषितत्वादिति**। विपक्षे दोषमाह— **आख्यानेति**।

तर्हि कुत्राख्यानानामुपयोग इत्यत्राह— **असति चेति**। आख्यानत्वे (व्या)पारिप्लवार्थत्वादर्शनाच्च न पारिप्लवार्थत्वमित्याह—

***न्यायनिर्णयः***

पारिप्लवे 'पारिप्लवमाचक्षीते'ति चोदितानामेतेन लिङ्गेन संनिधेर्वा विद्यायां विनियोगः स्यादित्याशङ्क्य प्रातिस्विकविनियोगस्य समुदायविनियोगस्य च श्रौतत्वेन तुल्यत्वात्, प्रकृते च तदभावान्नैवमित्याह— **ततश्चेति**। आख्यानानां प्रयोगशेषत्वेऽपि सर्वेषां वेदान्तानामतच्छेषत्वाद् युक्तं विद्याप्रधानत्वमित्याशङ्क्याह— **मन्त्रवदिति**। 'देवस्य त्वे'त्यादिमन्त्रे कस्यचिदेव पदस्य समवेतार्थतया प्रयोगशेषत्वे सिद्धे तदेकवाक्यतया पदान्तराणामपि तच्छेषत्वमिष्टम्। तथाऽऽख्यानानां प्रयोगशेषत्वे तदेकवाक्यत्वेन सर्वोपनिषदां तच्छेषत्वान्न विद्याप्रधानतेत्यर्थः। सामान्यश्रुतेर्विशेषोक्त्या [1]तत्परत्वान्न तया लिङ्गादिबाधोऽस्तीति सिद्धान्तयति— **तन्नेत्यादिना**। अश्वमेधे प्रथमेऽहनि मनुर्वैवस्वतो राजेत्याह, द्वितीयेऽहनि यमो वैवस्वत इति, तृतीयेऽहनि वरुण आदित्य इत्याद्याख्यानविशेषा वाक्यशेषे श्रुतास्तद्बलादुपक्रमस्य संकोचो युक्तः। न चोपक्रमस्थसर्वशब्दादुपसंहारस्था विशेषोक्तिरुपलक्षणार्थेति वाच्यम्। 'आदौ सर्वाण्याख्यानानि पारिप्लवे शंसती'त्युक्त्वा 'पारिप्लवमाचक्षीते'ति च विधाय 'मनुर्वैवस्वत' इत्यादि पठ्यते। तत्र पुनर्विधानं वाक्यशेषस्थाख्याननियमार्थमन्यथा वैयर्थ्यात्। सर्वशब्दोऽपि वाक्यशेषस्थोपाख्यानमध्यस्थकतिपयप्रयोगमात्रेणोपरमं व्यावर्तयितुमित्यर्थवानिति मत्वा सिद्धान्तं विवृणोति— **पारिप्लवमिति**। यत्त्वाख्यानसामान्यात् पारिप्लवार्था इमाः श्रुतय इति, तत्राह— **आख्यानेति**। विशेषणफलं निगमयति— **तस्मादिति**।।२३।।

तर्हि कुत्राख्यानान्युपयुक्तानीत्याशङ्क्य विशेषणश्रुत्या सर्वश्रुतौ भग्नायां निर्बाधः संनिधिर्विद्यास्वेवोपनिषदाख्यानानि विनियुञ्जीतेत्याह— **तथा चेति**। सूत्रार्थं विवृणोति— **असतीति**। एकवाक्यतोप(सं)बन्धं विभजते— **तथाहीति**। प्ररोचनमनुराग-जननम्। संनिहितविद्याभिराख्यानानामेकवाक्यताप्रतीतिमुदाहरति— **मैत्रेयीति**। आख्यानत्वेऽपि पारिप्लवार्थत्वादर्शनाच्च न तादर्थ्यं

१. तत्परत्वात् = विशेषपरत्वात्। न तयेति। अविरोधादिति भावः।

**(छा.उ. ४।३।१) इत्याद्यया। यथा 'स आत्मनो वपामुदक्खिदत्' (तै.सं. २।१।१।४) इत्येवमादीनां कर्मश्रुतिगतानामाख्यानानां संनिहितविधिस्तुत्यर्थता, तद्वत्। तस्मान्न पारिप्लवार्थत्वम्।।२४।।**

**।।इति चतुर्थं पारिप्लवाधिकरणम्।।**

### *शारीरकन्यायसंग्रहः*

**५।।अग्नीन्धनाद्यधिकरणम्।। सू.२५ ।।**

**अत एव चाग्नीन्धनाद्यनपेक्षा।।२५।।** यद्यपि परिव्राजकादिषु ज्ञानकर्मणोरितरेतरव्यतिरेकान्न संबन्धा:[१]; तेषु ज्ञानोत्पत्त्यर्थ-कर्मव्यतिरिक्तस्वतन्त्रकर्माभावात्, यद्यपि चेश्वराज्ञापरिपालनादीनां दृष्टार्थतया धर्मत्वाभावात् कर्मशून्येषु देवादिषु ब्रह्मविद्या मोक्षफला, यद्यपि च 'दर्शपूर्णमासाभ्यां स्वर्गकाम:' 'स्वर्गाय हि लोकाय दर्शपूर्णमासाविज्येते' इतिवत् 'ज्ञानकर्मभ्यां मोक्ष' इति विध्युद्देशार्थवादौ न स्त:; नापि 'विद्यां चाविद्यां च' इति साहित्यमेकफलोपाधौ, 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति फलभेदावगमात्; नापि 'तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च' इति ज्ञानकर्मणोरेकस्मिन् पुरुषे समुच्चयसिद्धि:, ब्रह्मवित्पुण्यकृत्पुरुषयोर्मार्गसमुच्चयावगमात् अन्वाचयार्थेन चकारेणैकैकस्य पुरुषस्यान्योन्यनिरपेक्षमार्गसंबन्धसिद्धे:, पुण्यकृदिति चामानवपुरुषपर्यन्तमर्चिरादिना गच्छतां प्रतीकालम्बनानामभिधानसिद्धेश्च; नापि 'तान्याचरथ नियतं सत्यकामा:' इति समुच्चयसिद्धि:, अप्रतीते:, सत्यशब्दस्य च 'एष व: पुण्य: सुकृतो ब्रह्मलोक:' इति वाक्यशेषात् 'प्लवा ह्येते' इति निन्द्यमानत्वाच्च सत्यलोकविषयत्वात्, नापि 'सत्येन लभ्यस्तपसा ह्येष आत्मा' इति समुच्चयसिद्धि:, तप:शब्देन 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तप:' इति तपसोऽभिधानात्; न च ब्रह्मात्मताऽविद्यानिवृत्ती कर्मसाध्ये, कर्मवासनाया अपि विज्ञानेनैव निवृत्तिश्रवणात्; शरीरेन्द्रियसंबन्धस्तु कर्माभावात् स्वयमेव निवर्तते। तस्मात् प्रमाणाभावात् फलाभावाच्च न समुच्चयसिद्धिर्यद्यपि, तथापि 'विविदिषन्ति यज्ञेन' इतीच्छासंयोगात् ज्ञानस्य साध्यताप्रतीतौ 'यज्ञेन' इति करणताया: साध्यज्ञानेनैवान्वयात् यज्ञादीनामिष्यमाणापरोक्षज्ञानसाधनत्वमवगतम्। ज्ञानस्य च प्रमाणायत्तत्वात् कर्मणामनुपयोगाज्ज्ञानसाध्यमोक्षं प्रत्येव कर्मणां साधनत्वं वाक्यतात्पर्येण प्रतीयत इति प्राप्तम्। तत्र काष्ठै: पचतीति ज्वालोत्पादनद्वारेण पाकसाधनेष्वपि काष्ठेषु करणविभक्तिदर्शनात् कर्मसु चित्तस्य मलशोधनद्वारेण प्रत्यक्प्रवणतामापाद्य अपरोक्षज्ञानहेतुषु ज्ञानकारणत्वं न बाध्यते, मोक्षान्वये तु कर्मणां श्रुतज्ञानकरणत्वं बाध्यते; श्रुतसाध्यपरित्यागेन च साध्यान्तरकल्पनायाम् 'नास्त्यकृत: कृतेन' 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशु:' 'नान्य: पन्था विद्यतेऽयनाय' इत्यादिशास्त्रविरुद्धमोक्षहेतुत्वकल्पनाद् वरम् 'कषायपक्ति: कर्माणि' 'ज्ञानमुत्पद्यते पुंसाम्' इत्यादिशास्त्रप्रतिपन्नचित्तशोधनद्वारेण ज्ञानहेतुत्वकल्पनमिति शास्त्रान्तरानुसारात् ज्ञानकरणत्वावधारणाच्च ज्ञानहेतुषु कर्मसु वेदानुवचनादिषु वाक्यप्रतिपन्नेषु न ज्ञानं मोक्षे अग्नीन्धनाद्यपेक्षते इत्युक्तम्।

### *प्रकटार्थविवरणम्*

उदखिदत् उद्धृतवान् होमायेति। इति चतुर्थं पारिप्लवाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**यथा च स इति**। इति चतुर्थं पारिप्लवाधिकरणम्।।

### *न्यायनिर्णय:*

प्रकृताख्यानानामित्याह— **यथेति**। उदखिददुद्धृतवान् होमायेति यावत्। श्रुतिलिङ्गसंनिधिभिर्विद्यार्थत्वे सिद्धे फलितमुपसंहरति— **तस्मादिति**।।२४।। इति चतुर्थं पारिप्लवाधिकरणम्।

१. संबन्ध: = समुच्चय:।

५।।अग्नीन्धनाद्यधिकरणम्।। सू.२५।।

## अत एव चाग्नीन्धनाद्यनपेक्षा।।२५।।

**'पुरुषार्थोऽतः शब्दात्' (ब्र.सू. ३।४।१) इत्येतद् व्यवहितमपि संभवात् 'अतः' इति परामृश्यते। अत एव च विद्यायाः पुरुषार्थहेतुत्वादग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीत्याद्यस्यैवाधिकरणस्य फलमुपसंहरत्यधिकविवक्षया।।२५।।**

।।इति पञ्चममग्नीन्धनाद्यधिकरणम्।।

***प्रकटार्थविवरणम्***

**अत एव चाग्नीन्धनाद्यनपेक्षा।।** प्रासङ्गिकविचारान् परिसमाप्याद्याधिकरणसम्बन्धमाह— **पुरुषार्थोऽत इति**। परविद्या विषयः; सा किमाश्रमकर्माणि फलेऽपेक्षते न वेति वादिविप्रतिपत्तेः संशयः। करणस्येतिकर्तव्यताकाङ्क्षादर्शनात् विद्यायाश्च करणत्वादस्त्यपेक्षेति पूर्वः पक्षः। सिद्धान्तस्तु— विद्या स्वकार्ये नेतिकर्तव्यतापेक्षा, प्रमाणत्वात्, अबोधनिवृत्तिः[निवृत्ति]फलत्वाद्वा, शुक्तिज्ञानवदिति। करणत्वादित्यस्य चाक्षसंयोगादौ व्यभिचारात्, श्रौतभावनाकरणत्वादित्यस्य च विध्यनभ्युपगमेनासिद्धत्वात्, विपक्षबाधकानुकूलतर्काभावेन चाप्रयोजकत्वात्, केवलविद्यानिन्दायाश्चापरिपक्वविद्याविषयत्वात्, भावनायाः प्रत्ययार्थत्वापाकरणाच्च यज्ञादिभिरुपकृत्य वेदनेन मोक्षं भावयेत् इति कल्पनानुपपत्तिः। किंच प्राकरणिकशमादीतिकर्तव्यनिरपेक्षत्वात्[१] भावनायां नेतिकर्तव्यभावेन यज्ञाद्यन्वयः, किं तु वेदनकरणतया। किं च काष्ठैः पचतीति परम्परया करणेषु करणविभक्तिदर्शनाच्चित्तशुद्धिद्वारेण ज्ञानहेतुषु कर्मसु न करणत्वं बाध्यते; मोक्षान्वये तु श्रुतित्यागः, ज्ञानकरणत्वपरिहारेणाश्रुतमोक्षसाधनत्वकल्पना च 'नास्त्यकृतः कृतेन' इत्यादिश्रुतिविरुद्धा, परिव्राजकेषु देवादिषु च यज्ञादिरहितेष्वपि विद्यायाः मोक्षसाधनत्वान्न समुच्चयसिद्धिः। न च 'विद्यां चाविद्यां च' इत्येकफलोपाधौ साहित्यम्, 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति फलभेदावगमात्। किं तु उपायोपेयभावात् साहित्यवाचोयुक्तिः। 'तेनैति ब्रह्मवित्पुण्यकृद्'ति च ज्ञानपुण्यकर्मणोः क्रमसमुच्चयोऽभिप्रेतः, 'न तत्र दक्षिणा यन्ति' इति कर्मिणां

***भाष्यभावप्रकाशिका***

**अत एव चाग्नीन्धनाद्यनपेक्षा।।** अग्नीन्धनादिना चाश्रमकर्माण्युपलक्ष्यन्त इत्यभिप्रेत्याह— **अत एव चेति**। यतः स्वतन्त्रफलत्वान्न विद्या कर्माङ्गमत एव फलोपकार्यङ्गत्वेनापि न कर्मापेक्षत इत्युपसंहरतीत्यर्थः। **अधिकविवक्षयेति**। स्वार्थसिद्धावेवानपेक्षा, न तु स्वसिद्धौ, स्वोत्पत्तौ तु तदपेक्षा विद्यत इत्यनन्तराधिकरणे निर्देष्टुमित्यर्थः। इति पञ्चममग्नीन्धनाद्यधिकरणम्।

***न्यायनिर्णयः***

कथानां विद्याशेषत्वे दर्शिते कर्मणामपि तर्हि तच्छेषत्वं तच्छेषत्वाभावेऽपि स्यादित्याशङ्क्य प्रसङ्गागतं विचारं परिसमाप्य पुरुषार्थाधिकरणस्य फलमाह— **अत इति**। ब्रह्मविद्या मोक्षे कर्माणीतिकर्तव्यत्वेनापेक्षते न वेति वादिविप्रतिपत्तेः संदेहे 'यज्ञेने'ति विविदिषायां विनियुक्तयज्ञादीनां विषयसौन्दर्यलभ्यायां तस्यामनन्वयात् तद्विषयज्ञानसाध्यमोक्षान्वयस्य युक्तत्वादपेक्षत इति पूर्वपक्षे काष्ठैः पचतीत्यत्र पाकसाधनज्वालाजनककाष्ठानां पाकहेतुत्वदर्शनाज्ज्ञानेच्छाजनकान्तःकरणशुद्धिहेतुत्वेन यज्ञादीनां ज्ञानेच्छाहेतुत्वसिद्धेः, साक्षादेव मोक्षान्वये च यज्ञेनेत्यादिकरणविभक्तिभङ्गात् पारंपर्यस्यैवोपेयत्वान्नापेक्षत इति सिद्धान्तः। एतदभिप्रेत्य संनिहितस्यातः- शब्दपरामर्शयोग्यस्याभावादतःपदानुपपत्तिमाशङ्क्य सूत्राक्षराणि योजयति— **पुरुषार्थ इति**। आद्याधिकरणे यथा विद्यायाः स्वातन्त्र्येण पुमर्थहेतुत्वमुक्तं तच्च तथैवानूद्यते। तथा चाग्नेयादिष्वदर्शनान्न पुरुषार्थहेतुत्वं कर्मापेक्षाविरोधीति निरस्तम्। न चात्र पादादिसंगतिर्वक्तव्या, प्रथमाधिकरणस्यैव[स्येव] तत्फलविषयस्यास्य तस्याः सुगमत्वात्। फलमपि पूर्वोत्तरपक्षयोस्तद्वदेवेत्यभिप्रेत्याह— **आद्यस्येति**। स्वार्थसिद्धावेवानपेक्षा, न तु स्वसिद्धौ, तत्र तदपेक्षाऽस्तीत्यनन्तराधिकरणे निर्देष्टुमुपसंहार इति तत्फलमाह— **अधिकेति**।।२५।। इति पञ्चममग्नीन्धनाद्यधिकरणम्।।

---

१. निरपेक्षत्वात् = निराकाङ्क्षत्वात्।

६।।सर्वापेक्षाधिकरणम्।। सू.२६-२७।।

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्।।२६।।

**इदमिदानीं चिन्त्यते- किं विद्याया अत्यन्तमेवानपेक्षाऽऽश्रमकर्मणामुतास्ति काचिदपेक्षेति। तत्रात**

### *शारीरकन्यायसंग्रहः*

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्।।२६।। शमदमाद्युपेतः स्यात् तथापि तु तद्विधेः तदङ्गतया तेषामवश्यानुष्ठेयत्वात्।।२७।।** अपरोक्षज्ञानस्यापि प्रामाण्याभ्युपगमे प्रमाणायत्तत्वात् तत्सिद्धेः सत्सु प्रमाणहेतुषु कर्मोपासनाशमाद्यभावे ज्ञानानुत्पत्त्यदर्शनात् केवलव्यतिरेकाभावात्, कर्मादीनां च ज्ञानोत्पत्तौ उपकारविशेषानवगमात् अपरोक्षज्ञानोत्पत्तौ कर्मादीनामसाधनत्वं प्राप्तम्। तत्र 'यज्ञेन विविदिषन्ति' इति कर्मणां ज्ञानसाधनत्वं विधीयते। 'शान्तो दान्तः' इति तेषामपि ज्ञानसाधनत्वं विहितम्। 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' 'निदिध्यासितव्यः' इति च ब्रह्मणि प्रत्ययाभ्यासोऽपरोक्षज्ञानाय विहितः। 'तं त्वौपनिषदम्' इति च वेदान्तानामपरोक्षब्रह्मावगतिसाधनत्वं तद्धितप्रत्ययेनोक्तम्। तत्र यद्यपि प्रथमं शाब्दं प्रमाणज्ञानं प्रमाकारणादेव भवतीत्यपरोक्षज्ञानस्यापि प्रमाणादेवोत्पत्तिः केवलव्यतिरेकाभावात् प्राप्ता, तथाप्यागमस्य केवलव्यतिरेकानपेक्षत्वात् कर्माभ्यासशमादिसहकृताद् वेदान्तवाक्यात्, पूर्वानुभवसंस्कारसहितात् संप्रयोगादभिज्ञानव्यतिरिक्तप्रत्यभिज्ञानप्रत्यक्षवत्, ब्रह्मात्मविषयं शाब्दज्ञानव्यतिरिक्तं प्रत्यक्षज्ञानान्तरमुत्पद्यत इत्यवगम्यते, तदुद्देशेन साधनविधानसामर्थ्यात्। द्वारं च कर्मणामन्तःकरणशुद्धिद्वारेण प्रत्यक्प्रवणता; शमादीनां च विपरीतप्रवृत्तिलक्षणप्रतिबन्धनिरोधः; निदिध्यासनस्य च ब्रह्मणि प्रत्ययाभ्यासजनितचित्तैकाग्र्यम्। तत्र परोक्षज्ञानहेतुरपि शब्दः कर्मादिपरिमार्जितप्रत्यक्प्रवणेन शमादिनिरुद्धविपरीतप्रवृत्तिप्रतिबन्धकेन प्रत्ययाभ्यासजनितसंस्कारप्रचयनिमित्तब्रह्मैकाग्रवृत्तिचित्तदर्पणेन सहकारिणाऽनुगृहीतः अपरोक्षज्ञानमुत्पादयति, शास्त्रीयसंस्कारसंस्कृताग्न्यधिकरण इव होमोऽपूर्वमिति। अथवा शब्दादेव प्रथममपरोक्षज्ञानमुत्पद्यते, शब्दजन्यसंवेदनस्य ब्रह्मप्रकृतितयाऽभेदात्; संवेदनस्य विषयजन्यतया तदभेद एव लोकेऽप्यपरोक्षज्ञानता नामेति। ततश्च भ्रान्त्या परोक्षवदवभासमाने प्रथमज्ञाने वर्णितचित्तदर्पणसामर्थ्यादेव देहाद्यध्यासात् विविक्ते त्वंपदार्थे प्रत्यक्षतोऽवभासमाने तत्पदार्थे च चेतसि सम्यगवधृते पारोक्ष्यभ्रमनिमित्तस्याध्यासस्य निवृत्तेः तदेव वाक्यार्थविषयं शाब्दज्ञानम् अपरोक्षावभासमवतिष्ठत इति। सर्वथाऽपि यज्ञशमनिदिध्यासनादिसापेक्षादेव शब्दादपरोक्षज्ञानसिद्धिः विधिप्रामाण्यादिति स्थितम्।

### *प्रकटार्थविवरणम्*

प्रतिषेधात्, समुच्चये प्रमाणाभावाच्च न केवलकर्मविषयत्वं[1] प्रतिषेधस्य। 'तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने। यथाऽन्नं मधुसंयुक्तम्' इत्यादिस्मृतीनामपरिपक्वात्मज्ञानस्याश्रमकर्मणां च तत्त्वसाक्षात्कारे साहित्यविषयात्[यत्वात्], अन्यथा 'तमेव विदित्वा' 'प्लवा ह्येते' इत्यादिविरोधः। किंच ब्रह्मात्मताऽविद्यानिवृत्ती न कर्मसाध्ये, ब्रह्मात्मताया नित्यत्वात्, अविद्यानिवृत्तेश्च ज्ञानैकनिर्वर्त्यत्वात्। कर्मवासना च ज्ञानेनैव निवर्तते 'भिद्यते हृदयग्रन्थिः' इत्यादिश्रवणात्, शरीरद्वयस्य कर्माभावेनैवाभावसिद्धिः। तस्मात् प्रमाणाभावात्प्रयोजनाभावाच्च न ज्ञानस्याग्निकार्याश्रमकर्मापेक्षेति। इति पञ्चममग्नीन्धनाद्यधिकरणम्।।

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्।।** अधिकविवक्षयेत्युक्तं दर्शयति— **इदमिदानीमिति**। यथा पूर्वत्र विद्यायाः फलसिद्धौ

### *भाष्यभावप्रकाशिका*

**सर्वापेक्षा च यज्ञादिश्रुतेरर्थवत्।।** अपरोक्षज्ञानस्य प्रमाणमात्रायत्तत्वात् प्रामाणिकस्य च ज्ञानस्य प्रमाणहेतुषु सत्सु

### *न्यायनिर्णयः*

ब्रह्मविद्या स्वफले न कर्मापेक्षा, प्रमात्वात् संमतवदित्युक्तम्। तर्हि न स्वोत्पत्तावपि तदपेक्षा प्रमात्वात् तद्वदेवेत्याशङ्क्याह—

---

१. 'कर्मविषयत्वम्' इति पाठः स्यात्।

**एवाग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्ष्यन्ते। एवमत्यन्तमेवानपेक्षायां प्राप्तायामिदमुच्यते- सर्वापेक्षा चेति। अपेक्षते च विद्या सर्वाण्याश्रमकर्माणि, नात्यन्तमनपेक्षैव। ननु विरुद्धमिदं वचनम्- अपेक्षते चाश्रमकर्माणि विद्या, नापेक्षते चेति। नेति ब्रूमः। उत्पन्ना हि विद्या फलसिद्धिं प्रति न किंचिदन्यदपेक्षते, उत्पत्तिं प्रति त्वपेक्षते। कुतः? यज्ञादिश्रुतेः। तथाहि श्रुतिः-'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन**

### *प्रकटार्थविवरणम्*

नास्ति कर्मापेक्षेत्युक्तम्, एवं विद्यायाः स्वोत्पत्तावपि नास्त्येव कर्मापेक्षा, प्रमाणत्वात् स्वकारणमात्रायत्तत्वात्, केवलव्यतिरेकाभावादित्येवं प्राप्ते सिद्धान्तमाह— **सर्वापेक्षा चेति**। चोद्यमिव कृत्वा सिद्धान्तं स्फुटीकरोति— **ननु विरुद्धमित्यादिना**। यद्यपि प्रथमं शाब्दं प्रमाणज्ञानं प्रमाणादेव भविष्यतीत्यपरोक्षज्ञानस्यापि प्रमाणादेवोत्पत्तिः केवलव्यतिरेकाभावात् प्राप्ता, तथाप्यागमस्य केवलव्यतिरेकानपेक्षत्वात् यज्ञादीनां तत्त्वदर्शनस्य च साध्यसाधनभावस्यापूर्वत्वात्, पञ्चमलकारपरिग्रहेण ब्रह्मानुभवकामो यज्ञादीन्यनुतिष्ठेदिति विधानाददृष्टसहकृताद् वाक्यादनुभव उत्पत्स्यते, धर्मसहकृतादिव विषयेन्द्रियसंपर्कात् सुखम्; परोक्षज्ञानहेतुरपि शब्दः कर्मादिपरिमार्जितप्रत्यक्प्रवणेन शमादिनिरुद्धविपरीतप्रवृत्तिप्रतिबन्धकेन प्रत्ययाभ्यासजनितसंस्कारप्रचयनिर्मितब्रह्मैकाग्रवृत्तिचित्तदर्पणेन सहकारिणाऽनुगृहीतोऽपरोक्षज्ञानमुत्पादयति, शास्त्रीयसंस्कारसंस्कृताग्न्यधिकरण इव होमोऽपूर्वम्, पूर्वानुभवसंस्कारसहित इवाक्षसंयोगोऽभिज्ञातिरिक्तां प्रत्यभिज्ञाम्। तस्माददृष्टसहकृतशब्दसाध्यत्वादपरोक्षज्ञानस्य यज्ञादिसाध्यत्वं न विरुध्यते। तदेतदाह—

### *भाष्यभावप्रकाशिका*

कर्मोपासनाद्यभावेनानुत्पत्त्यदर्शनात् केवलव्यतिरेकाभावे च कर्मादीनां हेतुत्वकल्पनायोगात् 'विविदिषन्ति यज्ञेने'त्यादिकायाश्च श्रुतेर्वर्तमानापदेशित्वात् ज्ञानसाधनयज्ञादीनां ततः प्रतिपत्त्ययोगादनपेक्षैवेति पूर्वपक्षयति— **तत्रात एवेति**। आपाततः पूर्वापरविरोधप्रतीतिं परिहर्तुं चोद्यमुद्भावयति— **ननु विरुद्धमिदमिति**। वर्तमानापदेशित्वेऽप्यपूर्वत्वाद् 'यस्य पर्णमयी जुहूर्भवती'त्यादाविव विधेरभ्युपगन्तव्यत्वादागमस्य च केवलव्यतिरेकानपेक्षत्वाद्विविदिषन्ति यज्ञेनेतीच्छासंयोगाज्ज्ञानस्य साध्यताप्रतीतेर्यज्ञेनेत्यादिना करणतया यज्ञादेःसाध्यज्ञानेनैवान्वयाद्यज्ञादीनामिष्यमाणापरोक्षज्ञानसाधनत्वावगमात् ज्ञानस्य च प्रमाणायत्ततया साक्षात्कर्मसाध्यता [ऽभावेऽपि] कर्मणाश्चित्तमलपरिशोधनद्वारेण प्रत्यक्प्रवणतामुत्पाद्यापरोक्षज्ञानहेतुत्वोपपत्तेर्व्यवधानेऽपि ज्वालोत्पादनद्वारेण पाकसाधनेष्वपि काष्ठेषु काष्ठैः पचतीतिवद् यज्ञादिषु करणविभक्तिसंभवात् उत्पत्तौ ज्ञानस्य कर्मापेक्षाऽस्तीति परिहरति— **तथा हि श्रुतिरिति**। ननु ज्ञानस्य

### *न्यायनिर्णयः*

**सर्वेति**। अधिकविवक्षयेत्युक्तं व्यक्तीकुर्वन् ब्रह्मविद्यामधिकृत्य पूर्वाधिकरणन्यायाद् विविदिषाश्रुतेश्च संशयमाह— **इदमिति**। अत्र च स्वतन्त्रपुरुषार्थहेत्वौपनिषदात्मज्ञानोत्पत्तौ यज्ञादीनां शमादीनां च विविदिषावाक्यीयविनियोगोक्तेरस्ति पादादिसंगतिः। पूर्वपक्षे यज्ञादीनां विज्ञानान्वये तत्फलेऽपि तत्प्रसक्त्या समुच्चयसिद्धिः, सिद्धान्ते परंपरया तेषां ज्ञानान्वयेऽपि तत्फलान्वये हेत्वभावात् तदसिद्ध्या ज्ञानस्यैव तद्धेतुतासिद्धिरित्यङ्गीकृत्य पूर्वपक्षयति— **तत्रेति**। अपरोक्षधियो मानमात्रायत्तत्वात् प्रामाणिकज्ञानस्य मानहेतुषु सत्सु कर्माद्यभावेनानुदयादर्शनात् केवलव्यतिरेकाभावे च यज्ञादीनां हेतुत्वकल्पनायोगाद् विविदिषाश्रुतेश्च वर्तमानापदेशित्वाद् विनियोजकत्वायोगाज्ज्ञानस्य फलवदुत्पत्तावपि नान्वयस्तेषामिति भावः। विविदिषावाक्ये वर्तमानापदेशेऽपि 'यस्य पर्णमयी'त्यादाविवापूर्वत्वात् पञ्चमलकारेण ब्रह्मानुभवकामो यज्ञादीनि कुर्यादिति विध्युपगमादागमस्य केवलव्यतिरेकानपेक्षत्वाद् विषयसौन्दर्यलभ्यायामिच्छायां साक्षादन्वयायोगात् तत्फले ज्ञाने यज्ञाद्यन्वयसिद्धे'र्यज्ञेने'त्यादिकरणश्रुत्या च तेषामिष्यमाणापरोक्षधीसाधनत्वदृष्टेर्ज्ञानस्य च मानायत्ततया साक्षाद् यज्ञाद्यसाधनत्वेऽपि[१] तेषां चित्तशुद्ध्या प्रत्यक्प्रवणतामुत्पाद्यापरोक्षज्ञाने पर्यवसानात् पारंपर्येऽपि पचति काष्ठैरितिवत् करणविभक्तिसंभवादुत्पत्तौ ज्ञानस्य कर्मापेक्षाऽस्तीति सिद्धान्तयति— **इदमिति**। आपातेन पूर्वापरविरोधप्रतीतिं शङ्कते— **नन्विति**। विभागोक्त्या प्रत्याह— **नेतीति**। उक्तव्यवस्थायां प्रश्नपूर्वकं हेतुमाह— **कुत इति**। हेतुं विवृणोति— **तथाहीति**। नन्वत्र

---

१. 'यज्ञाद्यसाध्यत्वेऽपि' इति पाठान्तरम्। यथास्थितपाठेऽपि बहुव्रीहिसमासाश्रयणात् समानोऽर्थः।

**दानेन तपसाऽनाशकेन' (बृ.उ. ४।४।२२) इति यज्ञादीनां विद्यासाधनभावं दर्शयति। विविदिषासंयोगाच्चैषा-मुत्पत्तिसाधनभावोऽवसीयते। 'अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत्' (छा.उ. ८।५।१)इत्यत्र च विद्यासाधनभूतस्य ब्रह्मचर्यस्य यज्ञादिभिः संस्तवाद् यज्ञादीनामपि हि साधनभावः सूच्यते।'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं संग्रहेण ब्रवीमि' (क.उ. २।१५) इत्येवमाद्या च श्रुतिराश्रमकर्मणां विद्यासाधनभावं सूचयति। स्मृतिरपि-'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः। कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इत्येवमाद्या। अश्ववदिति योग्यतानिदर्शनम्। यथा च योग्यतावशेनाश्वो न लाङ्गलाकर्षणे युज्यते, रथचर्यायां तु युज्यते। एवमाश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्ते, उत्पत्तौ चापेक्ष्यन्त इति।।२६।।**

### शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्।।२७।।

**यदि कश्चिन्मन्येत- यज्ञादीनां विद्यासाधनभावो न न्याय्यो विध्यभावात्। 'यज्ञेन विविदिषन्ति'**

#### *प्रकटार्थविवरणम्*

**यज्ञादीनामिति**। इतोऽपि यज्ञादीनां साधनत्वमित्याह— **विविदिषेति**। यज्ञादिभिरात्मानं विविदिषन्ति वेदितुमिच्छन्तीति यज्ञादीनां वैभक्तिकविविदिषासंयोगात्। अर्थस्तु 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः सनोऽन्यत्र' इति स्मरणादिष्यमाणतया प्राधान्याच्च ज्ञानेनैव संबन्धः, काष्ठेन पिपक्षति दात्रेण लुलूषति इतिवदित्यर्थः। अश्वेन जिगमिषतीत्यत्राप्यश्वस्य गमनसाधनतैव, गमनक्रियाया एव च प्राप्तौ संयोगेऽनपेक्षकारणत्वमिति। यज्ञादीनां साधनत्वे लिङ्गमाह— **अथ यद्यज्ञ इति**। वेदान्तानां सम्यग्ज्ञानसाधनत्वे वाक्यमाह— **सर्वे वेदा यत्पदमामनन्तीति**। तपांसि आश्रमकर्माणि सर्वाणि यत्प्रतिपत्त्यर्थानि वदन्तीति कर्मणां विद्यासाधनत्वे लिङ्गमित्यर्थः। स्मृत्यनुसारेणापि कर्मणां ज्ञानोत्पत्तिसाधनतैवेत्याह— **स्मृतिरपीति**। कषायस्य च पाचकत्वात् कर्माणि पक्तिरित्युच्यते। परमगतेः कैवल्यस्य साधनत्वात् ज्ञानं परमगतिरित्यर्थः। दृष्टान्तस्यार्थमाह— **अश्ववदिति**।

**शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्**।। सूत्रस्य शङ्कामाह— **यदि कश्चिदित्यादिना**।

#### *भाष्यभावप्रकाशिका*

प्रमाणायत्तत्वात् कर्मणां तत्रानुपयोगात् श्रुतिपरित्यागाविशेषे विज्ञानसाध्ये मोक्षे तेषामुपयोगः किं न स्यादित्याशङ्क्याह— **विविदिषेति**। मोक्षसाधनत्वकल्पनाया 'नास्त्यकृतः कृतेन' 'न कर्मणा न प्रजये'त्यादिशास्त्रविरोधप्रसङ्गात् ज्ञानकरणत्वस्य च परंपरयाऽपि संभवे बाधायोगात् 'कषायपक्तिः कर्माणी'त्यादिशास्त्रप्रतिपन्नचित्तशुद्धिद्वारेण कर्मणां ज्ञानोत्पत्तावेवोपयोग इत्यर्थः। यज्ञादिश्रुतेरित्यनेन वाक्यान्तरमपि सूचितमित्यपि दर्शयति— **अथ यद्यज्ञ इति**। परम्परया कर्मणां ज्ञानसाधनत्वे प्रमाणमाह— **स्मृतिरपीति**। उत्पत्ताविव फलेऽपि कर्मापेक्षा ज्ञानस्य किं न स्यादिति, तत्राह— **अश्ववदिति**।

#### *न्यायनिर्णयः*

विविदिषासंयोगो यज्ञादीनां ज्ञायते। यदि तस्यां विषयसौन्दर्यलभ्यायां तेषामन्वयायोगादिष्यमाणे ज्ञानेऽन्वयोऽभ्युपगम्यते तर्हि ज्ञानस्य मानाधीनत्वात् कर्मणां तत्रान्वयासिद्धेः श्रुतत्यागेन तत्फले मोक्षे किमित्यन्वयो नेष्यते, तत्राह— **विविदिषेति**। मोक्षहेतुत्वकल्पनायां 'नास्त्यकृतः कृतेने'त्यादिविरोधात्परंपरयाऽपि हेतुत्वे बाधाभावाद् बुद्धिशुद्ध्या तदुत्पत्तावेवान्वयो यज्ञादीनामित्यर्थः। यज्ञादिश्रुतेरिति वाक्यान्तरमपि ग्रहीतव्यमित्याह— **अथेति**। तत्र यज्ञादीनां ज्ञानसाधनत्वे विज्ञातं लिङ्गमाह— **अत्रेति**। तत्रैव लिङ्गान्तरमाह— **सर्व इति**। परंपरया कर्मणां धीहेतुत्वे स्मृतिमपि दर्शयति— **स्मृतिरिति**। उत्पत्ताविव फलेऽपि ज्ञानस्य कर्मापेक्षा किं न स्यादित्याशङ्क्य दृष्टान्तमादाय व्याकरोति— **अश्ववदित्यादिना**।।२६।।

ज्ञानोत्पत्तौ बहिरङ्गमुक्त्वा तत्रैवान्तरङ्गमुपदिशति— **शमदमादीति**। अत्र व्यावर्त्यां शङ्कामाह—**यदीति**। विद्यास्तावकत्वेनापि

**इत्येवंजातीयका हि श्रुतिरनुवादस्वरूपा विद्याभिष्टवपरा, न यज्ञादिविधिपरा, इत्थं महाभागा विद्या यद् यज्ञादिभिरेतामवाप्तुमिच्छन्तीति। तथापि तु शमदमाद्युपेतः स्याद् विद्यार्थी 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति' (बृ.उ. ४।४।२३) इति विद्यासाधनत्वेन शमदमादीनां विधानात्, विहितानां चावश्यानुष्ठेयत्वात्। नन्वत्रापि शमाद्युपेतो भूत्वा पश्यतीति वर्तमानापदेश उपलभ्यते, न विधिः। नेति ब्रूमः। तस्मादिति प्रकृतप्रशंसापरिग्रहाद् विधित्वप्रतीतेः। 'पश्येदि'ति च माध्यंदिना विस्पष्टमेव विधिमधीयते। तस्माद् यज्ञाद्यनपेक्षायामपि शमादीन्यपेक्षितव्यानि। यज्ञादीन्यपि त्वपेक्षितव्यानि, यज्ञादिश्रुतेरेव। ननूक्तं यज्ञादिभिर्विविदिषन्तीत्यत्र न विधिरुपलभ्यत इति। सत्यमुक्तम्; तथापि त्वपूर्वत्वात् संयोगस्य विधिः परिकल्प्यते। न ह्ययं यज्ञादीनां विविदिषासंयोगः पूर्वं प्राप्तो येनानूद्येत। 'तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि' (तै.सं. २।६।८।५) इत्येवमादिषु चाश्रुतविधिकेष्वपि वाक्येष्वपूर्वत्वाद् विधिं परिकल्प्य 'पौष्णं**

### *प्रकटार्थविवरणम्*

विद्यास्तावकत्वेनाप्यर्थवत्त्वे संभवति न वर्तमानताभङ्गेन विधिकल्पनं न्याय्यम्, वाक्यभेदप्रसङ्गात्; अतः शब्दमात्रलभ्या विद्येति शङ्काशयः। यद्यप्येवं तवाभिप्रायः, तथाप्यवश्यं साधनान्तरमनुष्ठेयम्; न शब्दमात्रलभ्या विद्येत्याह— **तथापि त्विति**। यस्मादेवमात्मानं विदित्वा 'न लिप्यते कर्मणा पापकेन' तस्मादेवं विदित्वा अर्थी शमाद्युपेतो भूत्वा विचारयेदित्यवगम्यते इत्याह— **नेति ब्रूम इति**। काण्वपाठे विधिमुक्त्वा माध्यन्दिनपाठे तु न संशय इत्याह— **पश्येदिति चेति**। यज्ञादीनामसाधनत्वाशङ्कामापाततोऽभ्युपगम्य साधनान्तरापेक्षोक्ता; साऽप्ययुक्तैवेत्याह— **यज्ञादीन्यपीति**। सत्यपि महावाक्यस्यैक्ये अनुष्ठानयोग्यापूर्वार्थविधानमवान्तरवाक्येन क्रियते; न तत्र वाक्यभेद इत्यत्र पूर्वतन्त्रसंमतिमाह— **तस्मात्पूषेति**। दर्शपूर्णमासप्रकरणे श्रूयते—'तस्मात्पूषा प्रपिष्टभागः' इत्यादि। तत्र पूष्णः प्रपिष्टद्रव्यसंबन्धः समासात् प्रतीतः। पूषा देवता पिष्टभागो वा द्रव्यं न दर्शपूर्णमासयोरस्तीति तदेकवाक्यताऽयोगात् कालत्रयानवमृष्टद्रव्यदेवतासंबन्धस्य चाविनाभावेन यागविध्युपस्थापकत्वाद् व्यवहारसिद्धये विधिपदमध्याहृत्य प्रकरणादुत्कर्षेण पूषोद्देशेन पिष्टभागः कर्तव्य इति विकृतौ संबन्धाभ्युपगमः 'पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात् प्रकृतौ' इत्यस्मिन्नधिकरण

### *भाष्यभावप्रकाशिका*

**प्रकृतप्रशंसेति**। तं विदित्वा न लिप्यते कर्मणेति प्रशंसाया अविधेयत्वे असंभवात् तस्मादिति च प्रकृतप्रशंसापरामर्शाद् विधित्वमध्यवसीयत इत्यर्थः। यज्ञादिषु तर्ह्यनादर इति, तत्राह— **यज्ञादीन्यपीति**। ननु श्रुतिस्मृतिप्रमाणाद् यज्ञादीनामप्यनुष्ठेयत्वञ्चेत्

### *न्यायनिर्णयः*

संभवत्यर्थवत्त्वे वर्तमानताभङ्गेन विधिकल्पनमयुक्तं वाक्यभेदप्रसङ्गात्। अतः शब्दमात्रलभ्या विद्येति भावः। एवं तवाभिप्रायेऽपि हेत्वन्तरमवश्यमनुष्ठेयं न शब्दमात्रलभ्या विद्येति सूत्रयोजनया परिहरति— **तथापीति**। विविदिषावाक्यतुल्यतया शमादिवाक्यस्य नास्ति विधिपरतेति शङ्कते— **नन्विति**। यस्मादेवमात्मानं विदित्वा पापेन कर्मणा न लिप्यते तस्मादेवं विद्यार्थी शमाद्युपेतो भूत्वा विचारयेदिति गम्यते विधिरित्याह— **नेतीति**। विध्यभावे तत्प्रशंसावैयर्थ्यादुक्तविधिसिद्धिरित्यर्थः। काण्वपाठे विधिमुक्त्वा माध्यंदिनपाठे विध्यभावशङ्काऽपि नास्तीत्याह— **पश्येदिति चेति**। विधिफलमाह— **तस्मादिति**। यज्ञादीनामसाधनत्वशङ्कामापाततोऽभ्युपेत्य साधनान्तरापेक्षोक्ता। इदानीं तदसाधनत्वशङ्काऽपि न युक्तेत्याह— **यज्ञादीनीति**। उक्तं स्मारयित्वा परिहरति— **नन्वित्यादिना**। संयोगस्यापूर्वत्वमेव स्पष्टयति— **न हीति**। सत्यपि महावाक्यैक्येऽनुष्ठानयोग्यापूर्वार्थविधिरवान्तरवाक्येन क्रियते, न तत्र वाक्यभेदो दोष इत्यत्र पूर्वतन्त्रसंमतिमाह — **तस्मादिति**। दर्शपूर्णमासयोः श्रुतं 'तस्मात्पूषे'त्यादि । तत्र पूष्णः पिष्टद्रव्यसंबन्धः सामासिकः। न च पूषा देवता पिष्टभागो द्रव्यं दर्शपूर्णमासयोरस्ति, तेन तदेकवाक्यताऽयोगात् कालत्रयास्पृष्टद्रव्यदेवतासंबन्धस्याविनाभावेन यागविध्युपस्थापकत्वाद् व्यवहारसिद्धये विधिपदमध्याहृत्य प्रकरणादुत्कर्षेण पूषोद्देशेन पिष्टभागः कर्तव्य इति विकृतौ संबन्धः

**पेषणं विकृतौ प्रतीयेत' (जै.सू. ३।३।३४) इत्यादिविचारः प्रथमे तन्त्रे प्रवर्तितः। तथा चोक्तम् 'विधिर्वा धारणवत्' (ब्र.सू. ३।४।२०) इति। स्मृतिष्वपि भगवद्गीताद्यास्वनभिसंधाय फलमनुष्ठितानि यज्ञादीनि मुमुक्षोर्ज्ञानसाधनानि भवन्तीति प्रपञ्चितम्। तस्माद् यज्ञादीनि शमदमादीनि च यथाश्रमं सर्वाण्येवाश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि। तत्राप्येवंविदिति विद्यासंयोगात् प्रत्यासन्नानि विद्यासाधनानि शमादीनि; विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनीति विवेक्तव्यम्।।२७।।**

।।इति षष्ठं सर्वापेक्षाधिकरणम्।।

**७।।सर्वान्नानुमत्यधिकरणम्।। सू.२८-३१।।**

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्।।२८।।

**प्राणसंवादे श्रूयते छन्दोगानाम्– 'न ह वा एवंविदि किंचनानन्नं भवति' (छा.उ. ५।२।१) इति।**

### *शारीरकन्यायसंग्रहः*

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्।।२८।। अबाधाच्च।।२९।। अपि च स्मर्यते।।३०।। शब्दश्चातोऽकामकारे।।३१।।** वामदेव्योपासनाव्रते सर्वस्त्रीगमनवत् सर्वान्नभक्षणं प्राणविदः सामान्यप्रवृत्तभक्ष्याभक्ष्यविभागशास्त्रमपबाध्य विधीयत इति प्राप्ते, अश्रूयमाणविशेषविधेः सामान्यविधिबाधकत्वमयुक्तम्; विशेषविधिकल्पना तु सामान्यविधिनाऽपि बाध्यते, अविरोधापेक्षत्वात् कल्पनायाः इति न्यायेन सामान्यविधिना विरोधात्, अशक्यविधेयत्वाच्च सर्वान्नभक्षणं स्तुतिरित्युक्तम्।।

### *प्रकटार्थविवरणम्*

इत्यर्थः। स्मृत्यनुसारेणापि अवान्तरवाक्यस्य विधायकत्वं वक्तव्यमित्याह— **स्मृतिष्वपीति**। यस्माच्छ्रुतिसिद्धं कर्मणां ज्ञानोत्पत्तिसाधनत्वं तस्मादित्युपसंहारः। ननु यज्ञादीनां विद्यासाधनत्वमङ्गीकृतं चेत् तर्हि यावद्विद्योदयं यज्ञाद्यनुष्ठानं प्रसज्येत शमाद्यनुष्ठानवदित्याशङ्क्याह— **तत्राप्येवंविदिति**। यद्यपि शमादीनां यज्ञादीनां च निरूप्यमाणे विद्यासाधनत्वमविशिष्टं प्रत्येकं यज्ञादिषु करणविभक्तिश्रवणात्, तथाप्यापाततः शमादीनामेवंवित्संबन्धप्रतीतेः दृष्टेनैव च चित्तस्यान्यथाप्रवृत्तिनिरोधेनोपकारकत्वादन्तरङ्गत्वम्; यज्ञादीनां च आपाततो विविदिषासंबन्धप्रतीतेरदृष्टेन चात्मना चित्तशुद्धिं प्रत्यक्प्रवणतां चोत्पाद्य ज्ञानसाधनत्वात् प्रत्यक्प्रवणताद्वारकार्यमुपलभ्योपरमसंभवाद् बहिरङ्गत्वम्। अतः क्रमेण कर्मतत्त्यागयोर्ज्ञानसाधनत्वमित्यर्थः। इति षष्ठं सर्वापेक्षाधिकरणम्।।

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्।।** प्राणविदः सर्वात्तृत्वं विषय इति दर्शयति— **प्राणसंवाद इति**। जग्धं भक्षितम्।

### *भाष्यभावप्रकाशिका*

कस्तत्र शमादीनां विशेष इति, तत्राह— **तत्राप्येवंविदिति**। इति षष्ठं सर्वापेक्षाधिकरणम्।।

### *न्यायनिर्णयः*

'पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ' इत्यत्र विचारित इत्यर्थः। अवान्तरवाक्यभेदेन सूत्रकृताऽपि स्वीकृतो विधिरित्याह— **तथा चेति**। स्मृत्यनुसारेणाप्यवान्तरवाक्यस्य विधायकत्वं वाच्यमित्याह— **स्मृतिष्विति**। कर्मणां ज्ञानोत्पत्तिहेतुत्वे श्रुतिस्मृतिन्यायसिद्धे फलितमाह— **तस्मादिति**। यज्ञादीनामपि श्रुतिस्मृतिन्यायेभ्योऽनुष्ठेयत्वे शमादीनां तेभ्यो विशेषाभावाद् यावद्विद्योदयमविशेषेणानुष्ठानं स्यादित्याशङ्क्याह— **तत्रापीति**।।२७।। इति षष्ठं सर्वापेक्षाधिकरणम्।।

यज्ञादीनां शमादीनां च विद्यासंनिहितानां तच्छेषतोक्ता, तत्प्रसङ्गाद् विद्यासंनिध्युक्तसर्वान्नाभ्यनुज्ञानस्यापि विद्याशेषतामाशङ्क्य प्रत्याह— **सर्वान्नेति**। प्राणविदः सर्वान्नानुज्ञानं विषयं वक्तुं शाखाद्वयस्थां श्रुतिमाह— **प्राणेति**। जग्धं भक्षितम्। विषयवाक्यार्थं

**तथा वाजसनेयिनाम्– 'न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतम्' (बृ.उ. ६।१।१४) इति। सर्वमस्यादनीयमेव भवतीत्यर्थः। किमिदं सर्वान्नानुज्ञानं शमादिवद् विद्याङ्गं विधीयत उत स्तुत्यर्थं संकीर्त्यत इति संशये– विधिरिति तावत् प्राप्तम्। तथा हि प्रवृत्तिविशेषकर उपदेशो भवति। अतः प्राणविद्यासंनिधानात् तदङ्गत्वेनेयं नियमनिवृत्तिरुपदिश्यते। नन्वेवं सति भक्ष्याभक्ष्यविभागशास्त्रव्याघातः स्यात्। नैष दोषः; सामान्यविशेषभावाद् बाधोपपत्तेः। यथा प्राणिहिंसाप्रतिषेधस्य पशुसंज्ञपनविधिना बाधः, यथा च 'न कांचन परिहरेत् तद् व्रतम्' (छा.उ. २।१३।२) इत्यनेन वामदेव्यविद्याविषयेण सर्वस्त्र्यपरिहारवचनेन सामान्यविषयं गम्यागम्यविभागशास्त्रं बाध्यते, एवमनेनापि प्राणविद्याविषयेण सर्वान्नभक्षणवचनेन भक्ष्याभक्ष्यविभागशास्त्रं बाध्येतेति।**

**एवं प्राप्ते ब्रूमः–नेदं सर्वान्नानुज्ञानं विधीयत इति। न ह्यत्र विधायकः शब्द उपलभ्यते, 'न ह वा एवंविदि किंचनानन्नं भवति' (छा.उ. ५।२।१) इति वर्तमानापदेशात्। न चासत्यामपि विधिप्रतीतौ**

### *प्रकटार्थविवरणम्*

अपूर्वत्वाद् विध्यश्रवणाच्च संशये सति पूर्वपक्षमाह— **विधिरिति**। पूर्वाधिकरणोक्तशमादिवत् 'एवंवित्' इति विद्वत्संबन्धित्वेन सर्वान्नभक्षणस्य समाम्नानादङ्गविधिरित्यर्थः। सर्वान्नात्तृत्वं प्राणविद्याङ्गं चेत् तर्हि 'कलञ्जं न भक्षयेत्' इत्यादिशास्त्रं विरुध्येतेत्याह— **नन्वेवं सतीति**। [1]प्राणविध्यतिरिक्तविषयं तच्छास्त्रमिति न विरोध इत्याह— **नैष दोष इति**।

उत्सूत्रमेव सिद्धान्तमाह— **नेदमिति**। यदुक्तं विशेषविधिकल्पनम्, तत्राह— **न चासत्यामपीति**। श्रूयमाणस्य विशेषविधेः सामान्यविधिबाधकत्वं युक्तम्, विशेषविधिकल्पना तु सामान्यविधिनाऽपि बाध्यते, अविरोधापेक्षत्वात् कल्पनाया इत्यर्थः।

### *भाष्यभावप्रकाशिका*

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्**।। विषयवाक्यस्यार्थमाह— **सर्वमस्येति**। **प्रवृत्तिविशेषेति**। विधिपक्षे अनुष्ठानविशेषो लभ्यत इत्यर्थः। कर्मविषये अपवादं दर्शयित्वा विद्याविषये दर्शयति— **यथा न कांचनेति**।

जुहूर्भवतीति वर्तमानापदेशेऽपि यथा विधिरभ्युपगम्यते, तथा अत्रापि कल्प्यतामित्याह— **न चासत्यामपीति**। श्रूयमाणस्य

### *न्यायनिर्णयः*

संगृह्णाति— **सर्वमिति**। अपूर्वत्वाद्विध्यश्रुतेश्च संशयमाह— **किमिति**। अत्र प्राणविद्यायाः स्वतन्त्रपुमर्थहेतोर्वाक्यार्थज्ञानोपयुक्तायाः स्तुत्यर्थं सर्वान्नानुज्ञानकीर्तनमिति कथनात्पादादिसंगतिः। पूर्वपक्षे प्राणविदो भक्ष्याभक्ष्यविभागासिद्धिः, सिद्धान्ते विदुषोऽविदुषश्चानापदि तत्सिद्धिरिति मन्वानः संशयमनूद्य पूर्वपक्षयति— **विधिरितीति**। विधिपक्षेऽनुष्ठानविशेषलाभं हेतुमाह— **तथाहीति**। सर्वान्नानुज्ञानं स्वतन्त्रमेव विधीयतामित्याशङ्क्य संनिधिविरोधान्मैवमित्याह— **अत इति**। सर्वान्नात्तृत्वं प्राणविद्याङ्गं चेत्तर्हि 'न कलञ्जं भक्षयेदि'त्यादिशास्त्रं विरुध्येतेति शङ्कते— **नन्विति**। प्राणविदतिरिक्तविषयं तदिति विरोधं परिहरति— **नेत्यादिना**। उपपत्तिमेव कर्मविषयदृष्टान्तेनोदाहरति— **यथेति**। तत्रैव विद्याविषयं दृष्टान्तमाह— **यथा चेति**। 'यदुपमन्त्रयते स हिंकार' इत्यादिना ग्राम्यव्यापारगतचेष्टासु हिंकारादिदृष्टिर्विहिता सा वामदेव्यविद्या। तत्रोपमन्त्रणं संकेतकरणम्। दृष्टान्तयोरर्थं दार्ष्टान्तिके योजयति— **एवमिति**।

विविदिषावाक्ये वर्तमानापदेशेऽप्यपूर्वत्वात्पञ्चमलकाराङ्गीकारेण विधिकल्पनवत् 'न हे'त्यादौ वर्तमानापदेशेऽप्यपूर्वत्वाद्विधिरिति मतमनूद्य सूत्राद् बहिरेव सिद्धान्तमाह— **एवमिति**। तत्र हेतुमाह— **न हीति**। 'यस्य पर्णमयी'त्यादाविव वर्तमानापदेशेऽपि कल्प्यो विधिरित्याशङ्क्याह— **न चेति**। सामान्यविधिबाधकत्वं श्रुतविशेषविधेरिष्टम्, विशेषकल्पना तु सामान्यविधिना बाध्या,

---

१. 'प्राणविद्व्यतिरिक्त' इति पाठः स्यात्।

**प्रवृत्तिविशेषकरत्वलोभेनैव विधिरभ्युपगन्तुं शक्यते। अपि च श्वादिमर्यादं प्राणस्यान्नमित्युक्त्वेदमुच्यते 'नैवंविदः किंचिदनन्नं भवति' इति। न च श्वादिमर्यादमन्नं मानुषेण देहेनोपभोक्तुं शक्यते। शक्यते तु प्राणस्यान्नमिदं सर्वमिति विचिन्तयितुम्। तस्मात् प्राणान्नविज्ञानप्रशंसार्थोऽयमर्थवादो, न सर्वान्नानुज्ञानविधिः। तद् दर्शयति– 'सर्वान्नानुमतिश्च प्राणात्यये' इति। एतदुक्तं भवति– प्राणात्यय एव हि परस्यामापदि सर्वमन्नमदनीयत्वेनाभ्यनुज्ञायते, तद्दर्शनात्। तथा हि श्रुतिश्चाक्रायणस्यर्षेः कष्टायामवस्थायामभक्ष्यभक्षणे प्रवृत्तिं दर्शयति– 'मटचीहतेषु कुरुषु' (छा.उ. १।१०।१) इत्यस्मिन् ब्राह्मणे। चाक्रायणः किलर्षिरापद्गत इभ्येन सामिखादितान् कुल्माषांश्चखाद। अनुपानं तु तदीयमुच्छिष्टदोषात् प्रत्याचचक्षे। कारणं चात्रोवाच 'न वा अजीविष्यमिमानखादन्' (छा.उ. १।१०।४) इति, 'कामो म उदपानम्' (छा.उ. १।१०।४) इति च। पुनश्चोत्तरेद्युस्तानेव स्वपरोच्छिष्टान् पर्युषितान् कुल्माषान् भक्षयांबभूवेति। तदेतदुच्छिष्टोच्छिष्टपर्युषितभक्षणं दर्शयन्त्याः श्रुतेराशयातिशयो लक्ष्यते– प्राणात्ययप्रसङ्गे प्राणसंधारणायाभक्ष्यमपि भक्षयितव्यमिति। स्वस्थावस्थायां**

### *प्रकटार्थविवरणम्*

अशक्यविधानत्वाच्च सर्वान्नभक्षणं स्तुतिरित्याह— **अपि चेति**। उक्तेऽर्थे सूत्रसंमतिमाह— **तद्दर्शयतीति**। मटच्यः [अ]शनयः; ताभिर्हतेषु कुरुसस्येषु दुर्भिक्षे सञ्जाते सह जाययाऽटित्वा [आटिक्या] अनुपजातपयोधरादिस्त्रीव्यञ्जनया देशान्तरं प्रतिचक्रमे चाक्रायणः। स च कदाचित् इभ्यग्रामे वासं चक्रे; स तत्रेभ्येन हस्त्यारोहेण सामिखादितानर्धभक्षितान् कुत्सितान् माषान् भक्षितवानित्यर्थः। अनुपानं गृहाणेतीभ्येनोक्ते 'उच्छिष्टं वै मे पीतं स्यादिति होवाच'। किमेतेऽप्युच्छिष्टा न भवन्तीत्युक्ते कारणं चात्रोक्तवानित्यर्थः। कामं स्वेच्छातः; मे मम तटाकादिषूदकपानं भविष्यतीत्यर्थः। स्वयं खादित्वा परिशिष्टान् जायार्थमाजहार। तया च निहितानुत्तरदिने भक्षितवानित्याह— **पुनश्चेति**। अस्याः श्रुतेरभिप्रायमाह— **तदेतदिति**।

### *भाष्यभावप्रकाशिका*

विशेषविधेः सामान्यविधिबाधकत्वं युक्तम्; विशेषकल्पना तु सामान्यविधिनाऽपवाद्यते, अविरोधापेक्षत्वात् कल्पनाया इत्यर्थः। कर्तुमशक्यत्वाच्च स्तुतिरेवायं, न विधिरित्याह— **अपि चेति**। आ श्वभ्य आ शकुनिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नमिति श्रवणादशक्यत्वमित्यर्थः। तर्हि वचनस्य वैयर्थ्यं स्यादित्याशङ्क्य तथा चिन्तनार्थस्तुतिपरमिदं वचनमित्याह— **शक्यते त्विति**। अर्थमुपवर्ण्य सूत्रं योजयति— **तद्दर्शयतीति**। मटच्योऽशनयः पाषाणवृष्टयो वा तदहतेषु कुरुसस्येष्वित्यर्थः। इ[भ्ये]न हस्तिपकेन सा[मि]खादितानर्द्धभक्षितान् न स्विदेतेप्युच्छिष्टत्वं कुल्माषाणामपि तुल्यमित्युक्तम्। पानीयपरिहारे विशेषकारणन्दर्शितवानित्याह— **कारणञ्चेति। पुनश्चोत्तरेद्युरिति**। 'स ह प्रातस्सञ्जिहान उवाचे'त्यारभ्य 'हन्त पत इम एव कुल्माषा इति तान् खादित्वा अमुं

### *न्यायनिर्णयः*

कल्पनाया विरोधाभावापेक्षत्वादित्यर्थः। इतश्च स्तुत्यर्थमेवेदं वचो न विधिरित्याह— **अपि चेति**। 'आ श्वभ्य आ शकुनिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्न'मिति श्रवणादशक्यविषयो विधिर्न संभवतीत्याह— **न चेति**। तर्हि वचनवैयर्थ्यमित्याशङ्क्य— सर्वं प्राणस्यान्नमिति धीस्तुत्यर्थत्वान्नैवमित्याह— **शक्यते त्विति**। उक्तेऽर्थे सूत्रमादत्ते— **तदिति**। तदक्षराणि व्याकरोति— **एतदिति**। मटच्योऽशनयः पाषाणवृष्टयो रक्तवर्णाः क्षुद्रपक्षिविशेषा वा। तैर्हतेषु कुरुषु तद्देशस्थसस्येष्विति यावत्। आख्यायिकार्थमाह— **चाक्रायण इति**। स हि दुर्भिक्षे जाते जाययाऽनुपजातपयोधरादिस्त्रीव्यञ्जनया सह देशान्तरं प्रतिचक्रमे। स कदाचिदिभ्यग्रामे निवसन्निभ्येन (सह) हस्त्यारोहेण सामिभोजितानर्धभक्षितान् कुल्माषान् कुत्सितमाषान् भक्षितवानित्यर्थः। अनुपानं गृहाणेत्युक्ते सत्युच्छिष्टं मे पीतं स्यादिति प्रतिषिध्य किमेतेऽप्युच्छिष्टा नेति परेणोक्ते कारणं चानुपाननिषेधे कथितवानित्याह— **अनुपानं त्विति**। कुल्माषाश्चेन्न भक्ष्यन्ते जीवनमेव मे न स्यात्। कामः स्वेच्छातो मे तडागादिषूदकपानं भविष्यतीत्यर्थः। स्वयं खादित्वा शिष्टाञ्जायार्थमाजहार। तया च भर्तृस्वभावज्ञया निहितानुत्तरदिने प्रातरेव भक्षितवानित्याह— **पुनश्चेति**। कुल्माषभक्षणश्रुतेरभिप्रायमाह— **तदिति**।

**तु तन्न कर्तव्यं विद्यावताऽपीत्यनुपानप्रत्याख्यानाद् गम्यते। तस्मादर्थवादो 'न ह वा एवंविदि' (छा.उ. ५।२।१) इत्येवमादिः।।२८।।**

## अबाधाच्च।।२९।।

**एवं च सति 'आहारशुद्धौ सत्त्वशुद्धि'रित्येवमादि भक्ष्याभक्ष्यविभागशास्त्रमबाधितं भविष्यति।।२९।।**

## अपि च स्मर्यते।।३०।।

**अपि चापदि सर्वान्नभक्षणमपि स्मर्यते विदुषोऽविदुषश्चाविशेषेण–'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' (मनु. १०-१०४) इति। तथा 'मद्यं नित्यं ब्राह्मणः', 'सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः', 'सुरापाः कृमयो भवन्त्यभक्ष्यभक्षणात्' इति च स्मर्यते वर्जनमनन्नस्य।।३०।।**

## शब्दश्चातोऽकामकारे।।३१।।

**शब्दश्चानन्नस्य प्रतिषेधकः कामकारनिवृत्तिप्रयोजनः कठानां[1] संहितायां श्रूयते–'तस्माद् ब्राह्मणः सुरां न पिबेत्' (का.सं. १२।१२) इति। सोऽपि 'न ह वा एवंविदि' (छा.उ. ५।२।१) इत्यस्यार्थ-वादत्वादुपपन्नतरो भवति। तस्मादेवंजातीयका अर्थवादा न विधय इति।।३१।।**

।।इति सप्तमं सर्वान्नानुमत्यधिकरणम्।।

### *प्रकटार्थविवरणम्*

**अबाधाच्च।। अपि च स्मर्यते।। शब्दश्चातोऽकामकारे।।** सर्वान्नभक्षणस्यार्थवादत्वे हेत्वन्तरमाह— **अबाधाच्चेत्यादिना।**

### *भाष्यभावप्रकाशिका*

यज्ञं विततमेयाये'ति पूर्वेद्युर्हस्तिपकेन स्वेन च भक्षितशेषांश्चखादेति श्रूयत इत्यर्थः।

सामान्यशास्त्रविरोधाद्विशेषविधिकल्पनमयुक्तमित्युक्तम्। इदानीं तत्सामान्यशास्त्रं दर्शयति— **अबाधाच्चेत्यादिना।**

### *न्यायनिर्णयः*

अनुपाननिषेधश्रुतेस्तात्पर्यमाह— **स्वस्थेति**। सर्वान्नभक्षणस्य निरङ्कुशत्वाभावे फलितमाह— **तस्मादिति**।।२८।।

तस्यार्थवादत्वे हेत्वन्तरमाह— **अबाधाच्चेति**। सामान्यशास्त्रविरोधान्न कल्प्यो विशेषविधिरित्युक्तम्। अधुना सामान्यशास्त्रं दर्शयन् सूत्रं योजयति— **एवं चेति**। स्वस्थावस्थायां भक्ष्याभक्ष्यभेदे सतीति यावत्।।२९।।

आपदवस्थायामभक्ष्यभक्षणानुज्ञाने स्मृतिं संवादयति— **अपीति**। स्मृतिरपि विद्वद्विषयेत्याशङ्क्याह— **अपि चेति**। सुरापानमवस्थाद्वयेऽपि न कार्यमित्याह— **तथेति**। ब्राह्मणो वर्जयेदिति शेषः। जीवितात्ययस्मृत्या सुराऽपि तदत्यये पातव्येत्याशङ्क्याह— **सुरापस्येति**। उष्णां सुरामिति शेषः। उष्णामग्निना तप्तामिति यावत्। मरणान्तिकप्रायश्चित्तदृष्टेस्तत्प्रसङ्गेऽपि सा न पातव्येत्यर्थः। इतश्च सा सदा न पेयेत्याह— **सुरापा इति**। तत्र हेतुः— **अभक्ष्येति**। मद्यमित्यादिस्मृतेस्तात्पर्यमाह— **वर्जनमिति**।।३०।।

स्मृतिप्रामाण्यार्थं तन्मूलश्रुतिमाह— **शब्दश्चेति**। तस्माद् ब्राह्मणस्य सुरापस्य मरणान्तिकप्रायश्चित्तदर्शनादिति यावत्। श्रौतनिषेधस्य प्रकृतोपयोगमाह— **सोऽपीति**। श्रुतिस्मृतिसिद्धमर्थमुपसंहरन्नतःशब्दं व्याचष्टे— **तस्मादिति**।।३१।। इति सप्तमं सर्वान्नानुमत्यधिकरणम्।।

---

१. 'काठकानां' इति पा.।

## ८।। आश्रमकर्माधिकरणम् ।। सू.३२-३५।।

## विहितत्वाच्चाश्रमकर्मापि।।३२।।

**'सर्वापेक्षा च-'(ब्र.सू.३।४।२६) इत्यत्राश्रमकर्मणां विद्यासाधनत्वमवधारितम्। इदानीं तु किममुमुक्षोरप्याश्रममात्रनिष्ठस्य विद्यामकामयमानस्य तान्यनुष्ठेयान्युताहो नेति चिन्त्यते। तत्र 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (बृ.उ. ४।४।२२) इत्यादिनाऽऽश्रमकर्मणां विद्यासाधनत्वेन विहितत्वाद् विद्यामनिच्छतः फलान्तरं कामयमानस्य नित्यान्यननुष्ठेयानि। अथ तस्याप्यनुष्ठेयानि, न तर्ह्येषां विद्यासाधनत्वं नित्यानित्य-**

### *शारीरकन्यायसंग्रहः*

**विहितत्वाच्चाश्रमकर्मापि।।३२।। सहकारित्वेन च।।३३।। सर्वथाऽपि त एवोभयलिङ्गात्।।३४।। अनभिभवं च दर्शयति।।३५।।** एकस्योभयार्थताविरोधात् 'लिङर्थे लेट्' इति लेट्परिग्रहेण 'विविदिषन्ति' इति कर्मणां विद्यासंयोगे विहिते, यावज्जीवादिश्रुतेराश्रमकर्मतया नित्यत्वे च विहिते, विद्यासंयोगस्य मोक्षफलतयोत्कृष्टत्वात् तेन [1]नित्ययोगबाधादाश्रममात्रेणाननुष्ठेयत्वं कर्मणां प्राप्तम्। अनुष्ठेयत्वे वा, कौण्डपायिनामयनेऽग्निहोत्रस्य प्रकरणभेदात् प्रसिद्धाग्निहोत्रात् कर्मान्तरत्ववत् प्रकरणभेदादेव प्रसिद्धेभ्योऽग्निहोत्रादिभ्यः कर्मान्तराण्येव "विविदिषन्ति" इति विद्यासंयुक्ततया विधीयन्ते विरोधपरिहारायेति प्राप्तम्। तत्रापां प्रणयनस्य यथा स्वरूपेण दर्शपूर्णमासक्रत्वङ्गत्वम्, गोदोहनोपरक्ततया पश्वर्थत्वं च उभयविधविनियोगसामर्थ्यात्, तथेहाप्युभयविधविनियोगसामर्थ्यान्नित्यता विद्यार्थता चेत्युभयं न विरुध्यते। कुण्डपायिनामयने अग्निहोत्रशब्दस्याख्यातपरतन्त्रतया तदुक्तार्थाभिधायिनो देशान्तरवर्त्यग्निहोत्रस्य स्वातन्त्र्येण परामर्शकत्वानुपपत्तेः जुहोतेश्चाख्यातसन्निहितद्रव्यगुणकर्मरूपितं कर्मान्तरं विहाय व्यवहिताग्निहोत्रपरामर्शकत्वानुपपत्तेः कर्मान्तरमेव विहितमित्युक्तम्। इह तु यज्ञदानतपःशब्दानां लौकिकाभिधानतया स्वातन्त्र्यात् प्रकरणान्तरविहिताग्निहोत्रादिपरामर्शकत्वसंभवात्, प्रसिद्धकर्मानुवादेन विद्यासंयोगमात्रं विधीयत इत्युक्तम्।।

### *प्रकटार्थविवरणम्*

**विहितत्वाच्चाश्रमकर्मापि।।** व्यवहितेन संबन्धमाह— **सर्वापेक्षा चेति**। विनियुक्तविनियोगविरोधाद् विनियोगदर्शनाच्च संशये पूर्वपक्षमाह— **तत्र तमेतमिति**। आश्रमकर्मतया नित्यत्वं विद्यासाधनतया चानित्यत्वमिति काम्यत्वमित्येवमुभयसंबन्धो विरुद्ध इत्यर्थः। अपां प्रणयनस्य यथा स्वरूपेण दर्शपूर्णमासक्रत्वर्थत्वं गोदोहनोपरक्ततया पश्वर्थत्वं चोभयविधनियोगसामर्थ्यात्, तथेहापि उभयविधविनियोगसामर्थ्यान्नित्यता विद्यार्थता च न विरुध्यत इति सिद्धान्तमाह— **आश्रममात्रनिष्ठस्यापीति**।

### *भाष्यभावप्रकाशिका*

**विहितत्वाच्चाश्रमकर्मापि।। नित्यानित्यसंयोगविरोधादिति**। विद्याकामनाया आवश्यकत्वनियमाभावात् काम्यतया

### *न्यायनिर्णयः*

सर्वात्रत्वोक्तिः शास्त्रान्तरविरोधे स्तुतिरित्युक्तम्। एवं विद्यार्थत्वोक्तिर्यज्ञादीनां स्तुतिर्नित्यत्वश्रुतिविरोधादित्याशङ्क्याह— **विहितत्वाच्चेति**। व्यवहितेन संबन्धमाह— **सर्वापेक्षेति**। अग्निहोत्रादिकर्माण्यधिकृत्य विहितत्वाद्विनियुक्तविनियोगायोगाच्च संशयमाह— **इदानीं त्विति**। अत्राग्निहोत्रादीनामुभयथात्वोक्त्या स्वतन्त्रपुमर्थहेतुशास्त्रोत्थात्मविद्योपायोपवर्णनात् पादादिसंगतिः। पूर्वपक्षे विद्याहेतुत्वोक्तेः स्तुतित्वाद् विविदिषावाक्यस्य विवक्षितार्थत्वासिद्धिः, सिद्धान्ते संयोगपृथक्त्वन्यायात् कर्मणामुभयत्वसंभवात् तत्सिद्धिरित्यभिप्रेत्य पूर्वपक्षमाह— **तत्रेति**। यावज्जीवश्रुतेरमुमुक्षोरपि तान्यनुष्ठेयानीत्याशङ्क्याह— **अथेति**। विविदिषाश्रुतेर्विद्यासंयोगोऽपि तेषामवश्यंभावीत्याशङ्क्याह— **नित्येति**। आवश्यकत्वाभावाद् विद्याकामनायाः काम्यतया कर्मणामनावश्यकत्वं नित्यतया चावश्यकत्व-

---

१. 'नित्ये विनियोग' इति पा.।

**संयोगविरोधादिति। अस्यां प्राप्तौ पठति– आश्रममात्रनिष्ठस्याप्यमुमुक्षोः कर्तव्यान्येव नित्यानि कर्माणि, 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिना विहितत्वात्। न हि वचनस्यातिभारो नाम कश्चिदस्ति।।३२।।**

**अथ यदुक्तं नैवं सति विद्यासाधनत्वमेषां स्यादिति; अत उत्तरं पठति–**

**सहकारित्वेन च।।३३।।**

**विद्यासहकारीणि चैतानि स्युर्विहितत्वादेव 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (बृ.उ. ४।४।२२) इत्यादिना। तदुक्तम्– 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र.सू. ३।४।२६) इति। न चेदं विद्यासहकारित्ववचनमाश्रमकर्मणां प्रयाजादिवद् विद्याफलविषयं मन्तव्यम्, अविधिलक्षणत्वाद् विद्यायाः, असाध्यत्वाच्च विद्याफलस्य। विधिलक्षणं हि साधनं दर्शपूर्णमासादि स्वर्गफलसिषाधयिषया सहकारिसाधनान्तरमपेक्षते, नैवं विद्या। तथा चोक्तम् 'अत एव चाग्नीन्धनाद्यनपेक्षा' (ब्र.सू. ३।४।२५) इति। तस्मादुत्पत्तिसाधनत्व एवैषां सहकारित्ववाचोयुक्तिः। न चात्र नित्यानित्यसंयोगविरोध आशङ्क्यः, कर्माभेदेऽपि संयोगभेदात्। नित्यो ह्येकः संयोगो यावज्जीवादिवाक्यकल्पितो, न तस्य विद्याफलत्वम्। अनित्यस्त्वपरः संयोगः 'तमेतं**

***प्रकटार्थविवरणम्***

**सहकारित्वेन च।।** सहकारिशब्दश्रवणात् फलोपकार्यङ्गत्वं प्राप्तम्; तन्निरस्यति— **न चेदमिति**। ब्रह्मज्ञानं स्वकार्ये न चोदितापेक्षम्, अचोदितत्वात्, मर्दनवत्; तथा विद्या स्वफले नेतिकर्तव्यापेक्षा, स्वरूपतोऽसाध्यफलत्वात्, कूपखनकव्यापारवदित्यर्थः। व्यतिरेकोदाहरणेन प्रकटयति— **विधिलक्षणं हीति**। परोक्तमुद्भाव्य परित्यजति— **न चात्रेति**। तुल्यबलश्रुतिद्वयेन पृथक्संबन्धावगमः

***भाष्यभावप्रकाशिका***

कर्मणामनावश्यकत्वम्, नित्यतया चावश्यकत्वमित्येकत्रैवावश्यकत्वानावश्यकत्वे विरुद्धे इत्यर्थः।

विद्यार्थतया विहितानां नित्यतयाऽपि विधानमयुक्तम्, गौरवादित्याशङ्क्या.......नाद्विद्याफलं प्रत्येवोपकारकत्वं सूत्रकारैरङ्गीकृतमित्याशङ्क्याह— **न चेदमिति**। उपकारकं च द्विविधम्। शास्त्रीयम्, अन्वयव्यतिरेकसिद्धं च; तदुभयमप्यत्र न संभवतीत्याह— **अविधिलक्षणत्वादिति**। अविधिलक्षणत्वमेव प्रपञ्चयति— **विधिलक्षणं हीति**। ग्राहकग्रहणपूर्वत्वादङ्गभावस्य विधेश्च ग्राहकत्वाद्विहितं दर्शपूर्णमासादि...भिरङ्गैर्ग्राहकगृहीतैर्युज्यते। नाविहिता विद्येत्यर्थः। कथं तर्हि सहकारित्ववचनमिति तदाह— **तस्मादुत्पत्तीति**।

***न्यायनिर्णयः***

मित्येकत्रैवावश्यकत्वानावश्यकत्वे विरुद्धे स्याताम्। अतो विद्योपायत्वोक्तिः स्तुतिरेवेत्यर्थः। सिद्धान्तसूत्रमवतार्य व्याकरोति— **अस्यामिति**। नित्यतया विहितानां विद्यार्थतया विधानं गौरवादयुक्तमित्याशङ्क्याह— **न हीति**।।३२।।

उक्तमनूद्योत्तरत्वेन सूत्रमवतारयति— **अथेत्यादिना**। नित्यत्वेऽपि विद्यासंयुक्तत्वमग्निहोत्रादीनां विधिवशादेष्टव्यमिति व्याचष्टे— **विद्येति**। विविदिषासंयोगमात्रमत्र श्रुतम्, कुतो विद्यासंयुक्तत्वं, तत्राह— **तदुक्तमिति**। सहकारित्वोक्त्या फलं प्रत्येवोपकारित्वमाचार्याभीष्टं कर्मणामित्याशङ्क्याह— **न चेति**। शास्त्रीयमन्वयव्यतिरेकसिद्धं चोपकारकत्वम्। न चात्रोभयमस्तीत्याह— **अविधीति**। ब्रह्मधीः स्वकार्ये न चोदितापेक्षाऽचोदितत्वान्मर्दनवदित्यर्थः। ब्रह्मधीः स्वफले नेतिकर्तव्यतापेक्षा स्वतोऽसाध्यफलत्वात् कूपखननव्यापारवदित्याह— **असाध्यत्वादिति**। अविधिलक्षणत्वं व्यतिरेकोदाहरणेन प्रपञ्चयति— **विधीति**। अङ्गभावस्य ग्राहकग्रहणपूर्वकत्वाद् विधेर्ग्राहकत्वाद् विहितं दर्शपूर्णमासादि प्रयाजादिभिर्ग्राहकगृहीतैरङ्गैर्युज्यते, नाविहिता विद्येत्यर्थः। तथापि कथमसाध्यफलत्वेन विद्यायां कर्मणामन्वयराहित्यं तदाह— **तथा चेति**। कथं तर्हि सहकारित्ववचनं तदाह— **तस्मादिति**। सह पुत्रैर्भारं वहति गर्दभीतिवत् कर्मसु सत्स्वेव विद्या स्वकार्याय व्याप्रियत इत्यभिप्रेत्य सहकारित्वोक्तिरित्यर्थः। परोक्तमुद्भाव्य प्रत्याह— **न चेति**। संयोगभेदं विशदयति— **नित्यो हीति**। तुल्यबलश्रुतिद्वयेन पृथगेव संबन्धविधिः संयोगभेदस्तस्मादुभयथात्वमविरुद्धमित्यर्थः। 'एकस्य तूभयत्वे संयोगपृथक्त्वम्'

**वेदानुवचनेन' (बृ.उ. ४।४।२२) इत्यादिवाक्यकल्पितस्तस्य विद्याफलत्वम्। यथैकस्यापि खादिरत्वस्य नित्येन संयोगेन क्रत्वर्थत्वमनित्येन संयोगेन पुरुषार्थत्वं च, तद्वत्।।३३।।**

## सर्वथाऽपि त एवोभयलिङ्गात्।।३४।।

**सर्वथाऽप्याश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे च त एवाग्निहोत्रादयो धर्मा अनुष्ठेयाः। त एवेत्यवधारयन्नाचार्यः किं निवर्तयति? कर्मभेदाशङ्कामिति ब्रूमः। यथा कुण्डपायिनामयने 'मासमग्निहोत्रं जुह्वति' इत्यत्र नित्यादग्निहोत्रात् कर्मान्तरमुपदिश्यते, नैवमिह कर्मभेदोऽस्तीत्यर्थः। कुतः? उभयलिङ्गात्।**

### *प्रकटार्थविवरणम्*

संयोगभेदः; तस्मान्नोभयथाभावो विरुध्यत इत्यर्थः। 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इत्यत्रैतन्निरूपितमित्युदाहरणेनाह— **यथैकस्यापीति**। 'खादिरे पशुं बध्नाति' इति नित्य एकः संयोगः; 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यपरः काम्यः संयोगः; तदेतत् संयोगपृथक्त्वमेकस्य नित्यत्वे काम्ये च निमित्तमित्यर्थः।

**सर्वथाऽपि त एवोभयलिङ्गात्।।** कौण्डपायिनाम[यनगता]ग्निहोत्रस्य प्रकरणभेदात् प्रसिद्धादग्निहोत्रात् कर्मान्तरत्ववत् प्रकरणभेदादेव प्रसिद्धेभ्योऽग्निहोत्रादिभ्यः कर्मान्तराण्येव विविदिषन्तीति विद्यासंयुक्ततया विधीयन्त इति शङ्कां निवर्तयति— **सर्वथाऽपीति**। यज्ञदानतपःशब्दानां लौकिकाभिधानतया स्वातन्त्र्येण प्रकरणान्तरविहिताग्निहोत्रादिपरामर्शकत्वसंभवात् प्रसिद्धकर्मानुवादेन विद्यासंयोगमात्रं विधीयते। कौण्डपायिनामयने तु अग्निहोत्रशब्दस्याख्यातपरतन्त्रतया तदुक्तार्थाभिधायिनो देशान्तरवर्त्यग्निहोत्रस्य स्वातन्त्र्येण परामर्शकत्वायोगात् जुहोतेश्चाख्यातस्य सन्निहितद्रव्यगुणादिनिरूपितं कर्मान्तरं विहाय असन्निहिताग्निहोत्रपरामर्शकत्वानुपपत्तेः

### *भाष्यभावप्रकाशिका*

सत्स्वेव कर्मसु विद्या स्वकार्याय व्याप्रियत इत्यभिप्रेत्य सहकारित्वमुक्तमित्यर्थः। अत्रोदाहरणमाह— **यथैकस्येति**। 'बैल्वो वा खादिरो वा पालाशो वे'त्येकः संबन्धो नित्येन। तथा अपरः 'खादिरं वीर्यकामस्ये'ति नैमित्तिकेनानित्येन। तस्माद् यदेव नैमित्तिकं तदेव नित्यमित्येकस्यैवोभयसंयोगो न विरुध्यत इत्यर्थः।

**यथा मासमिति**। कौण्डपायिनामयनगताग्निहोत्रस्य प्रकरणभेदात् प्रसिद्धाग्निहोत्रात् कर्मान्तरत्ववत् विद्यासंयुक्ततया विहितानामपि प्रकरणभेदादेव कर्मान्तर[त्व]शङ्कायाम्—तत्राग्निहोत्रञ्जुह्वतीति होम एव विधिश्रुतेर्मासाख्यकालस्य चानुपादेयत्वादेव विधानासंभवादग्निहोत्रशब्दस्य चाख्यातपरतन्त्रत्वाज्जुहोतेश्चाख्यातस्य सन्निहितद्रव्यगुणादिनिरूपितं कर्म विहायासन्निहितनैयमिकाग्निहोत्रपरामर्शकत्वायोगात् तदुक्तार्थाभिधायिनोऽग्निहोत्रशब्दस्यापि कर्मान्तरविषयत्वमेवेति युक्तम्, इह तु विविदिषन्तीति विविदिषायामेव

### *न्यायनिर्णयः*

इत्यत्रैतच्चिन्तितमित्युदाहरणेन दर्शयति— **यथेति**। 'बैल्वो वा खादिरो वा पालाशो वे'त्येको नित्यः संयोगस्तेन क्रत्वर्थस्य खादिरत्वस्य 'खादिरं वीर्यकामस्ये'त्यपरः संयोगोऽनित्यस्तेन पुरुषार्थतेत्येकस्य खादिरत्वस्योभयार्थत्वे संयोगपृथक्त्वं हेतुस्तथा कर्मस्वभेदेऽपि संयोगभेदादुभयथात्वमित्यर्थः।।३३।।

ननु प्रकरणान्तरस्थेभ्यो नित्यकर्मभ्यो भिन्नान्येव कर्माणि विविदिषावाक्ये विद्यासंयुक्ततया विधीयन्ते, प्रकरणभेदस्य भेदकत्वात्, तत्कथं तस्योभयत्वं, तत्राह— **सर्वथेति**। प्रतिज्ञां व्याचष्टे— **सर्वथाऽपीति**। एवकारव्यावर्त्यं शङ्कया दर्शयति— **त एवेतीति**। भेदशङ्कानिवृत्तिं व्यतिरेकदृष्टान्तेन स्पष्टयति— **यथेति**। कुण्डपायिनामयनगताग्निहोत्रस्य प्रकरणभेदात् प्रसिद्धाग्निहोत्रात्कर्मान्तरत्ववद्विविदिषन्तीति विद्यासंयुक्ततया विहितानामपि कर्मणां प्रकरणभेदादेव कर्मान्तरत्वशङ्कायां दृष्टान्ते जुह्वतीति होमविधिश्रुतेर्मासाख्यकालस्य चानुपादेयत्वेनाविधेयत्वादग्निहोत्रशब्दस्य चाख्यातपारतन्त्र्यादाख्यातस्य च जुहोतेः संनिहितरूपवत्कर्म हित्वा व्यवहितनैयमिकाग्निहोत्रपरामर्शित्वायोगादाख्यातार्थवाचिनोऽग्निहोत्रशब्दस्यापि कर्मान्तरविषयत्वमेवेति युक्तम्। विविदिषवाक्ये तु विविदिषायामेव विधिश्रवणात्प्रसिद्धानामेव यज्ञादीनां यज्ञादिशब्दैरनुवादाद् विद्यासंयोगमात्रं विधीयते तेषामिति न कर्मान्तरतेत्यर्थः। उक्तमेवार्थं प्रश्नद्वारा हेतुमवतार्य स्फोरयति— **कुत इत्यादिना**। प्रसिद्धकर्मसु संस्कारत्वप्रसिद्धिरपि तेषां चित्तमलनिरासेन

**श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च। श्रुतिलिङ्गं तावत्–'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (बृ.उ. ४।४।२२) इति सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनियुङ्क्ते, न तु जुहोतीत्यादिवदपूर्वमेषां रूपमुत्पादयतीति। स्मृतिलिङ्गमपि–'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः' (भ.गी. ६।१) इति विज्ञातकर्तव्यताकमेव कर्म विद्योत्पत्त्यर्थं दर्शयति। 'यस्यैतेऽष्टाचत्वारिंशत्संस्कारा' इत्याद्या च संस्कारत्वप्रसिद्धिर्वैदिकेषु कर्मसु तत्संस्कृतस्य विद्योत्पत्तिमभिप्रेत्य स्मृतौ भवति। तस्मात् साध्विदमभेदावधारणम्।।३४।।**

## अनभिभवं च दर्शयति।।३५।।

**सहकारित्वस्यैवैतदुपोद्बलकं लिङ्गदर्शनम्। अनभिभवं च दर्शयति श्रुतिर्ब्रह्मचर्यादिसाधनसंपन्नस्य रागादिभिः क्लेशैः– 'एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते' (छा.उ. ८।५।३) इत्यादिना। तस्माद् यज्ञादीन्या-**

### *प्रकटार्थविवरणम्*

कर्मान्तरमेव विहितमिति युक्तमित्याह— **श्रुतिलिङ्गं तावदिति**। नित्यान्येव कर्माणि मलापकर्षणगुणाधानलक्षणसंस्कारद्वारेण आत्मज्ञानार्थानि भवन्तीत्यत्र स्मृतिलिङ्गान्तरमाह— **अष्टाचत्वारिंशदिति**। गर्भाधानपुंसुवनसीमन्तोन्नयनजातकर्मनामकरणबहिर्निष्क्रमणान्न-प्राशनचौलकर्णवेधोपनयनमेधाजननानि; अष्टौ वेदव्रतानि; स्नानं, सहधर्मचारिणीसंयोगः; पञ्चानां यज्ञानामनुष्ठानम्; सप्त सोमसंस्थाः— अग्निष्टोमः अत्यग्निष्टोमः उक्थ्यः षोडशी वाजपेयः अतिरात्रः अप्तोर्याम इति; सप्त हविर्यज्ञसंस्थाः— अग्न्याधानम् अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि आग्रयणेष्टिः पशुबन्धः सौत्रामणी चेति; अष्टकाः[स्थालीपाकः] पार्वणश्राद्धम् श्रावणी आग्रहायणी चैत्री आश्वयुजी चेति सप्त पाक[पाकयज्ञ]संस्थाः; अनश्नन्संहिताध्ययनप्रायणकर्मजपोत्क्रमणौर्ध्वदैहिकभस्मसमूहनास्थिसञ्चयनश्राद्धादीन्यष्टा-चत्वारिंशत्संस्काराः। नित्यानि कर्माणि स्वतः पुण्यलोकावाप्तिफलान्यपि ज्ञानकामेनानुष्ठीयमानानि ज्ञानार्थानि भवन्तीत्युक्तसाधनार्थ[१]-द्रवातिशयाभिधायिसंस्कारश्रुतिबलात्।

**अनभिभवं च दर्शयति**।। इदानीं ब्रह्मचर्यादेराश्रमकर्मणः प्रतिबन्धकव्युदासेन ज्ञानसाधनत्वं संभवतीत्यत्र लिङ्गमाह— **अनभिभवं चेति**। इत्यष्टममाश्रमकर्माधिकरणम्।।

### *भाष्यभावप्रकाशिका*

विधिश्रवणाद् यज्ञादिशब्दैः प्रसिद्धानामेव यज्ञादीनामनूद्यमानत्वाद् विद्यासंयोगमात्रं तेषां विधीयत इति न कर्मान्तरत्वं युक्तमिति प्रदर्श्यत इत्यर्थः। प्रसिद्धकर्मसु संस्कारत्वप्रसिद्धिरपि तेषामन्तःकरणमलापनयनेन ज्ञानोत्पत्तावुपकारकत्वमावेदयन्ती कर्माभेदं द्योतयतीत्याह— **अष्टाचत्वारिंशदिति**।

**अनभिभवश्चेति**। क्लेशतनूकरणेन कर्मणां विद्योदयहेतुत्वं दर्शयतीत्यर्थः। इत्यष्टममाश्रमकर्माधिकरणम्।

### *न्यायनिर्णयः*

ज्ञानोत्पत्तावुपकारकत्वमावेदयन्ती कर्माभेदं सूचयतीत्याह— **अष्टेति**। गर्भाधानादयः सहधर्मचारिणीसंयोगान्ताश्चतुर्दश, पञ्च महायज्ञाः, सप्त सोमसंस्थाः, सप्त हविःसंस्थाः सप्त पाकसंस्था इति चत्वारिंशत्संस्काराः। अनश्नन्संहिताध्ययनं प्रायणं कर्म जप उत्क्रमणं दैहिकं भस्मसमूहनमस्थिसंचयनं श्राद्धानीत्येवमष्टाचत्वारिंशत्संस्काराः। कर्मभेदाशङ्कायोगे फलितमाह— **तस्मादिति**।।३४।।

नित्यानि कर्माणि स्वतः पुण्यलोकावाप्तिफलान्यपि ज्ञानकामेनानुष्ठितानि ज्ञानार्थानीत्युक्तम्। इदानीं ब्रह्मचर्यादीनामाश्रमकर्मणां क्लेशतनूकरणेन विद्योदये हेतुतेत्यत्र लिङ्गमाह— **अनभिभवं चेति**। सूत्रस्य तात्पर्योक्तिपूर्वकमक्षरार्थं कथयति— **सहकारित्वस्येति**। उभयविध्यधीनमर्थमुपसंहरति— **तस्मादिति**।।३५।। इत्यष्टममाश्रमकर्माधिकरणम्।।

---

१. अत्र पाठाशुद्धिः। 'इत्युक्तम्' इति एतावदेव पा.।

**श्रमकर्माणि च भवन्ति, विद्यासहकारीणि चेति निश्चितम्।।३५।।**

।।इत्यष्टममाश्रमकर्माधिकरणम्।।

९।। विधुराधिकरणम् ।।सू.३६-३९।।

**अन्तरा चापि तु तद्दृष्टेः।।३६।।**

**विधुरादीनां द्रव्यादिसंपद्रहितानां चान्यतमाश्रमप्रतिपत्तिहीनानामन्तरालवर्तिनां किं विद्यायामधिकारोऽस्ति किंवा नास्तीति संशये, नास्तीति तावत् प्राप्तम्। आश्रमकर्मणां विद्याहेतुत्वावधारणादाश्रमकर्मासंभवाच्चैतेषामिति। एवं प्राप्त इदमाह- अन्तरा चापि त्वनाश्रमित्वेन वर्तमानोऽपि विद्यायामधिक्रियते। कुतः? तद्दृष्टेः। रैक्ववाचक्नवीप्रभृतीनामेवंभूतानामपि ब्रह्मवित्त्वश्रुत्युपलब्धेः।।३६।।**

*शारीरकन्यायसंग्रहः*

**अन्तरा चापि तु तद्दृष्टेः।।३६।। अपि च स्मर्यते।।३७।। विशेषानुग्रहश्च।।३८।। अतस्त्वितरज्ज्यायो लिङ्गाच्च।।३९।।** "यज्ञेन दानेन" इति पृथक्करणविभक्तिनिर्देशादूर्ध्वरेतसां चाग्निहोत्रादिरहितानां विद्यासंबन्धाद् यज्ञादीनां विकल्पेन विद्यासाधनत्वसिद्धेः वर्णधर्माणामपि दानतपःप्रभृतीनामन्तरेणाश्रमधर्मं स्वातन्त्र्येण विद्यासाधनत्वे सिद्धेऽपि, वर्णधर्मसहितानामाश्रमधर्माणां वैयर्थ्यप्रसङ्गपरिहाराय केवलवर्णधर्माधिकृतानामनधिकारं विद्यायां प्रापय्य साधनोपचयापचयाभ्यां विद्यायाः चिराचिराभिव्यक्तिविशेषोपादानेन वर्णमात्रधर्माधिकृतानामपि विद्यायामधिकारो दर्शितः।

*प्रकटार्थविवरणम्*

**अन्तरा चापि तु तद्दृष्टेः।। अपि च स्मर्यते।।** एवं तावदाश्रमकर्मणां ज्ञानसाधनत्वमुक्त्वाऽधुनाऽनाश्रमिकर्मणामपि ज्ञानसाधनत्वं दर्शयितुं विचारमारभते— **विधुरादीनामिति**। अनाश्रमिणां कर्मित्वप्रसिद्धेः निन्दाप्रसिद्धेश्च संशये पूर्ववाद्याह— **नास्तीति**। श्रुतिस्मृत्यवष्टम्भेन सिद्धान्तमाह— **अन्तरा चापीति**।

*भाष्यभावप्रकाशिका*

**अन्तरा चापि तु तद्दृष्टेः।।** यज्ञेन दानेनेति प्रत्येकं करणविभक्तिश्रवणादाश्रमधर्माभावेऽपि वर्णमात्रधर्माणां दानतपःप्रभृतीनां संभवाद् विधुरादीनामपि विद्यायामधिकारमाशङ्क्य केवलवर्णधर्माणां विद्याहेतुत्वे सत्याश्रमधर्माणां वैयर्थ्यप्रसङ्गादनाश्रमिणामनधिकार इत्याह— **आश्रमकर्मासंभवादिति**। तद्दृष्टेरिति सूत्रावयवं व्याचष्टे— **रैक्वेति**।

*न्यायनिर्णयः*

आश्रमकर्मणां विद्योपायत्वे सत्यनाश्रमकर्मणां नैवमिति मन्वानं प्रत्याह— **अन्तरेति**। अनाश्रमिणो विधुरादीन् विषयीकृत्य तेषां कर्मित्वप्रसिद्धेर्निन्दाप्रसिद्धेश्च संशयमाह— **विधुरेति**। अत्रानाश्रमकर्मणामुक्तविद्याहेतुत्वोक्त्या पादादिसंगतिः। पूर्वपक्षे यथा विधुरकर्मणां विद्याहेतुत्वासिद्धिस्तथैवाश्रमकर्मणामपि विद्याहेतुत्वासिद्धिः। सिद्धान्ते त्वाश्रमित्वस्य ज्यायस्त्वात् तत्कर्मणां सुतरां तत्सिद्धिरिति मन्वानः संशयमनूद्य पूर्वपक्षमाह— **नास्तीत्यादिना**। विविदिषावाक्ये यज्ञादिषु प्रत्येकं करणविभक्तिश्रुतेराश्रमकर्माभावेऽपि वर्णमात्रधर्माणां दानादीनां संभवाद् विधुरादीनामपि विद्याधिकारः स्यादित्याशङ्क्य केवलवर्णधर्माणां विद्यासाधनत्वे सत्याश्रमकर्मणां वैयर्थ्यादनाश्रमिणामनधिकारो विद्यायामित्याह— **आश्रमेति**। अनाश्रमकर्मणां न विद्याहेतुतेति पूर्वपक्षमनूद्य सिद्धान्तयति— **एवमिति**। प्रतिज्ञां व्याकरोति— **अनाश्रमित्वेनेति**। तद्दृष्टेरिति व्याचष्टे— **रैक्वेति**।।३६।।

## अपि च स्मर्यते।।३७।।

**संवर्तप्रभृतीनां च नग्नचर्यादियोगादनपेक्षिताश्रमकर्मणामपि महायोगित्वं स्मर्यत इतिहासे[1]।।३७।।**

**ननु लिङ्गमिदं श्रुतिस्मृतिदर्शनमुपन्यस्तम्, का नु खलु प्राप्तिरिति; साऽभिधीयते–**

## विशेषानुग्रहश्च।।३८।।

**तेषामपि च विधुरादीनामविरुद्धैः पुरुषमात्रसंबन्धिभिर्जपोपवासदेवताराधनादिभिर्धर्मविशेषैरनुग्रहो विद्यायाः संभवति। तथा च स्मृतिः–'जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' (मनु. २-८७) इत्यसंभवदाश्रमकर्मणोऽपि जप्येऽधिकारं दर्शयति। जन्मान्तरानुष्ठितैरपि चाश्रमकर्मभिः संभवत्येव विद्याया अनुग्रहः। तथा च स्मृतिः–'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' (भा.गी. ६।४५) इति जन्मान्तरसंचितानपि संस्कारविशेषाननुग्रहीतॄन् विद्याया दर्शयति। दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणाप्यर्थिनमधिकरोति श्रवणादिषु। तस्माद् विधुरादीनामप्यधिकारो न विरुध्यते।।३८।।**

### *प्रकटार्थविवरणम्*

उत्तरसूत्रमवतारयति— **ननु लिङ्गमिदमिति।**

**विशेषानुग्रहश्च।।** आश्रमधर्माभावेऽपि वर्णधर्मविशेषैः अनुग्रहः विद्यालाभः संभवतीत्यर्थः। मित्रे भवो मैत्रः सर्वभूताहिंसाकर इति। किंच नैयोगिकफलेषु कर्मसु न कालनियमोऽस्ति। 'आनन्तर्यं ह्यचोदितम् [दना]'इत्युक्तम्। तत्रैहिकाश्रमकर्माभावेऽप्यामुष्मिकैर्भविष्यति विद्यालाभ इत्याह— **जन्मान्तरानुष्ठितैरपीति।** अनेकजन्मसु संचितसंस्कारैः संसिद्धः सम्यग्ज्ञानपरिपाकं प्राप्त इत्यर्थः।

नन्वथशब्दोपात्तन्यायेन संन्यासिनामेव विद्यासाधनश्रवणादौ विधिः; तत्कथमन्येषामप्यधिकारो वर्ण्यत इत्याशङ्क्याह— **दृष्टार्था च विद्येति।** संन्यासिनां श्रवणादिविधिर्नित्य एव, अकरणे प्रत्यवायश्रवणात्; इतरेषां तु काम्यो भविष्यति, विद्योद्देशेन

### *भाष्यभावप्रकाशिका*

जन्मान्तरानुष्ठितादपि विद्योत्पत्तिसंभवाद् वर्णोपाधौ विहितात् कर्मणो विद्योत्पत्तिरित्यत्र प्रापकं प्रमाणं वक्तव्यमिति चोदयति— **ननु लिङ्गमिति।** सूत्रस्यार्थान्तरमाह— **जन्मान्तरानुष्ठितैरिति।** यथाऽस्मिञ्जन्मन्यधीतवेदो धर्मजिज्ञासायामधिक्रियते, तथाऽस्मिन्नेव जन्मन्याश्रमकर्मभिरुत्पादितविविदिष एव विद्यायामधिक्रियत इत्याशङ्क्याह— **दृष्टार्था चेति।** अविद्यानिवृत्तेर्दृष्टफलत्वान्न नियमापेक्षा।

### *न्यायनिर्णयः*

श्रौतीं दृष्टिं शिष्ट्वा स्मार्तीमपि दर्शयति— **अपीति।**।३७।।

श्रुतिस्मृतिभ्यां सिद्धे सिद्धान्तेऽनन्तरसूत्रनिरस्यं चोद्यमाह— **नन्विति।** जन्मान्तरकृतादपि कर्मणो रैक्वादीनां विद्यासंभवाद् वर्णोपाधावुक्तात्कर्मणो विद्येत्यत्र श्रुतिस्मृत्योरनियामकत्वान्नियामकान्तरं वक्तव्यमित्यर्थः। आश्रमधर्माभावेऽपि वर्णधर्मविशेषैरनुगृहीता विद्योदेष्यतीति सूत्रेण समाधत्ते— **सेति।** अविरुद्धैरनाश्रमित्वाविरोधिभिरिति यावत्। अत एव पुरुषमात्रसंबन्धिभिरित्युक्तम्। आश्रमधर्मशून्यानां जपादिष्वपि शूद्रादिवन्नाधिकारोऽस्तीत्याशङ्क्याह— **तथा चेति।** मैत्रो मित्रे भवः सर्वभूताहिंसको दयावानित्यर्थः। किंच नैयोगिकफलेषु कर्मस्वानन्तर्यस्याचोदितत्वादनियतकालत्वे [2]नैयोगिककर्माभावेऽप्यामुष्मिकैरेव कर्मभिर्विद्या भविष्यतीति सूत्रस्य व्याख्यान्तरमाह— **जन्मान्तरेति।** जन्मान्तरसंचितकर्मणां विद्यानुग्राहकत्वे मानमाह— **तथा चेति।** अनेकेषु जन्मसु संचितसंस्कारैः सिद्धः सम्यग्धीपरिपाकवानित्यर्थः। यथाऽस्मिञ्जन्मन्यधीतवेदो धर्मजिज्ञासाधिकारी तथाऽस्मिन्नेव जन्मन्याश्रमधर्मैरुत्पादितविविदिषो विद्याधिकारी स्यादित्याशङ्क्याह— **दृष्टार्थेति।** अविद्यानिवृत्तेर्दृष्टफलत्वान्नियमापेक्षाभावाद् विघातकनिषेधस्याभावमात्रेण तत्र पुरुषस्य

---

१. द्र. महाभारतम्—आश्व.अ.६। २. 'कालत्वेनैहिककर्माभावेऽपि' इति पाठः स्यात्।

## अतस्त्वितरज्ज्यायो लिङ्गाच्च।।३९।।

**अतस्त्वन्तरालवर्तित्वादितरदाश्रमवर्तित्वं ज्यायो विद्यासाधनम्। श्रुतिस्मृतिसंदृष्टत्वात्। श्रुतिलिङ्गाच्च 'तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च' (बृ.उ. ४।४।९) इति। 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः'। 'संवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकं चरेत्' इति च स्मृतिलिङ्गात्।।३९।।**

।।इति नवमं विधुराधिकरणम्।।

१०।। तद्भूताधिकरणम् ।।सू.४०।।

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः।।४०।।

### *शारीरकन्यायसंग्रहः*

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः।।४०।।** आश्रमावरोहोऽपि कर्तव्य आश्रमारोहावरोहान्यतरत्वादारोहवदित्यनुमानानुगृहीतात् सर्वाश्रमधर्माणां विद्यासाधनत्ववचनात् प्रत्यवरुह्यानुष्ठितानामपि गृहस्थधर्माणां विद्यासाधनत्वे प्राप्ते, त्रयाणामूर्ध्वरेतसां प्रत्यवरोहस्य शास्त्रेण निषिद्धत्वादनुमानाप्रवृत्तेः अत एव तेषां गार्हस्थ्येनाश्रमाभावात् 'चाण्डालाः प्रत्यवसिताः' इत्यादिस्मृतेः पतितत्वाच्चानधिकारात् अनधिकारिणा कृतमकृतमिति न्यायेन तदनुष्ठितानां वर्णाश्रमधर्माणां न विद्याङ्गभाव इत्युक्तम्।

### *प्रकटार्थविवरणम्*

श्रवणादिविधानात्, प्रतिषेधाभावाच्च; देवादीनामपि विद्योत्पादाङ्गीकाराच्च यदा कदाचित् संन्यासित्वेन भवितव्यमिति भावः।

**अतस्त्वितरज्ज्यायो लिङ्गाच्च।।** नन्वनाश्रमिकर्मापि चेद् विद्यासाधनम्, व्यर्थं तर्ह्याश्रमित्वमनेकायासमित्याशङ्क्याह— **अतस्त्वितरदिति**। साधनोपचयादचिरेण विद्यासाधकत्वं ज्यायस्त्वं श्रुतिस्मृत्यनुगृहीतत्वादाश्रमित्वस्येत्यर्थः। श्रुतौ पुण्यकृत्त्वविशेषणलिङ्गाच्चाश्रमित्वं श्रेष्ठमित्याह— **श्रुतिलिङ्गाच्चेति**। तेन अर्चिरादिमार्गेण एति गच्छति ब्रह्मवित् पुण्यं स्वाश्रमकर्म करोतीति पुण्यकृत् तेजसि परमात्मन्यात्मभावेन वर्तत इति तत्तेजस[तैजसः] इत्यर्थः। इति नवमं विधुराधिकरणम्।।

### *भाष्यभावप्रकाशिका*

अतः प्रतिषेधस्य विघातकस्याभावमात्रेण तत्र प्रवर्तते पुमानित्यर्थः।

ननु वर्णोपाधौ विहितधर्ममात्रादपि विद्योत्पत्तौ वैयर्थ्यमाश्रमकर्मणां स्यादिति तत्राह— **अतस्त्वितरदिति**। विद्यायाश्चिराचिराभिव्यक्तिहेतुतया विशेषान्नानर्थक्यमित्यर्थः। इति नवमं विधुराधिकरणम्।।

### *न्यायनिर्णयः*

प्रवृत्तिरित्यर्थः। श्रुतिस्मृतिन्यायसिद्धमर्थमुपसंहरति— **तस्मादिति**।।३८।।

वर्णोपाधावुक्तधर्ममात्रादपि विद्योत्पद्यते चेदाश्रमित्वमनर्थकमित्याशङ्क्याह— **अतस्त्विति**। विद्यायाश्चिराचिरव्यक्तिहेतुतयाऽऽश्रमित्वानाश्रमित्वयोर्विशेषात्र वैयर्थ्यमिति मत्वा व्याचष्टे— **अत इति**। साधनोपचयादचिरेण विद्याहेतुत्वं ज्यायस्त्वम्। आश्रमित्वस्य ज्यायस्त्वे श्रुतिस्मृत्यनुगृहीतत्वं हेतुमाह— **श्रुतीति**। श्रुतौ पुण्यकृत्त्वविशेषणाल्लिङ्गाच्च श्रेष्ठमाश्रमित्वमित्याह— **श्रुतीति**। तेन ज्ञानमार्गेण ब्रह्मविदेति गच्छति ब्रह्म प्राप्नोति। स च पुण्यं स्वाश्रमोक्तं कर्म करोतीति पुण्यकृदुच्यते। तेजसि परमात्मन्यात्मत्वेन वर्तत इति तैजसः। तत्र पुण्यकृत्त्वविशेषणादाश्रमित्वं ब्रह्मप्राप्तिहेतुतया श्रेष्ठं सिद्धमित्यर्थः। आश्रमित्वस्य श्रेष्ठत्वे स्मार्तमपि लिङ्गमनुकूलयति— **अनाश्रमीति**।।३९।। इति नवमं विधुराधिकरणम्।।

अनाश्रमिणां कर्मापि विद्याहेतुश्चेदारूढपतितस्य पूर्वाश्रमं प्राप्तस्य धीपूर्वकं प्रच्युतस्य कर्म किमु वाच्यमित्याशङ्क्याह—

**सन्त्यूर्ध्वरेतस आश्रमा इति स्थापितम्। तांस्तु प्राप्तस्य कथंचित् ततः प्रच्युतिरस्ति, नास्ति वेति संशयः। पूर्वधर्मस्वनुष्ठानचिकीर्षया वा रागादिवशेन वा प्रच्युतोऽपि स्याद् विशेषाभावादिति। एवं प्राप्त उच्यते– तद्भूतस्य तु प्रतिपन्नोर्ध्वरेतोभावस्य न कथंचिदप्यतद्भावो न ततः प्रच्युतिः स्यात्। कुतः? नियमातद्रूपाभावेभ्यः। तथाहि– [१]'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' (छा.उ. २।२३।१) इति 'अरण्यमियादिति पदं ततो न पुनरेयादित्युपनिषत्' इति 'आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम्। आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद् यथाविधि' (महा.शा. २३४-४) इति चैवंजातीयको नियमः प्रच्युत्यभावं दर्शयति। यथा च 'ब्रह्मचर्यं समाप्य गृही भवेत्' (जा.उ. ४) 'ब्रह्मचर्यादेव प्रव्रजेत्' (जा.उ. ४) इति चैवमादीन्यारोहरूपाणि वचांस्युपलभ्यन्ते, नैवं प्रत्यवरोहरूपाणि। न चैवमाचाराः शिष्टा विद्यन्ते। यत्तु पूर्वधर्मस्वनुष्ठानचिकीर्षया प्रत्यवरोहणमिति, तदसत्; 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्'**

### *प्रकटार्थविवरणम्*

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः।।** प्रत्यवरूढानां कर्म विद्यासाधनं न भवतीति वक्तुं विचारमारभते— **सन्त्यूर्ध्वरेतस इति**। रागादिप्राबल्यात् प्रत्यवरोहस्य प्रतिषेधाच्च संशयः। पूर्वपक्षमाह— **पूर्वधर्मेति**। पूर्वाश्रमविहितो यागादिधर्मः सुखेनानुष्ठातुं शक्यत इति तदनुष्ठानचिकीर्षया रागद्वेषवशेन वा प्रत्यवरोहोऽपि स्यात्। पूर्वत्र यथा निन्दितमपि अनाश्रमिकर्मानुष्ठेयमुक्तम्, तथा प्रत्यवरोहस्यापि निन्दितत्वे विशेषाभावात्, कर्मणि च तदीये कर्मत्वप्रसिद्धेः तदपि विद्यासाधनमिति भावः। सिद्धान्तसूत्रं योजयति— **तद्भूतस्य त्विति**। नियममाह— **अत्यन्तमिति**। अरण्यमित्येकान्तवासोपलक्षितं पारिव्राज्यम्; इयाद् गच्छेदिति पदम् शास्त्रमार्गः; ततोऽरण्यान्न पुनरागच्छेदिति उपनिषत् रहस्यमित्यर्थः। अतद्रूपं व्याचष्टे— **यथा ब्रह्मचर्यमिति**। अभावमाह— **न चैवमिति**। पूर्वपक्षमनूद्य दूषयति— **यत्तूक्तमित्यादिना**। 'चण्डालाः प्रत्यवसिताः' इत्यादिस्मृतेः पतितत्वाच्चानधिकारिणा कृतमकृतमिति

### *भाष्यभावप्रकाशिका*

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः**। प्रच्युत...**स्त्युत नास्तीति**। प्रमाणवती न वेत्यर्थः। आश्रमावरोहोऽनुष्ठेय आश्रमारोहावरोहयोरन्यतरत्वात् आरोहवदित्यभिप्रेत्याह— **विशेषाभावादिति**। नियमं व्याचष्टे— **तथा ह्यत्यन्तमिति**। अतद्रूपमप्रत्यवरोहणं व्याचष्टे— **यथा चेति**। अभावं शिष्टाचाराभावं व्याचष्टे— **न चैवमाचारा इति**। **तदसदिति**। शास्त्रविरोधादनुमानमप्रमाणमित्यर्थः।

### *न्यायनिर्णयः*

**तद्भूतस्येति**। वृत्तानुवादेन विषयं सूचयति— **सन्तीति**। तानाश्रमान् प्राप्तस्य धीपूर्वं प्रच्युतस्य कर्म विषयः। तत्किं विद्याहेतुर्न वेति संशयं सिद्धवत्कृत्य तद्धेतुमाह— **तांस्त्विति**। कथंचिद् रागाद्युद्रेकादित्यर्थः। सा मानवती न वेति संशयार्थः। ऊर्ध्वरेतसां बुद्धिपूर्वं प्रच्युतानां कर्म यथोक्तविद्याहेतुर्नेत्युक्त्या पादादिसंगतिः। पूर्वपक्षे पूर्वोक्ताश्रमित्वश्रैष्ठ्यासिद्धिः, सिद्धान्ते प्रच्युतेरप्रामाणिकत्वात् तत्सिद्धिरिति स्वीकृत्य पूर्वपक्षयति— **पूर्वेति**। पूर्वाश्रमोक्तो यागादिधर्मः सुखेन शक्योऽनुष्ठातुमिति तच्चिकीर्षया रागद्वेषवशेन च प्रत्यवरोहोऽपि प्रामाणिकः स्यात्। तथा चानाश्रमिकर्म निन्दितमपि यथा विद्यासाधनमुक्तं तथा प्रत्यवरूढस्यापि कर्म विद्याहेतुः। आश्रमावरोहोऽनुष्ठेयस्तदारोहावरोहयोरन्यतरत्वात्, तदारोहवदित्यवरोहस्य प्रामाणिकत्वादित्यर्थः। सिद्धान्तसूत्रमवतार्य व्याकरोति— **एवमिति**। उत्तराश्रमं प्राप्तस्य पूर्वाश्रमप्राप्तिरप्रामाणिकीत्यत्र प्रश्नपूर्वकं हेतुत्रयमाह— **कुत इति**। तत्र नियमं व्याचष्टे— **तथा हीति**। अरण्यमित्येकान्तोपलक्षितमूर्ध्वरेतस्त्वं तदियाद् गच्छेदिति पदं शास्त्रमार्गस्ततस्तस्मादरण्यान्न पुनरेयात् पुनर्नागच्छेन्न प्रत्यवरोहेदित्युपनिषद् रहस्यमित्यर्थः। स्मार्तमपि नियमं कथयति— **आचार्येणेति**। उक्तनियमतात्पर्यमाह— **एवमिति**। अतद्रूपमप्रत्यवरोहं [हत्वेन] व्याकरोति— **यथा चेति**। अभावं शिष्टाचाराभावं [वत्वेन] व्याचष्टे— **न चेति**। परोक्तमनुमानमनूद्य स्मृतिविरोधेन दूषयति— **यत्त्विति**।

---

१. अत्यन्तपदेन नैष्ठिकब्रह्मचारिणः पुनरावृत्त्यभावो द्योत्यते। ब्र.वि.।

**(भ.गी. ३।३५) इति स्मरणात्। न्यायाच्च। यो हि यं प्रति विधीयते स तस्य धर्मो, न तु यो येन स्वनुष्ठातुं शक्यते, चोदनालक्षणत्वाद्धर्मस्य। न च रागादिवशात् प्रच्युतिः। नियमशास्त्रस्य बलीयस्त्वात्। जैमिनेरपीत्यपिशब्देन जैमिनिबादरायणयोरत्र संप्रतिपत्तिं शास्ति प्रतिपत्तिदार्ढ्याय।।४०।।**

।।इति दशमं तद्भूताधिकरणम्।।

**११।। आधिकारिकाधिकरणम्।।४१-४२।।**

## न चाधिकारिकमपि पतनानुमानात् तदयोगात्।।४१।।

**यदि नैष्ठिको ब्रह्मचारी प्रमादादवकीर्येत, किं तस्य 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इत्येतत् प्रायश्चित्तं स्यादुत नेति। [1]नेत्युच्यते। यदप्यधिकारलक्षणे निर्णीतं प्रायश्चित्तम्, 'अवकीर्णिपशुश्च तद्वदाधानस्या-**

***शारीरकन्यायसंग्रहः***

**न चाधिकारिकमपि पतनानुमानात् तदयोगात्।।४१।। उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम्।।४२।।** ऊर्ध्वरेतसामप्रच्युताश्रमधर्माणामेव ब्रह्मचर्यविलोपे प्रायश्चित्ताभावस्मृतेः अकृतप्रायश्चित्तानां च पतितानां कर्मानधिकारात् तेषां यावदायुर्विद्यायामनधिकारः प्राप्तः। तत्र महापातकेष्वगणनात् ततः परस्य दोषस्याभावादवरत्वे चोपपातकादिसामान्यप्रायश्चित्तावतारात् विशेषप्रायश्चित्तवचनाच्च कृतप्रायश्चित्तानां कर्माधिकारात् विद्याधिकारो दर्शितः।

***प्रकटार्थविवरणम्***

न्यायेन तदनुष्ठितानां गृहस्थधर्माणां न धर्मत्वम्, नापि विद्याङ्गभाव इति फलितार्थः। शास्त्रार्थानुसन्धानवतः श्रद्दधानस्य रागादिनाऽप्यभिभवो न संभाव्यत इत्याह— **न च रागादिवशादिति**। इति दशमं तद्भूताधिकरणम्।।

**न चाधिकारिकमपि पतनानुमानात् तदयोगात्।।** ऊर्ध्वरेतसां क्षतव्रतानां कृतप्रायश्चित्तानां कर्म विद्यासाधनं भवतीति दर्शयितुं विचारान्तरमारभते— **यदीति**। अवकीर्येत योनौ रेतः सिञ्चेत्। अवकीर्णं योनौ निक्षिप्तं रेतोऽस्यास्तीति अवकीर्णी; निर्ऋतिदेवताकं गर्दभमालभेत इत्येतत् प्रायश्चित्तं स्याद्वा न वेति महापातकेष्वगणनात् प्रायश्चित्तस्मृतेश्च संशय इत्यर्थः। पूर्वपक्षे सूत्रं योजयति— **यदधिकारीत्यादिना**। अधिकारिलक्षणे षष्ठेऽध्याये यत्पूर्वमीमांसायां निर्णीतं प्रायश्चित्तं तदपि नैष्ठिकस्य भवितुं

***भाष्यभावप्रकाशिका***

**न चाधिकारिकमपि पतनानुमानात् तदयोगात्।** अवकीर्णी पशुर्ब्रह्मचार्य...नैर्ऋतं गर्दभमालभेतेति। तत्र सन्देहः— किं

***न्यायनिर्णयः***

इतश्चानुमानमयुक्तमित्याह— **न्यायाच्चेति**। यत्तु रागादिवशात्प्रत्यवरोहणमिति, तत्राह— **न चेति**। 'ततो न पुन'रित्यादि नियमशास्त्रम्। अवशिष्टं सूत्रावयवं व्याचष्टे— **जैमिनेरिति**। अत्रेति प्रामाणिकप्रच्युत्यभावोक्तिः। उभयसंप्रतिपत्तिफलमाह— **प्रतिपत्तीति**।।४०।। इति दशमं तद्भूताधिकरणम्।।

प्रत्यवरोहणमशास्त्रीयमित्युक्तम्। सम्प्रति प्रमादात् प्रत्यवरोहे प्रायश्चित्तमस्तीति वक्तुं पूर्वपक्षमाह— **न चेति**। ऊर्ध्वरेतसोऽधीपूर्वप्रच्युतब्रह्मचर्यं विषयः, तेषां किं नास्ति प्रायश्चित्तमुतास्तीति प्रायश्चित्ताभावस्मृतेर्महापातकेष्वनुक्तेश्च संशयमाह— **यदीति**। प्रमादादित्यधीपूर्वच्युतब्रह्मचर्याणामेवोर्ध्वरेतसां प्रायश्चित्तचिन्तेयमिति द्योतयति। अवकीर्येत योनौ रेतः सिञ्चेत्। अवकीर्णं योनौ क्षिप्तं रेतोऽस्यास्तीत्यवकीर्णी। प्रमादाच्च्युतब्रह्मचर्याणामूर्ध्वरेतसां कृतप्रायश्चित्तानां कर्म विद्याहेतुरित्युक्त्या पादादिसंगतिः। पूर्वपक्षे प्रमादिनामूर्ध्वरेतसामात्यन्तिकादधःपातात्पुमर्थासिद्धिः। सिद्धान्ते तेषामपि प्रायश्चित्तेन पतनसमाधानात् तत्सिद्धिरित्युपेत्य पूर्वपक्षसूत्रमवतार्य योजयति— **उच्यत इति**। तदेव षष्ठाध्याये निर्धारितं प्रायश्चित्तमुदाहरति— **अवकीर्णीति**। 'ब्रह्मचार्यवकीर्णी'त्यत्र

१. 'उच्यते' इति पा.।

**प्राप्तकालत्वात्' (जै.सू. ६।८।२१) इति, तदपि न नैष्ठिकस्य भवितुमर्हति। किं कारणम्–'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः। प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा' इत्यप्रतिसमाधेय-पतनस्मरणाच्छिन्नशिरस इव प्रतिक्रियानुपपत्तेः। उपकुर्वाणस्य तु तादृक्पतनस्मरणाभावादुपपद्यते तत् प्रायश्चित्तम्।।४१।।**

## उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम्।।४२।।

**अपि त्वेक आचार्या उपपातकमेवैतदिति मन्यन्ते। यन्नैष्ठिकस्य गुरुदारादिभ्योऽन्यत्र ब्रह्मचर्यं विशीर्येत न तन्महापातकं भवति, गुरुतल्पादिषु महापातकेष्वपरिगणनात्। तस्मादुपकुर्वाणवन्नैष्ठिकस्यापि प्रायश्चित्तस्य भावमिच्छन्ति ब्रह्मचारित्वाविशेषादवकीर्णित्वाविशेषाच्च। अशनवत्। यथा ब्रह्मचारिणो**

### *प्रकटार्थविवरणम्*

नार्हतीति संबन्धः। षष्ठाध्यायगतं सूत्रं पठति— **अवकीर्णिपशुश्चेति**। यथोपनयनकाले लौकिकेऽग्नौ होमः, तद्वत् अवकीर्णिपशुश्चेति। यथोपनयनकाले लौकिकेऽग्नौ होतव्यम्, आधानस्य पत्नीपरिग्रहोत्तरकालीनतया पूर्वं प्राप्त्यभावादित्यर्थः। प्रश्नपूर्वकं हेतुमवतारयति— **किं कारणमित्यादिना**। पूर्वाधिकरणोक्तातद्भावनिषेधन्यायेन प्रायश्चित्तस्यापि निषिद्धत्वादसंभव इत्यर्थः। किंविषयं तर्हि प्रायश्चित्त-स्मरणमित्याशङ्क्याह— **उपकुर्वाणस्य त्विति**।

**उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम्**।। इदानीं सिद्धान्तमाह— **उपपूर्वमपीति**। उपपूर्वं पातकमित्यध्याहारः। ननु

### *भाष्यभावप्रकाशिका*

तदर्थमेवाधानं कर्तव्यमुत लौकिकेष्वेवाग्निषु तत्कर्मेति। तत्रावकीर्णी पशुश्चेत्यतिदेशाधिकरणमिदम्। पूर्वाधिकरणेन हि ब्रह्मचारिण उपनयनकाले होम आहितेष्वेवाग्निष्विति पूर्वपक्षयित्वा पत्न्याद्यभावादाधानाभावे लौकिकेष्वेवाग्निषु होम इति सिद्धान्तितम्, तदिहाप्युभयं समानमित्यतिदेशेन दर्शितम्, ब्रह्मचारी ययाऽवकीर्णी सैव तस्य भार्या भविष्यति ततश्चाग्न्याधानं करिष्यतीत्यधिका-शङ्कां निराकर्तुमित्यर्थः। पतनानुमानादित्यस्यार्थमाह— **पतनस्मरणादिति**। उपकुर्वाणकस्यापि तर्हि ब्रह्मचारित्वाविशेषात् प्रायश्चित्तं न स्यादिति, तत्राह— **उपकुर्वाणकस्येति**।

उपशब्देन पूर्वं यस्य पतनस्य तदुपपूर्वमुपपातकमिति व्याचष्टे— **अपि त्वेक इति**। **तस्मादुपकुर्वाणवदिति**।

### *न्यायनिर्णयः*

पशुहोमार्थमाधानं कर्तव्यं किंवा लौकिकेष्वेवाग्निषु तत्कर्मेति संदेहे पूर्वाधिकरणे 'यदाहवनीये जुहोति तेन सूर्यो[सो]ऽस्याभीष्टः प्रीतो भवति' इत्याहवनीयस्य सर्वहोमार्थत्वादाहवनीये तावदुपनयनहोमाः कार्या इति प्रापय्य 'जातपुत्रोऽग्नीनादधीते'ति कृतदारस्याग्न्याधानविधानादुपनयनकाले दाराभावादाधानस्याप्राप्तकालत्वादाहवनीयाभावाल्लौकिकाग्निषूपनयनहोमा इति राद्धान्तिते ब्रह्मचारी ययाऽवकीर्णी सैव तस्य भार्या स्यात्ततोऽग्न्याधानमित्यधिकां शङ्कां निराकर्तुमतिदेशाधिकरणमवकीर्णिपशुश्चेति। यथोपयनकाले लौकिकाग्नौ होमस्तथाऽवकीर्णिपशुश्च तत्रैव होतव्यः। आधानस्य पत्नीपरिग्रहोत्तरकालतया पूर्वं प्राप्त्यभावादितरस्याश्च परपरिग्रहभूताया भार्यात्वकल्पनयाऽऽधाने मानाभावादित्यर्थः। यदधिकारलक्षणे निर्णीतमाधिकारिकं प्रायश्चित्तं तदपि नैष्ठिकस्य भवितुं नार्हतीति संबन्धः। प्रश्नपूर्वकं हेतुमाह— **किमित्यादिना**। किंविषयं तर्हि प्रायश्चित्तवचनं, ब्रह्मचारित्वाविशेषादुपकुर्वाणस्यापि तदयोगात्, तत्राह— **उपेति**। तादृगित्यप्रतिसमाधेयत्वोक्तिः।।४१।।

सिद्धान्तयति— **उपपूर्वमिति**। उपपदं पूर्वं यस्य पतनस्य तदुपपूर्वमिति व्याकरोति— **अपि त्विति**। प्रायश्चित्ताभावं व्यावर्तयितुमपीति प्रयुक्तम्। एवकारार्थमाह— **नेति**। नैष्ठिकव्रतलोपस्योपपातकत्वेऽपि प्रायश्चित्तसत्त्वे किं जातमित्या-शङ्क्योपपातकसामान्यप्रायश्चित्तं स्यादिति सूत्रावयवं व्याकुर्वन्नाह— **तस्मादिति**। उक्तमर्थं दृष्टान्तमवतार्य स्पष्टयति—

**मधुमांसाशने व्रतलोपः पुनःसंस्कारश्चैवमिति। ये हि प्रायश्चित्तस्याभावमिच्छन्ति तेषां न मूलमुपलभ्यते। ये तु भावमिच्छन्ति तेषां 'ब्रह्मचार्यवकीर्णी'त्येतदविशेषश्रवणं मूलम्। तस्माद् भावो युक्ततरः। तदुक्तं प्रमाणलक्षणे- 'समा विप्रतिपत्तिः स्यात्' (जै.सू. १।३।८) 'शास्त्रस्था वा तन्निमित्तत्वात्' (जै.सू. १।३।९) इति। प्रायश्चित्ताभावस्मरणं त्वेवं सति यत्नगौरवोत्पादनार्थमिति व्याख्यातव्यम्। एवं भिक्षुवैखानसयोरपि 'वानप्रस्थो**

### *प्रकटार्थविवरणम्*

सूत्रकारेण पक्षद्वयमुपन्यस्तम्; कथं पूर्वः पूर्वपक्षः, उत्तरः सिद्धान्त इत्याशङ्क्याह— **ये हि प्रायश्चित्तस्येति**। न मूलं वेदवचनमुपलभ्यत इत्यर्थः। पौरुषेयप्रयोगद्वयात् पक्षद्वयप्रतिभासे यत्र मूलं वेदवचनमुपलभ्यते, स एव पक्षो ग्राह्य इत्यत्र संवादमाह— **तदुक्तं[तदुक्तमिति।]** **जैमिनिना** प्रथमाध्याये। 'यवमयश्चरुः' इति श्रूयते; तत्र यवशब्दं केचिद् दीर्घशूके प्रयुञ्जते; केचिद् देशविशेषे प्रियङ्गुषु; कस्य चरुः कर्तव्य इति सन्देहे वृद्धप्रयोगसाम्यात् समा तुल्या विकल्पप्रतिपत्तिः स्यादिति पूर्वः पक्षः। सिद्धान्तस्तु— शास्त्रस्था शास्त्रमूला शिष्टानां या प्रतिपत्तिः सैव ग्राह्या, शास्त्रनिमित्तत्वात् धर्मादिविज्ञानस्य; शिष्टाश्च यवमयेषु करम्भपात्रेषु निहितेष्वेवमामनन्ति 'यदान्या ओषधयो म्लायन्त्यथैते मोदमाना इवोत्तिष्ठन्ति' इति; तस्माद् वेदे प्रयोगदर्शनादविच्छिन्नपारम्पर्यो दीर्घशूकेषु यवशब्द इति भावः। 'प्रायश्चित्तं न पश्यामि' इति स्मरणस्य तर्हि का गतिरित्याशङ्क्याह— **प्रायश्चित्तेति**। एवं तावन्नैष्ठिकस्य

### *भाष्यभावप्रकाशिका*

उपपातकादिसामान्यप्रायश्चित्तमवतरतीत्यर्थः। 'प्रायश्चित्तं न पश्यामी'ति प्रायश्चित्ताभावोऽपि स्मर्यत इत्याशङ्क्याह— **ये हीति**। साक्षात्प्रायश्चित्तं नास्ति[इति] स्मरणाभावान्न पश्यामीति दर्शनाभावमात्रस्मरणादित्यर्थः। **युक्ततर इति**। स्मृतेः प्रायश्चित्तनिषेधार्थत्वमनुमाय तदर्था श्रुतिर्यावदनुमीयते तावदविशेषप्रवृत्ता श्रुतिः प्रायश्चित्तमवगमयतीति स्मृतिवशान्न प्रायश्चित्ताभावः सिध्येदिति भावः। अर्थमुपन्यस्य तत्र सूत्रभागवतारयति— **तदुक्तमिति**। 'यवमयश्चरुर्वाराही उपानहौ वैतसे कटे प्राजापत्यान् सञ्चिनोती'त्यामनन्ति। तत्र केचिद्दीर्घशूके यवशब्दं प्रयुञ्जते, केचित्तु प्रियङ्गौ। तथा वराहशब्दं केचित् सूकरे, केचित्कृष्णशकुनौ। वेतसशब्दं च जम्ब्वां वञ्जुले च। तत्रोभयथा शब्दार्थावगमे विकल्प इति प्राप्तेऽभिधीयते— **शास्त्रस्था वेति**। वाशब्दः पक्षं व्यावर्तयति। 'यत्रान्या ओषधयो म्लायन्त्यथैते मोदमानास्तिष्ठन्ति' 'वराहं गावोऽनुधावन्ती'ति 'अप्सुजो वेतस' इत्यादिवाक्यशेषवशाद् यववराहवेतसशब्दैर्दीर्घशूक-सूकरवञ्जुलानां शास्त्रतः प्रतीतेःशास्त्रमूलत्वाच्चार्यप्रसिद्धेरार्याणां विप्रतिपत्तौ न साम्यम्, किन्तु शास्त्रस्था प्रसिद्धिर्ग्राह्येति प्रथमाध्याये **जैमिनिनाऽऽचार्येण** निरूपितम्। तस्मादिह शास्त्रमूलत्वात् प्रायश्चित्तभावप्रसिद्धेस्तथैव युक्तमभ्युपगन्तव्यमित्यर्थः। का तर्हि गतिः

### *न्यायनिर्णयः*

**अशनवदिति**। 'प्रायश्चित्तं न पश्यामी'ति स्मरणात्कथं तद्भावधीरित्याशङ्क्याह— **ये हीति**। प्रायश्चित्तं नास्तीति स्मरणाभावान्न पश्यामीति दर्शनाभावमात्रस्मरणादित्यर्थः। भाववादिनामपि तुल्या मूलानुपलब्धिरित्याशङ्क्याह— **ये त्विति**। ननु न पश्यामीति स्मरणस्य प्रायश्चित्तनिषेधार्थत्वमनुमाय तदर्थश्रुतिकल्पनात् तद्विरोधे सामान्यश्रुत्या प्रायश्चित्तसत्ता नाभ्युपगम्यते, तत्राह— **तस्मादिति**। यावद्दर्शनाभावस्मरणस्य प्रायश्चित्तनिषेधार्थत्वकल्पनया तदर्था श्रुतिरनुमीयते तावदविशेषप्रवृत्ता प्रायश्चित्तं श्रुतिर्गमयतीति न स्मृत्या प्रायश्चित्ताभावधीरिति भावः। उक्तेऽर्थे यववराहाधिकरणसंमतिमाह— **तदुक्तमिति**। 'यवमयश्चरुर्वाराही उपानहा' वित्यत्र यववराहशब्दाभ्यां प्रियङ्गुकृष्णशकुनिग्रहो वा दीर्घशूकसूकरग्रहो वेति संदेहे पूर्वपक्षमाह— **समेति**। केचिद्दीर्घशूके यवशब्दं प्रयुञ्जते, प्रियङ्गुषु चापरे। वराहशब्दमपि सूकरे केचिदाहुः, कृष्णशकुनौ चान्ये। तेन प्रयोगसाम्यात् समा तुल्या विकल्पेन प्रतिपत्तिः स्यादित्यर्थः। सिद्धान्तमाह— **शास्त्रस्था वेति**। वाशब्दः पक्षव्यावृत्त्यर्थः। या शास्त्रमूला धीः सैव ग्राह्या शास्त्रनिमित्तत्वात्तद्धर्मादिज्ञानस्य। शास्त्रं च 'यदा वाऽन्या ओषधयो म्लायन्त्यथैते मोदमानास्तिष्ठन्ति' 'वराहं गावोऽनुधावन्ती'ति च यववराहशब्दयोर्दीर्घशूकसूकरविषयम्। तस्माद् धीसाम्याभावाद् विकल्पासिद्धेर्या शास्त्रमूला प्रसिद्धिः सैव ग्राह्येति प्रथमे सिद्धम्। तथाऽत्रापि शास्त्रमूलत्वात्प्रायश्चित्तभावप्रसिद्धेस्तत्सत्त्वमुक्तमित्यर्थः। 'प्रायश्चित्तं न पश्यामी'ति स्मृतेस्तर्हि का गतिः, तत्राह— **प्रायश्चित्तेति**। एवं सति सामान्यश्रुत्या प्रायश्चित्तसत्त्वे निश्चिते सतीत्यर्थः। यदि कथंचिन्नैष्ठिकस्य ब्रह्मचर्यं लुप्येत तदा न प्रायश्चित्तं

**दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकक्षं वर्धयेत्' 'भिक्षुर्वानप्रस्थवत् सोमवल्लिवर्जं स्वशास्त्रसंस्कारश्च' इत्येवमादि प्रायश्चित्तस्मरणमनुस्मर्तव्यम्।।४२।।**

।।इत्येकादशमाधिकारिकाधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

**१२।।बहिरधिकरणम्।।सू. ४३।।**

**बहिस्तूभयथाऽपि स्मृतेराचाराच्च।।४३।।** शिष्टव्यवहारयोग्यानां दोषेणापवादे प्राप्ते प्रायश्चित्तेन च तस्मिन् निराकृतेऽपवादाभावे उत्सर्गस्थितिरिति न्यायेन तैः शिष्टसंव्यवहाराद्याचारस्य धर्मतया विद्याङ्गत्वं प्राप्तम्। ब्रह्महत्यादिविषये 'नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते कलुषं तु निहन्यते' इति स्मृतिलिङ्गादाचाराच्च बहिष्कर्तव्यत्वात् न तैर्व्यवहारलक्षणस्याचारस्य विद्याङ्गतेत्युक्तम्।।

### *प्रकटार्थविवरणम्*

प्रायश्चित्तसद्भावमुक्त्वा भिक्षुवैखानसयोरतिदिशति— **एवमिति**। दीक्षाभेदे व्रतलोपे द्वादशरात्रं कृच्छ्रं दिनत्रयमेकभुक्तकरणं दिनत्रयं नक्तंकरणं दिनत्रयमयाचितभोजनं दिनत्रयमुपवास इति चरित्वा महाकक्षं बहुतृणकाष्ठं देशं वर्धयेत्। भिक्षुरपि कृच्छ्रं चरित्वा सोमवृत्ति[वल्लि]वर्जं महाकक्षं वर्धयेदित्यर्थः।

''सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम्। पुनः स पूतो भवति पङ्क्तिपावन एव च।।

मनोवाक्कायजान् दोषान् अज्ञानोत्थान् प्रमोदजान्। सर्वं[सर्वान्]दहति योगाग्निः तूलराशिमिवानलः।।

उपपातकेषु सर्वेषु[पातकसङ्घेषु]पातकेषु महत्सु च। प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत्।।

नित्यमेव तु कुर्वीत प्राणायामांस्तु षोडश। अपि भ्रूणहनं मासात्पुनन्त्यहरहःकृताः।।''

''त्रिसन्ध्यादौ स्नानमाचरेत्'' ''अष्टौ ग्रासा मुनेर्भक्ष्याः'' ''एकान्नं न तु भुञ्जीत बृहस्पतिसमादपि''

इत्यादियतिविषयशास्त्रविहितध्यानादिसंस्कारश्च कर्तव्य इत्यर्थः।। इत्येकादशमाधिकारिकाधिकरणम्।

### *भाष्यभावप्रकाशिका*

स्मृतेरिति तत्राह— **स्मरणन्त्विति**। नैष्ठिकेऽभिहितन्यायमितरयोरप्यतिदिशति— **एवमिति**। विशेषतोऽपि प्रायश्चित्तस्मरणादप्येवमित्याह— **वानप्रस्थो दीक्षेति**। तस्मादनुष्ठितप्रायश्चित्तानां विद्यायामधिकारोऽस्तीति भावः। इत्येकादशमाधिकारिकाधिकरणम्।

### *न्यायनिर्णयः*

दृश्यते। तेन नैष्ठिकेन ब्रह्मचर्ये यत्नवता भाव्यमिति तद्विषययत्नस्याप्रमादेन सदाकार्यतारूपं गौरवमुत्पादयितुं प्रायश्चित्ताभाव-स्मरणमित्यर्थः। नैष्ठिके हि दर्शितन्यायमितरयोरतिदिशति— **एवमिति**। विशेषतोऽपि प्रायश्चित्तविधेस्तयोरस्ति प्रामादिके व्रतलोपे प्रायश्चित्तमित्याह— **वानप्रस्थ इति**। दीक्षाभेदे व्रतलोपे प्रमादतो ब्रह्मचर्यभङ्गे कृच्छ्रं चरित्वा महाकक्षं बहुतृणकाष्ठं देशं वर्धयेदिति संबन्धः। कृच्छ्रं विशिनष्टि— **द्वादशेति**। दिनत्रयमेकवारभोजनं दिनत्रयं रात्रिभोजनं दिनत्रयमयाचितं दिनत्रयमुपवासकरण-मित्येवंरूपमित्यर्थः। परिव्राजकेऽपि प्रमादतो व्रतलोपे तुल्यं कृच्छ्रानुष्ठानमित्याह— **भिक्षुरिति**। सोमस्य यज्ञाङ्गत्वात्तदभि-वृद्धिमनादृत्य महाकक्षं वर्धयेदित्याह— **सोमेति**। 'सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम्। पुनः स पूतो भवति पङ्क्तिपावन एव च।। मनोवाक्कायजान् दोषाञ्ज्ञानोत्थांश्च प्रमादजान्। सर्वान् दहति योगाग्निस्तूलराशिमिवानलः।। उपपातकसङ्घेषु पातकेषु महत्सु च। प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत्।। नित्यमेव तु कुर्वीत प्राणायामांस्तु षोडश। अपि भ्रूणहनं मासात्पुनन्त्यहरहःकृताः' इत्यादि परिव्राजकविषयं शास्त्रम्, तेनाभिहितः संस्कारो ध्यानादिः, स च कर्तव्यो भिक्षुणेत्याह— **स्वशास्त्रेति**। ऊर्ध्वरेतसां प्रमादच्युतब्रह्मचर्याणां कृतप्रायश्चित्तानामधिकारोऽस्ति विद्यायामिति भावः।।४२।। इत्येकादशमाधि-कारिकाधिकरणम्।

१२।। बहिरधिकरणम् ।।सू.४३।।

## बहिस्तूभयथाऽपि स्मृतेराचाराच्च।।४३।।

**यद्यूर्ध्वरेतसां स्वाश्रमेभ्यः प्रच्यवनं महापातकम्, यदि वोपपातकमुभयथाऽपि शिष्टैस्ते बहिष्कर्तव्याः। 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः। प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा' इति, 'आरूढपतितं विप्रं मण्डलाच्च विनिःसृतम्। उद्बद्धं कृमिदष्टं च स्पृष्ट्वा चान्द्रायणं चरेत्' इति चैवमादिनिन्दातिशयस्मृतिभ्यः। शिष्टाचाराच्च। न हि यज्ञाध्ययनविवाहादीनि तैः सहाचरन्ति शिष्टाः।।४३।।**

।।इति द्वादशं बहिरधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

१३।।स्वाम्यधिकरणम्।।सू.४४-४६।।

**स्वामिनः फलश्रुतेरित्यात्रेयः।।४४।। आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते।।४५।। श्रुतेश्च।।४६।।** अङ्गाश्रितोपासनेषु उद्गीथादीनां प्राप्तोद्देशनत्वात् क्रत्वधिकारिण एव प्राप्तेः, अन्यस्याप्राप्तेरुद्देशनासंभवात् तदाश्रितान्युपासनानि गोदोहनवदधि-कृताधिकारीणि[इति] क्रत्वधिकारिण एव गोदोहनफलवद्विद्याफलसंबन्धः। तत्र 'यः कर्ता स फली' इति न्यायानुगृहीतात् 'वर्षत्यस्मै य उपास्ते' इति लिङ्गात् स्वामिकर्मण्यङ्गोपासने प्राप्ते 'एवंविदुद्गाता आत्मने वा यजमानाय वा' 'एवंविदुद्गाता ब्रूयात् कं ते कामम्' इत्यादिश्रौतलिङ्गैः अङ्गतत्संबन्ध्युपाङ्गगोदोहनादिकर्तृत्वस्यार्त्विज्यस्य यजमानेन दक्षिणया क्रीतत्वात् कर्तुरिव फलं युक्तमिति न्यायानुगृहीतैः उपासनानां यजमानगामिफलत्वम् ऋत्विक्कर्तृत्वं च दर्शितम्।

### *प्रकटार्थविवरणम्*

**बहिस्तूभयथाऽपि स्मृतेराचाराच्च।।** तैः कृतप्रायश्चित्तैः सह शिष्टाचारलक्षणं कर्म विषयः। तत् किं विद्याङ्गम्, उत नेति संशये पूर्वाधिकरणोक्तप्रायश्चित्तेनैव व्यवहाराङ्गताया द्योतितत्वादङ्गमिति प्राप्ते सिद्धान्तमाह— **यद्यूर्ध्वरेतसामिति**। निन्दातिशयस्मरणात् कल्मषक्षयेऽप्यैहिकव्यवहारयोग्यता नास्तीति गम्यते। तथा गुरुब्रह्महत्यायां 'नास्यास्मिन् लोके प्रत्यावृत्तिर्विद्यते', 'कल्मषं तु निहन्यते' इति स्मृतेः; तद्वदित्यर्थः।

### *भाष्यभावप्रकाशिका*

**बहिस्तूभयथाऽपि स्मृतेराचाराच्च।** विशिष्टव्यवहारयोग्यानां दोषादपवादे प्राप्ते प्रायश्चित्तेन तस्य निराकृतत्वादपवादाभाव उत्सर्गस्थितिरिति न्यायात् पुनर्व्यवहारः प्राप्नोतीत्याशङ्क्याह— **बहिस्त्विति**। निषिद्धानुष्ठानजन्यमेनो लोकद्वयेऽप्यशुद्धिमापादयति। तत्र प्रायश्चित्तैः कस्यचिल्लोकद्वयेऽप्यशुद्धिरपनीयते। 'प्रायश्चित्तैरिहलोकाशुद्धिस्तु न निवर्तते। यथाहुः— 'बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः। शरणागतहन्तृंश्च स्त्रीहन्तृंश्च न संपिबेत्' इति।। तद्वदिहाप्यारूढो नैष्ठिकमित्यादिस्मृतिलिङ्गादाचाराच्चेह-

### *न्यायनिर्णयः*

कृतप्रायश्चित्तानामपि तेषां शिष्टाव्यवहार्यत्वमाह— **बहिस्त्विति**। कृतप्रायश्चित्तैः सह शिष्टाचाररूपं कर्म विषयः, तत्किं विद्याङ्गं किंवा नेति संशये प्रागुक्तप्रायश्चित्तेनैव तेषां व्यवहार्यतासिद्धेरङ्गमिति प्राप्ते सिद्धान्तमाह— **यदीति**। प्रतिज्ञार्थमुक्त्वा हेतुद्वयं व्याकरोति— **आरूढ इत्यादिना**। दुश्चरिताचरणकृतमेनो लोकद्वयेऽपि कर्तुरशुद्धिमादधाति। तत्र प्रायश्चित्तेन लोकद्वयेऽपि कस्यचिदशुद्धिरपनीयते, कस्यचित्तु पारलौकिकाशुद्धिरपाक्रियते, ऐहिकाशुद्धिरनुवर्तते। उक्तं हि— 'बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः। शरणागतहन्तृंश्च स्त्रीहन्तृंश्च न संवदेत्' इति। तथेहापि 'आरूढो नैष्ठिकम्' इत्यादिस्मृतिलिङ्गादाचाराच्च परलोका-

---

१. 'कस्यचित्तु पारलौकिकाशुद्धिरपाक्रियते' इत्यंशस्त्रुटित इति भाति।

### १३।। स्वाम्यधिकरणम् ।। सू.४४-४६।।

## स्वामिनः फलश्रुतेरित्यात्रेयः ।।४४।।

**अङ्गेषूपासनेषु संशयः। किं तानि यजमानकर्माण्याहोस्विदृत्विक्कर्माणीति। किं तावत् प्राप्तम्? यजमानकर्माणीति। कुतः? फलश्रुतेः। फलं हि श्रूयते– 'वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधं सामोपास्ते' (छा.उ. २।३।२) इत्यादि। तच्च स्वामिगामि न्याय्यम्। तस्य साङ्गे प्रयोगेऽधिकृतत्वात्। अधिकृताधिकारत्वाच्चैवंजातीयकस्य। फलं च कर्तर्युपासनानां श्रूयते–'वर्षत्यस्मै य उपास्ते' इत्यादि। नन्वृत्विजोऽपि फलं दृष्टम्–'आत्मने वा यजमानाय वा यं कामं कामयते तमागायति' (बृ.उ. १।३।२८)**

### *प्रकटार्थविवरणम्*

**स्वामिनः फलश्रुतेरित्यात्रेयः।।** कर्माङ्गावबद्धान्युपासनानि विषयः। तेषूभयकर्तृत्वप्रतीतेः संशयमाह— **अङ्गेष्विति**। यथा पूर्वत्र कृतप्रायश्चित्तानामपि वचनबलात् शिष्टैर्बहिष्करणमुक्तम्, एवमिहापि अङ्गानुष्ठानाय वृतानामप्यृत्विजां वचनबलादेवाङ्गोपासनेषु बहिष्करणमित्याह— **यजमानकर्माणि**। अङ्गाश्रितोपासनेषु उद्गीथादीनां प्राप्तोद्देशनत्वात् क्रत्वधिकारिण एव प्राप्तेरुद्देशनसंभवात्; तदाश्रितान्युपासनानि गोदोहनवदधिकृताधिकाराणि; ततः क्रत्वधिकारिण एव गोदोहनफलवद् विद्याफलसंबन्धसिद्धिरित्याह— **अधिकृताधिकारि[कार]त्वाच्चेति**। ननु फलं यजमानस्यास्तु; कर्तृत्वमृत्विजां भविष्यतीत्याशङ्क्याह— **फलं च कर्तरीति**। यजमानस्य फलमित्यस्यापवादं शङ्कते— **नन्वृत्विजोऽपीति**। आगायत्यागानेन संपादयतीत्यर्थः। न तत् न्यायसिद्धमित्याह—

### *भाष्यभावप्रकाशिका*

लोकाशुद्धेरनिवर्तिततया असंव्यवहार्यत्वमवगम्यत इति न तैर्व्यवहारलक्षणस्याचारस्य विद्याङ्गत्वमिति भावः।

**स्वामिनः फलश्रुतेरित्यात्रेयः।। साङ्गेषूपासनेष्विति**। उद्गीथादिकर्माङ्गसंबन्धेष्वित्यर्थः। ऋत्विजामेव फलं किं न स्यादित्यत आह— **तच्चेति**। उद्गीथाद्युपासनविधीनां प्राप्तोद्देशनत्वात् क्रत्वधिकारिण एव प्राप्ते...वोद्देशनसंभवात्तदाश्रितान्युपासनानि गोदोहनवदधिकृताधिकाराणि। अतः क्रत्वधिकारिण एव दोहनफलवद्विद्याफलेन संबन्ध इत्यर्थः। तथाप्युपासनानां तत्कर्तृकत्वं कथमिति, तत्राह— **फलं च कर्तरीति**। अकर्तृत्वे यजमानस्य फलसंबन्धित्वस्यापि[त्वमपि] न सिद्धेदि[सिध्येदि]त्यर्थः। व्यभिचारमाशङ्कते— **नन्वृत्विजोऽपीति**। वाच...मिन एव फलसंबन्ध इत्यभिप्रेत्योपसंहरति— **तस्मात्स्वामिन इति**।

### *न्यायनिर्णयः*

शुद्धेरपनीतत्वेऽप्यव्यवहार्यत्वावगमात्र तैर्व्यवहाररूपाचारस्य विद्याङ्गत्वम्। तदेवमुक्ताचारस्योक्तविद्यानङ्गत्वाभिधानात् प्रासङ्गिकी पादादिसंगतिः। पूर्वपक्षे 'बालघ्नान्' इत्यादिस्मृतिविरोधः। सिद्धान्ते तदानुगुण्यमिति भावः।।४३।। इति द्वादशं बहिरधिकरणम्।।

अन्यस्मिन् पापकारिणि तेन व्यवहारादन्यस्य त्वपकारवदन्यस्मिन्नुपास्तिकर्तरि तेन व्यवहारात् फललक्षणोपकारमन्ययजमानस्य दर्शयन् पूर्वपक्षयति— **स्वामिन इति**। कर्माङ्गसङ्गीन्युपासनानि विषयः, तेषूभयकर्तृकत्वधिया संशयमाह— **अङ्गेष्विति**। शास्त्रीयाङ्गाश्रितोपास्तीनां स्वतन्त्रफलानामृत्विक्कर्तृकत्वेऽपि यजमानगामिफलत्वोक्तेरस्ति पादादिसंगतिः। पूर्वपक्षे कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यासिद्धिः। सिद्धान्ते प्रकृतस्य कर्तुरस्वातन्त्र्यात् तस्य यजमानाधीनत्वात् तत्कर्तृत्वमपि तदधीनमित्यैकाधिकरण्यस्याविरुद्धतेति सिद्धवत्कृत्य प्रश्नपूर्वकं पूर्वपक्षमाह— **किमिति**। तत्र हेतुं प्रश्नद्वारा दर्शयति— **कुत इति**। फलश्रुतिमेव विशदयति— **फलं हीति**। श्रुतमपि फलमृत्विग्गतं किं न स्यात्, तत्राह— **तच्चेति**। तत्र हेतुः— **तस्येति**। उद्गीथाद्युपास्तिविधीनां प्राप्तोद्देशनत्वात् क्रत्वधिकारिण एव प्राप्तेस्तस्यैवोद्देशनयोगात् तदाश्रितोपास्तीनां गोदोहनवदधिकृताधिकारत्वात्क्रत्वधिकारिण एव गोदोहनफलवद्विद्याफलेन संगतिरित्याह— **अधिकृतेति**। तथापि कथमुपास्तीनां याजमानत्वं, तत्राह— **फलं चेति**। अकर्तृत्वे फलित्वमपि यजमानस्य न स्यात्, कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यादित्यर्थः। यजमानगामि फलमित्यत्र व्यभिचारं शङ्कते— **नन्विति**। उत्सर्गतो याजमानं

**इति। न; तस्य वाचनिकत्वात्। तस्मात् स्वामिन एव फलवत्सूपासनेषु कर्तृत्वमित्यात्रेय आचार्यो मन्यते।।४४।।**

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते।।४५।।

**नैतदस्ति स्वामिकर्माण्युपासनानीति। ऋत्विक्कर्माण्येतानि स्युरित्यौडुलोमिराचार्यो मन्यते। किं कारणम्? तस्मै हि साङ्गाय कर्मणे यजमानेनर्त्विक् परिक्रीयते। तत्प्रयोगान्तःपातीनि चोद्गीथाद्युपासनान्यधिकृताधिकारत्वात्। तस्माद् गोदोहनादिनियमवदेवर्त्विग्भिर्निर्वर्त्येरन्। तथा च 'तं ह बको दाल्भ्यो विदांचकार स ह नैमिशीयानामुद्गाता बभूव' (छा.उ. १।२।१३) इत्युद्गातृकर्तृकतां विज्ञानस्य दर्शयति। यत्तूक्तं कर्त्राश्रयं फलं श्रूयत इति। नैष दोषः। परार्थत्वादृत्विजोऽन्यत्र वचनात् फलसंबन्धानुपपत्तेः।।४५।।**

## श्रुतेश्च।।४६।।

### *प्रकटार्थविवरणम्*

**न तस्येति**। यस्माद् यः कर्ता स एव फलीति न्यायः, तस्मादित्युपसंहारः।

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते**।। सिद्धान्तमाह— **आर्त्विज्यमिति**। अङ्गतत्संबन्धिकर्तृत्वस्यार्त्विज्यस्य यजमानेन दक्षिणया क्रीतत्वात् तत्कर्तृत्वमृत्विजामेवेत्यर्थः। अत्रैव श्रौतं लिङ्गमाह— **तथा चेति**। तदु[मु]द्गीथाख्यमक्षरं प्राणादिदृष्टिविशिष्टम् ह किल, बको नामतः; दल्भस्यापत्यं दाल्भ्यो विदांचकार। विदित्वा च नैमिशीयानां सत्रिणामुद्गाता बभूवेत्यर्थः। पूर्वपक्षबीजं मृद्नाति— **यत्तूक्तमित्यादिना**। यत्राहत्य वचनमस्ति तत्रैव फलमृत्विजः; ततोऽन्यत्र फलसंबन्धः न, साङ्गानुष्ठानाय क्रीतत्वादित्यर्थः।

इतोऽपि यजमानस्यैव फलं, न ऋत्विजाम्; तेषां तु कर्तृत्वमेव भारवाहकवदित्याह— **श्रुतेश्चेति**। इति त्रयोदशं स्वाम्यधिकरणम्।।

### *भाष्यभावप्रकाशिका*

इदानीं सिद्धान्तयति— **नैतदिति**। नन्वन्यकर्तृत्वे कथमन्यस्य फलमिति शङ्कते— **किं कारणमिति**। स्व(र्ग)गामिने फलाय तेन तस्य क्रीतत्वादुपपन्नमित्याह— **तस्मै हीति**। तथापि नोपासनार्थं क्रीयत इत्यत आह— **तत्प्रयोगान्तःपातीति**। उपासनानामृत्विक्कर्तृकत्वे श्रुतिलिङ्गमाह— **तथा च तं हेति**। ननु वर्षत्यस्मै य उपास्त इत्यादिना फलस्य कर्तृभागित्वं श्रूयत इत्युक्तमित्याह— **यत्तूक्तमिति**। उत्सर्गतो यजमानगामित्वेऽपि वचनसामर्थ्यात्तत्रापवादः। यत्र त्वपवादो नास्ति तत्रोत्सर्गतो यजमानगामित्वमेव फलस्येति परिहरति— **नैष दोष इति**।

श्रौतलिङ्गैरृत्विक्कर्तृकत्वं यजमानगामिफलत्वञ्चोपासनानामवगम्यत इत्याह— **श्रुतेश्चेति**। इति त्रयोदशं स्वाम्यधिकरणम्।।

### *न्यायनिर्णयः*

फलं वचनात् क्वचिदपवादः स्यादित्याह— **न तस्येति**। वाचनिकापवादाभावे तूत्सर्गस्थितिरित्युपसंहरति— **तस्मादिति**।।४४।।

अङ्गोपास्तीनां याजमानत्वान्न स्वतन्त्रफलतेति प्राप्ते सिद्धान्तयति— **आर्त्विज्यमिति**। तत्र प्रतिज्ञां विभजते— **नैतदिति**। अन्यकर्तृकत्वे कथमन्यस्य फलमिति शङ्कते— **किं कारणमिति**। सूत्रावयवेनोत्तरमाह— **तस्मै हीति**। ऋत्विजो यजमानेन स्वगामिने फलाय क्रीतत्वान्नानुपपत्तिरित्यर्थः। साङ्गकर्मार्थं क्रीतत्वेऽपि ध्यानार्थमक्रीतत्वात् कथमुपास्तीनामृत्विक्कर्मत्वं, तत्राह— **तदिति**। अङ्गोपास्तीनामधिकृताधिकारत्वे फलितमाह— **तस्मादिति**। तासामृत्विक्कर्तृकत्वे श्रौतं लिङ्गमाह— **तथा चेति**। तमुद्गीथाख्यं प्रणवं प्राणादिदृष्टिविशिष्टं बको नामतो दल्भस्यापत्यं दाल्भ्यो विदांचकार विदितवान्। विदित्वा च नैमिशीयानां सत्रिणामुद्गाताऽऽसीदित्यर्थः। पूर्वपक्षबीजमनुवदति— **यत्त्विति**। उत्सर्गतो याजमानत्वेऽपि फलस्य वचनादपवादः, यत्र नैवं तत्रोत्सर्गस्थितिरित्युक्तमित्याह— **नेत्यादिना**।।४५।।

**'यां वै कांचन यज्ञ ऋत्विज आशिषमाशासत इति यजमानायैव तामाशासत इति होवाच' (शत. १।३।१।२६) इति, 'तस्मादु हैवंविदुद्गाता ब्रूयात् कं ते काममागायानि' (छा.उ. १।७।८-९) [१]इति चर्त्विक्कर्तृकस्य विज्ञानस्य यजमानगामि फलं दर्शयति। तस्मादङ्गोपासनानामृत्विक्कर्मत्वसिद्धिः।।४६।।**

।।इति त्रयोदशं स्वाम्यधिकरणम्।।

**१४।। सहकार्यन्तरविध्यधिकरणम्।।४७-४९।।**

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्।।४७।।

**'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः' (बृ.उ. ३।५।१) इति बृहदारण्यके श्रूयते। तत्र संशयः– मौनं विधीयते**

### *शारीरकन्यायसंग्रहः*

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्।।४७।। कृत्स्नभावात्तु गृहिणोपसंहारः।।४८।। मौनवदितरेषामप्युपदेशात्।।४९।।** वाक्यभेदप्रसङ्गाच्चतुर्थाश्रमवाचित्वाभावात् 'मन ज्ञाने' इति धात्वर्थानुगमे 'पाण्डित्यं निर्विद्य' इति विहितत्वात् 'अथ मुनिः' इत्यनुवादमात्रमिति प्राप्ते, मुनिरिति ज्ञानोत्कर्षवति पुरुषे प्रसिद्धत्वात् 'मौनं च निर्विद्य' इति पुरुषात् ज्ञानोत्कर्षं निष्कृष्य निर्वेदनीयत्वाभिधानलिङ्गात्, युक्तिभिः ज्ञाननिर्मलीकरणस्य च विद्ययाऽपेक्षितत्वात् अपूर्वत्वाच्च उपरिधारणवन्मौनं वाक्यभेदेन विद्यासहकारित्वेन विधीयत इत्युक्तम्।

### *प्रकटार्थविवरणम्*

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्।।** विधुरप्रभृतीनां मन्दाधिकारिणाम् अपरविद्यासाधननिरूपण-प्रसङ्गेनोद्गीथाद्युपासनमधमसाधनमेव निर्धार्य पुनरुक्तमेव विद्यासाधनं निरूपयितुं वाक्यं पठति— **तस्मादित्यादि**। यस्मात् पूर्वे विद्वांसः ससाधनकर्मभ्योऽ[२]प्युत्थायात्मानं विदित्वा भिक्षाचर्यं चरन्ति, तस्मादिदानीन्तनोऽपि ब्राह्मणः पाण्डित्यं पण्डितभावं निर्विद्य

### *भाष्यभावप्रकाशिका*

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्।** निर्विद्य निश्चयेन लब्ध्वेत्यर्थः।. अमौनञ्चेति बाल्यपाण्डित्ये

### *न्यायनिर्णयः*

इतश्चोपास्तीनामृत्विक्कर्तृकत्वं यजमानगामिफलत्वं चेत्याह— **श्रुतेश्चेति**। उत्सर्गतः श्रुतिलिङ्गैश्च सिद्धमर्थमुपसंहरति— **तस्मादिति**। सिद्धे चोपास्तीनामृत्विक्कर्तृकत्वे तन्निर्धारणानियमन्यायेन स्वतन्त्रफलत्वसिद्धिरिति भावः।।४६।। इति त्रयोदशं स्वाम्यधिकरणम्।।

विधुरप्रभृतीनां मन्दाधिकारिणां धीसाधनोक्तिप्रसङ्गेनाङ्गोपासनमधमधीसाधनमेव निर्धार्य पुनरुत्तममेव धीसाधनं वक्तुमारभते— **सहकार्यन्तरेति**। विषयवाक्यमुदाहरति— **तस्मादिति**। यस्मात् पूर्वे ब्राह्मणा विदित्वाऽऽत्मानमेषणाभ्यो व्युत्थाय भिक्षाचर्यं चरन्ति स्म तस्मादधुनातनोऽपि ब्राह्मणः पाण्डित्यं पण्डाऽध्ययनजा ब्रह्मबुद्धिस्तद्वान् पण्डितस्तस्य कृत्यं पाण्डित्यं श्रवणं तन्निर्विद्य निश्चयेन लब्ध्वा बाल्येन ज्ञानबलभावेन युक्तितोऽसंभावनानिरासरूपमननेन शुद्धधीत्वेन वा तिष्ठासेत् स्थातुमिच्छेत्। उक्तदार्ढ्यार्थं बाल्यं चेत्यादिरनुवादः। श्रवणमननानन्तरं मुनिर्मननशीलो निदिध्यासनपरः स्यात्। मौनादन्यद् बाल्यं पाण्डित्यं चामौनं मौनं च निदिध्यासनं निश्चयेन लब्ध्वोक्तहेतुत्रयस्य ब्रह्मधीहेतुत्वाद् ब्रह्माहमित्यवगच्छतीति ब्राह्मणः साक्षात्कृतब्रह्मा भवतीत्यर्थः। तत्र श्रुतं मौनं विषयीकृत्य मौनशब्दस्य सिद्धे पारिव्राज्ये साध्ये च ज्ञानाभ्यासे प्रयोगसिद्धेः संशयमाह— **तत्रेति**। निरुपाधिविद्यान्तरङ्ग-

१. 'इति। तच्चर्त्विक्कर्तृकस्य' इति पा.। २. 'व्युत्थाय' इति पाठः स्यात्।

**न वेति। न विधीयत इति तावत् प्राप्तम्। बाल्येन तिष्ठासेदित्यत्रैव विधेरवसितत्वात्। न ह्यथ मुनिरित्यत्र विधायिका विभक्तिरुपलभ्यते। तस्मादयमनुवादो युक्तः। कुतः प्राप्तिरिति चेत्? मुनिपण्डितशब्दयोर्ज्ञानार्थत्वात् 'पाण्डित्यं निर्विद्ये'त्येवं प्राप्तं मौनम्। अपि च 'अमौनं च मौनं च निर्विद्याथ ब्राह्मण' इत्यत्र तावन्न ब्राह्मणत्वं विधीयते, प्रागेव प्राप्तत्वात्। तस्मादथ ब्राह्मण इति प्रशंसावादः, तथैवाथ मुनिरित्यपि भवितुमर्हति समाननिर्देशत्वादिति।**

**एवं प्राप्ते ब्रूमः-सहकार्यन्तरविधिरिति। विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवद् विधिरेवा-**

***प्रकटार्थविवरणम्***

निर्वर्त्याचार्यपरिचर्यापूर्वकं वेदान्तवाक्यानि विचार्य बाल्येन बालभावेन [१]डम्भाहङ्कारादिराहित्येन स्थातुमिच्छेदित्यर्थः। बाल्यं च पाण्डित्यं च निर्वर्त्याथ मुनिर्भवेत्; अमौनं च बाल्यादिकं मौनं च निर्वर्त्याथ ब्राह्मणः कृतकृत्यो भवतीत्यर्थः। अत्र श्रूयमाणं मौनं विषयः; संशयश्च मौनशब्दस्य सिद्धे पारिव्राज्येऽनुष्ठेये ज्ञानाभ्यासे च प्रयोगदर्शनात्। पूर्वपक्षं रचयति— **न विधीयत इति**। मुनिशब्दस्य परिव्राजकवाचकत्वात् सिद्धमेव पारिव्राज्यमनूद्यत इत्याह— **तस्मादयमनुवादो युक्त इति**। 'मन ज्ञाने' इति धात्वनुसारेण ज्ञानं मौनम्; तस्य च प्राप्त्यभावान्नास्त्यनुवाद इत्याह— **कुत इति**। तदपि पण्डितशब्दात्प्राप्तिरित्याह— **मुनिपण्डितशब्दयोरिति**। अविधिनिर्देशसाम्यादपि न विधिरित्याह— **अपि चेति**।

विचारेण सकलयौक्तिकासंभावनानिरासे सति चित्तगतासंभावनानिवर्तनेन तत्त्वसाक्षात्करणाय ज्ञानाभ्यासो मौनं विधीयत इत्याह— **सहकार्यन्तरेति**। पण्डेति बुद्धिनाम; सा यस्य प्रमाणतो जाता स पण्डित उच्यते। मुनिशब्दस्तु सकलानात्मप्रत्ययतिरस्कारेण

***भाष्यभावप्रकाशिका***

कथ्येते। मौनेऽपि विधिः किं न स्यादिति, तत्राह— **न ह्यथ मुनिरिति**। अविहितस्यानुवादासंभवादन्यत्र विधानानुपलम्भाद्विधिरेवायं नानुवाद इति शङ्कते— **कुतः प्राप्तिरिति**। पाण्डित्यविधानादेव मौनमपि सिद्धम्, पाण्डित्यस्यैव मौनत्वादित्याह— **मुनिपण्डितेति**। अथ मुनिशब्दोऽयं भिक्षुवचनस्तथापि तस्यान्यत्र पुत्रैषणाया इत्यादिवाक्ये विहितत्वादत्रानुवाद एवेति भावः। 'अथ ब्राह्मण' इति यथा अश्रूयमाणविधिकतया प्रशंसावादस्तथाऽस्यापि प्रशंसार्थत्वमेव युक्तम्, अन्यथा वाक्यभेदप्रसङ्गादित्याह— **अपि चेति**।

***न्यायनिर्णयः***

साधनमौनविधिसाधनात् पादादिसंगतिः। पूर्वपक्षे मौनस्यानुष्ठेयत्वासिद्धिः, सिद्धान्ते तस्यानुष्ठेयत्वसिद्धिरिति मत्वा 'तं हे'त्यादिवाक्यशेषादङ्गोपासनमृत्विक्कर्मेतिवद् 'अथ ब्राह्मण' इति विधिहीनवाक्यशेषाद् 'अथ मुनि'रित्येषोऽपि न विधिरिति पूर्वपक्षयति— **नेत्यादिना**। ननु बाल्येनेत्युपक्रमे विधिश्रुतेर्मौनेऽपि विधिरस्तु, नेत्याह— **बाल्येनेति**। तदेवोपपादयति— **न हीति**। यद्यत्रापि विधेयत्वं तर्हि विधिः श्रूयेत बाल्यवत्, न च श्रूयतेऽतः श्रोतव्यत्वे सत्यश्रवणाद्विध्यभावसिद्धिरित्यर्थः। तर्हि मौनवाक्यस्य का गतिः, तत्राह— **तस्मादिति**। अनधिगतस्यानुवादायोगादन्यत्र विध्यनुपलब्धेर्विधिरेवायमिति शङ्कते— **कुत इति**। पाण्डित्यविधानादेव मौनमपि सिद्धं तस्यैव मौनत्वादित्याह— **मुनीति**। मुनिशब्दस्य भिक्षुवचनत्वेऽपि तस्यान्यत्र विधानादत्रानुवाद एवेति मत्वा मौनस्याविधेयत्वे हेत्वन्तरमाह— **अपि चेति**। एकवाक्यतानुरोधान्मौनवाक्येऽपि न विधिरित्यर्थः। यदा पाण्डित्येन मौनस्य प्राप्तिस्तदा विधीयमानबाल्यस्येत्थं प्रशंसा। न हि पाण्डित्यं स्वरूपेण ज्ञानं किन्तु बाल्येऽनुष्ठितेऽनन्तरं मननापरपर्यायं पाण्डित्यं कृतं स्यात्; तस्माद् बाल्यं प्रशस्तम्। यदा मौनस्योत्तमाश्रमस्य विध्यन्तरप्राप्तस्यानुवादस्तदा बाल्यमात्रानुष्ठानवानुत्तमाश्रमित्वेन स्तूयत इति व्यक्ता स्तुतिरिति मत्वाऽऽह— **तस्मादिति**।

बाल्यपाण्डित्यातिरिक्तस्य मौनस्याविधेयत्वात्र तन्मुमुक्षोरनुष्ठेयमिति प्राप्तं पक्षमनूद्य सिद्धान्तमाह— **एवमिति**। अपूर्वत्वमसिद्धमिति

---

१. 'दम्भ' इति स्यात्।

**श्रयितव्योऽपूर्वत्वात्। ननु पाण्डित्यशब्देनैव मौनस्यावगतत्वमुक्तम्। नैष दोषः। मुनिशब्दस्य ज्ञानातिशयार्थत्वात्। मननान्मुनिरिति च व्युत्पत्तिसंभवात्, 'मुनीनामप्यहं व्यासः' (भ.गी. १०।३७) इति च प्रयोगदर्शनात्। ननु मुनिशब्द उत्तमाश्रमवचनोऽपि श्रूयते 'गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थम्' (आ.ध.सू. २।९।२१।१) इत्यत्र। न; 'वाल्मीकिर्मुनिपुंगवः' इत्यादिषु व्यभिचारदर्शनात्। इतराश्रमसंनिधानात्तु पारिशेष्यात् तत्रोत्तमाश्रमोपादानं ज्ञानप्रधानत्वादुत्तमाश्रमस्य। तस्माद् बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं ज्ञानातिशयरूपं विधीयते। यत्तु बाल्य एव विधेः पर्यवसानमिति, तथाप्यपूर्वत्वान्मुनित्वस्य विधेयत्वमाश्रीयते मुनिः स्यादिति। निर्वेदनीयत्वनिर्देशादपि मौनस्य बाल्यपाण्डित्यवद् विधेयत्वाश्रयणम्। तद्वतो विद्यावतः संन्यासिनः। कथं च विद्यावतः संन्यासिन इत्यवगम्यते? तदधिकारात् 'आत्मानं विदित्वा पुत्राद्येषणाभ्यो व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति। ननु सति**

### *प्रकटार्थविवरणम्*

ज्ञानाभ्यासवत्सु प्रयुज्यते; अतो न पण्डितशब्देन गतत्वमित्याह— **नैष दोष इति**। मुनिशब्देन परिव्राजक उच्यत इत्यपि न वाच्यमित्याह— **मननादिति**। **आपस्तम्बेन** मौनशब्दस्य पारिव्राज्ये प्रयोगात् तत्रैव रूढोऽयमित्याह— **ननु मुनिशब्द इति**। अपरिव्राजकेऽपि वृद्धप्रयोगान्तरदर्शनात् न रूढिरित्याह— **न, वाल्मीकिरिति**। आपस्तम्बप्रयोगस्य तर्हि का गतिरित्याशङ्क्याह— **नेत[इत]राश्रमेति**। परोक्तं विघटयति— **यत्त्वित्यादिना**। वाक्यभेदेनोपरिधारणवन्मौनं विधीयत इत्यर्थः। किं च 'मौनं निर्विद्य' इति पुरुषान् ज्ञानाभ्यासान्निष्कृष्य निर्वर्तनीयत्वाभिधानलिङ्गादपि विधेयत्वमित्याह— **निर्वेदनीयत्वेति**। कस्य तर्हि तद्विधीयत इत्याशङ्क्याह— **तद्वत इति**। **आत्मानं विदित्वेति**। शास्त्रयुक्तिभ्यां परोक्षत्वेन निश्चित्येत्यर्थः। परमानन्दरूपः परमात्माऽहमस्मीत्ययमेव परमार्थः; सर्वं तु द्वैतमपरमार्थमिति शास्त्रयुक्ती प्रतिपादयत इत्येवं परोक्षविद्यावत्त्वे सति तत्साक्षात्करणसाधनेऽभ्यासे स्वयमेव पुरुषस्योन्मुखत्वाद् विधिर्व्यर्थ इत्याह— **ननु सतीति**। प्रकरणात् संन्यासधर्मस्य श्रवणात्; अतः साक्षात्कारसाधनतायाः

### *भाष्यभावप्रकाशिका*

नन्वपूर्वत्वमसिद्धमिति शङ्कते— **ननु पाण्डित्येति**। ननु वृद्धप्रयोगाभावे कथं तदर्थत्वमित्यत आह— **मुनीनामपीति**। तस्माज्ज्ञानमात्रं पाण्डित्यम्, ज्ञानातिशयसंपत्तिस्तु मौनमिति न पाण्डित्यपर्यायो मुनिशब्द इत्यर्थः। ननु ज्ञानातिशयवाचित्वमनियतमाश्रमेऽपि प्रयोगदर्शनात्, तस्य चान्यत्र विहिततयाऽनुवाद्यत्वमेवेत्यभिप्रेत्य शङ्कते— **ननु मुनिशब्द इति**। तर्हि मुनिशब्दस्तत्रासाधारणः, किं वा साधारणः इति विकल्प्याद्यपक्षे दूषणमाह— **न, वाल्मीकिरिति**। साधारणत्वञ्चैकस्यानेकार्थत्वासंभवादयुक्तम्, प्रयोगस्यान्यथाऽप्युपपन्नत्वादित्याह— **इतराश्रमेति**। ननु वाक्यभेदप्रसङ्गादेकत्रैव विधिराश्रयणीय इत्युक्तमिति, तत्राह— **यत्तु बाल्य इति**। उपरिधारणवन्मौनं वाक्यभेदेन विधीयत इत्यर्थः। एवं च निर्वेदनीयत्वमभिधीयमानमाञ्जसं स्यादित्याह— **निर्वेदनीयत्वेति**। कस्येदं मौनं विधीयते विद्यासहकारितयेति अत आह— **तद्वत इति**। विद्यावत इति विशेषणं कुतो लब्धमिति पृच्छति— **कथमिति**। उत्तरमाह— **तदधिकारादिति**। सूत्रावयवमवतारयितुं (हीति) शङ्कते— **नन्विति**। अत्र विद्यावत इति विद्यातिशययुक्त

### *न्यायनिर्णयः*

शङ्कते— **नन्विति**। पण्डितशब्दस्य ज्ञानमात्रार्थत्वान्मुनिशब्दस्य तदतिशयगामित्वादर्थभेदान्न पाण्डित्यशब्देन मुनिशब्दस्य प्राप्तार्थतेत्याह— **नेत्यादिना**। वृद्धप्रयोगाभावे कथं तदर्थत्वं, तत्राह— **मुनीनामिति**। आश्रमेऽपि प्रयोगदर्शनादनियतं ज्ञानातिशयवाचित्वं, तस्य चान्यत्र विधानादनुवाद्यत्वमेवेति शङ्कते— **नन्विति**। उत्तमाश्रमे मुनिशब्दोऽसाधारणः साधारणो वेति विकल्प्याद्यं प्रत्याह— **नेति**। साधारणत्वं त्वेकस्यानेकार्थत्वायोगादयुक्तमित्यभिप्रेत्य प्रयोगस्यान्यथासिद्धिमाह— **इतरेति**। मौनस्यापूर्वत्वमुपपाद्य तृतीयमिति पदं व्याकुर्वन् फलितमाह— **तस्मादिति**। वाक्यभेदप्रसङ्गादेकत्रैव विधिरित्युक्तं, तत्राह— **यत्त्विति**। उपरिधारणवन्मौनं वाक्यभेदेन विधेयमित्यत्रैव हेत्वन्तरमाह— **निर्वेदनीयत्वेति**। कस्येदं मौनं विद्यासहकारितया विधीयते, तत्राह— **तद्वत इति**। विशेषणप्रापकं पृच्छति— **कथमिति**। प्रकरणं तथेत्याह— **तदिति**। पक्षेणेति पदं शङ्कोत्तरत्वेनावतारयति—

**विद्यावत्त्वे प्राप्नोत्येव तत्रातिशयः, किं मौनविधिनेत्यत आह– पक्षेणेति। एतदुक्तं भवति– यस्मिन् पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति, तस्मिन्नेष विधिरिति। विध्यादिवत्। यथा– 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येवंजातीयके विध्यादौ सहकारित्वेनाग्न्यन्वाधानादिकमङ्गजातं विधीयते। एवमविधिप्रधानेऽप्यस्मिन्विद्यावाक्ये मौनविधिरित्यर्थः।।४७।।**

**एवं बाल्यादिविशिष्टे कैवल्याश्रमे श्रुतिमति विद्यमाने कस्माच्छान्दोग्ये गृहिणोपसंहारः 'अभिसमावृत्य कुटुम्बे' (छा.उ. ८।१५।१) इत्यत्र। तेन ह्युपसंहरंस्तद्विषयमादरं दर्शयतीति। अत उत्तरं पठति–**

***प्रकटार्थविवरणम्***

अपूर्वत्वात् तद्विधिरपूर्वविधिरेव। अधिकारिविशेषं प्रति तु ज्ञानाभ्यासविधेः अपूर्वविधित्वाभावेऽपि नियमविधिर्भविष्यतीत्याह— **पक्षेणेति**। अत्यन्ताप्राप्तविषयो विधिरपूर्वविधिः, यथा 'सोमेन यजेत' इत्यादि। पक्षप्राप्तान्यतरनिवृत्तिनान्तरीयकपक्षप्राप्तान्यतरनियमप्रापको नियमविधिः। यथा 'यजेत' इति प्रदानविधेः पक्षे साधनान्तरप्राप्तौ 'व्रीहिभिः' इत्यादि नियमविधानम्। अविशेषप्राप्तौ परप्रतिषेधफलोऽन्यतरानुवादः परिसंख्या, यथा रागत एवाविशेषभक्षणे प्राप्ते 'पञ्च पञ्चनखा भक्ष्याः' इति। तदुक्तम्—

'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र प्राप्तौ परिसंख्येति कीर्त्यते।।'' इति।

**वाचस्पतिस्तु** मण्डनपृष्ठसेवी सूत्रभाष्यार्थानभिज्ञः समन्वयसूत्रे श्रवणादिविधिं निराचचक्षे; [१]अत्र तु तद्विधिमूरीचक्रे। अहो बतास्य पाण्डित्यम्! श्रवणादीनां च संन्यासाश्रमधर्मत्वात् तद्विधिं निराकुर्वन् संन्यासाश्रमायैव द्वेष्टि; विध्यभावे च अथशब्देन साधनचतुष्टयसंपन्नाधिकारिसूत्रणं चानुपपन्नम्। तस्माद् वाचस्पतिप्रलापमुपेक्ष्य यावत्साक्षात्कारं श्रवणादि विधितोऽनुष्ठेयम्।

**कृत्स्नभावात्तु गृहिणोपसंहारः।। मौनवदितरेषामप्युपदेशात्।।** प्रासङ्गिकशङ्कान्तरनिरासाय सूत्रद्वयं व्याख्याति— **एवं बाल्यादिविशिष्ट इत्यादिना।**

***भाष्यभावप्रकाशिका***

एव न विवक्ष्यते। किन्तु विद्योदयाय तदभ्यासे प्रवृत्तः। तथा चास्य पक्षे कदाचिद् भेददर्शनं प्राप्नोति। अतो विधेरर्थवत्त्वमिति परिहरति— **एतदुक्तमिति**। नन्वन्तर्निष्ठस्य वाक्यस्य कथं तद्विधायकत्वमित्यत आह— **विध्यादिवदिति**। तद्विवृणोति— **यथेति**। आदिर्मुख्यः प्रधानं विधेरादिर्विध्यादिः दर्शपूर्णमासविधिः। समिदादिस्तु विध्यन्तस्तत्राश्रूयमाणविधिकेऽपि विधिरास्थेय इत्यर्थः।

ननु यद्ययमाश्रमो बाल्यादिप्रधानस्तर्हि कस्माद्गार्हस्थ्येनोपसंहरति श्रुतिरिति चोदयति— **एवं बाल्यादीति**। विशिष्टाया-

***न्यायनिर्णयः***

**नन्वित्यादिना**। ब्रह्मैव प्रत्यगद्वयं वस्तु, द्वैतं सर्वमविद्यामयमिति शास्त्रयुक्तिभ्यां सिद्धे तत्साक्षात्कारसाधनाभ्यासे स्वयमेव पुरुषस्यौन्मुख्यादनर्थको विधिरिति चोदिते संन्यासप्रकरणात् तद्धर्मस्य श्रवणादेः साक्षात्कारहेतुभावस्यापूर्वत्वादेष्टव्यस्तद्विधिरिति समाधिः। विद्यावन्तमधिकारिविशेषं प्रति विधेरानर्थक्यमुक्तमित्याशङ्क्य विद्यावत इति विद्यातिशययुक्तो नोच्यते, किंतु विद्योदयाय तदुपायाभ्यासे प्रवृत्तस्तेनास्य पक्षे कदाचिद्भेददर्शनं प्राप्नोत्यतो विधेरर्थवत्तेति सूत्रपदार्थं विवृणोति— **एतदिति**। अतन्निष्ठवाक्यस्य तद्विधायकत्वे दृष्टान्तमाह— **विध्यादिवदिति**। तदेव व्याचष्टे— **यथेति**। आदिर्मुख्यं प्रधानं विधेरादिर्विध्यादिर्दर्शपूर्णमासविधिः समिदादिस्तु विध्यन्तस्तत्राश्रुतविधिकेऽपि विधिरास्थेय इत्यर्थः। दृष्टान्तस्थमर्थं दार्ष्टान्तिके योजयति— **एवमिति**।।४७।।

बाल्यादिप्रधानः सन्यासो यद्यनुष्ठेयस्तर्हि कस्माद् गार्हस्थ्येनोपसंहरति श्रुतिरित्यनन्तरसूत्रव्यावर्त्यमाह— **एवमिति**। गृहिणोपसंहारेऽपि कैवल्याश्रमस्य किं जातमित्याशङ्क्यानास्थाविषयत्वं प्राप्तमित्याह— **तेनेति**। बहुलायाससाध्यधर्मबाहुल्यात् तेनोपसंहारो न तेनैव समापनादित्याह— **अत इति**।

---

१. अत्र विधित्वमर्थवादस्यैव सतः प्रशंसाद्वारा साधने प्रवृत्त्यतिशयकरत्वम्। अतो न विरोध इति कल्पतरुः। विस्तरस्तत्रैव द्रष्टव्यः। द्र. कल्प. पृ. ९१९-९२१।

## कृत्स्नभावात्तु गृहिणोपसंहारः।।४८।।

**तुशब्दो विशेषणार्थः। कृत्स्नभावोऽस्य विशेष्यते। बहुलायासानि हि बहून्याश्रमकर्माणि यज्ञादीनि तं प्रति कर्तव्यतयोपदिष्टान्याश्रमान्तरकर्माणि च यथासंभवमहिंसेन्द्रियसंयमादीनि तस्य विद्यन्ते। तस्माद् गृहमेधिनोपसंहारो न विरुध्यते।।४८।।**

## मौनवदितरेषामप्युपदेशात्।।४९।।

**यथा मौनं गार्हस्थ्यं चैतावाश्रमौ श्रुतिमन्तावेवमितरावपि वानप्रस्थगुरुकुलवासौ। दर्शिता हि पुरस्ताच्छ्रुतिः— 'तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः' (छा.उ. २।२३।१) इत्याद्या। तस्माच्चतुर्णामप्याश्रमाणामुपदेशाविशेषात् तुल्यवद्विकल्पसमुच्चयाभ्यां प्रतिपत्तिः। इतरेषामिति द्वयोराश्रमयोर्बहुवचनं वृत्तिभेदापेक्षयाऽनुष्ठातृभेदापेक्षया वेति द्रष्टव्यम्।।४९।।**

।।इति चतुर्दशं सहकार्यन्तरविध्यधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

१५।।अनाविष्काराधिकरणम्।।सू. ५०।।

**अनाविष्कुर्वन्नन्वयात्।।५०।।** बालस्य भावः कर्म वा इति बाल्यशब्दव्युत्पत्तौ कर्मपक्षे श्रूयमाणविधियोग्यत्वात् सामान्यप्रवृत्तस्य नियमशास्त्रस्य ब्रह्मविद्विषये यथोपपादमूत्रपुरीषत्वादिविशेषविधिसामर्थ्यात् अन्यत्र सङ्कोचात् बालकर्मैव विधीयत इति प्राप्ते बालकर्मणो बालभावस्यैवाभ्यर्हितत्वात् तद्धितस्य च भावेऽप्यविशेषात् सामान्यशास्त्रविरोधकल्पनापरिहाराच्च प्रशान्तेन्द्रियत्वादि यत्नसाध्यं मुमुक्षोर्विधीयत इत्युक्तम्।

### *भाष्यभावप्रकाशिका*

ससाध्यकर्मबहुलत्वात् तेनोपसंहारो न पुनस्तेनैव समापनादिति परिहरति— **कृत्स्नभावादिति**। मौनगार्हस्थ्याश्रमद्वयोपन्यासादितराश्रमाभावाशङ्का कस्यचिन्मन्दबुद्धेः स्यादिति तन्निराकरणार्थमाह— **मौनवदिति**। इतरेषामिति बहुवचनात् गार्हस्थस्यापि परामर्शोऽभ्युपगन्तव्यो न तु सिद्धवदुपन्यास इत्याशङ्क्याह— **इतरेषामिति**। वैखानसा वालखिल्या इत्यादिवानप्रस्थानां वृत्तिभेदात् ब्रह्मचारिणामप्युपकुर्वाणनैष्ठिकसावित्रादिवृत्तिभेदात् तमपेक्ष्य बहुवचनं, न तु गार्हस्थ्यमपेक्ष्य। तस्य 'कृत्स्नभावात्तु गृहिणोपसंहार' इत्यसन्दिधत्वेनैव निर्दिष्टत्वादित्यर्थः। इति सहकार्यन्तरविध्यधिकरणम्।।

### *न्यायनिर्णयः*

सूत्रं व्याचष्टे—**तुशब्द इति**। ननु यथा गृहिणो यज्ञादीनि कर्तव्यत्वेनोक्तानि तथाऽऽश्रमान्तराणामपि करणसंयमादिकर्मान्तराण्युच्यन्ते, तथा च कोऽस्य विशेषः, तत्राह— **आश्रमान्तरेति**। गृहमेधिनि विशेषे सिद्धे फलितमाह— **तस्मादिति**।।४८।।

मौनं गार्हस्थ्यमित्याश्रमद्वयोक्तेरिताश्रमाभावाशङ्का कस्यचिद् भवेत् तन्निरासार्थमाह— **मौनवदिति**। कथं तयोः श्रुतिमत्त्वं, तत्राह— **दर्शितेति**। श्रुतिमत्त्वाविशेषे फलितमाह— **तस्मादिति**। इतरेषामिति बहूक्त्या गार्हस्थ्यस्यापि परामर्शो न तु सिद्धवदुपन्यास इत्याशङ्क्याह— **इतरेषामितीति**। गायत्रो ब्राह्मः प्राजापत्यो बृहन्निति ब्रह्मचारी चतुर्विधः। गृहस्थोऽपि वार्तावृत्तिः शालीनवृत्तिर्यायावरो घोरसंन्यासीति चतुर्विधः। वानप्रस्थश्च वैखानसौदुम्बरवालखिल्यफेनपप्रभेदैश्चतुर्विधः। तथा परिव्राडपि कुटीचकबहूदकहंसपरमहंसभेदैश्चतुविध इति षोडशप्रभेदास्तावदाश्रमास्तत्तद्धर्मविशेषयुक्ताः श्रुतिस्मृतिप्रसिद्धाः। ततो ब्रह्मचारिणि वानप्रस्थे चानुष्ठातृभेदमनुष्ठानभेदं वाऽपेक्ष्य बहूक्तिर्न गार्हस्थ्यमपेक्ष्य, तस्य प्रागेवासंदिग्धत्वेनोक्तत्वादित्यर्थः।।४९।। इति चतुर्दशं सहकार्यन्तरविध्यधिकरणम्।।

### १५।। अनाविष्काराधिकरणम् ।।सू.५०।।

## अनाविष्कुर्वन्नन्वयात्।।५०।।

**'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' (बृ.उ. ३।५।१) इति बाल्यमनुष्ठेयतया श्रूयते। तत्र बालस्य भावः कर्म वा बाल्यमिति तद्धिते सति बालभावस्य वयोविशेषस्येच्छया संपादयितुमशक्यत्वाद् यथोपपादमूत्रपुरीषत्वादि बालचरितमन्तर्गता वा भावविशुद्धिरप्ररूढेन्द्रियत्वं दम्भदर्पादिरहितत्वं वा बाल्यं स्यादिति संशयः। किं तावत् प्राप्तम्? कामचारवादभक्षता यथोपपादमूत्रपुरीषत्वं च प्रसिद्धतरं लोके बाल्यमिति तद्ग्रहणं युक्तम्। ननु पतितत्वादिदोषप्राप्तेर्न युक्तं कामचारताद्याश्रयणम्। न; विद्यावतः संन्यासिनो वचनसामर्थ्याद् दोषनिवृत्तेः पशुहिंसादिष्विवेति।**

**एवं प्राप्तेऽभिधीयते– न; वचनस्य गत्यन्तरसंभवात्। अविरुद्धे ह्यन्यस्मिन् बाल्यशब्दाभिलप्ये लभ्यमाने**

#### *प्रकटार्थविवरणम्*

**अनाविष्कुर्वन्नन्वयात्।।** पूर्वत्र बाल्यस्य विधेयत्वमङ्गीकृत्य अवान्तरवाक्यभेदेन मौनमपि विधेयमित्युक्तम्। इदानीं तदेव बाल्यं विचार्यत इत्याह— **तस्माद् ब्राह्मण इति**। तद्धिते सति संशय इति संबन्धः। वयोविशेषग्रहणे हेतुमाह— **बालभावस्येति**। प्रसिद्धिबलेन पूर्वाधिकरणन्यायेन पूर्वपक्षमाह— **किं तावदिति**। चरणं चार; वदनं वादः; भक्षणं भक्षः; कामतश्चारवादभक्षाः यस्य स तथोक्तः; तस्य भावः कामचारवादभक्षता; यथोपपादं यथासंभवम् यत्र क्वापि मूत्रपुरीषे अस्येति तथोक्तः, तस्य भावो यथोपपादमूत्रपुरीषत्वम्; बालस्य कर्म बाल्यमिति तद्धिताश्रयणे प्रतिषिद्धसेवनात् पतितत्वं शिष्टगर्हा च प्रसज्यत इत्याह— **नन्विति**। विशेषशास्त्रात् पतितत्वं न भविष्यतीत्याह— **न विद्यावत इति**।

उत्सूत्रमेव सिद्धान्तमाह— **न, वचनस्येति**। तद्धितप्रत्ययस्य भावेऽप्यविरोधात्, 'एककालं चरेद्भैक्ष्यं न प्रसज्येत

#### *भाष्यभावप्रकाशिका*

**अनाविष्कुर्वन्नन्वयात्**। अधिकरणस्य विषयं परिशेषयति— **तत्र बालस्य भाव इति**। **अशक्यत्वादिति**। विधियोग्यत्वाभावादित्यर्थः। शास्त्रान्तरविरोधात् विधेयत्वमयुक्तमिति शङ्कते— **ननु पतितत्वादीति**। सामान्यशास्त्रस्य विशेषविधिसामर्थ्यात् संकोचो युक्त इति परिहरति— **न विद्यावत इति**।

सामान्यप्रवृत्तनियमशास्त्राविरुद्धार्थे संभवति तद्विरुद्धार्थकल्पनायोगान्न कामचारादि विधेयमिति परिहरति— **न; वचनस्येति**।

#### *न्यायनिर्णयः*

बाल्यस्य विधेयत्वमुपेत्यवान्तरवाक्यभेदेन मौनमपि विधेयत्वान्मुमुक्षुणा कार्यमित्युक्तम्। इदानीं किं तद् बाल्यमिति वीक्षायामाह— **अनाविष्कुर्वन्निति**। अनुष्ठेयत्वेन श्रुतं बाल्यं विषयत्वेनोदाहरति— **तस्मादिति**। तत्र बाल्ये विषये संशय इति संबन्धः। संशयकारणमाह— **बालस्येति**। तर्हि बालभावो वयोविशेषोऽपि कल्प्यतामित्याशङ्क्य तदग्रहे हेतुमाह— **बालेति**। तद्धितश्रुत्या परिशिष्टं बाल्यमाश्रित्य संशयमभिनयति— **यथेति**। बाल्यशब्दार्थविवेचनेन स्वतन्त्रपुमर्थहेतुविद्यान्तरङ्गस्यैवात्रापि निरूपणात् पादादिसंगतिः। पूर्वपक्षे तिष्ठन्मूत्रत्वाद्यपि विदुषोऽनुष्ठेयं सिध्यति। सिद्धान्ते बाल्यस्याप्ररूढेन्द्रियत्वादिरूपभावशुद्धेरनुष्ठेयत्वान्न विदुषो यथेष्टचेष्टासिद्धिरिति मत्वा प्रश्नपूर्वकं पूर्वपक्षमाह— **किं तावदिति**। चरणं चारो वदनं वादो भक्षणं भक्षस्ते कामतो यस्य स तथा, तस्य भावस्तत्ता। यथोपपादं यथासंभवं यत्र क्वापि मूत्रं च पुरीषं चास्येति तथोक्तस्तस्य भावस्तत्त्वम्। तत्र लोकप्रसिद्धं हेतुमाह— **प्रसिद्धेति**। शास्त्रान्तरविरोधादयुक्तमुक्तविधबाल्यस्य विधेयत्वमिति शङ्कते— **नन्विति**। आदिशब्देन शिष्टगर्हा गृह्यते। सामान्यशास्त्रसंकोचो विशेषविधेः स्यादित्याह— **नेत्यादिना**। सामान्यविधेर्विशेषविधिना संकोचे दृष्टान्तमाह— **पश्विति**।

विदुषो यथेष्टचेष्टायामपि न दोषोऽस्तीति प्राप्तमनूद्य सिद्धान्तमाह— **एवमिति**। विदुषो यथेष्टचेष्टा न विधेया शास्त्रान्तरविरोधादिति प्रतिजानीते— **नेति**। सामान्यशास्त्रस्योक्तः संकोचो 'बाल्येन तिष्ठासे'दिति वचनादित्याशङ्क्याह— **वचनस्येति**। सामान्यप्रवृत्तविधि-

**न विध्यन्तरव्याघातकल्पना युक्ता। प्रधानोपकाराय चाङ्गं विधीयते। ज्ञानाभ्यासश्च प्रधानमिह यतीनामनुष्ठेयम्। न च सकलायां बालचर्यायामङ्गीक्रियमाणायां ज्ञानाभ्यासः संभाव्यते। तस्मादान्तरो भावविशेषो बालस्याप्ररूढेन्द्रियत्वादिरिह बाल्यमाश्रीयते। तदाह- अनाविष्कुर्वन्निति। ज्ञानाध्ययनधार्मिकत्वादि-भिरात्मानमविख्यापयन् दम्भदर्पादिरहितो भवेत्। यथा बालोऽप्ररूढेन्द्रियतया न परेषामात्मानमाविष्कर्तुमीहते, तद्वत्। एवं ह्यस्य वाक्यस्य प्रधानोपकार्यर्थानुगम उपपद्यते। तथा चोक्तं स्मृतिकारैः- 'यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम्। न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः। गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत्। अन्धवज्जडवच्चापि मूकवच्च महीं चरेत्'।'अव्यक्तलिङ्गोऽव्यक्ताचारः' इति चैवमादि।।५०।।**

।।इति पञ्चदशमनाविष्काराधिकरणम्।।

१६।।ऐहिकाधिकरणम्।।सू.५१।।

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्।।५१।।

### *प्रकटार्थविवरणम्*

विस्तर:[रे]' इत्यादिसामान्यशास्त्रविरोधाच्च [प्र]सन्नेन्द्रियादि[यत्वादि]कं मुमुक्षोरनुष्ठेयं चोद्यत इत्यर्थः। किं च बालकर्मणः सकाशात् बालभावस्याभ्यर्हितत्वात् स एव विधेय इत्याह— **प्रधानोपकाराय चेति**। उक्तेऽर्थे सूत्रं योजयति— **तदाहेति**। इति पञ्चदशमनाविष्काराधिकरणम्।।

### *भाष्यभावप्रकाशिका*

प्रधानविरोधाच्च न तद्विधेयमित्याह— **प्रधानेति**। कथं विरोधित्वमिति तद् दर्शयति— **न च सकलायामिति**। तस्मात् तदनुगुणं प्रशान्तेन्द्रियत्वादि प्रयत्नसाध्यं मुमुक्षोर्विधीयत इत्याह— **तस्मादान्तर इति**। अर्थमुपवर्ण्य तत्र सूत्रमवतार्य योजयति— **तदाहेति**। कथं तर्ह्यत्र बाल्यशब्द इति, तत्राह— **यथा बाल इति**। अन्वयादिति सूत्रपदं व्याचष्टे— **एवं ह्यस्येति**। प्रधानोपकारित्वे प्रमाणमाह— **तथा चोक्तमिति**। इति पञ्चदशमनाविष्काराधिकरणम्।।

### *न्यायनिर्णयः*

शास्त्राविरुद्धेऽर्थे संभवति तद्विरुद्धार्थकल्पनायोगात्र कामचारादि विधेयमित्युक्तमेव व्यनक्ति— **अविरुद्धे हीति**। इतश्च कामचारादि न विधेयमित्याह— **प्रधानेति**। किं तत्प्रधानं यदङ्गत्वेन बाल्यादि विधीयते, तदाह— **ज्ञानेति**। उक्तप्रधानोपकारित्वाभावात्र कामचारादि विधेयमित्युक्तम्। तद्विरोधित्वाच्च तदविधेयमित्याह— **न चेति**। किं तर्हि विधेयं बाल्यम्, तदाह— **तस्मादिति**। इहेति प्रकृतवाक्योक्तिः। उक्तेऽर्थे सूत्रमादाय योजयति— **तदाहेति**। कथं यथोक्तेऽर्थे बाल्यशब्दः प्रयुज्यते, तत्राह— **यथेति**। अन्वयादिति पदं व्याकरोति— **एवं हीति**। अप्ररूढेन्द्रियत्वादिरूपभावशुद्धिलक्षणबाल्यस्य प्रधानोपकारित्वे मानमाह— **तथा चेति**। कुलीनत्वप्रकटनं सत्त्वं, तद्वैपरीत्यमसत्त्वम्। शास्त्रार्थज्ञानराहित्यमश्रुतत्वं, तद्वैपरीत्यं बहुश्रुतत्वम्। सदाचारनिरतत्वं सुवृत्तत्वं, दुराचारनिष्ठत्वं दुर्वृत्तत्वमिति भेदः। तत्किमिदानी ब्रह्मधीयोग्यस्य मुमुक्षोर्नास्त्येव किंचिदनुष्ठेयं, तत्राह— **गूढेति**। चक्षुरिन्द्रियपारवश्यं निरसितुमन्धवदित्युक्तम्। रसनादिपारवश्यं निरस्यति— **जडवदिति**। ज्ञानेन्द्रियपारवश्यं परिहृत्य कर्मेन्द्रियपारवश्यं परिहरति— **मूकवदिति**। धर्मध्वजित्वाप्रकटनमव्यक्तलिङ्गत्वम्। तदेवं मुमुक्षोरुपरतसर्वेन्द्रियस्य श्रवणादिपरस्य मोक्षसाधनं तत्त्वज्ञानमवश्यंभावीति भावः।।५०।। इति पञ्चदशमनाविष्काराधिकरणम्।।

बाल्यान्तमुच्चावचं विद्याहेतुमुक्त्वा [1]तत्फलं विद्याजन्मकालं निरूपयति— **ऐहिकमिति**। उक्तहेत्वधीनधीजन्मविषये[2] कारीर्यादिफले

१. 'तत्फलविद्या' इत्यादिः पाठः स्यात्। २. विषये संशयमाहेति संबन्धः।

**'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र.सू. ३।४।२६) इत्यत आरभ्योच्चावचं विद्यासाधनमवधारितम्। तत्फलं विद्या सिध्यन्ती किमिहैव जन्मनि सिध्यत्युत कदाचिदमुत्रापीति चिन्त्यते। किं तावत् प्राप्तम्? इहैवेति। किं कारणम्? श्रवणादिपूर्विका हि विद्या। न च कश्चिदमुत्र मे विद्या जायतामित्यभिसंधाय श्रवणादिषु प्रवर्तते। समान एव तु जन्मनि विद्याजन्माभिसंधायैतेषु प्रवर्तमानो दृश्यते। यज्ञादीन्यपि**

### *शारीरकन्यायसंग्रहः*

**१६।।ऐहिकाधिकरणम्।।सू. ५१।।**

**ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्।।५१।।** परिदृश्यमानसंसारनिमित्तशोकपरिहाराय विद्यासाधनोपादानात्, श्रवणादीनां दृष्टद्वारेण चक्षुरादिवद् विद्यासाधनत्वाच्च कारीर्यवघातवत् समानजन्मन्येव विद्याफलहेतुत्वम्, अन्यथा त्वात्यन्तिकप्रतिबन्धः कारणपौष्कल्याभावो वा श्रवणादीनां कल्प्यत इति प्राप्ते, परिदृश्यमानसंसारनिमित्तशोकस्यानेकजन्मानुयायित्वमवगच्छतो यदाकदाचिदनर्थनिवृत्तिः स्यादित्यभिसन्धिसंभवात्, श्रवणादीनां विधानादेवादृष्टद्वारेणापि साधनत्वात् 'अनेकजन्मसंसिद्धः' इत्यादि-स्मृतिलिङ्गाच्च श्रवणादीनां पौष्कल्येऽपि पश्वादिफलचित्रादियागवत् प्रतिबन्धक्षयमपेक्ष्य इह जन्मनि जन्मान्तरे वा विद्योदयफलं कल्प्यत इति नानैकान्तिकत्वं विद्यासाधनानामित्युक्तम्।

### *प्रकटार्थविवरणम्*

**ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्।।** साधनस्योभयथाभावदर्शनात् पूर्वोक्ते साधनजाते संशयमाह— **सर्वापेक्षेति**। ऐहिकत्वनियमं पूर्वपक्षमाह— **किं तावदिति**। ननु विद्याया यज्ञादिसाध्यत्वात् कथमैहिकत्वनियम इत्याशङ्क्याह— **यज्ञादीन्यपीति**।

### *भाष्यभावप्रकाशिका*

**ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्।। इहैव जन्मनि** कारीर्यादिफलवत्। **अमुत्रेति**। चित्रादेः पश्वादिफलवदनियमो वेत्यर्थः। **श्रवणादिपूर्विका हीति**। श्रवणादीनाञ्चक्षुरादिवद् विद्यासाधनत्वात् कालान्तरीयकुम्भदर्शनाय चक्षुरुन्मीलनव्यापारकरणवत् कालान्तरीयविद्यासिद्धये श्रवणादिषु प्रवृत्त्यनुपपत्तेः परिदृश्यमानसंसारदुःखपरिहाराय च विद्यासाधनोपादनात् कारीर्यवघातादिवत् समानजन्मन्येव विद्याजन्मेत्यर्थः। ननु यज्ञादीनां जन्मान्तरफलसंपादकानां विद्यासाधनत्वावगमात् जन्मान्तरे विद्याजन्मेत्याशङ्क्य तेषामप्रमाणत्वात् साक्षाद्विद्यां प्रत्यसाधनत्वाच्छ्रवणादिलक्षणविद्यासाधनप्रवृत्तावेव सत्त्वशुद्ध्यापादनेनोपयोगाच्छ्रवणादौ प्रवृत्तस्य तस्मिन्नेव जन्मनि विद्याजन्मेत्याह— **यज्ञादीन्यपीति**। **ऐहिकमेवेति**। इहाभावे कारीर्यादाविवात्यन्तिकः प्रतिबन्धः, कारणपौष्कल्या(दि)भावो

### *न्यायनिर्णयः*

चित्रादिफले चोभयोपलब्धेर्वृत्तानुवादपूर्वकं संशयमाह— **सर्वेति**। श्रवणादिसामग्री प्रतिबन्धशून्या विशिष्टधीप्रसवभूमिरित्युक्तेरत्र पादादिसंगतिः। पूर्वपक्षे श्रवणादीनां विद्योपायत्वनियमासिद्धिः। सिद्धान्ते प्रतिबन्धाभावापेक्षया तेषां तन्नियमसिद्धिरित्युपेत्य प्रश्नपूर्वकमैहिकत्वनियमं पूर्वपक्षमाह— **किमिति**। फलद्वैविध्योपलब्धौ तन्नियमे नास्ति हेतुरिति शङ्कते— **किमिति**। तत्र कारणमाह— **श्रवणादीति**। चित्रादिवदमुत्रापि धीहेतुत्वं श्रवणादेः स्यादित्याशङ्क्याह— **न चेति**। कथं तर्हि तेषु प्रवृत्तिरित्याशङ्क्य तेषां कारीर्यादितुल्यत्वमाह— **समान इति**। श्रवणादीनां चक्षुरादिवद्धीसाधनत्वात् कालान्तरीयकुम्भोपलम्भाय चक्षुरुन्मीलना-भाववज्जन्मान्तरीयविद्यायै श्रवणादिषु प्रवृत्त्ययोगादुपलभ्यमानसंसारदुःखनिवृत्तये च विद्यासाधनादानात्(ज्ञानात्) कारीर्यादिवत् तुल्यजन्मन्येव विद्याजन्मेत्यर्थः। यज्ञादीनां जन्मान्तरीयफलानां धीहेतुत्वस्य विविदिषावाक्यीयत्वाज्जन्मान्तरे धीजन्मेत्याशङ्क्याह— **यज्ञेति**। तेषां धीशुद्ध्या श्रवणादिघटकत्वाद् घटितेषु तेषु धियाऽवश्यंभाव्यमित्यैहिकत्वनियम इत्यर्थः। श्रवणादीनां

**श्रवणादिद्वारेणैव विद्यां जनयन्ति, प्रमाणजन्यत्वाद् विद्यायाः। तस्मादैहिकमेव विद्याजन्मेति।**

**एवं प्राप्ते वदामः– ऐहिकं विद्याजन्म भवत्यसति प्रस्तुतप्रतिबन्ध इति। एतदुक्तं भवति– यदा प्रक्रान्तस्य विद्यासाधनस्य कश्चित् प्रतिबन्धो न क्रियत उपस्थितविपाकेन कर्मान्तरेण, तदैव विद्योत्पद्यते। यदा तु खलु तत्प्रतिबन्धः क्रियते, तदाऽमुत्रेति। उपस्थितविपाकत्वं च कर्मणो देशकालनिमित्तोपनिपाताद् भवति। यानि चैकस्य कर्मणो विपाचकानि देशकालनिमित्तानि तान्येवान्यस्यापीति न नियन्तुं शक्यते। यतो विरुद्धफलान्यपि कर्माणि भवन्ति। शास्त्रमप्यस्य कर्मण इदं फलं भवतीत्येतावति पर्यवसितं न देशकालनिमित्तविशेषमपि संकीर्तयति। साधनवीर्यविशेषात्त्वतीन्द्रिया कस्यचिच्छक्तिराविर्भवति, सा प्रतिबद्धा**

### *प्रकटार्थविवरणम्*

चित्रायागवदनियतफलं विद्यासाधनमिति सिद्धान्तमाह— **एवं प्राप्ते वदाम इत्यादिना**। नन्वस्मिन् जन्मनि पुष्कले विद्यासाधनेऽनुष्ठितेऽपि प्रवृत्तफलेन कर्मणा प्रतिबन्धाच्चेत् विद्या नोदपादि, तर्हि जन्मान्तरेऽपि प्रवृत्तफलेन कर्मान्तरेण प्रतिबन्धसंभवान्न कदाचिदुत्पत्स्यत इत्याशङ्क्याह— **उपस्थितविपाकत्वं चेति**। कस्मिंश्चिद्देशे काले निमित्ते वा कस्यचित् प्रतिबन्धाय किंचित् कर्मोपस्थितफलं भवति, न सदा प्रतिबन्धसद्भावे प्रमाणमस्तीति भावः। नन्वस्मिन् देशे काले प्रवृत्तफलं कर्म विद्योदयप्रतिबन्धकं चेदिष्यते, तर्हि विद्यासाधनोदयस्यापि प्रतिबन्धकं तदेवास्तु; ततो विद्यातत्साधनयोरेकदेहभावित्वमित्याशङ्क्याह— **यानि चैकस्येति**। विद्योदयप्रतिबन्धकात् तत्साधनोदयप्रतिबन्धकं कर्मान्यत्; अन्यान्येव तद्व्यञ्जकादिदेशकालनिमित्तानीति भावः। ननु कृते कर्मणि, यदि देशकालनिमित्तवैगुण्यात् फलं नोत्पद्यते, तदा शास्त्रस्य साधनबोधकस्याप्रामाण्यप्रसङ्ग इत्याशङ्क्याह— **शास्त्रमपीति**। साध्यसाधनसंबन्धबोधकं शास्त्रं न प्रतिबन्धभावाभावयोः व्याप्रियते; न चाप्रामाण्यम्, करतलानलसंयोगस्य दाहहेतुत्वग्राहकप्रत्यक्षस्य प्रामाण्यदर्शनादिति भावः[१]। ननु सर्वेषां कर्मणां शास्त्रसमधिगम्यत्वात् अविशेषे कथं कस्यचित् प्रतिबन्धकत्वमित्याशङ्क्याह— **साधनवीर्येति**। यथा प्रत्यक्षत्वाविशेषेऽपि अग्निमण्यादीनां स्वकारणेभ्यः शक्तिविशेषवतां प्रादुर्भावात् प्रतिबन्ध्यप्रतिबन्धकभावः,

### *भाष्यभावप्रकाशिका*

वा श्रवणादीनां कल्पनीय इत्यर्थः। उपस्थितविपाकश्रवणादिविरोधात् कारण[कर्मण] एव प्रतिबन्धः स्यादित्याशङ्क्याह— **उपस्थित-विपाकत्वं चेति**। तैरेव देशादिभिर्विद्यार्थमेव कर्म किमिति न विपच्यत इत्यत आह— **यानि चेति**। श्रवणादिभ्यो विद्योत्पत्ति-प्रतिपादकसूत्रं[शास्त्रं] व्याहन्येत, कर्मणा तेषां प्रतिबन्धाभ्युपगम इत्याशङ्क्याह— **शास्त्रमपीति**। ननु तथापि कर्मण एव प्रतिबन्धकत्वं न श्रवणादीनामिति कथं नियम्यत इति, तत्राह— **साधनवीर्यविशेषादिति**। यदुक्तमिह विद्याऽभावे कारीर्यादिवत् प्रतिपत्ता[बन्धा]दिसंभवः

### *न्यायनिर्णयः*

कारीर्यादितुल्यत्वे फलितमाह— **तस्मादिति**।

श्रवणादिषु कृतेष्वपि न चेदत्र धीः स्यात्, तेषामतदुपायतैवेति प्राप्तमनूद्य चित्रावदनियतफल[लं] धीसाधनमिति सिद्धान्तमाह— **एवमिति**। कृतेष्वपि श्रवणादिषु कदाचिद् विद्या नोत्पद्यते चेत्तर्हि तेषां तदुपायत्वमनियतं स्यादित्याशङ्क्याह— **एतदिति**। कृतेष्वपि श्रवणादिष्वत्र विद्यानुदये कारीर्यादाविव प्रतिबन्धो वा पौष्कल्याभावो वा तेषां कल्पनीयः, प्रतिबन्धहीना हि सामग्री कार्यहेतुर्न चैतावता तद्धेतुत्वहतिरित्यर्थः। उपस्थितविपाकश्रवणादिविरोधात् कर्मण एव प्रतिबन्धमाशङ्क्याह— **उपस्थितेति**। तैरेव देशादिभिर्विद्यार्थमेव श्रवणादि कर्म किमिति न विपच्यते, तत्राह— **यानीति**। भोगार्थस्य कर्मणो ज्ञानार्थस्य च श्रवणादेर्देशकालनिमित्तैकरूप्याभावे हेतुमाह— **यत इति**। कर्मणा श्रवणादीनां प्रतिबन्धे तेभ्यो विद्योत्पत्तिवादि शास्त्रं व्याहन्येतेत्याशङ्क्याह— **शास्त्रमिति**। तथापि कर्मण एव प्रतिबन्धकत्वं न श्रवणादीनामिति कुतो नियमः, तत्राह— **साधनेति**। यत्त्विह विद्याऽभावे कारीर्यादिवत् प्रतिबन्धादिसत्त्वकल्पनेन

---

१. मण्यादौ प्रतिबन्धके सति दाहानुत्पत्तावपि अग्नेर्दाहहेतुत्वं नापैतीति भावः।

**परस्य तिष्ठति। न चाविशेषेण विद्यायामभिसंधिर्नोत्पद्यत इहामुत्र वा मे विद्या जायतामिति, अभिसंधेर्निरङ्कुशत्वात्। श्रवणादिद्वारेणापि विद्योत्पद्यमाना प्रतिबन्धक्षयापेक्षयैवोत्पद्यते। तथा च श्रुतिर्दुर्बोधत्वमात्मनो दर्शयति– 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः। आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः' (क.उ. २।७) इति। गर्भस्थ एव च वामदेवः प्रतिपेदे ब्रह्मभावमिति वदन्ती जन्मान्तरसंचितात् साधनाज्जन्मान्तरे विद्योत्पत्तिं दर्शयति। न हि गर्भस्थस्यैवैहिकं किंचित् साधनं संभाव्यते। स्मृतावपि– 'अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति' (भ.गी. ६।३७) इत्यर्जुनेन पृष्टो भगवान् वासुदेवः 'न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' (भ.गी. ६।४०) इत्युक्त्वा पुनस्तस्य पुण्यलोकप्राप्तिं साधुकुले संभूतिं चाभिधायानन्तरम् 'तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्' (भ.गी. ६।४३) इत्यादिना**

### *प्रकटार्थविवरणम्*

तत्कारणानामपि स्वकारणेभ्यो विचित्रशक्तिमतामेव प्रादुर्भाव इत्यनादिरयं प्रवाहः, तथा कर्मणोऽपि स्यादित्यर्थः। यच्चोक्तमामुष्मिकाभिसन्धिर्नोत्पद्यत इति, तत्राह— **न चाविशेषेणेति**। परिदृश्यमानसंसारनिमित्तशेषस्यानेकजन्मानुयायित्वमवगच्छतो यदाकदाचिदनर्थनिवृत्तिः स्यादिति अभिसन्धानं भविष्यतीत्यर्थः। यच्चोक्तं श्रवणादीनामिहैव पुष्कलत्वात् इहैव विद्या जायत इति, तत्राह— **श्रवणादीति**। प्रतिबन्धक्षयापेक्षया कदाचिद्विद्योदय इत्यत्र श्रुतिस्मृतिसंमतिमाह— **तथा चेत्यादिना**।

[1]विधिसामर्थ्यमाश्रित्य ब्रुवन्नामुष्मिकं फलम्। श्रवणादेः कथंकारं वाक्पतिर्न च तत्रपे।।

इति षोडशमैहिकाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

कल्पनीयः, इहैव मे विद्याख्यं फलं स्यादित्यभिसन्धीयमानत्वादिति, तत्राह— **न चाविशेषेणेति**। **अभिसन्धेर्निरंकुशत्वादिति**। अयमर्थः— परिदृश्यमानसंसारदुःखस्यानेकजन्मानुयायित्वमवगच्छतो यदा कदाचिदनर्थनिवृत्तिः स्यादिति साधनसामर्थ्यानुसारेणाभिसन्धिः संभवतीति। ननु श्रवणादीनां चक्षुरादिवद् दृष्टफलत्वमुक्तमिति, तत्राह— **श्रवणादिद्वारेणापीति**। विधानादेवादृष्टद्वारेणाप्येषां साधनत्वमवघातादिवदवगम्यते, यज्ञादीनामनियतकालफलानां विद्यासाधनत्वावगमादनियतत्वं युक्तमित्यर्थः। प्रतिबन्धसद्भावे श्रुतिलिङ्गमाह— **तथा च श्रुतिरिति**। विद्याया आमुष्मिकत्वे लिङ्गमाह— **गर्भस्थ एवेति**। कयाऽनुपपत्त्ये...त्राह— **न हि गर्भस्थस्येति**। एवं

### *न्यायनिर्णयः*

धिय आमुष्मिकत्वकल्पनमयुक्तमिहैव मे विद्या स्यादित्यभिसंधिदृष्टेरिति, तत्राह— **न चेति**। दृश्यमानसंसारदुःखस्यानेकजन्मगामित्वं जानतो यदा कदाचिदनर्थनिवृत्तिः स्यादित्यभिसंधेः साधनसामर्थ्यानुसारेण संभावितत्वादित्याह— **अभिसंधेरिति**। यत्तु श्रवणादीनां चक्षुरादिवद् दृष्टफलत्वमिति, तत्राह— **श्रवणादीति**। तेषां विधानाददृष्टद्वाराऽपि साधनत्वमवघातवदवगतम्, यज्ञादीनामनियतकालफलानां ज्ञानसाधनत्वविधेश्च विद्योत्पत्तेरनियतत्वमित्यर्थः। यत्तु यज्ञादीनां घटकत्वाद् घटितेषु श्रवणादिषु विद्याऽवश्यंभाविनीति; तत्र प्रतिबन्धसत्त्वस्य श्रौतलिङ्गसिद्धत्वान्मैवमित्याह— **तथा चेति**। आत्मनः श्रवणमपि दुष्करं बहूनामित्याह— **श्रवणायेति**। कथंचन श्रवणेऽपि तत्फलं ज्ञानं दुर्लभमित्याह— **शृण्वन्तोऽपीति**। तत्र हेतुः— **आश्चर्य इति**। यथावदस्यात्मनो वक्ताऽऽश्चर्योऽद्भुतवत् कश्चिदेव संभवति। सम्यगाचार्यसिद्धावपि तच्छ्रुत्वा लब्धा साक्षात्कर्ताऽस्याश्चर्यः। तिष्ठतु साक्षात्कारः कुशलेनाचार्येणानुशिष्टोऽपि शास्त्रात्परोक्षतो ज्ञाताऽऽप्याश्चर्य एवेत्यर्थः। सम्प्रत्यामुष्मिकत्वे धियो लिङ्गमाह— **गर्भस्थ इति**। कयाऽनुपपत्त्या श्रुतिरिममर्थं दर्शयति, तत्राह— **न हीति**। जन्मान्तरसंचितं साधनं जन्मान्तरेऽपि धियं साधयतीत्यत्र स्मृतिमाह— **स्मृताविति**। श्रवणादीनां

१. अनियतफलयज्ञादिसापेक्षत्वाच्छ्रवणादेरविधेयस्याप्यनियतफलत्वमिति वाचस्पत्याशयः कल्पतरौ विवृतः। द्र.पृ. ९२४।

**'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' (भ.गी. ६।४५) इत्यन्तेनैतदेव दर्शयति। तस्मादैहिकमामुष्मिकं वा विद्याजन्म प्रतिबन्धक्षयापेक्षयेति स्थितम्।।५१।।**

।।इति षोडशमैहिकाधिकरणम्।।

१७।। मुक्तिफलानियमाधिकरणम् ।।सू.५२।।

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः।।५२।।

**यथा मुमुक्षोर्विद्यासाधनावलम्बिनः साधनवीर्यविशेषाद् विद्यालक्षणे फल ऐहिकामुष्मिकफलत्वकृतो विशेषप्रतिनियमो दृष्टः, एवं मुक्तिलक्षणेऽप्युत्कर्षापकर्षकृतः कश्चिद् विशेषप्रतिनियमः स्यादित्याशङ्क्याह– एवं मुक्तिफलानियम इति। न खलु मुक्तिफले कश्चिदेवंभूतो विशेषप्रतिनियम आशङ्कितव्यः। कुतः?**

***शारीरकन्यायसंग्रहः***

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः।।५२।।** काष्ठोपचयापचयाभ्यां ज्वालोपचयापचयदर्शनात् श्रवणाद्यन्तरङ्गबहिरङ्गतदभ्यासादिसाधनोपचयापचयाभ्यां विद्यायामप्युपचयादिभावात् मुक्तावप्युपचयादिभावे स्वर्गादिफलवत् प्राप्ते [१]मुक्तिस्वरूपब्रह्मैक्य[क]रूपत्वावधारणात् शास्त्रविरोधादनुमानस्य निवर्तनीयचित्तविक्षेपोपचयादिभावात् तन्निवृत्तावेव साधनोपचयादेरुपक्षयात्, कलुषादिप्रतिबन्धनिवृत्तिचिराचिरद्वारेण विद्यायामपि चिराचिराभिव्यक्तिसंभवाच्च न मुक्तावुपचयादिभाव इत्युक्तम्।

इति प्रकाशात्मविरचिते शारीरकन्यायसंग्रहे तृतीयाध्यायस्य चतुर्थः पादः।।

***प्रकटार्थविवरणम्***

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः।** विद्याफलं मुक्तिर्विषयः। तस्याः किं विद्यावदुत्कर्षापकर्षकृतो विशेषोऽस्ति, उत नेति फलस्योभयथाभावदर्शनात् संशयः। पूर्वपक्षमाह— **यथेति**। मुक्तिः उपचयापचयरूपिणी, फलत्वात्, विद्यावत्; ततः कर्मसाध्यत्वमित्यर्थः। मुक्तिस्वरूपब्रह्मैकरूप्यावधारणशास्त्रविरोधादनुमानमप्रमाणमित्याह— **न खलु मुक्ताविति**।

ननु काष्ठोपचयापचयाभ्यां ज्वालोपचयापचयवत् श्रवणाद्यन्तरङ्गबहिरङ्गसाधनोपचयापचयाभ्यां विद्यायाः उपचयापचयभावान्मुक्तावपि

***भाष्यभावप्रकाशिका***

श्रुतिस्मृतिलिङ्गाच्छ्रवणादीनां पौष्कल्येऽपि पश्वादिफलचित्रादियागवदनियतकालफ.....नैकान्तिकत्वं विद्यासाधनानामित्युपसंहरति— **तस्मादैहिकमिति**। इति षोडशमैहिकाधिकरणम्।।

**एवं मुक्तिफलानियमस्तदवस्थाधृतेः**। ननु विद्यते चेत् काचिदवस्था अद्वितीयताहानिस्तथाऽवस्थात्वाज्जाग्रदवस्थावत्तस्या

***न्यायनिर्णयः***

पौष्कल्येऽपि श्रुतिस्मृतिलिङ्गात् पश्वादिफलचित्रादिवदनियतकालत्वसिद्धेर्नानैकान्तिकफलत्वं तेषामित्युपसंहरति— **तस्मादिति**। इति षोडशमैहिकाधिकरणम्।।

विद्यारूपे फले कालोत्कर्षापकर्षकृतो विशेषनियमो दर्शितः। सम्प्रति विद्याफले मोक्षे कस्यचिदपि विशेषनियमस्याभावं दर्शयति— **एवमिति**। विद्याफलं मुक्तिर्विषयः। सा किं विद्यावदुत्कर्षापकर्षकृतविशेषवती, किंवा नेति फलस्योभयथादृष्टेः संशये प्रकृतविद्याफलस्य प्रसङ्गतो निरतिशयत्वोक्त्या पादादिसंगतिः। पूर्वपक्षे मोक्षस्य कर्मसाध्यतया पुरुषार्थाधिकरणासिद्धिः। सिद्धान्ते तस्य ज्ञानैकसाध्यत्वात् तत्सिद्धिरित्यभिप्रेत्य पूर्वपक्षमाह— **यथेति**। मुक्तिरुपचयापचयवती फलत्वाद् विद्यावदित्यनुमानात् तस्याः कर्मसाध्यत्वाधिगमात् पुरुषार्थाधिकरणमयुक्तमित्याशङ्क्य सिद्धान्तमवतार्य प्रतिज्ञां विभजते— **न खल्विति**। उक्तेऽनुमाने जाग्रति कथमाशङ्का निरवकाशेति शङ्कते— **कुत इति**। मुक्तिस्वरूपब्रह्मैकरूप्यावधारणशास्त्रविरोधान्नानुमेति मत्वा सूत्रावयवमादाय

१. 'मुक्तिस्वरूपब्रह्मैकरूपविद्यावधारणशास्त्र' इति पाठान्तरं दृश्यते।

**तदवस्थावधृतेः। मुक्त्यवस्था हि सर्ववेदान्तेष्वेकरूपैवावधार्यते। ब्रह्मैव हि मुक्त्यवस्था। न च ब्रह्मणोऽनेकाकारयोगोऽस्ति, एकलिङ्गत्वावधारणात् 'अस्थूलमनणु' (बृ.उ. ३।८।८) 'स एष नेति नेत्यात्मा' (बृ.उ. ३।९।२६), 'यत्र नान्यत्पश्यति' (छा.उ. ७।२४।१), 'ब्रह्मैवेदममृतं पुरस्तात्' (मु.उ. २।२।११), 'इदं सर्वं यदयमात्मा' (बृ.उ. २।४।६), 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ.उ. ४।४।२५), 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ.उ. ४।५।१५) इत्यादिश्रुतिभ्यः।**

**अपि च विद्यासाधनं स्ववीर्यविशेषात् स्वफल एव विद्यायां कंचिदतिशयमासञ्जयेत्, न विद्याफले मुक्तौ। तद्ध्यसाध्यं नित्यसिद्धस्वभावमेव विद्ययाऽधिगम्यत इत्यसकृदवादिष्म। न च तस्यामप्युत्कर्षनिकर्षात्मकोऽतिशय उपपद्यते, निकृष्टाया विद्यात्वाभावात्। उत्कृष्टैव हि विद्या भवति। तस्मात् तस्यां चिराचिरोत्पत्तिरूपोऽतिशयो भवन् भवेत्। न तु मुक्तौ कश्चिदतिशयसंभवोऽस्ति। विद्याभेदाभावादपि**

### *प्रकटार्थविवरणम्*

तत्प्रसङ्ग इत्याशङ्क्याह— **अपि च विद्यासाधनमिति**। विद्यायामतिशयमङ्गीकृत्य मुक्तौ नातिशयाधायकत्वमित्युक्तम्। इदानीं विद्याऽपि निरतिशयेत्याह— **न च तस्यामपीति**। निकृष्टविषयत्वेन हि विद्याया निकृष्टत्वम्; ब्रह्म च सर्वदोषरहितम्; कथं तद्विद्या निकृष्टा स्यादित्यर्थः। सर्वेषामुत्कृष्टब्रह्मविषयत्वेनोत्कृष्टैव चेद् विद्या, तर्हि साधनाधिक्यं व्यर्थमित्याशङ्क्याह— **तस्मादिति**। यस्मात् स्वतो नास्ति विद्यायाः सातिशयत्वम्, किं तु निवर्तनीयकर्मचित्तविक्षेपादेः सातिशयत्वेन तत्रैव साधनोपचयादेरुपक्षयः, तस्माद् विद्यायाः प्रतिबन्धकनिवृत्तिचिराचिरत्वद्वारेण चिराचिरोत्पत्तिरूपोऽतिशयः भवेदित्यर्थः। मुक्तावपि कालाल्पत्वबहुत्वलक्षण एव विशेषोऽस्त्विति न वाच्यमित्याह— **न तु मुक्ताविति**। विद्योदयमात्रेणैवाविद्याध्वंसादित्यर्थः। ननु दहरवैश्वानर[नरादि]विद्यानां

### *भाष्यभावप्रकाशिका*

अपि निवृत्तिः स्यादित्याशङ्क्याह— **ब्रह्मैव हीति**। एतावता कथमुत्कर्षनिकर्षलक्षणविशेषाभाव इत्यत आह— **न च ब्रह्मण इति। एकलिङ्गत्वावधारणादिति**। 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र ही'त्यस्मिन्नधिकरणे निर्विशेषत्वमस्थूलादिश्रुत्यवष्टम्भेन निरूपितमित्यर्थः।

ननु काष्ठोपचयापचयाभ्यां ज्वालोपचयापचयदृष्टेरन्तरङ्गबहिरङ्गतदभ्यासादिसाधनोपचयापचयाभ्यां विद्यायामुपचया[पचय]भावात् विद्याफले मुक्तावप्युपचयापचयादिभावः स्यादित्याशङ्क्याह— **अपि च विद्यासाधनमिति**। ननु विद्यैव सातिशयत्वात् स्वसाध्येऽतिशयमादध्यादिति, तत्राह— **तद्ध्यसाध्यमिति**। तर्हि प्रवृत्त्यानर्थक्यमिति, तत्राह— **विद्ययाऽधिगम्यत इति**। विद्यायामतिशयमङ्गीकृत्यैतदवोचाम। न तु कैवल्यसाधनापरोक्षविद्यायामतिशयमभिप्रेत्येत्यर्थः। कथन्तर्हि पूर्वाधिकरणेन विद्याया विशेषो दर्शित इति, तत्राह— **तस्मात्तस्यामिति**। नन्वेवंभूत एवातिशयो मुक्तावपि स्यादिति, तत्राह— **न तु मुक्ताविति**।

### *न्यायनिर्णयः*

व्याचष्टे— **तदवस्थेति**। मुक्तिर्नाम काचिदवस्था विद्यते चेदद्वितीयत्वविरोधादवस्थात्वाज्जाग्रदवस्थावदसावपि निवृत्तिमती स्यादित्याशङ्क्याह— **ब्रह्मैवेति**। कथमेतावता मुक्तेरुत्कर्षनिकर्षकृतविशेषराहित्यमित्याशङ्क्याह— **न चेति**। 'न स्थानतोऽपी'त्यधिकरणे निर्विशेषत्वमस्थूलादिश्रुत्या ब्रह्मणो निरूपितमिति स्मारयति— **एकेति**। इतश्च मुक्तेर्निरतिशयत्वमित्याह— **अपि चेति**। काष्ठोपचयापचयाभ्यां ज्वालोपचयापचयदृष्टेरन्तरङ्गबहिरङ्गतदभ्यासादिसाधनोपचयापचयाभ्यां विद्यायामुपचयापचयसंभवात् तत्फले मुक्तावपि तौ स्यातामित्याशङ्क्य हेत्वन्तरं स्फोरयति— **न विद्येति**। विद्यैव सातिशया स्वसाध्येऽपि कथंचिदतिशयमादध्यादित्याशङ्क्याह— **तद्धीति**। तर्हि मुमुक्षूणां विद्यार्थिनां प्रवृत्त्यानर्थक्यं, तत्राह— **विद्ययेति**। तस्यामतिशयमाश्रित्य मुक्तौ नातिशयोऽस्तीत्युक्तम्। इदानीं विद्याऽपि मोक्षहेतुतत्त्वसाक्षात्कारलक्षणा नातिशयवतीत्याह— **न चेति**। कथं तर्हि पूर्वाधिकरणे विद्याया विशेषो दर्शितः, तत्राह— **तस्मादिति**। मुक्तावपि तर्हि तादृशोऽतिशयो भविष्यति, तत्राह— **न त्विति**। विद्योत्पत्तिनान्तरीयकत्वेनाविद्यानिवृत्तिरूपाया

**तत्फलभेदनियमाभावः कर्मफलवत्। न हि मुक्तिसाधनभूताया विद्यायाः कर्मणामिव भेदोऽस्तीति। सगुणासु तु विद्यासु– 'मनोमयः प्राणशरीरः' (छा.उ. ३।१४।२) इत्याद्यासु गुणावापोद्वापवशाद् भेदोपपत्तौ सत्यामुपपद्यते यथास्वं फलभेदनियमः कर्मफलवत्। तथा च लिङ्गदर्शनम्– 'तं यथा यथोपासते तदेव भवति' (मुद्ग.उ. ३।३) इति। नैवं निर्गुणायां विद्यायाम्, गुणाभावात्। तथा च स्मृतिः– 'न हि गतिरधिकाऽस्ति कस्यचित् सति हि गुणे प्रवदन्त्यतुल्यताम्' (महा.शा. १९४।६०) इति। तदवस्थावधृतेस्तदवस्थावधृतेरिति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति।।५२।।**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य चतुर्थः पादः।।४।।**

### *प्रकटार्थविवरणम्*

प्रतिपुरुषं भिन्नत्वदर्शनात् मुक्तिफलाऽपि विद्या ब्रह्मविद्यात्वाविशेषात् प्रतिपुरुषं भिन्ना; ततो मुक्तेरपि सातिशयत्वमित्याशङ्क्याह— **विद्याभेदाभावादिति**। एकरूपवस्तुविषयत्वेन पुरुषभेदेऽपि विद्यायाः अन्यथात्वाभावात् नास्ति तत्फले कश्चिदतिशयनियमः; कर्मफलवदिति वैधर्म्यदृष्टान्तः। परोक्तं दृष्टान्तं विघटयति— **सगुणासु त्विति**। तस्मान्मुक्तेर्निरतिशयत्वान्न कर्मसाध्यत्वमिति भावः।

वैराग्यं तत्त्वमर्थौ द्वौ ततः शब्दोपसङ्ग्रहम्। पुरुषार्थं स्वतन्त्राच्च प्रोचुर्नीचोच्चसाधनम्।।

**इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे तृतीयस्याध्यायस्य चतुर्थः पादः समाप्तः।**

### *भाष्यभावप्रकाशिका*

विद्यायामुदितायां तन्नान्तरीयकतया अविद्यानिवृत्तिलक्षणाया मुक्तेरवश्यंभावनियमादित्यर्थः। एकरूपत्वात् साधनादेरनेकरूपफलोत्पत्त्यसंभवादपि न मुक्तावतिशय इत्याह— **विद्याभेदाभावादिति**। **फलभेदनियमाभाव इति**। फलविशेषाभाव इत्यर्थः। तत्प्रपञ्चयति— **न हीति**। ननु विद्यात्वात् सगुणविद्यावद्रूपभेदो भविष्यतीत्याशङ्क्य विषयभेदात् तत्र विद्याभेदः, इह तु विषयभेदो नास्तीत्यभिप्रेत्याह— **सगुणास्विति**।

**इति श्रीमत्परमहंसपरिव्राजकाचार्य ज्ञानोत्तमपूज्यपादशिष्य श्रीचित्सुखमुनिविरचितायां भाष्यभावप्रकाशिकायां तृतीयोऽध्यायः समाप्तः।।**

### *न्यायनिर्णयः*

मुक्तेरावश्यकत्वादित्यर्थः। मुक्तेर्निर्विशेषत्वे हेत्वन्तरमाह— **विद्येति**। एकरूपत्वादात्मनस्तदाकारविद्यायां विशेषाभावादनेकरूपफलोत्पादकत्वायोगात् तत्फले विशेषासिद्धिरित्यर्थः। विद्यायां भेदाभावं प्रपञ्चयति— **न हीति**। सगुणविद्यावदात्मविद्याया भेदः स्यादित्याशङ्क्य विषयभेदात् तत्र भेदेऽपि नात्र विषयभेदोऽस्तीत्याह— **सगुणास्विति**। तत्र फलभेदे मानमाह— **तथा चेति**। दार्ष्टान्तिके विशेषमाह— **नैवमिति**। तत्त्वविद्याविशेषे गुणाभावे स्मृतिमाह— **तथा चेति**। कस्यचित् निर्गुणविद्यावतः पुरुषस्य गतिः फलमिति यावत्। तत्र न्यूनाधिकभावाभावे हेतुमाह— **सति हीति**। पुनरुक्तेरर्थवत्त्वमाह—**तदवस्थेति**। तदेवं मुक्तेर्निरतिशयत्वान्न कर्मसाध्यतेति युक्तं पुरुषार्थाधिकरणमिति भावः।।५२।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृते शारीरकभाष्यविभागे न्यायनिर्णये तृतीयाध्यायस्य चतुर्थः पादः।।४।।**

**।।इति तृतीयाध्यायस्य निर्गुणविद्याया अन्तरङ्गबहिरङ्गसाधनविचाराख्यश्चतुर्थः पादः।।**

**।।इति श्रीमद्ब्रह्मसूत्रशांकरभाष्ये साधनाख्यस्तृतीयोऽध्यायः।।**

# ब्रह्मसूत्रशाङ्करभाष्यम्

## अथ चतुर्थोऽध्यायः।

## प्रथमः पादः

१।।आवृत्त्यधिकरणम्।।सू. १-२।।

### आवृत्तिरसकृदुपदेशात्।।१।।

**तृतीयेऽध्याये परापरासु विद्यासु साधनाश्रयो विचारः प्रायेणात्यगात्। अथेह चतुर्थे फलाश्रय आगमिष्यति। प्रसङ्गागतं चान्यदपि किंचिच्चिन्तयिष्यते। प्रथमं तावत् कतिभिश्चिदधिकरणैः साधनाश्रय-विचारशेषमेवानुसरामः। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.उ. ४।५।६),**

*शारीरकन्यायसंग्रहः*

**आवृत्तिरसकृदुपदेशात्।।१।। लिङ्गाच्च।।२।।** फलमुद्दिश्य विहितानां ज्योतिष्टोमादीनां यावत् शब्दपरिमितं कर्मरूपं तावतः सकृदनुष्ठानादेव कृतार्थत्वदर्शनात् अहंग्रहोपासनेषु श्रवणादिषु च यावत् शब्दपरिमितमुपासनादिकर्मरूपं तावतः सकृदनुष्ठानादेव फलसिद्धेः आवृत्त्यनपेक्षेति सामान्यन्यायेन प्राप्तम्। तत्र 'यस्य स्यादद्धा' 'देवो भूत्वा' इति च लिङ्गादुपास्यमानसाक्षात्करण-लक्षणदृष्टफलद्वारेण अदृष्टसाधनत्वे वक्तव्ये यावद् दृष्टफलं तावदवघातादिविधिवदर्थसिद्धावृत्तिगुणविशिष्टमेवोपासनाकर्म विधीयते; फलपर्यन्तमेव हि कर्म विधिविषय इति विशेषन्यायेनावृत्तिरहंग्रहोपासनेषु श्रवणादिषु च विहितेत्युक्तम्।।

*प्रकटार्थविवरणम्*

साध्यसिद्धेः साधनाधीनत्वात् साधननिरूपणान्तरं फलं निरूपयितुमुपक्रमत इत्याह— **तृतीयेऽध्याय इति**। फलनिरूपण-प्रसङ्गेनार्चिरादिपदार्थोपसंहारानुपसंहारौ निरूपयिष्येते इत्यर्थः। अवान्तरसंबन्धमाह— **प्रथमं तावदिति**। साधनानुष्ठाने यत्नाधिक्यविधानायेति शेषः।

**आवृत्तिरसकृदुपदेशात्।।** विषयमनूद्य संशयमाह— **आत्मा वा इति**। साधनेषूभयथादर्शनात् संशयमुक्त्वा श्रवणादीनि

*भाष्यभावप्रकाशिका*

**आवृत्तिरसकृदुपदेशात्।।** साधनाधीनत्वात् फलसिद्धेस्तद्विषयविचारयोरपि पूर्वापरीभावो युक्त इत्याह— **तृतीयेऽध्याय इति**। इदानीं तदधिगम उत्तरपूर्वाघयोरित्यतः प्राक्तनाधिकरणानां तात्पर्यमाह— **प्रथमं तावदिति**। अनुष्ठानस्वरूपं निरूपयतीत्यर्थः। इदानीमस्याधिकरणस्य विषयं दर्शयति— **आत्मा वा अर इति**। नन्ववघातादिवत् फलपर्यन्तमनुष्ठानं स्यादित्यत आह—

*न्यायनिर्णयः*

पूर्वाध्यायान्तिमाधिकरणे मोक्षे प्रतिनियमाभावो दर्शितः। सम्प्रति मोक्षौपयिकविद्यासाधनेषु श्रवणादिष्वावृत्त्याऽनुष्ठानप्रतिनियमं दर्शयति— **आवृत्तीति**। पूर्वोत्तराध्याययोः संबन्धं हेतुहेतुमद्भावं वक्तुं तार्तीयमर्थमनुद्रवति— **तृतीय इति**। साधनविचारशेषद्योतनाय प्रायेणेत्युक्तम्। साधनाधीनत्वात् फलसिद्धेस्तद्विचारयोरपि युक्तं पौर्वापर्यमित्याशयवानाह— **अथेति**। कथं तर्हीहार्चिरादिवचनमित्याशङ्क्य फलोक्तिप्रसङ्गेन तदुक्तिरपि भविष्यतीत्याह— **प्रसङ्गेति**। अध्यायसंबन्धमुक्त्वा तदधिगमाधिकरणात् प्राक्तनाधिकरणानां तात्पर्यं दर्शयन्नवान्तरसंबन्धमाह— **प्रथममिति**। साक्षादेव श्रुत्युक्तं साधनं चिन्तितम्। अधुना फलार्थापत्तिलब्धमावृत्त्यादि चिन्त्यते। तदर्थापत्त्यायत्ता च तच्चिन्ता फलाध्याये संगतैवेति भावः। प्रथमाधिकरणस्य विषयमनूद्य संशयमाह— **आत्मेति**। साधनेषूभयथात्वदृष्टेः श्रवणादिसाधनेषु संशयमुक्त्वा मुक्तिहेतुश्रौतात्मधीसाधनश्रवणादिष्वावृत्त्याऽनुष्ठानसाधनात् पादादिसंगतिः। पूर्वपक्षे श्रवणादीनामदृष्टार्थत्वम्,

**'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत' (बृ.उ. ४।४।२१), 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छा.उ. ८।७।१) इति चैवमादिश्रवणेषु संशयः- किं सकृत् प्रत्ययः कर्तव्य आहोस्विदावृत्त्येति। किं तावत् प्राप्तम्? सकृत् प्रत्ययः स्यात् प्रयाजादिवत्। तावता शास्त्रस्य कृतार्थत्वात्। अश्रूयमाणायां ह्यावृत्तौ क्रियमाणायामशास्त्रार्थः कृतो भवेत्। नन्वसकृदुपदेशा उदाहृताः- 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्येवमादयः। एवमपि यावच्छब्दमावर्तयेत् सकृच्छ्रवणं सकृन्मननं सकृन्निदिध्यासनं चेति, नातिरिक्तम्। सकृदुपदेशेषु तु 'वेद' 'उपासीते'त्येवमादिष्वनावृत्तिरिति।**

**एवं प्राप्ते ब्रूमः- प्रत्ययावृत्तिः कर्तव्या। कुतः? असकृदुपदेशात्। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवंजातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति। ननूक्तं यावच्छब्दमेवावर्तयेत्, नाधिकमिति। न; [1]दर्शनपर्यवसानत्वादेषाम्। दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति। यथाऽवघातादीनि**

***प्रकटार्थविवरणम्***

सकृदनुष्ठितानि सम्यग्दर्शनसाधनानीति पूर्वपक्षमाह— **सकृदिति**। दर्शनक्रियायाः साधनाकाङ्क्षायां सकृत्साधनोपदेशेन नैराकाङ्क्ष्येऽसकृदुपदेशानुपपत्त्याऽऽवृत्तौ तात्पर्यं कल्प्यते; ततो नाशास्त्रार्थः कृतो भविष्यतीत्याह— **नन्वसकृदिति**। समुच्चितानां श्रवणादीनां साधनत्वाभिप्रायेणाप्यसकृदुपदेशसंभवान्नावृत्तौ तात्पर्यं कल्पयितुं शक्यत इत्याह— **एवमपीति**।

आत्मा द्रष्टव्यः साक्षात्कर्तव्य इति साक्षात्करणफलमुद्दिश्य श्रवणादीनि साधनानि विधीयन्ते। फलपर्यन्तमेव कर्म विधिविषय इति विशेषन्यायेनार्थसिद्धावृत्तिगुणविशिष्टन्यायेन[विशिष्टान्येव] श्रवणादीनि विधीयन्त इत्याह— **न, दर्शनपर्यवसानत्वादेषामिति**।

***भाष्यभावप्रकाशिका***

**तावता शास्त्रस्येति**। ननु भवतु शास्त्रस्य कृतार्थत्वम्, तथापि तत्पर्यन्तमनुष्ठानं किं न स्यादित्यत आह— **अश्रूयमाणायामिति**। **एवमपि यावच्छब्दमिति**। मुक्तिलक्षणफलस्यात्यन्तपरोक्षत्वात् तदर्थानि श्रवणादीन्यदृष्टार्थानीति यावद्विधानमनुष्ठेयानि, न ततोऽधिकं प्रमाणाभावादित्यर्थः।

**दर्शनपर्यवसानत्वादिति**। यद्यपि विदेहमुक्तिरदृष्टपूर्वा, तथाप्यविद्योच्छेदेनात्मनःस्वरूपावस्थानलक्षणाया मुक्तेः श्रुत्यनुभव-

***न्यायनिर्णयः***

सिद्धान्ते दृष्टार्थतैव तेषां फलतीत्यङ्गीकृत्य प्रश्नपूर्वकं पूर्वपक्षयति— **किं तावदिति**। यथा प्रयाजादयः सकृदनुष्ठिता दर्शपूर्णमासफलोपकारिणस्तथा श्रवणादिप्रत्ययोऽपि सकृदनुष्ठितः सम्यग्धीहेतुरित्यावृत्त्यानर्थक्यमित्यर्थः। अवघातादिवत् फलपर्यन्तमावृत्त्यनुष्ठानमाशङ्क्याह— **तावतेति**। शास्त्रस्य सकृदनुष्ठानेन कृतार्थत्वेऽपि तत्पर्यन्तमनुष्ठानं किं न स्यात्, तत्राह— **अश्रूयमाणायामिति**। दर्शनक्रियायाः साधनाकाङ्क्षायां सकृदेव साधनोपदेशेन नैराकाङ्क्ष्ये संभवत्यसकृदुपदेशानुपपत्त्या तात्पर्यमावृत्तौ कल्प्यते। तथा च नाशास्त्रार्थः कृतः स्यादिति शङ्कते— **नन्विति**। समुच्चितानां श्रवणादीनां साधनत्वधियाऽप्यसकृदुपदेशोपपत्तेरविरोधान्नावृत्तौ तात्पर्यमित्याह— **एवमिति**। निर्विशेषब्रह्मसाक्षात्कारफलेषु श्रवणादिष्वावृत्तिमपाकृत्य सविशेषब्रह्मसाक्षात्कारफलेष्वहंग्रहोपासनेष्वावृत्तिमपाकरोति— **सकृदिति**।

श्रवणादीनामहंग्रहोपास्तीनां च प्रयाजादिवदनुष्ठानाददृष्टार्थतेति प्राप्तं पूर्वपक्षमनूद्य सिद्धान्तयति— **एवमिति**। आवृत्तौ हेत्वभावमाशङ्क्य हेतुमवतार्य व्याचष्टे— **कुत इत्यादिना**। पूर्ववादी पूर्वोक्तं स्मारयति— **नन्विति**। अविद्योच्छेदेनात्मनः स्वरूपावस्थानरूपाया मुक्तेः श्रुत्यनुभवसिद्धत्वादविद्यायाश्च विद्यानान्तरीयकतयोच्छेदस्य रज्जुतत्त्वसाक्षात्कारादौ दृष्टत्वेन श्रवणादीनां दृष्टफलत्वाद् यावत्फलमवघातादिवदावर्तनीयानि तानीत्याह— **नेत्यादिना**। उक्तमेव स्फोरयति— **दर्शनेति**। यत्त्वहंग्रहोपासनेषु

[1] 'दर्शनपर्यवसितत्वात्' इति पा.।

**तण्डुलादिनिष्पत्तिपर्यवसानानि, तद्वत्। अपि चोपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियाऽभिधीयते। तथाहि– लोके 'गुरुमुपास्ते' 'राजानमुपास्ते' इति च यस्तात्पर्येण गुर्वादीननुवर्तते स एवमुच्यते। तथा 'ध्यायति प्रोषितनाथा पति'मिति या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा सैवमभिधीयते। विद्युपास्त्योश्च वेदान्तेष्वव्यतिरेकेण प्रयोगो दृश्यते। क्वचिद् विदिनोपक्रम्योपासिनोपसंहरति; यथा– 'यस्तद्वेद यत् स वेद स मयैतदुक्तः' (छा.उ. ४।१।४) इत्यत्र 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' (छा.उ. ४।२।२) इति। क्वचिच्चोपासिनोपक्रम्य विदिनोपसंहरति यथा– 'मनो ब्रह्मेत्युपासीत' (छा.उ. ३।१८।१) इत्यत्र 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद' (छा.उ. ३।१८।३) इति। तस्मात् सकृदुपदेशेष्वप्यावृत्तिसिद्धिः। असकृदुपदेशस्त्वावृत्तेः सूचकः।।१।।**

## लिङ्गाच्च।।२।।

### *प्रकटार्थविवरणम्*

न केवलम् आर्थिक आवृत्तिगुणः, किंत्वन्तर्भाव[भावात्] शब्दलभ्येत्याह[भ्य इत्याह]— **अपि चेति**। यच्चोक्तं वेदेत्यादि सकृदुपदेशेषु नावृत्तिर्लभ्यत इति, तत्राह— **विद्युपास्त्योश्चेति**। यः पुमान् तद् वस्तु वेद यत् स रैक्वो वेद स मयैतदुक्तः। सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्तीति संवर्गविद्यायां विदिनोपक्रम्योपासिनोपसंहरति। भो भगवन्तः एतां देवतां मे ममानुशाधि उपदिश, यां त्वमुपास्स इति रैक्वं प्रति जानश्रुतेः वचनम्। उपक्रमोपसंहारयोरैकरूप्यत्व[रूप्य]सिद्धये विद्युपास्त्योरेकार्थत्वं वक्तव्यम्; उपासनं चावृत्तिगुणकं यस्मात् तस्मादित्युपसंहारः।

**लिङ्गाच्च**।। लिङ्गाच्चावृत्तिर्न केवलमसकृदुपदेशादित्यर्थः। 'एतमु एवाहमध्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः

### *भाष्यभावप्रकाशिका*

सिद्धत्वादविद्यायाश्च विद्योत्पादेन समुच्छेदस्य रज्जुतत्त्वसाक्षात्कारादिषु दृष्टत्वाच्छ्रवणादीन्य[नां] दृष्टफलत्वात् 'यस्य स्यादद्धा न विचिकित्सा' 'देवो भूत्वा देवानप्येति' लिङ्गादहंग्रहोपासनानामुपास्यसाक्षात्करणदृष्टफलद्वारेणादृष्टसाधनत्वस्य वक्तव्यत्वाद् यावद्दृष्टं फलं तावदवघातादिवदावृत्त्यानुष्ठेयत्वमिति भावः। न केवलं युक्तित एवावृत्तिः, अपि तु शब्दसामर्थ्यादपीत्याह— **अपि चोपासनमिति**। उपासनशब्दश्रवणे भवत्वावृत्तिः, वेदेत्यादिशब्दप्रयोगे तु न स्यादित्याशङ्क्याह— **विद्युपास्त्योश्चेति**। कथं तर्हि श्रवणादिष्वावृत्तिसिद्धिरिति, तत्राह— **असकृदुपदेशस्त्विति**।

### *न्यायनिर्णयः*

सकृदुक्तेष्वावृत्तिशङ्कैव नास्तीति, तत्राह— **अपि चेति**। 'यस्य स्यादद्धा न विचिकित्साऽस्ति' 'देवो भूत्वा देवानप्येती'ति लिङ्गादहंग्रहोपास्तीनामुपास्यसाक्षात्कारद्वारा दृष्टार्थत्वस्य वक्तव्यत्वाद् यावत्फलमावृत्तिस्तास्वपि गम्यते, शब्दसामर्थ्याच्च तास्वावृत्तिरित्यर्थः। अन्तर्णीतावृत्तिगुणमुपासनमित्यत्र लोकसंमतिमाह— **तथा हीति**। ध्यानमपि तथाविधमित्यत्र तामेव दर्शयति— **तथेति**। उपासनशब्दश्रुतावावृत्तिसिद्धावपि 'वेदे'त्यादिप्रयोगे कथं तत्सिद्धिरित्याशङ्क्याह— **विदीति**। विदिनोपक्रम्योपासिनोपसंहारे संवर्गविद्या-मुदाहरति— **यथेति**। स रैक्वो यद्वेद तत्प्राणतत्त्वं सर्वं धर्मफलमभिसंगच्छते। एवं रैक्ववदन्योऽपि यस्तद्रैक्ववेद्यं वेद तस्यापि सर्वसाधुफलावाप्तिर्भवति, स तथाभूतो रैक्वो मयोक्तः। एतदिति क्रियाविशेषणम्। रैक्वमिव जानश्रुतिमल्पकं किमात्थेति हंसान्तरं प्रति हंसवचनम्। हे भगवो रैक्व, यां देवतामुपास्से तामेतां मामनुशाधि शिक्षय ज्ञापयेति जानश्रुतेरुक्तिः। अत्रोपक्रमोपसंहारयोरैकरूप्यसिद्धये विद्युपास्त्योरैकार्थ्यं वाच्यम्। उपासिनोपक्रम्य विदिनोपसंहारे दृष्टान्तमाह— **यथेति**। विद्युपास्त्योरैक्यमुपास्तिश्चावृत्तिगुणेति स्थिते फलितमाह— **तस्मादिति**। श्रवणादिष्वावृत्तेः शब्दसामर्थ्यलभ्यत्वाभावात् कथं तेषु तत्सिद्धिः, तत्राह— **असकृदिति**।।१।।

विषयसाक्षात्कारफलेषु प्रत्ययेष्वावृत्तौ हेत्वन्तरमाह— **लिङ्गाच्चेति**। न केवलमसकृदुक्तेरावृत्तिसिद्धिरपि तु लिङ्गादपीत्यर्थः।

**लिङ्गमपि प्रत्ययावृत्तिं प्रत्याययति। तथा ह्युद्गीथविज्ञानं प्रस्तुत्य 'आदित्य उद्गीथः' (छा.उ. १।५।१) इत्येतदेकपुत्रतादोषेणापोद्य 'रश्मींस्त्वं पर्यावर्तयात्' (छा.उ. १।५।२) इति रश्मिबहुत्वविज्ञानं बहुपुत्रतायै विदधत् सिद्धवत् प्रत्ययावृत्तिं दर्शयति। तस्मात् तत्सामान्यात् सर्वप्रत्ययेष्वावृत्तिसिद्धिः।**

**अत्राह— भवतु नाम साध्यफलेषु प्रत्ययेष्वावृत्तिः। तेष्वावृत्तिसाध्यस्यातिशयस्य संभवात्। यस्तु परब्रह्मविषयः प्रत्ययो नित्यशुद्धबुद्धमुक्तस्वभावमेवात्मभूतं परं ब्रह्म समर्पयति, तत्र किमर्थाऽऽवृत्तिरिति। सकृच्छ्रुतौ च ब्रह्मात्मत्वप्रतीत्यनुपपत्तेरावृत्त्यभ्युपगम इति चेत्? न; आवृत्तावपि तदनुपपत्तेः। यदि हि 'तत्त्वमसि' (छा.उ. ६।८।७) इत्येवंजातीयकं वाक्यं सकृच्छ्रूयमाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेत्, ततस्तदेवावर्त्यमानमुत्पादयिष्यतीति का प्रत्याशा स्यात्? अथोच्येत— न केवलं वाक्यं कंचिदर्थं साक्षात्कर्तुं**

### *प्रकटार्थविवरणम्*

पुत्रमुवाच' इत्यपोद्य रश्म्याधारमादित्यं तदाधारांश्च रश्मीनुद्गीथे संपाद्य त्वं पर्यावर्तयात् पर्यावर्तयेत्यर्थः। परिसमन्तादावर्तनमिह दर्शितम्; अतोऽन्यत्रापि उपासनसामान्यादावृत्तिसिद्धिरित्यर्थः।

तुषविमोकायावघातावृत्तिवत् परब्रह्मणि प्रत्ययावृत्तिर्व्यर्था। सकृदुत्पन्नमेव हि विज्ञानं सनिदानमनर्थं जेघ्नीयत इत्याक्षेपं शिष्यस्योद्भावयति— **अत्राहेत्यादिना**। शब्दस्य युक्तेर्वा ज्ञानजनने सामर्थ्यमस्ति चेदक्षसंप्रयोगवत् 'सकृत्तत्प्रवृत्तयोरेव[1] ज्ञानजनकत्वं स्यात्; न चेत्, न जातु स्यात्। उभयथाऽप्यावृत्तिः व्यर्थेत्युक्तम्। तत्र युक्तिवाक्याभ्यां ब्रह्मात्मत्वमात्रज्ञानं[2] भवति। साक्षात्काराय

### *भाष्यभावप्रकाशिका*

'तस्मात्त्वमेको मे पुत्रोऽसि रश्मींस्त्वं पर्यावर्तयाद् बहवो वै ते भविष्यन्ती'त्यत्र सिद्धवत्पर्यावृत्तिः प्रत्ययानां दर्शितेत्येतल्लिङ्गम्।।

अधिकरणार्थमुपवर्ण्य निर्गुणब्रह्मविषयत्वमस्याक्षिपति— **अत्राहेति**। ननु तत्रापरोक्ष्यलक्षणोऽतिशयः साध्योऽस्तीति, न; नित्यापरोक्षरूपत्वात् ब्रह्मण इत्यर्थः। नित्यापरोक्षत्वेऽपि ब्रह्मणस्तावताऽविद्याऽनिवृत्तेस्तन्निवृत्तये आगन्तुकः साक्षात्कारः प्रत्ययावृत्तिसाध्योऽस्तीति शङ्कते— **सकृच्छ्रुताविति**। आवर्त्यमानस्यापि ज्योतिष्टोमादिवाक्यस्य स्वार्थसाक्षात्कारजनकत्वादर्शनादिहा...लनमिति परिहरति पूर्ववादी— **न; आवृत्तावपीति**। तर्हि युक्तिसहितस्य तद्धेतुत्वं स्यादिति शङ्कते— **अथोच्येतेति**। युक्तिसहितस्यापि वाक्यस्य

### *न्यायनिर्णयः*

तदेव विवृणोति— **लिङ्गमपीति**। हे पुत्र त्वं रश्मीनादित्यं च भेदेन पर्यावर्तयादिति तकारमन्तर्भाव्य पर्यावर्तयतादिति मध्यमैकवचनं त्वंयोगात्। पर्यावर्तयोपास्स्वेत्यर्थः। आदित्यस्यैकस्यैवोद्गीथे संपाद्योपासनात् त्वमेको मे पुत्रोऽसि, त्वं तु रश्मीनुद्गीथे संपाद्य पर्यावर्तयतात्, ततो बहवस्ते पुत्रा भविष्यन्तीत्यत्र सिद्धवत्प्रत्ययावृत्तिर्दर्शितेत्येतल्लिङ्गमित्यर्थः। उद्गीथप्रत्ययावृत्तावपि कथं प्रत्ययान्तरेषु तत्सिद्धिः, तत्राह— **तदिति**। तेन प्रकृतेनोद्गीथप्रत्ययेन साक्षात्कारफलतया ध्यानत्वेन वा सादृश्यादिति यावत्। **सर्वप्रत्ययेषु** अहंग्रहोपासनादिषु श्रवणादिषु चेत्यर्थः।

अधिकरणार्थमुक्त्वा तस्य निर्गुणब्रह्मविषयत्वमाक्षिपति— **अत्रेति**। अहंग्रहोपास्तयः श्रवणादयश्च सविशेषनिर्विशेष-ब्रह्मसाक्षात्कारफलास्तावदिहोदाहरणम्, तत्राहंग्रहोपास्तिष्वावृत्तिमङ्गीकरोति— **भवत्विति**। श्रवणादिषु तां निराचष्टे— **यस्त्विति**। निर्गुणब्रह्मण्यापरोक्ष्यातिशयः साध्यो नास्ति, तस्य नित्यापरोक्षत्वात्, तेन तत्र श्रवणाद्यावृत्तिरनर्थिकेत्यर्थः। ब्रह्मणो नित्या-परोक्षत्वेऽपि तावताऽविद्याध्वस्तेरभावात् तदर्थमागन्तुकः साक्षात्कारः श्रवणाद्यावृत्तिसाध्योऽस्तीति शङ्कते— **सकृदिति**। पूर्ववाद्याह— **न; आवृत्ताविति**। अनुपपत्तिमेव प्रकटयति— **यदीति**। ज्योतिष्टोमादिवाक्यवदावृत्तिमदपि तत्त्वमादिवाक्यं न स्वार्थे साक्षात्कारक्षममित्यर्थः। युक्तिप्रसंख्यानसहितं वाक्यं स्वार्थे साक्षात्कारं जनयेदित्याह— **अथेति**। युक्तिसाहित्यमुपेत्यावृत्तिं

१. 'सकृत्प्रवृत्तयोः' इति पाठः स्यात्। २. 'ज्ञानमात्रं' इति पाठः स्यात्।

**शक्नोति, अतो युक्त्यपेक्षं वाक्यमनुभावयिष्यति ब्रह्मात्मत्वमिति। तथाऽप्यावृत्त्यानर्थक्यमेव। साऽपि हि युक्तिः सकृत्प्रवृत्तैव स्वमर्थमनुभावयिष्यति। अथापि स्यात्–युक्त्या वाक्येन च सामान्यविषयमेव विज्ञानं क्रियते न विशेषविषयम्। यथा– 'अस्ति मे हृदये शूल'मित्यतो वाक्याद् गात्रकम्पादिलिङ्गाच्च शूलसद्भाव-सामान्यमेव परः प्रतिपद्यते, न विशेषमनुभवति, यथा स एव शूली। विशेषानुभवश्चाविद्याया निवर्तकस्तत-स्तदर्थाऽऽवृत्तिरिति चेत्, न; असकृदपि तावन्मात्रे क्रियमाणे विशेषविज्ञानोत्पत्त्यसंभवात्। न हि सकृत्प्रयुक्ताभ्यां शास्त्रयुक्तिभ्यामनवगतो विशेषः शतकृत्वोऽपि प्रयुज्यमानाभ्यामवगन्तुं शक्यते। तस्माद् यदि शास्त्रयुक्तिभ्यां विशेषः प्रतिपाद्यते, यदि वा सामान्यमेवोभयथाऽपि सकृत्प्रवृत्ते[1] एव ते स्वकार्यं कुरुत इत्यावृत्त्यनुपयोगः। न च सकृत्प्रयुक्ते[2] शास्त्रयुक्ती कस्यचिदप्यनुभवं नोत्पादयत इति शक्यते नियन्तुं, विचित्रप्रज्ञत्वात् प्रतिपत्तॄणाम्। अपि चानेकांशोपेते लौकिके पदार्थे सामान्यविशेषवत्येकेनावधानेनैकमंशमवधारयत्यपरेणापरमिति**

### *प्रकटार्थविवरणम्*

त्वावृत्त्यपेक्षेति चोदकश्चोचुदीति— **अथापि स्यात् युक्त्या वाक्येन चेति**। तत्राप्येतदेव वाच्यम्, युक्तिवाक्ये किं साक्षात्काराय समर्थे, किं वा न; आद्ये साक्षात्कारोऽपि सकृत्प्रवृत्ताभ्यामेव भवेत्; अन्त्ये युक्तिवाक्ये आवृत्त्यपेक्षयाऽपि न साक्षात्कारजनके; तत्रासमर्थत्वाल्लैङ्गिकज्ञानवदित्याह— **नासकृदिति**। ननु चतुरचेताः श्वेतकेतुरपि नवकृत्व उपदेशे यदा विजज्ञौ तदा कैव कथा मलबहुलकलेबराणामसकृदुपदेशेऽपि[3] ज्ञानोदयस्य? अतोऽवश्यंभाविन्यावृत्तिरित्याशङ्क्याह— **न च सकृत्प्रवृत्ते इति**। जन्मान्तरीय-संस्कारप्रचयवतां सकृदुपदेशेऽपि साक्षात्कारः संबोभवीति शुकवामदेवादीनामिवेत्यर्थः। [4]**भास्करो**द्गारोऽपि जन्मान्तरीयसंस्कार-सामर्थ्यबोधविरहप्रयुक्तः सर्वज्ञतामन्तरेण न कस्यचिदित्यवधारणगोचरो मूर्खत्वमेव तस्याविष्करोति। [5]सोपमानेनानुमाने जगति मतिवैचित्र्यविलोपः इति। एवं तावद् युक्तिवाक्यसामर्थ्यानुसारेणावृत्त्यानर्थक्यमुक्त्वा प्रमेयस्वभावपर्यालोचनयाऽप्यावृत्त्यानर्थक्यमाह— **अपि चानेकांशोपेत इति**।

### *भाष्यभावप्रकाशिका*

सकृत्प्रवृत्तिरेव स्यादिति परिहरति— **तथापीति**। एकदेशिनां परिहारमाह— **अथापि स्यादिति**। इहापि सामान्यप्रतिपत्तिरेवास्तु किं विशेषानुभवेनेत्यत्राह— **विशेषानुभवश्चेति**। तर्हि साक्षात्कारो भावनाजन्यः, किं वा शास्त्रयुक्तिजन्यः? न तावदाद्यस्तस्या-प्रमाणकृततयाऽविद्यानिवर्तकतायोगात्। अथ द्वितीयस्तत्राह— **नासकृदिति**। प्रत्यक्षप्रमाणव्यतिरिक्तस्य न साक्षात्कारजनकत्वमित्यर्थः। साक्षात्कारहेतुत्वाभ्युपगमेऽपि शास्त्रस्यावृत्त्यानर्थक्यमित्याह— **न च सकृदिति**। प्रमाणस्वभावालोचनया ऽऽवृत्त्यानर्थक्यमित्याह— **न च सकृदिति**। प्रमाणस्वभावालोचनया आवृत्यानर्थक्यमुक्तम्। इदानीं प्रमेयस्वभावालोचनयाऽपि तदानर्थक्यमित्याह— **अपि चानेकांशेति**।

### *न्यायनिर्णयः*

प्रत्याह— **तथापीति**। आवृत्तेरर्थवत्त्वं समर्थयमानः स्वयूथ्यश्चोदयति— **अथापीति**। तदेव दृष्टान्तेन स्पष्टयति— **यथेति**। शूलविशेषस्यानुभवायोग्यत्वादेवमित्याशङ्क्याह— **यथेति**। अस्तु प्रस्तुतेऽपि सामान्यधीरेव, किं विशेषधियेत्याशङ्क्याह— **विशेषेति**। स तर्हि भावनाजन्यो वा शास्त्रयुक्तिजन्यो वा? नाद्यस्तस्यामानजन्यत्वेनाविद्याध्वंसित्वायोगादिति मत्वा द्वितीयं प्रत्याह— **नेति**। प्रत्यक्षातिरिक्तस्य न साक्षात्कारहेतुतेत्यर्थः। किंच युक्तिवाक्ये साक्षात्कारक्षमे तदक्षमे वा? समर्थे चेदावृत्त्यानर्थक्यम्। द्वितीयं निराह— **न हीति**। सामर्थ्यासामर्थ्ययोरावृत्त्यानर्थक्यमुपसंहरति— **तस्मादिति**। शास्त्रयुक्त्योः साक्षात्कारहेतुत्वोपगमेऽपि व्यर्थाऽऽवृत्तिरित्याह— **न चेति**। मानस्वभावानुसारेणावृत्त्यानर्थक्यमुक्त्वा मेयस्वभावालोचनयाऽपि तदानर्थक्यमाह— **अपि चेति**।

---

१-२. 'प्रयुक्ते' 'प्रवृत्ते' इति पा.। ३. 'सकृदुपदेशेऽपि' इति युक्तं पाठान्तरम्। ४. द्र. भास्करभाष्यम् पृ. २२०। ५. 'स्वोपमानेन' इति पाठः स्यात्।

**स्यादप्यभ्यासोपयोगो यथा दीर्घप्रपाठकग्रहणादिषु। न तु निर्विशेषे ब्रह्मणि सामान्यविशेषरहिते चैतन्यमात्रात्मके प्रमोत्पत्तावभ्यासापेक्षा युक्तेति।**

**अत्रोच्यते– भवेदावृत्त्यानर्थक्यं तं प्रति यस्तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं शक्नुयात्। यस्तु न शक्नोति, तं प्रत्युपयुज्यत एवावृत्तिः। तथाहि– छान्दोग्ये 'तत्त्वमसि श्वेतकेतो' (छा.उ. ६।८।७) इत्युपदिश्य 'भूय एव मा भगवान्विज्ञापयतु' (छा.उ. ६।८।७) इति पुनः पुनः परिचोद्यमानस्तत्तदाशङ्काकारणं निराकृत्य तत्त्वमसीत्येवासकृदुपदिशति। तथा च 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.उ. ४।५।६) इत्यादि दर्शितम्। ननूक्तं सकृच्छ्रुतं चेत् तत्त्वमसिवाक्यं स्वमर्थमनुभावयितुं न शक्नोति तत आवर्त्यमानमपि नैव शक्ष्यतीति। नैष दोषः। न हि दृष्टेऽनुपपन्नं नाम। दृश्यन्ते हि सकृच्छ्रुताद् वाक्यान्मन्दप्रतीतं वाक्यार्थमावर्तयन्तस्तत्तदाभासव्युदासेन सम्यक्प्रतिपद्यमानाः।**

**अपि च तत्त्वमसीत्येतद्वाक्यं त्वंपदार्थस्य तत्पदार्थभावमाचष्टे। तत्पदेन च प्रकृतं सद् ब्रह्मेक्षितृ जगतो जन्मादिकारणमभिधीयते 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ. २।१।१), 'विज्ञानमानन्दं ब्रह्म' (बृ.उ. ३।९।२८), 'अदृष्टं द्रष्टृ' (बृ.उ. ३।८।११), 'अविज्ञातं विज्ञातृ' (बृ.उ. ३।८।११), 'अजमजरममरम्', 'अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ.उ. ३।८।८) इत्यादिशास्त्रप्रसिद्धम्। तत्राजादिशब्दैर्जन्मादयो भावविकारा निवर्तिताः।**

### *प्रकटार्थविवरणम्*

अधिकारिभेदेनावृत्तेः सार्थक्यमानर्थक्यं चाह— **अत्रोच्यत इत्यादिना**। यथा गान्धर्वशास्त्राभ्याससहकृतेन श्रोत्रेण षड्जादिविभागसाक्षात्कारो जायते प्रथममनुत्पन्नोऽपि, तथा युक्तिसहकृताद् वाक्यात् प्रथममनुत्पन्नोऽप्यनुभव आवृत्तिसहकृताज्जायमानो दृष्टः कथंकारं वार्यत इत्याह— **न हि दृष्टेऽनुपपन्नं नामेति**। लक्ष्यपदार्थाज्ञानादिदोषप्रतिबन्धादेव च पारोक्ष्यभ्रमो भवति। तद्व्युदासायापि अवश्यमावृत्तिरङ्गीकरणीयेत्याह— **अपि च तत्त्वमसीत्यादिना**। यच्च प्रमेयस्य निरंशत्वादावृत्त्यानर्थक्यमुक्तं,

### *भाष्यभावप्रकाशिका*

किं सर्वान् प्रत्यानर्थक्यमुच्यते, किं वा कञ्चिदेव प्रति? यदि द्वितीयस्तद(ङ्गाङ्गि)ङ्गीक्रियत इत्याह— **भवेदिति**। अपरोक्षस्वभावत्वात् ब्रह्मणस्तद्विष.....यस्तु न शक्नोति तादृग्भूत एव नास्तीत्याशङ्क्याह— **तथा हीति**। वाक्यार्थज्ञानस्य (पदार्थज्ञानस्य) पदार्थज्ञानपूर्वकत्वात् पदार्थयोश्चात्यन्तदुर्बोधत्वादावृत्त्यपेक्षया क्रमेणैव प्रतिपत्तिर्न सहसेत्याह— **अपि च तत्त्वमसीति**। ब्रह्मणा कथंभूतेन त्वंपदार्थस्यैक्यमुपदिश्यत इति, तत्राह— **सत्यं ज्ञानमिति**। वाक्यानामर्थमाह— **तत्राजादिशब्दैरिति**। ननु सांशत्वे पद्मरागादिवत् क्र...तीतिं प्रतिपत्तिरुच्यते। निरंशं तु ब्रह्म। अतस्तत्सकृदेव गृह्यते, न तु

### *न्यायनिर्णयः*

यं कंचिदधिकारिणं प्रति श्रवणाद्यावृत्त्यानर्थक्यं चोद्यते, सर्वानेव वा प्रतीति विकल्पयति— **अत्रेति**। आद्यमङ्गीकरोति— **भवेदिति**। ब्रह्मणोऽपरोक्षत्वाद् वाक्यस्य परोक्षबोधित्वे प्रामाण्यायोगादसति चित्तविक्षेपादिप्रतिबन्धे तस्यापरोक्षबोधित्वमेवेत्यर्थः। द्वितीयं दूषयति— **यस्त्विति**। असंभावनादिप्रतिबन्धे तन्निवृत्त्यर्थमावृत्तिरर्थवतीत्यर्थः। तत्र श्रौतं लिङ्गमाह— **तथा हीति**। सूत्रकृताऽपि लिङ्गमङ्गीकृतमित्याह— **तथा चेति**। पूर्ववादी स्वोक्तं स्मारयति— **नन्विति**। अनुभवानुसारेण परिहरति— **नेत्यादिना**। कथमावृत्तेरर्थवत्त्वं दृष्टं येन नानुपपत्तिः, तत्राह— **दृश्यन्ते हीति**। वाक्यार्थज्ञानस्य पदार्थधीपूर्वकत्वात् पदार्थयोश्च दुर्ज्ञानत्वादावृत्त्या क्रमेणैव धीरिति हेत्वन्तरमाह— **अपि चेति**। तत्र तत्पदवाच्यमर्थमाह— **तदिति**। तस्यैव लक्ष्यमर्थमाह— **सत्यमिति**।

**अस्थूलादिशब्दैश्च स्थौल्यादयो द्रव्यधर्माः। विज्ञानादिशब्दैश्च चैतन्यप्रकाशात्मकत्वमुक्तम्। एष व्यावृत्तसर्वसंसारधर्मकोऽनुभवात्मको ब्रह्मसंज्ञकस्तत्पदार्थो वेदान्ताभियुक्तानां प्रसिद्धः। तथा त्वंपदार्थोऽपि प्रत्यगात्मा श्रोता देहादारभ्य प्रत्यगात्मतया संभाव्यमानश्चैतन्यपर्यन्तत्वेनावधारितः। तत्र येषामेतौ पदार्थाविज्ञानसंशयविपर्ययप्रतिबद्धौ तेषां तत्त्वमसीत्येतद् वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति, पदार्थज्ञानपूर्वकत्वाद् वाक्यार्थस्येत्यतस्तान् प्रत्येष्टव्यः पदार्थविवेकप्रयोजनः शास्त्रयुक्त्यभ्यासः। यद्यपि च प्रतिपत्तव्य आत्मा निरंशस्तथाप्यध्यारोपितं तस्मिन् बह्वंशत्वं देहेन्द्रियमनोबुद्धिविषयवेदनादिलक्षणम्, तत्रैकेनावधानेनैकमंशमपोहत्यपरेणापरमिति युज्यते तत्र क्रमवती प्रतिपत्तिः। तत्तु पूर्वरूपमेवात्मप्रतिपत्तेः। येषां पुनर्निपुणमतीनां नाज्ञानसंशयविपर्ययलक्षणः पदार्थविषयः प्रतिबन्धोऽस्ति ते शक्नुवन्ति सकृदुक्तमेव तत्त्वमसिवाक्यार्थमनुभवितुमिति तान् प्रत्यावृत्त्यानर्थक्यमिष्टमेव। सकृदुत्पन्नैव ह्यात्मप्रतिपत्तिरविद्यां निवर्तयतीति नात्र कश्चिदपि क्रमोऽभ्युपगम्यते।**

**सत्यमेवं युज्येत यदि कस्यचिदेवं प्रतिपत्तिर्भवेत्। बलवती ह्यात्मनो दुःखित्वादिप्रतिपत्तिः। अतो न**

### *प्रकटार्थविवरणम्*

तत्राह— **यद्यपि चेति**। स्वतो निरंशत्वेऽपि वादिसमारोपितानां बहूनां व्यावर्त्यांशानां सद्भावाद् घटते क्रमवती प्रतिपत्तिरित्यर्थः। ननु पूर्वाध्यायान्ते निरतिशयैवात्मप्रतिपत्तिरित्युक्तम्। कथमिदानीं तस्य परिच्छेददुःखित्वादिव्यावर्त्यांशभेदात् सातिशयत्वमुच्यते? तत्राह— **तत्तु पूर्वरूपमेवेति**। सेयं विचाराद्युत्या क्रमवती प्रतिपत्तिः, तत्पूर्वरूपमेव साक्षात्काररूपायाः प्रतिपत्तेः; एकरसस्वरूपसाक्षात्कारस्तु निरतिशय उक्त इत्यर्थः। एवं तावत् साक्षात्कारात्पूर्वं श्रवणाद्यावृत्तेः अर्थवत्त्वमुक्त्वा यदुक्तमधिकारिविशेषं प्रत्यावृत्त्यानर्थक्यं तद्विवृणोति— **येषां पुनरित्यादिना**।

बलवत्प्रत्यक्षविरोधादेवंविधात्मप्रतिपत्तिरेव न संभवतीत्याह— **सत्यमेवं युज्येतेति**। पूर्वं बहुशः परिहृत(मिद)मेतदित्याह—

### *भाष्यभावप्रकाशिका*

क्रमेणेत्युक्तमिति, तत्राह— **यद्यपि चेति**। अध्यारोपितानां व्यावर्त्यानामंशानां बहुत्वात् क्रमवत्त्वं युक्तमित्यर्थः। अहं ब्रह्मास्मीति वाक्यात् तदर्थप्रतिपत्तौ सत्यां पुनः कथं क्रमापेक्षेत्यत आह— **तत्तु पूर्वरूपमेवेति**। क्रमेण जायमानाः पूर्वप्रतिपत्तयो न साक्षात्काररूपा इत्यर्थः। कथं तर्हि गर्भस्थस्यैव वामदेवस्य वाक्यार्थप्रतिपत्तिरिति, तत्राह— **येषां पुनरिति**।

शङ्कते— **सत्यमेवेति**। दुःखित्वादिप्रत्ययस्य सर्वदैवोत्पद्यमानत्वादेवाभ्रान्तित्वमिति न विद्यया समुच्छेद्यत्वमित्यर्थः। सर्वेषां

### *न्यायनिर्णयः*

अजमित्यादिवाक्यस्यार्थमाह— **तत्रेति**। अस्थूलादिवाक्यस्यार्थमाह— **अस्थूलादीति**। सत्यज्ञानादिवाक्यस्यापुनरुक्तमर्थमाह— **विज्ञानादीति**। श्रौते तदर्थे विद्वदनुभवमपि प्रमाणयति— **एष इति**। तत्पदार्थं वाच्यं लक्ष्यं च सप्रमाणमुक्त्वा त्वंपदार्थमपि विभज्य दर्शयति— **तथेति**। अवधारितो 'योऽयं विज्ञानमयः प्राणेषु' 'यः प्राणेन प्राणिती'त्यादिनेति शेषः। स्यातामेतौ पदार्थौ, तथापि कथमावृत्तेरर्थवत्त्वं, तत्राह— **तत्रेति**। यत्तु मेयस्यानंशत्वादावृत्त्यानर्थक्यमिति, तत्राह— **यद्यपीति**। आरोपितव्यावर्त्यांशबाहुल्यात् क्रमवत्त्वं प्रतिपत्तेरर्थवदित्यर्थः। तत्त्वमसिवाक्यादहंब्रह्मेति वाक्यार्थज्ञाने सति कथं क्रमापेक्षेत्याशङ्क्याह— **तत्त्विति**। क्रमेण जातं पूर्वज्ञानमात्मसाक्षात्कारात् पूर्वकालमेव ततोऽसंभावनादिनिरासससहितवाक्योत्थतत्त्वसाक्षात्कारे नास्त्येवावृत्त्यपेक्षेत्यर्थः। मन्दमध्यमौ प्रति साक्षात्कारात्पूर्वं श्रवणाद्यावृत्तेरर्थवत्त्वमुक्तम्। इदानीमुत्तमं प्रत्यावृत्त्यानर्थक्यमुक्तं विवृणोति— **येषामिति**। उत्पन्नाऽपि धीरावृत्तिमपेक्षते फलायेत्याशङ्क्याह— **सकृदिति**।

उत्पन्ने ज्ञाने यदावृत्त्यानर्थक्यं तदङ्गीकुर्वन्नाह— **सत्यमिति**। वाक्यादीदृशी धीः स्यादित्याशङ्क्याध्यक्षादिविरोधान्नैवमित्याह— **बलवतीति**।

**दुःखित्वाद्यभावं कश्चित् प्रतिपद्यत इति चेत्? न; देहाद्यभिमानवद्दुःखित्वाद्यभिमानस्य मिथ्याभिमानत्वोपपत्तेः। प्रत्यक्षं हि देहे छिद्यमाने दह्यमाने वाऽहं छिद्ये दह्य इति च मिथ्याभिमानो दृष्टः। तथा बाह्यतरेष्वपि पुत्रमित्रादिषु संतप्यमानेष्वहमेव संतप्य इत्यध्यारोपो दृष्टः। तथा दुःखित्वाद्यभिमानोऽपि स्यात्। देहादिवदेव चैतन्याद् बहिरुपलभ्यमानत्वाद्दुःखित्वादीनां सुषुप्तादिषु चाननुवृत्तेः। चैतन्यस्य तु सुषुप्तेऽप्यनुवृत्तिमामनन्ति– 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति' (बृ.उ. ४।३।२३) इत्यादिना। तस्मात् सर्वदुःखविनिर्मुक्तैक-चैतन्यात्मकोऽहमित्येष आत्मानुभवः। न चैवमात्मानमनुभवतः किंचिदन्यत् कृत्यमवशिष्यते। तथा च श्रुतिः– 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' (बृ.उ. ४।४।२२) इत्यात्मविदः कर्तव्याभावं दर्शयति। स्मृतिरपि– 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते' (भ.गी. ३।१७) इति। यस्य तु नैषोऽनुभवो द्रागिव जायते तं प्रत्यनुभवार्थ एवावृत्त्यभ्युपगमः। तत्रापि**

### *प्रकटार्थविवरणम्*

**न, देहादीति**। दुःखित्वादयो न तत्त्व[तत्त्वतः]आत्मधर्म[धर्माः]वेद्यत्वाद् व्यभिचारित्वाद्वा, देहधर्मवदित्याह— **देहादिवदेवेति**। तर्हि चैतन्यस्यापि सुषुप्ते व्यभिचारादात्मधर्मत्वं न स्यादित्याशङ्क्याह— **चैतन्यस्य त्विति**। यस्माद् दुःखित्वादिप्रत्ययो मिथ्याभिमानं[नः], चैतन्यमेवाव्यभिचारिस्वरूपम्, तस्मादात्मानुभवो न विरुध्यत इत्याह— **तस्मादिति**। यथोक्तानुभवादेव च कृतकृत्यतेत्याह— **न चैवमात्मानमिति**। यदुक्तं साक्षात्कारात् प्रागावृत्तेरर्थवत्त्वम्, तदिदानीं निगमयति अधिकविवक्षया— **यस्य त्विति**। **द्रागिव** झटिति। नन्वावृत्तौ नियोगबलात् प्रवृत्तिर्वक्तव्या; अतो नियोगसिद्ध्यर्था प्रवृत्तिर्नानुभवार्थेत्याशङ्क्याह— **तत्रापीति**। 'अहं ब्रह्मास्मि' इति प्रत्ययात् प्रच्याव्य नावृत्तौ पुरुषं प्रवर्तयेत्, प्रधानविरोधप्रसङ्गात्। अकर्त्रात्मानुभवोद्देशेन हि श्रवणादिविधानम्, न नियोगोद्देशेन;

### *भाष्यभावप्रकाशिका*

सर्वदोत्पद्यमानस्यापि देहात्माभिमानस्य भ्रान्तित्वदर्शनात् दुःखिताभिमानस्यापि युक्तिबाधितत्वात् भ्रान्तित्वमेवेत्याह— **न देहाद्यभिमानवदिति**। एतदेव प्रपञ्चयति— **प्रत्यक्षमिति**। व्यभिचारित्वात् दुःखित्वादीनामनात्मधर्मत्वमित्याह— **सुषुप्तादिषु चेति**। तर्हि चैतन्यमपि स्वरूपं न स्यादननुवृत्तत्वादित्याशङ्क्याह— **चैतन्यस्य त्विति**। अतो विशिष्टा प्रतिपत्तिः संभवतीत्युपसंहरति— **तस्मात्सर्वेति**। अतश्च तं प्रत्यावृत्तिरनर्थिकेत्याह— **न चैवमिति**। ननु कस्मादनुभवार्थ एवावृत्त्यभ्युपगमः, 'श्रोतव्य' इत्यादिवाक्यैस्तत्त्वमसि-वाक्यविषयादन्यविषय एवावृत्तेर्विधीयमानत्वादित्याशङ्क्याह— **तत्रापीति**। उपक्रमोपसंहारालोचनायामुभयोरपि श्रुत्योर्ब्रह्मात्मविषयत्वाव-गमादन्यविषयत्वे चावृत्तिश्रुतेःशेषिविरोधप्रसङ्गादित्यर्थः। अथवा अनुभवार्थत्वेनावृत्त्यभ्युपगमे तद्विषये नियोज्यत्वं स्यादित्याशङ्क्याह— **तत्रापीति**।

### *न्यायनिर्णयः*

सा वाक्यीयविद्योच्छेद्यत्वाद् भ्रान्तिरित्याशङ्क्याह— **अत इति**। दुःखित्वादिप्रत्ययस्य सर्वदा सर्वेषामुत्पद्यमानस्य बलवत्त्वादेव विद्योच्छेद्यत्वायोगान्न भ्रान्तितेत्यर्थः। तथाविधस्यापि देहात्माभिमानस्य भ्रान्तित्वाद् दुःखित्वाद्यभिमानस्यापि युक्तिबाधितस्य भ्रान्तित्वसिद्धेर्नैवमित्याह— **नेत्यादिना**। उक्तं दृष्टान्तं प्रत्यक्षदृष्टान्ताभ्यां स्पष्टयति— **प्रत्यक्षं हीति**। दुःखादयस्तत्त्वतो नात्मधर्मा वेद्यत्वात् संमतवदिति दार्ष्टान्तिकमाह— **तथेति**। व्यभिचारित्वाच्च दुःखादीनां रूपादिवत् तत्त्वतो नात्मधर्मतेत्याह— **सुषुप्तेति**। तर्हि चैतन्यमपि न स्वरूपमननुवृत्तत्त्वाद् दुःखादिवदित्याशङ्क्याह— **चैतन्यस्येति**। दुःखित्वादिधीर्मिथ्याभिमानश्चैतन्यमेवाव्यभिचारिस्वरूपमिति स्थिते फलितमाह— **तस्मादिति**। यथोक्तानुभवे वाक्यादविरुद्धेऽपि किमित्यावृत्तिर्नेष्यते, तत्राह— **न चेति**। तस्मादेवानुभवात् कृतकृत्यतेत्यत्र मानमाह— **तथा चेति**। रतिरासक्तिः, तत्फलं तृप्तिः, तृप्तेरपि फलं संतोष इति भेदः। यत्तु साक्षात्कारात् पूर्वमावृत्तेरर्थवत्त्वमुक्तं तदधिकविवक्षया निगमयति— **यस्येति**। **द्रागिति** झटिति। नियोगबलादावृत्तौ प्रवृत्तेर्नियोगार्थाऽऽवृत्तिर्नानु-भवार्थेत्याशङ्क्याह— **तत्रापीति**। अहं ब्रह्मास्मीति प्रत्ययात् प्रच्याव्य नावृत्तौ पुरुषं प्रवर्तयेत् प्रधानविरोधात्। अकर्त्रात्मानुभवाय

**न तत्त्वमसिवाक्यार्थात् प्रच्याव्यावृत्तौ प्रवर्तयेत्। न हि वरघाताय कन्यामुद्वाहयन्ति। नियुक्तस्य चास्मिन्नधिकृतोऽहं कर्ता मयेदं कर्तव्यमित्यवश्यं ब्रह्मप्रत्ययाद्विपरीतप्रत्यय उत्पद्यते। यस्तु स्वयमेव मन्दमतिरप्रतिभानात् तं वाक्यार्थं जिहासेत्, तस्यैतस्मिन्नेव वाक्यार्थे स्थिरीकार आवृत्त्यादिवाचोयुक्त्याऽभ्युपेयते। तस्मात् परब्रह्मविषयेऽपि प्रत्यये तदुपायोपदेशेष्वावृत्तिसिद्धिः।।२।।**

।।इति प्रथममावृत्त्यधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

।।आत्मत्वोपासनाधिकरणम्।।

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च।।३।।** द्रष्टृद्रष्टव्यनियन्तृनियन्तव्याधिष्ठात्रधिष्ठेयेशित्रीशितव्यत्वादिसंबन्धैः जीवब्रह्मणोः भेदलिङ्गैः, 'द्वा सुपर्णा' 'ऋतं पिबन्तौ' इति द्वित्वश्रुतेश्च जीवब्रह्मणोर्भेदे सिद्धे असंसार्यात्मतत्त्वस्य संसारिजीवप्रत्यक्षेण विरोधाच्च ममेश्वर इति प्रतिपत्तौ प्राप्तायाम् 'नान्योऽतोऽस्ति द्रष्टा' 'नान्यदतोऽस्ति द्रष्टृ' 'नेह नानास्ति किञ्चन' इति फलवत्प्रमाणान्तरानधिगतभेद-प्रतिषेधविषयतया तात्पर्यवत्या भेदनिषेधश्रुत्या अविवक्षितभेदलिङ्गानां बाधात्, भेदाभेदे निषिध्यमानभेदस्यैव सत्त्वे एकस्यैवैकोपाधौ

### *प्रकटार्थविवरणम्*

प्रधानविरोधश्चायुक्त इत्याह— **न हीति**। नियोगसिद्ध्यर्थमावृत्त्यभ्युपगमेऽपि नाकर्त्रात्मानुभवो व्याहन्यते, नियोगादेव तत्सिद्धेरित्याशङ्क्याह— **नियुक्तस्य चेति**। 'अस्मिन् नियोगेऽधिकृतः अहं कर्ता मयेदं कर्तव्यं कर्म' इत्यवश्यं विपरीतः प्रत्ययः स्यात्, कर्त्रन्वयस्याधिकारान्वयपुरः-सरत्वात् नियोगवादे। न च नियोगोऽनुभवे हेतुर्लोके प्रसिद्धः। तस्मान्नियोगोद्देशेनावृत्त्यभ्युपगमे ब्रह्मानुभवो विरुध्यत एवेत्यर्थः। नियोगानङ्गीकारे कस्तर्ह्यावृत्तिविध्यर्थ इत्याशङ्क्याह— **यस्तु स्वयमेवेति**। [1]सकृच्छ्रुताद्वाक्याद्यसंभावनया यो जिहासेत् तस्य मन्दमतेः तस्मिन्नेव वाक्यार्थे चित्तस्थिरीकाराय 'आवृत्त्या श्रवणादीनि तव ब्रह्मानुभवसाधनानी'त्युपदिश्यत इत्यर्थः। अधिकरणार्थमुप-संहरति— **तस्मादिति**। इति प्रथममावृत्त्यधिकरणम्।।

### *भाष्यभावप्रकाशिका*

नियोगविषयत्वे अभ्युपगते कथं प्रधानविरोध इति, तत्राह— **नियुक्तस्य चेति**। ननु पदार्थविवेके सत्यपि वाक्यार्थज्ञानं न जायते कस्यचिदतस्तदर्थत्वेनावृत्तौ नियोज्यत्वमभ्युपगन्तव्यम्, सूत्रकारेणाप्यावृत्तिविधानाङ्गीकारादित्याशङ्क्याह— **यस्तु स्वयमेवेति**। स्थिरीभावः असंभावनाविपरीतभावनापोहेनावगमः। कुतस्तर्ह्यावृत्तिरिति, तत्राह— **तस्मात्परब्रह्मेति**। अयं भावः—निर्गुणब्रह्मप्रत्ययावृत्तिर्न विधीयते। किन्तु तत्र विपर्ययापोहेन निश्चयज्ञानोदयाय श्रवणाद्यावृत्तिर्विधीयते। तस्यां चानुष्ठीयमानायां नान्तरीयकतया ब्रह्मप्रत्ययावृत्तिसिद्धिरिति। इति प्रथममावृत्त्यधिकरणम्।।

### *न्यायनिर्णयः*

हि श्रवणादिविधिर्न नियोगायेत्यर्थः। प्रधानविरोधायोगे दृष्टान्तमाह— **न हीति**। नियोगार्थमावृत्त्युपगमेऽपि तस्मादेवाकर्त्रात्मधीसिद्धेर्न तद्व्याहतिरित्याशङ्क्याह— **नियुक्तस्येति**। नियोगानङ्गीकारे कुतः श्रोतव्यादिवाक्यैः श्रवणाद्यावृत्तिसिद्धिः, तत्राह— **यस्त्विति**। अप्रतिभानादसंभावनादिप्रतिबन्धादिति यावत्। स्थिरीकारोऽसंभावनाद्यपोहेनावगमदार्ढ्यम्। वेदोपासीतेत्यावृत्तिर्वाचोयुक्तिः। आदिशब्देन श्रोतव्यादिवाक्यं गृह्यते। अहंग्रहोपासनेषु श्रवणादिषु च सगुणनिर्गुणसाक्षात्कारफलेष्वावृत्त्याऽनुष्ठानमित्यधिकरणार्थमुपसंहरति— **तस्मादिति**। अपरब्रह्मविषयप्रत्यये स्वरूपावृत्तिवदित्यपेरर्थः।।२।। इति प्रथममावृत्त्यधिकरणम्।।

---

१. अत्र पाठाशुद्धिः भाति।

२।।आत्मत्वोपासनाधिकरणम्।।सू. ३।।

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च।।३।।

**यः शास्त्रोक्तविशेषणः परमात्मा स किम् 'अह'मिति ग्रहीतव्यः, किं वा 'मदन्य' इत्येतद् विचारयति। कथं पुनरात्मशब्दे प्रत्यगात्मविषये श्रूयमाणे संशय इति। उच्यते— अयमात्मशब्दो मुख्यः शक्यतेऽभ्युपगन्तुं सति जीवेश्वरयोरभेदसंभवे; इतरथा तु गौणोऽयमभ्युपगन्तव्य इति मन्यते। किं तावत् प्राप्तम्? नाहमिति ग्राह्यः। न ह्यपहतपाप्मत्वादिगुणो विपरीतगुणत्वेन शक्यते ग्रहीतुम्, विपरीतगुणो वाऽपहतपाप्मत्वादिगुणत्वेन।**

### *शारीरकन्यायसंग्रहः*

सत्त्वासत्त्वप्रसङ्गात्, 'स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः।' इति प्रमाणान्तरानधिगततत्फलत्वाभ्यां[गतत्वफलवत्त्वाभ्यां] तात्पर्यवदेकत्वश्रुत्या पूर्वसिद्धद्वित्वानुवादिकायाः 'द्वा सुपर्णा' इति द्वित्वश्रुतेः चन्द्रैकत्वेन द्वित्वस्येव बाधात्, सत्यप्येकत्वे द्वित्वस्यातुल्यप्रमाणेन व्यवस्थापयितुमशक्यत्वात्, दुःखित्वादिधर्मप्रत्यक्षस्य विप्रकृष्टस्य सन्निहिततरेण ब्रह्मात्मप्रत्यक्षेण अनुमानस्येव बाधात्, बिम्बप्रतिबिम्बवत् सर्वप्रकारविरोधाभावात् 'अहं ब्रह्मास्मि' इति तादात्म्यवाक्यैः 'आत्मा ब्रह्मे'ति प्रतिपत्तव्यमित्युक्तम्।

### *प्रकटार्थविवरणम्*

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च**।। श्रवणमनननिदिध्यासनादीनि साधनान्यावृत्त्याऽनुष्ठेयानि इत्युक्तम्; तत्र ध्यानकाले कथं प्रत्ययावृत्तिः कर्तव्येत्येतद् विचारयति— **यः शास्त्रोक्तेति**। विचारारम्भमाक्षिप्य समाधत्ते— **कथं पुनरिति**। भेदस्यापि प्रामाणिकत्वं मन्यमानस्यायं संशयो युक्त इत्यर्थः। 'अस्मत्स्वामी परमेश्वर' इत्ययमेव प्रत्ययः कार्य इत्याह— **नाहमिति**। परस्परविरुद्धभूतत्वादेकत्वप्रत्ययोऽशक्यकरण इत्यर्थः। किं च ईश्वरस्य शारीरमात्रत्वं वा शारीरस्य चे[वे]श्वरमात्रत्वमिति

### *भाष्यभावप्रकाशिका*

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च**।। संशयाभावादधिकरणारम्भमाक्षिपति— **कथं पुनरिति**। आत्मशब्दस्य मुख्यत्वे सत्यभेदसिद्धिस्तत्सिद्धौ चात्मशब्दस्य मुख्यार्थत्वसिद्धिरित्यन्योन्याश्रयत्वात् प्रमाणान्तरविरोधे सति च शब्दमुख्यार्थत्वानुपपत्तेर्नात्मशब्दालम्बनेन संशयाक्षेपः करणीय इत्याह— **अयमिति**। 'द्वा सुपर्णा' 'ऋतं पिबन्तावि'ति भेदश्रुतेरुपास्योपासकादिभावभेदलिङ्गैश्च भेद एवेत्याह— **नाहमिति**। युक्तितोऽपि भेदमाह— **न ह्यपहतेति**। अभेदेऽपि किमीश्वरस्य जीवात्मता, किं वा जीवस्येश्वरात्मतेति

### *न्यायनिर्णयः*

श्रवणमनननिदिध्यासनादिसाधनान्यावृत्त्याऽनुष्ठेयानीत्युक्तम्। तत्र निदिध्यासनकाले कथं प्रत्ययावृत्तिः, तत्राह— **आत्मेति त्विति**। यद्यपि 'शब्दादेव प्रमित' इत्यादिषु जीवब्रह्मैक्यं श्रुतिभिरुक्तम्, तथापि तासामेव विरुद्धार्थत्वादुपचरितविषयत्वमाशङ्क्यात्र समाधीयते। विरोधसमाधेरविरोधाध्यायसंगतत्वेऽपि महावाक्यार्थविरोधसमाधेः समाधावन्तरङ्गत्वादिह संगतिरिति मत्वा विषयोक्तिपूर्वकमुभयथा प्रसिद्धेः संशयमाह— **य इति**। संशयाभावादधिकरणमाक्षिपति— **कथमिति**। आत्मशब्दस्य मुख्यार्थत्वे सत्यभेदसिद्धिस्तत्सिद्धौ च तस्य मुख्यार्थत्वसिद्धिरित्यन्योन्याश्रयान्मानान्तरविरोधाच्च तन्मुख्यार्थत्वासिद्धेस्तदालम्बनेन संशयानाक्षेपादधिकरणमारभ्यमित्याह— **उच्यत इति**। अत्र च विरोधपरिहारफले समाध्युपयोगितया प्रासङ्गिके। ध्यानावस्थायां प्रत्यक्त्वेन ब्रह्मप्रतिपत्त्यनुष्ठानोक्त्या पादादिसंगतिः। पूर्वपक्षे श्रुतीनामैक्यगोचराणामुपचरितार्थत्वम्। सिद्धान्ते तासां मुख्यार्थत्वं फलतीत्याशयवान् विमृश्य पूर्वपक्षं गृह्णाति— **किमिति**। 'द्वा सुपर्णे'त्यादिभेदश्रुतेरुपास्योपासकादिभावभेदलिङ्गैश्च भेद इत्यर्थः। युक्तितो भेदमाह— **न हीति**। तयोर्विरुद्धगुणत्वमसिद्धमित्याशङ्क्याह— **अपहतेति**। किं चाभेदेऽपि किमीश्वरस्य जीवात्मता, किं वा जीवस्येश्वरात्मतेति विकल्प्याद्यं

**अपहतपाप्मत्वादिगुणश्च परमेश्वरस्तद्विपरीतगुणस्तु शारीरः। ईश्वरस्य च संसार्यात्मत्व ईश्वराभावप्रसङ्गः; ततः शास्त्रानर्थक्यम्। संसारिणोऽपीश्वरात्मत्वेऽधिकार्यभावाच्छास्त्रानर्थक्यमेव। प्रत्यक्षादिविरोधश्च। अन्यत्वेऽपि तादात्म्यदर्शनं शास्त्रात् कर्तव्यं प्रतिमादिष्विव विष्ण्वादिदर्शनमिति चेत्, काममेवं भवतु। न तु संसारिणो मुख्य आत्मेश्वर इत्येतन्नः प्रापयितव्यम्।**

**एवं प्राप्ते ब्रूमः– आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः। तथा हि परमेश्वरप्रक्रियायां जाबाला आत्मत्वेनैवैतमुपगच्छन्ति– 'त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि देवते' इति। तथाऽन्येऽपि 'अहं ब्रह्मास्मि' (बृ.उ. १।४।१०) इत्येवमादय आत्मत्वोपगमा द्रष्टव्याः। ग्राहयन्ति चात्मत्वेनैवेश्वरं वेदान्तवाक्यानि 'एष त आत्मा सर्वान्तरः' (बृ.उ. ३।४।१), 'एष त आत्माऽन्तर्याम्यमृतः' (बृ.उ. ३।७।३), 'तत्सत्यं स आत्मा तत्त्वमसि' (छा.उ. ६।८।७) इत्येवमादीनि। यदुक्तं प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यतीति, तदयुक्तम्, गौणत्वप्रसङ्गात्। वाक्यवैरूप्याच्च। यत्र हि प्रतीकदृष्टिरभिप्रेयते सकृदेव तत्र वचनं भवति। यथा– 'मनो ब्रह्म' (छा.उ. ३।१८।१), 'आदित्यो ब्रह्म' (छा.उ. ३।१९।१) इत्यादि। इह पुनस्त्वमहमस्म्यहं च त्वमसीत्याह, अतः प्रतीकश्रुतिवैरूप्यादभेदप्रतिपत्तिः। भेददृष्ट्यपवादाच्च। तथाहि– 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद' (बृ.उ. १।४।१०), 'मृत्योः स मृत्युमाप्नोति य इह**

### *प्रकटार्थविवरणम्*

विकल्प्याह— **ईश्वरस्य चेत्यादिना**। भेदवादिनाऽपि तत्त्वमस्यादिशास्त्रप्रामाण्यादवश्यं तादात्म्यदर्शनमभ्युपगन्तव्यम्। एवं चेत् तादात्म्यमप्यभ्युपगम्यतामित्याह— **अन्यत्वेऽपीति**। तादात्म्यदर्शनं भवतु; न प्रमाणविरुद्धं तादात्म्यमित्याह— **काममेवमिति**।

सिद्धान्ते सूत्रं व्याचष्टे— **आत्मेत्येवेति**। पराभ्युपगममनूद्य दूषयति— **यदुक्तमित्यादिना**। वेदसत्यत्वश्रद्धालुः शङ्कते—

### *भाष्यभावप्रकाशिका*

विकल्प्याद्यपक्षे दूषणमाह— **ईश्वरस्येति**। द्वितीये दूषणमाह— **संसारिणोऽपीति**। अहं सुखीत्यनुभवेन विरुद्धस्वभावत्वात् तुहिनदहनवत् भेद इत्याद्यनुमानैश्च विरोधात्र तयोरभेद इत्याह— **प्रत्यक्षादीति**। एकत्वोपदेशानां तर्हि का गतिरित्यपेक्षायां तां शङ्का व्याजेनाह— **अन्यत्वेऽपीति**।

**गौणत्वप्रसङ्गादिति**। मानान्तरानधिगतार्थत्वफलवत्त्वाभ्यां तात्पर्यत्त्वावगमादेकत्वश्रुतीनां द्वित्वश्रुतीनां तल्लिङ्गानां च पूर्वसिद्धद्वित्वानुवादकत्वान्मुख्यवृत्तिसंभवे गौणत्वमयुक्तमित्यर्थः। निन्द्यमानत्वाच्च न भेदस्य प्रतिपाद्यत्वमित्याह— **भेददृष्टीति**।

### *न्यायनिर्णयः*

दूषयति— **ईश्वरस्येति**। द्वितीयं प्रत्याह— **संसारिणोऽपीति**। अहं सुखीत्याद्यनुभवेन विरुद्धस्वभावत्वाद्भेदो दहनतुहिनवदित्यनुमानेन च विरोधात्र तयोरैक्यमित्याह— **प्रत्यक्षादीति**। एकत्वोपदेशानां तर्हि का गतिरित्याशङ्क्य व्याजेन तद्गतिमाह— **अन्यत्वेऽपीत्यादिना**। तादात्म्यदर्शनाङ्गीकारे नास्ति विप्रतिपत्तिरित्याशङ्क्याह— **न त्विति**।

एकत्वश्रुतीनां प्राप्तमुपचरितार्थत्वमनूद्य सिद्धान्तयति— **एवमिति**। सिद्धान्तसूत्रं योजयति— **आत्मेत्येवेति**। तत्र मानमाह— **तथा हीति**। आत्मत्वोपगमान्तराणि दर्शयति— **तथेति**। आदिशब्देन 'तद्योऽहं सोऽसौ योऽसौ सोऽहमि'त्यादयो गृह्यन्ते। सूत्रावयवमवशिष्टं व्याचष्टे— **ग्राहयन्तीति**। परोक्तमनूद्य दूषयति— **यदुक्तमित्यादिना**। एकत्वश्रुतीनामपूर्वार्थत्वफलवत्त्वाभ्यां तात्पर्यसिद्धेर्मुख्यवृत्तिसंभवे गौणत्वायोगाद् द्वैतश्रुतीनां तल्लिङ्गानां च तद्वैपरीत्यात् कल्पितभेदालम्बनत्वान्मुख्यमेव जीवब्रह्मणोरैक्यमित्यर्थः। इतश्च नेदं प्रतीकदर्शनमित्याह— **वाक्येति**। भेदस्य निन्द्यमानत्वाच्चाभेदस्यैव प्रतिपाद्यतेत्याह— **भेदेति**। विरुद्धस्वभावत्वाद्भेदो

**नानेव पश्यति' (बृ.उ. ४।४।१९ कठ. ४।१०), 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' (बृ.उ. ४।५।७) इत्येवमाद्या भूयसी श्रुतिर्भेददर्शनमपवदति। यत्तूक्तं न विरुद्धगुणयोरन्योन्यात्मत्वसंभव इति; नायं दोषः; विरुद्धगुणताया मिथ्यात्वोपपत्तेः। यत्पुनरुक्तमीश्वराभावप्रसङ्ग इति। तदसत्। शास्त्रप्रामाण्याद-नभ्युपगमाच्च। न हीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यत इत्यभ्युपगच्छामः। किं तर्हि? संसारिणः संसारित्वापोहेनेश्वरात्मत्वं प्रतिपिपादयिषितमिति। एवं च सत्यद्वैतेश्वरस्यापहतपाप्मत्वादिगुणता, विपरीतगुणता त्वितरस्य मिथ्येति व्यवतिष्ठते। यदप्युक्तमधिकार्यभावः प्रत्यक्षादिविरोधश्चेति। तदप्यसत्। प्राक्प्रबोधात् संसारित्वाभ्युपगमात्। तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्य। 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ.उ. २।४।१४) इत्यादिना हि प्रबोधे प्रत्यक्षाद्यभावं दर्शयति। प्रत्यक्षाद्यभावे श्रुतेरप्यभावप्रसङ्ग इति चेत्? इष्टत्वात्। 'अत्र पिताऽपिता भवति' (बृ.उ. ४।३।२२) इत्युपक्रम्य 'वेदा अवेदाः' (बृ.उ. ४।३।२२) इति वचनादिष्यत एवास्माभिः श्रुतेरप्यभावः प्रबोधे। कस्य पुनरयमप्रबोध इति चेत्? यस्त्वं पृच्छसि तस्य त इति वदामः। नन्वहमीश्वर एवोक्तः श्रुत्या, यद्येवं प्रतिबुद्धोऽसि नास्ति कस्यचिदप्रबोधः।**

### *प्रकटार्थविवरणम्*

**प्रत्यक्षाद्यभाव इति**। अयं दोषो नास्माकम्, वेदस्यापि वस्तुत्वाभावस्येष्टत्वादित्याह— **नेष्टत्वादिति**। तथा हि— न तावद् वर्णमात्रं वेदः, ककारादौ वेदबुद्ध्यभावात्; नापि विभूनां नित्यानां च वर्णानां देशकालक्रमः 'कपिः पिकः' इति युगपदेकस्य पूर्वापरीभावविरोधात् न च वस्तुक्रमोऽपि; परोच्चारणोपलब्ध्योः परस्याप्रत्यक्षत्वात् न तत्क्रमविशिष्टानां वर्णानां प्रत्यक्षता, समारोपितक्रमविशिष्टानां कल्पितत्वात्; न चोपलक्षणं क्रमः, वैशिष्ट्यानुभवविरोधात्, क्रमं[क्रमं विना]कदाचिदपि वेदबुद्ध्यदर्शनाच्चेति। अप्रबोधावस्थायामेव वेदसत्यत्वाभिनिवेशपूर्वको व्यवहारः; प्रबोधे तु न तत्र वस्तुबुद्धिरित्युक्तम्; तत्राविद्यामसहमान आह— **कस्य पुनरिति**। प्रष्टुरज्ञत्वस्य प्रसिद्धत्वात् तवैव प्रष्टृत्वादज्ञत्वं सिद्धमिति प्रश्नानुपपत्तिमाह— **यस्त्वमिति**। सर्वज्ञेश्वराभेदान्न ममाज्ञत्वमित्याह— **नन्वहमिति**। यद्येवं सर्वज्ञेश्वराभेदं प्रतिबुद्धोऽसि, तर्हि नास्ति कस्यचिद् विषयस्य तवाप्रबोध इति प्रश्नानुपपत्तिरित्यर्थः। तस्मात्

### *भाष्यभावप्रकाशिका*

विरुद्धस्वभावत्वात् भेद इति यदुक्तमत्राह— **यत्तूक्तमिति**। प्रतिबिम्बवदुपाधिनिबन्धनोऽयं विरुद्धधर्माध्यास इत्यर्थः। तस्मिन् पक्षे जीवस्य विरुद्धगुणत्वमसिद्धमित्याह— **एवं चेति**। अधिकार्यभावादिरेकत्वावगमात् प्रागुत्तरकालं वा? यद्याद्यस्तत्राह— **प्राक् प्रबोधादिति**। उत्तरस्त्वङ्गीक्रियत इत्याह— **यत्र त्वस्येति**। गूढाभिसन्धिः पृच्छति— **कस्य पुनरिति**। यस्य भ्रान्तिस्तस्याप्रबोध इत्याह— **यस्त्वमिति**। स्वाभिप्रायं प्रकटयति— **नन्वहमिति**। अविद्याभ्रान्त्योरप्यनिर्वचनीयत्वाददोष इति परिहरति— **यद्येवमिति**।

### *न्यायनिर्णयः*

जीवब्रह्मणोरित्युक्तमनूद्य प्रत्याह— **यत्त्विति**। बिम्बप्रतिबिम्बवदुपाधिकृतो विरुद्धधर्माध्यासो न वास्तवः, तथा च तात्त्विकमैक्यमित्यर्थः। अभेदेऽपि संसार्यात्मत्वमीश्वरस्य, संसारिणो वा तदात्मत्वमिति विकल्प्याऽऽद्ये यद्दूषणं तदनुभाष्य दूषयति— **यत्पुनरिति**। अनभ्युपगमं विवृणोति— **न हीति**। द्वितीयं प्रश्नपूर्वकमङ्गीकरोति— **किमिति**। विरुद्धांशहान्या जीवस्य ब्रह्मत्वे प्रतिपाद्ये विरुद्धधर्मत्वमुक्तमसिद्धमेवेति फलितमाह— **एवं चेति**। संसारिणः संसारित्वापोहेन ब्रह्मत्वे साध्ये परोक्तमनूद्य निरस्यति— **यदपीति**। अधिकार्यभावादिरेकत्वज्ञानात्पूर्वमूर्ध्वं वेति विकल्प्याद्यं निराह— **प्रागिति**। द्वितीयमङ्गीकरोति— **यत्रेति**। श्रुतिश्रद्धालुतया शङ्कते— **प्रत्यक्षादीति**। तत्त्वज्ञानादूर्ध्वं श्रुत्यभावस्येष्टत्वान्नानिष्टापत्तिरित्याह— **नेष्टत्वादिति**। तदेव स्पष्टयति— **अत्रेति**। गूढाभिप्रायः सन् पृच्छति— **कस्येति**। यस्य भ्रान्तिस्तस्याज्ञानमित्याह— **यस्त्वमिति**। स्वाभिप्रायं पूर्ववादी प्रकटयति— **नन्विति**। अविद्यातज्जभ्रान्त्योरनिर्वाच्यत्वाद् बोधे सति तयोरसत्त्वान्नाश्रयापेक्षेत्याह— **यद्येवमिति**। अनिर्वाच्यत्वादविद्यायाश्चोद्यान्तरमपि

**योऽपि दोषश्चोद्यते कैश्चिदविद्यया किलात्मनः सद्वितीयत्वादद्वैतानुपपत्तिरिति, सोऽप्येतेन प्रत्युक्तः। तस्मादात्मेत्येवेश्वरे मनो दधीत।।३।।**

।।इति द्वितीयमात्मत्वोपासनाधिकरणम्।।

३।।प्रतीकाधिकरणम्।।सू. ४।।

## न प्रतीके न हि सः।।४।।

**'मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेति' (छा.उ. ३।१८।१) तथा 'आदित्यो ब्रह्मेत्यादेशः' (छा.उ. ३।१९।१) 'स यो नाम ब्रह्मेत्युपास्ते' (छा.उ. ७।१।५) इत्येवमादिषु प्रतीकोपासनेषु संशयः– किं तेष्वप्यात्मग्रहः कर्तव्यो न वेति। किं तावत् प्राप्तम्? तेष्वप्यात्मग्रह एव युक्तः। कस्मात्? ब्रह्मणः श्रुतिष्वात्मत्वेन प्रसिद्धत्वात्, प्रतीकानामपि ब्रह्मविकारत्वाद् ब्रह्मत्वे सत्यात्मत्वोपपत्तेरिति।**

### *शारीरकन्यायसंग्रहः*

**न प्रतीके न हि सः।।४।।** ब्रह्मदृष्टियुक्तानि प्रतीकान्यप्यहमित्येव प्रतिपत्तव्यानि, ब्रह्मद्वारेणात्मना ऽभिन्नत्वात्। यत्र उपास्यस्यात्मनाऽभेदः तत्राहंबुद्धिर्दृष्टा, यथा ब्रह्मणीति प्राप्तम्। तत्र ब्रह्मोपासनेषु 'एष त आत्माऽन्तर्हृदि' 'एष आत्माऽपहतपाप्मा' इत्येवमाद्यैक्यव्यपदेशात् सगुणनिर्गुणेष्वहं बुद्धिरुक्ता; इह तु न प्रतीकान्यहमित्युपास्यानि, ऐक्यचोदनाभावे सति स्वरूपतो भिन्नत्वात्, उद्गीथादिवत् इत्यनुमानात् यथाप्रतिभासं भेदेनैवोपास्यानि प्रतीकानीति सिद्धम्।

### *प्रकटार्थविवरणम्*

स्वानुभवसिद्धाप्रबोधाधीन एव प्रमातृत्वादिव्यवहार इति स्थितं यावदविद्यं प्रमाणादिव्यवहारः; प्रबोधे तु तत्र वस्तुबुद्धिर्निवर्तत इति। एतेन न्यायेन चोद्यान्तरमपि चूर्णितम्, सर्वस्यापि भेदस्यावस्तुत्वादित्याह— **योऽपि दोष इति**। इति द्वितीयमात्मत्वोपासनाधिकरणम्।।

**न प्रतीके न हि सः।।** विषयमनूद्योपासनेषु उभयथाभावदर्शनात् संशयमाह— **मनो ब्रह्मेत्यादिना**। पूर्ववन्नामादीन्यहमिति बुद्धिः कर्तव्येत्याह— **तेष्वपीति**। न प्रतीकेष्वात्ममतिं कुर्यात्, ऐक्यचोदनाऽभावे सति स्वरूपेण भिन्नत्वादुद्गीथादिष्विवेत्याह—

### *भाष्यभावप्रकाशिका*

**न प्रतीके न हि सः।।** युक्त्यन्तरमाह— **प्रतीकानामपीति**। ब्रह्मदृष्टियुक्तानि प्रतीकान्यहमिति ग्राह्याणि, ब्रह्मरूपेणाभिन्नत्वान्मुख्यब्रह्मवदित्यर्थः। तत्र किमात्मत्वानुभवादात्मत्वेन ग्राह्याणि, किं वा प्रमाणान्तरसिद्धत्वात्? न तावदाद्य इत्याह—

### *न्यायनिर्णयः*

निरस्तमित्याह— **योऽपीति**। अभेदश्रुतीनां सिद्धे मुख्यार्थत्वे फलितमुपसंहरति— **तस्मादिति**।।३।। इति द्वितीयमात्मत्वोपासनाधिकरणम्।।

आत्मत्वमतिरीश्वरे कार्येत्युक्तम्। इदानीं प्रतीकविशेषणस्यापीश्वरस्यात्मत्वात् तद्द्वारा प्रतीकेष्वात्मत्वधीरिति प्राप्ते प्रत्याह— **न प्रतीक इति**। प्रतीकोपासनान्युदाहृत्योपास्तिषूभयथादृष्टेः संशयमाह— **मन इत्यादि**। जीवब्रह्माभेदं पूर्वोक्तमुपजीव्य ब्रह्मदृष्टिभाक्षु प्रतीकेषु ब्रह्माभिन्नजीवदृष्टिरहमिति कार्येति प्रश्नपूर्वकं पूर्वपक्षमाह— **किं तावदिति**। अत्र प्रासङ्गिकाहंमतिनिरासेन प्रतीकोपास्तिषु प्रयोगभेदोक्त्या पादादिसंगतिः। पूर्वपक्षे प्रतीकोपास्तीनामहंग्रहोपास्तिभिरविशेषः, सिद्धान्ते विशेषः सिध्यतीत्यङ्गीकृत्य पूर्वपक्षे हेतुं पृच्छति— **कस्मादिति**। प्रतीकेष्वात्मत्वग्रहे तेषामात्मत्वोपपत्तिहेतुमाह— **ब्रह्मण इति**। तस्यात्मत्वेऽपि तेषां कथमात्मत्वं तत्राह— **प्रतीकानामिति**। ब्रह्मधीयुक्तानि प्रतीकान्यहमिति ग्राह्याणि, ब्रह्माभिन्नत्वात्, तद्वदित्यर्थः।

**एवं प्राप्ते ब्रूमः– न प्रतीकेष्वात्ममतिं बध्नीयात्। न हि स उपासकः प्रतीकानि व्यस्तान्यात्मत्वेनाकलयेत्। यत्पुनर्ब्रह्मविकारत्वात् प्रतीकानां ब्रह्मत्वं ततश्चात्मत्वमिति। तदसत्; प्रतीकाभावप्रसङ्गात्। विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाश्रितं भवति। स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्मग्रहो वा? न च ब्रह्मण आत्मत्वाद् ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्प्या। कर्तृत्वाद्यनिराकरणात्। कर्तृत्वादिसर्वसंसारधर्मनिराकरणेन हि ब्रह्मण आत्मत्वोपदेशः। तदनिराकरणेन चोपासनविधानम्। अतश्चोपासकस्य प्रतीकैः समत्वादात्मग्रहो नोपपद्यते। न हि रुचकस्वस्तिकयोरितरेतरात्मत्वमस्ति। [१]सुवर्णात्मनेव तु ब्रह्मात्मनैकत्वे प्रतीकाभावप्रसङ्गमवोचाम। अतो न प्रतीकेष्वात्मदृष्टिः क्रियते।।४।।**

।।इति तृतीयं प्रतीकाधिकरणम्।।

### *प्रकटार्थविवरणम्*

**[न]प्रतीकेष्विति**। तानि प्रतीकानि आकलयेत् अवगच्छेदित्यर्थः। पूर्वपक्षहेत्वाभासं निरस्यति— **यत्पुनरित्यादिना**। व्यावृत्तेन विकाररूपेण नामादीनां ब्रह्मत्वासंभवात्तदुपमर्दे च नामादेरेवाभावान्नाहंग्रहस्तत्र युक्त इत्यर्थः। ननु 'नाम ब्रह्म' इत्यस्य नामाहमित्ययमेवार्थो ब्रह्मण आत्मत्वादित्याशङ्क्याह— **न च ब्रह्मण इति**। यद् ब्रह्म नामादिष्वध्यस्यते तन्नाहंबुद्धिग्राह्यम्, कर्तृत्वादिविशिष्टस्याहंबुद्धिग्राह्यत्वात्; लक्षणयाऽप्यहंशब्दो न प्रयोक्तव्यः, कर्तृत्वादेरुपासनादशायामनिराकरणादित्यर्थः। फलितमाह— **अतश्चेति**। **समत्वादिति**। विशिष्टरूपेण विकारत्वसाम्यात् विकारस्य च विकारान्तरत्वानुपपत्तिरित्यर्थः। ननु रुचकस्वस्तिकयोः यथा स्वर्णात्मकत्वं तथा प्रतीकोपासकयोरपि ब्रह्मात्मनैकत्वादहंग्रहो भविष्यतीत्याशङ्क्याह— **सुवर्णात्मनैव त्विति**। विकाररूपतिरस्कारेणैवैकत्वम्; तदा च न प्रतीकत्वमित्यर्थः।

### *भाष्यभावप्रकाशिका*

**न हि स इति**। अथ द्वितीयस्तत्राह— **यत्पुनरिति**। तदेव दर्शयति— **विकारस्वरूपेति**। ततः को दोष इत्यत आह— **स्वरूपोपमर्दे चेति**। जीवभावप्रविलयेन ब्रह्मभावोपदेशवत् प्रतीकप्रविलयेन ब्रह्मोपदेशे सत्यालम्बनाभावादुपासनाविधिर्न स्यादित्यर्थः। यदुक्तं ब्रह्मत्वे सत्यात्मत्वोपपत्तिरित्यत्राह— **न चेति**। कथमनिराकरणमिति तदाह— **कर्तृत्वादीति**। प्रतीकानां जीवात्मनश्च परिच्छिन्नस्वभावतया साम्यम्, न तु विकारतया। तथाप्यधिष्ठानद्वाराऽऽत्मग्रहः स्यादित्यत आह— **सुवर्णात्मनेति**। न प्रतीकान्यहमित्युपास्यानि ऐक्ये चोदनारहितत्वे सति स्वरूपतो भिन्नत्वादुद्गीथादिवदित्यभिप्रेत्योपसंहरति— **अतो न प्रतीकेष्विति**। इति तृतीयं प्रतीकाधिकरणम्।।

### *न्यायनिर्णयः*

द्विविधोपास्तिष्वविशेषे प्राप्ते सिद्धान्तमाह— **एवमिति**। न प्रतीकेष्वात्ममतिं कुर्यादैक्यचोदनाभावे सति स्वतो भिन्नत्वादुद्गीथादिवदित्याह— **नेत्यादिना**। यत्तु ब्रह्मरूपत्वादहमिति ग्राह्याणीति, तत्र किमात्मत्वानुभवादात्मत्वेन ग्राह्याणि, किं वा मानान्तरसिद्धत्वात्। नाद्य इत्याह— **न हीति**। द्वितीयमनूद्य दूषयति— **यदिति**। प्रसङ्गमेव प्रकटयति— **विकारेति**। तथापि को दोषः, तत्राह—**स्वरूपेति**। वस्तुवृत्तेन विकाररूपेण नामादीनां ब्रह्मत्वायोगाज्जीवत्वलयेन जीवस्य ब्रह्मत्वोक्तिवत् प्रतीकत्वलयेन तेषामपि ब्रह्मत्वोक्तावालम्बनाभावादुपास्तिविधिर्न स्यादित्यर्थः। यत्तु ब्रह्मत्वे सत्यात्मत्वमिति, तत्राह— **न चेति**। प्रतीकोपदेशेषु कथं कर्तृत्वाद्यनिराकरणं, तदाह— **कर्तृत्वादीति**। तन्निराकरणे तद्विधिरेव न स्यादिति भावः। प्रतीकानां जीवस्य च परिच्छिन्नतया साम्यं गृहीत्वा फलितमाह— **अतश्चेति**। सत्यपि तुल्यत्वे किमिति जीवस्य तेषु विधिवशादहंग्रहो न स्यात्, तत्राह— **न हीति**। स्वरूपेणैक्याभावेऽपि रुचकस्वस्तिकयोः सुवर्णात्मनैक्यवदिहापि ब्रह्मात्मनैक्यादहंग्रहः स्यादित्याशङ्क्याह— **सुवर्णेति**। विकाररूपतिरस्कारेणैक्ये न प्रतीकतेत्युक्तमित्यर्थः। रुचकस्वस्तिकयोरपि मिथोव्यावृत्तयोर्नानुवृत्तसुवर्णाद्यात्मत्वं कल्पनामृते सिध्यतीति सिद्धवत्कृत्योपसंहरति— **अत इति**।।४।। इति तृतीयं प्रतीकाधिकरणम्।।

---

१. 'सुवर्णात्मनैव' इति पा.।

### ४।।ब्रह्मदृष्ट्यधिकरणम्।।सू. ५।।

## ब्रह्मदृष्टिरुत्कर्षात्।।५।।

**तेष्वेवोदाहरणेष्वन्यः संशयः– किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः, किंवा ब्रह्मदृष्टिरादित्यादिष्विति। कुतः संशयः? सामानाधिकरण्ये कारणानवधारणात्। अत्र हि ब्रह्मशब्दस्यादित्यादिशब्दैः सामानाधिकरण्यमुपलभ्यते। 'आदित्यो ब्रह्म' 'प्राणो ब्रह्म' 'विद्युद् ब्रह्मे'त्यादिसमानविभक्तिनिर्देशात्। न चात्राञ्जसं सामानाधिकरण्यमवकल्पते। अर्थान्तरवचनत्वाद् ब्रह्मादित्यादिशब्दानाम्। न हि भवति 'गौरश्व' इति सामानाधिकरण्यम्। ननु प्रकृतिविकारभावाद् ब्रह्मादित्यादीनां मृच्छरावादिवत् सामानाधिकरण्यं स्यात्। नेत्युच्यते; विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात् स्यात्। ततश्च प्रतीकाभावप्रसङ्गमवोचाम। परमात्मवाक्यं**

### *शारीरकन्यायसंग्रहः*

**ब्रह्मदृष्टिरुत्कर्षात्।।५।।** 'आदित्यो ब्रह्म' इत्यादिसामानाधिकरण्याविशेषे तयोः कस्योपास्यत्वमिति विशये सत्युत्कृष्टनिकृष्टयोः उत्कृष्टमेवोपास्यम्, फलविशेषवत्त्वात्, राजादिवत् इत्यनुमानेनादित्यादिनिकृष्टबुद्धिविशिष्टमपि ब्रह्म चोदनावशात् फलविशेषाय ब्रह्मसंबन्धिप्रतीकोपासनेषु उपास्यमिति प्राप्तम्। तत्र 'आदित्यं ब्रह्मेत्युपास्ते' 'आकाशं ब्रह्मेत्युपास्ते' इत्यादित्यादीनामेव द्वितीयाश्रुत्या उपासनाकर्मत्वप्रतिपादिकया, ब्रह्मशब्दस्य अर्थपरत्वं बाधित्वा प्रत्ययपरत्वप्रतिपादिकया च इतिशब्दश्रुत्योपबृंहितया निकृष्टमुत्कृष्टबुद्ध्या वेदनीयमिति च न्यायानुगृहीतया अनुमानबाधात् असञ्जातविरोधितया प्रथमश्रुता आदित्यादय एव चरमश्रुततया सञ्जातविरोधत्वात् [१]प्रत्ययमात्रपरब्रह्मदृष्टिविशिष्टविशेषवत्तयोपास्यमानब्रह्मसामर्थ्यलब्धफलविशेषा उपास्या विष्णुदृष्टिविशिष्टेव प्रतिमेत्युक्तम्।

### *प्रकटार्थविवरणम्*

रुचकस्वस्तिके परस्परव्यावृत्ते वस्तुनी स्वीक्रियेते; तदा सुवर्णमपि ताभ्यां परस्परव्यावृत्ताभ्यामनुवृत्ताकारेण विलक्षणमेवेति कथंकारं तत् तयोः स्वरूपं स्यात्। प्रत्यक्षमपि रुचकमिदं स्वस्तिकमिदमित्येतावद् गोचरयति। अपरं च सुवर्णविकारताम्, न तु व्यावृत्तयोरेकरूपताम्; न च दर्शने विप्रतिपन्नः 'दृश्यते' इत्युक्त्यैव प्रतिबोधनीयः; अपि तु संप्रतिपन्नेन मानान्तरेण; नास्ति चानेकेषामेकं रूपमित्यत्र मानान्तरम्। मम त्वस्ति— विमतं नानेकेषां रूपम् अनौपाधिकतद्व्यावृत्तिमत्त्वात्; यदेवं तदेवं यथा रुचकमिति। अथान्तर्बहिर्वा निरूप्यमाणे रुचकादिषु [२]सुवर्णान्तत्वान्तरमुपलभ्यते; अतः सुवर्णात्मता बम्भण्यते, तर्हि विकाररूपमित्यत्र[रूप]तिरस्कारेणैव प्रत्यगात्मतेति मन्मार्गमेवाश्रित इत्युपरम्यते। इति तृतीयं प्रतीकाधिकरणम्।।

**ब्रह्मदृष्टिरुत्कर्षात्।।** प्रतीकोपासनेष्वेव संशयान्तरमाह— **तेष्वेवेति**। प्रश्नपूर्वकं संशयबीजमाह— **कुत इत्यादिना**।

### *भाष्यभावप्रकाशिका*

**ब्रह्मदृष्टिरुत्कर्षात्।।** अस्तु तर्हि सामानाधिकरण्यं सुवर्णं कुण्डलमित्यादिवत्, किमर्था दृष्टिरित्यत आह— **न चात्रेति**।

### *न्यायनिर्णयः*

अहंग्रहोपासनेष्विव प्रतीकोपासनेष्वहंग्रहेणानुष्ठानं नेत्युक्तम्। इदानीं प्रतीकोपासनेष्वेव क्व किंदृष्टिरध्यस्यतामिति संदिहानं प्रत्याह— **ब्रह्मदृष्टिरिति**। एकविषयत्वेनाधिकरणयोः संगतिं मन्वानो विषयसंशयौ दर्शयति— **तेष्वेवेति**। प्रश्नपूर्वकं संशयबीजमाह— **कुत इति**। उक्तमेव व्यक्तीकर्तुं सामानाधिकरण्यधियं तावद् दर्शयति— **अत्रेति**। तथापि यथाकथंचिदस्य सामानाधिकरण्यस्य संभवे कुतः संशयसिद्धिरित्याशङ्क्य 'सोऽय'मितिवदेकत्वनिमित्तं वा प्रकृतिविकारत्वनिमित्तं वा समारोपकृतं वा तदिति विकल्प्याद्यं दूषयति— **न चेति**। भिन्नार्थशब्देषु तदभावमुदाहरति— **न हीति**। द्वितीयमादत्ते— **नन्विति**। उपास्तिविरोधान्नैवमित्याह—

१. 'प्रत्ययमात्रपरब्रह्मशब्दसमर्पितब्रह्मदृष्टिविशिष्टा विशेषणतया' इत्यादिपाठः न्यायनिर्णयदर्शनादूह्यते। २. 'सुवर्णात्र तत्त्वान्तरम्' इति पाठः स्यात्।

**चेदं तदानीं स्यात्; ततश्चोपासनाधिकारो बाध्येत। परिमितविकारोपादानं च व्यर्थम्। तस्माद् 'ब्राह्मणोऽग्निर्वैश्वानर' इत्यादिवदन्यत्रान्यदृष्ट्यध्यासे सति क्व किंदृष्टिरध्यस्यतामिति संशयः।**

**तत्रानियमो नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्तम्। अथवाऽऽदित्यादिदृष्टय एव ब्रह्मणि कर्तव्या इत्येवं प्राप्तम्। एवं ह्यादित्यादिदृष्टिभिर्ब्रह्मोपासितं भवति। ब्रह्मोपासनं च फलवदिति शास्त्रमर्यादा। तस्मान्न ब्रह्मदृष्टिरादित्यादिष्विति।**

**एवं प्राप्ते ब्रूमः– ब्रह्मदृष्टिरेवादित्यादिषु स्यादिति। कस्मात्? उत्कर्षात्। एवमुत्कर्षेणादित्यादयो दृष्टा भवन्ति, उत्कृष्टदृष्टेस्तेष्वध्यासात्। तथा च लौकिको न्यायोऽनुगतो भवति। उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्येति लौकिको न्यायः। यथा राजदृष्टिः क्षत्तरि। स चानुसर्तव्यः, विपर्यये प्रत्यवायप्रसङ्गात्। न हि क्षत्तृदृष्टिपरिगृहीतो**

### *प्रकटार्थविवरणम्*

अस्ति तावत् सामानाधिकरण्यम्; न तत् 'सोऽयं देवदत्तः' इतिवन्मुख्यम्; नापि प्रकृतिविकारभावनिबन्धनम्; परिशेषादध्यासनिबन्धनं वक्तव्यम्। तथा च संशय इत्यर्थः।

पूर्वपक्षमाह— **तत्रानियम इति**। यथा पूर्वत्राहंग्रहाभावे नियामक आत्यन्तिकभेद उक्तः, तथा आदित्यादिष्वेव ब्रह्मदृष्टिनियामकं किंचिन्नोपलभ्यत इत्यर्थः। उत्कृष्टनिकृष्टयोः उत्कृष्टमेवोपास्यम्, फलविशेषवत्त्वात्, राजादिवदित्यनुमानं वा नियामकमित्याह— **अथवेति**।

उत्कृष्टदृष्ट्या निकृष्टमुपास्यमिति लौकिकन्यायस्य निर्णायकस्य सद्भावात् प्रथमः पूर्वपक्षोऽसंगत इत्याह— **ब्रूम इति**।

### *भाष्यभावप्रकाशिका*

अस्तु तर्हि प्रपञ्चविलयोपदेश एवायमिति, तत्राह— **परमात्मवाक्यमिति**। भवत्विति, तत्राह— **ततश्चेति**। प्रपञ्चविलयार्थत्वे कतिपयमनआदित्यादिविकारग्रहणं चानर्थकम्, न च सर्वोपलक्षणार्थं मनआदिग्रहणं मुख्यार्थसंभवे लक्षणाऽयोगादित्याह— **परिमितेति**। अतो दृष्टिपरमेवेदं सामानाधिकरण्यमित्युपसंहरति— **तस्माद् ब्राह्मण इति**।

साक्षात्पूर्वपक्षमाह— **अथवेति**। उत्कृष्टमेवोपास्यम् फलविशेषवत्त्वादित्यर्थः। ननु [मन]आदिशब्दानां प्रथमश्रुतत्वात् तदनुसारेण चरमश्रुतं ब्रह्मपदमप्रधानमङ्गीकर्तव्यमित्याशङ्क्य मैवम्, तथा सति फलाभावप्रसङ्गादित्याह— **ब्रह्मोपासनं चेति**।

उत्कृष्टनिकृष्टयोरुत्कृष्टं वेदनीयमित्यत आह— **तथा च लौकिक इति**। ननु ब्रह्मण एव फलदातृत्वनिश्चयात् तस्यैवादित्यादिं-

### *न्यायनिर्णयः*

**नेतीति**। प्रविलयपरमेव वाक्यं नोपास्तिपरमित्याशङ्क्योपासीतेति श्रुतिविरोधान्मैवमित्याह— **परमात्मेति**। प्रपञ्चप्रविलयद्वारा परमात्मपरत्वे वाक्यस्य कतिपयादित्यादिग्रहणमनर्थकम्। न च सर्वोपलक्षणार्थं तद्ग्रहणं मुख्यसंभवे लक्षणाऽयोगादित्याह— **परिमितेति**। पक्षद्वयायोगात् परिशिष्टे तृतीये पूर्वोक्तः संशयः स्यादित्युपसंहरति— **तस्मादिति**। प्रासङ्गिकप्रकृतप्रतीकोपासनेषु स्वतन्त्रपुमर्थहेतुषु ब्रह्मदृष्ट्याऽनुष्ठानोक्त्या पादादिसंगतिः। पूर्वपक्षे लौकिकन्यायविरोधः, सिद्धान्ते तदविरोधः सिध्यतीत्यभिप्रेत्य पूर्वपक्षयति— **तत्रेति**। यथाऽऽत्यन्तिकभेदो नामादिष्वहंग्रहाभावे हेतुरुक्तस्तथा तेष्वेव ब्रह्मधीनियामकं न किंचिद् दृष्टम्, तस्मादनियम इत्यर्थः। उत्कृष्टनिकृष्टयोरुत्कृष्टमेवोपास्यं फलविशेषवत्त्वाद् राजादिवदित्याशङ्क्य साक्षात्पूर्वपक्षमाह— **अथवेति**। आदित्यादिशब्दानां प्रथमश्रुतानामनुरोधेन चरमश्रुतं ब्रह्मपदं नेतव्यमिति चेन्न। तथा सति फलाभावापातादित्याह— **ब्रह्मेति**। पक्षद्वयेऽपि फलितमाह— **तस्मादिति**।

आदित्यादिदृष्ट्या ब्रह्मोपास्यमिति प्राप्ते सिद्धान्तयति— **एवमिति**। नियमहेतुं प्रश्नपूर्वकमाह— **कस्मादिति**। हेत्वर्थं विवृणोति— **एवमिति**। उत्कृष्टनिकृष्टयोरुत्कृष्टस्य द्रष्टव्यत्वादादित्यादिदृष्ट्या ब्रह्मैवोपास्यमित्युक्तमाशङ्क्याह— **तथा चेति**। किं तदनुसरणेनेत्याशङ्क्याह— **स चेति**। प्रसङ्गमेव दृष्टान्तेन स्पष्टयति— **न हीति**। ब्रह्मण एव 'फलमत' इति न्यायात्

**राजा निकर्षं नीयमानः श्रेयसे स्यात्। ननु शास्त्रप्रामाण्यादनाशङ्कनीयोऽत्र प्रत्यवायप्रसङ्गः, न च लौकिकेन न्यायेन शास्त्रीया दृष्टिर्नियन्तुं युक्तेति। अत्रोच्यते– निर्धारिते शास्त्रार्थ एतदेवं स्यात्। संदिग्धे तु तस्मिंस्तन्निर्णयं प्रति लौकिकोऽपि न्याय आश्रीयमाणो न विरुध्यते। तेन चोत्कृष्टदृष्ट्यध्यासे शास्त्रार्थेऽवधार्यमाणे निकृष्टदृष्टिमध्यस्यन् प्रत्यवेयादिति श्लिष्यते। प्राथम्याच्चादित्यादिशब्दानां मुख्यार्थत्वमविरोधाद् ग्रहीतव्यम्। तैः स्वार्थवृत्तिभिरवरुद्धायां बुद्धौ पश्चादवतरतो ब्रह्मशब्दस्य मुख्यया वृत्त्या सामानाधिकरण्यासंभवाद् ब्रह्मदृष्टिविधानार्थतैवावतिष्ठते। इतिपरत्वादपि ब्रह्मशब्दस्यैष एवार्थो न्याय्यः। तथा हि 'ब्रह्मेत्यादेशः', 'ब्रह्मेत्युपासीत', 'ब्रह्मेत्युपास्ते' इति च सर्वत्रेतिपरं ब्रह्मशब्दमुच्चारयति, शुद्धांस्त्वादित्यादिशब्दान्। ततश्च यथा शुक्तिकां रजतमिति प्रत्येतीत्यत्र शुक्तिवचन एव शुक्तिकाशब्दो रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः; प्रत्येत्येव हि केवलं रजतमिति, न तु तत्र रजतमस्ति; एवमत्राप्यादित्यादीन् ब्रह्मेति प्रतीयादिति गम्यते। वाक्यशेषोऽपि च द्वितीयानिर्देशेनादित्यादीनेवोपास्तिक्रियया व्याप्यमानान् दर्शयति– 'स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्ते' (छा.उ. ३।१९।४), 'यो वाचं ब्रह्मेत्युपास्ते' (छा.उ. ७।२।२), 'यः संकल्पं ब्रह्मेत्युपास्ते'**

### *प्रकटार्थविवरणम्*

किंच असञ्जातविरोधितया प्रथमश्रुता आदित्यादय एव चरमश्रुतत्वेन सञ्जातविरोधप्रत्ययमात्रब्रह्मदृष्टिविशिष्टा उपास्या इत्याह— **प्राथम्याच्चेति**। अतोऽपि ब्रह्मशब्दः प्रत्ययमात्रपर इत्याह— **इतिपरत्वादपीति**। कर्मत्वाभिधायिद्वितीयाश्रुतेरप्यादित्यादीनामेवोपास्यत्वमित्याह— **वाक्यशेषोऽपि चेति**।

### *भाष्यभावप्रकाशिका*

मतिभिरुपास्यत्वं निश्चीयत इति शङ्कते— **नन्विति**। यद्यपि ब्रह्मैव फलं प्रयच्छति तथापि शास्त्रं ब्रह्मबुद्ध्याऽऽदित्यादिप्रतीक उपास्यमाने ब्रह्म फलं प्रयच्छतीति कथयति किं वाऽऽदित्यादिबुद्ध्या ब्रह्मण्येवोपास्यमान इति शास्त्रार्थसंदेहाल्लोकानुसारेण निश्चीयत इति परिहरति— **निर्द्धारिते शास्त्रार्थ इति**। विपक्षे दोषमाह— **तेन चोत्कृष्टेति**। न केवलं लौकिको न्यायो निश्चयहेतुरपि त्वादित्यादिशब्दानां प्राथम्येन मुख्यार्थत्वमपीत्याह— **प्राथम्याच्चेति**। युक्त्यन्तरमाह— **इतिपरत्वादपीति**। एतावता कथमर्थपरत्वाभाव इति, तत्राह— **ततश्च यथेति**। अर्थपरत्वे सतीतिशब्दप्रयोगो व्यर्थ इत्यर्थः। प्रतीतिरस्तीति चेत् तस्या निरालम्बनत्वायोगाद् रजतमप्यस्त्येवेत्याशङ्क्याह— **प्रत्येत्येव हीति**। 'आदित्यं ब्रह्मेत्युपास्त' इत्यादावादित्यादीनां द्वितीयाश्रुत्योपासनाकर्मतया प्राधान्यावगमादपि ब्रह्मशब्दस्य प्रत्ययपरत्वमेवेत्याह— **वाक्यशेषोऽपीति**।

### *न्यायनिर्णयः*

फलदातृत्वात् तस्यैवादित्यादिधीभिरुपास्यतेति शङ्कते— **नन्विति**। किंच शास्त्रस्य स्वत एव प्रामाण्यान्न लौकिकन्यायापेक्षेत्याह— **न चेति**। ब्रह्मण एव फलदातृत्वेऽपि शास्त्रमादित्यादौ प्रतीके ब्रह्मधिया ध्येये तत्फलदमिति वा ब्रवीत्यादित्यादिधिया ब्रह्मण्युपास्येवेति शास्त्रार्थसंदेहे लोकानुसारेण निर्धारणमित्याह— **अत्रेति**। लौकिकन्यायस्य निश्चयहेतुत्वे विपक्षे दोषमाह— **तेनेति**। न केवलं लौकिकन्यायो निश्चायकः, किं त्वादित्यादिशब्दानां प्रथमश्रुतत्वेन मुख्यार्थत्वमपीत्याह— **प्राथम्यादिति**। ब्रह्मशब्दस्य धीपरत्वे युक्त्यन्तरमाह— **इतिपरत्वादिति**। तस्येतिपरत्वमेव स्फोरयति— **तथा हीति**। आदित्यादिशब्देषु वैलक्षण्यमाह— **शुद्धानिति**। अस्तु ब्रह्मशब्दस्येतिपरत्वमादित्यादिशब्दानां च शुद्धत्वं तथापि कथं दृष्टिपरत्वार्थपरत्वव्यवस्थेत्याशङ्क्याह— **ततश्चेति**। रजतशब्दस्यापि शुक्तिशब्दवदर्थपरत्वं चेदितिशब्दयोगो व्यर्थः स्यादित्यर्थः। प्रतीतिश्चेत् तस्या निरालम्बनत्वायोगादस्त्येव रजतमपीत्याशङ्क्याह— **प्रत्येत्येवेति**। प्रतीतेराभासत्वान्न योग्यमालम्बनमस्तीत्यर्थः। लोकसिद्धमर्थं प्रकृते योजयति— **एवमिति**। किं चादित्यादीनां द्वितीयाश्रुत्योपास्तिकर्मत्वेन प्राधान्यसिद्धेर्ब्रह्मशब्दस्य धीपरत्वमेवेत्याह— **वाक्येति**। उत्कृष्टनिकृष्टयोरुत्कृष्टमेवोपास्यं फलविशेषपरत्वाद्

**(छा.उ. ७।४।३) इति च। यत्तूक्तं ब्रह्मोपासनमेवात्रादरणीयं फलवत्त्वायेति। तदयुक्तम्। उक्तेन न्यायेनादित्यादीनामेवोपास्यत्वावगमात्। फलं त्वतिथ्याद्युपासन इव आदित्याद्युपासनेऽपि ब्रह्मैव दास्यति सर्वाध्यक्षत्वात्। वर्णितं चैतत् 'फलमत उपपत्तेः' (ब्र.सू. ३।२।३८) इत्यत्र। ईदृशं चात्र ब्रह्मण उपास्यत्वं यत् प्रतीकेषु तद्दृष्ट्यध्यारोपणं प्रतिमादिष्विव विष्ण्वादीनाम्।।५।।**

।।इति चतुर्थं ब्रह्मदृष्ट्यधिकरणम्।।

५।।आदित्यादिमत्यधिकरणम्।।सू. ६।।

## आदित्यादिमतयश्चाङ्ग उपपत्तेः।।६।।

**'य एवासौ तपति तमुद्गीथमुपासीत' (छा.उ. १।३।१), 'लोकेषु पञ्चविधं सामोपासीत' (छा.उ.**

### *शारीरकन्यायसंग्रहः*

**आदित्यादिमतयश्चाङ्ग उपपत्तेः।।६।।** कर्माङ्गानां क्रियासमवायात् क्रियात्मकानां फलसाधनतयोत्कृष्टत्वात्, 'असौ वा आदित्य उद्गीथः' इत्यादौ चरमश्रुतत्वाच्च पूर्वाधिकरणन्यायेनाङ्गदृष्टिविशिष्टानामादित्यादीनामुपास्यत्वे प्राप्ते, 'उद्गीथमुपासीत' 'सामोपासीत' इत्यादौ कर्माङ्गानामेवोपासनाकर्मत्वप्रतिपादिकया द्वितीयाश्रुत्या फलसाधनभूताङ्गेभ्यः फलभूतानामादित्यादीनामुत्कृष्टत्वादुत्कृष्ट-बुद्ध्या निकृष्टं वेदनीयमिति न्यायानुगृहीतया प्रथमश्रुताभिरप्यादित्यादिदृष्टिभिर्विशिष्टानि कर्माङ्गान्येवोपास्यतया विधीयन्ते, प्रथमश्रुतन्यायस्य श्रुतेर्दुर्बलत्वादित्युक्तम्।

### *प्रकटार्थविवरणम्*

द्वितीयपूर्वपक्षमनूद्य दूषयति— **यत्तूक्तमिति**। आदित्यादीनामेवोपास्यत्वसमर्पकद्वितीयाश्रुतिविरुद्धमनुमानमित्यर्थः। किं च फलदातृत्वमन्यथाऽपि सिद्धमित्याह— **फलं त्विति**। किंच नास्माभिः ब्रह्मणोऽत्यन्तमनुपास्यत्वमुच्यत इत्याह— **ईदृशं चात्रेति**। इति चतुर्थं ब्रह्मदृष्ट्यधिकरणम्।।

**आदित्यादिमतयश्चाङ्ग उपपत्तेः।।** विषयमनूद्य विशेषानुपलम्भात् संशयमाह— **य एवासौ तपतीति**। पूर्वाधिकरणवन्निर्णय-

### *भाष्यभावप्रकाशिका*

तर्हि कथं फलसिद्धिरिति, तत्राह— **फलन्त्विति**। द्वितीयेतिशब्दश्रुतिभ्यां निकृष्टमुत्कृष्टबुद्ध्या वेदनीयमिति न्यायोपबृंहिताभ्यां पूर्वोक्तानुमानस्य बाधादसञ्जातविरोधितया प्रथमश्रुतादित्यादय एव चरमश्रुततया सञ्जातविरोधात् प्रत्ययमात्रपरेण ब्रह्मशब्देन समर्पितब्रह्मदृष्टिविशिष्टा विशेषणतयोपास्यमानब्रह्मसामर्थ्यलब्धफलविशेषा उपास्या इत्यर्थः। कथं तर्हि ब्रह्मोपासनमिदमिति प्रसिद्धिरिति, तत्राह— **ईदृशं चेति**। इति चतुर्थं ब्रह्मदृष्ट्यधिकरणम्।।

**आदित्यादिमतयश्चाङ्ग उपपत्तेः।। लोकेष्विति**। 'पृथिवी हिंकारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधन'मिति

### *न्यायनिर्णयः*

राजादिवदित्युक्तमनुवदति— **यत्त्विति**। आदित्यादीनामेवोपास्यत्वार्पकद्वितीयाश्रुतिविरुद्धमनुमानमित्याह— **तदिति**। कथं तर्हि फलसिद्धिरित्याशङ्क्य हेतोरन्यथासिद्धिमाह—**फलं त्विति**। धर्मस्यैव फलदत्वात् कुतो ब्रह्मणस्तथात्वं, तत्राह— **वर्णितं चेति**। द्वितीयेतिशब्दश्रुतिभ्यामुत्कृष्टदृष्ट्या निकृष्टमुपास्यमिति न्यायानुगृहीताभ्यामुक्तानुमानभङ्गादसंजातविरोधित्वेन प्रथमश्रुता आदित्यादय एव चरमश्रुततया संजातविरोधात् प्रत्ययमात्रपरब्रह्मशब्देनार्पितब्रह्मदृष्टिविशिष्टा विशेषणतयोपास्यब्रह्मसामर्थ्यलब्धफलविशेषा ध्येया भवन्तीति भावः। कथं तर्हीदं ब्रह्मोपासनमिति प्रसिद्धिः, तत्राह— **ईदृशं चेति**।।५।। इति चतुर्थं ब्रह्मदृष्ट्यधिकरणम्।।

पूर्ववदुत्कर्षरूपविशेषानवधारणादनियमेन वा गीतित्वेन क्रियारूपोद्गीथादीनां फलसंनिकर्षेणोत्कर्षादादित्यादिषु तद्दृष्टिकरणे प्रथमनिर्दिष्टनामादित्यादिषु ब्रह्मदृष्टिवत् प्राथमिकादित्यादिषूद्गीथादिदृष्टिकरणे वा प्राप्ते प्रत्याह— **आदित्यादीति**। अङ्गाश्रितोपासनान्युदाहृत्य विशेषानुपलब्ध्या संशयमाह— **य एवेत्यादिना**। पृथिव्यग्न्यन्तरिक्षादित्यद्युसंज्ञकेषु लोकेषु हिंकारप्रस्तावोद्गीथप्रतिहारनिधनरूपं

**२।२।१), 'वाचि सप्तविधं सामोपासीत' (छा.उ. २।८।१), 'इयमेवर्गग्निः साम' (छा.उ. १।६।१), इत्येवमादिष्वङ्गावबद्धेषूपासनेषु संशयः– किमादित्यादिषूद्गीथादिदृष्टयो विधीयन्ते, किंवोद्गीथादिष्वेवादित्यादिदृष्टय इति। तत्रानियमो नियमकारणाभावादिति प्राप्तम्। न ह्यत्र ब्रह्मण इव कस्यचिदुत्कर्षविशेषोऽवधार्यते। ब्रह्म हि समस्तजगत्कारणत्वादपहतपाप्मत्वादिगुणयोगाच्चादित्यादिभ्य उत्कृष्टमिति शक्यमवधारयितुम्, न त्वादित्योद्गीथादीनां विकारत्वाविशेषात् किंचिदुत्कर्षविशेषावधारणे कारणमस्ति। अथवा नियमेनोद्गीथादिमतय आदित्यादिष्वध्यस्येरन्। कस्मात्? कर्मात्मकत्वादुद्गीथादीनां कर्मणश्च फलप्राप्तिप्रसिद्धेः। उद्गीथादिमतिभि-रुपास्यमाना आदित्यादयः कर्मात्मकाः सन्तः फलहेतवो भविष्यन्ति। तथा च 'इयमेवर्गग्निः साम' (छा.उ. १।६।१) इत्यत्र 'तदेतदेतस्यामृच्यध्यूढं साम' (छा.उ. १।६।१) इत्यृक्शब्देन पृथिवीं निर्दिशति सामशब्देनाग्निम्, तच्च पृथिव्यग्न्योर्ऋक्सामदृष्टिचिकीर्षायामवकल्पते, न ऋक्सामयोः पृथिव्यग्निदृष्टि-चिकीर्षायाम्। क्षत्तरि हि राजदृष्टिकरणाद् राजशब्द उपचर्यते, न राजनि क्षत्तृशब्दः। अपि च 'लोकेषु**

### *प्रकटार्थविवरणम्*

कारणाभावात् पूर्वपक्षमाह— **तत्रानियम इति**। कर्मरूपाणामुद्गीथादीनामुत्कर्षप्रतिभानात् पक्षान्तरमाह— **अथ वेति**। किंच सिद्धरूपादित्याद्यात्मना दृष्टा उद्गीथादयः फलहेतवः न भविष्यन्ति; अस्मत्पक्षे तु आदित्यादीनामपि फलहेतुत्वं भविष्यतीत्याह— **कर्मणश्चेति**। अनङ्गेष्वेवाङ्गमतिकर्तव्यतायां हेत्वन्तरमाह— **तथा चेयमेवेत्यादिना**। तदेतदग्न्याख्यं साम एतस्यां पृथिवीलक्षणायामृचि अध्यूढम् उपरि स्थितमिति पृथिव्यग्नौ[ग्न्योः] ऋक्सामशब्दप्रयोगान्यथानुपपत्त्या तत्र कर्माङ्गभूतऋक्सामाध्यास इत्यर्थः। सप्तमीश्रुतिबलादपि अनङ्गेषु अङ्गमतिक्षेप इत्याह— **अपि चेति**।

### *भाष्यभावप्रकाशिका*

श्रूयत इत्यर्थः। **सप्तविधमिति**। हिंकारः प्रस्ताव आदिः उद्गीथः प्रतिहारोपद्रवनिधनानि। विशेषानवधारणमेव दर्शयति— **ब्रह्म हीति**। इदानीं साक्षात् पूर्वपक्षमाह— **अथवा नियमेनेति**। उद्गीथादिकर्माङ्गानां क्रियासमवायात् क्रियाफलभूतानां फलसाधन-तयोत्कृष्टत्वादित्याह— **कर्मात्मकत्वादिति**। पृथिव्यग्न्योः ऋक्सामशब्दप्रयोगादप्येवमवगम्यत इत्याह— **तथा चेयमिति**। तदेव दृष्टान्तेनोपपादयति— **क्षत्तरि हीति**। यदि ऋचि पृथिवीदृष्टिः, साम्नि चाग्निदृष्टिर्विवक्षिता(नेति) तदा विपरीत एव प्रयोगः स्यादित्यर्थः। उपपत्त्यन्तरमाह— **अपि च लोकेष्विति**। अधिकरणनिर्देशेन लोकानां सामदृष्टिविषय[त्व]प्रतिपादनादित्यर्थः।

### *न्यायनिर्णयः*

पञ्चप्रकारं सामोपास्यं, लोकदृष्ट्या तदुपास्यमित्यर्थः। **वाचि सप्तविधमिति**। हिंकारप्रस्तावाद्युद्गीथप्रतिहारोपद्रवनिधनरूपं सप्तप्रकारं साम वाच्युपास्यं, वाग्दृष्ट्या सामोपास्यमित्यर्थः। प्रासङ्गिकाङ्गावबद्धोपासनेषु स्वतन्त्रफलेष्वनङ्गदृष्ट्याऽनुष्ठाननिरूपणात् पादादिसंगतिः। पूर्वपक्षे दृष्टिकरणस्य फलवत्त्वम्। सिद्धान्तेऽपि तदविरुद्धं सिध्यतीति स्वीकृत्य पूर्वपक्षमाह— **तत्रेति**। नियमकारिणः शास्त्रस्याभावादित्युक्तं व्यनक्ति— **न हीति**। वैधर्म्यदृष्टान्तं स्पष्टयति— **ब्रह्मेति**। अङ्गानङ्गयोरपि कस्यचिद्विशेषो गम्यतामित्याशङ्क्याह— **न त्विति**। कर्मरूपाणामुद्गीथादीनामुत्कर्षभानमुपेत्य साक्षात्पूर्वपक्षमाह— **अथवेति**। नियमहेतुं पृच्छति— **कस्मादिति**। उद्गीथादिकर्माङ्गानां क्रियासमवायात् फलसाधनतयोत्कृष्टत्वादिति हेतुमाह— **कर्मेति**। किंच सिद्धरूपादित्याद्यात्मना चेदुद्गीथादयो दृष्टास्तदा न फलहेतवः। यदा तूद्गीथादिदृष्ट्याऽऽदित्यादयो दृष्टास्तदा तेषामपि फलहेतुत्वं स्यादित्याह— **उद्गीथादीति**। अनङ्गेष्वेवाङ्गमतिकर्तव्यत्वं पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगादपि भातीत्याह— **तथा चेति**। तदेतदग्न्याख्यं सामैतस्यां पृथ्वीलक्षणायामृच्यध्यूढमुपरिश्रितमिति यावत्। उक्तमेव दृष्टान्तेन स्पष्टयति— **क्षत्तरीति**। ऋचि पृथिवीदृष्टिः साम्नि चाग्निदृष्टिरिष्टा चेत् तदा प्रयोगवैपरीत्यं स्यात्। तस्मात् पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगानुपपत्त्या तत्र कर्माङ्गभूतर्क्सामाध्याससिद्धिरित्यर्थः। इतश्चानङ्गेष्वङ्गमतिः कर्तव्येत्याह— **अपि चेति**।

**पञ्चविधं सामोपासीत' (छा.उ. २।२।१) इत्यधिकरणनिर्देशाल्लोकेषु सामाध्यसितव्यमिति प्रतीयते। 'एतद्गायत्रं प्राणेषु प्रोतम्' (छा.उ. २।११।१) इति चैतदेव दर्शयति। प्रथमनिर्दिष्टेषु चादित्यादिषु चरमनिर्दिष्टं ब्रह्माध्यस्तम्– 'आदित्यो ब्रह्मेत्यादेशः' (छा.उ. ३।१९।१) इत्यादिषु। प्रथमनिर्दिष्टाश्च पृथिव्यादयश्चरमनिर्दिष्टा हिंकारादयः 'पृथिवी हिंकारः' (छा.उ. २।२।१) इत्यादिश्रुतिषु। अतोऽनङ्गेष्वादित्यादिष्वङ्गमतिक्षेप इति।**

**एवं प्राप्ते ब्रूमः– आदित्यादिमतय एवाङ्गेषूद्गीथादिषु क्षिप्येरन्। कुतः? उपपत्तेः। उपपद्यते ह्येवमपूर्वसंनिकर्षादादित्यादिमतिभिः संस्क्रियमाणेषूद्गीथादिषु कर्मसमृद्धिः। 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा.उ. १।१।१०) इति च विद्यायाः कर्मसमृद्धिहेतुत्वं दर्शयति। भवतु कर्मसमृद्धिफलेष्वेवम्, स्वतन्त्रफलेषु तु कथम् 'य एतदेवं विद्वाँल्लोकेषु पञ्चविधं सामोपास्ते' (छा.उ. २।२।३) इत्यादिषु? तेष्वप्यधिकृताधिकारात् प्रकृतापूर्वसंनिकर्षेणैव फलकल्पना युक्ता, गोदोहनादिनियमवत्।**

***प्रकटार्थविवरणम्***

पूर्वाधिकरणन्यायमप्युपोद्बलकमाह— **प्रथमनिर्दिष्टेषु चेति।**

सिद्धान्तसूत्रमवतारयति— **एवं प्राप्ते ब्रूम इति।** यथा प्रोक्षणादिना व्रीह्यादिषु संस्कृतेषु कर्मापूर्वं निष्पद्यते, तथा प्रकृतकर्मापूर्वसन्निधानादादित्यादिमतिभिः संस्क्रियमाणेषु उद्गीथादिषु कर्मसमृद्धिरुपपद्यते। अतः कर्मसमृद्धिफलोपपत्तेरङ्गेषु अनङ्गमतिक्षेप इत्यर्थः। ननु उपासनानां न कर्मसमृद्धिः फलमित्याशङ्क्याह— **यदेव विद्ययेति।** यत्र कर्मसमृद्धिः फलं श्रूयते, तत्राङ्गेषु मतिक्षेपो भवतु, मतिसंस्कृतानां सातिशयकर्मजनकत्वात्; स्वतन्त्रफलेषु तु कथं मतिक्षेप इति न ज्ञायत इत्याशङ्कार्थः। **तेष्वपीति।**

***भाष्यभावप्रकाशिका***

पूर्वाधिकरणसिद्धान्तन्यायेनाप्येतदेव युक्तमित्याह— **प्रथमनिर्दिष्टेष्विति।**

सिद्धान्तमुपक्रमते— **आदित्यादिमतय एवेति।** आदित्यादीनामकार्यात्मकत्वादुद्गीथादिमतीनां तत्र वैयर्थ्यं विद्यया संस्क्रियमाणतया वीर्यवत्त्वायोगादादित्यादिविद्यया तूद्गीथादिकर्मसु कार्येषु वीर्यवत्तरत्वं भवतीत्यादित्यादिमतीनामुद्गीथादिषु संस्कारत्वेनोपयोग उपपद्यत इत्यर्थः। यत्र कर्मण एव फलं भवतीति तत्रैतदुपपद्यते। यत्र तु गुणात् फलं तत्र गुणस्य सिद्धत्वेनाकार्यत्वाद् विद्यया करोतीत्ययोगात् विद्यायाः क उपयोग इति चोदयति— **भवतु कर्मसमृद्धिफलेष्विति।** गुणस्यापि सिद्धस्वभावत्वे फलासाधकत्वात् प्रकृतापूर्वसंबन्धिन एव फलोत्पादकत्वम्, अतस्तस्य क्रियमाणत्वेन विद्यया वीर्यवत्तरत्वमुपपन्नमिति परिहरति— **तेष्वपीति।**

***न्यायनिर्णयः***

सप्तम्या लोकानां सामधीविषयत्वनिर्देशादित्याह— **अधिकरणेति।** अन्यत्रापि सप्तमीश्रुतेरनङ्गेष्वङ्गधीर्भातीत्याह— **एतदिति।** पूर्वाधिकरणसिद्धान्तन्यायेनाप्यनङ्गेष्वङ्गदृष्टिः शिष्टेत्याह— **प्रथमेति।**

आदित्यादावुद्गीथादिधीकरणात् तस्य फलवत्त्वसिद्धिरिति प्राप्तमनूद्य सिद्धान्तयति— **एवमिति।** अनङ्गेष्वङ्गमतिरुक्ता, तथा चान्यथा नियमो निर्बीजत्वादयुक्त इति शङ्कते— **कुत इति।** नियमहेतुमवतार्य व्याकरोति— **उपपत्तेरिति।** यथा प्रोक्षणादिना व्रीह्यादिषु संस्कृतेषु कर्मापूर्वमुत्पद्यते तथा प्रकृतकर्मापूर्वसंनिधानादुद्गीथादीनामादित्यादिमतिभिस्तेषु संस्क्रियमाणेषु कर्मसमृद्धिरुपपद्यते, तथा च कर्मसमृद्धिफलोपपत्तेरङ्गेष्वनङ्गमतिक्षेप इत्यर्थः। कर्मसमृद्धिरुपास्तिफलमित्येतदेवासिद्धमित्याशङ्क्याह— **यदेवेति।** यत्र कर्मसमृद्धिः फलं श्रूयते तत्राङ्गेष्वनङ्गमतिक्षेपोऽस्त्वादित्यादिमतिसंस्कृतानामङ्गानां कर्मातिशयहेतुत्वात्। स्वतन्त्रफलेषु पुनरुपासनेषु कथं मतिक्षेपः स्यादिति विवेको नास्तीति शङ्कते— **भवत्विति।** स्वतन्त्रफलेष्वपि तेषु प्रकृतकर्माङ्गव्यपाश्रयेणाङ्गेष्वेव मतिकरणात् फलकल्पना युक्ता, कर्माधिकृतस्यैव तदङ्गसंबन्धेषूपासनेष्वधिकारात्। यथाऽधिकृताधिकारेषु गोदोहनादिषु स्वतन्त्रफलेष्वपि

**फलात्मकत्वाच्चादित्यादीनामुद्गीथादिभ्यः कर्मात्मकेभ्य उत्कर्षोपपत्तिः। आदित्यादिप्राप्तिलक्षणं हि कर्मफलं शिष्यते श्रुतिषु। अपि च 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा.उ. १।१।१), 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' (छा.उ. १।१।१०) इति चोद्गीथमेवोपास्यत्वेनोपक्रम्यादित्यादिमतीर्विदधाति। यत्तूक्तमुद्गीथादिमतिभि-रुपास्यमाना आदित्यादयः कर्मभूयं भूत्वा[१] फलं करिष्यन्तीति। तदयुक्तम्। स्वयमेवोपासनस्य कर्मत्वात् फलवत्त्वोपपत्तेः। आदित्यादिभावेनापि च दृश्यमानानामुद्गीथादीनां कर्मात्मकत्वानपायात्। 'तदेतदेतस्यामृच्यध्यूढं साम' (छा.उ. १।६।१) इति तु लाक्षणिक एव पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगः। लक्षणा च यथासंभवं संनिकृष्टेन विप्रकृष्टेन वा स्वार्थसंबन्धेन प्रवर्तते। तत्र यद्यप्यृक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षा, तथापि**

### *प्रकटार्थविवरणम्*

स्वतन्त्रफलेष्वप्युपासनेषु प्रकृतकर्मापूर्वाङ्गव्यपाश्रयेणैव तेष्वेव मतिक्षेपकरणेन फलकल्पना युक्ता, कर्माङ्गाधिकृतस्यैव तत्संबद्धो-पासनेष्वधिकारात्। यथाऽधिकृताधिकारेषु गोदोहनादिषु स्वतन्त्रफलसाधनेष्वपि प्रकृतकर्माङ्गाश्रयणेनैव फलम्, तद्वदित्यर्थः। यत् प्रथमपूर्वपक्षे उत्कर्षावधारणं नास्तीति, तत्राह— **फलात्मकत्वाच्चेति**। उपक्रमानुसारेणाप्युद्गीथादिष्वेव मतिक्षेप इत्याह— **अपि चेति**। एतस्यैवाक्षरस्य उद्गीथस्य उप सामीप्येन व्याख्यानम् एवंगुणकमुपासनमेवंफलकं चेति कथनं प्रस्तुतमित्यर्थः। द्वितीयपूर्वपक्षोक्तं दूषयति— **यत्तूक्तमित्यादिना। कर्मभूयं भूत्वा** कर्मभावमापद्य। यच्चोक्तं पृथिव्यग्न्योः ऋक्सामशब्दप्रयोगान्यथानुपपत्त्या तद्दृष्टिरिति, तत्राह— **तदेतदस्यामिति**। पृथिव्यग्न्योः ऋक्सामाध्यास(न)मन्तरेणापि तत्र लाक्षणिकशब्दप्रयोगो भविष्यतीत्यर्थः। ननु लक्षणाऽपि निर्निमित्ता न संभाव्यत इत्याशङ्क्याह— **लक्षणा चेति**। 'शोणस्तिष्ठति' इत्यत्र गुणवाचकेन शोणशब्देन गुणी लक्ष्यत इति सन्निकृष्टलक्षणा; 'अग्निरधीतेऽनुवाकम्' इत्यत्र अग्निशब्दस्तीव्रत्वान्माणवकं लक्षयतीति विप्रकृष्टलक्षणा; न हि साक्षादग्निशब्दस्य माणवकसंबन्धोऽस्तीत्यर्थः। ततः प्रकृते किमायातमित्याशङ्क्याह— **तत्र यद्यपीति**। तथापि तयोरेव पृथिव्यग्न्योरेव एष

### *भाष्यभावप्रकाशिका*

उत्कृष्टत्वमप्यादित्यादीनामुद्गीथाद्यपेक्षयाऽस्तीत्याह— **फलात्मकत्वाच्चेति**। द्वितीयानिर्देशादपि प्राधान्यमुद्गीथादीनामवगम्यत इत्याह— **अपि चोमिति**। ननु सिद्धरूपैरादित्यादिभिरध्यस्तैः साध्यरूपत्वं कर्मणामभिभूयेतेति, तत्राह— **आदित्यादिभावेनेति**। उद्गीथादिष्वादित्यादि-दृष्टीनां माणवक इवाग्निदृष्टेर्गौणत्वान्नाभिभव इत्यर्थः। यदुक्तम् पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगादिति, तत्राह— **तदेतदेतस्यामिति**। अन्यथाऽपि लक्षणोपपत्तौ पृथिव्यग्नौ.... न कल्पनीय इत्यर्थः। ननु सं....। ऋक्सामयोः पृथिव्या अग्नेश्च वास्तवसंबन्धस्य

### *न्यायनिर्णयः*

प्रकृतकर्माङ्गावष्टम्भेनैव फलमिष्टम्, तथेहापीति परिहरति— **तेष्वपीति**। यत्त्वादित्यादीनामुद्गीथादीनां चोत्कर्षविशेषानवधारणमिति, तत्राह— **फलेति**। तदेव स्फुटयति— **आदित्यादीति**। उपक्रमानुसारादप्यादित्यादिधीरुद्गीथादिषु कार्येत्याह— **अपि चेति**। द्वितीयां पूर्वपक्षोपपत्तिमनुभाष्य दूषयति— **यदित्यादिना**। कर्मभूयं भूत्वा कर्मभावमनुभूयेति यावत्। सिद्धरूपैरादित्यादिभिरध्यस्तैः साध्यरूपत्वं कर्मणोऽभिभूयेतेत्याशङ्क्याह— **आदित्यादीति**। माणवकेऽग्निधीवदुद्गीथादिष्वादित्यादिधियां गौणत्वादनभिभवा-दङ्गेष्वनङ्गधीरविरुद्धेत्यर्थः। यत्तु पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगानुपपत्त्या पृथिव्यादावृगादिधीरिति, तत्राह— **तदेतदिति**। तद्दृष्टिमन्तरेणापि लक्षणोपपत्तौ पृथिव्यादावृगाद्यध्यासो न कल्पनीय इत्यर्थः। संबन्धाभावे कथं लक्षणेत्याशङ्क्याह— **लक्षणा चेति**। 'शोणो धावती'त्यत्र गुणवाचिशोणशब्देन गुणी लक्ष्यत इति संनिकृष्टा लक्षणा, 'अग्निरधीतेऽनुवाक'मित्यत्राग्निशब्दस्तीव्रत्वादिगुणं लक्षयित्वा माणवकं लक्षयतीति विप्रकृष्टा। न हि साक्षादेवाग्निशब्दार्थस्य माणवकसंबन्धोऽस्तीत्यर्थः। लक्षणाद्वैविध्येऽपि प्रकृते किं जातं, तदाह— **तत्रेति**। ऋक्सामयोः पृथिव्यग्न्योश्च संनिकृष्टवास्तवसंबन्धाभावेऽपि विप्रकृष्टेन पृथिव्यग्निबुद्धिसंबन्धेन तयोः संबन्धात्

१. 'गत्वा' इति पा.।

**प्रसिद्धयोर्ऋक्सामयोर्भेदेनानुकीर्तनात् पृथिव्यग्न्योश्च संनिधानात्तयोरेवैष ऋक्सामशब्दप्रयोग ऋक्सामसंबन्धादिति निश्चीयते। क्षत्तृशब्दोऽपि हि कुतश्चित्कारणाद् राजानमुपसर्पन् न निवारयितुं पार्यते। 'इयमेवर्क्' (छा.उ. १।६।१) इति च यथाक्षरन्यासमृच एव पृथिवीत्वमवधारयति। पृथिव्या ह्युक्त्वेऽवधार्यमाण इयमृगेवेत्यक्षरन्यासः स्यात्। 'य एवं विद्वान् साम गायति' (छा.उ. १।७।९) इति चाङ्गाश्रयमेव विज्ञानमुपसंहरति, न पृथिव्याद्याश्रयम्। तथा 'लोकेषु पञ्चविधं सामोपासीत' (छा.उ. २।२।१) इति यद्यपि सप्तमीनिर्दिष्टा लोकास्तथापि साम्न्येव तेऽध्यस्येरन्, द्वितीयानिर्देशेन साम्न उपास्यत्वावगमात्। सामनि हि लोकेष्वध्यस्यमानेषु**

### *प्रकटार्थविवरणम्*

'तदेतदेतस्यामृच्यध्यूढं साम' इति ऋक्सामशब्दप्रयोग इति योजना। मुख्यासंभवे हेतुः— प्रसिद्धयोः ऋक्सामयोः 'तस्मादृच्यध्यूढं साम गीयते' इति भेदानुकीर्तनात् पौनरुक्त्यापातात् 'तदेतदेतस्यामृचि' इत्यत्र ग्रहणं न संभवतीत्यर्थः। पृथिव्यग्न्योश्चाध्यस्तत्वेन ऋक्सामसन्निधानाल्लक्षणाहेतुः संबन्धोऽस्तीत्यर्थः। ननु ऋचि पृथिवीदृष्टिः, साम्नि चाग्निदृष्टिरित्येव...ता[रित्येतावता] संबन्धेन पृथिव्यग्न्योः ऋक्सामशब्दप्रयोगो लक्षणया [न] घटते, क्षत्तरि राजदृष्टिकरणेऽपि राजनि क्षत्तृशब्दप्रयोगप्रसङ्गादित्याशङ्क्याह— **क्षत्तृशब्दोऽपीति**। राजाऽपि यदा क्षत्तुः सूतस्य कर्माचरति तदा [1]तत्क्षत्तृशब्दो लक्षणया प्रयुज्यत एव; सदा प्रयोगाभावस्तु न दूषणम्, न हि प्रवृत्तिनिमित्तसद्भावमात्रेण पङ्कजादिशब्दः [2]सर्वत्र प्रयुज्यत इति भावः। इतोऽप्यृगादिष्वेव पृथिव्यादिदृष्टिः कर्तव्येत्याह— **इयमेवर्गिति चेति**। यच्चोक्तं सप्तमीप्रयोगादनङ्गेष्वेवाङ्गदृष्टिरिति, तत्राह— **तथा लोकेष्विति**। उत्कृष्टदृष्टिर्निकृष्टे

### *भाष्यभावप्रकाशिका*

सन्निकृष्टस्याभावेऽपि पृथिव्यग्निबुद्धिसंबन्धेन विप्रकृष्टेन ऋक्सामयोः संबन्धात् तच्छब्दाभ्यां पृथिव्यग्न्योर्लक्षणेत्यर्थः। **भेदेनानुकीर्तनादिति**। ऋच्यध्यूढं हि साम गीयत इति प्रसिद्धयोः पृथगेव निर्देशादनयोः ऋक्सामशब्दयोर्लक्षणया पृथिव्यग्निविषयत्वमध्याससंबन्धादित्यर्थः। तदुक्तं दृष्टान्तं विघटयति— **क्षत्तृशब्दोऽपीति**। अक्षरन्यासालोचनयाऽप्येवमङ्गीकरणीयमित्याह— एतमेव...र्गग्निरिति(?)। एतदेव व्यतिरेकमुखेन दर्शयति— **पृथिव्या हीति**। ऋगनुवादेन पृथिवीत्वं विधीयत इत्यवधारणसामर्थ्यादप्येवमित्याह— **य एवं विद्वानिति**। यदुक्तमधिकरणनिर्देशादुपासनाविषयत्वमवगम्यत इति, तत्राह— **तथा लोकेषु पञ्चविधमिति**। यदि सामधीर्लोकेष्वध्यस्येत, तदा साम्नेति तृतीयार्थे द्वितीयाश्रुतिः परिणेया, लोकेष्विति सप्तमी द्वितीयार्थे कथंचिन्नेया। तथा सति सप्तम्या उभयथाऽपि कल्पनीयार्थत्वात् कल्पनालाघवात् यथाश्रुति द्वितीयार्थानुरोधाय तृतीयार्थे सप्तमी व्याख्यातव्या। तेन पृथिव्यादिबुद्ध्या

### *न्यायनिर्णयः*

तच्छब्दाभ्यां तल्लक्षणा युक्तेत्यर्थः। तथापि तयोरेव पृथिव्यग्न्योरेष तदेतदेतस्यामृच्यध्यूढं सामेत्यृक्सामशब्दप्रयोग इति योजना। मुख्यासंभवे हेतुमाह— **प्रसिद्धयोरिति**। ऋच्यध्यूढं हि सामेति प्रसिद्धयोः पृथगुक्तेः 'तदेतदेतस्यामि'त्यत्रापि तयोरेवोक्तौ पौनरुक्त्यात् पृथिव्यग्न्योश्चाध्यस्तऋक्सामसंनिधानादृक्सामशब्दयोर्लक्षणया पृथिव्यग्न्यर्थतेत्यर्थः। ऋचि पृथिवीधीः साम्नि चाग्निधीरित्येतावता संबन्धेन पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगो लाक्षणिको नोपपद्यते; क्षत्तरि राजधीकरणेऽपि राजनि क्षत्तृशब्दप्रयोगादर्शनादित्युक्तमित्याशङ्क्याह— **क्षत्त्रिति**। यदा राजाऽपि क्षत्तुः सूतस्य रथनयनादि कर्माचरति तदा तत्र क्षत्तृशब्दो लक्षणया प्रयुज्यत एव। न च सति निमित्ते प्रयोगस्यावश्यकत्वं पङ्कजादिशब्दे व्यभिचारादिति भावः। ऋगादावेव पृथिव्यादिधीरित्यत्र हेत्वन्तरमाह— **इयमेवेति**। एतदेव व्यतिरेकद्वारा स्फोरयति— **पृथिव्येति**। ऋगनुवादेन पृथिवीत्वं विधेयमित्यवधारणसामर्थ्यादधिगतमित्यर्थः। इतश्चाङ्गेष्वनङ्गधीरित्याह— **य एवमिति**। यत्त्वधिकरणनिर्देशादुपास्तिविषयत्वं लोकानामिति, तत्राह— **तथेति**। यदि सामधीर्लोकेष्वारोप्येत तदा साम्नेति तृतीयार्थे द्वितीयाश्रुतिः परिणेया, लोकेष्विति च सप्तमी द्वितीयार्थे कथंचिन्नेया, तथा सत्युभयथाऽपि सप्तम्याः कल्प्यार्थत्वात्

---

१. 'तत्र क्षत्तृशब्दः' इति पाठो युक्तः। २. सर्वत्र = पद्मादन्यत्र कुमुदादौ।

**साम लोकात्मनोपासितं भवति। अन्यथा पुनर्लोकाः सामात्मनोपासिताः स्युः। एतेन 'एतद्गायत्रं प्राणेषु प्रोतम्' (छा.उ. २।११।१) इत्यादि व्याख्यातम्। यत्रापि तुल्यो द्वितीयानिर्देशः– 'अथ खल्वमुमादित्यं सप्तविधं सामोपासीत' (छा.उ. २।९।१) इति, तत्रापि 'समस्तस्य खलु साम्न उपासनं साधु' (छा.उ. २।१।१) 'इति तु पञ्चविधस्य' (छा.उ. २।७।२), 'अथ सप्तविधस्य' (छा.उ. २।८।१) इति च साम्न एवोपास्यत्वोपक्रमात् तस्मिन्नेवादित्याद्यध्यासः। एतस्मादेव च साम्न उपास्यत्वावगमात् 'पृथिवी हिंकारः' (छा.उ. २।२।१) इत्यादिनिर्देशविपर्ययेऽपि हिंकारादिष्वेव पृथिव्यादिदृष्टिः। तस्मादनङ्गाश्रया आदित्यादि-मतयोऽङ्गेषूद्गीथादिषु क्षिप्येरन्निति सिद्धम्।।६।।**

।।इति पञ्चममादित्यादिमत्यधिकरणम्।।

### *प्रकटार्थविवरणम्*

कर्तव्येति लौकिकन्यायानुगृहीतया द्वितीयाश्रुत्या सप्तमी तृतीयार्थे परिणेया। गायत्रं नाम साम प्राणात्मनोपासीतेत्यर्थः। यत्र तर्हि अङ्गानङ्गयोः द्वितीयानिर्देशः तुल्यस्तत्र कथं निर्णय इत्याशङ्क्याह— **यत्रापीति**। **सप्तविधमिति**। हिङ्कारः प्रस्तावः आदिरुद्गीथः प्रतिहार उपद्रवो निधनमिति। समस्तस्यावयविनः साम्न उपासनं साधुगुणकमुपक्रम्य मध्ये च लोकात्मना पञ्चविधं हिङ्कारप्रस्तावोद्गीथप्रतिहार-निधनलक्षणमुपासीतेति प्रस्तुतम्। 'इति तु पञ्चविधस्य' इत्युपसंहृत्य पुनः 'अथ सप्तविधस्य' इत्युक्तम्। एवं पञ्चविधं सप्तविधं च समस्तसामोपास्यत्वेन प्रक्रान्तमित्यर्थः। यत्तूक्तं पूर्वाधिकरणन्यायेन प्रथमश्रुते चरमश्रुतमध्यस्यत इति, तत्राह— **एतस्मादेव चेति**। हिङ्कारोद्देशेन पृथिवीत्वविधाने हिङ्कारः पृथिवीति निर्देशो युक्तः; तस्य वैपरीत्येऽपि प्रकरणात् साम्न उपास्यत्वावगमात् हिङ्कारादिष्वेव पृथिव्यादिदृष्टिः कर्तव्येत्यर्थः। इति पञ्चममादित्यादिमत्यधिकरणम्।।

### *भाष्यभावप्रकाशिका*

हिंकारप्रस्तावोद्गीथप्रतिहारनिधनप्रकारं पञ्चविधं सामोपास्यमिति निश्चीयत इत्यर्थः। ननु यत्रोभयत्र द्वितीयाश्रुतिस्तत्र कथं निर्णय इति, तत्राह— **यत्रापीति**। षष्ठ्या साम्न एवोपासनाकर्मत्वावगमादित्यर्थः। हिंकारानुवादेन पृथिवीदृष्टिविधाने हिंकारः पृथिवीति यद्यपि निर्देशः प्राप्नोति तथापि पूर्वोक्तन्यायान्निर्देशविपर्ययेऽपि तथैवाभ्युपगन्तव्यमित्याह— **एतस्मादेव चेति**। प्रथमश्रुतानुसारेण चरमश्रुतं नेतव्यमित्ययमपि न्यायो दुर्बलत्वाद् द्वितीयाश्रुत्या बाध्यत इत्यभिप्रेत्योपसंहरति— **तस्मादिति**। इति पञ्चममादि-त्यादिमत्यधिकरणम्।।

### *न्यायनिर्णयः*

कल्पनालाघवाद् यथाश्रुतद्वितीयार्थानुरोधाय तृतीयार्थे सप्तमी व्याख्येया। तेन पृथिव्यादिलोकबुद्ध्या हिंकारादिसामोपास्यम्। ततः सप्तमी पूर्वपक्षे द्वितीयार्था, सिद्धान्ते तृतीयार्थेत्युभयथा भञ्जनीया। पूर्वपक्षे तु सामगतद्वितीयाभङ्गोऽधिक इत्यर्थः। पृथिव्याद्यात्मना हिंकारादेरुपास्यत्वोपदेशेन गायत्रस्यापि प्राणात्मनोपास्यत्वमुक्तमित्यतिदिशति— **एतेनेति**। यत्र द्वितीयासप्तम्यौ तत्रास्तु श्रुतिद्वयभङ्गगौरवपरिहारार्थमङ्गेष्वनङ्गधीः। यत्र तूभयत्र द्वितीया तत्रान्यतरश्रुतिमात्रभङ्गस्य पूर्वपक्षसिद्धान्तयोस्तुल्यत्वात् कथं नियमसिद्धिरित्याशङ्क्याह— **यत्रापीति**। छान्दोग्ये हि समस्तस्य सप्तविधस्य पञ्चविधस्य च साम्नो ध्यानं साधुगुणकमित्युपक्रम्य 'लोकेषु पञ्चविधं सामोपासीते'ति 'पृथिवी हिंकारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधन'मित्यादिना पञ्चविधस्य साम्नो ध्यानमुक्त्वा 'इति तु पञ्चविधस्ये'त्युपसंहृत्य 'अथ तु सप्तविधस्ये'त्युपक्रम्य 'वाचि सप्तविधं सामोपासीते'त्यादिना सप्तविधस्याप्युपासनमुक्तम्। एवं च 'समस्तस्य साम्न उपासनं साध्वि'ति साम्न एवोपास्यत्वश्रुतेरिति तु पञ्चविधस्य साम्न उपासनं साध्विति पञ्चविधस्यापि तस्योपास्यत्वश्रुतेः साम्न्येवादित्याद्यध्यासः सिध्यतीत्यर्थः। यत्तु पूर्वाधिकरणन्यायेन प्रथमश्रुते चरमश्रुतमध्यस्यत इति, तत्राह— **एतस्मादिति**। हिंकारोद्देशेन पृथिवीत्वविधाने 'हिंकारः पृथिवी'ति निर्देशो युक्तस्तस्य वैपरीत्येऽपि साम्नोऽधिकाराद् ध्येयत्वावगमादङ्गेषु हिंकारादिष्वेवानङ्गपृथिव्यादिदृष्टिः कार्येत्यर्थः। प्रथमश्रुत्यनुसाराच्चरमश्रुतं नेयमिति न्यायोऽपि द्वितीयाश्रुत्या बाध्यो दुर्बलत्वादिति मत्वोपसंहरति— **तस्मादिति**।।६।। इति पञ्चममादित्यादिमत्यधिकरणम्।।

६।।आसीनाधिकरणम्।।सू. ७-१०।।

## आसीनः संभवात्।।७।।

**कर्माङ्गसंबद्धेषु तावदुपासनेषु कर्मतन्त्रत्वान्नासनादिचिन्ता। नापि सम्यग्दर्शने, वस्तुतन्त्रत्वाद्विज्ञानस्य। इतरेषु तूपासनेषु किमनियमेन तिष्ठन्नासीनः शयानो वा प्रवर्तेतोत नियमेनासीन एवेति चिन्तयति। तत्र मानसत्वादुपासनस्यानियमः शरीरस्थितेरिति।**

**एवं प्राप्ते ब्रवीति– आसीन एवोपासीतेति। कुतः? संभवात्। उपासनं नाम समानप्रत्ययप्रवाहकरणम्। न च तद् गच्छतो धावतो वा संभवति, गत्यादीनां चित्तविक्षेपकत्वात्। तिष्ठतोऽपि देहधारणे व्यापृतं मनो**

*शारीरकन्यायसंग्रहः*

**आसीनः संभवात्।।७।। ध्यानाच्च।।८।। अचलत्वं चापेक्ष्य।।९।। स्मरन्ति च।।१०।।** मनःशरीरयोः भिन्नत्वान्मनोव्यापारमुपासनं प्रति शरीरव्यापारस्यानुपकारित्वात् यया कयाचिदवस्थया वर्तमानेऽपि शरीरे मानसमुपासनं सुगममिति प्राप्ते, मनःशरीरयोः बहिःप्रवृत्तिनिवृत्त्योः एकयोगक्षेमत्वात्, शरीरेऽनवस्थिते मनोऽनवस्थायाः प्रत्यक्षत्वात्, आसीनेऽचलावयवे शरीरे प्रतिष्ठितेन मनसा अनङ्गाश्रितान्युपासनानि कर्तव्यानीत्युक्तम्।

*प्रकटार्थविवरणम्*

**आसीनः संभवात्।।** एवं तावत् परापरोपासनेषु चिन्तनप्रकारमनुचिन्त्य आसनादि चिन्तयितुमुपक्रमते। तत्राप्यसन्दिग्धमङ्ग-[मंश]मनूद्य सन्देहमाह— **कर्माङ्गेत्यादिना**। उपासनमनुष्ठेयमवगम्यते। अनुष्ठेयं च किंचित् तिष्ठताऽनुष्ठीयते, किंचिदुपविष्टेनेत्यनेकधा दर्शनात् संशयः। मनःशरीरयोर्भिन्नत्वात् मनोव्यापारमुपासनं प्रति शरीरस्यानुपकारकत्वाद् ययाकयाचिदवस्थया वर्तमाने शरीरे मानसमुपासनं सुगमम्। अतः पूर्वाधिकरणोक्तादित्यादिदृष्टिनियमवदासननियमो नास्तीत्याह— **तत्रेति**। शरीरेऽनवस्थिते मनोऽनवस्थतायाः प्रत्यक्षसिद्धत्वादासीनेऽचलावयवे प्रतिष्ठितेन मनसाऽनङ्गाश्रितान्युपासनानि कर्तव्यानीति सिद्धान्ताशयः।

*भाष्यभावप्रकाशिका*

**आसीनः संभवात्।।** मनश्शरीरयोर्भिन्नत्वाच्छरीरव्यापारस्य मनोव्यापारमुपासनं प्रत्यनुपकारित्वादासीनेन तिष्ठता वा यथाकथंचिदुपासनमनुष्ठेयम्, आसीनस्य तिष्ठतो वा विहितकर्माङ्गसंबन्ध्युपासनेभ्योऽन्यत्रेति पूर्वपक्षं दर्शयति— **तत्र मानसत्वादिति**। संभवं दर्शयितुमुपासनशब्दार्थं दर्शयति— **उपासनं नामेति**। इदानीं तदासीनस्यैवानुष्ठातुं शक्यमित्याह— **न च तदिति**।

*न्यायनिर्णयः*

अङ्गाश्रितोपासनेष्वासीनकर्मतानियमाभाववदितरोपासनास्वपि तन्नियमाभावमाशङ्क्याह— **आसीन इति**। विषयं परिशिनष्टि— **कर्मेति**। आदिपदेन स्थितिशयने गृह्येते। सम्यग्दर्शनशब्देन श्रवणाद्यभ्यासवासितमनःसहकृतवाक्यकृतसाक्षात्कारो निरुच्यते। अङ्गोपासनेभ्यः सम्यग्दर्शनाच्चातिरिक्तान्युपासनानि विषयीकृत्यानेकधाऽनुष्ठानदृष्टेः संशयमाह— **इतरेष्विति**। शास्त्रीयेषु प्रस्तुतोपासनेष्वनुष्ठानविशेषचिन्तया पादादिसंगतिः। पूर्वपक्षे कर्माङ्गानाश्रितोपासनेषु दैहिकनियमासिद्धिः। सिद्धान्ते ध्यानस्य मनोव्यापारत्वेऽपि देहानवस्थाने मनोऽनवस्थानात् तेषु तन्नियमसिद्धिरिति मत्वा पूर्वपक्षयति— **तत्रेति**। मनोदेहयोर्भिन्नत्वान्मनोव्यापारमुपासनं प्रति देहव्यापारस्यानुपकारित्वादासीनेन तिष्ठता वा यथाकथंचिदनुष्ठेयानि प्रकृतान्युपासनानीत्यर्थः।

अनङ्गाश्रितोपासनानां यथाकथंचिदनुष्ठानमिति पक्षमनूद्य सिद्धान्तयति— **एवमिति**। प्रश्नपूर्वकं नियामकमाह— **कुत इति**। संभवं वक्तुमुपासनशब्दार्थमाह— **उपासनमिति**। तथापि कथं तदासीनस्यैवेति नियम्यते, तत्राह— **न चेति**। तर्हि तिष्ठतो

**न सूक्ष्मवस्तुनिरीक्षणक्षमं भवति। शयानस्याप्यकस्मादेव निद्रयाऽभिभूयेत। आसीनस्य त्वेवंजातीयको भूयान् दोषः सुपरिहर इति संभवति तस्योपासनम्।।७।।**

## ध्यानाच्च।।८।।

**अपि च ध्यायत्यर्थ एष यत् समानप्रत्ययप्रवाहकरणम्। ध्यायतिश्च प्रशिथिलाङ्गचेष्टेषु प्रतिष्ठित-दृष्टिष्वेकविषयाक्षिप्तचित्तेषूपचर्यमाणो दृश्यते- ध्यायति बको, ध्यायति प्रोषितबन्धुरिति। आसीनश्चानायासो भवति। तस्मादप्यासीनकर्मोपासनम्।।८।।**

## अचलत्वं चापेक्ष्य।।९।।

**अपि च 'ध्यायतीव पृथिवी' (छा.उ. ७।६।१) इत्यत्र पृथिव्यादिष्वचलत्वमेवापेक्ष्य ध्यायतिवादो भवति। तच्च लिङ्गमुपासनस्यासीनकर्मत्वे।।९।।**

## स्मरन्ति च।।१०।।

**स्मरन्त्यपि च शिष्टा उपासनाङ्गत्वेनासनम्- 'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः' (भ.गी. ६।११) इत्यादिना। अत एव पद्मकादीनामासनविशेषाणामुपदेशो योगशास्त्रे।।१०।।**

।।इति षष्ठमासीनाधिकरणम्।।

***प्रकटार्थविवरणम्***

**ध्यानाच्च।। अचलत्वं चापेक्ष्य।। स्मरन्ति च।।** इति षष्ठमासीनाधिकरणम्।।

***भाष्यभावप्रकाशिका***

शरीरेऽनवस्थिते मनोनवस्थितेः प्रत्यक्षत्वादासीनस्यैव तच्छक्यमित्यर्थः।

ननु यस्यामवस्थायां ध्यायतिः प्रयुज्यते किमसौ तिष्ठतो न भवतीत्यत आह— **आसीनस्ये[श्चे]ति**।

लौकिकं लिङ्गमुक्त्वा श्रौतं लिङ्गमाह— **अपि चेति**।

आसनविधानान्यथानुपपत्त्याऽप्युपासन[स्यासीन]कर्मत्वमवगन्तव्यमित्याह— **स्मरन्ति चेति**। बाह्यसाधनविधानमभिधाय शारीर-साधनविधानमाह— **अत एव चेति**। यत एवोपासनमासीनकर्मात एवेत्यर्थः। इति षष्ठमासीनाधिकरणम्।।

***न्यायनिर्णयः***

भविष्यति विक्षेपाभावात्, तत्राह— **तिष्ठतोऽपीति**। तर्हि शयानस्य देहधारणव्यापाराभावादुपासनं स्यान्नेत्याह— **शयानस्येति**। देहेऽनवस्थिते मनोऽनवस्थितेरध्यक्षत्वादासीनस्यैवोपासनमनुष्ठेयमिति परिशेषसिद्धमर्थमाह— **आसीनस्य त्विति**।।७।।

इतश्चोपासनमासीनकर्मेत्याह— **ध्यानाच्चेति**। सूत्रं विवृणोति— **अपि चेति**। उपास्तिध्यायत्योरेकार्थत्वेऽपि प्रकृते किं जातं तदाह— **ध्यायतिश्चेति**। अथ ध्यायतिर्यस्यां प्रयुज्यते साऽवस्था तिष्ठतोऽपि संभवति, नेत्याह— **आसीनश्चेति**। लौकिकं लिङ्गमुपसंहरति— **तस्मादिति**।।८।।

तत्रैव वैदिकं लिङ्गमाह— **अचलत्वं चेति**। सूत्रं विभजते— **अपि चेति**।।९।।

आसनविधानानुपपत्त्याऽप्युपासनस्यासीनकर्मतेत्याह— **स्मरन्तीति**। बाह्यासनविषयत्वेन सूत्रं योजयति— **स्मरन्त्यपीति**। शारीरासनविधानविषयत्वेनापि तदेव योजयति— **अत इति**। उपासनस्यासीनकर्मत्वादेवेत्यर्थः।।१०।। इति षष्ठमासीनाधिकरणम्।।

## ७।।एकाग्रताधिकरणम्।।सू. ११।।

## यत्रैकाग्रता तत्राविशेषात्।।११।।

**दिग्देशकालेषु संशयः– किमस्ति कश्चिन्नियमो नास्ति वेति। प्रायेण वैदिकेष्वारम्भेषु दिगादिनियमदर्शनात् स्यादिहापि कश्चिन्नियम इति यस्य मतिस्तं प्रत्याह– दिग्देशकालेष्वर्थलक्षण एव नियमः। यत्रैवास्य दिशि देशे काले वा मनसः सौकर्येणैकाग्रता भवति, तत्रैवोपासीत प्राचीदिक्पूर्वाह्णप्राचीनप्रवणादिवद् विशेषाश्रवणात्।**

### *शारीरकन्यायसंग्रहः*

**यत्रैकाग्रता तत्राविशेषात्।।११।।** अनङ्गोपासनान्यपि दिग्देशकालनियतानि, चोदनालक्षणत्वात्, यागादिवत्। तत्रोपास्ये वस्तुनि चित्तैकाग्र्यमन्तरङ्गम्। तच्च रजस्तमःपरिक्षयेण सत्त्ववृत्त्युद्भवापेक्षम्। स चोद्भवः कदाचित् प्राक्प्रवणादिदेशे प्रदोषादिकाले प्राच्यादिदिशि चोत्पद्यते, कदाचिद् देशकालदिगन्तरेषूत्पद्यत इति सत्त्ववृत्त्युद्भवेनापन्नचित्तैकाग्र्यं कालान्तरादावुत्पन्नमनपेक्ष्यैव प्रदोषादिकालाद्यपेक्षमाणस्य तत्र चित्तैकाग्र्याभावात् उपासनायोगात्, शेषिविरोधादनुमानस्य यत्रैकाग्र्यं तत्रोपास्यमित्युक्तम्।

### *प्रकटार्थविवरणम्*

**यत्रैकाग्रता तत्राविशेषात्।।** अनङ्गाश्रितान्युपासनानि विषयाः। तेषु किं दिग्देशकालनियमोऽस्त्युत नास्तीति विहितेषु उभयथादर्शनात् संशयमाह— **दिग्देशेति**। अनङ्गोपासनानि नियतदिग्देशकालानि, चोदनालक्षणत्वात्, यागादिवदित्यनुमानेन पूर्वाधिकरणोक्तासननियमवत् कालादिनियमोऽप्यस्तीत्याह— **प्रायेणेति**। 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इतिवद्विशेषाश्रवणात् न चोदनावशेन देशादिनियमः; किं तु उपास्ये चित्तैकाग्र्यलक्षणा[र्था]क्षिप्त एवेत्याह—

### *भाष्यभावप्रकाशिका*

**यत्रैकाग्रता तत्राविशेषात्।।** अनङ्गोपासनान्यपि दिग्देशकालनियतानि चोदनालक्षणत्वाद् यागादिवदित्यभिप्रेत्य पूर्वपक्षं दर्शयति— **प्रायेणेति**। तमेव नियमं विवृणोति— **यत्रैवास्येति**। चित्तैकाग्र्यस्यान्तरङ्गत्वात्तस्य चानियतजन्मत्वाद्यदैव तत् संभवति तदैवोपासनमनुष्ठेयम्। तत्परित्यज्य कालाद्यपेक्षणे चित्तैकाग्र्यासंभवेनोपासनायोगाच्छेषिविरोधप्रसङ्गादनुमानस्यापि शेषिविरोधे अप्रामाण्यादित्यर्थः। अविशेषादिति सूत्रपदं व्याचष्टे— **प्राचीति**। 'प्राचीनप्रवणे वैश्वदेवेन यजेते'त्यादिवद् विशेषाश्रवणादित्यर्थः।

### *न्यायनिर्णयः*

अनङ्गाश्रितोपासनेष्वासननियमवद् दिगादिनियमोऽपि स्यादित्याशङ्क्याह— **यत्रेति**। अनङ्गाश्रितोपासनानि विषयः। तेषु दिगादिनियमोऽस्त्युत नेति विहितेषु द्विधादृष्ट्या संशयमाह— **दिगिति**। अङ्गोपास्त्यतिरिक्तोपास्तिषु शास्त्रीयास्वेव दिगादिनियमं विनाऽनुष्ठानक्रमचिन्तनात् पादादिसंगतिः। पूर्वपक्षे दिगादिनियमादेतेषु चित्तैकाग्र्यमन्तरेणानुष्ठानम्, सिद्धान्ते दिगादिष्वास्थाऽभावेऽपि प्रधानानुगुण्यादनुष्ठानमित्यङ्गीकृत्यानङ्गोपासनानि नियतदिग्देशकालानि चोदनालक्षणत्वाद्वैश्वदेववदित्याशयेन पूर्वपक्षयति— **प्रायेणेति**। प्रदोषादिकाले प्राच्यादिदिशि तीर्थादिदेशे प्रकृतोपासनानुष्ठानमिति प्राप्ते सिद्धान्तयति — **तमिति**। चोदनादिवशेनोक्तोपासनेषु न देशादिनियमः, किंतूपास्ये चित्तैकाग्र्यलक्षणार्थाक्षिप्त एव तन्नियम इत्युक्तं विवृणोति— **यत्रेति**। यत्तु चोदनालक्षणत्वादित्यनुमानं तत्र श्रुतदेशादिमत्त्वमुपाधिरिति वदन्नविशेषादिति व्याचष्टे— **प्राचीनेति**। प्राचीनप्रवणे प्राग्देशनिम्ने देशे वैश्वदेवेन यागविशेषेण यजेतेत्यादिवदत्र विशेषो न श्रूयते। ऐकाग्र्यं हि ध्यानं प्रत्यन्तरङ्गम्, [१]तस्मिन् मध्याह्नादावपि संभवति प्रदोषाद्यपेक्षायां शेषिबाधादनियम इत्यर्थः। ध्यानान्तरङ्गमैकाग्र्यमपि नियतदिगाद्यपेक्षमित्याशङ्क्य हेतोरर्थान्तरमाह— **एकाग्रताया इति**। विशेषाश्रवणमसिद्धमिति

---

१. तस्मिन् ऐकाग्र्ये मध्याह्नादावपि संभवति सतीत्यर्थः।

**एकाग्रताया इष्टायाः सर्वत्राविशेषात्। ननु विशेषमपि केचिदामनन्ति– 'समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः। मनोनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत्' (श्वे.उ. २।१०) इति यथेति। उच्यते– सत्यमस्त्येवंजातीयको नियमः। सति त्वेतस्मिंस्तद्गतेषु विशेषेष्वनियम इति सुहृद्भूत्वाऽऽचार्य आचष्टे। 'मनोनुकूले' इति चैषा श्रुतिर्यत्रैकाग्रता तत्रैवेत्येतदेव दर्शयति।।११।।**

।।इति सप्तममेकाग्रताधिकरणम्।।

८।।आप्रायणाधिकरणम्।।सू. १२।।

## आ प्रायणात् तत्रापि हि दृष्टम्।।१२।।

**आवृत्तिः सर्वोपासनेष्वादर्तव्येति स्थितमाद्येऽधिकरणे। तत्र यानि तावत् सम्यग्दर्शनार्थान्युपासनानि**

### *शारीरकन्यायसंग्रहः*

**आ प्रायणात् तत्रापि हि दृष्टम्।।१२।।** अहंग्रहोपासनेषूपास्याविर्भावे सिद्धे दृष्टफलद्वारेणादृष्टफलसिद्धेरवघातादिवदा प्रायणादननुष्ठाने प्राप्ते अवघातादिष्वपि दृष्टफलस्य तण्डुलादेरदृष्टसाधनत्वव्यवधानद्वारेणैवादृष्टसाधनत्वादिहापि देहपातादनन्तरमारभ्यमाण-विद्यासाध्यादृष्टफलं प्रति व्यवहितस्यापरोक्षस्योपकारकत्वाभावात् अदृष्टफलारम्भाय तत्सन्निहितेऽपरोक्षान्त्यप्रत्यये दृष्टफले वक्तव्ये भावनाविच्छेदे तदयोगात्, कर्मणामपि स्वफलविषयान्त्यभावनाजनकत्वप्रसङ्गेन विद्यायाः पाक्षिकफलवत्त्वप्रसङ्गात्, कर्मविरोधद्वारेणोपास्यान्त्य-प्रत्ययजननायाभिनवतया प्राबल्यसिद्ध्यर्थमा प्रायणादुपासनं कर्तव्यमिति स्थितम्।

### *प्रकटार्थविवरणम्*

**दिग्देशकालेष्वर्थलक्षण एवेति।** विशेषाश्रवणादित्यस्यासिद्धिं शङ्कते— **ननु विशेषमपीति।** शर्कराः क्षुद्रपाषाणाः। उक्तमभ्युपगम्याह— **सत्यमिति।** शुच्यादिदेशगतेषु प्राचीनप्रवणादिष्वनियम इति सुहृद्भावेनाचार्यो ब्रवीति; अन्यथा कदाचित् प्राचीनप्रवणादिदेशे प्रदोषादिकाले प्राच्यादिदिशि च चित्तैकाग्र्यासंभवेन उपासनायोगात् शेषिविरोधप्रसङ्गादिति भावः। अनियमे श्रुतिं प्रमाणयति— **मनोऽनुकूल इति।** इति सप्तममेकाग्रताधिकरणम्।।

**आ प्रायणात् तत्रापि हि दृष्टम्।।** व्यवहितसंबन्धमेवाह— **आवृत्तिरिति।** असन्दिग्धमंशमुक्त्वा संशयविषयमाह—

### *भाष्यभावप्रकाशिका*

अर्थान्तरमाह— **एकाग्रताया इति।** विशेषाश्रवणमसिद्धमिति शङ्कते— **ननु विशेषमिति।** वाचनिकेऽस्मिन् नियमे सत्येव दिग्देशादिनियम एव निवार्यत इत्याह— **सत्यमिति।** एषाऽपि श्रुतिरस्माकमनुकूलैवेत्याह— **मनोनुकूल इति।** इति सप्तममेकाग्रताधिकरणम्।।

**आ प्रायणात् तत्रापि हि दृष्टम्।।** अधिकरणविषयं विवेचयति— **तत्र यानीति।** सम्यग्दर्शने जातेऽपि कैवल्य-

### *न्यायनिर्णयः*

शङ्कते— **नन्विति।** शर्कराः सूक्ष्मपाषाणाः। जलाशयवर्जनं शीतनिवृत्त्यर्थम्। चक्षुपीडनो मशकः। यथा श्रुतिसिद्धो विशेषस्तथाऽन्योऽपि कालादिविशेषो ध्याने स्यादित्यर्थः। वाचनिके नियमे सत्येव दिगादिनियमनिरसनमित्याह— **उच्यत इति। तद्गतेष्विति।** तच्छब्देन श्रौतो विशिष्टो देशो गृह्यते, तस्मिन् गता विशेषास्तु प्राचीनप्रवणादयस्तन्नियमे कदाचिदेकाग्रताऽयोगेनोपासनायोगात् प्रधानविरोधात्तदनियमः श्रेयानित्यर्थः। नियमादनियमो युक्तः शेष्यानुगुण्यादित्यत्र सूत्रकारसंमतिमाह— **इति सुहृदिति।** उक्ताऽपि हि श्रुतिरस्माकमनुकूलैवेत्याह— **मन इति।।११।।** इति सप्तममेकाग्रताधिकरणम्।।

देशाद्यविधानात् तद[न]पेक्षावदहंग्रहोपास्तिष्वादेहपातादावृत्तेरविधानात् तदनपेक्षेत्याशङ्क्याह— **आ प्रायणादिति।** व्यवहितेन संबन्धार्थं वृत्तं कीर्तयति— **आवृत्तिरिति।** सम्प्रति संबन्धं वदन् विषयं विवेचयति— **तत्रेति।** सम्यग्ज्ञाने जातेऽपि मुक्त्यर्थमावृत्तिरामरणात्

**तान्यवघातादिवत् कार्यपर्यवसानानीति ज्ञातमेवैषामावृत्तिपरिमाणम्। न हि सम्यग्दर्शने कार्ये निष्पन्ने यत्नान्तरं किंचिच्छासितुं शक्यम्। अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात्। यानि पुनरभ्युदयफलानि तेष्वेषा चिन्ता– किं कियन्तंचित् कालं प्रत्ययमावर्त्योपरमेदुत यावज्जीवमावर्तयेदिति। किं तावत् प्राप्तम्? कियन्तंचित् कालं प्रत्ययमभ्यस्योत्सृजेदावृत्तिविशिष्टस्योपासनशब्दार्थस्य कृतत्वादिति।**

**एवं प्राप्ते ब्रूमः– आप्रायणादेवावर्तयेत् प्रत्ययम्। अन्त्यप्रत्ययवशाददृष्टफलप्राप्तेः। कर्माण्यपि हि जन्मान्तरोपभोग्यं फलमारभमाणानि तदनुरूपं भावनाविज्ञानं प्रायणकाल आक्षिपन्ति, 'सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति' (बृ.उ. ४।४।२) 'यच्चित्तस्तेनैष प्राणमायाति, प्राणस्तेजसा युक्तः सहात्मना यथासंकल्पितं लोकं नयति' (प्र.उ. ३।१०) इति चैवमादिश्रुतिभ्यः। तृणजलूकानिदर्शनाच्च। प्रत्ययास्त्वेते**

### *प्रकटार्थविवरणम्*

**यानि पुनरिति**। अनुष्ठानस्योभयथा दर्शनात् संशयमुक्त्वा पूर्वपक्षं निक्षिपति— **किं तावदिति**।

मरणपर्यन्तं प्रत्ययावृत्तिः कर्तव्येति सिद्धान्तमाह— **आप्रायणादिति**। ननु अदृष्टफलेष्वन्त्यप्रत्ययनियमो नास्ति, कदाचिदनुष्ठितकर्मवशेनापि कालान्तरे फलप्राप्तेरित्याशङ्क्याह— **कर्माण्यपीति**। तर्हि कर्मवत् कदाचित् अनुष्ठितानां प्रत्ययानां मरणकालेऽपि ज्ञानान्तरारम्भकत्वं भविष्यति, किं सन्ततकरणेनेत्याशङ्क्याह— **प्रत्ययास्त्वेत इति**। सर्वभावानां स्वावान्तरजातीय-

### *भाष्यभावप्रकाशिका*

फलायावृत्तिरामरणादनुष्ठेयेत्याशङ्क्याह— **न हीति**। नियोज्यस्याधिकारिणोऽभावात् कैवल्यस्य च सम्यग्दर्शननान्तरीयकत्वादावृत्तिविधिरनुपपन्न इत्यर्थः। उक्तहेत्वभावादेषामुपपद्यते विषयत्वमित्याह— **यानि पुनरिति**। उपास्यापरोक्ष्ये दृष्टफले सिद्धे तद्द्वारेणादृष्टफलस्यापि सिद्धेरवघातादिवदाप्रयाणादनुष्ठानमित्याह— **अन्त्यप्रत्ययवशादिति**। अवघातादिष्वपि तण्डुलादेर्दृष्टफलस्याप्य[व्य]वधानेनैव क्रतुसाधनत्वादिहापि विद्यासाध्यादृष्टफलं प्रति दृष्टफलस्यापरोक्ष्यस्याप्य[व्य]वधानेनोपकारकत्वात् भावनाविच्छेदे चोपास्यविषयसाक्षात्कारलक्षणान्त्यप्रत्ययस्यासंभवात् तज्जननायाभिनवतया कर्मजन्यान्त्यभावनातः प्राबल्यसिद्ध्यर्थञ्चाप्रयाणादुपासनमनुष्ठेयमित्यर्थः। अन्त्यप्रत्ययव्यतिरेकेणैवोपासनानां फलप्राप्तिः किं न स्यादित्यत आह— **कर्माण्यपि हीति**। किमत्र प्रमाणमिति, तदाह— **सविज्ञान इति**। यत्राप्रत्ययात्मकानामपि कर्मणामन्त्यप्रत्ययाक्षेपेण फलजनकत्वम्, तत्र किमु वक्तव्यम् प्रत्ययात्मकानामुपासनानामित्यर्थः। तर्हि कर्मवदेवादृष्टद्वारेणान्त्यप्रत्ययापेक्षत्वमस्त्विति, तत्राह— **प्रत्ययास्त्विति**। प्रत्ययानां धारावाहितया

### *न्यायनिर्णयः*

कार्येत्याशङ्क्याह— **न हीति**। नियोज्यस्याधिकारिणोऽभावान्मुक्तेश्च सम्यग्धीनान्तरीयकत्वादावृत्तिरनर्थिकेत्यर्थः। उक्तहेत्वभावादनुष्ठानस्योभयथादृष्टेरहंग्रहोपास्तिषु संशयमाह— **यानीति**। शास्त्रीयाहंग्रहोपासनेषु स्वतन्त्रफलहेतुषु यावज्जीवमनुष्ठानमिति चिन्तनात् पादादिसंगतिः। पूर्वपक्षे सर्वोपासनेष्वावृत्तेरविशेषः। सिद्धान्ते प्रकृतेषु विशेष इत्युपेत्य विमृश्य पूर्वपक्षयति— **किं तावदिति**।

सर्वोपासनेष्वावृत्तौ विशेषो नेति प्राप्ते प्रकृतोपासनेष्वामरणादावृत्तिः कार्येति सिद्धान्तमाह— **एवमिति**। उपास्यापरोक्ष्ये दृष्टफले सिद्धे तद्द्वाराऽदृष्टफलस्यापि सिद्धेरवघातादिवदामरणादनुष्ठानमित्याह— **अन्त्येति**। अन्त्यप्रत्ययातिरेकेणैवोपासनानां फलप्राप्तियोगान्न तादर्थ्येनावृत्तिरित्याशङ्क्याह— **कर्माणीति**। किमत्र प्रमाणं तदाह— **सविज्ञान इति**। विज्ञानेन भोक्तव्यफलविषयभावनामयेन सहितो म्रियमाणो भोक्ता सविज्ञानः। सविज्ञानं विज्ञानेन सहितं फलम्। यस्मिन् विषये चित्तमस्य स यच्चित्तस्तेन विषयेण हृद्यभिव्यक्तेन सह तेज उदानस्तेजोदेवताकत्वादात्मा भोक्ता। म्रियमाणस्य भोक्तुर्ज्ञानवत्त्वे दृष्टान्तश्रुतिरपि प्रमाणमित्याह— **तृणेति**। यत्राप्रत्ययात्मकानामपि कर्मणामन्त्यप्रत्ययाक्षेपेण फलजनकत्वं तत्र प्रत्ययात्मकानामुपासनानां किं वक्तव्यमित्यर्थः। तर्हि कर्मवददृष्टद्वाराऽन्त्यप्रत्ययापेक्षोपासनानां स्यान्नेत्याह— **प्रत्ययास्त्विति**। तेषां धारावाहिकतया दृष्टद्वारेणाक्षेपकत्वसंभवे

**स्वरूपानुवृत्तिं मुक्त्वा किमन्यत् प्रायणकालभावि भावनाविज्ञानमपेक्षेरन्? तस्माद् ये प्रतिपत्तव्यफलभावनात्मकाः प्रत्ययास्तेष्वाप्रायणादावृत्तिः। तथा च श्रुतिः– 'स यावत्क्रतुरयमस्माल्लोकात्प्रैति' (शत. १०।६।३।१) इति प्रायणकालेऽपि प्रत्ययानुवृत्तिं दर्शयति। स्मृतिरपि– 'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः' (भ.गी. ८।६) इति, 'प्रयाणकाले मनसाऽचलेन' (भ.गी. ८।१०) इति च। 'सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येत' (छा.उ. ३।१७।६) इति च मरणवेलायामपि कर्तव्यशेषं श्रावयति।।१२।।**

।।इत्यष्टममाप्रायणाधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

९।।तदधिगमाधिकरणम्।।सू.१३।।

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्।।१३।।** यद्यपि यथा प्रायश्चित्तस्य दुरितक्षयहेतुत्वं प्रायश्चित्तविध्यन्यथानुपपत्त्या मीयते शब्देनैव तथा 'विद्वान् पुण्यपापे विधूय' 'विदित्वा न लिप्यते कर्मणा पापकेन' इति ज्ञानदुरितनाशयोः इतरेतरसाध्यसाधनभावसाकाङ्क्षयोः एकपुरुषसबन्धनिर्देशान्यथानुपपत्त्या विज्ञानस्य दुरितक्षयहेतुत्वं पुरुषार्थाधिकरणन्यायेन प्रमातुं शक्यते, तथापि 'कलञ्जं न भक्षयेत्' इत्यादिप्रतिषेधविध्यन्यथानुपपत्त्या दुरितस्यानिष्टफलपर्यन्तत्वेऽवगते नार्थवादान्यथानुपपत्त्या विद्यया दुरितक्षयः प्रमातुं शक्यत इति प्राप्तम्। तत्रापहतपाप्मत्वादिलक्षणब्रह्मात्मज्ञानमात्मन्यशेषदुरितनिवर्तकम्; तस्मिन् दुरितकर्तृत्वादिबाधकत्वात्, स्वप्नगतसुरापानादिकर्तृत्वबाधकतया [तन्निमित्त]दुरितबाधकजाग्रत्प्रबोधवदिति विद्यासामर्थ्येन मोक्षशास्त्रप्रामाण्यान्यथानुपपत्त्या चानुगृहीतया अर्थवादप्रतिपन्नविद्यादुरितक्षयैकपुरुषसंबन्धान्यथानुपपत्त्या सामान्यप्रवृत्तां प्रतिषेधविध्यन्यथानुपपत्तिमपबाध्य ब्रह्मविद्विशेषविषये विद्यया दुरितक्षयः प्रमीयत इत्युक्तम्।

### *प्रकटार्थविवरणम्*

निरपेक्षत्वाद्भावनात्मक[काना]मुपासनानां न भावनान्तरापेक्षकत्वं घटते; स्वरूपसन्निधानेनैव चादृष्टफलोपयोगित्वं भविष्यतीत्यर्थः। 'तत्रापि हि दृष्टम्' इत्यस्यार्थमाह— **तथा च श्रुतिरित्यादिना**। एतत् मन्त्रत्रयम् 'अक्षितमस्यच्युतमसि प्राणसंशितमसि' इति जप्यत्वेन प्रतिपद्यत इत्यर्थः। इत्यष्टममाप्रायणाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

दृष्टद्वारेणाक्षेपकत्वसंभवे नादृष्टकल्पना युक्तेति भावः। क्रतुःसंकल्पविशेषः। प्रायणकालेऽप्यनुष्ठेयसद्भावमवगमयति[न्ती] श्रुतिरप्येतद् द्योतयतीत्याह— **सोऽन्तवेलायामिति**। 'अक्षितमस्यच्युतमसि प्राणसंशितमसी'ति मन्त्रत्रयं स्मरेदित्यर्थः। इत्यष्टममाप्रायणाधिकरणम्।।

### *न्यायनिर्णयः*

नादृष्टकल्पनेति भावः। सर्वभावनानां स्वावान्तरजातीयनिरपेक्षतया भावनात्मकोपासनानां न भावनान्तरापेक्षकत्वं स्वरूपसंनिधानेनैव चादृष्टफलोपयोगितेति मत्वोपसंहरति— **तस्मादिति**। तत्रापि दृष्टमित्येतद् व्याचष्टे— **तथा चेति**। उपासकः सर्वनामार्थः। क्रतुः संकल्पविशेषः। **अस्माल्लोकाद**भिमानतो गृहीताद् देहादिति यावत्। स्मार्तदर्शनमाश्रित्यापि सूत्रावयवं योजयति— **स्मृतिरिति**। तत्रैव श्रौतदर्शनान्तरमाह— **सोऽन्तेति**। पूर्ववदुपासकः सर्वनाम्नोक्तः। 'अक्षितमस्यच्युतमसि प्राणसंशितमसी'ति मन्त्रत्रयं स्मरेदित्यनुष्ठेयं मरणकालेऽपि दर्शयन्ती श्रुतिर्विज्ञानावृत्तिं सूचयतीत्यर्थः।।१२।। इत्यष्टममाप्रायणाधिकरणम्।।

९।।तदधिगमाधिकरणम्।।सू. १३।।

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्।।१३।।

**गतस्तृतीयशेषः। अथेदानीं ब्रह्मविद्याफलं प्रति चिन्ता प्रतायते । ब्रह्माधिगमे सति तद्विपरीतफलं दुरितं क्षीयते, न क्षीयते वेति संशयः। किं तावत् प्राप्तम्? फलार्थत्वात् कर्मणः फलमदत्त्वा न संभाव्यते क्षयः। फलदायिनी ह्यस्य शक्तिः श्रुत्या समधिगता। यदि तदन्तरेणैव फलोपभोगमपवृज्येत, श्रुतिः कदर्थिता स्यात्। स्मरन्ति च 'न हि कर्म क्षीयते' (गौ.ध.सू. १९।५) इति। नन्वेवं सति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति। नैष दोषः। प्रायश्चित्तानां नैमित्तिकत्वोपपत्तेर्गृहदाहेष्ट्यादिवत्। अपि च प्रायश्चित्तानां दोषसंयोगेन**

### *प्रकटार्थविवरणम्*

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्।।** साधनानुष्ठाने यत्नाधिक्यविधानाय फलाध्यायेऽपि साधनसंबन्धं विचार्य अध्यायगतफलचिन्तैवेदानीं प्रतन्यत इत्याह— **गत इति**। कर्मणां फलावसानत्वप्रतीतेः ज्ञानात् क्षयप्रतीतेश्च संशयमुक्त्वा पूर्वपक्षमाह— **किं तावदिति**। 'कलञ्जं न भक्षयेत्' इत्यादिप्रतिषेधविध्यन्यथानुपपत्त्या दुरितस्यानिष्टफलपर्यन्तत्वेऽवगते नार्थवादाद् दुरितक्षयः प्रमातुं शक्यते, फलमदत्त्वाऽपि विलये निषेधशास्त्रमप्रमाणं स्यादित्यर्थः। भोगेनैव क्षयनियमे 'ब्रह्महा द्वादशवार्षिकं कुर्यात्' इत्यादिशास्त्रस्य वैयर्थ्यं स्यादित्याह— **नन्वेवं सतीति**। 'पुरोडाशमष्टाकपालं निर्वपेद् यस्याहिताग्नेः सतोऽग्निर्गृहान् दहेत्' 'यस्य हिरण्यं नश्येदाग्नेयादीन्निर्वपेत्'[1] इत्यादिवन्नैमित्तकविधायकत्वेनार्थवत्त्वसंभवान्न शास्त्रस्यानर्थक्यमित्याह— **नैष दोष**

### *भाष्यभावप्रकाशिका*

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्।। तृतीयशेष इति**। साधनविषयो विचार इत्यर्थः। **तद्विपरीत-फलमिति**। बन्धनमित्यर्थः। फलविनाश्यत्वाददृष्टस्य फलदानं विना [न ना]श इत्याह— **फलार्थत्वादिति**। फलार्थत्वमपि कथमिति तदाह— **फलप्रदायिनी हीति**। 'न कलञ्जं भक्षयेत्' 'ब्राह्मणो न हन्तव्य' इत्यादिप्रतिषेधविध्यन्यथानुपपत्त्या दुरितस्यानिष्टफलपर्यन्तत्वमवगम्यत इत्यर्थः। अभुक्तफलं कर्म न क्षीयत इति स्मरणादप्येवमित्याह— **स्मरन्ति चेति**। उपभोगव्यतिरेकेण कर्म न क्षीयते चेत् प्रायश्चित्तं व्यर्थं स्यादिति शङ्कते— **नन्वेवमिति**। मैवं प्रायश्चित्तविधीनां दोषनिर्हरणार्थताऽभावादिति परिहरति— **नैष दोष इति**। अथवा अपेक्षितोपायतारूपस्य प्रायश्चित्तविधेर्नियोज्यविशेषलाभमात्रेण निराकाङ्क्षताऽयोगादपेक्षितापेक्षायां

### *न्यायनिर्णयः*

यथोपास्तावन्तकाले कर्तव्यमस्ति, न तथा ब्रह्मविद्यायां कर्तव्यं किंचिदप्यस्ति, तदुत्पत्तिमात्रेणाशेषपापक्षयादित्याह— **तदधिगम इति**। साधनानुष्ठाने यत्नाधिक्यार्थं फलाध्यायेऽपि साधनसंबद्धमनुष्ठानक्रमं विचार्य फलाध्यायस्थां फलचिन्तामेवावतारयति— **गत इति**। दुरितमधिकृत्य तस्य फलावसानत्वप्रतीतेर्ज्ञानात् क्षयप्रतीतेश्च संशयमाह— **ब्रह्मेति**। **तद्विपरीतफलं** बन्धनसाधनमित्यर्थः। अत्र साक्षादेव श्रौतब्रह्मात्मधियो दुरितक्षयफलोक्त्या पादादिसंगतिः। पूर्वपक्षे दुरितफलभोगमपेक्ष्य ब्रह्मधियो मोक्षहेतुत्वम्। सिद्धान्ते स्वोत्पत्तिनान्तरीयकत्वेन तस्यास्तद्धेतुत्वमित्युपेत्य प्रश्नपूर्वकं पूर्वपक्षयति— **किं तावदिति**। फलनाश्यत्वाददृष्टस्य फलदानं विना नाशो नास्तीत्यर्थः। फलार्थत्वं कथमस्य सिद्धं, तत्राह— **फलेति**। 'ब्राह्मणो न हन्तव्यः', 'न कलञ्जं भक्षयेत्' इत्यादिनिषेधानुपपत्त्या दुरितस्यानिष्टफलत्वं सिद्धमित्यर्थः। उक्तमेव स्फोरयति— **यदीति**। तदित्यनिष्टकर्मोक्तिः। 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति स्मृतेरपि फलभोगं विना न नाशो दुरितस्येत्याह— **स्मरन्तीति**। भोगादृते कर्म न क्षीयते चेत् प्रायश्चित्तविध्यानर्थक्यमिति शङ्कते— **नन्विति**। तद्विधीनां दोषनिर्हरणार्थत्वाभावान्नैवमित्याह— **नेति**। यथा 'यस्याहिताग्नेरग्निर्गृहान् दहेदि'ति प्राप्ते गृहदाहवत्याहिताग्नावधिकारिणि 'अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्' इति क्षामवतीष्टिर्विधीयते, तथा पापसंबन्धिनि नरे प्राप्ते 'ब्रह्महा द्वादशवार्षिकं चरेत्' इत्यादिप्रायश्चित्तानि विधीयन्ते। तस्माद् ब्रह्महेत्यादिविशेषणमधिकारिव्यावृत्तिपरं, न फलपरमित्यर्थः।

---

१. आग्नेयादीनिति। आग्नेयमष्टाकपालं, सावित्रं द्वादशकपालं, भूम्यै चरुं चेत्यर्थः।

**विधानाद्भवेदपि दोषक्षपणार्थता; न त्वेवं ब्रह्मविद्यायां विधानमस्ति। नन्वनभ्युपगम्यमाने ब्रह्मविदः कर्मक्षये तत्फलस्यावश्यं भोक्तव्यत्वादनिर्मोक्षः स्यात्। नेत्युच्यते; देशकालनिमित्तापेक्षो मोक्षः कर्मफलवद् भविष्यति। तस्मान्न ब्रह्माधिगमे दुरितनिवृत्तिरिति।**

**एवं प्राप्ते ब्रूमः– तदधिगमे ब्रह्माधिगमे सत्युत्तरपूर्वयोरघयोरश्लेषविनाशौ भवतः। उत्तरस्याश्लेषः, पूर्वस्य विनाशः। कस्मात्? तद्व्यपदेशात्। तथाहि– ब्रह्मविद्याप्रक्रियायां संभाव्यमानसंबन्धस्यागामिनो दुरितस्यानभिसंबन्धं विदुषो व्यपदिशति– 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' (छा.उ. ४।१४।३) इति। तथा विनाशमपि पूर्वोपचितस्य दुरितस्य व्यपदिशति– 'तद्यथेषीकातूलमग्नौ**

### *प्रकटार्थविवरणम्*

**इति**। ननु यथा गृहदाहं निमित्तीकृत्येष्टिर्विधीयते, तत्र च फलान्तरमेव कल्प्यते, न तथा प्रायश्चित्तविधानम्, दोषनिर्हरणाय चोदितत्वात्, 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इति, तत्राह— **अपि च प्रायश्चित्तानामिति**। ब्रह्मविद्यायाः पापक्षयाय विधानाभावान्नाघविघातहेतुर्विद्येत्युक्तम्। तत्र मोक्षशास्त्रप्रामाण्यान्यथानुपपत्त्या विद्यायाः अघविघातकत्वं शङ्कते— **नन्विति**। भोगेन सकलपापक्षये सति कदाचिन्मोक्षो भविष्यतीति अन्यथानुप[न्यथोप]पत्तिमाह— **नेत्युच्यत इति**।

'तद्व्यपदेशात्' इति हेतुं व्याचष्टे— **तथा हीति**। तथा च लैङ्गे—

"ज्ञानिनः सर्वपापानि जीर्यन्ते नात्र संशयः। क्रीडन्नपि न लिप्येत पापैर्नानाविधैरपि।।"

शिवधर्मोत्तरे—

"तस्माद् ज्ञानासिना तूर्णमशेषं कर्मबन्धनम्। कामाकामकृतं जित्वा बुद्ध्वा स्वात्मनि तिष्ठति।।
यथा वह्निर्महादीप्तः शुष्कमार्द्रं च निर्दहेत्। तथा शुभाशुभं कर्म ज्ञानाग्निर्निर्दहेत् क्षणात्।।
यद्वन्मन्त्रबलोपेतः क्रीडन् सर्पेण दृश्यते। क्रीडन्नपि न लिप्येत तद्वदिन्द्रियपन्नगैः।।
मन्त्रौषधिबलैर्यद्वज्जीर्यते भक्षितं विषम्। तद्वत्सर्वाणि पापानि जीर्यन्ते ज्ञानिनः क्षणात्।।" इति।

### *भाष्यभावप्रकाशिका*

दोषसंयोगेन विधानात् तन्निवृत्त्यर्थत्वेऽपि विद्यातो दुरितक्षयो न सिध्यति, दोषसंयोगेनाश्रवणादित्याह— **अपि चेति**। मोक्ष एव सूत्र[मोक्षशास्त्र]प्रामाण्यान्यथानुपपत्त्या विद्यया दुरितनिर्हरणमभ्युपगन्तव्यमिति शङ्कते— **नन्विति**। कर्मफलोपभोगानन्तरं शास्त्रप्रामाण्यादेव तत्सिद्धेर्न शास्त्रविरोध इति परिहरति— **नेतीति**।

उत्तरत्वेन सूत्रं योजयति— **तदधिगम इति**। निषिद्धाचरणात् दुरिताश्लेषवचनमिति शङ्काव्युदासार्थमाह— **संभाव्यमानसंबन्धस्येति**।

### *न्यायनिर्णयः*

गृहदाहेष्ट्यादिवदित्यत्रादिपदेन 'भिन्ने जुहोति स्कन्ने जुहोती'त्यादिनैमित्तिकग्रहणं युक्तम्। गृहदाहादेर्निष्पन्नत्वेन निष्पादयितुमशक्यत्वादधिकारिव्यावृत्त्यर्थत्वम्, दुरितनिवृत्तेस्तु कर्तुं योग्यत्वादिष्टसाधनत्वबोधी प्रायश्चित्तविधिस्तत्फलः स्यादित्याशङ्क्य प्रायश्चित्तानां दोषनिवृत्तिफलत्वमुपेत्य प्रकृते वैषम्यमाह— **अपि चेति**। मोक्षशास्त्रप्रामाण्यानुपपत्त्या विद्यया दुरितनिवृत्तिरेष्टव्येति शङ्कते— **नन्विति**। दुरितफलभोगानन्तरं शास्त्रप्रामाण्यादेव मोक्षसिद्धेर्न तच्छास्त्रविरोधोऽस्तीत्याह— **नेतीति**। ब्रह्मज्ञानस्य प्रायश्चित्तेभ्यो वैषम्ये दुरितानिवर्तकत्वेऽपि मोक्षशास्त्राविरोधे च फलितमाह— **तस्मान्नेति**।

न ब्रह्मविद्या दुरितनिबर्हणहेतुरिति प्राप्तमनूद्य सिद्धान्तसूत्रमवतार्य प्रतिज्ञां व्याकरोति— **एवमिति**। विभागहेतुं प्रश्नपूर्वकमादत्ते— **कस्मादिति**। उत्तराश्लेषविषयत्वेन हेतुं व्याचष्टे— **तथा हीति**। निषिद्धानाचरणाद् व्यर्थं दुरिताश्लेषवचनमिति शङ्कानिरासार्थं विशिनष्टि— **संभाव्यमानेति**। पूर्वस्य कर्मणो नाशेऽपि हेतुं योजयति— **तथेति**। सगुणविद्यायामश्लेषविनाशवचनमुदाहृत्य

**प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छा.उ. ५।२४।३) इति। अयमपरः कर्मक्षयव्यपदेशो भवति– 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु.उ. २।२।८) इति।**

**यदुक्तमनुपभुक्तफलस्य कर्मणः क्षयकल्पनायां शास्त्रं कदर्थितं स्यादिति। नैष दोषः। न हि वयं कर्मणः फलदायिनीं शक्तिमवजानीमहे। विद्यत एव सा। सा तु विद्यादिना कारणान्तरेण प्रतिबध्यत इति वदामः। शक्तिसद्भावमात्रे च शास्त्रं व्याप्रियते, न प्रतिबन्धाप्रतिबन्धयोरपि। 'न हि कर्म क्षीयत' इत्येतदपि स्मरणमौत्सर्गिकम्, न भोगादृते कर्म क्षीयते तदर्थत्वादिति। इष्यत एव तु प्रायश्चित्तादिना तस्य क्षयः 'सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' (तै.सं. ५।३।१२-२) इत्यादिश्रुतिस्मृतिभ्यः। यत्तूक्तं नैमित्तिकानि प्रायश्चित्तानि भविष्यन्तीति। तदसत्। दोषसंयोगेन चोद्यमानानामेषां दोषनिर्घातफलसंभवे फलान्तरकल्पनानुपपत्तेः। यत्पुनरेतदुक्तं न प्रायश्चित्तवद्दोषक्षयोद्देशेन विद्याविधानमस्तीति। अत्र ब्रूमः– सगुणासु तावद्विद्यासु विद्यत एव विधानम्। तासु च वाक्यशेष ऐश्वर्यप्राप्तिः पापनिवृत्तिश्च विद्यावत उच्यते।**

### *प्रकटार्थविवरणम्*

पूर्वोक्तं क्रमेण पराकरोति— **यदुक्तमित्यादिना**। ब्रह्मात्मज्ञानमात्मन्यशेषदुरितनिवर्तकम्, तस्मिन् दुरितकर्तृत्वादिबाधकत्वात्,

### *भाष्यभावप्रकाशिका*

कथं तर्ह्यनुपभोगेन क्षय इति तत्राह— **सा तु विद्यादिनेति**। कथं तर्हि शास्त्रविरोधपरिहार इति, तत्राह— **शक्तिसद्भावेति**। तेन तर्ह्यपवाद इति, तत्राह— **इष्यत एवेति**। ननु तासामैश्वर्यफलत्वमेवेति, तत्राह— **तासु चेति**। नन्वेषा स्तुतिरिति, तत्राह— **तयोश्चेति**। उभयसंयोगविधानोपपत्तेरित्यर्थः।

### *न्यायनिर्णयः*

निर्गुणविद्यायामुदाहरति— **अयमिति**। कर्माश्लेषस्यापि तत्क्षयवचनमुपलक्षणम्।

एवं सिद्धान्तमुपपाद्य परोक्तमनुवदति— **यदुक्तमिति**। ज्ञानात् कर्मदाहादिपक्षे शास्त्रविरोधं प्रत्याह— **नेत्यादिना**। कर्मणो नास्ति फलदाने शक्तिरिति साधने वा शास्त्रविरोधः, सत्यामेव तस्यां भोगं विना तन्निवृत्तिसाधने वेति विकल्प्याद्यं दूषयति— **न हीति**। द्वितीयं प्रत्याह— **सा त्विति**। कथं तर्हि शास्त्रविरोधसमाधिः, तत्राह— **शक्तीति**। यत्तु 'नाभुक्तं क्षीयते कर्म' इत्यादिस्मृतेर्न भोगादृते कर्मक्षयोऽस्तीति, तत्राह— **न हीति**। अपवादस्तर्हि केनोत्सर्गस्य स्यादिति, तत्राह— **इष्यत इति**। आदिशब्देन पूर्वत्र प्रायश्चित्तवदत्र विद्योच्यते। 'ज्ञानिनः सर्वपापानि शीर्यन्ते नात्र संशयः। क्रीडन्नपि न लिप्येत पापैर्नानाविधैरपि' इत्याद्याः स्मृतयः। प्रायश्चित्तानां न पापक्षयहेतुत्वं गृहदाहेष्ट्यादिवन्नैमित्तिकत्वेन फलान्तरयोगादित्युक्तमनुवदति— **यत्त्विति**। यथा 'मलिनः स्नाया'दित्युक्ते स्नानफलं मलनिवृत्तिर्गम्यते तथा 'ब्रह्महा द्वादशवार्षिकं व्रतं चरेदि'त्युक्ते ब्रह्महत्यानिवृत्तिर्व्रतफलं प्रतीयते, तेन दृष्टत्यागेनादृष्टकल्पना न युक्तेत्याह— **तदसदिति**। प्रायश्चित्तानां पापनिवृत्तिफलत्वेऽपि विद्याया न तथात्वं तद्वत्तन्निवृत्त्युद्देशेन तस्या विध्यभावादित्युक्तमनुद्रवति— **यदिति**। दोषक्षयोद्देशेन सगुणविद्यासु वा विध्यभावो निर्गुणविद्यायां वेति विकल्पयति— **अत्रेति**। प्रथमं प्राह— **सगुणास्विति**। तासामैश्वर्यफलत्वान्न पापक्षयोद्देशेन विधिरित्याशङ्क्याह— **तास्विति**। विधित्सितविद्यास्तुतिरेव पाप्मादिनिवृत्तिश्रुतिरित्याशङ्क्याह— **तयोश्चेति**। उभयसंयोगित्वेन विद्याविधिसंभवादित्यर्थः। [१]पाप्मदाहादिश्रुतेः स्तुत्यर्थत्वाभावे फलितमाह— **अत इति**।

---

१. 'तद्यथेषीकातूलम्—' इत्यादिश्रुतेरित्यर्थः।

**तयोश्चाविवक्षाकारणं नास्तीत्यतः पाप्मप्रहाणपूर्वकैश्वर्यप्राप्तिस्तासां फलमिति निश्चीयते। निर्गुणायां तु विद्यायां यद्यपि विधानं नास्ति, तथाप्यकर्त्रात्मत्वबोधात् कर्मप्रदाहसिद्धिः।**

**अश्लेष इति चागामिषु कर्मसु कर्तृत्वमेव न प्रतिपद्यते ब्रह्मविदिति दर्शयति। अतिक्रान्तेषु तु यद्यपि मिथ्याज्ञानात् कर्तृत्वं प्रतिपेद इव तथापि विद्यासामर्थ्यान्मिथ्याज्ञाननिवृत्तेस्तान्यपि प्रविलीयन्त इत्याह- विनाश इति। पूर्वसिद्धकर्तृत्वभोक्तृत्वविपरीतं हि त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माहमस्मि, नेतः पूर्वमपि कर्ता भोक्ता वाऽहमासं, नेदानीं, नापि भविष्यत्काल इति ब्रह्मविदवगच्छति। एवमेव च मोक्ष उपपद्यते। अन्यथा ह्यनादिकालप्रवृत्तानां कर्मणां क्षयाभावे मोक्षाभावः स्यात्। न च देशकालनिमित्तापेक्षो**

### *प्रकटार्थविवरणम्*

स्वप्नगतसुरापानकर्तृत्वबाधकत्वेन तन्निमित्तदुरितबाधकजाग्रद्बोधवदित्याह— **तथाप्यकर्त्रात्मबोधात् कर्मप्रदाहेति**। सकलमपि व्यापारं कार्यकरणसंघाताश्रयं पश्यन्नपि अविक्रियब्रह्मात्मदर्शी न कर्तृत्वं तत्र स्वस्य मन्यते। अत एव च परकर्तृकेण पापेन न लिप्यत इत्याह— **अश्लेष इति चेति**। कर्मविनाशं विद्वदनुभवानुसारेण विवृणोति— **अतिक्रान्तेष्विति**। किं च मोक्षशास्त्रप्रामाण्यानुपपत्त्यनुगृहीतयाऽर्थवादप्रतिपन्नविद्यादुरितक्षयैकपुरुषसंबन्धान्यथानुपपत्त्या सामान्यप्रवृत्तां प्रतिषेधविध्यनुपपत्तिमपबाध्य ब्रह्मविद्विशेषविषये विद्यया पापक्षयो वक्तव्य इत्याह— **एवमेव च मोक्ष उपपद्यत इति**। इति नवमं तदधिगमाधिकरणम्।

### *भाष्यभावप्रकाशिका*

**निर्गुणायां त्विति**। ब्रह्मज्ञानमात्मन्यशेषदुरितनिवर्तकम् दुरितकर्तृत्वादिबाधकत्वात् स्वप्नदुरितकर्तृत्वबाधकतया स्वप्नदुरितबाधकजाग्रद्बोधवदिति विद्यास्वभावालोचनादेव तत्क्षयहेतुत्वमवगम्यत इत्यर्थः। उत्तरकालीनेषु कर्तृत्वाभिमानाभावादपि [न]संस्पर्श इत्याह— **अश्लेष इतीति**। ननु विद्योत्पत्त्युत्तरकालं कर्तृत्वाभिमानाभावेऽपि ततः प्राग् विद्यत एवेति कथं कर्मक्षय इति, तत्राह— **पूर्वसिद्धेति**। मोक्षशास्त्रान्यथानुपपत्त्याऽप्येवमभ्युपगन्तव्यमित्याह— **एवमेवेति**। ननु (प्र)योगप्रभावाद्युगपदनेककायनिर्माणेनापर्यायेण सकलकर्मफलमुपभुज्य मुक्तो भवत्वित्याशङ्क्याह— **अन्यथा हीति**। नियतकालविपाकत्वात् कर्मणां युगपदुपभोगासंभवादुपभोगस्यापि...तिरेकेणासंभवात् कल्पशतातिक्रमकालभोग्यानां सम्प्रति भोक्तुमयोग्यत्वाद् दीर्घकालानां च परिमितकालोपभोग्यत्वासंभवाद्विद्याव्यतिरेकेण[न] निश्शेषकर्मक्षय इत्यर्थः। ननु कर्मान्तरेषु सत्स्वपि मोक्षहेतुकर्मसामर्थ्यात् तमनुभूय कर्मान्तरफलानि पश्चाद्भोक्ष्यत इत्यत आह— **न च देशेति**। दृष्टफलत्वाच्च विद्याया न तत्फलस्य कालान्तरापेक्षा, येनोदितविद्योऽपि कर्मफलान्यनुभूय पश्चान्मुच्येतेत्याह— **परोक्षत्वानुपपत्तेरिति**। इति नवमं तदधिगमाधिकरणम्।।

### *न्यायनिर्णयः*

द्वितीये विध्यभावमुपेत्य विद्यास्वभावादेव पापक्षयफलत्वमाह— **निर्गुणायां त्विति**। विमतमात्मन्यशेषदुरितनिवर्तकं दुरितकर्तृत्वादिबाधकत्वात्, स्वप्नदुरितकर्तृत्वादिबाधकतया तत्कालीनदुरितबाधकजाग्रद्बोधवदिति भावः।

सर्वत्रापि दुरितनिवर्तकस्य तुल्यत्वाद् दाहाश्लेषविभागोक्तिरयुक्तेत्याशङ्क्याश्लेषोक्तेर्गतिमाह— **अश्लेष इति चेति**। सर्वमपि व्यापारं कार्यकरणसंघाताश्रयं पश्यन्नविक्रियब्रह्मात्मदर्शी कर्तृत्वमेव स्वस्य न मन्यते। न च परकर्तृकेण पापेन लिप्यते स्वयमित्यर्थः। विद्योत्पत्तेरूर्ध्वं कर्तृत्वाभिमानाभावेऽपि प्राग्भावात्कथं कर्मनिवृत्तिरित्याशङ्क्य दाहोक्तिमुपपादयति— **अतिक्रान्तेष्विति**। विद्याधीनं कर्मनाशं विद्वदनुभवानुसारेण विवृणोति— **पूर्वेति**। मोक्षशास्त्रानुपपत्त्याऽपि विद्याधीना पापहानिरित्याह— **एवमेवेति**। योगप्रभावाद् युगपदनेकदेहनिर्माणेनापर्यायेण सर्वकर्मफलोपभोगे मुक्तिर्युक्तेत्याशङ्क्याह— **अन्यथेति**। कर्मणां नियतकालविपाकत्वाद् युगपदुपभोगायोगादुपभोगस्यापि कर्मान्तरसंचयमन्तरेणासंभवात् कल्पशतातिक्रमकालभोग्यानामधुना भोक्तुमयुक्तत्वाद् दीर्घकालानां च परिमितकालभोगानुपपत्तेर्न विद्यातिरेकेण निःशेषकर्मनिवृत्तिरित्यर्थः। सत्स्वपि कर्मान्तरेषु मोक्षहेतुकर्मवशान्मोक्षमनुभूय कर्मान्तरफलानि पश्चाद्भोक्ष्यन्त इत्याशङ्क्याह— **न चेति**। दृष्टफलत्वाच्च विद्याया न तत्फलस्य कालान्तरापेक्षा येनोत्पन्नविद्योऽपि कर्मफलान्यनुभूय

**मोक्षः कर्मफलवद्भवितुमर्हति। अनित्यत्वप्रसङ्गात्। परोक्षत्वानुपपत्तेश्च ज्ञानफलस्य। तस्माद् ब्रह्माधिगमे दुरितक्षय इति स्थितम्।।१३।।**

।।इति नवमं तदधिगमाधिकरणम्।।

१०।।इतरासंश्लेषाधिकरणम्।।सू. १४।।

## इतरस्याप्येवमसंश्लेषः पाते तु।।१४।।

**पूर्वस्मिन्नधिकरणे बन्धहेतोरघस्य स्वाभाविकस्याश्लेषविनाशौ ज्ञाननिमित्तौ शास्त्रव्यपदेशान्निरूपितौ। धर्मस्य पुनः शास्त्रीयत्वाच्छास्त्रीयेण ज्ञानेनाविरोध इत्याशङ्क्य तन्निराकरणाय पूर्वाधिकरणन्यायातिदेशः क्रियते। इतरस्यापि पुण्यस्य कर्मण एवमघवदसंश्लेषो विनाशश्च ज्ञानवतो भवतः। कुतः? तस्यापि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसङ्गात्। 'उभे उ हैवैष एते तरति' (बृ.उ. ४।४।२२) इत्यादिश्रुतिषु**

### *शारीरकन्यायसंग्रहः*

**इतरस्याप्येवमसंश्लेषः पाते तु।।१४।।** न विद्यापुण्ये बाध्यबाधकभूते, चोदनालक्षणत्वात्, अग्निहोत्रदर्शपूर्णमासवदित्यनुमानानुगृहीतया पुण्यस्य फलपर्यन्तताप्रतिपादकविध्यन्यथानुपपत्त्या विरोधात् 'विद्वान् पुण्यपापे विधूय' 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्याद्यर्थवादगतया विद्यापुण्यक्षययोः इतरेतरसाध्यसाधनभावसाकाङ्क्षयोः एकपुरुषसंबन्धसन्निधानान्यथानुपपत्त्या न विद्यानिमित्तः पुण्यनाशः प्रतिपत्तुं शक्यत इति प्राप्तम्। तत्र पूर्ववद्विद्यासामर्थ्यमोक्षशास्त्रान्यथानुपपत्त्यनुगृहीतया पूर्वोक्तयाऽनुपपत्त्या सामान्यप्रवृत्तां विध्यन्यथानुपपत्तिं बाधित्वा ब्रह्मविद्विशेषविषये विद्यया पुण्यक्षयः साधितः।

### *प्रकटार्थविवरणम्*

**इतरस्याप्येवमसंश्लेषः पाते तु।।** वृत्तानुवादपूर्वकमधिकरणतात्पर्यमाह— **पूर्वस्मिन्निति**। यदि पुण्यमपि ज्ञानान्नश्यति,

### *भाष्यभावप्रकाशिका*

**इतरस्याप्येवमसंश्लेषः पाते तु।।** वृत्तं कीर्तयन्नधिकरणस्यानधिगतविषयतामाह— **पूर्वस्मिन्निति**। न विद्यापुण्ये बाध्यबाधकभूते चोदनालक्षणत्वादग्निहोत्रदर्शपूर्णमासवदित्याह— **धर्मस्येति**। न च 'क्षीयन्ते' इत्यादिवचनविरोधस्तस्य सामान्यवचनस्य 'सर्वे पाप्मान' इति विशेषश्रवणात् पापकर्मणि विशेष उपसंहारात्। 'पुण्यपापे विधूये'त्यादिवचनस्य पुण्यम् फलोपभोगेन पापम् ज्ञानेन विधूयेति नयनोपपत्तेरिति भावः। सूत्रपदं व्याचष्टे— **इतरस्यापीति**। ननु शास्त्रीयत्वेन तयोरविरोध उक्त इति शङ्कते— **कुत**

### *न्यायनिर्णयः*

पश्चान्मुच्येतेत्याह— **परोक्षेति**। श्रुतिस्मृतिन्यायसिद्धमुपसंहरति— **तस्मादिति**।।१३।। इति नवमं तदधिगमाधिकरणम्।।

ज्ञानात्पापनिवृत्तिमुक्त्वा तस्मादेव पुण्यनिवृत्तिमतिदिशति—**इतरस्यापीति**। अधिकरणस्यापूर्वविषयतां वक्तुं वृत्तं कीर्तयति— **पूर्वस्मिन्निति**। पुण्यं कर्म विषयः। तत्किं ब्रह्मधिया न क्षीयते, क्षीयते वेति पूर्ववत् कर्मणां फलान्तत्वप्रतीतेर्ज्ञानाद् दाहप्रतीतेश्च संशये पादादिसंगतिरतिदेशे पृथङ् न वाच्येति मन्वानोऽधिकां शङ्कामाह— **धर्मस्येति**। न सुकृतज्ञाने बाध्यबाधकभूते चोदनालक्षणत्वादग्निहोत्रदर्शपूर्णमासवत्। न च 'क्षीयन्ते चे'त्यादिविरोधस्तस्य सामान्योपाधौ प्रवृत्तस्य 'सर्वे पाप्मान' इति विशेषानुसारेण पापकर्मणि संकोचात्, पुण्यपापे विधूयेति पुण्यं फलोपभोगेन पापं ज्ञानेन विधूयेति नियमतो विद्यावतः सुकृताधीनः संसारः स्यादिति भावः। अधिकाशङ्कामनूद्य सिद्धान्तयति— **इत्याशङ्क्येति**। अतिदेशसूत्रपदानि व्याकरोति— **इतरस्यापीति**। शास्त्रीयत्वेन तयोर्विरोधो नास्तीत्युक्तमिति शङ्कते— **कुत इति**। अग्निहोत्रदर्शपूर्णमासयोरविरुद्धफलत्वात्र निवर्त्यनिवर्तकभावो, न शास्त्रीयत्वादित्यभिप्रेत्य हेतोरप्रयोजकत्वमाह— **तस्यापीति**। पापं दृष्टान्तयितुमपिशब्दः। कालात्ययापदिष्टत्वाच्च

**च दुष्कृतवत् सुकृतस्यापि प्रणाशव्यपदेशात्। अकर्त्रात्मत्वबोधनिमित्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात्। 'क्षीयन्ते चास्य कर्माणि' (मु.उ. २।२।८) इति चाविशेषश्रुतेः। यत्रापि केवल एव पाप्मशब्दो दृश्यते तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यम्। ज्ञानफलापेक्षया निकृष्टफलत्वात्। अस्ति च श्रुतौ पुण्येऽपि पाप्मशब्दः 'नैतं सेतुमहोरात्रे तरतः' (छा.उ. ८।४।१) इत्यत्र सह दुष्कृतेन सुकृतमप्यनुक्रम्य 'सर्वे पाप्मानोऽतो निवर्तन्त' इत्यविशेषेणैव प्रकृते पुण्ये पाप्मशब्दप्रयोगात्। पाते त्विति तुशब्दोऽवधारणार्थः। एवं धर्माधर्मयोर्बन्धहेत्वोर्विद्यासामर्थ्यादश्लेषविनाशसिद्धेरवश्यंभाविनी विदुषः शरीरपाते मुक्तिरित्यवधारयति।।१४।।**

।।इति दशममितरासंश्लेषाधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

।।अनारब्धकार्याधिकरणम्।।सू. १५।।

**अनारब्धकार्ये एव तु पूर्वे तदवधेः।।१५।।** विद्यासामर्थ्यानुगृहीतात् श्रुतिसामान्यात् शरीरारम्भककर्मणोऽपि विनाशः प्राप्तः। तत्र 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति शरीराद्विमोक्षणं संसारानुगमस्य मुक्त्यारम्भस्य चावधिरित्युक्तम्। यदि विज्ञानसमकालमेव सर्वकर्मक्षयात् मुक्तिः स्यात्, विज्ञानमेवावधिं ब्रूयात्। ततश्चावध्यन्तरकरणलिङ्गात् विज्ञानादुत्तरकालमपि कञ्चित्कालं शरीरमनुवर्तमानं कर्मसद्भावं गमयति। तत्रोद्दालकवसिष्ठादीनां तत्त्वदर्शिनामेव शरीरधारणविषयैः श्रुतिस्मृतिलिङ्गैः तत्त्वदर्शिभिरपि गुरुशिष्यसंबन्धनिर्देशान्यथानुपपत्त्या चानुगृहीतम् 'तस्य तावदेव चिरम्' इति लिङ्गं तत्त्वज्ञानस्यारब्धकर्मनिवर्तने पाटववैकल्यं प्रतिबन्धं वा कल्पयित्वा आरब्धकर्म परिशेषयति सामान्यश्रुतिं बाधित्वेति दर्शितम्। तदुपभोगापेक्षितद्वैतदर्शनं [चा]विद्यासंस्कारैः संस्कारतया स्मृतिहेतुभिरपि चैतन्यस्याविद्यावद्दोषतयाऽपरोक्षभ्रमहेतुभिरेवोपपद्यत इत्युक्तम्।

### *प्रकटार्थविवरणम्*

कथं तर्हि 'पाप्मानः प्रदूयन्त' इति पापग्रहणमित्याशङ्क्याह— **यत्रापि केवल एवेति**। ज्ञानसामर्थ्यादविशेषेण कर्मक्षये किं फलितमित्याशङ्क्याह— **पाते त्विति**। इति दशममितरासंश्लेषाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**इति**। शास्त्रीयत्वेऽपि तयोरुदितानुदितहोमवत् विरोधो न भवति। अतस्तेन कथं संगृह्यत इत्याशङ्क्योपचारात् तत्रापि पाप्मशब्दो वर्तिष्यत इत्याह— **ज्ञानापेक्षयेति**। ननु उपचारेणापि तत्र प्रयोगो नास्तीति, तत्राह— **अस्ति चेति**। 'न सुकृतं न दुष्कृत'मिति दुष्कृतेन सुकृतमप्यनुक्रम्योभयत्रापि पाप्मशब्दप्रयोगादित्यर्थः। सूत्रावयवमवतार्य व्याचष्टे— **पाते त्विति**। इति दशममितरासंश्लेषाधिकरणम्।।

### *न्यायनिर्णयः*

नानुमानमित्याह— **उभे इति**। विमतं तत्त्वधीनिवर्त्यं तद्विरुद्धत्वाद् दुरितवदिति प्रत्यनुमानविरोधाच्चायुक्तमनुमानमित्याह— **अकर्त्रात्मेति**। सामान्यश्रुतिविरोधाच्चानुमानासिद्धिरित्याह— **क्षीयन्ते चेति**। यत्तु सामान्यशास्त्रस्य 'सर्वे पाप्मान' इति विशेषश्रुत्या पाप्मकर्मणि संकोचः स्यादिति, तत्राह— **यत्रेति**। पाप्मशब्दस्य निकृष्टफलकर्मविषयत्वादुत्कृष्टफलं कर्म कथं तेन गृह्यते, तत्राह— **ज्ञानेति**। वृद्धप्रयोगाभावे कथमुपचारेणापि पाप्मशब्दः सुकृते स्यात्, तत्राह— **अस्तीति**। तत्रापि पाप्मशब्दस्य सुकृतविषयत्वमसिद्धमित्याशङ्क्य प्रक्रममनुसृत्याह— **सहेति**। यत्तु पुण्यपापे विधूयेत्यत्र पुण्यं फलभोगेन पापं विज्ञानेन विधूयेति विभजनं तन्नाश्रुतकल्पनाहेत्वभावादिति मत्वा ज्ञानसामर्थ्यादशेषकर्मक्षये तदश्लेषे च फलितमर्थं सूत्रावयवमवतार्य व्याकुर्वन्नाह— **पाते त्वितीति**। एतेन फलमधिकरणयोरुक्तम्।।१४।। इति दशममितरासंश्लेषाधिकरणम्।।

## ११।।अनारब्धकार्याधिकरणम्।।सू. १५।।

## अनारब्धकार्ये एव तु पूर्वे तदवधेः।।१५।।

**पूर्वयोरधिकरणयोर्ज्ञाननिमित्तः सुकृतदुष्कृतयोर्विनाशोऽवधारितः। स किमविशेषेणारब्धकार्ययोरनारब्धकार्ययोश्च भवत्युत विशेषेणानारब्धकार्ययोरेवेति विचार्यते। तत्र 'उभे उ हैवैष एते तरति' (बृ.उ. ४।४।२२) इत्येवमादिश्रुतिष्वविशेषश्रवणादविशेषेणैव क्षय इति।**

**एवं प्राप्ते प्रत्याह— अनारब्धकार्ये एव त्विति। अप्रवृत्तफले एव पूर्वे जन्मान्तरसंचिते अस्मिन्नपि च जन्मनि प्रग्ज्ञानोत्पत्तेः संचिते सुकृतदुष्कृते ज्ञानाधिगमात् क्षीयेते, न त्वारब्धकार्ये सामिभुक्तफले, याभ्यामेतद् ब्रह्मज्ञानायतनं जन्म निर्मितम्। कुत एतत्? 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छा.उ. ६।१४।२) इति शरीरपातावधिकरणात् क्षेमप्राप्तेः। इतरथा हि ज्ञानादशेषकर्मक्षये सति स्थितिहेत्वभावाज्ज्ञानप्राप्त्यनन्तरमेव क्षेममश्नुवीत। तत्र शरीरपातप्रतीक्षां नाचक्षीत।**

### *प्रकटार्थविवरणम्*

**अनारब्धकार्ये एव तु पूर्वे तदवधेः।।** वृत्तानुवादेन विचारमाह— **पूर्वयोरिति**। 'क्षीयन्ते चास्य कर्माणि' इत्यविशेषश्रुतेः 'तस्य तावदेव चिरम्' इत्यादिश्रुतेश्च संशयः। पूर्वाधिकरणन्यायेनाविशेषेणैव क्षय इत्याह— **तत्रेति**। सिद्धान्ते सूत्रमवतार्य व्याचष्टे— **अप्रवृत्तफले एवेत्यादिना**। तस्य ज्ञानिनस्तावत् चिरं विलम्बनम्, यावन्न विमोक्ष्यते विमुच्यते देहात्। तकारलोपश्छान्दसः। अथ संपत्स्ये शरीरपातसमयमेव तदेव संपद्यत इति ज्ञानोत्पत्त्यनन्तरं सत्संपत्तेः शरीरपातावधिकरणलिङ्गात् कञ्चित्कालं शरीरावस्थानं गम्यमानं कर्मसद्भावं गमयतीत्यर्थः। न च 'तावदेव चिरं यावत् 'स्नातो भुञ्जानस्ये'तिवत् शैघ्र्यं विवक्षितमिति वाच्यम्,

### *भाष्यभावप्रकाशिका*

**अनारब्धकार्ये एव तु पूर्वे तदवधेः।।** वृत्तं कीर्तयन्नधिकरणस्य विषयं दर्शयति— **पूर्वयोरिति**। सामिभुक्तम् अर्धभुक्तम् फलं ययोस्ते सामिभुक्तफले। विद्यासामर्थ्यानुगृहीतात् 'क्षीयन्ते चास्य कर्माणी'त्यविशेषश्रवणात् विद्वच्छरीरारम्भककर्मणोरपि विनाशो युक्त इत्याक्षिपति— **कुत एतदिति**। श्रुत्यवष्टम्भेन परिहरति— **तस्य तावदिति**। एतावता कथं कर्मशेषसद्भावावगम इति, तत्राह— **इतरथा हीति**। यदि विज्ञानसमकालमेव सर्वकर्मक्षयान्मुक्तिः स्यात् तदा विज्ञानमेव क्षेमप्राप्तेरवधिं ब्रूयात्, न तु शरीरपातम्, ततोऽवध्यन्तरकरणलिङ्गाद् विज्ञानादुत्तरकालमपि शरीरमनुवर्तमानं कर्मसद्भावं गमयतीत्यर्थः।

### *न्यायनिर्णयः*

तत्त्वज्ञानेन सर्वकर्मणामौत्सर्गिको लयो व्याख्यातः। सम्प्रत्यारब्धकर्मविषये तदपवादं दर्शयति— **अनारब्धेति**। वृत्तं कीर्तयन्नधिकरणस्य विषयमाह— **पूर्वयोरिति**। ज्ञानाधीनं कर्मक्षयं विषयीकृत्य 'क्षीयन्ते चे'त्यविशेषश्रुतेः'तस्य तावदेव चिर'मिति श्रुतेश्च संशयमाह— **स किमिति**। श्रौती ब्रह्मधीरप्रतिबद्धैव फलदेत्यभिधानात् पादादिसंगतिः। पूर्वपक्षे क्षेमप्राप्तेरवधिकरणासिद्धिः। सिद्धान्ते विदुषोऽपि प्रारब्धकर्मणा कंचित् कालमवस्थानात् तत्सिद्धिरित्यङ्गीकृत्य पूर्वाधिकरणन्यायेन पूर्वपक्षयति— **तत्रेति**।

सिद्धान्तसूत्रमवतार्य व्याकरोति— **एवमिति**। सौत्रावधारणार्थमाह— **न त्विति**। अर्धभुक्तफले कर्मणी कार्यद्वारा विशिनष्टि— **याभ्यामिति**। विद्याशक्त्यनुगृहीताविशेषश्रुतेर्विद्वद्देहारम्भकयोरपि कर्मणोर्नाशः स्यादित्याक्षिपति— **कुत इति**। श्रुत्योत्तरमाह— **तस्येति**। कथमेतावता कर्मशेषसिद्धिः, तत्राह— **इतरथेति**। ज्ञानसमकालमेव सर्वकर्मक्षयान्मोक्षे ज्ञानमेव क्षेमप्राप्तेरवधिरिति न देहपातं तदवधिमभिदधीत। तथा च श्रुतावधयन्तरकरणलिङ्गाज्ज्ञानादूर्ध्वमपि शरीरमनुवर्तमानं कर्मशेषं गमयति, तदभावे तदनुवृत्तेरनुपपत्तेरित्यर्थः। विद्याया दृष्टसामर्थ्येन कर्मक्षयहेतुत्वान्न शास्त्रेण तन्निराकरणम्, दृष्टविरोधिनस्तस्य ग्रावप्लवनश्रुतिवदप्रामाण्यादिति

---

१. 'स्नातः' इति षष्ठ्यन्तं पदम्। स्नानादि कुर्वतो यच्चिरं तावदेव, न ततोऽधिकमित्यर्थः। ततः शैघ्र्यप्रतीतिः।

**ननु वस्तुबलेनैवायमकर्त्रात्मावबोधः कर्माणि क्षपयन् कथं कानिचित् क्षपयेत्, कानिचिच्चोपेक्षेत? न हि समानेऽग्निबीजसंपर्के केषांचिद् बीजशक्तिः क्षीयते, केषांचिन्न क्षीयत इति शक्यमङ्गीकर्तुमिति। उच्यते– न तावदनाश्रित्यारब्धकार्यं कर्माशयं ज्ञानोत्पत्तिरुपपद्यते। आश्रिते च तस्मिन् कुलालचक्रवत् प्रवृत्तवेगस्यान्तराले प्रतिबन्धासंभवाद् भवति वेगक्षयप्रतिपालनम्। [१]अकर्त्रात्मबोधोऽपि हि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति। बाधितमपि तु मिथ्याज्ञानं द्विचन्द्रज्ञानवत् संस्कारवशात् कंचित्कालमनुवर्तत एव। अपि च नैवात्र विवदितव्यं**

### *प्रकटार्थविवरणम्*

लक्षणाप्रसङ्गात्। विद्यासामर्थ्यादारम्भकक्षये शरीरावस्थाने कारणाभावात् लक्षणैव युक्तेत्याह— **ननु वस्तुबलेनैवेति**। यथा तमोनिवर्तनसमर्थे सवितर्युदितेऽप्यपवरकप्रविष्टं तमो न निवर्तते, तथोदितेऽपि ज्ञानदिवाकरे प्रवृत्तफलं कर्म न निवर्तिष्यत इत्याह— **उच्यत इति**। अवश्यं तावत् स्वोत्पत्तये तत्त्वज्ञानेन प्रवृत्तफलं कर्माश्रयणीयम्। स्वीकृते च तस्मिन् कर्मणि कुलालचक्रवत् प्रवृत्तवेगस्य तन्निवर्तनपाटवशून्येन मध्ये क्षयासंभवात् भवति वेगक्षयपरिपालनम्;[२] तत्त्वज्ञानस्य च तन्निवर्तनपाटव-शून्यंत्वमुद्दालकादीनां तत्त्वदर्शिनामेव शरीरधारणविषयश्रुतिस्मृतिलिङ्गैः, तत्त्वदर्शिभिरेव गुरुशिष्यसंबन्धनिर्देशान्यथानुपपत्त्या चानुगृहीतात् 'तस्य तावदेव चिरम्' इति लिङ्गाद् गम्यत इति भावः। नन्वकर्त्रात्मज्ञानं कर्मनिदानमज्ञानं निवर्तयति; उपादानाभावे च कथंकारं कर्मानुवृत्तिरुदीर्येतेत्याशङ्क्याह— **अकर्त्रात्मत्वबोधोऽपीति**। अकर्तृ ब्रह्माहमस्मीत्येवंरूपोऽनुभवो जन्मान्तरादिसकलसंसारारम्भक-जीवोपाध्यनिर्वाच्याज्ञानशक्तिबाधनेनाप्रवृत्तफलानि कर्माणि यद्यप्युच्छिनत्ति, तथापि जन्मान्तराद्यारम्भकरूपेण कंचित्कालमनुवर्तते; तत्त्वज्ञानमप्युदयमात्रे न बाधते; किं तु प्रारब्धभोगक्षयकाल एव उदितं तन्निहन्तीत्यर्थः। प्रयोगोऽपि— ब्रह्मज्ञानं न प्रवृत्तफलकर्मबीजदाहकम्, प्रवृत्तफलकर्मकार्यत्वात्, भोगवत् इति। अनुवृत्तौ दृष्टान्तः— **द्विचन्द्रज्ञानवत्**। **संस्कारवशादिति**। संस्करोति व्यनक्ति द्वितीयं चन्द्रमिति संस्कारः जलपात्रादिः, तद्वशात्; यथा प्रमाणरूपेण बाधितमपि चन्द्रभेदज्ञानं कञ्चित्कालमनुवर्तते, जलपात्रादिविगमकालीनमेव

### *भाष्यभावप्रकाशिका*

दृष्टसामर्थ्याद् विद्यायाः कर्मक्षयहेतुत्वात्र शास्त्रबलेन तन्निराकरणं युक्तमिति शङ्कते— **ननु वस्तुबलेनेति**। अग्नेरपि मणिमन्त्रादिना प्रतिबन्धः[द्ध]स्यादाहकत्ववत्सर्वकर्मक्षये समर्थस्यापि विज्ञानस्य 'तावदेव चिर'मिति विदुषश्शरीरपातावधिकरण-लिङ्गमुद्दालकवसिष्ठादीनां तत्त्वविदामेव शरीरधारणविषयैःश्रुतिस्मृतिलिङ्गैस्तत्त्वविद्भिरपि गुरुभिःसहशिष्याणां संबन्धनिर्देशान्यथानुपपत्त्या चानुगृहीतं प्रारब्धकर्मनिवर्तने पाटववैकल्यं [वैकल्यं] प्रतिबन्धं वा कल्पयतीति परिहरति— **उच्यते न तावदिति**। **आश्रिते च तस्मिन्निति**। ज्ञानार्थकर्मणां स्वयमेव देहारम्भकत्वकल्पनायां (कर्मान्तर)गौरवात् कर्मान्तरारब्धदेहे ज्ञानोत्पादकत्वं वक्तव्यम्, तथा सत्युपजीव्यकर्मबाधकत्वमनुचितमित्यर्थः। दृश्यते च बाधकज्ञानोदयेऽपि मिथ्याज्ञानानुवृत्तिरित्याह— **अकर्त्रात्मेति**। **संस्कारवशादिति**।

### *न्यायनिर्णयः*

शङ्कते— **नन्विति**। दाहकसंनिध्यविशेषे दाहव्यवस्थाऽसिद्धिरित्यत्र दृष्टान्तमाह— **न हीति**। 'तस्य तावदेव चिर'मिति विदुषो देहपातावधिकरणलिङ्गम्, उद्दालकादीनां तत्त्वविदामेव देहधारणविषयैः श्रुतिस्मृतिलिङ्गैस्तत्त्वविद्भिरपि गुरुभिः शिष्याणां संबन्धान्यथानुपपत्त्या चानुगृहीतं मन्त्रादिप्रतिबद्धस्याग्नेरदाहकत्ववज्ज्ञानस्य सर्वकर्मक्षये शक्तस्याप्यारब्धकर्मनिवृत्तौ प्रतिबन्धं कल्पयतीत्याह— **उच्यत इति**। किंच ज्ञानार्थं कर्म स्वयमेव देहमारभ्य ज्ञानं तस्मिन् करोति, कर्मान्तरारब्धे वेति विकल्प्याद्यं दूषयति— **नेति**। न हि ज्ञानार्थस्य कर्मणो देहारम्भकत्वं कल्प्यं गौरवात्। तेन कर्मान्तरारब्धे देहे ज्ञानोत्पत्तिरित्यर्थः। न द्वितीयः। तथा सति ज्ञानस्योपजीव्यकर्मबाधकत्वानुपपत्तेरित्याह— **आश्रिते चेति**। अकर्त्रात्मज्ञानं कर्मनिदानमज्ञानं निवर्तयत्युपादानाभावे च कथं कर्मानुवृत्तिः, तत्राह— **अकर्त्रात्मेति**। कर्माण्यपीति संबन्धः। सोपादानानि कर्माण्युच्छिन्नानि चेत् कथमारब्धकर्मानुवृत्तिः, तत्राह— **बाधितमिति**। स्मृतिहेतुत्वेऽपि संस्कारस्याविद्यावच्चैतन्यदोषत्वादपरोक्षभ्रमहेतुतेत्यभिप्रेत्य संस्कारवशादित्युक्तम्। विप्रतिपन्नान्प्रति

१. 'अकर्त्रात्मत्व' 'अकर्त्रात्माव' इति पा.। २. वेगक्षयप्रतीक्षेत्यर्थः।

**ब्रह्मविदा कंचित्कालं शरीरं ध्रियते न वा ध्रियत इति। कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं चापरेण प्रतिक्षेप्तुं शक्येत? श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेनैतदेव निरुच्यते। तस्मादनारब्धकार्ययोरेव सुकृतदुष्कृतयोर्विद्यासामर्थ्यात् क्षय इति निर्णयः।।१५।।**

।।इत्येकादशमनारब्धकार्याधिकरणम्।।

१२।।अग्निहोत्राद्यधिकरणम्।।सू. १६-१७।।

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्।।१६।।

**पुण्यस्याप्यश्लेषविनाशयोरघन्यायोऽतिदिष्टः। सोऽतिदेशः सर्वपुण्यविषय इत्याशङ्क्य प्रतिवक्ति– अग्निहोत्रादि**

### *शारीरकन्यायसंग्रहः*

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्।।१६।। अतोऽन्याऽपि ह्येकेषामुभयोः।।१७।। [१]यदेव विद्ययेति हि।।१८।।** नित्याग्निहोत्रादीनां स्वर्गादिसमुद्दिष्टफलाभावात् सगुणविद्यादिभिः सहाप्येकफलारम्भकत्वसंभवेन विरोधाभावात् विद्यया तेषां क्षयाभाव-प्राप्तावपि सुकृतक्षयशब्दसामान्यात् क्षय एव प्राप्तः। तत्र सुकृतक्षयशब्दस्य काम्येष्वपि सावकाशत्वात् सगुणविद्यासाध्यफलविरोधाभावे च सति नित्यकर्मविधिसामर्थ्यादेव सगुणविद्वदनुष्ठितकर्मविशेषक्षये सामान्यश्रुतिमपबाध्य विद्यया सहैकफलत्वं दर्शितम्।

### *प्रकटार्थविवरणम्*

चन्द्रैकत्वज्ञानं निवर्तकं तद्वदिति व्यवस्था पूर्वोक्तप्रमाणबलादेव कल्प्यते। विचित्राश्च शक्तयो भावानां न सामान्यतोदृष्टेन हातव्याः।

यश्च **भास्कर**प्रभृतीनां प्रलापः आश्रयाभावान्न कर्माद्यनुवृत्तिः, जीवस्य ब्रह्मीभावात् ब्रह्मणि तदसंभवाच्च, 'जीवन्नथ च मुक्तः' इत्यपि विरुद्धं पदद्वयमित्यादिः; सोऽपि प्रागुक्तपरिपाट्या प्रत्यूढ एव। यतो जीवसंबन्ध्येवाज्ञानादि वर्तमानकार्यसंपादकरूपेण वर्तत इत्यभाणि। जन्मान्तरादिसकलसंसारारम्भकाविद्याकामकर्मादिबन्धध्वंसान्मुक्तः वर्तमानभोगभागित्वाच्च जीवन्नित्यविरुद्धं पदद्वयम्। ब्रह्मीभूतत्वाभिधानमप्यब्रह्मत्वभ्रमव्यावृत्त्या।

विद्वदनुभवसिद्धत्वाच्च अस्यार्थस्य नात्र धाष्टर्यमात्रेण विवदितव्यमित्याह— **अपि चेत्यादिना**। इत्येकादशमनारब्धकार्याधिकरणम्।।

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्**। व्यवहिताधिकरणसंबन्धमाह— **पुण्यस्यापीति**। निर्गुणब्रह्मज्ञानविषयत्वं सूत्रस्याङ्गीकृत्य

### *भाष्यभावप्रकाशिका*

संस्काराणां स्मृतिहेतुत्वेऽप्यविद्यावच्चैतन्यदोषतया अपरोक्षभ्रमहेतुत्वमुपपद्यत इति भावः। तदेवमविश्वस्तान् प्रतिबोध्य विश्वस्तान् प्रत्याह— **अपि चेति**। प्रमाणवत्त्वादपि जीवतो मुक्तिरङ्गीकर्तव्येत्याह— **श्रुतिस्मृतीति**। इत्येकादशमनारब्धकार्याधिकरणम्।।

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्।।** वृत्तसंकीर्तनपूर्वकमधिकरणस्य तात्पर्यमाह— **पुण्यस्यापीति**। सुकृतशब्दस्य

### *न्यायनिर्णयः*

जीवन्मुक्तिमुक्त्वा शिष्यान्प्रत्याह— **अपि चेति**। जीवन्मुक्तिः सप्तम्यर्थः। विवादायोगे हेतुमाह— **कथं हीति**। प्रमाणवत्त्वादपि जीवन्मुक्तिः स्वीकार्येत्याह— **श्रुतीति**। उक्तमुत्सर्गापवादमुपसंहरति— **तस्मादिति**।।१५।। इत्येकादशमनारब्धकार्याधिकरणम्।।

विद्याजन्यकर्मक्षयस्यारब्धकर्मस्वपवादमुक्त्वाऽनारब्धकर्मस्वपि केषुचित् तदपवादं दर्शयति— **अग्निहोत्रादीति**। वृत्तसंकीर्तन-पूर्वकमधिकरणस्य तात्पर्यमाह— **पुण्यस्येति**। अग्निहोत्रादिनित्यनैमित्तिककर्माणि विषयः। तेषामितरवज्ज्ञानेनाश्लेषविनाशौ स्याताम्

---

१. इदं पृथगधिकरणम्। अस्याधिकरणस्य न्यायसंग्रहो लुप्तः इति भाति।

**त्विति। तुशब्द आशङ्कामपनुदति। यन्नित्यं कर्म वैदिकमग्निहोत्रादि तत् तत्कार्यायैव भवति; ज्ञानस्य यत्कार्यं तदेवास्यापि कार्यमित्यर्थः। कुतः? 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' (बृ.उ. ४।४।२२) इत्यादिदर्शनात्। ननु ज्ञानकर्मणोर्विलक्षणकार्यत्वात् कार्यैकत्वानुपपत्तिः। नैष दोषः। ज्वरमरणकार्ययोरपि दधिविषयोर्गुडमन्त्रसंयुक्तयोस्तृप्तिपुष्टिकार्यदर्शनात्। तद्वत् कर्मणोऽपि ज्ञानसंयुक्तस्य मोक्षकार्योपपत्तेः[1]। नन्वनारभ्यो मोक्षः; कथमस्य कर्मकार्यत्वमुच्यते? नैष दोषः। आरादुपकारकत्वात् कर्मणः। ज्ञानस्यैव हि प्रापकं सत् कर्म प्राणाड्या मोक्षकारणमित्युपचर्यते। अत एव चातिक्रान्तविषयमेतत् कार्यैकत्वाभिधानम्। न हि ब्रह्मविद आगाम्यग्निहोत्रादि संभवति। अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात्। सगुणासु तु विद्यासु कर्तृत्वानतिवृत्तेः संभवत्यागाम्यप्यग्निहोत्रादि। तस्यापि निरभिसंधिनः कार्यान्तराभावाद् विद्यासंगत्युपपत्तिः।।१६।।**

### *प्रकटार्थविवरणम्*

लाङ्गलभोजनयोर्जीवनहेतुत्ववत् ज्ञानकर्मणोः साक्षात्पारंपर्याभ्यां मोक्षहेतुत्वमुक्तम्। इदानीं सगुणविद्याविषयत्वे सूत्रस्य सामञ्जस्यमाह— **सगुणासु तु विद्यास्विति।**

### *भाष्यभावप्रकाशिका*

सर्वपुण्यविषयत्वादग्निहोत्रादेरपीतरपुण्यवद् विनाशात् 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर'मिति न्यायेनारुरुक्षुणाऽप्यग्निहोत्रादीनि नानुष्ठेयानीति प्राप्तमित्यर्थः। विद्याविनाश्यानामपि कर्मणामनुष्ठानस्य विद्योत्पत्तिसिद्ध्यर्थतया पङ्कप्रक्षालनन्यायानवतार्यान्[तारात्] ज्ञानोत्पत्तेः प्रागग्निहोत्रादिकमनुष्ठेयमिति परिहरति— **यन्नित्यमिति**। परमतावलम्बनेन तु तावदुत्तरमाह— **नैष दोष इति**। स्वपक्षं दर्शयितुं शङ्कामुत्थापयति— **नन्वनारभ्य इति**। स्वमतेन परिहरति— **आरादुपकारकत्वादिति**। यतो न विद्यासमये कर्मास्ति, नापि परस्तात्, किन्तु विद्यायाः प्रागेवात एवातिक्रान्तविषयमेतदित्यर्थः। एतदेव स्फुटयति— **न हि ब्रह्मविद इति**। ननु तत्कार्यायेति वदन् सूत्रकारो विदुषा अनुष्ठीयमानानां विद्याफले कर्मणामुपयोगं दर्शयतीति, तत्राह— **सगुणासु तु विद्यास्विति**। विद्यासाध्यफले नित्यकर्मणां साक्षादुपयोगाभिप्रायमेतत्सूत्रमित्यर्थः।

### *न्यायनिर्णयः*

न वेति साधारणश्रुतेर्विविदिषाश्रुतेश्च संशये सुकृतशब्दस्य सर्वपुण्यविषयत्वादग्निहोत्रादीनामपि पुण्यान्तरवद् विनाश्यत्वात् पङ्कक्षालनन्यायापातादारुरुक्षुणाऽपि तानि नानुष्ठेयानीति प्रापय्य सिद्धान्तयति— **इत्याशङ्क्येति**। अत्र च ब्रह्मविद्यासामर्थ्यान्न नित्यनैमित्तिकनिवृत्तिस्तेषां तदुत्पत्त्यर्थत्वादित्यापवादिकी पादादिसंगतिः। पूर्वपक्षे लौकिकन्यायादारुरुक्षोरपि नित्याद्यननुष्ठानम्। सिद्धान्ते तदनवतारात् पूर्वं ज्ञानोत्पत्तेस्तदनुष्ठानध्रौव्यमित्यभिप्रेत्य सूत्रं व्याचष्टे— **तुशब्द इति**। धीनाश्यानामपि कर्मणामनुष्ठानस्य विद्योत्पत्त्यर्थतया पङ्कप्रक्षालनन्यायानवकाशात् पूर्वं ज्ञानादनुष्ठेयान्यग्निहोत्रादीनीति सिद्धान्तप्रतिज्ञां विवृणोति— **यदिति**। अग्निहोत्राद्यनुष्ठानस्य विद्योत्पत्त्यर्थत्वे प्रमाणं पृच्छति— **कुत इति**। तत्र विविदिषावाक्यं प्रमाणयति— **तमेतमिति**। कर्मणां विद्योत्पत्त्यर्थत्वेऽपि न तयैककार्यतेति शङ्कते— **नन्विति**। परमतेन परिहरति— **नेत्यादिना**। स्वमतं दर्शयितुं शङ्कयति— **नन्विति**। स्वमतेन समाधत्ते— **नेत्यादिना**। आरादुपकारकत्वं स्फोरयति— **ज्ञानस्येति**। किंविषयमिदं कार्यैकत्ववचनं, तदाह— **अत इति**। यतो विद्याकाले परस्ताद्वा कर्म नास्ति, प्रागेव तदस्तित्वमत एवेति यावत्। धीकाले परस्ताद्वा कर्मासत्त्वं स्फुटयति— **न हीति**। निर्गुणविद्याविषयत्वं सूत्रस्योपेत्य लाङ्गलभोजनयोर्जीवनहेतुतावद् धीकर्मणोः साक्षात्पारम्पर्याभ्यां मोक्षहेतुत्वमुक्तम्। सम्प्रति सगुणविद्याविषयत्वे सूत्रस्य सामञ्जस्यमभिप्रेत्याह— **सगुणास्विति**। तथापि तस्य कुतो विद्यासंगतिः, तत्राह— **तस्यापीति**। सगुणविद्याफले नित्यकर्मणां साक्षादुपयोगाभिप्रायमिदं सूत्रमित्यर्थः।।१६।।

---

१. 'मोक्षकार्यत्वोपपत्तेः' इति पा.।

किंविषयं पुनरिदमश्लेषविनाशवचनम्, किंविषयं वाऽदो विनियोगवचनमेकेषां शाखिनाम्– 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति। अत उत्तरं पठति–

**अतोऽन्याऽपि ह्येकेषामुभयोः।।१७।।**

अतोऽग्निहोत्रादेर्नित्यात् कर्मणोऽन्याऽपि ह्यस्ति साधुकृत्या, या फलमभिसंधाय क्रियते; तस्या एष विनियोग उक्त एकषां शाखिनाम् 'सुहृदः साधुकृत्यामुपयन्ति' इति। तस्या एव चेदमघवदश्लेषविनाशनिरूपणम्– इतरस्याप्येवमसंश्लेष इति। तथा– एवंजातीयकस्य काम्यस्य कर्मणो विद्यां प्रत्यनुपकारकत्वे संप्रतिपत्तिरुभयोरपि जैमिनिबादरायणयोराचार्ययोः।।१७।।

।।इति द्वादशमग्निहोत्राद्यधिकरणम्।।

१३।।विद्याज्ञानसाधनत्वाधिकरणम्।।सू. १८।।

**यदेव विद्ययेति हि।।१८।।**

समधिगतमेतदनन्तराधिकरणे नित्यमग्निहोत्रादिकं कर्म मुमुक्षुणा मोक्षप्रयोजनोद्देशेन कृतमुपात्तदुरित-क्षयहेतुत्वद्वारेण सत्त्वशुद्धिकारणतां प्रतिपद्यमानं मोक्षप्रयोजनब्रह्माधिगमनिमित्तत्वेन ब्रह्मविद्यया सहैककार्यं भवतीति। तत्राग्निहोत्रादि कर्माङ्गव्यपाश्रयविद्यासंयुक्तं केवलं चास्ति। 'य एवं विद्वान् यजति', 'य एवं विद्वाञ्जुहोति', 'य एवं विद्वाञ्छंसति', 'य एवं विद्वान् गायति', 'तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदम्' (छा.उ. ४।१७।१०), 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' (छा.उ. १।१।१०) इत्यादिवचनेभ्यो विद्यासंयुक्तमस्ति, केवलमप्यस्ति। तत्रेदं विचार्यते– किं विद्यासंयुक्तमेवाग्निहोत्रादिकं कर्म मुमुक्षोर्विद्याहेतुत्वेन तया सहैककार्यत्वं प्रतिपद्यते, न केवलमुत विद्यासंयुक्तं केवलं चाविशेषेणेति। कुतः संशयः? 'तमेतमात्मानं यज्ञेन विविदिषन्ति' इति यज्ञादीनामविशेषेणात्मवेदनाङ्गत्वेन श्रवणात्। विद्यासंयुक्तस्य

*प्रकटार्थविवरणम्*

सूत्रान्तरमवतारयति— **किंविषयं पुनरिति। अतोऽन्याऽपि ह्येकेषामुभयोः**।। इति द्वादशमग्निहोत्राद्यधिकरणम्।।

**यदेव विद्ययेति हि**।। वृत्तसङ्कीर्तनेन विचारारम्भमाह— **समधिगतमिति**। सबीजं संशयमुक्त्वा पूर्वपक्षमाह— **विद्यासंयुक्तमेवेति**।

*भाष्यभावप्रकाशिका*

सूत्रान्तरमवतारयितुं पृच्छति— **किंविषयमिति**। काम्यकर्मविषयं वचनद्वयमित्यर्थः। इति द्वादशमग्निहोत्राद्यधिकरणम्।।

**यदेव विद्येति हि**।। वृत्तं कीर्तयति— **समधिगतमेतदिति**। इदानीमधिकरणस्य विषयं दर्शयति— **तत्राग्निहोत्रादि कर्मेति**। अङ्गव्यपाश्रयविद्यायुक्तत्वे प्रमाणमाह— **य एवं विद्वानिति**। प्रश्नपूर्वकं संशयकारणमाह— **कुतःसंशय इत्यादिना**।

*न्यायनिर्णयः*

सूत्रान्तरमवतारयितुं पृच्छति— **किमिति**। काम्यकर्मविषयं वचनद्वयमिति सूत्रमवतारयति— **अत इति**। तदक्षराणि व्याकरोति— **अत इत्यादिना**। उक्तेऽर्थे दार्ढ्यार्थमाचार्यान्तरसंवादं दर्शयति— **तथेति**।।१७।। इति द्वादशमग्निहोत्राद्यधिकरणम्।।

पूर्वोक्ताग्निहोत्रादिष्वेवाङ्गावबद्धोपास्तिसाहित्यानियमं निरूपयति— **यदेवेति**। वृत्तं कीर्तयति— **समधिगतमिति**। विचारविषयं दर्शयति— **तत्रेति**। अङ्गसङ्गिविद्यासंयुक्तत्वे प्रमाणमाह— **य एवमिति**। नित्यमग्निहोत्रादिकर्म विषयीकृत्य संशयमाह— **तत्रेदमिति**। प्रश्नपूर्वकं संशयकारणमाह— **कुत इति**। श्रौतब्रह्मधीहेतुतया प्रकृतनित्यकर्मस्वङ्गाश्रितविद्यासंयोगानियमवादादत्र प्रासङ्गिकी पादादिसंगतिः।

**चाग्निहोत्रादेर्विशिष्टत्वावगमात्। किं तावत् प्राप्तम्? विद्यासंयुक्तमेव कर्माग्निहोत्राद्यात्मविद्याशेषत्वं प्रतिपद्यते, न विद्याविहीनम्[१]। विद्योपेतस्य विशिष्टत्वावगमाद् विद्याविहीनात्। 'यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान्' (बृ.उ. १।५।२) इत्यादिश्रुतिभ्यः। 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' (भ.गी. २।३९), 'दूरेण ह्यवरं कर्म बुद्धियोगाद् धनंजय' (भ.गी. २।४९) इत्यादिस्मृतिभ्यश्चेति।**

**एवं प्राप्ते प्रतिपाद्यते- यदेव विद्ययेति हि। सत्यमेतत्। विद्यासंयुक्तं कर्माग्निहोत्रादिकं विद्याविहीनात् कर्मणोऽग्निहोत्रादेर्विशिष्टम्, विद्वानिव ब्राह्मणो विद्याविहीनाद् ब्राह्मणात्। तथापि नात्यन्तमनपेक्षं विद्याविहीनं कर्माग्निहोत्रादिकम्। कस्मात्? 'तमेतमात्मानं यज्ञेन विविदिषन्ति' इत्यविशेषेणाग्निहोत्रादेर्विद्याहेतुत्वेन श्रुतत्वात्। ननु विद्यासंयुक्तस्याग्निहोत्रादेर्विद्याविहीनाद्विशिष्टत्वावगमाद् विद्याविहीनमग्निहोत्राद्यात्मविद्याहेतुत्वेनानपेक्षमेवेति युक्तम्। नैतदेवम्। विद्यासहायस्याग्निहोत्रादेर्विद्यानिमित्तेन सामर्थ्यातिशयेन योगादात्मज्ञानं प्रति कश्चित् कारणत्वातिशयो भविष्यति, न तथा विद्याविहीनस्येति युक्तं कल्पयितुम्। न तु 'यज्ञेन विविदिषन्ति' इत्यत्राविशेषेणात्मज्ञानाङ्गत्वेन श्रुतस्याग्निहोत्रादेरनङ्गत्वं शक्यमभ्युपगन्तुम्। तथाहि श्रुतिः- 'यदेव विद्यया**

### *प्रकटार्थविवरणम्*

विद्याविहीनात् कर्मणः सकाशात् विद्यासंयुक्तस्य वीर्यवत्तरत्ववचनात् विशिष्टत्वावगमादित्यर्थः। श्रुतिस्मृतिलिङ्गाच्च विशिष्टत्वमाह— **यदहरेवेति**। मृत्युमधर्मम्। 'यदेव विद्यया' इति श्रुतेर्हि यस्माद् विद्यासहितस्य वीर्यवत्तरत्वाभिधानेनेतरस्यापि वीर्यव(त्तर)त्वमवगम्यते, तस्मात् तदप्यपेक्षितव्यमिति संक्षेपः। इति त्रयोदशं विद्याज्ञानसाधनत्वाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

नन्वविशेषेण यज्ञेनेत्यादिश्रवणादुभयविधस्यापि विद्याङ्गत्वं स्यादित्याशङ्क्य यथा 'ब्राह्मणाय हिरण्यं दद्यादि'त्युक्ते विदुषे ब्राह्मणाय दद्यान्न तु मूर्खायेति विशेषो लभ्यते, तस्यातिशयवत्त्वादेवमिहापीत्याह— **न विद्याविहीनमिति**। वैशिष्ट्ये प्रमाणमाह— **यदहरेवेति**। किं विद्यायुक्तस्य कर्मणो विद्याविहीनादन्तरङ्गत्वमस्तीत्युच्यते, किं वा केवलं कर्म विद्यासाधनमेव न भवतीति? यद्याद्यस्तदङ्गीक्रियत इत्याह— **सत्यमेतदिति**। यदि द्वितीयस्तन्नोपपद्यते श्रुतिविरोधादित्याह— **तथापीति**। उक्तमेवार्थमाक्षेपसमाधानाभ्यां प्रपञ्चयति— **ननु विद्यासंयुक्तस्येत्यादिना**। ननु 'विविदिषन्ति यज्ञेने'त्यविशेषश्रुतमपि विद्यासहिते यज्ञादौ कस्मान्नोपसंह्रियत इत्याशङ्क्य श्रुत्या विद्यारहितस्यापि वीर्यवत्त्वाभ्यनुज्ञानादित्याह— **तथा हि श्रुतिरिति**। ननु वीर्यवत्त्वमेवावगम्यते, न तु

### *न्यायनिर्णयः*

पूर्वपक्षे केवलकर्मणो मोक्षान्वयासिद्धिः, सिद्धान्ते तस्यापि पारम्पर्यात् तत्सिद्धिरिति मत्वा विमृश्य पूर्वपक्षमाह— **किं तावदिति**। अविशेषतो यज्ञेनेत्यादिश्रुतेरुभयस्यापि कर्मणो विद्याङ्गतेत्याशङ्क्य ब्राह्मणाय दद्यादित्युक्ते विदुषे न तद्धीनायेति विशेषलाभवदिहापीत्याह— **नेत्यादिना**। विद्यासहितस्य कर्मणो वैशिष्ट्ये मानमाह— **यदहरिति**। श्रौतेऽर्थे स्मृतिमनुकूलयति— **बुद्ध्येति**।

केवलस्याग्निहोत्रादेर्धीहेतुत्वाभावान्मोक्षान्वयो नेति प्राप्तमनूद्य सिद्धान्तयति— **एवमिति**। किं विद्यायुक्तस्य कर्मणो विद्याहीनादन्तरङ्गत्वमुच्यते किंवा केवलं कर्म विद्याहेतुरेव नेति। तत्राद्यमङ्गीकरोति— **सत्यमिति**। द्वितीयं दूषयति— **तथापीति**। तत्र प्रश्नपूर्वकं श्रुतिविरोधं हेतुमाह— **कस्मादिति**। उक्तमर्थमाक्षेपसमाधिभ्यां साधयति— **नन्वित्यादिना**। केवलस्य कर्मणो विद्यां प्रत्यनङ्गत्वमेव किं न स्यात्, तत्राह— **न त्विति**। 'विविदिषन्ति यज्ञेने'त्यविशेषश्रुतमपि विद्यासहिते यज्ञादावुपसंहर्तव्यमित्याशङ्क्य श्रुत्या केवलस्यापि कर्मणो वीर्यवत्त्वाभ्यनुज्ञानान्मैवमिति सूत्रव्याख्यापूर्वकमाह— **तथा हीति**। वीर्यवत्त्वप्रतीतावपि कुतो विद्यासाधनत्व-

१. 'विद्याहीनम्' इति पा.

**करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा.उ. १।१।१०) इति विद्यासंयुक्तस्य कर्मणोऽग्निहोत्रादेर्वीर्यवत्तरत्वाभिधानेन स्वकार्यं प्रति कंचिदतिशयं ब्रुवाणा विद्याविहीनस्य तस्यैव तत्प्रयोजनं प्रति वीर्यवत्त्वं दर्शयति। कर्मणश्च वीर्यवत्त्वं तद् यत्स्वप्रयोजनसाधनप्रसहत्वम्। तस्माद् विद्यासंयुक्तं नित्यमग्निहोत्रादि विद्याविहीनं चोभयमपि मुमुक्षुणा मोक्षप्रयोजनोद्देशेनेह जन्मनि जन्मान्तरे च प्राग्ज्ञानोत्पत्तेः कृतं यत् तद्यथासामर्थ्यं ब्रह्माधिगमप्रतिबन्धकारणोपात्तदुरितक्षयहेतुत्वद्वारेण ब्रह्माधिगमकारणत्वं प्रतिपद्यमानं श्रवणमननश्रद्धातात्पर्याद्यन्तरङ्गकारणापेक्षं ब्रह्मविद्यया सहैककार्यं भवतीति स्थितम्।।१८।।**

।।इति त्रयोदशं विद्याज्ञानसाधनत्वाधिकरणम्।।

**१४।।इतरक्षपणाधिकरणम्।।सू. १९।।**

## भोगेन त्वितरे क्षपयित्वा संपद्यते।।१९।।

**अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्यात् क्षय उक्तः। इतरे त्वारब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म संपद्यते 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छा.उ. ६।१४।२) इति, 'ब्रह्मैव**

### *शारीरकन्यायसंग्रहः*

**भागेने त्वितरे क्षपयित्वा संपद्यते।।१९।।** निर्गुणब्रह्मविद्वानारब्धकर्मक्षयानन्तरमपि संसारी, विद्यावत्त्वेऽपि संसारसंबन्धयोग्यत्वात्, पूर्वकालीनब्रह्मविद्वदित्यनुमानेन संसारनिमित्तकल्पनाम् 'अथ संपत्स्ये' इत्यादिश्रुत्या बाधित्वाऽऽरब्धकर्मक्षयानन्तरं मुक्तिरुक्ता।

**इति भगवत्प्रकाशात्मविरचिते शारीरकन्यायसंग्रहे चतुर्थाध्यायस्य प्रथमः पादः।।**

### *प्रकटार्थविवरणम्*

**भोगेन त्वितरे क्षपयित्वा संपद्यते।।** वृत्तानुवादेन सूत्रतात्पर्यमाह— **अनारब्धकार्ययोरिति।** निर्गुणब्रह्मविद्वानारब्ध-

### *भाष्यभावप्रकाशिका*

विद्यासाधनत्वमित्याशङ्क्याकिंचित्करस्य वीर्यवत्त्वाभिधानायोगाद्विद्यासाधनत्वमपि सिध्यतीत्याह— **कर्मणश्चेति।** कर्मणां पारम्पर्येण मोक्षसाधनत्वमुपदर्शयन्नुपसंहरति— **तस्माद्विद्यासंयुक्तमिति।**

**भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते।** अनारब्धकार्ये इत्यत्र नञा यद्व्यावर्तितं तत्क्षयप्रकारं दर्शयत्यनेन सूत्रेण।

### *न्यायनिर्णयः*

मित्याशङ्क्याकिंचित्करस्य वीर्यवत्त्वायोगादित्याह— **कर्मणश्चेति।** कर्मणां पारम्पर्येण मोक्षान्वयं दर्शयितुमुपसंहरति— **तस्मादिति।** विधुरादेराश्रमकर्मस्वनधिकारात् तदीयं जप्यादि विद्यासाधनमित्यन्तरा चापीत्यत्रोक्तम्। इह तु विद्योपेतेषु कर्मसु शक्तस्य तत्त्यागेन केवलकर्मकारिणो न विद्या सेत्स्यतीत्याशङ्क्य समाहितमिति द्रष्टव्यम्।।१८।।

अनारब्धकार्यमग्निहोत्रादि विद्यायुक्तं केवलं च तद्धेतुत्वान्न क्षीयते ज्ञानेनेत्युक्तम्। इदानीमारब्धकार्ययोः शुभाशुभयोर्ज्ञानादनिवृत्तयोर्निवृत्तिप्रकारमाह— **भोगेनेति।** निर्गुणब्रह्मविद् विषयः। स किं देहपातादूर्ध्वमपि संसारवान्न वेति तन्निमित्तभावाभावाभ्यां संदेहे पूर्वपक्षमग्रे दर्शयिष्यन्नादौ वृत्तानुवादेन सूत्रतात्पर्यमाह— **अनारब्धेति।** अत्र श्रौतब्रह्मविद्यावतो भोगेनारब्धकर्मनिवृत्तौ ब्रह्मभावस्यावश्यंभावोक्त्या पादादिसंगतिः। पूर्वपक्षे ब्रह्मविदोऽपि न मुक्तिः। सिद्धान्ते तस्य साऽवश्यंभाविनी, सत्यां सामग्र्यां कार्यध्रौव्यात्। अनारब्धकार्ये एवेत्यत्र नञाऽऽरब्धकर्म निवृत्तेर्व्यावर्तितं तस्य फलं भोगेन क्षयलक्षणमधुना दर्शयतीत्युक्तम्। इदानीं

**सन् ब्रह्माप्येति' (बृ.उ. ४।४।६) इति चैवमादिश्रुतिभ्यः। ननु सत्यपि सम्यग्दर्शने यथा प्राग्देहपाताद् भेददर्शनं द्विचन्द्रदर्शनन्यायेनानुवृत्तमेवं पश्चादप्यनुवर्तेत। न; निमित्ताभावात्। उपभोगशेषक्षपणं हि तत्रानुवृत्तिनिमित्तम्, न च तादृशमत्र किंचिदस्ति। नन्वपरः कर्माशयोऽभिनवमुपभोगमारप्स्यते। न; तस्य दग्धबीजत्वात्। मिथ्याज्ञानावष्टम्भं हि कर्मान्तरं देहपात उपभोगान्तरमारभते। तच्च मिथ्याज्ञानं सम्यग्ज्ञानेन दग्धमित्यतः साध्वेतदारब्धकार्यक्षये विदुषः कैवल्यमवश्यं भवतीति।।१९।।**

**इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पादकृतौ शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य प्रथमः पादः।।१।।**

**।।इति चतुर्थस्याध्यायस्य जीवन्मुक्तिनिरूपणाख्यः प्रथमः पादः।।**

## *प्रकटार्थविवरणम्*

कर्मभोगक्षयानन्तरमपि संसारी, विद्यावत्त्वेऽपि संसारसंबन्धयोग्यत्वात्, पूर्वकालीनब्रह्मविदिवेत्यनुमानं पूर्वपक्षबीजमाह— **ननु सत्यपीति**। सुखाद्यनुभवनिमित्तकर्मवत्त्वमुपाधिरित्याह— **न निमित्ताभावादिति**। साधनव्यापकत्वादनुपाधित्वं शङ्कते— **नन्वपर इति**। 'अथ संपत्स्ये' इत्यादिश्रुतिबाधात् बीजाभावस्य च विद्वदनुभवसिद्धत्वान्नापूर्वं कर्मानुमातुं शक्यत इत्याह— **न, तस्येति**। इति चतुर्दशमितरक्षपणाधिकरणम्।।

**इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे चतुर्थस्याध्यायस्य प्रथमः पादः समाप्तः।।**

## *भाष्यभावप्रकाशिका*

विप्रतिपन्नो निर्गुणब्रह्मवित् संसारवान् भवितुमर्हति, संसारसंबन्धयोग्यत्वात्, पूर्वकालीनब्रह्मविद्वदित्याशङ्कते— **ननु सत्यपीति**। संसारस्य कर्मनिमित्तत्वादुत्तरकालं च तस्यासंभवान्न संसारित्वमित्याह— **निमित्ताभावादिति**। नन्वनारब्धफलं कर्म जन्मान्तरारम्भनिमित्तं भविष्यतीति शङ्कते— **नन्वपर इति**। न; तस्य ज्ञानेन प्रतिबन्ध[द्ध]फलप्रसवशक्तित्वादिति परिहरति— **न तस्य दग्धबीजत्वादिति**। किं तस्य बीजं केन वा तस्य दाह इति, तद् दर्शयति— **मिथ्याज्ञानेति**। अधिकरणार्थमुपसंहरति— **अत इति**। इति चतुर्दशमितरक्षपणाधिकरणम्।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुखमुनिविरचितायां भाष्यभावप्रकाशिकायां चतुर्थस्याध्यायस्य प्रथमः पादः समाप्तः।।**

## *न्यायनिर्णयः*

निर्गुणब्रह्मविद्वानारब्धकर्मक्षयानन्तरमपि संसारी संसारसंबन्धयोग्यत्वात् पूर्वकालीनब्रह्मविद्वानिवेत्यनुमानेन पूर्वपक्षमाह— **नन्विति**। भोगनिमित्तकर्मवत्त्वमुपाधिरिति परिहरति— **नेत्यादिना**। तदेव स्फुटयति— **उपभोगेति**। तत्रेति प्राग्क्कालीनब्रह्मविदुक्तिः। देहपातोत्तरकालीनेऽपि ब्रह्मविदि भोगनिमित्तं किंचिद्भविष्यतीति साधनव्याप्तिमाशङ्क्याह— **न चेति**। अनारब्धं कर्म जन्मान्तरारम्भकमिति कुतः साधनाव्याप्तिरिति शङ्कते— **नन्विति**। तस्य ज्ञानेन प्रतिबद्धशक्तित्वान्मैवमित्याह— **न तस्येति**। किं तस्य बीजं, तदाह— **मिथ्येति**। केन तर्हि तस्य दाहः स्यात्, तद् दर्शयति— **तच्चेति**। 'अथ संपत्स्य' इत्यादिश्रुतिबाधनाद् बीजाभावस्य च विद्वदनुभवसिद्धत्वात्र पूर्वं कर्मानुमेयमिति भावः। प्रारब्धकर्मफलभोगादूर्ध्वं मोक्षेऽपि तत्कर्मजन्यानेकदेहसंभवात्तत्र च विद्याप्रमोषोपपत्तेस्तत्कृतकर्मणामश्लेषाभावेन मुक्त्यभावमाशङ्क्याधिकारिणां देहान्तरे ज्ञानाप्रमोषस्यागमिकत्वादस्मदादीनामथ संपत्स्य इति श्रुतिसिद्धत्वादारब्धभोगानन्तरं मुक्तिरवश्यंभाविनीत्यधिकरणार्थमुपसंहरति— **इत्यत इति**। साधनानुष्ठानक्रमो निर्गुणविद्याफलं चोक्तमिति पादार्थमुपसंहर्तुमितीत्युक्तम्।।१९।। इति चतुर्दशमितरक्षपणाधिकरणम्।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचिते शारीरकभाष्यविभागे न्यायनिर्णये चतुर्थाध्यायस्य प्रथमः पादः।।१।।**

## चतुर्थाध्याये द्वितीयः पादः

१।। वागधिकरणम्।। सू.१-२।।

### वाङ्मनसि दर्शनाच्छब्दाच्च।।१।।

**अथापरासु विद्यासु फलप्राप्तये देवयानं पन्थानमवतारयिष्यन् प्रथमं तावद् यथाशास्त्रमुत्क्रान्तिक्रममन्वाचष्टे। समाना हि विद्वदविदुषोरुत्क्रान्तिरिति वक्ष्यति। अस्ति प्रायणविषया श्रुतिः—'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' (छा.उ. ६।८।६) इति। किमिह वाच एव वृत्तिमत्या मनसि संपत्तिरुच्यत उत वाग्वृत्तेरिति विशयः। तत्र वागेव तावन्मनसि**

*शारीरकन्यायसंग्रहः*

**वाङ्मनसि दर्शनाच्छब्दाच्च।।१।। अत एव च सर्वाण्यनु।।२।।** यद्यपि मनसि वृत्तिमत्येव वाचो लयदर्शनस्येन्द्रियतद्वृत्त्योः साधारणत्वात् इन्द्रियतद्वृत्त्योरप्रकृतित्वेन मनसि लयसंभवस्य तुल्यत्वाच्च 'वाङ्मनसि' इति शब्दानुसारेणेन्द्रियाणामेव मनसि लयः प्राप्तः, तथापि 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्युत्क्रान्तिसमयेऽपीन्द्रियसद्भावलिङ्गात् अप्रकृतौ लयाभावाच्चेन्द्रियाणां वृत्तिविरोधिनि मनःसंसर्गविशेषे सति मनसि वृत्तिलय इत्युपचर्यते, शब्दस्य मुख्यार्थसंभवादित्युक्तम्।

*प्रकटार्थविवरणम्*

**वाङ्मनसि दर्शनाच्छब्दाच्च।।** पादसङ्गतिमाह— **अथापरास्विति**। पूर्वपादान्ते परविद्याफलं निरूप्य इदानीमपरविद्याफलप्राप्तये तृतीयपादे देवयानमवतारयिष्यन् द्वितीयपादे तावदुत्क्रान्तिक्रममाहेत्यर्थः। ननु विदुष उत्क्रान्त्यभावात् कथं तन्निरूपणमित्याशङ्क्याह— **समाना हीति**। निर्गुणपरब्रह्मविदो यद्यपि नास्त्युत्क्रान्तिः, तथाप्यपरब्रह्मविदोऽस्त्येवोत्क्रान्तिरित्यर्थः। संक्षेपतः पादार्थमुक्त्वा आद्याधिकरणविषयमाह— **अस्तीति**। प्रयतः प्रयाणं कुर्वतः, उच्चिक्रमिषोरित्यर्थः। करणव्युत्पत्त्या [इन्द्रियप्रतिभानात् भावव्युत्पत्त्या] स्ववृत्तिप्रतिभानाच्च संशयमाह— **किमिहेति**। 'वाङ्मनसि' इति शब्दानुसारेण वागिन्द्रियस्यैव मनसि लय इत्याह— **तत्र वागेवेति**।

*भाष्यभावप्रकाशिका*

**वाङ्मनसि दर्शनाच्छब्दाच्च।।** नन्वस्मिन् फलाध्याये 'वाङ्मनसि संपद्यत' इत्यादेर्विचारो न सङ्गत इत्याशङ्क्य पारंपर्येणायमपि फलविचार एव फलप्राप्त्यर्थदेवयानमार्गाङ्गत्वादुत्क्रान्तेस्तद्विषयत्वाच्चास्येत्याह— **अथापरास्विति**। ननु [न] विदुष उत्क्रान्तिः, 'अत्रैव समवलीयन्त' इति श्रुतेरित्याशङ्क्याह— **समानेति**। इदानीमधिकरणस्य विषयमाह— **अस्तीति**।

*न्यायनिर्णयः*

पूर्वपादान्तिमाधिकरणे निर्गुणब्रह्मसंपत्तिरुक्ता, सम्प्रति सगुणब्रह्मसम्पत्तिं निरूपयिष्यन्नुत्क्रान्तौ वागादीनां मनसि वृत्तिलयं दर्शयति— **वागिति**। सगुणविद्याफलस्य ब्राह्मलौकिकस्यार्चिरादिगतिप्राप्यस्यानुत्क्रम्य प्राप्त्ययोगात् तदर्थमुत्क्रान्तिनिरूपणं, व्यापिब्रह्मात्मभावे निर्गुणविद्याफले तन्निषेधार्थं चेत्यभिप्रेत्य पादस्याध्यायसंगतिमाह— **अथेति**। निर्गुणधीफलोत्तत्यानन्तर्यमथशब्दार्थः। विदुषो नोत्क्रान्तिः, 'अत्रैव समवनीयन्त' इति श्रुतेः, तत्किमुत्क्रान्तिचिन्तयेत्याशङ्क्याह— **समानेति**। विद्वानपरब्रह्मविदुक्तः। पादार्थं संक्षिप्याद्याधिकरणस्य विषयमाह— **अस्तीति**। प्रयतः प्रयाणं कुर्वत उच्चिक्रमिषोरिति यावत्। 'वाङ्मनसि संपद्यत' इत्यत्र वाचमधिकृत्य करणव्युत्पत्त्या स्वरूपसंपत्तिप्रतीतेर्भावव्युत्पत्त्या च स्ववृत्तिसंपत्तिवित्तेः संशयमाह— **किमिहेति**। श्रौतसगुणब्रह्मधीफलार्थगत्युपयुक्तोत्क्रान्त्येकदेशनिरूपणात् पादादिसंगतिः। पूर्वपक्षे कारणे कार्यलयनियमासिद्धिः, सिद्धान्ते लौकिकपरीक्षकाभीष्टनियमसिद्धिरति मत्वा पूर्वपक्षयति— **तत्रेति**।

**संपद्यत इति प्राप्तम्। तथा हि श्रुतिरनुगृहीता भवति। इतरथा लक्षणा स्यात्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा। तस्माद् वाच एवायं मनसि प्रलय इति।**

**एवं प्राप्ते ब्रूमः– वाग्वृत्तिर्मनसि संपद्यत इति। कथं वाग्वृत्तिरिति व्याख्यायते, यावता वाङ्मनसीत्येवाचार्यः पठति। सत्यमेतत्। पठिष्यति तु परस्तात् 'अविभागो वचनात्' (ब्र.सू. ४।२।१६) इति। तस्मादत्र वृत्त्युपशममात्रं विवक्षितमिति[1] गम्यते। तत्त्वप्रलयविवक्षायां तु सर्वत्रैवाविभागसाम्यात् किं परत्रैव विशिंष्यादविभाग इति। तस्मादत्र वृत्त्युपसंहारविवक्षा। वाग्वृत्तिः पूर्वमुपसंह्रियते मनोवृत्ताववस्थितायामित्यर्थः। कस्मात्? दर्शनात्। दृश्यते हि वाग्वृत्तेः पूर्वमुपसंहारो मनोवृत्तौ विद्यमानायाम्। न तु वाच एव वृत्तिमत्या मनस्युपसंहारः केनचिदपि द्रष्टुं शक्यते। ननु श्रुतिसामर्थ्याद् वाच एवायं मनस्यप्ययो युक्त इत्युक्तम्। नेत्याह, अतत्प्रकृतित्वात्।**

### *प्रकटार्थविवरणम्*

इन्द्रियप्रवृत्तिविरोधिनि मनःसंसर्गविशेषे सति मनसि वदनव्यापारविलय इत्युपचर्यत इत्याह— **वाग्वृत्तिर्मनसीति**। सूत्राक्षरविरोधमाशङ्क्य परिहरति— **कथमित्यादिना**। उपरितनसूत्रबलादित्थं व्याख्यायते। तत्र हि विद्याबलादिन्द्रियाणां ब्रह्मण्यविभागापत्तिरिति वक्ष्यति। तद्विशेषाभिधानं व्यर्थं भवेत् सर्वत्रैवेन्द्रियाणां स्वरूपप्रविलये विवक्षिते सतीत्यर्थः। इन्द्रियस्यातीन्द्रियत्वाद् यद्यपि प्रत्यक्षेण द्रष्टुं न शक्यंते, तथापि श्रुतिबलादवगन्तुं शक्यत इत्याह— **ननु श्रुतीति**। श्रुतिरप्यनुपपन्नमर्थं न ब्रूत इत्याह सिद्धान्ती— **अतत्प्रकृतित्वादिति**। प्रकृतौ हि विकारलयो दृश्यते। वाचश्च मनःप्रकृतिकत्वाभावात् तत्र लयोऽनुपपन्न इत्यर्थः।

### *भाष्यभावप्रकाशिका*

संशयमाह— **किमिहेति**। **श्रुतिरिति** वाक्छब्दश्रुतिरित्यर्थः। **इतरथेति**। वृत्तिमद्वाचकशब्दस्य वृत्तिमात्रपरत्वे लक्षणा स्यादित्यर्थः।....पूरयित्वा पठति— **वाग्वृत्तिर्मनसीति**। अध्याहारः किमर्थ इति पृच्छति— **कथं वाग्वृत्तिरिति**। उत्तराधिकरणपर्यालोचनया अध्याहार इत्याह— **सत्यमेतदिति**। वृत्तिमद्विलयस्योत्तरत्र वक्ष्यमाणत्वादित्यर्थः। विपक्षे दोषमाह— **तत्त्वप्रलयेति**। तत्त्वस्य धर्मिणो वाचः प्रलयविवक्षायामिह तत्र चाविभागसाम्यादविभाग इति परत्रैव विशेषणमनुपपन्नमित्यर्थः। तस्मात् सूत्रकारस्य वृत्त्युपसंहार एवात्र विवक्षित इत्युपसंहरति— **तस्मादिति**। सूत्रस्य विवक्षितमर्थं संक्षिप्य कथयति— **वाग्वृत्तिरिति**। सिद्धान्तं दर्शयितुं पृच्छति— **कस्मादिति**। ननु दर्शनाभावेऽप्यागमसामर्थ्यादवगम्यत इत्याशङ्कते— **ननु श्रुतीति**। आगमस्यापि दृष्टानुसारेण प्रकृतौ विकाराणां

### *न्यायनिर्णयः*

तत्र वाक्शब्दश्रुतिं हेतुं करोति— **तथाहीति**। वृत्तिमद्वाचकशब्दस्य वृत्तिमात्रपरत्वे दोषमाह— **इतरथेति**। लक्षणाऽपि शब्दवृत्तित्वादविरुद्धेत्याशङ्क्याह— **श्रुतीति**। श्रुत्यनुसारिणमर्थमुपसंहरति— **तस्मादिति**।

प्रकृतावेव विकारलय इति नियमाभावं प्राप्तमनूद्य सिद्धान्तसूत्रं पूरयित्वा पठति— **एवमिति**। अध्याहारमसहमानः शङ्कते— **कथमिति**। उत्तराधिकरणालोचनया विवक्षितमध्याहारं साधयति— **सत्यमिति**। वृत्तिमल्लयस्य वक्ष्यमाणत्वेऽपि प्रकृते किं जातं, तदाह— **तस्मादिति**। विपक्षे दोषमाह— **तत्त्वेति**। तत्त्वस्य धर्मिणो वाचः प्रलयविवक्षायामिह तत्र चाविभागसाम्यात् परत्रैवाविभागविशेषणमयुक्तमित्यर्थः। विशेषणसामर्थ्यसिद्धमर्थमुपसंहरति— **तस्मादिति**। सूत्रस्याभीष्टमर्थं संक्षिपति— **वागिति**। सिद्धान्तहेतुं प्रश्नपूर्वकमवतार्य व्याचष्टे— **कस्मादिति**। वृत्तिमदुपसंहारेऽपि तुल्यं दर्शनमित्याशङ्क्य लौकिकमागमिकं वा तदिति विकल्प्याद्यं प्रत्याह— **न त्विति**। द्वितीयमालम्बते— **नन्विति**। आगमस्यापि दृष्टानुसारात् प्रकृतौ विकारलयोक्तिपरत्वाद् वाचश्च मनोविकारत्वाभावात् तत्र लयायोगाद् वृत्तिवृत्तिमतोरभेदधिया वाक्शब्दो वृत्तावेवेत्याह— **नेत्याहेति**। तदेव विवृणोति— **यस्येति**।

---

१. 'विवक्षतीति' इति पा.

**यस्य हि यत उत्पत्तिस्तस्य तत्र प्रलयो न्याय्यो मृदीव शरावस्य। न च मनसो वागुत्पद्यत इति किंचन प्रमाणमस्ति। वृत्त्युद्भवाभिभवौ त्वप्रकृतिसमाश्रयावपि दृश्येते। पार्थिवेभ्यो हीन्धनेभ्यस्तैजसस्याग्नेर्वृत्तिरुद्भवति, अप्सु चोपशाम्यति। कथं तर्हीस्मिन् पक्षे शब्दो वाङ्मनसि संपद्यत इति। अत आह- शब्दाच्चेति। शब्दोऽप्यस्मिन् पक्षेऽवकल्पते वृत्तिवृत्तिमतोरभेदोपचारादित्यर्थः।।१।।**

## अत एव च सर्वाण्यनु।।२।।

**'तस्मादुपशान्ततेजाः। पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः' (प्र.उ. ३।९) इत्यत्राविशेषेण सर्वेषामेवेन्द्रियाणां मनसि संपत्तिः श्रूयते। तत्राप्यत एव वाच इव चक्षुरादीनामपि सवृत्तिके मनस्यवस्थिते वृत्तिलोपदर्शनात् तत्त्वप्रलयासंभवाच्छब्दोपपत्तेश्च वृत्तिद्वारेणैव सर्वाणीन्द्रियाणि मनोऽनुवर्तन्ते। सर्वेषां करणानां मनस्युपसंहाराविशेषे सति वाचः पृथग्ग्रहणं 'वाङ्मनसि संपद्यत' इत्युदाहरणानुरोधेन।।२।।**

।।इति प्रथमं वागधिकरणम्।।

### *प्रकटार्थविवरणम्*

तर्ह्यतत्प्रकृतित्वादेव (प्र)वृत्त्युपसंहारोऽपि न सिध्यतीत्याशङ्क्याह— **वृत्त्युद्भवाभिभवौ त्विति**। सूत्रभागमवतारयति— **कथं तर्हीति**।

**अत एव च सर्वाण्यनु।।** वाच्युक्तन्यायं चक्षुरादावतिदिशति— **अत एवेति**। अनुशब्देनानुवर्तनं सूत्रितम्। उपशान्तमौष्ण्यस्पर्शलिङ्गकं तेजोऽस्येति तथोक्तः। इन्द्रियैर्मनसि संपद्यमानैः पुनर्भवं प्रतिपद्यत इत्यत्र यद्यविशेषेणेन्द्रियाणां मनसि प्रत्युपसंहारो विवक्षितः, किमिति तर्ह्याद्ये वाचः पृथग्ग्रहणमित्याशङ्क्याह— **सर्वेषां करणानामिति**। इति प्रथमं वागधिकरणम्।।

### *भाष्यभावप्रकाशिका*

लयकथनपरत्वाद् वाचश्च मनःप्रकृतिकत्वाभावान्न वृत्तिमद्विलयपरत्वमपि तु वृत्तिवृत्तिमतोरभेदविवक्षया वृत्तावेव वाक्छब्द इति परिहरति— **अतत्प्रकृतित्वादिति**। ननु वृत्तेरप्यतत्प्रकृतित्वमविशिष्टमित्यत आह— **वृत्त्युद्भवाभिभवौ त्विति**। ननु श्रुतिलक्षणाविशये श्रुतिर्न्याय्येति शङ्कते— **कथं तर्हीति**। मुख्यार्थासंभवादुपचारेण वृत्तिरिति परिहरति— **शब्दोऽपीति**।

यतः प्रकृतिविकारत्वाभावान्न स्वरूपलयो वाचः, अपि तु वृत्तिलयः, अत एव इन्द्रियाणां सत्येव सवृत्तिके मनसि वृत्तेरनुगतिर्लयो न तु स्वरूपलय इत्याह— **अत एवेति**। तर्हि पृथग्ग्रहणं किमर्थमिति, तदाह— **सर्वेषामपीति**। इति प्रथमं वागधिकरणम्।।

### *न्यायनिर्णयः*

वागपि तर्हि मनसो विकारोऽस्तु, न, मानाभावादित्याह— **न चेति**। वृत्तेरप्यतत्प्रकृतित्वात् कुतो मनसि लयः, तत्राह— **वृत्तीति**। दर्शनं विशदयति— **पार्थिवेभ्य इति**। श्रुतिलक्षणाविशये श्रुतिर्न्याय्येत्युक्तं स्मारयति— **कथमिति**। मुख्यार्थायोगादुपचारसिद्धिरिति सूत्रावयवमादाय व्याकरोति— **अत इति**।।१।।

वाचि दर्शितं न्यायं चक्षुरादिष्वतिदिशति— **अत एवेति**। यतः प्रकृतिविकारभावाभावान्न स्वरूपलयो वाचः, अपि तु वृत्तिलयः, अत एव सवृत्तिके मनसि सत्येव सर्वाणीन्द्रियाणि तदनुवर्तन्ते, न तु तत्र स्वरूपेण लीयन्त इत्यर्थः। सूत्राक्षराणि व्याचष्टे— **तस्मादिति**। उत्क्रमणादूर्ध्वमिति यावत्। उपशान्तमौष्ण्यलिङ्गकं तेजोऽस्येति तथोक्तः। पुनर्भवं प्रतिपद्यत इति शेषः। अत एवेत्युक्तं हेतुं सदृष्टान्तं स्पष्टयति— **वाच इवेति**। तत्रापि सर्वाणीन्द्रियाणि वृत्तिद्वारेणैव मनोऽनुवर्तन्त इति संबन्धः। यद्यत्राविशेषेण सर्वेन्द्रियाणां मनसि वृत्त्युपसंहारो विवक्षितस्तर्हि किमित्याद्ये सूत्रे वाचः पृथग्ग्रहणं तत्राह— **सर्वेषामिति**।।२।। इति प्रथमं वागधिकरणम्।।

२।।मनोधिकरणम्।।सू.३।।

**तन्मनः प्राण उत्तरात्।।३।।**

**समधिगतमेतत् 'वाङ्मनसि संपद्यते' (छा.उ. ६।८।६) इत्यत्र वृत्तिसंपत्तिविवक्षेति। अथ यदुत्तरं वाक्यम् 'मनः प्राणे' (छा.उ. ६।८।६) इति, किमत्रापि वृत्तिसंपत्तिरेव विवक्ष्यत उत वृत्तिमत्संपत्तिरिति विचिकित्सायां वृत्तिमत्संपत्तिरेवात्रेति प्राप्तम्। श्रुत्यनुग्रहात्, तत्प्रकृतिकत्वोपपत्तेश्च। तथाहि– 'अन्नमयं हि सोम्य मन आपोमयः प्राणः' (छा.उ. ६।५।४) इत्यन्नयोनि मन आमनन्ति, अब्योनिं च प्राणम्। 'आपश्चान्नमसृजन्त' इति श्रुतिः। अतश्च यन्मनः प्राणे प्रलीयतेऽन्नमेव तदप्सु प्रलीयते; अन्नं हि मन आपश्च प्राणः, प्रकृतिविकाराभेदादिति।**

*शारीरकन्यायसंग्रहः*

**तन्मनः प्राण उत्तरात्।।३।।** अबन्नयोः प्रकृतिविकृतिभावान्मनसः प्राणवशित्वलिङ्गेन प्राणाकारपरिणतानामम्मात्राणां मनःसंस्थिताकारपरिणामात् प्राणप्रकृतेर्मनसस्तत्र यथाशब्दं स्वरूपलये प्राप्ते, मनःपरिस्पन्दनस्य प्राणायत्ततामात्रेण मनःप्राणयोः स्वरूपेण प्रकृतिविकारभावाभावादसंभवन्मुख्यार्थे शब्दे मनसः प्रवृत्तिविरोधिनि प्राणसंसर्गविशेषे प्राणे वृत्तिलय उपचर्यते।

*प्रकटार्थविवरणम्*

**तन्मनः प्राण उत्तरात्।।** उत्क्रमनुकीर्त्य पूर्ववत् संशयपूर्वपक्षौ दर्शयति— **समधिगतमेतदित्यादिना**। अधिकं हेतुमाह— **तत्प्रकृतित्वोपपत्तेश्चेति**। प्राणाकारपरिणतानामपां मनःसंस्थितान्नाकारपरिणामात् परंपरया मनसः प्राणप्रकृतित्वोपपत्तेः प्राणे स्वरूपलयो घटत इत्यर्थः।

मनःप्राणयोः स्वरूपेण प्रकृतिविकारभावाभावादसंभवति मुख्यार्थे मनःपरिस्पन्दस्य प्राणायत्तत्वमात्रेण प्राणे वृत्तिलय इत्युपचर्यत

*भाष्यभावप्रकाशिका*

**तन्मनः प्राण उत्तरात्।।** ननु मनःश्रुतिर्वाक्छुतिवदुपचारादप्युपपद्यत इत्याशङ्क्य बाधकाभावादत्र मुख्यार्थत्वमेवेत्याह— **तत्प्रकृतित्वोपपत्तेरिति**। ननु तत्रापि प्रमाणं न पश्याम इत्यत आह— **तथा ह्यन्नमयमिति**। तथाप्यनयोः कथं कार्यकारणभाव इति, तत्राह— **आपश्चान्नमिति**। अबन्नयोः प्रकृतिविकृतिभावात् तत्कार्ययोरपि प्राणमनसोः प्रकृतितादात्म्यात् तद्द्वारा प्रकृति-(विकृति)विकारभाव इत्यर्थः।

सूत्रगततच्छब्दस्यार्थमाह— **आगृहीतबाह्येन्द्रियवृत्तीति**। आगृहीताः बाह्येन्द्रियाणां वृत्तयो येन तन्मनस्तथोक्तम्। दर्शनादिति

*न्यायनिर्णयः*

इन्द्रियवृत्तिलयाधारस्य मनसो वृत्तिलयाधारं निरूपयति— **तन्मन इति**। वृत्तमनूद्याधिकरणस्य विषयमाह— **समधिगतमिति**। तस्मिन्नपि वाक्ये संवृत्तिकं मनोऽधिकृत्य व्युत्पत्तिद्वैविध्यसिद्ध्या संशयमाह— **किमिति**। पूर्ववाक्यं दृष्टान्तयितुमपिशब्दः। अत्रापि पूर्ववत्पादादिसंगतिः। पूर्वपक्षे श्रुत्यर्थसिद्धिः, सिद्धान्ते तदयोगाल्लक्षणास्वीकरणमिति मन्वानो मनःशब्दश्रुत्या पूर्वपक्षयति— **वृत्तीति**। वाक्शब्दवन्मनःशब्दस्यौपचारिकत्वमाशङ्क्य बाधकाभावादत्र मुख्यार्थत्वमेवेत्याह— **तदिति**। प्राणप्रकृतिकत्वे मनसो न मानमित्याशङ्क्याह— **तथा हीति**। अन्नमनसोरप्प्राणयोश्च प्रकृतिविकृतिभावेऽपि कथं प्राणमनसोस्तथात्वम्, तत्राह— **आपश्चेति**। अबन्नयोः प्रकृतिविकृतिभावात् तत्कार्ययोरपि प्राणमनसोः प्रकृतितादात्म्यद्वारा प्रकृतिविकृतित्वसिद्ध्या प्राणे वृत्तिमतो मनसो लय इति फलितमाह— **अतश्चेति**।

**एवं प्राप्ते ब्रूमः– तदप्यागृहीतबाह्येन्द्रियवृत्ति मनो वृत्तिद्वारेणैव प्राणे प्रलीयत इत्युत्तराद् वाक्यादवगन्तव्यम्। तथा हि सुषुप्सोर्मुमूर्षोश्च प्राणवृत्तौ परिस्पन्दात्मिकायामवस्थितायां मनोवृत्तीनामुपशमो दृश्यते। न च मनसः स्वरूपाप्ययः प्राणे संभवति, अतत्प्रकृतित्वात्। ननु दर्शितं मनसः प्राणप्रकृतित्वम्। नैतत् सारम्। न हीदृशेन प्राणाडिकेन तत्प्रकृतित्वेन मनः प्राणे संपत्तुमर्हति। एवमपि ह्यन्ने मनः संपद्येताप्सु चान्नमप्स्वेव च प्राणः। न ह्येतस्मिन्नपि पक्षे प्राणभावपरिणताभ्योऽद्भ्यो मनो जायत इति किंचन प्रमाणमस्ति। तस्मान्न मनसः प्राणे स्वरूपाप्ययः। वृत्त्यप्ययेऽपि तु शब्दोऽवकल्पते, वृत्तिवृत्तिमतोरभेदोपचारादिति दर्शितम्।।३।।**

।।इति द्वितीयं मनोधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

।।अध्यक्षाधिकरणम्।।

**सोऽध्यक्षे तदुपगमादिभ्यः।।४।। भूतेषु तच्छ्रुतेः।।५।। नैकस्मिन् दर्शयतो हि।।६।।** 'इममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' इति लयश्रुतेरभिसमागमनशब्दात् 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इत्यात्मानुगमनलिङ्गाच्च प्राणस्यात्मनि लयेऽवगते 'प्राणस्तेजसि' इत्यव्यवधानश्रुतिं बाधित्वोभयविधश्रुत्यनुग्रहाय जीवे प्रलीय जीवेन सह प्राणस्य तेजसि वृत्तिलयः संसर्गविशेषो दर्शितः।

### *प्रकटार्थविवरणम्*

इत्याह— **एवं प्राप्ते ब्रूम इत्यादिना। प्राणाडिकेन** व्यवहितेन। प्राणवादे प्राणस्य वायुविकारत्वाभिधानान्नास्त्यम्मयत्वम्, तथापि प्रौढवादेन 'अन्नमयं हि' इत्यादिश्रुतेर्यथाश्रुतार्थपरिग्रहेऽपि न पराभिप्रायसिद्धिरित्याह— **एवमपि ह्यन्न इति**। इति द्वितीयं मनोधिकरणम्।।

### *भाष्यभावप्रकाशिका*

पूर्वोक्तयुक्तिमत्र संगृह्णाति— **तथाहीति**। तत्प्रकृतित्वमप्यसिद्धमित्याह— **न च मनस इति। न हीदृशेनेति**। स्वकारणप्रनाडिकया मिथो विकारयोः प्रकृतिविकारतोपगमे संकरादतिप्रसङ्गः स्यादित्यर्थः। यो यस्य साक्षाद्विकारस्तत्रैव तस्य लयो युक्त इत्याह— **एवमपीति**। प्राणाकारेण परिणताम्मात्राणां मनस्संस्थितान्नाकारपरिणामात् तयोरपि साक्षात्प्रकृतिविकारभाव इत्याशङ्क्याह— **न ह्येतस्मिन्निति**। कथं तर्हि मनश्शब्दप्रयोग इति तत्राह— **वृत्त्यवयव[वृत्त्यप्यय] इति**। इति द्वितीयं मनोधिकरणम्।

### *न्यायनिर्णयः*

प्राणे लीयते मनः सवृत्तिकमिति प्राप्तमनूद्य सिद्धान्तसूत्रमवतार्य व्याकरोति— **एवमिति**। आगृहीताः सर्वतः स्वात्मन्युपसंहृता बाह्येन्द्रियाणां वृत्तयो येन तन्मनस्तथा। दर्शनादिति पूर्वोक्तयुक्तिमत्र हेतुत्वेन संगृह्णाति— **तथाहीति**। मनः शब्दश्रुत्या स्वरूपसंपत्तिरेवेति किं न स्यादित्याशङ्क्याह— **न चेति**। उक्तं स्मारयित्वा निरस्यति— **नन्वित्यादिना**। स्वकारणद्वारा विकारयोरन्योन्यं प्रकृतिविकारत्वे घटादेरपि शरावादिप्रकृतित्वप्रसक्तिरित्यसारत्वमेव साधयति— **न हीति**। प्राणाडिककार्यकारणतोपगमेऽपि यो यस्य साक्षाद्विकारस्तत्रैव तस्य लयो युक्त इत्याह— **एवमपीति**। प्राणाकारपरिणतानामपां मनःसंस्थितान्नाकारेण परिणामात् प्राणमनसोरपि साक्षात्प्रकृति-विकृतित्वमस्तीत्याशङ्क्याह— **न हीति**। तयोः साक्षादप्रकृतिविकृतित्वे फलितमाह— **तस्मादिति**। कथं तर्हि मनःशब्दोपपत्तिः, तत्राह— **वृत्तीति**।।३।। इति द्वितीयं मनोधिकरणम्।।

३।।अध्यक्षाधिकरणम्।।सू.४-६।।

## सोऽध्यक्षे तदुपगमादिभ्यः।।४।।

**स्थितमेतद् यस्य यतो नोत्पत्तिस्तस्य तस्मिन् वृत्तिप्रलयो न स्वरूपप्रलय इति। इदमिदानीं 'प्राणस्तेजसी'त्यत्र चिन्त्यते- किं यथाश्रुति प्राणस्य तेजस्येव वृत्त्युपसंहारः, किंवा देहेन्द्रियपञ्जराध्यक्षे जीव इति। तत्र श्रुतेरनतिशङ्क्यत्वात् प्राणस्य तेजस्येव संपत्तिः स्यादश्रुतकल्पनाया अन्याय्यत्वादिति।**

**एवं प्राप्ते प्रतिपाद्यते- सोऽध्यक्ष इति। स प्रकृतः प्राणोऽध्यक्षेऽविद्याकर्मपूर्वप्रज्ञोपाधिके विज्ञानात्मन्यवतिष्ठते। तत्प्रधाना प्राणवृत्तिर्भवतीत्यर्थः। कुतः? तदुपगमादिभ्यः। 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति' (बृ.उ. ४।३।३८) इति हि श्रुत्यन्तरमध्यक्षोपगामिनः सर्वान् प्राणानविशेषेण दर्शयति। विशेषेण च 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ.उ. ४।४।२) इति पञ्चवृत्तेः प्राणस्याध्यक्षानुगामितां दर्शयति, तदनुवृत्तितां चेतरेषाम् 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ.उ. ४।४।२) इति। 'सविज्ञानो भवति' (बृ.उ. ४।४।२) इति चाध्यक्षस्यान्तर्विज्ञानवत्त्वप्रदर्शनेन**

### *प्रकटार्थविवरणम्*

**सोऽध्यक्षे तदुपगमादिभ्यः।।** वृत्तानुवादपूर्वकं संशयमाह— **स्थितमित्यादिना**। 'प्राणस्तेजसि' तथा 'इममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' इति श्रुतिद्वयदर्शनात् संशयमुक्त्वा पूर्वपक्षमाह— **तत्र श्रुतेरिति**। सिद्धान्तसूत्रं योजयति— **स प्रकृत इत्यादिना**। यथा राज्ञः प्रयाणाभिप्रायमात्रेण सर्वे भृत्या अभिसमायान्ति एवमेवेति।

### *भाष्यभावप्रकाशिका*

**सोऽध्यक्षे तदुपगमादिभ्यः।।** वक्ष्यमाणपूर्वपक्षोपयोगित्वाद् वृत्तस्य तत् कीर्तयति— **स्थितमेतदिति**। प्राणस्य तेजःप्रकृतित्वाभावेऽपि तेजसि वृत्तिलयः पूर्वोक्तन्यायेनाशङ्कितुं शक्यत इति भावः। तेजश्शब्दस्य भूतविशेषवाचकत्वाज्जीवे चाप्रसिद्धेः प्राणस्य जीवात्मन्युपगमानुगमनावस्थानश्रुतीनां च तेजोद्वारेणापि जीवात्मन्युपगमादिसंभवादुपपत्तेस्तेजस्येव प्राणवृत्तेर्लय इति प्राप्तमित्याह— **तत्र श्रुतेरिति**। तत्रोपगमश्रुतिमाह— **एवमेवेममिति**। अनुगमनश्रुतिमाह—**तमुत्क्रामन्तमिति**। अवस्थानश्रुतिमाह— **सविज्ञानो भवतीति**। विज्ञायते अनेनेति विज्ञानं करणजातम्, पञ्चवृत्तिप्राणसहितेन्द्रिय विज्ञानेवे...न(?) सहावतिष्ठत इति सविज्ञानः।

### *न्यायनिर्णयः*

यस्मिन् प्राणे मनसो वृत्तिलयस्तस्यापि वृतिलयाधारं निरूपयति— **सोऽध्यक्ष इति**। वक्ष्यमाणपूर्वपक्षोपयोगित्वेन वृत्तं कीर्तयति— **स्थितमिति**। सम्प्रति विषयोक्तिपूर्वकमुभयश्रुत्युपलब्धेः संशयमाह— **इदमिति**। पादादिसंगतयस्तु पूर्ववत्। फलभेदोऽपि तथेति स्वीकृत्य पूर्वपक्षयति— **तत्रेति**। प्राणस्य तेजःप्रकृतिकत्वाभावेऽपि तेजसि वृत्तिलयस्योक्तन्यायेन शक्यशङ्कत्वात् तेजःशब्दस्य च भूतविशेषवाचिनो जीवे प्रसिद्ध्यभावात् प्राणस्य जीवात्मन्युपगमनानुगमनावस्थानश्रुतीनां च तेजोद्वाराऽपि तस्मिन्नुपगमनादि-योगादुपपत्तेस्तेजस्येव प्राणवृत्तिलय इत्यर्थः।

सिद्धान्तसूत्रमादाय योजयति— **एवमिति**। परिशुद्धं चिद्धातुं व्यावर्तयति— **अविद्येति**। पूर्वोक्तन्यायेन स्वरूपलयं व्यवच्छिनत्ति— **तदिति**। प्रश्नपूर्वकं हेतूनवतारयति— **कुत इति**। तत्रोपगमनं श्रुतितो व्याकरोति— **एवमिति**। यथा राज्ञः प्रयाणाभिप्रायमात्रेण सर्वे भृत्याः समागच्छन्त्येवमिति योजना। एतदिति क्रियाविशेषणम्। आदिशब्दगृहीतमनुगमनं श्रुत्या विशदयति— **विशेषेणेति**। आदिशब्दोपात्तमवस्थानमपि श्रुत्या व्याचष्टे— **सविज्ञान इति**। विज्ञायतेऽनेनेति विज्ञानं करणजातं तेन पञ्चवृत्तिप्राणसहितेन

**तस्मिन्नपीतकरणग्रामस्य प्राणस्यावस्थानं गमयति। ननु 'प्राणस्तेजसि' (छा.उ. ६-८-६) इति श्रूयते। कथं प्राणोऽध्यक्ष इत्यधिकावापः क्रियते? नैष दोषः। अध्यक्षप्रधानत्वादुत्क्रमणादिव्यवहारस्य श्रुत्यन्तरगतस्यापि च विशेषस्यापेक्षणीयत्वात्।।४।।**

**कथं तर्हि प्राणस्तेजसीति श्रुतिरित्यत आह–**

**भूतेषु तच्छ्रुतेः।।५।।**

**स प्राणसंपृक्तोऽध्यक्षस्तेजःसहचरितेषु भूतेषु देहबीजभूतेषु सूक्ष्मेष्ववतिष्ठत इत्यवगन्तव्यम्, 'प्राणस्तेजसी'ति श्रुतेः। ननु चेयं श्रुतिः प्राणस्य तेजसि स्थितिं दर्शयति, न प्राणसंपृक्तस्याध्यक्षस्य। नैष दोषः। सोऽध्यक्ष इत्यध्यक्षस्याप्यन्तराले उपसंख्यातत्वात्। योऽपि हि स्रुघ्नान्मथुरां गत्वा मथुरायाः पाटलिपुत्रं व्रजति सोऽपि स्रुघ्नात् पाटलिपुत्रं यातीति शक्यते वदितुम्। तस्मात् प्राणस्तेजसीति प्राणसंपृक्तस्याध्यक्षस्यैवैतत् तेजःसहचरितेषु भूतेष्ववस्थानम्।।५।।**

**कथं तेजःसहचरितेषु भूतेष्वित्युच्यते यावतैकमेव तेजः श्रूयते, 'प्राणस्तेजसी'ति। अत आह–**

*प्रकटार्थविवरणम्*

श्रुतेरर्थाभिधानायोत्तरं सूत्रमवतारयति— **कथं तर्हि प्राणस्तेजसीति।**

**भूतेषु तच्छ्रुतेः।।** उभयविधश्रुत्यनुग्रहाय 'प्राणस्तेजसि' इत्यव्यवधानं बाधित्वा प्राणस्य वृत्तिलयोऽभ्युपगन्तव्य इत्यर्थः।

भूतेष्विति बहुवचनं तेजश्शब्दस्योपलक्षणार्थत्वमङ्गीकृत्योक्तम्; तदाक्षिप्य समाधत्ते— **कथं तेजस्सहचरितेष्वित्यादिना।**

*भाष्यभावप्रकाशिका*

अव्यवधानेन तेजःप्राप्तिश्रुतिविरोधमाशङ्कते— **ननु प्राण इति।** इह[उभय]विधश्रुत्यनुग्रहाय जीवे प्रलीय जीवेन सह प्राणस्य तेजसि लयोऽभ्युपगन्तव्य इति परिहरति— **नैष दोष इत्यादिना।**

जीवद्वारा तेजस्संपत्तिः प्राणस्येत्युत्तरमाह— **स प्राणसंपृक्त इति।** न च प्राणस्य तेजोद्वारेण जीवसंपत्तिस्तेजसो वायवाक[वाय्वाकाश]क्रमेण परमात्मन्येव लयावगमाज्जीवे लयानुपपत्तेस्तेजोग्रहणेनोपलक्षितेषु भूतेषु जीवस्य प्राणेन लय इति भावः। तेजश्शब्देन भूतान्युपलक्षितुं शक्यन्ते, तत्साहचर्यात्, न तु जीवः, साहचर्याभावात् कथं प्राणस्य जीवे लयावगम इति शङ्कते— **ननु चेयमिति।** परिहरति— **सोऽध्यक्ष इति।** प्रमाणान्तरपर्यालोचनया जीवोपसंग्रहो न तु तेजश्शब्देनेति भावः। यदापि प्राणोऽन्तराले जीवं प्राप्य पुनस्तेजः प्राप्नोति, तदापि प्राणस्तेजसीति श्रुतिरुपपद्यत इत्येतद् दृष्टान्तेनोपपादयति— **यो हीति।**

*न्यायनिर्णयः*

सह तिष्ठतीति यावत्। अव्यवधानेन तेजःप्राप्तिश्रुत्या विरोधं शङ्कते— **नन्विति।** उभयश्रुत्यनुग्रहाय जीवे प्रलीय तेन सह प्राणस्य तेजसि लयः स्यादित्याह— **नेत्यादिना।।४।।**

सूत्रान्तरमाकाङ्क्षापूर्वकमुत्थापयति— **कथमिति।** प्राणस्य जीवद्वारा तेजःसंपत्तिरिति सूत्रयोजनया दर्शयति— **स इति।** न च प्राणस्य तेजोद्वारा जीवसंपत्तिस्तेजसो भूतद्वयद्वारा परस्मिन्नेव संपत्तेरिष्टत्वात्। तेजोग्रहणेनोपलक्षितेषु भूतेषु जीवस्य प्राणेन सह लयः स्यादित्यभिप्रेत्याह— **तेज इति।** तेजःशब्देन भूतान्युपलक्षयितुं शक्यन्ते साहचर्यान्न जीवस्तदभावादतो न प्राणस्य जीवे लय इति शङ्कते— **नन्विति।** मानान्तरालोचनया जीवस्योपसंग्रहो, न तेजःशब्देनेति परिहरति— **नेत्यादिना।** यदापि प्राणोऽन्तराले जीवं प्राप्य पुनस्तेजः संपद्यते, तदापि 'प्राणस्तेजसी'ति श्रुतिरुपपन्नेत्येतद् दृष्टान्तेन साधयति— **योऽपि हीति।** श्रुत्यर्थमुक्तमुपसंहरति— **तस्मादिति।।५।।**

सूत्रान्तरमवतारयितुं पृच्छति— **कथमिति।** लक्षणया भूतान्तराश्रयणमयुक्तं युक्त्यभावादिति भावः। युक्तिपरं सूत्रमवतारयति—

## नैकस्मिन् दर्शयतो हि।।६।।

**नैकस्मिन्नेव तेजसि शरीरान्तरप्रेप्सावेलायां जीवोऽवतिष्ठते, कार्यस्य शरीरस्यानेकात्मकत्वदर्शनात्। दर्शयतश्चैतमर्थं प्रश्नप्रतिवचने 'आपः पुरुषवचसः' (छा.उ. ५।३।३) इति। तद् व्याख्यातम् 'त्र्यात्मकत्वात्तु भूयस्त्वात्' (ब्र.सू. ३।१।२) इत्यत्र। श्रुतिस्मृती चैतमर्थं दर्शयतः। श्रुतिः 'पृथ्वीमय आपोमयो वायुमय आकाशमयस्तेजोमयः' (बृ.उ. ४।४।५) इत्याद्या। स्मृतिरपि– 'अण्व्यो मात्राऽविनाशिन्यो दशार्धानां तु याः स्मृताः। ताभिः सार्धमिदं सर्वं संभवत्यनुपूर्वशः' (म.स्मृ.१-२७) इत्याद्या।**

**ननु चोपसंहृतेषु वागादिषु करणेषु शरीरान्तरप्रेप्सावेलायां 'क्वायं तदा पुरुषो भवति' (बृ.उ. ३।२।१३) इत्युपक्रम्य श्रुत्यन्तरं कर्माश्रयतां निरूपयति– 'तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत्प्रशशंसतुः कर्म हैव तत्प्रशशंसतुः' (बृ.उ. ३।२।१३) इति। अत्रोच्यते– तत्र कर्मप्रयुक्तस्य ग्रहातिग्रहसंज्ञकस्येन्द्रियविषयात्मकस्य बन्धनस्य प्रवृत्तिरिति कर्माश्रयतोक्ता। इह पुनर्भूतोपादानाद् देहान्तरोत्पत्तिरिति भूताश्रयत्वमुक्तम्। प्रशंसाशब्दादपि तत्र प्राधान्यमात्रं कर्मणः प्रदर्शितम्, न त्वाश्रयान्तरं निवारितम्। तस्मादविरोधः।।६।।**

।।इति तृतीयमध्यक्षाधिकरणम्।।

### *प्रकटार्थविवरणम्*

**नैकस्मिन् दर्शयतो हि**।। अण्व्यः सूक्ष्माः। मीयन्त इति मात्राः। प्राङ्मोक्षादविनाशिन्यः। दशार्धानां पञ्चानां भूतानामित्यर्थः। जीवस्य भूताश्रयत्वं श्रुत्यन्तरविरुद्धमिति शङ्कते— **ननु चेत्यादिना**। तौ याज्ञवल्क्यार्तभागौ। मन्त्रणं कृत्वा यज्जीवाधारभूतमूचतुः कर्मैव तदुक्तवन्ताविति श्रुतेर्वचने बन्धप्रयोजकत्वेन कर्मणामाश्रयत्वमुक्तम्; भूतानां तूपादानत्वेनेत्यविरोधमाह— **अत्रोच्यत इति**। इति तृतीयमध्यक्षाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

सूत्रान्तरमवतारयितुं पृच्छति— **कथं तेज इति**। लक्षणया विर्भू[ऽपि भू]तान्तराश्रयणे का युक्तिरित्याशयः। अनुमानदर्शनमाह— **कार्यस्येति**। स्थूलशरीरस्य पञ्चात्मकत्वात् सूक्ष्मशरीरमपि तत्कारणं पञ्चात्मकमनुमेयमित्यर्थः। सूत्रावयवं व्याचष्टे— **दर्शयत इति**। अर्थान्तरमाह— **श्रुतिस्मृती चेति**। अण्व्यः सूक्ष्माः दर्शनार्थानां[दशार्धानां] पञ्चानां भूतानाम्। श्रुत्यन्तरविरोधमाशङ्कते— **ननु चेति**। कर्माश्रयमात्रं प्रतीयते न भूताश्रयतेत्यर्थः। कर्मणां प्रयोजकत्वेनाश्रयत्वं भूतानां पुनर्देहापादानत्वेनेत्यविरोध इति परिहरति— **तत्र कर्मेति**। प्रशंसाशब्दोऽपि कर्मणां प्रकृष्टाश्रयत्वं कथयति[कथयन्] निकृष्टाश्रयान्तरसाभावात्[सद्भावं] सूचयतीत्याह— **प्रशंसाशब्दादपीति**।

### *न्यायनिर्णयः*

**अत इति**। तत्र प्रतिज्ञां विभजते— **नैकस्मिन्निति**। स्थूलदेहस्य पञ्चात्मत्वदृष्टेस्तत्कारणं सूक्ष्मशरीरमपि पञ्चात्मकमनुमेयमित्युक्तेऽर्थे युक्तिमाह— **कार्यस्येति**। सूक्ष्मस्य पञ्चात्मकत्वे मानं ब्रुवाणः सूत्रावयवं व्याचष्टे— **दर्शयतश्चेति**। ननु देहान्तरप्रेप्सावेलायामद्भिरेव परिवेष्टितत्वं प्रश्नप्रतिवचनाभ्यामधिगम्यते, न भूतसूक्ष्मपञ्चकपरिवेष्टितत्वं, तत्राह— **तदिति**। सूत्रावयवस्यार्थान्तरमाह— **श्रुतीति**। अण्व्यः सूक्ष्मा मीयन्त इति मात्राः प्राङ्मोक्षादविनाशिन्यो दशार्धानां पञ्चानां भूतानामित्यर्थः। जीवस्य भूताश्रयत्वं श्रुत्यन्तरविरुद्धमिति शङ्कते— **नन्विति**। तौ याज्ञवल्क्यार्तभागौ। जीवाधारभूतकर्मणां बन्धप्रयोजकत्वेनाश्रयत्वं, भूतानां देहोपादानत्वेनेत्यविरोधमाह— **अत्रेति**। 'कर्म हैवे'त्यवधारणश्रुत्या वारितमाश्रयान्तरमित्याशङ्क्याह— **प्रशंसेति**। सोऽपि कर्मणां प्रकृष्टाश्रयत्वं वदन्निकृष्टाश्रयान्तरसत्त्वं सूचयतीत्यर्थः। कर्मणां भूतानां चाश्रयत्वसंभवे फलितमाह— **तस्मादिति**।।६।। इति तृतीयमध्यक्षाधिकरणम्।।

## ४।।आसृत्युपक्रमाधिकरणम्।।सू.७।।

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य।।७।।

**सेयमुत्क्रान्तिः किं विद्वदविदुषोः समाना, किंवा विशेषवतीति विशयानानां विशेषवतीति तावत् प्राप्तम्। भूताश्रयविशिष्टा ह्येषा। पुनर्भवाय च भूतान्याश्रीयन्ते। न च विदुषः पुनर्भवः संभवति। अमृतत्वं हि विद्वानश्नुते इति स्थितिः। तस्मादविदुष एवैषोत्क्रान्तिः। ननु विद्याप्रकरणे समाम्नानाद् विदुष एवैषा भवेत्। न; स्वापादिवद् यथाप्राप्तानुकीर्तनात्। यथा हि–'यत्रैतत् पुरुषः स्वपिति नाम' 'अशिशिषति नाम' 'पिपासति नाम' (छा.उ. ६।८।१,३,५) इति च सर्वप्राणिसाधारणा एव स्वापादयोऽनुकीर्त्यन्ते विद्याप्रकरणेऽपि प्रतिपिपादयिषितवस्तुप्रतिपादनानुगुण्येन, न तु विदुषो [१]विशेषवन्तो विधित्स्यन्ते; एवमियमप्युत्क्रान्तिर्महाजनगतैवानुकीर्त्यते, यस्यां परस्यां देवतायां पुरुषस्य प्रयतस्तेजः संपद्यते, स आत्मा तत्त्वमसीत्येतत्**

### *शारीरकन्यायसंग्रहः*

**समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य।।७।।** 'विद्ययाऽमृतमश्नुते' इति सगुणोपासनानामप्यमृतत्वफलेऽवगते 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि' 'तमुत्क्रामन्तम्' इति च सामान्यपुरुषमात्रसंबन्ध्युत्क्रान्तेः सगुणोपासनादन्यत्रैव नियमे प्राप्ते 'मनसैतान् कामान् पश्यन्' 'स एकधा भवति' इति श्रुतेरर्चिरादिमार्गगमनेन शरीरेन्द्रियवता भोक्तव्यफलत्वात् निरुपाधिकामृतत्वफलाभावात् कर्मिणामिव साधारणैवोत्क्रान्तिः सगुणोपासकानामपीत्युक्तम्।

### *प्रकटार्थविवरणम्*

**समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य।।** अनन्तरनिरूपितोत्क्रान्तिर्विषयः। तत्र 'विद्ययाऽमृतमश्नुते' इति श्रुतेः 'अस्य सोम्य पुरुषस्य' इत्यविशेषश्रुतेश्च संशयमाह— **सेयमिति**। **विशयानानां** सन्दिहानानां सताम् अविदुष एवेति विशेषवतीति पूर्वपक्षत्वेन प्राप्तमित्यर्थः। पूर्वपक्षमाक्षिप्य समाधत्ते— **ननु विद्येत्यादिना**। सृतेर्मार्गस्योपक्रमादर्वाक् कर्मिणां सगुणोपासकानां

### *भाष्यभावप्रकाशिका*

**समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य।। विशयानानां** सन्दिहानानामित्यर्थः। 'विद्ययाऽमृतमश्नुत' इति सगुणोपासकानामप्यमृतत्वफलावगमान्निर्गुणब्रह्मविद इवोत्क्रान्तिर्नोपपद्यत इति प्राप्तमित्याह— **भूताश्रयेति**। वस्तुतत्त्वप्रतिपादनाय लोकसिद्धधर्माणामनूद्यमानत्वान्न विद्वद्विषयमिति परिहरति— **न स्वापादिवदिति**। 'न तस्य प्राणा उत्क्रामन्ती'ति प्रतिषेधादपि न तद्विषयत्वमित्याह— **प्रतिषिद्धेति**।

तर्हि विद्वदविदुषोर्न को[ऽपि] विशेष इति, तत्राह— **अविद्वानिति**। अविद्वानवाङ्नाडीभिः पितृलोकमन्यं वा स्वकर्मानुसारेण

### *न्यायनिर्णयः*

उक्तोत्क्रान्तेरपरविद्यान्वयमन्वाचष्टे— **समाना चेति**। उत्क्रान्तिर्विषयः, तत्र 'विद्ययाऽमृतमश्नुते' इति श्रुतेरस्य सोम्य पुरुषस्येत्यविशेषश्रुतेश्च संशयमाह— **सेयमिति**। विशयानानां संदिहानानामित्यर्थः। श्रौतापरविद्यासु फलप्राप्त्युपयोगित्वेनोत्क्रान्त्यन्वयोक्त्या पादादिसंगतिः। पूर्वपक्षे विदुषो देहादनुत्क्रान्तस्य मोक्षसिद्धिः। सिद्धान्ते तस्यापीतरवत् तस्मादुत्क्रान्तेरप्रतिबन्धेन तत्सिद्धिरित्यङ्गीकृत्य 'विद्ययाऽमृतमश्नुत' इति सगुणोपासकानामप्यमृतत्वफलावगमात् सगुणब्रह्मविदो नैवोत्क्रान्तिरिति पूर्वपक्षयति— **विशेषेति**। अविदुष एवोत्क्रान्तिरिति विशेषवत्त्वमेव दर्शयति— **भूतेति**। पूर्वपक्षमाक्षिपति— **नन्विति**। वस्तुतत्त्वप्रतिपादनाय लोकसिद्धधर्माणामनूद्यमानत्वात्र प्रकरणं विद्वद्विषयमिति समाधत्ते— **नेत्यादिना**। दृष्टान्तं विवृणोति— **यथेति**। दार्ष्टान्तिकं विभजते— **एवमिति**। उत्क्रान्तेर्विद्वद्विषयत्वाभावे

---

१. 'विशेषतः' इति पा.

**प्रतिपादयितुम्। प्रतिषिद्धा चैषा विदुषः 'न तस्य प्राणा उत्क्रामन्ति' (बृ.उ. ४।४।६) इति। तस्मादविदुष एवैषेति।**

**एवं प्राप्ते ब्रूमः– समाना चैषोत्क्रान्तिर्वाङ्मनसीत्याद्या विद्वदविदुषोरासृत्युपक्रमाद् भवितुमर्हति। अविशेषश्रवणात्। अविद्वान् देहबीजभूतानि भूतसूक्ष्माण्याश्रित्य कर्मप्रयुक्तो देहग्रहणमनुभवितुं[1] संसरति। विद्वांस्तु ज्ञानप्रकाशितं मोक्षनाडीद्वारमाश्रयते। तदेतदासृत्युपक्रमादित्युक्तम्। नन्वमृतत्वं हि विदुषा प्राप्तव्यम्, न च तद् देशान्तरायत्तम्, तत्र कुतो भूताश्रयत्वं सृत्युपक्रमो वेति? अत्रोच्यते– अनुपोष्य चेदम्, अदग्ध्वाऽत्यन्तमविद्यादीन् क्लेशानपरविद्यासामर्थ्यादापेक्षिकममृतत्वं प्रेप्सते। संभवति तत्र सृत्युपक्रमो भूताश्रयत्वं च। न हि निराश्रयाणां प्राणानां गतिरुपपद्यते। तस्माददोषः।।७।।**

।।इति चतुर्थमासृत्युपक्रमाधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

।।संसारव्यपदेशाधिकरणम्।।

**तदापीतेः संसारव्यपदेशात्।।८।। सूक्ष्मं प्रमाणतश्च तथोपलब्धेः।।९।। नोपमर्देनातः।।१०।। अस्यैव चोपपत्तेरेष ऊष्मा।।११।।** 'परस्यां देवतायाम्' इति सत्संपत्तिरात्यन्तिकी, अन्तकालीनसत्संपत्तित्वात्, परब्रह्मविदः सत्संपत्तिवदित्यनुमानं देहान्तरोपभोग्यफलकर्मज्ञानविध्यन्यथानुपपत्त्या बाधित्वा पुनरुत्थानयोग्यसावशेषसत्संपत्तिरुक्ता।

### *प्रकटार्थविवरणम्*

चोत्क्रान्तिस्तुल्यैवेत्याह— **समानैवैषेति**। पूर्वपक्षबीजापाकरणाय सूत्रभागं व्याचष्टे— **अनुपोष्य चेदमिति**। इति चतुर्थमासृत्युपक्रमाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

याति। विद्वांस्तु मूर्द्धन्यनाड्या ब्रह्मलोकमितीयान् विशेष इत्यर्थः। अनेनैतत्सूत्रपदं व्याख्यातमित्याह— **तदेतदिति**। सृतिः सरणं देवयानः पन्थाः, तदुपक्रमात् प्राक् समानोत्क्रान्तिरित्यर्थः। शङ्कापूर्वकं सूत्रावयवं व्याचष्टे— **नन्वमृतत्वमिति**। 'उष दाह' इत्यस्मादुपपूर्वादुपोष्येति प्रयोगः। मनसैतान् पश्यन् रमते स एकधा भवतीत्यादिश्रुतिरर्चिरादिमार्गगमनेनेन्द्रियवता फलस्य भोक्तव्यत्वप्रतिपादनादिन्द्रियाणां च निराश्रयाणां गमनानुपपत्तेर्जीवस्यापि तदाश्रयभूताश्रयस्य गतिरवगम्यत इत्याह— **न हीति**।

### *न्यायनिर्णयः*

हेत्वन्तरमाह— **प्रतिषिद्धेति**। विशेषवत्त्वमुत्क्रान्तेरुक्तमुपसंहरति— **तस्मादिति**।

सृतेर्मार्गस्योपक्रमादर्वाक् कर्मिणां सगुणोपासकानां च तुल्यैवोत्क्रान्तिरिति सिद्धान्तयति— **एवमिति**। 'अस्य सोम्ये'-त्याद्यविशेषश्रुतेर्विद्वदविदुषोः साधारणी चेदुत्क्रान्तिस्तर्हि तयोर्विशेषाभावाद् विद्यावैयर्थ्यम्, तत्राह— **अविद्वानिति**। अवाङ्नाडीभिरविद्वान्पितृलोकं लोकान्तरं वा स्वकर्मानुसारेण प्रतिपद्यते, विद्वान् पुनर्मूर्धन्यया नाड्या ब्रह्मलोकमिति विशेषस्तयोरित्यर्थः। सृतिः सरणं देवयानो मार्गस्तदुपक्रमात्तुल्योत्क्रान्तिरित्युक्तेऽर्थे सूत्रावयवं पातयति— **तदेतदिति**। अवशिष्टसूत्रावयवव्यावर्त्यां शङ्कामाह— **नन्विति**। सूत्रावयवमुत्तरत्वेनावतार्य व्याकरोति— **अत्रेति**। 'मनसैतान् कामान् पश्यन् रमते' 'स एकधा भवती'त्यादिश्रुतेरर्चिरादिमार्गगमनेन सेन्द्रियस्य फलभोगप्रतिपादनादिन्द्रियाणां च निराश्रयाणां गमनायोगाज्जीवस्यापि तदाश्रयभूताश्रयस्य गतिरवगतेत्याह— **न हीति**। अपरविद्यास्वमृतत्वमापेक्षिकमिति स्थिते तत्रोत्क्रान्त्यन्वयो युक्त इत्युपसंहरति— **तस्मादिति**।।७।।

१. 'अनुभवन्' इति पा.

५।।संसारव्यपदेशाधिकरणम्।।सू.८-११।।

## तदाऽपीतेः संसारव्यपदेशात्।।८।।

**'तेजःपरस्यां देवतायाम्' (छा.उ. ६।८।६) इत्यत्र प्रकरणसामर्थ्यात् तद् यथाप्रकृतं तेजः साध्यक्षं सप्राणं सकरणग्रामं भूतान्तरसहितं प्रयतः पुंसः परस्यां देवतायां संपद्यत इत्येतदुक्तं भवति। कीदृशी पुनरियं संपत्तिः स्यादिति चिन्त्यते। तत्रात्यन्तिक एव तावत् स्वरूपप्रविलय इति प्राप्तम्। तत्प्रकृतित्वोपपत्तेः। सर्वस्य हि जनिमतो वस्तुजातस्य प्रकृतिः परा देवतेति प्रतिष्ठापितम्। तस्मादात्यन्तिकीयमविभागापत्तिरिति।**

**एवं प्राप्ते ब्रूमः- तत् तेजआदि भूतसूक्ष्मं श्रोत्रादिकरणाश्रयभूतमाऽपीतेरा संसारमोक्षात् सम्यग्ज्ञाननिमित्तादवतिष्ठते। 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' (क.उ. ५।७) इत्यादिसंसारव्यपदेशात्। अन्यथा हि सर्वः प्रायणसमय एवोपाधिप्रत्यस्तमयादत्यन्तं ब्रह्म संपद्येत। तत्र विधिशास्त्रमनर्थकं स्याद् विद्याशास्त्रं च। मिथ्याऽज्ञाननिमित्तश्च बन्धो न सम्यग्ज्ञानादृते**

### *प्रकटार्थविवरणम्*

**तदाऽपीतेः संसारव्यपदेशात्।।** पूर्वोदाहृतोत्क्रान्तिवाक्यस्य शेषं व्याख्याय संशयमाह— **तेजः परस्यामित्यादिना।** किमात्यन्तिकसंपत्तिः, किं वा नेति संपत्तेरुभयथा दर्शनात् संशये पूर्वपक्षमाह— **तत्रात्यन्तिक एवेति।** 'परस्यां देवतायाम्' इति श्रूयमाणा सत्संपत्तिरात्यन्तिकी, अन्त्यकालीनंसत्संपत्तित्वात्, परब्रह्मसंपत्तिवदित्यर्थः। यत्पूर्वं स्वरूपविलयाभावे कारणमुक्तमतत्प्रकृतित्वम्, तदपीह नास्तीत्याह— **तत्प्रकृतित्वोपपत्तेरिति।**

### *भाष्यभावप्रकाशिका*

**तदाऽपीतेःसंसारव्यपदेशात्।।** उदाहरणवाक्यस्यार्थकीर्तनपूर्वकमधिकरणस्य विषयं दर्शयति— **तेजः परस्यामिति।** बीजभावशेषां सत्संपत्तिं सिद्धवत्कृत्य विदुषोऽप्युत्क्रान्तिरुक्ता, सैव सम्प्रति विचार्यत इत्यर्थः। पूर्वोक्तातत्प्रकृतित्वहेतोरभावादात्यन्तिक एव युक्त इत्याह— **तत्प्रकृतित्वोपपत्तेरिति।** विगीता सत्संपत्तिरात्यन्तिकी अन्त्यकालसत्संपत्तित्वात् ब्रह्मविदःसत्संपत्तिवदित्यभिप्रेत्योपसंहरति— **तस्मादिति।** नैवं श्रुतिविरोधादिति परिहरति— **तत्तेज इति।** विपक्षे दोषमाह— **अन्यथा हीति।** भवतु को दोष इति, तत्राह— **तत्र विधिशास्त्रमिति।** कर्मज्ञानविध्यन्यथानुपपत्त्या सावशेषो लयो गम्यते। अन्यथा प्रायणमात्रादेवात्यन्तिकप्रलये देहान्तरोपभोग्यफल-ज्योतिष्टोमादिविधिशास्त्रमनर्थकं स्यात्; तथा मोक्षशास्त्रमप्यप्रयत्नेन प्रायणमात्रादेव तल्लाभ इत्यर्थः। न केवलं शास्त्रानुपपत्त्यैव, युक्तितोऽपीत्याह— **मिथ्याज्ञानेति।** निदाननाशव्यतिरेकेण निदानिनो नात्यन्तिको विनाशो युज्यत इत्यर्थः।

### *न्यायनिर्णयः*

उक्तोत्क्रान्तिकाले या सत्संपत्तिस्तत्स्वरूपं निरूपयति— **तदाऽपीतेरिति।** उदाहरणवाक्यस्यार्थोक्तिपूर्वकमधिकरणस्य विषयं दर्शयति— **तेज इति।** बीजभावावशेषां सत्संपत्तिं सिद्धवत्कृत्य विदुषोऽप्युत्क्रान्तिरुक्ता, सम्प्रति संपत्तेरुभयथा दृष्टेरात्यन्तिकी सत्संपत्तिरनात्यन्तिकी वेति संशयमाह— **कीदृशीति।** उत्क्रान्तिकालीनसत्संपत्तेः श्रुतायाः सावशेषत्वसाधनात् पादादिसंगतिः। पूर्वपक्षे देहादुत्क्रान्तस्यापुनरावृत्तिः। सिद्धान्ते तस्यापि ज्ञानहीनस्य पुनरावृत्तिरिति विवक्षित्वा पूर्वपक्षयति— **तत्रेति।** पूर्वोक्तातत्प्रकृतित्वहेतोरभावादिति हेतुमाह— **तत्प्रकृतित्वेति।** उपपत्तिमेव दर्शयति— **सर्वस्येति।** विमता सत्संपत्तिरात्यन्तिक्यन्त-कालीनसत्संपत्तित्वाद् ब्रह्मविदः सत्संपत्तिवदित्युपसंहरति— **तस्मादिति।** सिद्धान्तसूत्रमादाय व्याकुर्वन्नुक्तानुमानस्य श्रुतिविरोधमाह— **एवमिति।** उत्क्रान्तिकालीनसत्संपत्तेरात्यन्तिकत्वे दोषान्तरमाह— **अन्यथेति।** इष्टापत्तिमाशङ्क्य देहान्तरभोगाय कर्मविध्यनुपपत्तिरित्यनुमानस्य बाधकान्तरमाह— **तत्रेति।** ज्ञानविध्यनुपपत्त्याऽपि बाधितमनुमानमिति मत्वा ब्रूते— **विद्येति।** युक्तितोऽपि बाधितं तदित्याह—

विस्रंसितुमर्हति। तस्मात् तत्प्रकृतित्वेऽपि सुषुप्तप्रलयवद् बीजभावावशेषैवैषा सत्संपत्तिरिति।।८।।

**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः।।९।।**

तच्चेतरभूतसहितं तेजो जीवस्यास्माच्छरीरात् प्रवसत आश्रयभूतं स्वरूपतः प्रमाणतश्च सूक्ष्मं भवितुमर्हति। तथाहि– नाडीनिष्क्रमणश्रवणादिभ्योऽस्य सौक्ष्म्यमुपलभ्यते। तत्र तनुत्वात् संचारोपपत्तिः; स्वच्छत्वाच्चाप्रतीघातोपपत्तिः। अत एव च देहान्निर्गच्छत् पार्श्वस्थैर्नोपलभ्यते।।९।।

**नोपमर्देनातः।।१०।।**

अत एव सूक्ष्मत्वान्नास्य स्थूलस्य शरीरस्योपमर्देन दाहादिनिमित्तेनेतरत् सूक्ष्मं शरीरमुपमृद्यते।।१०।।

**अस्यैव चोपपत्तेरेष ऊष्मा।।११।।**

अस्यैव च सूक्ष्मस्य शरीरस्यैष ऊष्मा यमेतस्मिञ्जीवच्छरीरे संस्पर्शेनोष्माणं विजानन्ति। तथाहि- मृतावस्थायामवस्थितेऽपि देहे विद्यमानेष्वपि च रूपादिषु देहगुणेषु नोष्मोपलभ्यते; जीवदवस्थायामेव

### *प्रकटार्थविवरणम्*

**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः।।** देहान्तरोपभोगाय कर्मज्ञानविध्यन्यथानुपपत्त्याऽनुमानं बाधित्वा पुनरुत्थानयोग्यसावशेषसंपत्तिरुक्ता सिद्धान्ते। तत्र स्वरूपेण पृथग् विद्यते चेत् किमिति पार्श्वस्थैर्नोपलभ्यत इति प्रासङ्गिकमाशङ्क्याह— **सूक्ष्मं प्रमाणतश्चेति।**

**नोपमर्देनातः।। अस्यैव चोपपत्तेरेष ऊष्मा।।** तत्सद्भावे श्रुतिलिङ्गमाह— **अस्यैव चेति।** इति पञ्चमं संसारव्यपदेशाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

ननु यद्यासंसारविमोक्षात् तदवतिष्ठते, किमिति तर्हि देहान्निर्गच्छदस्माभिर्नोपलभ्यते, किमिति वा मूर्तान्तरैर्न प्रतिहन्यत इति, तत्राह— **सूक्ष्ममिति।** चकारः स्वरूपसौक्ष्म्यसमुच्चयार्थ इति व्याचष्टे— **तच्चेतरेति।** उपलब्धेरिति पदं व्याचष्टे— **तथा हीति।** तत्र परिमाणतः सौक्ष्म्याङ्गीकारलाभमाह— **तत्र तनुत्वादिति।** स्वरूपसौक्ष्म्याङ्गीकारे लाभं दर्शयति— **स्वच्छ**....ब्धिरपि सिद्धेत्याह— **अत एव चेति।**

लाभान्तरमाह— **नोपमर्देनेति।** तत्रोष्मलिङ्गमनुमानमपि प्रमाणमित्याह— **अस्यैव चेति।** उपपत्तेरिति सूत्रावयवस्यार्थमाह— **तथा हीति।** अन्वयव्यतिरेकाभ्यां स्वाश्रयं स्थूलदेहव्यतिरिक्तमूष्मा गमयतीत्यर्थः। आगमोऽपि सूक्ष्मशरीरधर्मत्वमस्य सूचयतीत्याह— **तथा च श्रुतिरिति।** इति पञ्चमं संसारव्यपदेशाधिकरणम्।।

### *न्यायनिर्णयः*

**मिथ्येति।** निदाननाशातिरेकेण निदानिनाशो नात्यन्तिको युक्त इत्यर्थः। यत्तु तत्प्रकृतित्वोपपत्तेरिति, तत्राह— **तस्मादिति।** श्रुतार्थापत्तियुक्तिविरोधस्तच्छब्दार्थः।।८।।

ननु यद्यासंसारविमोक्षात् तेजआदिभूतसूक्ष्ममुक्तलक्षणमवतिष्ठते, किमिति तर्हि देहान्निर्गच्छदस्माभिर्नोपलभ्यते, किमिति वा मूर्तान्तरैर्न प्रतिहन्यते, तत्राह— **सूक्ष्ममिति।** स्वरूपसौक्ष्म्यसमुच्चयार्थश्चकार इत्यङ्गीकृत्य व्याचष्टे— **तच्चेति।** उपलब्धेरित्येतद् व्याकरोति— **तथाहीति।** परिमाणतः सौक्ष्म्याङ्गीकारे लाभं दर्शयति— **तत्रेति।** स्वरूपतस्तदङ्गीकारे लाभमाह— **स्वच्छत्वादिति।** उभयविधत्वादेवानुपलब्धिरपि सिद्धेत्याह— **अत इति।**।।९।।

सौक्ष्म्यकृतं लाभान्तरमाह— **नोपमर्देनेति।** तदेव विवृणोति— **अत एवेति।**।।१०।।

सूक्ष्मदेहसद्भावे मानमौष्ण्यलिङ्गकमनुमानमपीत्याह— **अस्यैवेति।** सूत्रं विवृण्वन्ननुमानमेव स्फोरयति— **अस्येति।** औष्ण्यस्य सूक्ष्मदेहे व्यभिचारमाशङ्क्योपपत्तेरिति योजयति— **तथा हीति।** अन्वयव्यतिरेकाभ्यां स्थूलशरीरादतिरिक्तं स्वाश्रयमूष्मा गमयतीत्युक्तम्। इदानीमागमोऽपि सूक्ष्मदेहधर्मत्वमस्य सूचयतीत्याह— **तथा चेति।**।।११।। इति पञ्चमं संसारव्यपदेशाधिकरणम्।।

**तूपलभ्यत इत्यत उपपद्यते प्रसिद्धशरीरव्यतिरिक्तव्यपाश्रय एवैष ऊष्मेति। तथा च श्रुतिः– 'उष्ण एव जीविष्यञ्शीतो मरिष्यन्' इति।।११।।**

।।इति पञ्चमं संसारव्यपदेशाधिकरणम्।।

६।।प्रतिषेधाधिकरणम्।।सू.१२-१४।।

## प्रतिषेधादिति चेन्न शारीरात्।।१२।।

**'अमृतत्वं चानुपोष्य' (ब्र.सू. ४।२।७) इत्यतो विशेषणादात्यन्तिकेऽमृतत्वे गत्युत्क्रान्त्योरभावोऽभ्युपगतः।**

### *शारीरकन्यायसंग्रहः*

**प्रतिषेधादिति चेन्न शारीरात्।।१२।। स्पष्टो ह्येकेषाम्।।१३।। स्मर्यते च।।१४।।** 'न तस्मात्प्राणा उत्क्रामन्ति' इति माध्यन्दिनश्रुत्यनुसारेण 'न तस्य प्राणा उत्क्रामन्ति' इति काण्वश्रुतिं संबन्धसामान्यषष्ठ्यर्थविषयामपादानकारकसंबन्धविशेषपरतयोन्नीय जीवात् प्राणानामुत्क्रान्तिं प्रतिषिध्य शरीरादुत्क्रान्तिः सामान्यश्रुतिस्मृतिलोकप्राप्ता परविदोऽपि प्रापिता। तत्र 'यत्रायं पुरुषो म्रियते' इति यच्छब्दनिर्दिष्टां सशब्देन परामृश्योच्छ्वयनादिधर्मनिर्देशात् यच्छब्देन शरीरमभिधीयते; 'उदस्मात्प्राणाः क्रामन्ति' इति यच्छब्दार्थमुद्देश्यगतमिदंशब्देनोपादेयवाक्यगतेन सर्वनाम्ना नित्यसंबन्धाच्छरीरमेवापादानत्वेन परामृश्य प्रश्नपूर्वकमुत्क्रान्तिप्रतिषेधात्, विद्याप्रकरणात् ब्रह्मविदः शरीरात् प्राणानामुत्क्रान्तिरार्तभागप्रश्ने प्रतिषिद्धा, तत्रोभाभ्यामपि वाक्याभ्यां शरीराज्जीवाच्च प्राणानामुत्क्रान्तिं प्रतिषिध्यतामुभयोरपि वाक्ययोः 'अत्रैव समवनीयन्ते' इत्युत्क्रान्तिप्रतिषेधापादाने जीवे शरीरे च सन्निहिताभिधायिसर्वनाम्ना निर्दिष्टे प्रासादे पर्यङ्के मृत इतिवदात्मनि प्राणानां लयस्य प्रतिपादनात् 'परब्रह्मविदो न कुतश्चिदपि प्राणानामुत्क्रान्तिः' इति सामान्योत्क्रान्तिश्रुतेरत्रानवकाश इत्युक्तम्।

अथवा 'न तस्य प्राणा उत्क्रामन्ति' इत्यपादानकारकापेक्षायाम् 'चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः' इति शरीरावयवानामुत्क्रान्त्यपादानत्वेन प्रकृतानामिह संबन्धात् प्राप्तोत्क्रान्तिप्रतिषेधपरत्वाच्च वाक्यस्य 'न तस्य प्राणाः शरीरावयवेभ्य उत्क्रामन्ति' इति वाक्यं परिणम्यते, प्रकरणसामर्थ्यात्; 'प्राणेन रक्षन्नवरं कुलायम्' 'एकीभवति न पश्यतीत्याहुः' 'प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' 'विज्ञानमयः प्राणमयो मनोमयः' इत्यादौ कर्तृकरणसंबन्धविशेषस्याधिष्ठेयाधिष्ठातृसंबन्धविशेषस्योपाध्युपहित-संबन्धविशेषस्य च प्रकृतस्य 'न तस्य प्राणाः' इति सम्बन्धसामान्यषष्ठ्या समुच्चित्योपादानात्र शाखान्तरगतापादानसम्बन्धविशेषापेक्षा; ततश्च तस्य करणाधिष्ठेयोपाधिभूताः प्राणाः शरीरावयवेभ्यो नोत्क्रामन्तीति वाक्यार्थसिद्धेरुभाभ्यां माध्यन्दिनकाण्ववाक्याभ्याम्,

"नोत्क्रामन्ति मुनेः प्राणा व्यापी सर्वगतो हि सः। तेन व्याप्तमिदं सर्वं कुत उत्क्रम्य यास्यति।।"

इति स्मृत्यनुगृहीताभ्यां विरोधादप्राप्तप्रतिषेधप्रसङ्गाच्च, तस्येति विभक्तेस्तस्मादिति विपरिणामप्रसङ्गाच्च; 'न तस्मात्प्राणाः' इत्यपि तच्छब्देन जीवाद्भिन्नं शरीरमेवोपलक्ष्य विदुषः शरीरात् प्राणा नोत्क्रामन्तीत्युक्तम्।

### *प्रकटार्थविवरणम्*

**प्रतिषेधादिति चेन्न शारीरात्।।** व्यवहितेन सम्बन्धमाह— **अमृतत्वं चेति**। गत्वा यदमृतत्वं प्राप्यते तदात्यन्तिकं न भवति, किं तु अविद्यादिक्लेशानदग्ध्वैवेति सूत्रकृता विशेषणोपादानेन तस्मिन्नेवाधिकरणे परविदो गत्युत्क्रान्त्योरभावोऽभ्युपगतो यद्यपि, तथापि माध्यन्दिनश्रुतिवशेनोत्क्रान्तिं प्रासङ्गिकीमाशङ्क्यास्मिन्नधिकरणे प्रतिषेधतीत्यर्थः। प्रथमं सिद्धान्ताशङ्कामुपन्यस्य

### *भाष्यभावप्रकाशिका*

**प्रतिषेधादिति चेन्न शारीरात्।।** वृत्तं कीर्तयन्नधिकरणतात्पर्यमाह— **अमृतत्वं चेति**। विषयमाह— **अथाकामयमान**

### *न्यायनिर्णयः*

उत्क्रान्तिकालीनसत्संपत्तेः सावशेषत्वमुक्तम्। सम्प्रत्युत्क्रान्तेर्निर्गुणब्रह्मवेदिष्वभावमाह— **प्रतिषेधादिति**। व्यवहितेन संबन्धं

**तत्रापि केनचित् कारणेनोत्क्रान्तिमाशङ्क्य प्रतिषेधति। 'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' (बृ.उ. ४।४।६) इत्यतः परविद्याविषयात् प्रतिषेधान्न परब्रह्मविदो देहात् प्राणानामुत्क्रान्तिरस्तीति चेत्? नेत्युच्यते। यतः शारीरादात्मन एष उत्क्रान्तिप्रतिषेधः प्राणानाम्, न शरीरात्। कथमवगम्यते? 'न तस्मात्प्राणा उत्क्रामन्ति' (बृ.उ.मा. ४।२।८) इति शाखान्तरे पञ्चमीप्रयोगात्। संबन्धसामान्यविषया हि षष्ठी शाखान्तरगतया पञ्चम्या संबन्धविशेषे व्यवस्थाप्यते। तस्मादिति च प्राधान्यादभ्युदयनिःश्रेयसाधिकृतो देही संबध्यते, न देहः। न तस्मादुच्चिक्रमिषोर्जीवात् प्राणा अपक्रामन्ति, सहैव तेन भवन्तीत्यर्थः। सप्राणस्य च प्रवसतो भवत्युत्क्रान्तिर्देहादिति।।१२।।**

**एवं प्राप्ते प्रत्युच्यते–**

***प्रकटार्थविवरणम्***

पूर्वपक्षमुपन्यस्यति आद्यसूत्रेणेति व्याचष्टे— **अथाकामयमान इत्यादिना**। अकामो बाह्यविषय[काम]रहितः; निष्कामः आन्तरकामवासनारहितः; आप्तकामः आप्तपरमानन्दः; आत्मकामः सर्वात्मैकत्वदर्शी; [तत्र पूर्वं पूर्वं प्रति]परस्य परस्य हेतुत्वं द्रष्टव्यम्। नन्वेकत्र षष्ठीप्रयोगः, अपरत्र पञ्चमीप्रयोगः; तत्र कथं निर्णय इत्याशङ्क्याह— **संबन्धसामान्येति**। काण्वश्रुतौ संबन्धसामान्यविषया षष्ठी; सा संबन्धविशेषमाकाङ्क्षमाणा माध्यन्दिनशाखागतया पञ्चम्याऽपादानलक्षणे संबन्धविशेषे व्यवस्थाप्यते; अतो जीवापादानकमुत्क्रमणं प्रतिषिध्यत इत्यर्थः। ननु माध्यन्दिनानां तच्छब्देन देहं परामृश्य देहापादानोत्क्रान्तिप्रतिषेधः किं न भवतीत्याशङ्क्याह— **तस्मादिति चेति**। जीवेन सह भावे किं सिद्धमित्यत आह— **सप्राणस्य चेति**।

***भाष्यभावप्रकाशिका***

**इति**। अत्र परब्रह्मविद उत्क्रान्तिरस्त्युत नास्तीति सन्देहः। तत्र सिद्धान्तिनो मतनिराकरणेन पूर्वपक्षी स्वमतमवस्थापयति— **अतः परविद्याविषयादित्यादिना**। यदि शरीरात् प्राणानामुत्क्रान्तिः प्रतिषिध्येत तदैतदुपपद्यते, न त्वेतदस्ति, जीवादेव प्राणानामुत्क्रान्तेः प्रतिषिध्यमानत्वात् 'न तस्मात् प्राणा उत्क्रामन्ती'ति पञ्चम्यन्तमाध्यन्दिनश्रुत्यनुसारेण 'न तस्य प्राणा उत्क्रामन्ती'ति काण्वश्रुतिः संबन्धसामान्यषष्ठ्यर्थविषयाऽपादानलक्षणसंबन्धविशेषे व्यवस्थापनीयेत्यर्थः। ननु तथापि तस्मादिति शरीरमेव परामृश्यतामित्यत आह— **तस्मादितीति**। कस्तर्हि वाक्यार्थ इति, तमाह— **तस्मादुच्चिक्रमिषोरिति**। अतस्तत्सहितस्य क्षेत्रज्ञस्योत्क्रान्तिरवगम्यत इत्याह— **सप्राणस्य चेति**।

**आर्तभागप्रश्न इति**। 'यत्रायं पुरुषो म्रियत' इत्यत्रोत्क्रान्त्यवधिं पुरुषमस्मादिति शब्दनिर्दिष्टं सशब्देन परामृश्योच्छ्वयनादि-

***न्यायनिर्णयः***

दर्शयन्नधिकरणस्य तात्पर्यमाह— **अमृतत्वं चेति**। परब्रह्मविदं विषयत्वेनोदाहरति— **अथेति**। मुक्तिप्रकरणोपक्रमार्थोऽथशब्दः। बाह्यविषयवैतृष्ण्यमकामत्वम्। आन्तरकामवासनाराहित्यं निष्कामत्वम्। प्राप्तपरमानन्दत्वमाप्तकामत्वम्। सर्वात्मैकत्वदर्शित्वमात्मकामत्वम्। उत्तरमुत्तरं पूर्वस्य पूर्वस्य निमित्तम्, एवमकामयमानो ब्रह्मविदत्र श्रुतोऽस्तीत्यर्थः। तस्य किमुत्क्रान्तिरस्ति, किंवा नास्तीति पञ्चमीषष्ठीश्रुतिभ्यां संदेहे परब्रह्मविदो मुख्यामृतत्वे गत्युत्क्रान्त्योरभावोक्तेरत्र प्रासङ्गिकी पादादिसंगतिः। पूर्वपक्षे निषेधस्यान्यविषयत्वाद् विदुषोऽविदुषश्चाविशेषः। सिद्धान्ते शाखाद्वयेऽपि देहापादानोत्क्रान्तिनिषेधाद् विशेषसिद्धिरित्यभिप्रेत्य सिद्धान्तिनो मतनिराकरणेन पूर्वपक्षी स्वमतमाह— **नेत्यादिना**। 'न तस्य प्राणा उत्क्रामन्ती'ति विदुषो देहादेवोत्क्रान्तिर्निषिध्यते, न शारीरादिति शङ्कते— **कथमिति**। माध्यंदिनश्रुत्या प्रत्याह— **न तस्मादिति**। शारीरादुत्क्रान्तिनिषेधे का गतिः षष्ठीश्रुतेरित्याशङ्क्य पञ्चम्यन्तमाध्यन्दिनश्रुत्या षष्ठ्यन्तकाण्वश्रुतिः संबन्धसामान्यविषयाऽपादानत्वरूपसंबन्धविशेषे व्यवस्थापनीयेत्याह— **संबन्धेति**। माध्यन्दिनश्रुतावपि तस्मादिति शरीरमेव परामृश्यतामित्याशङ्क्याह— **तस्मादिति चेति**। कस्तर्हि वाक्यार्थः स्यादित्यपेक्षायामाह— **न तस्मादिति**। तथापि प्रकृते किमायातमित्याशङ्क्य सप्राणस्य क्षेत्रज्ञस्य शरीरादुत्क्रान्तिः सिद्धेत्याह— **सप्राणस्येति**।।१२।।

## स्पष्टो ह्येकेषाम्।।१३।।

**नैतदस्ति– यदुक्तं परब्रह्मविदोऽपि देहादस्त्युत्क्रान्तिरुत्क्रान्तिप्रतिषेधस्य देह्यपादानत्वादिति। यतो देहापादान एवोत्क्रान्तिप्रतिषेध एकेषां समाम्नातृणां स्पष्ट उपलभ्यते। तथाहि– आर्तभागप्रश्ने 'यत्रायं पुरुषो म्रियत उदस्मात् प्राणाः क्रामन्त्याहो नेति' (बृ.उ. ३।२।११) इत्यत्र 'नेति होवाच याज्ञवल्क्यः' (बृ.उ. ३।२।११) इत्यनुत्क्रान्तिपक्षं परिगृह्य न तर्ह्ययमनुत्क्रान्तेषु प्राणेषु मृत इत्यस्यामाशङ्कायाम् 'अत्रैव समवनीयन्त' इति प्रविलयं प्राणानां प्रतिज्ञाय तत्सिद्धये 'स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' (बृ.उ. ३।२।११) इति सशब्दपरामृष्टस्य प्रकृतस्योत्क्रान्त्यवधेरुच्छ्वयनादीनि समामनन्ति। देहस्य चैतानि स्युर्न देहिनः। तत्सामान्यात् 'न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' (बृ.उ.मा. ४।२।८) इत्यत्राप्यभेदोपचारेण देहापादानस्यैवोत्क्रमणस्य प्रतिषेधः; यद्यपि प्राधान्यं देहिनः इति व्याख्येयं येषां पञ्चमीपाठः। येषां तु षष्ठीपाठस्तेषां विद्वत्संबन्धिन्युत्क्रान्तिः प्रतिषिध्यत इति प्राप्तोत्क्रान्तिप्रतिषेधार्थत्वादस्य वाक्यस्य देहापादानैव**

### *प्रकटार्थविवरणम्*

**स्पष्टो ह्येकेषाम्।।** सिद्धान्तसूत्रं परोक्तप्रतिषेधं बहिरेव प्रतिज्ञाय हेतुत्वेन योजयति— **नैतदस्तीत्यादिना।** अस्मादिति यः प्रकृत उत्क्रान्त्यवधिः, तं सशब्देन परामृश्य उच्छ्वयनाद्यभिधानादार्तभागप्रश्ने तावद् विदुषः शरीरादुत्क्रान्तिः प्राणानां प्रतिषिद्धा। ततः प्रकृते किमायातमित्यत आह— **तत्सामान्यादिति।** विद्याप्रकरणे विद्वद्विषयत्वाविशेषात् 'न तस्मात्प्राणाः' इत्यत्रापि तच्छब्देन जीवाभिन्नं शरीरमेवोपलक्ष्य विदुषः शरीरात् प्राणा नोत्क्रामन्तीत्यर्थो ग्राह्य इत्यर्थः। इदानीं काण्वपाठस्यार्थमाह— **येषां तु षष्ठीपाठ इति।** 'न तस्य प्राणा उत्क्रामन्ति' इत्यत्रापादानकारकापेक्षायाम् 'चक्षुष्टो वा मूर्ध्नो वा' इति शरीरावयवानामुत्क्रान्त्यपादानत्वेन

### *भाष्यभावप्रकाशिका*

धर्मनिर्देशाद् यस्योच्छ्वयनाध्माने तस्यैव [त]दुत्क्रान्त्यवधित्वमवगम्यते। ततो देहिन उच्छ्वयनाद्यभावान्नोत्क्रान्त्यवधित्वम्। अपितु देहस्यैवेत्यर्थः। भवतु तत्र देहस्यापादानत्वम्, इह तु जीवस्यैवास्त्विति, तत्राह— **तत्सामान्यादिति।** विद्याप्रकरणत्वसामान्याद् ब्रह्मविदो देहापादानादुत्क्रान्तिप्रतिषेध उभयत्रापि तुल्योऽभ्युपगन्तव्य इत्यर्थः। ननु तच्छब्देन सर्वनाम्ना प्रधानतया देहिनः परामृष्टत्वात् कथमत्र देहावगतिरित्यत आह— **अभेदोपचारेणेति।** देहदेहिनोरभेदोपचारात् प्रकृतदेहिपरामर्शकसर्वनाम्ना देह एव परामृष्ट इति पञ्चमीपाठे व्याख्येयमित्यर्थः। षष्ठीपाठे नोपचार इत्याह— **येषां तु षष्ठीति।** 'न तस्य प्राणा उत्क्रामन्ती'त्यत्रापादानापेक्षायां

### *न्यायनिर्णयः*

परब्रह्मविदोऽपि गत्युत्क्रान्ती स्तामिति प्राप्तमनूद्य सिद्धान्तयति— **एवमिति।** सूत्रं हेतुत्वेन व्याख्यातुं बहिरेव प्रतिज्ञामाह— **नैतदिति।** तत्र हेतुतया सूत्रं योजयति— **यत इति।** उपलम्भमभिनयति— **तथा हीति।** 'उदस्मात्प्राणा उत्क्रामन्ती'त्यत्रोत्क्रान्त्यवधिमत्त्वमस्मादित्युक्तं[१] सशब्देन परामृश्योच्छ्वयनादिधर्मोक्तेर्यस्योच्छ्वयनाध्माने तस्यैवोत्क्रान्त्यवधित्वं देहस्येत्यर्थः। अथोच्छ्वयनादिधर्मजातं देहिनोऽस्तु, तेन तस्यैवोत्क्रान्त्यवधित्वं, नेत्याह— **देहस्येति।** काण्वश्रुतौ निषिध्यमानोत्क्रान्तेर्देहापादानत्वेऽपि माध्यंदिनश्रुतौ देहिन एव तदपादानत्वं तस्यैव प्राधान्यादित्याशङ्क्याह— **तदिति।** विद्याप्रकरणत्वसामान्याद् ब्रह्मविदो देहापादानोत्क्रान्तिनिषेधः शाखाद्वयेऽपि तुल्य इत्यर्थः। तच्छब्देन सर्वनाम्ना देहिनः प्रधानतया परामृष्टत्वात् कुतोऽत्र देहधीरित्याशङ्क्याह— **अभेदेति।** प्राधान्याद् देहिनस्तच्छब्दार्हत्वेऽपि देहदेहिनोरभेदोपचाराद् देहिपरामर्शिसर्वनाम्ना देहस्यैव परामर्शात् तस्मादेवोत्क्रान्तिरत्र निषिद्धेति पञ्चमीपाठे व्याख्येयमित्यर्थः। माध्यंदिनपाठस्य सिद्धान्तानुगुण्यमुक्त्वा काण्वपाठस्यापि तदानुगुण्यमाह— **येषां त्विति।** 'न

१. 'उत्क्रान्त्यवधिमस्मादित्युक्तम्' इति पाठः स्यात्।

**सा प्रतिषिद्धा भवति। देहादुत्क्रान्तिः प्राप्ता, न देहिनः। अपि च 'चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ.उ. ४।४।२) इत्येवमविद्वद्विषयं सप्रपञ्चमुत्क्रमणं संसारगमनं च दर्शयित्वा 'इति नु कामयमानः' (बृ.उ. ४।४।६) इत्युपसंहृत्याविद्वत्कथाम् 'अथाकामयमानः' (बृ.उ. ४।४।६) इति व्यपदिश्य विद्वांसं यदि तद्विषयेऽप्युत्क्रान्तिमेव प्रापयेदसमञ्जस एव व्यपदेशः स्यात्। तस्मादविद्वद्विषये प्राप्तयोर्गत्युत्क्रान्त्योर्विद्वद्विषये प्रतिषेध इत्येवमेव व्याख्येयं व्यपदेशार्थवत्त्वाय। न च ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य प्रक्षीणकामकर्मण उत्क्रान्तिर्गतिर्वोपपद्यते, निमित्ताभावात्। 'अत्र ब्रह्म समश्नुते' (बृ.उ. ४-४-७) इति चैवंजातीयकाः श्रुतयो गत्युत्क्रान्त्योरभावं सूचयन्ति।।१३।।**

### *प्रकटार्थविवरणम्*

प्रकृतानामिह संबन्धात् प्राप्तोत्क्रान्तिप्रतिषेधपरत्वाच्च वाक्यस्य, षष्ठ्याश्च 'प्राणमयः' इत्यादौ प्रकृतोपाध्युपहितसंबन्धि[१]विशेषावलम्बितया शाखान्तरगतापादानानपेक्षत्वात् तस्योपाधिभूताः प्राणाः शरीरावयवेभ्यो नोत्क्रामन्तीति वाक्यार्थः सिध्यतीत्यर्थः। व्यपदेशभेदस्यार्थवत्त्वसिद्ध्यर्थमप्ययमेव वाक्यार्थ इत्याह— **अपि चेति**। नन्वविदुषः शरीरान्तरारम्भायोत्क्रान्तिः, विदुषस्तु न शरीरारम्भाय; किं तु संसारमण्डलमतिक्रम्य हिरण्यगर्भपर्यन्तं परब्रह्मप्राप्त्यर्थमित्यर्थविशेषो भविष्यतीत्याशङ्क्याह— **न च ब्रह्मविद इति**। तथा च स्मृतिः—

"नोत्क्रामन्ति मुनेः प्राणाः व्यापी सर्वगतो हि सः। तेन व्याप्तमिदं सर्वं कुत उत्क्रम्य यास्यति।।" इति।।

यच्च **भास्करभाषणम्** 'उत्क्रान्तिप्रतिषेधे न्यायो नास्ति' इत्यादि, तदुक्तन्यायापरिज्ञानविलसितमित्युपेक्ष्यते।

### *भाष्यभावप्रकाशिका*

'चक्षुषो वा मूर्ध्नो वे'ति शरीरावयवानामुत्क्रान्त्यपादानत्वेन प्रकृतानामिह संबन्धात् प्राप्तोत्क्रान्तिप्रतिषेधपरत्वाच्च वाक्यस्य 'न तस्य प्राणाः शरीरावयवेभ्य उत्क्रामन्ती'ति वाक्यं परिणम्यते, अन्यथा अप्राप्तनिषेधप्रसङ्गात्, संबन्धसामान्यविषयषष्ठ्याश्च 'प्राणेन रक्षन्' 'प्राणमय' इत्यादि कर्तृकरणोपाध्युपहितत्वादिप्रकृतसंबन्धविशेषपर्यवसानसंभवान्न शाखान्तरगतापादानसंबन्धविशेषापेक्षा। अतस्तस्य करणोपाधिभूताः प्राणाः शरीरावयवेभ्यो नोत्क्रामन्तीति वाक्यार्थोऽभ्युपगन्तव्य इत्यर्थः। व्यपदेशभेदसामर्थ्यादपि विद्वदुत्क्रान्तिनिषेधपरत्वं वाक्यस्यावगम्यत इत्याह— **अपि चेति**। न केवलं प्रमाणाभावादेव गत्युत्क्रान्त्योरभावः, उपपत्त्यभावादपीत्याह— **न च ब्रह्मविद इति। निमित्ताभावादिति**। गमनस्य कर्मकरणादिकारकासंभवादित्यर्थः। पूर्वं तयोःसद्भावे प्रमाणं नास्तीत्युक्तम्, इदानीं तयोरभावे प्रमाणमस्तीत्याह— **अत्रेति**।

### *न्यायनिर्णयः*

तस्ये'त्यादावपादानापेक्षायां 'चक्षुष्टो वा मूर्ध्नो वे'ति देहांशानामुत्क्रान्त्यपादानत्वेन प्रकृतानामिह संबन्धात् प्राप्तोक्रान्तिनिषेधपरत्वाच्च वाक्यस्य 'न तस्य प्राणा देहांशेभ्यः सकाशादुत्क्रामन्ती'ति वाक्यविपरिणामादन्यथा वाऽप्राप्तनिषेधापातात् संबन्धसामान्यार्थषष्ठ्याश्च 'प्राणेन रक्षन्' 'प्राणमय' इत्यादिकर्तृकरणोपाध्युपहितत्वप्रकृतसंबन्धविशेषपर्यवसानादन्यशाखास्थापादानसंबन्धविशेषापेक्षाभावात् तस्य करणोपाधिभूताः प्राणा देहावयवेभ्यो नोत्क्रामन्तीति वाक्यार्थः स्यादित्यर्थः। इतश्च विद्वदुत्क्रान्तिनिषेधपरं वाक्यमित्याह— **अपि चेति**। व्यपदेशसामर्थ्यसिद्धमुपसंहरति— **तस्मादिति**। न केवलं मानाभावादेव गत्युत्क्रान्त्यभावः, किंतु युक्त्यभावादपीत्यह— **न चेति**। उपपत्त्यभावे हेतुमाह— **निमित्तेति**। गमनस्य कर्मकरणादिकारकासंभवादित्यर्थः। तयोः सत्त्वे मानं नास्तीत्युक्तम्, तदसत्त्वे मानमस्तीत्याह— **अत्रेति**।।१३।।

१. 'संबन्धविशेष' इति पा.।

## स्मर्यते च ।।१४।।

**स्मर्यतेऽपि च महाभारते गत्युत्क्रान्त्योरभावः– 'सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः। देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः' (म.भा.शा. २३९।२३) इति। ननु गतिरपि ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य स्मर्यते– 'शुकः किल वैयासकिर्मुमुक्षुरादित्यमण्डलमभिप्रतस्थे, पित्रा चानुगम्याहूतो भो इति प्रतिशुश्राव' इति। न, सशरीरस्यैवायं योगबलेन विशिष्टदेशप्राप्तिपूर्वकः शरीरोत्सर्ग इति द्रष्टव्यम्, सर्वभूत-दृश्यत्वाद्युपन्यासात्। न ह्यशरीरं गच्छन्तं सर्वभूतानि द्रष्टुं शक्नुयुः। तथा च तत्रैवोपसंहृतम्– 'शुकस्तु मारुताच्छीघ्रां गतिं कृत्वाऽन्तरिक्षगः। दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत्' (म.भा.शा. ३३३।२०) इति। तस्मादभावः परब्रह्मविदो गत्युत्क्रान्त्योः। गतिश्रुतीनां तु विषयमुपरिष्टाद् व्याख्यास्यामः।।१४।। इति षष्ठं प्रतिषेधाधिकरणम्।।**

### *शारीरकन्यायसंग्रहः*

।।कलाप्रलयाधिकरणम्।।

**तानि परे तथा ह्याह।।१५।।** 'गताः कलाः पञ्चदश प्रतिष्ठा' इत्यादिश्रुतेः प्रकृतावेव विकारलय इति न्यायानुगृहीताया भूतेषु ब्रह्मवित्करणलय इति प्राप्ते 'पुरुषं प्राप्यास्तं गच्छन्ति' इति श्रुत्यनुसारेणाविद्याकृतभूतसूक्ष्मेषु लीनाः सह भूतसूक्ष्मैर्ब्रह्मण्यस्तं गच्छन्तीति कल्प्यते, अविद्याकृतभूतसूक्ष्मोपादानं लिङ्गशरीरम्, इतरदीश्वरमायोपादानमिति पक्षेऽपि सह भूतसूक्ष्मैः ब्रह्मणि लयो वाक्यद्वयसामर्थ्यात् कल्प्यत इति दर्शितम्।

### *प्रकटार्थविवरणम्*

**स्मर्यते च।।** स्मृत्यनुग्रहादपि अयमेव श्रुत्यर्थो ग्राह्य इत्याह— **स्मर्यते चेति**। पदैषिणो देवाः; अपदस्य प्राप्यपदरहितस्य विदुषो मार्गे मुह्यन्ति, मार्गं न जानन्ति, तदभावादेवेत्यर्थः। स्मृत्यन्तरविरोधं शङ्कते— **ननु गतिरपीति**। परिहरति— **सशरीरस्यैवेति। योगबलेन** सगुणविद्याफलेनेत्यर्थः। इति षष्ठं प्रतिषेधाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

अपदस्य ब्रह्मविदो मार्गे पदैषिणो देवा इति योजना। स्मृत्यन्तरविरोधमाशङ्कते— **ननु गतिरपीति**। अपरविद्याबलेनैषा गतिरिति परिहरति— **सशरीरस्येति**। 'तयोर्ध्वमायन्नमृतत्वमेति' 'स एनान् ब्रह्म गमयती'त्यादिश्रुतीनां तर्हि का गतिरिति तत्राह— **गतिश्रुतीनामिति**। इति षष्ठं प्रतिषेधाधिकरणम्।।

### *न्यायनिर्णयः*

'नोत्क्रामन्ति मुनेः प्राणा व्यापी सर्वगतो हि सः। तेन व्याप्तमिदं सर्वं कुत उत्क्रम्य यास्यति' इति स्मृतेरपि ब्रह्मविदो नोत्क्रान्तिर्गतिर्वेत्याह— **स्मर्यते चेति**। सूत्रं व्याचष्टे— **स्मर्यतेऽपीति**। अपदस्य प्राप्यपदशून्यस्य ब्रह्मविदः पदैषिणो देवा अपि मार्गे मुह्यन्ति मार्गं न जानन्ति। तदभावादिति योजना। स्मृत्यन्तरविरोधं शङ्कते— **नन्विति**। अपरविद्याबलेनैषा गतिरित्याह— **नेति**। तत्र नियामकमाह— **सर्वेति**। आदिशब्देनानुगमनादि गृह्यते। तथापि कथं सशरीरस्य गतिः, तत्राह— **न हीति**। उक्तेऽर्थे वाक्यशेषमनुकूलयति— **तथा चेति। स्मृत्यनुग्रहलब्धमर्थमुपसंहरति— तस्मादिति**। 'तयोर्ध्वमायन्नमृतत्वमेति' 'स एनान्ब्रह्म गमयती'त्यादिगतिश्रुतीनां तर्हि का गतिः, तत्राह— **गतीति**।।१४।। इति षष्ठं प्रतिषेधाधिकरणम्।।

**७।।कलाप्रलयाधिकरणम्।।सू.१५।।**

## तानि परे तथा ह्याह।।१५।।

**तानि पुनः प्राणशब्दोदितानीन्द्रियाणि भूतानि च परब्रह्मविदस्तस्मिन्नेव परस्मिन्नात्मनि प्रलीयन्ते। कस्मात्? तथा ह्याह श्रुतिः– 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' (प्र.उ. ६।५) इति। ननु 'गताः कलाः पञ्चदश प्रतिष्ठाः' (मु.उ. ३।२।७) इति विद्वद्विषयैवापरा श्रुतिः परस्मादात्मनोऽन्यत्रापि कलानां प्रलयमाह स्म। न; सा खलु व्यवहारापेक्षा, पार्थिवाद्याः कलाः पृथिव्यादीरेव स्वप्रकृतीरपियन्तीति। इतरा तु विद्वत्प्रतिपत्त्यपेक्षा, कृत्स्नं कलाजातं परब्रह्मविदो ब्रह्मैव संपद्यत इति। तस्माददोषः।।१५।।**

**।।इति सप्तमं कलाप्रलयाधिकरणम्।।**

### *प्रकटार्थविवरणम्*

**तानि परे तथा ह्याह।।** पूर्वत्र प्राणानुत्क्रान्त्यभिधानेनेहैव लयोऽभिहितः। तस्मिन्नेव लये श्रुतिद्वयदर्शनात् संशयः। तथा हि 'गताः कलाः पञ्चदश प्रतिष्ठा' इति भूतेषु लयः प्रतीयते, 'पुरुषायणाः पुरुषं प्राप्यास्तं यन्ति' इति पुरुषे। तत्र सिद्धान्तमेव तावदाह— **तानि पुनरिति**। यथा नद्यः समुद्रं प्राप्यास्तं यन्त्येवमेवास्य जीवस्य परिसमन्तात् सर्वतोऽनवच्छिन्नब्रह्मद्रष्टुरिमाः प्राणाद्याः षोडश कलाः पुरुषाश्रयाः पुरुषं प्राप्य बाह्यविषयासङ्गत्यागेन परमपुरुष एव निष्ठयाऽस्तं गच्छन्तीत्यर्थः। संशयबीजमुद्भावयति— **ननु गता इति**। मनःप्राणयोरेकत्वकरणेन पञ्चदशसंख्याकाः कलाः प्रतिष्ठाः प्रति स्वं स्वं कारणं प्रति मोक्षकाले (न) गता भवन्तीति श्रुत्या प्रकृतावेव विकारलय इति न्यायानुगृहीतया भूतेषु ब्रह्मविदः करणानां लय इति पूर्ववादिनो मतम्; सिद्धान्ती श्रुत्या व्यवस्थितविषयत्वेन निर्णयमाह— **सा खल्वित्यादिना**। सा कलानां भूतेषु लयप्रतिपादिका श्रुतिः सर्वजीवसाधारण-

### *भाष्यभावप्रकाशिका*

**तानि परे तथा ह्याह**। अत्र विद्वत्कलाप्रविलयो विषयः। स किं पृथिव्यादिषु किं वाऽऽत्मनीति संशयः। तत्र सिद्धान्तमाह— **तानि पुनरिति**। इदानीं पूर्वपक्षमुद्धा...**नुगताःकला इति**। प्रतिष्ठाशब्देन पृथिव्यादितत्त्वानि कथ्यन्ते। अतः प्रकृतावेव विकारलय इति न्यायानुगृहीतश्रुतिसामर्थ्यात् भूतेषु विद्वत्कलानां लय इत्यर्थः। वस्तुवृत्त्या परमात्मनि कलाप्रविलयेऽप्यविद्वद्दृष्ट्यपेक्षया पृथिव्यादिषु लयव्यपदेशो न विरुध्यते, पृथिव्यादिषु प्रविलीय तैः सह परमात्मनि प्रविलयोपपत्तेश्चेति परिहरति— **सा खलु व्यवहारेति**। इति सप्तमं कलाप्रलयाधिकरणम्।।

### *न्यायनिर्णयः*

परब्रह्मविदो ब्रह्मणि परस्मिन् प्राणानां प्रलयो दर्शितस्तदयुक्तम्, तेषां पृथिव्यादिषु लयश्रवणादित्याशङ्क्याह— **तानीति**। विद्वत्कलाप्रविलयो विषयः, स किं पृथिव्यादिषु, किंवा परस्मिन्नात्मनीति श्रुतिद्वयोपलब्धेः संदेहे श्रौतविद्याफलभूतकलाविलयो ब्रह्मण्येवेत्युक्त्या पादादिसंगतिः। पूर्वपक्षे प्रकृतावेव विकृतिलयसिद्धिः, सिद्धान्ते व्यवहारतस्तथात्वेऽपि तत्त्वतो ब्रह्मणि कलाविलयोपपत्तिरिति मन्वानः सिद्धान्तमाह— **तानीति**। उक्तार्थे प्रश्नपूर्वकं हेतुमाह— **कस्मादिति**। यथा नद्यः समुद्रं प्राप्य प्रलीयन्त एवमेवास्य जीवस्य परितः समन्तात् सर्वतोऽनवच्छिन्नप्रत्यग्ब्रह्मद्रष्टुरिमाः स्वानुभवगम्याः प्राणश्रद्धाद्याः षोडशसंख्याकाः कलाः पुरुषायणास्तदाश्रयास्तमेव पुरुषं प्राप्य बाह्यविषयसङ्गत्यागेन तस्मिन् निष्ठाय विलयमासादयन्तीति श्रुत्यर्थः। अस्याधिकरणस्य पूर्वपक्षमाह— **नन्विति**। मनःप्राणयोरेकीकरणेन कलानां पञ्चदशत्वं, प्रतिष्ठाशब्देन पृथिव्यादीनि तत्त्वानि कलाकारणान्युच्यन्ते। तथा च प्रकृतावेव विकारलय इति न्यायानुगृहीतश्रुत्या भूतेषु विद्वत्कलाविलय इत्यर्थः। वस्तुस्थित्या परस्मिन्नात्मनि कलालयेऽपि व्यवहारदृष्ट्या पृथिव्यादिषु तदुक्तिरविरुद्धा, तेषु विलीय तैः सह परस्मिन्नात्मनि कलानां विलयसिद्धेश्च श्रुतिद्वयमविरुद्धमित्याह— **न, सा खल्विति**। विद्वदविद्वद्दृष्ट्या श्रुतिद्वये प्रवृत्ते फलितमाह— **तस्मादिति**।।१५।। इति सप्तमं कलाप्रलयाधिकरणम्।।

८।।अविभागाधिकरणम्।।सू.१६।।

## अविभागो वचनात्।।१६।।

**स पुनर्विदुषः कलाप्रलयः किमितरेषामिव सावशेषो भवत्याहोस्विन्निरवशेष इति। तत्र प्रलयसामान्याच्छक्त्यवशेषताप्रसक्तौ ब्रवीति– अविभागापत्तिरेवेति। कुतः? वचनात्। तथा हि कलाप्रलयमुक्त्वा वक्ति– 'भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति' (प्र.उ. ६।५) इति। अविद्यानिमित्तानां च कलानां न विद्यानिमित्ते प्रलये सावशेषत्वोपपत्तिः। तस्मादविभाग एवेति।।१६।।**

।।इत्यष्टममविभागाधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

**अविभागो वचनात्।।१६।।** विदुषः परस्मिन् ब्रह्मणि कलालयः सावशेषो भवितुमर्हति, ब्रह्मणि कलालयत्वात्, उत्क्रान्तौ कलालयवदित्यनुमानस्य ब्रह्मभावमोक्षशास्त्रान्यथानुपपत्त्यनुगृहीतया 'भिद्येते तासां नामरूपे' इत्यस्तंगतानामपि सूक्ष्मनामरूप[भेदन]श्रुत्या बाधान्निरवशेषलयो दर्शितः।

### *प्रकटार्थविवरणम्*

व्यवहारगोचरमहाभूतविषया। मायामयमहाभूतोपष्टब्धानि हि जीवाविद्याकृतभूतसूक्ष्माणि लिङ्गदेहाकारेण विवर्तन्ते। तत्रोपष्टम्भकभूतांशानां महाभूतेष्वेव विलय इत्यर्थः। इतरा तु 'पुरुषं प्राप्यास्तं गच्छन्ति' इति श्रुतिः विद्वत्प्रतिपत्त्या अविद्याधिकृतभूतसूक्ष्मरचितकरणग्रामादिदाहविषयेत्यर्थः। इति सप्तमं कलाप्रलयाधिकरणम्।।

**अविभागो वचनात्।।** लयस्योभयथात्वदर्शनात् पूर्वोक्त एव लये संशयमाह— **स पुनरिति**। विमतः कलाविलयः सावशेषः, कलाविलयत्वात् उत्क्रान्तौ कलाविलयवदित्यनुमानात् शक्तिशेषे लये प्राप्ते, सिद्धान्तमाह— **अविभागापत्तिरिति**। ब्रह्मभावमोक्षसाधकशास्त्रान्यथानुपपत्त्यनुगृहीतया 'भिद्येते तासां नामरूपे' इत्यस्तङ्गतानामपि सूक्ष्मनामरूपाभावपरया श्रुत्या अनुमानस्य बाधात् स्वरूपशेषो लय इति भावः। इत्यष्टममविभागाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**अविभागो वचनात्।।** विदुषः परस्मिन् कलाप्रलयः सावशेषः परमात्मनि कलाप्रलयत्वादुत्क्रान्तौ कलाप्रलयवदित्याह— **तत्र प्रलयेति**। अनुमानस्य श्रुतिविरोधमाह— **वचनादिति**। उपसंहृतानामपि सूक्ष्मनामरूपाभावप्रतिभावनान्निरवशेषो लय इत्यर्थः। न केवलं श्रुतितो निरवशेषत्वं लयस्य, युक्तितोऽपीत्याह— **अविद्येति**। इत्यष्टममविभागाधिकरणम्।।

### *न्यायनिर्णयः*

पृथिव्यादिद्वारा ब्रह्मण्युक्तस्य विद्वत्कलाविलयस्य निरवशेषत्वमाह— **अविभाग इति**। प्रकृतमेव विद्वत्कलाविलयमधिकृत्य लयस्योभयथा दृष्ट्या संशयमाह— **स पुनरिति**। अत्र श्रौतधीफलभूतविद्वत्कलाविलयस्य निरवशेषत्वनिरूपणात्पादादिसंगतिः। पूर्वपक्षे मोक्षासिद्धिः, सिद्धान्ते तत्सिद्धिरित्युपेत्य पूर्वपक्षयति— **तत्रेति**। विदुषो ब्रह्मणि कलाविलयः सावशेषः, ब्रह्मणि कलाविलयत्वादुत्क्रान्तिकालीनकलाविलयवदित्यर्थः। श्रुतियुक्तिविरुद्धमनुमानमिति सिद्धान्तयति— **ब्रवीतीति**। तत्र श्रुतिविरोधं प्रश्नद्वारा दर्शयति— **कुत इति**। नदीसमुद्रन्यायेन पुरुषे कला विलीयन्ते, तासां च कलानां नामरूपे शक्त्यात्मके अपि भिद्येते विदीर्येते, पुरुषमात्रमवशिष्यते, स च विद्वानकलः कलाविरहितः सन्नमृतो भवति, पूर्णरूपेण तिष्ठतीत्यर्थः। श्रुतिविरोधमनुमानस्योक्त्वा युक्तिविरोधमाह— **अविद्येति**। अनुमाननिरासफलमुपसंहरति— **तस्मादिति**।।१६।। इत्यष्टममविभागाधिकरणम्।।

### ९।।तदोकोधिकरणम्।।सू.१७।।

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया।।१७।।

**समाप्ता प्रासङ्गिकी परविद्यागता चिन्ता। सम्प्रति त्वपरविद्याविषयामेव चिन्तामनुवर्तयति। समाना चासृत्युपक्रमाद् विद्वदविदुषोरुत्क्रान्तिरित्युक्तम्। तमिदानीं सृत्युपक्रमं दर्शयति। तस्योपसंहृतवागादिक-लापस्योच्चिक्रमिषतो विज्ञानात्मन ओक आयतनं हृदयम् 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति' (बृ.उ. ४।४।१) इति श्रुतेः। तदग्रप्रज्वलनपूर्विका चक्षुरादिस्थानापादाना चोत्क्रान्तिः श्रूयते– 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः' (बृ.उ. ४।४।२) इति। सा किमनियमेनैव विद्वदविदुषोर्भवति, अथास्ति कश्चिद्विदुषो विशेषनियम इति विचिकित्सायां श्रुत्यविशेषादनियमप्राप्तावाचष्टे– समानेऽपि हि विद्वदविदुषोर्हृदयाग्रप्रद्योतने तत्प्रकाशितंद्वारत्वे च मूर्धस्थानादेव**

### *शारीरकन्यायसंग्रहः*

**तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया।।१७।।** 'चक्षुष्टो वा मूर्ध्नो वा' इत्यविशेषशास्त्रात् सगुणविदोऽपि यया कयाचिन्नाड्या निष्क्रमणप्राप्तौ 'तयोर्ध्वमायन्' इति विद्याप्रकरणामृतत्वफलाभ्यां मूर्धन्यनाड्या गच्छतीत्युक्तम्।

### *प्रकटार्थविवरणम्*

**तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया।।** वृत्तानुवादपूर्वकं संक्षेपमाह— **समाप्तेत्यादिना**। सूत्रभागव्याख्यानपूर्वकं विषयमाह— **तस्येति**। सोत्क्रान्तिः किमुपासकानुपासकयोरनियतद्वारा भवति, अथवोपासकानामस्ति द्वारनियम इति संशयमाह— **सा किमिति**। 'चक्षुष्टो वा' इति द्वारानियमश्रुतेः 'तयोर्ध्वमायन्नमृतत्वमेति' इति [1]अविशेषश्रुतेश्च संशये पूर्वपक्षमाह— **श्रुत्यविशेषादिति**। पूर्वाधिकरणे कलानां वचनादविभाग उक्तः, तद्वदिहापि 'चक्षुष्टो

### *भाष्यभावप्रकाशिका*

**तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतःशताधिकया।।** वृत्तानुकीर्तन-पूर्वकमुत्तराधिकरणानां तात्पर्यमाह— **समाप्तेति**। इदानीमस्याधिकरणस्य तात्पर्यं वृत्तानुकीर्तनपूर्वकमाह— **समाना चेति**। सूत्रयोजनमाह— **तस्योपसंहृतेति**। हृदयमायतनमित्यत्र प्रमाणमाह— **स एता इति**। 'चक्षुषो वे'त्याद्यविशेषश्रवणाद् यतः कुतश्चिदङ्गादुत्क्रामन्तीति

### *न्यायनिर्णयः*

विद्वत्कलानां वचनादविभागापत्तिवदपरब्रह्मविदामपि 'चक्षुष्टो वा मूर्ध्नो वे'त्यविशेषवचनाद् यया कयाचिन्नाड्या प्राणनिष्क्रमणमिति प्राप्ते प्रत्याह—**तदोकोऽग्रज्वलनमिति**। वृत्तानुवादपूर्वकमुत्तराधिकरणानां तात्पर्यमाह— **समाप्तेति**। सम्प्रत्यस्याधिकरणस्य वृत्तमनूद्य तात्पर्यमाह— **समाना चेति**। सूत्रभागव्याख्याद्वाराऽधिकरणस्य विषयमाह— **तस्येति**। हृदयमायतनमित्यत्र मानमाह— **स इति**। अस्तु हृदयं जीवस्यालम्बनं तथापि किं स्यादित्याशङ्क्योक्तम्— **तदग्रेति**। अदृष्टाक्षिप्तं प्रतिपत्तव्यज्ञानं प्रद्योतः। 'चक्षुष्टो वे'ति द्वारानियमश्रुतेः'तयोर्ध्वमायन्नमृतत्वमेती'तिविशेषश्रुतेश्च संशयमाह— **सा किमिति**। उपासकानुपासकयोरनियमेन येन केनचिद् द्वारेणोत्क्रान्तिरथवोपासकानामस्ति द्वारनियम इति विमर्शार्थः। अत्र चापरब्रह्मविदां फलार्थोत्क्रान्तेर्द्वारनियमोक्त्या पादादिसंगतिः। पूर्वपक्षे ध्यानकृतातिशयशून्यत्वं सिद्धान्ते तत्कृतातिशयसिद्धिरिति सिद्धवत्कृत्य पूर्वपक्षमाह— **श्रुतीति**। 'चक्षुष्टो वे'त्याद्यविशेषश्रुतेर्यतः

---

१. 'विशेष' इति पाठः स्यात्।

**विद्वान् निष्क्रामति, स्थानान्तरेभ्यस्त्वितरे। कुतः? विद्यासामर्थ्यात्। यदि विद्वानपीतरवद् यतः कुतश्चिद् देहदेशादुत्क्रामेन्नैवोत्कृष्टं लोकं लभेत। तत्रानर्थिकैव विद्या स्यात्। तच्छेषगत्यनुस्मृतियोगाच्च। विद्याशेषभूता च मूर्धन्यनाडीसंबद्धा गतिरनुशीलयितव्या विद्याविशेषेषु विहिता; तामभ्यस्यंस्तयैव प्रतिष्ठत इति युक्तम्। तस्माद्धृदयालयेन ब्रह्मणा समुपासितेनानुगृहीतस्तद्भावं समापन्नो विद्वान् मूर्धन्ययैव शताधिकया शतादतिरिक्तयैकशततम्या नाड्या निष्क्रामति, इतराभिरितरे। तथा हि हार्दविद्यां प्रकृत्य समामनन्ति– 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभि निःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' (छा.उ. ८।६।६) इति।।१७।।**

।।इति नवमं तदोकोधिकरणम्।।

***शारीरकन्यायसंग्रहः***

१०।।रश्म्यधिकरणम्।।सू. १८-१९।।

**रश्म्यनुसारी।।१८।। निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वात्।।१९।।** नाडीरश्मिसंबन्धस्य रात्रौ योग्यानुपलब्धिनिरुद्धत्वात् निशि मृतानां रश्म्यनालम्बनत्वदिवसप्रतीक्षयोरनुपपत्तेर्नादित्यगमनेन विद्याफलप्राप्तिरिति प्राप्तौ कालविशेषेण[कालाविशेषणेन] नाडीरश्मिसंबन्धशास्त्रान्यथानुपपत्त्या रात्रावुष्णोपलब्धिलिङ्गाच्च मन्दान्धकारापवरकान्तरिवोपलब्ध्ययोग्य-सूक्ष्मरश्मिसम्बन्धकल्पनया निशि मृतानामप्यादित्यगमनं रश्मिसम्बन्धद्वारेण विद्यत इति न पाक्षिकफला विद्येत्युक्तम्।

***प्रकटार्थविवरणम्***

वा मूर्ध्नः' इत्यविशेषवचनात् सगुणविदामपि यया कयाचिन्नाड्या निष्क्रमणमिति प्राप्तौ सिद्धान्तमाचष्टे— **समानेऽपीति**। मूर्धानमभिलक्ष्य निर्गता या नाडी सुषुम्नाख्या तया ब्रह्मनाड्योर्ध्वमायन् गच्छन्नमृतत्वमेतीति। विष्वङ् नानागतयोऽन्यास्तिर्यग्गता नाड्यः उत्क्रमणनिमित्तं भवन्ति, नामृतत्वायेत्यर्थः। विद्याप्रकरणामृततत्वफलाभ्यां मूर्धन्यनाड्यैवोपासकानां गमनमिति सिद्धान्तः। इति नवमं तदोकोधिकरणम्।।

***भाष्यभावप्रकाशिका***

प्राप्तिमाह— **श्रुत्यविशेषादिति**। सिद्धान्तमाह— **समानेऽपीति**। तदेव प्रपञ्चयति— **यदि विद्वानिति**। स्थानान्तरेभ्योऽप्युत्क्रामन्नोत्कृष्टं लोकमवाप्नुयादित्यत आह— **तच्छेषमि[षे]ति**। तथा सति विशिष्टगतिचिन्तनविधानवैयर्थ्यं स्यादिति भावः। हार्दानुगृहीतपदं व्याचष्टे— **तस्माद्धृदयेति**। इति नवमं तदोकोधिकरणम्।।

***न्यायनिर्णयः***

कुतश्चिदङ्गादुत्क्रामतीति प्राप्तमनूद्य सिद्धान्तमाह— **आचष्ट इति**। तेन प्रद्योतेन प्रकाशितद्वारवत्त्वे चोत्क्रान्तिरिति शेषः। तस्य विदुषोऽविदुषश्चोच्चिक्रमिषोरोको हृदयमायतनं तस्याग्रज्वलनं प्रद्योतसंज्ञितमादौ भवति, तेन प्रकाशितद्वारो विद्वानविद्वांश्चोत्क्रान्तो यद्यपीष्यते तथापि तयोरुत्क्रान्त्यपादानव्यवस्थायां हेतुं पृच्छति— **कुत इति**। तत्र सौत्रं हेतुमवतार्य व्यतिरेकद्वारा विवृणोति— **विद्येति**। स्थानान्तरेभ्योऽपि निष्क्रामन्नुत्कृष्टं फलमाप्नुयादित्याशङ्क्य सूत्रावयवं व्याचष्टे— **तच्छेषेति**। स्थानान्तरेभ्यो निर्गच्छतामपि विशिष्टलोकाप्तौ विशिष्टगतिचिन्तनविधानवैयर्थ्यं स्यादित्यर्थः। फलितोक्तिपरत्वेनावशिष्टं सूत्रभागं व्याचष्टे— **तस्मादिति**। उक्तव्यवस्थायां श्रुतिमाह— **तथा हीति**।।१७।। इति नवमं तदोकोधिकरणम्।।

१०।।रश्म्यधिकरणम्।।सू.१८-१९।।

## रश्म्यनुसारी।।१८।।

**अस्ति हार्दविद्या– 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' (छा.उ. ८।१।१) इत्युपक्रम्य विहिता। तत्प्रक्रियायाम् 'अथ या एता हृदयस्य नाड्यः' (छा.उ. ८।६।१) इत्युपक्रम्य सप्रपञ्चं नाडीरश्मिसंबन्धमुक्त्वोक्तम्– 'अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छा.उ. ८।६।५) इति। पुनश्चोक्तम्–'तयोर्ध्वमायन्नमृतत्वमेति' (छा.उ. ८।६।६) इति। तस्माच्छताधिकया नाड्या निष्क्रामन् रश्म्यनुसारी निष्क्रामतीति गम्यते। तत्किमविशेषेणैवाहनि रात्रौ वा म्रियमाणस्य रश्म्यनुसारित्वमाहोस्विदहन्येवेति संशये सत्यविशेषश्रवणादविशेषेणैव तावद् रश्म्यनुसारीति प्रतिज्ञायते।।१८।।**

## निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद् दर्शयति च।।१९।।

**अस्त्यहनि नाडीरश्मिसंबन्ध इत्यहनि मृतस्य स्याद् रश्म्यनुसारित्वम्, रात्रौ तु प्रेतस्य न स्यात्। नाडीरश्मिसंबन्धविच्छेदादिति चेन्न। नाडीरश्मिसंबन्धस्य यावद्देहभावित्वात्। यावद्देहभावी हि शिराकिरणसंपर्कः। दर्शयति चैतमर्थं श्रुतिः– 'अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते**

### *प्रकटार्थविवरणम्*

**रश्म्यनुसारी।।** प्रकरणपरिशोधनेन विषयमाह— **अस्तीत्यादिना**। रश्मिनाडीसंबन्धस्य कालविशेषाश्रवणाद् रात्रौ रश्म्यभावावगमाच्च संशयमाह— **तत्किमविशेषेणैवेति**। सिद्धान्तमेव तावदाह— **अविशेषश्रवणादिति**।

**निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद् दर्शयति च।।** सूत्रभागेन पूर्वपक्षमुपन्यस्य दूषयति— **निशि नेतीत्यादिना**।

### *भाष्यभावप्रकाशिका*

**रश्म्यनुसारी।।** मूर्धन्यनाड्या निर्गच्छतोऽपरविदो रश्म्यनुसारित्वमस्याधिकरणस्य सूत्रं योजयन् विषय इति दर्शयति— **अस्तीति**। तत् किमहन्येवोताहनि रात्रौ चेति सन्देहः— **किमविशेषेणेति**। सिद्धान्तं प्रतिजानीते— **अविशेषश्रवणादिति**।

सूत्रावयवेन पूर्वपक्षमाशङ्क्यावयवान्तरेण निराकरोति— **निशि नेतीति**। **सिरा** नाडी। प्रतायन्ते विस्तीर्यन्ते, सृप्ताः

### *न्यायनिर्णयः*

नाडीद्वारा निष्क्रान्तस्य यदिदं रश्म्यनुसारित्वं तन्निशायामपि तुल्यमित्याह— **रश्मीति**। प्रकरणशोधनपूर्वकं विषयमाह— **अस्तीति**। प्रथमोऽथशब्दो दहरविद्योपक्रमार्थः, द्वितीयो रश्मिनाडीसंबन्धप्रदर्शनप्रारम्भार्थः, तृतीयस्त्वारब्धकर्मवासनानन्तर्यार्थः। एतदिति क्रियाविशेषणम्। चतुर्थोऽथशब्दस्तदेत्यर्थः। यत्रेति कालस्योक्तत्वात् प्रकरणशुद्धिलब्धं निगमयति— **तस्मादिति**। मूर्धन्यनाड्या निर्गच्छतः सगुणब्रह्मविदो रश्म्यनुसारित्वं किमहन्येव, किं वाऽहनि रात्रौ चेति रश्मिनाडीयोगस्य कालविशेषाश्रुते रात्रौ रश्म्यभावावगमाच्च संशयमाह— **तदिति**। अत्र चापरब्रह्मविदां फलाप्तये ब्रह्मनाड्या गच्छतां रश्म्यनुसारित्वस्याविशेषवादात् पादादिसंगतिः। पूर्वपक्षे रात्रौ प्रेतानामहरागमनमपेक्ष्य फलप्राप्तिः। सिद्धान्ते 'स यावत्क्षिप्येत्'दित्यादिश्रुतेस्तदैव तत्प्राप्तिरित्युपेत्य सूत्रेण सिद्धान्तं प्रतिजानीते— **अविशेषेति**।।१८।।

सूत्रावयवेन पूर्वपक्षयित्वा तदवयवेन परिहरति— **निशीति**। तत्र पूर्वपक्षं विवृणोति— **अस्तीति**। सिद्धान्तमवतार्य व्याचष्टे— **नेत्यादिना**। शिरा नाड्यः। नाडीरश्मिसंबन्धस्य यावद्देहभावित्वे प्रमाणोक्तिपरं सूत्रभागमादाय विभजते— **दर्शयतीति**। प्रतायन्ते विस्तीर्यन्ते। सृप्ता गताः। नाडीरश्मिसंबन्धस्य श्रौतत्वेऽपि कुतो यावद्देहभावित्वमित्याशङ्क्य युक्तिं दर्शयति—

**तेऽमुष्मिन्नादित्ये सृप्ताः' (छा.उ. ८।६।२) इति। निदाघसमये च निशास्वपि किरणानुवृत्तिरुपलभ्यते प्रतापादिकार्यदर्शनात्। स्तोकानुवृत्तेस्तु दुर्लक्ष्यत्वमृतवन्तररजनीषु शैशिरेष्विव दुर्दिनेषु। 'अहरेवैतद् रात्रौ दधाति' इति चैतदेव दर्शयति। यदि च रात्रौ प्रेतो विनैव रश्म्यनुसारेणोर्ध्वमाक्रमेत रश्म्यनुसारानर्थक्यं भवेत्। न ह्येतद् विशिष्याधीयते— यो दिवा प्रैति स रश्मीनपेक्ष्योर्ध्वमाक्रमते, यस्तु रात्रौ सोऽनपेक्ष्यैवेति। अथ तु विद्वानपि रात्रिप्रायणापराधमात्रेण नोर्ध्वमाक्रमेत, पाक्षिकफला विद्येत्यप्रवृत्तिरेव तस्यां स्यात्। मृत्युकालानियमात्। अथापि रात्रावुपरतोऽहरागममुदीक्षेत। अहरागमेऽप्यस्य कदाचिदरश्मिसंबन्धार्हं शरीरं स्यात् पावकादिसंपर्कात्। 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' (छा.उ. ८।६।५) इति च श्रुतिरनुदीक्षां दर्शयति। तस्मात् तदविशेषेणैवेदं रात्रिंदिवं रश्म्यनुसारित्वम्।।१९।।**

।।इति दशमं रश्म्यधिकरणम्।।

### *प्रकटार्थविवरणम्*

न केवलं श्रौत एव रश्मिसंबन्धः, उष्णकाले चौष्ण्योपलब्धिलिङ्गगम्योऽपीत्याह— **निदाघसमये चेति**। तर्हि हेमन्तादिरात्रिष्वपि किमित्यौष्ण्यं नोपलभ्यत इत्याशङ्क्याह— **स्तोकानुवृत्तेश्चेति**। 'अहरेवैतद्रात्रौ दधाति सविते'ति धारणाभिधानं स्तोकरश्म्यनुवृत्त्यभिप्रायमेवेत्यर्थः। विपक्षे दोषमाह— **यदि चेति**। ननु किमिति वाक्यानर्थक्यम्? दिवाप्रेतविषयं भविष्यतीत्याशङ्क्याह— **न ह्येतदिति**। तर्हि रात्रौ प्रेतस्य मा भूदूर्ध्वमाक्रमणम्, रश्म्यनुसारित्वश्रुतेः अर्थवत्त्वायेत्याशङ्क्याह— **अथ तु विद्वानपीति**। तर्हि दिवसोदयपर्यन्तं प्रतीक्षा भवत्वित्याशङ्क्याह— **अथापीत्यादिना**। दिवसोदयेऽप्यस्य कदाचिद् रश्मिसंबन्धार्हं शरीरं न भवति वह्न्यादिसंपर्कात्; अतः सिराकिरणसंपर्काभावात् व्यर्थं प्रतीक्षणं स्यादित्यर्थः। श्रुतिविरोधाच्च न प्रतीक्षाकल्पनेत्याह— **स यावदिति**। इति दशमं रश्म्यधिकरणम्।।

### *भाष्यभावप्रकाशिका*

गताः। अत्र युक्तिमपि दर्शयति...दायेति— [**निदाघेति**।] आदिग्रहणेन चन्द्राद्यनुगता रश्मयः सौराः संगृह्यन्ते। शिशिरादिषु कथमित्यत आह— **स्तोकेति**। श्रुत्यन्तरमाह— **अहरेवेति**। ननु 'स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छती'ति नैरपेक्ष्यश्रवणाद् रात्रौ प्रयतो न रश्म्यपेक्षे(येवे)त्यत आह— **यदि चेति**। दिवाप्रायणविषयमेव तत्किन्न स्यादित्यत आह— **न ह्येतदिति**। विद्वानपि रात्रिप्रायणापराधेन नादित्यं गच्छेदित्याशङ्क्याह— **अथ तु विद्वानपीति**। नित्यवत्फलसंबन्धेन विहितत्वान्न पाक्षिकफलत्वं युक्तमित्यर्थः। अपेक्षापक्षोऽप्यनुपपन्न इत्याह— **अथापीति**। **स यावदिति**। यावत्तावदुपबन्धेन नैरपेक्ष्यावगमादित्यर्थः। इति दशमं रश्म्यधिकरणम्।।

### *न्यायनिर्णयः*

**निदाघेति**। चन्द्रगतप्रकाशान्यथानुपपत्त्या रात्रावस्ति सूर्यरश्मिरिति वक्तुमादिपदम्। न हि चन्द्रमस एव प्रकाशस्तस्याम्मयत्वात् तदयोगात्। तर्हि शिशिरादिष्वपि रात्रिषु किरणानुवृत्तिरुपलभ्येतेत्याशङ्क्याह— **स्तोकेति**। यद्रात्रौ तापो दृश्यते तदहरेव रात्रौ सविता दधातीति धारणाभिधानं स्तोकरश्म्यनुवृत्त्यभिप्रायमित्युक्तेऽर्थे श्रुत्यन्तरमाह— **अहरेवेति**। 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छती'ति नैरपेक्ष्यश्रुते रात्रौ प्रेतस्य न रश्म्यपेक्षेत्याशङ्क्याह— **यदीति**। दिवामरणविषयमेतदित्याशङ्क्याह— **न हीति**। तर्हि रश्म्यनुसारित्वश्रुतेरर्थवत्त्वाय विदुषो रात्रौ प्रेतस्य फलसंबन्धो नास्ति, तत्राह— **अथ त्विति**। नित्यवत्फलसंबन्धितया विद्याया विधानान्न पाक्षिकफलतेत्यर्थः। तर्हि विदुषो मरणमहन्येवेति नियमादुक्तदोषनिवृत्तिः, तत्राह— **मृत्युकालेति**। रात्रौ मृतस्यापि तर्हि सूर्योदयपर्यन्तप्रतीक्षा स्यात्, तत्राह— **अथापीति**। आदिशब्देन गर्तादि गृह्यते। यावत्तावदुपबन्धेन नैरपेक्ष्यश्रुतिविरोधाच्च न प्रतीक्षाकल्पनेत्याह— **स यावदिति**। अपरविद्याविदो रश्म्यनुसारित्वस्याविशेषमुपसंहरति— **तस्मादिति**।।१९।। इति दशमं रश्म्यधिकरणम्।।

११।।दक्षिणायनाधिकरणम्।।सू.२०-२१।।

## अतश्चायनेऽपि दक्षिणे।।२०।।

**अत एव चोदीक्षानुपपत्तेरपाक्षिकफलत्वाच्च विद्याया अनियतकालत्वाच्च मृत्योर्दक्षिणायनेऽपि म्रियमाणो विद्वान् प्राप्नोत्येव विद्याफलम्। उत्तरायणमरणप्राशस्त्यप्रसिद्धेर्भीष्मस्य च प्रतीक्षादर्शनात् 'आपूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासांस्तान्' (छा.उ. ४।१५।५) इति च श्रुतेरपेक्षितव्यमुत्तरायणमितीमामाशङ्कामनेन सूत्रेणापनुदति। प्राशस्त्यप्रसिद्धिरविद्वद्विषया। भीष्मस्य प्रतिपालनमाचारप्रतिपालनार्थं पितृप्रसादलब्धस्वच्छन्द-मृत्युताख्यापनार्थं च। श्रुतेस्त्वर्थं वक्ष्यति- 'आतिवाहिकास्तल्लिङ्गात्' (ब्र.सू. ४।३।४) इति।।२०।।**

### *शारीरकन्यायसंग्रहः*

**अतश्चायनेऽपि दक्षिणे।।२०।। योगिनः प्रति च स्मर्यते स्मार्ते चैते।।२१।।** लोकप्रसिद्धिभीष्मादिशिष्टाचाराभ्यां दक्षिणायनमरणस्याप्रशस्तत्वादुत्तरायणस्य मार्गपर्वत्वाभावप्रसङ्गात् विदुषामपि दक्षिणायनमृतानां न विद्याफलसङ्गम इति प्राप्तौ, फलमुद्दिश्य विद्याविधानान्यथानुपपत्त्या लोकप्रसिद्ध्यादिबाधादुत्तरायणाभिमानिदेवताया नित्यत्वेन दक्षिणायनेऽपि मार्गपर्वसम्भवाद् दक्षिणायनमृतानां विद्याफलप्राप्तिरस्तीत्युक्तम्।

**इति प्रकाशात्मविरचिते शारीरकन्यायसंग्रहे चतुर्थाध्यायस्य द्वितीयः पादः।।**

### *प्रकटार्थविवरणम्*

**अतश्चायनेऽपि दक्षिणे।।** दिवसमरणनियमाभावोक्तहेतूनुत्तरायणमरणनियमाभावेऽप्यतिदिशति— **अत एवेति**। पूर्वपक्ष-मुपन्यस्यति— **उत्तरायणेति**। अपनोदप्रकारमाह— **प्राशस्त्यप्रसिद्धिरिति**। फलमुद्दिश्य विद्याविधानान्यथानुपपत्त्या लोकप्रसिद्ध्यादि-

### *भाष्यभावप्रकाशिका*

**अतश्चायनेऽपि दक्षिणे।।** दक्षिणायने मृतो विद्वान् विषयः। स किं विद्याफलं न [प्राप्नोत्युत] प्राप्नोतीति सन्देहः। तत्र सिद्धान्तेनोपक्रमते— **अत इति**। पूर्वोक्तहेतुपरामर्शार्थो तच्छब्दैर्व्याचष्टे[र्थोऽतःशब्दस्तं व्याचष्टे]— **अत एव चेति**। पूर्वपक्षबीजमाह— **उत्तरायणेति**। इदानीमपनोदमाह— **प्राशस्त्यप्रसिद्धिरिति**। परिपालनमिति विदुषामाचारं ग्राहयितुमित्याह— **भीष्मस्येति**। ननूत्तरायणस्य मागपर्वणोऽभावः स्यादित्युक्तमिति, तत्राह— **श्रुतेस्त्वर्थमिति**। कालप्रतिपादिका सा न भवति, किन्तु देवताप्रतिपादिकेत्यर्थः।

### *न्यायनिर्णयः*

पूर्वाभिरेव युक्तिभी रात्राविव दक्षिणायनेऽपि मृतस्य फलप्राप्तिरविशिष्टेत्याह— **अतश्चेति**। दक्षिणायने मृतो विद्वान्विषयः। स किं विद्याफलं नाप्नोत्युताप्नोतीत्युत्तरायणमरणप्राशस्त्यप्रसिद्धेर्नित्यवत्फलसंबन्धेन विद्याया विधानाच्च संदेहे दक्षिणायनेऽपि मृतस्य ब्रह्मविदो विद्याफलमवश्यंभावीति साधनात् पादादिसंगतिः। पूर्वपक्षे दक्षिणायने मृतस्य फलाभावादुत्तरायणमरणार्थं प्रयतितव्यम्। सिद्धान्ते हेत्वसिद्धेस्तादृक्प्रयत्नो नातीव फलवानित्यभिप्रेत्य सिद्धान्तमाह— **अत इति**। पूर्वाधिकरणन्यायेन सिद्धान्तमुक्त्वा पूर्वपक्षमाह— **उत्तरायणेति**। श्रुतिस्मृतिप्रसिद्धिभ्यो दक्षिणायने मृतस्य विदुषो नास्ति फलाप्तिरिति पूर्वपक्षमनूद्य सिद्धान्तमाह— **इतीमामिति**। अपनोदप्रकारमाह— **प्राशस्त्येति**। यत्तु भीष्मस्य प्रतीक्षादर्शनादिति, तत्राह— **भीष्मस्येति**। उत्तरायणमरणं प्रशस्तमित्यविदुषामभिज्ञाभिवचनरूपो व्यवहारस्तत्पालनद्वारा सदाचारे तान् प्रवर्तयितुं तस्य कालप्रतीक्षणमित्यर्थः। तत्प्रतिपालनस्य गत्यन्तरमाह— **पित्रिति**। उत्तरायणस्य मार्गपर्वत्वेनापेक्षणीयत्वं श्रुतमित्युक्तम्, तत्कुतो दक्षिणायने मृतो विद्वान् विद्याफलमाप्नुयादित्याशङ्क्याह— **श्रुतेस्त्विति**। न हि कालवादिनी श्रुतिः, किं त्वातिवाहिकदेवतार्थेत्यर्थः।।२०।।

ननु च 'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः। प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ' (भ.गी. ८।२३) इति कालप्राधान्येनोपक्रम्याहरादिकालविशेषः स्मृतावपुनरावृत्तये[1] नियमितः; कथं रात्रौ दक्षिणायने वा प्रयातोऽनावृत्तिं यायादिति। अत्रोच्यते–

**योगिनः प्रति च स्मर्यते स्मार्ते चैते।।२१।।**

योगिनः प्रति चायमहरादिकालविनियोगोऽनावृत्तये स्मर्यते। स्मार्ते चैते योगसांख्ये, न श्रौते। अतो विषयभेदात् प्रमाणविशेषाच्च नास्य स्मार्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेष्ववतारः। ननु 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्' 'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्' (भ.गी. ८।२४,२५) इति च श्रौतावेतौ देवयानपितृयाणौ प्रत्यभिज्ञायेते स्मृतावपीति। उच्यते– 'तं कालं वक्ष्यामि' (भ.गी. ८।२३) इति स्मृतौ कालप्रतिज्ञानाद् विरोधमाशङ्क्य [2]परिहार उक्तः। यदा पुनः स्मृतावप्यग्न्याद्या देवता एवातिवाहिक्यो गृह्यन्ते, तदा न कश्चिद् विरोध इति।।२१।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसाभाष्ये
चतुर्थाध्यायस्य द्वितीयः पादः।।२।।

### *प्रकटार्थविवरणम्*

बाधादुत्तरायणाभिमानिदेवतायाः नित्यत्वेन दक्षिणायनेऽपि मार्गपर्वत्वसंभवाद् दक्षिणायनमृतानामपि विद्याफलमस्तीति भावः।

स्मृतिबलात् कालनियमं शङ्कते— **ननु चेति**।

**योगिनः प्रति च स्मर्यते स्मार्ते चैते**।। श्रौतदहराद्युपासकस्य अस्माभिः कालनियमो नास्तीत्युक्तम्। स्मृतौ त्वन्यस्यैव कालनियम उच्यते, ततो भिन्नविषयत्वान्न विरोध इत्याह— **योगिन इति**। ननु योगी दहराद्युपासक एव किं न भवतीत्याशङ्क्याह— **स्मार्ते चैते इति**। नित्यमग्निहोत्रादीश्वराराधनरूपेणैव यदनुष्ठीयते स योगः, 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः' इति स्मृतेः, 'इन्द्रियाणीन्द्रियार्थेषु वर्तन्ते' इति धारणापूर्वकोऽकर्तृत्वानुभवः साङ्ख्यमित्यर्थः। श्रुतिस्मृत्योरेकविषयत्वप्रत्यभिज्ञानात् भिन्नविषयत्वं नास्तीत्याह— **नन्वग्निरिति**। प्रत्यभिज्ञायाः कालप्रतिज्ञाविरोधमाशङ्क्य भिन्नविषयत्वेन सूत्रकारेण परिहारोऽभिहित इत्याह—

### *भाष्यभावप्रकाशिका*

सूत्रान्तरमाशङ्कापूर्वमवतारयति— **ननु चेति**। काल एवात्र प्राधान्येनोच्यते, नातिवाहिकी देवतेति शङ्कार्थः। **योगिन इति**। स्मार्तमुपासनं प्रत्ययं स्मार्त्तः कालभेदविनियोगः प्रत्यासत्तेरित्यर्थः। प्रत्यभिज्ञाविरोधमाशङ्कते— **नन्वग्निरिति**। कालभेदविधिपरत्वमङ्गीकृत्य

### *न्यायनिर्णयः*

काल एवात्र प्राधान्येनोच्यते, नातिवाहिकी देवतेति स्मृतिमाश्रित्य शङ्कते— **नन्विति**। तदुत्तरत्वेन सूत्रमवतारयति— **अत्रेति**। स्मार्तमुपासनं प्रत्ययं कालभेदविनियोगः स्मार्तोऽभ्युपगम्यते प्रत्यासत्तेरिति व्याचष्टे— **योगिन इति**। योगी दहराद्युपासक एव किं न स्यात्, तत्राह— **स्मार्ते चेति**। नित्यमग्निहोत्रादीश्वराराधनरूपेण यदनुष्ठीयते स योगः, 'अनाश्रितः कर्मफलम्' इत्यादिस्मृतेः। 'इन्द्रियाणीन्द्रियार्थेषु वर्तन्त' इति धारणापूर्वकोऽकर्तृत्वानुभवः सांख्यमिति भेदः। श्रौतदहराद्युपास्तीनां स्मृत्यविषयत्वे फलितमाह— **अत इति**। श्रुतिस्मृत्योर्भिन्नार्थत्वं प्रत्यभिज्ञाविरुद्धमिति शङ्कते— **नन्विति**। कालभेदविधिपरत्वमङ्गीकृत्य विषयव्यवस्थोक्ता,

१. 'अनावृत्तये' इति पा.। २. 'अयं परिहारः' इति पा.।

# चतुर्थेऽध्याये तृतीयः पादः।

१।।अर्चिराद्यधिकरणम्।।सू.१।।

## अर्चिरादिना तत्प्रथितेः।।१।।

**आसृत्युपक्रमात् समानोत्क्रान्तिरित्युक्तम्। सृतिस्तु श्रुत्यन्तरेष्वनेकधा श्रूयते। नाडीरश्मिसंबन्धेनैका–**

***शारीरकन्यायसंग्रहः***

**अर्चिरादिना तत्प्रथितेः।।१।।** प्रतिप्रकरणं विद्याभेदाद् गतिभेदानामपि विद्यागुणत्वेन चिन्तयितव्ये गुणिभेदात् गुणभूतगतिभेदे प्राप्ते, अर्चिरादिमार्गविशेषणानामादित्यवाय्वादीनां गतिभेदेषु प्रत्यभिज्ञानात् गन्तव्याभेदाच्चार्चिर्धूमादिमार्गद्वयव्यतिरेकेण तृतीयस्थान-त्वलिङ्गाच्चापासनाभेदेऽप्युपास्यब्रह्मैक्यवत् गुणभूतगत्यैक्योपपत्तेरर्चिरादिका एकैव गतिरित्युक्तम्।

***प्रकटार्थविवरणम्***

**उच्यत इति**। यदा तु स्मृतावपि कालस्याविवक्षितत्वम्, तदा नास्ति प्रत्यभिज्ञायाः कश्चिद्विरोध इति दक्षिणायनेऽपि मृतः प्राप्नोत्येव विद्याफलमिति भावः। इत्येकादशं दक्षिणायनाधिकरणम्।।

**इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे चतुर्थस्याध्यायस्य द्वितीयः पादः समाप्तः।।**

**अर्चिरादिना तत्प्रथितेः।।** अपरविद्यायाः फलावाप्तये देवयानं पन्थानमवतारयितुमुत्क्रान्तिः पूर्वपादे प्रत्यपादि; स इदानीं

***भाष्यभावप्रकाशिका***

विषयव्यवस्थोक्ता। प्रत्यभिज्ञानेन कालाभिधानद्वारेण देवतोक्तौ न कश्चिद्विरोध इति परिहरति— **उच्यत इति**। इत्येकादशं दक्षिणायनाधिकरणम्।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्य ज्ञानोत्तमपूज्यपादशिष्य श्रीचित्सुखमुनिविरचितायां भाष्यभावप्रकाशिकायां चतुर्थस्याध्यायस्य द्वितीयः पादः समाप्तः।।**

**अर्चिरादिना तत्प्रथितेः।।** वृत्तकीर्तनेन प्रकृतोत्तरमार्गमस्याधिकरण[स्य विषयत्वेनोदाहरति— **आ]सृत्युपक्रमादिति**। अत्र संशयकारणमाह— **सृतिस्त्विति। भिन्नप्रकरण[त्वात् भिन्नोपासनाशेषत्वाच्चेति।]** विद्याभेदात् गतिभेदानामपि विद्यागुणत्वेन

***न्यायनिर्णयः***

प्रत्यभिज्ञानेन कालाभिधानद्वारा देवतोक्तौ श्रुतिस्मृत्योरेकार्थत्वमेवेति कुतो विरोधशङ्केत्याह— **उच्यत इति**। तदेवं दक्षिणायने मृतस्यापि विदुषो विद्याफलमवश्यंभावीत्यधिकरणार्थमुपसंहर्तुमितीत्युक्तम्।।२१।। इत्येकादशं दक्षिणायनाधिकरणम्।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचिते शारीरकभाष्यविभागे न्यायनिर्णये चतुर्थाध्यायस्य द्वितीयः पादः।।२।।**

**।।इति चतुर्थस्याध्यायस्योत्क्रान्तिगतिनिरूपणाख्यो द्वितीयः पादः।।**

अपरविद्याफलाय देवयानं पन्थानमवतारयितुं तदङ्गभूतोत्क्रान्तिश्चिन्तिता। सम्प्रत्यङ्गिनं पन्थानमेव वक्तुं पादान्तरमारभ्यते। तत्र पूर्वाधिकरणे प्रायणकालानियमाद् विद्याफलस्य चावश्यकत्वात् प्रतीक्षणस्य चायुक्तेर्दक्षिणायनेऽपि मृतस्य विदुषो विद्याफलाप्तिरस्तीत्युक्तम्। प्रायणकालवत् प्रयतो गतिरनियतेत्याशङ्क्य परिहरति— **अर्चिरादिनेति**। वृत्तमनूद्य प्रकृतोत्तरमार्गमधिकरणस्य विषयत्वेनोदाहरति— **आसृतीति**। श्रुत्यन्तरेषु भिन्नासु [१]सृतिष्विति यावत्। संशयहेतुं श्रुतिविप्रतिपत्तिं वक्तु**मनेकधे**त्युक्तम्।

---

१. 'श्रुतिषु' इति पाठः स्यात्।

**'अथैतैरेव रश्मिभिरूर्ध्व आक्रमते' (छा.उ. ८।६।५) इति। अर्चिरादिकैका– 'तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहः' (छा.उ. ५।१०।१) इति। 'स एतं देवयानं [१]पन्थानमासाद्याग्निलोकमागच्छति' (कौ.उ. १।३) इत्यन्या। 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति' (बृ.उ. ५।१०।१) इत्यपरा। 'सूर्यद्वारेण ते विरजाः प्रयान्ति' (मु.उ. १।२।११) इति चापरा। तत्र संशयः– किं परस्परं भिन्ना एताः सृतयः, किं वैकैवानेकविशेषणेति। तत्र प्राप्तं तावद् भिन्ना एताः सृतय इति। भिन्नप्रकरणत्वात्, भिन्नोपासनाशेषत्वाच्च। अपि च 'अथैतैरेव रश्मिभिः' (छा.उ. ८।६।५) इत्यवधारणमर्चिराद्यपेक्षायामुपरुध्येत। त्वरावचनं च पीड्येत 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' (छा.उ. ८।६।५) इति। तस्मादन्योन्यभिन्ना एवैते पन्थान इति।**

**एवं प्राप्तेऽभिदध्महे– अर्चिरादिनेति। सर्वो ब्रह्म प्रेप्सुरर्चिरादिनैवाध्वना रंहतीति प्रतिजानीमहे। कुतः? तत्प्रथितेः। प्रथितो ह्येष मार्गः सर्वेषां विदुषाम्। तथा हि पञ्चाग्निविद्याप्रकरणे 'ये चामी अरण्ये श्रद्धां सत्यमुपासते' (बृ.उ. ६।२।१५) इति विद्यान्तरशीलिनामप्यर्चिरादिका सृतिः श्राव्यते।**

**स्यादेतत्– यासु विद्यासु न काचिद् गतिरुच्यते तास्वियमर्चिरादिकोपतिष्ठताम्, यासु त्वन्या श्राव्यते**

***प्रकटार्थविवरणम्***

देवयानः पन्थाः प्रतिपाद्यत इत्याह— **आसृत्युपक्रमादिति।** अनेकश्रुतिदर्शनात् संशयमुक्त्वा पूर्वपक्षमाह— **तत्र प्राप्तं तावदिति।** प्रतिप्रकरणं विद्याभेदाद् गतीनामपि विद्यागुणत्वेन चिन्तयितव्ये[२] सति गुणिभेदात् गुणभूतगतिभेद इत्यर्थः। गतिभेदे हेत्वन्तरमाह— **अपि चेति।**

उपासनाभेदेषूपास्यब्रह्मैक्यवद् गुणभूतगत्यैक्योपपत्तेः अर्चिरादिकैकैव गतिरित्याह— **एवं प्राप्ते अभिदध्मह इति।**

***भाष्यभावप्रकाशिका***

चिन्तयितव्यानां गुणिभेदाद्भेद इत्यर्थः। अर्चिरादिपदान्तरव्यावर्तकावधारणसामर्थ्यादपि भेद इत्याह— **अथैतैरिति। त्वरावचनं चेति।** वक्रमार्गेण गतिमपेक्ष्यावक्रमार्गेण गतिस्त्वरावती कल्प्यते। एकमार्गत्वे तु किमपेक्ष्य त्वरा स्यादित्यर्थः। तस्माद् व्रीहियववद्विकल्प्यत इत्युपसंहरति— **तस्मादिति।**

***न्यायनिर्णयः***

अथेत्युत्क्रान्त्यानन्तर्योक्तिः। **विरजाः** विरजसो रजःशब्दितब्रह्मलोकाप्तिविरोधिविधुरा इति यावत्। उक्तं देवयानं पन्थानमधिकृत्य श्रुतिविप्रतिपत्तिं सूचितां हेतूकृत्य संशयमाह— **तत्रेति।** अत्रापरविद्याफलाप्तिहेतुमार्गैक्योक्त्या पादादिसंगतिः। पूर्वपक्षे मार्गबहुत्वे विकल्पः, सिद्धान्ते तदैक्ये विकल्पशङ्कैव नेत्यङ्गीकृत्य पूर्वपक्षयति— **तत्रेति।** सृतीनां मिथो भिन्नत्वे हेतुमाह— **भिन्नेति।** नानाप्रकरणस्थत्वेऽपि विद्यावदेकत्वं किं न स्यात्, तत्राह— **भिन्नेति।** प्रतिप्रकरणं विद्याभेदाद् गतिभेदानामपि तद्गुणत्वेन चिन्त्यानां गुणिभेदाद्भेदः स्यादित्यर्थः। गतिभेदे हेत्वन्तरमाह— **अपि चेति।** किंच वक्राध्वना गतिमपेक्ष्यावक्रेण गतिस्त्वरावती कल्प्यते; एकत्वे तु किमपेक्ष्य त्वरा स्यात्; तस्माद् गतिभेदसिद्धिरित्याह—**त्वरेति।** मार्गभेदे केनाध्वना ब्रह्मलोकाप्तिरित्याशङ्क्य समुच्चयायोगाद् व्रीह्यादिवद् विकल्पः स्यादिति मत्वाऽऽह—**तस्मादिति।**

उपास्तिभेदेषूपास्यब्रह्मैक्यवद् गुणभूतगत्यैक्यसिद्धेरर्चिरादिरेकैव गतिरित्याह— **एवमिति।** तत्र प्रतिज्ञां विभजते— **सर्व इति।** नानाविधाध्वसु श्रुतेषु कारणमवधारणे वक्तव्यमिति पृच्छति— **कुत इति।** हेतुमवतार्य व्याचष्टे— **तदिति।** पञ्चाग्निविदामेव 'तेऽर्चिषमभिसंभवन्ती'त्यर्चिरादिगतेः श्रुतत्वात् कुतः सर्वेषामिति विशेषणम्, तत्राह— **तथा हीति।**

साधारणश्रुतेरश्रुतगतिकधीविषयत्वाद् विद्यान्तराणां स्वाधिकारस्थगतिनिरपेक्षाणां नार्चिरादिगतिसंगतिरिति शङ्कते— **स्यादिति।**

---

१. 'पन्थानमापद्य' इति पा.। २. भावे तव्यप्रत्ययेन 'सतां गतम्' इतिवदुपपत्तिर्भाति।

**तासु किमित्यर्चिराद्याश्रयणमिति। अत्रोच्यते— भवेदेतदेवम्, यद्यत्यन्तभिन्ना एवैताः सृतयः स्युः। एकैव त्वेषा सृतिरनेकविशेषणा ब्रह्मलोकप्रपदनी क्वचित् केनचिद् विशेषणेनोपलक्षितेति वदामः। सर्वत्रैकदेश-प्रत्यभिज्ञानादितरेतरविशेषणविशेष्यभावोपपत्तेः। प्रकरणभेदेऽपि हि विद्यैकत्वे भवतीतरेतरविशेषणोपसंहारवद् गतिविशेषणानामप्युपसंहारः। विद्याभेदेऽपि तु गत्येकदेशप्रत्यभिज्ञानाद् गन्तव्याभेदाच्च गत्यभेद एव। तथाहि 'ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति' (बृ.उ. ६।२।१५), 'तस्मिन् वसति शाश्वतीः समाः' (बृ.उ. ५।१०।१), 'सा या ब्रह्मणो जितिर्या [१]व्युष्टिस्तां जितिं जयति तां व्युष्टिं व्यश्नुते' (कौ.उ. १।७), 'तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति' (छा.उ. ८।४।३) इति च तत्र तत्र तदेवैकं फलं ब्रह्मलोक-प्राप्तिलक्षणं प्रदर्श्यते। यत्तु 'एतैरेवे'त्यवधारणमर्चिराद्याश्रयणे न स्यादिति। नैष दोषः। रश्मिप्राप्तिपरत्वादस्य। न ह्येक एव शब्दो रश्मींश्च प्रापयितुमर्हत्यर्चिरादींश्च व्यावर्तयितुम्। तस्माद् रश्मिसंबन्ध एवायमवधार्यत इति**

### *प्रकटार्थविवरणम्*

साधारणवचनमश्रुतगतिकविद्याविषयं भविष्यतीत्याह— **स्यादेतदिति**। अर्चिरादिमार्गविशेषणानामग्निवाय्वादीनां गतिभेदेऽपि प्रत्यभिज्ञानादन्याऽन्या गतिरेव न श्रूयत इत्याह— **अत्रोच्यत इति**। यदुक्तं प्रकरणभेदादिति, तत्राह— **प्रकरणभेदेऽपीति**। गन्तव्याभेदं विवृणोति— **तथा हीति**। परावतो ब्रह्मणः पराः संवत्सरान् वसन्ति यावदायुर्ब्रह्मणस्तिष्ठन्तीत्यर्थः। शाश्वतीः नित्याः समाः संवत्सरान्। ब्रह्मणो हिरण्यगर्भस्य या जितिः सकललोकजयः; व्युष्टिः व्याप्तिः; तां लभते समानदेहतां प्राप्त इत्यर्थः। परोक्तमनूद्य दूषयति— **यत्त्वेतैरेवेति**। रात्रौ स्पष्टरश्म्यनुपलम्भादरश्म्यनुसारित्वे प्राप्ते रात्रावपि मृत एतै रश्मिभिरेवोर्ध्वमाक्रमत

### *भाष्यभावप्रकाशिका*

विद्यान्तराणां स्वप्रकरणस्थगतिनिरपेक्षाणान्नार्चिरादिगतिसंबन्ध इति शङ्कते— **स्यादेतदिति**। एकत्वेऽपि वृथा[पथोऽ]-नेकपर्वयुक्तत्वसंभवात् गतेरेव भेदो नाभ्युपगन्तव्यः कल्पनागौरवादिति परिहरति— **भवेदेवमिति**। एकदेशप्रत्यभिज्ञानादप्येकत्वमित्याह— **सर्वत्रेति**। यदुक्तम् भिन्नप्रकरणत्वाद् भिन्ना इति, तत्र किं प्रकरणभेदमात्रादेव गतिभेदः, किं वा विद्याभेदात्? न तावदाद्य इत्याह— **प्रकरणभेदेऽपीति**। विद्याभेदेऽपि वेद्यब्रह्मैक्यवद् गुणभूतगत्यैक्यमुपपन्नमित्यर्थः। गन्तव्यफलाभेदं प्रपञ्चयति— **तथा हीति**। **न ह्येक एवेति**। एकस्य वाक्यस्याप्राप्तमार्गप्रापकत्वम्, तस्यानपेक्षत्वप्रतिपादकत्वं च न युक्तम्, वाक्यभेदप्रसङ्गादित्यर्थः। तस्माद्

### *न्यायनिर्णयः*

एकत्वेऽपि पथोऽनेकपर्वयुक्तत्वयोगाद् गतेरेव न भेदो गौरवादित्याह— **अत्रेति**। एकदेशप्रत्यभिज्ञानादपि गतेरैक्यं सर्वत्रेत्याह— **सर्वत्रेति**। यत्तु भिन्नप्रकरणत्वाद् भिन्ना गतय इति, तत्र प्रकरणभेदमात्रादेव गतिभेदो विद्याभेदाद्वा, नाद्य इत्याह— **प्रकरणेति**। न हि द्वितीय इत्याह— **विद्येति**। तद्भेदेऽपि वेद्यब्रह्मैक्यवद् गुणभूतगत्यैक्यमविरुद्धमित्यर्थः। गन्तव्याभेदं विवृणोति— **तथा हीति**। ते ब्रह्मविदो नानाभोगदेशभाजि ब्रह्मलोके परावतो ब्रह्मणो हिरण्यगर्भस्य पराः समाः प्रकृष्टान् संवत्सरान् वसन्ति, यावदायुर्ब्रह्मणस्तावत् तत्र तिष्ठन्तीत्यर्थः। तस्मिन्निति ब्रह्मलोको गृह्यते। शाश्वतीः समा नित्यान्संवत्सरान् वसतीति पूर्ववत्। ब्रह्मणो हिरण्यगर्भस्य या जितिः सर्वलोकजयो या च व्युष्टिर्व्याप्तिस्तां लभते समानदेहतां प्राप्तः सन्नित्यर्थः। कस्यैतत् फलम्, तत्राह— **तद्य इति**। तत् तत्राधिकृतानां मध्ये ये केचिद् ब्रह्मचर्यादिसाधनेन ब्रह्मोपासते ते पुनरेतं ब्रह्मलोकं ब्रह्मणाऽधिष्ठितं लभन्त इत्यर्थः। उक्तश्रुतीनां तात्पर्यमाह— **तत्र तत्रेति**। परोक्तमनूद्य प्रत्याह— **यत्त्विति**। रात्रौ स्पष्टरश्म्यदृष्टेस्तदनुसारित्वाभावे [२]तत्र मृतस्य प्राप्ते सोऽप्येतैरेव रश्मिभिरित्ययोगव्यवच्छेदार्थमवधारणं नान्ययोगव्यवच्छेदायेत्यर्थः। अन्ययोगव्यवच्छेदकत्वमपि वचनस्य किं न स्यादित्याशङ्क्याह— **न हीति**। एकस्य वाक्यस्याप्राप्तमार्गप्रापकत्वं तस्य निरपेक्षत्वप्रतिपादकत्वं चायुक्तं वाक्यभेदप्रसङ्गादित्यर्थः। उभयथार्थत्वायोगे फलितमाह— **तस्मादिति**। विधिसामर्थ्यप्राप्तमयोगव्यवच्छेदमेवकारोऽनुवदतीत्यर्थः।

---

१. 'व्यष्टिः' पा.। २. तत्र = रात्रौ मृतस्य तदनुसारित्वाभावे प्राप्ते इत्यन्वयः।

**द्रष्टव्यम्। त्वरावचनं त्वर्चिराद्यपेक्षायामपि गन्तव्यान्तरापेक्षया शैघ्र्यार्थत्वान्नोपरुध्यते। यथा निमिषमात्रेणात्रागम्यत इति। अपि च 'अथैतयोः पथोर्न कतरेणचन' (छा.उ. ५।१०।८) इति मार्गद्वयभ्रष्टानां कष्टं तृतीयं स्थानमाचक्षाणा पितृयाणव्यतिरिक्तमेकमेव देवयानमर्चिरादिपर्वाणं पन्थानं प्रथयति। भूयांस्यर्चिरादिसृतौ मार्गपर्वाणि, अल्पीयांसि त्वन्यत्र। भूयसां चानुगुण्येनाल्पीयसां नयनं न्याय्यमित्यतोऽप्यर्चिरादिना तत्प्रथितेरित्युक्तम्।।१।।**

।।इति प्रथममर्चिराद्यधिकरणम्।।

२।।वाय्वधिकरणम्।।सू.२।।

## वायुमब्दादविशेषविशेषाभ्याम्।।२।।

### *शारीरकन्यायसंग्रहः*

**वायुमब्दादविशेषविशेषाभ्याम्।।२।।** 'देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोकमागच्छति' इति पाठक्रमादर्चिरनन्तरमग्नेश्च प्राग् वायोर्निवेशे प्राप्ते, 'स वायुलोकमागच्छति तस्मै स तत्र विजिहीते' इति श्रुत्यन्तरे वायुप्रत्तेन मार्गेणोर्ध्वमादित्यमाक्रमत इत्यर्थक्रमदर्शनेन पाठक्रमं बाधित्वा आदित्यात्पूर्वो वायुर्निवेशितः।

### *प्रकटार्थविवरणम्*

इत्ययोगव्यवच्छेदार्थ एवकारः, नान्ययोगव्यवच्छेदार्थः इत्यर्थः। त्वरावचनस्य गतिमाह— **त्वरावचनं त्विति**। अर्चिराद्यनेकविशेषणविशिष्टस्य मार्गस्यैकत्वे लिङ्गमाह— **अपि चेति**। मार्गभेदे सति स्थानान्तरस्यापि संभवात् तृतीयस्थानोपदेशो न स्यादित्यर्थः। ननु पितृयाणातिरिक्त एक एव पन्थाः भवतु, तथापि अर्चिरादिनेति विशेषणं किंकृतमित्याशङ्क्याह— **भूयांसीति**। इति प्रथममर्चिराद्यधिकरणम्।।

**वायुमब्दादविशेषविशेषाभ्याम्।।** सर्वविद्यास्वेक एव अर्चिरादिमार्ग इत्युक्तम्। इदानीं तस्मिन्नेव मार्गे गतिविशेषणानां

### *भाष्यभावप्रकाशिका*

विधिसामर्थ्यप्राप्तमयोगव्यवच्छेदमेवकारोऽनुवदतीत्युपसंहरति— **तस्माद्रश्मीति। त्वरावचनं चेति**। एकत्वेऽप्यर्चिरादिमार्गस्यान्यतः कुतश्चित् गन्तव्यादनेनोपायेन सत्यलोकं क्षिप्रं यातीति गन्तव्यभेदापेक्षया वचनमित्यर्थः। अर्चिर्धूमादिमार्गद्वयव्यतिक्रमे तृतीयस्थानत्वलिङ्गाद् धूमादिव्यतिरिक्ताया गतेरेकत्वमित्याह— **अपि चेति**। अल्पपर्वमार्गेणापि गन्तव्यस्य प्राप्तिसंभवे बहुपर्वमार्गोपदेशो व्यर्थः स्यात्, प्रेक्षावतस्तत्राप्रवृत्तेः। अतो भूयसां पर्वणामनुरोधेनाल्पीयसां तदनुप्रवेश एव युक्त इत्याह— **भूयांसि चेति**। इति प्रथममर्चिराद्यधिकरणम्।।

**वायुमब्दादविशेषविशेषाभ्याम्।।** इतरेतरविशेषणविशेष्यभावेनोपसंहारोऽर्चिरादीनामभिहितः। स कीदृश इति विचार्यते

### *न्यायनिर्णयः*

यत्तु त्वरावचनं पीडितं स्यादिति, तत्राह— **त्वरेति**। अर्चिरादिमार्गस्यैक्येऽपि कुतश्चिदन्यतो गन्तव्यादनेनोपायेन सत्यलोकं झटिति गच्छतीति गन्तव्यभेदापेक्षया वचनं युक्तमित्यर्थः। देवयानमार्गैक्ये हेत्वन्तरमाह— **अपि चेति**। मार्गभेदे स्थानान्तरस्यापि योगात् तृतीयस्थानोक्तिर्न स्यादित्यर्थः। पितृयाणातिरिक्तमार्गैक्येऽपि किमित्यर्चिरादिनेति विशेषणमित्याशङ्क्याह— **भूयांसीति**। अल्पपर्वणा मार्गेण गन्तव्यप्राप्तिसंभवे बहुपर्वमार्गोपदेशो व्यर्थः स्यात् प्रेक्षावतस्तत्राप्रवृत्तेः। अतो भूयसां पर्वणामनुरोधेनाल्पीयसां तदनुप्रवेश एव युक्तो बहूनामनुग्रहस्य न्याय्यत्वादित्यर्थः। मार्गैक्ये जघन्यविकल्पशङ्काऽपि नेति वक्तुमपीत्युक्तम्।।१।। इति प्रथममर्चिराद्यधिकरणम्।।

सर्वत्रार्चिरादिमार्गपर्वप्रत्यभिज्ञानाद् गत्यैक्यमुक्तम्। सम्प्रति 'एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोक'-मित्यत्रार्चिरात्मकाग्न्यानन्तर्यप्रत्यभिज्ञानादर्चिषोऽनन्तरं निवेशनीयो वायुरित्याशङ्क्याह— **वायुमिति**। इतरेतरविशेषणविशेष्य-

**केन पुनः संनिवेशविशेषेण गतिविशेषणानामितरेतरविशेषणविशेष्यभाव इति? तदेतत् सुहृद्भूत्वाऽऽचार्यो ग्रथयति। 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' (कौ.उ. १।३) इति कौषीतकिनां देवयानः पन्थाः पठ्यते। तत्रार्चिरग्निलोकशब्दौ तावदेकार्थौ ज्वलनवचनत्वादिति नात्र संनिवेशक्रमः क्वचिदन्वेष्यः। वायुस्त्वर्चिरादौ वर्त्मनि न श्रुतः कतमस्मिन् स्थाने निवेशयितव्य इति। उच्यते- 'तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान्षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यम्' (छा.उ. ५।१०।१,२) इत्यत्र संवत्सरात्पराञ्चमादित्यादर्वाञ्चं वायुमभिसंभवन्ति। कस्मात्? अविशेषविशेषाभ्याम्। तथाहि- 'स वायुलोकम्' (कौ.उ. १।३) इत्यत्राविशेषोपदिष्टस्य वायोः श्रुत्यन्तरे विशेषोपदेशो दृश्यते- 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति**

### *प्रकटार्थविवरणम्*

वाय्वादीनामस्मादयं पूर्वोऽस्मादयमुत्तर इत्यन्योन्यं विशेषणविशेष्यभावः केन क्रमेणेति निरूप्यत इत्याह— **केन पुनरिति**। संक्षेपतोऽधिकरणतात्पर्यमुक्त्वा वाक्यं पठति संशयप्रदर्शनाय— **स एतमिति**। असन्दिग्धमंशं [१]मुक्त्वा संशयमाह— **तत्रेत्यादिना**। **कतमस्मिन् स्थान इति**। अर्चिषोऽनन्तरं संवत्सराद्वेति पाठक्रमार्थक्रमाभ्यां संशये सिद्धान्तमेव तावदुपक्रमते— **उच्यत इत्यादिना**। तस्मै प्राप्तायोपासकाय वायुस्तत्र तं प्रदेशं विजिहीते त्यजति; द्वारं प्रयच्छति। कियत्परिमाणम्? यथा रथचक्रस्य खं छिद्रमित्यर्थः।

### *भाष्यभावप्रकाशिका*

अस्मिन्नधिकरण इत्याह— **केन पुनरिति**। विषयवाक्यं दर्शयति— **स एतमिति**। तत्र प्रथमश्रुतमग्निमतिक्रम्य वायुविषयः किमिति विचारः क्रियत इत्याशङ्क्य तत्र सन्देहाभावादित्याह— **तत्रार्चिरिति**। अर्चिषोऽनन्तरमग्निलोकं स वायुलोकमिति पाठक्रमबलाद् वायुर्निवेशयितव्यः, उत वक्ष्यमाणन्यायेन संवत्सरदेवलोकयोः परस्तादादित्यस्य चार्वागिति संशयात् स एव विचारविषय इत्याह— **वायुस्त्विति**। आदित्यादव्यवहितपूर्वपर्वत्वेन सन्निवेशय[यितव्यः] इति सिद्धान्तमाचष्टे— **उच्यतेऽर्चिषमिति**। ननु पाठक्रमादग्नेरनन्तरं वायुः सन्निवेशयितव्य इति शङ्कते— **कस्मादिति**। सूत्रपदेनोत्तरमाह— **अविशेषविशेषाभ्यामिति**। यद्यपि विशेषदर्शनमेव स्थानविशेषसन्निवेशे हेतुः, तथाप्यर्चिरादिके पथि वायोः सामान्यतः प्राप्तावविशेषोपदेशोऽपि हेतुरिति द्वितीयवचनव्यपदेश इत्यभिप्रेत्य सूत्रपदं व्याचष्टे— **तथा हीति**। श्रुत्यन्तरे वायुप्रदत्ते[न] मार्गे[णो]र्ध्वमादित्यमाक्रमत इत्यूर्ध्वश्रुतेर्दिग्वचनत्वेऽप्यर्थक्रमद्योतकत्वात् तेनेति वायुप्रत्तस्य रथचक्रपरिमितावकाशस्योर्ध्वक्रमणं प्रति हेतुत्वावगमाद् वायोरपि तन्निमित्तत्वावगमादूर्ध्वशब्दश्रुत्यधिगतार्थक्रमेण

### *न्यायनिर्णयः*

त्वेनोपसंहारोऽर्चिरादीनामुक्तः। स कीदृश इति विचारयति— **केनेति**। मार्गपर्वणां विशेषणविशेष्यत्वे सिद्धे योग्यतया स्वयमेव संनिवेशविशेषसिद्धेरनर्थकं तन्निरूपणमित्याशङ्क्याह— **सुहृदिति**। [२]संनिवेशविशेषणविशिष्टं विशेषणविशेष्यत्वं तदेतदित्युक्तम्। संक्षेपतोऽधिकरणस्य तात्पर्यमुक्त्वा विषयमाह— **स इति**। तत्र प्रथमश्रुतमग्निलोकमतिक्रम्य किमिति वायोः संनिवेशो विचार्यते, तत्राह— **तत्रेति**। असंदिग्धमंशमुक्त्वा संदिग्धमंशमाह— **वायुस्त्विति**। अर्चिषोऽनन्तरमग्निलोकं वायुलोकमिति पाठक्रमबलाद् वायुर्निवेशयितव्यः, किंवा वक्ष्यमाणन्यायेन संवत्सरदेवलोकयोः परस्तादादित्यस्य चार्वागिति संशयात् स एव विचारविषय इत्यर्थः। अत्र चापरविद्याफलार्थं मार्गपर्वणां सनिवेशविशेषचिन्तनात् पादादिसंगतिः। पूर्वपक्षे पाठक्रमस्यानुसरणं सिद्धान्ते त्वर्थक्रमात् तस्य बाध्यतेति मन्वानो वायोरादित्यादव्यवहितपूर्वत्वेन संनिवेशं सिद्धान्तमाह— **उच्यत इति**। पाठक्रमादग्नेरनन्तरं निवेशनीयो वायुरिति शङ्कते— **कस्मादिति**। सूत्रपदेनोत्तरमाह— **अविशेषेति**। विशेषदर्शनस्यैव स्थानविशेषसंनिवेशहेतुत्वेऽपि वायोरर्चिरादिके पथि सामान्यप्राप्तावविशेषोक्तिरपि हेतुरिति मत्वा व्याचष्टे— **तथा हीति**। कौषीतकिश्रुतेर्वाजसनेयिश्रुतिः श्रुत्यन्तरम्।

---

१. 'उक्त्वा' इति पाठः स्यात्। २. 'संनिवेशविशेषेण विशिष्टम्' इति पाठः स्यात्।

**स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' (बृ.उ. ५।१०।१) इति। एतस्मादादित्याद् वायोः पूर्वत्वदर्शनाद् विशेषादब्दादित्ययोरन्तराले वायुर्निवेशयितव्यः। कस्मात्पुनरग्नेः परत्वदर्शनाद् विशेषादर्चिषोऽनन्तरं वायुर्न निवेश्यते? नैषोऽस्ति विशेष इति वदामः। ननूदाहृता श्रुतिः– 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकम्' (कौ.उ. १।३) इति। उच्यते– केवलोऽत्र पाठः पौर्वापर्येणावस्थितः, नात्र क्रमवचनः कश्चिच्छब्दोऽस्ति। पदार्थोपदर्शनमात्रं ह्यत्र क्रियते– एतमेतं चागच्छतीति। इतरत्र पुनर्वायुप्रत्तेन रथचक्रमात्रेण च्छिद्रेणोर्ध्वमाक्रम्यादित्यमागच्छतीत्यवगम्यते क्रमः। तस्मात् सूक्तमविशेषविशेषाभ्यामिति। वाजसनेयिनस्तु 'मासेभ्यो देवलोकं देवलोकादादित्यम्' (बृ.उ. ६।२।१५) इति समामनन्ति। तत्रादित्यानन्तर्याय देवलोकाद् वायुमभिसंभवेयुः। वायुमब्दादिति तु छन्दोग-श्रुत्यपेक्षयोक्तम्। छान्दोग्यवाजसनेयकयोस्त्वेकत्र देवलोको न विद्यते, परत्र संवत्सरः। तत्र श्रुतिद्वय-**

***प्रकटार्थविवरणम्***

सिद्धान्तमुपक्रम्येदानीं पूर्वपक्षमाह— **कस्मात्पुनरिति**। पाठक्रमेणार्चिषोऽनन्तरं वायुर्निवेशनीय इत्यर्थः। वायुप्रत्तेन मार्गेण ऊर्ध्वमादित्यमाक्रमत इत्यर्थक्रमदर्शनेन पाठक्रमोऽयं बाध्यत इति निगूढाभिसन्धिः उत्तरमाह— **नैषोऽस्तीति**। चोद्यपूर्वकं निगूढाभिसन्धिं विवृणोति— **नन्वित्यादिना**। एवं तावत् कौषीतकिप्रोक्तस्य वायोश्छान्दोग्योपदिष्टेऽर्चिरादिमार्गे निवेशमुक्त्वा अधुना वाजसनेयिवाक्योपदिष्टे निवेशमाह— **वाजसनेयिनस्त्विति**। ननु यदि देवलोकादादित्यं प्राप्नुवन्ति, कथं तर्हि 'वायुमब्दात्' इति सूत्रकृतोक्तमित्याशङ्क्याह— **वायुमब्दादिति त्विति**। इदानीं छान्दोग्यवाजसनेयकयोरधिकान्तर्भावमाह— **छान्दोग्येति**। श्रुतिद्वयप्रामाण्यादुभावपि यदि ग्रथयितव्यौ

***भाष्यभावप्रकाशिका***

पाठक्रमो बाध्यत इत्यर्थः। उक्तमेवार्थमाक्षेपपूर्वकं विशदयति— **कस्मात्पुनरित्यादिना**। तर्हि वाक्यस्य वैयर्थ्यमेव स्यादित्याशङ्क्याह— **पदार्थोपदर्शनमिति**। स्वरूपविधिरेव पदन्न तु क्रमपरमित्यर्थः। ननु वाजसनेयिनां संवत्सर श्रवणात् कथं वायुमब्दादित्युच्यत इत्याशङ्क्याह— **वाजसनेयिनस्त्विति**। तर्हि 'देवलोकाद्वायु'मिति पठितव्यमित्याशङ्क्य सत्यम्, छन्दोगाभिप्रायेणैतदुक्तमित्याह— **वायुमब्दादिति**। कस्तर्हि क्रम इत्यपेक्षायामुभयश्रुत्यालोचनया तं दर्शयति— **छान्दोग्येति**। संवत्सरस्य मासारभ्यत्वान्मासानन्तर्ये स्थिते देवलोकः संवत्सरस्य परस्ताद् भवति। तथाऽऽदित्यानन्तर्याय वायुर्देवलोकादपि परस्ताद् भवतीत्यर्थः। इति द्वितीयं वाय्वधिकरणम्।।

***न्यायनिर्णयः***

पुरुषो ध्याता। लोको देहः। प्रैतीत्यत्र तदेति द्रष्टव्यं यदेत्युपक्रमात्। तस्मै प्राप्तायोपासकाय वायुस्तत्र स्वात्मनि विजिहीते द्वारं प्रयच्छतीति यावत्। वायुप्रत्तद्वारपरिमाणं दृष्टान्तेन स्पष्टयति— **यथेति**। विशेषोक्तिफलं निगमयति— **एतस्मादिति**। सिद्धान्तेनोपक्रम्य पूर्वपक्षमाह— **कस्मादिति**। पाठक्रमादर्चिषोऽनन्तरं निवेशनीयो वायुरित्यर्थः। वायुप्रत्तमार्गेणैवोर्ध्वमादित्यमाक्रमत इत्यूर्ध्वश्रुते-र्दिग्वचनत्वेऽप्यर्थक्रमद्योतित्वात् तेनेति च वायुप्रत्तरथचक्रपरिमितावकाशस्योर्ध्वक्रमणं प्रति हेतुत्वसिद्धेर्वायोरपि तन्निमित्तत्वदृष्टे-रूर्ध्वशब्दश्रुतिसिद्धार्थक्रमेण पाठक्रमो बाध्यत इत्याह— **नेत्यादिना**। उक्तमेवार्थं विवृण्वन्नाशङ्कते— **नन्विति**। तत्र सिद्धान्ती स्वाभिप्रायमाह— **उच्यत इति**। तर्हि वाक्यस्य वैयर्थ्यम्, नेत्याह— **पदार्थेति**। स्वरूपविधिपरमेतद्वचनं, न क्रमपरमित्यर्थः। वाजसनेयिश्रुतावपि क्रमवाचिशब्दो नास्तीत्याशङ्क्याह— **इतरत्रेति**। कौषीतकिवाक्योक्तस्य वायोश्छान्दोग्योपदिष्टार्चिरादिमार्गे निवेशमुक्तमुपसंहरति— **तस्मादिति**। वाजसनेयिनां संवत्सराश्रवणात् कथं वायुमब्दादिति सूत्रं, तत्राह— **वाजसनेयिनस्त्विति**। तर्हि देवलोकाद् वायु[१]लोकमिति वक्तव्यमित्याशङ्क्य छान्दोग्याभिप्रायेणैतदुक्तमित्याह— **वायुमिति**। क्रमस्तर्हि कः स्यादित्याशङ्क्योभयश्रुत्या-लोचनया क्रमं दर्शयति— **छान्दोग्येति**। तर्हि कथमेकवाक्यत्वं, तत्राह— **तत्रेति**। तर्हि देवलोकस्य प्राथम्यं संवत्सरस्य पाश्चात्यं

१. पाठान्तरे 'लोक' शब्दो नास्ति।

**प्रत्ययादुभावप्युभयत्र ग्रथयितव्यौ। तत्रापि माससंबन्धात् संवत्सरः पूर्वः पश्चिमो देवलोक इति विवेक्तव्यम्।।२।।**

**।।इति द्वितीयं वाय्वधिकरणम्।।**

**३।।तडिदधिकरणम्।।सू.३।।**

## तडितोऽधि वरुणः संबन्धात्।।३।।

**'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्' (छा.उ. ५।१०।२) इत्यस्या विद्युत उपरिष्टात् 'स वरुणलोकम्' (कौ.उ. १।३) इत्ययं वरुणः संबध्यते। अस्ति हि संबन्धो विद्युद्वरुणयोः। यदा हि विशाला**

### *शारीरकन्यायसंग्रहः*

**तडितोऽधि वरुणः संबन्धात्।।३।।** 'स वायुलोकं स वरुणलोकम्' इति वरुणादीनां पाठक्रमेण वायोरूर्ध्वमादित्यात्प्रागर्थ-क्रमविरोधेन निवेशानुपपत्तेर्निवेशस्थानान्तरादर्शनाच्च वरुणादीनां मार्गपर्वत्वेन संबन्धाभावे प्राप्ते, विद्युत उपरिष्टाज्जलगर्भितमेघदर्शनात् आगन्तूनामन्ते निवेशः इति न्यायाच्च तडितोऽधि वरुणादयो निविशेरन्नित्युक्तम्।

### *प्रकटार्थविवरणम्*

कस्तर्हि क्रम इत्याशङ्क्याह— **तत्रापीति**। मासारभ्यत्वात्संवत्सरस्य मासेभ्योऽनन्तरं संवत्सरो निवेशनीय इत्यर्थः। इति द्वितीयं वाय्वधिकरणम्।।

**तडितोऽधि वरुणः संबन्धात्।।** 'स वरुणलोकम्' इत्यादिना श्रूयमाणो वरुणादिर्विषयः। स किमर्चिरादिमार्गपर्वत्वेन संबध्यते, उत नेति संशयः। पूर्वाधिकरणे अविशेषविशेषाभ्यां वायोः संवत्सरादूर्ध्वं निवेशप्रतिपादनेन मार्गपर्वत्वमुक्तम्। इह विशेषाश्रवणान्मार्गपर्वत्वाभाव इति बहिरेव पूर्वपक्षयित्वा सिद्धान्तमाह— **आदित्याच्चन्द्रमसमिति**। विद्युत उपरिष्टाज्जलगर्भितमेघदर्शनात् 'आगन्तूनामन्ते निवेशः' इति न्यायाच्च विद्युतोऽधि वरुणादेर्निवेश इत्यर्थः। इति तृतीयं तडिदधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**तडितोऽधि वरुणः संबन्धात्।।** वरुणो विषयः। स किमादित्यादुपरिष्टादनुप्रविशति किं वा विद्युत उपरिष्टादिति संदेहे वरुणात् पूर्वपठितस्य वायोरादित्यात् पूर्वमुपसंहतत्वाद् वरुणस्याप्यादित्यादुपरिष्टादुपसंहारः प्राप्तः। अथवा 'स वायुलोकं स वरुणलोक'मिति वरुणादीनां पाठक्रमेण वायोरूर्ध्वमादित्यात् प्रागर्थक्रमाविरोधेन निवेशानुपपत्तेर्विद्युतश्चोपरिष्टादमानवपुरुषस्यैव नेतृत्वश्रवणाद् वरुणादीनामनुपयोगान्निवेशस्थानान्तरादर्शनाच्च वरुणादीनां मार्गपर्वत्वेनासंबन्धे प्राप्ते प्रत्याह— **आदित्याच्चन्द्रमसमिति**। विद्युद्वरुणयोरसाधारणसंबन्धाभावात् कथमत्र सन्निवेश इति, तत्राह— **अस्तीति**। विद्युत्संभवानन्तरं वृष्टेर्दर्शनाद् विद्युद्वृष्ट्योः

### *न्यायनिर्णयः*

किं न स्यात्, तत्राह— **तत्रापीति**। संवत्सरस्य मासारभ्यत्वान्मासानन्तर्ये स्थिते देवलोकः संवत्सरस्य परस्ताद् भवत्यादित्यानन्तर्याय देवलोकादपि वायुरुपरिष्टाद् द्रष्टव्यः। सूत्रे तु संवत्सराद् देवलोकं प्राप्य वायुमभिसंभवतीति विवक्षितं वायुशब्दस्य देवलोकोपलक्षणार्थत्वात्। अतः श्रुतित्रयवशाद् देवलोकसहितवायोः संवत्सरादित्यान्तरालवर्तित्वमित्यर्थः।।२।। इति द्वितीयं वाय्वधिकरणम्।।

वायोः संनिवेशे दर्शिते तदनन्तरपठितवरुणादिसंनिवेशं दर्शयति— **तडितोऽधि वरुण इति**। 'स वरुणलोक'मित्यादिना श्रुतो वरुणादिर्विषयः। स किमर्चिरादिमार्गपर्वत्वेन न संबध्यते, किंवा संबध्यत इति तस्य तत्र संनिवेशस्थानासंभवसंभवाभ्यां संदेहे 'स वायुलोकं' 'स वरुणलोक'मिति वरुणादीनां पाठक्रमेण वायोरूर्ध्वमादित्यात् प्रागूर्ध्वश्रुतिसिद्धार्थक्रमविरोधेन निवेशासिद्धे-र्विद्युतश्चोपरिष्टादमानवपुरुषस्यैव नेतृत्वश्रवणाद् वरुणादीनामनुपयोगान्निवेशस्थानान्तरादृष्टेश्च तेषां मार्गपर्वत्वेन संबन्धो नास्तीति प्राप्ते सिद्धान्तमाह— **आदित्यादिति**। विद्युतोऽनन्तरं वरुणसंनिवेशे सूत्रोक्तं हेतुमाह— **अस्तीति**। तत्र लोकप्रसिद्धिमनुकूलयति—

**विद्युतस्तीव्रस्तनितनिर्घोषा जीमूतोदरेषु प्रनृत्यन्त्यथापः प्रपतन्ति। 'विद्योतते स्तनयति वर्षिष्यति वा' (छा.उ. ७।११।१) इति च ब्राह्मणम्। अपां चाधिपतिर्वरुण इति श्रुतिस्मृतिप्रसिद्धिः। [१]'वरुणाच्चाधीन्द्रप्रजापती स्थानान्तराभावात् पाठसामर्थ्याच्च। आगन्तुकत्वादपि वरुणादीनामन्त एव निवेशो वैशेषिकस्थानाभावाद् विद्युच्चान्त्याऽर्चिरादौ वर्त्मनि।।३।।**

।।इति तृतीयं तडिदधिकरणम्।।

**४।।आतिवाहिकाधिकरणम्।।सू. ४-६।।**

## आतिवाहिकास्तल्लिङ्गात्।।४।।

### *शारीरकन्यायसंग्रहः*

**आतिवाहिकास्तल्लिङ्गात्।।४।। उभयव्यामोहात् तत्सिद्धेः।।५।। वैद्युतेनैव ततस्तच्छ्रुतेः।।६।।** निर्देशसारूप्याल्लोकशब्दश्रवणाच्च मार्गचिह्नत्वे भोगभूमित्वे वा प्राप्ते चेतनस्य स्वप्रयत्नरहितस्य ऊर्ध्वगमनं चेतनान्तराधीनमिति लौकिकन्यायेनाहः-शुक्लपक्षोत्तरायणानां कालान्तरेषु मार्गचिह्नत्वभोगभूमित्वासंभवात् तदभिमानिदेवताभिरेभिर्भवितव्यमिति न्यायेन चानुगृहीतात् वैद्युतादुपर्यमानवपुरुषोन्नयनलिङ्गान्मानवाश्चेतनाश्चोन्नेतारोऽर्चिरादय इत्युक्तम्।

### *प्रकटार्थविवरणम्*

**आतिवाहिकास्तल्लिङ्गात्।।** एवं तावदर्चिराद्यनेकविशेषणविशिष्टं देवयानं पन्थानं निरूप्य, इदानीमर्चिरादिस्वरूपं

### *भाष्यभावप्रकाशिका*

कार्यकारणभावोऽस्तीत्यर्थः। भवत्वेवमपां विद्युत्संबन्धो वरुणस्य तु कथमित्याशङ्क्य तद्द्वारेत्याह— **अपां चेति**। वरुणानन्तरमधीतयोरिन्द्रप्रजापत्योः क्व सन्निवेश इत्यत्राह— **वरुणाच्चेति**। आगन्तूनामन्ते निवेश इति न्यायाच्चैवमित्याह— **आगन्तुकत्वादपीति**। ननु कथमस्यान्त्यत्वमिति तत्राह— **विद्युच्चान्त्येति**। न च वरुणादीनामनुपयोगो वक्ष्यमाणन्यायेनामानवेन सह नेतृत्वसंभवादिति भावः। इति तृतीयं तडिदधिकरणम्।।

### *न्यायनिर्णयः*

**यदेति**। विद्युदुद्भवानन्तरं वृष्टेर्दृष्टत्वात् कार्यकारणभावस्तयोरस्तीत्यर्थः। तत्रैव श्रुतिं संवादयति— **विद्योतत इति**। अपां विद्युद्योगेऽपि वरुणस्य किमायातं, तदाह— **अपां चेति**। वायोरनन्तरमधीतस्यापि वरुणस्य विद्युदानन्तर्यवदिन्द्रप्रजापत्योर्वरुणानन्तरमधीतयोरपि स्थानान्तरं वाच्यमित्याशङ्क्याह— **वरुणाच्चेति**। तर्हि तयोर्मार्गपर्वत्वेन संगतिरेव मा भूदित्याशङ्क्याह— **पाठेति**। आगन्तूनामन्ते निवेश इति न्यायाच्चासाधारणस्थानहीनानां वरुणादीनां तडिदानन्तर्यमुक्तमित्याह— **आगन्तुकत्वादिति**। यथा[२] दर्शपूर्णमासिकविकृतौ नक्षत्रेष्टौ 'सोऽत्र जुहोत्यग्नये स्वाहा कृत्तिकाभ्यः स्वाहे'त्यादीनामुपहोमानां प्रधानशब्दगृहीतप्रकृतनारिष्ठहोमान्ते प्रयोगो निरूपितस्तथाऽर्चिरादिमार्गेऽपि स्थानाभावेनागन्तूनामन्ते निवेशः स्यादिति भावः। कथं विद्युतोऽन्त्यत्वं न हि तदन्त्यत्ववाची शब्दोऽस्तीत्याशङ्क्य विद्युदनन्तरं पर्वान्तरस्यानुक्तेस्तदन्त्यत्वमित्याह— **विद्युच्चेति**। वरुणादीनामुपयोगस्त्वमानवेन सह नेतृत्वसंभवादिति वक्ष्यते। अत्र च विद्याफलार्थे पथि वरुणादीनां संनिवेशोक्त्या पादादिसंगतिः। पूर्वपक्षे वरुणादिपाठस्यादृष्टार्थत्वं, सिद्धान्ते वरुणादीनां स्थानान्तराभावेऽप्यागन्तूनामन्ते निवेशात् पाठस्य दृष्टार्थतैवेति द्रष्टव्यम्।।३।। इति तृतीयं तडिदधिकरणम्।।

अर्चिरादीनां क्रमं निरूप्य स्वरूपं निरूपयति— **अतिवाहिका इति**। विषयोक्तिपूर्वकमुक्तिसाम्याल्लोकशब्दादतिनेतृत्वलिङ्गाच्च

---

१. 'वरुणादधि' इति पा.। २.

**तेष्वेवार्चिरादिषु संशयः– किमेतानि मार्गचिह्नान्युत भोगभूमयोऽथवा नेतारो गन्तॄणामिति। तत्र मार्गलक्षणभूता अर्चिरादय इति तावत् प्राप्तम्। तत्स्वरूपत्वादुपदेशस्य। यथा हि लोके कश्चिद् ग्रामं नगरं वा प्रतिष्ठासमानोऽनुशिष्यते– गच्छेतस्त्वममुं गिरिं ततो न्यग्रोधं ततो नदीं ततो ग्रामं नगरं वा प्राप्स्यसीत्येवमिहाप्यर्चिषोऽहरह्न आपूर्यमाणपक्षमित्याद्याह । अथवा भोगभूमय[1] इति प्राप्तम्। तथाहि– लोकशब्देनाग्न्यादीननुबध्नाति 'अग्निलोकमागच्छति '(कौ.उ. १।३) इत्यादि। लोकशब्दश्च प्राणिनां भोगायतनेषु भाष्यते– 'मनुष्यलोकः पितृलोको देवलोकः' (बृ.उ. १।५।१६) इति च। तथा च ब्राह्मणम्– 'अहोरात्रेषु ते लोकेषु सज्जन्ते' (शत. १०।२।६।८) इत्यादि। तस्मान्नातिवाहिका अर्चिरादयः। अचेतनत्वादप्येतेषामातिवाहिकत्वानुपपत्तिः। चेतना हि लोके राजनियुक्ताः पुरुषा दुर्गेषु मार्गेष्वतिवाह्यानतिवाहयन्तीति।**

**एवं प्राप्ते ब्रूमः– आतिवाहिका एवैते भवितुमर्हन्ति। कुतः? तल्लिङ्गात्। तथाहि– 'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' (छा.उ. ५।१०।२) इति सिद्धवद् गमयितृत्वं दर्शयति। तद्वचनं तद्विषयमेवोपक्षीणमिति चेत्? न। प्राप्तमानवत्वनिवृत्तिपरत्वाद् विशेषणस्य। यद्यर्चिरादिषु पुरुषा गमयितारः**

### *प्रकटार्थविवरणम्*

निरूपयितुमुपक्रमते— **तेष्वेवेति**। चिह्ननिर्देशसाम्याल्लोकशब्दात् पुरुषविषयस्यापि निर्देशस्य दर्शनाच्च संशयः। आद्यं पक्षद्वयं पूर्वपक्षमाह— **तत्रेत्यादिना**। वैद्युतादुपचर्यमाण[पर्यमानव]पुरुषेण नयनलिङ्गादमानवा[ङ्गान्मानवाश्चेचना]श्चोन्नेतारोऽर्चिरादय इति सिद्धान्तमाह— **आतिवाहिका एवैत इति**।

### *भाष्यभावप्रकाशिका*

**आतिवाहिकांस्तल्लिङ्गात्।। तत्स्वरूपत्वादुपदेशस्येति**। निर्देशसारूप्यादित्यर्थः। ननु लोकशब्दप्रयोगात् कथं भोगभूमित्वमिति, तत्राह— **लोकशब्दश्चेति**। अर्चिरादिशब्दानामचेतनाग्न्यादिषु रूढत्वादपि न तेषामातिवाहिकत्वमित्याह— **अचेतनत्वादपीति**। अमानवस्य विद्युदादिष्वातिवाहिकत्वदर्शनादर्चिरादीनामपि तदुन्नीयत इत्याह— **तल्लिङ्गादिति**। तदेव दर्शयति— **तथा हीति**। ननु 'यावद्वचनं वाचनिक'मिति न्यायात्र प्रापयति तेषामातिवाहिकत्वमेतद्वचनमिति शङ्कते— [2]**तत्तद्विषय इति**। प्राप्तगमयितृमानवपुरुषानुवादेनाप्राप्तामानवत्वप्रतिपादकत्वाद् वाक्यस्योभयपरत्वेन वाक्यभेदप्रसङ्गाभावात् पूर्वेषामपि मानवपुरुषतया गमयितृत्वमुन्नीयत

### *न्यायनिर्णयः*

संशयमाह— **तेष्वेवेति**। अत्र च विद्याफलप्राप्त्यर्थमर्चिरादावध्वनि प्रवृत्तस्य विदुषो गमयितृत्वचिन्तनात् पादादिसंगतिः। पूर्वपक्षे निर्देशस्य लोकश्रुतेर्वा मुख्यत्वं, सिद्धान्ते न्यायवल्लिङ्गस्येत्यङ्गीकृत्य पूर्वपक्षमाह— **तत्रेति**। उक्तेऽर्थे निर्देशसाम्यं हेतुमाह— **तदिति**। उक्तमेव हेतुं दृष्टान्तेन स्पष्टयति— **यथेति**। पूर्वपक्षान्तरमाह— **अथवेति**। कथं लोकशब्दप्रयोगेऽप्यर्चिरादीनां भोगभूमित्वं, तत्राह— **लोकेति**। मार्गपर्वणां भोगभूमित्वे श्रुतिमपि दर्शयति— **तथा चेति**। अहोरात्रप्रभृतिषु लोकशब्दितेषु भोगायतनेषु ते कर्मिणो ज्ञानिनश्च सक्तिं भोगमनुभवन्तीति यावत्। पक्षद्वयेऽपि फलितमाह— **तस्मादिति**। अर्चिरादिशब्दानामचेतनेष्वग्न्यादिषु रूढत्वादपि न तेषामातिवाहिकतेत्याह— **अचेतनत्वादिति**। तदेव व्यतिरेकदृष्टान्तेन स्फोरयति— **चेतना इति**। सिद्धान्तसूत्रमादाय प्रतिज्ञां विभजते— **एवमिति**। तत्र हेतुं प्रश्नपूर्वकमादाय व्याचष्टे— **कुत इति**। अमानवपुरुषस्य विद्युदादावातिवाहिकत्वदृष्टेरर्चिरादीनामपि तदुन्नेयमित्यर्थः। 'यावद्वचनं वाचनिक'मिति न्यायात्र तेषामातिवाहिकत्वसाधकमेतदिति शङ्कते— **तदिति**। उभयपरत्वे वाक्यभेदः स्यादिति भावः। प्राप्तगमयितृमानवपुरुषानुवादेनाप्राप्तामानवत्ववादित्वाद् वाक्यस्योभयपरत्वेन वाक्यभेदप्रसङ्गा[भावा]त् पूर्वेषामपि

---

१. 'भोगभूमय एताः' इति पा.। २. इदं भाष्ये पाठान्तरं भाति।

**प्राप्तास्ते च मानवास्ततो युक्तं तन्निवृत्त्यर्थं पुरुषविशेषणममानव इति।।४।।**

**ननु तल्लिङ्गमात्रमगमकं न्यायाभावात्। नैष दोषः।**

**उभयव्यामोहात् तत्सिद्धेः।।५।।**

**ये तावदर्चिरादिमार्गगास्ते देहवियोगात् संपिण्डितकरणग्रामा इत्यस्वतन्त्रा अर्चिरादीनामप्यचेतनत्वाद-स्वातन्त्र्यमित्यतोऽर्चिराद्यभिमानिनश्चेतना देवताविशेषा अतियात्रायां नियुक्ता इति गम्यते। लोकेऽपि हि मत्तमूर्च्छितादयः संपिण्डितकरणाः परप्रयुक्तवर्त्मानो भवन्ति। अनवस्थितत्वादप्यर्चिरादीनां न मार्ग-लक्षणत्वोपपत्तिः। न हि रात्रौ प्रेतस्याहःस्वरूपाभिसंभव उपपद्यते। न च प्रतिपालनमस्तीत्युक्तं पुरस्तात्। ध्रुवत्वात्तु देवतात्मनां नायं दोषो भवति। अर्चिरादिशब्दता चैषामर्चिराद्यभिमानादुपपद्यते। 'अर्चिषोऽहः'**

***प्रकटार्थविवरणम्***

लिङ्गस्यानुग्राहको न्यायो वक्तव्य इत्याह— **नन्विति**। चेतनस्य स्वप्रयत्नशून्यस्य ऊर्ध्वगमनं चेतनान्तराधीनमिति लौकिकन्यायेनार्चिराद्यभिमानिदेवताभिरेव भवितव्यमित्याह— **नैष दोष इत्यादिना**।

**उभयव्यामोहात् तत्सिद्धेः।।** उभयोर्मार्गतद्गन्त्रोर्व्यामोहादनभिज्ञत्वात् तत्सिद्धेर्गमयितृत्वसिद्धेरिति योजना। चिह्नत्वपक्षे दोषान्तरमाह— **अनवस्थितत्वादपीति**। अहःशुक्लपक्षोत्तरायणानां कालान्तरेषु मार्गचिह्नत्वं न संभाव्यते, तदानीमभावादेवेत्यर्थः। तत्तत्कालप्रती(त्यपे)क्षया अहरादीनां चिह्नत्वं भविष्यतीति न वक्तव्यमित्याह— **न चेति**। नन्वहरादीनामव्यवस्थितत्वे तत्तद्देवताया अव्यवस्थितत्वदोषः स्यादित्याशङ्क्याह— **ध्रुवत्वात्त्विति**। तर्हि देवतास्वर्चिरादिशब्दप्रयोगः कथमित्याकाङ्क्षायां लक्षणयेत्याह—

***भाष्यभावप्रकाशिका***

इत्याह— **न प्राप्तेति**। तदेव विवृणोति— **यद्यर्चिरादिष्विति**।

न्यायं दर्शयति— **उभयेति**। तदेव प्रपञ्चयति— **ये तावदिति**। चेतनस्य प्रयत्नहीनस्योर्ध्वगमनं चेतनान्तराधीनमिति लौकिकन्यायेन प्रयत्नहीनानां गन्तॄणां गमयितारोऽर्चिरादयश्चेतनास्सिध्यन्तीत्यर्थः। अहश्शुक्लपक्षोत्तरायणानां कालान्तरेषु मार्गचिह्नत्वभोगभूमित्वे न संभवतस्तदा तेषामभावादित्यर्थः— **अनवस्थितत्वादपीति**। तर्हि तदागमनं प्रतीक्ष्य गमिष्यतीति, तत्राह— **न च प्रतिपालनमिति**। अनवस्थितत्वाद....ही (?) स्यादित्यत आह— **ध्रुवत्वादिति**। अभिमन्तव्याहरादिशरीराभावे तद्देवतानामनवस्थानं स्यादिति न शङ्कनीयम्, ऐश्वर्ययोगात् तासामनेकशरीरसंभवादिति भावः। नन्वेते शब्दा अचेतनेषु रूढा इत्युक्तमिति तत्राह— **अर्चिरादीति**। देवदत्तादिशब्दवदर्थतो मुख्यत्वं चेतनस्येत्यर्थः। नन्वर्चिष इत्यस्मादपादानं प्रतीयते। न

***न्यायनिर्णयः***

मानवपुरुषतया गमयितृत्वं ग्राह्यमित्याह— **नेति**। उक्तमेव प्रपञ्चयति— **यदीति**।।४।।

लिङ्गस्यानुग्राहकन्यायाभावे गमकत्वासिद्धिरिति शङ्कते— **नन्विति**। न्यायोक्तिपरं सूत्रमवतारयति— **नेति**। चेतनस्य यत्नहीनस्योर्ध्वगतिश्चेतनान्तराधीनेति लौकिकन्यायेन यत्नहीनानां गन्तॄणां गमयितारोऽचिरादयश्चेतनाः स्युरिति सूत्रयोजनया ब्रूते— **ये तावदिति**। उभयोर्मार्गतद्गन्त्रोर्व्यामोहादज्ञत्वात् तत्सिद्धेर्गमयितृसिद्धेर्न न्यायहीनं लिङ्गमित्युक्त्वा न्यायमेव स्फुटयति— **लोकेऽपीति**। पूर्वपक्षद्वयायोगे हेत्वन्तरमाह— **अनवस्थितत्वादिति**। अहःशुक्लपक्षोत्तरायणानां कालान्तरेषु मार्गचिह्नत्वभोगभूमित्वे न संभाव्येते, तदा तेषामभावादिति हेतुं साधयति— **न हीति**। तर्हि तदागमनं प्रतीक्ष्य रात्र्यादौ प्रेतो गमिष्यति, नेत्याह— **न चेति**। अनवस्थितत्वाविशेषादातिवाहिकत्वमपि कुतस्तेषामित्याशङ्क्याह— **ध्रुवत्वादिति**। अर्चिरादिशब्दानामचेतनेषु रूढेर्न तेषां देवता-वाचितेत्याशङ्क्याह— **अर्चिरादीति**। न चाभिमन्तव्याहरादिदेहाभावे तद्देवतानामनवस्थानमिति वाच्यम्। ऐश्वर्ययोगात् तासामनेक-विग्रहग्रहणयोगात्। अतो देवदत्तादिशब्दवदर्थतश्चेतनेषु मुख्यतेत्यर्थः। जाड्याद् बद्ध इत्यादौ गुणवचनेषु जाड्यादिषु पञ्चमीदर्शनादर्चिरादीनां

**(छा.उ. ५।१०।१) इत्यादिनिर्देशस्त्वातिवाहिकत्वेऽपि न विरुध्यते। अर्चिषा हेतुनाऽहरभिसंभवति[1], अह्ना हेतुनाऽऽपूर्यमाणपक्षमिति। तथा च लोके प्रसिद्धेष्वप्यातिवाहिकेष्वेवंजातीयक उपदेशो दृश्यते— गच्छ त्वमितो बलवर्माणं ततो जयसिंहं ततः कृष्णगुप्तमिति। अपि चोपक्रमे 'तेऽर्चिषमभिसंभवन्ति' (छा.उ. ५।१०।१) इति संबन्धमात्रमुक्तं न संबन्धविशेषः कश्चित्। उपसंहारे तु 'स एनान् ब्रह्म गमयति' (छा.उ. ५।१०।२) इति संबन्धविशेषोऽतिवाह्यातिवाहकत्वलक्षण उक्तः, तेन स एवोपक्रमेऽपीति निर्धार्यते। संपिण्डितकरणत्वादेव च गन्तॄणां न तत्रोपभोगसंभवः। लोकशब्दस्त्वनुपभुञ्जानेष्वपि गन्तृषु गमयितुं शक्यते। अन्येषां तल्लोकवासिनां भोगभूमित्वात्। अतोऽग्निस्वामिकं लोकं प्राप्तोऽग्निनाऽतिवाह्यते, वायुस्वामिकं प्राप्तो वायुनेति योजयितव्यम्।।५।।**

**कथं पुनरातिवाहिकत्वपक्षे वरुणादिषु तत्संभवः; विद्युतो ह्यधि वरुणादय उपक्षिप्ता; विद्युतस्त्वनन्तरमा ब्रह्मप्राप्तेरमानवस्यैव पुरुषस्य गमयितृत्वं श्रुतमिति। अत उत्तरं पठति—**

## वैद्युतेनैव ततस्तच्छ्रुतेः।।६।।

### *प्रकटार्थविवरणम्*

**अर्चिरादिशब्दता चेति**। यदुक्तं चिह्ननिर्देशसाम्यात् चिह्नत्वमिति, तत्राह— **अर्चिषोऽहरित्यादीति**। पूर्वं चिह्ननिर्देशसारूप्यमङ्गीकृत्य प्रकारान्तरेणापि अर्थवत्त्वमुक्तम्। इदानीं तदपि नास्ति, 'तेऽर्चिरभिसंभवन्ति' इति संबन्धमात्रप्रमितेरित्याह— **संपिण्डितेति**। यच्चोक्तं लोकशब्दाद् भोगभूमित्वमिति, तत्राह— **लोकशब्दस्त्विति**।

सूत्रान्तरमवतारयति— **कथं पुनरिति**। **वैद्युतेनैव ततस्तच्छ्रुतेः**।। इति चतुर्थमातिवाहिकाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

हेतुर्जाड्याद्बद्ध इत्यादिषु गुणवचनेषु जाड्यादिषु हेतुपञ्चमीदर्शनादर्चिरादिशब्दानां च गुणवचनत्वाभावादतो नार्चिरादीनां वहनं प्रति हेतुतेत्यत आह— **अर्चिषोऽहरित्यादीति**। वैशेषिकपरिभाषासिद्धगुणत्वाभावेऽप्याश्रिततया गुणत्वोपपत्तेर्हेतावियं पञ्चमीत्यर्थः। सामान्यवचने शब्दे विशेषापेक्षिणि यद्विशेषपदं दृश्यते तेन तत्सामान्यन्नियन्तव्यमिति न्यायादतिवाह्यातिवाहिकलक्षणसबन्धसिद्धिरित्याह— **अपि चोपक्रम इति**। यदुक्तम् भोगभूमित्वमिति, तत्रोपपद्यत इत्याह— **संपिण्डितेति**। लोकशब्दप्रयोगात् भोगभूमित्वमुक्तमिति, तत्राह— **लोकशब्द इति**। फलितं दर्शयति— **अतोऽग्नीति**।

काऽनुपपत्तिरित्यत आह— **विद्युतो हीति**। आतिवाहिकत्वमपि नियतं न भवतीति भावः। तत्र वचनादपवाद इति

### *न्यायनिर्णयः*

च गुणवचनत्वाभावाद् वहनं प्रत्यर्चिरादीनां हेतुत्वानवगमादर्चिष इत्यस्मादपादानत्वप्रतीतेर्नातिवाहिकत्वसिद्धिरित्याशङ्क्याह— **अर्चिष इति**। तार्किकप्रक्रियासिद्धगुणत्वाभावेऽप्याश्रितत्वेन तत्सिद्धेर्हेतावेषा पञ्चमीत्यर्थः। उक्तेऽर्थे लौकिकव्यपदेशं दर्शयति— **तथा चेति**। इतश्चार्चिरादिशब्दानां गमयितृविषयतेत्याह— **अपि चेति**। सामान्यवचने शब्दे विशेषापेक्षिणि दृष्टे विशेषशब्देन तत्सामान्यं नियन्तव्यमिति न्यायादतिवाह्यातिवाहकसंबन्धसिद्धिरिति हेत्वन्तरमेव स्फुटयति— **उपक्रमेऽपीति**। यत्तु भोगभूमित्वमर्चिरादीनामुक्तं तद् दूषयति— **संपिण्डितेति**। लोकशब्दाद् भोगभूमित्वमुक्तं प्रत्याह— **लोकेति**। गन्तॄणां भोक्तृत्वाभावेऽपि वाक्यं शक्यं नेतुमिति फलितमाह— **अत इति**।।५।।

सूत्रान्तरमवतारयितुं शङ्कते— **कथमिति**। का पुनरनुपपत्तिः, तत्राह— **विद्युतो हीति**। आतिवाहिकत्वमपि नियतं नेत्युक्ते प्रत्याह— **अत इति**।

१. 'संभवन्ति' इति पा.।

**ततो विद्युदभिसंभवनादूर्ध्वं विद्युदनन्तरवर्तिनैवामानवेन पुरुषेण वरुणलोकादिष्वतिवाह्यमाना ब्रह्मलोकं गच्छन्तीत्यवगन्तव्यम्। 'तान् वैद्युतात्पुरुषोऽमानवः एत्य ब्रह्मलोकान् गमयति' (बृ.उ. ६।२।१५) इति तस्यैव गमयितृत्वश्रुतेः। वरुणादयस्तु तस्यैवाप्रतिबन्धकरणेन साहाय्यानुष्ठानेन वा केनचिदनुग्राहका इत्यवगन्तव्यम्। तस्मात् साधूक्तमातिवाहिका देवतात्मानोऽर्चिरादय इति।।६।।**

।।इति चतुर्थमातिवाहिकाधिकरणम्।।

***शारीरकन्यायसंग्रहः***

५।।कार्याधिकरणम्।।सू. ७-१४।।

**कार्यं बादरिरस्य गत्युपपत्तेः।।७।। विशेषितत्वाच्च।।८।। सामीप्यात्तु तद्व्यपदेशः।।९।। कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्।।१०।। स्मृतेश्च।।११।। परं जैमिनिर्मुख्यत्वात्।।१२।। दर्शनाच्च।।१३।। न च कार्ये प्रतिपत्त्यभिसन्धिः।।१४।।**

यद्यपि वृद्धव्यवहारे प्रयोगप्रत्ययाभ्यां ब्रह्मशब्दस्य परापरब्रह्मणोः शाब्दं मुख्यत्वमविशिष्टम्, तथापि [1]शब्दतोऽनवच्छिन्नतयाऽर्थतोऽपि मुख्यत्वादनावृत्त्यमृतत्वलिङ्गाभ्यामुपबृंहितमुभयमुख्यत्वं शब्दस्यार्चिरादिना गन्तव्यं परं ब्रह्मेति गमयतीति प्राप्तम्। तत्र एकस्य शब्दस्यैकस्मिन् प्रयोगे रूढ्यर्थोपादाने यौगिकलक्षणार्थमुख्यत्वस्याप्युपादानानुपपत्तेः शब्दमुख्यत्वस्योभयत्राविशिष्टत्वात् कस्योपादानं न्याय्यमिति विशये वाजसनेयके 'ब्रह्मलोकान् गमयति' इति ब्रह्मलोकशब्दस्य सत्यलोके रूढस्य यौगिकत्वेऽपि प्रयोगबाहुल्यात् तत्रैव प्रथमतरबुद्धिहेतोः, ब्रह्मैव लोक इति व्युत्पत्तौ लोकशब्दस्य भोगभूमिविशेषे प्रसिद्धस्य, 'ब्रह्मलोकान्' इति बहुवचनस्य भोगभूमिभेदेन सत्यलोके मुख्यस्य, 'तस्मिन्वसति' इत्यधिकरणसप्तम्याः 'तृतीयस्यामितो दिवि भूर्लोकात्' इति तृतीयलोकशब्दस्य द्युशब्दस्य च, 'प्रजापतेः सभां वेश्म प्रपद्ये' इति सभावेश्मशब्दयोश्च, 'पञ्चाग्निविद्यायाः शुद्धः पूतः पुण्यलोको भवति' इति पुण्यलोकशब्दस्य, विकारास्पृष्टे परे ब्रह्मण्यत्यन्तोपचरितार्थत्वप्रसङ्गात् तथा ऐरम्मदीयस्य सरसः अश्वत्थस्य च सोमसवनस्यापराजितायाश्च पुरः प्रभुविमितस्य च वेश्मनः अरण्यत्वारण्येत्यर्णवयोः[त्यरत्वण्यत्वयोः[2]] पर्यङ्कविद्यागतानां च विशेषणानां गन्तव्यब्रह्मलोकसंबन्धिनां विकारास्पृष्टे ब्रह्मण्यसंभवात् बहूनां शब्दानामर्थानां चोपचारकल्पनादेकस्यैव शब्दस्यार्थोपचारकल्पनया शब्दमुख्यत्वेन कार्यमेव ब्रह्माभिधेयमिति वरं प्रतिपत्तुमित्युक्तम्।

किञ्च पञ्चाग्निविदामपि परब्रह्मप्राप्तौ 'तमेव विदित्वा' इत्यादिबहुशास्त्रविरोधः स्यात्; अप्राप्तौ 'स एनान् ब्रह्म गमयति' इत्येतच्छब्दविरोधः स्यात्; तेन च प्राधान्येन प्रकृतपञ्चाग्निविद्व्यतिरिक्तानां ग्रहणायोगात्, तेषामनिष्टगतिप्रसङ्गाच्च। किञ्च परं ब्रह्म प्राप्तानामुपचितापचितैश्वर्ये ब्रह्मणः सर्वेश्वरत्वविरोधः स्यात्; एकरूपैश्वर्ये गुणप्रत्ययावृत्त्युपचयात्मकसाधनवैषम्यविधिवैयर्थ्यं स्यात्; साधनोपचयापचयाभ्यां च फलोपचयापचयः स्यात्। किञ्च परब्रह्मभूतस्य मनःशरीरवत्तया भोगसंबन्धे 'अथायमशरीरोऽमृतोऽप्राणो ब्रह्मैव' इति श्रुतिविरोधः स्यात्, कलाप्रलयाधिकरणविरोधश्च। अशरीरत्वे 'मनसैतान् कामान्' 'स एकधा भवति' इत्यादिवाक्यविरोधः

***भाष्यभावप्रकाशिका***

परिहरति— **वैद्युतेनेति**। (तेनेति) **वरुणादयस्त्विति**। वरुणादीनां स्वयमेव वाहकत्वाभावेऽपि तत्साहाय्यकरणेन वाहकत्वसंभवान्न वैषम्यमिति भावः। इति चतुर्थमातिवाहिकाधिकरणम्।।

***न्यायनिर्णयः***

वरुणादिषु वचनादपवादमङ्गीकृत्य विभजते— **तत इति**। किं तर्हि तैरित्याशङ्क्याह— **वरुणादयस्त्विति**। तेषां स्वयमवाहकत्वेऽपि तत्साहाय्यकरणेन तथात्वाद् युक्तमर्चिरादिशब्दानां गमयितृविषयत्वमित्युपसंहरति— **तस्मादिति**।।६।। इति चतुर्थमातिवाहिकाधिकरणम्।।

१. 'अर्थतः' पा.। २. 'अरण्याख्यार्णवयोः' इति पाठः संभाव्यते.

५।।कार्याधिकरणम्।।सू.७-१४।।

## कार्यं बादरिरस्य गत्युपपत्तेः।।७।।

**'स एनान् ब्रह्म गमयति' (छा.उ. ४।१५।६) इत्यत्र विचिकित्स्यते- किं कार्यमपरं ब्रह्म गमयत्याहोस्वित्**

***शारीरकन्यायसंग्रहः***

स्यात्।.किञ्च मुक्तस्य ब्रह्मीभूतस्य पित्रादिसंकल्पैः भोगाभ्युपगमे 'ब्रह्माप्तकामः[१]' इत्यादिश्रुतिविरोधः; अनभ्युपगमे 'तेन पितृलोकेन संपन्नो महीयते' इत्यादिश्रुतिविरोधः। किञ्च वैश्वानरोपासकस्यानिवृत्ताविद्यस्यैवोपास्यत्रैलोक्यात्मत्वादिफलप्राप्तौ विकारातिवर्तिब्रह्मगमनायोगः; तदप्राप्तौ 'तं यथा यथोपासते' इति श्रुतिविरोधः। विकारातिवर्तिब्रह्मप्राप्तिद्वारेण पुनर्विकारसंबन्धाभ्युपगमे विकारातिवर्तिगमनकल्पनावैयर्थ्यम्; अनिवृत्ताविद्यस्य च ब्रह्मात्मापत्तिरुक्ता स्यात्। किं च ब्रह्मणो भेदेनावस्थानाभ्युपगमे 'ब्रह्मैव भवति' इति श्रुतिविरोधः, गन्तुर्गम्येनाभेदायोगात्। अपि च सांपरायाधिकरणन्यायेन मध्ये लिङ्गशरीरविलयकारणाभावाद्विद्यया प्रविलये शरीरत्यागात्प्रागेव तेनैव न्यायेन प्रसङ्गात्, अमानवकरस्पर्शस्य लयकारणत्वे वैद्युतस्थाने विकारान्तरेऽपि लयप्रसङ्गात्, सत्यप्यमानवकरस्पर्शे पुष्कलकारणे विकारमतिक्रम्यैव लयकल्पनायां प्रमाणाभावात् न कलाप्रविलयसिद्धिः। 'जगद्व्यापारवर्जम्' 'भोगमात्रसाम्यलिङ्गात्' इत्यादिसूत्राणां चात्यन्तघटनात् 'एतेन प्रतिपद्यमाना नावर्तन्ते' इत्युभयोर्वर्तमानत्वनिर्देशात् गमनसमयेऽ[२]वृत्तेरप्राप्तप्रतिषेधात्, नावर्तिष्यन्त इत्यश्रुतभाव्यर्थकल्पनायां यत् कृतकं तदनित्यमित्यनुमानविरोधात् क्रममुक्त्यभिप्रायेणापि वाक्योपपत्तेः, इममिहेति च विशेषणार्थवत्त्वायास्मिन् कल्पे प्रतिपन्ना अस्मिन् कल्पे नावर्तन्ते, किं तु कल्पान्तर इत्यस्माकं प्रतिपत्तिः; कल्पान्तरप्रतिपत्तॄणामन्यस्मिन् कल्पे प्रतिपन्ना अस्मिन् कल्पे नावर्तन्ते, किं तु कल्पान्तर इति कल्पभेदेन प्रतिपत्तृषु प्रतिपत्तिव्यवस्थोपपत्तेर्न सगुणोपासनमात्रेणानावृत्तिसिद्धिः। तथा मूर्धन्यनाड्यैव गच्छतां प्रतीकपञ्चाग्निविदामापेक्षिकामृतत्वदर्शनात् कार्यब्रह्मणोऽपि सर्वगतत्वे भोगशरीरस्य व्यवहितदेशत्वात् ब्रह्मणो गन्तव्यस्य सर्वत्राविशिष्टपुरुषार्थत्वान्नार्चिरादिमार्गेण गच्छतां मुख्यामृतत्वसिद्धिः।

ननु परब्रह्मगमनेऽप्याविर्भूतब्रह्मस्वरूपस्य सर्वात्मभावापत्तेः, सर्वाणि फलभोगवचनानि 'सङ्कल्पादेवास्य पितरः' 'मनसैतान् कामान्' इत्यादीनि तस्मिन् उपपद्यन्त इति।

तत्र यदि तावन्मुक्तः स्वपित्रादिभिः कामैः प्रागनुत्पन्नं भोगमस्मदादिवदुत्पाद्य मुख्यमेव भुञ्जीत, तदा आप्तकामता निरतिशयानन्दोपलब्ध्यात्मता च बाध्येत, प्रागनुपलभ्यमानसुखो हि सुखाय साधनानि लोक आदत्त इति; भोगार्था च सृष्टिः स्यात्; सुखजन्माभ्युपगमे च 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति नित्यसिद्धब्रह्मसुखावच्छेदानामेव विषयैरभिव्यङ्ग्यतया भोग्यत्वश्रुतिर्बाध्येत। अथ मुक्तोऽपि प्रागनभिव्यक्तं सुखं पित्रादिकामैरभिव्यनक्तीति; न, सर्वज्ञत्वादिश्रुतेरनभिव्यक्तवत्स्वभावात्[३] स्वरूपावरणस्य च सम्यग्ज्ञानेनैव प्रध्वस्तत्वात्। अथ मुक्तस्य सर्वजीवात्मतावाप्तेर्हिरण्यगर्भादिजीवगतानां भोगैश्वर्याणां तस्मिन्नन्वयात् मुख्यानामेव भोगैश्वर्यवचनानां तस्मिन्नुपपत्तिरिति, तर्हि तिर्यङ्नारकस्थावरादिजीवापत्तेः तद्गततदुःखानैश्वर्याद्यपि मुक्तस्यापद्यत इत्यपुरुषार्थता स्यात्; तस्मान्मुक्तोऽमुक्तजीवगतैर्भोगैर्न सम्बध्यते।

यदि मतम्, मुक्तो निरतिशयानन्दमात्मानं प्राप्नुवंस्तदानन्दपरिच्छदत्वाद् विषयानन्दानां तानपि प्राप्नुवन् पित्रादिभिर्भुङ्क्त इत्युपचर्यत इति; नैतत् सारम्, एकस्य ब्रह्मशब्दस्य मुख्यार्थलोभेन सर्वासां परिच्छिन्नभोगैश्वर्यश्रुतीनामुपचरितार्थत्वकल्पनायोगात्; कार्ये तु ब्रह्मणि गन्तव्ये यथोपदेशं सर्वासां मुख्यार्थत्वमुपपद्यते। ननु निर्गुणब्रह्मविद्यायामपि 'मनसैतान् कामान्' 'स एकधा भवति' इत्यादीनि भोगवचनानि सन्ति। सत्यम्, तेषां प्रकरणाद् वाक्यसामर्थ्याद्वा निर्गुणब्रह्मविद्यया सम्बन्धोऽवगतः, भोगैश्वर्य-लक्षणादर्थसाम्यलिङ्गात् भोगैश्वर्यफलवता दहराद्युपासनेन च संबन्धोऽवगतः; तत्रोभयविधप्रमाणानुग्रहाय शरीरेन्द्रियभोगशून्ये निर्गुणज्ञाने स्तुतित्वेनान्वयः, विशिष्टसंबन्धिनि दहराद्युपासने फलत्वेनान्वय इति। तस्मात् सर्वश्रुतिव्याकोपपरिहाराय कार्यमेव ब्रह्म गन्तव्यमित्युक्तम्।

---

१. 'ब्रह्मणाऽऽप्तकामः' इति पा.। २. 'गमनसमय आवृत्तेः' इति पाठः स्यात्। ३. 'अनभिव्यक्तवस्त्वभावात्' इति पाठः स्यात्।

**परमेवाविकृतं मुख्यं ब्रह्मेति। कुतः संशयः? ब्रह्मशब्दप्रयोगाद् गतिश्रुतेश्च। तत्र कार्यमेव सगुणमपरं ब्रह्मैनान् गमयत्यमानवः पुरुष इति बादरिराचार्यो मन्यते। कुतः? अस्य गत्युपपत्तेः। अस्य हि कार्यब्रह्मणो गन्तव्यत्वमुपपद्यते प्रदेशवत्त्वात्। न तु परस्मिन् ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वाऽवकल्पते। सर्वगतत्वात्, प्रत्यगात्मत्वाच्च गन्तृणाम्।।७।।**

## विशेषितत्वाच्च।।८।।

**'ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति' (बृ.उ. ६।२।१५) इति च श्रुत्यन्तरे विशेषितत्वात् कार्यब्रह्मविषयैव गतिरिति गम्यते। न हि बहुवचनेन विशेषणं परस्मिन् ब्रह्मण्यवकल्पते। कार्ये त्ववस्थाभेदोपपत्तेः संभवति बहुवचनम्। लोकश्रुतिरपि विकारगोचरायामेव संनिवेशविशिष्टायां भोगभूमावाञ्जसी। गौणी त्वन्यत्र 'ब्रह्मैव लोक एष सम्राट्' (बृ.उ. ४।४।२३) इत्यादिषु। अधिकरणाधि-**

### *प्रकटार्थविवरणम्*

**कार्यं बादरिरस्य गत्युपपत्तेः।।** एवं तावद् गतिं निरूप्येदानीं गन्तव्यं निरूपयति— **स एनानिति**। सिद्धान्तेनैव तावदुपक्रमते— **तत्र कार्यमेवेति**। गत्वा प्राप्तिः संयोगलक्षणा, तादात्म्यलक्षणा वा? नाद्यः; सर्वगतत्वात् सदा संयोगात्; नापि द्वितीयः, प्रत्यगात्मत्वात् गन्तॄणां पूर्वमेव तादात्म्यसिद्धेरित्यर्थः।।

**विशेषितत्वाच्च।।** इतश्च कार्यब्रह्मविषया गतिरित्याह— **विशेषितत्वाच्चेति**। ननु वाजसनेयके श्रूयमाणं बहुवचनं कार्यपक्षे वा कथं भवतीत्याशङ्क्याह— **कार्ये त्विति**। भोगभूमिवाचकलोकश्रुतेश्च कार्यमेव गन्तव्यमित्याह— **लोकश्रुतिरपीति**। लोक्यते ज्ञायते मुमुक्षुभिरिति यौगिकत्वमुक्तम्; ते तेषु ब्रह्मलोकेषु वसन्तीत्याश्रयाश्रयिभावोऽपि परब्रह्मणि मुख्यो नोपपद्यत इत्याह— **अधिकरणेति**।

### *भाष्यभावप्रकाशिका*

**कार्यं बादरिरस्य गत्युपपत्तेः।।** संशयहेतुमाह— **ब्रह्मशब्दप्रयोगात् गतिश्रुतेश्चेति**। तत्राद्यः पूर्वपक्षस्यानुगुण इतरश्च सिद्धान्तस्य। इदानीं सूत्रं योजयेत्[योजयन्] **सिद्धान्तमाह— तत्र कार्यमेवेति**। सर्वगतत्वेऽपि प्रदेशान्तरवर्तिन आकाशस्येव गन्तव्यत्वं स्यादित्याशङ्क्य गन्तुरात्मत्वान्नैतद्युक्तमित्याह— **प्रत्यगिति**।

एतावता का तु उपपत्तिरिति तत्राह— **न हि बहुवचनेनेति**। ननु लोकस्याप्येकत्वादनुपपन्नमित्यत्राह— **कार्य इति। गौणीति**। यौगिकीत्यर्थः। ब्रह्मलोकेष्वित्यधिकरणसप्तम्या ब्रह्मण्यसंभवादपि कार्यविषयत्वमित्याह— **अधिकरणेति**।

ब्रह्मशब्दविरोधमाशङ्कते— **ननु कार्येति**। ननु वृद्धव्यवहारे प्रयोगप्रत्ययाभ्यां ब्रह्मशब्दस्य परापरब्रह्मणोःशाब्दमुख्यत्वं

### *न्यायनिर्णयः*

गतिनिरूपणानन्तरं गन्तव्यं निरूपयति— **कार्यमिति**। ब्रह्म विषयीकृत्य संशयमाह— **स इति**। प्रश्नपूर्वकं तद्धेतुमाह— **कुत इति**। पूर्वपक्षस्याद्यो द्वितीयस्तूत्तरपक्षस्यानुगुणो हेतुः। प्रकृतया गत्या गन्तव्यस्य विद्याफलभूतस्य ब्रह्मणो निरूपणात् पादादिसंगतिः। पूर्वपक्षे परविदोऽपि गत्युत्क्रान्ती सिध्यतः। सिद्धान्ते ततोऽन्यस्यैव ते नियते स्यातामिति मन्वानः सूत्रं योजयन्नादौ सिद्धान्तमाह— **तत्रेति**। साधारणे ब्रह्मशब्दे कार्यविषयत्वं गतेरहेतुकमिति शङ्कते— **कुत इति**। हेतुमवतार्य व्याचष्टे— **गतीति**। सर्वगतत्वेऽपि प्रदेशान्तरवर्तिनस्तस्याकाशस्येव गन्तव्यत्वमाशङ्क्याह— **प्रत्यगिति**।।७।।

कार्यब्रह्म गन्तव्यमित्यत्र हेत्वन्तरमाह— **विशेषितेति**। सूत्रं व्याचष्टे— **ब्रह्मेति**। बहूक्त्या गन्तव्यस्य विशेषितत्वेऽपि कथं परस्य गन्तव्यत्वनिरसनं, तत्राह— **न हीति**। ऐक्यात् कार्यस्यापि ब्रह्मणो बहूक्तिरयुक्तेत्याशङ्क्याह— **कार्ये त्विति**। चशब्दसूचितं युक्त्यन्तरमाह— **लोकेति**। परस्मिन्नपि क्वचिद् दृष्टा लोकश्रुतिरित्याशङ्क्याह— **गौणीति**। ब्रह्मलोकेष्वित्यधिकरणसप्तम्या

**कर्तव्यनिर्देशोऽपि परस्मिन् ब्रह्मण्यनाञ्जसः स्यात्। तस्मात् कार्यविषयमेवेदं नयनम् ।।८।।**

**ननु कार्यविषयेऽपि ब्रह्मशब्दो नोपपद्यते, समन्वये हि समस्तस्य जगतो जन्मादिकारणं ब्रह्मेति स्थापितमिति। अत्रोच्यते–**

## सामीप्यात्तु तद्व्यपदेशः ।।९।।

**तुशब्द आशङ्काव्यावृत्त्यर्थः। परब्रह्मसामीप्यादपरस्य ब्रह्मणस्तस्मिन्नपि ब्रह्मशब्दप्रयोगो न विरुध्यते। परमेव हि ब्रह्म विशुद्धोपाधिसंबन्धं क्वचित् कैश्चिद् विकारधर्मैर्मनोमयत्वादिभिरुपासनायोपदिश्यमानमपरमिति स्थितिः ।।९।।**

**ननु कार्यप्राप्तावनावृत्तिश्रवणं न घटते। न हि परस्माद् ब्रह्मणोऽन्यत्र क्वचिन्नित्यतां संभावयन्ति[१]। दर्शयति च देवयानेन पथा प्रस्थितानामनावृत्तिम्– 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छा.उ. ४।१५।६) इति, 'तेषामिह न पुनरावृत्तिः' (बृ.उ.मा. ६।१।१८) इति, 'तयोर्ध्वमायन्नमृतत्वमेति' (छा.उ. ८।६।६। क.उ. ६।१६) इति चेति[२]। अत्र ब्रूमः–**

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ।।१०।।

### *प्रकटार्थविवरणम्*

उत्तरसूत्रनिरस्याशङ्कामाह— **ननु कार्यविषयेऽपीति।**

**सामीप्यात्तु तद्व्यपदेशः।।** यथा 'अयो दहति' इति दाहकसन्निधानादयःपिण्डेऽपि दग्धृत्वं व्यपदिश्यते, तथा परब्रह्मसन्निधानाल्लक्षणया कार्ये व्यपदेशोऽपि न विरुध्यते, मुख्यार्थपरिग्रहे बहुतरकार्यलिङ्गभङ्गप्रसङ्गादित्याह— **सामीप्यादिति।**

तर्हि कार्यपरिग्रहेऽपि अमृतत्वश्रवणं विरुध्यत इत्याह— **ननु कार्यप्राप्ताविति।**

### *भाष्यभावप्रकाशिका*

तुल्यवदधिगतमित्याशङ्क्य तथाप्यनवच्छिन्नतयाऽर्थतो मुख्यत्वं परस्येत्याह— **समस्तस्य हीति।** एकस्मिन् प्रयोगे रूढ्यर्थोपादाने यौगिकतया मुख्यत्वादप्युपादानं न संभवतीत्यभिप्रेत्याह— **सामीप्यादिति। विशुद्धोपाधिसंबन्धमिति।** सात्त्विकोपाधिसंबन्धमित्यर्थः।

अनावृत्तिश्रवणमपि क्रममुक्त्यभिप्रायमित्याह— **कार्यात्यय इति।** ननु मुख्ये संभवति परंपरया गौणत्वमयुक्तमित्याशङ्क्य गतिश्रवणान्मुख्यत्वमनुपपन्नमित्याह— **न ह्यञ्जसेति।**

### *न्यायनिर्णयः*

ब्रह्मण्ययोगादपि कार्यविषयैव गतिरिति हेत्वन्तरमाह— **अधिकरणेति।** सूत्रोक्तहेतूनां फलितं निगमयति— **तस्मादिति।**।।८।।

ब्रह्मशब्दश्रुतिविरोधं शङ्कते— **नन्विति।** वृद्धव्यवहारे प्रयोगप्रत्ययाभ्यां ब्रह्मशब्दस्य परापरब्रह्मणोः शाब्दं मुख्यत्वं तुल्यमित्याशङ्क्यानवच्छिन्नतयाऽर्थतो मुख्यत्वं परस्यैवेत्याह— **समस्तस्येति।** सूत्रेण परिहरति— **अत्रेति।** मुख्यार्थायोगे यौगिकतयाऽपि ब्रह्मपदं नेयमिति मत्वा व्याचष्टे— **तुशब्द इति।** अविरोधं साधयति— **परमेवेति।** विशुद्धोपाधिसंबन्धं सात्त्विकोपाधिविशिष्टमिति यावत्।।९।।

ब्रह्मशब्दस्य मुख्यार्थग्रहे बहुतरकार्यलिङ्गभङ्गवत् कार्यग्रहेऽपि तुल्याऽनावृत्तिश्रुत्यनुपपत्तिरिति शङ्कते— **नन्विति।** तत्र हेतुः— **न हीति।** मा भूदर्चिरादिना गच्छतामनावृत्तिर्ब्रह्मलोकप्राप्तिमात्रस्य श्रुतत्वादित्याशङ्क्याह— **दर्शयतीति।** क्रममुक्त्यभिप्रायमनावृत्तिश्रवणमिति सूत्रेण प्रत्याह— **अत्रेति।**

१. 'नित्यता संभवति' इति पा.। २. 'इति चेत्' इति पा.।

**कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनाः सन्तस्तदध्यक्षेण हिरण्यगर्भेण सहातः परं परिशुद्धं विष्णोः परमं पदं प्रतिपद्यन्त इति। इत्थं क्रममुक्तिरनावृत्त्यादिश्रुत्यभिधानेभ्योऽभ्युपगन्तव्या। न ह्यञ्जसैव गतिपूर्विका परप्राप्तिः संभवतीत्युपपादितम्।।१०।।**

## स्मृतेश्च।।११।।

**स्मृतिरप्येतमर्थमनुजानाति– 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति। तस्मात् कार्यब्रह्मविषया गतिः श्रूयत इति सिद्धान्तः।।११।।**

**कं पुनः पूर्वपक्षमाशङ्क्यायं सिद्धान्तः प्रतिष्ठापितः 'कार्यं बादरिः' (ब्र.सू. ४।३।७) इत्यादिनेति। स इदानीं सूत्रैरेवोपदर्श्यते–**

## परं जैमिनिर्मुख्यत्वात्।।१२।।

**जैमिनिस्त्वाचार्यः 'स एनान् ब्रह्म गमयति' (छा.उ. ४।१५।६) इत्यत्र परमेव ब्रह्म प्रापयतीति मन्यते। कुतः? मुख्यत्वात्। परं हि ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बनम्, गौणमपरम्, मुख्यगौणयोश्च मुख्ये संप्रत्ययो भवति।।१२।।**

## दर्शनाच्च।।१३।।

### *प्रकटार्थविवरणम्*

**कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्।।** क्रममुक्त्यभिप्रायेणामृतत्वश्रवणं घटत इत्याह सूत्रेण— **कार्यात्यय इति।**

**स्मृतेश्च।।** स्मृत्यनुसारेणापि क्रममुक्त्यभिप्रायमनावृत्तिवचनमित्याह— **स्मृतेश्चेति।**

एवं सिद्धान्तेनोपक्रम्य पूर्वपक्षसूत्राण्यवतारयति— **कं पुनरिति।**

**परं जैमिनिर्मुख्यत्वात्।।** देशतः कालतो वस्तुतश्चानवच्छिन्नं वस्तु ब्रह्मशब्दस्य मुख्यमालम्बनम्; अतो ब्रह्मश्रुतेः मुख्यार्थत्वलाभेन परमेव ब्रह्म गन्तव्यमित्यर्थः।

### *भाष्यभावप्रकाशिका*

क्रममुक्तौ प्रमाणमाह— **स्मृतिरिति।** प्रतिसञ्चरो महाप्रलयः।

उत्तरसूत्राण्यवतारयितुमाह— **कं पुनरिति।** नन्वापेक्षिकममृतत्वं तत्रापि संभवतीत्याशङ्क्यापेक्षिकस्य मुख्ये संभवत्यनभ्युप-

### *न्यायनिर्णयः*

सूत्राक्षराणि योजयति— **कार्येति।** साक्षादेव ब्रह्मप्राप्त्याऽनावृत्तिसिद्धौ किमिति परम्पराश्रयणं, तत्राह— **न हीति।।१०।।**

क्रममुक्तौ स्मृतिं प्रमाणयति— **स्मृतेश्चेति।** तामेवोदाहरति— **स्मृतिरिति।** प्रतिसंचरो महाप्रलयः, तस्मिन् प्राप्ते परस्य हिरण्यगर्भस्यान्तोऽधिकारावसानं तदा कृतात्मानः शुद्धधियो ब्रह्मलोकनिवासिनस्तत्रोत्पन्नसम्यग्धियः सर्वे ब्रह्मणा मुच्यमानेन सह परं पदं प्रविशन्तीति योजना। सिद्धान्तमुपसंहरति— **तस्मादिति।।११।।**

उत्तरसूत्राण्याकाङ्क्षापूर्वकमवतारयति— **कमिति।** ब्रह्मशब्दस्य मुख्यार्थत्वमाश्रित्य परस्यैव ब्रह्मणो गन्तव्यत्वमाह— **परमिति।** तत्र प्रतिज्ञां विभजते— **जैमिनिस्त्विति।** युक्तियुक्तस्यैव ग्राह्यत्वाद् वक्तृगौरवमकिंचित्करमिति शङ्कते— **कुत इति।** सौत्रं हेतुमाह— **मुख्यत्वादिति।** गौणस्यापि मुख्यवद् ब्रह्मशब्दालम्बनत्वमिष्टमविशेषादित्याशङ्क्याह— **मुख्येति।।१२।।**

**'तयोर्ध्वमायन्नमृतत्वमेति' (छा.उ. ८।६।६।क.उ. ६।१६) इति च गतिपूर्वकममृतत्वं दर्शयति। अमृतत्वं च परस्मिन् ब्रह्मण्युपपद्यते, न कार्ये, विनाशित्वात् कार्यस्य। 'अथ यत्रान्यत्पश्यति तदल्पं तन्मर्त्यम्' (छा.उ. ७।२४।१) इति वचनात्। परविषयैव चैषा गतिः कठवल्लीषु पठ्यते। न हि तत्र विद्यान्तरप्रक्रमोऽस्ति 'अन्यत्र धर्मादन्यत्राधर्मात्' (क.उ. २।१४) इति परस्यैव ब्रह्मणः प्रक्रान्तत्वात्।।१३।।**

## न च कार्ये प्रतिपत्त्यभिसंधिः।।१४।।

**अपि च 'प्रजापतेः सभां वेश्म प्रपद्ये' (छा.उ. ८।१४।१) इति नायं कार्यविषयः प्रतिपत्त्यभिसंधिः 'नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म' (छा.उ. ८।१४।१) इति कार्यविलक्षणस्य परस्यैव ब्रह्मणः प्रकृतत्वात्। 'यशोऽहं भवामि ब्राह्मणानाम्' (छा.उ. ८।१४।१) इति च सर्वात्मत्वेनोपक्रमात्। 'न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः' (श्वे.उ. ४।१९) इति च परस्यैव ब्रह्मणो यशोनामत्वप्रसिद्धेः। सा चेयं वेश्मप्रतिपत्तिर्गतिपूर्विका हार्दविद्यायामुदिता 'तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम्' (छा.उ.**

### *प्रकटार्थविवरणम्*

**दर्शनाच्च**।। अमृतत्वफलश्रवणलिङ्गबलेनापि परमेव ब्रह्म गन्तव्यमित्याह— **तयोर्ध्वमायन्निति**। प्रकरणादपि परब्रह्मविषयत्वं गतेरित्याह— **परविषयैव चैषेति**।

**न च कार्ये प्रतिपत्त्यभिसन्धिः**।। प्रजापतेः सभां वेश्माहं प्रपद्ये प्राप्नुयामिति मरणकाले यः प्रत्य[प्रतिपत्त्य]भिसन्धिः प्राप्तिसंकल्पः स कार्यगोचर इति नाशङ्कनीयमित्याह— **न च कार्य इति**। यश आत्मा ब्राह्मणानाम् अहं भवामि, यशो राज्ञाम्, यशो विशाम्— इति सर्वात्मत्वाम्नानादपि न परिच्छिन्नकार्यापत्तिरित्यर्थः। ननु यशःशब्देन विश्रुतत्वमुच्यते, नात्मेत्याशङ्क्याह— **न तस्य प्रतिमेति**। ननु भवतु प्रकरणाद् ब्रह्मविषयैव वेश्मप्रतिपत्त्यादिसंकल्पना; तथापि सा गतिपूर्विका वेश्मप्रतिपत्तिर्न भवति, किं तु स्तुतिमात्रमित्याशङ्क्याह— **सा चेयमिति**। तत् तत्र ब्रह्मलोके केनापि ब्रह्मचर्यादिसाधनहीनेन न पराजितेत्यपराजिता पूर्विद्यते ब्रह्मणो हिरण्यगर्भस्य, प्रभुणा निर्मितं हिरण्यं वेश्मास्ति तत् प्रतिपद्यते विद्वानिति दहरविद्यायां गतिपूर्विका वेश्मप्रतिपत्तिरुक्ता;

### *भाष्यभावप्रकाशिका*

गन्तव्यत्वान्मुख्यममृतत्वमेष्टव्यम्; तच्च तत्र न संभवतीत्याह— **न कार्य इति**। ननुगतिः परब्रह्मणि न संभवतीति, तत्राह— **परविषयेति**। कथमेतदवगन्तव्यमित्यपे[क्षायां प्र]करणसामर्थ्यादित्याह— **न हि तत्रेति**।

प्रतिपत्तिर्गतिः पदेर्गत्यर्थत्वात्, अभिसन्धिस्तात्पर्यम्, एतावता गतिः कथमवगम्यते, तत्राह— **सा चेयमिति**।[गति]पूर्विका

### *न्यायनिर्णयः*

इतश्च मुख्यमेव ब्रह्म गन्तव्यमित्याह— **दर्शनाच्चेति**। दर्शनं विभजते— **तयेति**। आपेक्षिकं तत् पक्षान्तरेऽपि स्यादित्याशङ्क्य मुख्यसंभवे नैवमित्याह— **अमृतत्वं चेति**। कार्यस्य नाशित्वे मानमाह— **अथेति**। परस्मिन्न युक्ता गतिरित्युक्तमित्याशङ्क्याह— **परेति**। कथमेतज्ज्ञातमित्याशङ्क्य प्रकरणसामर्थ्यादित्याह— **न हीति**।।१३।।

ब्रह्मश्रुतेरमृतत्वश्रुतिलिङ्गात् 'तयोर्ध्वमाय'न्निति प्रकरणाच्च परविषया गतिरित्युक्तम्। सम्प्रति प्रजापतेः सभां वेश्म प्रपद्ये प्राप्नुयामिति मरणकाले यः प्रतिपत्त्यभिसंधिः प्राप्तिसंकल्पः स कार्यगोचर इति तस्यैव गन्तव्यतेत्याशङ्क्याह— **न चेति**। तद् विवृणोति— **अपि चेति**। परस्यैव गन्तव्यत्वे हेत्वन्तरमाह— **यशोऽहमिति**। आत्मा यशःशब्दार्थः। ब्राह्मणानामहमात्मा भवामि यशो राज्ञां, यशो विशामिति सर्वात्मत्वोक्तेरपि न परिच्छिन्नकार्यापत्तिरित्यर्थः। यशःशब्देन विश्रुतत्वमुक्तं, नात्मेत्याशङ्क्याह— **नेति**। अस्त्वधिकाराद् ब्रह्मविषयैव वेश्मप्रतिपत्त्यादिसंकल्पना, तथापि कथं सा गतिपूर्विका वेश्मप्रतिपत्तेः स्तुतिमात्रत्वादित्याशङ्क्याह— **सा चेति**। तत् तत्र ब्रह्मलोके केनापि ब्रह्मचर्यादिहीनेन न पराजितेत्यपराजिता पूरस्य ब्रह्मणो हिरण्यगर्भस्य तेनैव प्रभुणा निर्मितं

**८।५।३) इत्यत्र। पदेरपि च गत्यर्थत्वान्मार्गापेक्षाऽवसीयते। तस्मात् परब्रह्मविषया गतिश्रुतय इति पक्षान्तरम्।**

**तावेतौ द्वौ पक्षावाचार्येण सूत्रितौ— गत्युपपत्त्यादिभिरेको मुख्यत्वादिभिरपरः। तत्र गत्युपपत्त्यादयः प्रभवन्ति मुख्यत्वादीनाभासयितुम्, न तु मुख्यत्वादयो गत्युपपत्त्यादीनित्याद्य एव सिद्धान्तो व्याख्यातो, द्वितीयस्तु पूर्वपक्षः। न ह्यसत्यपि संभवे मुख्यस्यैवार्थस्य ग्रहणमिति कश्चिदाज्ञापयिता विद्यते। परविद्याप्रकरणेऽपि च तत्स्तुत्यर्थं विद्यान्तराश्रयगत्यनुकीर्तनमुपपद्यते 'विष्वङ्ङन्या उत्क्रमणे भवन्ति' (छा.उ. ८।६।६)**

### *प्रकटार्थविवरणम्*

अतः परब्रह्मण्यपि वेशमप्रतिपत्तिसामान्यात् गतिपूर्वकत्वमेवेत्यर्थः। किंच 'पद गतौ' इति धातुस्मरणादपि प्राप्तेर्मार्गापेक्षाऽवगम्यत इत्याह— **पदेरपि चेति**। यस्मात् परब्रह्मप्राप्तिरपि गतिपूर्विका, तस्मादित्युपसंहारः।

उक्तं संक्षेपतो दर्शयति— **तावेताविति**। पक्षद्वयस्यापि उपपत्तिमत्त्वं चेत् तर्हि किं विनिगमनकारणम्, येनाद्यस्य सिद्धान्तत्वम्, अन्त्यस्य पूर्वपक्षत्वमिति, तत्राह— **तत्र गत्युपपत्त्याद्य इति**। कथं गत्युपपत्त्यादयः शक्नुवन्ति मुख्यत्वादीनाभासीकर्तुमित्याशङ्क्याह— **न ह्यसत्यपीति**।

इदमिहाकूतम्— किमिदं ब्रह्मशब्दस्य मुख्यत्वम्, रूढत्वं यौगिकत्वं वा? रूढत्वं चेदपरेऽपि समानम्, 'एतद्वै सत्यकाम परं चापरं च ब्रह्म' इति प्रयोगदर्शनात्; यौगिकत्वं चेत्, न, रूढार्थग्रहणे संभवति यौगिकग्रहणानुपपत्तेः; 'रूढिर्योगमपहरति' इति न्यायात्। किं च यौगिकार्थग्रहणे ब्रह्मलोकशब्दस्य भोगभूमिविशेषरूढस्य, बहुवचनस्य, अधिकरणाधिकर्तव्यनिर्देशस्य, 'तृतीयस्यामितो दिवि' इति संख्याया, द्युशब्दश्रवणस्य, प्रजापतिसभावेश्मशब्दयोश्च विकारास्पृष्टे ब्रह्मण्यत्यन्तोपचरितार्थत्वप्रसङ्गः। तथा ऐरंमदीयस्य सरसोऽश्वत्थस्य सोमसवनस्य अपराजितायाः पुरः प्रभुनिर्मितस्य वेश्मनोऽर्णवयोः पर्यङ्कादेश्च भोग्यवस्तुजातस्य विकारास्पृष्टे ब्रह्मण्यत्यन्तासंभव एव। अतो बहूनां शब्दानामर्थानां च उपकार[चार]कल्पनाद् वरमेकस्य शब्दस्य प्रयोगमुख्यत्वातिरिक्तार्थमुख्यत्वत्यागाङ्गीकरणम्। किंच पञ्चाग्निविदामपि परब्रह्मप्राप्तौ 'तमेव विदित्वा' इत्यादिबहुशास्त्रविरोधः स्यात्[१]; अप्राप्तौ 'स एनान् ब्रह्म गमयति' इत्येतच्छब्दविरोधः; तेन प्राधान्येन प्रकृतपञ्चाग्निविद्या[विद्व्या]तिरिक्तानां ग्रहणायोगात्, तेषामनिर्दिष्टगतित्वप्रसङ्गात्।

### *भाष्यभावप्रकाशिका*

मार्गपूर्विका। **पदेरपि चेति**। प्रपद्यत इत्यत्र पदेः 'पद गता'विति गतिविषयत्वादित्यर्थः। पूर्वपक्षमुपसंहरति— **तस्मादिति**।

ननु परं जैमिनिरित्ययमेव सिद्धान्त उत्तरसूत्रत्वात्; पूर्वस्तु पूर्वपक्ष इत्याशङ्क्य युक्तिशून्यत्वान्नैवमिति दर्शयितुमाह— **तावेताविति**। ननु तत्र ब्रह्मशब्दस्य मुख्यार्थत्वं लभ्यत इति तत्राह— **न हीति**। ननु गतेः परविषयत्वं प्रकरणसामर्थ्यादुक्तमिति, तत्राह— **परविद्येति**। विष्वङ्ङन्या इति यथा ब्रह्मनाडीगमनप्रशंसार्थम्, तद्वदिदमपि परप्राप्तेर्गतिरहितायाः प्रशंसार्थमित्यर्थः। यदुक्तं

### *न्यायनिर्णयः*

हिरण्मयं वेश्म चास्ति तत्प्रपद्यते विद्वानिति दहरविद्यायां गतिपूर्विका वेश्मप्रतिपत्तिरुक्ता, **तेन** परब्रह्मण्यपि वेश्मप्रतिपत्तिसाम्याद् गतिपूर्वकत्वं तस्याः सिध्यतीत्यर्थः। किंच 'पद गता'विति स्मृतेरपि वेश्मप्रतिपत्तेर्मार्गापेक्षा भातीत्याह— **पदेरिति**। पूर्वपक्षमुपसंहरति— **तस्मादिति**।

'परं जैमिनि'रित्यादिसिद्धान्तसूत्राण्युत्तरसूत्रत्वात् पूर्वाणि पूर्वपक्षसूत्राणीत्याशङ्क्य व्यवस्थार्थं पातनिकां करोति— **ताविति**। तथापि कथं व्यवस्थेत्याशङ्क्याह— **तत्रेति**। द्वितीये पक्षे ब्रह्मशब्दस्य मुख्यार्थलाभात् तस्यैवोत्तरपक्षत्वमित्याशङ्क्याह— **न हीति**। यत्तु प्रकरणसामर्थ्यात् परविषयत्वं गतेरिति, तत्राह— **परेति**। यथा ब्रह्मनाडीगतिप्रशंसार्थं नाड्यन्तराणि विद्यासंसर्गशून्यान्येव तत्प्रकरणेऽनुकीर्त्यन्ते, तथा दहरादिविद्याश्रयगतिनिमित्तफलानुकीर्तनं परविद्याधिकारेऽपि युज्यते। तस्या गतिराहित्येऽपि तत्पूर्वकफलस्य

---

१. पञ्चाग्निविदां ब्रह्मवित्त्वाभावादिति भावः।

**इतिवत्। 'प्रजापतेः सभां वेश्म प्रपद्ये' (छा.उ. ८।१४।१) इति तु पूर्ववाक्यविच्छेदेन कार्येऽपि प्रतिपत्त्यभिसंधिर्न विरुध्यते। सगुणेऽपि च ब्रह्मणि सर्वात्मत्वसंकीर्तनं 'सर्वकर्मा सर्वकाम' (छा.उ. ३।१४।२) इत्यादिवदवकल्पते। तस्मादपरविषया एव गतिश्रुतयः।**

**केचित्पुनः पूर्वाणि पूर्वपक्षसूत्राणि भवन्त्युत्तराणि सिद्धान्तसूत्राणीत्येतां व्यवस्थामनुरुध्यमानाः परविषया**

### *प्रकटार्थविवरणम्*

किंच परब्रह्म प्राप्तानामुपचितापचितैश्वर्ये ब्रह्मणः सर्वेश्वरत्वविरोधः स्यात्। एकरूपैश्वर्ये गुणप्रत्ययवृत्त्युपचयापचयात्मकसाधनवैषम्यवैयर्थ्यं स्यात्। साधनोपचयापचयाभ्यां फलोपचयापचयदर्शनेन विरोधः स्यात्। किंच परब्रह्मभूतस्य मनःशरीरवत्तया भोगसंबन्धाभ्युपगमे 'अथायमशरीरोऽमृतः प्राणो ब्रह्मैव' इति श्रुतिविरोधः स्यात्, कलाप्रलयाधिकरणविरोधश्च। अशरीरत्वे 'मनसैतान् कामान्' 'स एकधा भवति' इत्यादिविरोधः स्यात्। किंच मुक्तस्य ब्रह्मभूतस्य पित्रादिसङ्कल्पैः भोगाभ्युपगमे ब्रह्मणः आप्तकामताश्रुतिविरोधः, अनभ्युपगमे 'तेन पितृलोकेन संपन्नो महीयते' इत्यादिशास्त्रविरोधः। किंच वैश्वानराद्युपासनस्योपास्यत्रैलोक्यात्मत्वादिफलप्राप्तौ विकारातिवर्तिब्रह्मप्राप्त्ययोगात्, अप्राप्तौ 'तं यथा यथोपासते तदेव भवति' इति विरोधात् विकार[ाति]वर्तिब्रह्मप्राप्तिद्वारेण पुनर्विकारसंबन्धाभ्युपगमे विकारातिवर्तिगमनकल्पनं व्यर्थम्। किं च ब्रह्मणो भेदेनावस्थाने 'ब्रह्मैव भवति' इति श्रुतिविरोधः, गन्तुर्गम्येनाभेदश्च न युज्यते। 'जगद्व्यापारवर्जम्' 'भोगमात्रसाम्यलिङ्गात्' इत्यादिसूत्राणां चात्यन्तासंबन्धः। यदि मुक्तस्य सर्वजीवात्मतावाप्तेः हिरण्यगर्भादिजीवगतानां भोगैश्वर्याणां तस्मिन्नन्वयात् मुख्यभोगैश्वर्यवचनानामुपपत्तिः, तर्हि तिर्यङ्नारकस्थावरादिजीवापत्ते-स्तद्गतदुःखानैश्वर्याद्यवि[द्यपि] मुक्तस्य स्यादित्यपुरुषार्थः स्यात्। अथ मुक्तौ निरतिशयानन्दमात्मानं प्राप्नुवन् तदानन्दपरिच्छदत्वाद् विषयानन्दानपि प्राप्नुवन् पित्रादिभिर्मुक्त इत्युपचर्यते, न, एकस्य ब्रह्मशब्दस्य मुख्यार्थलोभेन सर्वासां परिच्छिन्न-भोगैश्वर्यश्रुतीनामुपचरितार्थत्वकल्पनायोगात्; कार्ये तु ब्रह्मणि गन्तव्ये सर्वासां मुख्यार्थत्वमुपपद्यत इति। यच्च काठकादिषु परविद्याप्रकरणेऽपि गत्यनुकीर्तनमुक्तम्, तत्राह— **परविद्याप्रकरणेऽपीति**। अयमाशयः— प्रकरणान्निर्गुणविद्यया गतेः संबन्धोऽवगतः; भोगैश्वर्यलक्षणादर्थसामर्थ्यलिङ्गाद् भोगैश्वर्यफलवत्त्वाद् दहराद्युपासनेन च संबन्धोऽवगतः; तत्रोभयविधप्रमाणानुग्रहाय शरीरेन्द्रियादिभोगशून्ये निर्गुणज्ञाने स्तुतित्वेनान्वयः, विशिष्टभोगसंबन्धिनि दहराद्युपासने फलत्वेनान्वय इति। किं च 'विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति यथा नाड्यन्तराणां परविद्याप्रकरणे सङ्कीर्तनमात्रेण न परविद्यासंबन्धः, किंतु व्यवहितेनापि योग्यविद्याकर्मादिना, तथा मूर्धन्यनाड्या अपि भविष्यतीत्यर्थः। यच्चोक्तं परविद्याप्रकरणान्न कार्ये प्रतिपत्त्यभिसन्धिरिति, तत्राह— **प्रजापतेरिति**। 'तस्मात्पूषा प्रपिष्टभागः' इतिवत् प्रकरणादुत्कर्षेण पूर्वप्रकरणस्थदहरविद्यासंबन्धात् कार्यब्रह्मगोचरतैव प्राप्तेरित्यभिसंधिरित्यर्थः। यच्चोक्तम् 'यशोऽहं भवामि' इत्यादिसर्वात्मत्वकीर्तनम्, तत्राह— **सगुणेऽपि चेति**। यस्मात् सर्वश्रुतिव्याकोपपरिहाराय कार्यमेव ब्रह्म गमनार्हम्, तस्मादित्युपसंहारः।

एवं स्वाभिप्रायेणाधिकरणं व्याख्याय पराभिप्रायमनूद्य दूषयति— **केचित्पुनरित्यादिना**। न पूर्वत्वमुत्तरत्वं वा पूर्वपक्षत्वे

### *भाष्यभावप्रकाशिका*

कार्ये प्रतिपत्त्यभिसन्धिर्नास्तीति, तत्राह— **प्रजापतेरिति**। **पूर्ववाक्यविच्छेदेनेति**। श्रुतिवाक्ये बलीयसी प्रकरणादित्यर्थः। यदुक्तम् सर्वात्मत्वानुक्रमणात् परविषयत्वमिति, तत्राह— **सगुणेऽपीति**। प्रशंसनार्थमुपासनार्थं वा तदित्यर्थः।

### *न्यायनिर्णयः*

तयैव सिद्धेर्महतीयं विद्या निरतिशयैश्वर्यहेतुत्वादिति स्तुतिप्रकर्षसंभवादित्यर्थः। यत्तु कार्ये प्रतिपत्त्यभिसंधिर्नास्तीति, तत्राह— **प्रजेति**। श्रुतिवाक्याभ्यां प्रकरणं हेयमिति भावः। यत्तु सर्वात्मत्वानुक्रमणात् परविषयत्वं प्रतिपत्त्यभिसंधेरिति, तत्राह— **सगुणेऽपीति**। प्रशंसार्थमुपास्त्यर्थं वा तदनुक्रमणमित्यर्थः। परविषयगत्ययोगे फलितमाह— **तस्मादिति**।

पक्षान्तरमनुभाष्य दूषयति— **केचिदित्यादिना**। ब्रह्मणो गन्तव्यत्वानुपपत्तिमुपपादयति— **यदिति**। यदुक्तविशेषणं परं ब्रह्म

**एव गतिश्रुतीः प्रतिष्ठापयन्ति। तदनुपपन्नम्, गन्तव्यत्वानुपपत्तेर्ब्रह्मणः। यत् सर्वगतं सर्वान्तरं सर्वात्मकं च परं ब्रह्म 'आकाशवत्सर्वगतश्च नित्यः', 'यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः' (बृ.उ. ३।४।१), 'आत्मैवेदं सर्वम्' (छा.उ. ७।२५।२), 'ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' (मु.उ. २।२।११) इत्यादि-श्रुतिनिर्धारितविशेषं तस्य गन्तव्यता न कदाचिदप्युपपद्यते। न हि गतमेव गम्यते। अन्यो ह्यन्यद् गच्छतीति प्रसिद्धं लोके। ननु लोके गतस्यापि गन्तव्यता देशान्तरविशिष्टा[1] दृष्टा। यथा पृथिवीस्थ एव पृथिवीं देशान्तरद्वारेण गच्छतीति। तथाऽनन्यत्वेऽपि बालस्य कालान्तरविशिष्टं वार्धकं स्वात्मभूतमेव गन्तव्यं दृष्टम्, तद्वद् ब्रह्मणोऽपि सर्वशक्त्युपेतत्वात् कथंचिद् गन्तव्यता स्यादिति। न, प्रतिषिद्धसर्वविशेषत्वाद् ब्रह्मणः। 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे.उ. ६।१९) 'अस्थूलमनणवह्रस्वमदीर्घम्' (बृ.उ. ३।८।८) 'सबाह्याभ्यन्तरो ह्यजः' (मु.उ. २।१।२) 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ.उ. ४।४।२५) 'स एष नेति नेत्यात्मा' (बृ.उ. ३।९।२६) इत्यादिश्रुतिस्मृतिन्यायेभ्यो न देशकालादि-**

### *प्रकटार्थविवरणम्*

सिद्धान्तत्वे वा प्रयोजकम्, किंतु न्यायाघातासहिष्णुत्वं तत्सहिष्णुत्वं च; न च ब्रह्मणो गन्तव्यत्वं न्यायसहम्। तथा हि— परं ब्रह्म न गन्तव्यम्, सर्वगतत्वात्, सर्वान्तरत्वाद्वा, न यदेवं न तदेवम्, यथा नगरम्।

यदत्र **भास्करेणापि** शुना बुबुक्के, 'यदि सर्वगतत्वाद् ब्रह्मणो गन्तव्यत्वानुपपत्तिः, तर्हि कार्यब्रह्मणोऽपि सर्वगतत्वाविशेषात् गन्तव्यता न स्यात्, अथ लिङ्गानवच्छिन्नस्य तत्र गमनमवकल्पते, तर्हि तथाऽत्रापि भविष्यति' इति, तदशोभनम्। तथा हि— लिङ्गाभावे किं पुष्कलकारणम्? विद्या वा अमानवकरस्पर्शो वा, विकारावर्तिब्रह्मप्राप्तिर्वा? विद्या चेत्, अन्त्यकाले स्यात् लिङ्गवियोगः; पुष्कलकारणे सत्यपि कार्यं नोत्पद्यते, कालान्तरे तूत्पद्यत इति कल्पनानुपपत्तेः। अमानवकरस्पर्शश्चेत् वैद्युते स्यात्, तत ऊर्ध्वं निरुपाधिकगमनानुपपत्तेः। विकारावर्तिब्रह्मप्राप्तिश्चेत्, तत्र विकारावर्तीति कोऽर्थः? किं विकारदोषास्पृष्टम्, किं वा विकारदेशाद् देशान्तरवर्ति? प्रथमे नभोवत् स्वभावविशेषादत्रापि तद्दोषास्पृष्टमिति गमनायोगः; चरमे स्वतः परिच्छिन्नत्वेनानित्यत्वादिदोषः; सगुणस्य तु स्वरूपेण सर्वगतस्यापि भोगदेहस्य देशान्तरवर्तित्वाद् गमनमुपपद्यते।

तर्हि इहापि स्वरूपेण सर्वगतस्य देशान्तरावच्छिन्नं रूपं गन्तव्यं भविष्यतीत्याह— **ननु लोके गतस्यापीति**। ब्रह्मणो निरस्तसमस्तविशेषत्वाद् देशान्तरावच्छिन्नं रूपं कल्पितमेव गन्तव्यं स्यादित्याह— **न, प्रतिषिद्धेति**। प्रतिषिद्धसर्वविशेषत्वम-

### *भाष्यभावप्रकाशिका*

परेषां मतमुपन्यस्य दूषयति— **केचिदित्यादिना**। एवंरूपत्वे प्रमाणमाह— **आकाशवदित्यादिना**। अनुपपत्तिमेव दर्शयति— **न हि गतमेवेति**। सर्वगतत्वात् गन्तव्यत्वमनुपपन्नमिति यदुक्तम्, तत्राह— **तथाऽनन्यत्वेऽपीति**। परिहरति— **न प्रतिषिद्धेति**।

### *न्यायनिर्णयः*

तस्य कदाचिदपि न गन्तव्यतेति संबन्धः। तस्य सर्वगतत्वे मानमाह— **आकाशवदिति**। सर्वान्तरत्वेऽपि श्रुतिमाह— **यदिति**। सर्वात्मकत्वेऽपि श्रुतिमाह— **आत्मैवेति**। अनुपपत्तिमेव स्फोरयति— **न हीति**। गतेरकिंचित्करत्वादित्यर्थः। प्राप्ते प्राप्तिफला गतिरयुक्तेत्येतद् व्यतिरेकेण स्फुटयति— **अन्यो हीति**। स्वरूपेण प्राप्तस्यापि ब्रह्मणो विकारापत्तितया गन्तव्यतासिद्धिरिति दृष्टान्तेन शङ्कते— **नन्विति**। सर्वगतस्यायुक्ता गन्तव्यतेत्युक्तं प्रत्याह— **तथेति**। अनन्यत्वं साधनसाध्यत्वं विना प्राप्तत्वम्। यत्तु प्रत्यगात्मत्वाद् ब्रह्मणो न गन्तव्यतेति, तत्राह— **स्वात्मेति**। एकस्यैव ब्रह्मणो गन्तृगन्तव्यता सिध्यतीत्यत्र हेतुमाह— **सर्वेति**। तथापि ग्रामादिवन्न गन्तव्यतेत्याशङ्क्याह— **कथंचिदिति**। वैषम्यं दर्शयन्नाह— **नेत्यादिना**। ब्रह्मणो निर्विशेषत्वे मानमाह— **निष्कलमित्यादिना**।

---

१. 'देशान्तरविशिष्टस्य' इति पा.।

**विशेषयोगः परमात्मनि कल्पयितुं शक्यते, येन भूप्रदेशवयोवस्थान्यायेनास्य गन्तव्यता स्यात्। भूवयसोस्तु प्रदेशावस्थादिविशेषयोगादुपपद्यते देशकालविशिष्टा गन्तव्यता। जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेरनेकशक्तित्वं ब्रह्मण इति चेत्? न; विशेषनिराकरणश्रुतीनामनन्यार्थत्वात्। उत्पत्त्यादिश्रुतीनामपि समानमनन्यार्थत्वमिति चेत्? न; तासामेकत्वप्रतिपादनपरत्वात्। मृदादिदृष्टान्तैर्हि सतो ब्रह्मण एकस्य सत्यत्वं विकारस्य चानृतत्वं प्रतिपादयच्छास्त्रं नोत्पत्त्यादिपरं भवितुमर्हति। कस्मात्पुनरुत्पत्त्यादिश्रुतीनां विशेषनिराकरणश्रुतिशेषत्वम्, न पुनरितरशेषत्वमितरासामिति। उच्यते– विशेषनिराकरणश्रुतीनां निराकाङ्क्षार्थत्वात्। न ह्यात्मन एकत्वनित्यत्व-शुद्धत्वाद्यवगतौ सत्यां भूयः काचिदाकाङ्क्षोपजायते पुरुषार्थसमाप्तिबुद्ध्युपपत्तेः 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' (ई.उ. ७), 'अभयं वै जनक प्राप्तोऽसि' (बृ.उ. ४।२।४), 'विद्वान्न बिभेति कुतश्चन। एतं ह वाव न तपति। किमहं साधु नाकरवम्, किमहं पापमकरवम्' (तै.उ. २।९।१) इत्यादिश्रुतिभ्यः।**

### *प्रकटार्थविवरणम्*

सिद्धमित्याह— **जगदुत्पत्तीति**। प्रतिषिद्धसर्वविशेषं ब्रह्म न भवति चेत् तदा (विशेषा)विशेषनिराकरणश्रुतीनामन्यस्यार्थस्यासंभवात् वैयर्थ्यमापद्यत इत्याह— **न विशेषेति**। तर्ह्युत्पत्त्यादिश्रुतीनामप्यन्योऽर्थो नास्तीति वैयर्थ्यं समानमित्याह— **उत्पत्त्यादीति**। उत्पत्त्यादिश्रुतीनामर्थान्तरमाह सिद्धान्ती— **न तासामिति**।

पूर्ववादी विनिगमनकारणं पृच्छति— **कस्मात्पुनरिति**। 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायेन विशेषनिराकरणश्रुतीनां निराकाङ्क्षपुरुषार्थपर्यवसायित्वात् शेषित्वमित्याह— **उच्यत इत्यादिना**। (उत्पत्त्यादिश्रुतीनामर्थान्तरमाह।) प्रतिबद्धं किंचित्फलं न

### *भाष्यभावप्रकाशिका*

ननु सर्वशक्तित्वादुपपन्नमित्युक्तमिति शङ्कते— **जगदुत्पत्तीति**। अपरिणामिनोऽकारणत्वात् कारणत्वाय परिणामित्वं कार्यप्रतियोगि-शक्तिमत्त्वञ्चास्तीति गन्तव्यत्वं स्यादित्यर्थः। विशेषनिराकरणस्य समस्तशोकादिदुःखनिरासफलकत्वादुत्पत्त्यादिविधानस्य चाफल-त्वात्फलवत्सन्निधौ तदुच्यमानं तदर्थमेवोच्यत इति न्यायात्र सविशेषत्वं ब्रह्मण इत्याह— **न विशे(षेति।)षनिराकरणेति**। फलवत्तया नैराकाङ्क्ष्यमेव दर्शयति— **न ह्यात्मन इति**। विद्वदनुभवसिद्धं चैतत्फलमित्याह— **तथैव विदुषामिति**। द्वैतस्य निन्द्यमानत्वादपि न प्रतिपाद्यत्वमित्याह— **विकारानृतेति**। न केवलं युक्तिमात्रेण, श्रुतिसामर्थ्यादपि तदन्यार्थत्वमवगन्तव्यमित्याह—

### *न्यायनिर्णयः*

'अनादिमत्परं ब्रह्म' इत्याद्या स्मृतिः। न्यायस्तु विशेषाणां [1]'तद्द्रष्टृनिविष्टत्वेन दृश्यत्वासिद्धिरंशतः स्वदृश्यत्वापातात्, न च तद्दृश्यत्वं विना तत्सिद्धिर्जडत्वात्, स्वतःसिद्धत्वे चात्मानतिरेकात्, तस्मात् तस्य निर्विशेषतेति। देशकालादीत्यादिशब्देनावस्थावयवादि गृह्यते। निर्विशेषत्वे फलितमाह— **येनेति**। येन सविशेषत्वेन भूप्रदेशादिदृष्टान्तेन ब्रह्मणो गन्तव्यता न तथा तस्य सविशेषतेति योजना। दृष्टान्तेऽपि कथं गतस्यैव गन्तव्यतेत्याशङ्क्याह— **भूवयसोस्त्विति**। अवस्थादीत्यादिशब्देनावयवपरिणामादिग्रहः। सर्वशक्तित्वाद् युक्तं ब्रह्मणो विशेषवत्त्वेन गन्तव्यत्वमित्युक्तं स्मारयति— **जगदिति**। अपरिणामिनोऽकारकत्वात् तत्कारणत्वाय परिणामित्वं कार्यप्रतियोगिशक्तिमत्त्वं चास्तीति कुतो गन्तव्यत्वासिद्धिरित्यर्थः। विशेषनिराकरणस्य निःशेषशोकादिनिरासफलत्वादुत्पत्त्यादिविधानस्य चाफलत्वात् फलवत्संनिधावफलं तदङ्गमिति न्यायात्र ब्रह्मणः सविशेषतेति दूषयति— **नेत्यादिना**। उक्तमेवार्थं चोद्यसमाधिभ्यां विवृण्वन्नादौ चोद्यं दर्शयति— **उत्पत्त्यादीति**। तासामनन्यार्थत्वमसिद्धमित्याह— **नेति**। एकत्वपरत्वमुपपादयति— **मृदादीति**। शेषशेषित्वे नियामकाभावमादाय शङ्कते— **कस्मादिति**। नियामकं दर्शयति— **उच्यत इति**। फलवत्तया नैराकाङ्क्ष्यं स्फोरयति— **न हीति**। एकत्वज्ञाने सर्वाकाङ्क्षाशान्तिरित्यत्र श्रुतीराह— **तत्रेत्यादिना**। श्रौते विद्याफले विद्वदनुभवमनुकूलयति— **तथैवेति**।

१. 'तद्द्रष्टृनिविष्टत्वे तद्दृश्यत्वासिद्धिः' इति पाठान्तरं समीचीनम्।

**तथैव च विदुषां तुष्ट्यनुभवादिदर्शनात्। विकारानृताभिसंध्यपवादाच्च 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (क.उ. ४।१०) इति, अतो न विशेषनिराकरणश्रुतीनामन्यशेषत्वमवगन्तुं शक्यते। नैवमुत्पत्त्यादिश्रुतीनां निराकाङ्क्षार्थप्रतिपादनसामर्थ्यमस्ति। प्रत्यक्षं तु तासामन्यार्थत्वं समनुगम्यते। तथाहि-'तत्रैतच्छुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यति' (छा.उ. ६।८।३) इत्युपन्यस्योदर्के सत एवैकस्य जगन्मूलस्य विज्ञेयत्वं दर्शयति। 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद् ब्रह्म' (तै.उ. ३।१।१) इति च। एवमुत्पत्त्यादिश्रुतीनामैकात्म्यावगमपरत्वान्नानेकशक्तियोगो ब्रह्मणः। अतश्च गन्तव्यत्वानुपपत्तिः। 'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' (बृ.उ. ४।४।६) इति च परस्मिन् ब्रह्मणि गतिं निवारयति। तद् व्याख्यातम्- 'स्पष्टो ह्येकेषाम्' (ब्र.सू. ४।२।१३) इत्यत्र।**

**गतिकल्पनायां च गन्ता जीवो गन्तव्यस्य ब्रह्मणोऽवयवो विकारो वाऽन्यो वा ततः स्यात्। अत्यन्ततादात्म्ये गमनानुपपत्तेः। यद्येवम्, ततः किं स्यात्[१]? उच्यते। यद्येकदेशस्तेनैकदेशिनो नित्यप्राप्तत्वान्न**

### *प्रकटार्थविवरणम्*

श्रूयत इत्येतावदेव न भवति, किं तु साक्षाच्छुत्यैवोत्पत्त्यादिप्रतिपादनस्यान्यशेषत्वमुक्तमित्याह— **प्रत्यक्षं त्विति**। फलितमाह— **एवमुत्पत्त्यादिश्रुतीनामिति**। श्रुतिरपि परमार्थस्य ब्रह्मणो गन्तव्यतां वारयतीत्याह— **न तस्येति**।

पूर्वं गन्तव्यस्वभावपर्यालोचनया गमनानुपपत्तिमुक्त्वा अधुना गन्तृस्वभावपर्यालोचनयाऽपि गमनानुपपत्तिरित्याह— **गतिकल्पनायां**

### *भाष्यभावप्रकाशिका*

**प्रत्यक्षन्त्विति**। 'तेजसा सौम्य शुङ्गेन सन्मूलमन्विच्छे'ति सत एवोत्तरत्र कार्यलिङ्गेन विज्ञेयत्वप्रतिपादनादित्यर्थः। उपसंहरति— **एवमुत्पत्त्यादीति**। न केवलमुपपत्त्या गन्तव्यत्वानुपपत्तिर्गतिनिषेधकश्रुतितोऽपीत्याह— **न तस्य प्राणा इति**। अस्याप्यन्य एवार्थ इत्या[शङ्क्या]ह— **तद् व्याख्यातमिति**।

पूर्वं गन्तव्यस्वभावालोचनया गतिरनुपपन्नेत्युक्तम्। इदानीं गन्तृस्वभावालोचनयाऽपि गतिरनुपपन्नेत्याह— **गतिकल्पनायामिति**। अन्यानन्यत्वाश्रयावयवत्वविकारपक्षौ, अन्यो वेत्यन्तभेदाश्रयः। कस्मात्पुनरात्यन्तिकमनन्यत्वं न विकल्प्यत इत्यत आह— **अत्यन्ततादात्म्य इति**। आद्यपक्षं दूषयति— **यद्येकदेश इति**। पक्ष एव चायमनुपपन्न इत्याह— **एकदेशेति**। पक्षद्वयेऽप्यनुपपत्तिमाह—

### *न्यायनिर्णयः*

द्वैतस्य निन्द्यमानत्वादपि न प्रतिपाद्यतेत्याह— **विकारेति**। विशेषनिषेधश्रुतीनां निराकाङ्क्षज्ञानोत्पादकत्वे फलितमाह— **अतो नेति**। तुल्यमुत्पत्त्यादिश्रुतीनामपि तथाविधधीजनकत्वमित्याशङ्क्याह— **नैवमिति**। न केवलं युक्तिमात्रेणोत्पत्त्यादिश्रुतीनामन्यार्थत्वं किंतु श्रुतिसामर्थ्यादपीत्याह— **प्रत्यक्षं त्विति**। तत्र छन्दोगश्रुत्या तासामन्यार्थत्वं स्फुटयति— **तथा हीति**। तत्रेति मूलकारणोक्तिः। एतच्छुङ्गं जगदात्मकं कार्यमुत्पतितमुत्पन्नमिति यावत्। 'तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छे'ति सत एवोत्तरत्र कार्यलिङ्गेन ज्ञेयत्वोक्तेः 'तत्तेजोऽसृजते'त्यादिश्रुतीनां तच्छेषत्वं सिद्धमित्यर्थः। तैत्तिरीयश्रुत्याऽपि जन्मादिश्रुतीनामैक्यधीशेषत्वमाह— **यत इति**। तासामन्यपरत्वे फलितमाह— **एवमिति**। ब्रह्मणोऽनेकशक्तिमत्त्वाभावेऽपि न परविषया गतिरित्यत्र किमायातं, तदाह— **अतश्चेति**। इतश्च परविषये न गतिरित्याह— **न तस्येति**। 'न तस्मादि'ति माध्यंदिनश्रुत्या निषेधश्रुतेरन्यार्थत्वमाशङ्क्योक्तं स्मारयति— **तदिति**। गन्तव्यरूपालोचनया गतिरयुक्तेत्युक्तम्। अधुना गन्तृरूपालोचनयाऽपि सा न युक्तेति वक्तुं विकल्पयति— **गतीति**। अन्यानन्यत्वमाश्रित्याद्यौ विकल्पावत्यन्तभेदमाश्रित्यान्त्य इति भेदः। आत्यन्तिकमनन्यत्वं किमिति न विकल्प्यते, तत्राह— **अत्यन्तेति**। कल्पत्रयेऽपि दोषजिज्ञासया पृच्छति— **यदीति**। पक्षत्रयेऽपि दोषमाह— **उच्यत इति**। आद्यमनूद्य प्रत्याह— **यदीति**। प्रथमपक्षस्योत्थानमेव नास्तीत्याह— **एकदेशेति**।

१. 'स्यादिति' इति पा.।

**पुनर्ब्रह्मगमनमुपपद्यते। एकदेशैकदेशित्वकल्पना च ब्रह्मण्यनुपपन्ना, निरवयवत्वप्रसिद्धेः। विकारपक्षेऽप्येतत् तुल्यं, विकारेणापि विकारिणो नित्यप्राप्तत्वात्। न हि घटो मृदात्मतां परित्यज्यावतिष्ठते, परित्यागे वाऽभावप्राप्तेः। विकारावयवपक्षयोश्च तद्वतः [१]स्थिरत्वात् ब्रह्मणः संसारगमनमप्यनवक्लृप्तम्। अथान्य एव जीवो ब्रह्मणः। सोऽणुर्व्यापी मध्यमपरिमाणो वा भवितुमर्हति। व्यापित्वे गमनानुपपत्तिः। मध्यमपरिमाणत्वे चानित्यत्वप्रसङ्गः। अणुत्वे कृत्स्नशरीरवेदनानुपपत्तिः। प्रतिषिद्धे चाणुत्वमध्यमपरिमाणत्वे विस्तरेण पुरस्तात्। परस्माच्चान्यत्वे जीवस्य 'तत्त्वमसि' (छा.उ. ६।८।७) इत्यादिशास्त्रबाधप्रसङ्गः। विकारावयवपक्षयोरपि समानोऽयं दोषः। विकारावयवयोस्तद्वतोऽनन्यत्वाददोष इति चेत्? न; मुख्यैकत्वानुपपत्तेः। सर्वेष्वेतेषु**

### *प्रकटार्थविवरणम्*

**चेत्यादिना**। एकैकपक्षे दोषमुक्त्वा उभयत्र साधारणं दोषमाह— **विकारावयवपक्षयोश्चेति**। यथा (वि)देहावयवेषु मलसंसृष्टेषु अवयवी देहो मलिनो भवति, यथा वा पटे मलिने तन्तवः, **[१]तद्वतः** संसारिविकारावयववतो ब्रह्मणः **स्थिततत्वादिति** विकारावयवानुगतत्वेन स्थिततत्वात् संसारगमन**मनवक्लृप्त**मघटमानं प्रसज्येतेत्यर्थः। तृतीयविकल्पमनूद्य दूषयति— **अथान्य एवेत्यादिना**। एकत्वप्रतिपादकशास्त्रविरोधलक्षणोऽयं दोषः समान इत्युक्तम्। तत्र भेदाभेदवाद्याह— **विकारावयवयोरिति**। 'तत्त्वमसि' इति सामानाधिकरण्यमेकद्रव्यनिष्ठम्, अकार्यकारणद्रव्याभिधायिसामानाधिकरण्यात्, 'सोऽयं देवदत्तः' इति सामानाधिकरण्यवत्। भेदाभेदे तु न मुख्यं द्रव्यैक्यमिति भवति शास्त्रविरोध इत्याह— **न, मुख्यैकत्वेति**। विकारावयवात्यन्तभेदपक्षे तु दोषान्तरमाह— **सर्वेषु चेति**। स्वाभाविकसंसारित्वस्य ज्ञानेन निवृत्त्यनुपपत्तेः, स्वाभाविकस्यापि प्रकारान्तरेण निवृत्तौ वा जीवस्वरूपनाशप्रसङ्गः, औष्ण्यप्रकाशविगम इवाग्नेरित्यर्थः। ननु तवापि स्वाभाविकमेव संसारित्वम्, सादित्वे संसारित्वस्य मुक्तबन्धप्रसङ्गादित्यावयोः

### *भाष्यभावप्रकाशिका*

**विकारावयवेति**। विकारावयववतो ब्रह्मणः सह विकारावयवैश्चलत्वाभावाद् विकारावयवपक्षयोर्जीवानां संसारगमनलक्षणं चलनमनुपपन्नं....त्वासंभवादन्यानन्यात्मकत्वस्य चानुपपत्तेरिति भावः। तृतीयविकल्पं त्रिधा विकल्प्य दूषयति— **सोऽणुरिति**। **अनित्यत्वप्रसङ्ग इति**। घटादीनामनित्यत्वादित्यर्थः। पक्षोऽप्ययं श्रुतिविरुद्ध इत्याह— **परस्माच्चेति**। **न, मुख्यैकत्वानुपपत्तेरिति**। भेदाभेदयोर्विरोधिनोरेकत्रासंभवात् बुद्धिर्व्य[व्यपदेशभे]दाद्विकारावयवयोस्तद्वतो भेदे सत्ययुतसिद्धत्वादुपचारेणाभेदो व्यपदिश्यत इत्यमुख्यञ्जीवस्यैकत्वं स्यादित्यर्थः। एषु पक्षेषु संसारित्वस्य तात्त्विकत्वात् तस्यात्यन्तिकनाशे जीवस्वभावनाशोऽपि स्यादित्याह— **सर्वेषु चेति**।

मतान्तरं दूषयितुमुपन्यस्यति— **यत्तु कैश्चिदिति**। कर्मनिमित्तत्वात् संसारस्य तदभावे संसाराभावान्मुक्तिः, कफनिमित्त-

### *न्यायनिर्णयः*

उक्तदोषसाम्याद् द्वितीयं निराह— **विकारेति**। नित्यप्राप्तत्वं दृष्टान्तेन स्पष्टयति— **न हीति**। विपक्षे दोषमाह— **परित्यागे वेति**। पक्षद्वयेऽपि दोषान्तरमाह— **विकारेति**। ब्रह्म सविकारं सावयवं चेष्टम्, तस्य सह विकारैरवयवैश्च निश्चलत्वात् कुतो जीवानां संसारगमनरूपं चलनम्, न हि स्थिरात्मनामस्थिरत्वं युक्तमन्यानन्यत्वं च विरुद्धत्वान्नोपगन्तुं शक्यमित्यर्थः। तृतीयमनुवदति— **अथेति**। तं त्रेधा विकल्प्य दूषयति— **सोऽणुरित्यादिना**। अनित्यत्वप्रसङ्गो घटादिषु तथा दृष्टेरिति शेषः। पक्षद्वयानुपपत्तिं तर्कपादे वियत्पादे चोक्तां स्मारयति— **प्रतिषिद्धे चेति**। अन्यत्वपक्षे श्रुतिविरोधं दोषान्तरमाह— **परस्माच्चेति**। पूर्वोक्तेऽपि पक्षद्वये श्रुतिविरोधस्य तुल्यत्वमाह— **विकारेति**। तयोस्तद्वतोऽन्यत्ववदनन्यत्वस्यापि भावान्नेति शङ्कते— **विकारेति**। भेदाभेदयोर्विरोधिनोरेकत्रायोगाद् बुद्धिव्यपदेशभेदाद् विकारावयवयोस्तद्वतो भेदे सत्ययुतसिद्धत्वादुपचारेणाभेदोक्तिरित्यमुख्यं जीवस्य ब्रह्मैक्यं स्यादित्याह— **नेति**। किंच पक्षत्रयेऽपि संसारित्वस्य तात्त्विकत्वात् तस्यात्यन्तिकनाशे जीवरूपनाशादयुक्तं पक्षत्रयमपीत्याह—

---

१. स्थितत्वादिति प्रकटार्थधृतः पाठः। २. 'तथा' इत्यध्याहृत्य ग्रन्थो योज्यः।

**पक्षेष्वनिर्मोक्षप्रसङ्गः, संसार्यात्मत्वानिवृत्तेः। निवृत्तौ वा स्वरूपनाशप्रसङ्गः। ब्रह्मात्मत्वानभ्युपगमाच्च।**

**[1]यत्तु कैश्चिज्जल्प्यते–नित्यानि नैमित्तिकानि च कर्माण्यनुष्ठीयन्ते प्रत्यवायानुत्पत्तये, काम्यानि प्रतिषिद्धानि च परिह्रियन्ते स्वर्गनरकानवाप्तये; साम्प्रतदेहोपभोग्यानि च कर्माण्युपभोगेनैव क्षप्यन्त इत्यतो वर्तमानदेहपातादूर्ध्वं देहान्तरप्रतिसंधानकारणाभावात् स्वरूपावस्थानलक्षणं कैवल्यं विनाऽपि ब्रह्मात्मतयैवंवृत्तस्य सेत्स्यतीति। तदसत्। प्रमाणाभावात्। न ह्येतच्छास्त्रेण केनचित् प्रतिपादितम्, मोक्षार्थीत्थं समाचरेदिति। स्वमनीषया त्वेतत्तर्कितं यस्मात् कर्मनिमित्तः संसारस्तस्मान्निमित्ताभावान्न भविष्यतीति। न चैतत् तर्कयितुमपि शक्यते निमित्ताभावस्य दुर्ज्ञानत्वात्। बहूनि हि कर्माणि जात्यन्तरसंचितानीष्टानिष्टविपाकान्येकैकस्य जन्तोः संभाव्यन्ते। तेषां विरुद्धफलानां युगपदुपभोगासंभवात् कानिचिल्लब्धावसराणीदं जन्म निर्मिमते, कानिचित्तु देशकालनिमित्त-प्रतीक्षाण्यासत इत्यतस्तेषामवशिष्टानां साम्प्रतेनोपभोगेन क्षपणासंभवान्न यथावर्णितचरितस्यापि वर्तमानदेहपाते देहान्तरनिमित्ताभावः शक्यते निश्चेतुम्। कर्मशेषसद्भावसिद्धिश्च– 'तद्य इह रमणीयचरणाः' (छा.उ.**

### *प्रकटार्थविवरणम्*

समानगतित्वमित्याशङ्क्याह— **ब्रह्मात्मत्वानभ्युपगमादिति**। चित्प्रतिबिम्बस्य जीवस्य स्वाभाविकी बिम्बभूतब्रह्मात्मता, अनाद्यविद्योपाधिकं संसारित्वम्; तस्य विद्यया निवृत्तौ स्वरूपावस्थानमुपपद्यते।

यत्तु संसारित्वातिरिक्तब्रह्मात्मतानभ्युपगमेऽपि प्रकारान्तरेण मोक्षोपपत्तिरिति **कर्ममीमांसकाः**; तन्मतं प्रसङ्गादुद्भावयति— **यत्तु कैश्चिदित्यादिना**। अतीन्द्रियेऽर्थे शास्त्रमेव शरणं वेदवादिनाम्, न त्वस्मिन्नर्थे किमपि शास्त्रमस्तीत्याह— **तदसदिति**। कथं तर्हि वेदवादिभिरेव कैश्चिदुक्तम्—'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः' इत्यादि, तत्राह— **स्वमनीषिकयेति**। दुर्ज्ञानत्वं विवृणोति— **बहूनि कर्माणीत्यादिना**। ननु तवाप्येतत् तर्कमात्रम्, बहूनां विरुद्धफलानाम् एकस्मिन् देहे भोगासंभवादस्ति कर्मावशिष्टमिति, नेत्याह— **कर्मशेषसद्भावसिद्धिश्चेति**। अनारब्धफलानि कर्माणि सन्तु, तेषां नित्याद्यनुष्ठानात् क्षयो भविष्यतीत्याह—

### *भाष्यभावप्रकाशिका*

जन्यज्वरस्योपात्तकफस्य शोषणादिभिः प्रक्षये कफान्तरोत्पत्तिनिमित्तमात्रद्रव्यादिवर्जने च विनाशवदित्यर्थः। दूषयति— **तदसदिति**। स्वोत्प्रेक्षितमपि युक्तियुक्तत्वादङ्गीकरणीयमित्याशङ्क्य तदपि नास्तीत्याह— **न चैतदिति**। नन्वैकभविकत्वात् कर्माशयस्य साम्प्रतेनोपभोगेन क्षपणं संभवतीति तत्राह— **कर्मशेषेति**। 'कृतात्ययेऽनुशयवानि'त्यत्रैकभविकत्वं दूषितमित्यर्थः। यदि नित्यनैमित्तिककर्मणां सुकृतविरोधित्वं

### *न्यायनिर्णयः*

**सर्वेष्विति**। संसारित्वे निवृत्तेऽपि सिद्धान्तवन्न जीवरूपनाशप्रसक्तिरित्याशङ्क्याह— **ब्रह्मेति**।

संसारस्य कर्मनिमित्तत्वात् तदभावेऽभावान्मुक्तिरनायाससिद्धेति मतं दर्शयति— **यत्त्विति**। देहान्तरप्रतिसंधानं तेन संबन्धस्तद्ग्रहणमिति यावत्। **एवंवृत्तस्य** नित्याद्यनुष्ठानवतो वर्णितचरितस्य मुमुक्षोरित्यर्थः। किं शास्त्रादेवमुच्यते, किंवा तर्कादिति विकल्प्याद्यं प्रत्याह— **तदसदिति**। प्रमाणाभावं प्रकटयति— **न हीति**। द्वितीयमनुवदति— **स्वेति**। स्वोत्प्रेक्षितमपि युक्तत्वादेष्टव्यमिति पक्षं प्रत्याह— **न चेति**। निमित्ताभावस्य दुर्ज्ञानत्वं प्रपञ्चयति— **बहूनीति**। सर्वाण्येव तानि मुमुक्षुदेहे भोगेन क्षपितानीत्याशङ्क्याह— **तेषामिति**। अनुपभुक्तकर्मणा देहान्तरसंभवान्नित्याद्यनुष्ठानवतोऽपि तत्त्वज्ञानं विना नास्ति मोक्षाशेति फलितमाह— **इत्यत इति**। ऐकभविकत्वात् कर्माशयस्य वर्तमानभोगेन क्षपणसंभवान्मोक्षसिद्धिरित्याशङ्क्य 'कृतात्ययेऽनुशयवानि'-त्यत्रैकभविकत्वं दूषितमिति मत्वाऽऽह— **कर्मेति**। अनारब्धफलानामपि कर्मणां नित्यनैमित्तिकेभ्यो निवृत्तेरुक्तचरितस्य मुक्तिरिति

---

१. द्र. श्लो.वा. संबन्धाक्षेपपरिहारः—श्लो. १०६-१११ तथा तं.वा. १-२-२९ तथा टुप्टीका ६-३-२।

**५।१०।७) 'ततः शेषेण' (गौ.ध.सू. ११।१३) इत्यादिश्रुतिस्मृतिभ्यः। स्यादेतत्– नित्यनैमित्तिकानि तेषां क्षेपकाणि भविष्यन्तीति। तन्न; विरोधाभावात्। सति हि विरोधे क्षेप्यक्षेपकभावो भवति। न च जन्मान्तर-संचितानां सुकृतानां नित्यनैमित्तिकैरस्ति विरोधः। शुद्धिरूपत्वाविशेषात्। दुरितानां त्वशुद्धिरूपत्वात् सति विरोधे भवतु क्षपणम्, न तु तावता देहान्तरनिमित्ताभावसिद्धिः। सुकृतनिमित्तत्वोपपत्तेः। [१]दुश्चरितस्याप्य-शेषक्षपणानवगमात्। न च नित्यनैमित्तिकानुष्ठानात् प्रत्यवायानुत्पत्तिमात्रम्, न पुनः फलान्तरोत्पत्तिरिति प्रमाणमस्ति, फलान्तरस्याप्यनुनिष्पादिनः संभवात्। स्मरति ह्यापस्तम्बः– 'तद्यथाऽऽम्रे फलार्थे निमिते [२]छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते' (आ.ध.सू. १।७।२०।३) इति। न चासति सम्यग्दर्शने सर्वात्मना काम्यप्रतिषिद्धवर्जनं जन्मप्रायणान्तराले केनचित् प्रतिज्ञातुं शक्यम्। सुनिपुणानामपि सूक्ष्मापराधदर्शनात्। संशयितव्यं तु भवति, तथापि निमित्ताभावस्य दुर्ज्ञानत्वमेव। न चानभ्युपगम्यमाने**

### *प्रकटार्थविवरणम्*

**स्यादेतदिति**। जन्मान्तरसञ्चितानां [शुभानां] नित्यानुष्ठानेन क्षयः उत अशुभानाम्? तत्राद्यं निराचष्टे— **तन्न, विरोधाभावादिति**। ततः द्वितीयमनुजानाति— **दुरितानां त्विति**। नित्यानुष्ठानादशुभक्षयमभ्युपगम्य तथापि तव नाभिमतसिद्धिरित्युक्तम्। इदानीं नित्यानुष्ठानान्निश्शेषपापक्षयो भवतीत्यत्रापि न प्रमाणमित्याह— **दुरितस्यापीति**। यच्चोक्तम्— 'नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया' इति, तत्राह— **न च नित्येति**। नित्यानुष्ठाने क्रियमाणे तावत् प्रत्यवायप्रागभावस्वीकारः फलान्तरं च अनु पश्चात् देहपातादूर्ध्वं निष्पद्यते 'कर्मणा पितृलोकः' इति श्रुतेः। तत्संभवात्र यथोक्तचरितस्य मोक्षोपपत्तिरित्यर्थः। फलान्तरसंभवे स्मृतिमपि प्रमाणयति— **स्मरतीति**। निमित्ते निर्मिते। यथोक्तं[यच्चोक्तं]काम्यप्रतिषिद्धवर्जम् [र्जमिति] तत्राह— **न चासतीति**। ननु क्रियत एव काम्यादीत्यपि निश्चयो नास्तीत्याशङ्क्याह— **संशयितव्यं त्विति**। यच्चोक्तं विनाऽपि ब्रह्मात्मतया कैवल्यं सेत्स्यतीति, तत्राह— **न चानभ्युपगम्यमान**

### *भाष्यभावप्रकाशिका*

तदा काम्यकर्मोपदेशा व्यर्थाः स्युर्नित्यनैमित्तिकैस्तेषां विनाशादित्याह— **तन्न, विरोधाभावादिति**। कथं तर्हि दुरितक्षपणमिति, तत्राह— **दुरितानामिति**। ननु केवलं सुकृतारब्धं शरीरं नास्ति शरीराणामप्रियस्यापि दुरितफलस्यावश्यंभावित्वादित्यत आह— **दुरितस्यापीति**। नित्यानामफलत्वमप्यसिद्धमित्याह— **न च नित्येति**। ज्ञानव्यतिरेकेण निश्शेषकर्मक्षयो न भवतीत्याह— **न चासतीति**। सम्यग्दर्शी प्रमादादुपनतमपि कर्म सम्यग्दर्शनेन क्षपयति। अज्ञस्तु प्रमादात् कृतं क्षपयितुं न शक्नोतीत्यर्थः। ननु प्रमादो भवत्येवेति न नियम इत्यत आह— **संशयितव्यं त्विति**। निमित्तसद्भावोऽपि न निश्चित इत्याशङ्क्य तथापि संशयात्

### *न्यायनिर्णयः*

शङ्कते— **स्यादेतदिति**। किं तानि सुकृतानामपि क्षेपकाण्याहो दुरितानामेवेति विकल्प्याद्यं निरस्यति— **नेत्यादिना**। तेषां सुकृतविरोधित्वे काम्यकर्मोपदेशवैयर्थ्यं तेषामपि तैर्विनाशादिति मन्वानो विरोधं विवृणोति— **सतीति**। द्वितीयमङ्गीकरोति— **दुरितानां त्विति**। तर्हि तन्निबर्हणे तावतैव देहान्तराभावान्मुक्तेरैक्यधीवैयर्थ्यम्, नेत्याह— **न त्विति**। केवलसुकृतारब्धं शरीरं नास्त्यप्रियस्यापि दुरितफलस्य तत्र दर्शनादित्याशङ्क्याह— **दुश्चरितस्येति**। किंच मुमुक्षुभिरनुष्ठितनित्यनैमित्तिकवशादपि देहान्तरसंभवान्नोक्तचरितस्य मुक्त्याशाऽस्तीत्याह— **न चेति**। तेषामानुषङ्गिकफलत्वं संभावितमपि न प्रमितमित्याशङ्क्याह— **स्मरतीति**। निमिते आरोपिते सतीति यावत्। किंच काम्यनिषिद्धकर्मशेषवशादपि देहान्तरसिद्धेर्नोक्तचरितस्य मुक्तिरित्याह— **न चेति**। अस्मदादीनां स्थूलधियां सम्यग्धियं विना सर्वात्मना काम्याद्यवर्जनेऽपि ज्ञानादशेषकाम्यादिवर्जनसिद्धिरित्याशङ्क्याह— **सुनिपुणानामिति**। प्रमादो भवत्येवेत्यनियमान्नो जन्मान्तरमित्याशङ्क्याह— **संशयितव्यमिति**। निमित्तसद्भावेऽपि निश्चयाभावे

१. 'दुरितस्यापि' इति पा.। २. 'छाया गन्ध इत्यनू' इति पा.।

**ज्ञानगम्ये ब्रह्मात्मत्वे कर्तृत्वभोक्तृत्वस्वभावस्यात्मनः कैवल्यमाकाङ्क्षितुं शक्यम्। अग्न्यौष्ण्यवत् स्वभावस्यापरिहार्यत्वात्। स्यादेतत्- कर्तृत्वभोक्तृत्वकार्यमनर्थो न तच्छक्तिस्तेन शक्त्यवस्थानेऽपि कार्यपरिहारादुपपन्नो मोक्ष इति। तच्च न। शक्तिसद्भावे कार्यप्रसवस्य दुर्निवारत्वात्। अथापि स्यात्- न केवला शक्तिः कार्यमारभतेऽनपेक्ष्यान्यानि निमित्तानि; अत एकाकिनी सा स्थिताऽपि नापराध्यतीति। तच्च न। निमित्तानामपि शक्तिलक्षणेन संबन्धेन नित्यसंबद्धत्वात्। तस्मात् कर्तृत्वभोक्तृत्वस्वभावे सत्यात्मन्यसत्यां विद्यागम्यायां ब्रह्मात्मतायां न कथंचन मोक्षं प्रत्याशाऽस्ति। श्रुतिश्च- 'नान्यः पन्था विद्यतेऽयनाय' (श्वे.उ. ३।८) इति ज्ञानादन्यं मोक्षमार्गं वारयति। परस्मादनन्यत्वेऽपि जीवस्य सर्वव्यवहारलोपप्रसङ्गः प्रत्यक्षादिप्रमाणाप्रवृत्तेरिति चेत्? न; प्राक्प्रबोधात् स्वप्नव्यवहारवत् तदुपपत्तेः। शास्त्रं च 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' (बृ.उ. २।४।१४) इत्यादिनाऽप्रबुद्धविषये प्रत्यक्षादिव्यवहारमुक्त्वा पुनः प्रबुद्धविषये 'यत्र त्वस्य सर्व-**

### *प्रकटार्थविवरणम्*

**इति**। कर्तृत्वादिकं नात्मनः स्वभावः, किं तु स्वाभाविककर्तृत्वादिशक्तिमद्द्रव्यमात्मा। तत्र कर्तृत्वाद्यभ्युपगमेऽपि द्रव्यरूपेणावस्थानं मोक्ष इत्याह— **स्यादेतदिति**। शक्तिमच्चेत् कारणमस्ति, कार्यमपि कदाचिद् भविष्यतीति न मोक्ष इत्याह— **तच्च नेति**। शक्तिमदपि कारणं सहकार्यभावे कार्यं न जनयतीत्याह— **अथापि स्यादिति**। सहकार्यभावः कुतः सिद्ध इत्याह— **तच्च नेति**। कर्तृत्वादिकार्येण निमित्तानां देशकालादीनां सदाशक्तिसंबन्धेन संबद्धत्वात् स्यादेव कार्यमित्यर्थः। प्रासङ्गिकं मतान्तरदूषणमुपसंहरति— **तस्मादिति**। मोक्षसिद्धये जीवस्य ब्रह्मात्मताभ्युपगमेऽप्यनुपपत्तिरस्तीत्याह— **परस्मादनन्यत्वेऽपीति**। परिहृतमपि चोद्यं पुनः परिहरति तदनुस्मरणदार्ढ्याय— **न प्रागित्यादिना**। प्रासङ्गिकं परिहृत्य प्रकृतं निगमयति— **तदेवमिति**।

### *भाष्यभावप्रकाशिका*

त्वत्पक्षः प्रतिहत एवेत्याह— **तथापीति**। कर्तृत्वभोक्तृत्वयोरात्मस्वभावत्वे [1]सनाशेनात्मनो विना साङ्गादारोपितत्वेन ज्ञानादेव निवृत्तिरभ्युपगन्तव्येत्याह— **न चानभ्युपगम्यमान इति**। शङ्कते— **स्यादेतदिति**। अदृष्टस्य निमित्तस्याभावादुपभोगलक्षणोऽनर्थो न भवतीत्यर्थः। कर्तृत्वभोक्तृत्वयोर्निमित्तसंबन्धस्यात्मनोऽदृष्टादिनिमित्तैःसंबन्धस्य च शक्तिद्वारेणानिमित्तत्वात् कदाचित्समुदायोपपत्तेर्भोगोऽपि संभाव्य इति न मुक्तौ निश्चयः स्यादिति परिहरति— **तच्च न; निमित्तानामिति**। स्वपक्षे दोषमाशङ्क्य परिहरति— **परस्मादित्यादिना**।

### *न्यायनिर्णयः*

जन्मान्तरमनिश्चितमसिद्धमेव स्यादित्याशङ्क्याह— **तथापीति**। तस्य दुर्ज्ञानत्वे जन्मान्तराभावस्यापि तथात्वात् त्वत्पक्षासिद्धिरित्यर्थः। किं चात्मनि कर्तृत्वादि स्वाभाविकमारोपितं वा? आद्येऽपि तत्कार्यं तच्छक्तिर्वा स्वभावः? प्रथमे तस्मिन्निवृत्ते स्थिते वा मुक्तिः? नाद्यः। स्वभावस्य निवर्तयितुमशक्यत्वात्। न द्वितीयो व्याघातादित्याह— **न चेति**। द्वितीयं शङ्कते— **स्यादिति**। किं शक्तेरस्ति कार्यारम्भकत्वमुत न? आद्येऽपि सा निरपेक्षा कार्यमारभते, सापेक्षा वा? नाद्य इत्याह— **तच्च नेति**। कल्पान्तरमुत्थापयति— **अथापीति**। अदृष्टादिनिमित्ताभावादुपभोगलक्षणोऽनर्थो नास्तीत्यर्थः। कर्तृत्वभोक्तृत्वयोर्निमित्तसंबन्धस्यात्मनोऽदृष्टादिनिमित्तैः संबन्धस्य च शक्तिद्वारा सदातनत्वात् कदाचित् तस्या भोगारम्भकत्वसंभवान्न मुक्तिरित्याह— **तच्चेति**। सा चेत् कार्यं नारभते तर्हि तस्या असत्त्वमेव कार्यैकगम्यत्वादिति मत्वा शक्तेर्वा कार्यस्य वा स्वाभाविकत्वनिरासमुपसंहरति— **तस्मादिति**। आत्मनि कर्तृत्वादेरारोपितत्वे ज्ञानादेव तन्निवृत्तेर्न कर्मसाध्या मुक्तिरित्युपेत्य ज्ञानमात्रायत्ता सेत्यत्र मानमाह— **श्रुतिश्चेति**। प्रासङ्गिके परमते पराकृते मोक्षसिद्धये जीवस्य ब्रह्मात्मत्वोपगमेऽपि तुल्याऽनुपपत्तिरिति शङ्कते— **परस्मादिति**। तत्त्वज्ञानात् प्रागूर्ध्वं वा व्यवहाराभावः? नाद्यः, स्वप्नवदुपपत्तेरित्याह— **न प्रागिति**। तत्रैव शास्त्रानुमतिमाह— **शास्त्रं चेति**। अप्रबुद्धविषय इति च्छेदः। द्वितीये प्रसङ्गस्येष्टतां

---

१. 'तन्नाशेनात्मनोऽपि नाशप्रसङ्गादारोपितत्वेन' इति पाठः स्यात्।

**मात्मैवाभूत् तत् केन कं पश्येत्' (बृ.उ. २।४।१४) इत्यादिना तदभावं दर्शयति। तदेवं परब्रह्मविदो गन्तव्यादिविज्ञानस्य बाधितत्वान्न कथंचन गतिरुपपादयितुं शक्या।**

**किंविषयाः पुनर्गतिश्रुतय इति? उच्यते– सगुणविद्याविषया भविष्यन्ति। तथाहि– क्वचित् पञ्चाग्निविद्यां प्रकृत्य गतिरुच्यते, क्वचित् पर्यङ्कविद्यां, क्वचिद् वैश्वानरविद्याम्। यत्रापि ब्रह्म प्रकृत्य गतिरुच्यते, यथा 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' (छा.उ. ४।१०।५) इति, 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' (छा.उ. ८।१।१) इति च तत्रापि वामनीत्वादिभिः सत्यकामादिभिश्च गुणैः सगुणस्यैवोपास्यत्वात् संभवति गतिः। न क्वचित् परब्रह्मविषया गतिः श्राव्यते, यथा गतिप्रतिषेधः श्रावितः 'न तस्य प्राणा उत्क्रामन्ति' (बृ.उ. ४।४।६) इति। 'ब्रह्मविदाप्नोति परम्' (तै.उ. २।१।१) इत्यादिषु तु सत्यप्याप्नोतेर्गत्यर्थत्वे वर्णितेन न्यायेन देशान्तरप्राप्त्यसंभवात् स्वरूपप्रतिपत्तिरेवेयमविद्याध्यारोपितनामरूपप्रविलयापेक्षयाऽभिधीयते 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ.उ. ४।४।६) इत्यादिवदिति द्रष्टव्यम्। अपि च परविषया गतिर्व्याख्यायमाना प्ररोचनाय वा स्यादनुचिन्तनाय वा? तत्र प्ररोचनं तावद् ब्रह्मविदो न गत्युक्त्या क्रियते। स्वसंवेद्येनैवाव्यवहितेन विद्यासमर्पितेन स्वास्थ्येन तत्सिद्धेः। न च नित्यसिद्धनिःश्रेयसनिवेदनस्यासाध्यफलस्य विज्ञानस्य गत्यनुचिन्तने कांचिदपेक्षोपपद्यते। तस्मादपरब्रह्मविषया गतिः। तत्र परापरब्रह्मविवेकानवधारणेनापरस्मिन् ब्रह्मणि वर्तमाना**

*प्रकटार्थविवरणम्*

एवं परमतं निराकृत्य स्वमतं पूर्वोक्तं प्रश्नपूर्वकं विवृणोति— **किंविषयाः पुनरित्यादिना**। नन्वाप्नोतेः गत्यर्थत्वात् परब्रह्मविद्याप्रकरणेऽपि गतिः श्रूयत इत्याशङ्क्याह— **ब्रह्मविदाप्नोतीति**। अब्रह्मत्वभ्रमव्यावृत्त्यपेक्षया प्राप्त्यभिधानमौपचारिकमित्यर्थः। सर्वथाऽनुपयोगादपि न परविषयत्वमित्याह— **अपि चेति**। यत् साध्यफलं विज्ञानं तत्र गत्यनुचिन्तनमुपयुज्यते, न तु तत्सिद्धमेव निःश्रेयसं समर्पयतीत्याह— **न च सिद्धेति[नित्यसिद्धेति]**। ननु सर्वथा परविषयत्वं गतिश्रुतेर्नोपपद्यते; किंत्वपरविषयत्वमेव इति चेत्, कथं तर्हि कैश्चित्परविषयत्वमुक्तमित्याशङ्क्याह— **तत्र परापरेति**। परापरविभागे प्रमाणाभावात् न तदवधारणं भ्रमकारणमित्याह—

*भाष्यभावप्रकाशिका*

उक्तमेवार्थं प्रश्नपूर्वकं पुनर्विशदयति— **किंविषया इति**। ब्रह्मत्वाविशेषात् तत्राप्येतदेवास्तु श्रवणमित्यत आह— **यथा गतीति**। गतेस्तत्र प्रतिषिध्यमानत्वान्नैवमित्यर्थः। नन्वाप्नोतीति प्राप्त्यभिधानात् गतिरवगम्यत इत्यत आह— **ब्रह्मविदिति**। प्रकारान्तरेण विकल्प्य पुनर्गतिं दूषयति— **अपि चेति**।...भ्युपगम इत्याशङ्क्य सूक्ष्मदर्शनाभावादित्याह— **तत्र परापरेति**।

*न्यायनिर्णयः*

शास्त्रावष्टम्भेनाचष्टे— **पुनरिति**। प्रासङ्गिकं परिहृत्य प्रकृतं निगमयति— **तदेवमिति**।

परमतं निराकृत्य पूर्वोक्तं स्वमतं प्रश्नपूर्वकं विवृणोति— **किमित्यादिना**। गतिश्रुतीनां सगुणधीविषयत्वं विशदयति— **तथा हीति**। ब्रह्म प्रकृत्यापि गतेरुक्तेस्तस्या युक्तं परविषयत्वमित्याशङ्क्याह— **यत्रापीति**। सगुणविद्याविषये गतिश्रुतिमुक्त्वा परविद्याविषये तदभावमाह— **नेति**। ब्रह्मत्वाविशेषात् तत्रापि गतिरेषैवेत्याशङ्क्याह— **यथेति**। आप्नोतेर्गत्यर्थत्वात् परविद्याधिकारेऽपि गतिश्रुतिरस्तीत्याशङ्क्याह— **ब्रह्मविदिति**। ब्रह्मणः सर्वगतत्वं सर्वान्तरत्वं सर्वात्मत्वमित्यादि वर्णितो न्यायः। आप्नोतिस्तर्हि परविषये कथमित्याशङ्क्याह— **स्वरूपेति**। इतश्च परविषये नास्ति गतिरित्याह— **अपि चेति**। तदेव दर्शयितुं विकल्पयति— **परेति**। प्ररोचनपक्षं प्रत्याह— **तत्रेति**। स्वसंवेद्यत्वे हेतुमाह— **अव्यवहितेनेति**। स्वापादिव्यावृत्त्यर्थं विशिनष्टि— **विद्येति**। अनुचिन्तनपक्षं प्रतिक्षिपति— **न चेति**। पक्षद्वयनिरासफलं दर्शयति— **तस्मादिति**। कथं तर्हि केषांचिदाचार्याणां परविषयत्वोपगमो गतेरित्याशङ्क्य सूक्ष्मदृष्टिशून्यत्वादित्याह— **तत्रेति**।

**गतिश्रुतयः परस्मिन्नध्यारोप्यन्ते। किं द्वे ब्रह्मणी परमपरं चेति? बाढं द्वे, 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' (प्र.उ. ५।२) इत्यादिदर्शनात्। किं पुनः परं ब्रह्म, किमपरमिति? उच्यते। यत्राविद्याकृतनामरूपादिविशेषप्रतिषेधादस्थूलादिशब्दैर्ब्रह्मोपदिश्यते तत् परम्। तदेव यत्र नामरूपादिविशेषेण केनचिद् विशिष्टमुपासनायोपदिश्यते 'मनोमयः प्राणशरीरो भारूपः' (छा.उ. ३।१४।२) इत्यादिशब्दैस्तदपरम्। नन्वेवमद्वितीयश्रुतिरुपरुध्येत। न। अविद्याकृतनामरूपोपाधिकतया परिहृतत्वात्। तस्य चापरब्रह्मोपासनस्य तत्संनिधौ श्रूयमाणम् 'स यदि पितृलोककामो भवति' (छा.उ. ८।२।१) इत्यादि जगदैश्वर्यलक्षणं संसारगोचरमेव फलं भवति। अनिवर्तितत्वादविद्यायाः। तस्य च देशविशेषावबद्धत्वात् तत्प्राप्त्यर्थं गमनमविरुद्धम्। सर्वगतत्वेऽपि चात्मन आकाशस्येव घटादिगमने बुद्ध्याद्युपाधिगमने गमनप्रसिद्धिरित्यवादिष्म 'तद्गुणसारत्वात्' (ब्र.सू. २।३।२९) इत्यत्र। तस्मात् 'कार्यं बादरिः' (ब्र.सू. ४।७।३) इत्येष एव स्थितः पक्षः। 'परं जैमिनिः' (ब्र.सू. ४।३।१२) इति तु पक्षान्तरप्रतिभानमात्रप्रदर्शनं प्रज्ञाविकासनायेति द्रष्टव्यम्।।१४।।**

**।।इति पञ्चमं कार्याधिकरणम्।।**

### *प्रकटार्थविवरणम्*

**किं द्वे इति**। परिहरति— **बाढमिति**। परापरविभागं प्रश्नपूर्वकं विवृणोति— **किं पुनरित्यादिना**। उक्तमपि विस्मृत्य यश्चोदयति स तदेव स्मारणीयो न तूपेक्षणीयः शिष्य इत्याचार्यधर्मं दर्शयन् चोद्यमिव कृत्वा परिहरति— **नन्वेवमित्यादिना**। भवत्वेवं मिथ्या परापरविभागः; ततः किं सिद्धमित्याशङ्क्याह— **तस्य चेत्यादिना**। इति पञ्चमं कार्याधिकरणम्।।

### *भाष्यभावप्रकाशिका*

अपसिद्धान्तं चोदयति— **किं द्वे इति**। सोपाधिकनिरुपाधिकत्वेन भेदोऽभ्युपगम्यत एव श्रुतिद्वैरूप्यादिति परिहरति— **बाढमिति**।....कमपसिद्धान्तपरिहारं स्फुटयति— **नन्वेवमित्यादिना**। तस्य गन्तव्यत्वमुपपादयितुं तदुपासनस्य फलमाह— **तस्य चेति**। अत एव गतिरप्युपपन्नेत्याह— **तस्य च देशेति**। ननु तथापि सर्वगतत्वादात्मनो गन्तृत्वमनुपपन्नमिति तत्राह— **सर्वगतत्वेऽपीति**। अनिर्वचनीयं गमनमनिर्वचनीयसगुणब्रह्मविषय एवोपपन्नं (गुणविषय) इति भावः। तस्मादस्मदुक्तैव पूर्वोत्तरपक्षव्यवस्थेत्युपसंहरति— **तस्मादिति**। इति पञ्चमं कार्याधिकरणम्।।

### *न्यायनिर्णयः*

अपसिद्धान्तं शङ्कते— **किमिति**। सोपाधिकनिरुपाधिकत्वेन ब्रह्मणो भेदः, [१]श्रुतिद्वैरूप्यात्, तेन नापराद्धान्तापत्तिरित्याह— **बाढमिति**। परापरविभागं प्रश्नपूर्वकं विशदयति— **किमित्यादिना**। उक्तमेवापसिद्धान्तपरिहारं चोद्यद्वारा स्फोरयति— **नन्वित्यादिना**। परापरविभागस्य मिथ्यात्वे किं स्यादित्याशङ्क्यापरब्रह्मणो गन्तव्यत्वार्थं तदुपास्तिफलमाह— **तस्येति**। अपरब्रह्मोपासनस्योक्तफलत्वेऽपि कथं तद्विषये गतिरित्याशङ्क्याह— **तस्य चेति**। तस्य गन्तव्यत्वेऽपि गन्तृत्वमात्मनो विभुत्वादयुक्तमित्याशङ्क्याह— **सर्वेति**। अनिर्वचनीया गतिरनिर्वचनीयसगुणब्रह्मविषयैवोचितेति भावः। परविषये .गत्यभावादपरविषये तदुपपत्तेरस्मदुक्तैव पूर्वोत्तरपक्षव्यवस्थेत्युपसंहरति— **तस्मादिति**।।१४।। इति पञ्चमं कार्याधिकरणम्।।

---

१. श्रुतिवैरूप्यात्' इति मुद्रितः पाठः।

### ६।।अप्रतीकालम्बनाधिकरणम्।।सू.१५-१६।।

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च।।१५।।

**स्थितमेतत् कार्यविषया गतिर्न परविषयेति। इदमिदानीं संदिह्यते–किं सर्वान् विकारालम्बनानविशेषेणैवामानवः पुरुषः प्रापयति ब्रह्मलोकमुत कांश्चिदेवेति। किं तावत्प्राप्तम्? सर्वेषामेवैषां विदुषामन्यत्र परस्माद् ब्रह्मणो गतिः स्यात्। तथाहि– 'अनियमः सर्वासाम्–' (ब्र.सू. ३।३।३१) इत्यत्राविशेषेणैवैषा विद्यान्तरेष्ववतारितेति।**

### *शारीरकन्यायसंग्रहः*

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथा ऽदोषात् तत्क्रतुश्च।।१५।। विशेषं च दर्शयति।।१६।।** पितृयाणतृतीयस्थानसम्बन्धहीनत्वात् प्रतीकविशेषणत्वेन ब्रह्मणोऽप्युपास्यत्वात् 'ये चामी अरण्ये श्रद्धां सत्यमुपासते' इति वाक्येन तेषामप्युपादानात् 'स एनान् ब्रह्म गमयति' इत्येतच्छब्देन प्रतीकालम्बनानामपि परामर्शसिद्धेः तानपि ब्रह्म गमयतीति प्राप्तम्; तत्र च ब्रह्मदृष्टिविशिष्टप्रतीकानामेवोपास्यत्वात् 'ये चामी अरण्ये' इति वाक्येन परामर्शभावात् फलान्तरनिर्देशाच्च परिशेषादर्चिरादिसम्बन्धो न वाक्येन; ततश्च 'ये चामी अरण्ये' इति वाक्योपात्तप्रकृतपरामर्शकेन 'स एनान्' इत्येतच्छब्देन प्रतीका[लम्बना]नामपरामर्शात् विद्युत्पर्यन्तमेवैतेषां गमनमिति स्थितम्।

**इति प्रकाशात्मविरचिते शारीरकन्यायसंग्रहे चतुर्थाध्यायस्य तृतीयः पादः।।**

### *प्रकटार्थविवरणम्*

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च।।** अधिकरणसंबन्धमाह— **स्थितमेतदिति।** 'स एनान् ब्रह्म गमयति' इत्यविशेषश्रवणात् अतत्क्रतुत्वादगमनप्रतिभासाच्च संशयमुक्त्वा पूर्वपक्षमाह— **किं तावदिति।** पितृयाणतृतीयस्थानसंबन्धहीनत्वात् परिच्छिन्नफलत्वात् गत्युपपत्तेश्च सर्वानेव नयतीत्यर्थः। तथा च पूर्वापरविरोधोऽपि न भविष्यतीत्याह— **तथा हीति।**

### *भाष्यभावप्रकाशिका*

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च।।** आश्रयान्तरप्रत्ययस्याश्रयान्तरे क्षेपः प्रतीको यथा ब्रह्माश्रयस्य नामादिषु प्रक्षेपो 'नाम ब्रह्मे'त्यादिषु। तदालम्बनाः प्रतीकालम्बनास्तेषामपि पितृयाण(त्रयाण)तृतीयस्थानसंबन्धहीनत्वात् प्रतीकविशेषणत्वेन ब्रह्मणोऽप्युपासितत्वात् 'ये चामी अरण्ये श्रद्धां सत्यमुपासत' इति वाक्येन तेषामप्युपादानात् ब्रह्म गमयतीत्येतच्छब्देन प्रतीकालम्बनानामपि परामर्शसिद्धेर्विद्यान्तरेष्विव गतेरनियमः सर्वेषामित्यत्रावतारितत्वान्नयनं प्राप्तमित्याह— **सर्वेषामेवेति।**

उभयथाऽदोषादिति पदं व्याचष्टे— **न ह्येवमिति।** प्रतीकालम्बनान् न नयति, विकारालम्बनांस्तु नयतीत्युभयथात्वाभ्युपगमे

### *न्यायनिर्णयः*

गन्तव्यविशेषोक्त्यनन्तरं गन्तृविशेषोक्त्यर्थमाह— **अप्रतीकालम्बनानिति।** संबन्धं वक्तुं वृत्तं कीर्तयति— **स्थितमिति।** अमानवपुरुषं विषयीकृत्याविशेषश्रुतेस्त[रत]त्क्रतुत्वेनागमनभानाच्च संशयमाह— **इदमिति।** विद्याफलार्थे देवयाने पथि गन्तृविशेषोक्त्या पादादिसंगतिः। पूर्वपक्षे सर्वेषूपासनेष्वनियमन्यायाद् विकारालम्बनेषु विशेषासिद्धिः। सिद्धान्ते प्रतीकोपासनातिरिक्तेषु तत्क्रतुन्यायाद् विशेषसिद्धिरिति मत्वा विमृश्य पूर्वपक्षयति— **किं तावदिति।** परस्माद् ब्रह्मणोऽन्यत्रेति कार्यब्रह्मोक्तिः। तत्र गुणोपसंहारस्थानियमाधिकरणन्यायं हेतुत्वेन स्मारयति— **तथा हीति।** प्रतीकालम्बनानामपि पितृयाणतृतीयस्थानासंबन्धित्वात् प्रतीकविशेषणत्वेन ब्रह्मणोऽपि तैर्ध्यातत्वाद् 'ये वै के चे'त्यादिवाक्येन च तेषां ग्रहादेतान् ब्रह्म गमयतीत्येतच्छब्देन तेषामपि परामर्शसिद्धेर्विद्यान्तरेषु च गतेरवतारितत्वादविशेषेणामानवः पुरुष एतान् सर्वानेव विकारालम्बनान् ब्रह्मलोकं नयतीति प्राप्तमित्यर्थः।

**एवं प्राप्ते प्रत्याह– अप्रतीकालम्बनानिति। प्रतीकालम्बनान् वर्जयित्वा सर्वानन्यान् विकारालम्बनान् नयति ब्रह्मलोकमिति बादरायण आचार्यो मन्यते। न ह्येवमुभयथाभावाभ्युपगमे कश्चिद् दोषोऽस्ति। अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्वप्युपासनेषूपपत्तेः। तत्क्रतुश्चास्योभयथाभावस्य समर्थको हेतुर्द्रष्टव्यः। यो हि ब्रह्मक्रतुः स ब्राह्ममैश्वर्यमासीदेदिति श्लिष्यते, 'तं यथा यथोपासते तदेव भवति' (मुद्गलो. ३।३) इति श्रुतेः। न तु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति, प्रतीकप्रधानत्वादुपासनस्य। नन्वब्रह्मक्रतुरपि ब्रह्म गच्छतीति श्रूयते। यथा पञ्चाग्निविद्यायाम् 'स एनान् ब्रह्म गमयति' (छा.उ. ४।१५।६) इति, भवतु यत्रैवमाहत्यवाद उपलभ्यते। तदभावे त्वौत्सर्गिकेण तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव तत्प्राप्तिर्नेतरेषामिति गम्यते।।१५।।**

## विशेषं च दर्शयति।।१६।।

### *प्रकटार्थविवरणम्*

'स एनान् ब्रह्म गमयति' इति प्रकृतपरामर्शकेनैव एतच्छब्देन प्रतीकोपासकानामपरामर्शात् विद्युत्पर्यन्तमेव तेषां गमनमिति सिद्धान्तमाह— **अप्रतीकालम्बनानिति**। पूर्वापरविरोधोऽपि नास्तीत्याह— **न ह्येवमिति**। हेत्वन्तरमाह— **तत्क्रतुश्चेति**। तत्क्रतुन्यायमाक्षिपति— **नन्विति**। सिद्धान्तमाह— **भवतीति[त्विति]**। तत्राब्रह्मक्रतूनामपि ब्रह्मगमनं यत्रैतादृशाहत्यवादः साक्षादपवादक उपलभ्यते। तदुक्तम्— 'उत्सर्गस्यापवादेन बाधः कस्य न संमतः' इति। पञ्चाग्निविद्यायामिवापवादाभावे तूत्सर्गसिद्धिरेवेत्याह— **तदभावे त्विति**।

**विशेषं च दर्शयति।।** किं च फलविशेषनिर्देशादपि न प्रतीकोपासकानां ब्रह्मगमनमित्याह— **विशेषं चेति**। इति षष्ठमप्रतीकालम्बनाधिकरणम्।।

**इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे चतुर्थस्याध्यायस्य तृतीयः पादः समाप्तः।।**

### *भाष्यभावप्रकाशिका*

'अनियमस्सर्वेषा'मिति न्यायस्य न कश्चिद् दोषोऽस्ति, सर्वशब्दस्य प्रतीकालम्बनव्यतिरिक्तविषयत्वोपपत्तेरित्यर्थः। तत्क्रतुश्चेति पदं पदान्तराध्याहारेण व्याचष्टे— **तत्क्रतुश्चास्येति**। हेतुत्वमेव दर्शयति— **यो हीति**। ननु प्रतीकविशेषणत्वेन ब्रह्माप्युपासितमिति, तत्राह— **न तु प्रतीकेष्विति**। ब्रह्मदृष्ट्या नामादीनामेव प्रतीकानां प्राधान्येन चिन्त्यमानत्वादित्यर्थः। क्रतोरपि नियामकत्वं व्यभिचरतीति शङ्कते— **नन्विति**। औत्सर्गिकत्वेऽप्यस्य विशेषवचनात् तत्रापवाद इत्याह— **भवति यत्रेति**।

उत्कर्षापकर्षवत्त्वाच्च तत्फलस्य नैकरूपब्रह्मक्रतुत्वं तत्प्राप्तिर्वा तेषां साधनोपचयापचयव्यतिरेकेण फले तदसंभवादित्याह—

### *न्यायनिर्णयः*

पूर्वपक्षमनुभाष्य सिद्धान्तप्रतिज्ञामवतार्य व्याकरोति— **एवमिति**। आश्रयान्तरप्रत्ययस्याश्रयान्तरे क्षेपो हि प्रतीकः, यथा 'नाम ब्रह्म' इत्यादौ नामादिषु ब्रह्माश्रयस्य प्रत्ययस्य प्रक्षेपः। तदालम्बनाः प्रतीकालम्बनास्तान् विहाय विकारालम्बनान् सगुणविद्यावतः सर्वानिति यावत्। यत्त्वनियमन्यायादविशेषेण सर्वेषां विकारालम्बनानामेषा गतिरिति तद् दूषयन्नुभयथाऽदोषादित्येतद् व्याचष्टे— **न हीति**। प्रतीकालम्बनान्न नयति विकारालम्बनांस्तु नयतीत्युभयथात्वोपगमे सत्यनियमः सर्वासामिति न्यायस्य न कश्चिद् दोषः, सर्वशब्दस्य प्रतीकालम्बनातिरिक्तविषयत्वसिद्धेरित्यर्थः। तत्क्रतुश्चेति पदं पदान्तराध्याहारेण व्याकरोति— **तत्क्रतुरिति**। तस्य हेतुत्वं साधयति— **यो हीति**। तत्र मानमाह— **तमिति**। प्रतीकालम्बनैरपि तद्विशेषणत्वेन ब्रह्म ध्यातमित्युक्तमित्याशङ्क्याह— **न त्विति**। ब्रह्मदृष्ट्या नामादीनामेव प्रतीकानां प्राधान्येनानुचिन्तनान्न प्रतीकालम्बनानां ब्रह्मक्रतुत्वमित्यर्थः। तत्क्रतुस्तद्भवतीति न्यायस्य व्यभिचारं शङ्कते— **नन्विति**। न्यायस्यौत्सर्गिकत्वेऽपि विशेषवचनादपवादः, तत्राह— **भवत्विति**। **आहत्यवादः** साक्षादपवादकः।।१५।।

**नामादिषु प्रतीकोपासनेषु पूर्वस्मात्पूर्वस्मात् फलविशेषमुत्तरस्मिन्नुत्तरस्मिन्नुपासने दर्शयति– 'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' (छा.उ. ७।१।५), 'वाग्वाव नाम्नो भूयसी' (छा.उ. ७।२।१), 'यावद्वाचो गतं तत्रास्य यथाकामचारो भवति' (छा.उ. ७।२।२), 'मनो वाव वाचो भूयः' (छा.उ. ७।३।१) इत्यादिना। स चायं फलविशेषः प्रतीकतन्त्रत्वादुपासनानामुपपद्यते। ब्रह्मतन्त्रत्वे तु ब्रह्मणोऽविशिष्टत्वात् कथं फलविशेषः स्यात्। तस्मान्न प्रतीकालम्बनानामितरैस्तुल्यफलत्वमिति।।१६।।**

**इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीशंकरभगवत्पादकृतौ श्रीमच्छारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य तृतीयः पादः।।३।।**

*शारीरकन्यायसंग्रहः*

## चतुर्थाऽध्याये चतुर्थः पादः।

**१।।सम्पद्याविर्भावाधिकरणम्।।सू. १-३।।**

**संपद्याविर्भावः स्वेन शब्दात्।।१।। मुक्तः प्रतिज्ञानात्।।२।। आत्मा प्रकरणात्।।३।।** मुच्यमानस्य यन्मोक्षरूपं तदागन्तुकं भवितुमर्हति, अनुष्ठितसाधनफलत्वे सति शरीरात् समुत्थितस्य फलत्वात्, स्वर्गादिफलवत् इत्यनुमानानुगृहीतयाऽभिनिष्पत्तिश्रुत्या आगन्तुकं मोक्षरूपमिति प्राप्तम्। तत्रास्यानुमानस्य 'स्वेन रूपेण' इति विशेषणश्रुत्या बाधो दर्शितः। अभिनिष्पत्तिशब्दस्य शरीरात् समुत्थितस्य अनादिप्रवृत्तफलान्तराभिनिष्पत्तिप्रवाहानुवादेन मुक्तौ स्वेनेति विशेषणविधिपरस्य विधीयमानविरोधे सत्युपचरितार्थत्वं च दर्शितम्।

*भाष्यभावप्रकाशिका*

**विशेषं च दर्शयतीति।**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्य श्रीचित्सुखमुनिविरचितायां भाष्यभावप्रकाशिकायां चतुर्थस्याध्यायस्य तृतीयः पादः समाप्तः।।**

*न्यायनिर्णयः*

इतोऽपि प्रतीकोपासनानां न ब्रह्मगतिरित्याह— **विशेषं चेति**। उत्कर्षापकर्षवत्त्वात् फलस्य [1]प्रतीकोपासनानां नैकरूपब्रह्मक्रतुत्वं तत्प्राप्तिर्वा हेतूपचयापचयातिरेकेण फले तदयोगादिति व्याचष्टे— **नामादिष्विति**। फलविशेषोपलम्भेऽपि किमित्युपासनानां प्रतीकतन्त्रत्वं, तत्राह— **स चेति**। प्रतीकानामुत्कर्षनिकर्षवत्त्वादित्यर्थः। विपक्षे फलविशेषदृष्टेरश्लिष्टत्वमाह— **ब्रह्मेति**। प्रतीकालम्बनातिरिक्तानां विकारालम्बनानां ब्रह्मलोकगतिरिति स्थिते फलितमुपसंहरति— **तस्मादिति**।।१६।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचिते शारीरकभाष्यविभागे न्यायनिर्णये चतुर्थाध्यायस्य तृतीयः पादः।।३।।**

**।।इति चतुर्थस्याध्यायस्य सगुणविद्यावतो मृतस्योत्तरमार्गाभिधानाख्यस्तृतीयः पादः।।**

---

१. 'प्रतीकोपासकानाम्' इति पाठः स्यात्।

## चतुर्थेऽध्याये चतुर्थः पादः।

१।।संपद्याविर्भावाधिकरणम्।।सू.१-३।।

### संपद्याविर्भावः स्वेनशब्दात्।।१।।

**'एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा.उ. ८।१२।३) इति श्रूयते। तत्र संशयः- किं देवलोकाद्युपभोगस्थानेष्विवागन्तुकेन केनचिद् विशेषेणाभिनिष्पद्यत आहोस्विदात्ममात्रेणेति। किं तावत् प्राप्तम्? स्थानान्तरेष्विवागन्तुकेन केनचिद् रूपेणाभिनिष्पत्तिः स्यात्। मोक्षस्यापि फलत्वप्रसिद्धेः। 'अभिनिष्पद्यत' इति चोत्पत्तिपर्यायत्वात्। स्वरूपमात्रेण चेदभिनिष्पत्तिः पूर्वास्वप्यवस्थासु स्वरूपानपायाद् विभाव्येत। तस्माद् विशेषेण केनचिदभिनिष्पद्यत इति।**

**एवं प्राप्ते ब्रूमः- केवलेनैवात्मनाऽऽविर्भवति, न धर्मान्तरेणेति। कुतः? स्वेन रूपेणाभिनिष्पद्यत इति**

***प्रकटार्थविवरणम्***

प्रथमपादान्ते परविद्याफलं निरूप्य द्वितीयतृतीयपादाभ्यामपरविद्यासंबद्धान्येवोत्क्रान्तिगतिगन्तव्यानि न्यरुरूपत्। इदानीं परापरविद्याफलप्रपञ्चार्थ एव चतुर्थः पाद आरभ्यते। फलप्रपञ्चो ह्यनुरागजनने प्रवृत्त्युपयोगी; ततो न पौनरुक्त्यमिति शङ्कनीयम्। प्रथमं परविद्याविषयमेव वाक्यं पठति— **एवमेवैष इति**। स्वशब्दस्य स्वीयवचनत्वेनागन्तुकत्वप्रतिभानात् स्वरूपवचनत्वेनानागन्तुकत्वप्रतिभानाच्च संशयमाह— **तत्रेति**। मुच्यमानस्य यन्मोक्षरूपं तदागन्तुकम्, फलत्वात्, स्वर्गवदित्यनुमानानुगृहीतयाऽभिनिष्पत्तिश्रुत्याऽऽगन्तुकं मोक्षरूपमित्याह— **स्थानान्तरेष्विवेति**। अन्यथा बन्धमोक्षयोरविशेषप्रसङ्ग इत्याह— **स्वरूपमात्रेण चेदिति**।

**संपद्याविर्भावः स्वेनशब्दात्**।। अनुमानस्य 'स्वेन रूपेणे'ति विशेषश्रुत्या बाधात् बिम्बभूतं ब्रह्म परं ज्योतिरुपसंपद्य साक्षादनुभूय तेन स्वरूपेणावतिष्ठत इत्याह— **केवलेनैवेति**। स्वशब्दस्य विशेषणस्यार्थान्तरमाशङ्क्य परिहरति— **नन्वात्मीयेत्यादिना**।

***भाष्यभावप्रकाशिका***

**संपद्याविर्भावः स्वेनशब्दात्**।। मोक्षफलमागन्तुकं भवितुमर्हति, फलत्वात् स्वर्गादिवदित्याह— **स्थानान्तरेष्विवेति**। अभिनिष्पत्तिशब्दादपि प्रागभूतस्य निष्पत्तिरवगम्यत इत्याह— **अभिनिष्पद्यत इति**। औपचारिकत्वे दोषमाह— **स्वरूपमात्रेणेति**।

स्वेन रूपेणेति विशेषणश्रुत्याऽनुमानं बाध्यमित्यभिप्रेत्य सिद्धान्तयति— **स्वेन रूपेणेति**। व्यतिरेके शब्दस्यानर्थक्यं

***न्यायनिर्णयः***

आद्ये पादे निर्गुणविद्याफलैकदेशो बन्धनिवृत्तिरुक्ता। द्वितीये सगुणनिर्गुणफलाप्तिशेषत्वेन तद्विदोरुत्क्रान्त्यनुत्क्रान्ती चिन्तिते। तृतीये सगुणविद्याफलोपयोगितया गतिगन्तव्यगन्तृविशेषा निरूपिताः। सम्प्रति चतुर्थे पादे परविद्याफलैकदेशो ब्रह्मभावाविर्भावः, सगुणविद्याफलं च सर्वेश्वरतुल्यभोगत्वमवधारयिष्यते। तत्रापरविद्याप्राप्यमुक्त्वा परविद्याप्राप्यमाह— **संपद्येति**। निर्गुणविद्याफलमुदाहर्तुं तद्विषयवाक्यमुदाहरति— **एवमेवेति**। स्वशब्दस्य स्वकीयवाचित्वेनागन्तुकत्वभानात् स्वरूपवचनत्वेनानागन्तुकत्वबुद्धेश्च संशयमाह— **तत्रेति**। अत्र च निर्गुणब्रह्मविद्याफलस्य ब्रह्मभावाविर्भावस्य नित्यसिद्धत्वोक्त्या पादादिसंगतिः। पूर्वपक्षे मोक्षस्य स्वर्गादेरविशेषः। सिद्धान्ते तस्य ततो विशेषोऽस्तीति गृहीत्वा विमृश्य पूर्वपक्षमाह— **किमिति**। विमतमागन्तुकं फलत्वात् स्वर्गवदिति मत्वा हेतुमाह— **मोक्षस्येति**। अभिनिष्पत्तिशब्दादपि प्रागभूतस्य निष्पत्तिः सिध्यतीति हेत्वन्तरमाह— **अभिनिष्पद्यत इति**। सिद्धान्तेऽपि स्यादभिनिष्पत्तिरौपचारिकीत्याशङ्क्याह— **स्वरूपेति**। उक्तानुमानादभिनिष्पत्तिशब्दाच्च सिद्धमर्थं निगमयति— **तस्मादिति**।

मुक्तेरागन्तुकत्वमनूद्य सिद्धान्तयति— **एवमिति**। उक्तेऽनुमाने जीवति कथमनागन्तुकत्वं मुक्तेरित्याह— **कुत इति**। विशेषणश्रुतिबाध्यमनुमानमित्याह— **स्वेनेति**। परं ब्रह्म ज्योतिःशब्दितमुपसंपद्य साक्षादनुभूय तेनैव स्वेन रूपेणाविर्भावोऽव-

**स्वशब्दात्। अन्यथा हि स्वशब्देन विशेषणमनवक्लृप्तं स्यात्। नन्वात्मीयाभिप्रायः स्वशब्दो भविष्यति। न; तस्यावचनीयत्वात्। येनैव हि केनचिद् रूपेणाभिनिष्पद्यते तस्यैवात्मीयत्वोपपत्तेः स्वेनेति विशेषणमनर्थकं स्यात्। आत्मवचनतायां त्वर्थवत्; केवलेनैवात्मरूपेणाभिनिष्पद्यते, नागन्तुकेनापररूपेणापीति।।१।।**

**कः पुनर्विशेषः पूर्वास्ववस्थास्विह च स्वरूपानपायसाम्ये सतीत्यत आह–**

**मुक्तः प्रतिज्ञानात्।।२।।**

**योऽत्राभिनिष्पद्यत इत्युक्तः स सर्वबन्धविनिर्मुक्तः शुद्धेनैवात्मनाऽवतिष्ठते। पूर्वत्र तु 'अन्धो भवति' 'अपि रोदितीव' 'विनाशमेवापीतो भवति' इति चावस्थात्रयकलुषितेनात्मनेत्ययं विशेषः। कथं पुनरवगम्यते मुक्तोऽयमिदानीं भवतीति– प्रतिज्ञानादित्याह। तथा हि– 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छा.उ. ८।९।३, ८।१०।४, ८।११।३) इत्यवस्थात्रयदोषविहीनमात्मानं व्याख्येयत्वेन प्रतिज्ञाय 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा.उ. ८।१२।१) इति चोपन्यस्य 'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' (छा.उ. ८।१२।३) इति चोपसंहरति। तथाऽऽख्यायिकोपक्रमेऽपि 'य आत्माऽपहतपाप्मा' (छा.उ. ८।७।१) इत्यादि मुक्तात्मविषयमेव प्रतिज्ञानम्। फलत्वप्रसिद्धिरपि मोक्षस्य बन्धनिवृत्तिमात्रापेक्षा,**

***प्रकटार्थविवरणम्***

सूत्रान्तरमवतारयति— **कः पुनरित्यादिना।**

**मुक्तः प्रतिज्ञानात्।।** जागरिते देहेऽण्डे[ऽन्धे]ऽयमण्डो[मन्धो]भवति, स्वप्ने पुत्रादिवियोगं पश्यन् रोदितीव, सुषुप्ते विशेषज्ञानाभावे[१]ऽपि नाशमेवापीतो भवतीति पूर्वत्र संसारदशायामवस्थात्रयकलुषितेन रूपेणावतिष्ठते; मोक्षे निर्मृष्टनिखिलदुःखानुषङ्गः परितः प्रद्योतमानपरिशुद्धपरमानन्दस्वरूपेणेति महानयं विशेष इत्यर्थः। सूत्रभागं व्याख्याय उत्तरपदमवतारयति— **कथं पुनरिति।** फलत्वं नाम साध्यत्वम्, कथं स्वरूपाविर्भावमात्रे मोक्षे घटते? तत्राह— **फलत्वप्रसिद्धिरपीति।** पूर्वोदाहृतामभिनिष्पत्तिश्रुतिं

***भाष्यभावप्रकाशिका***

स्यादित्याह— **अन्यथा हीति।** प्रकारान्तरेणार्थवत्तामाशङ्कते— **नन्वात्मीयेति।** नैवम्, अनधिगतार्थबोधकत्वे संभवत्यनुवाद-त्वायोगादित्याह— **न तस्येति।** स्वपक्षे साधकत्वमाह— **आत्मवचनतायामिति।**

उत्तरसूत्रमवतारयितुमाकाङ्क्षामुत्थापयति— **कः पुनरिति।** ननु पूर्वमप्येवंभूत एव वस्तुत इत्याशङ्क्य व्यावहारिकरूपेणावस्थात्रयेऽपि यथाक्रम(त्व)मन्यादृशत्वमाह— **पूर्वत्रेति।** प्रतिज्ञामेव दर्शयति— **तथा हीति।** प्रतिज्ञान्तरमाह— **तथाऽऽख्यायिकेति।** यदुक्तम्

***न्यायनिर्णयः***

स्थानमित्यनङ्गीकुर्वन्तं प्रत्याह— **अन्यथेति।** विधान्तरेण स्वशब्दस्यार्थवत्त्वं शङ्कते— **नन्विति।** अज्ञातज्ञापकत्वे संभवत्यनुवादकत्वायोगान्नैवमित्याह— **न तस्येति।** तदेवावचनीयत्वं साधयति— **येनेति।** परपक्षे विशेषणानर्थक्यमुक्त्वा स्वपक्षे तदर्थवत्त्वमाह— **आत्मेति।** अर्थवत्त्वं स्फुटयति— **केवलेनेति।।१।।**

सूत्रान्तरमाकाङ्क्षाद्वाराऽवतारयति— **कः पुनरिति।** सूत्रस्थं मुक्तशब्दं योजयति— **योऽत्रेति।** पूर्वत्रापि वस्तुतोऽस्यैवंभूतत्वात्र विशेषसिद्धिरित्याशङ्क्यावस्थात्रयेऽपि यथाक्रमं व्यावहारिकरूपेणासदृशत्वमाह— **पूर्वत्रेति।** जागरिते पुत्रादावहंममाभिमानादन्धवत् परवशो भवति, स्वप्ने तत्राशदृष्ट्या वासनामयं रोदनाद्यनुभवति, सुषुप्ते विशेषज्ञानशून्यश्छिद्रातुरज्ञानमात्रपरवशस्तिष्ठतीत्यवस्थात्रयेण बन्धापरनाम्ना कालुष्येण दूषितं यदात्मरूपं तेनात्मना संसारदशायामवतिष्ठते, मोक्षे तु निर्मृष्टनिखिलदुःखानुषङ्गप्रद्योतमान-परिशुद्धपरमानन्दरूपेणेति विशेष इत्यर्थः। सूत्रावयवं शङ्कापूर्वकमादत्ते— **कथमिति।** प्रतिज्ञातमेव प्रकटयति— **तथा हीति।** प्रकृतोपयोगिप्रतिज्ञान्तरमाह— **तथेति।** फलत्वादागन्तुकत्वं मुक्तेरुक्तं, तत्राह— **फलत्वेति।** शब्दसामर्थ्यात्

१. 'विनाश' इति पाठः स्यात्।

[1]नापूर्वोपजननापेक्षा। यदप्यभिनिष्पद्यत इत्युत्पत्तिपर्यायत्वं तदपि पूर्वावस्थापेक्षम्, यथा रोगनिवृत्तावरोगोऽभिनिष्पद्यत इति, तद्वत्। तस्माददोषः।।

## आत्मा प्रकरणात्।।३।।

**कथं पुनर्मुक्त इत्युच्यते यावता 'परं ज्योतिरुपसंपद्य' (छा.उ. ८।१२।३) इति कार्यगोचरमेवैनं श्रावयति। ज्योतिःशब्दस्य भौतिके ज्योतिषि रूढत्वात्। न चानतिवृत्तो विकारविषयात् कश्चिन्मुक्तो भवितुमर्हति। विकारस्यार्तत्वप्रसिद्धेरिति। नैष दोषः। यत आत्मैवात्र ज्योतिःशब्देनावेद्यते प्रकरणात्। 'य आत्माऽपहतपाप्मा विजरो विमृत्युः' (छा.उ. ८।७।१) इति हि प्रकृते परस्मिन्नात्मनि नाकस्माद् भौतिकं ज्योतिः शक्यं ग्रहीतुम्। प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात्। ज्योतिःशब्दस्त्वात्मन्यपि दृश्यते 'तद्देवा ज्योतिषां ज्योतिः' (बृ.उ. ४।४।१६) इति। प्रपञ्चितं चैतत् 'ज्योतिर्दर्शनात्' (ब्र.सू. १।३।४०) इत्यत्र।।३।।**

।।इति प्रथमं संपद्याविर्भावाधिकरणम्।।

### *प्रकटार्थविवरणम्*

व्याख्यातुमुपक्रमते— **यदपीति**। **पूर्वावस्थापेक्षमिति**। संसारदशायां तीव्रवायुविक्षिप्तप्रदीपप्रभावन्मिथ्याज्ञानविक्षिप्ततया स्वरूपानभिव्यक्तिमिवापेक्ष्य तन्निवृत्तावभिनिष्पद्यत इत्युपचर्यते; अन्यथा मुक्तौ स्वेनेति विशेषणविधिपरस्याभिनिष्पत्तिशब्दस्य विधीयमानविरोधप्रसङ्गादित्यर्थः।

**आत्मा प्रकरणात्**।। विस्मरणशीलस्य शङ्कानिरासाय सूत्रम्— **'आत्मा प्रकरणात्' इति**। इति प्रथमं सम्पद्याविर्भावाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

फलत्वादिति, तदन्यथासिद्धमित्याह— **फलत्वेति**। अभिनिष्पत्तिशब्दोऽप्युपचरितार्थो बन्धविगर[विगम]स्यागन्तुकत्वप्रसिद्धेरित्याह— [**यदपीति**]।

सूत्रव्यावर्त्यशङ्कामाह— **कथं पुनरिति**। न च ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति पौर्वापर्यश्रवणान्मुक्तेरन्या ज्योतिरुपसंपत्तिरतो न मोक्षव्याघात इ....पद्य तत्परित्यज्य स्वरूपेणाभिनिष्पद्यत इत्यश्रवणादध्याहारे च तत्प्रतिपादनवैयर्थ्यादतोर्थभूतत्वेन[2] विकारत्वात् तदपरित्यागे न मुक्तिरित्याह— **न चानतिवृत्त इति**। शङ्कोत्तरत्वेन सूत्रमवतारयति— **यत आत्मैवेति**। ननु प्रयोगाभावान्नात्मविषय इति, तत्राह— **ज्योतिश्शब्द इति**। एतदपेक्षितश्च न्यायः पूर्वमेव सूचित इत्यत आह— **प्रपञ्चितश्चेति**। इति प्रथमं सम्पद्याविर्भावाधिकरणम्।।

### *न्यायनिर्णयः*

तदागन्तुकत्वमुक्तमनूद्य दूषयति— **यदपीति**। हेतोरन्यथासिद्धत्वे शब्दस्य चौपचारिकत्वे मुक्तेरनागन्तुकत्वं युक्तमित्युपसंहरति— **तस्मादिति**।।२।।

ज्योतिरुपसंपन्नस्य मुक्तत्वायोगमाशङ्क्य परिहरति— **आत्मेति**। सूत्रव्यावर्त्यमाह— **कथमिति**। कार्यगोचरत्वे हेतुमाह— **ज्योतिःशब्दस्येति**। 'ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इति पौर्वापर्यश्रुतेर्मुक्तेरन्या ज्योतिःसंपत्तिरित्याशङ्क्य तदुपसंपद्य तत् त्यक्त्वा स्वेनाभिनिष्पत्तिरित्यश्रवणादध्याहारे च तदुपसंपद्येत्युक्तिवैयर्थ्याज्ज्योतिषो भूतत्वेन कार्यत्वादत्यागे कुतो मुक्तिरित्याह— **न चेति**। विकारगोचरस्यापि मुक्तत्वमाशङ्क्य 'अथ यदल्पं तन्मर्त्य'मित्यादिश्रुतिमाश्रित्याह—**विकारस्येति**। चोद्योत्तरत्वेन सूत्रं योजयति— **नेत्यादिना**। प्रकरणमेव दर्शयति— **य आत्मेति**। **अकस्मात्** प्रकरणविच्छेदं विनेति यावत्। प्रकरणादपि प्रयोगाभावे कथमात्मार्थो ज्योतिश्शब्दः, तत्राह— **ज्योतिःशब्द इति**। अत्रापेक्षितं न्यायं पूर्वोक्तं सूचयन् पुनरुक्तिं प्रत्याह— **प्रपञ्चितं चेति**।।३।। इति प्रथमं सम्पद्याविर्भावाधिकरणम्।।

---

१. 'अपूर्वोपजनापेक्षा' इति पा.। २. अत्र पाठाशुद्धिः।

### २।।अविभागेन दृष्टत्वाधिकरणम्।।सू.४।।

## अविभागेन दृष्टत्वात्।।४।।

**परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते यः स किं परस्मादात्मनः पृथगेव भवत्युताविभागेनैवावतिष्ठत इति वीक्षायाम्–'स तत्र पर्येति' (छा.उ. ८।१२।३) इत्यधिकरणाधिकर्तव्यनिर्देशात् 'ज्योतिरुपसंपद्य' (छा.उ. ८।१२।३) इति च कर्तृकर्मनिर्देशाद् भेदेनैवावस्थानमिति यस्य मतिस्तं व्युत्पादयति–अविभक्त एव परेणात्मना मुक्तोऽवतिष्ठते। कुतः? दृष्टत्वात्। तथा हि– 'तत्त्वमसि' (छा.उ. ६।८।७), 'अहं**

### *शारीरकन्यायसंग्रहः*

**अविभागेन दृष्टत्वात्।।४।।** तदस्य स्वरूपं ब्रह्मैव न भवति, 'स तत्र पर्येति' इति प्रकृते ब्रह्मण्याधाराधेयनिर्देशात् फलवचनस्य साध्यविषयस्य तादात्म्यवाक्यात् साधनविषयादपि प्रधानत्वात् बन्धनिवृत्तिव्यतिरेकेणात्मस्वरूपस्यैव पुनर्ब्रह्मतावन्मात्रताप्राप्तेः 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिना फलान्तरस्येष्टत्वादिति प्राप्तम्। तत्राभिनिष्पन्नस्वरूपस्य 'स उत्तमः पुरुषः' इति परमात्मभावेऽवगते तादात्म्यवाक्यानुकूले फले तद्विरोधिनः फलान्तरस्य प्रकरणात् 'मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' इति ब्रह्मलोकसम्बन्धिलक्षणादिलिङ्गस्य बलवत्त्वात् सगुणविद्याफलेन सम्बन्धः। सर्वत्र चार्थतः साधनात् फलस्य प्राधान्येऽपि शब्दतः फलवचनस्य साधनस्तुतिव्यतिरेकेण प्रयोजनाभावात् साधनवाक्यं प्रति गुणभूतत्वसिद्धिरित्युक्तम्। न चाविद्याक्लेशनिवृत्ति-लक्षणस्वरूपाविर्भावव्यतिरेकेण ब्रह्मतावन्मात्रता नामास्ति तत्त्वज्ञानेन साध्या, तत्त्वज्ञानविषयतयैव नित्यसिद्धत्वात् तस्याः। तादात्म्यं तत्त्वज्ञानविषयं तावन्मात्रताफलमिति चेत्, किं तत् तादात्म्यं नाम? भेदतावन्मात्रताविरोधः, तर्हि तादात्म्यं तत्त्वज्ञानेन निवर्तते चेत्, ज्ञानस्य स्वविषयनिवर्तकत्वम्, ज्ञाननिवर्त्यस्य चाज्ञानवन्मिथ्यात्वम्, ज्ञानस्य स्वविषयबाधद्वारेण स्वेनैव बाध्यत्वं च स्यादिति सुनिरूपितं भवता वेदान्तप्रामाण्यम्। अथ न निवर्तते तादात्म्यम्, कथं तर्हि तस्मिंस्तावन्मात्रे[मात्रता]विरोधिनि सति तावन्मात्रतापत्तिः? किंच तावन्मात्रशब्देन यदि ब्रह्म जीवो वाऽभिधीयते, तयोरनादिसिद्धत्वान्न ज्ञानसाध्यता; अथ जीवस्य ब्रह्मतावन्मात्रमिति, तदपि जीवो ब्रह्मैव वा? तत्रोक्तदोषः। अथ तृतीयं किंचित्, तस्यापि कर्मत्वे क्षणिकतापत्तिः; गुणत्वे विज्ञानजन्यसंस्कारवदनित्यत्वप्रसङ्गः; संस्कारस्यापि कार्यान्तरवत् कर्मजन्यत्वं ब्रुवाणस्य विरम्य व्यापारशून्यज्ञानेनान्वयव्यतिरेकविरोधः, न द्रव्यत्वमुपादानान्तराभावात्, न जीवब्रह्मोपादानता ब्रह्मोपादानद्रव्यान्तरोत्पत्तौ वा ब्रह्मभावस्यासिद्धेः; तस्मात् स्वभावत एव ब्रह्मतावन्मात्रस्यैव सतोऽविद्यादिक्लेशहान्या प्रतिभास[समान]स्वरूपावभासो ब्रह्मभाव इति।

### *प्रकटार्थविवरणम्*

**अविभागेन दृष्टत्वात्।।** मोक्षे स्वरूपावस्थानं पूर्वत्रोक्तम्। तदपि वैशेषिकादिपक्षवत् ब्रह्मणो भेदेन, उत अभेदेनेति सन्दिग्धे 'परं ज्योतिः' इत्यादिना पूर्वपक्षमुपन्यस्य सिद्धान्तसूत्रं योजयति— [१]**स तत्रेत्यादिना**। इति द्वितीयमविभागेन दृष्टत्वाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

**अविभागेन दृष्टत्वात्।** दर्शनमाह— **तथाहीति**। एकत्वेन विदुषा दृष्टत्वादपीत्याह— **यथादर्शनमिति**। इदानी

### *न्यायनिर्णयः*

विदुषः स्वरूपेऽवस्थितस्यापि वैशेषिकादिवद् ब्रह्मणोऽन्यत्वमाशङ्क्याह— **अविभागेनेति**। विषयोक्तिपूर्वकं वादिविप्रतिपत्तेः संशयमाह— **परमिति**। अत्र मुक्तस्य ब्रह्मणोऽत्यन्ताभेदवादात् पादादिसंगतिः। पूर्वपक्षे जीवेश्वरयोरात्यन्तिकमन्यत्वं, सिद्धान्ते तयोरात्यन्तिकमभिन्नत्वमङ्गीकृत्य पूर्वपक्षयति— **इति वीक्षायामिति**। सिद्धान्तसूत्रमवतार्य व्याचष्टे— **इति यस्येति**। दृष्टत्वमेव

---

१. अत्र पाठाशुद्धिः।

**ब्रह्मास्मि' (बृ.उ. १।४।१०), 'यत्र नान्यत्पश्यति' (छा.उ. ७।२४।१), 'न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' (बृ.उ. ४।३।२३) इत्येवमादीनि वाक्यान्यविभागेनैव परमात्मानं दर्शयन्ति। यथादर्शनमेव च फलं युक्तम्, तत्क्रतुन्यायात्। 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम' (क.उ. ४।१५) इति चैवमादीनि मुक्तस्वरूपनिरूपणपराणि वाक्यान्यविभागमेव दर्शयन्ति। नदीसमुद्रादिनिदर्शनानि च। भेदनिर्देशस्त्वभेदेऽप्युपचर्यते। 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' (छा.उ. ७।२४।१) इति, 'आत्मरतिरात्मक्रीडः' (छा.उ. ७।२५।२) इति चैवमादिदर्शनात्।।४।।**

।।इति द्वितीयमविभागेन दृष्टत्वाधिकरणम्।।

३।।ब्राह्माधिकरणम्।।सू.५-७।।

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः।।५।।

**स्थितमेतत् 'स्वेन रूपेण (छा.उ. ८।३।४) इत्यत्रात्ममात्ररूपेणाभिनिष्पद्यते, नागन्तुकेनापररूपेणेति। अधुना तु तद्विशेषबुभुत्सायामभिधीयते- स्वमस्य रूपं ब्राह्ममपहतपाप्मत्वादिसत्यसंकल्पत्वावसानम्, तथा**

***शारीरकन्यायसंग्रहः***

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः।।५।। चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः।।६।। एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः।।७।।** ऐश्वर्यचिन्मात्रावस्थानयोरन्यतरोपादाने अन्यतरबाधादेकत्रोभयासम्भवादसमञ्जसे विद्याफले प्राप्ते, चिन्मात्रस्यैव सतः तत्त्वातत्त्वविभागापेक्षया वा मायोपाधिवशात् ब्रह्मेश्वरविभागापेक्षया वा विद्याविद्याकृतावस्थापेक्षया वा उभयथाभावोपपत्तिरुक्ता।

***प्रकटार्थविवरणम्***

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः।।** वृत्तानुवादपूर्वकं संबन्धमाह— **स्थितमेतदिति**। तस्य मोक्षस्वरूपस्य असमञ्जसत्व-

***भाष्यभावप्रकाशिका***

फलावस्थाप्रतिपादकवाक्ये दृष्टत्वादिति योजनान्तरमाह— **यथोदकमिति**। कस्तर्हि [का तर्हि] पूर्वोक्ताधिकरणा(दधिकरणा)दिभेदनिर्देशस्य गतिरित्याशङ्क्य औपचारिक एवायम्, तथाऽन्यत्र दृष्टत्वादिति परिहरति— **भेदनिर्देश इति**। इति द्वितीयमविभागेन दृष्टत्वाधिकरणम्।।

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः।।** वृत्तं संकीर्त्य विषयसंशयौ दर्शयति— **अधुनेति**। येन ब्रह्मरूपेण मुक्तावस्थानं तत् सप्रपञ्चमेवोत निष्प्रपञ्चमेवोतोभयरूपमिति संशये सप्रपञ्चमेवेति तावदाह— **स्वमस्येति**। उपन्यास उद्देशः। आदिशब्दगृहीतौ

***न्यायनिर्णयः***

स्फुटयति— **तथा हीति**। परमात्मन्यैक्येन दृष्टत्वे फलितमाह— **यथेति**। फलावस्थावादिवाक्येष्वविभागस्य दृष्टत्वादपि मुक्तस्य परस्मादात्यन्तिकमैक्यमिति व्याख्यान्तरमाह— **यथेति**। उक्तभेदनिर्देशस्य तर्हि का गतिः, तत्राह— **भेदेति**। उपचारो गतिरित्यत्र तथाऽन्यत्र दृष्टत्वं हेतुमाह— **स इति**।।४।। इति द्वितीयमविभागेन दृष्टत्वाधिकरणम्।।

ब्रह्मात्मतां प्राप्तस्यापि जीवस्य सप्रपञ्चत्वं चोदयति— **ब्राह्मेणेति**। वृत्तं कीर्तयति— **स्थितमिति**। विषयसंशयौ दर्शयति— **अधुनेति**। येन च ब्रह्मरूपेण मुक्तस्यावस्थानं तत् किं सप्रपञ्चमेव किंवा निष्प्रपञ्चमेवाथ वोभयरूपमिति विप्रतिपत्तेः संशये ब्रह्मणो मुक्तोपसृप्यस्य दृष्टिद्वयमाश्रित्योभयरूपत्वोक्त्या पादादिसंगतिः। पूर्वपक्षे सप्रपञ्चत्वश्रुतीनां वा निष्प्रपञ्चत्वश्रुतीनां वा मुख्यार्थत्वसिद्धिः। सिद्धान्ते द्विविधश्रुतीनां दृष्टिद्वयावष्टम्भान्मुख्यार्थत्वोपपत्तिरित्युपेत्य पूर्वपक्षयति— **अभिधीयत इति**। उपन्यासेन ब्रह्मणः सप्रपञ्चत्वसिद्धिं

**सर्वज्ञत्वं सर्वेश्वरत्वं च तेन स्वरूपेणाभिनिष्पद्यत इति जैमिनिराचार्यो मन्यते। कुतः? उपन्यासादिभ्यस्तथात्वावगमात्। तथाहि– 'य आत्माऽपहतपाप्मा' (छा.उ. ८।७।१) इत्यादिना 'सत्यकामः सत्यसंकल्पः' (छा.उ. ८।७।१) इत्येवमन्तेनोपन्यासेनैवमात्मकतामात्मनो बोधयति। तथा 'स तत्र पर्येति जक्षत्क्रीडन् रममाणः' (छा.उ. ८।१२।३) इत्यैश्वर्यरूपमावेदयति। 'तस्य सर्वेषु लोकेषु कामचारो भवति' (छा.उ. ७।२५।२) इति च। 'सर्वज्ञः सर्वेश्वरः' इत्यादिव्यपदेशाश्चैवमुपपन्ना भविष्यन्तीति।।५।।**

## चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः।।६।।

**यद्यप्यपहतपाप्मत्वादयो भेदेनैव धर्मा निर्दिश्यन्ते तथापि शब्दविकल्पजा एवैते। पाप्मादिनिवृत्तिमात्रं हि तत्र गम्यते। चैतन्यमेव त्वस्यात्मनः स्वरूपमिति तन्मात्रेण स्वरूपेणाभिनिष्पत्तिर्युक्ता। तथा च श्रुतिः– 'एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ.उ. ४।५।१३) इत्येवंजातीयकाऽनुगृहीता भविष्यति। सत्यकामत्वादयस्तु यद्यपि वस्तुस्वरूपेणैव धर्मा उच्यन्ते– सत्याः कामा अस्येति। तथाप्युपाधिसंबन्धाधीनत्वात् तेषां न चैतन्यवत् स्वरूपत्वसंभवः। अनेकाकारत्वप्रतिषेधात्। प्रतिषिद्धं हि ब्रह्मणोऽनेकाकारत्वम्**

### *प्रकटार्थविवरणम्*

समञ्जसत्वलक्षणविशेषबुभुत्सायामसमञ्जसत्वपक्षोऽभिधीयते— **स्वमस्येत्यादिना**। आदिशब्दार्थमाह— **तथा स तत्र पर्येतीति**।

**चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः।।** मतान्तरमाह— **चितितन्मात्रेणेति**। जैमिनीयमतविरुद्धमौडुलोमिमतमिति व्याख्याति— **यद्यपीत्यादिना**। अपहतपाप्मत्वादयो धर्माः यद्यपि भेदेनैव निर्दिश्यन्ते, तथापि नैते भावरूपाः, किं तु शब्दोत्थनिर्वस्तुकप्रत्ययमात्रा एवेत्यर्थः। किं तर्हि स्वरूपम्, येन स्वरूपेण मुक्तोऽवतिष्ठत इत्याशङ्क्याह— **चैतन्यमेव त्विति**। ननु [न] चैतन्यमेव स्वरूपं सत्यकामत्वादीनां भावरूपाणां स्वरूपत्वेन निर्देशादित्याशङ्क्याह— **सत्यकामत्वादयस्त्विति**। कथं

### *भाष्यभावप्रकाशिका*

विधिव्यपदेशौ दर्शयति— **तथा स तत्रेति**। अत्र ज्ञातस्यान्यविधानाय कीर्तनमुद्देशः, अज्ञातज्ञापनं विधिः, विधेयान्तररहिततयाऽनुद्देशस्याप्रतिपाद्यतया चाविधेयस्य सिद्धवत्कथनं व्यपदेश इति विशेषः।

पक्षान्तरमाह— **चितितन्मात्रेणेति**। उपन्यासादिभ्यो अनेकरसत्वमुक्तमित्याशङ्क्याह— **यद्यपीति**। कथं विकल्पमात्रत्वमित्यत आह— **पाप्मादीति**। पाप्मादेः काल्पनिकत्वात् तदधीननिरूपणानां तेषामपि काल्पनिकत्वमेवेति राहोःशिर इतिवदवास्तवत्वमित्यर्थः। अनिवृत्तिरूपेषु तर्हि का गतिरिति, तत्राह— **सत्यकामत्वादय इति**। उपाधीनामपि तदभेदाद् वास्तवमेव धर्मवत्त्वमित्याशङ्क्याह—

### *न्यायनिर्णयः*

विवृणोति— **तथा हीति**। उपन्यासो नामोद्देशः। स चान्यत्र ज्ञातस्यान्यविधानायानुवादः। आदिशब्दार्थविधिं दर्शयति— **तथेति**। अज्ञातज्ञापनं विधिः। आदिशब्देनोक्तं व्यपदेशमाह— **सर्वज्ञ इति**। विधेयान्तररहितत्वेनानुद्देश्यस्याप्रतिपाद्यत्वेनाविधेयस्य च सिद्धवदभिधानं व्यपदेशः।।५।।

पूर्वपक्षान्तरमाह— **चितितन्मात्रेणेति**। उपन्यासादिना नानारसत्वे दर्शिते कथं चिदेकरसत्वमित्याशङ्क्याह— **यद्यपीति**। कथं विकल्पमात्रत्वमित्याशङ्क्य काल्पनिकत्वात्पाप्मादेस्तन्निवृत्तिरूपाणां तेषामपि राहोः शिर इतिवत् काल्पनिकत्वमेवेत्याह— **पाप्मादीति**। किं तर्हि तस्य वास्तवरूपं, तदाह— **चैतन्यमिति**। तत्र मानमाह— **तथा चेति**। सत्यकामत्वादीनामपहतपाप्मत्वादिवन्नेतुमशक्यत्वात् कुतो ब्रह्मणश्चैतन्यमात्रतेत्याशङ्क्याह— **सत्येति**। उपाधीनामपि तदभेदाद् वास्तवमेव धर्मत्वमित्याशङ्क्याह—

**'न स्थानतोऽपि परस्योभयलिङ्गम्' (ब्र.सू. ३।२।११) इत्यत्र। अत एव च जक्षणादिसंकीर्तनमपि दुःखाभावमात्राभिप्रायं स्तुत्यर्थम्, 'आत्मरति'रित्यादिवत्। न हि मुख्यान्येव रतिक्रीडामिथुनान्यात्मनि[1] शक्यन्ते वर्णयितुं द्वितीयविषयत्वात् तेषाम्। तस्मान्निरस्ताशेषप्रपञ्चेन प्रसन्नेनाव्यपदेश्येन बोधात्मनाऽभिनिष्पद्यत इत्यौडुलौमिराचार्यो मन्यते।।६।।**

## एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः।।७।।

**एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वस्याप्युपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यते।।७।।**

।।इति तृतीयं ब्राह्माधिकरणम्।।

### *प्रकटार्थविवरणम्*

चैतन्यमात्रेणावस्थाने जक्षणादिश्रवणं घटत इत्याशङ्क्याह— **अत एव चेति**।

**एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः**।। उक्तन्यायेन जैमिन्यौडुलोमिमतयोः परस्परविरोधान्मोक्षेऽनाश्वासे प्राप्ते सिद्धान्तं स्मारयति— **एवमपीति**। चैतन्यमात्रं पारमार्थिकं स्वरूपम्, ऐश्वर्यादिकं मायोपाधिक[म]स्येति असकृदुक्तम्; ततः परमार्थब्रह्मविच्चैतन्यमात्ररूपेणावतिष्ठते; सोपाधिकब्रह्मवित् सोपाधिकमैश्वर्यादि प्राप्नोतीति न जैमिन्यौडुलोमिभ्यामपि विवदितव्यम्। अतः श्रुतीनामपि व्यवस्थितविषयत्वात् विरोधगन्धाभावात् समञ्जस एवायं मोक्ष इत्यर्थः।

अत्र **भास्करेण** चुक्रोशे 'चैतन्यमात्रावस्थानं चेन्मोक्षः, तदा निःसंबोधितत्वेन[बोधत्वेन] अपुरुषार्थत्वप्रसङ्गः; तस्मात् सर्वज्ञत्वादिलक्षणसंबोधवन्मोक्षः सूत्रकृतोऽभिप्रेतः' इति; तत्रोच्यते—किमागन्तुकबोधेन ससंबोधत्वं, किं वा स्वाभाविकेन? आद्ये तत्कारणं मनआदि वक्तव्यम्; तदा च कलाविलयश्रुतिबाधः; तस्य च ब्रह्मीभूतत्वात् ब्रह्मण एव मनआदिसापेक्षं सर्वज्ञत्वमुक्तं स्यात्; न च स्वरूपज्ञानेन सर्वज्ञत्वम्, तस्य स्वतो विषयोपरागाभावात्, 'असङ्गो ह्ययं पुरुषः' इत्यादिश्रुतेः। तेनापि स्वात्मन्येव संसारदुःखं पश्यति, किं वा भेदेन? प्रथमे वरं संसरणम्; चरमे 'यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यदल्पं तन्मर्त्यम्' इति श्रुतिबाधः; स्वप्रकाशकतया सुषुप्तिव्यावृत्तिमात्रं चेत् ससंबोधत्वं तदिष्टमेवास्माकमपीति परमात्मैक्यप्रतिपत्तिपरायणपरमहंस-परिव्राजकप्रद्वेषानलप्रज्वलितकलेवर**भास्कर**सारमेयश्चुक्रोशेत्युपशम एव श्रेयान्।

यच्चान्यच्चक्रन्द— चैतन्यमात्रावस्थानं चेन्मोक्षः, तदा निरानन्दत्वप्रसङ्गः; न हि चैतन्यमेवानन्दः, दुःखावस्थायामपि चैतन्याभिव्यक्तेः; यस्मिन् व्यज्यमाने यन्न व्यज्यते न तत् तत्स्वभावं यथा नीलं न पीतस्वभावमिति, तदसत्, व्याप्त्यभावात्;

### *भाष्यभावप्रकाशिका*

**अनेकाकारत्वेति**। यदुक्तमैश्वर्यरूपमावेदयतीति, तत्राह— **अत एवेति**। ननु तत्रापि कथमित्यत आह— **न हि मुख्यानीति**।

सिद्धान्तमाह— **एवमपीति**। चिन्मात्रस्यापि सतस्तत्त्वातत्त्वविभागापेक्षायां[क्षया] मायोपाधिवशात् ब्रह्मेश्वरविभागापेक्षयापि वा विद्याविद्याकृतावस्थापेक्षया वोभयथाभाव उपपद्यत इत्यर्थः। इति तृतीयं ब्राह्माधिकरणम्।।

### *न्यायनिर्णयः*

**अनेकेति**। उपन्यासस्येव विधिव्यपदेशयोर्गतिमाह— **अत इति**। अनेकाकारत्वस्य निषिद्धत्वादेवेति यावत्। दृष्टान्तेऽपि मुख्यत्वमाशङ्क्योक्तम्— **न हीति**। उपन्यासादीनामन्यथासिद्धत्वे श्रुतिसिद्धमर्थमुपसंहरति— **तस्मादिति**।।६।।

सिद्धान्तयति— **एवमपीति**। चिन्मात्रस्यापि सतो ब्रह्मणस्तत्त्वातत्त्वविभागाद् द्विधात्वसिद्धिरिति सूत्रार्थं विवृणोति— **एवमित्यादिना**।।७।। इति तृतीयं ब्राह्माधिकरणम्।।

१. 'आत्मनिमित्तानि' इति पा.।

## ४।।संकल्पाधिकरणम्।।सू.८-९।।

## संकल्पादेव तु तच्छ्रुतेः।।८।।

### *शारीरकन्यायसंग्रहः*

**सङ्कल्पादेव तु तच्छ्रुतेः।।८।। अत एव चानन्याधिपतिः।।९।।** मुक्तस्य पित्रादिभोगसाधनसम्पत्तिः, सङ्कल्पव्यतिरिक्तोचितप्रयत्नादिसाधनसामग्रीसव्यपेक्षा भोगसाधनसम्पत्तित्वात्, अस्मदादिभोगसाधनसम्पत्तिवत् इत्यनुमानस्य सङ्कल्पादेवेत्यवधारणश्रुत्या विद्याया मन्त्रौषधादिवदचिन्त्यसामर्थ्यत्वादिति न्यायानुगृहीतया बाधो दर्शितः।

### *प्रकटार्थविवरणम्*

गौरं हि रूपं चैत्रस्य चैत्रे प्रतिबिम्बिते कृपाणादौ प्रतिबिम्बितं न तथा व्यज्यते; विपरीतं तु कृष्णमिति तत्र गौरत्वव्यञ्जकत्वं व्यक्तेः स्वभावभूतमपि न व्यज्यत इति व्यभिचारः। जीवस्य च तव ब्रह्मस्वभावस्यानभिव्यक्तिः, सत्यपि तस्मिंस्तदात्मतानभिव्यक्तिदर्शनात्; तस्मादु[१]पाधिमहिमैवाचिन्त्येन स्वभावाभानविभ्रमः। तथाऽत्राप्यशुभकर्मोपस्थापितविषयविशेषसंसृष्टान्तःकरणपरिणतौ स्वच्छ इवादर्शे सुखं यथास्वरूपेणैव व्यज्यते, तच्छुद्ध्युत्कर्षाच्चोत्कृष्यते, तज्जन्मनाशाभ्यां जन्मनाशाभिधानं च लभते; तस्माच्चैतन्यसुखात्मकत्वे बाधानुपलम्भात् चिदात्मनश्च निरुपाधिकप्रीतिगोचरत्वेनानन्दात्मतासिद्धेर्न मोक्षस्य निरानन्दत्वप्रसङ्गः। सुखसाक्षात्कारश्च पुरुषार्थो न व्यतिरेकः केवलव्यतिरेकाभावात्। दर्शनमात्रेण उप[अभि]योगे सत्यैहिकस्यैव पुरुषार्थत्वं दृष्टमित्यामुष्मिकस्य पुरुषार्थत्वं न स्यात्।

यच्चाहुः **वैशेषिकादयः**— दुःखाननुभवमात्रो मोक्षः पुरुषार्थ इति, तदप्यसत्; इष्टं मे स्यात् अनिष्टं मा भूदित्यनुभवविरोधात्। कण्टकादिपरिहारोऽपि सुखार्थ एव, सुषुप्तेऽपि च सुखसाक्षात्कार एव पुरुषार्थः, सुखमहमस्वाप्समित्यबाधितपरामर्शात्, अज्ञानावस्थाभेदावच्छिन्नचिदाभाससंस्कारसंभवात्; दुःखाभावस्य च प्रतियोग्यस्मरणेनानुभवितुमशक्यत्वात्; अनुभूते स्मृतिनियमाभावेनोत्थितेनानुमातुमशक्यत्वाच्च।

यच्चोक्तं विमतं दुःखानुबन्धि स्यात्, सुखत्वात्, विषयसुखवदिति, तदसत्; 'न लिप्यते लोकदुःखेन बाह्यः' इति श्रुतिविरोधात्। न च श्रुतिरेवानुमानविरोधादप्रमाणमिति वाच्यम्। अबाधितविषयत्वस्यानुमानकारणत्वेन सति विरोधे ज्ञानमेव नोदयमासादयति। शाब्दं तु ज्ञानमनपेक्षं भवेदुदयमात्रेण बाधकम्। अत एवानुमानबाधाभावान्नानन्दश्रुतिः दुःखाभावपरतयोपचरणीया। 'एषोऽस्य परम आनन्दः' इति परमश्रुतेश्च न दुःखाभावमात्रमानन्द इति।

यच्च **सांख्याः** सङ्गिरन्ते— प्रकृतिपुरुषयोरविवेके विवेकान्निवृत्ते पुरुषस्य स्वरूपावस्थानं मोक्ष इति, तत्राप्यानन्दानाविर्भावादपुरुषार्थत्वं स्थितमेव। अविवेकस्य च वस्तुत्वे न ज्ञानहेयत्वम्; अवस्तुत्वे च न संसारकारणत्वम्।

**सुगतानामपि** सन्तानोच्छेदो मोक्षः कस्य पुरुषार्थः? न तावत् सन्तानस्य, स्वोच्छेदस्य अपुमर्थत्वात्; न सन्तानिनाम्, स्वरसपरिनिर्वाणे फलित्वानुपपत्तेः। **दिगम्बराणामपि** सततोर्ध्वगमनमायाससङ्कुलत्वान्न पुरुषार्थः।

अतो निःशेषदुःखनिदानानन्दानभिव्यक्तिनिमित्ताविद्योच्छेदे निःशेषदुःखनिवृत्तिर्निरतिशयानन्दावाप्तिश्च पुरुषार्थो मोक्ष इति समञ्जसम्।

सर्वसङ्करवादी पुनः **भास्करो** मुक्तस्यैवोत्तराधिकरणनिरूप्यं शरीरादिमत्त्वं सातिशयमैश्वर्यं ब्रुवाणः कथंकारं सज्जनेषु न लालज्यते स्मेत्यलं विद्वज्जनलज्जाकरेण तदनुभाषणेन। इति तृतीयं ब्राह्माधिकरणम्।।

### *न्यायनिर्णयः*

पूर्वाधिकरणेषु परविद्याफलमभिधायापरविद्याफलं प्रपञ्चयितुमधुनोपक्रमते— **संकल्पादिति**। विषयं वक्तुं वाक्यमुदाहरति—

---

१. 'उपाधिमहिम्नैव' इति पाठः स्यात्।

**हार्दविद्यायां श्रूयते– 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' (छा.उ. ८।२।१) इत्यादि। तत्र संशयः– किं संकल्प एव केवलः पित्रादिसमुत्थाने हेतुरुत निमित्तान्तरसहित इति। तत्र सत्यपि संकल्पादेवेति श्रवणे लोकवन्निमित्तान्तरापेक्षता [१]युक्ता। यथा लोकेऽस्मदादीनां संकल्पाद् गमनादिभ्यश्च हेतुभ्यः पित्रादिसंपत्तिर्भवत्येवं मुक्तस्यापि स्यात्। एवं दृष्टविपरीतं न कल्पितं भविष्यति। संकल्पादेवेति तु राज्ञ इव संकल्पितार्थसिद्धिकरीं साधनान्तरसामग्रीं सुलभामपेक्ष्योच्यते। न च संकल्पमात्रसमुत्थानाः पित्रादयो मनोरथविजृम्भितवच्चञ्चलत्वात् पुष्कलं भोगं समर्पयितुं पर्याप्ताः स्युरिति।**

**एवं प्राप्ते ब्रूमः– संकल्पादेव तु केवलात् पित्रादिसमुत्थानमिति। कुतः? तच्छ्रुतेः। 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' (छा.उ. ८।२।१) इत्यादिका हि श्रुतिर्निमित्तान्तरापेक्षायां पीड्येत। निमित्तान्तरमपि**

***प्रकटार्थविवरणम्***

**सङ्कल्पादेव तु तच्छ्रुतेः**।। एवं तावत् परविद्याफलं प्रपञ्च्य अधुना अपरविद्याफलं प्रपञ्चयितुमुपक्रमते— **हार्दविद्यायामिति**। एवकारस्यायोगान्ययोगव्यवच्छेदसाधारणत्वात् संशयमुक्त्वा पूर्वपक्षमाह— **तत्र सत्यपीति**। रागादिदोषवियुक्तस्योपासकस्य पित्रादिभोगसाधनसंपत्तिः सङ्कल्पव्यतिरिक्तप्रयत्नसापेक्षा भोगसाधनसंपत्तित्वात्, अस्मदादिभोगसाधनसंपत्तिवदित्यर्थः। विपक्षे च बाधकमाह— **न चेति**। विद्याया मन्त्रौषधादिवदचिन्त्यशक्तिसद्भावाद् विद्यावतः सङ्कल्पमात्रेणैव पित्रादिभोगसाधनसंपत्तिरित्याह— **सङ्कल्पादेव त्विति**। किं च नात्यन्तमनपेक्षत्वं निमित्तस्यास्माभिरुच्यत इत्याह— **निमित्तान्तरमपि त्विति**। प्राङ्निमित्तान्तरसंपत्तेः

***भाष्यभावप्रकाशिका***

**संकल्पादेव तु तच्छ्रुतेः**। नन्ववधारणश्रुत्या संकल्पस्य निरपेक्षत्वावगमात् कथमाशङ्क्येतेति, तत्राह— **तत्र सत्यपीति**। मुक्तस्य पित्रादिभोगसाधनसंपत्तिःसंकल्पव्यतिरिक्तप्रयत्नादिसाधनसामग्र्यपेक्षा भोगसाधनसंपत्तित्वादस्मदादिभोगसाधनसंपत्तिवदित्यर्थः। लोकवृत्तानुसारेण श्रुतेरर्थवत्त्वोपपत्तावेव तद्विपरीतं न कल्पनीयम्। इह त्ववधारणस्य तदनुसारेण अर्थवत्त्वमेव न स्यादित्याशङ्क्य यत्नगौरवमपेक्ष्यावधारणोपपत्तेर्न साधनान्तरापेक्षमवधारणं लोकविरोधेनाभ्युपेयमित्याह— **संकल्पादेवेति**। संकल्पमात्रत्वे भोगकार्यसाधनत्वासंभवादपि तद्व्यतिरिक्तसाधनापेक्षा युक्तेत्याह— **न च संकल्पेति**। ननु मनोरथविजृम्भितादपि हर्षादिकं दृश्यत इत्याशङ्क्य(ाह)[ज्ञानमात्र]साध्यकार्यसद्भावेऽपि ज्ञेयवस्तुसाध्यं कार्यं तत्र नास्तीत्याह— **पुष्कलं भोगमिति**। अनुमानस्य श्रुतिविरुद्धतामाह— **संकल्पादे**...मित्तमपि संकल्पमात्रायत्तमभ्युपेयत इत्याह— **निमित्तान्तरमपीति**। निमित्तान्तर...भावित्वात्तत्सिद्धेः

***न्यायनिर्णयः***

**हार्देति**। एवकारस्यायोगान्ययोगव्यवच्छेदसाधारणतया संकल्पं विषयीकृत्य संशयमाह— **तत्रेति**। अत्र च सगुणब्रह्मविदो ब्रह्मभूतस्य विभूतिनिर्माणसाधननिरूपणात् पादादिसंगतिः। पूर्वपक्षे लोकवृत्तानुसारि चरणं सिद्धान्ते श्रुतिवृत्तानुसारि चरणमित्यभिप्रेत्यावधारणश्रुत्या संकल्पस्य निरपेक्षत्वसिद्ध्या पूर्वपक्षानुत्थानमाशङ्क्याह— **तत्रेति**। लोकवदित्युक्तं विवृणोति— **यथेति**। मुक्तस्य पित्रादिभोगहेतुसंपत्तिः संकल्पातिरिक्तयत्नादिसापेक्षा भोगहेतुसंपत्तित्वादस्मदादिभोगहेतुसंपत्तिवदिति मत्वा दार्ष्टान्तिकमाह— **एवमिति**। अनुमानफलमाह— **एवं दृष्टेति**। लोकवृत्तानुसारेण श्रुतेरर्थवत्त्वसिद्धावेव तद्विपरीतं न कल्प्यमिह त्ववधारणस्य तदनुसरणे सत्यर्थवत्त्वमेव न स्यादित्याशङ्क्याह— **संकल्पादिति**। पित्रादेः संकल्पमात्रजन्यत्वे मनोरथविजृम्भितस्त्रीपुत्रादिवदर्थक्रियासामर्थ्याभावादपि संकल्पातिरिक्तसाधनापेक्षा वक्तव्येत्याह— **न चेति**। मनोरथनिर्मितादपि हर्षादिकार्यं दृष्टमित्याशङ्क्य ज्ञानमात्रसाध्यकार्यसत्त्वेऽपि ज्ञेयवस्तुसाध्यं कार्यं तत्र नास्तीत्याह— **पुष्कलमिति**।

संकल्पस्य यत्नादिसापेक्षस्यैव पित्रादिनिर्माणहेतुतेत्येतदनूद्य सिद्धान्तसूत्रमवतार्य व्याकरोति— **एवमिति**। संकल्पस्य यत्नसापेक्षत्वेऽनुमानस्योक्तत्वान्न तस्य केवलस्य पित्राद्युद्भवहेतुतेति शङ्कते— **कुत इति**। श्रुतिविरुद्धतया कालात्ययापदिष्टमनुमानमित्याह— **तच्छ्रुतेरिति**। किंच निमित्तान्तरमपि संकल्पायत्तं वा यत्नान्तरसाध्यं वा, तत्राद्यमङ्गीकृत्य द्वितीयं दूषयति—

१. 'निमित्तान्तरापेक्षा' इति पा.

**तु यदि संकल्पानुविधाय्येव स्याद् भवतु, न तु प्रयत्नान्तरसंपाद्यं निमित्तान्तरमितीष्यते। प्राक् तत्संपत्तेर्वन्ध्य-संकल्पत्वप्रसङ्गात्। न च श्रुत्यवगम्येऽर्थे लोकवदिति सामान्यतो दृष्टं क्रमते। संकल्पबलादेव चैषां यावत्प्रयोजनं स्थैर्योपपत्तिः। प्राकृतसंकल्पविलक्षणत्वान्मुक्तसंकल्पस्य।।८।।**

## अत एव चानन्याधिपतिः।।९।।

**अत एव चावन्ध्यसंकल्पत्वादनन्याधिपतिर्विद्वान् भवति, नास्यान्योऽधिपतिर्भवतीत्यर्थः। न हि प्राकृतोऽपि संकल्पयन्नन्यस्वामिकत्वमात्मनः सत्यां गतौ संकल्पयति। श्रुतिश्चैतद् दर्शयति– 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' (छा.उ. ८।१।६) इति।।९।।**

।।इति चतुर्थं संकल्पाधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

५।।अभावाधिकरणम्।।सू. १०-१४।।

**अभावं बादरिराह ह्येवम्।।१०।। भावं जैमिनिर्विकल्पामननात्।।११।। द्वादशाहवदुभयविधं बादरायणोऽतः।।१२।। तन्वभावे सन्ध्यवदुपपत्तेः।।१३।। भावे जाग्रद्वत्।।१४।।** शरीरेन्द्रियभावाभावयोरन्यतरोपादाने अन्यतरबाधादुभयोर्यौगपद्यासम्भवाच्च सगुणविद्याफलविरोधे प्राप्ते कालभेदेन सङ्कल्पभेदात् क्रमेणोपपत्तिरुक्ता।

### *प्रकटार्थविवरणम्*

विफलसङ्कल्पत्वप्रसङ्गात् प्रयत्नान्तरसाध्यनिमित्तान्तरं नेष्यत इत्यर्थः। यच्चानुमानं तत् सावधारणश्रुतिबाधितमित्याह— **न च श्रुतिगम्य इति**। यच्च मनोरथवच्चञ्चलत्वमवाचि, तत्राह— **सङ्कल्पबलादेवेति**।

**अत एव चानन्याधिपतिः**।। नन्वीश्वराधीनो भोग उपासकस्य। अतो न संकल्पमात्राद् भोगदाने समर्थस्यैव पित्रादेः संपत्तिरित्याशङ्क्याह— **अत एव चेति**। इति चतुर्थं संकल्पाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

प्रादोह[प्राङ्मोघ]संकल्पत्वं स्यादित्याह— **प्रागिति**। दृष्टविपरीतमिति यदुक्तं तत्राह— **न चेति**। मनोरथविजृम्भितवच्चञ्चलत्वं स्यादिति यदुक्तम्, तत्राह— **संकल्पबलादिति**। अस्मदादिसंकल्पितेषु तथा दृश्यत इति, तत्राह— **प्राकृतेति**।

सत्यसंकल्पत्वे लाभान्तरमाह— **अत एवेति**। ननु तथाभूत एव संकल्पः स्यादिति न नियम इति, तत्राह— **न हीति**। इति चतुर्थं संकल्पाधिकरणम्।।

### *न्यायनिर्णयः*

**निमित्तान्तरमिति**। तस्य यत्नाद्यपेक्षस्य संकल्पापेक्षया विलम्बितोत्पत्तिकत्वात् प्राक्तदुत्पत्तेर्विदुषो मोघसंकल्पत्वं स्यात्, ततश्च द्वितीयस्यायुक्ततेत्याह— **प्रागिति**। यत्तु लोकवन्निमित्तान्तरापेक्षेति, तत्राह— **न चेति**। यदपि मनोरथविजृम्भितवदतिचञ्चलत्वान्न भोगसाधनत्वं संकल्पप्रसूतानां पित्रादीनामिति, तत्राह— **संकल्पेति**। अस्मदादिसंकल्पितेष्वदृष्टं स्थैर्यं कथं मुक्तसंकल्पितेषु कल्प्यते, तत्राह— **प्राकृतेति**।।८।।

विदुषः सत्यसंकल्पत्वे लाभान्तरमाह— **अत इति**। उपासितुरीश्वराधीनो भोगो न संकल्पमात्राद् भवितुमलमित्याशङ्क्य सूत्रं व्याकरोति— **अत एवेति**। सत्यसंकल्पत्वेऽपि कथमीश्वराधीनत्वं विदुषो नेष्यते, तत्राह— **न हीति**। ईश्वरप्रसादाद्भोगः स्यादित्यपि प्रार्थयमानो जनो दृश्यत इत्याशङ्क्याह— **सत्यामिति**। विदुषोऽनन्याधीनमैश्वर्यमस्तीत्यत्र मानमाह— **श्रुतिश्चेति**। विद्यानुवादद्वारा तत्फलोत्त्यारम्भार्थोऽथशब्दः।।९।। इति चतुर्थं संकल्पाधिकरणम्।।

५।।अभावाधिकरणम्।।सू.१०-१४।।

## अभावं बादरिराह ह्येवम्।।१०।।

**'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' (छा.उ. ८।२।१) इत्यादिश्रुतेर्मनस्तावत् संकल्पसाधनं सिद्धम्। शरीरेन्द्रियाणि पुनः प्राप्तैश्वर्यस्य विदुषः सन्ति, न वा सन्तीति समीक्ष्यते। तत्र बादरिस्तावदाचार्यः शरीरस्येन्द्रियाणां चाभावं महीयमानस्य विदुषो मन्यते। कस्मात्? एवं ह्याहाम्नायः 'मनसैतान् कामान्पश्यन् रमते। य एते ब्रह्मलोके' (छा.उ. ८।१२।५) इति। यदि मनसा शरीरेन्द्रियैश्च विहरेन्मनसेति विशेषणं न स्यात्। तस्मादभावः शरीरेन्द्रियाणां मोक्षे।।१०।।**

## भावं जैमिनिर्विकल्पामननात्।।११।।

**जैमिनिस्त्वाचार्यो मनोवच्छरीरस्यापि सेन्द्रियस्य भावं मुक्तं प्रति मन्यते। यतः 'स एकधा भवति त्रिधा भवति' (छा.उ. ७।२६।२) इत्यादिनाऽनेकधाभावविकल्पमामनन्ति। न ह्यनेकविधता विना शरीरभेदेनाञ्जसी**

### *प्रकटार्थविवरणम्*

**अभावं बादरिराह ह्येवम्।।** पूर्वविचारेणार्थात् सिद्धमंशमनूद्य संदेहमाह— **संकल्पादेवेति**। वादिविप्रतिपत्तेः संशयमुक्त्वा पूर्वपक्षमाह— **तत्रेत्यादिना**।

**भावं जैमिनिः विकल्पामननात्।।** पक्षान्तरमाह— **भावं जैमिनिरिति**। नन्वनेकविधत्वमाम्नातं भूमविद्यायाः प्रकरणे;

### *भाष्यभावप्रकाशिका*

**अभावं बादरिराह ह्येवम्।।** मनस्सद्भावे किमिति संशयो न क्रियत इत्याशङ्क्याह— **संकल्पादेवेति**। अन्ययोगव्यवच्छेदाय मनसेति विशेषणाद् वामेनाक्ष्णा पश्यतीत्यादाविवेतरव्यावृत्तिरवगम्यत इत्याह— **यदीति**।

मनोभेदादेव विकल्पामननं किन्न स्यादित्यत आह— **न ह्यनेकेति**। शरीरभेदाभावे मनोभेदोऽप्यनुपपन्न इत्यर्थः। नन्वेषा

### *न्यायनिर्णयः*

विदुषो ब्रह्मीभूतस्य सप्रपञ्चत्वनिष्प्रपञ्चत्वयोर्व्यावहारिकतात्त्विकताभ्यां व्यवस्थामुक्त्वा संकल्पातिरिक्तसाधनभावाभावयोरेकोपाधावापाततो विरोधाल्लोकसिद्धपदपदार्थापेक्षायाः श्रुतेर्लौकिकादनुमानाद् बाध इति पूर्वपक्षयित्वा पदपदार्थधीमात्रेण श्रुतेरपेक्षायामपि वाक्यार्थबोधने तदभावाद् विमतो यत्नाद्यनपेक्षसंकल्पजन्यो योगजन्यसामर्थ्यदृ[सृ]ष्टत्वादगस्त्यकृतसमुद्रपानवदित्यनुमानानुगृहीतश्रुत्या बाधितत्वादनुमानस्य संकल्पमात्रसिद्ध्या विदुषो भोगहेतुसिद्धिरित्युक्तम्। सम्प्रत्यवधारणादन्ययोगव्यवच्छेदेन संकल्पस्यैव पित्रादिसाधनत्ववदिहापि मनसेति विशेषणस्यान्ययोगव्यवच्छेदकत्वेनावधारणार्थत्वाद् विदुषो देहाद्यभाव इति पूर्वपक्षयति— **अभावमिति**। मनसः सद्भावोऽपि किमिति विदुषो न विचार्यते, तत्राह— **संकल्पादेवेति**। शरीरेन्द्रियाणि विषयः, तानि किं विद्यावतो मुक्तस्य सन्ति, किंवा न सन्त्याहो सन्ति च न सन्ति चेति वादिविप्रतिपत्तेः संशयमाह— **शरीरेति**। अत्र सगुणब्रह्मविदः संकल्पादेव देहादिभावाभावयोरुक्त्या ब्रह्मधीफलविभूतेरुक्तेरस्ति पादादिसंगतिः। पूर्वपक्षे विशेषणश्रुतेरनेकधाभावश्रुतेर्वा मुख्यार्थत्वसिद्धिः। सिद्धान्ते द्वयोरपि श्रुत्योर्विदुषः सत्यसंकल्पत्वादेव मुख्यार्थत्वोपपत्तिरित्यङ्गीकृत्य पूर्वपक्षसूत्रं योजयति— **तत्रेति**। सत्यामपि विप्रतिपत्तावभावनियमासिद्धिरिति शङ्कते— **कस्मादिति**। विशेषणश्रुत्या परिहरति— **एवं हीति**। पक्षान्तरेऽपि विशेषणमयोगव्यवच्छेदकत्वेन युक्तमित्याशङ्क्याह— **यदीति**। अन्ययोगव्यवच्छेदाय मनसेति विशेषणाद् वामेन पश्यतीत्यादाविवेतरव्यावृत्तिर्गम्यते। अयोगव्यवच्छेदे तु न तथा विशेषणमर्थवदित्यर्थः। विशेषणफलमुपसंहरति— **तस्मादिति**।।१०।।

पूर्वपक्षान्तरमाह— **भावमिति**। सूत्राक्षराणि योजयति— **जैमिनिस्त्वति**। विकल्पामननं मनोभेदादेव किं न स्यादित्याशङ्क्याह— **न हीति**। देहभेदाभावे मनोभेदस्यापि दुर्भणत्वान्न तद्भेदकृतं विकल्पामननमित्यर्थः। निर्गुणविद्याधिकारे पाठाद् विकल्पामननं

**स्यात्। यद्यपि निर्गुणायां भूमविद्यायामयमनेकधाभावविकल्पः पठ्यते तथापि विद्यमानमेवेदं सगुणावस्थायामैश्वर्यं भूमविद्यास्तुतये संकीर्त्यत इत्यतः सगुणविद्याफलभावेनोपतिष्ठत इति।।११।।**

**उच्यते–**

**द्वादशाहवदुभयविधं बादरायणोऽतः।।१२।।**

**बादरायणः पुनराचार्योऽत एवोभयलिङ्गश्रुतिदर्शनादुभयविधत्वं साधु मन्यते। यदा सशरीरतां संकल्पयति तदा सशरीरो भवति, यदा त्वशरीरतां तदाऽशरीर इति। सत्यसंकल्पत्वात्, संकल्पवैचित्र्याच्च। द्वादशाहवत्। यथा द्वादशाहः सत्रमहीनश्च भवति, उभयलिङ्गश्रुतिदर्शनादेवमिदमपीति।।१२।।**

***प्रकटार्थविवरणम्***

कथं तद्बलेन सगुणविद्यायां सशरीरत्वं कल्प्यत इत्याशङ्क्याह— **यद्यपि निर्गुणायामिति**।

**द्वादशाहवदुभयविधं बादरायणोऽतः।।** सिद्धान्तमाह— **बादरायणः पुनरिति**। कालभेदेन सङ्कल्पभेदात् क्रमेणोभयथोपपत्तिरित्यर्थः। द्वादशाहाख्यं कर्मविशेषः सत्रं भवति बहुयजमानत्वेनास्युपायिचोदनाभ्यां च 'य एवं विद्वांसः सत्रमुपयन्ति' इति 'चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्' इति श्रुतिलिङ्गात्; तथाऽहीनश्च भवति यजतिचोदनया कर्तृपरिमाणानियमेन च 'द्वादशाहेन प्रजाकामं याजयेत्' इति श्रुतिलिङ्गादित्यर्थः।

***भाष्यभावप्रकाशिका***

स्तुतिरेव निर्गुणविद्याप्रकरणे पाठादित्याशङ्क्याह— **यद्यपि तं[यद्यपीति]** शरीरेन्द्रियादिभोगशून्ये निर्गुणज्ञाने स्तुतित्वेनान्वये[ऽपि] विशिष्टभोगसंबन्धयोग्ये दहराद्युपासने फलत्वेनान्वय इत्यर्थः। न च मनसेति विशेषणमन्यव्यावृत्तिपरं शरीरादि व्यवच्छिनत्तीति शङ्कनीयम्; धनुर्धरश्चैत्र इत्यादिवदयोगव्यवच्छेदेनाप्युपपत्तेरित्यपि द्रष्टव्यम्।

**उभयलिङ्गेति**। मनसेति विशेषणसामर्थ्यात् 'स एकधा भवती'त्यादिविकल्पामननसामर्थ्याच्चेत्यर्थः। एकस्यैवाशरीरत्वं सशरीरत्वं च विरुद्धमित्याशङ्क्य कालभेदेनोपपन्नमित्याह— **यदेति**। **सत्रमहीनश्चोभयलिङ्गश्रुतिदर्शनादिति**। 'द्वादशाहमृद्धिकामा उपेयु'रिति 'य एवं विद्वांसः सत्रमुपयन्ती'ति तदुपायनोपदेशात् बहुकर्तृकतया च सत्रत्वमवसीयते, 'द्वादशाहेन प्रजाकामं याजयेदि'ति यजतिचोदनान्नियतकर्तृकत्वावगमाच्च 'द्विरात्रेण यजेते'त्यादिवदहीनत्वञ्च यथा तद्वदित्यर्थः।

***न्यायनिर्णयः***

स्तुतिरेवेत्याशङ्क्याह— **यद्यपीति**। देहेन्द्रियादिभोगहीने निर्गुणज्ञाने स्तुतित्वेनानेकधात्वस्यान्वयेऽपि विशिष्टभोगसंसर्गयोग्ये दहराद्युपासने फलत्वेनान्वय इत्यर्थः। न च मनसेति विशेषणमन्ययोगव्यावर्तकं देहादि व्यवच्छिनत्तीति युक्तम्, चैत्रो धनुर्धर इतिवदयोगव्यच्छेदेनापि तद्योगादिति भावः।।११।।

सिद्धान्तयति— **उच्यत इति**। सूत्रं व्याचष्टे— **बादरायण इति**। मनसेति विशेषणसामर्थ्यात् 'एकधा भवति त्रिधा भवती'त्यादिविकल्पामननसामर्थ्याच्चेत्यतःशब्दार्थं स्फुटयति— **उभयेति**। सशरीरत्वमशरीरत्वं चैकस्यैव विरुद्धमित्याशङ्क्य कालभेदादविरोधं दर्शयति— **यदा त्विति**। इतिशब्दस्योभयविधत्वमिति पूर्वेण संबन्धः। विदुषः संकल्पानुसारि कार्यमित्यत्र हेतुमाह— **सत्येति**। कार्यवैचित्र्ये हेतुः— **संकल्पेति**। धनुर्धरत्वादि हि विशेषणं [१]पाक्षिकप्राप्तविशेषपदयोगव्यवच्छेदकं युक्तं न हि चैत्रो धनुर्दधान एवावतिष्ठते। प्रकृते तु 'मनसैतानि'त्यादौ कामभोगेषु मनसो नित्यप्राप्तत्वात् तदनुवादेनान्ययोगनिवृत्त्यर्थतेत्याशङ्क्य दृष्टान्तमवतार्य व्याचष्टे— **द्वादशाहवदिति**। तस्य बहुकर्तृकतया सत्रत्वे नियतकर्तृकतयाऽहीनत्वे च हेतुमाह— **उभयेति**। द्वादशाहो हि यजमानबहुत्वादासनोपायनोपदेशाच्च सत्रं 'य एवं विद्वांसः सत्रमुपयन्ती'त्युपायनचोदनादर्शनात् 'सप्तदशावराश्चतुर्विंशतिपरमाः

१. 'पाक्षिकप्राप्तं विशेष्ये तदयोगव्यवच्छेदकम्' इति पाठः संभाव्यते। 'चैत्रो धनुर्धरः' इत्युक्ते हि खड्गाद्यन्ययोगो न व्यवच्छिद्यते। अतो यस्य विशेषणस्य पाक्षिकी प्राप्तिस्तदयोगव्यवच्छेदकमिति।

**तन्वभावे संध्यवदुपपत्तेः।।१३।।**

**यदा तनोः सेन्द्रियस्य शरीरस्याभावस्तदा यथा संध्ये स्थाने शरीरेन्द्रियविषयेष्वविद्यमानेष्वप्युपलब्धिमात्रा एव पित्रादिकामा भवन्त्येवं मोक्षेऽपि स्युः। एवं ह्येतदुपपद्यते।।१३।।**

**भावे जाग्रद्वत्।।१४।।**

**भावे पुनस्तनोर्यथा जागरिते विद्यमाना एव पित्रादिकामा भवन्त्येवं मुक्तस्याप्युपपद्यते।।१४।।**

।।इति पञ्चममभावाधिकरणम्।।

***शारीरकन्यायसंग्रहः***

६।।प्रदीपाधिकरणम्।।सू. १५-१६।।

**प्रदीपवदावेशस्तथा हि दर्शयति।।१५।। स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि।।१६।।**

एकस्मिन् शरीरे समनस्कायां चैतन्याभिव्यक्तौ सर्वगतस्यात्मनः शरीरान्तरेषु मनोभेदाभावाच्चैतन्यानभिव्यक्तेर्मनोभेदे च लोकवज्जीवभेदात् भोगाननुसन्धानप्रसङ्गादेकस्मादितराणि निरात्मकानीति प्राप्तम्। तत्र विदुष एव 'स एकधा भवति' इत्यादि-नाऽनेकधाभावावगमानुपपत्त्या उपाधिभेदेनानेकधाभावे कल्प्यमाने सर्वेषां सात्मकत्वमन्तरेण विदुषोऽनेकधाभावायोगात् स्वतन्त्रानादिमनोभेदे सत्येव जीवभेदाच्छ्रुत्यनुपपत्त्या एकमनःसङ्कल्पप्रसूतानेकमनःशरीरेन्द्रियोपाधावभिव्यक्तचैतन्यो विद्वानैश्वर्यं भुङ्क्त इत्युक्तम्।

***प्रकटार्थविवरणम्***

**तन्वभावे सन्ध्यवदुपपत्तेः।। भावे जाग्रद्वत्।।**

इदानीं शरीरेन्द्रियाणामभावे भावे च भोगस्यावान्तरभेदमाह— **तन्वभाव इत्यादिना**। इति पञ्चममभावाधिकरणम्।।

***भाष्यभावप्रकाशिका***

ननु शरीरेन्द्रियाद्यभावोऽनुपपन्नो भोगाभावप्रसङ्गादिति, तत्राह— **तन्वभाव इति**। यद्यपि स्वप्नदशायां शरीरमस्ति तथापि न तत्सन्निकर्षस्य ज्ञानं प्रति कारणता मनोवस्थानमात्रहेतुतया अन्यथासिद्धत्वाद् योगिनश्च विद्यासामर्थ्यादेव मनोवस्थानोपपत्तेरित्यभिप्रेत्य सन्ध्यवदित्युक्तम्। **एवं ह्येतदिति**। मनसैतानिति श्रुतिरेवमुपपद्यत इत्यर्थः। तर्हि शरीराद्युपादाने[दान] वैयर्थ्यमित्याशङ्क्याह— **भावे पुनरिति**। सशरीरस्य पुष्कलभोगोपपत्तेरित्यर्थः। इति पञ्चममभावाधिकरणम्।

***न्यायनिर्णयः***

सत्रमासीरन्नि'त्यासनचोदनायाश्च द्वादशाहाधिकारे दृष्टत्वादासनोपायनचोदनयोरन्यतरत्वस्य सत्रलक्षणत्वाद् 'द्वादशाहेन प्रजाकामं याजये'दिति यजतिचोदनदर्शनान्नियतकर्तृकत्वावगमाच्च द्विरात्रवदहीनत्वं चास्य गम्यते। तथेदमपि विदुषः सशरीरत्वमशरीरत्वं च द्विविधश्रुतिसिद्धं विचित्रसंकल्पनिबन्धनमविरुद्धमित्यर्थः।।१२।।

विदुषो देहाद्यसत्त्वमयुक्तं भोगाभावप्रसङ्गादित्याशङ्क्याह— **तन्वभाव इति**। स्वप्ने देहभावेऽपि न तत्संनिकर्षस्य ज्ञानहेतुता मनःस्थितिमात्रहेतुत्वेनान्यथासिद्धत्वाद् योगिनश्च विद्यासामर्थ्यादेव मनोऽवस्थानादिति मत्वाऽऽह— **संध्यवदिति**। सूत्राक्षराणि व्याकरोति— **यदेत्यादिना**। विदुषो देहादेरभावे मनसेति विशेषणोपपत्तिं हेतूकरोति— **एवं हीति**।।१३।।

तर्हि देहाद्युपादानमनर्थकं, तत्राह— **भाव इति**। पुष्कलभोगसिद्ध्यर्थं देहाद्यादानमिति मन्वानः सूत्रं योजयति— **भावे पुनरिति**।।१४।। इति पञ्चममभावाधिकरणम्।।

६।।प्रदीपाधिकरणम्।।सू.१५-१६।।

## प्रदीपवदावेशस्तथा हि दर्शयति।।१५।।

**'भावं जैमिनिर्विकल्पामननात्' (ब्र.सू. ४।४।११) इत्यत्र सशरीरत्वं मुक्तस्योक्तम्। तत्र त्रिधाभावादिष्वनेकशरीरसर्गे किं निरात्मकानि शरीराणि दारुयन्त्राणीव सृज्यन्ते किंवा सात्मकान्यस्मदादिशरीरवदिति भवति वीक्षा। तत्र चात्ममनसोर्भेदानुपपत्तेरेकेन शरीरेण योगादितराणि शरीराणि निरात्मकानीति।**

**एवं प्राप्ते प्रतिपद्यते- प्रदीपवदावेश इति। यथा प्रदीप एकोऽनेकप्रदीपभावमापद्यते विकारशक्तियोगात्। एवमेकोऽपि सन् विद्वानैश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति। कुतः? तथा हि दर्शयति शास्त्रमेकस्यानेकभावम्- 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा' (छा.उ. ७।२६।२) इत्यादि। नैतद् दारुयन्त्रोपमाभ्युपगमेऽवकल्पते, नापि जीवान्तरावेशे। न च निरात्मकानां शरीराणां प्रवृत्तिः**

### *प्रकटार्थविवरणम्*

**प्रदीपवदावेशस्तथा हि दर्शयति।।** उक्तमनुकीर्त्य सांकल्पिकेषूभयथाभावदर्शनात् संशयमाह— **भावमित्यादिना।** पूर्वपक्षमुपन्यस्य सूत्रं योजयति— **तत्रेत्यादिना।** विदुष एव 'स एकधा भवति' इत्यादिना अनेकधाभावगमनानुपपत्त्या सर्वेषां सात्मकत्वं कल्प्यते, तत् प्रकारान्तरेण न घटत इत्याह— **नैष दारुयन्त्रेति।** इतश्च सात्मकान्येव शरीरान्तराणीत्याह— **न च निरात्मकानामिति।**

### *भाष्यभावप्रकाशिका*

**प्रदीपवदावेशस्तथाहि दर्शयति।।** सर्वगतत्वेऽप्यात्मनो मनस्येव चैतन्याभिव्यक्तेस्तदवच्छेदैकैकशरीरावस्थितस्य शरीरान्तरावेशासंभवादन्तःकरणान्तरोपादनेऽपि तस्यानाद्यन्तःकरणान्तरावच्छिन्नस्य पुनरागन्तुकान्तःकरणेना(व्य)वच्छेदासंभवादन्तःकरणान्तरावच्छेदे च लोकवज्जीवभेदाद् भोगाननुसन्धानप्रसङ्गादेकस्मादितराणि शरीराणि निरात्मकानीति प्राप्तमित्याह— **तत्रात्ममनसोरिति।**

निदर्शनं व्याचष्टे— **यथा प्रदीप इति।** प्रदीपानां भिन्नत्वेऽपि दीपत्वस्यैक्यमेकवर्तिवर्तिप्रदीपेषूपचर्य भिन्नवर्तिवर्तिनां प्रदीपाना[मा]न्तरभेद उक्तः। ननु यथा दारुयन्त्रश्चैतन्यशून्यमपि चेतनेच्छामनुरुध्यत एवं निर्माणशरीराणि सेन्द्रियाणीति कस्मान्नाभ्युपगम्यत इति, तत्राह— **नैतदिति।** यन्त्राणि भिन्नानि निर्माय वाहयतोऽपि यन्त्रवाहकस्य नानात्वेन व्यपदेशाभावाद् विदुषश्च नानात्वव्यपदेशात्

### *न्यायनिर्णयः*

संकल्पाधीनमनेकदेहनिर्माणमफलं निरात्मकेषु देहभेदेषु भोगायोगादित्याशङ्क्याह— **प्रदीपवदिति।** वृत्तानुवादपूर्वकं मुक्तस्योक्तानि सांकल्पिकानि शरीराणि विषयीकृत्योभयथोपलब्धेः संदेहमाह— **भावमिति।** तत्रेति मुक्तोक्तिः। मुक्तस्यापरविद्याफलभूतस्य सांकल्पिकेषु प्रवेशप्रकारोक्त्या पादादिसंगतिः। पूर्वपक्षे भोक्तुरेकत्वादेकत्रैव भोगसिद्धिः। सिद्धान्ते भोक्तुरैक्येऽपि स्वेच्छया तस्यानेकत्र भोगोपपत्तिरिति मत्वा पूर्वपक्षयति— **तत्रेति।** आत्मनो विभुत्वेऽपि मनस्येव चैतन्यव्यक्तेस्तदवच्छेदैकैकदेहावस्थितस्य देहान्तरावेशायोगादन्तःकरणान्तरोपादानेऽपि तस्यानाद्यन्तःकरणान्तरावच्छिन्नस्य पुनरागन्तुकान्तःकरणावच्छेदासंभवात् संभवे च जीवभेदाद् भोगाननुसंधानप्रसङ्गादेकस्मादितराणि निरात्मकानीति प्राप्तमित्यर्थः।

पूर्वपक्षमनूद्य सिद्धान्तसूत्रमवतारयति— **एवमिति।** तत्र दृष्टान्तं व्याचष्टे— **यथेति।** दीपादीनां भिन्नत्वेऽपि दीपत्वस्यैकत्वमेकवर्तिवर्तिदीपेषूपचर्य भिन्नवर्तिवर्तिनां दीपानां भिन्नतेति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमावेशशब्दितं दर्शयति— **एवमिति।** तत्र हेतुत्वेनावशिष्टं सूत्रावयवं व्याचष्टे— **तथा हीति।** यथा दारुयन्त्रं चैतन्यशून्यमपि चेतनेच्छामनुरुध्यते तथा निर्माणशरीराणि सेन्द्रियाणीति कस्मान्नाभ्युपगम्यते? तेन निरात्मकत्वमेव शरीरान्तराणामित्याशङ्क्याह— **नैतदिति।** यन्त्रवाहकस्य हि यन्त्राणि भिन्नानि निर्माय वाहयतोऽपि नानात्वेन व्यपदेशाभावाद् विदुषश्च तथा व्यपदेशात् तत्तद्देहोपाध्यवच्छेदो भातीत्यर्थः। तर्हि निर्माणदेहेष्वात्मान्तराणि सृजति विद्वानित्याशङ्क्याह— **नापीति।** जीवान्तरावेशेऽपि नैतदवकल्पत इति संबन्धः। एकस्यानेकधा-

**संभवति। यत्त्वात्ममनसोर्भेदानुपपत्तेरनेकशरीरयोगासंभव इति। नैष दोषः। एकमनोनुवर्तीनि समनस्कान्येवापराणि शरीराणि सत्यसंकल्पत्वात् स्रक्ष्यति। सृष्टेषु च तेषूपाधिभेदादात्मनोऽपि भेदेनाधिष्ठातृत्वं योक्ष्यते। एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया।।१५।।**

**कथं पुनर्मुक्तस्यानेकशरीरावेशादिलक्षणमैश्वर्यमभ्युपगम्यते, यावता 'तत्केन कं विजानीयात्' (बृ.उ. ४।५।१५), 'न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात्' (बृ.उ. ४।३।३०), 'सलिल एको द्रष्टाऽद्वैतो भवति' (बृ.उ. ४।३।३२) इति चैवंजातीयका श्रुतिर्विशेषविज्ञानं वारयतीत्यत उत्तरं पठति–**

**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ।।१६।।**

**स्वाप्ययः सुषुप्तम्, 'स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते' (छा.उ. ६।८।१) इति श्रुतेः। संपत्तिः कैवल्यम्, 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ.उ. ४।४।६) इति श्रुतेः। तयोरन्यतरामवस्थामपेक्ष्यैतद्विशेषसंज्ञाऽभाववचनम्। क्वचित् सुषुप्तावस्थामपेक्ष्योच्यते, क्वचित् कैवल्यावस्थाम्। कथमवगम्यते?**

### *प्रकटार्थविवरणम्*

श्रुत्यनुपपत्त्या एकमनःसङ्कल्पप्रसूतानेकमनःशरीरेन्द्रियोपाधावभिव्यक्तचैतन्यो विद्वानैश्वर्यं भुङ्क्त इत्याह— **नैष दोष इत्यादिना।** "आत्मनो वै शरीराणि बहूनि मनुजेश्वर। प्राप्य योगबलं कुर्यात् तैश्च सर्वां महीं चरेत्।।" इत्यादिस्मृतिसिद्धोऽप्ययमर्थो भवतीत्याह— **एषैव चेति।**

उत्तरसूत्रनिरस्याशङ्कामाह— **कथं पुनरिति। सलिल इति।** सलिलवत्स्वच्छः परमात्मनैकतां गतो द्रष्टा जीवोऽद्वैतो भवत्यविद्याकृतं भेदं हित्वेत्यर्थः।

**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि।।** विशेषविज्ञानभावाभावाभिधानं मुक्तिसुषुप्त्योरन्यतरावस्थाभिप्रायेण। ऐश्वर्याभिधानं तु सगुणविद्याविषयम्। अतो भिन्नविषयत्वान्न विरोध इत्याह— **स्वाप्यय इति।** इति षष्ठं प्रदीपाधिकरणम्।।

### *भाष्यभावप्रकाशिका*

तच्छरीरोपाध्यवच्छेदोऽवगम्य इत्य....त्मान्तराणि सृजन्त्विति, तत्राह— **नापीति।** एकस्यानेकधाभावश्रुतिविरोधादननुसंधानप्रसङ्गाच्चेत्यर्थः। आत्मानधिष्ठितानां प्रवृत्त्ययोगात् भोगाभावप्रसङ्गाच्च निरात्मकत्वं च नाशङ्कनीयमित्याह— **न चेति।** स्वतन्त्रानादिमनोभेदे सत्येव जीवभेदादेकमनस्संकल्पप्रसूतानां तदायत्तानां मनसां भेदेऽपि न जीवभेदः स्यादिति परिहरति— **एकमनोनुवर्तीनीति।** एकाभिप्रायानुवर्तनमेकमनोनुवर्तनमिति। उक्तेऽर्थे योगशास्त्रसंवादमाह— **एषैव चेति।** 'निर्माणचित्तान्यस्मितामात्रात्' 'प्रवृत्तिभेदप्रयोजकं चित्तमेकमनेकेषा'मित्यादिनैषैव प्रक्रियोक्तेत्यर्थः।

शङ्कापूर्वकमुत्तरसूत्रमवतारयति— **कथं पुनरिति। सलिल एक इति।** सलिलमिव सलिलं स्वच्छ(क्रिया) इति यावत्। यथा सलिलं सलिलान्तरे क्षिप्तमेकीभवति। एवं द्रष्टाऽपि ब्रह्मणीत्यर्थः।

### *न्यायनिर्णयः*

भावश्रुतिविरोधादननुसंधानप्रसङ्गाच्चेत्यर्थः। शरीरान्तराणां निरात्मकत्वाभावे हेत्वन्तरमाह— **न चेति।** आत्मानधिष्ठितानामचेतनानां प्रवृत्त्ययोगाद्भोगाभावप्रसङ्गाच्च शरीरान्तरेषु न निरात्मकत्वमित्यर्थः। पूर्वपक्षबीजमनुभाषते— **यत्त्विति।** स्वतन्त्रानादिमनोभेदे सत्येव जीवभेदादेकमनःसंकल्पसमुत्थानात् तदायत्तानां मनसां भेदेऽपि जीवभेदाभावात्तत्तदुपाधिव्यक्तचैतन्यो विद्वानैश्वर्यभागित्युपगमे न किंचिदवद्यमिति परिहरति— **नेत्यादिना।** एकमनोनुवर्तनमेकाभिप्रायाविरोधित्वम्। उक्तेऽर्थे योगशास्त्रसंमतिमाह— **एषैवेति।** 'निर्माणचित्तान्यस्मितामात्रम्' 'प्रवृत्तिभेदप्रयोजकं चित्तमेकमनेकेषा'मित्यादिनैषैव प्रक्रियोक्तेत्यर्थः।।१५।।

मुक्तस्य यथोक्तमैश्वर्यं विशेषज्ञाननिषेधकश्रुतिविरुद्धमिति शङ्कते— **कथमिति।** शङ्कोत्तरत्वेन सूत्रमवतारयति— **अत इति।** प्रतिज्ञां व्याचष्टे— **स्वाप्यय इति।** उक्तमेव व्यक्तीकर्तुं विभजते— **क्वचिदिति।** 'तत्केन क'मित्यादिकं वाक्यं क्वचिदित्युच्यते। द्वितीयस्तु क्वचिच्छब्दः सलिलादिवाक्यगोचरः। हेतुभागमाकाङ्क्षाद्वारा व्याकरोति— **कथमित्यादिना।** तत्रेत्युक्तवाक्यप्रकरणोक्तिः।

**यतस्तत्रैवैतदधिकारवशादाविष्कृतम् 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्तीति' (बृ.उ. ४।५।१३), 'यत्र त्वस्य सर्वमात्मैवाभूत्' (बृ.उ. ४।५।१५), 'यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति' (बृ.उ. ४।३।१९माण्डू.५) इत्यादिश्रुतिभ्यः। सगुणविद्याविपाकावस्थानं त्वेतत् स्वर्गादिवदवस्थान्तरं यत्रैतदैश्वर्यमुपवर्ण्यते। तस्माददोषः।।१६।।**

।।इति षष्ठं प्रदीपाधिकरणम्।।

### *शारीरकन्यायसंग्रहः*

७।।जगद्व्यापारादिकरणम्।।सू. १७-२२।।

**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च।।१७।। प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः।।१८।। विकारावर्ति च तथा हि स्थितिमाह।।१९।। दर्शयतश्चैवं प्रत्यक्षानुमाने।।२०।। भोगमात्रसाम्यलिङ्गाच्च।।२१।। अनावृत्तिः शब्दादनावृत्तिःशब्दात् ।।२२।।** 'आप्नोति स्वाराज्यम्' इत्यादिश्रुतेः परापरब्रह्मकार्ये भूतभौतिकसृष्ट्यादिविषयैश्वर्येऽपि सगुणविदां प्राप्ते प्रलयादुत्थानसमये भूतभौतिकानां यः स्रष्टा तस्यैव स्थितिनियमनादावपि कर्तृत्वनिर्देशात् सृष्ट्युत्तरकालभाविनामुपासकानां प्रलये मुक्तत्वात् भोगमात्रसाम्यलिङ्गाच्च जगद्व्यापारं वर्जयित्वा स्वभोगसाधनसम्पत्तावेव सगुणविदामैश्वर्यं, क्रमेण च मुक्तिरित्युक्तम्।

अत्र [1]केचिदागमार्थसम्प्रदायहीनाः स्वबुद्ध्या च शास्त्रार्थविभागं पर्यालोचयितुमशक्नुवन्तः परब्रह्मणि मुक्तस्यैव पित्रादिभिर्भोगविशेषं प्रकृतं सर्वमुपवर्ण्यास्याधिकरणस्य शास्त्रसिद्धान्तेनासङ्गतिं पश्यन्तो द्वैतिनां मुक्तेरङ्गीकरणवादोऽयमिति जल्पन्ति। तत्र किं क्रियत इति वक्तव्यम्—किं द्वैतिनां मुक्तिरित्थंभूतेति प्रकारविशेषः प्रदर्श्यते, किं वा तेषां मुक्तिरित्थंभवितव्येति साध्यते, किं वा नेत्थंभवितव्येत्याक्षिप्यते, किं वा तन्मुक्तिस्वरूपमङ्गीकृत्य तैरभिप्रेतं धर्मान्तरं साध्यते दूष्यते वेति। न तावत् जगद्व्यापारं वर्जयित्वा ब्रह्मणा भोगमात्रसाम्यं तन्मुक्तित्वप्रकारः। गुणपुरुषयोर्द्रष्टृदृश्यसंबन्धविच्छेदलक्षणायाः सांख्यमुक्तेः, विज्ञानादिनवगुणोच्छेदेन निःसंबोधलक्षणायाः वैशेषिकादिमुक्तेः, आलोकाकाशशरीरेन्द्रियविषयोपलब्धिशून्यतया सततोर्ध्वगमनलक्षणाया आर्हतमुक्तेः, विशुद्धज्ञानोदयप्रवाहस्य सर्वज्ञसन्ताने स्वलक्षणमुत्पाद्य तदेकत्वलक्षणस्य सन्तानशून्यतालक्षणस्य वा सुगतमुक्तेः, वासुदेवे कारणे प्रकृतिविलयलक्षणायाः पाञ्चरात्रमुक्तेः, ईश्वरप्राप्तिलक्षणायाः शैवमुक्तेश्चानेवंप्रकारत्वात्। अथैतेषां मुक्तिरेवंभवितव्येति साध्यते, तदपि न, जगद्व्यापारवर्जनेन सिद्धसाधनत्वात्, कार्यब्रह्मणो भोगसाम्यलिङ्गानां वैदकविद्यागतानामवैदिकविद्यान्तरकर्मान्तर-फलत्वेनाङ्गीकृतमोक्षविशेषप्रतिपादने सम्बन्धाभावादनङ्गीकरणाच्च तैर्मोक्षे कार्यब्रह्मणि भोगसाम्यस्य। न च परब्रह्मणो भोगोऽस्तीत्युक्तम्। न च जगद्व्यापारवर्जनेन भोगसाम्यं तन्मुक्तेर्दूषणमुच्यते, जगद्व्यापारस्यानङ्गीकरणादेव तद्वर्जनस्यादूषणत्वात्, द्वैतिनां

### *भाष्यभावप्रकाशिका*

**अधिकारवशादिति।** प्रकरणवशादित्यर्थः। स्वर्गादिवदवस्थान्तरमिति मुक्ताभिधानं तु तदवस्थाप्रत्यासत्तिमात्रेण संध्यायां दिवसव्यपदेशवदिति भावः। इति षष्ठं प्रदीपाधिकरणम्।।

### *न्यायनिर्णयः*

तदधिकारः सुषुप्तिमोक्षयोरन्यतरस्य प्रकरणम्। तत्र समुत्थानवाक्यं यत्रसुप्तवाक्यं स्वापाधिकारविषयम्। यत्र त्वस्येति मोक्षाधिकारविषयमिति भेदः। विशेषज्ञानाभावाभिधानं सुप्तिमुक्त्योरन्यतराभिप्रायेणेत्युक्तम्। इदानीमैश्वर्याभिधानस्य सगुणविद्याविषयत्वेन भिन्नगोचरत्वान्न विरोधाशङ्केत्याह— **सगुणेति।** कथं तर्हि सगुणविद्याफले मुक्तिशब्दप्रवृत्तिरित्याशङ्क्य संध्यायां दिवाशब्दवत् प्रत्यासत्तिमात्रेणेति मत्वाऽऽह— **तस्मादिति।।**१६।। इति षष्ठं प्रदीपाधिकरणम्।।

---

१. भास्करमतानुयायिनः।

### ७।।जगद्व्यापाराधिकरणम्।।सू.१७-२२।।

## जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च।।१७।।

**ये सगुणब्रह्मोपासनात् सहैव मनसेश्वरसायुज्यं व्रजन्ति किं तेषां निरवग्रहमैश्वर्यं भवत्याहोस्वित् सावग्रहमिति संशयः। किं तावत् प्राप्तम्? निरङ्कुशमेवैषामैश्वर्यं भवितुमर्हति, 'आप्नोति स्वाराज्यम्' (तै.उ. १।६।२), 'सर्वेऽस्मै देवा बलिमावहन्ति' (तै.उ. १।५।३), 'तेषां सर्वेषु लोकेषु कामचारो भवति' (छा.उ. ७।२५।२,८।१।६) इत्यादिश्रुतिभ्य इति।**

**एवं प्राप्ते पठति– जगद्व्यापारवर्जमिति। जगदुत्पत्त्यादिव्यापारं वर्जयित्वाऽन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति। जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य। कुतः? तस्य तत्र प्रकृतत्वादसंनिहितत्वाच्चेतरेषाम्। पर एव हीश्वरो जगद्व्यापारेऽधिकृतः। तमेव प्रकृत्योत्पत्त्याद्युपदेशात्। नित्यशब्दनिबन्धनत्वाच्च।**

### *शारीरकन्यायसंग्रहः*

मुक्तेर्भोगमात्रसाम्यप्रापकाभावात्; न हि वेदेऽपि विद्यान्तरफलं विद्यान्तरे सङ्गच्छते। कुतश्चावैदिकविद्याकर्मफले वैदिकफलविशेषप्राप्तिः? अत एव द्वैतिनां मुक्तिमङ्गीकृत्य न धर्मान्तरसाधनं वा दूषणं वा क्रियते, जगद्व्यापारवर्जनस्य सिद्धत्वाददूषणत्वाच्च; भोगसाम्यस्याप्राप्तेः साधयितुमशक्यत्वात्, अत एव तेनादूष्यत्वात्; तस्माद् विप्रलम्भनमात्रं द्वैतिनां मुक्तेरङ्गीकरणवाद इति। न च वेदान्तैकदेशिनां द्वैतिनामेवंविधा मुक्तिः; न च तान् प्रति साधयितुं शक्यते, जगद्व्यापारवर्जनेऽपि सिद्धसाधनत्वात्, विद्यान्तरगोचरभोगसाम्यस्य मुक्तावप्राप्तेः; अत एव दूषयितुमशक्यम्, अदूषणत्वादप्राप्तेश्च; स्वरूपमङ्गीकृत्य धर्मान्तरदूषणसंभवेऽपि तथा। तस्मात् कार्यब्रह्मप्राप्तिः सगुणविद्याविषयिकेयमिति सिद्धम्।

**शारीरकाणां न्यायानां सप्तन्यूनशतद्वयम्। प्रकाशात्ममुनीन्द्रेण निर्णीतं न्यायवेदिना।।**

**इति श्रीमदनन्यानुभवपूज्यपादशिष्यस्य श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीमत्प्रकाशात्मभगवतः कृतौ श्रीमच्छारीरकमीमांसा-भाष्यन्यायसङ्ग्रहे चतुर्थाध्यायस्य चतुर्थः पादः।।**

### *प्रकटार्थविवरणम्*

**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च।।** यत् पूर्वत्र सगुणविद्याफलमैश्वर्यमुक्तं तदिदानीमैश्वर्यस्योभयथादर्शनाद् विचार्यत इत्याह— **ये सगुणब्रह्मोपासनादिति।** श्रुतीनां यथाश्रुतार्थपरिग्रहेण पूर्वपक्षयित्वा सिद्धान्तमाह— **जगद्व्यापारवर्जमिति।** प्रलयादुत्थानसमये

### *भाष्यभावप्रकाशिका*

**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च।।** विषयं दर्शयति— **ये सगुणेति।** तत्र प्रकरणं दर्शयति— **पर एव हीति।**

### *न्यायनिर्णयः*

मनोदेहसर्गादावुत्सर्गतो यदैश्वर्यमुपासितुरुक्तं तस्य जगत्सर्गे प्रमाणादपवादं दर्शयति— **जगदिति।** अपरब्रह्मणा सायुज्यं गतानामैश्वर्यं विषयीकृत्य तस्योभयथादृष्ट्या संशयमाह— **ये सगुणेति।** सगुणब्रह्मविद्याफलभूतैश्वर्यस्य निरतिशयत्वनिवारणात् पादादिसंगतिः। पूर्वपक्षे विद्वदैश्वर्यस्य निरङ्कुशत्वादीश्वरभेदादनेकमत्या जगदुत्पत्त्यादिव्यवस्थाऽसिद्धिः। सिद्धान्ते तद्भेदाभावात् परमेश्वराधीनतया जगदुदयादिव्यवस्थोपपत्तिरित्यभिप्रेत्य प्रश्नपूर्वकं पूर्वपक्षयति— **किं तावदिति।** श्रुतीनां [यथा]श्रुतार्थग्रहेण पूर्वपक्षयित्वा सिद्धान्तयति— **एवमिति।** तत्र प्रतिज्ञां विभजते— **जगदिति।** तत्र हेतुद्वयं प्रश्नपूर्वकमाह— **कुत इति।** ईश्वरस्य नित्यसिद्धस्यैव जगदुत्पत्त्यादिव्यापार इत्यत्र प्रकरणादिति हेतुं विवृणोति— **पर इति।** प्रलयादुत्थानकाले सर्वस्य जगतो यः कर्ता तस्यैव स्थित्यादावपि कर्तृत्वोक्तेरन्यस्य चादिसर्गे कर्तृत्वाभावादीश्वरस्यैव जगद्व्यापारे संनिधिरित्याह— **तमेवेति।** किंच

**तदन्वेषणविजिज्ञासनपूर्वकं त्वितरेषामणिमाद्यैश्वर्यं श्रूयते। तेनासंनिहितास्ते जगद्व्यापारे। समनस्कत्वादेव चैतेषामनैकमत्ये कस्यचित् स्थित्यभिप्रायः कस्यचित् संहाराभिप्राय इत्येवं विरोधोऽपि कदाचित् स्यात्। अथ कस्यचित् संकल्पमन्वन्यस्य संकल्प इत्यविरोधः समर्थ्येत, ततः परमेश्वराकूततन्त्रत्वमेवेतरेषामिति व्यवतिष्ठते।।१७।।**

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः।।१८।।

**अथ यदुक्तम् 'आप्नोति स्वाराज्यम्' (तै.उ. १।६।२) इत्यादिप्रत्यक्षोपदेशान्निरवग्रहमैश्वर्यं विदुषां न्याय्यमिति, तत् परिहर्तव्यम्। अत्रोच्यते– नायं दोषः। आधिकारिकमण्डलस्थोक्तेः। आधिकारिको यः**

### *प्रकटार्थविवरणम्*

भूतभौतिकानां यः स्रष्टा तस्यैव स्थितिनियमनादावपि कर्तृत्वनिर्देशात् सृष्ट्युत्तरकालभाविनामुपासकानां तदानीमभावात् स्वोपभोगसाधनसंपत्तावेव सगुणविदामैश्वर्यमित्यर्थः। इतश्च न निरङ्कुशमैश्वर्यमित्याह— **समनस्कत्वादेव चेति**। यदि जगद्व्यवस्थामुपलभ्यैकस्येच्छानुविधायित्वमन्येषां कल्प्यते, तदा परमेश्वराभिप्रायतन्त्रत्वमेवेतरेषां भविष्यतीत्याह— **कस्यचिदित्यादिना**।

**प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः**।। पूर्वपक्षबीजापाकरणाय सूत्रम्— **प्रत्यक्षोपदेशादिति**। अधिकारे

### *भाष्यभावप्रकाशिका*

प्रलयादुत्थानसमये महदादिजगतो यः कर्ता तस्यैव स्थितिसंहारादावपि कर्तृत्वनिर्देशादित्यर्थः। **नित्यशब्दनिबन्धनत्वाच्चेति**। परमेश्वरस्यैव नित्यत्वेन स्वकारणानपेक्षस्य क्लृप्तसामर्थ्यात् जगत्सर्जनं प्रति कल्प्यसामर्थ्यत्वाच्च योगिनां तद्विषयैव जगत्स्रष्टृत्व-श्रुतिर्भवितुमर्हतीत्यर्थः।। एवमीश्वरस्य सन्निहितत्वमुक्त्वा योगिनामसन्निहितत्वमाह— **तदन्वेषणेति**। सृष्ट्युत्तरकालभाविनामुपासकानां सृष्टिसमये अभावात् पूर्वकल्पप्रसिद्धानां च प्रलयसमये मुक्तत्वान्न स्रष्टृत्वादिसंभव इत्यर्थः। समप्रधानानां नियमेनैकमत्यादर्शनादेकस्य सिसृक्षायामपरस्य सञ्जिहीर्षासंभवाद् युगपत् सृष्टिसंहारौ स्याताम्, नो चेदुभयोरप्यनीश्वरत्वं कार्यविघातादित्याह— **समनस्कत्वादेवेति**। एकाभिप्रायानुवर्तितायाश्चेतरेषामागन्तुकैश्वर्याणामगृह्यमाणविशेषत्वात् कस्यचित् प्राधान्यायोगादनागन्तुकैश्वर्यपरमेश्वराभिप्रायानुरोधित्वमितरेषां सिध्यतीत्याह— **अथ कस्यचिदिति**।

पूर्वपक्षबीजमनुभाष्य दूषयति— **अथ यदुक्तमित्यादिना**। सूत्रगतमनन्तपदं [नञ्पदं] व्याचष्टे— **नायं दोष इति**।

### *न्यायनिर्णयः*

परस्यैव नित्यत्वेन स्वहेत्वनपेक्षणस्य क्लृप्तशक्तित्वाज्जगत्सर्जनं प्रति कल्प्यसामर्थ्यत्वाच्च विदुषामीश्वरविषयैव जगत्सृष्टि[श्रुति]रेष्टव्या। किंच पौर्वापर्यालोचनायामीश्वरस्यैव जगत्सर्गः शब्दाद् गम्यते। जन्मादिसूत्रमारभ्य चैतदुपपादितम्। ततोऽद्वितीयप्रतिज्ञा सिद्धैवेत्याह— **नित्येति**। ईश्वरस्य जगद्व्यापारे संनिधिमुक्त्वा विदुषां तत्रासंनिधिमाद्यप्रतिज्ञासिद्ध्यर्थं समर्थयते— **तदन्वेषणेति**। श्रूयते 'तेषां सर्वेषु लोकेषु कामचारो भवती'त्यादाविति शेषः। सृष्ट्युत्तरभाविनामुपासकानां सृष्टिकाले सत्त्वाभावात् पूर्वकल्पसिद्धानां प्रलयकाले मुक्तत्वान्न स्रष्टृत्वादि तेषां शिलष्टमित्यर्थः। इतश्च विदुषां न निरङ्कुशैश्वर्यमित्याह— **समनस्कत्वादिति**। किं विदुषां समप्रधानत्वमाहो गुणप्रधानत्वम्? आद्ये समप्रधानानां नियमेनैकमत्यादर्शनादेकस्य सिसृक्षायामपरस्य संजिहीर्षासंभवादपर्यायमेव सर्गसंहारौ स्याताम्। अपरथा द्वयोरपि नेश्वरत्वं कार्यविघातादित्यर्थः। द्वितीयमनुभाष्य दूषयति— **अथेत्यादिना**। एकाभिप्रायानुवर्तिताया-मन्येषामागन्तुकैश्वर्याणामगृह्यमाणविशेषतया कस्यचित् प्रधान्यायोगादनागन्तुकैश्वर्य[1]परमेश्वरवर्तित्वमितरेषामेषितव्यमित्यर्थः।।१७।।

पूर्वपक्षबीजमनूद्य दूषयति— **प्रत्यक्षेति**। अनुवादभागं व्याकरोति— **अथेति**। परिहारमवतारयति— **अत्रेति**। नञर्थमुक्त्वा

१. 'परमेश्वराभिप्रायानुवर्तित्व' मिति पाठः स्यात्।

**सवितृमण्डलादिषु विशेषायतनेष्ववस्थितः पर ईश्वरस्तदायत्तैवेयं स्वाराज्यप्राप्तिरुच्यते। यत्कारणमनन्तरम् 'आप्नोति मनसस्पतिम्' (तै.उ. १।६।२) इत्याह। यो हि सर्वमनसां पतिः पूर्वसिद्ध ईश्वरस्तं प्राप्नोतीत्येतदुक्तं भवति। तदनुसारेणैव चानन्तरम् 'वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवति' (तै.उ. १।६।२) इत्याह। एवमन्यत्रापि यथासंभवं नित्यसिद्धेश्वरायत्तमेवेतरेषामैश्वर्यं योजयितव्यम्।।१८।।**

## विकारावर्ति च तथा हि स्थितिमाह।।१९।।

**विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपम्, न केवलं विकारमात्रगोचरं सवितृमण्डलाद्यधिष्ठानम्। तथा ह्यस्य द्विरूपां स्थितिमाहाम्नायः– 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' (छा.उ. ३।१२।६) इत्येवमादिः। न च तन्निर्विकारं रूपमितरालम्बनाः प्राप्नुवन्तीति**

### *प्रकटार्थविवरणम्*

नियोजयति आदित्यादीनिति आधिकारिकः। यत्कारणं यस्मात् कारणात् स्वाराज्यप्राप्त्यनन्तरमाह 'आप्नोति मनसस्पतिम्' इति; यदि पूर्वमेव निरङ्कुशं स्वाराज्यमुक्तम्, तर्हि पश्चादीश्वरप्राप्त्यभिधानं न स्यात्। अतो भोगे स्वाराज्यं, न तु जगत्स्रष्टृत्वादिकमित्यर्थः। अनन्तरमपि यद्वाक्पतित्वादिकमभिधत्ते, तदपि स्रष्टृत्वाद्यभावानुसारेणैवेश्वरसायुज्यप्राप्त्या सिद्धवत् पतित्वाभिधानादित्याह— **तदनुसारेणैव चेति**। 'तेषां सर्वेषु लोकेषु कामचारो भवति' इत्यादिष्वतिदिशति— **एवमन्यत्रापीति**।

**विकारावर्ति च तथा हि स्थितिमाह**।। ननूपास्यस्य ब्रह्मणो निरङ्कुशमैश्वर्यमस्ति; तत्किमिति तदुपासनात्र प्राप्यत इत्याशङ्क्य व्यभिचारमाह— **विकारावर्ति चेति**। यद्यद् ब्रह्मणो रूपं तत् सर्वमुपासकेन प्राप्तव्यमिति न नियम इत्यर्थः।

### *भाष्यभावप्रकाशिका*

विवक्षितार्थसिद्धये वाक्यार्थमाह— **यो हीति**। तस्मात् परमेश्वराधीनमेषामैश्वर्यमणिमादिमात्रं स्वाराज्यम्, न तु जगत्स्रष्टृत्वादिकमित्यर्थः। 'तेषां सर्वेषु लोकेषु कामचारो भवति' 'स स्वराट् भवती'त्यादिवाक्येष्वप्येवमेवोह्यमित्याह— **एवमन्यत्रेति**।

निरवग्रहैश्वर्यवदीश्वरोपासकास्तदात्मतां प्राप्ताः सावग्रहैश्वर्या इति न युक्तम्, तदात्मताविरोधादित्याशङ्क्य ब्रह्मण एकत्वेऽपि यथा सगुणप्राप्तानां निर्गुणप्राप्त्यभावस्तद्वदेतदुपपद्यत इत्युपपादयितुं ब्रह्मणो द्विरूपतामाह— **विकारावर्तीति [तावानस्य महिमेति विकारवर्ति]रूपम्**। ततो ज्यायानिति निर्विकाररूपम्; एवं पादोऽस्येति विकारवर्ति, त्रिपादस्येति निर्विकारं दर्शितम्। इदानीं यदर्थमिदमुक्तं तदाह— **न च तदिति**। वस्तुतस्तथात्वेऽपि यथोपासनमेव तत्प्राप्तिः। उपासनं च विध्यधीनम्, निरवग्रहत्वधर्मस्य चोपासनागोचरत्वादनुपासितस्याप्राप्तिरित्यर्थः।

### *न्यायनिर्णयः*

हेतुमवतार्य व्याचष्टे— **नेत्यादिना**। अधिकारे नियोजयत्यादित्यादीनित्याधिकारिकःतत्र हेतुमाह— **यदिति**। यस्मात् कारणात् स्वाराज्यप्राप्त्यनन्तरमाह 'आप्नोति मनसस्पति'मिति। यदि पूर्वमेव निरङ्कुशं स्वाराज्यमुक्तं तर्हि पश्चादीश्वरप्राप्तिवचनं न स्यात्। तस्माद्भोगे स्वाराज्यं, न तु जगतः स्रष्टृत्वादावित्यर्थः। विवक्षितार्थसिद्धये वाक्यार्थं कथयति— **यो हीति**। विदुषामीश्वराधीनमैश्वर्यं स्वाराज्यमित्यत्र वाक्यशेषमनुकूलयति— **तदनुसारेणेति**। परमेश्वराधीनमणिमादिलक्षणमैश्वर्यं विदुषां स्वाराज्यं, न तु जगतः स्रष्टृत्वादीत्युक्तमर्थं 'तेषां सर्वेषु लोकेष्वि'त्यादिवाक्येषु संचारयति— **एवमिति**।।१८।।

निरतिशयैश्वर्यवदीश्वरोपासकास्तदात्मतां प्राप्ताः सातिशयैश्वर्यवन्तो भवन्तीत्ययुक्तं तदात्मत्वविरोधादित्याशङ्क्य ब्रह्मैक्येऽपि सगुणप्राप्तानां निर्गुणप्राप्त्यभाववदेतद् युक्तमिति वक्तुं ब्रह्मणो द्वैरूप्यमाह— **विकारावर्तीति**। तत्र प्रतिज्ञाभागं व्याचष्टे— **विकारेति**। चकारसूचितमर्थमाह— **नेति**। हेतुभागं व्याचष्टे— **तथा हीति**। तत्र प्रथमतृतीयपादाभ्यां विकारवर्ति रूपमुच्यते, द्वितीयचतुर्थपादाभ्यां विकारावर्ति ब्रह्मणो रूपमुक्तमिति भेदः। अस्तु ब्रह्मणो विकारावर्ति रूपं तथापि किं स्यात्, तत्राह— **न चेति**।

**शक्यं वक्तुमतत्क्रतुत्वात् तेषाम्। अतश्च यथैव द्विरूपे परमेश्वरे निर्गुणं रूपमनवाप्य सगुण एवावतिष्ठन्त एवं सगुणेऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रह एवावतिष्ठन्त इति द्रष्टव्यम्।।१९।।**

**दर्शयतश्चैवं प्रत्यक्षानुमाने।।२०।।**

**दर्शयतश्च विकारावर्तित्वं परस्य ज्योतिषः श्रुतिस्मृती। 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' (क.उ. ५।१५।श्वे.उ. ६।१४।मु. २।२।१०) इति। 'न तद्भासयते सूर्यो न शशाङ्को न पावकः' (भ.गी. १५।६) इति च। तदेवं विकारावर्तित्वं परस्य ज्योतिषः प्रसिद्ध-मित्यभिप्रायः।।२०।।**

**भोगमात्रसाम्यलिङ्गाच्च।।२१।।**

**इतश्च न निरङ्कुशं विकारालम्बनानामैश्वर्यम्, यस्माद् भोगमात्रमेवैषामनादिसिद्धेनेश्वरेण समानमिति श्रूयते- 'तमाहापो वै खलु मीयन्ते लोकोऽसौ' इति, 'स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति', (बृ.उ. १।५।२०) 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' (बृ.उ. १।५।२३) इत्यादिभेदव्यपदेशलिङ्गेभ्यः।।२१।।**

***प्रकटार्थविवरणम्***

**दर्शयतश्चैवं प्रत्यक्षानुमाने।।** विकारासंसृष्टं रूपमस्तीत्यत्रैव श्रुतिस्मृती प्रमाणमाह— **दर्शयतश्चेति।**

**भोगमात्रसाम्यलिङ्गाच्च।।** जगत्स्रष्टृत्वाद्यभावे हेत्वन्तरमाह— **भोगमात्रेति।** तं प्राप्तमुपासकम् आह उक्तवत् पर्यङ्कस्थं ब्रह्म किमसौ लोकः प्राप्तव्य इति बुद्ध्या अपः प्राप्तोऽसि वै खलु मे ममायं लोकस्तवापि। अवन्ति भुञ्जते। तेन उ एतस्याः सायुज्यं समानदेहतामित्यर्थः।

***भाष्यभावप्रकाशिका***

विकारावर्तित्वं प्रमाणतः साधयति— **दर्शयत इति।**

न केवलं स्वाराज्यस्य परमेश्वरायत्ततया योगिनां जगद्व्यापाररहित्यं परमेश्वरेण भोगमात्रेण साम्यव्यपदेशलिङ्गादपीत्याह— **भोगमात्रेति।**

***न्यायनिर्णयः***

वस्तुतस्तथात्वेऽपि यथोपासनमेव तत्प्राप्तिरुपासनं च विध्यधीनं, निरवग्रहमहत्त्वादिधर्मस्य चोपास्त्यगोचरत्वादनुपासितस्याप्राप्तिरिति फलितमाह— **अतश्चेति।**।१९।।

विकारावर्ति रूपमस्तीत्यत्रैव श्रुतिस्मृती प्रमाणयति— **दर्शयतश्चेति।** प्रसिद्धे प्रत्यक्षानुमाने प्रत्याचक्षाणः सूत्राक्षराणि योजयति— **दर्शयतश्चेत्यादिना।** उक्तेऽर्थे सुलभानि श्रुतिस्मृतिवचनानीति मन्वानो वाक्यार्थमाह— **तदेवमिति।**।२०।।

अपरब्रह्मविदां विश्वस्रष्टृत्वाद्यभावे हेत्वन्तरमाह— **भोगमात्रेति।** न केवलं स्वाराज्यस्य परमेश्वरायत्ततया विदुषां जगद्व्यापाररहित्यं, किंतु तेन भोगमात्रेण साम्योक्तिलिङ्गादपीत्यर्थः। चकारार्थमाह— **इतश्चेति।** हेत्वन्तरमेवावशिष्टसूत्राक्षरयोजनया स्पष्टयति— **यस्मादिति।** तं ब्रह्मलोकगतमुपासकं हिरण्यगर्भः स्वसमीपमुपागतं सानुनयमाह— मया खल्वाप एवामृतमय्यो मीयन्ते दृश्यन्ते भुज्यन्ते तवाप्यसावमृतरूपोदकलक्षणो लोको भोग्यो, यथासुखं भुज्यतामित्याह— **तमाहेति।** उपासकस्योपास्यदेवतया भोगमात्रसाम्ये श्रुत्यन्तरमाह— **स यथेति।** सशब्दो दृष्टान्तपरः। अवन्ति भजन्ते। तत्रैव वाक्यान्तरमाह— **तेनेति।** उशब्दोऽप्यर्थः सलोकतामपीति संबध्यते। प्रकृतेनोपासनेनोपास्याया देवतायाः सायुज्यं तेन समानदेहतां समानलोकतां च भावनाविशेषादाप्नोतीत्यर्थः।।२१।।

**नन्वेवं सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य स्यात्; ततश्चैषामावृत्तिः प्रसज्येतेत्यत उत्तरं भगवान् बादरायण आचार्यः पठति–**

**अनावृत्तिः शब्दादनावृत्तिः शब्दात्।।२२।।**

**नाडीरश्मिसमन्वितेनार्चिरादिपर्वणा देवयानेन पथा ये ब्रह्मलोकं शास्त्रोक्तविशेषणं गच्छन्ति यस्मिन्नरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि यस्मिन्नैरंमदीयं सरो यस्मिन्नश्वत्थः सोमसवनो यस्मिन्नपराजिता पूर्ब्रह्मणो यस्मिंश्च प्रभुविमितं हिरणमयं वेश्म यश्चानेकधा मन्त्रार्थवादादिप्रदेशेषु प्रपञ्च्यते, ते तं प्राप्य न चन्द्रलोकादिव भुक्तभोगा आवर्तन्ते। कुतः? 'तयोर्ध्वमायन्नमृतत्वमेति' (छा.उ. ८।६।६, क.उ. ६।१६), 'तेषां न पुनरावृत्तिः' (बृ.उ. ६।२।१५), 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छा.उ.**

***प्रकटार्थविवरणम्***

असौ लोक इति बुद्ध्या आप एव खलु मीयन्ते स्वर्लोकस्य भूतान्तरसहकृताकार्यत्वाद् यथेश्वरस्य लोकस्य दर्शनं तथा मुक्तस्यापीत्यर्थः। निरङ्कुशैश्वर्याभावे दोषमाशङ्क्य परिहरति— **नन्वेवमित्यादिना**। शास्त्रसमाप्तौ सूत्रकारं पूजयति— **भगवानिति**।

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति।।

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोः षण्णां स्मृता भग इतीरणा।।"

**अनावृत्तिः शब्दादनावृत्तिः शब्दात्**।। श्रुतिविराधादन्तवत्त्वानुमानमप्रमाणमित्याह— **अनावृत्तिरिति**। नन्वासां श्रुतीनामर्थवादत्वादविरोधे प्रामाण्यमिति नानुमानावबाधने सामर्थ्यम्। किं चेममिहेति विशेषणार्थवत्त्वायास्मिन् कल्पे प्राप्तानामर्थात् कल्पान्तरेऽस्त्यावृत्तिरिति गम्यते। सत्यमेवम्, ये ब्रह्मचर्येण ब्रह्मलोकं प्राप्ता आश्रमधर्ममात्रनिष्ठा ऊर्ध्वरेतसः, तेषामस्त्येवावृत्तिः,

***भाष्यभावप्रकाशिका***

सूत्रान्तरं शङ्कापूर्वकमवतारयति— **नन्वेवमिति**। सह परमेश्वरस्यैश्वर्येणातिशयेन वर्तत इति सातिशयं विदुषामैश्वर्यम्। तस्मात् कार्यत्वं लौकिकैश्वर्यवत् ततश्चान्तवत्वे[त्त्वमि]त्यर्थः। भवतु को दोष इति, तत्राह— **ततश्चेति**। मुक्तता न स्यादित्यर्थः। एतदुत्तरत्वेनाचार्यं पूजयन्नुत्तरसूत्रमवतारयति भगवान् भाष्यकारः— **अत उत्तरं भगवानिति**। ऐश्वर्यस्यान्तवत्त्वं त्वया साध्यते, किं वा मुक्त्यभावः? तत्र पूर्वस्मिन् कल्पे सिद्धसाधनता; उत्तरत्र श्रुतिविरोधस्तेषां क्रममुक्तिप्रतिपादनादित्याह— **नाडीरश्मीति**।

***न्यायनिर्णयः***

विदुषां निरङ्कुशैश्वर्याभावे दोषमाशङ्कते— **नन्विति**। सह परमेश्वरस्यैश्वर्येणातिशयेन वर्तत इति सातिशयं विदुषामैश्वर्यम्। तथा च परमेश्वराधीनत्वाल्लौकिकैश्वर्यवत् कार्यम्, कार्यत्वाच्चान्तवदित्यर्थः। विद्वदैश्वर्यस्यान्तवत्त्वे का क्षतिरित्याशङ्क्य विदुषां मुक्तता न स्यादित्याह— **ततश्चेति**। एतदुत्तरत्वेनोत्तरसूत्रं सूत्रकारं पूजयन्नवतारयति— **अत इति**। भगवानित्यनेन सर्वज्ञत्वादिसंपत्तिरुक्ता। आचार्यशब्देन शास्त्रार्थबहुलीकरणं सदाचारे शिष्याणां स्थापनं स्वयं तदाचरणं चेत्यत्र नैपुण्यमुक्तमिति भेदः। यत्तु सातिशयत्वेन कार्यत्वं ततश्चान्तवत्त्वमित्यनुमानं तत्र किमैश्वर्यस्यान्तवत्त्वमात्रं साध्यं किंवा मुक्त्यभावो विदुषामिति विकल्प्याद्ये सिद्धसाध्यत्वं मत्वा द्वितीये क्रममुक्तिवादिश्रुतिविरोधमाह— **अनावृत्तिरिति**। सूत्रस्थं प्रतिज्ञापदं व्याचष्टे— **नाडीति**। अर्चिरादिपदोक्तदेवयानं पन्थानं स्मारयितुं विशेषणद्वयम्। ये ब्रह्मलोकं गच्छन्ति ते तं प्राप्य भुक्तभोगास्ततो नावर्तन्त इति संबन्धः। कानि तानि शास्त्रोक्तानि विशेषणानीत्युक्ते यथाशास्त्रं तान्यनुक्रामति— **यस्मिन्निति**। इतो लोकात् पृथिवीशब्दितात् तृतीयस्यां दिवि यो ब्रह्मलोकस्तस्मिन्नरण्यसंज्ञौ द्वावर्णवावित्यर्थः। तस्मिन्नेवान्नमयं हर्षकरं च सरोऽस्तीत्याह— **यस्मिन्नैरमिति**। सोमसवन इत्यत्र सोमशब्दोऽमृतवचनः। कर्मज्ञानशून्यानां दुष्प्रापत्वमपराजितत्वम्। ब्रह्मणो हिरण्यगर्भस्येति यावत्। प्रभुशब्दोऽपि हिरण्यगर्भमेवाधिकरोति। उक्तविशेषणवति ब्रह्मलोके मानमाह— **यश्चेति**। चन्द्रलोकादिवेति वैधर्म्योदाहरणम्। प्रतिज्ञामेवं व्याख्याय मोक्षहेतुमाकाङ्क्षापूर्वकं व्याख्याति— **कुत इत्यादिना**। ननु दर्शितानामनावृत्तिश्रुतीनामर्थवादत्वादविरोधे प्रामाण्यमिति नानुमानापबाधने सामर्थ्यम्। इममिहेति

**४।१५।६), 'ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' (छा.उ. ८।१५।१) इत्यादिशब्देभ्यः। अन्तवत्त्वेऽपि त्वैश्वर्यस्य यथाऽनावृत्तिस्तथा वर्णितम्– 'कार्यात्यये तदध्यक्षेण सहातः परम्' (ब्र.सू. ४।३।१०) इत्यत्र। सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः। तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति। अनावृत्तिः शब्दादनावृत्तिः शब्दादिति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति।।२२।।**

**श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ श्रीमच्छारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः।।४।।**

### *प्रकटार्थविवरणम्*

विद्यामन्तरेण सर्वकर्मक्षयाद्यनुपपत्तेः। ये तु सगुणोपासकाः तेषामैश्वर्यस्य कल्पान्तेऽन्तवत्त्वेऽ[२]पक्वमुक्तिफलाभिप्रायेणानावृत्तिरित्याह— **अन्तवत्त्वेऽपि त्विति**। यत्र तु निर्गुणविद्याप्रकरणेऽनावृत्तिः श्रूयते, तत्र मूलाविद्यानिवृत्तौ स्वतःसिद्धाऽनावृत्तिःस्तुत्यर्थत्वेनानूद्यते परमित्याह— **सम्यग्दर्शनेति**। किंच निर्गुणविद्यायामात्यन्तिकानावृत्तिर्भवतीत्यत्र न कस्यापि विवादः, यतः सगुणशरणानामपि निर्विशेषब्रह्मात्मैक्यसाक्षात्कारप्रसूताविद्यानिवृत्त्या विद्याश्रयणेनैवानावृत्तिरित्यर्थः।

[१]**भास्कर**मतेऽस्तु बुद्ध्युपाधेः सत्त्वादत्यन्तोच्छेदायोगात्; शक्तिमत्कारणावस्थाने पुनरावृत्तिः दुर्वारा; शक्तिनाशे च तादात्म्यात् ब्रह्मणो नाशप्रसङ्गात् पुनरावृत्तिरेव।

**वाचस्पते**स्तु स्वाविद्यानाशेन ब्रह्मीभूतस्यापि द्वैतदर्शित्वं न व्यावर्तते, जीवाविद्याभिरेव ब्रह्मणः सर्वाशि[सर्वदर्शि]त्वाभ्युपगमात्। तदा च 'यत्र नान्यत्पश्यति' 'यत्र त्वस्य' इत्यादिश्रुतिविरोधः। जीवाश्च पुनर्ब्रह्मणा जगदाद्युत्पत्तीः [३]कल्पयन्तीति तद्भावापन्नस्य पुनर्देहाद्यात्मतापत्तावपुनरावृत्तिश्रुतिबाधः। न ह्यविद्यावतामपि तात्त्विकी पुनरावृत्तिः। जीवाविद्यानां च ब्रह्मसंस्पर्शित्वाभ्युपगमादविद्याया अपि पुनरावृत्तिप्रसङ्गः। तस्मादविद्यानास्पदब्रह्मप्राप्त्यैवानावृत्तिः सिद्धा। सूत्राभ्यासस्यार्थमाह— **अनावृत्तिरिति**।

### *भाष्यभावप्रकाशिका*

ननु निर्गुणब्रह्मविदामनावृत्तिः किमिति नोक्तेति, तत्राह— **सम्यग्दर्शनेति**। तेषामावृत्तिशङ्काया अप्यभावादित्यर्थः। सगुणब्रह्मविदामपि ब्रह्मलोकगतानां तत्रोत्पन्नसम्यग्दर्शनप्रसादादेव मुक्तेरभ्युपगमात् सम्यग्दर्शिनामनावृत्तिः सुतरां सिध्यतीत्याह— **तदाश्रयणेनैव हीति**। सूत्राभ्यासस्य प्रयोजनमाह— **अनावृत्तिःशब्दादिति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयतीति**।।

**।।इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्य श्रीचित्सुखमुनिविरचितायां भाष्यभावप्रकाशिकायां चतुर्थाध्यायःसमाप्तः।।**

### *न्यायनिर्णयः*

च विशेषणात् कल्पान्तरे भवत्यावृत्तिरिति, तत्राह— **अन्तवत्त्वेऽपीति**। ये तावदूर्ध्वरेतसः स्वाश्रमधर्ममात्रनिष्ठा ब्रह्मचर्येण ब्रह्मलोकमधिरूढास्तेषामन्तरेण विद्यां बन्धध्वंसासिद्धेरस्त्येवावृत्तिः। ये तु सगुणोपासकास्तेषामैश्वर्यस्य कल्पमात्रस्थायित्वेऽपि क्रममुक्तिविवक्षयाऽनावृत्तिरविरुद्धेत्यर्थः। सगुणब्रह्मविदामेवानावृत्तिरत्र प्रतिपाद्यते न निर्गुणब्रह्मविदाम्, तत्र को हेतुरित्याशङ्क्य तेषामावृत्तिशङ्काभावादित्याह— **सम्यगिति**। सगुणब्रह्मविदामपि ब्रह्मलोकगतानां तत्रोत्पन्नसम्यग्दर्शनप्रसादादेव मुक्तिरिति स्थिते सम्यग्दर्शिनामनावृत्तिः सुतरां सिध्यतीति कैमुतिकन्यायमाह— **तदाश्रयणेनेति**। उपासकानामीश्वरायत्तमैश्वर्यम्, न निरतिशयमित्यधिकरणार्थमुपसंहर्तुमितीत्युक्तम्। सूत्राभ्यासस्य प्रयोजनमाह— **अनावृत्तिः शब्दादिति**। यत्राध्यायपरिसमाप्तिरेव तत्र पदस्यैवाभ्यासो दृष्टः। प्रकृते सूत्रस्यैवाभ्यासाच्चतुर्लक्षणस्य वेदान्तमीमांसाशास्त्रस्य समन्वयाविरोधसाधनफलानां साकल्येनोक्तत्वाद् वक्तव्यानवशेषात् परिसमापनमुचितमिति भावः।।२२।।

---

१. 'भास्करमते तु' इति पाठः स्यात्। २. क्रममुक्तिर्विवक्षिता। ३. 'अविद्योपधानं च यद्यपि विद्यास्वभावे परमात्मनि न साक्षादस्ति, तथापि तत्प्रतिबिम्बकल्पजीवद्वारेण परस्मिन्नुच्यते' इति भामती। द्र.पृ. ४२१।

### प्रकटार्थविवरणम्

शुद्धं ब्रह्मास्म्यहं नित्यमक्षरं परमं पदम्।
तिष्ठामि क्व क्व गच्छामि जगदापूरितं मया।।

**इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तः**
**।।अध्यायश्च समाप्तः।।**

सर्वेषु भूतेषु चतुर्विधेषु स्थितो हरिस्तत्र हरौ च तानि।
सोऽहं हरिः सर्वमिदं स एवेत्युत्पद्यते यस्य मतिः स मुक्तः।।

### न्यायनिर्णयः

व्याख्याऽसंख्याततर्कक्रकचचयरयस्त्रस्तदुस्तर्कशङ्का शङ्काव्याजप्रकारप्रसरणसमता वस्तुतत्त्वं श्रयन्ती।
शुद्धानन्दाङ्घ्रियुग्मस्मृतिभरनिभृतप्रौढगाढोक्तिरूढाऽऽनन्दज्ञानप्रणीता जगति मुदमियं सद्धियां संविधत्ताम्।।१।।
सन्त्येव बहुलानीह व्याख्यानानि महाधियाम्। व्याख्या तथापि सौख्येन व्याख्यानाय मया कृता।।२।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृते श्रीमच्छारीरकमीमांसाभाष्यविभागे न्यायनिर्णये चतुर्थाध्यायस्य चतुर्थः पादः।।४।।**

**।।इति चतुर्थस्याध्यायस्य ब्रह्मप्राप्ति-ब्रह्मलोकस्थितिनिरूपणाख्यश्चतुर्थः पादः।।**

**।।इति श्रीमद्ब्रह्मसूत्रशांकरभाष्ये फलाख्यश्चतुर्थोऽध्यायः।।**

**।।ॐ तत् सत्।।**

**।।शिवमस्तु।।**

# ब्रह्मसूत्राधिकरणानां वर्णानुक्रमसूचिः


| अधिकरणनाम | पृ.सं. | अ.पा.सू. |
|---|---|---|
| अंशाधिकरणम् | ७५१ | २.३.४३-५३ |
| अक्षरध्यधिकरणम् | ९९२ | ३.३.३३ |
| अक्षराधिकरणम् | २९० | १.३.१०-१२ |
| अग्निहोत्राद्यधिकरणम् | ११५९ | ४.१.१६-१७ |
| अग्नीन्धनाद्यधिकरणम् | १०८५ | ३.४.२५ |
| अङ्गावबद्धाधिकरणम् | १०३८ | ३.३.५५-५६ |
| अत्त्रधिकरणम् | २२१ | १.२.९-१० |
| अदृश्यत्वाधिकरणम् | २४८ | १.२.२१-२३ |
| अध्यक्षाधिकरणम् | ११७० | ४.२.४-६ |
| अनारब्धाधिकरणम् | ११५७ | ४.१.१५ |
| अनाविष्काराधिकरणम् | १११४ | ३.४.५० |
| अनियमाधिकरणम् | ९८४ | ३.३.३१ |
| अनिष्टादिकार्यधिकरणम् | ८२८ | ३.१.१२-२१ |
| अनुकृत्यधिकरणम् | ३२१ | १.३.२२-२३ |
| अन्तस्तद्धर्माधिकरणम् | १६८ | १.१.२०-२१ |
| अन्तराधिकरणम् | २३२ | १.२.१३-१७ |
| अन्तरत्वाधिकरणम् | ९९७ | ३.३.३५-३६ |
| अन्तराविज्ञानाधिकरणम् | ७०६ | २.३.१५ |
| अन्तर्याम्यधिकरणम् | २४१ | १.२.१८-२० |
| अन्यथात्वाधिकरणम् | ९२० | ३.३.६-८ |
| अन्याधिष्ठिताधिकरणम् | ८३८ | ३.१.२४-२७ |
| अपशूद्राधिकरणम् | ३६८ | १.३.३४-३८ |
| अप्रतीकालम्बनाधिकरणम् | १२१८ | ४.३.१५-१६ |
| अबधिकरणम् | ६९८ | २.३.१ |
| अभावाधिकरणम् | १२३१ | ४.४.१०-१४ |
| अर्चिराद्यधिकरणम् | ११९० | ४.३.१ |
| अर्थान्तरत्वव्यपदेशाधिकरणम् | ३८२ | १.३.४१ |
| अविभागाधिकरणम् | ११८३ | ४.२.१६ |
| अविभागेनदृष्टत्वाधिकरणम् | १२२४ | ४.४.४ |
| असंभवाधिकरणम् | ६९४ | २.३.९ |

| अधिकरणनाम | पृ.सं. | अ.पा.सू. |
|---|---|---|
| आकाशाधिकरणम् | १७४ | १.१.२२ |
| आतिवाहिकाधिकरणम् | ११९७ | ४.३.४-६ |
| आत्मगृहीत्यधिकरणम् | ९४० | ३.३.१६-१७ |
| आत्मत्वोपासनाधिकरणम् | ११३१ | ४.१.३ |
| आत्माधिकरणम् | ७११ | २.३.१७ |
| आदराधिकरणम् | १००६ | ३.३.४०-४१ |
| आदित्यादिमत्यधिकरणम् | ११३९ | ४.१.६ |
| आधिकारिकाधिकरणम् | ११०२ | ३.४.४१-४२ |
| आध्यानाधिकरणम् | ९३७ | ३.३.१४-१५ |
| आनन्दमयाधिकरणम् | १४८ | १.१.१२-१९ |
| आनन्दाद्यधिकरणम् | ९३४ | ३.३.११-१३ |
| आनुमानिकाधिकरणम् | ३८९ | १.४.१-७ |
| आप्रायणाधिकरणम् | ११४८ | ४.१.१२ |
| आरम्भणाधिकरणम् | ५०० | २.१.१४-२० |
| आवृत्त्यधिकरणम् | ११२२ | ४.१.१-२ |
| आश्रमकर्माधिकरणम् | १०९४ | ३.४.३२-३५ |
| आसीनाधिकरणम् | ११४५ | ४.१.७-१० |
| आसृत्युपक्रमाधिकरणम् | ११७३ | ४.२.७ |
| इतरक्षपणाधिकरणम् | ११६३ | ४.१.१९ |
| इतरव्यपदेशाधिकरणम् | ५२९ | २.१.२१-२३ |
| इतरासंश्लेषाधिकरणम् | ११५५ | ४.१.१४ |
| इन्द्रियाधिकरणम् | ७९३ | २.४.१७-१९ |
| इयदधिकरणम् | ९९४ | ३.३.३४ |
| ईक्षतिकर्मव्यपदेशाधिकरणम् | २९४ | १.३.१३ |
| ईक्षत्यधिकरणम् | १२५ | १.१.५-११ |
| उत्क्रान्तिगत्यधिकरणम् | ७१८ | २.३.१९-३२ |
| उत्पत्त्यसंभवाधिकरणम् | ६६८ | २.२.४२-४५ |
| उपसंहारदर्शनाधिकरणम् | ५३४ | २.१.२४-२५ |
| उपसंहाराधिकरणम् | ९१९ | ३.३.५ |
| उभयलिङ्गाधिकरणम् | ८६८ | ३.२.११-२१ |

| अधिकरणनाम | पृ.सं. | अ.पा.सू. |
|---|---|---|
| एकस्मिन्नसंभवाधिकरणम् | ६४५ | २.२.३३-३६ |
| एकाग्रताधिकरणम् | ११४७ | ४.१.११ |
| ऐकात्म्याधिकरणम् (शरीरेभावाधि.) | १०३२ | ३.३.५३-५४ |
| ऐहिकाधिकरणम् | १११५ | ३.४.५१ |
| कम्पनाधिकरणम् | ३७६ | १.३.३९ |
| कर्त्रधिकरणम् | ७३५ | २.३.३३-३९ |
| कर्मानुस्मृतिशब्दविध्यधिकरणम् | ८६१ | ३.२.९ |
| कलाप्रलयाधिकरणम् | ११८२ | ४.२.१५ |
| कामाद्यधिकरणम् | १००४ | ३.३.३९ |
| काम्याधिकरणम् | १०५० | ३.३.६० |
| कारणत्वाधिकरणम् | ४२४ | १.४.१४-१५ |
| कार्याख्यानाधिकरणम् | ९४६ | ३.३.१८ |
| कार्याधिकरणम् | १२०२ | ४.३.७-१४ |
| कृतात्ययाधिकरणम् | ८१८ | ३.१.८-११ |
| कृत्स्नप्रसक्त्यधिकरणम् | ५३८ | २.१.२६-२९ |
| गतेरर्थवत्त्वाधिकरणम् | ९८२ | ३.३.२९-३० |
| गुहाप्रविष्टाधिकरणम् | २२४ | १.२.११-१२ |
| चमसाधिकरणम् | ४०९ | १.४.८-१० |
| चराचरव्यपाश्रयाधिकरणम् | ७०८ | २.३.१६ |
| जगद्व्यापाराधिकरणम् | १२३७ | ४.४.१७-२२ |
| जन्माद्यधिकरणम् | ५८ | १.१.२ |
| जिज्ञासाधिकरणम् | ३७ | १.१.१ |
| ज्ञाधिकरणम् | ७१५ | २.३.१८ |
| ज्योतिरधिकरणम् | ३८० | १.३.४० |
| ज्योतिराद्यधिकरणम् | ७८९ | २.४.१४-१६ |
| ज्योतिश्चरणाधिकरणम् | १८२ | १.१.२४-२७ |
| तक्षाधिकरणम् | ७४० | २.३.४० |
| तडिदधिकरणम् | ११९७ | ४.३.३ |
| तदधिगमाधिकरणम् | ११५१ | ४.१.१३ |
| तदन्तरप्रतिपत्त्यधिकरणम् | ८०४ | ३.१.१-७ |
| तदभावाधिकरणम् | ८५४ | ३.२.७-८ |
| तदभिध्यानाधिकरणम् | ७०२ | २.३.१३ |
| तदोकोधिकरणम् | ११८४ | ४.२.१७ |
| तद्भूताधिकरणम् | ११०० | ३.४.४० |
| तन्निर्धारणाधिकरणम् | १०११ | ३-३-४२ |
| तेजोधिकरणम् | ६९५ | २.३.१० |
| दक्षिणायनाधिकरणम् | ११८८ | ४.२.२०-२१ |
| दहराधिकरणम् | २९८ | १.३.१४-२१ |
| देवताधिकरणम् | ३३२ | १.३.२६-३३ |
| द्युभ्वाद्यधिकरणम् | २७२ | १.३.१-७ |
| नविलक्षणत्वाधिकरणम् | ४७४ | २.१.४-११ |
| नातिचिराधिकरणम् | ८३७ | ३.१.२३ |
| नाभावाधिकरणम् | ६३० | २.२.२८-३२ |
| पत्यधिकरणम् | ६५५ | २.२.३७-४१ |
| परमाणुजगदकारणत्वाधिकरणम् | ५८८ | २.२.१२-१७ |
| पराधिकरणम् | ८९५ | ३.२.३१-३७ |
| परामर्शाधिकरणम् | १०६७ | ३.४.१८-२० |
| परायत्ताधिकरणम् | ७४७ | २.३.४१-४२ |
| पारिप्लवाधिकरणम् | १०८२ | ३.४.२३-२४ |
| पुरुषविद्याधिकरणम् | ९५९ | ३.४.२४ |
| पुरुषार्थाधिकरणम् | १०५५ | ३.४.१-१७ |
| पृथिव्यधिकाराधिकरणम् | ६९९ | २.३.१२ |
| प्रकृतैतावत्त्वाधिकरणम् | ८८५ | ३.२.२२-३० |
| प्रकृत्यधिकरणम् | ४५१ | १.४.२३-२७ |
| प्रतर्दनाधिकरणम् | १९६ | १.१.२८-३१ |
| प्रतिषेधाधिकरणम् | ११७७ | ४.२.१२-१४ |
| प्रतीकाधिकरणम् | ११३४ | ४.१.४ |
| प्रदानाधिकरणम् | १०१६ | ३.३.४३ |
| प्रदीपाधिकरणम् | १२३४ | ४.४.१५-१६ |
| प्रमिताधिकरणम् | ३२६ | १.३.२४-२५ |
| प्रयोजनवत्त्वाधिकरणम् | ५४७ | २.१.३२-३३ |
| प्राणश्रैष्ठ्याधिकरणम् | ७८० | २.४.८ |
| प्राणाणुत्वाधिकरणम् | ७७८ | २.४.७ |
| प्राणाधिकरणम् | १७८ | १.१.२३ |
| प्राणोत्पत्त्यधिकरणम् | ७६५ | २.४.१-४ |
| फलाधिकरणम् | ९०२ | ३.२.३८-४१ |
| बहिरधिकरणम् | ११०६ | ३.४.४३ |
| बालाक्यधिकरणम् | ४३१ | १.४.१६-१८ |
| ब्रह्मदृष्ट्यधिकरणम् | ११३६ | ४.१.५ |
| ब्राह्माधिकरणम् | १२२५ | ४.४.५-७ |

| अधिकरणनाम | पृ.सं. | अ.पा.सू. |
|---|---|---|
| भूमज्यायस्त्वाधिकरणम् | १०४१ | ३.३.५७ |
| भूमाधिकरणम् | २८२ | १.३.८-९ |
| भोक्त्रापत्त्यधिकरणम् | ४९७ | २.१.१३ |
| मनोधिकरणम् | ११६८ | ४.२.३ |
| महद्दीर्घाधिकरणम् | ५८१ | २.२.१ |
| मातरिश्वाधिकरणम् | ६९२ | २.३.८ |
| मुक्तिफलाधिकरणम् | १११९ | ३.४.५२ |
| मुग्धाधिकरणम् | ८६४ | ३.२.१० |
| यथाश्रयभावाधिकरणम् | १०५१ | ३.३.६१-६६ |
| यावदधिकाराधिकरणम् | ९८७ | ३.३.३२ |
| योगप्रत्युक्त्यधिकरणम् | ४७१ | २.१.३ |
| रचनानुपपत्त्यधिकरणम् | ५५७ | २.२.१-१० |
| रश्म्यधिकरणम् | ११८६ | ४.२.१८-१९ |
| लिङ्गभूयस्त्वाधिकरणम् | १०२१ | ३.३.४४-५२ |
| वाक्यान्वयाधिकरणम् | ४३९ | १.४.१९-२२ |
| वागधिकरणम् | ११६५ | ४.२.१-२ |
| वायुक्रियाधिकरणम् | ७८२ | २.४.९-१२ |
| वाय्वधिकरणम् | ११९३ | ४.३.२ |
| विकल्पाधिकरणम् | १०४८ | ३.३.५९ |
| विद्याज्ञानसाधनाधिकरणम् | ११६१ | ४.१.१८ |
| विधुराधिकरणम् | १०९८ | ३.४.३६-३९ |
| विपर्ययाधिकरणम् | ७०४ | २.३.१४ |
| वियदधिकरणम् | ६७३ | २.३.१-७ |
| वेधाद्यधिकरणम् | ९६३ | ३.३.२५ |
| वैश्वानराधिकरणम् | २५८ | १.२.२४-३२ |
| वैषम्यनैर्घृण्याधिकरणम् | ५५० | २.१.३४-३६ |
| व्यतिहाराधिकरणम् | ९९९ | ३.३.३७ |
| व्याप्त्यधिकरणम् | ९२७ | ३.३.९ |
| शब्दादिभेदाधिकरणम् | १०४४ | ३.३.५८ |
| शास्त्रयोनित्वाधिकरणम् | ७३ | १.१.३ |
| शिष्टापरिग्रहाधिकरणम् | ४९५ | २.१.१२ |

| अधिकरणनाम | पृ.सं. | अ.पा.सू. |
|---|---|---|
| श्रेष्ठाणुत्वाधिकरणम् | ७८८ | २.४.१३ |
| संसारव्यपदेशाधिकरणम् | ११७५ | ४.२.८-११ |
| संकल्पाधिकरणम् | १२२८ | ४.४.८-९ |
| संख्योपसंग्रहाधिकरणम् | ४१५ | १.४.११-१३ |
| संज्ञामूर्तिक्लृप्त्यधिकरणम् | ७९७ | २.४.२०-२२ |
| संपद्याविर्भावाधिकरणम् | १२२१ | ४.४.१-३ |
| संबन्धाधिकरणम् | ९५४ | ३.३.२०-२२ |
| संभृत्यधिकरणम् | ९५७ | ३.३.२३ |
| सत्याद्यधिकरणम् | १००१ | ३.३.३८ |
| संध्याधिकरणम् | ८४५ | ३.२.१-६ |
| सप्तगत्यधिकरणम् | ७७२ | २.४.५-६ |
| समन्वयाधिकरणम् | ७८ | १.१.४ |
| समानाधिकरणम् | ९५१ | ३.३.१९ |
| समुदायाधिकरणम् | ६१० | २.२.१८-२७ |
| सर्वत्रप्रसिद्ध्यधिकरणम् | २०८ | १.२.१-८ |
| सर्वधर्मोपपत्त्यधिकरणम् | ५५५ | २.१.३७ |
| सर्ववेदान्तप्रत्ययाधिकरणम् | ९०७ | ३.३.१-४ |
| सर्वव्याख्यानाधिकरणम् | ४५९ | १.४.२८ |
| सर्वान्नानुमत्यधिकरणम् | १०९० | ३.४.२८-३१ |
| सर्वापेक्षाधिकरणम् | १०८६ | ३.४.२६-२७ |
| सर्वाभेदाधिकरणम् | ९३१ | ३.३.१० |
| सर्वोपेताधिकरणम् | ५४५ | २.१.३०-३१ |
| सहकार्यन्तरविध्यधिकरणम् | ११०९ | ३.४.४७-४९ |
| सांपरायाधिकरणम् | ९७९ | ३.३.२७-२८ |
| साभाव्यापत्त्यधिकरणम् | ८३४ | ३.१.२२ |
| सुषुप्त्युत्क्रान्त्यधिकरणम् | ३८५ | १.३.४२-४३ |
| स्तुतिमात्राधिकरणम् | १०७९ | ३.४.२१-२२ |
| स्मृत्यधिकरणम् | ४६१ | २.१.१-२ |
| स्वाम्यधिकरणम् | ११०७ | ३.४.४४-४६ |
| हान्यधिकरणम् | ९७२ | ३.३.२६ |

# श्रीमद्बादरायणप्रणीतानां ब्रह्मसूत्राणां वर्णानुक्रमसूचिका


| सूत्र | स्थान |
|---|---|
| अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके | २.३.४३ |
| अकरणत्वाच्च न दोषस्तथा हि दर्शयति | २.४.११ |
| अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् | ३.३.३३ |
| अक्षरमम्बरान्तधृतेः | १.३.१० |
| अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् | ४.१.१६ |
| अग्न्यादिगतिश्रुतेरिति चेन्न, भाक्तत्वात् | ३.१.४ |
| अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् | ३.३.५५ |
| अङ्गित्वानुपपत्तेश्च | २.२.८ |
| अङ्गेषु यथाश्रयभावः | ३.३.६१ |
| अचलत्वं चापेक्ष्य | ४.१.९ |
| अणवश्च | २.४.७ |
| अणुश्च | २.४.१३ |
| अत एव च नित्यत्वम् | १.३.२९ |
| अत एव च सर्वाण्यनु | ४.२.२ |
| अत एव चाग्नीन्धनाद्यनपेक्षा | ३.४.२५ |
| अत एव चानन्याधिपतिः | ४.४.९ |
| अत एव चोपमा सूर्यकादिवत् | ३.२.१८ |
| अत एव न देवता भूतं च | १.२.२७ |
| अत एव प्राणः | १.१.२३ |
| अतः प्रबोधोऽस्मात् | ३.२.८ |
| अतश्चायनेऽपि दक्षिणे | ४.२.२० |
| अतस्त्वितरज्ज्यायो लिङ्गाच्च | ३.४.३९ |
| अतिदेशाच्च | ३.३.४६ |
| अतोऽनन्तेन तथाहि लिङ्गम् | ३.२.२६ |
| अतोऽन्याऽपि ह्येकेषामुभयोः | ४.१.१७ |
| अत्ता चराचरग्रहणात् | १.२.९ |
| अथातो ब्रह्मजिज्ञासा | १.१.१ |
| अदृश्यत्वादिगुणको धर्मोक्तेः | १.२.२१ |
| अदृष्टानियमात् | २.३.५१ |
| अधिकं तु भेदनिर्देशात् | २.१.२२ |
| अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात् | ३.४.८ |
| अधिष्ठानानुपपत्तेश्च | २.२.३९ |
| अध्ययनमात्रवतः | ३.४.१२ |
| अनभिभवं च दर्शयति | ३.४.३५ |
| अनवस्थितेरसंभवाच्च नेतरः | १.२.१७ |
| अनारब्धकार्ये एव तु पूर्वे तदवधेः | ४.१.१५ |
| अनाविष्कुर्वन्नन्वयात् | ३.४.५० |
| अनावृत्तिः शब्दादनावृत्तिः शब्दात् | ४.४.२२ |
| अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् | ३.३.३१ |
| अनिष्टादिकारिणामपि च श्रुतम् | ३.१.१२ |
| अनुकृतेस्तस्य च | १.३.२२ |
| अनुज्ञापरिहारौ देहसंबन्धाज्जोतिरादिवत् | २.३.४८ |
| अनुपपत्तेस्तु न शारीरः | १.२.३ |
| अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् | ३.३.५० |
| अनुष्ठेयं बादरायणः साम्यश्रुतेः | ३.४.१९ |
| अनुस्मृतेर्बादरिः | १.२.३० |
| अनुस्मृतेश्च | २.२.२५ |
| अनेन सर्वगतत्वमायामशब्दादिभ्यः | ३.२.३७ |
| अन्तर उपपत्तेः | १.२.१३ |
| अन्तरा चापि तु तद्दृष्टेः | ३.४.३६ |
| अन्तरा भूतग्रामवत् स्वात्मनः | ३.३.३५ |
| अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् | २.३.१५ |
| अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् | १.२.१८ |
| अन्तवत्त्वमसर्वज्ञता वा | २.२.४१ |
| अन्तस्तद्धर्मोपदेशात् | १.१.२० |
| अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः | २.२.३६ |
| अन्यत्राभावाच्च न तृणादिवत् | २.२.५ |
| अन्यथात्वं शब्दादिति चेन्नाविशेषात् | ३.३.६ |
| अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् | २.२.९ |
| अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् | ३.३.३६ |

अन्यभावव्यावृत्तेश्च १.३.१२
अन्याधिष्ठितेषु पूर्ववदभिलापात् ३.१.२४
अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके १.४.१८
अन्यार्थश्च परामर्शः १.३.२०
अन्वयादिति चेत् स्यादवधारणात् ३.३.१७
अपरिग्रहाच्चात्यन्तमनपेक्षा २.२.१७
अपिच संराधने प्रत्यक्षानुमानाभ्याम् ३.२.२४
अपिच सप्त ३.१.१५
अपिच स्मर्यते १.३.२३
अपिच स्मर्यते २.३.४५
अपिच स्मर्यते ३.४.३०
अपिच स्मर्यते ३.४.३७
अपिचैवमेके ३.२.१३
अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् २.१.८
अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च ४.३.१५
अबाधाच्च ३.४.२९
अभावं बादरिराह ह्येवम् ४.४.१०
अभिध्योपदेशाच्च १.४.२४
अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् २.१.५
अभिव्यक्तेरित्याश्मरथ्यः १.२.२९
अभिसंध्यादिष्वपि चैवम् २.३.५२
अभ्युपगमेऽप्यर्थाभावात् २.२.६
अम्बुवदग्रहणात् तु न तथात्वम् ३.२.१९
अरूपवदेव हि तत्प्रधानत्वात् ३.२.१४
अर्चिरादिना तत्प्रथितेः ४.३.१
अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न, निचाय्यत्वादेवं
व्योमवच्च १.२.७
अल्पश्रुतेरिति चेत् तदुक्तम् १.३.२१
अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि २.३.२४
अवस्थितेरिति काशकृत्स्नः १.४.२२
अविभागेन दृष्टत्वात् ४.४.४
अविभागो वचनात् ४.२.१६
अविरोधश्चन्दनवत् २.३.२३
अशुद्धमिति चेन्न शब्दात् ३.१.२५
अश्मादिवच्च तदनुपपत्तिः २.१.२३
अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ३.१.६
असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा २.२.२१
असदिति चेन्न प्रतिषेधमात्रत्वात् २.१.७
असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् २.१.१७
असंततेश्चाव्यतिकरः २.३.४९
असंभवस्तु सतोऽनुपपत्तेः २.३.९
असार्वत्रिकी ३.४.१०
अस्ति तु २.३.२
अस्मिन्नस्य च तद्योगं शास्ति १.१.१९
अस्यैव चोपपत्तेरेष ऊष्मा ४.२.११
आकाशस्तल्लिङ्गात् १.१.२२
आकाशे चाविशेषात् २.२.२४
आकाशोऽर्थान्तरत्वादिव्यपदेशात् १.३.४१
आचारदर्शनात् ३.४.३
आतिवाहिकास्तल्लिङ्गात् ४.३.४
आत्मकृतेः परिणामात् १.४.२६
आत्मगृहीतिरितरवदुत्तरात् ३.३.१६
आत्मनि चैवं विचित्राश्च हि २.१.२८
आत्मशब्दाच्च ३.३.१५
आत्मा प्रकरणात् ४.४.३
आत्मेति तूपगच्छन्ति ग्राहयन्ति च ४.१.३
आदरादलोपः ३.३.४०
आदित्यादिमतयश्चाङ्ग उपपत्तेः ४.१.६
आध्यानाय प्रयोजनाभावात् ३.३.१४
आनन्दमयोऽभ्यासात् १.१.१२
आनन्दादयः प्रधानस्य ३.३.११
आनर्थक्यमिति चेन्न तदपेक्षत्वात् ३.१.१०
आनुमानिकमप्येकेषामिति चेन्न,
शरीररूपकविन्यस्तगृहीतेर्दर्शयति च १.४.१
आपः २.३.११
आ प्रायणात् तत्रापि हि दृष्टम् ४.१.१२
आभास एव च २.३.५०
आमनन्ति चैनमस्मिन् १.२.३२
आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ३.४.४५
आवृत्तिरसकृदुपदेशात् ४.१.१
आसीनः संभवात् ४.१.७
आह च तन्मात्रम् ३.२.१६

| सूत्र | स्थान |
|---|---|
| इतरपरामर्शात् स इति चेन्नासंभवात् | १.३.१८ |
| **इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः** | **२.१.२१** |
| **इतरस्याप्येवमसंश्लेषः पाते तु** | **४.१.१४** |
| इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् | २.२.१९ |
| इतरे त्वर्थसामान्यात् | ३.३.१३ |
| इतरेषां चानुपलब्धेः | २.१.२ |
| **इयदामननात्** | **३.३.३४** |
| **ईक्षतिकर्मव्यपदेशात् सः** | **१.३.१३** |
| **ईक्षतेर्नाशब्दम्** | **१.१.५** |
| उत्क्रमिष्यत एवंभावादित्यौडुलोमिः | १.४.२१ |
| **उत्क्रान्तिगत्यागतीनाम्** | **२.३.१९** |
| उत्तराच्चेदाविर्भूतस्वरूपस्तु | १.३.१९ |
| उत्तरोत्पादे च पूर्वनिरोधात् | २.२.२० |
| **उत्पत्त्यसंभवात्** | **२.२.४२** |
| उदासीनानामपि चैवं सिद्धिः | २.२.२७ |
| उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् | १.१.२७ |
| उपपत्तेश्च | ३.२.३५ |
| उपपद्यते चाप्युपलभ्यते च | २.१.३६ |
| उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् | ३.३.३० |
| उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् | ३.४.४२ |
| उपमर्दं च | ३.४.१६ |
| उपलब्धिवदनियमः | २.३.३७ |
| **उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि** | **२.१.२४** |
| **उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च** | **३.३.५** |
| उपस्थितेऽतस्तद्वचनात् | ३.३.४१ |
| उपादानात् | २.३.३५ |
| उभयथा च दोषात् | २.२.१६ |
| उभयथा च दोषात् | २.२.२३ |
| **उभयथाऽपि न कर्मातस्तदभावः** | **२.२.१२** |
| उभयव्यपदेशात् त्वहिकुण्डलवत् | ३.२.२७ |
| उभयव्यामोहात् तत्सिद्धेः | ४.३.५ |
| ऊर्ध्वरेतःसु च शब्दे हि | ३.४.१७ |
| **एक आत्मनः शरीरे भावात्** | **३.३.५३** |
| **एतेन मातरिश्वा व्याख्यातः** | **२.३.८** |
| **एतेन योगः प्रत्युक्तः** | **२.१.३** |
| **एतेन शिष्टापरिग्रहा अपि व्याख्याताः** | **२.१.१२** |
| **एतेन सर्वे व्याख्याता व्याख्याताः** | **१.४.२८** |
| एवं चात्माकार्त्स्न्यम् | २.२.३४ |
| **एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः** | **३.४.५२** |
| एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः | ४.४.७ |
| **ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्** | **३.४.५१** |
| **कम्पनात्** | **१.३.३९** |
| करणवच्चेन्न भोगादिभ्यः | २.२.४० |
| **कर्ता शास्त्रार्थवत्त्वात्** | **२.३.३३** |
| कर्मकर्तृव्यपदेशाच्च | १.२.४ |
| कल्पनोपदेशाच्च मध्वादिवदविरोधः | १.४.१० |
| कामकारेण चैके | ३.४.१५ |
| कामाच्च नानुमानापेक्षा | १.१.१८ |
| **कामादीतरत्र तत्र चायतनादिभ्यः** | **३.३.३९** |
| **काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्** | **३.३.६०** |
| **कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः** | **१.४.१४** |
| **कार्यं बादरिरस्य गत्युपपत्तेः** | **४.३.७** |
| **कार्याख्यानादपूर्वम्** | **३.३.१८** |
| कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् | ४.३.१० |
| कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः | २.३.४२ |
| **कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च** | **३.१.८** |
| कृत्स्नभावात् तु गृहिणोपसंहारः | ३.४.४८ |
| **कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा** | **२.१.२६** |
| क्षणिकत्वाच्च | २.२.३१ |
| क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् | १.३.३५ |
| गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च | १.३.१५ |
| गतिसामान्यात् | १.१.१० |
| **गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः** | **३.३.२९** |
| गुणसाधारण्यश्रुतेश्च | ३.३.६४ |
| गुणाद्वा लोकवत् | २.३.२५ |
| **गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्** | **१.२.११** |
| गौणश्चेन्नात्मशब्दात् | १.१.६ |
| गौण्यसंभवात् | २.३.३ |
| गौण्यसंभवात् | २.४.२ |
| चक्षुरादिवत् तु तत्सहशिष्ट्यादिभ्यः | २.४.१० |
| **चमसवदविशेषात्** | **१.४.८** |
| चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः | ३.१.९ |

**चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्** २.३.१६
चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ४.४.६
छन्दत उभयाविरोधात् ३.३.२८
छन्दोभिधानान्नेति चेन्न, तथा चेतोर्पणनिगदात्, तथा हि दर्शनम् १.१.२५
**जगद्वाचित्वात्** १.४.१६
**जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च** ४.४.१७
**जन्माद्यस्य यतः** १.१.२
जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम् १.४.१७
जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् १.१.३१
ज्ञेयत्वावचनाच्च १.४.४.
**ज्ञोऽत एव** २.३.१८
**ज्योतिराद्यधिष्ठानं तु तदामननात्** २.३.१४
ज्योतिरुपक्रमा तु तथा ह्यधीयत एके १.४.९
**ज्योतिर्दर्शनात्** १.३.४०
**ज्योतिश्चरणाभिधानात्** १.१.२४
ज्योतिषि भावाच्च १.३.३२
ज्योतिषैकेषामसत्यन्ने १.४.१३
**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्** २.४.१७
तच्छ्रुतेः ३.४.४
**तडितोऽधि वरुणः संबन्धात्** ४.३.३
**तत् तु समन्वयात्** १.१.४
तत्पूर्वकत्वाद्वाचः २.४.४
तत् प्राक्श्रुतेश्च २.४.३
तत्रापि च तद्व्यापारादविरोधः ३.१.१६
तथाच दर्शयति २.३.२७
तथा चैकवाक्यतोपबन्धात् ३.४.२४
तथाऽन्यप्रतिषेधात् ३.२.३६
**तथा प्राणाः** २.४.१
**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्** ४.१.१३
तदधीनत्वादर्थवत् १.४.३
**तदनन्यत्वमारम्भणशब्दादिभ्यः** २.१.१४
**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्** ३.१.१
तदभावनिर्धारणे च प्रवृत्तेः १.३.३७
**तदभावो नाडीषु तच्छ्रुतेरात्मनि च** ३.२.७
**तदभिध्यानादेव तु तल्लिङ्गात् सः** २.३.१३
तदव्यक्तमाह हि ३.२.२३
**तदापीतेः संसारव्यपदेशात्** ४.२.८
**तदुपर्यपि बादरायणः संभवात्** १.३.२६
**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया** ४.२.१७
तद्गुणसारत्वात् तु तद्व्यपदेशः प्राज्ञवत् २.३.२९
तद्धेतुव्यपदेशाच्च १.१.१४
**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः** ३.४.४०
तद्वतो विधानात् ३.४.६
**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्** ३.३.४२
तन्निष्ठस्य मोक्षोपदेशात् १.१.७
**तन्मनः प्राण उत्तरात्** ४.२.३
तन्वभावे संध्यवदुपपत्तेः ४.४.१३
तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः २.१.११
तस्य च नित्यत्वात् २.४.१६
**तानि परे तथा ह्याह** ४.२.१५
तुल्यं तु दर्शनम् ३.४.९
तृतीयशब्दावरोधः संशोकजस्य ३.१.२१
**तेजोऽतस्तथा ह्याह** २.३.१०
त्रयाणामेव चैवमुपन्यासः प्रश्नश्च १.४.६
त्र्यात्मकत्वात् तु भूयस्त्वात् ३.१.२
दर्शनाच्च ३.१.२०
दर्शनाच्च ३.२.२१
दर्शनाच्च ३.३.४८
दर्शनाच्च ३.३.६६
दर्शनाच्च ४.३.१३
दर्शयतश्चैवं प्रत्यक्षानुमाने ४.४.२०
दर्शयति च ३.३.४
दर्शयति च ३.३.२२
दर्शयति चाथो अपि स्मर्यते ३.२.१७
**दहर उत्तरेभ्यः** १.३.१४
दृश्यते तु २.१.६
देवादिवदपि लोके २.१.२५
देहयोगाद्वा सोऽपि ३.२.६
**द्युभ्वाद्यायतनं स्वशब्दात्** १.३.१

| | |
|---|---|
| द्वादशाहवदुभयविधं बादरायणोऽतः | ४.४.१२ |
| धर्मं जैमिनिरत एव | ३.२.४० |
| धर्मोपपत्तेश्च | १.३.९ |
| धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः | १.३.१६ |
| ध्यानाच्च | ४.१.८ |
| न कर्माविभागादिति चेन्नानादित्वात् | २.१.३५ |
| न च कर्तुः करणम् | २.२.४३ |
| न च कार्ये प्रतिपत्त्यभिसंधिः | ४.३.१४ |
| न च पर्यायादप्यविरोधो विकारादिभ्यः | २.२.३५ |
| **न च स्मार्तमतद्धर्माभिलापात्** | **१.२.१९** |
| न चाधिकारिकमपि पतनानुमानात् तदयोगात् | ३.४.४१ |
| न तु दृष्टान्तभावात् | २.१.९ |
| न तृतीये तथोपलब्धेः | ३.१.१८ |
| **न प्रतीके न हि सः** | **४.१.४** |
| **न प्रयोजनवत्त्वात्** | **२.१.३२** |
| न भावोऽनुपलब्धेः | २.२.३० |
| न भेदादिति चेन्न प्रत्येकमतद्वचनात् | ३.२.१२ |
| न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् | १.१.२९ |
| न वा तत्सहभावाश्रुतेः | ३.३.६५ |
| न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् | ३.३.७ |
| **न वायुक्रिये पृथगुपदेशात्** | **२.४.९** |
| न वा विशेषात् | ३.३.२१ |
| **न वियदश्रुतेः** | **२.३.१** |
| **न विलक्षणत्वादस्य तथात्वं च शब्दात्** | **२.१.४** |
| **न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च** | **१.४.११** |
| **न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः** | **३.३.५१** |
| **न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि** | **३.२.११** |
| नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् | २.३.२१ |
| **नातिचिरेण विशेषात्** | **३.१.२३** |
| **नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः** | **२.३.१७** |
| **नाना शब्दादिभेदात्** | **३.३.५८** |
| नानुमानमतच्छब्दात् | १.३.३ |
| **नाभाव उपलब्धेः** | **२.२.२८** |
| नाविशेषात् | ३.४.१३ |
| नासतोऽदृष्टत्वात् | २.२.२६ |
| नित्यमेव च भावात् | २.२.१४ |
| नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा | २.३.३२ |
| नियमाच्च | ३.४.७ |
| निर्मातारं चैके पुत्रादयश्च | ३.२.२ |
| निशि नेति चेन्न, संबन्धस्य यावद्देहभावित्वाद्दर्शयति च | ४.२.१९ |
| नेतरोऽनुपपत्तेः | १.१.१६ |
| नैकस्मिन् दर्शयतो हि | ४.२.६ |
| **नैकस्मिन्नसंभवात्** | **२.२.३३** |
| नोपमर्देनातः | ४.२.१० |
| पञ्चवृत्तिर्मनोवद् व्यपदिश्यते | २.४.१२ |
| पटवच्च | २.१.१९ |
| पत्यादिशब्देभ्यः | १.३.४३ |
| **पत्युरसामञ्जस्यात्** | **२.२.३७** |
| पयोम्बुवच्चेत् तत्रापि | २.२.३ |
| परं जैमिनिर्मुख्यत्वात् | ४.३.१२ |
| **परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः** | **३.२.३१** |
| **परात् तु तच्छ्रुतेः** | **२.३.४१** |
| पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ | ३.२.५ |
| **परामर्शं जैमिनिरचोदना चापवदति हि** | **३.४.१८** |
| परेण च शब्दस्य ताद्विध्यं भूयस्त्वात् त्वनुबन्धः | ३.३.५२ |
| **पारिप्लवार्था इति चेन्न, विशेषितत्वात्** | **३.४.२३** |
| पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् | २.३.३१ |
| **पुरुषविद्यायामिव चेतरेषामनाम्नानात्** | **३.३.२४** |
| **पुरुषार्थोऽतः शब्दादिति बादरायणः** | **३.४.१** |
| पुरुषाश्मवदिति चेत् तथापि | २.२.७ |
| पूर्वं तु बादरायणो हेतुव्यपदेशात् | ३.२.४१ |
| पूर्ववद्वा | ३.२.२९ |
| पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् | ३.३.४५ |
| पृथगुपदेशात् | २.३.२८ |
| **पृथिव्यधिकाररूपशब्दान्तरेभ्यः** | **२.३.१२** |
| प्रकरणाच्च | १.२.१० |
| प्रकरणात् | १.३.६ |
| प्रकाशवच्चावैयर्थ्यात् | ३.२.१५ |
| प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् | ३.२.२५ |
| प्रकाशादिवन्नैवं परः | २.३.४६ |
| प्रकाशाश्रयवद्वा तेजस्त्वात् | ३.२.२८ |
| **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** | **१.४.२३** |

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः** **३.२.२२**
प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः १.४.२०
प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः २.३.६
प्रतिषेधाच्च ३.२.३०
**प्रतिषेधादिति चेन्न शारीरात्** **४.२.१२**
प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् २.२.२२
प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ४.४.१८
प्रथमेऽश्रवणादिति चेन्न, ता एव ह्युपपत्तेः ३.१.५
**प्रदानवदेव तदुक्तम्** **३.३.४३**
**प्रदीपवदावेशस्तथाहि दर्शयति** **४.४.१५**
प्रदेशादिति चेन्नान्तर्भावात् २.३.५३
प्रवृत्तेश्च २.२.२
प्रसिद्धेश्च १.३.१७
प्राणगतेश्च ३.१.३
प्राणभृच्च १.३.४
प्राणवता शब्दात् २.४.१५
प्राणस्तथाऽनुगमात् १.१.२८
प्राणादयो वाक्यशेषात् १.४.१२
प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ३.३.१२
**फलमत उपपत्तेः** **३.२.३८**
**बहिस्तूभयथाऽपि स्मृतेराचाराच्च** **३.४.४३**
बुद्ध्यर्थः पादवत् ३.२.३३
**ब्रह्मदृष्टिरुत्कर्षात्** **४.१.५**
**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः** **४.४.५**
भाक्तं वाऽनात्मवित्त्वात्, तथाहि दर्शयति ३.१.७
भावं जैमिनिर्विकल्पामननात् ४.४.११
भावं तु बादरायणोऽस्ति हि १.३.३३
भावशब्दाच्च ३.४.२२
भावे चोपलब्धेः [भावाच्चोपलब्धेः] २.१.१५
भावे जाग्रद्वत् ४.४.१४
भूतादिपादव्यपदेशोपपत्तेश्चैवम् १.१.२६
भूतेषु तच्छ्रुतेः ४.२.५
**भूमा संप्रसादादध्युपदेशात्** **१.३.८**
**भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति** **३.३.५७**
भेदव्यपदेशाच्च १.१.१७
भेदव्यपदेशाच्चान्यः १.१.२१
भेदव्यपदेशात् १.३.५
भेदश्रुतेः २.४.१८
भेदान्नेति चेन्नैकस्यामपि ३.३.२
**भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्** **२.१.१३**
भोगमात्रसाम्यलिङ्गाच्च ४.४.२१
**भोगेन त्वितरे क्षपयित्वा संपद्यते** **४.१.१९**
मध्वादिष्वसंभवादनधिकारं जैमिनिः १.३.३१
मन्त्रवर्णाच्च २.३.४४
मन्त्रादिवद्वाऽविरोधः ३.३.५६
**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्** **२.२.११**
महद्वच्च १.४.७
मांसादि भौमं यथाशब्दमितरयोश्च २.४.२१
मान्त्रवर्णिकमेव च गीयते १.१.१५
मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ३.२.३
मुक्तः प्रतिज्ञानात् ४.४.२
मुक्तोपसृप्यव्यपदेशात् १.३.२
**मुग्धेऽर्धसंपत्तिः परिशेषात्** **३.२.१०**
मौनवदितरेषामप्युपदेशात् ३.४.४९
यत्रैकाग्रता तत्राविशेषात् ४.१.११
**यथा च तक्षोभयथा** **२.३.४०**
यथा च प्राणादि २.१.२०
**यदेव विद्ययेति हि** **४.१.१८**
**यावदधिकारमवस्थितिराधिकारिकाणाम्** **३.३.३२**
यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् २.३.३०
यावद्विकारं तु विभागो लोकवत् २.३.७
युक्तेः शब्दान्तराच्च २.१.१८
योगिनः प्रति च स्मर्यते स्मार्ते चैते ४.२.२१
योनिश्च हि गीयते १.४.२७
योनेः शरीरम् ३.१.२७
**रचनानुपपत्तेश्च नानुमानम्** **२.२.१**
**रश्म्यनुसारी** **४.२.१८**
रूपादिमत्त्वाच्च विपर्ययो दर्शनात् २.२.१५
रूपोपन्यासाच्च १.२.२३
रेतःसिग्योगोऽथ ३.१.२६
**लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि** **३.३.४४**
लिङ्गाच्च ४.१.२

लोकवत् तु लीलाकैवल्यम् २.१.३३
वदतीति चेन्न प्राज्ञो हि प्रकरणात् १.४.५
वाक्यान्वयात् १.४.१९
वाङ्मनसि दर्शनाच्छब्दाच्च ४.२.१
वायुमब्दादविशेषविशेषाभ्याम् ४.३.२
विकरणत्वान्नेति चेत् तदुक्तम् २.१.३१
विकल्पोऽविशिष्टफलत्वात् ३.३.५९
विकारशब्दान्नेति चेन्न प्राचुर्यात् १.१.१३
विकारावर्ति च तथाहि स्थितिमाह ४.४.१९
विज्ञानादिभावे वा तदप्रतिषेधः २.२.४४
विद्याकर्मणोरिति तु प्रकृतत्वात् ३.१.१७
विद्यैव तु निर्धारणात् ३.३.४७
विधिर्वा धारणवत् ३.४.२०
विपर्ययेण तु क्रमोऽत उपपद्यते च २.३.१४
विप्रतिषेधाच्च २.२.४५
विप्रतिषेधाच्चासमञ्जसम् २.२.१०
विभागः शतवत् ३.४.११
विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् १.३.२७
विवक्षितगुणोपपत्तेश्च १.२.२
विशेषं च दर्शयति ४.३.१६
विशेषणभेदव्यपदेशाभ्यां च नेतरौ १.२.२२
विशेषणाच्च १.२.१२
विशेषानुग्रहश्च ३.४.३८
विशेषितत्वाच्च ४.३.८
विहारोपदेशात् २.३.३४
विहितत्वाच्चाश्रमकर्मापि ३.४.३२
वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ३.२.२०
वेधाद्यर्थभेदात् ३.३.२५
वैद्युतेनैव ततस्तच्छ्रुतेः ४.३.६
वैधर्म्याच्च न स्वप्नादिवत् २.२.२९
वैलक्षण्याच्च २.४.१९
वैशेष्यात् तु तद्वादस्तद्वादः २.४.२२
वैश्वानरः साधारणशब्दविशेषात् १.२.२४
वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति २.१.३४
व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ३.३.५४
व्यतिरेकानवस्थितेश्चानपेक्षत्वात् २.२.४
व्यतिरेको गन्धवत् २.३.२६
व्यतिहारो विशिंषन्ति हीतरवत् ३.३.३७
व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः २.३.३६
व्याप्तेश्च समञ्जसम् ३.३.९
शक्तिविपर्ययात् २.३.३८
शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् १.३.२८
शब्दविशेषात् १.२.५
शब्दश्चातोऽकामकारे ३.४.३१
शब्दाच्च २.३.४
शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न, तथा
दृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते १.२.२६
शब्दादेव प्रमितः १.३.२४
शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया
तेषामवश्यानुष्ठेयत्वात् ३.४.२७
शारीरश्चोभयेऽपि हि भेदेनैनमधीयते १.२.२०
शास्त्रदृष्ट्या तूपदेशो वामदेववत् १.१.३०
शास्त्रयोनित्वात् १.१.३
शिष्टेश्च ३.३.६२
शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि १.३.३४
शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ३.४.२
श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च १.३.३८
श्रुतत्वाच्च १.१.११
श्रुतत्वाच्च ३.२.३९
श्रुतेश्च ३.४.४६
श्रुतेस्तु शब्दमूलत्वात् २.१.२७
श्रुतोपनिषत्कगत्यभिधानाच्च १.२.१६
श्रुत्यादिबलीयस्त्वाच्च न बाधः ३.३.४९
श्रेष्ठश्च २.४.८
संकल्पादेव तु तच्छ्रुतेः ४.४.८
संध्ये सृष्टिराह हि ३.२.१
संपत्तेरिति जैमिनिस्तथाहि दर्शयति १.२.३१
संपद्याविर्भावः स्वेनशब्दात् ४.४.१
संबन्धादेवमन्यत्रापि ३.३.२०
संबन्धानुपपत्तेश्च २.२.३८
संभृतिद्युव्याप्त्यपि चातः ३.३.२३
संभोगप्राप्तिरिति चेन्न वैशेष्यात् १.२.८

संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ३.३.८
**संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्** २.४.२०
संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ३.१.१३
संस्कारपरामर्शात् तदभावाभिलापाच्च १.३.३६
सत्त्वाच्चावरस्य २.१.१६
**सप्त गतेर्विशेषितत्वाच्च** २.४.५
समन्वारम्भणात् ३.४.५
समवायाभ्युपगमाच्च साम्यादनवस्थितेः २.२.१३
समाकर्षात् १.४.१५
समाध्यभावाच्च २.३.३९
**समान एवं चाभेदात्** ३.३.१९
समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च १.३.३०
**समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य** ४.२.७
समाहारात् ३.३.६३
**समुदाय उभयहेतुकेऽपि तदप्राप्तिः** २.२.१८
**सर्वत्र प्रसिद्धोपदेशात्** १.२.१
सर्वथानुपपत्तेश्च २.२.३२
सर्वथापि त एवोभयलिङ्गात् ३.४.३४
**सर्वधर्मोपपत्तेश्च** २.१.३७
**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** ३.३.१
**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्** ३.४.२८
**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्** ३.४.२६
**सर्वाभेदादन्यत्रेमे** ३.३.१०
**सर्वोपेता च तद्दर्शनात्** २.१.३०
सहकारित्वेन च ३.४.३३
**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्** ३.४.४७
सांपराये तर्तव्याभावात् तथा ह्यन्ये ३.३.२७
साक्षाच्चोभयाम्नानात् १.४.२५
साक्षादप्यविरोधं जैमिनिः १.२.२८
सा च प्रशासनात् १.३.११
साभाव्यापत्तिरुपपत्तेः ३.१.२२
सामान्यात् तु ३.२.३२
सामीप्यात् तु तद्व्यपदेशः ४.३.९
सुकृतदुष्कृते एवेति तु बादरिः ३.१.११
सुखविशिष्टाभिधानादेव च १.२.१५
**सुषुप्त्युत्क्रान्त्योर्भेदेन** १.३.४२
सूक्ष्मं तु तदर्हत्वात् १.४.२
सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ४.२.९
सूचकश्च हि श्रुतेराचक्षते च तद्विदः ३.२.४
**सैव हि सत्यादयः** ३.३.३८
**सोऽध्यक्षे तदुपगमादिभ्यः** ४.२.४
स्तुतयेऽनुमतिर्वा ३.४.१४
स्तुतिमात्रमुपादानादिति चेन्नपूर्वत्वात् ३.४.२१
स्थानविशेषात् प्रकाशादिवत् ३.२.३४
स्थानादिव्यपदेशाच्च १.२.१४
स्थित्यदनाभ्यां च १.३.७
स्पष्टो ह्येकेषाम् ४.२.१३
स्मरन्ति च २.३.४७
स्मरन्ति च ३.१.१४
स्मरन्ति च ४.१.१०
स्मर्यते च ४.२.१४
स्मर्यतेऽपि च लोके ३.१.१९
स्मर्यमाणमनुमानं स्यादिति १.२.२५
स्मृतेश्च १.२.६
स्मृतेश्च ४.३.११
**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाश-दोषप्रसङ्गात्** २.१.१
स्याच्चैकस्य ब्रह्मशब्दवत् २.३.५
स्वपक्षदोषाच्च २.१.१०
स्वपक्षदोषाच्च २.१.२९
स्वशब्दोन्मानाभ्यां च २.३.२२
स्वात्मना चोत्तरयोः २.३.२०
स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च, सववच्च तन्नियमः ३.३.३
स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ४.४.१६
स्वाप्ययात् १.१.९
**स्वामिनः फलश्रुतेरित्यात्रेयः** ३.४.४४
हस्तादयस्तु स्थितेऽतो नैवम् २.४.६
हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत् तदुक्तम् ३.३.२६
हृद्यपेक्षया तु मनुष्याधिकारत्वात् १.३.२५
हेयत्वावचनाच्च १.१.८

